श्रीः

उभयवेदान्तग्रन्थमाला

शतदूषणीमण्डनम्

# परमार्थभूषणम्

शतभूषण्यादिखण्डनरूपम्

—x—

श्रीपरमहंसपरिव्राजकश्रीमद्रङ्गरामानुजयतीन्द्रमहादेशिक-
चरणारविन्दवरिवस्याधिगतोभयवेदान्तरहस्यार्थेन
तर्कार्णवादिबिरुदभाजा वात्स्यसच्चक्रवर्तिना

अभिनवदेशिकेन

उत्तमूर्—श्री· वीरराघवाचार्येण

विरचितम्

मद्रास (14) श्रीवत्समुद्रणालये

मुद्रितम्

मूल्यम्] 1959 [Rs. 25/—

## List of Books written and Published

| | | |
|---|---|---|
| 1. न्यायकुसुमाञ्जलि: विशद विस्तराख्य व्याख्यासमेत: 2 Parts | 6 | 00 |
| 2. वैशेषिकदर्शनं वैशेषिकरसायनसहितम् | 7 | 00 |
| 3. तर्कसंग्रह: सुखप्रवेशिनीसमेत: | 1 | 00 |
| 4. परमार्थप्रकाशिका | 2 | 00 |
| 5. ईशावास्योपनिदाचार्यभाष्यतात्पर्यम् | 1 | 50 |
| 6. परमार्थभूषणम् | 25 | 00 |
| 7. श्रीवेंकटेशकल्याणचरितम् | 0 | 75 |
| 8. ईशकेनकठोपनिषद्भाष्यं सपरिष्कारम् | 5 | 00 |
| 9. प्रश्नमुण्डकमाण्डूक्यभाष्यं ,, | 4 | 00 |
| 10. तैत्तिरियैतरेय— ,, ,, | 6 | 00 |
| 11. छान्दोग्य ,, | 8 | 00 |
| 12. बृहदारण्यक ,, | 7 | 00 |
| 13. श्वेताश्वतरादिपरिशिष्टोपनिषद्भाष्यम् | 6 | 00 |
| 14. सिद्धित्रयं गूढार्थप्रकाशसहितम् | 2 | 00 |
| 15. वेदान्तदीप:, शरणागतिगद्यञ्च with Translation | 10 | 50 |
| 16. ந்யாஸாதிகார ஸர்வஸ்வம் | 1 | 00 |
| 17. பெரியாழ்வார் திருமொழி ப்ரபந்தரக்ஷையுடன் | 12 | 00 |
| 18. திருப்பாவை ,, | 3 | 50 |
| 19. நாய்ச்சியார் திருமொழி ,, | 4 | 00 |
| 20. பெருமாள் திருமொழி ,, | 1 | 50 |
| 21. திருச்சந்த விருத்தம் | 2 | 00 |
| 22. திருமாலை, திருப்பள்ளியெழுச்சி, அமலனாதிபிரான், கண்ணிநுண் சிறுத்தாம்பு ,, | 3 | 00 |
| 23. முதல் திருவந்தாதி ,, | 2 | 00 |
| 24. இரண்டாம் திருவந்தாதி ,, | 1 | 75 |
| 25. மூன்றாம் திருவந்தாதி ,, | 1 | 50 |

திவ்யப்ரபந்தங்கள் மேலே அச்சாகிவருகின்றன

இனி ஸஞ்சிகை (100 பக்கம் சுமார்) 1-க்கு ரூ. 1 50

**மற்ற புத்தக விவரங்களுக்கு நேரில் எழுதிக்கொள்க.**

*Address*: **Ubhaya Vedanta Granthamaala Office**
25, Nathamuni St., T. Nagar, Madras-17.

श्रीः



# अनुगृहीतं प्रशस्तिपत्रम्



श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीमते शठकोपाय नमः ।

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

श्रीमते श्री आदिवण् शठकोपयतीन्द्रमहादेशिकाय नमः ।

श्रीमते श्रीवण् शठकोप श्री वेदान्तदेशिकयतीन्द्रमहादेशिकाय नमः

अस्मिन् विलम्बिसंवत्सरे मकरमासि श्रीभूमिनीलासमेतस्य भगवतः श्रीलक्ष्मीनृसिंहस्य श्रीकनकवल्लीनायिकासमेतस्य श्रीवीरराघवस्वामिनश्च सन्निधौ श्रीमदहोबिलमठे चतुश्चत्वारिंशे पट्टे मूर्धाभिषिक्तानां श्रीमद्वेदमार्गप्रतिष्ठापनाचार्येत्यादिविरुदभूषितानां श्रीवण्शठकोप श्री—वेदान्तदेशिकयतीन्द्रमहादेशिकानामनुग्रहेण नवसु दिनेषु प्रवृत्ते तैरेवाधिष्ठिते तेषामेवातिविलक्षणाभिः विषयशोधन—चोद्यकरण —दुर्ग्रहार्थविशदीकरणभङ्गीभिः सञ्जातबहुरसपरीवाहे श्रीमद्विशिष्टाद्वैतसिद्धान्तधुरन्धरः सुप्रसिद्धैः अत्रनिर्दिष्टैः

श्री. उ. वे. व्याकरणवेदान्तपारङ्गतैः आराधकैः पनमुकै नरसिंहाचार्यैः

,, न्यायवेदान्त विशारदैः प्राचीनविद्वद्भिः तिरुक्कण्डलं कृष्णमाचार्यैः

,, ,, वेदान्तवावदूकैः विलिवलं नारायणाचार्यैः

,, ,, वेदान्तसारज्ञ—ब्रह्मविद्यावाचस्पति—श्री अहोबिल-
मठीयास्थानविद्वद्भिः पेरुकारणै चक्रवर्त्याचार्यैः

,, ,, पण्डितराजेत्यादिबिरुदभूषितैः D.T. ताताचार्यवर्यैः

,, ,, न्यायवेदान्तशिरोमणिभिः ईच्चम्बाडि. वीरराघवाचार्यैः

,, ,, श्रीपदपुरीमहाविद्याशालाध्यापकैः नावल्पाक्कं राजगो-
पालताताचार्यैः

,, ,, ,, ,, कोलियालं-शठकोपाचार्यैः

,, ,, ,, मधुरान्तकंकलाशालाव्याकरणाध्यापकैः
मेल्पाक्कं नरसिंहाचार्यैः

,, ,, ,, व्याकरणाध्यापकैःसरलकविभिःपादूरराघवाचार्यैः

,, ,, ,, न्यायाध्यापकैः अत्तिकृष्णमाचार्यैः

,, ,, ,, न्यायशिरोमणि पुरिशकृष्णमाचार्यैः

,, ,, ,, न्यायाध्यापकैः V.D. संपत्कुमारवरदाचार्यैः

,, ,, तञ्जावूर—सरस्वतीमहाल्कोशालयाधिकृतैः नावल्पाक्कं
देवनाथाचार्यैः

,, ,, पूनासंस्कृतकोशसंकलनालयाधिकृतैः न्यायव्याकरण-
वेदान्तशिरोमणिनावल्पाक्क. रामानुजार्यैः

अन्यैश्च शताधिकैः विद्वद्भिः परिभासुरे श्रीमालोलविद्वत्सदसः अष्टादशे अधिवेशने—श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्यपदस्य सर्वतन्त्र-स्वतन्त्रस्य कवितार्किकसिंहस्य आचार्यचूडामणेः, तदनुगृहीतस्य परमगम्भीर-स्याद्वैतादिभेदनशतधारस्य शतदूषणीग्रन्थस्य च अपारं महिमानं अनधि-गतवता आबाल्यात् विशिष्टाद्वैतमतदूषण-तत्परग्रन्थलेखनाभिनिवेशग्रहविवश-चेतसा म-म-श्री अनन्त-कृष्णशास्त्रिणा शतदूषणीखण्डनतृष्णया अचिरात् प्रकाशितस्य शतभूषणीनामकस्य ग्रन्थस्य खण्डनरूपः तर्कार्णवेत्यादि-बिरुदावलीभूषितैः नानाशास्त्रसंबन्धिबहुग्रन्थनिर्माणप्रकटितलोकोत्तरपाण्डित्यैः उत्तमूर्-श्री-वीरराघवाचार्यवर्यैः विरचितः परमार्थभूषणनामा सहस्राधिकपुट-व्यापी महाग्रन्थः विदुषामङ्गीकाराय समर्पितः।

तत्र ग्रन्थकारैरेव सभाध्यक्षनियमनानुसारेण पठितान् कांश्चन भागान् आकर्ण्य संतुष्टाः श्रीसभाध्यक्षाः आचार्यचरणाः, समवेताः सर्वे विपश्चितश्च ग्रन्थकारणां अगाधं नानाशास्त्रवैचक्षण्यं ग्रन्थकरणदाक्ष्यं सकलप्राचीनाद्वैत-ग्रन्थगाढपरिचयं पूर्वपक्षानुवादे उत्तरदाने चावलम्बितमार्जवातिशयं हेलया परपक्षविधूननचातुर्यं पदवाक्यशुद्धिं रचनासौष्ठवम्, अरागद्वेषकलुषहृदयत्वम्, अपरुषभाषित्वं च सुव्यक्तमालक्ष्य अभ्यनन्दन्।

एवंमसत्सिद्धान्तसंरक्षणदीक्षिता इमे आयुरारोग्यैश्वर्यसमृद्धिमन्तः शरदः शतं विलसन्तु इति भगवति लक्ष्मीनृसिंहे अञ्जलिञ्चाकुर्वन्।

(Sd.) ஜோ. ரங்காசார்யர்

Srikaryam (*Private Secretary*),

**H. H. Ahobilamatt.**

# A TRIBUTE

When information was received that 'Satabhushani' was published in refutation of the arguments of Sri Vedanta Desika in his "Sata-Dooshani" against the Advaita doctrine, there was generally a stir among the Vaishnavites, who considered it a challenge to their doctrine and Sampradaya and they resolved that a reply should be given. ' They entrusted the task into the capable hands of Sriman Uttamur Veeraraghavacharya Swami. Subscriptions were also collected. When the work was some way through its progress was retarded by want of sufficient financial assistance, and so an appeal was made to Sri Van Sathakopa-Sri Vedanta Desika Yatindra Maha Desika, (present Alagiya Singar) of Sri Ahobila Mutt. The response was *ready and quick and a cheque for Rs. 5,000/- was received, which eased the situation considerably and helped to the completion of the work. The Visishtadvaitic world is extremely grateful to His Holiness Sri Alagiasingar for his great love of learning and his generous patronage.

K. BHASHYAM

---

**The matter in the enclosed Srimukha is as follows :—*

"ஸ்ரீ அழகியசிங்கர்பூர்வாசிரமத்திலேயே ஸ்ரீ உத்தமூர் ஸ்வாமி சதபூஷணிக்குக் கண்டனம் எழுதுவதாகத்தெரியும். அப்பொழுதே புஸ்தகத்தை அச்சிடும் சமயம் ஸ்ரீ அழகிய சிங்கர் சன்னிதியில் விக்யாபனம் பண்ணி அதற்கு வேண்டிய ஒத்தாசை செய்யவேண்டும் என்று திருவுள்ளம் பற்றியாயிற்று. இப்பொழுது தேவர் மிக வியாபரித்து அந்த கிரந்தத்தை அச்சிட்டுக்கொண்டு வருவது ஸ்ரீ திருவுள்ளத்துக்கு ரொம்ப சந்தோஷம். மீதி அச்சிட ஸ்ரீஸன்னிதியில் ஏற்றுக்கொள்ளவேண்டும் என்றும் அதற்கு ரூ. 5,000/- அவசியம் தேவையென்றும் எழுதிய படி.........................உடனே அனுப்பிக்க வேண்டும் என்று நியமனம் ஆனபடியால் தேவரீர் பேருக்கு ரூ. 5000/-க்குச் செக்கு அனுப்பப்பட்டிருக்கிறது."

श्रीः

# भूमिका

"श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥"

जयति भगवन्नाथार्याद्यैर्निराकृतशाङ्कर-
प्रभृतिविमतैर्व्यासोपज्ञं मतं व्युदपादि यत् ।
प्रगुणभगवद्योगीन्द्रोक्तिस्फुटोपचितं कृतं
स्थिरतममिदं श्रीमद्वेदान्तदेशिकसूक्तिभिः ॥

प्रथमो गुरुरेष वेङ्कटेशः परमेष्ठिप्रणतो हयाननः प्राक् ।
निगमान्तगुरूत्तमोऽवतीर्णः निपुणं नैजममतैकरक्षणाय ॥

भगवता बादरायणेन, "तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः ॥", "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा" इति महाभारते स्वसंगृहीततत्त्वहितवैशद्यविधायि वेदान्तवाक्यमीमांसात्म शारीरकं शास्त्रं न्यबन्धि । भगवता च बोधायनेन शारीरकसूचित बादरिजैमिन्याश्मरथ्यौडुलोमिकाशकृत्स्नादिविविधमहर्षिहृदयोद्घाटनपूर्वकं तेषां बादरायणस्य च विमतिसंमतिविषयविशोधनेन बादरायणनिष्कर्षबोधाय नः प्रतता वृत्तिः प्रणिन्ये । एवं प्राप्तप्रचारस्य सिद्धान्तस्य सारस्वतस्य स्रोतस इवाऽऽविर्भावतिरोभावयोः पदेपदे स्थितयोः कालक्रमेण ब्रह्मनन्द्यादयः पुनः प्रचारे प्रायतिषत ।

अथ च अर्वाचीनैः श्रीशङ्करभास्करयादवप्रकाशैराचार्यैरसंपन्नसामग्र्यैरनेकानि अद्वैतमतान्युत्प्रेक्षाञ्चक्रिरे । तत्रैवं प्राज्ञमणयः तत्तद्भाष्यादिग्रन्थपरि-

शीलनशालिनः प्रब्रुवन्ति—प्रादुर्भूतेषु परश्शतेष्वाचार्येषु श्रीशङ्कराचार्यस्य तावदनन्यसामान्यं मननम्, यदयमाश्मरथ्यादिवत् बादरायणोऽपि कस्मात् क्वचिन्नोपेक्ष्येत ; अस्मदालोडनवैदेशिकत्वे स निगमदेशिकोऽपि न देशिक इति निगूढमाशिश्ये। एवम्भूतः सर्वस्य महाजनस्य बादरायणप्रायणतामालक्ष्य तान् आत्मसात्कर्तुकामः प्राचीर्वृत्तीर्व्याख्या उपेक्ष्य, स्वातन्त्र्येणोपनिषदः सर्वाः स्वयं व्याख्याय स्वमते बादरायणमपि निवेशयितुमनाः शारीरकभाष्यमपि किञ्चिदभाषिष्ट। तत्त्वमिदमाकलय्यैव भगवद्रामानुजस्वामिपादाः प्राचीनव्याख्यानान्येवोपनिषदां पर्याप्तप्रायाणीति, शारीरकव्याख्यया श्रीभाष्येणैवोपनिषदो व्याख्याता इति च पृथक्प्रयत्नं तत्र न तेनिरे। व्यक्तमिदं कार्याधिकरणानन्दमयाधिकरणादिषु शाङ्करभाष्यं स्थूलधिया पश्यतामपि, सूक्ष्मदृष्ट्या तु प्रायः सर्वत्र। यदेष श्रीशङ्कराचार्यः स्वातन्त्र्येण सर्वमन्यथयामासेति। तत्र स्वातिरिक्तं किमपि नास्तीति, अस्याचार्यस्य हृदयम्। प्रतिचेतनमेवं प्रत्यवस्थाने स्वमतासिद्धिमनुदृश्य सर्वोपि चेतनः सहेश्वरेणाहमेवेति आत्मैक्यं तदर्थमास्थित। तेन शून्यवादीव सर्वमिथ्यात्वं संगीर्णवानपि तद्वैलक्षण्यं किञ्चिदात्मनि प्रदर्श्य आत्मनो वैदिकत्वं प्रकटयामास—इति।

तदेतत् जगन्मिथ्यात्वं सांख्य-योग-न्याय-वैशेषिक-पाशुपत-पाञ्चरात्र-पूर्वतन्त्र-श्रीमाध्वादिभेदभिन्नाः द्वैतिन इवाद्वैतिनोऽप्यन्ये न सेहिरे। तेन श्रीभास्करयादववल्लभाचार्यादयः तन्मतखण्डनं सम्यगेव विधाय शारीरकमन्यथा व्याचख्युः। बाह्येषु बौद्धं वैदिकेषु शाङ्करश्चेत्युभयत्रैव जगतो मिथ्यात्वम्। द्वैते च अद्वैते च श्रौते संप्रतिपत्तव्ये यादृशी निरूपणसरणिः सर्वसमकण्ठतां स्वरसतः संपादयति, यादृशीं श्रुतिरेव स्वयं समकण्ठतासंपत्तये स्वरसत आविष्करोति, तां सरणिं विहाय तैस्तैरन्यथासामरस्योल्लेखनम्, नूनं देवताप्रीतिं श्रौतीं परित्यज्य स्वर्गसंपत्तये यज्यर्थादपूर्वकल्पनामधर्मीमांसकप्रपञ्चितामनुकरोतीति विभाव्य श्रीभगवद्रामानुजस्वामिचरणैर्बादरायणबोधायननाथयामुनादिनिबन्धानुरोधेन विशिष्टाद्वैतमेव प्रतिष्ठापितमासीत्।

तत उपशान्तेष्वपि यादवप्रकाशादिषु चिरप्ररूढवासनाविवशान्तकरणैः शाङ्कराद्वैतानुसारिभिः साटोपं प्रत्यवतस्थे । एवं वादकोलाहलमात्रेणानुपरम्य यदेमे अद्वैतिनः श्रीशङ्कराचार्यपूर्वकालप्रभृति भुवि भूम्ना प्राप्तप्रचारम्, शाङ्करभाष्ये पाञ्चरात्राधिकरणादावनुमोदितम्, श्रीभगवद्रामानुजस्वामिपादैः परिष्कृत्य भूयः स्थापितं श्रीविष्णुदेवालयपूजाविधिमपि विश्लथयितुमुद्युयुजिरे, तदा सर्वतन्त्रस्वतन्त्रकवितार्किकसिंहश्रीमन्निगमान्तमहादेशिकादिभिस्तत्प्रतिष्ठापनमध्यवसितवद्भिः परमतदौःस्थ्यप्रपञ्चने भूयान् कटाक्षः कृत आसीत्। तदात्वे शतदूषणीप्रभृतीनामद्वैतिमतगजसिंहनादसोदराणां निबन्धरत्नानामाविर्भावः । कालक्रमेण श्रीमध्वाचार्यतदनुयायिभिर्द्वैतैकपक्षावलम्बिभिरद्वैतग्रन्थेष्वनिमात्रखण्डनगोचरीकृतेषु, तत्खण्डनोद्युक्तेषु च तत्रतत्राद्वैतिषु, विशिष्टाद्वैतग्रन्थोपरि स्वहृदयविसंवादिव्याहारग्रथनवैमुख्येन ग्रन्थनिर्माणादुपरतेषु सहृदयाद्वैतिसज्जनेषु, तथापि कतिपयेष्वभ्यसूयुषु अभिनिवेशिषु आग्रहयालुषु सिद्धान्तसिद्धाञ्जनाद्युच्चावचाक्रोशवचनजटिलव्याहतग्रन्थविलेखनव्यवसायिषु पश्चादुपलब्धेष्वपि अद्वैतमते असारत्वबुद्धिरेवाभिवृद्धिमलभत ।

तामिमामात्ममतस्थितिमसोढवद्भिरर्वाग्भिरद्वैताचार्यैः शतदूषणीप्रभृतिप्रबलग्रन्थखण्डनप्रकटनं विना न स्वमतगौरवाभिमानसंपादनप्रसक्तिरित्याकलय्य मार्कि चत्वारिंशतो वत्सरेभ्यः प्राक्कालप्रभृति रहस्येवमुपन्यसितुं प्रावर्ति— 'अद्वैताचार्यविद्यारण्यसमकालिकैः तत्सुहृत्तमैः राजसंमाननां प्रापयितुं तदाहूतैरपि वैराग्यपञ्चकप्रेषणेनोपरतैः परमैकान्तिप्रथमोदाहरणभूतैः श्रीमन्निगमान्तमहादेशिकैर्निबद्धः शतदूषणीग्रन्थः खलु समसामयिकैर्विद्यारण्यादिभिरिव पाश्चात्यैरप्यद्वैतिविपश्चिद्भिरखण्डित एव वरीवर्तीति महदिदं विषादस्थानमस्माकम् । प्रत्येकमशक्तैरपि संभूयात्र संरब्धव्यम्' इति। एवं खण्डनग्रन्थनिबन्धननिर्बन्धः श्रीकामकोटिपीठालङ्कर्मीणायतनशङ्कराचार्यादिभिरनुपदं क्रियमाण आसीदिति च ब्रह्मश्रीविद्वद्वरवैद्यसार्वभौम-करूरभिजनरामशर्ममहोदयमुद्रिते तत्पितृचरणविरचितभामतीव्याख्याने भूमिकायां व्यक्तम् । किं सुदूरगमनेन । प्रकृतशतभूषणीग्रन्थ-

भूमिकैव श्रीकामकोटिपीठाधीशप्रोत्साहनं पदेपदे प्रस्तारेण दर्शयति—'आचार्यचरणानां........भगवत्पादापरावतारागामाज्ञामात्रं प्रबलमवष्टभ्य', 'आदिभगवत्पादापरमूर्तय: श्री चन्द्रशेखरसरस्वतीचरणा एव एतद्ग्रन्थस्य कर्तारः। अहं तु—निमित्तमात्रम्' इत्यादि तद्भूमिकायां द्रष्टव्यम्। 'स्वयं कर्तृप्रायत्वादेव पृथक् ते श्रीमुखं नार्पयन्निव। अशेषजनाभिनन्दनीयमेव तावत् अद्वैतेन स्वमतस्थापनैदम्पर्यमाचार्याणाम्। श्रुतञ्च शतभूषणीकृतो महाशयात् साक्षादपि। एवम् अस्मदीयवैशेषिकरसायनग्रन्थाभिनन्दनसदसि च स्वस्वमतस्थापनार्थप्रवृत्तिः सर्वेषां समुचितेति सर्वैरेभिरुपन्यासि।

एवमेतत्खण्डनसंरम्भं वोढुमादिष्टाः उपदिष्टाः प्रार्थिताश्च बहवः, "प्रच्छन्नबौद्धविजये परितो यतध्वम्" इति सूक्तिमसहमानाः पण्डिताः ग्रन्थखण्डनस्यासिद्धावपि संमाननाप्राप्तिरस्तीति समुत्सुकाः, ज्ञायते, शतदूषणीशातनादिनामकरणपुरस्सरं प्रबन्धने प्रायस्यन्। तानिमान् ग्रन्थान् अद्वैतमतविशेषाग्रहप्रदर्शनमात्रविश्रान्तान् अपूर्णांश्च आलक्ष्य अद्वैतिपरिषत् अन्यान् ग्रन्थान् उपेक्ष्य तान् उत्पन्नविनष्टान् विधाय शतभूषणीग्रन्थमात्रस्य प्रचारं कर्तव्यमध्यवस्यति स्मेति वदन्ति स्म। अद्वैतपीठाधिपतिपरिषदादिप्रेरणपारवश्येन संभूतेष्वपि पण्डितेषु अद्यापि केषाञ्चिदियं बुद्धिरनुवर्तमानाऽस्ति—यत् शतभूषण्यां खण्डितायामपि पश्चान्न मूकीभूय स्थातुं साम्प्रतम्। तदा शतदूषणीशातनार्थे ग्रन्थान् खण्डशः प्रकटयिष्यामः। ग्रन्थसंख्याभूयस्त्वादर्शनमात्रेणापि मतं महीयो मन्यमानाः किल साम्प्रतमपि सन्ति। परमतखण्डनशौण्डीर्यषण्डतायां सर्वत्र शतभूषण्यादिग्रन्थेष्वविशिष्टायां किमित्यास्माकग्रन्थानां परमित्थमप्रकाश इतीति चाहुः। एवमध्यवसायवद्भिरप्यद्वैतीभूय शतभूषणीग्रन्थः प्राकाश्यं प्रापि सर्वाद्वैतपण्डितप्रशंसापत्रकदम्बकरम्बितः।

प्रबन्धोऽयमाबाल्यात् अद्वैतग्रन्थलोडनेनैव क्षिप्तकालस्य, वैयक्तिकविद्वेषवैदेशिकस्य, तत्तन्मतमातिष्ठमानैः स्वस्वमतस्थापनार्थं निबन्धनं न्याय्यमिति सदध्यवसायस्य, नानाग्रन्थमुद्रणनिर्माणभूमिकालेखनव्याख्यानादिना विख्या-

तस्य महामहोपाध्यायस्य सर्वसुहृदोऽस्मत्सुहृत्तमस्यास्मदभ्युदयैककाङ्क्षिणो महामनसोऽखिलबुधक्षेमकामस्य अनन्तकृष्णशास्त्रिमहोदयस्येति अद्वैतिनामिवास्माकमपि तत्राभिमानः, प्रणेतरि बहुमानश्च तुल्यरूपमात्मानमलप्स्साताम् ।

प्राप्यमाणप्रचारश्च शतभूषणीग्रन्थमिमं पश्यद्भिर्विशिष्टाद्वैतपण्डितैरुपेक्षणीयकोटावेवायं न्यक्षेपि । तथापि प्राप्तस्य परिहरणं पामरलोकभ्रान्तिनिवर्तनाय कार्यम्; अल्पोऽपि व्याधिराशङ्कास्पदमारोग्यकामैरादावेवाभावं गमयितव्यः; अद्यत्वे नूतनममि आयत्यां पुरातनमिति आरोपितगौरवं भवेत् इत्यध्यवसाय खण्डनग्रन्थदर्शनक्रमानुसारेण प्रथमं परमैकान्तिप्रधान-सर्वशास्त्रपारदृश्व-सच्छिष्यबृन्दसेव्यमान-चतुर्वेदशतक्रतु-नावल्पाक्काभिजन-महनीय **श्रीनृसिंहाचार्यस्वामिपाद**विहितम्, अथास्मदाचार्य-विश्वप्रसिद्ध-सच्छिष्यबृन्दसेव्यमान-परमहंसपरिव्राजकाचार्य-परपक्षनिराकृति-भेदसाम्राज्यादिप्रबन्धनिर्माणालङ्कर्मीण**श्रीरङ्गरामानुजमहादेशिक**विहितञ्च निदेशं नतेन शिरसा सगौरवमवतंसयन् शतभूषणीग्रन्थसंदर्शनायायतिषि । गतेषु कतिपयेषु मासेषु मान्येन ग्रन्थकर्त्रैव सुहृत्तमेन शुद्धेनैव हृदयेन सर्वमतयुक्तिवैशारद्यविजिज्ञासामात्रेण विशिष्टाद्वैतिसिद्धान्तानुसारिग्रन्थप्रबन्धनाय स्वग्रन्थार्पणपूर्वकं सम्यक्प्रेरितश्चाभूवम् । 'जातिवत् मतमाजन्ममरणमनुवर्तमानं न भवति । तदातदा परिशील्य निकृष्टं परित्यज्य प्रकृष्टमेव परिग्राह्यम् । अतो मतग्रन्थानामुपर्युपरि प्रादुर्भावः पश्चात् ताटस्थ्येन परिशीलयतां परमार्थोपकारायेति सर्वसंमन्तव्योऽयमर्थः अस्मत्कृतपरमार्थप्रकाशिकाया अद्वैतामोदपरीक्षारूपायाः भूमिकायामेवार्जवेन प्राङ्न्यवेदीति, तदनुरुध्य, अस्मत्सुहृदामत्र हृदयोद्रेकस्य न मनागपि प्रसक्तिरिति विस्रम्भेण शतदूषणीवास्तवार्थविज्ञापनशेषतया परमतदौःस्थ्यप्रपञ्चनं प्राप्तकालमचिन्तयम् । तत्र शतभूषणीग्रन्थमिमं केवलं व्याजीकृत्य प्राक्तनास्तदादृताः भाष्य-इष्टसिद्धि ब्रह्मसिद्धिभामत्यद्वैतसिद्धिपरिमलब्रह्मानन्दीयखण्डनखण्डखाद्यादयोऽपि ग्रन्थाः प्रसक्तौ सत्यां यथावत् खण्डनीया इति तदनुगुणग्रन्थलेखने उत्साह उदभूत् ।

तावदेव यैरखण्डयपाण्डित्यप्रकर्षैराचार्यश्रीदेशिकचरणारविन्दभक्तिमूर्तिभिरनेकमतविद्वदाचार्यैरर्थमपि मुद्रणप्रारम्भोपयोगिनं गूढमर्पयित्वा अहमत्यादरेण संप्रेरित आसम् , तेषाम् , तदनु स्थूलमल्पञ्चोपकारमाहितवताम् , आधास्यताश्चान्येषां महतां मध्ये महाहारमध्यायमाने नायकमणीभूय निरुपप्लवमंमिम एव राजन्ते महामान्याः प्रख्यातपाण्डित्याः परमार्थोपदेशवशीकृतविशिष्टलोकाः **श्रीमल्लक्ष्मीनृसिंहास्थानमूर्धाभिषिक्ताः** परमहंसपरिव्राजकाचार्याः श्रीभगवद्रामानुजदर्शनस्थापनाचार्यतल्लजाः **श्रीवण्शठकोपश्रीवेदान्तदेशिकयतीन्द्रमहादेशिकाः** अभ्यर्थनानन्तरक्षणे उदनुगृहीतरूप्यकसहस्रपञ्चकाः आचार्यग्रन्थरक्षणेनान्वर्थीकृतनिजनामधेया इतीदमवश्यनिर्देश्यमद्यत्वे निर्दिशामि । विस्तरेण तु दातृपट्टिकायामन्येषामपि यथावन्निर्देशः क्रियते ।

यावज्जीवं कृतज्ञोऽहमीदृशेषु महात्मसु ।
प्रकृष्टमतसद्ग्रन्थप्रकाशैकान्तदृष्टिषु ॥

एवमस्मिन् ग्रन्थे खण्डनार्थं गृहीतेऽन्येपि केचिद्ग्रन्थाः[I] प्रचारमानीताः । परंतु तेषामानुपूर्व्या किञ्चिद्ग्रन्थखण्डनरूपत्वाभावात् फल्गुत्वात् अत्यन्ताग्रहमूलत्वात् अस्मदीयैस्तत्रतत्र सम्यक् खण्डनप्रवृत्तत्वाच्च शतभूषणी प्राधान्येनेह गृह्यते । प्रसङ्गादेतदीया एव श्रीभाष्यसमालोचनाद्वैततत्त्वशुद्ध्यादयोऽपि स्पृश्यन्ते स्थालीपुलाकनीत्या । अयथानुवादासंगतदूषणादिमयत्वात्तु तेषां तत्खण्डनेन कालहरणं विवेकिनामभ्यर्हितकार्यव्यग्राणामनुचितमिति प्रायो वयमुपेक्षामहे ।

एतदीयो वेदान्तरक्षामणिनामा ग्रन्थः श्रीभाष्यसमालोचनरूपः सिद्धान्त कौस्तुभनाम्ना अस्मदीयेन ग्रन्थेन प्रागेव खण्डितः । परन्तु म. म.

I. द्राविडवेदर्शनम् , चिदचिदशरीरकब्रह्मसिद्धिः, सप्तविधानुपपत्तिपरीक्षा अद्वैततत्त्वशुद्धिश्च ।

श्री ए. वी. गोपालाचार्यमहाशयादिप्रणीतप्रकटितग्रन्थत एव तत्खण्डन सिद्ध्या द्रविणसंपादनप्रयासमालोच्य स मुद्रणपदं नानायि। अथापि तत्रोक्ताः कतिपये विषयाः असन्मुद्रितनयद्युमणिभूमिकायां प्राकाश्यं प्रापिताः। केचिदत्र ग्रन्थे संयोजिताः। शिष्टमावश्यकत्वे पृथगपि मुद्रयिष्यते।

प्राज्ञा महान्तः, सुहृदः, तथाऽन्येऽप्यनुबन्धिनः।
परग्रन्थप्रतिक्षेपप्रवृत्ता इत्युदास्महे॥

वस्तुतः संप्रति मतखण्डनप्रवृत्तेरिदमादाववधेयम्—किमिदं युक्तिं प्राधान्येन प्रमाणयति, उत शब्दम्। शब्दश्च श्रुतिः अन्यो वा। श्रुतौ च तन्मतस्थापनमुख्योपयोगिवाक्यं किं कियत्। तत्र बाधकं किं कियत्। तत्तदितरमतसाधारणे वाक्ये तद्वादानुयायिवर्ण्यमानार्थरीतिः कीदृशी। मतोपयोगित्वाभावेऽपि वाक्यार्थवर्णनपरिपाटी स्वरसा न वेत्यादि। तत्र वृथाकालहरणपरिहरणाय प्रधानांशदूषणमात्रं पर्याप्तम्। अत इतः परमेवं ग्रन्थग्रथनमेव युज्यते। सर्वसुग्रहया भाषया परमतदौःस्थ्यप्रकटनं वा। आस्तामेतत्।

शतभूषणीग्रन्थोऽयमनेकाद्वैतग्रन्थभागान् अनुवदन् अस्मत्प्राच्य-ग्रन्थेषु खण्डनायानूदितानामंशानां प्रायेणाऽऽकरमर्थात् प्रदर्शयतीति परमिदं प्रमोदस्थानम्। ग्रन्थेऽस्मिन् पदेपदे पदवाक्यापभ्रंशानन्वयादिदोषबाहुल्येऽपि विषयविशोधनैकप्रवृत्तेन मया नातीव तत्र दृष्टिर्व्यधायि। व्यक्तिदूषण-वैयग्र्यविरहिणाप्यनेन तत्रतत्र ग्रन्थमध्य इव भूमिकायामप्याचार्यनिन्दावाक्यानि ग्रथितान्येव तु वीक्ष्य विषीदामः; वेदान्तविषयमात्रे स्वयमस्थित्वा स्वापरिचितश्रीदेशिकग्रन्थसंख्यानाद्यनावश्यकार्थविस्तरविधानव्यसनिना किमिति शास्त्रिमहाशयेन स्वात्मा परोपहासपात्रीकृत इति च। ईदृशेषु हि विषयेष्व-न्यदीयेषु अन्येषामज्ञत्वमवश्यम्भावि। इदमेव ज्ञापयितुमस्माभिर्ग्रन्थप्रवेश एवं न्यबन्धि, "अज्ञत्वस्य दृढीकृत्यै" इति। एवमपि शास्त्रिवरस्य यादृंशि निन्दा-क्षराणि, तादृंश्यपि मा भूवन्निति विषयविवेचनमात्र एवाहं दृष्टिमर्पयन्नस्मि।

एष परीक्षकः शुद्धमुद्रणं शतदूषणीग्रन्थं द्रष्टुमलब्धावकाशः अशुद्धवाक्यानि यथाभूतानि मत्वा वृथैव बहु लिखति, शुद्धवाक्यानामपि श्रुतानां यथावस्थितमर्थं नावबुध्यते, पूर्वापरग्रन्थशैलीं न परिशीलयति, आपादचूडं वादमेकैकमनुद्दिश्य विवेचने कार्ये संरम्भं वहति, स्वानुकूलान् प्रतिकूलांश्च सर्वान् शतदूषणीविकल्पितान् कल्पान् स्वयं समर्थयितुं यतते, खण्डितस्वप्राच्यग्रन्थोक्तार्थानुवादमात्रेण दूषणोद्धारं कृतं मन्यते, तत्रतत्र प्रतिवादं स्वपक्षं मनागुपन्यस्य, 'एतेनायं शतदूषणीभागो व्याख्यातः, एतेनायमित्येवं लेखनमात्रेण समग्रं ग्रन्थं खण्डितं कलयति, खण्डनकारादिग्रन्थेषु शतदूषण्या सम्यक् खण्ड्यमानेषु तदंशाविवेकेन खण्डनादिग्रन्थानुवादेनापूर्वार्थप्रदर्शिनमात्मानमध्यवस्यति, श्रीभाष्यमतमिदमित्यविज्ञाय च स्वबुद्धिकल्पितं किञ्चिदारोप्य दूषणं विस्तृणाति । वादनामान्यथाग्रहणमपि शतभूषण्यां दृश्यते, ब्रह्मणिशब्दवृत्त्यनुपपत्तिरिति प्रथमवाद एवान्यथाग्रहणम् । एवं दृश्यसंबन्धानुपपत्तिः, कार्यान्यथानुपपत्तिरित्येवम् । न चास्माभिरिव शीर्षकादीर्घत्वायार्थाविरोधेन कृतोऽयमन्यथाभावः; अर्थे भेदवहनामभेदकल्पनानुगुणं प्रथमवाद एवाप्रस्तुतानेकविषयप्रवेशनेन वादसंकरविधानात् । प्राचीनाः अद्वैतिनः प्रायः पङ्क्त्यर्थं यथावदवबोद्धुं तत्र यदंशे स्वयं किञ्चिद्वक्तुमपारयन् तत्र किञ्चित् कर्तुञ्च व्याप्रियन्त ; अयं तु अनवबुध्यैवार्थमाटोपेनायथायथप्रपञ्चनेन कार्यं साधितं मन्यते । अत एतन्मात्रदूषणेन न कालः क्षेप्तव्य इति परिशील्य परमार्थभूषणग्रन्थोऽयमित्थमवतार्यते, यथाऽयं न केवलं शतभूषणीग्रन्थस्य, न चैतत्समानकर्तृकवेदान्तरक्षामण्यादिमात्रसनाथस्य, न चैतत्सुहृज्जनविहितसाम्प्रतिककतिपयग्रन्थमात्रयुक्तस्य, किं तर्हि अद्वैतसिद्ध्यादिप्राचीनानेकाद्वैतग्रन्थजातस्यापि खण्डनरूपः सन् अद्वैतसिद्धान्तस्थसर्वविधदौःस्थ्यदर्पणायमानः सूक्ष्मधियां प्राज्ञानामाराधनात् विशिष्टाद्वैतसिद्धान्तसुधारससमास्वादनाच्चाशेषमनीषिजनानुग्रहभाजनमिमं जनं करिष्यति ।

विष्णुशिववैषम्यविचारविरहितेऽप्यत्र प्रबन्धे स्वयं प्रसक्तिं विधाय

शिवद्रोहित्वेन पदेपदे वैष्णवान् विनिन्दत्ययमिति च तत्रापि किञ्चिदस्माभि-स्तत्रतत्र व्यापृतम्। विशिष्य तद्विमर्शश्चावसरे भविष्यति।

अत्र शतभूषणीकृता शतदूषण्यन्तिमवादमादौ परीक्ष्य पश्चादेव यथाक्रमं परीक्षाप्रवर्तनात् इहापि परमतेसूत्रस्वारस्यभङ्गपरीक्षैव प्रथमं परिशीलिता। अथ यथाक्रमं सर्ववादपरीक्षाः। तत्र निष्प्रपञ्चीकरणनियोगभङ्गवादम्, अलेपकमतभङ्गवादञ्च न परीक्षते श्रीमदादिशङ्कराचार्येष्टोऽयमयं भङ्ग इति कृत्वा। अस्य वादद्वयस्येवान्येषामपि केषाञ्चित् वादानां परीक्षणमकृत्वा श्लाघनं जोषम्भावावलम्बनं वा शतभूषणीकारस्य साम्प्रतम्। यतः, ऐकशास्त्र्यसमर्थनम्, बाधितानुवृत्तिभङ्गः, विविदिषासाधनत्वभङ्गः, शब्दजन्यप्रत्यक्षभङ्गः, सन्मात्रग्राहिप्रत्यक्षभङ्गः, भेददूषणनिस्तारः, ब्रह्माश्रयाज्ञाननिरासः, जीवन्मुक्तिभङ्गः, जीवेश्वरैक्यभङ्गः, भावरूपाज्ञानभङ्गः, जीवाज्ञानभङ्गः, मायाविद्याविभागभङ्गः इत्येवम्भूता अंशाः अद्वैतिषु मुख्यभूतानां केषाञ्चित् संमता एव। भावाभावविलक्षणाज्ञानवादी हि भावरूपतां तस्य नानुमंस्यते। एवमन्यत्। तत्रतत्र वादे तस्यतस्य तत्संमतत्वमस्माभिरदर्शि च। यदि विरुद्धत्वेऽप्यद्वैत्यभिमतिमात्रेण तत्राऽऽदरः, स पूर्वस्मिन् वादद्वयेऽपि समानः। श्री शङ्कराचार्यानिष्टत्वे च तस्य, शिष्टेष्वपि एकतरपरिशेषणे प्रयतनीयम्। अत इतः परमद्वैतिनः सयूथ्यकलहसमापतितामव्यवस्थामपोहितुं संभूय समुचितकोटिपरिग्रहेण तदतिरिक्तदूषणं शतदूषणीकृतं शिरसा श्लाघितुमेव कृतमनीषाः स्वाभिमताद्वैतसरणिमेकेन प्रबन्धेन प्रदर्शयितुमर्हन्ति। तद् विहाय विरुद्धनानावादाभिरतौ च शरीरशरीरिभावादिकमपि नाद्वैतबाधकं जीवेश्वरादिवदिति कृत्वा तद्दूषणादुपरन्तुमर्हन्ति।

ग्रन्थोऽयं श्रीभाष्ये विशिष्य जिज्ञासाधिकरणमतस्याद्वैतमतखण्डनभागस्य, तथा समन्वयारम्भगापशूद्राधिकरणगतस्य च विवरणरूपः। प्रायः श्रीभाष्यश्रीसूक्तिक्रमोऽप्यनुरुध्यते, अनूद्यते च श्रीभाष्यसूक्तिरपि तत्रतत्र वादान्ते। तत्राध्यात्मशास्त्रारम्भे ब्रह्मनिबन्धनं समुचितमिति ब्रह्मशब्दवृत्त्यनुपपत्तिवादः

प्रथमं समयोजि। अथ ब्रह्मजिज्ञासाशब्दघटकजिज्ञासापदार्थानुपपत्तिर्न्यरूपि। लघुपूर्वपक्षमहापूर्वपक्षविषययोः पृथगत्र दूषणग्रन्थे वक्तव्यत्वाभावात् अष्टमवादान्तेन लघुसिद्धान्तविषयं समाप्य नवमे महासिद्धान्तविषय उपक्रान्तः। शतभूषणीकारस्तु भूमिकायां प्रकारान्तरेणापि विषयविभागं परिकल्प्य तदनुरोधेन शतदूषणीदृष्टक्रममुल्लंघ्य क्रमान्तरेण कञ्चित् वादं केनचिद्वादान्तरेण योजयन् अन्यथा संकलनमपि दर्शयति। तत्रौचित्यानौचित्यविमर्शो व्यर्थ इत्युपेक्ष्यते। श्रीभाष्यानुरोधित्वात्तु शतदूषण्याः दृश्यमानःक्रमो नैवानादृत्यः। इदमप्यवधेयम्—यत् सर्वत्र ग्रन्थेषु यं क्रममवलम्ब्य निरूपणं कृतमस्ति, तत्र संगतिरस्ति न वेत्येतावदेव विमृश्यम्। विधान्तरेणापि विवेचनं संभाव्यत इत्येतत् न विहितविवेचनक्रमभङ्गे प्रभवति। अन्यथा पूर्वोत्तरमीमांसादिष्वप्यधिकरणरचनाक्रमेषु बहुलमन्यथाक्लृप्तिसंभावना सुलभा। श्रीभाष्योपन्यस्तविषयविमर्शेऽवतीर्णैः कैश्चित् अद्वैतिभिः वादावसरे श्रीभाष्यगत्यानुपूर्व्येण विषयशोधने क्रियमाणेऽपि यत्र प्रसङ्गादन्यदपि अन्यत्रनिरूप्यमपि प्रकृतानुषङ्गाद्विचिचारयिषितमासीत्, तत् तत् तत्रैव अवसरप्रतीक्षामविधाय विवेचयितुमुद्दिष्टमाचार्यचरणैरित्यपि तावन्मन्तव्यम्। अत एव विषयान्तरनिरूपणव्यापृत्या, पुनः प्रसक्तिप्रतीक्षयैव किञ्चिदन्यदा वक्तव्यमापतितमित्यपि संभाव्यते। सन्मात्रग्राहिप्रत्यक्षभङ्गात् द्वादशादनन्तरमेव सप्तचत्वारिंशो विकल्पाप्रामाण्यभङ्गवादो घटयितुं शक्यते; पञ्चमाद् बाधितानुवृत्तिभङ्गवादादनन्तरं जीवन्मुक्तिभङ्गवाद एकत्रिंशः; पञ्चत्रिंशात् तिरोधानानुपपत्तिवादात् पूर्वमेकोनविंशो ब्रह्माश्रयाज्ञाननिरासवादः, चत्वारिंशो जीवाज्ञानभङ्गवादश्च। पञ्चाशः शास्त्राधिकारिभङ्गवादः अष्टमात् साधनचतुष्टयभङ्गवादादुपरीत्येवं बहु तर्कयेम। तथापि चर्चासमये प्रवचनसमये च प्राप्तजिज्ञासानुरोधेन तत्तदंशविशदीकरणवैयग्र्यं प्राप्तमुपपन्नमिति निरूपितरीतिगतक्रमस्य संगतत्वमेव साधुसंलक्षणीयम्। 'अत्र वा वक्तव्यम् तत्र वेति न कश्चिद्विशेषः' इति च न्यायभाष्यम्। जगन्मिथ्यात्वं बह्वीभिरनुपपत्तिभिः सिषाधयिषूणामाशयान् परीशीलयितुं प्रवृत्तैश्च एकोनपञ्चाशप्रभृतयो

बहवो वादा उक्तानुक्तविषयविशेषचर्चायै विशदमवतारिताः । मतविषय इवाचारविषयेऽप्यद्वैतिनामन्यथामतिरालोडिताऽऽसीत् तयप्यच्छितमादिभिः ।

शतदूषण्यां शतादन्यूना एव वादाः आचार्यैरारचिताः । तत्रतत्र वादे (९.१५) कियानपि भाग इव अन्ते बहवो वादा विलुप्ता इतीदं तत्त्वम् । सप्रदायसिद्धेऽर्थेऽन्येषां विवादस्य न किञ्चित् फलम् । आचार्यविहितेषु ग्रन्था-न्तरेष्विवात्रोपलभ्यमानांशे ग्रन्थावसानविधाया अदर्शनमप्यत्र प्रमाणम् । शतदूषणीमेनां निर्माय चान्ये ग्रन्थाः पश्चादाचार्यैरन्वग्राहिषतेति तदीयग्रन्थत एव स्पष्टम् । यथोक्तं तत्त्वटीकायाम्, "शातितः शतदूषण्यां शङ्करादिमुधाग्रहः । शारीरकशरीरं तु व्यक्तमत्र प्रदर्श्यते" इति । शते चात्र वादेषु केषाञ्चिल्लोप इव क्रमविपर्यासोऽपि लेखकप्रमादात् क्वचित् संभाव्यत इत्यप्याहुः । कथानधिकारवादादौ ग्रन्थभ्रंशश्च प्रामाणिकः । चण्डमारुते प्रतिवादमाचार्यविषयो मङ्गलश्लोकः स्थितः कालक्रमेण नष्ट इति निरूपकाः प्राञ्चः प्राहुः । तथा शतदूषण्यामपि तत्रतत्र वादे मङ्गलश्लोकानां भ्रंशोऽप्यभ्यू-ह्यते । जिज्ञासानुपपत्ति—भेददूषणनिस्तार—व्यावर्तमानत्वानुमानभङ्ग—आनन्दत्वभङ्गादिष्वनेकेषु वादेषु सन्तः श्लोकाः निरूप्यार्थसंग्राहका अपि न मङ्गलश्लोकाः । चतुश्चत्वारिंशे च द्विपञ्चाशवादमङ्गलश्लोक एव पठ्यते । स तु तत्रैव संगत इतीह श्लोकेनान्येन वादानुगुणेन भाव्यम् । एवं बहुविभ्रष्टव्यां-शसद्भावेऽपि यावद् रक्षितम्, तावदप्यद्वैतिमतसमूलोन्मूलनाय पर्याप्तमिति संतोष्टव्यम् ।

अथात्र यस्य जिज्ञासाधिकरणभाष्यस्य प्रायो व्याख्यारूपा शतदूषणी, तद्भाष्यविचारितविषयसूची शतदूषणीवादविषयसूची च श्लोकरूपेण सुखग्रहणाद्यौचित्याय निबध्यते—

1. अथातोब्रह्मजिज्ञासाशब्दानामर्थवर्णनम् ।
   ऐकशास्त्र्यं कर्मचिन्ताब्रह्मचिन्ताक्रमौचिती ॥

2. चिन्ताया रागतः प्राप्तिः पूर्वपक्षो लघुस्ततः ।
   न वाक्यजन्यज्ञानस्य किंतु मतेरुपायता ॥

3. कर्माङ्गिका च सा, यस्मादिष्टं साधनसप्तकम् ।
न साधनचतुष्कस्य पूर्ववृत्तत्वमित्यथ ॥

4. पूर्वपक्षो महान् यत्र ब्रह्ममात्रस्य सत्यता ।
अविद्याजं जगन्मिथ्येत्यैक्यधीर्मोचनीष्यते ॥

5. प्रबलं शास्त्रमध्यक्षात् श्रुतिष्वैक्यश्रुतिस्तथा ।
सामानाधिकरण्यञ्च स्यादखण्डार्थतत्परम् ॥

6. प्रत्यक्षमपि सन्मात्रग्राहि भेदस्त्वसंभवी ।
ऐक्यं सदनुभूत्योः स्यात् स्वप्रकाशा त्वजा च सा ॥

7. निर्विकारा च निर्भेदाऽप्यात्मा चाहमि नात्मता ।
महासिद्धान्त उपरि निर्विशेषे त्वमानता ॥

8. सविशेषं सर्वमिदं निर्विकल्पमपीदृशम् ।
सन्मात्रग्राहिताभङ्गो भेददूषणदूषणम् ॥

9. जातेः संस्थानता मिथ्यात्वानुमाननिराक्रिया ।
धीसद्भेदो धियश्चानुभाव्यता जन्यतादि च ॥

10. विषयाणां विकाराणां भेदानाञ्चात्र संभवः ।
धीतोऽन्यस्याहमर्थस्य त्वात्मत्वं ज्ञानताऽस्य च ॥

11. ज्ञातृत्वस्याप्यनध्यासः सुषुप्तावप्यहंत्वभा ।
शास्त्रप्रत्यक्षयोर्मध्ये शास्त्रप्राबल्यवारणम् ॥

12. असत्यात् सत्यसिद्धेश्च भङ्गः श्रुतिनिरूपणम् ।
सत्यादिवाक्यस्याखण्डपरत्वस्य निराक्रिया ॥

13. निर्गुणश्रुतिसंकोचो ज्ञेयज्ञातत्वयोःस्थितिः ।
आनन्दत्वानन्दितयोरप्यद्वैतश्रुतेर्गतिः ॥

14. पुराणाद्यर्थसम्यक्त्वमुपबृंहणताऽपि च ।
जीवब्रह्मस्वरूपैक्यनिरासोऽन्यादृशैक्यतः ॥

15. ..आश्रयत्वं तिरोधेश्च स्वरूपस्याप्ययुक्तयः ।

अनिर्वाच्यत्वेऽप्ययुक्तिः प्रमाणस्य च; तत्र च ॥

16. प्रत्यक्षस्यानुमायाश्च ततः सत्ख्यातिचिन्तना ।
श्रुतिस्मृतिपुराणानामविद्यापरताहतिः ॥

17. निवर्तकस्यायुक्तिश्च तत्त्वमस्यर्थशोधनम् ।
सिद्धान्तसारोपन्यासो निवृत्तेरप्ययुक्तता ॥

18. महासिद्धान्तगत्यैवमथशब्दार्थवर्णने ।
सिद्धेऽथाऽऽद्याधिकरणशरीरप्रतिबोधनम् ॥

अथ शतदूषणीवादविषया 'सूची—

जिज्ञासाधिक्रियाभाष्याद्यनुगा शतदूषणी ।
षट्षष्टौ तत्र वादेषु विषयानुक्रमस्त्वयम् ॥

(1) ब्रह्मशब्दे वृत्त्ययुक्तिः (2) जिज्ञासानुपपन्नता ।
(3) ऐकशास्त्र्यस्थितिः (4) ईश्वरविधेयत्वभञ्जनम् ॥
(5) न बाधितानुवृत्तिः स्यात् (6) न स्याद्विविदिषार्थता ।
(7) न प्रत्यक्षं शब्दजन्यम् (8) न साधनचतुष्टयम् ॥
(9) न कथाधिकृतिः (10) न स्यान्निर्विशेषं स्वयम्प्रभम् ।
(11) न निर्विकल्पकं तस्य (12) न सन्मात्रं दृशोः पदम् ॥
(13) न भेददूषणम् (14) वेदप्रामाण्यं च परस्य न ।
(15) (16) दृश्यत्वं व्यावृत्तता च न मिथ्यात्वस्य साधनम् ॥
(17) दृग्दृश्ययोगिता (18) बाधप्रकाशानुपपन्नता ।
(19) ब्रह्माश्रयाज्ञानहतिः (20) ब्रह्मावेद्यत्वभञ्जनम् ॥
(21) नानुत्पत्तिः (22) नाविकारो (23) नानानात्वञ्च संविदः ।
(24) न निर्विशेषता (25) नास्या आत्मत्वम् (26) अहमस्तु तत् ॥
(27) नाध्यस्ता ज्ञातृता (28) नास्याः साक्षीति व्यपदेश्यता ।
(29) शास्त्रे लोकाविरोधित्वम् (30) सत्यासिद्धिस्सत्यतः ॥
(31) जीवन्मुक्तिर्न (32) नो बाधसामानाधिकरण्यवाक् ।

(33) न संविदैक्यम् (34) नैवोपदेशो (35) नैव तिरोधिवाक् ॥
(36) नात्माद्वैतम् (37) न जीवेशाद्वैतम् (38) नाखण्डवाच्यता ।
(39) न भावरूपमज्ञानम् (40) न जीवाज्ञानसंभवः ॥
(41) नाविद्याया स्वरूपोपपत्तिः (42) मायैक्यमत्र च ।
(43) न निवर्तकमस्याः (44) न निवृत्तिश्चोपपद्यते ॥
(45) न ब्रह्म शब्दावेद्यम् (46) न निष्प्रपञ्चीकृतेर्विधिः ।
(47) न विकल्पाप्रमाणत्वम् (48) नोपबृंहणबाधनम् ॥
(49) नैवयोपदेशार्थापत्तिः (50) न सिद्धिरधिकारिणः ।
(51) न निर्विषयता मुक्तचितो (52) निर्गुणवाग्गतिः ॥
(53, 54) न ब्रह्ममायोपादानत्वार्थापत्ती स्त इत्यपि ।
(55) न कार्यानुपपत्तिः (56) नानन्त्यतत्त्वश्च (57) निर्गुणे ॥
नानन्दत्वं (58) न नित्यत्वम् (59) अद्वितीयश्रुतेर्गतिः ।
(60) सत्त्वासत्त्वविवेको (61) ऽथो जीवस्यैकत्वभञ्जनम् ॥
(62) शूद्राधिकारापत्तिश्च (63) न कर्माधिक्रियाक्षतिः ।
(64) न यतिः पररीत्या स्यात् (65) अलेपकमतं न सत् ॥
(66) न ब्रह्मसूत्रस्वारस्यं स्यात् परेषां मतेऽन्ततः ।
इत्थमर्थास्तु षट्षष्टिर्भाष्यव्याख्यात्मनोदिताः ॥

इत्थं वादान् शते चक्रे ; दृष्टे पूर्तेरदर्शनात् ।
ग्रन्थान्तरेष्विवाद्यपि लोपो रक्षणहानितः ॥

श्रुतितः स्मृतितश्चेतिहासतश्च पुराणतः ।
अद्वैतस्यास्ति दूष्यत्वं पूर्णभाष्यार्थवर्णनात् ॥

शतदूषणी हि परमर्थभूषणप्रकटस्वकान्तिरनघाऽञ्जसाऽनिशम् ।
शतभूषणीसुखविभूषणेऽपि तन्मतदूषणानि निपुणं प्रदर्शयेत् ॥

इति सर्वे सज्जनविधेयः
उत्तमूर — ति. वीरराघवाचार्यः



श्री. उत्तमूर—वात्स्यमञ्चकवर्ति-
अभिनवदेशिक वीरराघवाचार्याः

श्री:

# विषयसूची

## अविधेयज्ञानभङ्गः 219-238



## बाधितानुवृत्तिभङ्गः 239-244



## विविदिषासाधनत्वभङ्गः 244-251



## शब्दजन्यप्रत्यक्षभङ्गः 251-276

## साधनचतुष्टयवृत्तत्वभङ्गः



## कथानधिकारवादः 294-316



## निर्विशेषस्वयम्प्रकाशत्वभङ्गः

## निर्विशेषनिर्विकल्पभङ्गः 333-345



## सन्मात्रप्रत्यक्षभङ्गः 346-355



## भेददूषणभङ्गः ॰55-369



## वेदप्रामाण्यपरिग्रहानुपपत्तिः 370-382



## दृश्यत्वानुमानभङ्गः 382-460

## व्यावर्तमानत्वभङ्ग: 461-479



## दृग्दृश्यसंबन्धप्रसाधनम् 480-501



## बाह्यप्रकाशानुपपत्ति: 502-513

## असत्यात् सिद्धिभङ्गः 677-688



## जीवन्मुक्तिभङ्गः 689-703



## बाधार्थत्वभङ्गः 703-716

शुभमस्तु

# LIST OF DONERS

**who have liberally contributed for this work**

1. Sri Ahobilamatt Sri Sannidhi
2. Sri Sridharacharya Swamiji
   Sri Uttarahobilamatt, N. India
3. Sri Nerur Pandit Narayana Ayyangar, Karur
4. Sri V. T. Vedanta Ramanujachar, Advocate,
   Poondamalli
5. Sri Nerur Krishnaswami Ayyangar, Karur
6. Sri R. Gopalaswami Ayyangar, Advocate,
   T. Nagar
7. Sri S. V. S. Ramanujam, Retd. P. W. Inspector,
   Salem
8. Sri N. S. Krishnaswami, (Principal G. C. T.)
   Coimbatore
9. Sri K. S. Srinivasacharya, Progressive Printers,
   Madras
10. Sri K. Bhashyam, Advocate, Mylapore.
11. Sri A. Srinivasa Iyengar, Mannargudi.

*Regarding collections from other sources also a complete list in detail will be published in "Satadushanee Sara"*

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

श्रीमद्भ्यो वेदान्तरामानुजमहादेशिकेभ्यो नमः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमते भगवद्रामानुजाय नमः

श्रीनिवासपरब्रह्मणे नमः

# परमार्थभूषणम्

श्रीशं देवं वृषगिरिरतं श्रीमतस्त्रीन् मुनीन्द्रान्
श्रुत्यन्तार्यान् अखिलकथकक्षेपिसत्तर्कसूक्तीन् ।
आचार्यानप्यनघधिषणान् रङ्गरामानुजाख्यान्
नत्वा सम्यक् परमतगतीरद्य निर्मूलयामि ॥ १

विनायकपितामहे व्यपहृतश्रुतावात्मजे
निगृह्य मधुकैटभौ कृतहितं हयास्यं परम् ।
गजास्यपतिसेवितं गजविपक्षवक्त्रादितां
भजामि कवितार्किकद्विरदसिंहताख्याऽऽस्थितम् ॥ २

परपक्षनिराकृतिप्रसिद्धाः गुरवोऽतिस्थविराः ; तथापि शिष्याः ।
प्रभवन्ति परीक्षितुं प्रबन्धान् परकीयान् शतभूषणीं तथाऽन्यान् ॥ ३

प्रागेव खण्डिता इष्टब्रह्मनैष्कर्म्यसिद्धयः ।
श्रीभाष्यकारप्राचार्यैः सिद्धित्रयविधायिभिः ॥ ४

शाङ्करव्याकृतीः प्राच्यनव्यप्रस्थानभेदिनीः ।
परास्य प्राच्य एवाध्वा भाष्यकृद्भिः परिष्कृतः ॥

अक्षानुमानश्रुतिसूत्रमुख्यप्रमाणदूरान् खलु कल्पयन्ति ।
तर्काप्रतिष्ठाविहिताव्यवस्थान् अद्वैतिनोऽर्थान् अखिलांशदुःस्थान् ॥

तर्कप्रमाणनिबिडां शतदूषणीं यः सम्यग्विभावयितुमप्यसमर्थ ईदृक् ।
यं कञ्चिदंशमयथावदनूद्य पूर्वक्षिप्तं पठन् बत मतः खलु खण्डकोऽद्य ॥

उक्तानुक्तसमस्तकल्पकलितं कृत्वा विकल्पं क्रमात्
अद्वैतं शतदूषणी विदलयत्याम्नायसंरक्षिणी ।
आपातव्यवहारमात्रनियतं चाद्वैतमद्यत्व इ-
त्याहत्ये सगुणाध्वनि स्थितिमतामद्वैतमानो वृथा ॥ ८

को दोषः कश्च जीवः स्यात् कश्चेशः का च देवता ।
कथञ्च सृष्टिरित्याद्यम् अद्वैतेऽत्राव्यवस्थितम् ॥ ९

अथाप्यज्ञमतिक्षिप्त्यै तत्त्वव्युत्पादनाय च ।
प्राच्यनव्यबहुग्रन्थपरीक्षार्थोऽयमुद्यमः ॥ १०

श्रियः प्रियस्याखिलहेयप्रत्यनीकस्यानघरूपगुणविभूतिविस्तारस्यानन्तावतारस्यानर्घोपदेशभूतम् अनादिनिधनाविच्छिन्नसंप्रदायनिगमनिकरपाञ्चरात्रगीतादिकं भगवद्बादरायणबोधायनादिपरमर्षिप्रणीतभारतशारीरकब्रह्मसूत्रवृत्त्यादि च सामग्र्येण समीक्ष्य सर्वसामरस्यवहं विशिष्टाद्वैतामृतमनादिसमयसंरक्षितम् अशेषेभ्यः सुमनोभ्यः प्रदाय वेदबाह्यकुदृष्टिक्षोभपरिहरणेन प्राणिनः परमया करुणया ररक्षुर्भगवद्रामानुजस्वामिचरणा इतीदं खलु निश्चप्रचमेव । तमिमं विशिष्टाद्वैतसिद्धान्तमनुरुध्य पारमैकान्त्यभूषितायां वृत्तौ प्रतिष्ठां प्राप्तवद्भ्यो महद्भ्योऽभ्यसूयुषु परमतस्थेषु सिद्धान्तक्षोभणाय वादकोलाहले

व्यापृतेषु कवितार्किकसिंहाः सर्वतन्त्रस्वतन्त्राः श्रीमद्वेङ्कटनाथार्याः श्रीमद्वेदान्तदेशिकाः विष्वग्व्यापिन्यगाधे यतिनृपतिवचस्संपदेकार्णवे श्रद्धाशुद्धावगाहैः शुभगतिभिरभिषिक्ताः वादेषु सर्वान् परान् पराजित्य तदाप्रवृत्तवादार्थसंग्रहक्रमेण सर्वाग्रन्थपरिशीलनपूर्वं श्रीभाष्यव्याख्यारूपां शतदूषणीम्, "प्राज्ञा यथोदितमिदं शुकवत् पठन्तः पच्छन्नबौद्धविजये परितो यतध्वम्" इत्युपदिश्य निर्माय प्राज्ञेभ्यः प्रतिपादयामासुः। विशिष्टविद्यासंपन्नाः विद्यारण्यादयोऽपि ग्रन्थरत्नमिदमवलोक्य प्रतिकाराक्षमा जोषमासतेति विश्वप्रसिद्धमिति शतभूषणीग्रन्थोऽप्यनुवदति। तेषां तर्के विशेषतोऽवगाहनं नासीदिति तथेति चेत् - तर्हि सुदूरे शतभूषणीकारः। न वयं विद्यारण्यादिभ्यो विशिष्टाः प्राज्ञगणयो न भवन्ति भविष्यन्ति चेति ब्रूमः। किंतु विशिष्टवैदुष्यैरपि खण्डयितुमशक्यां शतदूषणीमर्वाचीना विद्यारण्यादितोऽप्यल्पवैदुष्याः न बोद्धुमपि प्रगल्भन्ते; दूरे तु खण्डने इत्येतावदेव। गते गणरात्रे प्रादुर्भूताः प्रकृष्टज्ञाननिधयोऽप्ययदीक्षितादयोऽपि चण्डमारुतकारमहाचार्यादिसमसामयिकाः अतिप्रसङ्गं नाद्रियन्त। यद्वा ताटस्थ्येन मतानां परिशीलनम्, ततो गृहीतचरमतपरित्यागेन राम्यक्तयाऽवधृते मते प्रवेशोऽपि समादर्तव्यो भवेत्; प्राक्काले समादृतश्चासीत्। अधुनातनास्तु जातिमिव मतमपि यावदायुषम् अपृथग्विसर्द्धुं मन्यन्ते। न वैष्णवाः शैवा बुभूषन्ति, न शैवाः वैष्णवाः। नाप्यद्वैतिनः द्वैतिनः। तत् साम्प्रतं परमतदूषणसंरम्भः नापेक्षितोऽस्ति। प्रत्युत पारम्परिकमद्वेषाभिवर्धनेन बाह्यानां छिद्रप्रदानमेव फलत्ययमभिनिवेशः। अथ बुद्धिवैशद्यसंपिपादयिषया परमतखण्डने प्रवृत्तिः, न तर्हि नेत्रे पांसुभिरवकीर्य अहेतूनपि हठात् उपक्षिप्य अभिनिवेशेन यत्किञ्चिद्विलिख्य विजयाभिमानिता पदमाधातुमर्हति। एवं स्थितेऽपि अद्यत्वे शतभूषणीति परिभाषितनूरणिग्रामवास्तव्यस्य प्रियसुहृदो विदुषो मुखेन शतभूषणीनाम्नैव शतदूषणीखण्डनग्रन्थः कश्चित् अद्वैतिभिः सर्वैः संभूतैः प्रकाशं प्रापितोऽस्ति। विशिष्टाद्वैतपण्डिताश्च ग्रन्थमिमं पश्यन्तः, 'किमनेन तद्व्युत्पत्ति

दर्पणेन व्यर्थविस्तरेण व्याघातजटिलेन शतभूषणीग्रन्थेनेति समकण्ठमाहुः। परामर्शे च दूषणार्थं प्रवृत्ता शतभूषणी स्वमतदौस्थ्यमेव सर्वत्र आविष्कुर्वती नहि निन्दान्यायेन शतदूषण्यै शतं भूषणान्येव समर्पयितुमिच्छतीत्यध्यवसीयते। अभिनिवेशिनामद्वैतिनां परं स्वमतस्थापनं सम्यगकारीति स्वात्मनि तुष्टिः, एतदनुबन्धिभिः प्रबन्धृसम्माननञ्चेत्येतावदेव फलम्; न पुनः शतदूषणी-खण्डनमीषदपि। इदमेव दर्शयितुं सम्प्रति प्रवृत्तिरस्माकम्। तत्तद्वाद-नामधेयमपि सम्यगजानानस्य वादप्रतिपाद्यविषयविज्ञाने का कथेति च व्यक्तमेव दर्शयिष्यामः।

अविचिन्त्य कश्चिदवशः करोति चेत्
कृतिमीदृशीं किमपि लिप्सुरस्त्विदम्।
यदिमे समेऽपि समवेत्य तन्वते
स्तवनं निमील्य नयने तदद्भुतम्॥ ११

क्व सर्वतन्त्रस्वातन्त्र्यवित्तस्तार्किककेसरी।
क्वेमे त्वापातदृङ्मूलव्यर्थव्याहतवाग्बलाः॥ १२

शतदूषणीग्रन्थे शतं वादाः प्राक्स्थिता इति निर्विवादो ग्रन्थकृच्छिष्य-सम्प्रदायः। साम्प्रतं षट्षष्टिरेव वादाः उपलभ्यन्ते। अन्विष्यन्ते तु परे। उपलभ्यमानवादखण्डनार्थं प्रवृत्तश्च ग्रन्थः न शतभूषणीति नामार्हति। शतं भागान् वा स्वयं विधाय तथा नामकल्पनं कथञ्चिदनुमन्येत। तथा भागान् अपरिकल्प्य षट्षष्ट्यामपि द्वौ वादौ विहाय चतुःषष्टिमेव वादान् परीक्षितुं प्रवृत्ता कृतिः कथं शतभूषणी भवेत्। केचिन्मन्यन्ते:-शतत्वसंख्यायां सत्यामेव शतपदप्रयोग इति न नियमः, दूषणाधिक्यतात्पर्यमात्रेणापि शतदूषणीति नामकरणं घटते इति। कामं शतभूषणीति ग्रन्थनाम तदभिप्रायमिति तत्सुहृदो निर्वहन्तु। अस्मदाचार्यग्रन्थः शतदूषणी तु न षट्षष्टिवादपर्यवसितेत्येवाऽऽस्माकः सम्प्रदायः। ग्रन्थनिगमनप्रणाल्यपि सर्वत्र तदादृता नास्तीहेति

न नाध्यक्षम् । यदि शतभूषणीकारोऽपि स्वजन्मग्रामनाम शतभूषणीति परिकल्प्य ग्रन्थनामापि तदेव तदभिप्रायेण कल्पयेत्, काममस्तु, यदि तत्र न काचिदनुपपत्तिः । नूरणिग्रामस्य शतसेनापुरमिति व्यवहार एव प्राच्यादृत इति तु तद्विदः । यत्त्वत्र शतभूषण्याम्, परस्सहस्रेषु दूषणेषु अद्वैतमते संभावितेषु कथं शतदूषणीमेवाकुर्वन् ? कथञ्च षट्षष्ट्या दूषणैरेवोपारमन् इति स्वयमुद्भाव्य लेखनसाहसम्, "भगवत्तत्त्वदूषणं शताधिकं महते दुःखाय आत्मघाताय स्यात्" इत्यादि—तत एव पश्यत, ग्रन्थकर्तुः कियान् प्रद्वेष इति । इदं खल्वनेन ग्रन्थकर्त्रा स्वगतस्य दोषस्य परेष्वारोपणमात्रम् । विष्णुपुराणप्रतिपादितया सर्वलोकविदितया च प्रक्रियया अखिलहेयप्रत्यनीकत्वमशेषकल्याणगुणनिधित्वञ्च भगवच्छब्दवाच्यं भगवति स्थापयन्तः किं श्रीदेशिकचरणाः भगवत्तत्त्वदूषकाः ? किं वा, 'परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति । जगतः सर्वस्य मिथ्यात्वेन तत्सृष्ट्याद्यौपयिकाः ज्ञानशक्त्यादयो गुणा अपि मिथ्याभूता एव । अत ईश्वरः इति न कश्चिदन्योऽस्ति; ईश्वरोऽहमस्मी'ति भगवद्गुणरूपविभवापलापिनः शतभूषणीकारतत्कूटस्थाः भगवत्तत्त्वदूषकाः इतीदमपि हन्त ग्रन्थकारो न परिशीलयितुं पारयति ।

कल्याणहृदयाः प्राज्ञः कामं परुषवादिनः ।
विनीतवेषाः क्रूराश्च परे त्याज्यमिदं समम् ॥ १३

न चायमन्तिमोऽनवसितश्च ग्रन्थ इति चिन्त्यम्; यतः श्रीदेशिकचरणैरेव तत्त्वटीकायां व्यक्तमुक्तम्, "शातितः शतदूषण्यां शङ्करादिमुधाग्रहः" इति । अतः कृता एव शतं वादाः । केचित् साम्प्रतमुच्छिन्नाः, यथा तेषां तत्त्वटीकायाः, यथा च सेश्वरमीमांसायाः, यथा च न्यायसिद्धाञ्जनस्य । समग्रोऽपि ग्रन्थः तेषामधिकरणदर्पणादिः अन्तेवासिभिरप्यरक्षित आसीत् । अयं तु प्रियसुहृत् परीक्षाशतकप्रणयनप्रवृत्तः षट्षष्टिमपि परीक्षाः अकुर्वन् शतभूषणीति यन्नाम परिकल्प्य प्राचीकशत्, तेन ज्ञायते भगवत्तत्त्व-

दूषणं यथैतदुक्तं महते दुःखाय आत्मघाताय चेति हृदयकम्पकृतोऽयमुपरम इति । यथाप्रतिज्ञं निर्वर्तनीयमिति च निर्बन्धरहित एष सहस्रभूषणी कोटिभूषणीति परार्धपर्यन्तं किं न यातु । सर्वथा पुनः एकस्यापि भूषणस्य दुर्भिक्षमेवेति स्पष्टमनभिनिवेशिनां शास्त्रव्युत्पत्तिभाजामवहितमनसाम् ।

स्यान्निष्प्रपञ्चीकरणनियोगाद्येकदेशिनाम् ।
शाब्दप्रत्यक्षवादाद्यमप्येवं त्यागमर्हति ॥ १४

भूमिकायां विशिष्टाद्वैतप्रक्रियानिरूपणं प्रायः तन्मततत्त्वार्थाविज्ञानमूलम् अयथायथम् । तदिदमेव वाचकानां हृदि निर्णयं जनयिष्यति, यत् एवं तन्मताविज्ञानभूला शतभूषणी तन्मतखण्डनं कियन्नाम कुर्यादिति ।

यावदद्वैतसंबन्धि तावत्यविरमन्नयम् ।
अज्ञत्वस्य दृढीकृत्यै लग्नो हन्तेतरांक्तिषु ॥ १५

चतुष्पष्टेर्वादानां परीक्षात्मनि शतभूषण्यां शतदूषण्या उपलभ्यमानायाः अन्तिमस्य वादस्य परीक्षैव आदौ व्युत्क्रमेण निबद्धाऽस्ति । अहेतुं हेतुत्वेन भूमिकायां निर्दिश्यापि कस्मादेवं निबन्धनमिति विमर्शे, केचिदाशेरते-परमते सूत्रस्वारस्यभङ्गवादमात्रपरीक्षा शतभूषणीग्रामाभिजनेनानेन व्यधायि । अन्यास्तु परीक्षाः तदद्वैतमते स्थितैः अन्यैरेव कृताः अयथार्थवाग्जालवर्षणेन तदापूरिताः । तस्मादादौ एतन्निबन्धनमिति । आह च स्वयमपि भूमिकायाम् - 'परीक्षा इमाः आदिशङ्कराचार्यापरावतार - आधुनिक शङ्कराचार्यैः कृताः । स्वयं लेखनशोधनमात्रे कर्ते ' ति । तेन ज्ञायते तत्तद्वादखण्डनार्थं प्रवृत्तान् विदुषः विशिष्यानिर्दिश्य तत्स्थाने स्वामिन एव निर्दिशतीति ।

अन्ये मन्यन्ते—ब्रह्मसूत्राणां स्वमते स्वारस्यमिति पूर्वमुद्घोषे कृते तत्तद्वादपरीक्षायां स्वमतोपपादनप्रक्रियादौःस्थ्यमनुपश्यन्तोऽपि अनुशयाना अपि 'सम्पूर्णोपपादनासामर्थ्येऽपि न मतं हेयम् सूत्रकारपरिगृहीतत्वात्' इति वि-

श्रस्य अन्तरङ्गाः मनस्समाधानमश्नुवीरन्निति आदौ अन्तिमपरीक्षाघटनमिति। अपरे तु ब्रुवते - उत्तरास्विव परीक्षासु सूत्रस्वारस्यभङ्गवादपरीक्षायामपि असौष्ठवं पश्यताम् इतो मनस्समाधानसम्पादनमप्याशामोदकमात्रम्। पामर-प्रतारणं तु परथाऽपि। अतो निर्बन्धनव्याहारव्यापरणादि किमपि कारणमिति।

अथ एतत्परीक्षैव प्रथमं प्रणीता, उत निबन्धनमात्रं प्रथममिति विमर्शा-न्तरमुदेति। अत्र कश्चिदभिप्रायः - पदे पदे शतदूषणीवादमेकं गृहीत्वा, व्यक्तमिदं तद्वादपरीक्षायाम्, व्यक्तीकृतमिदमेतद्वादपरीक्षायाम्, परीक्षितमिदं तद्वादपरीक्षायाम्, व्यक्तीकृतमिदं तत्र तत्र परीक्षायामिति सर्वस्या अपि परीक्षायाः कृतत्वेन निर्देशात् अन्त एवैषा परीक्षा कृता; निबन्धनं परं प्रथमत इति। अथ परः - अद्वैतमताचार्यैः शतदूषणीखण्डनार्थं बहुमुखं निर्बद्धस्यास्य तत्राशक्तिमात्मनः साधु समाकलितवतः, अन्तिमवादमात्रपरीक्षां विधाय सर्वो वादः परीक्षित इति परं तत्र मिथ्या विलिख्य च प्रकाशनं चिकीर्षित-मासीत्। तथैव चाकारि। अथ पुनः सुहृदः साहायकमाचरन्तः प्रतिवादं परीक्षाघटनेऽपि उद्युयुजिरे। अथ सर्वसमाहारेण शतभूषणीति नाम्ना प्रचारः प्रापित इति। अन्यश्चात्मगाशयः - अद्वैतमतमपि, अन्यानीव बहूनि मतानि बाह्यानि आन्तराणि च, स्वसिद्धान्तार्थान् यथाशक्ति स्थापयितुं प्रयतत एव। परन्त्विदं वैदिकं महर्षिबहुमतञ्च भवति, न वेत्यत्र प्रागेव विप्रतिपत्तिरासीत्। तत्स्थापनायैव आदिशङ्कराचार्याः वृत्तिग्रन्थादिनिह्नवेन अद्वैतमतं ब्रह्मसूत्रेषु प्रवेशयितुं सूत्रभाष्यम् उपनिषद्भाष्याणि च निबबन्धुः। एवमपि आ वैदिकेभ्यः आ च लौकिकेभ्यः इयं प्रथा अनुवर्तमानैवास्ति, यद् ब्रह्मसूत्राणि सर्वथा अद्वैतस्य नैवानुकूलानीति। सत्येवम्, का कथा तद्व्याख्येयभूतानामुप-निषदाम्। अतः सूत्रस्वारस्यभङ्गवादपरीक्षया अन्तरङ्गलोकसमाश्वसनमादौ विधातुम् अन्तिमवादपरीक्षायाः आदौ निबन्धनमवर्जनीयमापतितमिति।

अस्तु यत्किमपि। सर्वथा विप्रतिपत्तिनिविष्टायाः अद्वैतस्यावैदिकत्व-कोटेः प्रमाणान्तरपराहतत्वकोटेरिव औत्कट्याधानमेव शतभूषणीकृत्यमापति-

तम्। तदत्र शतभूषणीक्रममनुसृत्यैव शतभूषणीं परीक्षमाणा वयं भूषणगतान् दोषान् संग्रहेणोद्घाटयिष्यामः। तदपदेशेन प्राचीनेष्वद्वैतग्रन्थेषु स्थितानप्युपपादनप्रकारान् यथावसरं शोधयिष्यामः। अव्युत्पत्तिः, अनन्वय-इत्यादींस्तु दोषान् प्रमेयपरीक्षणव्यापृता वयं प्राय उपेक्षामहे। सूत्रस्वारस्यभङ्गवादपरीक्षायाश्चोपोद्घातांशमादौ परीक्ष्य सूत्रस्वारस्यभङ्गे शतदूषणीकृते शतभूषणी अनूद्य यथा दूषयति, तत्र दूषणानि क्रमेण यथार्हं संगृह्णीमः।

प्रतिवादं परीक्षायां प्रवृत्ता शतभूषणी।
प्रकाश्यते परीक्ष्यैतां परमार्थस्य निर्णयः॥ १६

वदन्तः कल्पनामात्रं विश्वमद्वैतिनस्तथा।
तृप्यन्ति मानदुर्भिक्षेऽप्याहत्यानेककल्पनाः॥ १७

परमते सूत्रस्वारस्यभङ्गवादपरीक्षा चेयं तन्मते सूत्रानुगुण्यसिद्ध्यसंभवोपपादकैः बहुभिः ग्रन्थैः प्रागेव प्रतिक्षिप्तप्राया। विशिष्य च शारीरकचतुरध्यायीं कृत्स्नां गृहीत्वा विस्तरेण विचारः तद्विषयशतदूषणीवादव्याख्यानात्मा यथावसरं कर्तव्योऽस्ति। तदत्र शतभूषण्युक्तांशमात्रमनुपपन्नमुपक्षिपामः।

भेदश्रुत्युपदिष्टानां न गता परमार्थता।
घटकश्रुतिसूक्ता च नेष्टा देहान्तरात्मता॥ १८

अभेदश्रुतिनिर्वाहोऽप्यसिद्धो लक्षणां विना।
अद्वैतसाधकं किं स्यात् अस्वारस्यादशेषतः॥ १९

एवं शारीरके सूत्रतत्संदर्भगतं समम्।
स्वारस्यं भज्यते यत् तत् टीकादौ विस्तृतं स्थितम्॥ २०

तदर्थे च पृथग् युक्तः प्रबन्धस्तदिहाधुना।
पूर्वपक्षिस्पृष्टमात्रपरीक्षैव प्रवर्त्यते॥ २१

## (१) 'परमते सूत्रस्वारस्यभङ्ग'प्रसाधनम्

प्रथमतस्तावदयं शतभूषणीकारः ऐकशास्त्र्यसमर्थनवादपरीक्षायां वक्तव्यमंशं सूत्रस्वारस्यभङ्गवादपरीक्षायामुपपाद्य ग्रन्थं पूरयति। अवश्यवक्तव्यांशेषु प्रसक्तेषु पुनः, तत्र व्यक्तम्, तत्र परीक्षितम्, तत्र व्यक्तीकृतमिति विलिख्य वक्ष्यति। अत्र ऐकशास्त्र्यविषये यद् वक्तव्यम्, तत् तदवसर एव विवक्षामः। अत्र शतभूषणीविवक्षितं तावत् - ऐकशास्त्र्यपक्षे सङ्कर्षकाण्डान्तिमसूत्रेणैव सविशेषब्रह्मनिरूपणस्य वर्तितत्वात्, "अथातो ब्रह्मजिज्ञासे" ति पृथक् प्रतिज्ञानं न घटत इति - तावता किमुक्तं भवति? यदि सविशेषब्रह्मस्वीकारेण ऐकशास्त्र्यवादो वा त्याज्यः, ऐकशास्त्र्यस्वीकारेण निर्विशेषब्रह्मप्रतिज्ञानं वा स्वीकर्तव्यमिति — उभयथापि नाद्वैतिपक्षसिद्धिः। ब्रह्मसविशेषत्वस्य ऐकशास्त्र्यस्य च उभयस्य तत्र त्यक्तत्वात्। अथ निर्विशेषब्रह्मस्वीकारे ऐकशास्त्र्यं स्वत एव त्यक्तं भविष्यतीति चेत् - कुत एतत्? तत्स्वीकारेऽपि भाष्यभामत्यादौ ऐकशास्त्र्यस्यापि स्वीकारात्। सविशेषब्रह्मनिरूपकसंकर्षकाण्डविरुद्धत्वात् निर्विशेषपरस्य शारीरकस्य न तदैकार्थ्यमिति चेत्, तर्हि शारीरक एव, 'अथातो ब्रह्मजिज्ञासे'त्यत्र अब्रह्मजिज्ञासेति पदच्छेदेन ब्रह्म ब्रह्मणो. निर्विशेषसविशेषयोः विरुद्धयोर्वर्णनं कथमुपरि क्रियते? कथञ्च धर्माधर्मयोः मिथः प्रत्यनीकयोरपि निरूपणम्, "अथातो धर्मजिज्ञासे" त्यत्र? अधर्मजिज्ञासेति पदच्छेदो विवक्षित इति हि एकदेशिकथितमनुकूलतयोद्भियते। एवं तु खलु - शारीरके विरुद्धस्योभयस्य निरूपणे न दोषः। सङ्कर्षे एकस्य निरूपणे त्वैकशास्त्र्यं न भवतीति साधु व्याहृतम्।

ननु सविशेषस्य ब्रह्मणः सङ्कर्ष एवोक्ततया पुनः सविशेषप्रतिज्ञा कथं घटते इति चेत्—तद्विरुद्धनिर्विशेषप्रतिज्ञापि न घटत एव। अथ - 'तं ब्रह्मेत्याचक्षत' इति सूत्रं निर्विशेषब्रह्मपरमेव। 'तत्त्वमसी' ति जीवब्रह्मैक्य एवोपपन्ने सति विष्णुब्रह्मत्वं निर्विशेषब्रह्मवादे कथं न भविष्यति? नूनम्, 'परं जैमिनिर्मुख्यत्वा' दिति बादरायणसूत्रे दृश्यमाने जैमिन्यभिमतं मुख्यञ्च यद् ब्रह्म तदेव संकर्षकाण्डे 'ब्रह्मेत्याचक्षत' इत्यनेन विवक्षणीयम्। अस्ति च महान्

विवादः, संकर्षकाण्डः काशकृत्स्नकृतो वा, जैमिनिकृतो वा, अन्येन कृतो वेति । तत्र काशकृत्स्नीयत्वेऽप्यस्य संकर्षस्य, 'अवस्थितेरिति काशकृत्स्नः' इति बादरायणप्रशंसितः काशकृत्स्नः स्वाभिमतं ब्रह्मैव, 'तं ब्रह्मेत्याचक्षते' इति विवक्षितवान् स्यात् । अतो न संकर्षविरोधो निर्विशेषब्रह्ममीमांसायाः-इति यदि कथञ्चन् निर्विशेषवादी विरोधं परिजिहीर्षेत्, तदा 'अथातो ब्रह्मजिज्ञासे'ति प्रतिज्ञानं तस्य व्यर्थमेव । उपरि काशकृत्स्नेन सविशेषब्रह्मनिरूपणस्यैव क्रियमाणतया व्याघातश्च । पूर्वमीदृशो दोषो मा स्म भूदित्येव शत-भूषण्याम्, शतदूषण्युद्धृतरीत्या 'तं ब्रह्मेत्याचक्षते, तं ब्रह्मेत्याचक्षते' इति संकर्षान्तिमसूत्रं ब्रह्मपदघटितमुपेक्ष्य, 'स विष्णुराह हि' इति तत्पूर्व-सूत्रमेवोपसंहारसूत्रतया सविशेषभाष्ये विश्रान्तिप्रदर्शनमाशयस्य प[illegible]मिव । वस्तुतो जैमिनीयेनैव षोडशलक्षणेनैकशास्त्र्यमिति पूर्वमेव निर्णीत[illegible]व, शतदूषण्याशयञ्चैकशास्त्र्यवादे व्यक्तीकरिष्यामः । [illegible] त्वेवं [illegible] ।

अथ निर्विशेषत्वस्थापनायैव प्रतिज्ञेति चेत्-तन्न । जन्मादिकारणत्वादिभिः प्रतिसूत्रं सविशेषत्वमेव हि स्थाप्यते । सविशेषस्यैव ब्रह्मणः संकर्षे उपदिष्टत्वे, तस्य सविशेषस्यैव ब्रह्मत्वं दुर्वचमित्याक्षेपे ब्रह्मजिज्ञासा शारीरक इति परं किं न स्यात्? एवञ्च सति उत्तरसर्वसूत्राणामपि सामञ्जस्यम् । विष्णोः सविशेषस्य ब्रह्मत्वव्यवस्था न भवतीति च शङ्का बहुप्रकारा सम्भाव्यते । निर्विशेषस्य ब्रह्मण एवोपनिषत्तोऽवगमान्नैवमिति वा, उपनिषदां कर्मकर्तृजीव-स्वरूपस्तवनैदम्पर्यात् तत्परं ब्रह्मपदं न तदाराध्यं तदुपास्यं विष्णुमाचक्षीतेति वा, अनेकार्थकं ब्रह्मपदं न तदेकपरमिति वा । एवं संभावितेषु प्रकारेषु पूर्वमीमांसायामधीतिना पक्षान्तराणां बलवत्त्वं परिशील्य यादृशः पक्षः प्रवर्तयितुं शक्यः, तमेवोपक्षिप्य सिद्धान्तपक्षमुपवर्ण्य ब्रह्मजिज्ञासाप्रति-ज्ञानं प्रतिष्ठापितं श्रीभाष्ये । कर्मशेषतया उपासनाशेषतया वा ब्रह्म प्रतिपाद्यत इत्यभ्युपगम्य, 'प्राधान्येन ब्रह्मप्रतिपादनमिच्छन्तो न स्वपक्षस्थापने प्रगल्भेरन्; कार्यपरत्वात् सर्वेषां वाक्यानाम्' इति संकर्षकाण्डानन्तर्यानुगुणः

त्वेऽपि अथातो ब्रह्मजिज्ञासेति प्रतिज्ञा, अथातः शेषलक्षणमिति अङ्गविषय-तृतीयाध्यायप्रतिज्ञेव, अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति तुरीयाध्यायप्रतिज्ञेव च न दुष्यति। अननुबन्धित्वे तु स्वतन्त्रा अपेक्षितैव। भवन्मतेऽपि, अथातो धर्मजिज्ञासेत्यत्र अधर्मसङ्ग्रहाय धर्मपदं वेदार्थपरं भामत्यादिषु दर्शितमेव। परन्तु ब्रह्मणोऽविचारितत्वांत् वेदार्थलक्षणायामपि ब्रह्मग्रहणं नास्तीत्येवोच्यते। यदि संकर्षे ब्रह्म विचारितं स्यात्, कथं वेदार्थत्वेन ब्रह्मग्रहणं न संमन्येत। सविशेषब्रह्ममात्रग्रहणमिष्टमित्यपि हि तत्र नोक्तम्। तथा सति च ब्रह्ममीमांसायां सविशेषविचारो न कर्तव्यः स्यात्। एवञ्च त्रिचतुराधिकरणरचनया शारीरकं समापनीयं भवेत्।

यत्तु स्वतन्त्रब्रह्मनिरूपणत्वादेव पृथक् ब्रह्मलक्षणं प्रमाणं च वर्ण्यत इति, तत्र ब्रूमः। धर्मानुबन्धिनिरूपणेऽपि प्रतिज्ञातं लक्ष्यते, निरूप्यते च। अत एव हि, शेषः परार्थत्वादिति शेषत्वलक्षणवचनम्। तत्र श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यारूपाणि प्रमाणानि बलाबलादि च चिन्तितानि। तुरीय-पञ्चमादिष्वपि क्रत्वर्थत्वादौ क्रमादिषु च गमकं विचारितमेव। श्रुत्यर्थपाठ-स्थानमुख्यप्रवृत्तयो हि क्रमनियामकप्रमाणानि। एवमन्यदपि भाव्यम्। ब्रह्म-विषयेऽपि प्रतिज्ञायां कृतायां वेदार्थविचारात्मनि शास्त्रे आनुमानिकब्रह्म-निरूपणमनवसरमिति शङ्कायामनुमाननिराकरणाय शास्त्रयोनित्वमुक्त्वा तद-सम्भवशंकायां समन्वयः समारम्भीति सुश्लिष्टमेतत्। अतः स्वतन्त्रविषय एव लक्षणप्रमाणनिरूपणमिति न निर्बन्धः।

वस्तुतः स्वतन्त्रमेव ब्रह्म, न धर्मशेषभूतमित्येवास्मन्मतम्। सर्ववेदार्थ-प्रतिज्ञां विधाय चोदनालक्षण एव वेदार्थ इति विमृश्य जैमिनावुपरते, एवं तर्हि देवताकाण्डे देवतानां निरूपणे कृतेऽपि देवतानां धर्मशेषत्वे उपासना-विषयतयैव सद्भावे च संमन्यमानेऽपि अविद्यमानस्याप्यर्थस्य उपासनालम्बनत्व-सम्भावनया न देवतानां ब्रह्मणश्च याथात्म्यं स्वीकृतं भवेदिति मत्वा तत्त्वजि-

ज्ञापयिषया भगवान् बादरायणः स्वातन्त्र्येण ब्रह्मजिज्ञासां प्रतिजज्ञे। स्थापयिष्यति च देवताधिकरणे तासामपि याथात्म्यम्। एवं निरूप्य परिष्करणीयं परिष्कृत्य स्वान्तेवासिजैमिनिकृतेन शारीरकमेकीचकार। तदैकशास्त्र्ये दर्शयिष्यामः।

चोदनालक्षणः, शास्त्रयोनित्वात् इति सौत्रचोदनापदशास्त्रपदयोरर्थवैलक्षण्यमस्तीति कथनं न भवत्पक्षसाधकम्। ब्रह्मणः सिद्धपरवाक्यगम्यत्वस्यैवास्माभिः स्वीकृतत्वात्। अत एव, 'न हि ब्रह्मणि चोदनातिरिक्तं प्रमाणं श्रीभाष्यमते' इति प्रागुक्तमपि निरस्तम्। भवद्भाष्येऽपि - 'ब्रह्मचोदना तु' इति ब्रह्मविषयकशास्त्रस्य चोदनापदेन व्यवहारात् भवन्मतेऽपि चोदनातिरिक्तप्रमाणकत्वाभाव एव। भवत्प्रयुक्तचोदनापदस्य विधिवाक्यमात्रार्थकत्वे कथं श्रीभाष्यमते तदेकप्रमाणकत्वं ब्रह्मणः ?। 'अथातो ब्रह्मजिज्ञासे' ति पृथक्प्रतिज्ञा अनुरूपा ज्ञेयमात्रसिद्धबोधनेनैव शास्त्रत्वं वेदान्तस्य गमयति इति कल्पनाऽपि, 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति ब्रह्मविषयनानोपासनेदम्परशारीरकभागदूरीकृता। निर्विशेषसविशेषद्विविधब्रह्मनिरूपणप्रतिज्ञेति उपरि वदतैवात्र, कथमुच्यते अनुपास्यज्ञेयमात्रसिद्धवस्तुबोधनेनैव शास्त्रता वेदान्तस्येति। न खलु वेदे वा कर्मकाण्डे, मीमांसायां वा पूर्वकाण्डे, इमा उपासनाः ब्रह्मविषयिण्य आवेदिताः सन्ति।

यत्पुनरुक्तम् — 'वेदार्थस्य ब्रह्मणः उपासनाशेषतयैव प्रामाण्यस्य संकर्षान्तया षोडशलक्षण्या निर्णीतत्वात्' इति - तत् विपरीतम्। न हि शारीरके उपासनाशेषतयोपनिषदां ब्रह्मणि प्रामाण्यं स्थाप्यते। विना तच्छेषत्वं प्राधान्येन ब्रह्मणि प्रामाण्यं स्थापयितुमेव प्रथमं सूत्रम्। अतो भवदुक्तिः शारीरकप्रतिज्ञानस्यावश्यकत्वमेव स्थापयेत्। पूर्वकाण्डे उपासना निरूपिता इत्यपि दुर्भणम्। न खलु द्वादशलक्षण्यामुपासनानामौपनिषदानां प्रस्तावगन्धः। संकर्षकाण्डे तु कर्माराध्यदेवतास्वरूपादिविवेकार्थे नौपनिषदोपासनविमर्शः।

स्पष्टश्च 'प्रदानवदेव तदुक्तम्' इत्यादौ सङ्कर्षेऽपि देवताविवेकमूलकर्मानुष्ठान-प्रकारचिन्तैव क्रियत इति। तथा, 'धर्मं जैमिनिरत एव' इति सूत्रमपि देवताप्राधान्यं विहाय धर्मप्राधान्यवादी जैमिनिकृत इति दर्शयत् उपासनाशेषत्वभ्रान्त्यपोहनेन ब्रह्मणि प्राधान्यप्रतिष्ठापनार्थमेव शारीरकारम्भः; अत एव 'अथातो भक्तिजिज्ञासे' त्यनुरावा 'अथातो ब्रह्मजिज्ञासे' ति सूत्रणमिति व्युत्पादयति।

एवं सूत्रकारस्यमङ्गलवादपरीक्षायामत्र, प्रथमसूत्रवैयर्थ्यमैकशास्त्र्यपक्षे इति भवदुक्तं न ख्यातिनम्। अथ स्वारस्यपरीक्षां विमृशेम। 'निर्विशेषब्रह्मणो निर्देष्टुमशक्यत्वं न, अत्यन्तसन्निकृष्टमत्र्यैकाण्डनिर्णीतसविशेषमुखेन निर्विशेष-जिज्ञासा प्रस्तूयते' इति भवदुक्तयम्। अत्र संसर्गस्यात्यन्तसन्निकृष्टत्वकथनमैक-शास्त्र्यवासनां दृढतां दर्शयति। इदमाव वाक्यम्, ब्रह्मपदं सविशेषे एव स्वरसम्, निर्विशेषवस्तु यथा निर्देश्यत्वाभावेऽपि कथञ्चिद् ज्ञाप्यम् इत्येव कथयत् निर्विशेषब्रह्मणि स्वारस्याभावमभ्युपगच्छत् शतदूषणीं भूषयत्येव। 'अस्ति तावत् ब्रह्म नित्यशुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितञ्च' इति चकार-पूरणेन शांकरभाष्यपठनमपि स्वाभिमतस्थापनप्रत्याशामूलम्।

'सविशेषांशो वाच्यमर्यादया, निर्विशेषांशस्तु लक्ष्यमर्यादया' इति लेखनं निर्विशेषब्रह्मणि ब्रह्मशब्दस्थापकं वा नाशकं वा इति भवानेव विभावयतु। अथातो धर्मजिज्ञासे' त्यत्र अधर्मजिज्ञासेति पदच्छेदः न सर्वमीमांसकसम्मतः। धर्मप्रत्यनीकतया धर्मपदवाच्यार्थानुबन्धिनिरूपणमेव तत्र प्रायेण। भवता तु ब्रह्मपदवाच्यार्थभूतस्य सविशेषस्य अब्रह्मपदेन अकारप्रश्लेषसम्पादितेन विवक्षितत्वम्, ब्रह्मपदेन लक्ष्यस्य निर्विशेषस्य विवक्षितत्वञ्च वर्ण्यते। 'भूतले घटोऽस्तीति' वाक्ये प्रयुक्ते घटपटयोरुभयोः तत्र सतोः उभयविवक्षास्थापनप्रवृत्तः कश्चित्, 'घटपदेन लक्षणया पट उपस्थाप्यते, अघट 'इति पदच्छेदेन घटस्यापि ग्रहणम्; तदत्र पटघटौ

घटावटपददर्शितौ' इति यद्युपपादयेत, तादृगेवेदमिति केयं कुसृतिः? यदि नाम उत्तरसूत्रेण, 'नेति नेती' ति ब्रह्म लक्षितमभविष्यत्, ब्रह्मशब्देनेह लक्षणया निर्विशेषमग्रहीष्यत, सविशेषस्यैव हि तत्र लक्षणमुच्यते। तत् कथमत्र वाच्यार्थतया सविशेषस्याविवक्षेति।

यत्तु न्यायरक्षामणिग्रहणेन वर्णनम् — निर्विशेषमात्रप्रतिज्ञायामपि सविशेषोपासनं नासङ्गतम् — उभयोरप्युत ऐक्यात् सविशेषोपासनस्यापि निर्विशेषब्रह्माश्रित्यैव फलपर्यन्तत्वादिति। तत्र निर्विशेषजिज्ञासामात्रप्रतिज्ञायामपि सविशेषोपासनमीमांसा नासंगतेत्यर्थः वक्त्रभिमत इति भाव्यम्। तत्र - 'सर्वं खल्विदं ब्रह्मे' ति सर्वस्यापि ब्रह्मणो भेदाभावात् सर्वं निरूपयितुं शक्यमिति किमसंगतं स्यात्? सविशेषोपासनस्य निर्विशेषब्रह्माश्रयणेन फलपर्यन्ततेत्यस्य च कोऽर्थः?। न ह्युपासनगीतं निर्विशेषं सत् ब्रह्मानुग्रहीष्यतीति सुवचम्। अथ उपासने विशेष्यतया विषयत्वमात्रमिति चेत् - किं निर्विशेषत्वेन तस्य विषयता?, उत वस्तुमात्रस्य? — आद्ये व्याहतिः। अन्त्ये, सविशेषनिर्विशेषैक्यात् अधिकं न किञ्चित्। शैकिकनरश्वराद्युपासनमपि ब्रह्माश्रित्यैव फलप्रदमिति तादृशमपि वक्तव्यं भवेत्। वस्तुतो ब्रह्म प्रागेव ज्ञातम्। निर्विशेषत्वमेव तस्य ज्ञापनीयम्। विवादग्रस्तस्य जिज्ञासितस्य सहेतुकमुपपादने अप्रवृत्य प्रतिसूत्रं सविशेषमेव दर्शयन् सूत्रकारः कथं निर्विशेषजिज्ञासाप्रतिज्ञाकरः स्यात्? एवंरीत्या च सर्वसूत्रास्वारस्यमेव स्वयमेव दर्शितं भवति।

परीक्षिन्महाराजप्रश्नस्य प्रतिवचने भगवता शुकेन निर्विशेषं ब्रह्म सविशेषमुखमुपदेश्यमित्युक्तमिति यदुक्तम् - तत्र प्रतिवचने निर्विशेषत्वकथालेशतुषोऽपि न लक्ष्यते। तत् खलु वाक्यं भवदुपात्तम् —

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः।
मात्रार्थं च भवार्थं च आत्मने कल्पनाय च॥"

इतीदमेव। प्रश्नश्लोकश्च —

"ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः।
कथं चरन्ति श्रुतयः साक्षात् सदसतः परे॥"

इति। अत्र प्रत्युत्तरारम्भे जनानामिति जीवबहुत्वम्, प्रभुरिति भगवतस्ततो भिन्नस्य सृष्ट्यौपयिकं सर्वांशतः सविशेषत्वञ्च स्पष्टमुक्तम्; न निर्विशेषस्य वाचकं किञ्चिदस्ति। उत्तरार्धे, 'आत्मने' इति पदेनापि प्रभुपदोक्तविशिष्टपरामर्श एव स्वरसः। न पुनरप्रामाणिकनिर्विशेषग्रहणम्। 'आत्मने, कल्पनाय' इत्यत्र, अकल्पनायेत्यकारप्रश्लेषोऽपि नापेक्षितः। अयमत्र विशिष्टश्लोकार्थः— स भगवान् जीवात्मनां पुनर्जन्मप्राप्तेः प्राक् यः सूक्ष्मदेहो भवति तदर्थम् — तत्र निविश्य स्थित्यर्थम्, तथा स्थूलदेहप्राप्तौ सांसारिकाभ्युदयाद्यर्थम्, परमपुरुषार्थभूताय स्वस्मै तेषां जीवानां योग्यतासम्पत्तये च बुद्धीन्द्रियमनःप्राणान् असृजदिति। तानि खलु जीवैः सह सदा सन्तीति, 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः' इति सूत्रे स्पष्टम्। अतो जनार्थमेव प्रभुणा तेषां सृष्टत्वात् प्रभुरयं सच्छब्दवाच्येभ्यो जीवेभ्यो भिन्न एव। असच्छब्दवाच्यस्याचेतनस्य चेतनकार्यार्थं स्थितस्य प्रभौ सत्त्वादिगुणकार्यानाधायकत्वात् स तथा निर्गुणश्च। अथापि श्रुतयः कथं तत्र भगवति चरन्तीत्येतत्तु एवं मन्तव्यमिति भगवान् शुकः प्रश्नस्य प्रत्युत्तरं पश्चादेव वक्ष्यति। प्रश्नश्लोकोऽपि निर्विशेषस्य ब्रह्मणः कथं श्रुतिबोध्यत्वमित्येवम्परो न। उत्तरे निर्विशेषत्वानुक्तेः; बहुविशेषसद्भावस्य श्रुतिगीतातोऽवसीयमानत्वात्; पूर्वं निर्विशेषत्वानुक्तया तथाऽनुवादायोगाच्च। तदयं प्रश्नार्थः - ब्रह्मणः ब्रह्मवाचिभिः पदैः निर्देशः, तस्य बहुविधगुणविग्रहविभूतिवर्णनञ्च एतावत् कृतं श्रुत्याऽप्युपनिषदा प्रतिपाद्यत इति युक्तम्। तावता तस्य सर्ववेदवेद्यत्वं कथम्? तस्य चेतनाचेतनपदानिर्देश्यत्वात्; तेषां सत्त्वरजस्तमोमयतया ततोऽस्य भेदात्। अतस्तत्परकर्मकाण्डाद्यशेषवेद्यत्वं कथमिति। अतो भागवतप्रधानोक्तस्य भागवतस्य स्वानुकूलतया ग्रहणं भगवत्कल्याणगुणाद्यपलापिकृतमयुक्तमेव।

अनन्तरञ्च, "साक्षात् ब्रह्मणि शब्दवृत्त्यनुपपत्तावपि परम्परया, नेति नेतीति निषेधमुखेन लक्षणया प्रकारान्तरेण च शब्दवृत्त्युपपत्तिः व्याख्याता" इति लिखन्ती शतभूषणी व्यक्तमेव दर्शयति स्वाभिमतनिर्विशेषब्रह्म न वेदे सूत्रे वा शब्देन स्वरसतो बोध्यते, किन्तु लक्षणादिना गत्यन्तरेणेति। तत् कथमद्वैतिमते सूत्रस्वारस्यम्?। एवञ्च सूत्रस्वारस्यभङ्गवादे ओमित्युत्तरमेव शतभूषण्या कृतं भवति। तदेतत्कृत्यं अद्वैतमतदूषणभूषणमेवेति सार्थं नाम। कथञ्च सूत्रकारः, यथा अद्वैतिनः स्वग्रन्थे निर्विशेषं स्वाभिमतं तथा नेति नेतीत्यादिनिर्दिष्टव्यक्रमेण न निरदेक्ष्यत्, यदि अद्वैतमेव मृषावादिमतं स्वयमप्यमंस्यत। न खलु अद्वैतग्रन्थस्य निर्विशेषब्रह्मनिरूपणे स्वारस्यं नास्तीति कश्चित् प्रतिपद्यते। तदेवं सर्वेणापि सूत्रेण सविशेषस्यैव शारीरके निरूपणात् तदानुगुण्येन प्रागुक्तरीत्या संकर्षकाण्डानन्तरं ब्रह्मजिज्ञासाप्रतिज्ञा स्वरसत एव युज्यत इति वस्तुतः पूर्वभागविचारात्मकत्वे संकर्षकाण्डस्य सम्प्रतिपन्ने वेदान्तोपबृंहणार्थं तदिति किं मिथ्याकल्पनामूलेन प्रथमसूत्रवैयर्थ्यापादनात्मना पिष्टपेषेण? ब्रह्मशब्दवृत्त्यनुपपत्तिवाद इति वादनामापि यथावदगृहीत्वा 'ब्रह्मणि शब्दवृत्त्यनुपत्तिवाद' इति कृत्वा तत्परीक्षायां यदुक्तम्, तत्तत्रैव निरसिष्यामः। साक्षात् शब्दवृत्त्यनुपपत्तिं स्वीकुर्वता च भवता शब्दस्वारस्यं सम्यक् त्यक्तमेवेत्यलमत्र।

•

अथ लिखति शतभूषणी - जन्मादिसूत्रं प्रथमसूत्रप्रक्रान्तस्य ब्रह्मणः अभिन्ननिमित्तोपादानत्वेन लक्षणकथनार्थमिति सम्प्रतिपन्नमिति। तत्र प्रक्रान्तं हि निर्विशेषं ब्रह्म। तत्र निमित्तत्वोपादानत्वयोरेकतरस्याप्यभावे का कथा अभिन्ननिमित्तोपादानत्वस्य? सविशेषं लक्षयति चेत् — कथं प्रक्रान्तब्रह्मलक्षणमेतत्?। प्रथमसूत्रे ब्रह्मशब्दस्य निर्विशेषे लक्षणा हि भवदिष्टा। अत्र यदुक्तं **रत्नप्रभायाम्** — "यथा रजतं शुक्तेर्लक्षणम्, यत् रजतं सा शुक्तिरिति, तथा यत् जगत्कारणं तत् ब्रह्मेति कल्पितं

कारणत्वं तटस्थं सदेव ब्रह्मणो लक्षणम्'' इति — तेन किमुक्तं भवति? अरजतं शुक्तिरितिवत् अजगत्कारणं ब्रह्मेति विवक्षितमिति। अत्यन्तस्वरस एवं तर्हि सूत्रार्थः। सूत्रं जन्मादिकारणं ब्रह्मेत्येतावदेव गमयति; न तु 'जन्मादि-कारणसर्वेश्वरत्वेनाध्यस्तं ब्रह्मेति। शुक्तौ रजताध्यासवत् ब्रह्मणि जगदध्यासो भवतीत्यस्येष्टत्वे च जगदित्येव लक्षणं ब्रूयात्। न तु जगत्कारणत्वं ब्रूयात्। लौकिकपरीक्षकसर्वानुभवात्यन्तदूरं सर्वजगन्मिथ्यात्वं प्रथमसूत्रे, 'अथात' इत्यनेन सुज्ञातमिति, ब्रह्मशब्देन निर्गुणं ब्रह्म स्वरसतो वेद्यत इति, जगत्कारणं ब्रह्मेति कथयता द्वितीयसूत्रेण रजताध्यासाधिष्ठानं शुक्तिरितिवत् जगत्कारणा-ध्यासाधिष्ठानं ब्रह्मेत्येव स्पष्टं ज्ञायत इत्येवमादयो वादाः न अनभिनिवेशि-सहृदयपरीक्षकसन्निधौ प्रस्तोतुमर्हाः। वस्तुतो जगदध्यासाधिष्ठानमित्येव सूत्रेण तन्मते भाव्यम्। किञ्च रजताध्यासाधिष्ठानं शुक्तिः रजतकारणत्वेन न व्यवह्रियते। भ्रान्त्यपगमानन्तरं तत्त्वज्ञानिना क्रियमाणोऽपि व्यवहारः रजतप्रतीतिर्दोषमूलेति दोषस्यैव कारणत्वविषयकः। भवन्मते शुक्तिरजतस्थले रजतकारणदोषाध्यासाधिष्ठानत्वं च न शुक्तावस्तीत्यलमद्य।

तदेवं निर्विशेषब्रह्मणो लक्षणे वक्तव्ये सगुणस्यैव लक्षणकथनम्, प्रथमसूत्रे निर्विशेषं न विवक्षितमित्येव ज्ञापयेदित्युक्तम्। अथ निमित्तो-पादानैक्यं भवन्मते कथमिति पृच्छामः। निमित्तत्वं हि कर्तृत्वमुपादान-गोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वरूपमीश्वरनिष्ठम्। उपादानत्वं तु यदि जगदाकारेण परिणममानत्वम्, तर्हि तत् अविद्यानिष्ठमेवेति न ब्रह्मण उपादानत्वम्। यदि जगदध्यासाधिष्ठानत्वम्, तदापि तत् अधिष्ठानत्वं नेश्वरत्वाकारविशिष्टेऽस्ति। एवं जगदाकारेण परिणमदविद्याधिष्ठानत्वमु-पादानत्वमिति पक्षेऽपि अधिष्ठानत्वस्य ब्रह्ममात्रनिष्ठत्वात्, कर्तृत्वस्य चेश्वरत्व-विशिष्टनिष्ठत्वात् अभिन्ननिमित्तोपादानत्वं कथम्? निमित्तत्वोपादानत्व-प्रयोजकाकारभेदेऽपि निमित्तत्वोपादानत्वयोरेकब्रह्मव्यक्तिगतत्वात् अभिन्ननि-मित्तोपादानत्वमक्षतमिति चेत् — एवं विवक्षन् भवान् कथं विशिष्टाद्वैतमते

अभिन्ननिमित्तोपादानत्वं न भवतीत्याक्षिपति । उपादानत्वं सूक्ष्मचिदचिद्वि-शिष्टनिष्ठम्; निमित्तत्वं ब्रह्ममात्रनिष्ठमिति वैषम्ये सत्यपि एकव्यक्तिगतत्व-स्याक्षतत्वात् । इयांस्तु विशेषः — उपादानत्वमध्यासाधिष्ठानत्वरूपं वा, अविद्याधिष्ठानत्वरूपं वा लोके क्वाप्यप्रसिद्धमिति तथा निर्वचनं न स्वीकार-मर्हति । पूर्वावस्थाश्रयत्वरूपमस्मदिष्टमुपादानत्वं पुनर्लोकवल्लसं ब्रह्मण्यप्य-बाधितमिति । व्युत्पादयिष्यत इदमुपरिष्टात् ।

यत्तूक्तम् — चिदचिद्विशिष्टत्वं यदि प्रागेव प्रतिपन्नम्; व्यर्थं तर्हि इदं लक्षणमिति - तत् लक्षणकथनप्रयोजनं किमित्यपरामर्शमूलम् । 'यतो वा इमानी' त्यादिवाक्यं हि यच्छब्दघटितत्वादिना कारणत्वानुवादेन कारणे निरतिशयबृहत्त्वस्थापनार्थं प्रवृत्तम् । कारणवाक्यानि च 'सदेवेद' मित्यादीनि पुरोवादरूपाणि । तत्र च, 'ऐतदात्म्यमिदं सर्व' मिति कारणे चिदचिद्वै-शिष्ट्यं प्रतिपन्नमेव । अतो ब्रह्मशब्दस्यानेकत्र प्रयोगात् विशयानं प्रति कारणे ब्रह्मत्वमत्र ख्याप्यते । श्रोता च, कारणं चिदचिद्विशिष्टमेवेति पूर्वमेव निर्धारितवान् वा, पुनर्विचार्य निर्धारयन् वा तादृशे ब्रह्मत्वं लक्षणवाक्यात् निश्चेष्यतीति कथं वैयर्थ्यशङ्का? भूतमात्रस्य 'इमानि भूतानी' ति विवक्षायामपि ब्रह्मण उपादानत्वं सुनिरूपमित्यपि स्वावसरे प्रतिपादयिष्यामः । यत्तु - श्रीभाष्यमतमविज्ञायैव, 'नास्ति श्रीभाष्यमते विशेष्यांशः साक्षादुपादानम्' इति, 'अचिदंशस्य प्रकृतेरेवोपादानत्वं श्रीभाष्यमते' इति च लेखनम्, तत् लोकप्रसिद्धस्योपादानत्वस्य स्वमते ब्रह्मण्यभावात् आपतितां न्यूनतां श्रीभाष्य-मतेऽप्यारोप्यात्मानं कृतार्थयितुम्; अस्मन्मते प्रकृतेरिव ब्रह्मणोऽप्युपादानत्वात् प्रकृतिगतस्योपादानत्वस्य ब्रह्मण्यारोपस्य कदाऽप्यभावाच्च । "सति चैवं किं ब्रह्मणा? प्रकृत्यैव निर्वाहा" दित्यादि वचनं च ब्रह्म तर्केण साधयन्तं प्रति शोभते, न शास्त्रयोनि ब्रह्माभ्युपगच्छन्तं प्रति । प्रकृतेरचेतनाया अप्युपचारान्निमित्तत्व-मस्तु, किमिति ब्रह्मणो निमित्तत्वमिति वदन् भवान् उपचारस्य मुख्यपूर्वकत्वात् मुख्यनिमित्तत्वाश्रयं चेतनं नापलपितुमर्हतीति कथं ब्रह्मनिषेध इति कृतं भवतो

वाग्जालेन। 'योगिनां मत इव ईश्वरस्योपादानत्वं श्रीभाष्यमतेऽपि न' इति च श्रुतिसूत्रसूक्तिविरुद्धा केयं कल्पना? अभिन्ननिमित्तोपादानत्वं सम्प्रतिपन्नमिति च प्राक् भवतैवोक्तम्।

यत् पुनः 'अद्वैतमते तु निमित्तत्वमुपादानत्वं च साक्षादेव स्वरसमुपेयत' इति-तत्र वक्तव्यं प्रागेवोक्तम्। किञ्चेदं विवर्तविधयोपादानत्वम्? यत इति पञ्चमी विवर्तोपादानमेव ब्रह्म, न तु परिणाम्युपादानमिति किं स्वरसतो ज्ञापयति? प्रकृत्यधिकरणे भवदुपात्ते, 'परिणामात्' इति सूत्रञ्च न प्रस्मर्तव्यम्। तद्धि विवर्तोपादानत्वं व्यक्तमेव व्यासेधति। तथाच कथं स्वारस्यम्?। सापि विवर्तविधा अध्यासाधिष्ठानत्वरूपा न हि मृदादौ घटादिकं प्रति प्रत्यक्षिताऽस्ति, येन भवन्मते दृष्टान्तानुपरोधः स्यात्। न च प्रतिज्ञानुपरोधोऽपि; शुक्तिज्ञानेन रजतज्ञातताया: लोके अदर्शनात्। रजतबाधितताया एव दर्शनात्। अध्यासाधिष्ठानत्वमुपादानत्वमिति च लोके न कुत्रापि संप्रतिपद्यते। शुक्तौ रजतमुत्पन्नमिति, तत्र शुक्तिर्विवर्तोपादानमिति, तदज्ञानं परिणाम्युपादानमिति च कथमप्यननुभवात्। एवं सर्वं स्वबुद्ध्या परिकल्प्य स्वरससिद्धमिदमिति वादो गुरुविस्रम्भगृहीतविपरीतार्थवासनावासितान्तःकरणमात्रसाक्षिकः। अत्र - 'प्रपञ्चात्मना परिणममानमायाश्रयत्वेन निमित्तकारणत्वञ्चे'ति निमित्तकारणत्वं भवता विवृतम्; परिभाषादौ तु परिणममानमायाधिष्ठानत्वमुपादानत्वमित्युक्तम्। तदत्रोपादानत्वमेव निमित्तत्वं मन्यत इत्यायाति। न ह्याश्रयत्वमधिष्ठानत्वञ्चात्र विभिन्नम्। तदेवमभिन्ननिमित्तोपादानं विवक्षता निमित्तत्वोपादानत्वयोरप्यभेदो मन्यत इव। अपि च मायाश्रयत्वं कथम्? मायाया मिथ्यात्वेन तदाश्रयत्वं परमार्थ इति न युक्तम्। अथ मायाश्रयत्वं मायाध्यासाधिष्ठानत्वमेव चेत् तर्हि ब्रह्मणि मायोपादानत्वमुक्तं स्यात्। अध्यासस्याज्ञानमूलकत्वात् मायाध्यासमूलभूताज्ञानान्तरस्वीकारापातश्च। मायानादित्वादिभङ्गश्च। अथ न मायाध्यासः; किन्तु मायाश्रयत्वाध्यास इति चेत्—तर्हि मायाश्रयत्वाभावात् तद्रूपं निमित्तत्वमुपादानत्वं वा नास्तीत्येवोक्तं भवति।

मायाश्रयत्वं मिथ्या चेत् विवर्तित्वं तथा कुतः ।
परिणामत्वमेवास्तु ब्रह्मणो भास्करीयवत् ॥ २२

परिणामस्य मिथ्यात्वान्न हेयास्पदता भवेत् ।
'मिथ्या व्यावर्तमानत्वात् प्रपञ्चोऽयं घटादिवत्' ॥ २३

इतीव वदतां श्रौतीं बाधबुद्धिञ्च पश्यताम् ।
दोषं विनाऽपि मिथ्यात्वं स्यादतो न विवर्तिता ॥ २४

कार्याधिकरणान्तर्गतेन च, "मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य च अनृतत्वं प्रतिपादयच्छास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति" इति शाङ्करभाष्येण गलहस्तितमेव स्वार्थतात्पर्यं कारणश्रुतिनिकरस्येति जगज्जन्माद्यपलापाद् गतमेव जन्मादिसूत्रेण । एवं जन्मादिसूत्रस्वारस्यभङ्गात् कृत्स्नब्रह्ममीमांसाशास्त्रस्वारस्यभङ्गश्चाद्वैतमतेऽस्मिन् स्पष्टः ।

यत्तु—'शास्त्रयोनित्वादिति सूत्रं तत्त्वज्ञानमात्रात् मोक्ष इत्यद्वैतमते स्वरसम्; न तूपासनान्मोक्ष इति श्रीभाष्यमते' इति—तन्न । इदं हि शास्त्रपदं तत्त्वपरवाक्यपरम्, चोदनापदं विधायकवाक्यपरमिति वैलक्षण्यपरामर्शमूलकम् । शासनाच्छास्त्रमिति शास्त्रपदमपि विधिपरं प्रयुज्यत एव । उपपद्यते च तत् । तथा च वार्तिकम्—

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रं तूपपद्यते" ॥ इति ॥

शाङ्करभाष्ये च ब्रह्मचोदनेति चोदनापदेनापि सिद्धपरवाक्यनिर्देशः कृतः । आस्तां तावदिदम् । शांकरप्रथमयोजनायामत्राधिकरणे सर्वस्यापि वेदस्य ब्रह्म कारणमिति वक्तव्यमिति न शास्त्रपदं सिद्धपरवाक्यमात्रपरम् । शास्त्रस्य ब्रह्म योनिरिति प्रथमं पक्षं परित्यज्य शास्त्रगम्यत्वं ब्रह्मण इति पक्षे शास्त्रपदेन तत्त्वपरवाक्यमात्रग्रहणेऽपि न श्रीभाष्यमते स्वारस्यभङ्गलेशः । न हि ब्रह्मणः विधिवाक्यैकगम्यत्वं वा विधिवाक्यैकवाक्यतापन्नवाक्यमात्रगम्यत्वं वा श्रीभाष्य-

माह। किन्तु स्वातन्त्र्यसिद्धपरवाक्यगम्यत्वम्। अतः कथं सूत्रास्वारस्यम्? मोक्षसाधनत्वं तु वाक्यार्थज्ञानस्य वा विधिविधेयस्योपासनस्य वेत्यन्यदेतत्। नैतत् प्रकृतसूत्रसंबन्धि। अद्वैतमत एव तु स्वारस्यभङ्गः। निर्विशेषब्रह्मणः तत्त्वपरवाक्यवेद्यत्वस्यापि वस्तुतोऽभावात्। अन्यथा निर्विशेषत्वहानेः। सगुणब्रह्मणस्तु उपासनाविषयत्वमद्वैतिनोऽपि सम्मतमिति श्रीभाष्यमतादविशेष एव। जन्मादिकारणत्वं पूर्वसूत्रकथितं निरतिशयसार्वज्ञ्यस्थापनेन दृढीकुर्वदिदं शास्त्रयोनित्वाधिकरणं निर्विशेषपक्षे स्वरसमिति को नाम ब्रूयात्? नैयायिकोऽपि हि न ब्रह्मोपासनमानुमानिकमाह; किन्तु ब्रह्मापरपर्यायमीश्वरम्। उपासनं वेदवेद्यमित्युच्यते। परं ब्रह्मापि वेदैकवेद्यमिति वेदान्तिमतम्। तत्र न सूत्रस्वारस्यभङ्गलेशोऽपि। प्रत्युताद्वैतिमते ब्रह्मणः, 'घटोऽस्ति, भाती'त्यादिप्रत्यक्षगम्यत्वस्वीकारात् शास्त्रयोनित्वसूत्रं तन्मत एवास्वरसम्। 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति उपासनमेव मोक्षसाधनमाचक्षाणो भगवान् बादरायणः, वाक्यार्थज्ञानमात्रात् मोक्षमध्यवस्यतीति च कथङ्कारं कथ्येत?

एवं शास्त्रयोनित्वाधिकरणस्वारस्ये स्थिते उपरि समन्वयधिकरणस्वारस्यं स्वमते दर्शयितुं यदुच्यते—समन्वयसूत्रं हि उपास्यमपि ब्रह्म पुरुषार्थत्वात् सत्यमिति बोधयितुमिति श्रीभाष्यमिति—तद् विचारणीयम्। एतद्वाक्यदर्शने हि समन्वयाधिकरणे, ब्रह्म न सत्यमुपास्यत्वादिति पूर्वः पक्षः, ब्रह्मणः उपास्यत्वेऽपि पुरुषार्थत्वात् सत्यत्वमिति सिद्धान्त इति बुध्यते। न खल्वेवं श्रीभाष्ये वर्णितमस्ति। उपासनाद्यन्वयं विना ब्रह्मणः प्राधान्येन प्रतिपादने प्रवृत्तिनिवृत्त्यन्वयविरहात् वाक्यं प्रयोजनपर्यवसायि न भवेदिति ब्रह्मविचाराक्षेपः पूर्वपक्षीकृतः। ब्रह्मणः साक्षात् पुरुषार्थत्वात् सुतरां सिद्धब्रह्मपरमपि वाक्यं प्रयोजनपर्यवसायीति सिद्धान्तः। भवदुक्तं तु 'विध्यर्थत्वेऽप्यबाधात् परविषयवचः स्वार्थमानं भवेदित्यन्वारुह्योक्ति'रूपं (सूत्रकारसंमतमपि) न समन्वयसूत्रार्थतयाऽभिमतमित्यवधेयम्।

यदप्युच्यते - समन्वयपदं पुरुषार्थत्वेनान्वयपरं न कुत्रापि दृष्टचरमिति - तत् किं समन्वयपदं प्रत्यक्षानुमानागमादिप्रमाणान्तरविरुद्धार्थबोधकत्वरूपार्थे परं स्वरसं प्रयुज्यमानमस्ति ? उपक्रमोपसंहाराद्यवगततात्पर्यविषयभूतेऽन्वयः समन्वयः। सोऽर्थात् प्रमाणान्तरविरुद्धोऽपि ग्राह्य इति चेत् - तादृशतात्पर्यविषय एव पुरुषार्थभूतेऽन्वयः परं समन्वयः कथं न भवति ? सर्वप्रमाणविरुद्धेऽर्थे तात्पर्यमपेक्ष्य सर्वतदविरोधभाजि तात्पर्येणान्वयकरणमेव हि श्रेयः। अपुरुषार्थभूतप्रवृत्तिनिवृत्त्यादिपरं वाक्यं परम्परया पुरुषार्थपर्यवसानादन्वितम्। साक्षात् पुरुषार्थबोधकं पुनः पारम्पर्यानपेक्षणात् समन्वितमिति खलु श्रीभाष्यमाह। सङ्कर्षमादाय पिष्टपेषणं तु प्रागेव संघर्षपदमिति किं वृथा विस्तरेण?

शतदूषण्याम्, 'शारीरकपञ्चमाध्याये निर्गुणं पारिभाषिकं ब्रह्म प्रतिपाद्यताम्' इति शारीरकपदघटिते वाक्ये सुव्यक्ते स्वयं शारीकपदं विसृज्य 'पञ्चमाध्यायविषयत्वमेव निर्विशेषस्य स्यात्' इति सामान्येन शतदूषण्यामुक्तमिति कृत्वा, 'पूर्वमीमांसापञ्चमाध्यायस्य क्रमनिरूपकत्वात् न ब्रह्मनिरूपणप्रसक्तिः। अतः सप्तदशाध्यायविषयो वा, एकविंशाध्यायविषयो वा स्यादित्यापाद्यता'मिति यत् दूषणमुक्तम्—तत् किं शतदूषणीस्थशारीरकपदं प्रस्मृत्य, किं वा प्रकारान्तरेण दूषणमशक्यं मत्वा विप्रलिप्सयाऽन्यथाऽनूद्य प्रत्युत्तरप्रपञ्चनमिति पृच्छामः। मीमांसापञ्चमाध्यायमात्रं किमिति गृह्यते। पाणिनिकणादगौतमादीनां दर्शनादीनि अध्यायकदम्बात्मकानि गृहीत्वा तत्तत्पञ्चमाध्यायविषयत्वं निर्विशेषस्य न भवितुमर्हति, अन्यार्थकत्वादित्यपि कस्मात् न प्रपञ्चयते? अतः शारीरके चतुर्णामध्यायानां सविशेषब्रह्मपरत्वं समर्थ्य निर्विशेषं न शारीरके उच्यते इति कथनार्थम्, शारीरकपञ्चमाध्यायत एव निर्गुणं ग्राह्यम्—यदि शरीरकपञ्चमाध्यायोऽभविष्यत्, निर्गुणं ब्रह्म निरूपितमभविष्यदिति सुष्ठूक्तं शतदूषण्यामिति अलमशिक्ष्यशिक्षणप्रयासेन।

अथ ईक्षत्यधिकरणं विशिष्टाद्वैतमते न स्वरसमिति विवक्षुर्भवान् सांख्यमतं सुबहूपन्यस्य योगादिमतान्यप्युपदर्श्य लिखति—विशिष्टाद्वैतमते निमित्तकारण-

मेवेश्वरः अपृथक्सिद्धिवशादुपादानमिव भवतीति; वस्तुतो निमित्तकारणत्वमत्र-मेवैतन्मते स्वीकृतमिति च। विशिष्टाद्वैतिसम्मतमुपादानत्वं निरुच्य तस्य ईश्वरे असंभवं यावद् भवान् नोपपादयितुमीष्टे, तावत् किमिति तन्मते उपादानत्वं वस्तुतो नास्तीति, सांख्यादविशेष इति च ब्रूताम्। अद्वैतमते निमित्तत्व-मुपादानत्वञ्च घटत इति वदंश्चाह - सप्तविंशः पुरुषश्चिन्मात्रमपरं तत्त्वं माया-श्रयविषयतया गीयमानं मायातत्परिणामाध्यासाधिष्ठानतया विवर्तोपादानं भवतीत्यद्वैतमतमिति। तत्र पञ्चविंशषड्विंशोपरि सप्तविंशत्वेन पुरुषस्य गणनेऽपि वस्तुतः आत्मैक्यमेवाद्वैतीष्टम्। मायातत्परिणामाध्यासाधिष्ठानत्वं विवर्तोपादानत्वमिति लिख्यते। एवं तर्हि मायाध्यासाधिष्ठानत्वरूपं मायो-पादानत्वमपि ब्रह्मण्यापतेत्। अध्यासाधिष्ठानत्वमुपादानत्वमिति न लोकेऽपि क्वापि संप्रतिपन्नम्। शुक्तिरजतमिति किञ्चिदुपादेयमपि नानुभविकम्, नतराञ्च शुक्तेरुपादानत्वमिति निरूपयिष्यामः। अतः अद्वैतिमत एवास्वार-स्यम्। सत्येवं प्रकृतिमात्रोपादानत्वमेव श्रीभाष्यानुयायिनोऽपि साक्षात् स्वीकुर्वन्तीत्यन्यथैव क्रियासमभिहारेण कथनं सर्वथैवोपादानतत्त्वाविवेकमूलमेव।

ईक्षत्यधिकरणं प्रधानपरिणामिकारणतानिरासपरतया श्रीभाष्यकारा व्याचक्षत इति यत्, इदमपि संभ्रमविलसितम्। न हीक्षत्यधिकरणं तन्निरासार्थम्। न च श्रीभाष्यमते प्रधानस्य शक्यविषये परिणामित्वं नास्ति। किं तर्हीक्षत्यधि-करणकृत्यम्? सद्विद्यावाक्यं न प्रधानपरम्; किन्तु चेतनब्रह्मपरमिति प्रतिबोधन-मेव। वैलक्षण्याद् ब्रह्मण उपादानत्वासंभवेन प्रधानमात्रोपादानत्वशङ्का 'नविलक्षण त्वा'दित्यत्र परिहरिष्यते। अद्वैतिमतेऽपि माया प्रकृतिः परिणाम्युपादान-मेवेति कथं तन्निरास इह। तन्मात्रकारणतानिरासपरत्वं तु श्रीभाष्यमतेऽप्य-विशिष्टम्। समन्वयाध्याये कुत्रापि न सर्वथा प्रकृतेः कारणत्वं निषिध्यते। किन्तु सांख्यसंमतं कारणभूतं प्रकृतितत्त्वं तत्र तत्र न श्रुतिविवक्षितम्, किन्तु तदतिरिक्तं ब्रह्मेत्येतावदेव स्थाप्यते इति स्थिते मतद्वयप्रक्रियापरित्यजनं सर्वत्रापार्थकल्पनञ्चायुक्तम्॥

'ईक्षतेर्नाशब्द'मिति प्रथमसूत्रमीक्षणरूपं गुणविशेषं ब्रह्मणि ब्रुवत् कथं निर्विशेषसाधकम्? न्यायनिरूपणात्मकेऽधिकरणे हेतुसाध्यरूपधर्मद्वयान्वय एव प्रतिसूत्रं विवक्षित इति निर्विशेषब्रह्मसाधकं न किमपि सूत्रं भवितुमर्हति। भवन्मत एवेक्षत्यधिकरणं सर्वथैवास्वरसमिति श्रीभाष्य एव कण्ठोक्तमपि।

अपि च पृच्छामः - किमिदमीक्षणं निर्विशेषे ब्रह्मणि स्वरसम्, उत सविशेषे? आद्यस्तु न भवतामपीष्टः। अन्त्यस्तु दुरुपपादः। तथा हि - किमिदमीक्षणं नाम? ज्ञानविशेषः। 'अहं जानामीत्यादावात्मनि ज्ञातृत्वं भ्रान्तिसिद्धम्; ज्ञानक्रियाकर्तृत्वस्य निर्विकारे आत्मन्यसंभवा'दिति वदद्भिः तत् अहङ्कारग्रन्थिस्थमङ्गीकृतं लोके। अन्तःकरणवृत्तिरूपा च ज्ञानक्रिया अन्तःकरणैकनिष्ठेति निरूपयतामीश्वरगतत्वेन श्रुतं ज्ञातृत्वमपि जीवोपाध्यन्तःकरणतुल्यमीश्वरोपाधितया स्वीकृताविद्यावृत्तिरूपमविद्यावृत्ति। अविद्या प्रकृतिर्मायेति पर्यायाः। एवञ्चेक्षितृत्वं मुख्यं प्रकृतिनिष्ठमेव भवतीति कथं प्रधानापरपर्यायप्रकृतिपरत्वनिरसनमीक्षतिना भवितुमर्हति। यदि मन्येत—'ईक्षणमात्मगुण एव; नाविद्यान्तःकरणादिगत'मित्येव सूत्रकाराशय इतोऽवसीयत इति, तर्हि भवत्पक्षो निरस्त एव। अथाविद्यावृत्तिप्रतिफलितं चैतन्यं मुख्यैक्षणपदार्थ इति चेत्, तदा तदाश्रयत्वं न कस्यापि मुख्यमस्तीति सूत्रस्यासामञ्जस्यमेव। गौणं तु चैतन्याश्रयत्वमविद्यायामपि संभवेत्; व्यङ्ग्यं चैतन्यं व्यञ्जकाहङ्कारनिष्ठं प्रतीयत इति भवदुक्तेः। अतः सच्छब्दवाच्यं न प्रधानमिति न शक्यते साधयितुम्। कथञ्चित् चैतन्यप्रतिफलनं वृत्तौ सांख्यैः सूपपादम्; नाद्वैतिभिः। मिथ्याभूते परमार्थसंबन्धस्य प्रतिफलनादिरूपस्यायोगात्। मतद्वयेऽपि प्रतिफलनासंभव एव; नीरूपत्वात् वृत्तिचैतन्ययोः। एवं चैतन्यगतो वृत्तिविशेषसंबन्ध ईक्षणमिति पक्षोऽपि व्युदस्यः। संबन्धस्य वस्तुनोऽभावेऽपि तदभिमान एवेक्षितृत्वमिति चेत्-अभिमानोऽपि वृत्तिविशेषः

कथं तन्निष्ठ इति विचारे पुनर्दुरुपपादत्वमेव। अतो यावन्मुख्यं ज्ञातृत्वमात्मनि नेष्यते, तावदीक्षत्यधिकरणस्वारस्यं न शक्यं रक्षितुम् ॥

आनन्दमयाधिकरणमद्वैतमतास्थाकृतशाङ्करयोजनायामत्यन्तास्वरसमिति सर्वपरीक्षकविदितमेतत्। प्रपञ्चितश्चेहाधिकरणे आ शाङ्करात् आ चेदानीन्तनादुपनिषत्सूत्रार्थोपन्यासः सर्वथैवानुपपन्न इति **परपक्षनिराकृतावस्मदाचार्यैः**। शतभूषण्युक्तमपि विमृशामः—'आनन्दमयोऽभ्यासात्' इति सूत्रे आनन्दमयपदमानन्दमयपर्यायपरमित्याह। इदमेवास्वरसम्। उपरि ब्रह्मेति साध्यांशे जिज्ञासादिसूत्रानुसारेण सिद्धे तद्विहाय, 'ब्रह्मानन्दघटितपुच्छवाक्येन ब्रह्मपरत्वं साध्यम्। तेन आनन्दमयपदघटितावयविवाक्येन ब्रह्मपरत्वाभावसिद्धि'रिति पूरयति। एतदपेक्षया आनन्दमयपदघटितवाक्येन ब्रह्मपरत्वम्, न तु पुच्छवाक्येनेत्युक्तौ किञ्चिदिव स्वारस्यं रक्षितं भवेत्। आनन्दमयो ब्रह्म, न त्वन्य इत्यर्थस्तु अत्यन्तस्वरसः। अभ्यासादित्यपि यदि आनन्दमयस्य वा तद्विशेषस्य वाऽऽनन्दस्याभ्यासं ब्रूयात्, तदैव स्वारस्यम्; न तु अश्रूयमाणब्रह्मपदाभ्यासवचने। पुच्छब्रह्मवादे सति आनन्दमयपदस्थाने पुच्छपदेनैव प्रयुक्तेन भाव्यम्। एतदधिकरणस्वीकृतमस्वारस्यं संरक्षितुमाकाशाद्यधिकरणेष्वपि आकाशादिवाक्यमेवाकाशादिसौत्रपदार्थ इत्यपार्थो न कल्प्यः। कथञ्च सूत्रकारः वाक्यघटकेषु बहुषु पदेषु आनन्दमयाकाशप्राणादिशब्दानेव सूत्रेषु निरदेक्ष्यत्, यदि तेषां ब्रह्मपरत्वं नामंस्यत। भूमविद्यायां प्रक्रान्तोपदेशपद्धतिविरहेऽपि व्यक्त्यन्तरबोधनं चिकीर्षितमिति यथा, 'एष तु वा अतिवदती'ति तुशब्देनावधारितम्, तथा 'ब्रह्म पुच्छ'मिति व्यक्त्यन्तरपरमिति कथमवगम्यते? प्रत्युत व्यक्त्यन्तरभ्रान्तिप्रसक्तिलेशस्याप्ययोगमेवानन्दमयपदघटनेन सूत्रकृदाविष्करोति। 'तस्यैष एव शारीर आत्मा, यः पूर्वस्ये'त्यस्यानन्दमयपर्यायान्तस्थस्यार्थः **परपक्षनिराकृतौ** प्रपञ्चितो द्रष्टव्यः। अस्माभिश्च तैत्तिरीयोपनिषद्भाष्य**परिष्कारे** सामञ्जस्यं

सम्यग्व्याख्याय दर्शितमेव। 'विकारशब्दान्नेति चेन्न प्राचुर्या'दिति सूत्रे, 'विकारशब्दस्य मयटः श्रवणात् आनन्दमयो न ब्रह्म, किन्तु पुच्छमेव। अथैवं 'नेति कयाऽपि युक्त्या कथ्यते चेत्; तन्न; मयटो विकारार्थ एव प्रयोगप्राचुर्यदर्शनात्' इत्यादिरीत्या, अतिक्लिष्टात् सूत्रभाष्यदर्शितप्रकारात् अन्येनाऽपि प्रकारेण भवत्सिद्धान्तानुरोधिनमर्थं वयमपि दर्शयेम। परं तु स्वारस्यं सर्वात्मना त्यक्तमिति वाक्यज्ञो नैव न जानीयात्। किं बहुना— भवत्सूत्रभाष्यव्याख्यास्वेव व्यक्तमिदम्, यत् श्रुतिसूत्रविरोधे, 'गुणे त्वन्याय्यकल्पने'ति न्यायात् श्रुत्यनुरोधेन उपसर्जनभूतस्य सूत्रस्य क्लिष्टोऽर्थः कल्पनीय इति। सत्येवम् कथं सूत्रस्वारस्यं स्वमते विवक्षतीति। एवमानन्दमयाधिकरणपर्यन्तप्रस्तावेन शतभूषणी, आनन्दमयाधिकरणस्य यथा, तथैव पूर्वापराधिकरणसूत्राणामप्यद्वैतिमते अस्वारस्यमेव भङ्ग्यन्तरेण दर्शयतीति तद्वाचका विवेकिनो विदाङ्कुर्वन्तु॥

एव स्वमतस्थितमस्वारस्यं स्वयं प्रदर्शयन्त्येव शतभूषणी लिखति— "स्वमते स्वारस्यं शतदूषण्यभिमन्यते, तदभिमानभञ्जनार्थमेवैतावत् प्रपञ्चितम्" इति। भञ्जनं प्रपञ्चितमित्यनुक्त्वा, भञ्जनार्थं प्रपञ्चितमिति यदुक्तम्, तावति संतुष्यामः। एतत्प्रपञ्चनवैयर्थ्यमेवैतावदुपापीपदाम॥

'चिन्मात्रस्य स्वप्रकाशत्वेन ज्ञानाविषयतया जिज्ञास्यत्वायोगात्' इति शतदूषणीमनूद्य यल्लिखितम्, 'जिज्ञासापदघटकं ज्ञानं तु, "अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म" इति भाष्यात् प्रमाणजन्यमेव; न चिन्मात्रम्' इति— तदसंबद्धम्। ज्ञानस्य प्रमाणजन्यस्य पदघटकत्वं कथम्? फलभूतावगत्यात्मकं ज्ञानं जिज्ञासापदघटकज्ञाधात्वर्थ इति वेष्यताम्, अवगतिपर्यन्तमिति भाष्याक्षरस्वारस्यात् फलभूतावगत्युपधायकविचारात्मकज्ञानमेव वा। तद्विषयत्वं स्वप्रकाशचिन्मात्रे दुरुपपादमिति खलु शतदूषण्याशयः। यत् तदुपर्युच्यते—'प्रमाणजन्यवृत्तिव्याप्यत्वात् आवरणनिवृत्तिमा-

त्रेण प्रमाणवेद्यमिव' इति - तत्र व्याप्यत्वमेव दुर्वचमिति वक्ष्यामः। वेद्यमिवेति लेखनात् स्वयमपि वेद्यत्वाभाव एव स्वीकृत इति किं वृथाप्रयासेन। निर्विशेषब्रह्मणः सुतरां प्रमाणाविषयत्वमेव। सविशेषब्रह्मण्यपि विशेषणांशे एव प्रमाविषयत्वम्, न तु विशेष्यांशे इति विवेचनप्रवृत्तेन च ब्रह्मणो जिज्ञास्यत्वायोग एव भङ्ग्यन्तरेण दर्शितो भवति। श्रीभाष्यानुसारे तु विशेषाणामिव ब्रह्मणोऽपि कदाचिदप्यबाध्यत्वात् प्रमाविषयत्वाच्च जिज्ञास्यत्वं सुप्रतिष्ठितं भवतीति महदन्तरं मतयोः। यावद्विषयसत्त्वं मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वरूपं प्रामाण्यमव्याहतं व्यावहारिकप्रामाण्येऽपीति यदुक्तम्, तदपि न। शास्त्रार्थश्रवणदशायामेव सर्वस्य मिथ्यात्वेन निश्चितत्वात् वाक्यार्थपरीक्षानन्तरमेव सर्वस्य बाधिष्यमाणत्वात् बाधात् प्रागेव मिथ्यात्वेन निश्चीयमानत्वमस्तीति कथं तादृशमपि प्रामाण्यं घटते इति।

शक्यार्थमिव लक्ष्यार्थमप्यादाय वाक्यस्य प्रामाण्यवर्णनं सर्वसंमतमित्येतत् सत्यम्। अथापि ब्रह्मपदादौ स्वरसार्थत्यागेन लक्ष्यार्थमादाय कथञ्चिदुपपादनप्रयासे स्वारस्यभङ्ग एवेतीदं दुरपलपम्। एवञ्च सूत्रस्वारस्यभङ्गवादस्य न मात्रयाऽपि परिहारः कृतो भवति; प्रत्युत भङ्ग एव स्वीकृतो भवतीति परिपश्यतु भवान्। अत्राभिहितान्वयवादप्रस्तावोऽपि वृथा विस्तरमात्रम्। अधिकमनन्तरवादे।

एवं ब्रह्मणः शब्दावाच्यत्वं स्वयमेव सम्यक् संमत्याथ तद्विरुद्धं यल्लिखितम्—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"

इति श्रीविष्णुपुराणवचनात् निर्विशेषं ब्रह्म ब्रह्मशब्दवाच्यमिति - तत्र निर्विशेषत्ववागगोचरत्वात्मैकवेद्यत्वैः सह ब्रह्मशब्दवाच्यत्वं व्याहतं कथं भवन्मतेऽनुमन्यत इति भवानेव विभावयतु। अनादिवेदघटके ब्रह्मशब्दे सांकेतिक-

निरूढिरूपनिर्विशेषवाचकत्ववचनञ्चासंबद्धप्रलापः । श्रीविष्णुपुराणवाक्यमिदं श्रीभाष्य एव सविशेषजीवात्मविषयं सम्यगुपपादितमिति स्वावसरे दर्शयिष्यते ।

अथ जन्मादिसूत्रोक्तं लक्षणं सविशेषस्यैवेति स्वीकुर्मः, सत्यज्ञानादि-वाक्याभिप्रेतं तु निर्विशेषलक्षणमिति यत् लिखितम्---तावता सूत्रस्यास्य सविशेषविषयत्वस्वारस्यमेव संमतं भवति । एवञ्च सविशेषजिज्ञासाप्रतिज्ञैव प्राक्कृतेति तदानुगुण्येन संकर्षसामञ्जस्ये समालोचनीये निर्विशेषप्रतिज्ञानं स्ववाक्यपूर्वापरसन्दर्भादिसर्वविरुद्धं किमिति कथ्यते ? ब्रह्मणः सविशेषत्वं कल्पितमिति कल्पनाकल्पकं न किञ्चिदस्तीति भवतैव क्षान्तिपूर्णेन मनसा साधु चिन्त्यताम् ।

सत्यज्ञानादिवाक्यं स्वरूपलक्षणपरमिति कथयित्वा तदुपपादनप्रवृत्तेन भवता तत्र सत्यत्वज्ञानत्वादिविशेषणानां व्यक्तं कथ्यमानत्वेऽपि अनृतजडपरि-च्छिन्नव्यावृत्तीनामुपस्थापनात् लक्षणया स्वरूपपरत्वमस्तीति इष्टसिद्ध्युद्धारपूर्वं यल्लिख्यते---तावताऽपि भवदिष्टासिद्धिरेव । सविशेषब्रह्मलक्षणपरत्व एव सत्यज्ञानवाक्यस्यापि स्वारस्यमित्येव हि तावता कथितं भवति । अनृतज-डपरिच्छिन्नव्यावृत्तयोऽपि विशेषा एवेति कथं सविशेषत्वत्यागः ? तासां ब्रह्मस्वरूपाभेद इति समाधानं परित्यज्य उपलक्षणतयैव व्यावृत्तीनां भानात् न सविशेषत्वमित्युच्यते भवता । तर्हि सत्यत्वादीनामेवोपलक्षणतया भान-मिष्यताम् । किमिति व्यावृत्तिपर्यन्तधावनम् ?

शास्त्रयोनित्वाधिकरणस्य सम्यगुपपत्तिः प्रागेव प्रपञ्चिता । शांकरयो-जनाद्वये शास्त्रं प्रति योनित्वात् कर्तृत्वात् ब्रह्मणः सर्वज्ञत्वमिति प्रथमयो-जनायां जगत्कारणत्वौपयिकसर्वज्ञत्वाविष्करणात् सर्वप्रकारसविशेषत्वमेव हि स्थापितं भवति । द्वितीययोजनायां च यत् शास्त्रगम्यत्वार्हं तस्यैव परीक्ष्य-त्वागमनेन निर्विशेषस्यावाच्यस्यामेयस्यापरीक्ष्यत्वमेव प्रतिष्ठापितं भवति । शास्त्रगम्यत्वे च मिथ्यात्वं भवद्दृष्ट्या आपाद्यमानं भवता दुष्परिहरम् ।

यत्तु प्रमाणस्य व्यावहारिकत्वमित्यादि अनन्वितलेखनम्—तदाशयः कः ? 'भ्रमविषयस्य प्रातिभासिकत्वेऽपि भ्रमाभिलापकवाक्यस्य व्यावहारिकत्ववत् प्रकृतेऽपी'त्यनेन किं विवक्षितम् ? व्यावहारिकप्रमाणभावशास्त्रवेद्यस्य ब्रह्मणोऽपि प्रातिभासिकत्वं चेत्—अपसिद्धान्तः। भ्रमविषयस्यापरमार्थत्वेऽपि भ्रमस्य व्यावहारिकत्वादेव भ्रमाभिलापकवाक्यस्यापि व्यावहारिकता। इहापि ब्रह्मज्ञानस्य व्यावहारिकत्वम्, शास्त्रस्य च तथात्वं काममुच्यताम्; ब्रह्मणः परमार्थत्वसिद्धिः कथम्? अथायमाशयः—ब्रह्मणः परमार्थत्वनिबन्धनं ब्रह्मप्रतिपादकशास्त्रस्य पारमार्थिकत्वमिति—तत्र पारमार्थिकत्वं नाम किं परमार्थप्रतिपादकत्वं, उत स्वस्यापि परमार्थत्वम्? नाद्यः, हेतुसाध्ययोरविशेषात्। नान्त्यः, अपसिद्धान्तात्। न हि शास्त्रं भवन्मते परमार्थभूतम्। प्रमाणपारमार्थ्यमन्तरा प्रमेयपारमार्थ्यं न भवतीति तस्य पारमार्थ्ये तत्कारणस्याविद्यादेश्च पारमार्थ्ये तुल्यनयात् जगत एव पारमार्थ्यमिति अद्वैतहानिरेव। अथ सर्वमस्मद्दृष्ट्या परमार्थभूतमेव; जीवन्मुक्तदृष्ट्यैव मिथ्याभूतमिति चेत्—किं परमार्थत्वमिथ्यात्वयोः एकत्र समावेशो भवतेष्यते, उत मिथ्याभूते वस्तुनि परमार्थत्वभ्रान्तिर्बद्धानामित्युच्यते। आद्ये व्याहतिः। अन्त्ये शास्त्रस्यापारमार्थ्यमेवोक्तं भवति। जीवन्मुक्ताश्च यदि मिथ्येति पश्यन्ति, न तर्हि विहाराहारव्याहारादौ प्रवर्तेरन्। यदि तथा न पश्यन्ति, तद्दृष्ट्याऽपि न मिथ्यात्वम्। अथ मिथ्यात्वालोचनमात्रं तेषामिति चेत्—तत् बद्धभवादृशाजीवन्मुक्तदृष्ट्याऽपि अस्तीति को जीवन्मुक्तेषु विशेषः? खण्डनखण्डखाद्यकारस्तु वैतण्डिको न शास्त्रप्रामाण्यं नापि ब्रह्मसिद्धिं वक्तुमलमिति प्रपञ्चयिष्यामः। वेदान्तशास्त्रस्यापि तर्कात्मकत्वादिति शतदूषण्यां वेदान्तशास्त्रपदविवक्षितमिदमित्यविज्ञाय बहु प्रपञ्चनमपि भवतः प्रयासमात्रफलम्। तदयं सङ्ग्रहः—

मानाधीना मेयसिद्धिः माने दुष्टे कथं मितिः ?
प्रातिभासिकसत्ताऽपि मानेनैव हि सिद्ध्यति ॥ २५

अबाधितार्थबोधित्वं मानत्वं यदि मन्यते।
शून्यवादेऽप्यबाध्यार्थबोधित्वं किं न मन्यते ॥ २६

ईश्वरस्यैव मिथ्यात्वात् युक्त्या सिद्धेश्च हानितः।
ईश्वरोक्ततया शास्त्रप्रामाण्यञ्च सुदुर्लभम् ॥ २७

तर्कस्य खण्डने शास्त्रं न मानं स्यात् तदङ्गकम्।
शास्त्रयोनित्वसूत्रं तत् भग्नं मिथ्यात्ववादिनाम् ॥ २८

समन्वयसूत्रं तु ब्रह्मणि प्रमेयत्वपौष्कल्यं दर्शयत् अत्यन्ताप्रमेयस्य निर्विशेषस्य निरासकमेव। यत् पुनरत्रोच्यते समन्वयः तात्पर्यज्ञानविषयत्वं निर्विशेषब्रह्मणोऽपि यावद्वृत्तिज्ञानसत्त्वमस्तीति—तन्न। वृत्तिज्ञानविषयत्वस्वीकारे मिथ्यात्वस्यापादितत्वात्। निर्विशेषत्ववृत्तिज्ञानविषयत्वयोर्मिथो विरोधेन तथा तद्ग्रहणायोगाच्च। अतः पारमार्थिकं निर्विशेषत्वं मिथ्याभूतं तात्पर्यज्ञानविषयत्वं च न मिथो विरुद्धमित्येव वक्तव्यम्। एवं तात्पर्यज्ञानस्य मिथ्यात्वे साधकस्य मिथ्यात्वात् साध्यं निर्विशेषत्वमपि न सिद्ध्यति। किञ्च समन्वयाध्यायस्तावत् वेदान्तवाक्यानां ब्रह्मणि समन्वयं दर्शयति। ईक्षत्यधिकरणादिषु सर्वज्ञसर्वशक्तिब्रह्मसमन्वितत्वमेव वाक्यस्य वर्ण्यत इति कथं निर्विशेषे समन्वयः सिध्येत्? शांकरभाष्येऽपि, "तत् ब्रह्म सर्वज्ञं सर्वशक्ती"त्यादिना सविशेष एव वाक्यानां तात्पर्येणान्वय उक्त इति न निर्विशेषपरत्वं समन्वयसूत्रस्य। तत्रतत्राधिकरणे जीवपरत्वखण्डनेन सविशेषब्रह्मपरत्ववर्णनं हि तात्पर्यबलादेव।

आनन्दमयाधिकरणे प्राचुर्यादित्यत्र मयटः प्राचुर्यार्थकत्वादित्येवार्थ इति स्पष्टम् "प्राचुर्यार्थकमयट्प्रयोगा"दिति शतदूषणीवाक्यत एवेति तस्य सौत्रपदस्य ब्रह्मण्यानन्दमयत्वासंभवपरिहारकत्वमक्षतम्। आनन्दरूपब्रह्मण्यानन्दप्राचुर्यमसंभावितमिति निर्विशेषतत्त्वसिद्धौ किल स्यात्। आनन्दमयस्य ब्रह्मत्वं प्रति अभ्यासकाष्ठापन्नानन्दविशेषवत्त्वमेव हेतुः। अकामहतश्रोत्रिये तदानन्दस्यातिदेशोऽपि न तस्यानन्दस्य श्रुतावभ्यासः कृतः; किन्तु आनन्दमय-

गतानन्दस्यैवेति न अभ्यासादिति हेतुरनैकान्तिकः। प्राचुर्यादिति तु न साक्षात् ब्रह्मत्वसाधकहेतुसमर्पकम्। अतः, 'आनन्दपराकाष्ठाश्रयत्वेने'त्यादिवाक्यमशुद्धमनन्वितश्चेत्यलम्। 'मुक्तात्मन एवानन्दमयत्वाभावे कैव कथा अकामहतश्रोत्रियस्यानन्दमयत्वे' इत्यादिवाक्यं चास्मदभिमताकामहतश्रोत्रियपदार्थाज्ञानमूलम्। आनन्दानन्दमययोः पर्यायत्वमस्मदिष्टमिति न भृगुवल्लीविरोधलेशोऽपि। भवन्मत एव तु विरोधः। अत एव 'गुणे त्वन्याय्यकल्पना' इति सूत्राणामन्यथानयनं भवत्पूर्वैरुक्तं भवताऽपि स्वीक्रियते। एवं सूत्राणां स्वरसार्थत्यागेनार्थान्तरं क्लेशेन दर्शयता भवता सूत्रस्वारस्यभङ्गः स्वीकृत एवेति तत्परीक्षाप्रवृत्तिर्भवतो वृथैव ; तत्राप्यादाविति विस्पष्टम्।

ईक्षत्यधिकरणं सविशेषब्रह्मपरमिति साधु भवतैव स्वीकृतम्। भवदभिमतस्य विवर्तोपादानत्वनिर्वचनस्यात्यन्ताप्रसिद्धत्वात् भवन्मत एव ब्रह्मण्युपादानत्वायोगः। अस्मन्मते च प्रधानविशिष्टब्रह्मणः उपादानत्वस्याक्षतत्वात् प्रधानमात्रस्य सच्छब्दाभिधेयत्वखण्डनार्थत्वादीक्षत्यधिकरणस्य अस्मन्मत एवाधिकरणोपपत्तिः। भामत्यादिमततत्त्वं तु तदवसरे शोधयिष्यामः। मायामात्रोपादानत्वस्य बाधितत्वादिदमधिकरणमद्वैतिमते यदि न व्यर्थम् ; तर्हि विशिष्टाद्वैतिमतेऽपि तत् तुल्यम्। अस्ति विशेषोऽपि। अद्वैतिमते मायातुल्यमुपादानत्वं ब्रह्मणि दुर्वचम्। अस्मन्मते तादृशमपि सुवचमिति। वस्तुतः प्रकृतेरुपादानत्वमस्ति न वेति विचारार्थमीक्षत्यधिकरणं प्रवृत्तमिति न ब्रूमः। किन्तु सद्विद्या जगत्कारणप्रकृतिपरा, उत तादृग्ब्रह्मपरेत्येतावदेवेत्यपि ध्येयम्।

आकाशप्राणज्योतिरधिकरणानि सविशेषपराण्येवेति वदता च भवता निर्विशेषब्रह्मणि तेषां स्वारस्यं त्यक्तमेव।

आकाशाधिकरणे आकाशपदेन भूताकाशग्रहणम्, उत विलक्षणस्य ब्रह्मण इति विचारः अद्वैतिमते अस्मन्मते च समानः। श्रौत एवार्थो ग्राह्य

इति वदतामस्माकं पूर्वपक्षे आकाशपदेन मायाग्रहणमिष्टमिति कल्पनमपि निर्मूलम्। सूक्ष्माकाशग्रहणेऽपि मायाग्रहणाभावात्। सद्विद्याया इव प्रकृताकाशवाक्यस्यापि कारणवाक्यत्वाविशेषात् साक्षात् श्रुतः आकाशरूपोऽर्थः दुष्प्रतिषेध इति श्रुतिप्राबल्येन ईक्षत्यधिकरणोपमर्देनाक्षेप इति स्थिते कथं पूर्वपक्षानुत्थितिवर्णनम्? अयोगव्यवच्छेदार्थे पादेऽत्र, 'ब्रह्म मा भूत्; आकाश एव कारणमस्तु' इति पूर्वपक्षे क्रियमाणे, प्रवर्त्यमान पूर्वोत्तरपक्षप्रकारा-परिज्ञानेन, "आकाशाधिकरणेऽपि विशिष्टब्रह्मकारणत्वग्रहणेनैवास्माभिः पूर्वपक्षः प्रवर्तनीयः" इत्यादिलेखनमनवकाशमेव। ब्रह्मणः औपचारिकमुपादानत्व-मिति, शरीरवाचकशब्दस्य शरीरिपर्यन्तत्वं केवलं पारिभाषिकमिति च हेतूपन्यासमन्तरा सहस्रकृत्वः कथनमात्रेण न तदौपचारिकत्वपारिभाषिकत्व-स्थापनप्रसक्तिः। स्वपरमतयोरधिकरणशरीरे स्थितं वैषम्यं कस्मिन्नंश इत्यविविच्य किमित्यकाण्डताण्डवमेवम्? आकाशप्राणज्योतिरधिकरणानां सविशेषविषयत्वस्य स्वयमेव स्वीकृतत्वात् निर्विशेषे सूत्रस्वारस्यं नेति प्रकृतस्य दूषणं नैवंभूतविस्तरकार्यमिति युक्तोऽत्र भवतो जोषम्भावः।

इन्द्रप्राणाधिकरणमादाय क्रियमाणः कोलाहलोऽपि विचित्रः। अत्र शास्त्रेण सूक्ष्मचिदचिद्विशिष्टं ब्रह्मतत्त्वमुपदिश्यत इति श्रीभाष्यदृष्टिरिति स्वयं कल्पयित्वा इन्द्रस्य स्थूलचित्त्वात् तत्त्वं नोक्तं भवतीति दूषयितुं यत्यते। मुक्तात्मनामेव शास्त्रदृष्टं तत्त्वभानं भवेत्, नोपासकानाम्, जीवन्मुक्त्य-नङ्गीकारादिति किमपि किमप्युच्यते। मुक्तात्मनां स्वतः प्रसृतमतीनां शास्त्रदृष्टिः किमर्था? जीवन्मुक्त्यनङ्गीकारे दर्शनसमानाकार आत्मत्व-साक्षात्कारः कथमनभिलपनीयः स्यात्? इन्द्रप्राणयोः शरीरात्मभावो मा भूत्; वामदेवमन्वाद्योश्च। इन्द्रशरीरकः प्राणशरीरकः वामदेवशरीरकः मन्वादिशरीरकश्च परमात्मा एक इति स्थिते सामानाधिकरण्यं कथं दुरुपपादम्? एवञ्च बाधायां सामानाधिकरण्यमित्येतद्विना नान्या गतिरि-त्याद्याडम्बरस्य नावकाशः। बाधापक्षे तु मां मोपास्स्वेति विपरीतापत्तिः।

अत्रेदमवधेयम् — अद्वैतमतरीत्या वायुर्वा, इन्द्रदेवता वा, सामान्यतो जीवो वा, ब्रह्म वा प्रतर्दनविद्यार्थ इति विचारः। अत्र तुरीयपक्षः सिद्धान्तः। तत्र शाङ्करभाष्ये उपासात्रैविध्यादित्यस्य उपासात्रैविध्यप्रसङ्गादित्यर्थवर्णनेनैका व्याख्या। सा कामं निर्विशेषब्रह्मविषये कथञ्चित् समन्वेतु। वस्तुतस्तत्रापि 'एष एव साधु कर्म कारयति—एष लोकाधिपतिरेष लोकेशः' इत्यादीनामनन्वयात् सविशेषपरत्वमेव साधीयः। अथवेति यत् व्याख्यानान्तरं भाष्यारूढम्, उपासात्रैविध्यादित्यस्य यथाश्रुतार्थस्वीकारेण, तत्र सविशेषपरत्वं निर्विवादम्। यद्यपि भामत्याम्, 'स्वमतेन व्याख्याय प्राचां वृत्तिकृतां मतेन व्याचष्टे' इत्युक्तम् — तथापि द्वितीयव्याख्यानं पूर्वाचार्यव्याख्यानुसारि, प्रथमं स्वकपोलकल्पितमित्यत्रैव तत्पर्यवसानम्। द्वितीयव्याख्यानस्य भाष्यकृदनिष्टत्वे आनन्दमयाधिकरणादाविव पूर्वमनूद्य परिहरेत्। अत इदमप्यधिकरणं सविशेषविषयमद्वैतिमत इति सिद्धं प्रथमपादः सविशेषपर एवेति॥

तत्त्वमस्यादिवाक्यं सर्वमपि सविशेषविषयकमेव प्रतीयते। पूर्वापरसन्दर्भपरामर्शेन प्रतीतेऽर्थेऽनुपपत्तिलेशोऽपि नास्ति। निर्विशेषे तात्पर्यग्राहकं प्रमाणमपि न किञ्चित्। एवं स्थिते निर्विशेषब्रह्मवादो न कुत्राप्यवकाशमश्नुते। महता प्रयासेन तन्निरूपणपरोऽपि कश्चित् तत्र शब्दस्वारस्यं नैव दर्शयितुमीष्टे। सूत्राणि च सविशेषविषयाणि प्राय इति तत्र स्वारस्यं निर्विशेषे कथमित्याक्षेपस्तदवस्थ एव सर्वदेति॥

## (द्वितीयाध्यायविषयः)

अथाविरोधाध्याये पाञ्चरात्रप्रामाण्यस्य श्रीभाष्ये स्थापितत्वात् स श्रीभाष्यपरिपन्थीत्युच्यते; पाञ्चरात्रं हि श्रीभाष्यस्य प्राणबन्धुरिति च। किमविरोधाध्यायः पाञ्चरात्रप्रामाण्यप्रतिक्षेपक इति मतदृष्ट्या श्रीभाष्यपरिपन्थीति मन्यते, किं वा पाञ्चरात्रप्रामाण्यस्थापनात् परिपन्थीति। श्रीभाष्य-

प्राणबन्धुत्वेन भवदभिमतं पाञ्चरात्रं प्रमाणं स्थापितं चेत्, कथमविरोधाध्यायः परिपन्थी स्यात्? अथ सर्वैरप्यप्रमाणत्वेन स्वीकृतस्य पाञ्चरात्रस्य प्रामाण्यस्थापनादेव परिपन्थित्वम् इति—तर्ह्यपि प्रमाणभूतस्य पाञ्चरात्रस्य प्रमाणभूतस्य च वेदान्तस्य परस्परमविरोधे उपपाद्यमाने कथं स परिपन्थी? सांख्यादिमतानि पुनरनुपपन्नानि वेदान्तं विरोद्धुं नालमिति प्रतिपादयन् अविरोधाध्यायो न तान्यादायापि परिपन्थी। अथ पाञ्चरात्रप्रामाण्यस्य स्थापनात् पाञ्चरात्रेण वेदान्तो विरुद्ध्यत एवेति वेदान्तसंमतार्थासिद्धिः स्यादिति चेत्, किं तत् वेदान्तविरुद्धं पाञ्चरात्रे कथ्यमानम्? 'अभिगमनोपादानेज्यास्वाध्याययोगत्रिभागेन भगवदाराधनादिकर्माणि न वेदान्तविरुद्धानि, नापि प्रतिषेद्धव्यानी'ति शाङ्करभाष्य एव स्पष्टमिति तदनुयायिनश्चेद्भवन्तः न तद्विरुद्धं व्याहर्तुं प्रभवन्ति। वासुदेवात् जीवः, जीवान्मनश्चोत्पद्यमानतया पाञ्चरात्रे उच्यत इति यत् शाङ्करभाष्ये शङ्कितम्, तत्र जीवमनश्शब्दार्थे यथावज्ज्ञाते तन्न स्थास्यतीत्येव सूत्रकृदाहेति श्रीभाष्ये व्यक्तमुक्तम्। पाञ्चरात्रस्य कार्त्स्न्येन प्रामाण्यस्य महाभारते सूत्रकृतैव प्रपञ्चितत्वात् तद्विरोधेनाप्रामाण्यस्थापनमयुक्तमिति च तत्र प्रत्यबोधि। तत्रत्यजीवमनउत्पत्तिवादस्य यथावस्थितार्थश्च महाभारत एव व्यक्तमदर्शि, यथा (शान्ति—147)—

"अव्यक्तं पुरुषे ब्रह्मन्! निष्क्रिये संप्रलीयते।
नास्ति तस्मात् परतरः पुरुषाद्वै सनातनात्।
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्।
ऋते तमेकं पुरुषं वासुदेवं सनातनम्।
सर्वभूतात्मभूतो हि वासुदेवो महाबलः।"

"स जीवः परिसंख्यातः शेषः संकर्षणः प्रभुः।
तस्मात् सनत्कुमारत्वं योऽलभत् स्वेन कर्मणा
यस्मिंश्च सर्वभूतानि प्रलये यान्ति संक्षयम्।

स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ।
तस्मात् प्रसूतो यः कर्ता कारणं कार्यमेव च ।
तस्मात् सर्वं संभवति जगत् स्थावरजङ्गमम् ।
सोऽनिरुद्धः स ईशानः व्यक्तिः सा सर्वकर्मसु ।
यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ।
ज्ञेयः स एव राजेन्द्र ! जीवः संकर्षणः प्रभुः ।
संकर्षणाच्च प्रद्युम्नः मनोभूतः स उच्यते ।
प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहंकारः स ईश्वरः ।"

" हिरण्यगर्भो भगवान् एष छन्दसि संस्तुतः ।
सोऽहं योगपतिर्ब्रह्मन् ! योगशास्त्रेषु शब्दितः ।
एषोऽहं व्यक्तिमाश्रित्य तिष्ठामि दिवि शाश्वतः ।
ततो युगसहस्रान्ते संहरिष्ये जगत् पुनः ।
कृत्वाऽऽत्मस्थानि भूतानि स्थावराणि चराणि च ।
एकाकी विद्यया सार्धं विहरिष्ये निरामयः ।
ततो भूयो जगत् सर्वं करिष्यामीह विद्यया ।
अस्मिन् मूर्तिश्चतुर्थी या साऽसृजच्छेषमव्ययम् ।
स हि संकर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् ।
प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ।
अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः ।
ब्रह्मणः सर्वभूतानि चराणि स्थावराणि च ।
एतां सृष्टिं विजानीहि कल्पादिषु पुनः पुनः ।
यथा सूर्यस्य गगनात् उदयास्तमये इह ।
नष्टे पुनर्बलात् काल आनयत्यमितद्युतेः (ते) ॥" इति ।

व्यक्तमेव ह्यत्र वासुदेवात् क्रमादाविर्भवतां व्यूहानामेव जीवमनआद्यभिमानितया जीवादिपदैर्व्यवहार इति। अतो जीवाद्युत्पत्तिरत्र च पाञ्चरात्रे च न विवक्षितेति स्पष्टम्। एवञ्च पाञ्चरात्रस्याप्रामाण्यमंशतोऽप्यप्रसक्तमिति न तत्प्रतिषेधो युक्तः। तर्हि, "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथे"ति साङ्ख्यादेरप्यप्रतिषेधः स्यात्; भारतप्रामाण्यादिति चेत्— किं तेन? ब्रह्मसूत्रे सांख्यादिप्रतिक्षेपोऽयुक्त इति चेत्— तर्हि भवद्भिरपि सांख्यादिप्रामाण्यप्रतिक्षेपपरतया सूत्रव्याख्यानमयुक्तम्। तत्त्वांशे मिथो विरोधायोगात् अविरोध्यर्थवर्णनेन सर्वमतसामञ्जस्ये सति दूषणमप्रसक्तमेव। आपातप्रतीतार्थमादाय विरोधोद्भावने कैश्चित्क्रियमाणे सांख्यादिनिरास इति चेत्— तदस्मन्मतेऽपि तुल्यम्। 'सांख्यं योग' इति श्लोकस्य च, "आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभि"रित्युत्तरार्धम्। तेन देहातिरिक्त आत्माऽस्तीत्यंशे सर्वेषां प्रामाण्यमविशिष्टमिति तदंशप्रतिक्षेपो मा भूदित्येवोक्तम्। न पुनः सर्वांशाप्रतिषेधः। एवमपि तत्र निविष्टत्वात् पाञ्चरात्रस्यापीषदंशे अप्रामाण्यमावश्यकमिति चेत्, तर्हि वेदेष्वपि ततस्तत् स्यात्। यथावत् शाङ्करभाष्यं पठतां सांख्यपाशुपताद्यपेक्षया पाञ्चरात्रे कियद्गौरवं शङ्करभगवत्पादा वहन्तीति स्पष्टम्। अनर्थो वस्तत्र द्वेषः। वेदमूलकत्वेन प्रामाण्ये वेदविरुद्धांशस्त्याज्य एवेति चेत्- विरोधे सति हि त्याज्यता। आगमतश्च स्वातन्त्र्येण प्रामाण्यमिति यत् पक्षान्तरमुक्तम्, तत्र—बौद्धागमस्याप्यागमत्वात्। अथ भ्रान्त्यशक्तिप्रमादविप्रलम्भरूपपुरुषदोषानधीनग्रन्थत्वात् पौरुषेयोऽप्यागमः प्रमाणमित्याशयः, भगवन्मुखोद्गतं तर्हि पाञ्चरात्रं परं कार्त्स्न्येन प्रमाणमेव भवितुमर्हति।

तर्कपादे मतान्तरप्रामाण्यप्रतिक्षेपप्रायपाठात् पाञ्चरात्रप्रामाण्यप्रतिक्षेपपक्ष एव युक्त इति चेत्—अत एव तदसंभवात् माध्वैः मतान्तरप्रतिक्षेपपरत्वमास्थायि। अस्मन्मते च पादानुगतोऽर्थः **अधिकरणसारावल्या**दावाविष्कृत एव। अपि च पूर्वमीमांसासरणिं पश्यतामत्रानुपपन्नत्वमतिर्नो-

दियात् । तत्र हि द्वितीये भेदाध्याये कर्मभेदं सप्रकारमुपपाद्य तत्स्वयनीकतया सर्वशाखाप्रत्ययन्यायेनाभेदः तदन्ते उपसंहृतः । उक्तञ्च, "सर्वप्रमाणनिबन्धनभेदापवादात् सर्वान्ते निवेशः शाखान्तराधिकरणस्ये"ति । अष्टमान्ते च दर्विहोमापूर्वताधिकरणे अतिदेशापवादः प्रस्तुतः । "ससंक्षेपविस्तारकः सापवादः" इति ह्युक्तम् । तथेहापि अन्येषामप्रामाण्यमुपपाद्य तदपवादः पाञ्चरात्रे पाञ्चरात्रवाक्यानामविरुद्धार्थपरत्वनिरूपणेन दर्शित इत्यवधेयम् ।

श्रीभाष्ये पाञ्चरात्राधिकरणसूत्राण्यथानयनं कृतमिति दोषोद्भावनञ्चायुक्तम् । सूत्रस्वरसार्थग्रहणेनैव तत्प्रामाण्यवर्णनात् । यत् पुनः श्रीभाष्यप्राणबन्धुः पाञ्चरात्रमिति-अस्तु तावदिदम् । अद्वैतिनामपि शाङ्करभाष्यानुयायिनां प्राणबन्धुरेव । अस्माभिरिव तैरपि तदुक्तानुष्ठानप्रकारस्वीकारात् । स्वीकुर्वन्तोऽपि ते नानुतिष्ठन्ति, वयमनुतिष्ठाम इति परं भिदा । अस्माकं पाञ्चरात्रमिव वैखानसमपि प्राणबन्धुरेव । पाञ्चरात्रदर्शितचतुर्विधाधिकार्यविशेषेण पुनरस्मान् प्रति प्राणबन्धुत्वं पाञ्चरात्रेऽपि दुरुपपादम् । वस्तुस्थितिमनुसृत्य पाञ्चरात्रप्रामाण्येऽस्माभिः समर्थ्यमानेऽपि न वयं पाञ्चरात्रैकनिष्ठाः । वेदवेदान्तपुराणेतिहासब्रह्मसूत्रश्रौतगृह्यसूत्रानुसारितत्त्वाचारपरायणत्वादस्माकम् । अनुक्तमन्यतो ग्राह्यमित्येतावदेव महाभारताद्यनुसारेण ब्रूमः । अतो ब्रह्मण एव जगत्कारणत्वस्याबाध्यत्वं सांख्याद्युक्तार्थानामनुपपन्नत्वं वियत्प्राणादीनामपि ब्रह्मकार्यत्वञ्च प्रतिपादयन् अविरोधाध्यायः कारणत्वादिविशेषविशिष्टब्रह्मस्थापक इति निर्विशेषपक्षनिरोधित्वमेव तस्य ।

## (तृतीयाध्यायविषयः)

तृतीयाध्याये वैराग्यपादादिषु विस्पष्टं भेदप्रतीतिरिति शतदूषण्युक्तं परिहर्तुं प्रयत्यते, 'एकस्यैवात्मनः तत्तदवस्थाभेदनिबन्धनं भेदमादाय सर्वनिर्वाह'इति । एतावता सूत्रस्वारस्यं त्यक्त्वा, मानान्तराविरोधाय भेदस्यैवौपचारिकत्वं ब्रूम इत्येव ह्युक्तं भवति । 'यदि ईश्वरो जीवं स्वाभिन्नं जानाति-

तर्हि स्वयं स्वाहितं करोतीति स्यात्; यदि न जानाति, असर्वज्ञो भवे'दित्यादिदोषानिस्तारश्च। यत्तु-जीवस्यापृथक्सिद्धत्वात् स्वतन्त्रभेदसिद्धिः श्रीभाष्यशिरश्शूलमिति—तदसंबद्धम्। स्वतन्त्रस्य सतो भेदानङ्गीकारात्। कश्चायं स्वतन्त्रभेद इति भवानेव विभावयतु। निर्विशेषे लोकसिद्धाभावादि-धर्मोपसंहारो गुणोपसंहारपादे इति व्याहतं वचः। अदृश्यत्वादिविशिष्टे ब्रह्मणि भूतयोनित्वसर्वज्ञत्वसर्वविस्त्वादौ अक्षरविद्यया प्रतिपाद्यमाने तस्य प्रति-पाद्यमानस्य सर्वस्य कल्पितत्वकल्पनं हि स्वारस्यभङ्गं विना दुर्वचम्। गुणो-पसंहार इति गुणपदेन व्यवहारः सविशेषब्रह्मपरवाक्यानि मनसिकृत्य सृष्टिन्या-येनेति लेखनञ्च, पादनामतोऽपि सविशेषविषयकत्वे स्वारस्यं शतदूषण्युक्तमेव द्रढयति।

तत्र चतुर्थे अङ्गपादे कर्मणामङ्गत्वकथनात् कर्माङ्गकं तदाराध्यविषय-कमुपासनमेव पूर्वपादविवक्षितम्, न तु कर्मनिरपेक्षं वाक्यार्थज्ञानरूपं ब्रह्मात्मैक्यज्ञानमिति ज्ञायत एव। ब्रह्मतदन्ययोरङ्गाङ्गिभाव इहोच्यत इति न केनाप्युक्तमित्ययमप्रसक्तप्रतिषेधः। "शेषत्वात् पुरुषार्थवाद" इति प्रथम-सूत्रं साक्षीकृत्याध्ययनस्यार्थज्ञानार्थत्वसमर्थनञ्चायुक्तम्। तस्य पूर्वपक्षसूत्रतया सिद्धान्तेऽर्थज्ञानार्थमध्ययनमित्येतदसाधकत्वात्। "अध्ययनमात्रवतः" इति तदधिकरणसिद्धान्तसूत्रं च अध्ययनस्यार्थज्ञानोद्देशेन विधानस्य सूत्रकृदसंमतत्वं मात्रपदेन दर्शयति। तत्र मात्रपदमुपनिषद्विचारमात्रव्युदासकमिति अद्वैत्य-भिमतव्याख्यानञ्च नादृत्यम्; असङ्कोचस्यैव न्याय्यत्वात्। पूर्वभागमिवो-पनिषदमप्यध्ययनविधिवशः प्रागेव कस्मान्न विचारयेत्? साधनचतुष्टय-संपत्तिरूपाधिकाराभावादिति चेत्—उपनिषद्विचारस्यापि वैधतया कर्तव्यत्वे साधनचतुष्टयस्याधिकारिविशेषणत्वमेव त्याज्यम्। तथा च यथा अद्यतना अद्वैतिनः गृहस्था यतयश्च सर्वेऽप्युक्तसाधनचतुष्टयाभावेऽपि ब्रह्मजिज्ञासां वर्तयन्ति, तथैव सर्वे वेदाध्यायिनो ब्रह्मचारिणोऽपीति स्थिते पूर्वभागविचारस्ये-वोपनिषद्विचारस्यापि वैधत्वपक्षे प्रागेवापातात् 'अध्ययनमात्रवत' इति सूत्रे

मात्रपदमपार्थं स्यात्। तदेतदवसरे व्यक्तीकरिष्यामः। एवञ्च भामत्यां जिज्ञासाधिकरणान्ते यदुक्तमध्ययनस्यार्थज्ञानार्थत्वम्, तदपि न स्वपक्षसाधनायालमित्यपि ग्राह्यम्। तद्भामत्यर्थोऽपि विचार्यतां नातिवर्तते।

इतरव्यपदेशाधिकरणे, 'अधिकं तु भेदनिर्देशात्' इति सूत्रे तावत् जीवब्रह्मणोर्व्यक्तैक्यपक्षे सर्वथैव न सङ्गच्छते। तत्र सर्वज्ञं सर्वशक्ति स्रष्टृ ब्रह्म जीवाद्भिन्नमधिकपदेन गृहीतमिति शांकरभाष्यदर्शिनां निर्विवादम्। तस्यैव सविशेषस्यात्रापि, 'अधिकोपदेशात्' इति सूत्रेऽधिकपदेन ग्रहणमौचित्यायातम्; न तु निर्विशेषग्रहणम्। कथञ्चिन्निर्गुणपरत्वाश्रयणे तु सूत्रस्वारस्यं त्यक्तमेव। यत्तु-'अपदेशव्यपदेशादिपदापेक्षया उपदेशपदस्य विलक्षणार्थत्वं सूत्रकृदिष्टम्। ज्ञातस्यैव कथनमप्यपदेशो भवति। उपदेशस्त्वज्ञातस्यैवे'ति-तावता जीवातिरिक्तत्वान्मानान्तरानवगतस्य परमात्मन एव सर्वस्रष्टुः शास्त्रेणोपदेश इत्यस्मन्मतं न दूषितं भवति। भेदस्य व्यपदेशविषयत्वात् व्यावहारिकत्वं चेदुच्यते, अधिकपदगृहीतस्यासंसार्यात्मत्वस्यापि उपदेशविषयतया व्यावहारिकत्वमेवास्तु। अपदेशोपदेशयोर्द्वयोरपि व्यवहारानतिवृत्तेः। अपदेशादिपदमप्यज्ञातविषये प्रयुज्यमानमुपदेशार्थकं भवितुमर्हत्येवेत्यन्तत इहाविशेष एव। अत एव, 'अंशो नानाव्यपदेशादन्यथा च' इति सूत्रे नानात्व इवाभेदेऽपि विषये व्यपदेशपदं प्रायोजि। व्यपदिश्यमानत्वात् भेदस्य वस्तुतो भेदोऽस्तीति साधयंश्च सूत्रकारः भेदस्य वास्तवत्वमेव मन्यते। अन्यथा भेदव्यवहारमात्रे साध्ये हेतुसाध्ययोरविशेषः स्यात्। यत्तु—"सर्वेषु सूत्रेषु भेदस्य" इत्यादिवाक्यम्, तत् किं भेदस्य सिद्धवदनुवादाभिप्रायम्, उत भेदव्यपदेशस्य? नाद्यः, "भेदव्यपदेशाच्चान्यः" इति सूत्रे भेदस्य साध्यकोटावपि प्रवेशात्। व्यपदेशस्तु सिद्ध एव हेतुतया निर्देष्टुमर्हः। अनुवादत्वकथनञ्चात्र किमर्थम्? न हि तावता भेदस्यासिद्धिर्भवेत्। जीवत्वेश्वरत्वविशिष्टयोर्भेद इष्ट एवास्माकमिति चेत्, जीवत्वेश्वरत्वयोरक्षय्यत्वात् तदाश्रययोर्धर्मिणोरप्यैक्यं दुर्वचम्। अश्रौतमिवासौत्रं च तदिति॥

"उभयेऽपि हिं भेदेनैनमधीयते" इति सूत्रे अधीयत इत्यस्य एनमित्यनेन सन्निकृष्टेन संबन्धः, न तु भेदेनेत्यनेनेति यदुक्तम्---तत्र पृच्छामः। तर्हि भेदेनेत्येतत् कुत्रान्वेति? कारकाणां क्रियान्वय एव हि वक्तव्यः। अथ अधीयत इत्येतद्विवक्षित उपदेशः एनमित्येतदर्थमात्रस्य, न तु भेदस्य। सर्वत्र भेदांशेऽनुवादः; निर्विशेषस्वरूपांशे उपदेश इति चेत् - एनं भेदेनाधीयते, एनं भिन्नमुपदिशन्तीति प्रयोगे, एनमित्युद्देश्यसमर्पकम्, भेदवाचिपदं विधेयसमर्पकमिति सर्वानुभवसिद्धविपरीतमिदं वर्णनम्।

'विशिष्टाद्वैतिभिरध्ययनस्यार्थज्ञानार्थत्वानङ्गीकारात्, 'शेषत्वात् पुरुषार्थवाद' इति पुरुषार्थवादत्वशंका निर्मूले'ति यदुक्तम्---तत्र ब्रूमः। अध्ययनमात्रवत इति सूत्रमर्थज्ञानार्थत्वं वारयतीति प्रागेव प्रत्यबोधयाम। न हि विशिष्टाद्वैतिनः अध्ययनविधेरर्थज्ञानोद्देश्यकत्वमनिच्छन्तोऽपि वेदस्य निरर्थकत्वं वा वेदाध्ययनस्य रागप्राप्तविचाराधीनार्थज्ञानद्वारा फलित्वापर्यवसानं वा स्वीकुर्वन्ति। अतोऽध्ययनविधेरक्षरग्रहणमात्रे उपरतत्वेऽपि गृहीतवेदव्युत्थं ज्ञानं कुत्रोपयुज्यत इति न नाम न विचार्यम्। एवं पूर्वपक्षी अर्थज्ञानार्थत्वमध्ययनविधेः स्वपक्षे स्थितमुपन्यस्यावस्थाप्य च तत् पूर्वपक्षं प्रवर्तयितुमर्हति, यथा जीवातिरिक्तात्मविशेषासद्भावं स्वाभिमतम्, यथा च वाक्यार्थज्ञानातिरिक्तस्योपासनात्मकज्ञानस्यासद्भावम्। सिद्धान्ती च जीवातिरिक्तात्मन इव वाक्यार्थज्ञानातिरिक्तोपासनात्मकज्ञानस्य चैव अध्ययनस्याक्षरग्रहणमात्रार्थताञ्च यथावसरं प्रतिबोधयेदिति न किञ्चिदपहीनम्; प्रत्युत जीवातिरिक्तात्मवाक्यार्थज्ञानातिरिक्तोपासनात्मकज्ञानैदम्पर्यस्योपनिषत्सु स्थितस्याविष्करणादद्वैतमतप्रतिकूलमेव तदधिकरणम्। अध्ययनविधेरर्थज्ञानार्थत्वे तदभावे च पक्षद्वयेऽपि निर्वाहः, 'अध्ययनमात्रवत'इति सूत्रे श्रीभाष्य एव प्रादर्शीति च कृतं तदनवेक्षामूलेन प्रश्नेन। सविशेषब्रह्मणः सङ्कर्षे एवोक्ततया अधिकोपदेशादिति सूत्रं निर्विशेषोपदेशपरत्वे एव सार्थमिति कथनं तु, 'एक आत्मनः शरीरे भावात्' इत्यनेनैव तत्सिद्धौ अद्वैतमतेऽपि तत् व्यर्थमिति

प्रतिबोध्य प्रतिक्षेप्यम् । प्रकारान्तरेण शङ्कायां पुनर्वचनमिति चेत्—तुल्यमेतत् । कर्मशेषभूतदेवताविचारात्मनि संकर्षकाण्डे उपासनाऽपि प्रस्तुताऽस्तीति कुतो ज्ञायते ? । कर्मोपयोग्युद्गीथाद्युपासनमपि शारीरके विचार्यतया प्राक् परित्यक्तमिति स्थिते स्वतन्त्रोपासनास्तत्रैव विचारिता इति कथमवधार्येत ? अङ्गीकृत्यापि तत्रोपासनाविचारम्, ब्रूमः । "योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति, न स वेद" इति तादृशोपासनप्रतिषेधपूर्वं विलक्षणमपृथक्सिद्धात्मत्वोपासनं ह्यत्र शारीरके व्युत्पिपादयिषितमित्यलमधिकेन ॥

"असंभवस्तु सतोऽनुपपत्तेः" इति सतः परमनुत्पन्नत्वे तत एव नित्यत्वे चावगते, तर्हि ब्रह्ममात्रं नित्यम्, जीवात्मा तु उत्पद्यत एवेति श्रुत्यादिमूलमेव विचारे प्रवृत्ते, "नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति जीवात्मनोऽप्यनुत्पत्तिः प्रतिपाद्यत इत्यधिकरणद्वयं सार्थम् । अन्यथा तत्पदलक्षितस्य त्वम्पदलक्षितस्य चात्मन एकत्वात् सतोऽनुत्पत्तिकथनादेव सर्वसिद्धिरिति'नात्मे' त्यादिसूत्रस्याऽऽनर्थक्यमेव । तथा, 'नात्मे'ति सूत्रं शुद्धात्मपरं वा, जीवभावापन्नात्मपरं वा । आद्ये, तदुपरि ज्ञातृत्वकर्तृत्वपरायत्तत्वादिसूत्रणमनन्वितम् । अन्त्ये, तदनुत्पत्तिनित्यत्वकथनमनुपपन्नमिति सूत्रसन्दर्भास्वारस्ये शतदूषण्या प्रदर्श्यमाने, 'अनुत्पत्तिः स्वरूपतः', 'ज्ञातृत्वादिकमुपाधितः' इति पुनरस्वरसार्थनिष्कर्षणप्रवृत्तेन भवता सूत्रस्वारस्यभङ्गप्रदर्शनमेव परीक्षया क्रियते ॥

एवं जीवब्रह्मणोरेकत्ववादिमते ज्ञाधिकरणानन्तरं यत् उत्क्रान्त्यधिकरणं जीवस्य विभुपरिमाणस्थापकम्, तत् व्यर्थम् । ब्रह्मणो विभुत्वे जीवविभुत्वस्यापि सिद्धेः । किं जीवस्य जीवत्वावस्थायां विभुत्वसाधकमिदमधिकरणम्, उत शुद्धावस्थायाम् ? आद्यमसम्भवि ; संसरतो जीवस्य बुद्धिगुणभूतेच्छाद्वेषादिसारत्वात् बुद्धिपरिमाणेनाणुत्वेनाणुव्यपदेश इति तद्गुणसारत्वादिति सूत्रेण सिद्धान्तितत्वात् । जीवत्वस्यौपाधिकत्वे जीवपरिमाणमप्यौपाधिकमिति सुस्पष्टमिति किमर्थोऽयं तन्मते विचारः ? जीवातिरेकपक्षे तु परमात्मवत्

जीवात्मनोऽपि विभुत्वं सांख्यतार्किकादिसंमतमाशङ्क्य परिह्रियत इति जाघटीति। एवं युष्मन्मते तद्गुणसारत्वादिति सूत्रे तत्पदेन बुद्धिग्रहणमस्वरसम्; अप्रसक्तत्वात्। बुद्धिगुणस्य जीवसारत्वकथनञ्चास्वरसम्। तदुपाधिकत्वादणुत्वव्यपदेश इति वक्तव्ये तद्गुणसारत्वादणुत्वव्यपदेश इति चास्वरसम्। इच्छादिगुणप्रयुक्तत्वाभावादणुत्वस्य। एवं तद्गुणपदेन ज्ञानरूपगुणस्य पूर्वप्रकृतस्याग्रहणे, 'यावदात्मभावित्वाच्च न दोष' इत्यनन्तरसूत्रमप्यस्वरसम्। न हि बुद्धिसंयोगो यावदात्मभावी। न हि यावज्जीवभावीति पदं श्रूयते। अतो मुक्तिकालेऽप्यनुवर्तमानगुणविशेषग्रहणमेव युक्तम्। तत् किमिति शतभूषणी स्वयमेव स्वदोषं प्रदर्शयितुं प्रसक्तमनुप्रसज्य व्याप्रियते। 'जीवात्मनः सर्वगतत्वश्रुतिः धर्मभूतज्ञानव्याप्त्यभिप्रायेति गीताभाष्ये उक्तम्। न श्रीभाष्ये' इत्यपि श्रीभाष्यसूक्त्यदर्शनमूलकम्। व्यर्थश्चैष विचारः। क्वचिदुक्तेरपि पर्याप्तत्वात्। अप्रसक्तार्थविस्तरस्वाभाव्यात् एवं वर्धते शतभूषणी।

यत्तु—पूर्वमीमांसायामेव कर्तृत्वभोक्तृत्वदेहातिरिक्तत्वादिकमात्मनो ज्ञातम्। तत्र कर्तृत्वादेरौपाधिकत्वमुपदेष्टुम्, "कर्ता शास्त्रार्थवत्त्वात्" इत्यादिसूत्रं शारीरक इति—तत्, 'नात्मा श्रुते' रित्यनौपाधिकस्वरूपप्रस्तावादनौपाधिकमपि कर्तृत्वादिकमात्मनोऽस्तीत्यस्यानिष्टौ संदर्भविरोध इत्यस्य प्रागेव प्रदर्शितत्वादयुक्तं मन्तव्यम्॥

अथ संध्याधिकरणप्रस्तावेन शतदूषण्युक्तप्रतिविवक्षया यदुपक्रान्तम्—'जीवात्मनो जाग्रत्स्वप्नसुषुप्त्यवस्थानिरूपणेऽपि स्वप्नतत्त्वनिर्णय एव मुख्यं तात्पर्यं सूत्रकृतः। तत्रैव स्वयंज्योतिष्ट्वसिद्धेरिति—तत्रोच्यते। जाग्रदवस्थानिरूपणैदम्पर्यं यदि न सूत्रकृतः, तर्हि वैराग्यपादः कृत्स्नो व्यर्थः स्यात्। मोक्षोपायप्रविवर्तयिषया वैराग्यविवर्धयिषया कृते पादे कथं नैर्भर्यं न भवेत्? तथा सति संध्याधिकरणमपि तत्रैव पादे घटयित्वा सन्ध्याधिकरणमुख्यत्वं

प्रदर्शितवान् स्यात्। अतो जाग्रद्विषयवैराग्यवृद्धये जाग्रदवस्थानिरूपणमपि परमोद्दिष्टमेव। यत्तु—स्वयंज्योतिष्ट्वनिरूपणं मुख्यमिति—तत्र किमिदं स्वयंज्योतिष्ट्वम्? किं स्वाधीनस्वप्रकाशः, उत स्वाधीनसर्ववस्तुप्रकाशः? नाद्यः, तस्य जाग्रदाद्यवस्थास्वप्यविशेषात्। न हि पराधीनः प्रकाशः आत्मनि भवद्भिरिष्यते। स्वप्नावस्थापेक्षया सुषुप्त्यवस्थायामेव विषयान्तरासंवलितः स्वप्रकाशो वर्णयितुं शक्य इति युक्तं स्वप्नमपेक्ष्य सुषुप्तावैदंपर्यं सूत्रकृतस्तदा वक्तुम्। स्वाधीनसर्वप्रकाशत्वं तु स्वप्ने जागरापेक्षया स्पष्टमवगम्यते। जागरे स्वकर्माधीनेव परकर्माधीनाऽपि सृष्टिरस्तीति स्वानुभवैकार्थस्वकर्माधीनत्वमात्रस्य वस्तुषु वक्तुमशक्यतया वस्तूनां प्रकाशः स्वाधीन इव पराधीनोऽपि स्यात्। स्वप्ने तु सर्वस्यापि वस्तुनः स्वार्थं स्वकर्मणैव सृष्टत्वात् सर्वोऽपि प्रकाशः अन्ततः स्वमात्रमूलक इति पुरुषस्य स्वयंज्योतिष्ट्वम्। तदिदं बृहदारण्यके जीवात्मनि वर्ण्यते। एवमपि तत्र यथा जागरस्वप्नसुषुप्तिमरणक्रमेण मोक्षवर्णनम्, तथेहापि मुक्तिपर्यन्तदशावर्णनार्थमेव सर्वा अप्यवस्थाः वैराग्यवृद्धये वर्णयति इति तत्त्वम्। एष विचारः सूत्रस्वारस्यपर्यालोचने वृथैव समानायित इत्यलमिदानीम्॥

यस्तु ईदृशावस्थानिरूपणं जिज्ञासाकर्तृस्वरूपनिर्णये कथमुपयुज्यत इति प्रश्नः। तत्र किं जिज्ञासाकर्तुर्जागरावस्थायामेव जिज्ञासाकर्तृत्वात् तादृशकर्तृत्वौपयिकशिष्यलक्षणादिनिरूपणमेव तत्रोपयुज्यते, नान्यदिति तदाशयः, उत प्रश्नस्य जागरावस्थाभावित्वात् तदवस्थायाः कृत्स्नायाः कथञ्चिदुपयोगेऽपि स्वप्नसुषुप्तिमूर्च्छावर्णनं न घटते, तदा जिज्ञासाया अभावादिति। अहो वक्तृविवक्षितार्थविज्ञानकौशलं शतभूषणीकारस्य ब्रह्मनिरूपणवत् ब्रह्मजिज्ञासाकर्तुर्जीवस्यापि निरूपणं शारीरके उपयुज्यते, बन्धदशायां स्वावस्थाः मुक्तिदशायां स्वस्वरूपाविर्भावश्च विज्ञायैव वैराग्यपूर्वकमनेन मुक्त्यर्थं प्रवृत्तेः कार्यत्वादिति सर्वनिरूपणसांगत्यवर्णनात्। "अप्रस्तुनमात्मान्तरमत्र कथं परीक्ष्यते" इति शतदूषण्युक्तं सर्वमत्रावधेयम्। एवंस्थिते

"श्रीभाष्यमते तु जीवात्मतत्त्वविचारः सर्वोऽपि ब्रह्ममीमांसायां न घटते अनाकाङ्क्षितत्वात्" इति निगमनमहृदयमश्रद्धेयञ्चेत्यलम्।

वियदादेरिव जीवस्यापि चिन्तनं ब्रह्ममीमांसान्तर्गतमिति शतदूषण्युपपादने जौप्रति यदुक्तम्, "वियदाद्यनित्यत्वस्थापनं विना अद्वितीयब्रह्मासिद्ध्या स्वमते तन्निरूपणं युज्यते, विशिष्टाद्वैतिमते तन्नित्यत्वेऽपि कथं जिज्ञासितब्रह्मासिद्धिरिति—तत्र ब्रूमः—ब्रह्मणोऽद्वितीयत्वायाकाशाद्यनित्यत्वमुपयुक्तं चेत्, अविद्याया अप्यनित्यत्वमुत्पद्यमानत्वमेष्टव्यं स्यात्। अनुत्पद्यमानस्यानित्यत्वायोगात। वियदादेरुत्पत्तिरेव हि सूत्रेषु स्थाप्यते। यदि अनादि सादि वा अपरमार्थभूतं सर्वमिति निरूपणमेव ब्रह्मण्यद्वितीयत्वस्थापनायापेक्षितम्, तर्हि वियदाद्युत्पत्तिचिन्ता वृथा। अस्मन्मते सर्वकारणत्वेन ब्रह्मणो लक्षितत्वात् आकाशादेरनुत्पन्नत्वे सर्वकारणत्वभङ्गः स्यादिति जिज्ञासिततादृशब्रह्मसिद्ध्यर्थमेव तन्निरूपणम्। वस्तुतो भवन्मतेऽपि सैव सरणिरित्याग्रहमूल एवायमाक्षेपः। अत एव, "आकाशशरीरं ब्रह्मेति श्रुतौ शरीरपदं व्यर्थम्। आकाशपदस्यैव आकाशशरीरकत्वार्थस्य विशिष्टाद्वैतिभिः सुवचत्वात्" इत्युक्तमप्याग्रहमूलम्। अस्मन्मते व्यर्थं तत् पदमिति भवतोच्यते। भवन्मते तु बाधितार्थकं तत्। आकाशादेर्ब्रह्मशरीरत्वस्य श्रुत्युक्तस्यापि भवद्भिः विशिष्टाद्वैतसिद्धिभयादनादरात्। भवादृशानादरपरिहारार्थमेव आकाशशब्दसिद्ध्यर्हमपि शरीरत्वं कण्ठोक्तं श्रुत्येति न तद्वैयर्थ्यम्। शरीरशब्दप्रवृत्तिनिमित्तस्य नियाम्यत्वादेः प्रकारतया भानार्थं च शरीरपदम्। एवम् आसमन्तात् प्रकाशमानदिव्यमङ्गलविग्रहविशिष्टं ब्रह्मेति विशेषार्थपरत्वं शरीरपदमन्तरा न सिद्ध्यतीत्यादि च भाव्यम्। नामरूपव्याकरणश्रुत्यादिसिद्धस्य शरीरवाचिनां शरीरिपर्यन्तत्वस्य अन्यथासिद्धाकाशशरीरशब्दान्तर्गतशरीरशब्देन प्रतिषेधप्रयत्नोऽयं तृणशकलेन शैलोद्धार एव।

अत्र चराचरव्यपाश्रयसूत्रोदाहरणं स्वदोषस्य स्वयमुद्घाटनायैव भवति। तथाहि—तत् सूत्रं पृथगधिकरणं भवन्मते। स्थूलावुत्पत्तिप्रलयौ देहाश्रितौ,

न जीवाश्रिताविति निरूपणार्थं तदिति। जीवस्य परमात्मनः उत्पत्तिर्नेति, नात्माश्रुतेरिति समनन्तरसूत्रेण स्थापयिष्यमाणतया जन्ममरणयोर्जीवगतत्व-प्रश्नस्य का प्रसक्तिः ?। अनेनैव तत्सिद्धौ उपरितनमधिकरणं वा व्यर्थम्। तत्र भामत्या, "देवदत्तादिनामधेयं तावत् जीवात्मनः, न शरीरस्य; तन्नाम्ने शरीराय श्राद्धकरणानुपपत्तेः" इति शरीरवाचिशब्दस्य शरीरिपर्यन्तमुख्यत्व-मुपपादितम्। जननमरणयोः परं जीवे मुख्यत्वं शङ्कितं प्रतिषिद्धम्। अथ चाध्यासभाष्ये 'मृतो देवदत्तः, जातो देवदत्तः" इत्यादिव्यपदेशस्य भ्रान्तिमूलताया उपपादितत्वात् इदमधिकरणं कथं प्रवृत्तमित्याशङ्क्य लौकिक-व्यपदेशस्याभ्रान्तिमूलत्वमभ्युपेत्याधिकरणमिति अधिकरणवैयर्थ्यमेव भङ्ग्यन्त-रेण दर्शितमस्ति। अस्माकं तु मतेऽत्र न जीवप्रस्तावः; किं तु तेज-आदिशरीरकात् परमात्मन एव सर्वकार्योत्पत्तिवर्णने कृते कथं तत्तत्पदस्य परमात्मपरतेति शंकायां तत्परिहारायेदं सूत्रमिति सुसङ्गतमेतत्। किं च, "चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्त" इति चराचरव्यपाश्रयताविषये भाक्तत्वे स्पष्टं सूत्रे प्रतीयमाने तद्व्यपाश्रयतायाः मुख्यत्वं जीवव्यपाश्रयतायाः भाक्तत्वं च भवद्भाष्यवर्णितं सर्वथैवास्वरसमित्यपि भाव्यताम्॥

अथ साधनाध्यायगताङ्गपादनिरूपितं कर्मानुष्ठानं विविदिषार्थमिति वक्तुमुपक्रममाणेन अङ्गाङ्गिभावाध्याये इति विलक्षणं प्रयुक्तम्। ततश्च विविदिषे-त्यादिना अनन्वितं च किमपि लिखितम्। तृतीयपादेन कर्म, तुरीयेण वेदनमिति क्रमं विहाय वेदनमुपायं तृतीयेन निरूप्य तुरीयेण कर्म निरूपयन् सूत्रकारः वेदनं प्राप्तवताऽपि कर्म कर्तव्यमित्युपदिशतीति विज्ञायते। अतो विविदिषार्थ-त्वमेव कर्मणामिति न युक्तम्। भामत्या विविदिषार्थत्वपक्षस्याद्दतत्वेऽपि ततः पूर्वै-रुक्तैश्च कर्मणां वेदनार्थत्वपक्षोऽपि सुदूरमुपपाद्य स्वीकृत इति **सिद्धान्तलेश-सङ्ग्रहे** सुव्यक्तं दर्शयति विविदिषार्थत्वपक्षनैर्भर्यं नातीव शोभते। आ जीव-न्मुक्तेराश्रमधर्मत्यागो नास्तीति वदन्ती च शतभूषणी वेदनाङ्गत्वं कर्मणः स्वरसतो-

ऽनुमन्तुमर्हति। विविदिषार्थत्वपक्षाच्च वेदनार्थत्वपक्षः श्रेयान्; विविदिषामूलकसदाचार्योपसर्पणनिर्विघ्नश्रवणमननादिसिद्धेरनुष्ठितकर्मजन्यादृष्टफलत्वसिद्ध्या वेदननिष्पत्तिसौकर्यात्। विविदिषार्थत्वपक्षे तु कर्मजन्यमदृष्टं विविदिषामात्रमुत्पाद्योपरंस्यति। उत्पन्नविविदिषश्च सदाचार्यलाभादिप्रतिबन्धपराहतप्रयोजनः पुनर्वेदनसम्पत्तये उपायान्तरमनुधावेदिति क्लेश इति। अत्र सर्वेषामाश्रमिणामनाश्रमिणाञ्च कर्मानुष्ठानमस्तीति, संन्यासे कुटीचकादिभेदः एकदण्डत्रिदण्डादिभेदश्चास्तीत्यादिविस्तरस्य कृतस्य न किञ्चिदिह प्रयोजनम्। विविदिषां प्राप्य संन्यस्तवता चाश्रमकर्म किमर्थमनुष्ठेयम्? वेदनार्थमिति चेत्—तर्हि अविशेषात् सर्वं वेदनार्थमित्यस्तु। विस्तरस्तु विविदिषासाधनत्वभङ्गप्रसाधने द्रष्टव्यः। जीवन्मुक्तौ ब्राह्मणत्वाद्यभिमानाभावात् न धर्माधिकार इति वदता बुभुक्षामूलप्रवृत्त्याद्यपि दुरुपपादम्। मनुष्यत्वाभिमानादेरपि तुल्यनयादयोगात्। अथ तत्र बाधितानुवृत्तिः, सा कथं ब्राह्मणत्वाद्यभिमाने न भवेत्।

यत् पुनरुपर्युक्तम्—संसरतो जीवस्यावस्थाप्रदर्शनादिना तृतीयाध्याये नित्यानित्यवस्तुविवेकः, इहामुत्र फलभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वञ्चेति साधनचतुष्टयमुपपादितं भवतीति—तावता साधनचतुष्टयमिदं वेदनरूपोपायानुष्ठानोपयुक्तमित्येव सिद्ध्यति; न तु ब्रह्म जिज्ञासमानस्य प्रागेव एतत्सम्पत्तिरवश्यंभाविनीति शान्तप्रायजिज्ञासं प्रत्यत्रोपदेशात्। विशदाकारेण साधनचतुष्टयस्य सम्पत्त्यभावेऽपि अविशदाकारेण स्थितिर्युज्यत इति चेत्—अस्तु कामम्। किमत्र तद्विचारेण। तदवसर एव तद्विवेचनं शोभते।

यत्तु—"ज्ञानयोगिभिरपि कर्मयोगः आप्रायणमनुष्ठेय इति श्रीभाष्यानुयायिनां मतं निर्मूल" मिति—तदिदं वचनमेव निर्मूलम्। विशिष्टाद्वैतिमतज्ञानयोगकर्मयोगशब्दार्थवेदी नैवं लेखितुमर्हति। न हि ज्ञानयोगस्य कर्मयोगस्य च यौगपद्यमङ्गीक्रियते। अथ तत्त्वज्ञानोत्पत्त्यनन्तरं कर्मानुष्ठानं तदिष्टं न युक्तमित्युच्यते इति चेत्—आजीवन्मुक्ति कर्म न त्याज्यमिति

वदतो भवतोऽपि मते ज्ञानानन्तरं कर्मानुष्ठानमस्तीति को विशेषः ? तद्वा भवद्वचनं निर्मूलं भवतु ॥

आधिकारिकाणां अवतारपुरुषाणाञ्च लोकसङ्ग्रहार्थं कर्मानुष्ठानमिति भवतोच्यते । ते जीवन्मुक्ताः, न वा । आद्ये, कथं ब्राह्मणत्वाद्यभिमानानुवृत्तिः?, अन्त्ये, अन्यादृशतत्त्वज्ञानिनां तेषां च को विशेषः? । येन ते परं लोकसंग्रहार्थं कर्मणामनुष्ठातारः । ईश्वरस्य विधिपारवश्याभावात् लोकसङ्ग्रहार्थमनुष्ठानमिति काममस्तु, न तत् आधिकारिकपुरुषविषये सञ्चारयितुं शक्यम् । "परिशुद्धस्वरूपोपदेशदशायां प्रतिपक्षप्रतिक्षेपपूर्वकस्य भ्रान्तिसिद्धाकारसमर्थनस्य विरुद्धत्वात् " इति शतदूषणीसूक्तिस्तावत्—नित्यत्वनिरूपणेन परिशुद्धमात्मस्वरूपं प्रक्रम्य सूत्रकारः कर्तृत्वपरायत्तत्वादिकं भ्रान्तिसिद्धाकारं न समर्थयितुमर्हतीति, कर्तृत्वादेरपि स्वाभाविकत्वं स्थापयितुं प्रवृत्ता । तत्खण्डनचिकीर्षया यत्तावदुपक्रम्यते, "पण्डितंमानिनं (?) भ्रान्तमुद्दिश्यैव तत्त्वज्ञानमुपदिशन्ती" त्यादि, तत् सर्वथैवासङ्गतम्—भ्रान्तिसंशयादिग्रस्तपुरुष उपदेश्यो न भवतीति न हि तत्रोच्यते । भ्रान्तस्य भ्रान्तिनिवृत्त्यर्थे उपदेशे कर्तव्ये क्रियमाणे भ्रान्त्यभिवृद्धिकर उपन्यासः उपदेष्टुर्विरुद्धः । जीवस्य ब्रह्मस्वरूपतया वा अन्यथा वा नित्यत्वमनौपाधिकं निरूप्य, समनन्तरं तस्यैव कर्तृत्वादिनिरूपणं नित्यत्ववत् कर्तृत्वादिकमपि स्वाभाविकं मन्यते सूत्रकार इत्येव हि दृढां मतिं दद्यात् । नन्वत एव वयं सूत्रार्थतत्त्वं भाष्यादिना भङ्ग्यन्तरेणोपपाद्य तां मतिं निरस्याम इति चेत्—तर्हि सूत्रस्वरससिद्धार्थः कारणान्तरेण त्यज्यत इत्येव कथितं भवतीति सुष्ठु स्वारस्यरक्षणम् ।

यत्तु—"सूत्राशयस्यान्यथान्यथानयनं तु सूत्राण्येवान्यथयतां श्रीभाष्यकारादीनामेव कृत्या—" इति तत्रोच्यते । यदि श्रीभाष्यकारादयः सूत्राण्यन्यथयितुं प्रगल्भा एव, तर्हि स्वाभिमतार्थानुगुणसूत्रपाठकल्पनाकौशलशालिनस्ते किमिति सूत्राशयमन्यथाऽन्यथा नेष्यन्ति ? । सूत्राशयस्येति

किम्? साभिनिवेशं सूत्राक्षरार्थानामप्यन्यथाकरणं प्रायः शांकरसमादृतमिति पटहप्रणादः परितः प्रसृतः कथं भवतः कर्णकुहरमप्रविष्टः स्यात्? आरम्भ-सूत्रस्थाथशब्दप्रभृति सर्वमपि पदं प्राचीनार्थत्यागेनान्यथा हि नीयते। खण्ड्यते च प्राच्यादृतः परमार्थः, "नन्विह कर्मावबोधानन्तर्यं विशेषः" इत्याद्याशङ्कापूर्वम् ब्रह्मशब्दः सगुणपरो निर्गुणे नीयते। जन्मादि वस्तुतो नास्तीत्युच्यते। आनन्दमयाधिकरणकोलाहलस्त्वखिललोकविदितः। क्वचित् पूर्वस्य पक्षस्य उत्तरपक्षत्वमुत्तरस्य पूर्वत्वमिति विपरिवर्तनमित्याद्यनन्तविधमन्यथा-करणम्। पूर्वाचार्यसुरक्षितार्थस्थापनेदम्परभगवद्रामानुजाचार्यपूर्वपुरुषसम्प्रदाय-प्राप्तः पाठः कल्पित इति, पूर्वव्याख्याखण्डनपूर्वं प्रवृत्तः शांकरभाष्यारूढः पाठ एव प्राचीन इति च कथमवधार्यते? अर्थमिव शब्दानुपूर्वीमप्याद्यपक्ष-प्रविष्टाः ररक्षुरित्येव तु प्रत्युत साम्प्रतम्।

जीवब्रह्माभेदे, 'असंभवस्तु सतोऽनुपपत्तेः' इति सूत्रेण ब्रह्मणो नित्य-त्वस्योक्ततयैव जीवनित्यत्वसिद्धौ, "नात्मा श्रुते"रिति व्यर्थम्। अतो जीवस्य ब्रह्मणो भेद एव सूत्रस्वारस्यमिति शतदूषण्याक्षेपं परिजिहीर्षुणा यदुक्तम्—असम्भवसूत्रे तत्त्वमसीत्यत्र तत्पदलक्ष्यार्थनित्यत्वमुक्तम्; त्वम्पदलक्ष्यार्थ-नित्यत्वं 'नात्मे'ति सूत्रेण कथ्यत इति - तन्न। जीवब्रह्मणोरभेदे सिद्धे जीवे पृथगनुत्पत्त्यादिवर्णनमनपेक्षितम्। अभेदस्तयोर्न सिद्ध इति चेत्—पृथक् नित्यत्वस्थापनमात्रादभेदस्तयोर्न सिद्ध्यति, प्रत्युत पृथग्वर्णनात् जीवब्रह्मभेद एव सूत्रकृदिष्ट इत्यभ्यूहनं ज्यायः। अतः, "तत्त्वमसी"ति महावाक्यार्थस्य जीवब्रह्माभेदस्य निर्णयार्थं पृथगधिकरणमावश्यकम्। 'आवश्यकत्वेऽप्यधि-करणं विनैव सिद्ध्येत्, यथा परमते शरीरात्मभावः' इति चेत्—तन्न। अन्तर्याम्यधिकरणे, "अवस्थितेरिति काशकृत्स्नः" इति सूत्रे, "आत्मेति तूपगच्छन्ति" इत्यादिसूत्रेषु च हि शरीरात्मभावः कथित एव। ननु तान्येव सूत्राण्यभेदपरतया अस्माभिर्योज्यन्त इति न जीवब्रह्माभेदासिद्धिरिति चेत्—अन्तर्याम्यधिकरणे जीवब्रह्मभेदपरे जाग्रति, तथा समन्वयाध्याये बहुभिरधि-

करणैः जीवात् ब्रह्मणो भेदे स्थापिते कण्ठोक्ते च सति कथमभेदबोधकत्वं कस्यचित् सूत्रस्य कल्पयितुं शक्यम्? अन्तर्यामिब्राह्मणोक्तमन्तर्यामित्वमुपासनार्थम्, न वास्तवमिति चेत्—तर्हि सर्वस्य कल्पिततया ब्रह्मव्यतिरेकेणान्याभावस्य सिद्धतया तन्नित्यत्वस्थापनाय असंभवसूत्रम्, 'नात्मे'तिसूत्रमित्यनेकसूत्रकरणमयुक्तमेव ॥

"नात्मा श्रुतेः" इति सूत्रे आत्मेत्येकवचनबलात् नात्मैक्यसिद्धिः। "यथाऽग्नेः क्षुद्रा विष्फुलिङ्गाः चरन्ति, एवमेवास्मादात्मनः सर्वे प्राणाः" इति, "सर्व एते आत्मानो व्युच्चरन्ति" इति च श्रुत्या सूत्रदिदर्शयिषितयैव भेदसिद्धेः। सिद्धान्तेऽपि "नित्यो नित्यानां चेतनश्चेतनाना" मिति चेतनानेकत्वस्थापकश्रुतिर्जागर्ति। एकत्वं प्रत्येकैकत्वाभिप्रायेणापि निरुह्येत ; बहुत्वं तु अविधेयमपि अनूद्यमानमप्यबाध्यत्वाय स्वीकर्तव्यमिति चेतनबहुत्वमक्षतम्। अतः, "श्रेष्ठश्चे"ति सूत्रे मुख्यप्राणस्येव जात्येकत्वम् आत्मेत्यत्र भाव्यमिति शतदूषण्याशये स्पष्टे भवता स्वसिद्धान्तानुरोधेन एकत्वस्थापनाय बहुवचनवचनानामन्यथा नयने प्रवर्त्यते। तत्र नियामकतया देहानेकत्वात्मैकत्वनिर्देशकानि गीतावाक्यानि उद्ध्रियन्ते। तानि तु एकैकस्याप्यात्मनः अनेकदेहप्राप्तिप्रदर्शनसन्दर्भगततया न लोकस्थसर्वशरीराणामेकात्माधिष्ठितत्वस्थापनपर्याप्तम्। अन्यथा, "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते" इत्येकवचनात् शरीरमप्येकमेव लोके स्यात्। "सर्वभूतस्थितं यो माम्" इत्यत्र भूतपदस्याचेतनविशिष्टचेतनप्रसिद्धतया जीवपर्यन्तवाचित्वात् जीवस्थितत्वमेव परमात्मनो लभ्यत इति न देहेषु सर्वेषु आत्मन एकस्य स्थितिरुक्ता भवति। अतः, "नात्मा श्रुते"रिति सूत्रे आत्मानमनूद्य अनुत्पत्तिविधानात् आत्मनानात्वैकत्वविषये सूत्रतात्पर्याभावात् मूलप्रमाणं यत्सङ्ख्याकात्मपरम्, सूत्रं तत्संख्याकमनुवदिष्यतीति एकवचनस्य एकत्वसाधकत्वं न भविष्यतीति तत्त्वम्। अत्र श्रेष्ठश्चेत्युदाहरणञ्च शतदूषण्युपात्तम्। तत्र यदुच्यते, श्रेष्ठश्चेति सूत्रं पृथगधिकरणमद्वैतिमते, अन्यमते पूर्वेणैकाधिकरण्यमित्यादि—

तत् सर्वं प्रस्तुतांशानुपयोगि । तथा प्राक्सृष्टेरेकत्वावधारणात् कारणात्मनैकत्वं श्रेष्ठश्चेति सूत्रविवक्षितमिति कल्पनमपि साहसमात्रम् । एकैकशरीरेऽपि इन्द्रियाण्यनेकानीव अनेके प्राणा न सन्ति ; पञ्चवृत्तिरेकः प्राण इत्याशयेन एकवचननिर्देश इति स्वरसत्यागेन किमिति कल्पना ? "अंशो नानाव्यपदेशा"दिति सूत्रे अंशपदेन साक्षात् ब्रह्मस्वरूपग्रहणं तावन्न भवति ; अपि तु जीवभावापन्नस्य । जीवभावे चानेकत्वस्य संप्रतिपन्नत्वात् तत्रैकवचनं जात्यभिप्रायमेव वाच्यमिति 'नात्मे'त्युपक्रमसूत्रमपि तथैव युक्तम् । अत एव श्रीभाष्ये अंशाधिकरणं गत्वा, आत्मेत्येकवचनं जात्यभिप्रायमिति भाषितमित्यवधेयम् । किञ्च कर्तृत्वांशत्वादीनां सिद्धान्तितानां समन्वयाय 'नात्मे'ति सूत्रे आत्मपदेन जीवग्रहणे, जीवेश्वरयोः बिम्बप्रतिबिम्बभावपक्षस्यैव ग्राह्यतायाः सिद्धान्तलेशसंग्रहेऽन्ते समर्थितत्वेन जीवात्मनः प्रतिबिम्बरूपस्य नानात्वादेकवचनं जात्यभिप्रायमेव वाच्यम् । एवमपि नित्यत्वकथनं तत्र न युज्यते ; मुक्तौ प्रतिबिम्बनिवृत्तिध्रौव्यात् । आत्मपदेन शुद्धात्मग्रहणे तु, "असंभवस्तु सत" इति सूत्रेण पौनरुक्त्यमित्युक्तमेव ॥

अथ—"अजो नित्यः शाश्वतोऽयं पुराण" इति श्रुतौ एकत्वाविवक्षाकारणाभावात् आत्मैक्यसिद्धिरिति कथनमपि न सम्यक् । तत्र एकत्वविधानायोगात् । 'न ह्यत्र उद्देश्यविधेयभाव' इति कथनमप्ययुक्तम् । प्राप्तस्य अयमिति पदार्थस्य उद्देश्यत्वस्य स्पष्टत्वात् लिङादिघटितवाक्यविशेष इवात्र विशिष्टविधानप्रसक्त्यभावात् । एवञ्च ग्रहैकत्ववदेवाविवक्षितमेकत्वम् । यथा ग्रहपदोत्तरैकवचनं नैकत्वविधायकम्, तथा अयमितिपदस्थमेकवचनं न विधेयैकत्वसमर्पकम् ; इदंपदार्थात्मोद्देशेन तदेकत्वाजत्वोभयविधाने वाक्यभेदात् । नाप्यजपदोत्तरैकवचनमेकत्वसमर्पकम् ; तत्रापि धर्म्यंशस्य प्राप्ततया अयमिति आत्मोद्देशेन अजपदप्रवृत्तिनिमित्तस्याजत्वस्यैकवचनोपात्तस्यैकत्वस्य च विधाने वाक्यभेदात् । यच्च चेतनबहुत्वस्यौपाधिकत्वे, 'अणव' इति बहुवचनस्य दृष्टान्तीकरणम्—तच्चायुक्तम् । इन्द्रियाणां स्वाभाविकनानात्वशालितया औपाधिक-

त्वाप्रसक्तेः। श्रेष्ठश्चेति सूत्रोक्तन्यायेन आत्मेत्येकवचनं मुक्तयवस्थसंविन्मात्राभिप्रायमिति कथनञ्च तत्सूत्रोक्तन्यायस्य कस्यचित् प्रकृतसाधकस्याभावादसंबद्धम्। अतः, "आत्माद्वैतभङ्गाय प्रयासः स्वशृङ्गभङ्गायैव" इति तिरश्चीनोक्तिरपि तिरस्कृतैव भाव्या ॥

अथोभयलिङ्गाधिकरणे स्वपक्षोपन्यासः परं कृतः। स्वपक्षे स्वारस्यं तु न वर्णितं शतभूषण्याम्। तत्र परब्रह्मणि साकारत्वनिराकारत्वोभयं नास्तीति सूत्रार्थवर्णनं न सम्यक्। उभयलिङ्गमिति पदं यदि न बहुव्रीहिवृत्तमविवक्षिष्यत्, उभयमित्येव प्रायोक्ष्यत्। किञ्च पृथिव्याद्युपाधिप्रयुक्तोभयवत्त्वं नास्तीत्युक्तिरपि न युक्ता। निर्विकारत्वस्योपाधिप्रयुक्तत्वाभावेनोभयस्मिन् उपाधिप्रयुक्तत्वानन्वयात्। उभयस्य निषेधे च सदसदनिर्वचनीयवत् उभयविलक्षणं ब्रह्म प्रतिपत्तव्यं स्यात्। उपाधिप्रयुक्तस्यैवोभयस्य निषेधात् स्वाभाविकोभयवत्त्वमपि श्रुतिबलादङ्गीकर्तव्यमित्यपि सूत्राशयः स्यात्। एकतरपरिशेषेऽपि सविशेषत्वं स्वीकृत्य निर्विशेषत्वं निरसनीयतयेष्टमित्यपि स्यात्। पूर्वं जागरस्वप्नसुषुप्त्यवस्थाप्रस्तावात् तत्तदवस्थासु सुखदुःखमोहानां जीवे प्रतिपन्नतया तादृशांशनिषेधस्यैव प्रसक्ततया निषेध्यस्य ज्ञातत्वेन उभयलिङ्गमित्यस्य प्रतियोगिसमर्पकत्वमनपेक्षितञ्च। 'सर्वत्र ही'ति भागे विधेयस्य कस्यचिदपेक्षितत्वात् तदर्थं तत्र उभयलिङ्गपदान्वय उचितः। अन्यथा सविशेषत्वं वा, निर्विशेषत्वं वा, उभयनिषेधो वा किं सर्वत्रेति न ज्ञायते। एवं सविशेषत्वमात्रे निषेध्ये उभयं निषेधन्, विधेयमपि विशिष्यानिर्दिशन् सूत्रकारः स्वयमसमर्थो वैश्वसाक्षिदेश्यो वा स्यात्। अथ सामान्यतः सूत्रकृता कथनेऽपि वयं ततो विविच्य निर्धारयितुं पारयाम इति चेत्, एवं पारयतां बादरायणः कुत्रापि नापेक्षितः। तदीयसूत्रग्रहणम्, तत्र प्रतीतस्वरसार्थत्यजनम्, तत्र कारणोपन्यास इत्यादिक्लेशमपि तीरयितुं भवद्भिः तदस्पर्शो वरम्। अतो भवन्मतसंमतौ सूत्रकृत् उभयलिङ्गमित्यत्र सविशेषत्वमित्येव प्रयुक्तवान् स्यात्। तस्मात् अखिलहेयप्रत्यनीकत्व-कल्याणगुणैकतानत्वोभयविशिष्टं ब्रह्मेत्येवात्र स्थाप्यत इति शतदूषण्याशय एव शोभनः ॥

एवं स्वमतानुपपत्तिं प्राप्तामपरिहृत्य शतभूषणी श्रीभाष्ये बत दोषमुद्भावयितुं यतते । श्रीभाष्ये अस्मिन्नधिकरणे पूर्वमधिकरणद्वयसिद्धांशाधिकं किमुच्यत इति स्वयमेवाशङ्क्य विषयविवेकः कृतः । हेयसम्बन्धः प्रागेवाधिकरणद्वये आशङ्क्य परिहृतः इति पुनः परिहरणे पिष्टपेषणमिति शङ्का । परिहारस्तावत्—"संभोगप्राप्तिरिति चेन्न वैशेष्यात्" इति सूत्रे जीवेन सह शरीरे स्थितत्वात् जीववत् भोगी स्यादिति शङ्का परिहृता । तच्छरीरस्य जीववदीश्वरं प्रत्यपि शरीरत्वात् जीववद्भोक्तृत्वापत्तिरिति शङ्का च, 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्' इत्यत्र परिहृता । अथात्र प्रकारान्तरेण शङ्का—पुण्यपापरूपकर्माभावादीश्वरस्य न भोक्तृत्वमिति न युक्तम्; कर्मणां हेयशरीरस्वामित्वसम्पादनमुखेनैव भोजकत्वात् कर्ममूलं वा स्वतो वा हेयशरीरस्वामित्वे संपन्ने भोगस्यावर्जनीयत्वादिति । तत्परिहारार्थमिदमधिकरणमिति । परिहारकहेतुश्च तत्र तत्र विभिन्नः । जीवनिरूपितस्वत्वसंपत्त्यर्थं शरीरनिर्माणवत् ईश्वरस्वत्वसंपत्तये तन्निर्माणस्याभावात् न भोगप्राप्तिरिति प्रथममुक्तम् । कर्माधीनशरीरस्वामित्वाभावात् न भोक्तृत्वमिति पश्चादुक्तम् । अखिलहेयप्रतिभटशक्तिः श्रौती हेतुरिहोच्यते । अखिलहेयप्रतिभटत्वश्रवणमिव कल्याणगुणैकतानत्वश्रवणमपि अपुरुषार्थापत्तिवारकमिति, 'उभयलिङ्गं सर्वत्र ही'त्युक्तम् । एतदुपपादनावसरे श्रीभाष्ये, "देहयोगाद्वे"ति सूत्रस्योपादानात् तद् गृहीत्वा पृच्छति शतभूषणी—"स्वप्नावस्थायामाद्यसृष्टेः पूर्वमिव परमात्मनोऽपि सूक्ष्माचिद्रूपदेहसंयोगसत्त्वे सत्यसङ्कल्पत्वादितिरोधाने स्वाप्नस्रष्टृता न स्यात् । अतिरोधाने सदोषत्वशङ्काऽत्राधिकरणे कथम्"इति । अत्र आद्यसृष्टेः पूर्वमिवेति, सूक्ष्माचिद्रूपेति च व्यर्थम् । सर्वविधदेहसंबन्धस्य सर्वदा यथायथं सिद्धान्ते इष्टत्वात् । अत एव स्वाप्नमात्रस्रष्टृत्वाभावशङ्काऽपि मा भूत; जगत्स्रष्टृत्वाभावोऽपि शंकितुं शक्यते । तथाचात्राधिकरणे एवं शङ्का—परस्य ब्रह्मणः सर्वाशुचिसंबन्धायत्तसर्वापुरुषार्थवत्त्वात् तदीयसत्यसंकल्पत्वादिस्वभावभङ्गापत्तिः, जगत्स्रष्टृत्वाद्यनापत्तिः, ईश्वरादेरेवासिद्धिरिति । सर्वशक्तिसंपन्नं ब्रह्म प्रति च कस्यापि वस्तुनो हेयत्वाभावात्

दुःखाद्यपुरुषार्थलवलेशोऽपि न भवतीति न किञ्चिदपहीनमिति परिहारः। ननु विश्वामित्रादयः ब्रह्मतेजःप्रभृतिकतिपयप्रभावविरहेऽपि विचित्रसर्गानुगुण-विभवशालिनोऽपि विश्रुता इति तथा ब्रह्मणो दुःखानुभवितृत्वेऽपि जगत्सर्गादि-कमुपपद्यतामिति चेत्—एवं स्वाम्नार्थसर्गोऽपि मा प्रतिहन्यताम्। कतिपया-पुरुषार्थमात्रेण सर्वशक्तिनिषेधस्यानावश्यकत्वादिति। सर्वथाऽपि शतभूषणी-प्रश्नस्यानुत्थानमेव॥

इदमप्यत्र बोध्यम्—"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" इति सूत्रे, जीवेश्वरयोरुभयोरपि शरीरं प्रति स्वामित्वादविशेषेण भोक्तृत्वं स्यादेवेत्या-शङ्कायाम्—शासनविषयस्यैव शरीरस्य भोगायतनत्वम्, अतथात्वादीश्वरो न भोक्ता राजवत्। राजशासनानुवृत्त्यतिवृत्तिनिबन्धनफलभोक्तृत्वं हि न शासकस्य राज्ञोऽपीत्युक्तम्। अथेहैवं शङ्का—यत्रयत्र शरीरत्वम्, तत्रतत्र राजशासन-विषयत्वमिति नियमाभावात् राजशरीरादेर्दण्डभावत्वं मा भूत्। यत्रयत्र शरीरत्वम्, तत्रतत्र सुखदुःखहेतुत्वमिति नियमस्तावदस्त्येव। न चान्तर-धिकरणे भगवतोऽप्राकृतविग्रहस्याताद्दशस्योक्तत्वान्न सोपि नियम इति शङ्क्यम्—अथापि प्राकृतशरीरत्वं यत्र, तत्र तत्त्वमित्यस्य सुवचत्वात्। नित्यानामपि पदार्थानां शरीरत्वस्य प्रामाणिकतया तत्र कर्मजन्यत्वस्य दुर्वचतया, यत्र शरीरत्वम्, तत्र कर्मजन्यत्वमिति नियमासंभवेऽपि, शरीरत्वं यत्र, तत्र सुखदुः-खहेतुत्वमिति नियमः संभवत्येव। श्रुतिदर्शितश्चायं नियमः, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति, अत ईश्वरस्य प्राकृतपदार्थशरीरकत्वाङ्गीकारादवर्जनीयस्तन्मूलः सुखदुःखानुभव इति। एवं भोक्त्रापत्त्यधिकरणोपमर्देनात्र पूर्वपक्षे, परिहारः क्रियते—प्राकृतपदार्थानां शरीरत्वप्रतिपादकान्तर्यामिश्रुत्यादिष्वेवामृतत्वाप-हतपाप्मत्वयोरपि श्रावितत्वात् प्राकृतशरीरत्वं यत्र तत्र भोगायतनत्व-मिति नियमं परित्यज्य तत्तत्कर्माधीनशरीरत्वं यत्र तत्र तद्भोगहेतुत्वमित्येव नियम इति।

अथ, "भेदादिति चेन्न प्रत्येकममतद्वचनात्" इति द्वितीयसूत्रार्थोऽपि विमृष्टव्यः। अत्र, 'देवादिदेहयोगात् अपुरुषार्थ इति चेन्न' इत्यर्थवर्णने पूर्वसूत्रादस्य को विशेष इति यः प्रश्नः, स यथावच्छ्रीभाष्ये दृष्टे न भवितुमर्हति। "प्रत्येकमतद्वचनात्" इत्युत्तरवाक्यानुगुणः शङ्काग्रन्थार्थः श्रीभाष्ये व्यक्तमदर्शि। पूर्वसूत्रे पृथिव्यादिस्थानप्रयुक्तापुरुषार्थयोगशङ्कायां परमात्मगताखिलहेयप्रत्यनीकत्वादिस्वाभाव्यहेतुना परिहारः कृतः। अथाखिलहेयप्रत्यनीकत्वादिविशिष्टतया प्रजापतिवाक्यश्रुतस्यैव जीवस्य देहयोगवशादपुरुषार्थवत् अस्याप्यस्तु ; देहावच्छेदेनापुरुषार्थयोगः, तदनवच्छिन्नस्वरूपांशे चाखिलहेयप्रत्यनीकत्वादीति व्यवस्थासंभवादिति शङ्काशयः। पृथिव्यादिकं शरीरतया निर्दिश्य तत्तद्देहावच्छेदेन सत एव प्रतिपर्यायं हेयप्रत्यनीकत्वकथनात् तदवच्छेदेनापि नापुरुषार्थ इत्यवसायान्नैवमिति परिहाराशयः। एवञ्च पूर्वसूत्रोपरि शङ्का, तत्परिहारश्च विशदीभवतः। भवन्मत एव च सूत्रवैयर्थ्यम्। तथा हि—'न भेदात्'इति सूत्रोपक्रमो भवन्मत इत्यन्यदेतत्। ब्रह्मविद्याभेदेनाकारभेददर्शनान्न निराकारत्वमिति चेन्न—प्रत्युपाधिभेदमभेदवचनादिति सूत्रार्थः। अत्र पौनरुक्त्यं स्पष्टम्। पूर्वसूत्रे उपाधिप्रयुक्तमुभयलिङ्गत्वं प्रतिषिद्धम्। इदानीमुपासनभेदेनाकारभेदश्रवणात् साकारत्वमिति प्रश्नः। पूर्वं पृथिव्याद्युपाधियोगादौपाधिकाकारभाक्त्वे ब्रह्मणि शङ्किते निराकारत्वश्रुतिबलात् परिहृते उपासनाभेदभिन्नाकारग्रहणेन साकारत्वशङ्का हि नैव भवितुमर्हति। यदि, 'प्रथमतः उपासनाविधायिवाक्यावगताकारसद्भावशङ्कापरिहारः ; अथ तेषामध्यस्तत्वेऽपि स्वरूपोपदेशपरवाक्यावगताकारयोगो न वर्जनीय इति शङ्कायां तस्यापि निराकारत्वश्रुतिबलान्निरास'इति स्यात्, कथञ्चिदुपपद्येत। विपरीतं तु वर्णनं न युक्तम्। न च निर्विकारत्वश्रुत्यपेक्षया द्वितीयसूत्रविवक्षिताभेदश्रुतेर्निर्विकारत्वस्थापनसामर्थ्यमधिकमस्ति। किञ्च प्रत्युपासनस्थलं तथात्वानुक्त्या 'प्रत्येकमतद्वचनात्' इत्युक्तिरपि न घटते। अपि च "यश्चायमस्यां तेजोमय" इति

वाक्येषु, "अयमेव सः, योऽयमात्मा" इति प्रतिपर्यायमभेदकथनेऽपि औपाधिकाकारसत्त्वे को दोषः? औपाधिकाकारोपलक्षितयोरभेदेऽविरोधात्। एवमाकाराणां सर्वेषामपि तत्र तत्र श्रुतानामुपासनार्थत्वस्यैव भवदिष्टतया सूत्रद्वयं व्यर्थमेव। उपासनार्थत्वेऽपि श्रुतीनां स्वतःप्रामाण्यात् श्रूयमाणाकारस्वीकारे को दोषः? ननु ब्रह्मणि उच्यमान आकारः स्फटिकप्रतीतजपाकुसुमलौहित्यवदध्यस्त एव युक्तः; औपाधिकस्यापि लाक्षारसावसेकमूलबीजपूरकुसुमलौहित्यवत् तत्र पारमार्थिकत्वे तस्याकारस्य सत्यस्य ब्रह्मपरिणामत्वप्रसङ्गात् अपरिमाणत्वश्रुतिविरोधादिति चेत्—तर्हि प्रथमसूत्रोक्तनिर्विकारत्वश्रुतिकार्यः परिहार एवात्रापीति द्वितीयसूत्रवैयर्थ्यमेव। किञ्च पारमार्थिकप्रकृतिपरिणामसंयोगरूपस्य स्वरूपविकाराभावेऽपि स्वभावविकारात्मकस्यौपाधिकस्य स्वीकारेऽपि निर्विकारत्वश्रुत्यनिर्वाहविरहात् न साकारत्वस्य त्यक्तव्यतेत्यलम्। एवमेव विशेषाशङ्काविरहात् "अरूपवत्" इत्यत्र वच्छब्दवैयर्थ्यमपीत्यन्यदेतत्। "अद्वैतमते न कस्यापि सूत्रस्य, न वा कस्यापि पदस्यात्राधिकरणे वैयर्थ्यम्" इति भवदुक्तमनुपपन्नमित्यस्य निदर्शनार्थमिदं किञ्चिदुक्तम्।

अथाधिकरणान्तरतया भवदभिमत "प्रकृतैतावत्त्व" सूत्रविषयेऽपि ब्रूमः। तत्र हि बृहदारण्यके, 'द्वे वाव ब्रह्मणो रूपे' इति पृथिव्यादिमूर्तत्रयं वाय्वाकाशरूपमूर्तद्वयञ्चेति रूपद्वयमुक्तम्। 'अथ तस्य यथा माहारजनं वासः' इत्यादिना पुरुषरूपमपि किञ्चित्। ततः, 'अथात आदेशो नेति नेती'ति निषेधः कृतः। स निषेधो ब्रह्मणः, तद्रूपाणाञ्चेति प्रथमः पूर्वपक्षो भवताम्। अथ ब्रह्मण एव निषेधः, वाङ्मनसातीततया दुर्ग्रहत्वात्; न रूपस्येति पक्षान्तरम्। सिद्धान्तस्तु रूपमात्रनिषेधः; न तु ब्रह्मण इति। अस्मन्मते तु—रूपनिषेध इति पूर्वः पक्षः। सिद्धान्तस्तु—न रूपनिषेधः; किन्तु रूपैतावत्त्वनिषेधः—'नैतावदेव; रूपान्तरमप्यस्ती'ति श्रुत्यर्थ इति। तत्र भवदीयपूर्वपक्षः फल्गुरिति भवद्भाष्यत एव ज्ञायते। तत्र हि भाषितम्—

"नेति नेतीति वीप्सेयम् । इतीति यावत् किञ्चिदुत्प्रेक्ष्यते, तत् सर्वं न भवतीत्यर्थः" इति । अनेन हि भाष्येण, इतिशब्दस्य प्रकारवचनत्वात् नेति नेतीति प्रकारनिषेध एव स्वरसः ; न प्रकारिनिषेध इति दर्शितमेवेति कथं पूर्वपक्षः ? उपक्रमे च, "द्वे वाव ब्रह्मणो रूपे" इति रूपयोः प्राधान्येन ग्रहणात् तन्निषेध एव स्वरस इति पूर्वपक्षायोग एव । सिद्धान्ते च ब्रह्मणि रूपद्वयनिषेधेऽपि स्वतन्त्रस्य ब्रह्मण इव स्वतन्त्रस्य रूपद्वयस्य निषेधे प्रमाणाभावात् जगदपलापो नानया श्रुत्याऽवगम्यते । एवञ्च यदि सूत्रकारः, प्रकृतं प्रतिषेधती'त्येतावदेव सूत्रितवान् स्यात्, रूपस्यैव प्रकृतत्वात् तत्प्रतिषेधमभिसंहितवान् स्यात् ; 'द्वे वाव ब्रह्मणो रूपे' इति ब्रह्मप्रकारस्यैव प्रकृतत्वात् । 'प्रकृतैतावत्त्व'मिति प्रयुञ्जानस्तु प्रकृतरूपवत्त्वं न ब्रह्मण इति वदन् प्रकृतस्याप्रतिषेधेन रूपस्य ब्रह्मणश्च प्रकारप्रकारिभावमेव प्रतिषेधतीत्यापद्यते । अतः इतिशब्दस्वारस्यविघातेन पूर्वपक्षस्य द्वेधा वर्णनमपि हेयमेव ।

यत्तु, "श्रीभाष्यमते तु प्रक्रान्तामूर्तरूपानुपदेशात् साकाङ्क्षं प्रकरणं स्यात्" इति भवद्वाक्यम्, तत् साकाङ्क्षमेव सर्वदा ; विवक्षितार्थस्यावचनात् । एवं "ततो ब्रवीति च भूय" इति सूत्रखण्डोऽपि निष्प्रकारत्वं ब्रह्मणः प्रतिषेधति । "अथ नामधेयं सत्यस्य सत्य"मिति वाक्यमत्र विवक्षितमिति भवद्भाष्येऽप्यनुमन्यते । तेन ब्रह्मरूपधर्मिनिषेधो नास्तीति ज्ञायत इति तत्रोक्तम् । तथा, "प्राणा वै सत्य"मिति विवरणात् प्राणपदवाच्यसर्वजीवाधिपतित्वादिः प्रकारोऽपि हि ब्रह्मणः सहानुमन्यते । पूर्वं रूपनिषेधे नामनिषेधोऽप्यवर्जनीय इति, "अथ नामधेय"मिति तत्स्वीकारश्च न युक्तः । तस्मात् अचेतनाधारत्वं प्रागुक्त्वा, 'न केवलमेतावत् ; नानाविधचेतनाधारत्वमप्यस्ती'ति भूयोंऽश उच्यत इति त्वेतत्स्वरसार्थः । भूयः पदं हि पूर्वोक्तप्रकारसंमतिपूर्वमधिकसद्भावं गमयति । अतः कथमद्वैतमतेऽत्र सूत्रस्वारस्यम् ? पूर्वेणैकाधिकरण्यमेवात्र युक्तमिति चान्यदेतत् ॥

जगतो मिथ्यात्वमसौत्रम् । सन्ध्याधिकरणे, 'मायामात्र'मिति पदसद्भावमात्रेण न प्रपञ्चमिथ्यात्वसिद्धिः । मायाशब्दस्य मिथ्यावचनत्वा-

भावात्। स्वाप्नप्रपञ्चमिथ्यात्वविषयकतयैव तदधिकरणस्य भवद्भिर्योजनाच्च। "वैधर्म्याच्च न स्वप्नादिवत्" इति स्वप्नवैधर्म्येण प्रपञ्चसत्यत्वस्य सूत्रेष्टत्वाच्च। किञ्च स्वाप्नमिथ्यात्वं नैव तत्र स्थापनीयम्। भवन्मते जिज्ञासाधिकरण एव विश्वमिथ्यात्वस्थापनात् अबाध्यप्रपञ्चस्यैव मिथ्यात्वसिद्धौ स्वाप्नसत्यत्वशङ्कानवकाशात्। 'तदनन्यत्व'मिति सूत्रे ब्रह्मव्यतिरेकेण सर्वस्याभाववर्णनाच्च स्वप्नसत्यत्वाप्रसक्तेः। अथ नारिकेलावरोहिनरकेलिवचनवत् मायामात्रसूत्रं कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति ज्ञातपूर्वं प्रपञ्चमिथ्यात्वहेतुमुपन्यस्यैव स्वाप्नमिथ्यात्वमपि साधयतीति चेत्—तेन कृतकरत्वमेवाधिकरणस्योक्तं भवति। वस्तुतः स्वाप्नदृष्टान्तीकरणेन प्रपञ्चमिथ्यात्वस्य साधनं युक्तम्; न तु प्रपञ्चदृष्टान्तीकरणेन स्वाप्नमिथ्यात्वस्थापनं शोभनमिति शतदूषण्युक्तार्थदूषणे प्रवृत्ता शतभूषणी लिखति—

स्वाप्नजागरपदार्थानामुभयेषां मिथ्यात्वेऽपि वैधर्म्यसूत्रविवक्षितं वैधर्म्यमन्यादृशम्—प्रातिभासिकत्वव्यावहारिकत्वरूपम्, तूलाज्ञानकार्यत्वमूलाज्ञानकार्यत्वरूपम्, उत्तरोत्तरपरिणामहेतुत्वतद्धेतुत्वरूपम्। मायाशब्दार्थश्च पूर्वपूर्वपरिणामहेतुकोत्तरोत्तरपरिणामपरम्परा। स्वाप्निकेषूत्तरोत्तरपरिणामाहेतुपरिणाममात्रत्वात् मायामात्रत्वम्। अत एव मायामात्रपदम्। मायाशब्दस्य मिथ्यार्थे प्रयोगस्तूपचारेणेति।

तत्रोच्यते—यावत्तत्त्वज्ञानोदयमबाध्यत्वं तत्त्वज्ञानबाध्यत्वं च उभयत्राप्यविशिष्टम्। अतो जगन्मिथ्यात्ववादिना स्वाप्नदृष्टान्तेन तन्मिथ्यात्वसाधनं बौद्धोक्तं न प्रतिषेद्धुं शक्यम्। बाह्यं पदार्थमेव बौद्धोऽपलपतीति चेत्—भवद्भिरप्यपलप्यत एव। नापलप्यते; किन्तु अनिर्वचनीयमस्तीत्युच्यत इति चेत्—तत् किमनिर्वचनीयं स्वप्ने नास्ति, येन तद्वैषम्यमुच्येत। शुक्तिरजतादेरिव स्वाप्निकस्यापि प्रातिभासिकतया अनिर्वचनीयापलापायोगात्। एवञ्च न स्वाप्नजागरयोर्वैधर्म्यम्। स्वाप्नस्य जागरेण बाध्यत्वमस्ति। जागरस्य तु न तदिति वैधर्म्यमस्तीति चेत्—पूर्वपक्षी बौद्धोऽपि तत् वैधर्म्य-

मिष्टैव तत्त्वज्ञानबाध्यत्वरूपं साधर्म्यमेवाहेत्यविशेष एव। अनिर्वचीनीयोत्पत्ति-निरासे च शुक्तिरजतादेरप्यभावात् तद्दृष्टान्तेन प्रपञ्चानिर्वचनीयत्वासिद्ध्या बाह्यापलाप एव पर्यवसानं मिथ्यात्ववादस्य। जगति स्वाप्नवैलक्षण्येन स्थाप्यमाने व्यावहारिकत्वं नाम व्यवहारकाले अबाध्यत्वमेव। व्यवहारकाले बाधोऽनुभूयत इति न बौद्धोऽपि वक्तुमर्हति। युक्त्या बाध्यत्वं तूभयसंमतम्। वेदमूला युक्तिरियमिति भवन्मतम्; स्वतन्त्रा युक्तिरिति तन्मतम्। 'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना' इति वेदशास्त्राविरोधित्वमद्वैतिदृष्ट्या तन्मतेऽप्यक्षतमेव। तूलाज्ञानेत्यादिना भिन्नकारणजन्यत्वविभिन्नकार्यहेतुत्वरूप-वैधर्म्यकथनमप्येवं वृथा। तन्मते 'प्रतीतिमात्रमस्ति, न वस्तु' इति उभयत्र साधर्म्यमेव। भवन्मते उभयत्रानिर्वचनीयमस्तीति उभयत्र साधर्म्य-मेव। स्वप्नेऽनिर्वचनीयानङ्गीकारे च तूलाज्ञानकार्यत्वं स्वाप्निकवस्तुनि दुर्वचं स्यात्॥

मायाशब्दस्योत्तरोत्तरपरिणामपरम्परायां शक्तिग्राहकं प्रमाणञ्च किमत्र भवतः? परम्परा चेयं कियद्दीर्घा भवन्ती मायाशब्दार्थः। स्वल्पपरम्पराया अपि मायात्वे स्वाप्नकार्यपरम्पराऽपि माया प्राप्नोति। एकसृष्टिप्रलयमध्यनि-विष्टदीर्घपरम्परैव चेन्माया, तत्र तत्र क्वचिदेव, 'तेन मायासहस्रं तत्' इत्येवं मायाशब्दप्रयोगः अन्यत्राप्रयोगश्चानुपपादितौ भवतः। अत्र स्वाप्नेषु माया-मयत्वं नास्ति; मायामात्रत्वमस्ति। अत एव मात्रपदमिति भवान् ब्रूते। भवद्भाष्ये तु, 'स्वप्नेऽपि पारमार्थिकी सृष्टिः? आहोस्वित् मायामयी'ति, तथा, 'मायैव सन्ध्ये सृष्टिः, न परमार्थगन्धोऽप्यस्ती'ति च मायात्वमेवो-क्तम्। अनेन मात्रपदमेवकारार्थे इति च ज्ञापितम्। अतः, 'जागरिके मायात्वम्, स्वाप्ने च मायामात्रत्व'मिति भवदुक्तं वैषम्यममूलम्। भवद्भाष्ये-ऽपि, 'तदनन्यत्वमिति प्रपञ्चमिथ्यात्वं कथितमेव; प्रतिदिनबाधितत्वरूपं वैशेषिकमंशं स्वाप्नेषु वक्तुमिदमधिकरण'मिति निरूपणावसरे, 'समस्तस्य प्रपञ्चस्य मायामात्रत्वम्' इति मात्रपदघटितमायाशब्दप्रयोगः प्रपञ्चविषये

कृत एवेति, 'प्रपञ्चो माया, स्वाप्नो मायामात्र'मिति वैषम्यममूलमेव । तावता च सूत्रमिदं प्रपञ्चमिथ्यात्वाविषयकमित्येव दृढीकृतं भवेत् । मायाशब्दस्य मिथ्यार्थे प्रयोग उपचारेणेति ब्रुवंश्च भवान् मायामात्रमिति सौत्रपदस्य मिथ्यार्थविषयकत्वे स्वारस्यं नास्तीत्यस्मत्पक्षमाश्रितवानेव ॥

यस्तूपरि प्रश्नः—'मायाशब्दस्याश्चर्यवाचित्वं विचित्रशक्तियोगेनेति श्रीभाष्यानुयायिनः । तत्र स्वाप्नानुकूला शक्तिर्यदि ब्रह्मैव, तत्र ब्रह्मणः परिणामितापत्तिः । यदि अचिदंशः, तदा परमात्मशरीरभूताचित्परिणामत्वात् सर्वानुभाव्यत्वमेव जागरपदार्थवत् स्यात्'इति—कुत एवमयम्? न हि एकैकमप्यचित्कार्यं सर्वानुभाव्यमिति नियमोऽस्ति । यावत्पुरुषकर्माधीनं यत्, तत् तावत्पुरुषानुभाव्यमित्येव संप्रतिपत्तेः । स्वाप्नानां प्रकृत्यंशपरिणामत्वम्, जागराणां प्रकृतिपरिणामत्वमिति विभजनं तु अर्थशून्यम् । यत्तु अस्माभिरपि मूलतूलाविद्यापरिणामत्वस्य जागरस्वाप्निकेषु स्वीकारादविशेष इति—तन्न । मूलतूलाविद्यास्थितेरनङ्गीकारात् । यत्तु—विना वृक्षादिकं कथं रथादिसृष्टिः स्वप्न इति—तत्र, 'वृश्चिकपूर्वकत्वेऽपि वृश्चिकस्य गोमयादाद्यः, तण्डुलीयकपूर्वकत्वेऽपि तण्डुलीयकस्य तण्डुलकणादाद्यः' इत्यादिन्यायकुसुमाञ्जलिवाक्यम्, 'यथा दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम्' इति भामती च वैचित्र्यव्युत्पादनेन उत्तरमर्पयताम् । भवत्तूलाविद्या परं वृक्षादिनिरपेक्षमेव कथं रथादिरूपेण परिणमति? शुक्त्याद्यज्ञानं वा जागरे रजतादिरूपेण कथमुत्पद्यत इत्यादि विमृश्यताम् । अज्ञानस्य तावच्छक्तिमत्त्वे सर्वशक्तस्येश्वरस्य तन्मायायाश्च किमुतेति विभाव्यताम् । कथं स्वप्ने आकाशकुसुमं न सृज्यत इति चेत्—किमिदमाकाशकुसुमं नाम? यदि तुच्छम्, तर्हि तुच्छत्वसृज्यत्वरूपजन्यत्वयोर्विरोधादेव प्रश्नायोगः । यदि आकाशे किमपि कुसुममुपलभ्यमिति, तादृशं तत्र कदापि न सृज्यत इति कथं भवान् बुद्ध्यते? यत्तु 'भगवत्संकल्पमात्रेण सर्वसम्भवे किमन्तर्गडुना प्रकृत्ये'ति, स प्रश्नो जागरेऽपि तुल्यः । सृष्टिप्रकरणविरोधात् तत्र स न

युक्त इति चेत्—अचेतनांशस्य अचेतनोपादानकत्वात् स्वाप्नरथादेरप्यचेतनत्वात् सर्वत्र स्थूलचिदचिद्विशिष्टस्य सूक्ष्मचिदचिद्विशिष्टकार्यताया एव क्लृप्तत्वात् श्रुतिप्रामाण्यादेव सर्वस्वीकार इति तुल्यम्। अनिर्वचनीयस्यावचनीयतायाः उक्तत्वेन वक्ष्यमाणत्वेन चाद्वैतप्रक्रियाया अत्यन्तमेव हेयत्वात् श्रुतिशरणैरद्वैतिप्रक्रियाशरणीकरणस्य कदापि न प्रसक्तिः। प्रत्युत स्वाप्ने जागरतो ऽतिशयेन चेश्वरसृष्टत्वमेवेष्यते। वास्तवत्वे कथमपवरके शयानस्य तत्र प्रवेशानर्हमहापदार्थोपलम्भ इति चेत्—अनिर्वचनीयपक्षे परं कथं गजरथगोपुरमहीधरादिकमपवरकान्तर्मास्यतीति तुल्यम्। विना वस्तु प्रतीतिमात्रं स्वप्न इति तु नाद्वैतिभिरप्यभिमतम्॥

कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति हेतुपदविवरणे भवद्भाष्य उक्तम्—'न हि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः। कार्त्स्न्यञ्च देशकालनिमित्तसम्पत्तिरबाधश्च' इति। तथा च कार्त्स्न्येनानभिव्यक्तस्वरूपत्वं नाम जागरदेशकालनिमित्तसम्पन्नत्वमबाध्यत्वं च। तदभावः स्वप्ने इत्युक्तं भवति। 'श्रीभाष्ये, स्वाप्नमर्थजातं मायामात्रम्, जीवस्य कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति व्याख्यानात् हेतोर्वैयधिकरण्यम्, जीवस्येत्यध्याहारश्चे'ति यदुच्यते—तत् भवद्भाष्येऽपि, सन्ध्ये सृष्टिर्मायैव, स्वप्नस्य कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति व्याख्यानाद्वैयधिकरण्यात् स्वप्नस्येत्यध्याहाराच्च तुल्यम्। जीवस्येत्येतल्लाभे च न श्रमलेशः। 'पराभिध्यानात्तु तिरोहित'मित्युत्तरसूत्रे, किं तिरोहितमित्याकाङ्क्षायां जीवरूपं तिरोहितमित्यर्थवर्णनमुभयपक्षाविशिष्टम्। एवञ्चात्राभिव्यक्तस्वरूपपदेन जीवस्वरूपग्रहण एव तत्र विशेष्यानिर्देशेऽपि एतत्सूत्रत एव स्वरूपात्मकविशेष्यलाभ इति सुवचं भवेत्। यत् तिरोहितमिति वक्ष्यते, तदेवेहानभिव्यक्तस्वरूपमित्युच्यत इति परामर्शश्च स्वरूपपदस्य जीवस्वरूपार्थकत्वं द्रढयति। अतो जीवस्वरूपस्येत्यध्याहारस्य स्वरसप्रतीतत्वान्न दोषः। मायामात्रमिति पदे मात्रपदात्तुशब्दाच्च, न जीवेन सृष्टमिति पूर्वपक्ष्युक्तार्थनिषेधस्य विवक्षणीयत्वात् जीवे हेत्वन्वयः सुज्ञानः। हेतोः पक्षनिष्ठत्वं

कथमिति चेत्—पूर्वदर्शिते शाङ्करभाष्य इव परिष्कृत्य ग्राह्यम्। तदेवम्—स्वाप्नार्थजातं मायामात्रम्; न जीवसृष्टम्; कार्त्स्न्येनानभिव्यक्तस्वानुभाविजीवस्वरूपकत्वादिति। साक्षादेव सूत्रादयमर्थः सुलभश्च, यथा स्वपदं स्वकीयपरं सत् स्वाप्नपदार्थानुभाविजीवमाह। तस्य रूपं स्वरूपमित्युच्यते। तच्चानभिव्यक्तमिति। मा भूद्वा स्वरूपं जीवस्वरूपम्। स्वाप्नार्थजातस्य यत् स्वरूपं उपादानोपकरणादिग्रहणपूर्वसृज्यमानत्वात्मकम्, तत् कार्त्स्न्येनानभिव्यक्तमगृहीतं जीवेनेत्यस्तु। अभिव्यक्तेर्ज्ञानस्य ज्ञातृसापेक्षत्वाज्जीवलाभः सुकर एव। यत्तु—सत्यसङ्कल्पादेर्जीवगतस्याभिव्यक्तत्वेऽपि न जीवस्य निर्मातृत्वप्रसक्तिः; 'गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात्' इति न्यायेन चिदचितोः परमात्मापृथक्सिद्धतया परस्परशरीरत्वाभावादिति—तत्र जीवस्याचिन्निरूपितशरीरत्वस्य न कथमपि प्रसक्तिः। चिदचितोः परमात्मशरीरत्वेऽपि अचेतनस्य देवमनुष्यादिशरीरस्य चेतनशरीरत्वं तावत् सुप्रसिद्धम्। न तत्र 'गुणानां च परार्थत्वा'दिति न्यायप्रसक्तिः। अन्यथा व्रीहीनवहन्तीत्यादौ अवहननादेः व्रीह्याद्यङ्गत्वमपि न स्यात् उक्तन्यायात्। विशेषश्रुत्यवरुद्धस्थले सन्यायो न प्रवर्तत इति चेत् तुल्यम्; बद्धशरीरादेः स्वं प्रतीव बद्धं प्रत्यपि शरीरत्वस्य भगवत्सङ्कल्पसिद्धत्वात्। अन्यथा अस्माकमपि शरीरस्वामित्वानापत्तेः। अस्माकं भगवच्छरीरत्वादेव तन्नियमनानुरोधिभिरस्माभिस्तत्पारतन्त्र्यात् औपाधिकं शरीरं प्रति स्वामित्वं लभ्यते। 'संकल्पादेव तच्छ्रुतेः' इति सूत्रोक्तरीत्या जीवस्य स्रष्टृत्वमपि क्वचिदेषितव्यम्। यथेष्टविनियोगार्हमचिद्वस्तु चिद्वस्तुशेषमापादयन्नेवेश्वरोऽपि तुष्यति। 'गुणानां च परार्थत्वा'दिति न्याये सत्येव देशकालादेः साङ्गप्रधानाङ्गत्वमपि इष्यत इत्यादिबह्विदाहोदाहरणम्। अतो जीवः स्वशेषमचिदंशं परिणामयेत् सति स्वरूपाविर्भावे; न तु स्वयं परिणमेत्, येन विकारित्वं प्रसज्येत॥

यत्तु—'सूचकश्चे'ति सूत्रस्य, मिथ्यात्वेऽपि स्वाप्नार्थस्य शुभाशुभसूचकत्वमस्तीति व्याख्यानम्—तदयुक्तम्। स्वप्नरूपज्ञानस्यैव सूचकत्वेन अर्थस्य

सूचकत्वाभावात् । अपिच भवन्मते 'सूचकश्चे'ति सूत्रमसङ्गतमेव ; पदार्थानां सत्यत्वेऽसत्यत्वे च तेषां वा तज्ज्ञानरूपस्वप्नस्य वा शुभाभशुभसूचकत्वस्याक्षततया सूचकत्वस्य तत्सत्यत्वासत्यत्वान्यतरसाधने उदासीनत्वात् असत्यत्वरूपमायामात्रत्वसाधनार्थं तदुपन्यासायोगात् । जीवसङ्कल्पकृतत्वाभावविशिष्टेश्वरसङ्कल्पाधीनत्वरूपमायामात्रत्वसाधकत्वे तु अधिकरणस्य सूचकत्वकथनं संजाघटीति । यदि जीवः स्वसङ्कल्पेन सूचकं स्वप्नं निर्मायात्, शुभसूचकमेव निर्मायात् ; नाशुभसूचकम् । किञ्च भावि शुभमशुभं वा यदि तेन नोत्प्रेक्षितम्, तर्हि तत्सूचकत्वाध्यवसायपुरस्सरं तत्कृतिर्जीवस्य न स्यात् । यदि चोत्प्रेक्षितम्, तर्हि ज्ञातपूर्वत्वात् तस्य तत्सूचकत्वं स्वप्नस्य न स्यादित्येवं प्राज्ञव्यापाराधीनत्वं स्वप्ने दर्शयितुं हीदं सूत्रम् । अत एव भवद्भाष्येऽपि सूत्रवैयर्थ्यं मनसिकृत्यैव भाषितमेतत्सूत्रे—' न चास्माभिः स्वप्नेऽपि प्राज्ञव्यवहारः प्रतिषिध्यते । तस्य सर्वेश्वरत्वात् सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्तेः' इति । यद्यपि भवत्पक्षानुकूलमस्माभिः सूत्रमिदं सुप्रदर्शम्, 'असत्यात् सत्योत्पत्तिस्थापकं सूचकसूत्रम् । स्वाप्नार्थः स्वयमसन्नपि सूचकश्च भवति ।' इति---अथापि स्वाप्नार्थसूचके जीवसङ्कल्पाधीनत्वायोगात् ' स हि कर्ते'त्युक्तस्य जीवे निर्वाहायोगात्, प्राज्ञव्यवहारस्य स्वप्नेऽप्यप्रतिषेधस्य भवद्भाष्ये दर्शितत्वेन ' स हि कर्ते'ति तत्कर्तृत्वं श्रूयत इति सामञ्जस्यसंभवे तत्परित्यागायोगात्, प्राज्ञकर्तृकत्वेऽपि जागरदशाप्रतीतशुक्तिरजततौल्यस्य सुवचतया प्राज्ञव्यापारनिषेधस्यानपेक्षितत्वाच्च नेदमधिकरणं न प्राज्ञकर्तृकत्वनिषेधनेदम्परं भवन्मतेऽपि स्यात् । प्राज्ञव्यापाराधीनत्वात् सत्यमित्यनुमानं न घटत इत्येतावति अधिकरणतात्पर्यमित्यपि भामत्यामुक्तम् । असत्यात् सत्योत्पत्तिर्न । किंतु सत्यादेवेतिच भामत्यामेवात्रादर्शि, 'दर्शनं सूचकम् । तच्च स्वरूपेण सत् । असत्तु दृश्यम् । अत एव स्त्रीदर्शनसाध्याः चरमधातुविसर्गादयो जाग्रदवस्थायामनुवर्तन्ते । स्त्रीसाध्यास्तु माल्यविलेपनदन्तक्षतादयो नानुवर्तन्ते ' इति । मिथ्याभूतस्यापि सूचकत्वपरतया कल्पतरूक्तमेतद्व्याख्यानं तु प्रौढिमात्रम् ;

अक्षराननुगुणत्वात । अन्ततः कल्पतरावपि तत्र, 'स्वप्नदर्शनस्य मिथ्यात्वमौपचारिकं मिथ्यावस्तूपधाननिबन्धनम् । वस्तुतो व्यावहारिकसत्यत्वमेवेति स्थापितमेव । तस्मात् असत्यात् सत्योत्पत्तिवचनं भामत्यादिविरुद्धमेव । अतोऽसंभाविततादृशार्थसूचकत्वं सूचकसूत्रस्य न भवितुमर्हति ।

अतः पूर्वव्याख्याविरुद्धार्थस्थापनं खण्डनकारो यदि करोति, तर्हि स्वपूर्वखण्डनमेव तेन कृतं स्यात् । खण्डनखण्डनञ्च कथानधिकारवादावसरे करिष्यते । अत्र पुनः उपात्ततच्छ्लोकार्थमात्रं दूष्यते ।

यदुक्तमत्र, "असतोऽपि कारणत्वं भवितुमर्हतीति उपपादितं खंडने--

'पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥' इति"इति--

तत्रोच्यते । अयं खलु खण्डनकृदाशयः—सतः कारणत्ववादिनोऽप्यसत एव कारणत्वमुक्तं भवति । तथा हि—

"अन्तर्भावितसत्त्वं चेत् कारणं तदसत् ततः ।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत् ततः ॥" इति"—

सतः कारणत्वमित्यस्य कोऽर्थः ? कारणत्वं पूर्वकालसत्त्वम् । तत् सत्ताविशिष्टस्येत्युक्तौ, सत्ताविशिष्टे सत्त्वं वदता सत्तायामपि सत्त्वमुक्तं स्यात् । न च स्वस्मिन्नेव स्वममस्ति । न हि सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारोहेत् । अथ कारणत्वघटकं सत्त्वमन्यत् । तच्च सत्त्वविशिष्टे भवितुमर्हतीति चेत्—तर्हि, सत्तारूपविशेषणस्यापि कारणत्वम्, तथा तस्याः स्वयं सत्ता राहित्यात् असत्या एव कारणत्वं च संमन्तव्यमिति असतः कारणत्वं सिद्धम् । अथ घटादीनां सत्तां विना केवलानां कारणत्वमुच्यते, तर्ह्यपि असत् कारणमित्येवोक्तं भवति । एवञ्च सद्वादिन इवासद्वादिनोऽपि

पूर्वसंबन्धनियमरूपकारणत्वस्य सुवचतया सत्त्वासत्त्वविचारो व्यर्थ इति—

तदिदमकृतबुद्धिसंमोहनमात्रम्—

सत्त्वेनाकारणत्वेऽपि न भवेत् कारणं त्वसत् ।
सद्बुद्धिमात्रात् हेतुत्वे धीबाध्येऽप्यस्तु तत्फलम् ॥ २९ ॥

सत् कारणमिति वादिभिः सतो घटत्वादिनैव जलाहरणादिकारणत्वमिष्यते ; न सत्त्वेन रूपेण । यत्र सत्त्वम्, तत्रैव कारणत्वमित्येव सत्कारणवादार्थः । अन्यथा हि सत्त्वसामान्यस्याभावे पूर्वकालसत्त्वरूपसत्ताविशेषात्मकं कारणत्वमेव दुर्घटम् । यद्युच्येत—वस्तुतोऽसत्त्वेऽपि इदं पूर्वकालसत् इति बुद्धिमात्रेणासतोऽपि कारणत्वमिति—तन्न ; भ्रान्तबुद्धौ सत्यामपि कारणत्वप्रसङ्गात् । ननु भ्रान्तत्वाभ्रान्तत्वनिर्धारणं दुष्करम् । किञ्चिद्दूरविमर्शेनाभ्रान्तत्वनिश्चयेऽपि, बुद्धिरियं कदापि कुत्रापि कस्यापि न बाधिष्यत इति निश्चयायोगात् अभ्रान्तबुद्धावपि तदनिश्चयात् । स्वतःप्रामाण्यग्रहस्तु भ्रान्तबुद्धावपि प्रथममस्त्येवेति चेत्—भ्रान्त्या अस्तित्वेन गृहीतादग्नेः दाहकार्यमापद्यते । पश्चात् कदाचित् भ्रान्तेर्बाधितत्वेऽपि भ्रान्तिकाले बाधाभावेन कारणत्वस्य स्थिततया दाहादिकार्यबाधो दुरुपपादः स्यात् । एवं बुद्धेर्हेतुत्वे, यत्र कारणविषयिणी बुद्धिर्न जाता, तत्र कारणस्य वस्तुसतः कार्यजनकत्वं न स्यात् । असद्विषयधियोऽपि कारणत्वे विज्ञानमात्रवादिबौद्धमतप्रवेशः स्यात् । कारणत्वस्येव कार्यत्वस्यापि कार्यविषयकत्वाभिमतधीमात्रे सुवचत्वात् । धियोऽपि सत्त्वे प्रमाणाभावाच्छून्यवादप्रसङ्गो वा । अबाधितत्वात्, धीर्जाता न वेत्यादिसंशयाद्यभावाच्च धीरस्तीति चेत्—धीविषयत्वात् संशयाद्यभावाच्च धीविषयाणामपि तथात्वमेव । पश्चात् कदापि बाधो न भवेदिति का प्रत्याशेति चेत्—तदेतत् धियोऽपि तुल्यमिति धीसत्त्वमपि दुरुपपादम् । तस्मात् असति सत्त्वघटितस्य कारणत्वस्य दुर्वचत्वात् नासत् कथमपि कारणमिति ।

असतः कारणत्वं यदीष्यते ; तर्हि असत्त्वमेव त्यक्तं भवति । कारणत्वस्य कार्यनियतपूर्वसत्त्वात्मकस्य सत्त्वघटितत्वात् तस्य च तत्र

भावात् । एवञ्च सत्त्वांशं विहाय धर्मिमात्रं कारणमिति वा, सत्त्वं कारणताप्रयोजकं नेति वा किमप्युच्यताम् ; सर्वथा नासत् कारणमिति ॥

अथोच्येत—कारणत्वलक्षणे सत्त्वमन्तर्भूतं न वा । आद्ये, कारणत्वस्य क्वचिद्विधानावसरे सत्ताविशिष्टे कारणत्वं न विधातुं शक्यम् । न हि तद्विशिष्टे तद्विधीयते । घटो घट इत्यत्राबोधात् । अन्त्ये, सत्त्वाघटितं कारणत्वमसतोऽपि भवितुमर्हतीति—तन्न । सत्ताविशिष्टे कारणत्वविधानसंभवात् । न हि कारणत्वं नाम केवलसत्त्वम् ; किन्तु नियतपूर्वकालसत्त्वम् । विधेये अधिकावगाहित्वे च उद्देश्यतावच्छेदकविधेययोर्भेदाद्बोध आनुभविकः । 'दण्डवान् रक्तदण्डवान्', 'स्पर्शवत्य आपः शीतस्पर्शवत्यः' इत्येवम् । सत्त्वाघटितं तु कारणत्वं दुर्वचमेव ।

पूर्वसंबन्धनियमः कारणत्वम् । तच्च सत्त्वाघटितमिति चेत्—तन्न ; सत्त्वाघटितस्य दुर्वचत्वात् । सुवचत्वेऽपि तत् सत्ताव्याप्यमेवेति नासति तद्भवितुमर्हति ।

अन्तर्भावितसत्त्वं चेत् कारणम्, तदसत् कथम् ? ।

अनन्तर्भूतसत्त्वं स्यात् कारणम्, तदसत कथम् ? ॥ ३० ॥

कारणत्वस्य पूर्वकालसत्त्वरूपस्य सत्त्वघटितत्वात् असतः कारणत्वं न भवत्येव । अस्तु वा कारणत्वमन्यादृशं सत्त्वाघटितम् । अथाप्यन्वयनिरूप्यत्वात् कारणत्वस्यासतः कारणत्वं न भवति । अन्वयव्यतिरेकगम्यं हि कारणत्वम् । यत्र नित्यविभौ कारणत्वं व्यतिरेकनिरूप्यं न भवति, नित्यतया काले, विभुतया देशे च तद्व्यतिरेकस्य दुर्वचत्वात्, तत्र धर्मिग्राहकमानबलात् कारणत्वसिद्धिः । यदाहुः—"पूर्वभावो हि हेतुत्वं मीयते येन केनचित् । व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि" इति । तथापि व्यतिरेकांशस्य क्वचिद्दुर्वचत्वेऽपि अन्वयांशः तत्राप्यक्षतः । अन्यथा असतोऽपि कारणत्वस्वीकारे सामग्रीसंविधानप्रयत्न एव सर्वत्र न स्यात् । असतोऽपि कार्योत्पादनसंभवात् । अतः कारणत्वं सत्त्वव्याप्यम् ।

अथ पूर्वसंबन्धनियमरूपं कारणत्वमपि विमृशामः—

पूर्वसंबन्धनियमस्य कारणत्वस्वरूपत्वेऽपि सत्त्वं तत्र सुष्ठु प्रविष्टमेव। नियमो हि अधिकदेशसत्त्वम्। अत एव, 'अनन्यथासिद्धत्वे सति कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यव्यापकत्वं पूर्वसंबन्धनियमः' इति **चन्द्रिको**क्तपरिष्कारेऽपि सत्त्वं दुस्त्यजम्; व्यापकत्वस्य अधिकदेशसत्त्वरूपत्वात्। न च—व्यापकत्वं समानाधिकरणात्यन्ताभावाप्रतियोगित्वम्; तत्र च न सत्त्वं घटकमिति वाच्यम्; एवमपि अत्यन्ताभावप्रतियोगित्वं कुतो नेति शङ्कायां कार्याधिकरणे सत्त्वादित्येवोत्तरं वक्तव्यमिति न सत्त्वाभावे व्यापकत्वोपपत्तिः। किं च कारणसत्तायाः अनिविष्टत्वेऽपि कार्यसमानाधिकरणेति कार्यसत्तायाः घटकत्वात् तन्निषेधोऽनुपपन्नः। तथाच सर्वनिषेधः कथमेवम्? एवं पूर्वसंबन्धेत्यत्र संबन्धपदेन पूर्वकालसत्तैव ग्राह्येति कथं सत्तायाः अप्रवेशः? तथा पूर्वशब्दस्य कार्यानधिकरणकार्यध्वंसानधिकरणकालेत्यर्थकतया तत्रापि काचित् सत्ता निविष्टैव। तथा च—

पूर्वसंबन्धनियमपदार्थेष्वपि यत् त्रिषु।
निविष्टम् तस्य सत्त्वस्य बहिर्भावकथा कथम्? ॥ ३१ ॥

एवं **चन्द्रिको**क्तलक्षणघटके अव्यवहितत्वादावपि अनेकसत्त्वनिवेशो भाव्यः। अस्तु तावत् कारणत्वं यत्किञ्चित्। तत् अन्वयव्यतिरेकबलेनैवावधारयितव्यमिति अन्वयरूपसत्ता गृह्यमाणा न प्रतिषेद्धुं शक्यते। तस्मादसतः कारणत्वोपपादनं खण्डनकृतमनुपपन्नम्।

एवञ्च सिद्धान्तसूत्रेषु मायामात्रसूत्रव्यतिरिक्तानां जीवसृष्टत्वनिषेधपूर्वकप्राज्ञसृष्टत्वस्थापनपरत्वस्वारस्ये निश्चिते, तदैकार्थ्यात् कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति हेत्वंशस्यापि तदनुगुणेऽर्थे व्यक्ते, स्वरसे च, मायामात्रमिति पदमेकं मिथ्यावचनमाश्चर्यवचनं वेति सन्दिह्यमानमाश्चर्यवचनमिति सर्वानु-

गुण्याय निर्णीयते। यदा तु मायापदं मिथ्यार्थकं नैवेति श्रीभाष्यकृदुपपादनं हृदयलग्नम्, तदा संदेहलेशस्यापि नावसरः। मात्रपदं वाशब्दो वा जीवकर्तृकत्वनिषेधार्थमित्येतावत्तूत्तरानुगुण्याय ग्राह्यम्।

अपूर्ववस्तुदर्शने सति कार्यमिदं विचित्रकारणपूर्वकमिति प्रेक्षाकारी प्रायः प्रत्येत्येव। तत्र यस्य वस्तुनो दृश्यमानस्य कारणत्वेन परिचितचरानेव पदार्थान् द्रष्टा न संभावयति, तत्र कारणं मायेति स व्यपदिशति। तादृशकारणपरिणामतया कार्यमपि मायेति निर्दिशेत्। अत एव, "ऋतेऽर्थं यत् प्रतीयेत" इत्यप्युच्यते, क्लृप्तकारणमन्तरैवोत्पद्य प्रतीतिविषयभावात्। क्वचित् मिथ्याभूते अतएवानुत्पद्यमानेऽपि अर्थं विना प्रतीयमानत्वसाम्यात् मायाशब्दप्रयोगेऽपि न मायात्वं मिथ्यामात्रनिष्ठम्। तदत्र सृष्ट्यादिश्रुत्यविरोधाय वास्तवपदार्थनिष्ठमेव मायात्वम्, "मायेव निर्मिता" "तेन मायासहस्रं तत्" इत्यादिवद् ग्राह्यम्। अतो नायं मायाशब्दो मिथ्यावाची। नापि सामान्यतः प्रकृतिवाची; प्रकृतिसृष्टत्वस्य पूर्वपक्षेऽप्यविशिष्टत्वात्। किंतु अनुभवितृजीवाविज्ञेयापूर्वकारणनिष्पाद्यपरः। एवञ्च तुशब्दात् जीवसृष्टत्वव्यवच्छेदसिद्धिः। संसारदशायां स्वस्वरूपस्यानभिव्यक्तत्वात् जीवं प्रतीदं मायैव भवतीति।

किञ्च पराभिध्यानादिति सूत्रं जगन्मिथ्यात्वं खण्डयतीत्यतोऽपि हेतोरिदमधिकरणं मृषावादप्रतिकूलम्। तन्मते हि बन्धः ब्रह्मात्मैक्याज्ञानमूलः; तद्विपर्ययो मोक्षश्च तत्त्वज्ञानसंपाद्यः, न तत्र भगवतो निग्रहरूपोऽनुग्रहरूपो वा संकल्पः कारणम्। अतः स्वसमवेततत्त्वज्ञानसाध्या स्वाज्ञाननिवृत्तिरूपा मुक्तिः, "पशवः पाशिताः पूर्वं परमेणे"ति बन्धकत्वेनोक्तपराभिध्यानेनावरस्य बन्धविपर्ययरूपतयेहोक्ता च मुक्तिर्नैका भवितुमर्हतीति सिद्धं वास्तवत्वम्।

तत् सिद्धमीश्वरसृष्टत्वं स्वाप्नेषु स्थापयितुमिदमधिकरणमिति। तन्निषेधश्च द्वेधा संभाव्यते। स्वप्ने सृज्यमानत्वस्यैवानङ्गीकारात्, सृज्यमानत्वेऽपि जीवसृज्यत्वस्यैव स्वीकारादिति। तत्र जागरदशाबाध्यत्वेन स्वाप्नवस्तुमिथ्यात्वानुमानं श्रुतिप्रामाण्यात् निरसनीयमिति विमृश्य, "सन्ध्ये सृष्टिराह हि",

'निर्मातारञ्चैके पुत्रादयश्च' इति सूत्रयोः प्रथमसूत्रेण प्रथमपक्षवादिनं निरस्य, द्वितीयपक्षवादी स्वपक्षं द्वितीयसूत्रेणोपपाद्य पूर्वपक्षयति। तत्र निष्कृष्टः पूर्वपक्षः परं श्रीभाष्ये साक्षाद् दर्शितः। उपरि च सिद्धान्ती तन्निरसनेन स्वपक्षं प्रपञ्चयतीति निष्कर्ष इत्यलं बहुना ॥

मिथ्याभूतस्याप्यर्थक्रियाकारित्वमस्तीत्येतत् वन्ध्याया एव जननीत्वमस्तीत्येतत्सोदरमेव। अर्थक्रियाकारित्वमेव सत्त्वम्। तस्मिन् सति च न मिथ्यात्वम्। तच्च सत्त्वं स्वप्नस्य ज्ञानरूपस्यास्तीति भामतीसाक्षिकं प्रागेवोक्तम्। सन्ति च श्रौतानि दृष्ट्युपासनादीनि विषयासत्यत्वेऽपि स्वयं सत्यानि अर्थक्रियाकारीणि। स्वप्नाध्याये वा किमसतोऽप्यर्थक्रियाकारित्वं भवितुमर्हतीति उपपादितमस्ति, येन तद्घटितमत्स्यपुराणाद्युपबृंहणप्रभावप्रपञ्चनमवसरं लभेत।

एवं ब्रह्मास्त्रत्वेनाभिमते स्वप्नदृष्टान्त एव श्रीभाष्यवर्णितदिशा साध्यविकले एतन्निदर्शनेन जगन्मिथ्यात्वं कथं सेत्स्यति? शुक्तिरूप्यादिदृष्टान्तस्य स्वाप्नापेक्षया बलवत्त्वं भवतैवोक्तमिति न जगन्मिथ्यात्वानुमानावकाशः। श्रुतिस्तु नास्त्येव।

कथं पुनः स्वाप्नसत्यत्ववादिनि श्रीभाष्ये स्वप्नदृष्टान्तेन जागरपदार्थमिथ्यात्ववादिबौद्धखण्डनावसरे, "वैधर्म्याच्च" इति सूत्रे स्वप्ने दुष्टकारणजन्यत्वबाधितत्वाभ्यां मिथ्यार्थविषयकत्वस्वीकारः, तदभावात् प्रपञ्चज्ञानस्यातथात्वं च वर्ण्यत इति चेत्—स्वप्ने श्रुतिबलादेव सत्यविषयकत्वस्वीकारात् श्रुतिबाह्यबौद्धप्रत्युत्तरणावसरे युक्तिमात्रेण समाधानस्येष्टत्वात् स्वप्नसत्यत्वस्य युक्तिसिद्धत्वाभावात् स्वप्नस्य मिथ्यार्थविषयकत्वं स्वीकृत्यैव प्रतिवक्तव्यमित्याशयः। अत एव कृत्वाचिन्तेति श्रुतप्रकाशिका।

"स्वप्नेऽर्थाः सन्तु सृष्टास्तदपि बहुविधा दुस्त्यजा भ्रान्तिरत्र
प्रध्वस्तानामिदानीन्तनवदनुभवात् स्थायितादिभ्रमाच्च।
सत्यं श्रुत्यादिसिद्धेः श्रुतपरिहरणायोगतः सृष्टिमात्रं
स्वीकृत्यांशे तु बाधात् भ्रममपि च यथाजागरं न क्षिपामः ॥"

इत्यधिकरणसारावल्युपदर्शितरीत्या स्वप्नस्य कतिपयांशविषये मिथ्यात्वस्याप्यसंदिग्धत्वादपि तद्भाष्यमुपपन्नमित्यन्यदेतत् । प्रपञ्चितमिदमस्माभिः
**नयद्युमणिभूमिकायाम् ।**

यदा तु श्रुत्या यथावत् तत्त्वश्रवणे सति मनने प्रवृत्तिः, तदा श्रुत्या स्वाप्नसत्यत्वेऽवधारिते तद्दृष्टान्तासिद्धिः प्रकारान्तरेणावसीयते । जागरितप्रत्ययो मिथ्यार्थगोचरः प्रत्ययत्वात् स्वप्नवदित्यनुमाने दुष्टकारणजन्यत्वादिरुपाधिरिति व्याप्यत्वासिद्धिर्बौद्धविचारावसरे दर्शिता । इदानीं तु दृष्टान्ते साध्यवैकल्यमपि प्रदर्श्यते । एवञ्च सन्ध्याधिकरणमपि अभावाधिकरणवत् प्रपञ्चमिथ्यात्वानुमानभञ्जकमेव । एवं स्वाप्नस्यापि सत्यत्वस्थापिका श्रुतिर्जागरपदार्थानामसत्यत्वं कथमभिधेयात् ? । एवञ्च जिज्ञासाधिकरणे स्वप्नदृष्टान्तानुमानेन मिथ्यात्वानुमानस्य नावकाशः । अधीतवेदान्तस्य श्रुतौ स्वप्ने सृष्टिश्रवणेन स्वप्नमिथ्यात्वस्य सन्दिग्धतया दृष्टान्तत्वायोगात् । भाष्यर्थोपजीवनेनाधिकरणरचनाऽपि मीमांसकसंमतैव । परमत्र भाष्यर्थस्योपजीवनं विश्वमिथ्यात्वनिषेधार्थमेव स्यात्, स्वाप्नस्येश्वरसृज्यत्वस्यैवात्र स्थापनादिति ॥

## (चतुर्थाध्यायविषयः)

तुरीयाध्याये उपासनोत्क्रान्त्यर्चिरादिप्राप्तिपूर्वकभोगसाम्यरूपफलबोधनात् सविशेषविषयत्वं सुस्पष्टम् । यत्तु—तत्र, "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्रम्—तत् निर्विशेषविषयकं कथं भवितुमर्हति? अत्र श्रीभाष्यदूषणप्रवृत्तेन यदुक्तम्, मुक्तात्मैव परमात्मानं स्वात्मत्वेनानुसंधातुमर्हति, न बद्ध इति—तत् मतापरिज्ञानमूलम् । किमात्मशब्दः इह स्वपर्यायः, उत स्वं प्रति आत्मेति शरीरिपर्यायः? आद्ये मुक्तात्माऽपि अस्मद्दृष्ट्या परमात्मनि स्वाभेदं न कलयितुमर्हति । अन्त्ये बद्धोऽपि स्वं प्रति आत्मत्वेन तमनुभवितुमीष्टे । स्वदेहं प्रति स्वस्येव स्वं प्रति परमात्मनोऽपृथक्सिद्धात्मत्वस्याक्षतत्वात् अपृथक्सिद्धत्वाभावकथनं ह्यसंबद्धमेव ।

भवदभिमतार्थपरत्वं सूत्रस्य न स्वरसमिति च निरूपयामः। "आत्मेति तूपगच्छन्ती"त्युक्तस्योपगमस्याऽऽकारः कः? न तावत् आत्मा इति; आत्मशब्दस्य स्वपर्यायतया समभिव्याहृतपदान्तरस्य तदर्थसमर्पकस्याभावे तदर्थप्रतीत्ययोगात्। नाप्यहमिति; अहमिति प्रतीतेराबालगोपालं स्वतो भवत्तया तावन्मात्रस्य प्रकृततत्त्वज्ञानत्वायोगात्। नापि ब्रह्मेति; ब्रह्मग्रहणस्य अद्वैतिव्यतिरिक्तवेदान्तिताकिकादिष्वपि सत्त्वेन भवद्विवक्षितांशासिद्धेः। नाप्यहं ब्रह्मासीति; अहंत्वविशिष्टस्य ब्रह्मत्वविशिष्टस्य च जीवेश्वरयोर्भेदस्य, "अधिकं तु भेदनिर्देशात्" इत्यादौ भवद्भाष्येऽप्युक्तत्वेन ऐक्यानुसन्धानायोगात्। अहंत्वादिविशेषणत्यागेन व्यक्तिमात्रग्रहणे अस्य, आत्मेत्यनुसन्धानरूपत्वं कथम्? यद्यपि कथञ्चिदात्मानुसन्धानं स्यात्, अथापि यथासूत्रमात्मेत्यनुसन्धानरूपं न भवति; आत्मत्वरूपधर्माविषयकत्वात्। "घटं द्रव्यमिति जानाति" इत्यादौ इतिशब्दस्य समभिव्याहृतपदार्थतावच्छेदकीभूतप्रकारोपस्थापकत्वस्यानुभविकत्वेन घटविशेष्यकद्रव्यत्वप्रकारकज्ञानवत्त्वस्यैव तत्र विवक्षणीयतया ब्रह्मविशेष्यकात्मत्वप्रकारकप्रतीतेरेवेह सूत्रार्थतया वक्तव्यत्वात्। अखण्डाकारज्ञानस्य च नात्मत्वप्रकारकत्वसंभवः। सविशेषज्ञानादेव मोक्षोक्तौ चापसिद्धान्तः। सकलभेदानिवृत्त्या मोक्षासिद्धिश्च। एवम् अहं ब्रह्मासीति स्वात्ममात्रे ब्रह्मैक्यज्ञाने सत्यपि सर्वप्रपञ्चबाधाभावादपि मोक्षासिद्धिः। "सर्वं खल्विदं ब्रह्म" इति ब्रह्मविशेष्यकसर्वात्मकत्वप्रकारकज्ञानमेव प्रकृतसूत्रविवक्षितमिति चेत्—तदसंप्रदायम्। शुक्तेः रजतेनेव प्रपञ्चेन ब्रह्मणः ऐक्यग्रहणासंभवश्च। प्रपञ्चाध्यासाधिष्ठानत्वसर्वजीवाभिन्नत्वोभयप्रकारकब्रह्मविशेष्यकज्ञानं मुक्तिहेतुरित्यपि वार्तम्। न हि रजताध्यासाधिष्ठानमिदमिति ज्ञानं रजतभ्रान्तिनिवर्तकम्; किन्तु रजतप्रत्यनीकभूतशुक्तितत्त्वज्ञानमेव। अतः स्वरूपमात्रविषयकज्ञानमेव तत्त्वज्ञानं वाच्यम्। तस्य तु नैयायिकनिर्विकल्पस्येवाभिलापायोगात् 'आत्मेति तूपगच्छन्ति' इति सूत्रेण तदभिलापनम्, श्रुत्या तद्ग्राहणञ्चाशक्यमेव। यत एवमभिलपति सूत्रकारः, अत एव निर्विशेषज्ञानस्य मोक्षसाधनत्वमयं नेच्छति ॥

ननु इतिशब्दप्रयोगात् "मनो ब्रह्मेत्युपासीत" इत्यादाविव दृष्टिविधिः प्रतीयत इति चेत्—ततः किम्? तावता अद्वैतसंमतं तत्त्वज्ञानं न सौत्रम्। जीवभिन्ने ब्रह्मणि जीवत्वदृष्टिः कर्तव्येति विवक्षायां जीवब्रह्मभेद एव वास्तव इत्येव सूत्रकारोपदिष्टं स्यात्। तदपि सूचितं शतदूषण्याम्। आस्तामिदम्। तत्त्वज्ञानप्रतिपादनप्रवृत्तः सूत्रकारः किमिति, 'आत्मेति तु' इति इतिशब्दं घटयामासेति चेत्—तदिदम्, "आत्मेत्येवोपासीते"ति श्रुतिप्रत्यभिज्ञानार्थम्। श्रुतिरेव कस्मादेवं घटयतीति चेत्—भवन्मतनिरासार्थमेव। "आत्मानमुपासीते"त्युक्तौ कथञ्चिद्व्यक्तिमात्रसाक्षात्कारं विवक्षितं कश्चिन्मन्येत। इतिशब्दप्रयोगे तु आत्मत्वप्रकारकत्वस्य ज्ञाने प्रत्यायनात् सविशेषतत्त्वज्ञाना-मुक्तिरुपदिष्टा भवतीति। एवं तर्हि नामाद्युपासनस्थल इव दृष्टिविधित्वं मा शंकिष्टेति ज्ञापनार्थमेव एवकारोऽपि श्रुतौ; 'आत्मेति तु' इति सूत्रे तुशब्दोऽप्येवार्थे इति व्यक्तमिदं भाष्ये। तदिदं वाक्यकारः, 'आत्मेत्येव तु गृह्णीयात्' इत्यनुवदन् ज्ञापयति। एवमखण्डाकारज्ञानस्यैव मोक्षसाधकत्वासिद्धौ तत्र साधकावस्थसिद्धावस्थपुरुषभेदेन भानभेदादिप्रपञ्चनं शतभूषणीकृतं सर्वमम्बरनगरायमाणमप्रस्तुतविस्तरभूतञ्चेत्यवसेयम्। सम्प्रति सूत्रस्वारस्याभावमात्रव्युत्पिपादयिषया एतावदुक्तम्। इतिशब्दस्तावत् प्रयुज्यमानः स्वसमभिव्याहृतपदार्थस्य विधेयत्वं प्रकारत्वं प्रत्याययति। एवञ्च "नाम ब्रह्मेत्युपासीते"त्यत्र ब्रह्मणि नामत्वविधानं नास्ति; किन्तु नाम्नि ब्रह्मत्वविधिरिति। ब्रह्मणि नामत्वविधौ उत्कृष्ट निकृष्टदृष्टययोगात् नामान्तर्यामित्वसिद्धिः। नाम्नि ब्रह्मत्वविधौ दृष्टिविधिसम्भवात् यथाप्रसिद्धि दृष्टिविधिरेवाऽऽश्रीयते। तद्वदत्र जीवे ब्रह्मत्वदृष्टिर्मा तावन्मानीति आत्मत्वमन्तर्यामित्वं प्रकारतया ज्ञापयितुमितिकरणम्। एवञ्चेतिकारे सति दृष्टिविधिरेवेति न निर्बन्धः। प्रकारत्वसमर्पणस्यैव तत्कार्यत्वात्। अन्ततः ब्रह्मत्वस्वात्मत्वोभयविशिष्टवस्तूपासन एव पर्यवसानमिति भाव्यम्।

अखण्डाकारसाक्षात्कारो मुक्तिहेतुरिति वदतैव, "अहं ब्रह्मास्मी" त्यैक्यानुसन्धानं मोक्षोपाय इत्युच्यते; परमात्मानं स्वाभिन्नं पश्यतीति च।

ऐक्यप्रकारकानुसन्धानस्य च कथमखण्डाकारता ? ऐक्यस्य प्रतियोग्यनुयोगिसापेक्षात्वाच्च कथं तस्य ब्रह्ममात्रगोचरत्वम् ?

तत्साक्षात्कारकाले अविद्यानिवृत्तावपि तत्संस्कारानुवृत्तिरित्यपि वार्तम् । मिथ्याभूताविद्याकार्यतया मिथ्यात्वाविशेषे, किञ्चित् तदैव नश्यति, किञ्चित्तु देहेन्द्रियसंस्कारादि अनुवर्तत इति कल्पनस्यासंभवात् । अतो जीवन्मुक्तिरसिद्धैव । तत्त्वसाक्षात्कारकाले देहस्य सहैव नाशध्रौव्येण जीवत्त्वायोगात् । साधकावस्थायाम्, 'अहं ब्रह्मास्मि' इत्यनुसन्धानमहङ्कारादिविशिष्टात्मविषयकम्, उतान्तःकरणोपहितसाक्षिमात्रविषयकम् । आद्ये, तत्रैक्यानुसंधानं न घटते । विशिष्टानुसन्धाने तत्र कथमैक्यान्वयः ? विशिष्टानुसन्धानाधीनसाक्षात्कारश्च कथं विशेषणाविषयकः ? स्वप्रकाशब्रह्मव्यक्तिसमानार्थप्रकाशिका च वृत्तिः कथं मोक्षोपायः ? द्वैतविरोध्याकाराविषयकत्वादित्यादिकं परस्तात् प्रस्तोष्यते ।

यत्तु—परमात्मनोऽन्तर्यामित्वस्य प्रागेव सिद्धत्वात् आत्मत्वोपासनाधिकरणे तदुपासनचिन्तनं वितथमिति—तत् भवन्मत एव । ब्रह्मातिरिक्ततत्त्वाभावात् तत्त्वज्ञानस्यैव मोक्षसाधनत्वात् मोक्षार्थज्ञाने जीवादिविषयकत्वस्याप्रसक्तेः । अस्मन्मते तु ब्रह्मणि जीवान्तर्यामित्वजीवभिन्नत्वाद्यनेकधर्मसद्भावादनुस्यूतमनुसन्धेयो धर्मः यः कश्चिदपीति मतिनिरासेनात्मत्वेनैवानुसन्धानस्यावश्यकत्वमुच्यत इति निर्वाहः सुकरः ।

यदपि—उपासनस्योपायत्वात् फलाध्याये निरूपणमसङ्गतम्; अद्वैतमते तु, "आत्मेति तूपगच्छन्ती"ति साक्षात्कारस्यैव विवक्षणात् तस्य च फलत्वात् 'फलाध्याये कथनं सङ्गतम् इति—तदपि न । उपासनस्यापि पुरुषसाध्यतया पूर्वपूर्वोपासनाधीनतया च फलत्वात् । फलत्वेऽपि मोक्षरूपफलत्वाभावादसङ्गतिरिति चेत्—तदेतत् भवत्संमतसाक्षात्कारेऽपि तुल्यम् । कथञ्च "आवृत्तिरसकृदुपदेशात्" इति आवृत्त्यादि फलाध्याये सङ्गतम् ? तत्र भवद्भाष्ये, "प्रथमं तावत् कतिभिश्चिदधिकरणैः साधनाश्रयविचारशेषमेवानु-

सरामः" इति कियद्दूरं साधनविचारोऽभ्युपगत एव। स च विचारः, "आत्मेति तु" इत्येतदधिकरणपश्चाद्भाविनि, "आप्रयाणात्तत्रापि हि दृष्टम्" इत्येतत्पर्यन्तसूत्रगणेऽप्यनुवर्तत इति प्रकृताधिकरणस्य उपायविषयकत्वं नायुक्तम्। तदधिगमाधिकरणारम्भे च भवद्भाष्ये, "गतस्तृतीयशेषः" इत्युक्तेः 'आत्मेती' त्यधिकरणार्थोऽपि न फलाध्यायमुख्यार्थ इति स्पष्टम्। एवमत्र परिहारो हृदयङ्गमोग्राह्यः। वस्तुतः भगवति तद्गुणेषु च प्रेमविकलानां शुष्कं सगुणब्रह्मोपासनं फलरूपं मा सैत्सीत्। प्रेमाविलमनसां तु प्रीतिरूपापन्नमुपासनं परमं फलम्। आहुश्च, "भजनसुखमेकस्य विपुलम्" इति।

दृश्यतामत्र टीकाद्यमावृत्त्यधिकृतिस्थितम्।<br>
ब्रह्मदृष्ट्यादिकश्चात्र चिन्त्यते न हि तत् फलम् ॥ ३२ ॥

भवन्मतेऽपि श्रवणमननाद्यपि गृह्यते।<br>
"आत्मेति तूपगच्छन्ती" त्यत्र, नो केवलं फलम् ॥ ३३ ॥

अन्तःप्रविष्टः शास्ता स्यादात्मा नैवं नृपादयः।<br>
स्वात्मा ब्रह्मेत्युपासा न ब्रह्मोपासेत्यदः कुतः ? ॥ ३४ ॥

सर्वात्मत्वे स्थितेऽपि स्यात् स्वात्मतामात्रचिन्तनम्।<br>
न हि सर्वमिदं ब्रह्मेत्युपासा भवतामपि ॥ ३५ ॥

अहं ब्रह्मास्मीति बुद्धौ नाहन्त्व-ब्रह्मताग्रहः।<br>
इत्युक्तावीदृशाकारनैयत्यं किन्निबन्धनम् ? ॥ ३६ ॥

चैत्रो मैत्र इतीदृक्च भवेन्मोक्षार्थधीस्तु वः।<br>
विशेषणपरित्यागे विशेष्यैक्याक्षतेरिह ॥ ३७ ॥

त्वमहं भगवन् देव तथाऽहं त्वमितीदृशम्।<br>
ईश्वरैकान्तनिध्यानशिक्षणं वो वृथा श्रुतौ ॥ ३८ ॥

उत्कर्षात् ब्रह्मदृष्टिश्चेत् मनोब्रह्मादितुल्यता ।
निर्विशेषे क उत्कर्षो मैत्र इत्यत्र किं न सः ॥ ३९ ॥

अथापहतपाप्मत्वाद्यंशार्था स्वेशभावना ।
स्वतिर्यग्भावनाऽपि स्यात हतनानाश्रमत्वतः ॥ ४० ॥

यथाकथञ्चित् श्रुतिवत् सूत्रस्यापि नयने च वक्तव्यमुक्तं शतदूषण्याम्—"विवक्षितपर्यवस्थापनं तु सूत्रस्वारस्योपन्यासदशाविरुद्धम्" इति। उपदेशानुपपत्तिपरिहारप्रयासश्चात्र भवतो न युक्तः। तदवसरे तद्वैयर्थ्यं दर्शयिष्यते। न ह्युपदेशोऽपि बाधितानुवृत्तिरूपः। बाधितानुवृत्तिरपि मिथ्या तत्त्वज्ञानबाध्यैवेति। विशिष्टाद्वैतिमतेऽप्युपदेशानुपपत्तिनिरूपणप्रयासोभवत उन्मस्तकमभिनिवेशमेव दर्शयति। दर्शनसमानाकारज्ञाननिष्पत्तिमन्तः तत्त्वज्ञानिनः स्वं स्वशरीरात्मतया गृह्णन्तु; तदेव स्वञ्च परमात्मशरीरतया गृह्णन्तु; को विरोधः? एवं तत्त्वज्ञानिनः योगात् व्युत्थायस्थित्यवसरे संश्रितेभ्यस्तत्त्वमुपदिशन्तु; तत्र वा को विरोधः? अन्यत्तु विकल्पमात्रमनुपयुक्तमनभ्युपगतञ्चेत्यलम् ॥

इतिकरणं दृष्टिविधित्वपक्षे स्वरसमिति शतदूषण्यर्थपरिहरणापदेशेन यदुक्तम्—"इतिकरणस्वारस्यं तु दृष्टिपरम्, 'आत्मदर्शनमेवात्र विवक्षितम्। न तु उपासनम्'इति ज्ञापयती"ति—तत्रोच्यते। भवन्मतेऽत्र नोपासनविधानम्; अपि तु श्रवणवेलायामेव भवत् दर्शनमेवैवमुच्यते इति सत्यम्। परं तु न तत् इतिकरणज्ञाप्यम्। "मनो ब्रह्मेत्युपासीते"त्यादाविव उपास्यस्यानात्मत्वम् इतिर्ज्ञापयेत्; न तूपासनस्याप्यभावम्। अत्र तु, "अनात्मत्वं न विवक्षितम्; उपरि, "तदेतत् पदनीयमस्य, सर्वस्य यदयमात्मा" इति आत्मस्वरूपस्यैवात्र प्रस्तुतत्वात् अन्योपासनविधानस्येहाभावात्" इति हि बृहदारण्यकभाष्य एवोक्तम्।

एवञ्चेतिकरणम्, 'दर्शनमत्र विवक्षितम्; न तूपासन'मिति न कथमपि ज्ञापयितुं शक्तम्। बृहदारण्यकभाष्योक्तम् इतिकरणप्रयोजनं

त्वन्यत् । तद् यथा—"यस्तु आत्मशब्दस्येतिपरः प्रयोगः [सः] आत्मशब्द-प्रत्यययोरात्मतत्त्वस्य परमार्थतोऽविषयत्वज्ञापनार्थम्" इति । एवञ्च उपासनं वा दर्शनं वा न वस्तुतः परमात्मग्राहकं भवितुमर्हति, "नेति नेती" त्यादिनाश्रुतिसिद्धत्वान्निर्विशेषत्वस्य" इत्ययमर्थ इतिशब्देन ज्ञाप्यत इत्युक्तं भवति । परमार्थतो दर्शनविषयत्वं नास्तीत्यनेन च दर्शनविषयत्वं शुक्ति-रजतादिवत् प्रातिभासिकमिति न विवक्षितम् ; किन्तु दर्शनविषयत्वमपि प्रपञ्चवत् पश्चान्निवर्तत इत्येव । तत्तु सर्वनिषेधश्रुतिसिद्धमेवेति तस्य विशिष्य ज्ञापनं निष्प्रयोजनमेव ।

सर्वथा इतिशब्दार्थत्याग एवाद्वैतिमते । इतिशब्दो हि प्रकारवचनः । तत्र दृष्टिविधिश्रुतिशैलीमनुसृत्यारोपितप्रकारपरत्वशङ्कायां पूर्वोत्तरसन्दर्भानुसारात् तन्न भवतीत्युभयपक्षाविशिष्टम् । अतः, "आत्मानमुपासीते"ति श्रुत्यन्तरानुरोधाच्च यथावस्थितज्ञानपरत्वे सिद्धे इतिशब्दार्थस्य प्रकारस्य वास्तवत्वात् न निर्विशेषविषयता । प्रकारत्यागे च इतिशब्दार्थत्याग एवेति । एवम् उपासि-यथाश्रुतार्थत्यागश्च "आत्मेत्येवोपासीत" इति श्रुतावद्वैतिमते । सूत्रकारश्च, 'उपगच्छन्ति ग्राहयन्ति च' इति पदद्वयं बहुवचनान्तमिह परं प्रयुञ्जानः, श्रुतेरिति वक्तव्ये ग्राहयन्तीति पदविशेषं प्रयुञ्जानश्च, परमात्मनः मानसज्ञानविषयत्वं शाब्दबोधविषयत्वं बहूनां ज्ञातृत्वमुपदेश्यत्वमुपदेशकत्वं चानुभवसिद्धं यथा न बाधितं भवेत्, तथा परमात्मस्वरूपमेषितव्यमिति प्रतिबोधयन् निर्विशेषपक्षं निराकरोति । अतोऽपि न भेदापलापप्रसक्तिः । शेषं भेददूषणनिस्तारे ।

"अविभागो वचनात्", "अविभागेन दृष्टत्वात्" इति सूत्रद्वयं परम-मुक्तिदशापरम् अद्वैतिमते । प्रथममुत्क्रान्तिदशाविषयम् ; उत्तरं मुक्तिदशा-विषयमिति अस्मन्मते । तत्र प्रथमपक्षे पौनरुक्त्यरूपे दूषणे उद्भावनीयेऽपि सूत्रस्वारस्यविचारवादे तदनवसरमिति अप्रसक्तार्थविस्तरस्वाभाव्यविरहादाचार्याः स्पष्टं नोद्भावयामासुः ।

"कुसूले नास्ति मे तात" इति न्यायेन सूत्रयोः ।
पौनरुक्त्यपरीहारे यतते शतभूषणी ॥ ४१ ॥

तुरीयद्वितीये उत्क्रान्तिविषयवस्तुविवेचनारम्भात्, उपरि तदोकोग्रज्वलनमिति च तद्विचारात् मध्येऽपि तद्विषयत्वस्यैव स्वीकारे द्वितीयः पादः कृत्स्नो निर्विशेषपरिशेषरूपमुख्यमुक्तिविषयास्पर्शी भवतीति भिया परममुक्तिविषयेऽपि कतिपयाधिकरणसद्भावज्ञापनप्रत्याशया 'अविभागो वचना'दिति सूत्रं परममुक्ति-परं व्याख्यातं भवद्भाष्ये । विदुषः कलाप्रळयः सावशेषो निरवशेषो वेति संशये निरवशेष इति स्थापनार्थमिदम् । तत्र निरवशेषत्वस्य साक्षाद्वाचकं पदं न श्रूयते । ननु मुक्तस्य परमात्मना सहाभेदे अविभागपदोक्ते निरवशेषः प्रळय इति सेत्स्यतीति—उच्यते । अत्र मूलभूताविद्यानिवृत्तौ सर्वनिवृत्तिध्रौव्यात् सविशेषत्वसंशय एव नोदीयादिति विमृश्य, "सावशेषताशङ्कामतिमन्दामपनेतु-मिदं सूत्र"मित्याह भामती । "भिद्येते तासां नामरूपे" इति निरवशेष-त्वस्य श्रुतिप्रतिपन्नत्वात् शङ्कैव नोदेतीति च परिमळे तदाशयो दर्शितः । तेन व्यर्थमेवेदं सूत्रमित्युक्तं भवति । एवं जीवब्रह्माविभागे कण्ठोक्ते पुनरपि स एवोच्यते तुरीयतुरीये, "अविभागेन दृष्टत्वा"दिति स्पष्टं पौनरुक्त्यञ्च ।

अथ "अविभागो वचनात्" इत्यत्र जीवब्रह्माविभागो नार्थः, किन्तु ब्रह्मणा कलानामविभाग इति—तर्हि शुक्तिरजतयोरविनाभाग इत्युक्ते शुक्तिः रजतरूपेण भातीतिवत् ब्रह्म कलारूपेण भातीत्यर्थः स्यात् । ब्रह्मणा संश्लिष्टाः कला इत्यर्थपरतया कलानां स्थितिरेवोक्तेत्यपि स्यात् । "तानि परे तथा ह्याहे"ति सूत्रे परे आत्मनि कलानां लय उक्तः । तदपेक्षयाऽत्र कस्मिन्नंशे स्पष्टताऽस्ति? यदि तत्र कलानामविद्यायामन्यत्र वा लय उच्येत, सावशेषत्व-शङ्का स्यात् । परस्मिन् लयस्य उक्ततया परस्मिन् कल्पितानां तासां तत्र लयो नाम बाध एवेति स्पष्टमेव निरवशेषत्वम् । अविभागपदमेव संश्लेष-परत्वात् ब्रह्मणा सह कलानां स्थितिमपि दर्शयतीति विपरीतार्थकमपि । एवम्, 'तानि परे' इति भूतेन्द्रियमात्रलयकथनमपि न युक्तम्; अविद्यालयस्यापि तत्र

वाच्यत्वात्। अतः ब्रह्माविद्याविभागाभाव एतत्सूत्रविवक्षित इति निष्कर्षणीयम्। तथाऽपि उभयत्र विषयवाक्यस्यैकत्वात् सूत्रद्वयकरणं व्यर्थमेव। अविद्यापर्यन्त-निवृत्तौ जीवब्रह्माविभागस्य सिद्धत्वात्, 'अविभागेन दृष्टत्वात्' इति किमर्थम्; परममुक्तिप्रकरणे "जक्षत् क्रीडन् रममाणः" इति नानाव्यापाराणां श्रवणात्, "स तत्र पर्येती"ति जीवब्रह्मणोराधाराधेयभावादिव्यपदेशाच्च नाविभाग इति शङ्कायाम् भेदपरश्रुतिवाक्यानां तेषां सगुणब्रह्मप्राप्तिप्रकरणे उत्कर्षः कार्यः। "तत्त्वमसी"त्यैक्यस्य दृष्टत्वादविभाग एव इति सूत्राशयो वर्ण्यते। वर्णनेऽयं "अविभागो वचनात्" इति सूत्र एवास्तु; व्यर्थमिदमिति शङ्का दुष्परिहरा।

अस्मन्मते तु "अविभागो वचनात्" इति सूत्रमुत्क्रान्तिकाले, "तेजः परस्यां देवताया"मित्यत्र विवक्षिता परे जीवसम्पत्तिः प्रळय इव कारणापत्तिरूपा, अन्यादृशी वेति विचारे संपूर्वकः पदिः प्रागिव इहापि सूक्ष्मदेहविशिष्टस्य जीवस्य परमात्मना संश्लेषविशेषमविभागमेवाह, न कारणावस्थापत्तिमित्येतत्परम्। 'अविभागेन दृष्टत्वा'दिति तु, 'अपृथक्सिद्धिरूपाविभागो मुक्तिदशायां मा भूत्; "सह ब्रह्मणे"ति साहित्यादिप्रतीतेः' इति शङ्कापरिहारेण उपासितस्य प्रकारप्रकारिभावनियामकस्याविभागस्यापृथक्सिद्धिरूपस्य न त्याग इति शुद्ध-जीवब्रह्माविभागविशेषरूपार्थान्तरपरमिति न पौनरुक्त्यप्रसक्तिलेशोऽपि। एवं स्थिते यत् शतभूषण्याह—"पूर्वत्र अपृथग्भावविवक्षायां तेन न्यायेन जीवब्रह्मणो-रप्यपृथक्सिद्ध्यैव निर्वाहे सिद्धे द्वितीयमधिकरणं व्यर्थं श्रीभाष्यमते" इति— तत्र पूर्वत्र न शरीरशरीरिभावनियामकापृथग्भावविवक्षाप्रसक्तिः; वाङ्मन-स्सम्पत्तितौल्यवचनादिति कथमैक्यम्? विषयभेदश्च दर्शितः। अतः स्वदोषस्य परत्रारोपमात्रमेतत्।

यत्तु—"अविभागो वचना"दिति सूत्रे वागादीनां परमात्मता-पत्तिं श्रीभाष्यमपि न स्वीकरोति। अतोऽविभागमात्रं युक्तमिति—तन्न भवन्मते हि निरवशेषलयोक्त्या परमात्मतापत्तिरेवेष्टेति कथं तद्विपरी-तमिहोच्यते? "अविभागेन दृष्टत्वा"दित्यत्र "अहं ब्रह्मास्मी"ति

साक्षात्कारानुगुण एवाविभागः स्वीकार्य इति यदुच्यते—तत् तथैव। अपृथक्सिद्धिरूपाविभागस्यैव तत्र साक्षात्कारात्। शरीरशरीरिभावे सति 'असि', 'असि'इति कथं प्रयोग इति चेत्—अस्य परिहारः ईशावास्याचार्यभाष्ये "पुरुषः सोऽहमस्मी"त्यत्र द्रष्टव्यः। भवन्मतस्यासिरिवास्मिरपि खण्डक इति च तत्रोपापादि। आस्तामेतत्। अविभागशब्दस्वारस्यहानिः शतदूषण्युक्ता तु न समाहिता। संयोगविभागौ मिथः प्रत्यनीकौ। तत्राविभागशब्दः विभागप्रसक्तिरहितं संयोगमेव गमयेत्; संयोगमात्रं वा। न त्वैक्यम्। भवन्मते च सूत्रद्वयेऽप्यैक्यस्यैव कथनादस्वारस्यम्। उभयत्राप्यस्मन्मते स्वारस्यम्।

"ब्रह्मवित् ब्रह्मैव भवती"त्यत्र ब्रह्मापृथक्सिद्धिरत्र नोच्यते—किंतु ब्राह्मरूपाविर्भाव इति "ब्राह्मेण" इति सूत्रेण बोध्यते। अत्र "ब्राह्मेण रूपेणे"ति सूत्रपाठस्तु भवतोऽपपाठः। वाक्यार्थविचारश्च यथावसरं करिष्यते। अस्तु तावदेवम्। तावता किमनुकूलं भवतः? चितितन्मात्रातिरिक्तब्राह्मरूपमपि जीवस्य भवति चेत्—अनेकविशेषवत्त्वमेवोक्तं भवति। मुक्तो ब्राह्मेण रूपेणाभिनिष्पद्यत इत्युक्तिभङ्गी हि, ब्रह्मणः, अभिनिष्पद्यमानस्य च व्यक्तितो भेदमेकतरस्यान्यतररूपभाक्त्वं च स्वरसतो गमयति। रूपञ्चापहतपाप्मत्वादि सत्यकामत्वसत्यसङ्कल्पत्वघटितमिति भवद्भाष्य एव व्यक्तम्। तानि च रूपाणि पृथक्पदोक्तानि मिथः, धर्मिण आत्मनश्च भिन्नानीति स्वरसतः, "य इहात्मानमनुविद्य व्रजन्ति, एतांश्च सत्यान् कामान्"इति श्रुतितश्चावगम्यत इति तद्विरोधेन सर्वस्यापि श्रुतस्यैक्यवर्णनप्रयासो भामतीकारादेर्निष्फलः। इतो वरं चितितन्मात्रत्वस्वीकरणम्। सर्वथा स्वारस्यहानिः प्रकृता तदवस्था॥

एवं सविशेषपरतयैव स्पष्टं प्रतीतं सूत्रगणं निर्विशेषपरं नयद्भिः जगद्व्यापारवर्जाधिकरणमपि सर्वप्रपञ्चप्रविलयादिमुखेन निर्विशेषपरं कुतो न नीयत

इति चेतश्चित्रीयते। प्राचीनवृत्त्यादि परिमर्द्य यथेच्छमर्थवर्णनस्य प्राय आदरणादत्रापि तत् कृतं किं भवतामशक्यम्? अन्यथा हि सविशेषलक्षण-पूर्वमारब्धजिज्ञासो भगवान् बादरायणः सविशेषमेवोपसंहरन् मध्ये भूम्ना सविशेषमेवाभ्यस्य निरूपयन् उपक्रमोपसंहारादितात्पर्यग्राहकवशात् सविशेष-परमेव शारीरकमाकलयतीति निर्विशेषं नाद्रियेत। अत्र लिखति शतभूषणी— "श्रवणादिवत् सविशेषोपासनस्यापि निर्विशेषब्रह्मसाक्षात्कारहेतुत्वमस्तीति तथोपसंहारः" इति। श्रवणादिकं दृष्टविधया निर्विशेषसाक्षात्कारोपयोगि। सविशेषोपासनं तु कथम्? प्रत्युत भेदावलम्बि सविशेषोपासनं विपरीतवा-सनाभिवर्धनाद्बाधकमेव स्यात्। अथादृष्टविधया भगवदनुग्रहमहिम्ना तत्त्वसाक्षा-त्कारोपयोगीति, तर्हि तुल्यन्यायात् कर्मणामपि तथात्वसंभवात् कथं श्रवणात् प्रागेव कर्मत्यागः? यत्तु विनोपासनम्, विना कर्मयोगम्, 'ब्रह्म सत्यम्, जगन्मिथ्ये'ति परमसिद्धान्तं मनसिकृत्य कर्मोपासनादित्यागः महते उत्पाताय, नरकपाताय वेति सूचनं सविशेषोपसंहारफलमिति— तदिदमादिशङ्कराचार्यदूषणं कथं तदीयस्य घटते। उक्तं हि, "लिङ्गाच्चे"ति सूत्रभाष्ये, "येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव "तत्त्वमसि" वाक्यार्थमनुभवितु-मिति तान् प्रति आवृत्त्यानर्थक्यमिष्टमेव" इति। तेन विनैवोपासनादि श्रवण-मात्रेण साक्षात्कारभाजः सन्ति केचिदिति ज्ञायते। इममर्थं दर्शयितुं निर्विशेषोपसंहार एव युक्तः। तदभावादितश्च सविशेष एव सूत्रसन्दर्भस्वार-स्यमपि। अत्र, "चतुरध्यायीतोऽपि पूर्वं प्रस्तुतेन सविशेषविचारेण" इति लेखनश्चाभिमतमन्तर्गुप्तमैकशास्त्र्यसिद्धान्तमाविर्भावयति॥

यत्तु वेदान्तानामिव ब्रह्ममीमांसाया अपि सविशेषनिर्विशेषोभय-प्रामाण्यपरतयैव योजनं युक्तमित्यत्र न्यायप्रदर्शनम् तत्र स न्यायः उभयप्रामाण्य-स्थापको न भवतीति व्यक्तमेव। तत्तन्न्यायासामञ्जस्यञ्च उभयलिङ्गाधिकरण-भवदभिमतार्थनिरसनादिनैव निरूपितमिति किमत्र पिष्टं पिष्टा। अतः 'गौणं

प्रामाण्ये सविशेषविचारे" इत्युपरितनभवद्वाक्यमेव सविशेषपरवेदान्ततद्विचाररूपब्रह्ममीमांसयोर्वस्तुतोऽप्रामाण्यमेवानुमन्यत इति कथं तदुभयप्रामाण्यस्थितिः? प्रामाण्यं हि दुष्टकारणजन्यत्वबाधकप्रमाणविशेषविरहे सत्येव सुस्थम्। सविशेषवाक्यार्थज्ञानं सर्वं निर्विशेषवाक्यरूपबाधकप्रमाणबाधितमिति कथं तत्र प्रामाण्यम्? अथ निर्विशेषवाक्यजन्यज्ञानस्यापि अविद्यादोषमूलकत्वाविशेषादप्रमाणत्वप्राप्त्या न बाधकत्वमिति चेत्—तथापि नोभयप्रामाण्यम्। 'अविद्या काचिदस्ति। स च दोषः। तन्मूलकत्वादप्रामाण्यं भेददर्शनस्ये'ति निश्चयश्च नानात्वाभावज्ञानप्रामाण्यनिश्चयाधीनः। नानात्वाभावज्ञानञ्च नानात्वज्ञानेन जातेनासंजातविरोधिना विरुद्धत्वान्नैवोदेतुमर्हम्। भेदाभावज्ञानं हि भेदज्ञानसापेक्षम्। प्रतियोगिज्ञानस्याभावधीहेतुत्वात्। यत्रैव प्रतियोगी गृहीतः, तत्र तन्निषेधायोगात्। तर्हि उत्तरेण पूर्वस्य बाधः क्वचित् कथं स्वीक्रियत इति चेत्—तदपि निरूढं **तन्त्रवार्तिके**—

"पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्"॥ इति।

एवञ्च पूर्वोत्पन्नभेदज्ञानानुपमर्दनेन ज्ञानमभेदश्रुत्या निष्पाद्यमिति कथं सविशेषवाक्यानां गौणं प्रामाण्यम्। यत्तु—गुणानुसारेण प्रधाननयनस्यान्याय्यत्वात् निर्गुणवाक्यानुरोधेनैव सगुणवाक्यनयनमिति—तन्न—निर्गुणवाक्यस्य प्राधान्यमन्यस्य चाप्राधान्यमित्यत्र साधकाभावात्। उपक्रमप्राबल्येन सगुणवाक्यानुसारेण निर्गुणवाक्यतोऽखिलहेयप्रत्यनीकत्वे परमात्मनि बोध्यमाने, एको वाक्यराशिः कल्याणगुणैकतानत्वपरः, अन्यश्चाखिलहेयप्रत्यनीकत्वपर इति समप्राधान्यमेव। दोषाभावमात्रापेक्षया गुणाधिक्यस्य भोग्यताधायकत्वात् उपक्रमभूतत्वाच्च सगुणवाक्यस्य प्रकारान्तरेण प्राधान्यमपि। यदपि गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति—तेन किं सेत्स्यति? मुख्यप्रामाण्ये संभवति गौणप्रामाण्यं न स्वीकार्यमिति। अद्वैतवाक्यार्थस्येव द्वैतवाक्यार्थस्यापि

परमार्थत्वाङ्गीकारात् उभयविधवाक्यप्रामाण्यमपि मुख्यमस्माकम्। भवन्मते द्वैतवाक्ये सर्वत्र गौणं प्रामाण्यम्। कतिपयवाक्यमुख्यप्रामाण्यस्वीकारेण भूयोवाक्यगौणप्रामाण्यकल्पनञ्चायुक्तम्। गौणप्रामाण्यमिति नामकल्पनामात्रम्; वस्तुतस्तस्याप्रामाण्यात्। सर्वमिदं स्वावसरे व्यक्तीभविष्यति। तदत्र सूत्रस्वारस्यविचारावसरे भवतो वृथैवाप्रसक्तानाम्, अन्यत्र दूषितानाञ्चांशानां सिद्धवत्कारेण स्वमतोपन्यासविस्तरः। को हि नाम ब्रूयात्, "अथातो ब्रह्मजिज्ञासे"ति निर्गुणब्रह्मैव प्राधान्येन प्रतिज्ञातम्। समनन्तरमेव जन्मादिसूत्रे सविशेषमेव ब्रह्म लक्षितमिति। ईदृशो हि, अथातो धर्मजिज्ञासेति अधर्मजिज्ञासा प्रतिज्ञाता। अधर्मस्य धर्मप्रत्यनीकत्वात् धर्मलक्षणम्, "चोदनालक्षणोऽर्थो धर्म" इति उक्तमित्यपि ब्रूयात्। अयमत्र विशेषः—अधर्मस्तु कश्चित् प्रसिद्धः; निर्विशेषवस्तु न कथमपि प्रसिद्धमिति। किं ब्रह्मशब्दस्य रूढिर्योगो वा निरुक्तिर्वा निर्विशेषे इति च समनन्तरवाद एव विचारयिष्यते।

एवमेव वैदिकदर्शनानां न परस्परं संमर्दावकाश इत्यादिलेखनमपि प्रकृते अप्रसक्तमेव। वैदिकदर्शनान्यपि हि, "न हि वस्तुनि विकल्प" इति न्यायात् मिथो विरुद्धार्थप्रतिपादनांशे न सर्वाणि प्रमाणानि भवितुमर्हन्ति। 'अप्रतिषिद्धमनुमतं भवती'ति न्यायादेकतरोक्तमन्यतरत्रापि युज्यते स्वीकर्तुम्। एवमेव हि पिकनेमाधिकरणे म्लेच्छव्यवहारोऽपि क्वचिदर्थनिश्चयार्थमाद्रियत। देहातिरिक्तात्मसद्भावयुक्तयश्च, आगमाश्च तैस्तैरुपन्यस्ताः विभिन्ना अप्येकार्थपर्यवसानात् कामं संहन्येरन्। अत एवोक्तम्; "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः॥" इति। विरुद्धांशविषये तु तेषामप्यप्रामाण्यम्; प्रबलतमेन परेषां प्रतिक्षेपश्च सांप्रतं स्वीकर्तुम्। अत एव भगवता बादरायणेन सांख्यादिमतानां भारते स्वयमेव, "आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभि"रित्यहन्तव्यत्वेनाभिमतानामेव साधु निराकरणं शारीरके।

इदं त्विह वक्तव्यम्—निर्विशेषवादिभिः प्रपञ्चस्य सर्वस्यापलापादपारमार्थ्यस्वीकारात् सर्वं मतमपरमार्थभूतमेव तेषाम् । आदरोऽनादरो वा सर्वत्र तुल्यः । तत्तन्मतमातिष्ठमानानां सर्वपरमतबाधेन स्वमतमेव स्थास्यतीति बुद्धिरविशिष्टा । वस्तुतो निर्विशेषवस्तुनि कल्पितत्वं तद्दृष्ट्या सर्वासामपि मतप्रक्रियाणां तुल्यम् । निर्विशेषतत्त्ववित्सु कश्चित् व्यावहारिकसत्यत्वं तार्किकपरिपाट्या प्रमेयनिष्कर्षेण पदार्थेषु ब्रूयात्, अन्यः सांख्यशैल्या, अपरो योगानुगमेन, परो भट्टप्रणाळ्या, कोऽपि मायाध्वना, इतरो विशिष्टाद्वैतिवर्त्मनेति किं न स्यात्? यथैवम्, तथा निर्विशेषतत्त्वस्वीकारेणैव जैनबौद्धादिप्रक्रियाः केचित् परिष्कृत्य व्यावहारिकसत्यत्वं तत्र स्वीकृत्य लोकयात्रां निर्वोढुं प्रवर्तन्ते चेत्—अद्वैतिनस्तान् किमिति निरसिष्यन्ति । वैदिकविश्वासात्तु षण्मतस्थापनाचार्यकप्रसिद्धिमानशिरे प्रथमे श्रीशङ्कराचार्याः । न खल्वद्वैतं तत्त्वमस्यादिवाक्यावगतत्व एव परमार्थः, अन्यथा मिथ्येत्यस्ति । तत्तदभिमततर्कोपस्कृतप्रमाणान्तरतोऽपि वेदवैदेशिकैरपि तस्य ज्ञेयत्वसंभवात् ।

अपशूद्राधिकरणं संकोच्य शूद्राणामपीतिहासपुराणश्रवणादद्वैतापत्तिरूपमुत्तयर्थघटना सिद्धान्तलेशसङ्ग्रहे साधिता । अन्ततः तज्ज्ञानस्योत्कृष्टजन्मद्वारा वोपायत्वमिति चोक्तम् । वस्तुतः तत्त्वज्ञानस्य मिथ्याज्ञाननिवर्तकत्वस्वाभाव्यात् उत्तमजन्मप्राप्तिहेतुत्वं न संभवति । सर्वप्रपञ्चबाधके चाद्वैतश्रवणे सति कथं तदैव न मुक्तिः शूद्राणाम्, ब्राह्मणादीनामिव । तदिदमद्वैतं स्वीकृत्यान्यत्र नास्तिक्यमेव यदि कश्चिदुपन्यस्येत्, तदा तादृशचार्वाकमतमप्यविशिष्टमद्वैतिनाम् । अथोच्येत—सत्स्वपि सिद्धान्तभेदेषु सर्वेष्वपारमार्थिकेषु कस्यचिदेव व्यावहारिकसत्यत्वम्, अन्येषां व्यवहारमध्य एव लोकान्तरजन्मान्तरानुभवादिना कदाचित्संभवन्त्या बाधचिन्तया प्रातिभासिकत्वमेव सांप्रतं स्वीकर्तुमिति नावैदिकदर्शनानामादर इति—तर्हि तुल्यनयेन वैदिकेष्वपि दर्शनेष्वियमेव गतिरिति सर्ववैदिकदर्शनसाम्योपन्यासो भवतो मुधैव । यदि प्रातिभासिकवैदिकदर्शनस्थायिनामपि अद्वैतसाक्षात्कारप्रसक्तौ प्रपञ्चबाधात् मोक्ष

इति मन्यते, तदेतत् नास्तिकविषयेऽपि तुल्यम् । शेषमपशूद्राधिकरणविरोधवादे वक्ष्यामः ॥

अन्यच्च—शारीरकं कृत्स्नं निर्विशेषवस्तुमात्रं निरूपयतीति नाद्वैतिनोऽपि गदितुं प्रगल्भन्ते ; न च गदन्ति । श्रुतिष्विव शारीरकसूत्रेष्वपि सगुणब्रह्मतदनुबन्धिप्रस्ताव एव तद्भूयाऽपि भूयान् । निर्विशेषपरतया तत्संमतकतिपयांशस्यापि सविशेषविषयत्वमेव सम्यङ्निरूपयन्ति तदन्ये । तावन्मात्रे विशिष्टाद्वैतिवादस्याद्वैतिभिः स्वीकर्तव्यत्वायोगेऽपि अवशिष्टं सविशेषविषयं प्रपञ्चनं कात्स्र्न्येनाद्वैतिसंमन्तव्यमेव । विशिष्य च सकलवैदिकदर्शनप्रवृत्तिसहमानैरद्वैतिभिः व्यावहारिकदशोत्तीर्णदशानङ्गीकारि विशिष्टाद्वैतिनिरूपिताः व्यवहारभाविनः जीवाणुत्वानेकत्वधर्मभूतज्ञानवत्त्वसर्वेश्वरनियम्यत्वतच्छरीरत्वतदाराधकत्वतत्प्राप्यकत्वादयः श्रुत्या प्रतिपाद्यमानाः न प्रतिक्षेपमर्हन्तीति तद्दूषणप्रपञ्चनमद्वैतिनामनावश्यकमेव । एवञ्च श्रुतिस्वारस्यमिव सूत्रस्वारस्यमपि नान्यथितं भविष्यति ।

अथ सविशेषोपासनं मन्दाधिकारिकमिति मुख्याधिकारिकनिर्विशेषज्ञानसंपत्तयेऽद्वैतप्रचार इति चेत्—एवमियता कालेन प्रचारितेनाद्वैतशास्त्रेण निष्पन्नमद्वैतज्ञानमनुवृत्तवन्तः कतिचित् निर्दिश्यन्ताम् । एकजीव वादेस्थित्वा भवद्भिरेवोच्यते, "शुको मुक्तो वामदेवो मुक्त इत्यादिकं मिथ्या । प्रपञ्चस्यानिवृत्तत्वा"दिति । अतो न कश्चित् गणयितुं शक्यते । अनेकजीववादे स्थित्वाऽप्यालोचयत—'या निशे'ति गीताभाष्ये ह्येवमुक्तम्—"प्राग्विद्योत्पत्तेरविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा च सती सर्वकर्महेतुत्वं प्रतिपद्यते ; नाप्रमाणाबुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः । 'प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म' इति हि कर्मणि कर्ता प्रवर्तते; न, 'अविद्यामात्रमिदं सर्वं निशेव'इति" इति । अत्र वेदस्य यया युक्त्या प्रवर्तकत्वाभाव उक्तः, तयैव युक्त्या प्रत्यक्षानुमानादेर्मानान्तरस्याप्यप्रवर्तकत्वमकामेनापि

स्वीकार्यम् । मूलभूताविद्याविवेकस्याविशिष्टत्वात् । एवं सर्वकर्मविरतः तत्त्वज्ञानी कश्चिदद्वैती कः? उच्यताम्। परमहंसानामपि पूर्वेषामीदृशी स्थितिः साधयितुं न पार्यते । किमुतान्येषाम्। अद्यत्वे संन्यासिनस्त्वधिपतयोऽनधिपतयो वा गृहस्थान् अतिशेरते वैदिकलौकिकेषूच्चावचेषु जपोपासनवर्णाश्रमधर्मप्रपञ्चयात्रानिर्वहणप्रभेदेषु । न हि सर्वमिदं बाधितानुवृत्तिप्राप्तमिति वक्तुं कश्चिदुत्सहेत । अद्वैतनिष्ठासिद्धिशेषतयैव सर्वमिदमाद्रियत इति चेत्—तदेतदुदरभरणार्थमामरणमशेषवृत्तिविषयाविशेषविहितलौकिकलोकप्रवृत्तिप्रतीकाशमधिकं वा गृहस्थे कस्मिंश्चिदेवं न भवितुमर्हतीति निर्विवादम् । एवमनादेः कालात् सविशेषब्रह्म-बहुविधदेवतान्तर-प्रभु-धनिक-पण्डितादिविविधभावानुभावनया परिभ्राम्यन्त इमे, मुख्यः कश्चिदस्ति सिद्धान्त इति अनर्थक्रियाकारिव्याहाराभिवर्धनेन, शाखोपशाखोपचयाय प्रबन्धनिर्माणप्रचारणादिना च कस्याधिकारिणः कमुपयोगं कल्पयन्ति? एकैकोऽपि जीवो भुवि स्वजीवनदशायां यदि निर्विशेषं साक्षात्कर्तुम्, संपन्ने साक्षात्कारे यथा स्थातव्यं तथा स्थातुञ्च न प्रभवति, तर्हि किमितः कर्तव्यमस्ति? सविशेषब्रह्मोपासने तदुपयोगिनि कर्मकलापे च प्रयतितव्यम् । तत्र ऐहिकानि फलान्युपेक्ष्य आमुष्मिकेषु यतमानेन यथा देहातिरिक्त आत्मा कर्ता भोक्ता विज्ञातव्योऽस्ति—अत एव जैमिनीयाः यावदपेक्षितविज्ञानेनापेक्षितसंपत्तौ नाधिके व्यापरितव्यमिति देवतास्वरूपशोधनादिष्वपि न सजन्ति । कञ्चुकोपरि माल्यनिक्षेपस्य कञ्चुकधारिशरीरान्तर्वर्तिजीवात्मतृप्तिकरत्वमिव देवताशब्दप्रयोगमात्रेऽपि तदर्थतत्त्वसंबन्धो वस्तुस्थितो न व्याहन्यत इति। एवं कर्तृगतज्ञानानन्दादिरूपत्वमपि कर्मव्यग्राणां नापेक्षितमिति संप्रतिपद्यन्ते—तथा सगुणं ब्रह्म वासुदेवादिकमुपसंपद्य सालोक्यसारूप्यादि प्राप्य तदधीनभोगप्राप्तये यावत् वेदितव्यमुपासनाद्यनुष्ठानकालस्थितं फलकालभावि च स्वात्मस्वरूपगुणादि, तावद्विदित्वा तत्र श्रद्दधानेन च भाव्यम्। न च निर्गुणवाक्यानां सगुणवाक्यसापेक्षत्ववत् सगुणवाक्यानां निर्गुणवाक्यसापेक्षत्वमस्ति । प्रत्युत प्रपञ्चापलापप्रयोजकज्ञानसंभाव-

नया सगुणब्रह्माद्यामुष्मिकार्थेष्वश्रद्धावल्लरी पर्यायतो नास्तिक्यमेव प्रसुवीत। तत् सत्यमद्वैतिभिरप्यनद्वैतिसरणिरेवानुसर्तव्या स्वयमाप्रायणमिति स्थिते किमर्थोऽयम् अद्वैतस्थापनकोलाहलः?

यत् विशिष्टाद्वैतिभिरुपदिश्यते, तत् तावन्निर्विवादमद्वैतिस्वीकृतम्, कार्योपयोगि च, स्वीकर्तव्यञ्च। यत्तु निर्विशेषं किञ्चित्, तत्राद्वैतिव्यतिरिक्तैः सर्वैरेव वैदिकैरवैदिकैश्च प्रमाणासंभवस्य प्रपञ्चनात् तत् सर्वथा बाध्यं वा सविवादं वा। कार्यानुपयोगित्वं तु निर्विवादम्। सर्वेषामपि वेदवाक्यानां सविशेषपरत्व एव स्वारस्यमिति समर्थयन्ते च सर्वे वैदिकाः। सांख्यादयश्च। 'अथापि यदि कदाचित् तथापि तत्त्वं भवेत्, तर्हि तदधिकारिणो मुख्याधिकारिणः किले'ति चेत्—तदपि तत्त्वं नेति शून्यवादिनो मतं यदि भवेत्, तदधिकारिणस्ततोऽपि मुख्या भवेयुरिति तदप्यादरणीयं स्यात्। वेदस्यार्थः स न भवतीति चेन्न—"प्रकृतैतावत्त्वं हि प्रतिषेधति, ततो ब्रवीति च भूयः" इति सूत्रे ब्रह्मापि निषिध्य वेदार्थस्य वर्णनं केनचित्कृतमिति सूत्रभाष्यत एव ज्ञायमानतया सोऽपि वेदार्थो भवेत्। स तत्र परिहृत इति चेत्—तथैवाद्वैतमपि शारीरके तत्रैव सूत्रे, सर्वतश्च, अन्यत्र चानद्वैतिभिः प्रतिक्षिप्तमिति सोऽपि न वेदार्थ इति तुल्यम्।

अपि च वैदिकमतस्थापनप्रयासः किं जगदप्रलाप्यद्वैतविज्ञानदृष्ट्या, आहोस्विदन्यदृष्ट्या? तैर्वेदाप्रामाण्यस्य च वैदिकलोकतदनुष्ठानतत्फलतदतिरिक्तसर्वप्रपञ्चापारमार्थ्यस्य चाध्यवसितत्वेन परहितार्थप्रवृत्तेरसंभावितत्वात्। स्वभिन्नस्वापेक्षितफललेशाभावेन, स्वसिद्धिप्रतिबन्धकतया च स्वार्थप्रवृत्तेरप्यसंभवात्। परमार्थतया जगन्मन्यमानाश्च स्वार्थे परार्थञ्च सर्वतोमुखं प्रवर्तमानाः अपेक्षितं स्थापयितुं प्रभवन्तीति न तत्राद्वैतिमुखनिरीक्षणमिमे चिकीर्षन्ति। "अद्वैतमते विस्रम्भेणावतीर्णानां परस्सहस्रसंशयसागरसंप्लवापतितमज्जनानां मज्जनानां रक्षणाय मम प्रवृत्ति"रित्यद्वैतज्ञानी मन्यत इति चेत्—तेषामपरमार्थ-

तामविद्वान् अयं कथमद्वैतविज्ञानी? विद्वांश्चेत् कथं व्याप्रियेत? अपरमार्थता-ज्ञानमस्ति; तथापि न तेषां बाध इदानीमिति चेत्—शंखे पीतस्यापारमार्थ्य-ज्ञानमस्ति; पीतरूपबाधस्तु न जात इति पीतकार्ये ततोऽपि तर्हि निर्वर्तयेल्लोकः। अधिकं बाधितानुवृत्तिविचारे वक्तव्यम्॥

वस्तुत एवमनर्थकराद्वैतस्थापनश्रद्धाविजृम्भितमशेषतः परित्यज्य सविशेष-ब्रह्मदेवतापारम्यायाथात्म्यनिर्णये प्रवृत्तिरद्यत्वे अनद्वैतिनामिवाद्वैतिनामपि युज्यते, येन सर्वे सगुणोपासनप्राप्यपुरुषार्थप्रतीक्षाः तत्र परमपुरुषार्थनिर्धारणेन समुचिते शास्त्रार्थे श्रद्दधीरन्। अस्ति खल्वनद्वैतिभिः साधमद्वैतिनामिव तेषां परस्परमपि मतिभेदः। तादृशं सर्वं कार्यकरमुपेक्ष्याकार्यकरेऽनपेक्षिते स्वयमप्राप्ये चाद्वैते अभिमानभूमानं वहन्त इमे सर्वमन्यं भेदं प्रस्मृत्य वयमद्वैतिन इत्येकीभवन्ति। एवं निर्णेयमर्थमनिर्णीयोभयतो भ्रष्टा मा भूवन्निति सगुणब्रह्मयाथात्म्यसंशीलने तैर्यापरितव्यमिति परमाप्ताः कारुणिका अध्यवस्यन्ति। अद्वैतश्रद्धावद्भिरपि कथं स्थेयमिति प्रबोधचन्द्रोदयकार एवोपदिशति। तत्र तृतीयेऽङ्के कापालि-कादीन् हेयकोटौ परिगणय्यैव तुरीयेऽङ्के,

" अमुष्य संसारतरोरबोधमूलस्य नोन्मूलविनाशनाय।
विश्वेश्वराराधनबीजजातात् तत्त्वावबोधादपरोऽभ्युपायः॥"

इति तत्त्वज्ञानादेव मोक्ष इति वर्णनावसरे तत्कारणत्वेन विश्वेश्वराराधनमपि निरदेक्षत्। विश्वेश्वरशब्दस्य जगन्नाथ इति तन्नाटकव्याख्यायां प्रतिपदम्। स्वरसतो जगन्नाथपदं पुरुषोत्तमग्राहि; विश्वेश्वरपदञ्च काशीनाथशिवग्राहि। शिवस्य ज्ञानहेतुत्वञ्च सर्वसंमतम्, "शङ्करात् ज्ञानमन्विच्छेत् मोक्षमिच्छेत् जनार्दनात्" इति स्मरणात्। एवं वदन्नेव विष्णुभक्तिविकलस्य विश्वेश्वरा-राधनं न फलायालमित्यध्यवसाय विष्णुभक्तिप्रपञ्चनपरायण एव राज्ञो विजय-प्रस्तावेन वाराणसीमुपगतस्य सारथिना प्रतिबोधनावसरे, "यत्रैते मरुतोऽपि गृहीतपाशुपतव्रताः धूलिमुद्धूलयन्तः तापसा इव लक्ष्यन्ते" इति अथर्वशिरः-

प्रोक्तपाशुपतव्रतचर्यया तत्र मुक्तिमार्गनिरतान् उपमानविधयोपक्षिप्य, राज्ञो मुखेनापि, “चेतः कर्षति चन्द्रचूडवसतिर्विद्येव मुक्तेः पदम्” इति विश्वेश्वरालयमपि प्रशस्यानिर्भरेण तदतिलङ्घ्य, “पश्य पश्य तदिदं सुरसरित्परिसरालङ्कारभूतं भगवतः पावनमनादेरादिकेशवस्य विष्णोरायतनम्” इति सूते विज्ञापितवति, “एष देवः पुराविद्भिः क्षेत्रस्यात्मेति गीयते। अत्र देहं समुत्सृज्य पुण्यभाजो विशन्ति यम्”इति सहर्षं प्रशंसतो राज्ञो मुखेन दण्डवत्प्रणम्येव कृते दण्डके, ‘वैकुण्ठभक्तस्य लोकस्य संसारमोहच्छिदं देहि बोधोदयं देव तुभ्यं नमः” इत्यनेन विष्णोरेव तत्त्वबोधहेतुत्वमपि दर्शयति। इदमनुसृत्य, ‘विश्वेश्वराराधनबीजजातात्’ इति पूर्वश्लोके विश्वेश्वरपदेन वा बीजपदेन वा विष्णोरपि विवक्षितत्वं विमृश्यावधार्यम्। अथ संग्रामसमये विष्णुभक्त्याः शालिग्रामे भगवतः क्षेत्रे चक्रतीर्थेऽवस्थानादिकं पञ्चमेऽङ्के प्रस्तुत्य सपरिवारया विष्णुभक्त्यैव सर्वस्यापि पुरुषस्य निःश्रेयसप्राप्तिं पूर्णेन नाटकेन न्यरूपयत्। एवं पाशुपतव्रतनिष्ठभूयिष्ठायां विश्रुतविश्वनाथायां वाराणस्यामेव तदतिलङ्घनेन आदिकेशवात्यन्तप्रवणमनसः श्रीकृष्णमिश्रस्याद्वैतिनोऽद्वितीयस्य विष्णुभक्तिनिष्ठा वरिष्ठा अद्वैतश्रद्धाजुषामपि परेषां परमादर्शा भवितुमर्हति।

अद्वैतिषु हि केषुचिदापाततः सर्वदेवैक्यवादिष्वपि प्रायः अविद्याभेदकृतजीवभेदपरामर्शिनः तत्तदविद्याकृतज्ञानशक्तिवैलक्षण्यतया देवा मिथो भिन्ना एवेत्यातिष्ठन्ते। तत्र ब्रह्मशिवगणेशकुमारादिकथापरिशीलनेन पितापुत्रभावादिकं संबन्धमपि स्वीकुर्वन्त्येव। एवमपि फलविशेषव्यासक्तचेतसो गणेशभास्करादिपूजनैदम्पर्यं कतिचित् वहन्ति। एवमपि, विवेचनावसरे प्राप्ते त्रिमूर्त्यतिरिक्तानां निकर्षं तिसृष्वपि मूर्तिषूत्कर्षमध्यवस्यन्त्येव। तास्वपि तारतम्यचिन्तायां पुनर्नोत्सहन्ते। परं तु सूत्रभाष्ये “समाननामरूपत्वात्” इति सूत्रे, “परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्तेः, “यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै”

इति ब्रह्मापरपर्यायात् हिरण्यगर्भात् त्रिमूर्त्यन्यतमभूतादन्यस्य सर्वजगत्कारणस्य निर्देशात्, कार्याधिकरणेऽपि, जगत्कारणपरब्रह्मातिरिक्तस्य कार्यभूतस्य, "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे" इति निर्दिष्टस्य चतुर्मुखस्य उपासनप्राप्यत्वकथनात्, "कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति, तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तः तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्त" इति हिरण्यगर्भादुपरि विष्णोर्वर्णनाच्च चतुर्मुखमूर्तिरितरमूर्तिसमानं भवितुमर्हतीति वक्तव्यं भवति। शिष्यते तु विष्णुशिवमूर्तिद्वयम्। प्रायेण भाष्ये ईश्वरमहेश्वरपरमेश्वरशब्दप्रयोगे देवताविशेषं कं तत्र निर्दिदिक्षतीति विमर्शे वैश्वानराधिकरणे द्युमूर्धत्वादेः परमेश्वररूपत्वभाषणात् द्युमूर्धत्वादेर्विष्णुरूपताया एव प्रसिद्धत्वाच्च नारायण एव परमेश्वर इति सूत्रभाष्येऽभिमत इति चिन्ता प्रसरन्ती न सहसा दूषयितुं पार्यते। पत्यधिकरणे च केवलनिमित्तकारणेश्वरवादिनां सांख्ययोगानुयायिनां तथा तार्किकाणाम् एवं माहेश्वराणाञ्च पक्षो निरासि। माहेश्वराश्च शैवाः पाशुपताः कारुणिकसिद्धान्तिनः कापालिकाश्चेति चत्वारस्तान्त्रिका इत्याहुः। एवं पशुपतिमहेश्वरादिपदवाच्यस्यैव आगमेऽनुक्तमप्युपादानत्वं वेदोक्तत्वात् स्वीकार्यमिति तु नाभाषि। अनन्तरे चोत्पत्त्यसंभवाधिकरणे, प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतो येषाम्, तेषां पक्षस्य प्रत्याख्यानं कृतम्। अत्र पाञ्चरात्रविचारस्यैव क्रियमाणत्वात् ईश्वरपदं नारायणपरमेव। "भगवानेवैको वासुदेव" इत्यादिना च पाञ्चरात्रप्रक्रियामुपर्युपवर्ण्य, "योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा, स आत्मनाऽऽत्मानमनेकधा व्यूह्यावस्थित इति—तन्न निराक्रियते" इति भाषमाणः नारायणस्य द्विविधमपि कारणत्वं कण्ठरवेणाह। गीताभाष्यारम्भे च, "नारायणः परोऽव्यक्तादण्डमव्यक्तसंभव" मिति, प्रथमाध्यायावसाने च, "इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनम्, परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतम्" इत्येवं नारायणपारम्यं स्पष्टमुक्तम्। अतो नारायणमूर्तौ निष्ठा प्रतीयते। तथा, "योगिनामपि सर्वेषां मद्गतेना-

न्तरात्मना । श्रद्धावान् लभते यो मां स मे युक्ततमो मतः ॥" इत्यत्र रुद्रादित्यादिध्यानपरापेक्षया वासुदेवध्यायिनो युक्ततमत्वं भाष्ये व्यक्तमुक्तम् । सप्तमे च, "वासुदेवः सर्व"मिति षट्टे, "य एवं सर्वात्मानं मां नारायणं प्रतिपद्यते, स महात्मा ; एवमप्रतिपत्तौ कारणम्, तैस्तैः पुत्रपशुस्वर्गादि-विषयैः अपहृतविवेकज्ञानाः वासुदेवादन्याः देवताः प्रपद्यन्ते । तेषां च कामिनां तां श्रद्धां स्थिरां स्वीकरोमि । तस्याः आराधितायाः देवतायाः कामान् मयैव सर्वज्ञेन कर्मफलविभागज्ञतया निर्मितान् ते लभन्ते । तेषां फलं विनाशि । एवं समानेऽप्यायासे मामेव न प्रतिपद्यन्ते अनन्तफलाय । अहो खलु कष्टतरं वर्तते इत्यनुक्रोशं दर्शयति भगवान्" इति सर्वं मुक्तकण्ठमाह । एवञ्चेतरदेवतोपासनामपेक्ष्य नारायणोपासने नैर्भर्यं निपुण-माविष्क्रियत एव ।

एवं नारायण एव चतुर्मुखादिसर्वकारणत्वावधारणात् तत्त्वमस्यादिवाक्ये ऽपि तत्पदेन शक्त्या प्रथमत उपस्थाप्यमानो नारायण एवेति गम्यते । कार्याधिकरणे च, 'सगुणविद्याविषया गतिश्रुतयः' इति वदन्, "क्वचित् पञ्चाग्निविद्यां प्रकृत्य गतिरुच्यते ; क्वचित् पर्यङ्कविद्याम् ; क्वचिद्वैश्वानर-विद्या"मित्यादिना अनेकसगुणविद्यापरिगणनावसरे पर्यङ्कविद्यामप्याह ; या कौषीतकिब्राह्मणगता विरजानद्यादिद्वारा प्राप्यवैकुण्ठवर्तिश्रियःपतिगोचरेति स्पष्टम् । एवमत्र नैर्भर्यादेव सर्वत्र प्रसिद्ध्यधिकरणे, 'यथा सालग्रामे हरिः' इति हरेः पुरः स्फूर्तिः, तथा, "व्याप्तेश्च समञ्जस"मिति सूत्रे, "यथा वा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यास" इति । एवं क्रियासमभिहारेणात्मत्वो-पासनाधिकरणादावपि । "भज गोविन्द"मित्यादि चैतत्कर्तृकं प्रसिद्धमेव । अर्वाचीनानेकशङ्कराचार्यकृताः केचिन्निबन्धाः यद्यप्येतत्कर्तृका इति प्रचारं प्रापिताः सन्ति—अथापि निर्विवादमदसीयत्वेन स्वीकृतमात्रमेवास्माकमिह ग्रहणकोटिमाटीकते ॥

एवमादिशङ्कराचार्यादिसूक्तिषु स्पष्टं सतीष्वपि अद्वैतिनां सर्वदेवतैक्यमिति, त्रिमूर्तिसाम्यमिति, विष्णुशिवसाम्यमिति व्यवहाराः, शिवगणेशसुब्रह्मण्यादिप्रावण्यं विष्णुविषयमपेक्ष्यातिशयितञ्च सर्वलोकप्रत्यक्षं दक्षिणदेशे परमनुभूयन्ते। एवं निर्विशेषाद्वैतस्य ग्रन्थैः स्थापनम्, कीदृशसगुणोपासनं परमपुरुषार्थप्राप्त्यन्तरङ्गभूतमित्यविवेचनं च न श्रेयस इति प्रतिबुध्य तत्रावतीर्य स्वाभिमतां सांप्रदायिकीं देवतां निर्णीय तदनुरोधेन स्वकीयां सविशेषनिष्ठामुपयोजयन्ति चेत्—नूनमात्मने बहूपकृतं भविष्यति। अत्र केचित्—विष्णुपारम्यमातिष्ठमानैः शिवद्वेषः क्रियमाणोऽस्माकमसह्यो भवतीति शिवेऽभिमानं प्रदर्शयाम इत्याहुः। तत्रेदं वक्तव्यम्—विवेकिनां वैष्णवानां शिवद्वेषस्य न मात्रयाऽपि प्रसक्तिः। भागवतोत्तमः शिव इति साधूनां दर्शनम्। प्राञ्चः, "विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरम्" इति भगवन्तं स्तुवन्तः शिवस्य स्वापेक्षया परममुत्कर्षमुद्घाटयन्ति। "सर्वज्ञो रुद्र" इति च श्रीदेशिकचरणाः। शिव इति किम्? न कुत्रापि देवतायां द्वेषलेशलवोऽपि श्रीवैष्णवानाम्। तर्हि कथं न पूजयन्तीति चेत—अन्यदेतत्। "अन्तवत्तु फलं तेषा"मिति गीतैव तदाराधनस्य फलं क्षुद्रमित्याह। "प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम्" इति च स्मर्यते। श्रीविष्णुपुराणे च, "शुभाश्रयः स चित्तस्य सर्वगस्याचलात्मनः। त्रिभावभावनातीतो मुक्तये योगिने नृपः॥ अन्ये तु पुरुषव्याघ्र! चेतसो ये व्यपाश्रयाः। अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः॥" इत्यत्र (6-7) श्रीधरीयेऽप्युक्तम्—"अन्यदेवतानिन्दया भगवन्मूर्तिधारणामेव दृढीकरोति" इति।

पाञ्चरात्राधिकरणे बहुष्वंशेषु पाञ्चरात्रप्रामाण्ये सत्येव जीवोत्पत्त्यादिपरतया प्रतीयमानवाक्यमात्रस्याप्रामाण्यं शाङ्करभाष्यसंमतमिति प्रागेवावोचाम। तत्र प्रथमसूत्रे भाष्ये, "प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिम्, नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति पंक्तिरस्ति। "उत्पत्त्यसंभवा"दिति सूत्रस्य सूत्रकाराभिमतरीत्याऽर्थं भाषमाणः कथं सूत्रकारवचनमेव तत्र प्रमाणयति। तेन ज्ञायते मध्ये कश्चिदाशङ्कते—"उत्पत्त्यसंभवा"दिति सूत्रं पूर्वपक्ष-

सूत्रमस्तु ; "विज्ञानादिभावे वा" इति च सिद्धान्तसूत्रम् । तेनोत्पत्ति-रेव स्थाप्यते पाञ्चरात्रवत् सूत्रकारेणापीति । तत्परिहारार्थमियं पङ्क्तिः—न हि सूत्रकृतो जीवोत्पत्तिरिष्टा स्यात् । तेन स्पष्टमेव, "नात्मा श्रुते"रिति तन्निषेधादिति । एवं भाषमाणश्चायं पूर्वपक्षसिद्धान्तोभयपरतया सूत्रविभागं पूर्वाचार्यकृतं परासितुमिच्छतीति ज्ञायते । एतदाशयश्च पूर्वाभिमतयथाव-स्थितार्थव्युत्पादनेन श्रीभाष्ये निरस्तः । एवं शाङ्करभाष्ये पाञ्चरात्रांशिका-प्रामाण्यपरे सत्यपि तदनुयाय्यपि भामतीव्याख्याता कल्पतरुकारः पाञ्चरात्रस्यां-शतोऽप्रामाण्यममृष्यमाणः पाञ्चरात्रे जीवोत्पत्तिश्रुतिर्गौणीत्याह । पाञ्चरात्रे श्रुतां जीवोत्पत्तिमेव परमार्थतया स्वीकृत्य श्रुतिष्वनुत्पत्तिवचनमेव गौणं कस्मान्न नीयत इत्याशङ्कामपि परिहरन् ह्येवमाह, "बुद्धिपूर्वकृतिः पाञ्चरात्रं निःश्वसितं श्रुतिः । तेन जीवजनिस्तत्र सिद्धा गौणी नियम्यते" इति । न हि 'यजमानः प्रस्तरः,' 'आदित्यो यूपः' इत्यादौ गोण्याश्रयणमप्रामाण्यस्था-पनाय । 'अनाप्तवाक्यानां भ्रान्तिप्रमादविप्रलिप्सादिमूलत्वादप्रामाण्यान्नार्था-न्तरकल्पनार्थे यतितव्यम् ; आप्तवाक्यानां तु अप्रामाण्यायोगात् विवक्षितार्थं लक्षणया गौण्या वा संपाद्य प्रामाण्यमास्थेयम्' इति नियमात् भगवन्मुखोद्गते च पाञ्चरात्रे कथमप्यप्रामाण्यसंभावनाया अयोगात् यजमानप्रस्तरादिवत् गौण्या-श्रयणेन प्रामाण्यं संपाद्यमिति कलयन् कल्पतरुकारो भवद्भाष्यं परास्यतीति वा, तदपि गौण्या नेयमिति वा मन्यत इत्येव स्वीकार्यम् । आह च भगवतः परमाप्तत्वं तत्रैव, "पाञ्चरात्रकर्तुर्वासुदेवस्य वेदादेव सर्वज्ञत्वावगमात् कपिल-पतञ्जल्यादीनाञ्च जीवत्वात् पाञ्चरात्रस्य पुराणेषु बुद्धादिदेशनावत् व्यामोहार्थमीश्वरप्रणीतत्वाश्रवणात् न योगाद्यधिकरणगतार्थता" इति । पूर्णप्रामाण्ये च पादसङ्गतिः कथमिति कलयंश्चाह—" अवान्तरसङ्गतिवशादिह पादेऽस्य लेखः" इति । प्रागेव चास्माभिरत्र संगत्यंशो वक्तव्यमुक्तम् । इतः प्राक्तने च पत्यधिकरणे यथामूलम्—

शैवादेरप्रमाणत्वं स्वयमप्यभ्युपागमत् ।
असोढशिवपारम्यो विष्णुप्रावण्यमुज्जगौ ॥ ४२ ॥

यदाह तत्र स एव कल्पतरुकारः—

"तत्सुखाद्वैतबोधात्मस्वभावहरये नमः ।
वेदान्तैकप्रमाणाय कुतर्काणामभूमये ॥"

इतीति पश्यतास्य कल्पतरुकृतोऽपरिमितां विष्णुभक्तिम् । तत् व्यक्तम्, विष्णुनामा स वेदेषु वेदान्तेषु च गीयते इति पराशरोक्तरीत्या वेदान्तवेद्यो हरिरेव; न तु हरादिरिति दृढमयमभिप्रैतीति । एवं पाञ्चरात्रस्य व्यामोहकत्वाभावे कल्पतरुकारेण प्रतिष्ठापितेऽपि यत् परिमळकारः एकायनशाखायामविस्रम्भमावहन्, शुक्लयजुर्वेदिनश्च दूषयन् पाञ्चरात्रस्य व्यामोहकत्वं वक्तुमुद्यम्य मूलविरोधात् बिभ्यत्, 'मनोदीपिकायां मनोभातं सर्वं वक्तुमुचित'मिति कृतां मनोदीपिकां निर्दिशन्नेव विरमति स्म, शैवग्रन्थांश्चानेकान् आरचयत्, तत एवायमाधुनिकः शैवाभिनिवेशकल्पितः क्षोभः । एवंस्थिते श्रीभाष्यसरणिचोरत्वेन प्रसिद्धश्रीकण्ठभाष्यं शैवं शाङ्करभाष्यादपि पूर्वत्वेन केचिद् वक्तुमुद्युञ्जते । अहो ! अभिनिवेशः ! अहो ! तदनुगुणं श्रीकण्ठभाष्यनिर्माणनैपुण्यम् !

प्रायश्च प्रपन्नाः फलार्थव्यापारतो विरमन्ति । आज्ञानुज्ञाविभागेन द्विधा स्थितायां शास्त्रीयपद्धतौ आज्ञामात्रव्यापृताः, अनुज्ञामप्यौचित्ये सत्येव कुर्वाणाः अन्यदोपेक्षमाणाः प्रपन्नाः अनावश्यकेषु कार्येषु नैव सजेयुः । प्रत्युत देवतान्तरतो निवृत्तिकारणं शास्त्रीयं लौकिकञ्चास्तीति च ते मन्यन्ते । तावता तेषां न द्वेषलेशोऽपि । एवम्भूतान् अद्वेषिणः वैष्णवान् द्वेषिणः कल्पयन्त इमे, "शप्यमानस्य यत् पापं शपन्तमधिमच्छति" इत्यादिनीत्या स्वयमपि द्वेषिभिरनुभाव्यं फलं भजेरन्नित्यनुक्रोशन्ति च । पृच्छन्ति च, वैष्णवः शिवद्वेषी इत्येतदर्थं शिवाभिमानः क्रियते चेत्, तावता कथं शास्त्रगतिरनुसृता स्यात् ? शिव एव परम इति श्रुतिस्मृतीतिहासपुरस्सरं तथा संप्रदायपुरस्सरञ्च स्थापयन्तो यदि तदैकान्त्यं भजेरन्, तच्छोभेत । अथ भारतभागवतरामायणपरायणाः सन्तो नारायणपारम्यं निष्कृष्टं पारयन्ति, तर्हि तथैवाऽनुवर्तन्ताम् । तावता देवतान्तरपूजाः परित्याज्या इति न ब्रूमः । तत्तत्फलकामनया तत्र तत्र

प्रवृत्तेरासृष्टिसन्ततत्वात् । तथापि मुख्यामुख्यविचारेण सरणिमेकामनुसृत्य श्रेयो विन्दन्तु ।

दैवमस्तु यथायोगं तात्त्विकं व्यावहारिकम् ।
अव्यत्यये तु तस्य स्याद्वैकरस्यं बहुत्र नः • ॥ ४३ ॥
प्रायो भेदस्य सर्वत्र क्लृप्त्यैव परितुप्यताम् ।
स्यादिष्टः क्षोभ एतादृक् सामरस्यं सुखाय नः ॥ ४४ ॥

तत् किमनेन, 'वैदिकावैदिकदर्शनानि सर्वाणि समानी'ति वा, वैदिकानि परं समानी'ति वा केवलमाचरणविरुद्धव्याहारमात्रेण । पारमार्थिकं तत्त्वं यथा किञ्चित्, तथा व्यावहारिकं तत्त्वमप्येकरूपं मन्तव्यम् । अन्यत्तु नानामतिकल्पितमखिलं भवद्भिः प्रातिभासिकं ग्राह्यम् । तथा च शारीरकविचारितं ब्रह्म निर्विशेषं किञ्चिदिति निरूपणमपेक्ष्याद्यत्वे अशेषजनापेक्षितं निरूपणं तावदिदमेव, यदस्मिन् शारीरक एव प्राधान्येन वा अप्राधान्येन वा आदित आ समाप्तेर्निरूपितं सविशेषं ब्रह्म किं तत्, यस्य संराधनेन श्रेयो विन्देमेति । अलं बहुना ॥

तत् सिद्धं शतदूषण्यां षट्षष्टितमवादतया स्थितस्य 'परमते सूत्रस्वारस्यभङ्ग'वादस्य परीक्षणं, शतभूषण्याम्, प्रथमं तन्निबन्धनञ्च नाद्वैतीष्टसाधकम्; प्रत्युत स्वारस्यभङ्गस्यानिष्टस्य भङ्ग्यन्तरेणाङ्गीकारात्रिष्कारकमेवेति ॥

वेदव्याससुदर्शनार्यविहिता श्रीभाष्यटीका वद-
त्यस्वारस्यमशेषसूत्रगतमप्यद्वैतमार्गेषु यत् ।
आचार्याः शतदूषणीप्रकरणेऽप्यादृत्य भङ्ग्यन्तरं
यच्चाहुः, परिशीलने तदखिलं दिङ्मात्रमेतत् ध्रुवम् ॥ ४५ ॥
नास्ति स्वारस्यलेशोऽप्यवगमनविधौ निर्विशेषस्य सत्यं
शास्त्रे शारीरकेऽस्मिन् तदिह बहुमुखं ताड्यते जैत्रभेरी ।
नास्त्येवं निर्विशेषप्रवचनफलमप्यद्य मीमांस्यतां तत्
किं तत्, यत् ध्येयमिष्टं सगुणमिह मितं ब्रह्म तच्छ्रेयसे वः ॥४६॥

एकैकसूत्रपरसंमतदूष्यरीति-
भङ्गप्रपञ्चनमिहास्ति पृथग्विधेयम् ।
यत्किञ्च मुख्यमिह नः शतभूषणीस्थ-
दुष्टार्थदूषणविधौ प्रतिबोधितं तत् ॥ ४७ ॥

परसिद्धान्तदोषाणां भविष्यति विवेचनम् ।
तत्रापि सूत्रास्वारस्याद्येवं व्यक्तीभविष्यति ॥ ४८ ॥

श्रितवेदमौलिदेशिकवपुषा विहितः प्रसाधितोऽद्यैवम् ।
सूत्रस्वरसविभङ्गः परमतगोऽन्तः सता हयास्येन ॥ ४९ ॥

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

---

श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः ।

## (२) ब्रह्मशब्दवृत्त्यनुपपत्तिप्रसाधनम् ॥

निध्यायन् गुरुतल्लजं निरुपमं श्रीरङ्गरामानुजं
निःसन्देहविपर्ययं निखिलमप्यर्थं विचिन्त्योदितम् ।
एकस्मिन् विमतेऽपि दूषणशरश्रेणीशतप्रेरण-
प्रावीण्यं शतदूषणीश्रवणतः संदर्शयिष्ये क्रमात् ॥ ५० ॥

प्रथमवादपरीक्षाप्रवृत्तः शतभूषणीकारः भागस्यास्य, "ब्रह्मणि शब्दवृत्त्यनुपपत्तिवादपरीक्षे"ति नाम निक्षिप्य तदनुगुणं "तत्त्वमसी" त्यादिवाक्यार्थविचारे व्याप्रियत । शतदूषणीप्रथमवादस्तावत् ब्रह्मशब्दवृत्त्यनुपपत्तिवादनामा ब्रह्मशब्दमात्रस्य वृत्तिविषये परमतेऽनुपपत्तिं प्रदर्शयति ; "अथातो ब्रह्मजिज्ञासे"ति ब्रह्मशब्दस्यैव प्रथमं प्रस्तुतत्वात् । एवं स्थिते वादस्य नामाप्यविज्ञाय तत्र विचार्यमाणं विषयञ्चाविमृश्य तत्त्वमस्यादिकोलाहलोऽयमकाण्ड-

ताण्डवमेव। अखण्डार्थविचार—शब्दावेद्यत्ववादादिषु वक्तव्यस्यार्थस्यात्र का प्रसक्तिः? अस्तु तावदिदम्; अथ तदुक्तमेव विमृशेम—

"तत् त्वमसी"त्यादौ ईश्वरत्वजीवत्वोपलक्षितं चिन्मात्रं पदद्वय-प्रतिपाद्यमिति कृत्वा निर्विशेषब्रह्मस्वरूपप्रतिपादनपरत्वं सर्वत्र वेदान्ते स्वीक्रियतेऽद्वैतिभिरित्युक्तं प्रथमम्। तेन सर्वस्य वेदान्तस्य निर्विशेषपरत्व-निश्चयः तत्त्वमसिवाक्यार्थनिर्णयाधीन इति सिद्ध्यति। तत्त्वमसिवाक्यस्यार्थ-निर्णयश्च सर्वत्र समानाधिकरणवाक्येषु लोकावगतव्युत्पत्तिमूल इत्येव वक्तव्यम्। अन्यथा स्वेच्छया किञ्चिदर्थकल्पने तस्य स्वारसिकत्वाभावेनासिद्धौ तन्मूलस्य सर्ववेदान्तार्थनिर्णयस्याप्यनापत्तेः। लोके च समानाधिकरणवाक्यानां विशिष्टैकार्थपरत्वमेवानुभविकमानुशासनिकञ्चेति तदवसरे वक्ष्यामः। संप्रति तत्र तद्भाष्यमेव प्रमाणयामः।

तत्र, "व्याप्तेश्च समञ्जस"मिति सूत्रे, 'ओमित्येतदक्षरमुद्गीथ-मुपासीते'त्यत्र शाङ्करभाष्ये, "अक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणेऽध्यासापवादैकत्वविशेषणपक्षाणां प्रतिभासनात् कतमो न्याय्यः" इति विचारं प्रस्तुत्य—"अध्यासो 'नाम ब्रह्मेत्युपासीते'त्यादौ; नामबुद्धावनु-वर्तमानायामेव तद्विरुद्धबुद्धेः स्वीकारात्। यथा प्रतिमायां विष्णुबुद्धिः। अपवादः तत्त्वमसीत्यादौ; तत्र यथावस्थितात्मबुद्ध्या देहेन्द्रियादिसङ्घाते आत्मबुद्धेर्निवर्तनात्। एकत्वं 'द्विजोत्तमो ब्राह्मण'इत्यादौ। विशेषणं 'नीलमुत्पलम्' इत्यादौ" इति विवृतम्। प्रकृते उद्गीथाक्षरस्थले विशेषणपक्ष एवादर्तव्यः, पक्षान्तराणां सावद्यत्वादिति भाषित्वा, तत्रतत्रावद्यञ्चोप-पादितम्। अध्यासपक्षे, 'गौर्वाहीकः', 'सिंहो माणवकः' इत्यादाविव लक्षणा स्यात्। (फलकल्पना च)। अपवादपक्षेऽप्यत्र न फलम्। एकत्वपक्षे च समानाधिकरणस्थले एकेनैव पदेन विवक्षितार्थसमर्पणात् पदान्तरं व्यर्थमिति निष्प्रयोजनं शब्दद्वयोच्चारणं स्यात्। अतो विशेषणत्वपक्षः श्रेष्ठः, उद्गीथभूतमक्षरमुपासीतेति। नन्वत्राप्युद्गीथावयवमक्षरमिति लक्षणा

स्यात् । स्यात् । पक्षान्तरलक्षणामपेक्ष्य परिग्राह्यैवेयम् । अवयविवाचिनः शब्दस्यावयवे प्रयोगश्च सहजः, 'पटो दग्धः', 'ग्रामो दग्धः' इत्यादाविति ॥

इतो भाष्यादंशद्वयमस्माभिर्ग्राह्यमस्ति—एकस्तावत् तत्त्वमसीत्यत्रापवादे सामानाधिकरण्यमिति; अन्यश्च विशेषणपक्षः श्रेष्ठ इति । यदि तत्त्वंपदाभ्यां स्वरूपमात्रं विवक्षणीयमिति भाष्यकृदाशयः स्यात्, तर्हि एकत्वपक्षे तत्त्वमसीत्येतन्निवेशयेत् । तदा च तत्पक्षे यो दोषः, "निष्प्रयोजनं शब्दद्वयोच्चारणं स्यात्, एकेनैव विवक्षितार्थसमर्पणात्" इत्युक्तः, स तत्त्वमस्यादिकमप्यास्कन्देत् । तर्हि, वैश्वदेव्यामिक्षा, पिकः कोकिलः, विज्ञानमानन्दमित्यादौ कथं निर्वाह इत्याशङ्का भामत्यां परिहृता तत्रतत्रामिक्षात्व – विश्वदेवदेवताकत्व – पिकपदवाच्यत्व – कोकिलत्व—विज्ञानत्वानन्दत्वरूपप्रवृत्तिनिमित्तभेदप्रदर्शनेन । एतेन सत्यं ज्ञानमित्यादिषु ब्रह्मपरसमानाधिकरणवाक्येषु प्रवृत्तिनिमित्तभेदपरित्यागिनः अखण्डब्रह्मबोधप्रयासिनः परे विज्ञानानन्दवाक्यार्थव्युत्पादिकया अनयैव भामत्या निरस्ताः । कल्पतरुस्त्ववाचीनवासनया अन्यथयति । अस्त्वेतत्; एवमेकत्वपक्षेऽनिवेश्य अपवादपक्षे तत्त्वमसिवाक्योदाहरणात् तदनुगुण एव तदर्थो विमृश्यः । अहंत्वमर्थतया अभिमतो देहेन्द्रियादिसङ्घातो बाध्यते ईश्वररूपात्मप्रतिबोधनेन, रजतमिव शुक्तिप्रतिबोधनेनेति । ननु देहादिसङ्घातावच्छिन्नात्मा त्वमाद्यर्थः । तत्र तच्छब्दार्थेश्वराभेदः प्रत्याय्यत इति चेत्—तर्हि सङ्घातावच्छिन्नत्वबलेन तद्भिन्नत्वे आत्मनि प्रागेव ज्ञाते तत्त्वमसीत्यस्य देहेन्द्रियसङ्घाते आत्मबुद्धिनिवर्तकत्वं भाष्योक्तं न घटते । यदि अस्य भाष्यस्य साक्षात् अपवदनतात्पर्यकत्वं नेष्यते, अर्थादेव विपरीतभ्रमनिवृत्तिरिति, तर्हि विशेषणादिपक्षाविशेषता स्यात् । सर्वथा एतद्भाष्यविरुद्धः ऐक्यपरः स्वरूपलक्षणावादः । नूनमेतद्भाष्यमेव मूलं कृत्वा नैष्कर्म्यसिद्धावुक्तम्, "योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव । ब्रह्मास्मीति धियाऽशेषा ह्यहंबुद्धिर्निवर्तते ॥" इति । अत एव, "नेदमभेदे सामानाधिकरण्यम्, किन्तु बाधायाम्" इति

सिद्धान्तलेशसङ्ग्रहेऽप्युक्तम्; ईशजीवयोर्बिम्बप्रतिबिम्बभावेऽप्यभेद औपचारिक एव। प्रतिबिम्बस्य बिम्बाधीनत्वं वा, वस्तुतः प्रतिबिम्बाभाव एव वा तत्र भवेत्। आत्मत्वोपासनाधिकरणे तु भाषितम्, "न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्युपगच्छामः। किं तर्हि? संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितम्" इति। तत्र त्वमर्थसंसार्यात्मोद्देशेनेश्वराभेदः प्रतिपाद्यत इत्यस्य प्रतीयमानत्वेऽपि, संसारित्वरूपत्वंपदप्रवृत्तिनिमित्तबाधस्य स्वीकृतत्वेऽपि, ईश्वरत्वरूपतत्पदप्रवृत्तिनिमित्तबाधोऽपीष्ट इति दुर्वचम्। ईश्वरे संसार्यात्मत्वविधाने ईश्वराभावप्रसङ्ग इति संसारिणीश्वरात्मत्वं प्रतिपाद्यत इति अपहतपाप्मत्वादिगुणतारूपेश्वरत्वविधानात् तत्पदप्रवृत्तिनिमित्तत्यागायोगात्। नन्विदानीममेव जीवस्येश्वरत्वे विधिनिषेधशास्त्रवश्यत्वं न स्यात्। प्रबोधानन्तरमीश्वरभावश्च दुर्वचः। निर्विशेषस्यैकस्यैव तदा भावात् जीववदीश्वरस्यापि बाधितत्वादिति चेत्—तर्हि, "ईश्वरस्यैव संसार्यात्मत्वं नोच्यते: किन्तु संसारिण ईश्वरात्मत्व"मिति भाष्यमर्थशून्यम्। संसारिणः पश्चात्काले ईश्वरात्मत्वं निर्विशेषैक्यरूपं यदि विवक्षितम्, ईश्वरस्यापि संसार्यात्मत्वं निर्विशेषैक्यरूपं तदेति सुवचमिति को विशेषः?। यदि चोभयत्र विशेषणत्यागेन स्वरूपमात्रविवक्षा, तर्हि एकतरस्यान्यतरैक्यं नोच्यते, अन्यतरस्य त्वेकतरैक्यमिति किमित्युच्यते। हानिरहानिर्वा पक्षद्वयेऽपि समेति को विशेषः? तस्मादपवादे वा सामानाधिकरण्यं भवतु, एकत्वे वा; पदद्वयेऽपि विशेषणत्यागेन स्वरूपमात्रविवक्षा न भवद्भाष्यसंमता। विज्ञानानन्दवाक्ये प्रवृत्तिनिमित्तभेदवादिभामतीविरोधश्च। विज्ञानत्वादेर्वस्तुतो मिथ्यात्वं न वेत्यन्यदेतत्।

ननु प्रवृत्तिनिमित्तांशे व्यक्त्यंशे च यद्येकत्वम्, तर्हि पर्याययोः सह प्रयोगायोगात् एकत्वे सामानाधिकरण्यमेवासंभवि। यदि च प्रवृत्तिनिमित्तांशे भेदस्वीकारः, तर्हि विशेषणपक्ष एव पर्यवसानमिति एकत्वपक्षो न युक्त इति चेत्—इदमेव कारणं पुरस्कृत्य एकत्वपक्ष उपेक्षितो भाष्य इत्यस्तु।

वस्तुतो न विशेषणपक्षैक्यम् ; समानाधिकरणपदोक्तप्रवृत्तिनिमित्तयोर्विवक्षित-विशेष्यमात्रवृत्तित्वेन समन्वयत्वे एकत्वपक्षः, नीलत्वोत्पलत्वयोः नीलो-त्पलातिरिक्तेऽपि प्रत्येकं सद्भाववदतिप्रसक्तत्वे तु प्रवृत्तिनिमित्तयोर्विशेषणत्वपक्ष इति भेदात् ।

उक्तभाष्यग्रन्थे विशेषणपक्षस्य श्रेष्ठताया वर्णनात् यदि तत्त्वमसीत्या-दावपि स पक्षः संभवेत्, तर्हि पक्षान्तरग्रहणमनुचितमिति भाष्यकृत् स्वीच-कारेति स्पष्टम् । अपवादपक्षेऽप्यध्यासपक्ष इव लक्षणा अवश्यम्भाविनी । अबाधेनोपपत्तौ बाधायोगादपि स पक्षस्त्याज्यः । भवति च, 'नीलमुत्पल'मित्या-दाविवात्रापि विशेषणत्वम् । तत्रापि नैल्यादित्यागेन व्यक्तिमात्रलक्षणावादस्तु एतद्भाष्यनिरस्त एव । कथमत्र विशेषणत्वमिति चेत्—ओंकार उद्गीथ इत्यत्र कथम् ? अंशांशिभावादिति चेत्—तत एव । ननु समुदायवाचिन एकदेशे प्रयोगो नानुचितः ; पटत्वादेः सर्वावयवपर्याप्तत्वेऽपि प्रत्यवयवं स्वरूपसंबन्धसत्त्वात् "पटो दग्धः" इत्यस्य "पटत्वाश्रयो दग्धः" इत्यर्थसंभवात् । जीवस्तु नेश्वरांशः । संसारित्वरूपविपरीतधर्मावच्छिन्नस्य जीवस्य सर्वज्ञत्वनिरतिशयानन्दत्वादिगुणाकरस्येश्वरस्य च भेद एव सर्वप्रमाणसिद्ध इत्यभेदायोगात् । अतो विशेषणवैलक्षण्यप्रयुक्तत्वाद्विरोधस्य विशेषणत्यागेन स्वरूपलक्षणमैक्यं वक्तव्यमिति चेत्—न । विशेषणयोर्भेदकत्वे स्वरूप-लक्षणायामप्यैक्यायोगात् । घटः पट इत्यत्र घटत्वपटत्वरूपविरुद्धधर्मत्यागे कृते किं व्यक्त्योरैक्यं भवितुमर्हति ? भेदस्य नित्यस्य विशेषणयोः शब्दार्थ-त्वत्यागमात्रेण परिहरणायोगात् । अथ न वयं विशेषणयोरशब्दार्थत्वमात्रं ब्रूमः ; यत्प्रयुक्तो विरोधः, तयोर्विशेषणयोर्मिथ्यात्वमेवेति नैक्यानुपपत्तिरिति चेत्—किमैक्यबोधानन्तरं तदन्यथानुपपत्त्या विशेषणमिथ्यात्वकल्पना, किं वा प्रागेव मिथ्यात्वसिद्ध्या विशेषणत्यागेन ऐक्यबोधः ? नाद्यः ; मिथ्यात्वाग्रहणे ऐक्यप्रतीत्ययोगात् । नान्त्यः ; साधकप्रमाणान्तरादर्शनात् । ऐक्यान्यथानुपपत्तिरूपश्रुत्यर्थापत्त्या हि मिथ्यात्वकल्पनेत्युच्यते । किंच आदित्यो

यूप इत्यादावप्यैक्यश्रुत्यन्यथानुपपत्त्या विशेषणमिथ्यात्वस्य, तत्सिद्धये प्रपञ्चे-श्वरमिथ्यात्वस्य च कल्पनया स्वरूपैक्यबोधः कस्मान्नोत्प्रेक्ष्यते ? कस्मात् गौण्या निर्वाहस्थापनं तत्र तत्सिद्धिपेटिकायाम् ? प्राशस्त्यतात्पर्यग्राहक-प्रमाणानुरोधेन यादृशार्थस्वीकारे प्राशस्त्यं सिद्ध्येत् तादृशार्थविवक्षा तत्रेति चेत्—इहापि तत्त्वमसीति वेदनाधीनतायाः "अथ संपत्स्ये" इति परज्योतिरुपसंपत्तौ कथनात् परं ज्योतिरुपसन्नस्य चान्यत्र, "जक्षत् क्रीडन् रममाण" इति ब्रह्मतुल्यभोगवर्णनात् तदनुरोधेन तत्साधर्म्यविवक्षैवालमिति विशेषणमिथ्यात्वतत्साधकजगन्मिथ्यात्वादिकल्पनाशतं व्यर्थमेव । वस्तुतो लक्षणालेशमप्यन्तरा विशेषणत्वपक्षसंभवस्तदवसरे दर्शयिष्यते ॥

किञ्च ब्राह्माधिकरणे "एवमप्युपन्यासा"दिति सूत्रभाष्ये ब्राह्मस्या-पहतपाप्मत्वादिसत्यसङ्कल्पत्वान्तधर्मजातस्य मुक्ते सद्भावः सिद्धान्तितः । तादृ-शधर्मविशिष्टस्य तत्त्वमसीत्यत्र विवक्षयैक्यवर्णनसंभवात् किमिति स्वरूपलक्षणा ? न च निर्विशेषे कथं ते धर्माः स्युरिति वाच्यम्—तर्हि चितितन्मात्रपक्षस्य औडुलोमिसंमतस्यैव सिद्धान्तत्वापत्तेः । व्यावहारिकसत्यत्वं तेषां धर्माणाम-स्तीति तदुक्तिरिति चेत्—कथं मुक्तौ व्यावहारिकधर्मसद्भावः ? मुक्तावभावे-ऽपि मुक्तिविषयविचारस्य व्यवहारकाल एव क्रियमाणतया ते उक्ता इति चेत्—असंबद्धमेतत् । संबद्धत्वे वा तत्त्वमसिवाक्यार्थविचारस्यापि व्यवहारदशायामेव क्रियमाणतयाऽत्रापि धर्मविवक्षा न त्यागमर्हति । सिद्धान्तले-शसंग्रहे च, 'विद्योदये भवन् मोक्षः कीदृश' इति विचार्य, 'अपहतपाप्मत्व-सत्यकामत्वसत्यसंकल्पत्वादिगुणाष्टकविशिष्टेश्वरभाव एव मोक्षः श्रुतिसूत्र-भाष्याद्यनुगुण' इति निगमितमिति च मुक्तौ गुणाभावकथनमयुक्तम् । एवञ्च तत्क्रतुनयात् विद्यापि गुणविशिष्टविषयिण्येव भवितुमर्हतीति पदद्वये स्वरूप-लक्षणाया नैव प्रसक्तिः । गुणविशिष्टेश्वरभावरूपमोक्षपक्षस्तत्र व्याख्यात्रा अच्युतकृष्णानन्दतीर्थेन खण्डित इति चेत्—एवं श्रुतिसूत्रभाष्यतदनुसारिपर-शङ्कराचार्याप्पय्यदीक्षितग्रन्थादिखण्डकः अच्युतकृष्णानन्दः व्याख्यातृतल्लजो

मन्यते, प्रथमाचार्यपरमपुरुषप्रभृतिस्वाचार्यपर्यन्तगुरुपरम्परानिविष्टसर्वाचार्यविषयाधिकगौरववहनपूर्वकं श्रीदेशिकचरणान् प्रतिवादं प्रशस्य शतदूषण्यर्थं सुष्ठु प्रतिष्ठाप्य व्याख्याविधायिनश्चण्डमारुतकाराः महाचार्याः शतदूषणीखण्डकत्वेन मन्यन्त इति अहो! दूषणसंरम्भः!

**भवद्भाष्ये,** "अनारब्धकार्ये" इति सूत्रे सिद्धावस्थं प्रस्तुत्य, "स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते" इत्युक्तम्। ब्रह्मसिद्धिकारस्तु **मण्डनमिश्रो** नियोगकाण्डे, स्थितप्रज्ञस्तावत् न विगलितनिखिलाविद्यः सिद्धः, किंतु साधक एवावस्थाविशेषं प्राप्तः स्यात्" इतिलिखन् भाष्यं खण्डयति। किमयं मण्डनमिश्रः खण्डको मण्डको वेति भवन्त एव विमृशन्तु। अत्र **भामत्याम्,** "स्थितप्रज्ञस्तु न साधकः तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात्। निरतिशयस्तु स्थितप्रज्ञः" इति मण्डनमिश्रः खण्डितः। व्यक्तमिदं कल्पतरौ। एवम्भूत एव भामतीकारः, विद्याञ्चाविद्याञ्चे"ति ईशावास्यमन्त्रार्थमन्यथयति—मन्त्रोऽयमविद्वद्विषयः सगुणोपासकपरो योजित॰उपनिषद्भाष्ये। भामत्यां तु समन्वयसूत्रेऽन्ते, तत्र मन्त्रे, "अविद्यया मृत्युं तीर्त्वा" इत्यस्य अविद्यया तत्कार्येण वृत्तिरूपज्ञानेन मृत्युम् अविद्यां तीर्त्वा उच्छिद्येति निर्गुणविषय एव योजना कृतेति। तत्र भाष्योदाहृतश्रुतीनां व्याख्यानावसरे **परिमले,** "इह श्रुतिव्याख्यानेषु अस्नाविरं सिरारहितमिति व्याख्यातम्—ईशावास्योपनिषद्विवरणानुसारेण। प्राक् तु स्नाविरम् अविगलितमिति टीकानुसारेण व्याख्यातम् (अनेन भामतीकारोऽपि स्वातन्त्र्येण किमपि वदति, नाचार्यान् अनुसरतीति सिद्धम्)। एवमन्यत्रापि मतभेदेनाविरोधो द्रष्टव्यः। टीकायां विद्याविद्ययोः कार्यकारणभावं निवर्त्यनिवर्तकभावञ्चोपपाद्य तदर्थविषयत्वेन, विद्याञ्चाविद्याञ्चे'ति मन्त्रस्योदाहृतत्वात् तदनुसारेण मन्त्रं योजयति अविद्यामितीति सविमर्शं कल्पतरुरवतारितः। प्रस्थानभेदश्च सर्वत्र भवतां प्रसिद्ध एव। श्रुत्यर्थे, सूत्रार्थे

अधिकरणशरीरे च तत्र तत्र तत्तदुत्प्रेक्षिता विचित्रा विधाः खल्वध्यक्षगोचरा एवावदधताम् । एवं भवद्भाष्यव्याख्यासंतानेषु पूर्वपूर्वखण्डकत्वमुत्तरोत्तरस्य बहुलं दर्शयेम । कथं तेषां व्याख्यानत्वमिति च विचार्यम् । महाचार्यास्तु चण्डमारुतकाराः शतदूषणीकारपरमदेवता इति तदन्यथाकरणं सर्ववेदान्तान्यथा-करणसमर्थैरपि न शक्यमित्यलमनुप्रसक्तेन ॥

किञ्चाखण्डचैतन्यस्वरूपाविर्भावत्मकमोक्षार्था प्रवृत्तिरयुक्ता । यदि दरिद्रः कश्चित् स्वयं धनिकत्वनिबन्धनं भूमानमधिगन्तुमपारयन् असूयुर्धनिकमपि महता प्रयत्नेन दरिद्रयेत, तादृगिदं स्यात् । कामं वयं संसारे बंभ्रमीमो बहुलं दुःखेन बाध्यमाना इति, युज्यतां नस्तथाविधमुक्त्यर्थे प्रयत्नः । न हि तदा विशेषत आनन्दो भविष्यतीति मुक्त्यर्थप्रवृत्तिः, शुद्धस्वरूपभावात् । स्वरूपस्य च सुखानन्दादिबहुसुखपर्यायशब्दव्यवहार्यत्वेऽपि शोधने दुःखाभाव-मात्रत्वात् । ईश्वरस्तु अनवधिकातिशयानन्दविभूतिविस्तारः परमानन्द-सागरसंप्लवोत्तरङ्गः । "भगवतो रघुनाथाद्यवतारेषु प्रतीयमानो दुःखादिरप्य-भिनयमात्र"मित्युक्तं सिद्धान्तलेशसङ्ग्रहेऽपि । एवञ्चाखण्डचैतन्याविर्भावव्या-पृतैर्जीवैः सेश्वरसर्वप्रपञ्चविलापनप्रवृत्तैरानन्दसागरान्तर्मग्नेश्वरविनाश एव क्रियत इति स्यात् । अतो न युक्तमद्वैतमोक्षमध्यवसातुम् ।

ईश्वरभावरूपमोक्षवादिनां तु तत्पदार्थविशेषणत्यागस्य नावकाशः ; श्रुतिसूत्रभाष्यादिविरोधात् । सर्वज्ञत्वाज्ञत्वादिविरोधपरिहाराय स्यान्नाम एक-तरबाधः ; न तूभयबाधः प्रामाणिक इति । किञ्च, "सदेव सोम्येदमग्र आसी"दित्युपक्रमे इदंशब्दार्थप्रपञ्चस्य सत्पदार्थस्य चोपादानोपादेयभावनि-बन्धनैक्यस्यैव प्रकृतत्वात् उपसंहारे तत्त्वमसीत्यत्रापि तन्निबन्धनमेवैक्यं निगमनीयमिति न स्वरूपलक्षणाप्रसक्तिः । तच्चैक्यं तदर्थविवेचन उपपादयिष्ते ॥

कथञ्च निर्विशेषस्याप्रसिद्धस्य वाक्यार्थत्वविवक्षा । कथमप्रसिद्धत्व-मिति चेत्—तत्त्वमसीतिवत् सर्वेषां समानाधिकरणानां व्यधिकरणानां च

विशिष्टार्थपरत्वस्वाभाव्यादेव । अतएव सर्वत्र निर्विशेषं लक्षणयैव निरूप्यं भवताम् । निषेधवाक्यान्यपि यस्मिन्नधिकरणे निषेधन्ति ; तदधिकरणं येन रूपेण पदोपस्थापितं तद्रूपविशिष्टं न निषेद्धुमर्हन्तीति तेन रूपेण तेन निषेधेन च विशिष्टमेव प्रत्याययन्तीति न निर्विशेषसिद्धिः । उक्तमेव च भवतैवाप्रसिद्धत्वम् । यत्तु अप्रसिद्धमपि तत्त्वमसीत्यनेन बोधयितुं शक्यते' "गन्धवती पृथिवी" इत्यनेन परमाण्वादिरिव, "नित्यज्ञानाधार ईश्वरः', इत्यनेनेश्वर इव चेति—तदयुक्तम् । गन्धवती पृथिवीत्यत्र परमाण्वादिग्रहण-स्याज्ञातपरमाणुं पुरुषं प्रति दुर्वचत्वात् । अन्यथा परमाण्वनङ्गीकारिमतेऽपि तद्ग्रहणस्यापत्तेः । अनुमानादिना गृहीतपरमाणुं पुरुषं प्रति च नाप्रसिद्धत्वम् । प्रतिपादकस्य तज्ज्ञानेऽपि प्रतिपाद्यस्य पुरुषस्य तज्ज्ञानं "सा द्विविधा, नित्याऽनित्या च" इत्याद्यंशप्रतिपादनानन्तरमेव भवितुमर्हति । "नित्यज्ञानाधार ईश्वरः" इति तु आप्तवाक्यं मिथःपदार्थान्वयबलेन वाच्यवृत्त्यैवेश्वरं प्रतिपादयतीति न तस्य तत्त्वमसितुल्यता । अत एव स्वर्गवैकुण्ठादिलोक-तत्रत्यविशेष प्रतिपादकानामाम्नायानां वाच्यवृत्त्यैव तत्पर-त्वात् न क्लेशलेशोऽपीति तदुदाहरणमुपरि कथ्यमानमप्यनुपपन्नम् ॥ वाक्य-प्रामाण्यनिर्वाहार्थं तात्पर्यानुसारेणाखण्डपरत्वमिति च न । उद्देश्यविधेय-भावापन्नार्थबोधनेनैव वाक्यस्य प्रमाणत्वादखण्डपरत्वे प्रामाण्यानिर्वाहात् । प्रत्युत प्रामाण्यहानिरेव । तात्पर्यं च तत्र तत एव दुर्ग्रहम् । यच्चोच्यते—पदानां स्वार्थोपस्थापनमात्रेण पर्यवसानम्, पदाभिहिताः पदार्था एव वाक्यार्थ-लक्षका इति—तेन किमत्र साधितं भवति । अन्विताभिधानपक्षत्यागेनाभि-हितान्वयपक्षाश्रयण एव स्वमतं रक्षितं भवेदिति चेद् भवदाशयः । तन्नि-रूप्यन् । अभिहितानां पदार्थानामेवान्वयानुभावकत्वमिति भाट्टमते यदि अखण्डार्थपर्यवसानम् । तदन्विताभिधानवादिप्राभाकरमते परं किं न स्यात् ? । अन्वयप्रत्यायकत्वस्योभयत्राविशेषेण शङ्कापरिहारयोस्तुल्यत्वात् । प्रत्युतार्थ एवानुभावकत्वरूपशक्तेरभिहितान्वयपक्षे स्वीकार्यतया तत्त्वमसीत्यादौ अखण्डस्य

तदादिपदप्रतीतस्य तादृशशक्तिमत्त्वेन सखण्डत्वमेवाऽऽपद्यते। न च तत्त्वंपदे तत्तद्धर्मविशेषविशिष्टार्थोपस्थापके; तयोश्च विशिष्टार्थयोरखण्डविषयकबोध-शक्तिर्विशिष्टनिष्ठैवेति वाच्यम्—येन येन पदेन यो योऽर्थः यथा यथोपस्थापितः, तथाभूततत्तदर्थमिथोऽन्वयानुभावकत्वशक्तेरेवार्थेष्वानुभविकतया-विशिष्टार्थस्याखण्डार्थानुभावकत्वायोगात्। तदर्थमखण्डार्थे पदलक्षणास्वीकारे अनुभावकत्वशक्तेस्तत्र संमन्तव्यत्वापातात् सविशेषत्वमेव।

कथञ्च वाक्यार्थस्य सर्वत्र लक्ष्यता? पदानामन्वयांशे शक्त्यभावात् "गामानये"त्यादौ गवादिरूपेष्वर्थेषु परमुक्तेषु शक्यसंबन्धः शक्यानामर्थानां मिथः संबन्धः प्रतीयत इति चेत्—तर्हि पदार्थमिथस्संबन्धस्य वाक्यार्थत्वात् लक्षणैव वाक्यार्थः स्यात्। न तु लक्ष्यः। एकार्थान्वितापरार्थो वाक्यार्थ इति चेत्—तदापि लक्षणावान् वाक्यार्थो भवति। न तु लक्ष्यः। वस्तुतो लक्षणापदं लक्षकस्वरूपव्यापारात्मकवृत्तिपरम्। शक्त्याख्यवृत्तिवत् यदा शक्यसंबन्धोऽप्यर्थोपस्थापनद्वारा शाब्दबोधनिर्वाहकः, तदैव लक्षणेत्युच्यते। न तु बोधविषयत्वमात्रेण। अथ, "सामान्यं पदार्थः विशेषो वाक्यार्थ"इति मीमांसकाद्युक्तिमनुसृत्य वाक्यार्थो लक्ष्य इत्युच्यते, तन्न। तदा हीदमुक्तं भवति। गोपदमविशेषेण सर्वगोव्यक्त्युपस्थापकम्। अर्थानां मिथोऽन्वये तेषां परस्परव्यावर्तनस्वाभाव्यात्, 'व्यक्तिवचनानां (शब्दानां) संनिहितगामित्व'मिति नयेन प्रकृतपरत्वौचित्याच्चाऽऽनयनकर्मीभूतगोव्यक्तिविशेषादिरूपार्थे पर्यवसानमिति। अस्त्वेतत्। अस्य प्रकृते क उपयोगः? उपस्थापितार्थमध्ये क्वचित् पर्यवसानमेव भवेत्। न त्वनुपस्थापिते निर्विशेषे अखण्डे पर्यवसानप्रसक्तिः। न ह्यखण्डसखण्डसाधारण्येनार्थं ब्रवीति तत्पदं त्वंपदं वा। तस्मात् सर्वत्र वाक्यार्थो लक्ष्य इति निरूपणमिहानुपयुक्तम्।

अथ वाक्यार्थानुभावकत्वमेव लक्षणेत्यस्माभिः परिभाष्यत इति चेत्—किमनया वाचोयुक्त्या?। **अद्वैतसिद्धा**वप्युक्तमन्वयानुपपत्तिकल्पिताऽर्थोपस्थितिर्लक्षणेति पक्षदूषणावसरे, "वृत्त्या हि पदार्थोपस्थितिः; न तु

सैव वृत्तिः । अतो नोक्तरूपा लक्षणा । किन्तु शक्यसंबन्धः । उपस्थिति-रूपत्वेऽपि लक्षणायाः तात्पर्यविषयानुकूलोपस्थितिरेव सेति । अतः शक्य-संबन्धज्ञाप्यसंबन्धान्यतररूपवृत्तिव्यतिरिक्तोऽर्थो न लक्षणाशब्दविवक्ष्यः प्रायेण। लक्षकत्वं ज्ञापकत्वमनुभावकत्वमिति योगमात्रेण प्रयोगः काममस्तु। लक्ष्यत्व-मिति उद्देश्यत्वमित्यभिप्रायेण च । तदभिप्रायेणैव, "सर्वत्रैव हि वाक्यार्थो लक्ष्य एवे"ति प्रयोगश्चेत्—तत्त्वमसीत्यत्र पदलक्षणायास्तन्न गमकम् ।

इदं तु स्यात्—अन्विताभिधानवादाश्रयणे कश्चिदन्वयो वक्तव्यो भवति । अभिहितान्वयवादे तु पदानां स्वार्थबोधकत्वमात्रम् । ततो वाक्यार्थोऽनन्वितो-ऽन्वितो वा प्रत्याय्यत इति । अत्रोच्यते—अभिहितान्वयेत्यत्रान्वय-शब्दत्यागवत् अन्विताभिधानेत्यत्रापि अन्वितेति त्यक्तुं शक्यं भवताम्। यदि च,

" स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥"

इति एकप्रकरणगतानां प्रत्येकार्थबोधानन्तरमेकविशिष्टमहावाक्यार्थनिर्धारणवत् पूर्वापरसन्दर्भसंशीलनेन निर्विशेषपर्यवसानं प्रकृतघट्ट इति मन्यते, तर्हि तदेक-देशभूतं तत्त्वमसीतिवाक्यमिदं पृथक् अखण्डार्थशाब्दबोधजनकमिति न सिद्ध्यति । किन्तु तस्य तस्य वाक्यस्य यः स्वरसतः प्रतीतोऽर्थः, स एव तत्र विवक्षित इत्येव । एवञ्च पदवाच्यत्वमिव पदलक्ष्यत्वमपि निर्विशेषस्य नेत्येवोक्तं भवति । तेन तेनावान्तरवाक्येन तत्तदर्थोक्तौ तात्पर्यगत्या निर्विशेषग्रहणात् । एवञ्च प्रघट्ट एव महावाक्यम् ; न तु, तत्त्वमसीति । भवदुपात्तसुरेश्वराचार्यवचनं तु, सत्यं ज्ञानमनन्तमिति वाक्यविषयकम् ,

" शब्दात् प्रतीयते तावत् सङ्गतिर्धर्मधर्मिणोः ।
मानान्तरादपोहस्तु न शाब्दस्तेन संस्मृतः ॥....
स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणम्"

इत्यादिकं शब्दानां विशिष्टार्थबोधकत्वमेव मुक्तकण्ठमाहेति, कथम् अखण्डार्थविषयता तस्य? इक्षुक्षीरमाधुर्यदृष्टान्तश्चानन्तरमेव विवेचयिष्यते।

यत् पुनरुच्यते—'चिदचिच्छरीरकत्व-निरस्तसमस्तदोषत्व-सत्यकामत्व-पुरुषोत्तमत्वादिकं न ब्रह्मशब्दवाच्यकोटिप्रविष्टम्। अथापि तत्तत्स्वीकारः प्रकरणादिति—तदस्तु; किं तेन? न हि ब्रह्मशब्देन यावदुक्तम्, तदस्माभिस्त्यज्यते। विज्ञीयेते तु ब्रह्मशब्दप्रवृत्तिनिमित्तभूते बृहत्त्वबृंहणत्वे प्रकरणादिह तैर्वाक्यराशिभिः। तेषाञ्च गुणानां तेन तेन रूपेण ब्रह्मशब्देन लक्षणया ग्रहणमावश्यकमित्यपि न ब्रूमः। भवता तु तत्त्वंपदार्थत्याग एव क्रियते। पूर्वापरवाक्यावगताः कल्याणगुणाश्च त्यज्यन्ते। उक्तं सर्वं मिथ्येत्युक्त्वा अनुक्तं किञ्चिन्निर्विशेषं शिष्यत इत्युच्यते इति महदन्तरमस्माकं युष्माकञ्च। अतः, "यश्चोभयोः समो दोषः" इति स्वदोषमङ्गीकृत्य परत्रापि तदापादने प्रयस्य अस्मन्मतेऽपि ब्रह्मणि शब्दवृत्त्यनुपपत्त्युद्भावनं न सहृदयेन शास्त्रज्ञेन संमन्तुमर्हम्।

यत्तु—"यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इति श्रुतिविरोधः ब्रह्मणः शास्त्रप्रतिपाद्यत्व इति मनसिकृत्य, 'वाच्यत्वनिषेधः तत्र कृतः। लक्ष्यत्वं तु न दोषाये'त्युक्तम्—तन्न। "यावदर्थं वै नामधेयशब्दाः। तैरर्थसंप्रत्ययः। अर्थसंप्रत्ययाच्च व्यवहारः" इति खल्वाहुः। यद्यर्थोऽस्ति, तत्र शब्दः परं कथं न भवति। अन्यथा शब्दनिषेधभङ्ग्या निरुपाख्यतया तुच्छत्वमेव ब्रह्मणः कथितं भवेत्। लक्ष्यत्वमस्तीति परं कथम्। "वाचो निवर्तन्ते" इति सामान्येनोक्तौ वाच्यत्वरूपविशेषपर्यवसानकरणस्यानुचितत्वात्। यदि निषेधस्य विशेषे पर्यवसानं प्रमाणान्तराविरोधाय स्वीकर्तुमुचितम्, तर्हि निर्गुणादिवाक्यानां हेयगुणरूपविशेषनिषेधपरत्वं कथं न मृष्यते? लक्ष्यत्वेऽपि मनसा गृहीतत्वात् मनसो निवृत्तिश्च कथम्? मननाविषयत्वं विवक्षितमिति चेत्—मन्तव्य इत्युक्ते इदमपि कथम्?

श्रुत्यननुसारिमननाविषयत्वमित्येवंरीत्या यत्किञ्चिद्विशेषनिषेधविमर्शे तु, "वाचो निवर्तन्त" इत्येतदपि नानाश्रुतिगतशब्दवाच्य एव तस्मिन्नन्यादृशवाक्प्रतिपद्यत्वनिषेधपरतया योज्यताम्। किञ्च "यतो वाच" इति श्रुतिर्यदि निर्गुणब्रह्मपरा, तर्हि "आनन्दं ब्रह्मणो विद्वान्" इति व्यधिकरणविभक्त्या तन्निष्ठस्याऽऽनन्दस्य वेदनमुच्यमानं न घटते। न चेदं वेदनमतत्त्वविषयम्; न बिभेतीति भयाभावहेतुत्वश्रवणविरोधात्। वस्तुतः प्रकरणानुसारेण आनन्दगुणस्यापरिच्छिन्नत्वपरा श्रुतिरियमिति वक्ष्यते॥

यच्च, "परं जैमिनिर्मुख्यत्वात" इत्यत्र,—ब्रह्म गमयतीत्यत्र नपुंसकब्रह्मपदस्य यो मुख्योऽर्थः तद्ग्रहणमुचितमिति जैमिनिनोक्ततया ब्रह्मपदस्य निर्विशेषरूढिरस्तीति शङ्कां मनसिकृत्य, 'तत्र विवक्षितं मुख्यत्वं न मुख्यवृत्त्या वाच्यत्वरूपम्, किन्तु मुख्यतात्पर्यविषयत्वरूप'मिति वर्णनम्—तच्चिन्त्यम्—तत्र शाङ्करभाष्ये, "परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनम्, गौणमपरम्, मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति" इत्युपपादितमस्ति। तेन मुख्यत्वं शक्यत्वरूपमिति गौणपदसमभिव्याहारात् ज्ञायते। अतो भवदुक्तोऽर्थो भाष्यविरुद्धः। किञ्च तत्र, "न च कार्ये प्रत्यभिसन्धिः" इति सूत्रे, "नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म" इति श्रुत्युदाहरणेन नामरूपनिर्वोढृविषयं ब्रह्मपदमिति दर्शितम्। तस्य ब्रह्मणः कार्यविलक्षणत्वं च कण्ठोक्तम्। "कार्यात्यय" इति सूत्रे च हिरण्यगर्भस्य कार्यत्वमुक्त्वा ततोऽन्यत्वं विष्णोरुक्तम्। तेन विष्णोरकार्यत्वं जगत्कारणत्वञ्चाभ्युपगतं प्रतीयते। एवञ्च तत्प्राप्तिरर्चिरादिगत्या जैमिन्यभिमता; कार्यस्य हिरण्यगर्भस्य प्राप्तिर्बादर्यभिमता। कारणस्य विष्णुनारायणादिशब्दवाच्यस्य ब्रह्मणः सर्वगताविद्याशबळस्य सर्वगततया तत्प्राप्तयेऽपि गन्तव्यदेशप्रतीक्षाविरहात् चतुर्मुखलोकप्राप्तिरेव युक्तेति भाष्याभिप्रायावगमात् सगुणब्रह्मण एव तत्र विवक्षा स्यात्। देशान्तरगतिं विनाऽत्रैव ब्रह्मसंपत्तिरियं सगुणब्रह्मभावो वा निर्गुणब्रह्मभावो

वेत्यन्यदेतत् । अर्चिरादिना गत्वा विद्वान् अमानवेन कारणं ब्रह्म गमितः शुद्धब्रह्मभूयं गच्छतीति जैमिनिमतवर्णन एवाद्वैतिमते वाक्यार्थसामञ्जस्यम् । अतः तत्र मुख्यत्वं मुख्यवृत्त्या वाच्यत्वरूपं नेति कथनमनपेक्षितम् । अपृष्टञ्च तत् ॥

एवं पूर्वं पश्चाच्च निर्विशेषब्रह्मणः शब्दावाच्यत्वमेव सांप्रदायिकमनुरुध्य लिखन्नेव यदाह मध्ये, श्रीविष्णुपुराणवचनमुपरि शतदूषण्युपस्थापितमेव प्रदर्श्य ब्रह्मशब्दवाच्यत्वमेव तस्यास्तीति पक्षान्तरम्, तत् व्याहतमिति ज्ञापितमेव । अपि च अवाच्यत्ववादिनामद्वैतिनां खल्वयमाशयः—सद्ब्रह्मा-त्मादिशब्दाः सर्वे सविशेषवाचिन एवानुभवसिद्धाः । "बृहत्त्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इत्येवं निर्वचनान्यपि सविशेषवाचित्वमेव स्थापयन्ति । व्यक्तिमात्रवाचित्वे च का व्यक्तिरुक्तेत्यपरिज्ञानात् शब्दप्रयोगव्यवस्था न सिद्ध्येत् । यदि च निर्विशेषत्वाकारेण काचिद्व्यक्तिरुच्यते, तर्हि तदेकं प्रवृत्तिनिमित्तं स्वीकृतमिति नाखण्डस्य वाच्यत्वम् । अत एव, "प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञित"मिति श्रीविष्णुपुराणश्लोकोऽपि नाखण्डस्य वाच्यत्वप्रतिपादनसमर्थः; प्रत्यस्तमितभेदत्व-सत्तामात्रत्व—वचोवेद्यताराहित्य—स्वयंप्रकाशत्व—रूपनानाधर्मनिर्देशस्य ज्ञानत्व दर्शनात् । अथ तेषामुपलक्षणविधया विवक्षेति चेत्—किमिदमुपलक्षणत्वम् ? शक्यार्थकोटौ तेषां धर्माणां प्रवेशाभावेऽपि शक्यार्थव्यावर्तकतया भासमानत्वम्, यथा डित्थादियदृच्छाशब्दानां तद्वाच्यडित्थादिव्यक्तिव्यावर्तकतया भानम्, विनैव वाच्यकोटिप्रवेशमिति चेत्—तत्र शब्दानां श्रोत्रगृहीतत्वात् व्यावर्तक-तयाऽन्वयो युज्यते ; न त्वत्र तथा प्रत्यस्तमितभेदत्वादीनां नियमेन ब्रह्मशब्दप्रयोगस्थले सर्वथोपस्थापकं प्रमाणमस्ति, येन तत एव तेषां भानात् व्यक्तिमात्रं वाच्यं भवेत् । अथोपलक्षणानां तेषां भानमपि नियमेन नेष्यते । 'ब्रह्मशब्देन ज्ञानमुच्यते, यत्र वस्तुतः प्रत्यस्तमितभेदत्वादिकमस्तीति

तद्वचनार्थः इति चेत्—तर्हि ज्ञानत्वं प्रवृत्तिनिमित्तमिति सिद्ध्यति। तस्य चानेकज्ञानसाधरणत्वात् सर्वेषां ब्रह्मशब्दावाच्यत्वाय व्यावर्तकधर्मविशेषनिवेश आवश्यक एव। अथ ज्ञानव्यक्तिः काचिदेव वाच्या; ब्रह्मशब्द एव तत्र यदृच्छाशब्दवत् शक्यकोट्यप्रविष्ट एव व्यावर्तकतया तिष्ठतीति ज्ञानत्वमपि न प्रवृत्तिनिमित्तमिति चेत्—एवमपि नानाधर्मस्वीकारान्निर्विशेषत्वं न सिद्ध्यतीति च भाव्यम्। कथं पुनः कूटस्थमारभ्य सर्वैर्वृत्तिभिरवाच्यत्वं ब्रह्मणः सर्वतः प्रपञ्चितं युज्येत, यद्येवं वाच्यत्वं तैरुररीकृतं स्यात्? ब्रह्मशब्देतरशब्दावाच्यत्वा-दिति चेत्—अर्थान्तरमात्रवाचकत्वेनावधृताः शब्दाः ब्रह्म न वदन्तीति नेदं वक्तव्यम्। पदार्थसामान्यं स्वातिरिक्तमात्रवाचकशब्दवाच्यं न भवतीति न कश्चिदिह विशेषः। यदि ब्रह्मशब्दः शुद्धवाचकः, आत्मादिशब्दैः किमपराद्धम्? प्रमाणविरोधश्च सर्वत्र समानः। "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह" इति अत्तृत्वाप्तृत्वादातृत्वादिविशेषपुरस्कारेण आत्मादिशब्दानामिव, "बृहति बृंहयति तस्मादुच्यते परं ब्रह्मे"ति, "बृहत्त्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इत्यादिना च बृहत्त्वाद्याकारेण ब्रह्मशब्दस्यापि निरुक्तत्वात्। उक्तं हि प्रथमाधिकरणभाष्य एव, "अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते; बृहतेर्धातोरर्थानुगमात्" इति। अतः सर्वज्ञत्वसर्वशक्तित्वादिप्रतीत्यनुगुणोऽर्थः ब्रह्मशब्दस्य भवन्मते-ऽपि विवक्षित इति निश्चीयते। अत्र भाष्ये, 'समन्वितं चे'ति चकारप्रक्षेपणम्, ब्रह्मद्वैधविधानम्, एकस्य नित्यशुद्धत्वमन्यस्य सविशेषस्य सर्वज्ञत्वादीति विभजनञ्च यथावस्थितार्थपरव्याख्यादिविरुद्धमपि। भामत्याञ्चेदम्, 'वृद्धिकर्मा हि बृहतिरतिशायने वर्तते। तच्चेदमतिशायनमनवच्छिन्नं पदान्तरावगमितं नित्यशुद्धबुद्धत्वादि अस्याभ्यनुजानातीत्यर्थः' इति व्याख्यातम्। इदमेव शाङ्करभाष्यं मुखान्तरेण श्रीभाष्ये भाषितम्, "ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधी-

यते'' इति। उक्तभामत्यर्थोऽपि समनन्तरमेवाभाषि, "बृहत्त्वञ्च स्वरूपेण गुणैश्च यत्रानवधिकातिशयम्, सोऽस्य मुख्योऽर्थः'' इति। भवद्दर्शितोऽर्थो भवन्मतनिष्कर्षप्रतिकूल इति चाभ्यां ग्रन्थाभ्यां प्रत्यबोधि। एवं शाङ्करभाष्याद्यानुगुण्येन सविशेषरूपमुख्यार्थे श्रीभाष्येण प्रदर्शिते सति स्वपूर्वपुरुषाशयविरुद्धं भवता यत् प्रागुक्तम्—"ब्रह्मणि सगुणे निर्गुणे वा शब्दानां मुख्यवृत्त्यनुपपत्तिः समाने''त्यादि ; तदौचित्यं भवत्पक्षीया एव विमृशन्तु ॥

निर्विशेषस्य ब्रह्मशब्दवाच्यत्वमस्तीति वदन्नेव भवान्, "अवाच्यत्वोक्तिस्तु वाक्यार्थवत् निर्विशेषपरैव'' इति समनन्तरमेवाह। उपपादयति च, "निर्विशेषो ह्यस्मिन् पक्षे..............स्वप्रकाश एव'' इति। एवञ्च निर्विशेषस्यावाच्यत्वमेव विस्पष्टं वर्णयन् किमिति वाच्यत्वमप्यन्तरे वदति? "ब्रह्मशब्दस्य सङ्केतविशेष'' इति कथनमप्ययुक्तम् ; तस्य डित्थादिशब्दवत् संकेतितत्वाभावात्। किं पराशरोऽत्र संकेतकल्पकोऽभिमतः, अन्यो वा। अनादेः शब्दस्यापौरुषेयस्य न कश्चित् संकेतयिताऽस्ति। एवञ्च "संकेतविशेषेण ब्रह्मशब्दवाच्यत्वम्'' इति (अत्र, 53 पुटे) "संकेतेन मुख्यवृत्तत्वं गम्यते'' इति च लेखनम्, आधुनिकैरद्वैतिभिरितः संकेतेन ब्रह्मादिपदं तत्र प्रयुज्यते चेत् तदेव वाच्यत्वं कथञ्चित् स्यात्; अन्यदा पुनरवाच्यमेव तत्' इत्येतदेव द्रढयति। व्यर्था चेयं सङ्केतकल्पना। विशिष्टे शक्तस्य विशेष्ये लक्षणया प्रयोगस्य भवदुक्तत्वेन तत एव निर्वाहात्। एतद्विष्णुपुराणतत्त्वार्थस्तु श्रीभाष्ये दर्शित एव। शतदूषण्याञ्च एतदुपन्यासपूर्वकमर्थो वर्णयिष्यते।

ब्रह्मणो लक्षणया प्रतिपाद्यत्वस्थापनार्थं पदार्थतत्त्वनिर्णयोक्तं यदन्ववादि, तत्र इक्ष्वादिमाधुर्यस्य दृष्टान्तीकरणं न प्रकृतानुरूपमिति तत्रैव व्यक्तम्। "इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्। तथापि न

तदाख्यातुं सरस्वत्याऽपि शक्यते" इति दण्डिवचनं हि इक्ष्वादिमाधुर्याणां मिथो विभिन्नतयाऽनुभूयमानानां स्थितं भेदमित्थमिति तत्र रूढेन शब्देन व्युत्पादयितुं न प्रभवाम इत्येव वदति। इक्षुमाधुर्यं क्षीरमाधुर्यमिति पदद्वयादिना योगवशादन्विताभिधानादिविधया वाच्यत्वं नैव निषेधति। निर्विशेषं ब्रह्म तु न पदान्तरसमभिव्याहारपूर्वमपि वक्तुं शक्यतया भवदिष्टम्। लक्षणाऽपि माधुर्यपदस्य इक्ष्वादिमाधुर्ये नावश्यापेक्षिता। व्यवक्तिवचनानां सन्निहितगामित्वमिति नयेनैव विनैव लक्षणामभिमतमाधुर्यग्रहणसंभवात्। क्वचिल्लक्षणाऽपि न दुष्यति; उक्तविधया प्रत्यक्षाद्यनुभवसिद्धत्वेन तात्पर्यसत्त्वे तत्संभवात्। लक्ष्यतावच्छेदकञ्च इक्षुमाधुर्यत्वतद्वैजात्यादिकमनुभूयमानत्वात् नाप्रसिद्धम्। निर्विशेषे तु न लक्ष्यतावच्छेदकं किञ्चित्, नापि मानान्तरसिद्धत्वमिति वैषम्यम्। अथ तु निर्धर्मकोऽपि मानान्तराविषयोऽप्यर्थो लक्षयितुं शक्यत इति उदाहरणं तद्विसृज्यैव वक्तुं यत्यते—तत्राप्युच्यते—लक्षकपदेन लक्षणया प्रतिपादनात् प्राक् यन्न ज्ञातम्, तस्य मानान्तराविषयस्य लक्ष्यत्वं दुरुपपादमेव। अविषये तस्मिन् शक्यसंबन्धरूपलक्षणायाः तात्पर्यादेश्च दुर्ग्रहत्वात्। यत्तु—"सुखमहमस्वाप्स"मिति अलौकिकानन्दस्य लक्षणया व्यपदेशो दृश्यत इति—तत्र तदानन्दलक्षकं पदं किम्? न हि सुखपदस्यानन्दे लक्षणा। सुखपदस्य सामान्यवचनस्यालौकिकानन्दपरत्वं लक्षणयेति चेत् तन्न—घटमानयेत्यादौ घटादिपदस्य विशेषबोधकत्वे लक्षणाया अनिष्टेः। सविशेषसुखपरं सुखपदं निर्विशेषावाचकमपि तत्र लाक्षणिकमिति चेत्—कथमिदं निश्चीयते? "सुखमहमस्वाप्स"मिति स्वापे सुखाभेदान्वयात् स्वापसुखयोः समानकालिकत्वावसायात स्वापकाले च लौकिकसुखानां तत्तद्विषयानुभवजन्यानामुत्पत्त्यसंभवात् तदातनमन्यत् सुखमिति निश्चये, अहमित्यात्मनस्तदा सद्भावावगमात् तदेव सुखमित्यवधारणे च सति सुखपदस्य तत्परत्वनिश्चय इति चेत्—तावता तत् निर्विशेषं सुखपदावाच्यं लक्ष्यमेवेति कथं निर्णयः? निर्विशेषं किञ्चिदस्तीति निश्चित्य तल्लक्षकत्वस्वीकारे मानान्तरामेयत्वं

न सिद्ध्यति। स्वयंप्रकाशत्वात्तस्य सुखस्य स्वापकाले न वृत्तिज्ञानरूपमितिविषयत्वमासीदिति चेत्—तथापि "सुखमहमस्वाप्स"मिति प्रतिसंदधान एव व्यवहरतीति प्रतिसन्धानविषयत्वं प्रागस्त्येव। न हि मितिविषयत्वमेव लक्षणाप्रयोजकम्, न तु स्मृतिविषयत्वमपीति कश्चिद् ब्रूयात्। श्रोता च किं तत् सुखमिति विमृश्य पूर्वोक्तयुक्त्या आत्माभिन्नत्वमवसायानुमितिविषयमेव सुखं पदलक्ष्यमाकलयतीति मेयस्यैव लक्ष्यत्वं सुस्थमेव। लक्षणया बोध्ये चामेयत्वमपि कथम्? व्यक्तिमात्रलक्षकत्वे अहंपदेनापि तद्ग्रहणात् पौनरुक्त्यापत्तिश्च। सुखत्वप्रत्यक्त्वादिरूपधर्मभेदविवक्षायाश्च न निर्विशेषस्य लक्ष्यत्वम्। आत्मनः सर्वदा अनुकूलत्वेन भासमानत्वात् तस्यालौकिकसुखत्वमपि नास्ति। विषयानुभवानायत्तत्वमात्रेणालौकिकत्वं पुनरस्ति। ततः कथं तत्र व्युत्पत्त्यसंभवः? भवत्सिद्धान्ते सुखं सर्वं साक्षिभास्यमेवेति नान्यादृशभानाधीनमापरोक्ष्यं कस्यापि। यदपि सविशेषवाचिनां विशेषं विना व्यक्तिमात्रपरत्वं जहदजहल्लक्षणयेत्यत्र प्रकृष्टप्रकाशश्चन्द्रः इत्युदाहरणं दत्तम्—तत्र प्रकृष्टप्रकाशत्वादेः कुतो न विवक्षा? चन्द्रप्रातिपदिकार्थप्रश्नोत्तरत्वादिति चेत्—तन्न; यतः 'प्रकृष्टप्रकाश' इत्यस्य चन्द्रप्रातिपदिकार्थमात्रपरत्वे आश्रीयमाणे "चन्द्रश्चन्द्रपदवाच्य" इत्येवोक्तं भवतीति न प्रष्टुराकाङ्क्षा शाम्यति। चन्द्रपदवाच्यमजानंश्च कथं "चन्द्रश्चन्द्रपदवाच्य" इति बोधमप्यनुभवेत्?। अतः 'को गवय' इति बुभुत्सायाम्, गोसदृशो गवय इति प्रतिबोधने सति गोसादृश्यविशिष्टं पिण्डमवसरे पश्यन् गवयत्वजातिश्च प्रत्यक्षयन् गोशब्दस्य गोत्वमिव गवयशब्दस्य गवयत्वमेव प्रवृत्तिनिमित्तं भवितुमर्हतीति च निश्चिन्वानः गोसादृश्यं गवयत्वोपलक्षणमध्यवस्यन् गोसादृश्यस्य शक्यतावच्छेदकतां न स्वीकरोति यथा, तथा प्रकृष्टप्रकाशत्वस्य चन्द्रपदशक्यतावच्छेदकत्वं न स्वीकरोतीति काममस्तु। तावता गोसदृशो गवय इति वाक्ये यथा गोसादृश्यं शक्यतानवच्छेदकमपि शक्योपसर्जनतया बोधे भानं नातिक्रामति, तथा प्रकृष्टप्रकाशत्वमपीति न तस्य व्यक्तिमात्रार्थकता।

अन्यथा प्रकाशप्रकर्षादेरभाने, "एषु ज्योतिष्षु कश्चन्द्र" इति प्रश्ने "प्रकृष्टप्रकाशश्चन्द्र" इतीदमुत्तरमेव न भवेत्; व्यावर्तकाग्रहणेन ज्योतिरन्तरव्यावृत्तेरयोगात्। वह्निमत्पर्वतविषयकानुमितिरस्तीत्यत्र वह्निमत्त्वस्योपलक्षणत्वविवक्षायामनुमितिविषयतावच्छेदकत्वस्य वह्नावस्वीकारेऽपि तद्वाक्यार्थज्ञाने यथा वह्निमत्त्वस्य पर्वतविशेषणत्वं नापैति, तथा प्रकृष्टप्रकाशत्वस्य बोधविशेष्यविशेषणत्वं नापतीति ध्येयम्। एवं **पदार्थतत्त्वनिर्णयो**क्तांशविमर्शनादेव तत्समानार्थिका **न्यायरत्नदीपावलिरपि** विमृष्टा वेदितव्या॥

अत्रेदमवधेयम्—शब्दावाच्यस्य शब्दलक्ष्यत्वं न भवतीति न शतदूषण्यामुक्तम्। किंतु शब्दस्य किञ्चिद्वाचकत्वानङ्गीकारे लक्षकत्वमपि दुर्वचम्, वाच्यसंबन्धरूपत्वाल्लक्षणाया इत्येव। यदि निर्विशेषत्वहानिः स्यादिति भिया वाच्यत्वस्यास्वीकारः, तर्हि लक्ष्यत्वमपि न स्वीकर्तुं शक्यमिति च। भवदीयग्रन्थेषु अवाच्यस्य कथं लक्ष्यतेत्यादिः प्रश्नः कृतोऽस्तु; इक्षुक्षीरमाधुर्यादिदृष्टान्तपूर्वकं समाधाने यत्नश्च। तत् सर्वमिह नातीव प्रकृतम्। तथापि तस्य तस्यात्र प्रदर्शनं तस्यापि खण्डितत्वायेत्येव पर्यवस्यति॥

आकृतिशक्तिवादिनो मीमांसकाः व्यक्तिविशेषं लक्षणयैव "घटमानये" त्यादाववगच्छन्तीत्येतदस्तु नाम। व्यक्तिमात्रशक्तिवादिनो नैयायिकाश्च एवमवगच्छन्तीति तु असंबद्धमेव। विशिष्टशक्तिवादिन एव प्रायो नैयायिकाः। स्वीक्रितां पुनः 'व्यक्तिमात्रे शक्तिरपि जात्यवच्छिन्नविषयकशाब्दप्रयोजकतया कैश्चिन्नैयायिकैरिष्यत' इति। अथापि लक्षणया घटभानमिति न कस्यापि नैयायिकस्य मतम्। **अद्वैतसिद्धा**वुक्तम्—"गौर्नित्या, गौरनित्य इत्युभयत्राप्येकदेशान्वयार्थं लक्षणाभ्युपगमेऽपि जातिव्यक्त्योरुभयोरपि तार्किकैर्गोपदार्थत्वाभ्युपगमाच्च" इति। **चन्द्रिका**यामपि—"तार्किकाणां मतेऽपि विशिष्टस्य शक्यत्वात्" इत्यादि। पुनरिक्षुक्षीरेति पठनं तु वृथा विस्तर-

प्रत्याशयैव। अन्यदिदमाश्चर्यं सर्वैरध्यक्षणीयम्—यदेष शतभूषणीकारः शतदूषणीकृदाचार्यविरचिते न्यायपरिशुद्धिग्रन्थेऽपि इक्षुक्षीरेति दण्डिश्लोक उपात्तोऽस्तीति केषाञ्चिन्मुखादुपकर्ण्य तत्स्थलं जिज्ञासितवान्। तत्र पूर्वापरसन्दर्भपरिज्ञानवैधुर्यात् लक्षणनिरूपणमिति शीर्षकं लक्षणानिरूपणमित्यन्यथा गृहीत्वा, लक्षणावृत्तिरत्र निरूप्यत इत्याकलय्य, तत्रत्यं लक्ष्यपदमपि गन्धवत्त्वलक्षणलक्ष्या पृथिवीत्यत्रेवार्थान्तरपरमित्यविज्ञाय शक्यलक्ष्यविचारस्थलीयलक्ष्यपदार्थपरं मत्वा, स्वविवक्षितार्थसाधकत्वाभिमतं वाक्यं तत उद्धरिष्यन्, लक्षणनिरूपणे इत्येतत्स्थाने—" **लक्षणानिरूपणे** इति, उक्तं हि तत्त्वरत्नाकरे" इति लेखनीये, "**उक्तं च तन्त्रान्तरे**" इति च लिखन् अस्मदीयग्रन्थाः तत्रापि न्यायपरिशुद्ध्यादयः स्वेन ज्ञाता इति लोकान् प्रत्याययितुं प्रयतते। न चोदाहृतवाक्यं तत्र ग्रन्थान्तरस्थतयोपात्तमस्ति ? तत् किमर्थं शतभूषण्याम्, "उक्तं च तन्त्रान्तर इत्युपक्रम्य" इति लेखनम् ? नूनं स्वभ्रान्तिप्रख्यापनमेव ततः सिद्धम्। एवमुदाहृतवाक्यार्थोऽपि न प्रकृतोपयोगी। न हि तत्रावाच्यस्य पदलक्ष्यत्वं वा, निर्विशेषस्य व्यक्तिमात्रस्य पदलक्ष्त्वं वा कथितमस्ति। किन्तु लक्षणस्यैव केवलव्यतिरेकितया वस्तुस्थापकत्वमिति मतिनिरासाय लक्षणोक्तिं विनापि विवेकसत्त्वप्रदर्शनाय इक्षुक्षीरमाधुर्यविषये दण्ड्युक्तं दर्शयिष्यता, 'तदिदं घटादावपि वक्तुं शक्यम्; तत्र तत्रानुभवैकगम्यस्य वक्तुमशक्यस्य विशेषस्य सद्भावात्' इति सामान्येन प्रस्तुत्य स्वयमनिर्वचनमात्रेण पदार्थापलापो न कर्तुं शक्यत इत्येतदेवोपपाद्यते; तेनानेकविशेषवत्त्वमेव च वस्तुनि स्थाप्यत इति। तत् सिद्धं सर्वोऽयं तस्यासंबद्धविस्तर इति॥

एवं बहुग्रन्थसंवादेन स्वपक्षं स्थापितमभिमत्यानन्तरमेव लिखति—"तत्रामुख्यवृत्तत्वेऽपि लक्षकत्वपक्षे ब्रह्मशब्दस्य साधुत्वं व्याकरणाभ्यासजनितसंस्कारव्यङ्ग्यजातिरूपम्" इत्यादि। अवाचकस्य लक्षकत्वं न

भवंतीति शतदूषण्यामुक्तम् । न हि ब्रह्मावाचकं ब्रह्मलक्षकं न भवतीति तत्रोक्तम् । किन्तु यत्किञ्चिद्विषयेऽपि यत् वाचकं न भवति, तस्य लक्षकत्वं न भवतीत्येव । अन्यावाचकस्य किञ्चिदर्थबोधकत्वे हि शब्दस्य तद्वाचकत्वमेवोक्तं भवतीत्यवधेयमत्र । एवं स्थिते यदत्र मन्यते—यद्यपि ब्रह्मशब्दोऽवाचकः, अथापि लक्षक एव । लक्षकत्वमात्रे स्वीकृते वाचकत्वरूपं शब्दसाधुत्वं मा भूत्—अन्यथान्यथा पूर्वमीमांसायां व्याकरणाधिकरणे निरुक्तं किमपि ब्रह्मशब्दस्य भविष्यतीति—तत् कथं युज्यते ? न हि निर्विशेषलक्षकस्य ब्रह्मशब्दस्य सर्वथैवावाचकत्वं भवदिष्टम् । सविशेषवाचकत्वस्य प्रागेव शाङ्करादिप्रदर्शनेनास्माभिः प्राहितत्वात् । अतः अवाचकत्वविकल्पो नास्मदिष्ट इत्येतावति भवता वक्तव्ये किमित्यवाचकत्वस्वीकारेण तदात्वेऽसंभावितस्य लक्षकत्वस्य च स्वीकारः ? । न हि अधस्तात् प्रदर्शिताः पदार्थतत्त्वनिर्णय न्यायरत्नदीपावल्यादयः ब्रह्मादिशब्दानां किञ्चिदर्थावाचकत्वं तथापि लक्षकत्वञ्च स्थापयन्ति । अतोऽनुपपन्नोऽयमुपसंहारः ॥

यत्तु—वाचकत्वरूपसाधुत्वत्यागेन निर्वचनान्तरानुधावनम्—तत्रापि पृच्छामः । किं मीमांसायामन्यत्र वा व्याकरणाभ्यासेत्यादिनिर्वचनं कुर्वन्तः साधुशब्दानां वाचकत्वं नेच्छन्ति । एवं तर्हि प्रातिपदिकमपि तन्न भवेत् ; अर्थवदिति प्रातिपदिकलक्षणे निवेशात् । प्रकृतिप्रत्ययविभागमूलश्च व्याकरणेन क्रियमाणः संस्कारः कथमर्थराहित्ये स्यात् । धातूनां प्रत्ययानाञ्च निरर्थकत्वाभावात् । कथं तर्हि वाचकत्वं परित्यज्य लक्षणान्तरकथनं तेषु ग्रन्थेष्विति चेत्—गन्धसमवायिकारणतावच्छेदकजातिमत्त्वमिति परिष्कृतेन गन्धवत्त्वलक्षणेनैव निर्वाहे किमिति नानारूपवत्त्वादिलक्षणम् ? विनिगमनाविरहात् संभावितसर्वलक्षणोपन्यासश्च सर्वविदां संभावित एव । वस्तुतः साधुत्वलक्षणविचारस्तत्रापभ्रंशानां व्यावर्तनाय । ये तु साधूनामिवापभ्रंशानामपि वाचकत्वं मन्वते, न मृष्यन्ति च भाषासु सर्वत्र वाचकत्वप्रतीतौ बाल्यतः संपादितायां भ्रान्तित्वकल्पनम्—न ह्येतादृशस्थलेषु अपभ्रंशानां साधुशब्दोप-

स्थापनद्वारा विवक्षितार्थबोधकत्वसंभावनालेशोऽपि, येन वाचकत्वस्वीकारं विनैव कार्यसिद्धिराशङ्क्येत—तद्दृष्ट्या वाचकत्वमतिप्रसक्तं न साधुशब्दलक्षणमिति तदुपेक्षया व्याकरणाभ्यासेति साधुत्वनिर्वचनान्तरारम्भः। तावता साधुशब्दानां वाचकत्वापलापस्तु नेति ब्रह्मशब्दस्यावाचकत्वेऽपि साधुत्वकथनमयुक्तमेव। असाधोरपि वाचकत्वमेव तत्रेष्टम्; न पुनरवाचकस्यापि साधुत्वमिति। "प्रत्यस्तमितभेद"मिति श्रीविष्णुपुराणश्लोकस्य शुद्धप्रत्यगात्मपरत्वं **वेदान्तरक्षामण्या**दौ खण्डितमित्यपि न मन्तव्यम्। तस्य शुद्धप्रत्यगात्म-परतायाः, ब्रह्मपरत्वान्वारोहेऽपि निर्विशेषब्रह्मपरत्वासंभवेन सविशेषब्रह्म परतायाश्च **वेदान्तरक्षामणिखण्डन** एव विस्तृतत्वात्॥

सविशेषवाचिनो ब्रह्मशब्दस्य विशेष्यमात्रे प्रयोग औपचारिको भाक्त इति सिद्धे यत् विशिष्टाद्वैतिमतेऽप्ययं दोष इत्युद्भावनायोच्यते—शरीरवाच-कानां शरीरिपर्यन्तत्वेऽपि यथा विशेषणविशेष्यांशयोः पृथक् पृथग्बोधस्वीकारा-वसरे ब्रह्मशब्दस्य परमात्ममात्रबोधकत्वे इयमेव गतिरिति—तत् प्रमादकृतम्। शरीरवाचिनामिति न्यायेन चेतनाचेतनवाचिनां पदानामेव हि परमात्मपर्यन्तत्वं वर्ण्यते; न तु परमात्मवाचिनां ब्रह्मादिशब्दानामपि विशिष्टवाचित्वं विशेषणपर्य-न्तवाचित्वं वा। तत् कथमत्र परमात्ममात्रपरत्वे ब्रह्मशब्दस्य भाक्तत्वप्रसंग इति। यदि तु भाक्तत्वं भवतामपि मा भूदिति ब्रह्मपदस्योपहितपरत्वमेवेष्यते, न तु शुद्धब्रह्मपरत्वम्—तर्हि "ब्रह्मजिज्ञासे"ति तज्ज्ञानमेवेषितं स्यात्, तथा च शारीरकमतत्त्वज्ञानं जनयितुं प्रणीतं स्यात्॥

यत् पुनरत्र "अविद्यानिवृत्त्यर्थमिह ज्ञातव्यमुपहितं निरुपाधिकं वा"इति शतदूषणीप्रतिविवक्षयेव प्रपञ्चयते—विवरणकारमते निर्विशेषस्यैव ब्रह्मपदार्थ-त्वेन ज्ञानविषयत्वं तस्यैव; तथा भामतीकारस्य उपहितं ब्रह्म जिज्ञास्यं ब्रुवतः उपहितस्यैव ब्रह्मशब्दवाच्यत्वेऽपि तज्ज्ञानमज्ञाननिवर्तकतया श्रुतिवि व-क्षितमुपहितविषयकत्वेनोच्यमानमपि वस्तुतः शुद्धविषयकमेव। किञ्चिदुप-

हितत्वांशस्यापि ब्रह्मणा सह भाने हि अतत्त्वविषयकत्वात् तत्त्वज्ञानत्वैव न स्यादिति अज्ञानानिवृत्तिः प्रसजेदिति—तत्रोच्यते। शुद्धब्रह्मण उपादानत्वं **संक्षेपशारीरका**नुसारिस्वीकृतमन्यैर्नेष्यते, शुद्धस्य तस्य जीवेश्वरानुस्यूततया उपादानत्वप्रयुक्तसर्वात्मकत्वस्य जीवव्यावृत्तेश्वरलिङ्गत्वप्रतिपादकान्तरधिकरण-भाष्यादिविरोधः स्यादिति। अथ ईश्वरस्य मायाविशिष्टत्वेनाविद्याविशिष्ट-त्वेन वोपादानत्वस्वीकारे विशेषणीभूतमायादेरप्युपादानत्वप्रसंगः। अतः उपहितं ब्रह्म कारणमिष्यते। तच्च बिम्बभूतमीश्वरचैतन्यम्। अविद्याविषय-त्वोपहितं ब्रह्म कारणमिति वदतामपीदमेव विवक्षितमिति—तत्र बिम्बभूतस्य तस्य अखण्डचैतन्यरूपत्वं वा, तदेकदेशत्वं वा? नाद्यः; तथा सति शुद्धब्रह्मकारणत्ववादिपक्षोक्तदोषतादवस्थ्यात्। जीवव्यावृत्तः स कश्चिदेकदेश इति तु न संभवति। निरंशे ब्रह्मणि एकदेशरूपांशनिरूपणायोगात्। अतः आकाशनिरवयवत्ववादिमते घटाकाश इति घटावच्छिन्नत्वेनाकाशप्रदेश-कल्पनवत् अविद्याद्यवच्छिन्नत्वेनैव ब्रह्मणि शुद्धव्यावृत्तिः जीवव्यावृत्तिश्च संपादनीया। तत्रोपादानतावच्छेदकत्वमविद्यादेः। उपादानत्वं तु ब्रह्मण एव। एवंभूतकारणज्ञानादपवर्ग इत्युक्तौ अविद्याविषयत्वादेरपि ब्रह्मविशेषणतया कारणतावच्छेदकत्ववत् उपायभूत ज्ञानविषयतावच्छेदकत्व-मप्यानुभविकम्। उपहितविषयकज्ञानस्योपाधिविषयकत्वाभावे हि उपहित-ज्ञानस्य निर्विशेषज्ञानस्य चाविशिष्टत्वादुपहितं जिज्ञास्यमिति, निर्विशेषं जिज्ञा-स्यमिति पक्षव्यावृत्ततया कथनमयुक्तमेव। अतो भामतीकारोक्तं यद्वा तद्वा भवतु। शतदूषणीकृतां तु विकल्पः विशेषणविशेष्योभयविषयकत्वरूपोपहि-तविषयकत्वाभिप्रायेणैव। उपाधिशब्द आङुपसृष्टधातुनिष्पन्नः; उपहित-शब्दस्तु न तथेति नोपहितपदस्य सोपाधिकपदसमानार्थकत्वनिर्बन्धोऽपि। क्वचिदेकार्थकत्वविवक्षापि काममस्तु। तदुपहितत्वं नाम तत्कृतोपधानकत्वं तद्विशिष्टत्वम्। तदुपाधिकत्वं नाम परत्र स्वधर्मारोपकत्वम्। अत्र वाक्या-न्वयाधिकरणकल्पतरुपरिमळयोरर्थभेदगतिरपि द्रष्टव्या। "तदुपधानमव्या-

पकम्" इत्यादिदीधितिकारादिप्रयोगोऽपि भाव्यताम्। अतः उपहितत्वमिह विशिष्टत्वम्। यदि कारणत्वोपलक्षितव्यक्तिज्ञानादपवर्ग एवात्र विवक्षित इति तत्र उपाधेरभानमित्युच्यते—तर्हि, "जिज्ञास्यमुपहितं ब्रह्मे"ति किमर्थं भामत्यां वक्तव्यम्; निर्विशेषमेवेति विवरणपक्षादविशेषात्। ब्रह्मजिज्ञासेति ज्ञाधातुना हि विचारफलभूतमोक्षहेतुज्ञानविवक्षा भवदिष्टा। तच्च ब्रह्ममात्रविषयकमित्युच्यते इति कथमुपहितस्य जिज्ञास्यत्वं प्रतिज्ञेयं भवेत्। यदि मन्यते—अखण्डचैतन्यमात्रस्य जिज्ञासितत्वे द्वितीयसूत्रे जीवलक्षणकथनेऽपि तन्मुखेन जीवेश्वरानुस्यूतचैतन्यस्वरूपज्ञापनसंभवेन जगत्कारणत्वलक्षणकथनम्, बहुश्रुत्यर्थपरिशीलनेन तत्प्रपञ्चनञ्चात्र व्यर्थं स्यादिति उपहितविषयकत्वं जिज्ञासाया अवश्यं वाच्यम्। एवञ्च शारीरकसंपाद्यं ज्ञानमुपहितब्रह्मविषयकमपीत्येतावदेव विवक्षितमिति—तर्हि ब्रह्मजिज्ञासेत्यत्र ब्रह्मपदस्य न निर्विशेषे लक्षणा वक्तव्या। सविशेषस्यापि विचार्यत्वात्। निर्विशेषब्रह्म तूद्गीथाद्युपासनवत् प्रसङ्गाद्विचार्यं भविष्यति, यदि तत्र सूत्रं किञ्चिदस्तीति भवद्भिरुपपादयितुं न पार्यते। ब्रह्मशब्दस्य सविशेषनिर्विशेषोभयपरत्वे, धर्मजिज्ञासेत्यत्र धर्मशब्दस्योभयपरत्वे सिद्धान्तसिद्धाञ्जनोक्तदोषादनिर्मोक्षश्च स्यात्।

न च, 'सर्वपक्षेऽपि केवलब्रह्मविषयकत्वमेवापेक्षितज्ञानस्ये'ति कथितं युक्तम्। वक्ष्यमाणलघुचन्द्रिकास्थल एव, "शुद्धब्रह्मणो वृत्त्यविषयत्वपक्षे" इति उपहितविषयकत्वपक्षस्य दर्शितत्वात्। उपरि च विवरणादिमते शुद्धब्रह्मण एव वृत्तिविषयत्वकथनात् मतान्तरे शुद्धस्य वृत्त्यविषयत्वात्। अतः उपहितविषयकज्ञानस्यातत्त्वज्ञानत्वमनिवार्यम्। उपहितब्रह्मविषयकं ज्ञानमित्यत्र ब्रह्मणि किमुपहितत्वं विवक्षितम्, किं कल्याणगुणाद्युपहितत्वम्? किं वा अविद्योपहितत्वम्? उभयथाऽपि तादृशब्रह्मणः तत्त्वातिरिक्तत्वमेव। यत्तु—ब्रह्मज्ञानस्य स्वविषयत्वोपहितब्रह्मविषयकत्वमिति—तदिदं विचार्यम्।

यदि अस्य ज्ञानस्य वृत्तिविषयत्वांशं विना ब्रह्मरूपविशेष्यमात्रविषयकता, तर्हि नायं शुद्धस्य वृत्त्यविषयत्वपक्षः। यदि वृत्तिविषयत्वमपि विषयः, तत्रान्योन्याश्रयः। वृत्तिविषयत्वोत्पत्तेः प्राक् तदुपहितब्रह्मग्रहणायोगात्, ब्रह्मवृत्त्युत्पत्तिं विना च ब्रह्मणि वृत्तिविषयत्वायोगात्। यद्यपि वृत्तीनां साक्षिभास्यत्वात् वृत्त्युत्पत्तिकाले साक्षिणा वृत्तिर्भास्यत इति ब्रह्मणि वृत्तिविषयत्वमपि वृत्त्युत्पत्तिकाले भासेत—अथापि कथं शुद्धब्रह्मणो न ज्ञानविषयत्वमिति वदन्तं प्रति स्वविषयत्वेन तस्य ज्ञानविषयत्वमिति समाधानं हि न सभवति। अतो वृत्तिविषयताप्रयोजककतिपयाकारोपहितब्रह्मग्रहणमेव वक्तव्यम्। स चाकारः अविद्या वा सर्वज्ञत्वादिगुणो वेति।

एवञ्चाबाधितसंबन्धि यत् वृत्तिविषयत्वोपहितं रूपं तज्ज्ञानस्य प्रमात्वमिति पञ्चममिथ्यात्वप्रकरणगत **लघुचन्द्रिका**वाक्यार्थोऽपि न युक्तः। तस्य रूपस्य शुद्धत्वे ज्ञानाविषयत्वम्, अन्यत्वे मिथ्यात्वञ्चेति दोषतादवस्थ्यमिति।

शुद्धस्य ज्ञानविषयत्वं न भवतीति वदताञ्चायमाशयः—यत् ब्रह्मणः स्वप्रकाशत्वात् ज्ञानमन्तरेण तत एव ज्ञानकार्यनिर्वाहे व्यर्थस्तन्मात्रविषयकज्ञानस्वीकारः। यदि च तावन्मात्रेण न ज्ञानकार्यसिद्धिः, तर्हि स्वप्रकाशत्वस्वीकारो व्यर्थ इति। अतः स्वयमप्रकाशमानकिञ्चिदाकारविशिष्टत्वेनैव स्वप्रकाशस्य ज्ञानविषयत्वमेषितव्यम्। वृत्तिविषयत्वोपहितब्रह्मज्ञानमिति वक्तुश्चायमाशयो युक्तः—यत् वृत्त्या पदार्थे घटादौ गृह्यमाणे वृत्तेरपि "घटमहं जानामी"त्येवं विषयेण सह भानस्यानुभविकत्वात् तद्रीत्या ब्रह्मज्ञानेऽपि वृत्तिभानं नापलप्यम्। एवञ्च शुद्धब्रह्मज्ञानवादिना वृत्त्युपहित ब्रह्मज्ञानमेव स्वीकार्यमिति कथं शुद्धग्रहणमिति। परंतु वृत्तेः साक्षिभास्यत्वात् ब्रह्मणश्च वृत्तिग्राह्यत्वादद्वैतिमते वृत्तिविशिष्टं ब्रह्म केन वेद्यं स्यात्? वृत्तिः साक्षी च मिलित्वा विशिष्टं वेदयत इति वा स्यात्। वस्तुतः शुद्धब्रह्मविषयज्ञानाभावपक्षे वृत्त्यैव

ब्रह्म किञ्चिद्धर्मविशिष्टत्वेनैव वेद्यत इत्येव स्वीकर्तव्यमिति नायं पक्षः विवरणकारसंमतत्वेनोक्तनिर्विशेषज्ञानपक्षादविशिष्टः ।

अद्वैतसिद्धिकारोऽप्यखण्डार्थग्रहणसाधनव्यापृतः, "सत्यं ज्ञानमनन्तं ब्रह्म" त्यत्र सत्यादिपदानां शुद्धब्रह्मलाक्षणिकत्वे नदीशब्दस्य नदीतीरे लक्षणावादिना तीरे अनदीत्वस्वीकारवत् ब्रह्मण्यसत्यत्वस्वीकारापत्तिरित्याशङ्क्यैवं परिहरति—"यदि हि तीरादौ नदीत्वादिवत् ब्रह्मण्यपि सत्यत्वादिकमभिधाबलान्न प्रतीयेत, तदैवं स्यात् । न त्वेवमस्ति । नद्यादौ नदीत्वादिवत् सत्यत्वादेर्ब्रह्मण्येव प्रतीतेः । न चैवं निर्धर्मकत्वव्याकोपः ; व्यावहारिकस्य धर्मस्य सत्त्वेऽपि स्वसमानसत्ताकधर्मविरहेण तदुपपत्तेः । वाचकानामपि लक्षकत्वमन्यानुपरक्तस्वरूपभानायेत्यन्यत्" इति । एवञ्चान्यानुपरक्तस्वरूपभानस्यापेक्षितस्य सिद्धये तात्पर्यानुपपत्त्या लक्षणास्वीकारेऽपि प्रथमतः शक्यार्थभूततत्तद्विशेषणविशिष्टविषयकबोधस्वीकारे न किञ्चिद्बाधकम्, "औदुम्बरो यूपो भवती"त्यादौ बोध्यसंबन्धरूपलक्षणामुखेन विधिपरवाक्यार्थोपयोगितया यथाश्रुतार्थविषयकबोधस्यापि स्वीकारवदिति सोऽपि मन्तुमर्हति । एवं प्राथमिकबोधे जाते शुद्धब्रह्मबोधोपयोगिन्याः तात्पर्यानुपपत्तेः प्रामाणिकत्व एव शुद्धविषयकज्ञानकल्पनावकाशः स्यात् । तदभावे तु पूर्वनिष्पन्न एव सुस्थ इत्यन्यदेतत् । एवमतात्त्विकधर्ममुखेनापि निर्धर्मकब्रह्मबोधनं यदि शास्त्रममंस्यत, 'अनृतं जडं परिच्छिन्नं ब्रह्म' इत्यपि तत् अलक्षयिष्यत् । "निर्गुण"मित्यादिवाक्यश्राविणां "सत्यं ज्ञानमनन्त"मिति श्रुतसत्यत्वादिबाधवत् अनृतत्वादिबाधस्यापि संभवेन शुद्धब्रह्मग्रहणपर्यवसानस्याविशिष्टत्वात्। तथा च येन येन वादिना यथा यथा ब्रह्मेष्यते, तत् तथैव तेन वर्ण्यताम् । सर्वधर्मबाधेन शुद्धस्थापनं तु निर्गुणवाक्यं करिष्यतीति किमिति असत्यत्वादेर्ब्रह्मण्यापादितस्य मिथ्याभूतस्याद्वैतिभिरस्वीकारः ? अतः सत्यत्वादिविशिष्टमेव ज्ञानेन गृह्यते: तच्च सत्यत्वादि ब्रह्ममात्रनिष्ठं सत्यम् । न त्वनृतत्वादिकमेवम् । एवंविधविशिष्टज्ञानमेवाविद्यानिवर्तकमित्यगत्या स्वीकार्यम् । तर्हि अद्वैतहानिरिति

चेत्—सोढव्यमेतावत् । यथा च सत्यत्वादेरभावरूपधर्मत्वस्वीकारेणाभाव-रूपधर्मस्वीकारेऽपि भावाद्वैतमिष्टं न हीयते—इत्यप्यद्वैतिष्वेकदेशिनः, एवं सधर्मकाद्वैतस्वीकारेण धर्म्यैक्यरूपमद्वैतमिष्यत इति वक्तव्यम् । एवमपि गुणगुणिनोरभेदात् गुणविशिष्टविषयकं ज्ञानमपि निर्गुणविषयकमेवेति चेत्—तन्न—गुणगुणिनोरभेदे गुणिज्ञानेनैव गुणस्यापि ज्ञातत्वसिद्ध्या सत्यं ज्ञान-मित्यनेकगुणवाचिपदवैयर्थ्यात् । व्यावहारिकपदार्थेषु गुणगुणिनोर्भेदस्यैव भवत्स्वीकृतत्वेन तत्र तद्भेदसाधकयुक्तीनामत्रापि तत्साधकत्वस्य तुल्यत्वात् । अभेदस्वीकारेऽपि गुणाभिन्नत्वेन गुणिप्रतीत्यभावात् धर्मधर्मिभावेनैव प्रतीत्या विशिष्टज्ञानस्यास्य पुनरप्यतत्त्वज्ञानत्वमेव समापतितम् । भेदाभेदस्वीकारेण निर्वाहस्त्वपसिद्धान्तः । "भेदमिवाभेदमपि व्यासेधाम" इति ह्यत्र भवन्तो वदन्ति । यत्तु—नलवेषधारिणि नलशब्दप्रयोगे स्वरूपमात्राबाधवदि-त्युक्तम्—तदपि न युक्तम् । नलवेषधारिणि पुरुषे धारकपुरुषस्वरूपम्, तद्वृत्तिः, स्वाभाविकः वेषालङ्कारादिरूपो धर्मश्चेति सर्वमेव न बाध्यते । नलत्वं नलवृत्तिधर्मान्तरं नलदेहः, नलजीव इति सर्वं बाध्यत एव । अद्वैतिदृष्ट्याऽपि व्यावहारिकदृष्टान्ते जीवभेदावश्यम्भावात् । आहार्य एव तत्र स्वरूपयोरभेद इति कोऽयं स्वरूपमात्राबाध इति ।

अथ **भामत्युक्तमु**पहितसाक्षात्कारप्रकारमपि शोधयामः—तत्र हि प्राच्यादृतकर्मावबोधानन्तर्यरूपाथशब्दार्थखण्डनसन्दर्भे अद्वैत्येकदेशिकथित शाब्दापरोक्षखण्डनपूर्वकं ब्रह्मसाक्षात्कारस्य मनःकरणकत्वमुपपाद्य, "न चाय-मनुभवो ब्रह्मस्वभावः, येन न जन्येत । अपि तु अन्तःकरणस्यैव वृत्तिभेदः । न चैतावता ब्रह्मणोऽपराधीनप्रकाशता—सर्वोपाधिरहितं हि स्वयंज्योतिरिति गीयते ; न तूपहितमपि । न चान्तःकरणवृत्तावप्यस्य साक्षात्कारे सर्वो-पाधिविनिर्मोकः । तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात् । ब्रह्मरूपस्योपाधिकलुषितस्य प्रागप्यपरोक्षत्वात् । न हि शुद्धबुद्धत्वादयो वस्तुतस्ततोऽतिरिच्यन्ते । न च तत्तदुपाधिविरहोऽपि ततो-ऽतिरिच्यते" इत्युक्तम् । अत्रेदमुक्तं प्रथमम्—ब्रह्मणः उपाधिविनिर्मोके

स्वयंप्रकाशत्वेऽपि उपाधिसत्तादशायां वृत्तिविषयत्वमप्यस्ति। ब्रह्मसाक्षात्कार-वृत्तिकाले च नोपाधिशून्यत्वं ब्रह्मणः। अन्ततः वृत्तिरूपोपाधेरेव वर्तमानत्वात्। वृत्त्यवच्छिन्नचैतन्यं वृत्तिप्रतिबिम्बितचैतन्यं हि साक्षात्कारो नाम। अतो वृत्त्युपहितत्वमक्षतमिति। वृत्तिरूपोपाधिकथनमात्रेणोपाध्यन्तरविरहो न मन्तव्यः, वृत्तिसाध्यानामविद्यान्तःकरणदेहेन्द्रियादीनां सर्वेषामपि वृत्तिकाले सद्भावात्। न चाहं ब्रह्मेति वृत्तेः अद्वैतं ब्रह्मेति ज्ञानानन्तरमेव जायमानतया तेनाद्वैतज्ञाने-नाविद्यानिवृत्तेर्नाविद्यासद्भाव इति वाच्यम्—तर्हि तेन ब्रह्मव्यतिरिक्तसर्वनिवृत्ति-संभवेन अहं ब्रह्मेति वृत्तेरनुदयप्रसङ्गात्। 'तत्त्वज्ञानमेव मिथ्याभूतसर्वनाशः' इति वदताम् अद्वैतं ब्रह्मेति ज्ञानसमनन्तरं ब्रह्मातिरिक्तसद्भाववर्णनस्याशक्यत्वात् वृत्तेरनपेक्षितत्वाच्च। मुक्तेस्तत एव सिद्धत्वात्। न च जीवन्मुक्तिरेव तावता, मुख्यमुक्तिस्तु अहं ब्रह्मेति ज्ञानादिति वाच्यम्—प्रारब्धकर्मावसाना-नन्तरभाविन्याः मुख्यमुक्तेरहं ब्रह्मेतीदानीन्तनवृत्त्याप्यनुदयात्। अतो वृत्त्युपहि-तत्ववादिना तत्कारणान्तःकरणादितन्मूलाविद्यादिसर्वोपहितत्वमप्यनपलपनीयम्। एवञ्च ब्रह्मण उपहितत्वात् वृत्तिविषयत्वं भवितुमर्हतीति। अत्र वृत्त्युपहितं ब्रह्मेत्यनेन ब्रह्मणि वृत्त्युपहितत्वमपगतवृत्तिकत्वरूपोपलक्षितत्वरूपमपि न विवक्षितम्; ब्रह्मवत् वृत्तेरपि साक्षात्कारविषयत्वप्रयुक्तं वृत्तिविशिष्टत्वरूपमपि न विवक्षितम्; अपि त्वविद्यान्तःकरणाद्यविशेषं वृत्तेर्ब्रह्मसाक्षात्कारकाले सत्त्वप्रयुक्तं वृत्त्युपहितत्वमेवेति तावदस्तु। अत्र यावत्कार्यमवस्थित उपाधिरित्यु-पाधिलक्षणं कल्पतरूक्तं परिमळकृन्न स्वीकरोतीत्यन्यदेतत्। एवमपि ब्रह्मसाक्षा-त्कारः ब्रह्मव्यक्तिमात्रविषयको वा किञ्चिद्धर्मविषयकोऽपि वेति विमर्शे—पूर्वम्, "त्वम्पदार्थस्य तत्पदार्थत्वेन साक्षात्कार एषितव्यः" इत्येवमुक्त्या, कल्पतरौ, "निरुपाधि ब्रह्मेति विषयीकुर्वाणा वृत्ति"रिति लेखनात्, परिमळे, "वास्तवनिरुपाधिकत्वाकारसाक्षात्कारोदय" इति विवरणात्, भामत्यामेव, समनन्तरम्, 'जीव एव तु तत्तदुपाधिरहितः शुद्धबुद्धादिस्वभावो ब्रह्मेति गीयते"इति तत्तदुपाधिराहित्यशुद्धत्वबुद्धत्वादेर्वृत्तिविषयत्वस्याभिमतत्वाविष्कर-णात् मोक्षहेतुः साक्षात्कारः न ब्रह्मव्यक्तिमात्रविषयकः। किन्तु किञ्चिद्धर्म-

विषयकोऽपीत्येवावधार्यते। परन्तु ते धर्माः धर्मतया प्रतीयमाना अपि वस्तुतो ब्रह्मस्वरूपाभिन्ना इत्येव तन्मतम्; न तु धर्माणामविषयत्वमिति। एवञ्च निरुपाधित्वनिर्विशेषत्वनिष्प्रपञ्चत्वाद्वितीयत्वादिकिञ्चिद्रूपेण ब्रह्मणः तादृशजीवैक्यसाक्षात्कारः मुक्तिहेतुरिति सिद्ध्यति। एवञ्च वृत्त्युपहितब्रह्मसाक्षात्कारपरस्य, "तस्यैव तदुपाधेः" इति भामतीग्रन्थस्यापि वृत्तिस्वयंप्रकाशत्वादिभिः वृत्त्या ब्रह्मणि विषयीक्रियमाणे वृत्तिविषयत्वं तत्र ग्राह्यं भवतीत्यवश्यं वाच्यमित्यशयः स्यात्। अयञ्च पक्षः शतदूषण्याम्, "अविद्यानिवृत्त्यर्थमिह ज्ञातव्यमुपहितं निरुपाधिकं वे"त्यत्र नोपहितविकल्पेऽन्तर्भवति। किन्तु द्वितीये। अस्त्वेतत्।

अत्र भामत्युक्तं शोधनीयम्—निरुपाधिकत्वरूपतत्तदुपाधिविरहस्य ब्रह्मरूपत्वे ब्रह्मजीवयोरैक्यात् जीवे अहमिति सर्वदा प्रत्यक्ष्यमाणे ब्रह्म प्रत्यक्षितमेवेति तत्तदुपाधिविरहस्यापि प्रत्यक्षितत्वमावश्यकमिति उपाधिविशिष्टतया ब्रह्मभानं संसृतौ स्वीकृतं नोपपद्येत। **अद्वैतसिद्धौ,** "अनृतजडपरिच्छिन्नव्यावृत्तीनां ब्रह्मणश्चैकत्वेऽपि अतादृशव्यावृत्त्याकारेण ज्ञानार्थं सत्यादिपदानी"त्युक्तम्। तद्रीत्या तत्तदुपाधिविरहाकारेण ज्ञाने सत्येव तत्तदुपाधिमत्त्वभ्रमानुदयः इति तु न वक्तुं शक्यम्। न हि—'शुक्तित्वं स्वरूपतः प्रत्यक्ष्यमाणं रजतत्वभ्रान्तिविरोधि न भवति, किं तु रजतभेदरूपेण गृह्यमाणमेवेति युज्यते। ब्रह्मप्रत्यक्षमात्रेण सोपाधिकत्वप्रतीतिनिरोधाभावात् तथा वर्ण्यत इति चेत्—अत एव निरुपाधिकत्वादेर्ब्रह्मव्यत्तव्यतिरिक्तत्वमेषितव्यम्। यथोर्ध्ववस्तुव्यक्तिदर्शनमात्रेण पुरुषत्वभ्रान्त्यनिरोधात् पुरुषत्वाभावस्य व्यक्तव्यतिरिक्तस्थाणुत्वादिधर्मरूपत्वम्। "अन्योन्याभावो न घट" इत्यत्र भेदाधिकरणकभेदोऽतिरिक्तो नेष्यते किलेति कल्पतरूक्तमपि न; भावातिरिक्तत्वमभावे मन्यमानस्य भेदग्रहणे घटसंशयाभावात् तथा स्यात्। यदि तु भेदग्रहणेऽपि घटसंशयाद्यनिवृत्तिः, तर्हि तत्र नञर्थस्य धर्मिस्वरूपता नेष्यत एवास्माभिरिति। अतोऽतिरिक्त एवायं धर्मः। अन्यथा स्वयंप्रकाशत्वं वा स्वात्मनस्त्याज्यं

स्यात्। नाहमिति विपर्ययस्य, अस्मि न वाऽहमिति संशयस्य चानुदयात् प्रमाणजन्यज्ञाननिरपेक्षमेवाहमर्थे आत्मनि निःसंशयविपर्ययत्वं स्वयंप्रकाशत्वमन्तरा नोपपाद्येतेति हि तदिषितम्। एवञ्च संशयविपर्ययप्रसक्तिरहितोंऽशः स्वयंप्रकाशः; अन्यांशः वृत्तिग्राह्य इत्येव संमन्तव्यम्। अत एव वृत्तिज्ञानस्यैवाविद्यानिवर्तकत्वम्; न तु स्वरूपभूतज्ञानस्येति अद्वैततत्त्वविदामाशयतत्त्वम्। तदिदमविद्वांसोऽर्वाञ्चः, 'ब्रह्म स्वरूपतो नाविद्यानिवर्तकम्; वृत्तिरेव तु निवर्तिका। वृत्तिविषयस्य स्वयंप्रकाशस्य चाविशिष्टत्वेऽपि वृत्तेरयं महिमा' इति निर्युक्तिकमागृह्णन्ति। वयं पुनर्धर्मविशेषविशिष्टतया ब्रह्मसाक्षात्कारोऽविद्यानिवर्तक इत्यद्वैतिपक्षमेवोपपन्नं वदन्तोऽपि, 'तस्य धर्मस्य धर्म्यभेदो न संभावनार्हः' इति ब्रूमः। गान्धर्वशास्त्राभ्यासात् षड्जादिस्वरभेदप्रत्यक्षवत् महावाक्यार्थाभ्यासवशात् निरुपाधि ब्रह्मसाक्षात्कार इति तावदस्तु; तथापि तत्र स्वरेषु मिथो भेदकाकारस्य धर्म्यतिरिक्तस्य सद्भाव एवेष्ट इतीहापि तथैव। **परिमळे**ऽप्युक्तम्—"गान्धर्वशास्त्राभ्यासरहितैरपि सूक्ष्ममतिभिः श्रूयमाणाः स्वराः किञ्चित् परस्परवैलक्षण्येनानुभूयन्ते" इति। किञ्चोपाधिरहितत्वाद्याकारेण ज्ञानमुपाधिविषयकं न वा। न चेत्, प्रतियोग्यग्रहणात् न भेदग्रहणं स्यात्। तद्विषयकत्वे च कथं वृत्तेर्ब्रह्ममात्रविषयकत्वम्? ब्रह्ममात्रविषयकत्वे च तत् कथमुपाधिविरहाकारेण ज्ञानरूपमित्यलमत्र बहुना।

तत् सिद्धमुपहितं ज्ञातव्यमिति पक्षो निर्विशेषब्रह्मज्ञानवादिपक्षान्नाविशिष्ट इति।

अथ परब्रह्मवाचिनः पुरुषोत्तमशब्दस्य स्वपक्षे आनुकूल्यं प्रदिदर्शयिषुणा लिख्यते—पुरुषोत्तमशब्दः क्षराक्षरातीतं परमात्मानं बोधयतीति समानमुभयत्रेति। नूनं शब्दतः समानमेव सर्वम्। क्षरशब्दाक्षरशब्दपरामात्मशब्दपुरुषोत्तमशब्दानां मतद्वये महान् अर्थभेदः। नूनं पुरुषोत्तम-

शब्दस्य, "पुरुषेभ्य उत्कृष्टं पुरुषातिशयितं निर्गुणवस्तु" इत्यपार्थकल्पना-प्रसङ्गपरिहारार्थैव भगवता "उत्तमः पुरुष" इति कर्मधारयतुल्यार्थप्रदर्शनेन पुरुषोत्तमस्यापि पुरुषत्वमुपक्षिप्तम्। एवञ्च क्षरः पुरुषः, अक्षरः पुरुषः, तदन्यश्च कश्चित् पुरुष इति पुरुषत्रयानुगतं पुरुषत्वं किंरूपमिति विवेचनीयम्। न तावत्, "स वा एष पुरुषोऽन्नरसमयः", "यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इत्यादिस्थलेष्विव शरीरत्वं पुरुषत्वम्। तस्य भवदभिमते कूटस्थे, परमात्मनि चाभावात्। भवन्मते क्षरपदविवक्षिते देहसंघाते परं तत स्यात्। कूटस्थपदगृहीते अव्यक्ते मायापरपर्याये पुरुषपदप्रयोगः सर्वथैवाप्रसिद्धः। भवदुपात्ते, "प्रकृतिर्या" इति श्लोकेऽपि प्रकृत्यपेक्षयाऽन्य एव पुरुषशब्द-निर्दिष्टः। तत्र श्लोके, "मया ख्याता' इत्यस्य स्थाने "प्रभाख्याना" इति, "उभावेतौ लीयेते" इत्येतत्स्थाने, "आत्मभावेन लीयत" इति च प्रामादिकोऽपपाठः। तच्छ्लोकदर्शितश्चिदचितोर्लयः परमात्मनि नास्मन्मते संभवतीत्युक्तमपि न सम्यक्। प्रकृतावपि अव्यक्ताक्षरतमोरूपावस्थासत्त्वेन पूर्वावस्थापन्नप्रकृतिविशिष्टब्रह्मणः उत्तरावस्थापन्नसूक्ष्माचिद्विशिष्टब्रह्मणि लयस्या-स्मत्पक्षे सुघटत्वात्। एवं पुरुषशब्दार्थजीवविषयेऽपि द्रष्टव्यम्। यदा तु प्रकृतिपुरुषपदे अत्यन्तसूक्ष्मचिदचित्परे, तदा लयः, "तमः परे देव एकी-भवती"ति श्रुत्यन्तरोक्तं यदैक्यम्, तद्रूप इति इत्यैकरस्यमेवास्माकम्। भवत्पक्ष एव तु नोपपद्यते। प्रकृतेरविद्यायाः प्रलयकाले परमात्मनि लयायेगात्। मुक्तिकाल एव तस्य वक्तव्यत्वात्। सोऽपि लयस्तदा निवृत्तिरूपः परमात्म-निष्ठो भवतीति कथम्? अविद्यायाः परमात्मन्यध्यासाभावात्। तदिष्टौ चाविद्यायाः अनादित्वभङ्गप्रसङ्गात्। एवं पुरुषलयोऽपि न। जीवब्रह्मणो-रैक्यात्। जीवविशेषणीभूतास्त्वंशाः प्राकृताः प्रकृतावेव लीयन्त इति प्रकृति-र्लीयत इत्यनेनैव तत् गतार्थम्। एवं स्वपक्ष एवानुपपन्नं श्लोकं स्वयं प्रसङ्गा-दयथावदनूद्यास्मत्पक्षे तत्रानुपपत्तिप्रदर्शनमनुपपन्नमित्युक्तम्। तदत्र पुरुषपदं क्षराक्षरपरमात्मत्रितयानुगतमर्थं कीदृशं वक्तुमर्हतीति विचारे पुरुषशब्दस्यात्म-

वाचितायाः सर्वसंमतत्वात् पुरुषत्वमात्मत्वमेव। अत एव क्षरपदमक्षरपदञ्च बद्धात्ममुक्तात्मपरं चेत्—अर्थसामञ्जस्यम्। भूतपदञ्च, "यतो वा इमानिभूतानि", "भूतानां प्राणिनः श्रेष्ठाः" "तस्यैतस्य महतो भूतस्य" इत्यादौ अचेतनविशिष्टचेतनप्रसिद्धम्। अक्षरपदञ्च, "ये चाप्यक्षरमव्यक्तम्" इत्यादौ शुद्ध आत्मनि प्रसिद्धम्। तथा कूटस्थपदमपि। एवञ्च बद्धमुक्तोभयविधात्मविलक्षणः पुरुषोत्तमः परामात्मेति अस्मत्पक्षे सर्वेषां सामञ्जस्यं सम्यगवधारयतु भवान्।

यच्चान्यत् प्रासङ्गिकमुक्तम्—"सर्वत्रासौ समस्तञ्चे"ति श्रीविष्णुपुराणनिरुक्तं वासुदेवत्वं परमात्मनः योगव्युत्पत्त्या। वसुदेवात्मजस्तु कृष्णो न परमात्मा। नापि वासुदेवपदनिरुक्तार्थता तस्येति—

अहो अनन्तकृष्णोऽयं श्रीकृष्णायाभ्यसूयति !
द्वेधाऽपि वासुदेवत्वं श्रीकृष्णे सुष्ठु संगतम् ॥ 51 ॥

श्रीकृष्णपरमात्मा सर्वत्र किं न वसति ? सर्वं वा किं तस्मिन् न वसति ? ईदृशं व्यामोहं स एव शमयति, "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो ममाव्ययमनुत्तमम्", "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय!। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥" इत्येवम्। यत्तु-"वसुदेवात्मजस्य तेनैव रूपेण पुरुषोत्तमत्वे, "उत्तमः पुरुषस्त्वन्यः", "यस्मात् क्षरमतीतोऽहम्" इति वचनद्वयं वितथम्—इति—तर्हि किमयं तेन रूपेणेदानीं पुरुषाधम इति भवान् मन्यते ? वचनद्वयं वितथमिति किं वचनयोरुभयोरपि वैतथ्यमभिप्रेत्य, उतान्यतरस्य ? अर्थस्य सुसङ्गततया वैतथ्यस्य न कथमपि प्रसक्तिः। वैयर्थ्यमपि न। पूर्ववचनं परमात्मेति समाख्यां प्रदर्श्य व्युत्पादयति। उत्तरं पुरुषोत्तमशब्दं निर्वक्ति। एवमुभयमिदं वसुदेवात्मजे समन्वितं क्रियत इति। शाङ्करभाष्येऽपीयमेव वर्णनसरणिः। न तु वचनयोर्विभिन्नव्यक्तिविषयत्वं तत्रापि भाषितम्। उत्तरश्लोके, "अह"मिति

निर्देशात् "एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः" इति वचनप्रामाण्यात् 'नारायणोऽह'मिति श्रीकृष्णः कथयत्येव। पूर्वश्लोकमन्यपदेश्वरपदघटितत्वादपार्थकल्पनव्यसनी शिवपरं मा शङ्किष्टेति मनसिकृत्यैव शाङ्करभाष्ये वैष्णवाग्रेसरतया व्यक्तमुक्तम्, "अन्यपदं पूर्वप्रस्तुतक्षराक्षरान्यपरम्। "अव्यय ईश्वरः। नास्य व्ययो विद्यत इति अव्ययः। कः ईश्वरः? सर्वज्ञः नारायणाख्यः ईशनशीलः"इति। सव्ययः शिवोऽत्र न ग्राह्यः; किन्तु अव्यय ईश्वरो नारायण इति, वचनद्वयमेकविषयमिति च तावदितः स्पष्टम्। क्षराक्षरशब्दाभ्यां देहप्रकृत्योर्ग्रहणेन तदतिरिक्तमात्मस्वरूपं परमात्मशब्देन पुरुषोत्तमशब्देन च विवक्षितमिति पुनरत्र शाङ्करदर्शितोऽर्थः सर्वथैवास्वरस इत्युपपादितमेव। एवं क्षराक्षरान्यस्य परमात्मत्वप्रतिपादने मतद्वयसंमते श्रीकृष्णादन्यस्य परमात्मत्वं प्रतिपाद्यत इति स्वयं कृत्वा, यल्लिखितम्—"अन्यस्य परमात्मत्वाभिधानविरोधोऽपी"ति—तत् सयूथ्या अपि न संमन्तुमर्हन्ति। न च शुद्धस्य परमात्मत्ववर्णनमत्र श्लोके क्रियत इति भावत्का अपि ब्रवीयुः। उत्तरार्धोक्तावेशभरणादेः शुद्धे दुरुपपादत्वात्। आत्मशब्दशक्यार्थश्च न शुद्धः। तदुक्तं सिद्धान्तलेशसङ्ग्रहे—"आत्मन आकाशः संभूत इत्यादिकारणवाक्येषु शबलवाचिनामात्मादिशब्दानां शुद्धे लक्षणैव"इति। **योगवासिष्ठ-**वचनं तु नावश्यमादरणीयम्—अथापि तदप्यविरुद्धम्। "इदं चाहमिदञ्चाहमिति यत् प्रवदाम्यहम्। तदेतदात्मतत्त्वं तु तुभ्यं ह्युपदिशाम्यहम्॥" इति श्लोको हि, 'इदमर्थस्य मच्छरीरभूतस्य मदभेदप्रदर्शनार्थमेवं नोपदिशामि; किन्तु तत्तदन्तर्वर्तितत्तन्नियन्तृ आत्मस्वरूपं यत् तत् विविच्योपदिशामी'त्यर्थक इति नात्र शुद्धग्रहणप्रसक्तिः। अस्य प्रतर्दनाधिकरणसिद्धान्तानुसारित्वमत्रोच्यते। प्रतर्दनाधिकरणे शुद्धपरतया सूत्रव्याख्यां प्रथमतो विधाय, शाङ्करभाष्ये विशिष्टोपासनपरतयैव पश्चाद्व्याख्यानमकारि। द्वितीयमेव च व्याख्यानम्, "एष एव साधु कर्म कारयति........एष लोकाधिपतिरेष लोकेशः" इत्युपसंहारवाक्यानामप्यनुगुणमिति प्रागेवावोचाम॥

यत्तु—अर्थवादानामवाचकत्वेऽपि लक्षकत्ववत् सत्यादिपदानां लक्षकत्वं संभवतीति, नासाधुत्वमवाचकत्वमिति च—तन्न—अर्थवादे हि पदसमुदायं प्रति वाच्यस्य कस्यचिदर्थस्याभावेन शक्यसंबन्धरूपलक्षणाया दुर्निरूपत्वेऽपि बोध्यसंबन्धरूपा लक्षणा भवितुमर्हति। बोध्यत्वञ्च स्वघटकपदशक्त्यधीनस्वप्रयोज्यबोधविषयत्वम्। यथायथं तत्तद्विभक्त्यन्तपदार्थे वाक्यार्थे च समन्वेतीत्युक्तम्। अत्र यदि सत्यादिपदानां किञ्चिद्वाचकत्वमेव न स्वीक्रियते, तदा कथं निरुक्तस्य बोध्यत्वस्य तत्र प्रसक्तिः? अखण्डार्थानुभावकत्वरूपा तु लक्षणा काचिदद्वैतसिद्ध्याद्युक्ता स्वरूपसती हेतुः, न तु लक्षणावृत्तिवत् ज्ञायमानतयेति न तत्रार्थवाददृष्टान्तीकरणप्रसक्तिरस्ति॥

यत्तु—"शब्दानां साधुत्वस्य मिथ्यात्वस्वीकारे साध्वसाधुविभागो न स्यात्। तथा च कृतं साङ्गोपाङ्गैर्वेदैः" इति शतदूषण्युक्तविषयसमाधित्सया लिख्यते—शब्दानामिव साधुत्वस्य मिथ्याभूतस्यापि यावद्बाधमर्थक्रियाकारित्वान्न हानिरित्यादि—तन्न सङ्गच्छते। शतदूषणी हि, शब्दाः सत्याः तद्गतं साधुत्वं मिथ्येति स्वीकारे दूषणं दर्शयति। न तु प्रपञ्चबाधकाले साधुत्वबाधस्वीकारपक्षे। न हि शब्दमिथ्यात्वं तत्र प्रदर्शितम्। किन्तु शब्दानां यत् साधुत्वं तन्मात्रमिथ्यात्वम्। तथा च शतदूषणी, "हन्त तर्हि सर्वशब्दासाधुत्वम्" इति। अतश्चाद्वैती स्वपक्षे सर्वस्य मिथ्यात्वमित्येतद्वासनोत्थापितः, ब्रह्मशब्दस्य साधुत्वं न स्यादित्यत्र समुचितं परिहारं वक्तुमपारयन् स्वसिद्धान्तभूतमिथ्यात्वं ब्रह्मशब्दगतसाधुत्वविषये प्रदर्श्य स्वात्मरक्षायै प्रयतेत, तदैतद्दूषणदानं शतदूषण्याम्। अतो व्यावहारिकदशाभाविमिथ्यात्वं शब्दसद्भावसमकालिकं दूष्यत इति विषयस्य भिन्नत्वात् न भवदुक्तसमाधानस्यात्र संभव इति। साङ्गवेदप्रामाण्यं आत्मनिश्चयोत्पत्तेः प्रागबाधितत्वादक्षतमित्युक्तिश्च न युक्ता। ब्रह्मशब्दस्य किञ्चिदवाचकत्वे असाधुत्वम्; असाधुत्वे च सर्वस्याप्रामाण्यमिति किलोक्तं शतदूषण्याम्। तत्र ब्रह्मशब्दस्य किञ्चिदवाचकत्वमात्मनिश्चयात् परं स्वीक्रियते चेत्—एष

दोष इति तावत् न शतदूषण्यर्थः । किन्तु ब्रह्मशब्दसत्ताकाले तस्यावाचकत्वस्वीकारे, व्यवहारकाले एवासाधुत्वाप्रामाण्यादिकमायातीति । एवं शतदूषण्युक्तार्थे स्थिते पश्चादप्रामाण्यमिति भवद्वर्णनस्य चास्य च कः संबन्धः ? अतोऽसंगतमिदमुपपादनम् ॥

आत्मनिश्चयपर्यन्तं प्रामाण्यं सुस्थमिति,

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ॥"

इति संप्रदायवाक्यप्रदर्शनपूर्वकमुक्तमप्यनुपपन्नम् । तद्वाक्यार्थस्यैवानुपपन्नत्वात् । देह आत्मेति प्रत्ययोऽपि ज्ञानानां स्वतः प्रामाण्यात् प्रमाणत्वेन कामं गृह्यते । परं तु कियदवधि ? यावच्छास्त्रतो देहात्मविवेको नोदेति । अथ पुनरप्रमाणत्वनिश्चय एव । तथा तत्त्वमसिवाक्यार्थसाक्षात्काराधीनजगद्बाधप्राप्तेः प्रागपि तद्वाक्यार्थश्रवणत एव लौकिकप्रमाणसमान्यस्याप्रामाण्यं गृहीतमेव । एवञ्चाप्रामाण्यज्ञानानास्कन्दितज्ञानरूपकारणाभावात् उपदेशादौ प्रवृत्तिर्दुर्घटैव । प्रमाणत्वं नामाबाध्यार्थविषयकत्वमित्येव हि वक्तव्यम् । तत्तु प्रत्यक्षादिप्रमाणेष्वद्वैतिभिर्दुर्वचम् । बाधकत्वेन यन्निश्चितम्, तज्ज्ञानातिरिक्तज्ञानाबाध्यार्थविषयकत्वेन ज्ञानप्रामाण्यस्वीकारे शुक्तिरजतज्ञानमपि प्रमाणं स्यात् ; शुक्तिज्ञानातिरिक्तज्ञानाबाध्यार्थविषयकत्वात् । बाधज्ञानोत्पत्तावपि अनिवृत्तार्थविषयकत्वमस्तीत्येतावता तु प्रामाण्यस्वीकारे "श्वेतः शङ्खः" इति ज्ञाननिश्चयानन्तरमपि "पीतः शङ्खः" इति जायमानं ज्ञानं प्रमाणमिति व्यवह्रियेत । अबाध्यार्थविषयकत्वं हि प्रामाण्यं बाधस्य कदाचिदिष्टत्वे कथं भवितुमर्हति ? देहातिरिक्तात्मनिश्चयोत्पत्तेः प्राक् प्रामाण्यकल्पनाऽस्तीति श्लोकोक्तं तु सत्यम् । वेदान्तश्रवणरूपनिश्चयानन्तरं तु प्रामाण्यकल्पना नैवोदेतुमर्हति ॥

समन्वयाधिकरणभाष्यान्तोदाहृततद्गाथाव्याख्यानावसरे च **भामत्या**मुक्तम्—"देहादिष्वात्माभिमानस्य मिथ्यात्वेऽपि वास्तवलोकयात्रावाहित्वं

यथा, तथैवाप्रमाणादद्वैतसाक्षात्कारो भविष्यती"ति। "स्यादेतत्— अप्रमाणात् कथं पारमार्थिकाद्वैतानुभवोत्पत्तिः" इत्यवतरणग्रन्थाच्चाप्रमाणत्व-संमतिर्ज्ञायते। इदञ्चाप्रमाणत्वं कदा? न तावत् जगद्बाधानन्तरम्। तदा धर्मिण एवाभावेन तत्राप्रमाणत्ववर्णनायोगात्। न च प्रमाणत्वाप्रमाणत्वे भावाभावौ गोत्वतदभावाविव विरुद्धौ एकत्र कालभेदेनापि समावेशमर्हतः। अतः धर्मिसत्तासमसामयिकमेवाप्रमाणत्वं विवक्षितं वक्तव्यम्। गाधायाञ्च, "प्रमाणत्वेन कल्पितः" इति कल्पितपदं वस्तुतः प्रमाणत्वाभावं दर्शयत्येव। अतः साङ्गवेदप्रामाण्यवर्णनं गाधातद्व्याख्यानविरुद्धमेव। अत्र भामत्याम्, देहादिष्वात्माभिमानस्य मिथ्यात्वेऽपि लोकयात्रावाहित्वं यथेति कथनमपि विचार्यम्। आत्माभिमानस्य मिथ्यार्थविषयकत्वेऽपि न मिथ्यात्वं स्वरूपतः। तत्र सर्पभ्रान्तेर्भयादिकं प्रतीव लोकयात्रां प्रति कारणत्वे काऽनुपपत्तिः? देहे अहंमानाधीनः देहानुबन्धिषु ममकारोऽपि तद्वदमिथ्यैव। देहं प्रत्यनुकूलता-ज्ञानात् यथार्थादेव च वास्तवान्नार्जनादिरूपा लोकयात्रेति। अलमत्राधिकेन॥

अथ वाचकत्वपक्षं वास्तवमवलम्ब्य, "ब्रह्मशब्दो विशिष्टवाचक एव सन् तात्पर्यवशात् विशेष्यमात्रं ग्राहयति, उक्तं हि मणौ, विशिष्टशक्तेनापि पदेन तात्पर्यवशान्निर्विकल्पकाकाशस्मरणमिति। तद्वत् विशेष्यब्रह्मज्ञानं भवती"ति यदुक्तम्— तत्र वक्तव्यं शतदूषण्यां व्यक्तमेव। "मुमुक्षुभिर्जि-ज्ञास्यं निर्विशेषमित्यस्यैव निर्मूलत्वात्" इति। अन्यच्च ब्रूमः। मणौ विशिष्टशक्तपदाधीनं विशेष्यमात्रज्ञानं तावत् निर्विकल्पकरूपं स्मरणरूपञ्चोक्तम्। तद्वदत्र ब्रह्मज्ञानस्य निर्विकल्पकत्वे निष्प्रकारकत्वात् निर्धर्मितावच्छेदककत्वाच्च प्रतिबन्धकत्वमेव न स्यात्। तथा च कथं ब्रह्मज्ञानाज्जगद्बाधः। तथा स्मरणमपि समभिव्याहृतपदार्थान्वयानुभावकत्वानङ्गीकारे निष्प्रयोजनमेव। अङ्गीकारे चान्वयविशिष्टब्रह्मग्रहणमेव संमतं भवेत्। समानाधिकरणपद-संघातोऽपि यद्येकतरपदोपात्तकिञ्चिद्धर्मविशिष्टेऽन्यतरपदोपात्तधर्मान्वयं नानु-भावयेत्, न तर्हि प्रमाणभावमनुभवेदित्येव मणितत्पूर्वोत्तरसर्वतान्त्रिकग्रन्थ-

निष्कृष्टम् । संज्ञाशब्दस्थले च संज्ञैवान्ततः प्रवृत्तिनिमित्तं भविष्यति "नामन्त्रित" इति पाणिनिसूत्रार्थविचारः, शेखराद्यद्वैतश्रद्धालुग्रन्थार्थदूषण-**श्चास्मत्कृतायां परमार्थप्रकाशिकायां** द्रष्टव्यम् । साङ्केतिकत्वप्रसक्त्यन्र्हं ब्रह्मपदं स्वयं साङ्केतिकमभिमन्यमानेन यदुच्यते, "शतदूषण्यपि साङ्केतिकत्वमनुमन्यते, 'न च साङ्केतिकोऽयमपभ्रंशो वा' इत्युक्त्वा तदनन्तरमपभ्रंशत्वनिषेधमात्रे युक्तिप्रदर्शना"दिति—तदपि स्वाभिमानमूलमेव । अपभ्रंशपक्षदूषणमात्रे तात्पर्यं चेत्—"न च साङ्केतिक" इति लेखनस्य कथं प्रसक्तिः ? अपभ्रंशत्वपक्ष इव साङ्केतिकत्वपक्षे उपरि विचारो न कृत इत्येतावता, 'पूर्वपक्षी साङ्केतिकत्वनिषेधं निर्विवादं जग्राह । अपभ्रंशपक्ष एव किमपि विवदते' इत्येवमेव ह्यभ्यूहितुमवसरः स्यात् । न तु स्वयं निषिद्धः साङ्केतिकत्वपक्षः स्वयमेवानुमन्यत इति । अपभ्रंशपक्षे परमधिकविवादप्रसक्तिः कथमिति चेत्—उच्यते । प्रथमतस्तावत्; ब्रह्मशब्दोऽयं न साङ्केतिकः—न चापभ्रंश इत्युक्तम् । वेदश्रुतब्रह्मशब्दार्थजिज्ञासां प्रतिजानानेन भगवता बादरायणेन प्रयुक्तोऽयं ब्रह्मशब्दः वैदिक इत्यस्य निर्विवादतया साङ्केतिकत्वापभ्रंशत्वे तस्य न शक्यशङ्के ; अपौरुषेये शब्दे पुरुषसङ्केतस्य पुरुषप्रमादाधीनत्वस्य च दुर्वचत्वादिति पूर्वपक्षिणाऽपि सुग्रहमिति कृत्वा **अय**मिति हेतुगर्भं प्रयुक्तम् । तदुपरि पूर्वपक्षी किञ्चिदचिन्तयत्—'मा भूत् साङ्केतिकत्वम्, अपभ्रंशत्वं तु वैदिकेऽपि संभाव्यते, "तेऽसुरा हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवुः" इति 'अरय' इत्येतत्स्थाने 'अलय' इत्यपभ्रंशानुवाददर्शनादिति । इदञ्च, अयमिति पदस्याभिप्रेतं पूर्णमर्थमगृहीत्वा । परोक्त्यनुवादानिविष्टवैदिकशब्द इति अयम्पदविवक्षितार्थः । इममर्थमविदुषः शङ्कामपि दुःस्थां दर्शयितुमुपर्युक्तम्, अपभ्रंशत्वशङ्किना मूलभूतस्यानपभ्रंशस्य कस्यचिद्वक्तव्यत्वात् तस्मिन् शब्दे वाचकत्वमिष्टं न वेति विचारोऽवकाशमश्नुत एवेति । तस्मात् पौरुषेयानुवादरूपत्वात् 'अलय' इत्यस्य, अपौरुषेयः शब्दो न साङ्केतिको न चापभ्रंश इति उपपादननिरपेक्षमेव सुग्रहमिति शतदूषण्याशयमविज्ञाय साङ्केतिकत्वपक्षासंभवं स्वयमप्यविमृश्य पौनःपुन्येन तदुपन्यसनमयुक्तमिति ॥

एवमेव, "ननु ब्रह्मशब्दस्यायं महिमा" इति शतदूषण्यर्थोऽपि सर्वथैव न ज्ञातो भवता। न हि पदार्थतत्त्वनिर्णयादिग्रन्थे, 'यत्किञ्चिदर्थावाचकोऽपि शब्दो लक्षको भवितुमर्हती'त्युक्तम्। अत्रापि शतदूषणीवाक्ये, ब्रह्मशब्दस्य मुख्यार्थो यः कश्चिदपि न स्वीक्रियते चेत्, तल्लक्ष्यार्थोऽपि दुर्वच इत्येतावदेवोच्यते। न तु भवदुदाहृतग्रन्थाद्युक्तरीत्या यत्किञ्चित्पदावाच्यत्वात् यत्किञ्चित्प्रमाणावेद्यत्वात् निर्विशेषब्रह्मणः ब्रह्मशब्दलक्ष्यत्वमपि न भवतीत्याशङ्का क्रियते। अतः, "अवाच्यत्वेऽपि लक्षणया प्रतीतिर्न विरुध्यत" इति भवदुक्तेः प्रकृतशतदूषणीसूक्तेश्च न कश्चित् संबन्धः। ब्रह्मशब्दस्य वाच्यार्थं विनापि किञ्चिदर्थलक्षकत्वस्वीकारे सर्वेष्वपि पदेषु शक्यार्थत्यागेन लक्ष्यार्थपरत्वमेव महामीमांसकस्वीकर्तव्यं भवेदिति शतदूषण्यां सामान्येनोक्तमजानता, 'सर्वपदानां ब्रह्मलक्षकत्वमेवापाद्यते' इति गृहीत्वा भवता, साङ्केतिकत्वस्य स्वीकृतत्वादिति मनसिकृत्य, ब्रह्मशब्दस्य मुख्यार्थशून्यत्वं नास्तीत्युच्यत इत्य—त्यन्तासङ्गतमेतत्। सविशेषवाचकत्वमुभयसंमतमेवेति चेत्—तर्हि किञ्चिदर्थावाचकत्वविकल्पोऽस्मान् प्रति मा भूदित्येव भवता वक्तव्यं भवेत्। सविशेषवाचकत्वस्वीकारे निर्विशेषे लक्षणाया एव स्वीकार्यत्वात् शक्यलक्ष्यार्थयोर्मध्ये शक्यार्थग्रहणमेव ज्याय इति प्रत्यवस्थीयेतेति भिया ब्रह्मशब्दस्य शक्यार्थ एव न स्वीकार्य इति योऽमनुत, तं प्रति, 'ब्रह्मशब्दस्य क्वचिन्मुख्यवृत्तत्वं नास्ति चेत्—साधुत्वं न स्यात्; लक्षकत्वं न स्यात्—यत्किञ्चिदर्थावाचकत्वेऽपि लक्षकत्वमिति महिमाऽयं ब्रह्मशब्दस्येत्यपि दुर्भण' मित्यादिकमुच्यत इति प्रतिपद्यताम्। "मुख्यार्थशून्येन ब्रह्म लक्ष्यत इति वादः मुखान्तरेण तस्य संवृतिमुखे निक्षेप एवे"ति शतदूषण्यापादितं च भवता परिजिहीर्ष्यते—"मुख्यार्थशून्येने"त्यादिना। यः शब्दो मुख्यार्थशून्यः, स न लक्षकः। ब्रह्म च लक्षणां विना विधान्तरेण वेदेन न वेद्यते। तथा च वेदस्य लक्षकत्वासंभवात् लक्ष्यब्रह्मासिद्धिरेव। "सौषुप्तानन्दादीनामिवे"ति चात्रानन्वितम्। सौषुप्तिकानन्दश्च कथमस्तित्वेन

गृहीतः ? "सुखमहमस्वाप्स"मिति व्यवहारादिति चेत्—व्यवहारः परस्मै प्रतिबोधयितुम्; न तु स्वयमवगन्तुम्। सुषुप्तौ स्वयं प्रकाशितमानन्दं जाग्रत् स्मृत्वा परस्मै प्रतिबोधयतीति वक्तव्यम्। एवञ्च तत्र प्रकाशितत्वस्मृतिविषयत्वादिसद्भावान्न मिथ्यात्वप्रसक्तिः। इह तु ब्रह्मणि लक्षणयैव ज्ञेये लक्षकपदाभावेन लक्षणाविरहे ब्रह्मणः कथं ग्राह्यता ? सौषुप्तिकानन्दस्य ब्रह्मणश्चैकत्वात् आनन्दे ज्ञाते ब्रह्मापि ज्ञातमेवेति चेत्—तर्हि ब्रह्मजिज्ञासा नारब्धव्या स्यात्। ब्रह्मणः आनन्दत्वांशाज्ञानात् तत्प्रतिबोधनाय वेदान्तारम्भ इति भवतां मतम्। सौषुप्तिकानन्द एव चेत् ब्रह्म, आनन्दत्वांशोऽपि ज्ञात एवेति॥ "यतो वाचो निवर्तन्त" इति अवाच्यवादः ब्रह्मलक्ष्यतापक्षेणेति यदुक्तम्—तत्र ब्रूमः—भवद्भिस्तत्र तत्र मिथो विरुद्धं वर्ण्यमानं कथं जाघटीतीति परैः प्रश्ने कृते कथञ्चिद्बन्धादात्मानं मोचयितुं—'इदं विवरणपक्षेणोक्तम्', 'तत् भामतीपक्षेणोक्त'मिति सर्वत्राव्यवस्थया यथा व्यवह्रियते, तथा वेदेनापीति भवान् मन्यत इव—'लक्ष्यतापक्षेण, "यतो वाचो निवर्तन्त" इति वदति; वाच्यत्वसंभवपक्षेण, "तज्ज्ञानं ब्रह्मसंज्ञित"मिति वदति' इत्यादि। यदि वाच्यत्वं नास्तीति वेद आह—तर्हि तद्विरुद्धं वाच्यत्वपक्षं वेदोक्ततया न पराशरः प्रत्यक्षयितुमर्हतीति ब्रह्मशब्दवाच्यत्वं स न स्मरेत्। "यतो वाच" इति श्रुतेर्वा सोऽर्थान्तरं विवक्षेत्। लक्षणया वाग्वेद्यत्वं नास्तीति तच्छ्रुत्यर्थं वदन् भवान् उभयसामरस्यं संपादयितुं प्रवर्तते चेत्—वरमेतत्। अतो वस्तुनि विकल्पायोगात् विरुद्धांशद्वयस्याव्यवस्थितचित्ताधुनिकवाक्य इव वेदवाक्येऽपि संमतिकथनमनुपपन्नमेव। सर्वथा शतदूषणीपंक्त्यर्थमगृहीत्वैव, स्वानुपपत्तीरपरामृश्यैव च, ब्रह्मणि शब्दवृत्त्यविरोधानुपपादनेनैव तदुपसंहरणमयुक्तमिति सिद्धम्। उपहितानुपहितब्रह्मज्ञानमोक्षसाधनत्वानुपपत्तिरधस्तादेव प्रत्यबोधि।

यच्च—"निरस्तनिखिलदोषत्वमात्रस्य ब्रह्मशब्दार्थत्वमिष्टम्। अनवधिकातिशयकल्याणगुणवत्त्वं तु अपदार्थः" इत्युक्तम्—तदप्ययुक्तम्।

नित्यशुद्धत्वादिवत् सर्वज्ञत्वसर्वशक्तिसमन्वितत्वे अपि ब्रह्मशब्दार्थतया भाषित्वा तदुपपादके "बृहतेर्धातोरर्थानुगमात्' इति शाङ्करे जाग्रति, कथमपदार्थता कल्याणगुणवत्त्वस्य ?। "विशेषणद्वयेन च ब्रह्मपुरुषोत्तमशब्दयोर्निरुक्तिरपि व्यज्यत" इति शतदूषणीवाक्यं ब्रह्मशब्दस्य निरुक्तिरखिलहेयप्रत्यनीकत्वम्, पुरुषोत्तमशब्दनिरुक्तिरखिलगुणवत्त्वं च व्यनक्तीत्यर्थकमिति न मन्तव्यम्। किन्तु उभयमुभयनिरुक्तितो व्यज्यत इत्येवेति। विस्पष्टस्मृतिवचनविरुद्धश्चेदं गुणवत्त्वस्यापदार्थत्वकथनम्—"वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि। तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने!", "यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः। तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः॥" इति। एतेन "निरवधिकसमस्तदोषवत्त्वनिरवधिकनिरतिशयगुणवत्त्वोभयभाक्त्वमेव पुरुषोत्तम-शब्दार्थोऽस्तु" इति प्रसञ्जनमपि प्रत्याख्यातं वेदितव्यम्। गुणपौष्कल्यस्यैव शास्त्रप्रदर्शितत्वात्। पश्यत—"वृद्धिकर्मा हि बृहतिरतिशायने वर्तते" इति विलिख्य भामतीकारो नित्यशुद्धबुद्धत्वादिकमतिशयरूपं मन्यमानो हन्त! शतभूषण्युल्लिखितरीत्या दोषातिशयं धात्वर्थतया ग्रहीतुमसमर्थ आसीत्। भाष्य भामत्यादिकं सर्वमपरामर्शमूलं प्रवृत्तमित्युत्प्रेक्षत इयम्। अतिशयः, उत्कर्षः, महत्त्वमित्यादिकं गुण इव दोषेऽपि संभवतीति तथा झटिति लौकैरग्रहणमनवधानकृतमित्यभिसंधत्त इव। महात्मा, महामहोपाध्याय इत्यादावीदृशं महत्त्वमितः परं व्युत्पादनीयमिव। निरवधिकनिरतिशयगुण-दोषवत्त्वयोः सामानाधिकरण्यं संभवतीति सिद्धवत्कृत्य व्यवहरत्ययम्। एवं संभवति चेत्—कथं "तत्त्वमसी"त्यत्र विशेषणानां त्यागः, मिथ्यात्वकल्प-नञ्च।" ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" इति हेयप्रत्यनीकत्वविशिष्टकल्याणगुणनिधित्वं भगवत उक्तम्। अयं तु, 'सावधिकगुणदोषभाजः संसारिणः सर्वे। निरवधिकगुणदोषोभया-स्पदं तु किञ्चित् संभवतीति तदेव ब्रह्मशब्दमुख्यवाच्यम्। अतिशयस्य कार्त्स्न्येन संभवादिति धर्मिसृष्टिपूर्वकं ब्रह्मशब्दमुख्यवृत्तिं रिरक्षतीव। नूनं

निर्विशेषं निष्प्रमाणं कल्पयतामीदृशवस्तुकल्पनमपि नाशक्यमित्यलमसंबद्धवाग्जालार्थविशोधनेन ॥

श्रीभाष्यानुयायिनः परिणामवादं नाङ्गीकुर्वन्ति। विवर्तवादोऽपि तैर्नेष्यते चेत्, उपादानत्वं कथामात्रं तेषामिति यदुक्तम्—तत्तु प्रागेव प्रत्युक्तम्। स्वमतेऽनुपपादितानामनुभवदूराणाञ्चार्थानां सिद्धवत्कारेण तदुचितवाक्यार्थवर्णनपरिपाटी भवदीयगता प्रत्यक्षसिद्धा। भवतस्तु परमते संमतानामपि नास्तित्वसिद्धवत्कारेण पौनःपुन्येन दूषणवर्णनमधिकमिति विशेषः। अस्मन्मते परिणामवादोऽस्त्येव। विवर्तवादोऽप्यस्ति, यत्र भवति। परं विवर्तलक्षणं भवदिष्टमनुभवदूरमसंभावितमिति तादृशविवर्तवादः केनाऽप्यङ्गीकर्तुं न शक्यते। असंभावितविवर्तभाववर्णनमुपादानत्वापलाप एव। नविलक्षणत्वाधिकरणे विलक्षणस्य कार्यत्वं भवतीति वदद्भिरेव तत्र असदिति सूत्रे, 'कारणात्मनैवास्ति कार्यम्। न तु कार्यात्मना कदाऽपी'त्युच्यते। इदमेव तदनन्यत्वं कार्यस्य, यत् तस्याभाव इति च। एवं वदतां किमुपादेयमिति किञ्चिदस्ति? यत् प्रति ब्रह्मण उपादानत्वमुपपाद्यम्। अज्ञानस्योपादानत्वं भामती नेच्छति। ब्रह्मण उपादानत्वञ्च उक्तरीत्या वाङ्मात्रम्। एवं स्थिते स्वमत एवोपादानत्वं सुष्ठु प्रतितिष्ठतीति किमयं व्यामोहो विप्रलम्भो वेति विविच्यताम्।

ब्रह्मशब्दस्य शक्तिः स्वीक्रियमाणा विचारविषयादन्यस्मिन् प्रकृत्यादौ न युक्ता; अनेकशक्तिकल्पनाद्यापत्तेः; "यत् साक्षादपरोक्षात् ब्रह्म" इति विचारविषय एव मुख्यत्वश्रवणाच्चेति शतदूषणी। तत्र यल्लिखितम्—"श्रुतिरियं ब्रह्मणो मुख्यत्वं न ब्रवीति" इति—तावता विचारविषयादन्यस्मिन् प्रकृत्यादौ ब्रह्मशब्दस्य मुख्यत्वं स्वीक्रियते इति न भवताऽपि सुवचम्। प्रथमाधिकरणशाङ्करभाष्यविरोधात्। अस्वीकारे च श्रुतेरस्याः ब्रह्मशब्दस्य साक्षाद्वाच्यः परमात्मैवेत्यर्थोऽपि काममस्तु। तत्र कुतः प्रद्वेषः? एतदुक्तं भवति।—"यत् साक्षादपरोक्षाद्ब्रह्म" इति वाक्यस्य भवन्मतेऽयमर्थः—आत्मा ज्ञानस्वरूपः। तदतिरिक्तं सर्वं साक्षादपरोक्षं न भवति। सर्वस्यापि

वृत्तिवेद्यत्वात्। ब्रह्म तु स्वयंप्रकाशत्वात् साक्षादपरोक्षमिति। इदञ्च नास्मन्मतेऽनन्वितम्। जडप्रपञ्चस्य ज्ञानैकग्राह्यत्वात् ब्रह्मणः स्वयंप्रकाशत्वात्। भवन्मते वृत्त्यन्तरानधीनप्रत्यक्षत्वं वृत्तावप्यस्तीति कथं तद्वारणम्। वृत्तिः साक्षिभास्या। ब्रह्म तु स्वयंप्रकाशमिति चेत्—तर्हि वृत्तिकर्मतयाऽन्यस्य सर्वस्यापरोक्षत्वमिति इदं त्यक्तमेव। वयं तु ब्रह्मातिरिक्तानां जीवानां तदतिरिक्तानां धर्मभूतज्ञानानाञ्च बहुप्रमाणप्रतिपन्नतां स्वयंप्रकाशताञ्च पर्यालोच्य निरपेक्षप्रकाशत्वस्य ब्रह्ममात्रनिष्ठत्वाभावात् तदौचित्याय श्रुतेरस्या अर्थान्तरं स्वीकुर्मः। यत् साक्षात् ब्रह्म अपरोक्षञ्चेति। साक्षाद्ब्रह्मत्वञ्च ब्रह्मपदेन साक्षात् प्रतिपाद्यत्वम्। अपरोक्षत्वञ्च प्रत्यक्षविषयत्वार्हत्वं वा तत्प्रयोजकसर्वदेशसर्वकालसन्निहितत्वरूपं वा किमपि भवतु। तेन ब्रह्मण्यदृश्यत्वादिकमाचक्षाणानां मतव्युदासः। तेन याज्ञवल्क्येनोपवर्णयिष्यमाणोपासनातन्मूलसाक्षात्कारादिविषयत्वस्य वास्तवत्वसिद्धिरित्यन्यदेतत्। नैतन्नः प्रकृतम्। एवं ब्रह्मशब्दसाक्षादर्थत्वरूपार्थवर्णने, "तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने!" इति स्मृतिं प्रति मूलत्वं चास्य सिद्ध्यति। एवमाकलय्य प्रकृत्यादेः ब्रह्मशब्दवाच्यत्वं न भवतीत्यत्र श्रुतिरियं प्रमाणतयोदाहारि। अत्रार्थान्तरमाशयानानां मनस्समाधानाय चोपरि स्पष्टार्था स्मृतिरप्युदाहारि। सर्वथा विचारविषयातिरिक्तवाचकत्वं ब्रह्मशब्दस्य नेति प्रकृतार्थः सुस्थ इति किमन्यविमर्शवैयग्र्येण॥

अथ यदुक्तम्,-विवर्तवादाङ्गीकारे मुक्तेरेव मुक्तिः स्यादिति शतदूषणीत्यादि—तदपि विवक्षितार्थं परित्यज्य यथेच्छविस्तरणमेव। अत्र हि शुद्धस्य ब्रह्मशब्दवाच्यत्वपक्षे दूषणं प्रकृतम्। तत्र बृहति बृंहयतीति वचनविरोधो दर्शितः। अथ शुद्धस्याधिष्ठानत्वात् बृहत्त्वमस्ति,सर्वविवर्तप्रपञ्चनकरत्वात् बृंहणत्वमप्यस्तीति पुनः शङ्कायाम्, 'शुद्धे कथमिदं धर्मद्वयम्? यदि धर्मस्वरूपानतिरिक्ततया तयोः शुद्धे स्वीकारः? तर्हि मुक्तिकालेऽपि अधिष्ठानत्वविवर्तकरत्वयोरावश्यकत्वेन मुक्तेरेव मुक्तिः स्यात्'इति शतदूषणीदीयमानं दूषणम्। तत्र

भवता यदुच्यते—विवर्तवादाङ्गीकारे विशिष्टाद्वैतसंमतमुक्तिमुक्तावपि अद्वैतिसंमतमुक्तिर्न मुच्यते, मुक्तेर्ब्रह्मानतिरेकादित्यादि—तदसङ्गतमेव। भवता विवर्तवादाङ्गीकारमात्रेण शास्त्रसिद्धास्मत्संमतमुक्तिमुक्तिः कथम्? अस्मत्संमतमुक्तेः क्रममुक्तिरूपतया भवन्मतेऽपि सत्त्वात् कथं तन्मुक्तिः? विवर्तकरत्वं बन्धकाकारः। तस्य मुक्तेश्चोभयोः कथं ब्रह्मस्वरूपता?। कथञ्च विरुद्धयोस्तयोरेककालिकत्वम्? एवञ्च मुक्तेरद्वैतसिद्धयाद्युक्तप्रकारत्वं वाऽन्यत्वं वाऽस्तु; विवर्तकरत्वस्य तस्याश्च कथं यौगपद्यम्? तस्मादपरिहृतमेव भवत्यनेन दूषणमिति। उपलक्षणत्व-व्यावहारिकत्वादिविचारस्तु शतदूषण्यामेवोपरि क्रियत इति नापूर्वं भवतोपक्षिप्यमाणमस्ति॥

यच्चाह—उपहितजिज्ञासापक्षेऽपि न सर्वज्ञत्वाद्युपहितं विवक्षितम्। किन्तु वृत्तिमात्रोपहितमिति प्रागेवोक्तमिति—तच्छोधनं प्राक् विस्तरेण विहितमेव। किं जिज्ञासाकाल एव तत् अखण्डाकारवृत्त्युपहितम् उत जिज्ञासाधीननिर्णयायत्तानवरतभावनाप्रभवसाक्षात्कारकाले? आद्ये जिज्ञासैव न भवति। इच्छां प्रति स्वविषयसिद्धेर्विरोधित्वात्। अन्त्ये कथमियमुपहितजिज्ञासा? वृत्त्युपहितब्रह्मसाक्षात्कार इत्यस्य वृत्त्यविषयकोऽपि वृत्तिसमकालिकः ब्रह्मसाक्षात्कार इति परिमळाद्युक्तोऽर्थ इह स्मर्यताम्। तथोपहितत्वं च जिज्ञासादिक्रमेण साक्षात्कारे सति स्वयमेव भवतीति न जिज्ञासायां कश्चिद्विशेषोऽस्ति। किञ्चात्र, 'ब्रह्मशब्देन लक्षणया ब्रह्म ज्ञात्वा तद्विषये जिज्ञासालक्षणशोधनादि करोतीति स्वीकारे तानि व्यर्थानि; ज्ञातत्वात् ब्रह्मणः' इत्येवोच्यते। न पुनः, पदजन्योपस्थितिमात्रेण मोक्षो भवत्विति। अतः, "ब्रह्मशब्दमात्रेण ब्रह्मज्ञानेन मोक्षापादनं न क्षोदक्षमम्" इति दूषणमनवसरम्। ब्रह्मविचारादेरदृष्टार्थत्वाभावाद्धि जिज्ञासा व्यर्थैव। वृत्तिमात्रोपहितत्वमित्येतदप्ययुक्तम्। वृत्तिजननकाले सर्वस्यापि प्रपञ्चस्य सत्त्वेन प्रपञ्चोपहितत्वाविद्योपहितत्वप्रपञ्चादिविषयज्ञानरूपसर्वज्ञत्वोपहितत्वादेरप्यक्षतत्वात्। अत एव स्वस्वेतरोपाधीति वृत्तितदितरोपाधिसद्भाव उक्तः कल्पतरौ। परिमळेऽपि, "अन्योपाध्यभावो

न ग्रन्थाभिमतः; किन्तु साक्षात्कारस्य वृत्तिप्रतिबिम्बितचैतन्यरूपतया वृत्त्युपधानमवर्जनीयमित्याशयेन तदुक्ति"रित्युक्तम्। वृत्तिकाले अविद्यादिकं नास्तीत्युक्तिश्च प्रागेव विचारिता। 'वृत्तिरेवाविद्यादिनाशः' इत्युपगच्छद्भिरपि जीवन्मुक्तिनिर्वाहाय कतिपयाविनाशः स्वीकृत एव। मिथ्यात्वे तन्नाशोऽप्यावश्यक एव। अमिथ्यात्वे अविद्याऽपि न नश्यति। एवञ्च यदि वृत्त्युपहितम्, तर्हि सर्वज्ञत्वाद्युपहितमेवेति। परं तु सर्वज्ञत्वाद्युपहितविषयकज्ञानमविद्यानिवर्तकत्वेन नेष्टमद्वैतिभिरित्यस्तु। तावता तत्र जिज्ञास्यमिति वक्तुं न शक्यते। सगुणब्रह्मणोऽपि जिज्ञास्यतायाः भवतैव प्रागुक्तत्वात्।

यत्तु—अखण्डाकारवृत्तिरेव मोक्षसाधनम्। न पदजन्योपस्थितिमात्रमिति—तच्छोधनमितोऽधिकमखण्डार्थवादादौ युक्तमितीह न प्रपञ्चयते।

इदं तु पृच्छयते—कस्मादुपस्थितिमात्रं नाज्ञाननिवर्तकम्, साक्षात्कारत्वाभावाद्वा, विषयवैलक्षण्याद्वा, सहकारिकारणविरहाद्वा। आद्ये उपस्थितिर्निवर्तिका मा भूत्। तद्विषयो ब्रह्मैव तथा भवतु। तस्य स्वयंप्रकाशतया साक्षात्कारत्वात्। वृत्तिरूप एव साक्षात्कारः प्रतिबन्धक इति चेत्—तर्हि अहमित्यस्य स्वयंप्रकाशता न स्यात्। नाहमित्यादिज्ञानविरोधित्वायोगात्। न द्वितीयः, व्यक्तिमात्रसाक्षात्कारवादिना भवता तस्य दुर्वचत्वात्। न तृतीयः, ज्ञानातिरिक्तकारणापेक्षायाम्, ज्ञानमात्रान्मोक्ष इत्यस्यासिद्धेः। कर्मणोऽपि कारणत्वापत्तेः। जगन्मिथ्यात्वस्याप्यसिद्धिप्रसङ्गाच्च। ज्ञानमात्राधीननिवृत्तिस्थल एव मिथ्यात्वस्वीकारात्। विशिष्टाद्वैतमते तु वेदनोपासनध्यानसाक्षात्कारस्मरणादिमोक्षसाधनविधीनामैकरस्यसंपादनात् परभक्तेर्मोक्षसाधनत्वं सिद्ध्यति भगवदनुग्रहद्वारा। न तथा मिथ्याज्ञाननिवर्तनमात्रेण तत्त्वज्ञानस्य मोक्षसाधनत्ववाद्यद्वैतिमते इति महदन्तरम्। यत्तु—वृत्तिर्न केवला मोक्षसाधनम्। किन्तु अप्रामाण्यज्ञानानास्कन्दिता, भुज्यमानादृष्टाभावसध्रीचीना च सतीति **न्यायरत्नावळिग्रन्थं** मनसि निधायोक्तम्—तत्रोच्यते। स्वतः-

प्रामाण्यग्रहपक्षे वृत्तिर्जाता प्रामाण्यनिश्चयविशिष्टैवास्तीति कृतमप्रामाण्यशङ्कानास्कन्दितत्वदलेन। एवमपि कथञ्चिदप्रामाण्यशङ्का भवतीति तथाप्रतिसंधीयमानत्वाभावोपपादनायाप्रामाण्यज्ञानानास्कन्दितत्वं निवेश्यमिति चेत्— अस्त्विदं लौकदृष्टत्वात्। शरीरवियोगस्य तद्धेत्वदृष्टादिविरहस्य वा सहकारिकारणत्वं न युक्तम्। न हि तत्त्वज्ञाने जाते तत्राप्रामाण्यज्ञानानास्कन्दिते च सति मिथ्याज्ञाननिवृत्तयेऽन्यदपेक्ष्यते। यदि प्रतिबन्धकमस्ति, ज्ञानमेव नोदियात्। प्रतिबन्धकं ह्यदृष्टं कार्यसामग्रीविघटकम्। तदुक्तं **न्यायकुसुमाञ्जलौ**—"यत्रादृष्टस्य दृष्टकारणोपसंहारेणोपयोगः, तत्र तत्पूर्णतायां कार्यमुत्पद्यत एव। अन्यथा अन्त्यतन्तुसंयोगेभ्योऽपि कदाचित् पटो न जायेत। जातोऽपि वा कदाचिन्निर्गुणः स्यात्। बलवता कुलालेन दृढदण्डनुन्नमपि चक्रं न भ्राम्येत" इति। "दृष्टकारणनिरपेक्षं यत्रादृष्टवशात् कार्यम् तत्र परमदृष्टवैगुण्यात् कार्यानुदयः" इति चोक्तम्। एवञ्च तत्त्वज्ञानकारणत्वेन कॢप्ते उत्पन्नेऽपि यदि न सर्वमिथ्याभूतविनाशः, तर्हि तत्र मिथ्यात्वं नास्तीत्येव प्रतिपत्तव्यम्। एवञ्च यत् अद्वैतसिद्धावुक्तम्—"तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये, 'भोगेन त्वितरे क्षपयित्वा' इति कतिपयवस्त्वविनाशवचनात् भुज्यमानादृष्टान्यादृष्टानामेव नाशरूपं वृत्तिज्ञानमिति वृत्त्यनन्तरमपि देहादीनां संभवः" इति—तदपि निरस्तम्। मिथ्याभूतस्य परिशेषणायोगात्। भवदुक्तरीत्या भुज्यमानादृष्टाभावविशिष्टज्ञानस्य मोक्षहेतुत्वे निवर्तकत्वं तदैवेति अविद्याद्यपि पूर्वं न विलीयेतेत्यपि ध्येयम्।

ज्ञातविषयेऽपि पुनर्जिज्ञासादिविधिरिति न शक्यते वक्तुमित्यभिप्रायां शतदूषणीसूक्तिं गृहीत्वा किमपि प्रपञ्चनमप्येवमेवानवसरं वेदितव्यम्। ब्रह्मपदस्योपहिते शक्तिं निश्चित्य, निरुपाधिके वृत्तिमविदुषः प्रतिबोधनार्थं जिज्ञासादीति पक्षे, मुख्यवृत्तिमविदुषः प्रतिबोधनायेत्यङ्गीकारे प्रस्तुतव्याघातः स्यादिति तदुपरितनशतदूषणीवाक्यस्यार्थः। "अभिधानाङ्गीकारे वा

किं सार्वज्ञ्यादिविशिष्टपरब्रह्माभिधानप्रद्वेषेण" इति सूक्तयाश्चायमर्थः—शुद्ध-ब्रह्मणो लक्ष्यत्वमेवाद्वैतसिद्धान्तः। अपसिद्धान्तमेव सोढ्वा तत्र शक्तिस्वीकार-प्रयत्ने तु वरं तदपेक्षया अविद्योपहितब्रह्मणि शक्तित्यागेन यथाशास्त्रं सर्वज्ञत्वा-दिग्राहकबृहत्त्वविशिष्टाभिधानस्वीकरणम्। ब्रह्मणो वाच्यत्वस्वीकारे, "यतो वाचो निवर्तन्त" इति वाक्यविरोध इति लक्ष्यत्वं स्वीकृतं भवदीयैः। यदि तस्यान्यथा नयनं मनसिकृत्य वाच्यत्वस्वीकारः? तर्हि सर्वज्ञत्वादीन् गुणानपि ब्रह्मणि स्वीकृत्य विशिष्टवाचित्वमेव स्वीकृत्य सा श्रुतिरस्मद्रीत्या वा अन्यथा वा वर्ण्यताम्; किं बहुश्रुतिबाधेनेति। अद्वैतिमते निर्विशेषमपि ब्रह्मशब्दार्थः, सविशेषमपीत्युच्यते भवता। किमिदमर्थद्वयं शक्त्या, उत क्वचिल्लक्षणया। आद्ये, अनेकशक्तिकल्पनागौरवम्। भवदुदाहृतश्रीविष्णु-पुराणवाक्यं तु भवदीयैरेव निर्विशेषब्रह्मशक्तिस्थापकत्वेन नादृतम्। द्वितीये, लक्ष्यार्था अन्येऽपि प्रकृतिशरीरादयस्तत्र तत्र यथायथं सन्तीति किं तेन? शक्यार्थजिज्ञासयैव सर्वसिद्धौ को लक्ष्यार्थं गृह्णीयात। प्रथमं प्रतिज्ञायामेव जिज्ञास्यवस्तुविषयकशक्तिमत्पदं न प्रयुङ्क्ते परमर्षिरित्यशक्तिरेव तस्य भवद्भिरापादिता स्यात्।

भृगुवल्ल्याम्, "ब्रह्माधीहि" इति प्रार्थना लक्ष्यार्थजिज्ञासैवेति कथमुच्यते। न हि का पृथिवी, को गवय इत्यादयः प्रश्नाः स्वरसतो लक्ष्यार्थविषये लोकेऽवतरन्ति। अतो गन्धवती पृथिवी, गोसदृशो गवय इत्यादिवाक्यश्रुतगन्धवत्त्वगोसादृश्याद्युपलक्षणमुखेन तत्र तत्र तत्तच्छब्दशक्त्यव-धारणवत् ब्रह्मशब्दशक्त्यवधारणमेव व्यक्तिविशेषे भृगुवल्ल्यामित्येव वक्तव्यम्। स च वृत्तिविशेषः, आनन्दो ब्रह्मेति वाक्यनिर्दिष्ट आनन्द एव। 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इति जन्मलयहेतुत्वस्य तत्र कण्ठोक्त्या तस्य न निर्धर्मकत्वमपि। आनन्दश्चायं पूर्ववल्लीप्रस्तुत आनन्दमय एव। आनन्दमयश्चानन्दपदेन प्रागपि निर्दिष्टः, "को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति" इति। तथा, "रसो वै स" इति च। उपकोसलविद्यायामपि, "कं ब्रह्म" इत्यत्र

कशब्दं शुद्धानन्दपरं न सहते सूत्रकारः । यतः, " सुखविशिष्टाभिधाना-देव च " इति विशिष्टपदं प्रयुङ्क्ते । तत्र का कथा आनन्दमीमांसोपनिविष्टस्यानन्दशब्दस्य । सर्वथा भृगुवल्ली सत्यज्ञानादिपरेति व्याहतमेव । अत्र सत्यज्ञानप्रस्तावाभावाच्च । एवञ्च परश्शतदूषणदूषितपुच्छब्रह्मग्रहणेन, पञ्चकोशान्तरत्वावाङ्मनसगोचरत्वादीनां सिद्धवत्कारेण कथनमप्युपेक्ष्यमेव । सविशेषविवक्षायां " स यश्चायं पुरुषे यश्चासावादित्ये स एकः " इति वाक्यविरोध इति शतभूषणीवर्णनमद्भुतम् । " आदित्ये पुरुषः किल, हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः" इत्यादिना दिव्यमङ्गळविग्रहविशिष्टोऽपि प्रसिद्धः । स कथं निर्विशेषः स्यात् । अर्वाचीनदेवताविषयेऽपि "विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शना"दिति युगपदनेक शरीरपरिग्रहेण स्थितिः सर्वैरङ्गीकारि । किमुत परस्मिन् पुरुषे । अतः का निर्विशेषनिरूपणप्रसक्तिरिह । उपरि च " आनन्दमयमात्मानमुपसंक्रम्य " इत्यादिनिर्विशेषब्रह्मवादिवर्णितमोक्षविरुद्धो विशिष्टाद्वैतिसंमतमोक्षप्रकारः प्रपञ्च्यत इति कथमत्र वाक्ये निर्विशेषप्रसक्तिः । अतः शतदूषण्यप्रदर्शितमपि स्वविरुद्धमंशं स्वयं ज्ञापयति शतभूषणीति मन्तव्यम् ।

"ब्रह्मविदाप्नोति पर"मिति प्रथमवाक्ये ब्रह्मपदस्य निर्विशेषपरत्वे लक्षणेत्यद्वैतिप्रश्ने दोषः सिद्धः, निरुक्तादिविरोधेन शुद्धे शक्तेर्वस्तुतस्तैरस्वीकारात् । 'विदेर्लक्षणा स्यादुपासनपरत्वे' इति यदुच्यते, तत्र—'भवन्मते श्रवणमनननिदिध्यासनाभ्यासानन्तरभाविसाक्षात्काररूपार्थविशेषपरत्वे परं कथं न लक्षणा ? न हि ब्रह्मवेदनं संशयविपर्ययादिसर्वरूपं यतः कुतश्चिद्भवदपि मोक्षकारणं भवदिष्टमिति पृच्छामः । यदि तस्य साक्षात्कारस्य वेदनविशेषत्वात् न लक्षणाप्रसक्तिः, तुल्यमस्मन्मतेऽपीति । अन्यदपि दृश्यताम्—भवन्मते आप्नोतिपदमप्यनुभवार्थलाक्षणिकम् । ब्रह्मणो जीवस्य चैक्यात् अप्राप्तत्वाभावात् । अस्मन्मते तु सत्यपि पूर्णे भुवि ब्रह्मानुभवे, आप्नोति परमित्येतत् परवासुदेवं प्राप्नोतीत्यर्थकं सत् योयुज्यते । एवञ्च परशब्दप्रयोग-

स्वारस्यमपि । किञ्च भवन्मतेऽनुभवतीत्यर्थोऽपि बाधितः । ब्रह्मविदित्यत्र वेदनं हि शाब्दं मानसं वा किञ्चिदपरोक्षज्ञानं वृत्त्यात्मकम् । तज्जन्यं ब्रह्मानुभवाख्यं द्वितीयं ज्ञानं मोक्षरूपं किमन्यदस्ति, येन तत् संगंस्यते । अविद्यानिवृत्तिरेव हि साक्षात्कारजन्मा, न ब्रह्मानुभवो नाम कश्चित् । एवञ्च "ब्रह्म भवती"ति प्रयोक्तव्ये "आप्नोति पर"मिति प्रयुक्तं लाक्षणिकमेव । ब्रह्म भवतीत्यपि न युक्तम् । पूर्वमेव ब्रह्मभावादित्यास्तामेतत् । एवं स्थिते ब्रह्मशब्देऽन्यत्र च प्राचीनाद्रितिवण्टापथं निर्विशेषलाक्षणिकत्वं विस्रष्टुमपारयता, ब्रह्मशब्दस्य निर्विशेषे शक्तिस्वीकारे सत्येव वादः कियदपि सुकर इति तदा तदा ब्रह्मशब्दस्य तत्र शक्तत्वमपि व्याहरता, श्रीविष्णुपुराणवाक्यमर्थान्तरपरं पुनःपुनरुदाहरता न किञ्चित् साधयितुं शक्यम् । यतस्तस्य, "प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥" इति श्लोकस्य, 'निर्विशेषत्वात् वागगोचरं किञ्चिच्छब्दावाच्यमेव तत् ब्रह्मशब्देन संज्ञायते—समित्येकीकारे—अविद्यमानेन केनचिद्विशेषेण विशिष्टतया तेन शब्देन ज्ञाप्यते । विशिष्टवाचित्वात् ब्रह्मशब्दोऽपि न निर्विशेषवाचक' इत्यर्थ एव भवदीयसंमतः । अत एव शतदूषण्यां शब्दावेद्यत्वभङ्गवादे, 'सङ्केत्यतां व्यवहाराय तथाविधः शब्दोऽपि' इति आदिष्टम् । तदिदमनुवृत्तं भवता ब्रह्मशब्दस्यैव साङ्केतिकत्वकल्पनया वैदिके सङ्केतासंभवापरिशीलनेन । सङ्केतं विनैव वाचकत्वमितः परं कामं स्वीक्रियताम् ; एवं तर्हि, "यतो वाचो निवर्तन्त" इति वाक्यमुपेक्षितमेव स्यादिति प्रागेव प्रत्यपादि । "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय ! भगवच्छब्दः सर्वकारणकारणे—एवमेव महाशब्दो—परमब्रह्मभूतस्य वासुदेवस्य नान्यगः" इति वाक्यं सविशेषविषयम्, 'प्रत्यस्तमितभेद'मिति निर्विशेषविषयमिति व्यवस्था न युक्ता । भगवच्छब्दवाच्यब्रह्मापेक्षया निर्विशेषमन्यद्ब्रह्म यद्यभविष्यत्, 'भगवच्छब्दः शुद्धे परे ब्रह्मणि शब्द्यते', 'परमब्रह्मभूतस्यायं भगवच्छब्दः' इति तत्र शुद्धत्वपरत्वपरमत्वरूपाणि विशेषणानि न प्रायोक्ष्यत् । अतः प्रत्यस्तमितेति श्लोकोऽन्यविषय एव ।

"अवाच्यमिति वाच्यं चेत् ब्रह्म वाच्यत्वमृच्छति" इति शतदूषण्युक्ते यद्भवतोच्यते—"एवं वाच्यत्वेऽप्यवाच्यत्वमप्यस्ति। यथा प्रपञ्चमिथ्यात्वेन सह मिथ्यात्वस्य मिथ्यात्वमपि। एकबाधकबाध्यत्वात्—इति—तत्र ब्रूमः। मिथ्यात्वमिथ्यात्वविचारः स्वावसर आस्ताम्। तत्र ब्रह्मव्यतिरिक्तं सर्वं नेति बाधकज्ञानेनैकेन प्रपञ्चस्य बाध्यत्वात् प्रपञ्चे मिथ्यात्वं भवदिष्टम्। तदुपर्याशङ्का—प्रपञ्चगस्य मिथ्यात्वस्य ब्रह्मातिरिक्ततया प्रपञ्चवन्मिथ्यात्वमङ्गीकरणीयम्। एवं मिथ्यात्वरूपस्य धर्मस्य बाधितत्वे प्रपञ्चस्य सत्यत्वमायातीति। तत्र परिहारस्तावत्—येन बाधकज्ञानेन प्रपञ्चो बाध्मानः सन् मिथ्या भवति, तेनैव बाधकज्ञानेन मिथ्यात्वस्य बाध्यता—नान्येन। तेन प्रपञ्चोऽपि मिथ्यात्ववत् बाध्यत एवेति कथं प्रपञ्चसत्यत्वमिति। सा रीतिः कथमत्र? भवन्मते ब्रह्मण्यवाच्यत्वं व्यावहारिकसत्यम्। वाच्यत्वं तु तस्य व्यवहारदशायामेव निषिध्यते, ब्रह्म अवाच्यं निर्विशेषत्वादिति युक्तयेति प्रातिभासिकम्। प्रातिभासिकस्य च वाच्यत्वस्य व्यावहारिकावाच्यत्वज्ञानेन बाधः। अवाच्यत्वस्य तु व्यावहारिकस्य प्रपञ्चबाधकतत्त्वज्ञानेन बाध इति नात्रैकबाधककत्वम्। अथोच्येत—अवाच्यत्वं यथा व्यावहारिकम्; तथा अवाच्यपदवाच्यत्वमपि। तयोर्द्वयोरेकतत्त्वज्ञानबाध्यत्वमिति—तन्न—कथमवाच्यत्वस्य व्यावहारिकत्वसिद्धिरिति। ब्रह्मावाच्यं निर्विशेषत्वादित्यनुमानादिति चेत्—हेतुरप्रयोजकः। ब्रह्म वाच्यं वस्तुत्वादिति सत्प्रतिपक्षश्च। केन पदेन वाच्यत्वमिति चेत्—ब्रह्मेति पक्षवाचिपदेनैवास्तु; अन्येन वा केनचित्। ब्रह्मपदं लक्षणयैव निर्विशेषपरमिति चेत्—तदेव न—तत्र "यतः" इति सर्वनाम्ना निर्विशेषं वाच्यमासीदिति तत्र वाच्यत्वनिषेधायोगादन्यादृशविशेषनिषेधपरत्वस्यैव तत्र वक्तव्यत्वात्। एवञ्चावाच्यत्वमसिद्धं यदि कल्प्यते, तर्हि तत् प्रातिभासिकम्। तत्प्रत्यनीकत्वाच्च वाच्यत्वं व्यावहारिकमिति नोभयोरेकबाधकबाध्यत्वम्; नाप्यवाच्यत्वं ब्रह्मणः। यदि निर्विशेषं ब्रह्म प्रामाणिकम्। कथञ्च भवान् प्रत्यस्तमितभेदमिति श्लोकेन

ब्रह्मशब्दस्य निर्विशेषवाचकत्वं प्रतिपादयन्नेव तस्यावाच्यत्वं वक्तुमर्हति । सन्तु तावदन्यानि पदानि । अवाच्यमिति पदमप्यलम् । तेनावाच्यत्वविशिष्टरूपेऽर्थे विवक्षिते, 'कथमुच्यमाने स्यादवाच्यत्व'मित्ययोग्यतापर्यालोचनया वाच्यत्वविशेषाभाववत् अवाच्यपदवाच्यमित्येव वाच्यमिति सिद्धं वाच्यत्वमिति । यत् पुनः अवाच्यपदबोध्यत्वमेव ब्रह्मणः, न तु वाच्यत्वमिति—तत्र नञ्पदवाच्यपदद्वयरूपतया अभिहितान्वयपक्षे बोध्यत्वस्यैव सत्त्वेऽपि अन्विताभिधानपक्षे वाच्यत्वमस्त्येव । तत्पक्षे एकार्थान्वितापरार्थे शक्तिस्वीकारात् । तथा समासे शक्तिस्वीकारिवैयाकरणमतेऽपि वाच्यत्वमस्ति । पक्षान्तरेऽपि पाचकपदादिवत् समासे योगशक्तिः सुवचा । अभिहितान्वयपक्षेऽपीह नञोऽभावविशिष्टार्थकत्वात् निर्विशेषपदेन यत् ब्रह्म विशेषाभाववत् बोध्यते, तत् इह उक्तमस्तीति न वाच्यत्वभङ्गः । अधिकं शब्दावेद्यत्वभङ्गप्रसाधने द्रष्टव्यम् । एवं ब्रह्म वाच्यं वस्तुत्वादित्यनुमाने वाच्यत्वं साध्यं ब्रह्मणि काल्पनिकमिति पक्षे दोषोऽपि तत्र कथितो द्रष्टव्यः । सत्येन हेतुना प्रातिभासिकसाधनायोगात् व्यावहारिकवाच्यत्वमेव काल्पनिकमित्युक्तमिति चेत्—तर्हि अवाच्यत्वमेव प्रातिभासिकमापतितमित्यपि द्रष्टव्यम् । तदेवं वाच्यत्वे सिद्धे, "यतो वाचो निवर्तन्ते" इत्यस्य लक्ष्यत्वानिषेधकत्ववत् वाच्यत्वसामान्यानिषेधकत्वमप्यौचित्यादस्तु । अस्त्वेतत् । वाचकशब्दान्वेषणायां व्यक्तिमात्रविषयकस्य साङ्केतिकतुल्यस्य कस्यचिच्छब्दस्यादर्शनेन, सद्ब्रह्मादिशब्दानाञ्च शास्त्रेषु निर्वचनात् सप्रवृत्तिनिमित्तत्वस्यैवावगमेन सविशेषब्रह्ममात्रसद्भावावगमात् न निर्विशेषे ब्रह्मशब्दस्य शक्तिप्रसक्तिः । नापि लक्ष्यत्वम् । जिज्ञास्यत्वस्य लक्षणशोधनादेश्च शारीरके क्रियमाणस्य, श्रुत्यन्तप्रतिपाद्यमानानां विशेषाणाञ्च तत्राघटमानत्वात् । नाप्यविद्यादिदुष्टे ब्रह्मशब्दच्यता । निर्दोषमङ्गळगुणास्पदे वृत्तेर्निखिलश्रुतिस्मृतिनिरूढत्वात् तात्पर्यग्राहकाभावाच्चेति सिद्धा परमतब्रह्मणि वृत्त्यनुपपत्तिरिति ॥

न निर्विशेषं नाविद्यालीढं वा वेदवेदितम् ।
तस्मान्न ब्रह्मशब्दस्य वृत्तिस्तत्रोपपद्यते ॥ ५२ ॥

वाच्यत्वं निर्विशेषत्वात् यदि तत्र निषिध्यते ।
लक्ष्यत्वमपि तत्तुल्ययोगक्षेमं विभाव्यताम् ॥ ५३ ॥

मिथ्याभूतस्य सत्येन संबन्धो दुर्वचो यतः ।
शक्तेर्वा लक्षणाया वा न संबन्धोऽत्र संभवी ॥ ५४ ॥

निर्दोषमङ्गलाढ्यं यत् ब्रह्मशब्द्यं परं बृहत् ।
कीदृशः शक्यसंबन्धो निर्विशेषस्य तस्य च ॥ ५५ ॥

तद्गतानां विशेषाणां ततो हानेरभावतः ।
न तस्य निर्विशेषेण तादात्म्यमपि संभवि ॥ ५६ ॥

विशिष्टार्थस्यैकदेशं विहायात्र विशेषणम् ।
विवक्षति विशेष्यं यो भङ्गस्तस्य पदेपदे ॥ ५७ ॥

विशेषणविभङ्गश्च कुत्र वाक्ये चिकीर्ष्यते ।
न समानाधिकरणे वाक्यलक्षणवर्जनात् ॥ ५८ ॥

उद्देश्योपादेयभावो विभागे काङ्क्षणञ्च चेत् ।
एकवाक्यत्वमिष्येत पर्यायत्वे कथन्त्विदम् ॥ ५९ ॥

न वैयधिकरण्येऽपि विशेषणविवर्जनम् ।
निर्विशेषे कथं किञ्चिदन्वयानर्हवस्तुनि ॥ ६० ॥

जिज्ञासादिसहोच्चार्यपदार्थान्वयसंभवः ?
अन्वये निर्विशेषस्य बुद्ध्यारोहो हि दुर्भणः ॥ ६१ ॥

न हि ब्रह्मशब्द्यं भवेन्निर्विशेषं
तथा नैव तत् स्यादविद्यादिदुष्टम् ।
स्वरूपेण यत् स्यात् बृहत् सद्गुणैश्च
श्रुतिस्मृत्यभीष्टं परं ब्रह्म तन्नः ॥ ६२ ॥

श्रीः

# (३) जिज्ञासानुपपत्तिप्रसाधनम्

उक्ता परमते ब्रह्मशब्दवृत्तेरयुक्तता ।
अथ जिज्ञास्यताऽप्यस्य नास्तीत्येतत् प्रसाध्यते ॥ ६३ ॥

'अनुभूतिस्वरूपं ब्रह्म भवन्मतरीत्या यस्मादविषयः, तत एव न जिज्ञास्यमपि' इति शङ्कां परिहर्तुं यल्लिख्यते, "सत्यमिष्टसिद्ध्यनुरोधात् ब्रह्म अननुभाव्यम्, अनुभूतित्वात्—अथाप्यज्ञाननिवृत्तये वृत्तिव्याप्यत्वाङ्गीकारान्न दोषः। फलव्याप्यत्वमेव तु न स्वीकुर्मः" इति—तत्रोच्यते—वस्तुत इष्टसिद्ध्युक्तमनुमानमसाधकम्। तत्स्वीकारे तु जिज्ञास्यत्वस्यायोग एवेति।

कथमिति चेत्—इत्थम्। तत्र किमिदमननुभाव्यत्वम्? स्वाविषयत्वं वा, वृत्त्यविषयत्वं वा, सामान्यतोऽनुभवाविषयत्वं वा? नाद्यः, सिद्धसाधनात्। न हि सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारोहतीति न्यायेन स्वस्मिन् स्वविषयकत्वस्यास्वीकृतत्वात्। स्वयंप्रकाशत्वमपि हि न स्वविषयकत्वम्। किन्तु स्वस्य स्वविषयकत्वाभावेऽपि स्वविषयकज्ञानान्तराभावेऽपि सत्तामात्रेण स्वविषयकव्यवहारानुगुणत्वमेवेति भवदीयग्रन्थेऽप्युक्तम्। नापि वृत्त्यविषयत्वमिति द्वितीयः पक्षः। वृत्तेः सविषयकत्वानङ्गीकारादस्मन्मतेन सिद्धसाधनात्। भवन्मते चरमवृत्तिविषयत्वस्य स्वीकृतत्वेनापसिद्धान्ताच्च।

न तृतीयः। प्रत्यक्षानुमितिशाब्दबोधेषु अनुभवत्वव्यवहारस्य लोकप्रसिद्धतया ब्रह्मणो यथायथं तत्तदनुभवविषयतया साध्यस्य बाधितत्वात्। न चानुभवो नाम वृत्तिविशेषावच्छिन्नचैतन्यम्। तत्र ब्रह्मणः स्वयमेव चैतन्यतया तद्विषयत्वं कथं ब्रह्मणीति वाच्यम्—वृत्त्यवच्छिन्नचैतन्येति साध्यकोटिनिविष्टांशस्यास्माभिरनङ्गीकृतत्वेन काञ्चनम-

यवद्देरिव अप्रसिद्धधर्मघटितस्य साधनायोगात् । अनुभवो नाम सविषयकः सकर्तृकश्च ज्ञानविशेष इत्येतावदेवानुभविकम् । न तत्र वृत्तिचैतन्यरूपांशद्वयसद्भावेऽनुभवः प्रमाणम् । न वा श्रुतिः । केवलं सांख्यवासनया तदप्रामाणिकमेव सिद्धवदनूद्यतेऽद्वैतिभिः । अनुभवानुरोधेन, "नानात्मानो व्यवस्थातः" इति वैशेषिकोक्तरीत्या चात्मनामनेकत्वात् अस्मदनुभवविषयत्वस्य ब्रह्मण्युपगन्तव्यत्वेन अनुभवविषयत्वं न शक्यं निषेद्धुं सांख्यरीत्यवलम्बेऽपि । अन्तःकरणवृत्तिरपि चक्षुरादिवृत्तिवत् सन्निकर्षमात्रम् । सन्निकर्षश्च ज्ञानं प्रति करणमेव । अतो ज्ञातुः ज्ञानकरणस्य च भेद एव निरूढ इति न करणव्यापारस्य कर्तृगतगुणरूपत्वम् । अप्रयोजकश्च हेतुः ; अनुभूतित्वेऽप्यनुभाव्यत्वे बाधकाभावात् । अनुभूतेर्भाट्टतार्किकादिवत् जडत्वस्य वेदान्तिभिरनभ्युपगमात् स्वप्रकाशत्वे स्वव्यवहारः स्वविषयकानुभवान्तरमन्तरेणैव भवितुमर्हतीति किलाननुभाव्यत्व साधनीयम् । तत्र लोके परकीयानुभूतेरन्यपुरुषं प्रति स्वप्रकाशत्वाभावेन तं प्रत्यनुभाव्यत्वं हि न ततो वारयितुं शक्यम् । एवं स्वकीयानुभूतेरपि पूर्वापरकालभवायाः वर्तमानकाले स्वयंप्रकाशमानत्वायोगात् स्वकीयानुभवान्तरगोचरत्वमप्येष्टव्यमेव । अन्यथा तद्व्यवहारानिष्पत्तेः ।

च तत् । भवितुमर्हति ? भवन्मतरीत्याऽपि सदाद्याकारेण ज्ञातमात्मस्वरूपमानन्दरूपेणाज्ञातत्वाज्जिज्ञास्यते, ज्ञायते चेत्युक्ततया तत्र सामान्याकारेणानुभवान्तरस्यानपेक्षायामपि विशेषरूपेणानुभवस्यावश्यकत्वे सिद्धे, अनुभवस्य च वृत्त्यवच्छिन्नचैतन्यरूपतायाः भवदुक्ततया—यदाकारेण स्वयंप्रकाशत्वम्, तदितराकारेण तस्यैव चैतन्यस्य घटादेरिव वृत्त्यवच्छिन्नचैतन्यविषयत्वं न खलु दण्डेन वारयितुं शक्यम् । प्रत्यगात्मनः स्वरूपेण सत्यस्यापि किञ्चिदुपहितरूपेण मिथ्यात्वं भवदिष्टम् । मिथ्यात्वप्रयोजकञ्च चिद्भास्यत्वम् । तत्र तस्यैतद्भास्यत्वं कथमिति शङ्कायां चितः भास्यत्वभासकत्वयोरुभयोरेकाकारेणोपपादनासंभवेऽपि स्वरूपतो भासकत्वम्, उपहितरूपेण भास्यत्वञ्चा-

विरुद्धमित्येव वक्तव्यम् । तथा शुद्धचैतन्यं प्रत्यविषयत्वेऽपि वृत्त्यवच्छिन्नचैतन्यविषयत्वमप्यस्तु । यदि उपहितचैतन्यस्य वृत्तिविषयत्वमात्रेणैव मिथ्यात्वम्, न तु चिद्भास्यत्वमप्यपेक्षितमित्युच्यते, तर्हि अखण्डाकारवृत्तिमात्रविषयत्वस्वीकारेऽपि ब्रह्मणोऽपि मिथ्यात्वमापतितमेव । नूनं घटादितुल्यस्यानुभाव्यत्वस्य स्वीकारे घटादिवत् मिथ्यात्वं प्रसजेदिति भिया निर्मूलं भवतामत्र वृत्तिविषयत्वचैतन्याविषयत्वरूपभेदकल्पनम् । एवञ्च जगन्मिथ्या दृश्यत्वादित्यनुमानं ब्रह्मापि कवलीकुर्यादिति चेत्—कुर्यादेव ।

एवमनुभाव्यत्वस्वीकार एव जिज्ञास्यत्वं घटते, न पुनरस्वीकारे । ननु वृत्त्यवच्छिन्नचैतन्यं नाम ब्रह्मात्मकचैतन्यमेव । चैतन्यद्वयस्यासंमतत्वात् । तथा च कथं तस्यैव तद्विषयत्वमिति चेत्—उपपादितमेव । यथा हि चैतन्यस्यैकत्वेऽपि शुद्धचैतन्यम्, विद्यावच्छिन्नचैतन्यम्, अन्तःकरणावच्छिन्नचैतन्यम्, उपहितसाक्षिचैतन्यमित्येवं विशेषणभेदेन विशिष्टभेदकल्पनया जीवेश्वरादिभेदव्यवहारः, तथेहापि भविष्यति । स्वप्रकाशत्वमात्रेणानिर्वाहे विषयविषयिभावस्यावश्यकत्वे वृत्तेश्च जडायाः स्वतो वस्तुप्रकाशनासामर्थ्ये च सति उक्तविधभेदस्य कार्यान्तरनिर्वाहकत्ववत् विषयविषयिभावनिर्वाहकत्वस्यापि स्वीकारसंभवात् । एवञ्चानुभाव्यत्वमानुभविकमनपलपितं भवति । ईश्वरविषयकजीवसाक्षात्कारो नाम अविद्यावच्छिन्नचैतन्यविषयकं प्रमात्रन्तःकरणवृत्त्यवच्छिन्नचैतन्यमिति युक्तम् । 'घटादेः साक्षात्काराख्यवृत्तिविषयत्वं नाम घटाद्यवच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्याभेदः ; चैतन्यस्याखण्डाकारवृत्तिविषयत्वं नामान्यादृश'मिति वैषम्यं विहाय सर्वत्र विषयात्मकचैतन्यस्य वृत्त्यात्मकचैतन्यविषयत्वमेव च युक्तं स्वीकर्तुम् ॥

यदि शुद्धचैतन्यविशिष्टचैतन्ययोः सत्यपि भेदे स्वरूपैक्यमस्तीति विषयविषयिभावो नेष्यते, तर्हि वृत्तेर्जडाया अपि सविषयकत्वायोगेन वृत्तिविषयत्वमपि ब्रह्मणो दुर्भणमिति जिज्ञास्यत्वायोगस्तदवस्थः । स्वतो वृत्तेर्जडत्वेन विषयीकारासमर्थत्वेऽपि चैतन्यप्रतिबिम्बवशात् विषयीकरणयोग्यते-

ष्यत इति चेत्—तर्हि घटादावपि तादृशवृत्तिविषयत्वमेकमेवालमिति किं चिद्विषयत्वस्याप्यधिकस्य कल्पनया ? तत् सिद्धं घटादेर्ब्रह्मणश्चैकरूपमनुभाव्यत्वमिति दृश्यत्वात् ब्रह्मणोऽपि मिथ्यात्वमापतितम् । तदर्थं सर्वथैवानुभाव्यत्वं यदि ब्रह्मणो नेष्यते, जिज्ञास्यत्वानुपपत्तिस्तर्हि तदवस्थैवेति । वृत्तिसंबन्धविचारश्च विशेषतोऽस्मत्कृत **परमार्थप्रकाशिकायां** द्रष्टव्यः ॥

यत्तु—ब्रह्मण्यज्ञानकल्पितसत्त्वचित्त्वादिविशेषधर्मराहित्येनाखण्डसच्चिदानन्दस्वरूपावगमार्थं जिज्ञासेति । तत्र सच्चिदानन्दे ब्रह्मणि सत्त्वादीनामज्ञानकल्पितत्वं कथम् ? अखण्डे तस्मिन् तेषां धर्मतया प्रतीतिरज्ञानकल्पितेति चेत्—सत्त्वचित्त्वादीति आदिपदग्राह्यं किम् ? आनन्दत्वमिति चेत्—तर्हि सर्वं प्राक् ज्ञातमेव । परन्तु धर्मत्वेन ज्ञातमस्ति । अतस्तस्य सर्वस्य स्वरूपाभिन्नत्वमेव संप्रति ज्ञातव्यमिति सिद्ध्यति । तन्न युक्तम् । अनृतजडानानन्दव्यावृत्ततया ब्रह्मज्ञापनं हि श्रुतिकार्यत्वेन भवदिष्टम् । यदि ब्रह्मणि प्रागेव सत्त्वं चित्त्वमानन्दत्वञ्च धर्मतया ज्ञातमभविष्यत्, कथमसज्जडदुःखरूपताप्रतीतिप्रसङ्गः । न हि—'कुण्डलवत्त्वेन ज्ञातो गुरुः, अकुण्डलत्वभ्रान्तिः परं नापैती'ति वक्तुं युक्तम् । अथानन्देऽपरिच्छिन्नत्वमधिकमिदानीं ज्ञाप्यत इति चेत्—तदपरिच्छिन्नत्वमपि ब्रह्मैव वाऽन्यद्वा ? ब्रह्मणः स्वयंप्रकाशत्वात् तदपि प्राक् प्रकाशितमेवेति किं वृत्तिज्ञानेन ? अन्त्ये, तत् सत्यमसत्यं वा ? आद्ये अद्वैतहानिः । अन्त्ये तत्त्वज्ञानस्य मिथ्याविषयकत्वापातः । अपरिच्छिन्नत्वं स्वरूपमेव । परिच्छेदप्रतियोगिकत्वेन रूपेणेदानीं वेद्यत इति चेत्—परिच्छेदस्य तर्हि वृत्तिविषयतया मिथ्याविषयकत्वमक्षतमिति अखण्डाकारत्वहानिरेव । एवं परिच्छेदप्रतियोगिकाभावस्थानापन्नस्य कस्यचिद्धर्मस्य परिच्छेदाविषयकस्य परिच्छिन्नत्वभ्रान्तिनिवर्तकस्य भानाभ्युपगमेऽपि दोषः समानः । आनन्दस्वरूपे धर्मत्वकल्पन भ्रान्तिरिति वदता च आनन्दस्वरूपं न धर्म इति ज्ञानादेव तन्निवृत्तिर्वक्तव्या । तत्र धर्मत्वादिमिथ्याविषयकत्वमक्षतम् । यदि निर्विशेषमिति ज्ञानादेव

तद्धर्मत्वबुद्धिनिवृत्तिरेकहेलयेत्युच्यते, एवमपि विशेषाणां भानात् स एव दोषः। अपरिच्छिन्नसच्चिदानन्दज्ञानं चैवं तर्हि नापेक्षितमिति विशिष्य तदुपदेशः श्रुत्यादौ व्यर्थश्च। एवम्भूते ब्रह्मणि, "सामान्यांशः स्वयंप्रकाशः; विशेषरूपमानन्दस्वरूपम्" इत्यादिवर्णनमर्थशून्यम्। अंशभेदाभावात्। एकमात्रस्वयंप्रकाशवस्तुवादिमते, अनेकवस्त्वभावात् का नाम स्वयंप्रकाशस्य सामान्यता। प्रकाशमानतैव च लोके ज्ञाता स्यात्, अस्ति भातीति; न तु स्वयंप्रकाशताऽपीत्यपि ध्येयम्। कथञ्चानन्दत्वं प्रागज्ञातम्। नाहमस्मीति प्रतीत्यभावादहमित्यात्मा यथा स्वयंप्रकाशत इतीष्यते—अन्यथा अप्रकाशमानत्वे प्रतिबन्धकाभावात् नाहमस्मीति विपर्यस्येदपीति। तथा च शाङ्करभाष्यम्, "यदि हि नात्मास्तित्वप्रसिद्धिः स्यात्, सर्वो लोको नाहमस्मीति प्रतीयात्" इति—तथा स्वस्मिन् स्वस्य प्रतिकूलत्वबुद्धेः कदाप्यजननात् अनुकूलत्वेनात्मभानमप्येषितव्यम्। इषितञ्च; स्वस्य परमप्रेमास्पदत्वे कस्याप्यविवादात्। अनुकूलञ्च ज्ञानमानन्द इति आनन्दरूपताऽपि ज्ञातैव। भामत्यामप्युक्तम्—"**बुद्धेति** अपराधीनप्रकाशमानन्दात्मानं दर्शयति आनन्दप्रकाशयोरभेदात्" इति। अथाप्यपरिच्छिन्नत्वं तत्र न ज्ञातमिति चेत्—तत् किञ्चित्तत्रास्तीति दुर्निरूपम्; अभातस्यांशस्याभावादित्युक्तम्।

वस्तुतः सत्त्वचित्त्वानन्दत्वादिकं सर्वमभावरूपमेवेति अभावकूटात्मकमेव ब्रह्मेति शून्यवादाद्विशेषो दुर्वच एव। व्यावहारिकं भावत्वं स्वीक्रियते चेत्—तदिदं सौगतोक्तं सांवृतिकमेव सत्त्वम्।

यत्तूच्यते—स्वरूपात्मकं ज्ञानं नाज्ञाननिवर्तकम्; किन्तु वृत्त्यात्मकमेव। अतः जिज्ञासा तादृशवृत्तिविषयिण्येवेति—तत्र पुनरप्युच्यते—स्वरूपस्य ज्ञानरूपत्वं कथमवगतम्? अहमिति स्फुरणात्, नाहमिति विपरीतस्फुरणाभावात इति चेत्—तर्हि विपरीतस्फुरणहेत्वज्ञानवारकत्वं स्वरूपस्य क्लृप्तमेव। अथापि भावरूपान्यादृशाज्ञाननिवर्तकत्वं न तस्येति चेत्—

तदज्ञानं स्वरूपविषयकं वा अन्यविषयकं वा, आद्ये नाहमिति विपरीतस्फुरणापत्तिः। आनन्दत्वादिरूपातिरिक्तविषयकमिति चेत्—नेदं तर्हि ब्रह्मविषयकमज्ञानम्। किञ्च जडस्य प्रपञ्चस्याज्ञानकार्यस्याज्ञानविषयत्वं भवद्भिर्नेष्टमिति ब्रह्माज्ञानमेक वक्तव्यम्। एवञ्चाज्ञानस्य वृत्तिज्ञाननिवर्त्यत्वं कुत्र भवद्भिर्दृश्येत। घटाद्यवच्छिन्नचैतन्यस्याज्ञानमस्ति। घटादेस्तत्राज्ञानविषयतावच्छेदकत्वमिष्यते। एवं घटाद्युपश्लिष्टचैतन्यविषयकवृत्त्या अयं घट इत्याद्याकारिकया तदज्ञाननिवृत्तिरिति चेत्—किमेवं लोकानुभवः, किं वा भवत्कल्पनाकौशलमिति सहृदयं भाव्यताम्। घटमात्रस्यैव लोकेऽनुभूयमानत्वात् तदवच्छिन्नभूतचैतन्यांशे वृत्तिविषयत्वस्यानानुभविकत्वात्। अथापि किञ्चिदवच्छिन्नचैतन्यविषयकाज्ञाननिवृत्तौ तदवच्छिन्नचैतन्यविषयकवृत्तिः कारणम्; अनुपहितचैतन्यं तु स्वाज्ञाननिवृतौ वृत्तिनिरपेक्षमिति यथानुभवं सिद्ध्या ब्रह्ममात्रविषयकवृत्तिर्नापेक्षणीया स्यात्। अद्वितीयत्वनिर्विशेषत्वादिना ब्रह्म न ज्ञायत इति तादृशब्रह्माज्ञानमिष्यते चेत्—तत्तद्धर्मविशिष्टब्रह्मविषयकवृत्तिरेव तत्रापेक्षिता स्यात्। अतो नानुपहितं जिज्ञास्यं वा, ज्ञेयं वा। निर्विशेषत्वं तादृशधर्मवत्त्वं च मिथो विरुद्धमिति चेत्—वृत्तिविषयत्वमपि विरुद्धमेव। "अप्राप्य मनसा सहे"ति श्रुतिविरोधश्च। अतो निषेधानामपि विशेषनिषेधपर्यवसानमित्येव भवद्भिरपि वक्तव्यम्; उच्यते च। अतोऽनुपहितब्रह्मवृत्तिर्न जिज्ञासाफलम्; स्वरूपस्य स्वप्रकाशत्वेनाजिज्ञास्यत्वात्।

यत्तु—स्वरूपज्ञानस्याज्ञानानिवर्तकत्वं विशिष्टाद्वैतिनामपीष्टमिति—तत् किमज्ञानसामान्यानिवर्तकत्वम्, उत यत्किञ्चिदज्ञानानिवर्तकत्वम्? आद्यमसिद्धम्। स्वरूपैकत्वानुकूलत्वबाधकस्याज्ञानस्याभावः आत्मभूतज्ञानप्रयुक्त इत्येवाङ्गीकारात्। अन्त्यं तु वृत्तिज्ञानस्याप्यस्ति। घटज्ञानस्य पटाज्ञानानिवर्तकत्वात्।

अथोपहितमनुपहितं वा जिज्ञास्यमिति विचारे भामतीविवरणप्रस्थानभेदोपन्यासेन यदुभयथाऽपि सामञ्जस्यवर्णनम्—तत्रोच्यते। भवदुक्तरीत्या

विवरणमतसारस्तावदयम्—आनन्दो विषयानुभवो नित्यत्वञ्चेति धर्माः अपृथक्त्वेऽपि चैतन्यात पृथगिवावभासन्ते इति सिद्धान्तः। अतः सच्चिदानन्दरूपे ब्रह्मणि तदाश्रितानाद्यज्ञानवशात् धर्मधर्मिभावकल्पना; घटोऽस्ति, घटोऽनुभूयत इति सद्रूपेणानुभूतिरूपेण च सामान्यतो ज्ञातमानन्दात्मकविशेषरूपेणाज्ञातं जिज्ञास्यते। "आनन्दो ब्रह्मेति व्यजाना" दित्युक्तं ज्ञानञ्च जिज्ञासाफलम्। तत्फलञ्चाज्ञाननिवृत्तिः। अज्ञाननिवृत्तिक्षणावच्छिन्नं ज्ञानमखण्डार्थम्। तत्त्वमसिवाक्यजन्यज्ञाने चाखण्डार्थत्वं वृत्त्युत्पत्तिक्षणावच्छेदेनापि। वित्तिकर्मत्वञ्च ब्रह्मणो वृत्तिमात्रविषयत्वम्। न तु घटादेरिव चिद्वास्यत्वरूपफलव्याप्यत्वमपीति। एवञ्च न जिज्ञासाद्यनुपपत्तिरिति भवन्निर्णयः। अत्रोच्यते—सच्चिदानन्दरूपं ब्रह्म; तत्र धर्मधर्मिभावः कल्पित इत्यत्र कल्पिता धर्माः के? किमानन्दः, चित्, सत् इतीम एव धर्माः कल्पिताः, किं वा आनन्दत्वं चित्त्वं सत्त्वरूपनित्यत्वञ्चेति धर्माः। आद्ये, 'सत्' इति लेखनीये, नित्यत्वमिति त्वप्रत्ययप्रयोगो न युक्तः। अन्त्ये, 'आनन्द' इति त्वप्रत्ययरहितप्रयोगो न युक्तः। यदि च नित्यत्वं तत्र कल्पितम्, कथं तत स्वभावतः सद्रूपं भवेत्? एवं चित्त्वानन्दत्वयोः कल्पितत्वे चिदानन्दरूपमपि कथम्?

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यत्रयं ब्रह्मरूपं प्रपञ्चस्य परद्वयम्॥" इति हि वर्ण्यते।

तत्र घटोऽस्ति भातीति सत्ताप्रकाशयोरिव घटः प्रिय इति प्रियत्वस्यापि भानमस्तीति आनन्दांशाभानञ्च कथम्? अतोंऽशद्वयज्ञानात् सामान्यज्ञानेऽपि आनन्दांशाज्ञानात् विशेषो जिज्ञासितोऽप्यस्तीति विभागोऽनुपपन्नः। यत् यत् भाति, तत्तत् प्रियमिति न भातीति चेत्—तावता आनन्दो विशेष इत्यस्तु। क्वचिद्भाने सति अभानं कथम्? एवं लोकत एव ज्ञातत्वे "आनन्दो ब्रह्मे"ति शास्त्रात् तज्ज्ञानमिति, तदर्थं जिज्ञासेति चायुक्तमेव। यदि च तच्छास्त्रं ब्रह्मणि आनन्दत्वरूपं धर्मं

ब्रवीति, कथं तर्हि धर्मधर्मिभावस्य कल्पितत्वम्? तेनाज्ञाने निवृत्ते सह आनन्दत्वरूपधर्मस्यापि निवृत्तत्वात् ब्रह्ममात्रपरिशेष इति चेत्—आनन्दो ब्रह्मेति ज्ञानस्य सप्रपञ्चं ब्रह्मेति ज्ञानस्य च को विरोधः, येनाज्ञाननिवृत्तिः ततः स्यात्। प्रत्युत, 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्या'दिति पृथिव्यादिमत्त्वमात्रेण मानुषानन्दोक्त्या तत्क्रमेण परिपूर्णप्रपञ्चवत्त्वमेव ब्रह्मानन्दप्रयोजकमिति तस्याप्यनुकूलत्वमेव। आनन्दब्रह्मज्ञानेन ब्रह्मानानन्दताभ्रममूलभूताज्ञाननिवृत्तिः परं स्यात्। अतो जगतः, ब्रह्मगतस्यानन्दत्वस्य च निवृत्त्यभावात् आनन्दो ब्रह्मेति ज्ञानस्याज्ञाननिवृत्तिक्षणेऽखण्डार्थत्वकथनमयुक्तम्। घटः प्रिय इत्यादिज्ञानेनानन्दज्ञानेऽपि ब्रह्मण्यानन्दत्वं न ज्ञातमिति तत् ज्ञाप्यते "आनन्दो ब्रह्मे"ति वाक्येनेति चेत्—एवं "सत्यं ज्ञानमनन्तं ब्रह्मे"ति वाक्यतः तत्र सत्यत्वज्ञानत्वे अपि ज्ञापनीये एव; घटोऽस्ति भातीत्येतावता ब्रह्मणि तयोरज्ञातत्वात्।

ब्रह्मणः जगदुपादानत्वे, कार्ये उपादानानुवृत्तिरपेक्षितेति प्रश्ने प्राप्ते तत्समाधित्सया सद्रूपं चिद्रूपं च ब्रह्म घटोऽस्ति भातीति गृह्यत एवेत्यनुवृत्तिर्वर्ण्यते भवदीयैः। एतदवष्टम्भेन घटादेर्जगतः सति कल्पितत्वमिति जगन्मिथ्यात्वे प्रयत्यते च। सत्त्वानुवृत्तिवत् चित्त्वानुवृत्तेरपि सत्त्वात् चैतन्यरूपं ब्रह्मैव साक्षाज्जगद्रूपेण परिणमत इति भास्करपक्षस्यैव तावता भवद्भिरवसरः कल्पितो भवति। चेतनाचेतनयोर्जडाजडयोर्भेदस्य प्रामाणिकत्वात् न चित्त्वानुवृत्तिरिति चेत्—एवं तर्हि ब्रह्मसत्तानुवृत्तिर्घटादौ दुर्घटैव। द्रव्यभेदे च उपादानोपादेय भावासिद्धिरेव। एवं सच्चिद्रूपमात्रत्वे अपुरुषार्थतया मोक्षप्रवृत्तिर्न स्यादिति आनन्दस्वरूपताऽपि ब्रह्मणः स्वीकृता। एवं स्वीकृत्यैव स्वयमेव निर्विशेषत्वभङ्गभीरवः सत्त्वचित्त्वानन्दत्वानि न धर्मा इति च भवन्तो ब्रुवन्ति। एवञ्चेद्धर्मिरूपत्वमेषामेषितव्यम्, तर्हि अस्ति भाति प्रियमित्यनुभूयमानता तस्य सच्चिदानन्दस्य नास्तीति यदि ब्रूयुः, तदर्थञ्च प्रतीयमामानानां सत्त्वादीनां लोकसिद्धं निर्वचनमेव स्वीकुर्युः, तदा कथञ्चिदुपपत्तिः स्यात्। तद्विहाय

निर्विशेषब्रह्मण एव सच्चिदानन्दरूपस्य लोकेऽपि भाने इष्यमाणे तु तत्रासत्त्वाचित्त्वानानन्दत्वशङ्कानवकाशात् शास्त्रमेव तत्र नापेक्षितमिति कुतो जिज्ञासा। कथञ्चानन्दांशज्ञानस्य जिज्ञासाफलत्वमिति।

आनन्दो ब्रह्मेति ज्ञानमज्ञाननिवृत्तिक्षणावच्छेदेनाखण्डाकारम्, तत्त्वमसिवाक्यजज्ञानं तु वृत्त्युत्पत्तिक्षणावच्छेदेनैवाखण्डाकारमिति वैलक्षण्यकल्पनञ्च न युक्तम्। उभयोः समानाधिकरणवाक्यत्वाविशेषात्। 'व्याप्तेश्च समञ्जस' मिति सूत्रेभामत्यां "विज्ञानानन्दयोरपि स्फुटतरः प्रवृत्तिनिमित्तभेदः" इत्युक्तत्वात् प्रवृत्तिनिमित्तं तत्र न त्याज्यमिति चेत्—तत् सर्वत्र तुल्यम्। आनन्दत्वरूपकल्पितधर्मबोधने च पुनर्मिथ्याभूतधर्मधर्मिभावपरत्वादतत्त्वज्ञापकत्वमेव वाक्यस्य स्यादिति कथं तस्याज्ञाननिवर्तकता?।

यच्चोक्तम्—वृत्तिज्ञानेनाज्ञाने निवृत्ते ब्रह्म स्वत एव प्रकाशत इति चिद्विषयत्वाभावेऽपि वृत्तिविषयत्वसंभवादेव जिज्ञासाद्युपपत्तिरिति—तत्र वित्तिकर्मत्वमित्यत्र लोके वित्तिपदार्थे वृत्तिश्चिच्चेत्यंशद्वयं घटकमस्तीति, तत्र वृत्तिकर्मत्वं साधारणम्, चिद्विषयत्वं तु क्वाचित्कमिति च नानुभविकमित्यादिकं च प्रागेवोक्तम्। एवं विभागानङ्गीकारे अमेयत्वश्रुतेः कथं निर्वाह इति चेत्—निर्विशेषपरिशेषदशाभिप्रायेण तदस्तु। वास्तविकश्च निर्वाहः कार्त्स्न्येनावेद्यत्वरूपः अस्मत्पक्षरीत्याऽस्त्येव। अथ भवता, "जिज्ञासाफलस्य वृत्तिज्ञानरूपत्वेऽपि जिज्ञासाहेतुर्ज्ञानं वृत्तिरूपमेवेति न। स्वरूपप्रकाशोऽनादिरपि तथा भवितुमर्हती"त्युच्यते। तत्र शतदूषण्युक्तात् दूषणादनिस्तार एव। उक्तं हि तत्र—"अनादेः प्रकाशस्य च निरपेक्षहेतुत्वे जिज्ञासानादित्वप्रसक्तेः, सापेक्षत्वे यथादर्शनं स्वविषयवेदनापेक्षणा"दित्यादि। जीवस्यान्तःकरणधर्मसंशयोत्पादनद्वारैव हेतुरिति भवत्समाधानमप्यत्र द्वितीयहेतुना निरस्तं खलु। संशयापेक्षायां तं संशयं प्रति निरपेक्षहेतुत्वे पुनर्जिज्ञासानादित्वम्, पुनर्वित्तिकर्मत्वापत्तिश्चेति वित्तिकर्मत्वानङ्गीकारपक्षे दूषणस्यैवात्र प्रकृतत्वात्॥

एवं तावत् विवरणाभिमतमनूदितं विमृष्टम् । अथ भामती मतं भवदुपवर्णितम् । तत्र विवरणमतविवरणावसरोक्ता अंशाः सर्वे न सन्तीति न शक्यं वक्तुम् । "आनन्दादयो धर्माः अपृथक्त्वेऽपि पृथगिवावभासन्ते" इत्युक्तं हि भामत्यामपि स्वीकृतमेव । तत्र ह्युक्तम्—"न खल्वानन्दनित्यत्वविभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते । येन तद्ग्रहे न गृह्येरन् । गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्यगृहीता इवाऽऽभान्ति" इति । आनन्दादिरूपमेव ब्रह्म । दुःखप्रत्यनीकत्वकालपरिच्छिन्नप्रत्यनीकत्वादिकमपि ब्रह्मैव । अथापि तत् दुःखादिप्रतियोगिकत्वादिरूपेण न परामृष्टम् । तत्परामर्शोऽपेक्षित इति एतत्पङ्क्त्यर्थः । अतः, "भामतीमते तु अज्ञानोपहितम्" इति भवदुपक्रमानुरोधेन, अनुपहितं शुद्धं जिज्ञास्यं विवरणमते । भामतीमते तु अज्ञानोपहितमिति भेदो वक्तव्यः । तत्रोपहितं जिज्ञास्यमित्यस्य कोऽर्थः । जिज्ञासाकाले वस्तुगत्या तत् उपहितमस्तीति वा, उपहितम् उपाधिविशिष्टम् उपाधिना सह जिज्ञासाविषयीकार्यमिति वा । आद्यं तु विवरणमतेऽपि । जिज्ञासाकाले अज्ञानस्य कथमप्यनपायात् । जिज्ञासाधीनफलीभूतज्ञानप्रादुर्भावकालेऽपि नापायः । नतरां जिज्ञासाकाले । अन्त्ये, यत् जिज्ञास्यं तदेव ज्ञेयमिति अज्ञानावच्छिन्नब्रह्मज्ञानसंपत्तये शास्त्रमिति स्यात् । निर्विशेषं न विचार्यमिति स्यात् । भामतीमतेऽपि फलीभूतवृत्तिज्ञानविषयः अखण्डब्रह्मैवेति भवदिष्टतया अज्ञानोपहितं जिज्ञास्यमिति वचोऽर्थहीनमेव भवति ॥

जिज्ञासाफलीभूतं यत् मुक्तिसाधनं ज्ञानम्, तच्चोपहितविषयकं भामत्यामुक्तम् । वृत्त्युपहितचैतन्यविषयकमिति तदर्थः । चैतन्यमात्रं विषयीभवति, न वृत्तिरपीति सर्वैस्तदाशय आविष्क्रियते । एवञ्चात्रापि विवरणपक्षादविशेष एव । तत्त्वमसीति वाक्यादखण्डार्थविषयकवृत्तेः तत्रापि भवतैवोक्तत्वात् । एवञ्चाबाधितविषयकत्वरूपं प्रामाण्यं भवदुक्तमस्त्येवेति प्रकारान्त-

रेण प्रामाण्यनिर्वचनं न प्रकृतोपयोगि । उपहितत्वेनोपहितस्य मिथ्यात्वेऽप्यन्यादृशप्रामाण्यमस्तीति वर्णनं ह्यनपेक्षितम् । उपहितत्वेन तस्य मिथ्यात्वेन स्वरूपेणैव चैतन्यस्य वृत्तिविषयत्वस्य प्रागिष्टतया मिथ्याविषयकत्वस्य बाधितविषयकत्वस्य वा प्रसक्त्यभावात् । विवरणाचार्यैरपि, तत्त्वमसिवाक्यस्य पदार्थप्रतीतिसमयप्रतिपन्नजीवब्रह्मैक्यविषयकत्वेनानुवादरूपत्वेऽपि भेदप्रतिभासविरोधितया प्रामाण्यमस्तीत्युक्तमिति **परिभाषाव्याख्या** । तस्मादबाधितं विरोधिविषयभूतमत्रेति सर्वं संप्रतिपन्नम् ।

यदि लोके घटादिज्ञाने प्रामाण्यं यत् प्रसिद्धं तत् अबाधितविषयकत्वरूपप्रामाण्यस्वीकारे न घटते; घटादेस्तत्त्वज्ञानबाध्यत्वादिति तदर्थमज्ञानाविषयत्वप्रयोजकविशिष्टत्वमेव प्रामाण्यम् । घटादेरप्यवस्थारूपाज्ञानविषयत्वस्वीकारात् घटादिवृत्त्या चाज्ञानाविषयत्वं संपाद्यत इति कृत्वा तत्राज्ञानाविषयत्वप्रयोजकवैशिष्ट्यं प्रामाण्यं चैतन्यस्येति वक्तव्यम्—तर्ह्युच्यतां कामम् । तथापि न मुक्तिसाधनतत्त्वज्ञानविषये तदेव वक्तव्यमिति नियमः । अबाधितविषयकत्वस्याक्षतत्वात् ।

वृत्तीनामावरणभङ्गे उपयोग इतीदमपि न सर्वत्र । प्रातिभासिकविषयेऽपि वृत्त्यङ्गीकारात् । तत्रावरणाभावात् । सुखादिविषयेऽपि वृत्तिरिष्यते । न तत्रावरणम् । यद्धि प्रतीतेः प्रागपि स्थितमप्रकाशितम्, तत्र ह्यावरणकल्पना । अतः तत्र तत्र अज्ञानाभावादेवाज्ञानाविषयत्वम् । न तु वृत्तिबलात् साक्षिबलाद्वा । किञ्च विषयावरणभञ्जकत्वं तावत् प्रत्यक्षरूपाया एव वृत्तेरिष्यते भवद्भिः । अनुमित्यादीनामावरणाभञ्जकत्वात् । अतः आवरणभञ्जकत्वेन प्रामाण्यं न सर्वानुगतम् ।

एवं विषयस्य चैतन्यस्य च व्यङ्ग्यव्यञ्जकभावरूपसबन्धार्था वृत्तिरिति पक्षे आवरणभञ्जकत्वाभावात् प्रामाण्यं तत्र भवति । किञ्च घटावच्छिन्नचैतन्यावारकस्याज्ञानस्य वृत्त्या निवृत्तिरिति वदतां वृत्तिः सा किं घटमात्रविष-

यिणी, उत घटावच्छिन्नचैतन्यविषयिणी। नाद्यः, तन्मात्रविषयिण्याः तदवच्छिन्नचैतन्यावारकनिरोधित्वायोगात्। न च घटविषयिणी घटांशे अज्ञानं निरुन्धाम्; चैतन्यं तु स्वप्रकाशत्वादेव स्वावारकमज्ञानं निरोत्स्यतीति वाच्यम्—तर्हि स्वप्रकाशतयैव चैतन्यस्याज्ञाननिरोधित्वे तस्य कदाऽप्यावरणासंभवात्। अत एव प्रपञ्चोदयप्रसक्त्यभावात् घटाद्यावरकाज्ञानस्याप्यनवकाशात्। घटावच्छिन्नचैतन्यपर्यन्तावारकत्वकथनवैयर्थ्याच्च। नान्त्यः, चैतन्यमात्रं प्रति आवारकं यत् प्रपञ्चहेतुरज्ञानम्, तस्यापि निवृत्तिप्रसङ्गात्। विशिष्टविषयकाज्ञाननिवर्तिकायाः वृत्तेर्विशेष्यविषयकाज्ञाननिवर्तकत्वस्यानुभवसिद्धत्वात्। नीलघटाज्ञाननिवर्तकं हि ज्ञानं घटाज्ञानमपि निवर्तयेदेव। न च विशिष्टं शुद्धादतिरिक्तमिति तदज्ञाननिवर्तकस्य न शुद्धाज्ञाननिवर्तकत्वमिति वाच्यम्—तर्हि वृत्त्यवच्छिन्नचैतन्यरूपविशिष्टस्यापि शुद्धचैतन्यातिरिक्ततया शुद्धे वृत्तिविषयत्ववत् तदवच्छिन्नचैतन्यविषयत्वस्यापि संभवेन घटादिवत् दृश्यत्वमिथ्यात्वादेर्ब्रह्मण्यपि प्रसङ्गात्। चैतन्याभिन्नत्वात् वृत्त्यवच्छिन्न चैतन्यस्य सविषयकत्वास्वीकारे वृत्तेरपि जडायाः सविषयकत्वायोगात् ब्रह्मणो वृत्त्यविषयत्वापातः।

कुतश्च घटप्रकाशकत्वमेव वृत्तेरस्वीकृत्यावरणभञ्जकत्वं स्वीक्रियते? वृत्तेर्जडत्वात् प्रकाशकत्वं चैतन्यस्यैव वाच्यम्—अतो वृत्त्या आवरणे भग्ने चैतन्यं वस्तु प्रकाशयतीति खल्वाशयः। तत्र लोके आलोकेन तमसि व्युदस्ते चक्षुर्घटादि प्रकाशयतीति अनुभवसिद्धम्। चक्षुरभावेऽपि आलोकस्य तद्व्युदासकत्वस्थितेः। अव्युदासे चक्षुषोऽप्रकाशकत्वात्। तथा वृत्त्या निवर्तितेऽप्यज्ञाने कञ्चित्कालं चैतन्याभावात् वस्त्वप्रकाश इति न शक्यं वक्तुम्। न हि—अज्ञानं निवृत्तम्; ज्ञानं तु न जातमिति घटते। अतश्चैतन्यसंबन्धानन्तरमेवाज्ञाननिवृत्तिरपि वर्णनीयेति वृत्तेश्चैतन्यस्य विषयसंबन्धं प्रति हेतुत्वमेव युक्तम्। न पुनरज्ञाननिवर्तकत्वम्। तन्निवृत्तिस्तु चैतन्यसंबन्धादित्येवानुभविकम्। इयांस्तु विशेषः—चैतन्यमनित्यमिति वदतां मतेऽन्तः-

करणवृत्तिर्विषयविषयकं चैतन्यं जनयिष्यति; तत् नित्यमिति वदतां तु चैतन्यं सा विषयेण संबन्धयिष्यति ॥ अतो वृत्तेरज्ञानभञ्जकत्वमपि नोपपन्नम् ।

स्मृतीनामपि प्रामाण्यपक्षे अज्ञाताविषयत्वप्रयोजकत्वं दुर्वचम्; अनुभवेनैवाज्ञानस्य निरस्तत्वात् । अतः सर्वानुगतमबाधितविषयकत्वमेव ।

यदि तूपहितविषयकमित्यस्य उपहितत्वेन तद्विषयकमित्यर्थ इष्येत, तदा बाधितस्योपाध्यादेर्विषयत्वादबाधितविषयकत्वरूपं प्रामाण्यं दुर्घटमिति अन्यथा प्रामाण्यस्वरूपं निर्वचनीयं स्यात् । तदर्थस्तु आत्मज्ञानप्राक्कालाबाधितविषयकत्वं प्रामाण्यमिति विवरणपक्षाद्विलक्षणः निरूपितो भवेत् ।

अस्तु तावदिदम् । ज्ञानस्यैवाज्ञाननिवर्तकताया आनुभविकत्वात् वृत्तिमात्रं नाज्ञाननिवर्तकमिति वृत्तिप्रतिफलितचैतन्यमेव निवर्तकं वाच्यम् । घटविषयकवृत्तिप्रतिफलितचैतन्यात् घटाज्ञाननिवृत्तिः । एवं चैतन्यस्य निवर्तनशक्तिमत्त्वादेव शुद्धचैतन्यावारकत्वं नाज्ञानस्य भवितुमर्हति । तस्मादद्वैतमतं यदि कथञ्चिद्विश्वसनीयम्, तर्हि प्रकारान्तरेण परिष्करणीयम् । कथमिति चेत्—श्रूयताम् । निर्विशेषं तत्त्वम्; अन्यत् मिथ्येति मूलमन्त्रस्तथैव जप्यताम् । तच्च तत्त्वं स्वप्रकाशम्; अन्यथा प्रत्यगात्मनस्तस्यास्वयंप्रकाशत्वे अहमस्मीति विपर्ययसंशययोरपि कदाचिदापत्तेः । अतो यद्यपि तत् चैतन्यस्वरूपं प्रकाशमानमेव, अथापि तत्र स्थितः सद्वितीयत्वप्रत्यनीकाकारः तथा न प्रकाशत इति तदज्ञानवशात् द्वितीयस्य प्रपञ्चात्मकस्य कल्पना । न च तस्याकारस्यान्यस्य कथने अद्वैतहानिरिति वाच्यम्—अत एव तस्यापि कल्पितत्वाङ्गीकारात् । सद्वितीयत्वसविशेषत्वादिज्ञानस्य चाद्वितीयत्वनिर्विशेषत्वशुद्धत्वादिप्रकारकचैतन्यविशेष्यकज्ञानादेव निवृत्तिः । चैतन्यस्वरूपप्रकाशश्च नैवम्भूत इति न तस्य निवर्तकता । एवमुपहितविषयकवृत्तिः निर्विशेषत्वात्मकधर्मं तत्र गोचरयन्त्यपि प्रपञ्चमिव निर्विशेषत्वरूपं विशेषमपि निवर्तयेदेव; एकबाधकबाध्यत्वस्य स्थिरत्वात् । इतरेषां विशेषाणां निरासकत्वादेव तत्प्रतियोगिकतया तद्वदेव मिथ्याभूतं निर्विशेषत्वरूपमभावमपि निवर्त-

यत्येव। नन्वेवं बहवो धर्मास्तस्य स्वीकर्तव्या भवेयुः। नैवम्—चैतन्ये कश्चिद्धर्मोऽस्ति, तद्विषय एवाज्ञानम्। स सर्ववस्तुप्रतियोगिकतत्तदभावस्थानापन्नः। स तु धर्मः अयमिति निर्देष्टुं न शक्यते। अस्थूलमनणु अद्वितीयं निर्विशेषमिति तत्तदभावरूपेणैव मन्तव्यो ध्यातव्यश्च। एवं ध्यानावृत्तौ साक्षात्कारः। तत्तद्विशषोपलक्षित—तत्तद्विशेषांशकल्पनाविरोधिताद्दृशैकधर्मवत्तया जीवन्मुक्तयादौ साक्षात्कृते ब्रह्मणि न विपरीतप्रपञ्चारोपप्रसक्तिः। स एव धर्मः, 'सत्य'मित्यादिभिः अनृतजडपरिच्छिन्नादिप्रतियोगिकाभावत्वेन रूपेण विभिन्नतया निर्दिश्यते साक्षात् प्रदर्शयितुमशक्यत्वात्, गोत्वमिव खरतुरगमहिषादिप्रतियोगिकभेदरूपेण। स चायं धर्मः विशेषधर्मज्ञानस्यैवाज्ञाननिवर्तकत्वदर्शनेन कल्पितः। नन्वस्याकारस्या मिथ्यात्वेन भ्रान्तिरूपमिदं निर्विशेषब्रह्मज्ञानं कथं प्रपञ्चभ्रान्तिनिवर्तकमिति चेत्—भूदलनभ्रान्तिरपि सर्पभ्रान्तिं निवर्तयत्येव। तथा च कर्मणः कर्मनाशकत्वे भामत्यामुक्तानि (*1-1-1*) "यथा पयः पयोन्तरं जरयति, स्वयञ्च जीर्यति; यथा विषं विषान्तरं शमयति, स्वयञ्च शाम्यति; यथा वा कतकरजो रजोन्तराविले पाथसि प्रक्षिप्तं रजोन्तराणि भिन्दत् स्वयमपि भिद्यमानमनाविलं पाथः करोती"ति उदाहरणानि भाव्यानि। "अविद्या तु यद्यविद्यामुच्छिन्द्यात्, जनयेद्वा न तत्र काचिदनुपपत्तिः" (*1-1-4*) इति भामत्युक्तमप्यत्रानुसन्धानमर्हति। एवमुपहितं जिज्ञास्यं ज्ञेयञ्चेति पक्षसमर्थने सत्येव अनुपहितं जिज्ञास्यं ज्ञेयञ्चेति पक्षाद्विशेषः स्यात्। नन्वेवं तत्त्वमसीत्यस्याखण्डाकारज्ञानहेतुत्वं कथमिति चेत्—मा भूत्। तत्पदं असर्वज्ञकिञ्चिदज्ज्ञव्यावृत्तमित्यर्थं त्वंपदं च सर्वज्ञसर्वशक्तव्यावृत्तमित्यर्थञ्च बोधयतु। स्याद्वा अखण्डार्थधीस्ततः। सा त्वभ्यस्यमाना शुद्धचैतन्यं सुखरूपमास्वादयिष्यतीत्यास्वादमात्रफला सा। अत एव ब्रह्मणः आनन्दरूपता। सैव शुद्धधर्मिसाक्षात्कारदशा जीवन्मुक्तिदशेत्युच्यते। तस्य साक्षात्कारस्याविद्यानिवर्तकत्वाभावादेव साक्षात्कर्तुर्जीवनाद्यनुवृत्तिः। निर्विशेषत्वादिप्रकारकब्रह्मविशेष्यकज्ञानाभ्यासस्ततोऽपि तेन प्रपञ्चनिवृत्तये क्रियते इति पश्चादेव मोक्ष इति सर्वमनवद्यम्॥

शाङ्कराद्वैतसंरक्षावैयग्र्येण विचक्षणैः ।
अवान्तरार्थप्रस्थानान्यनेकान्यादृतानि हि ॥
तथाऽस्माभिरयं पन्थाः भामत्यादिविमर्शिभिः ।
स्वीकृत्य तन्मते मुख्यं स्यादिहोपेक्षितः परः ॥
शुद्धं वोपहितं वा स्यान्मुक्त्यै ज्ञेयमितीदृशे ।
विमर्शे सारभूतं यद्वक्तव्यं तदितीरितम् ॥
एवं परिष्कृतेऽप्यत्र दोषान् संचिन्त्य पश्यताम् ।
विशिष्टाद्वैतसिद्धान्तः विशिष्टः स्थास्यति ध्रुवम् ॥

यथा गोत्वस्य स्वरूपतः प्रकाशेऽपि महिषादिव्यावृत्तिर्गृहीतैवेति महिषादिभ्रमो न जायते, तथा निर्विशेषत्वाद्वितीयत्वानृतजडपरिच्छिन्नव्यावृत्तत्वादीनां ब्रह्मस्वरूपत्वे ब्रह्मणः स्वयंप्रकाशमानतयैव सविशेषत्वादिभ्रमेणापि न भवितव्यमिति भ्रमानुवृत्तिबलात् निर्विशेषत्वादेः तत्स्वरूपत्वं नेष्यते । अतश्च प्रतियोगिवदभावोऽपि मिथ्याभूतत्वात् तत्त्वज्ञानेन निवर्त्येत इति वक्तव्यम् । एवञ्च ब्रह्म कीदृशमिति प्रश्ने नित्यशुद्धबुद्धमुक्तस्वरूपमित्यपि दुर्वचं स्यात् ; नित्यत्वशुद्धत्वादीनामभावानामपि कालपरिच्छिन्नत्वहेयास्पदत्वाद्यविशेषात् मुक्तौ स्थातुमनर्हत्वात् । मिथ्यात्वञ्च त्रैकालिकात्यन्ताभावप्रतियोगित्वे सति प्रतीयमानत्वम् । तस्यात्यन्ताभावस्य ब्रह्माभेदे ब्रह्मप्रकाशसद्भावात् मिथ्यावस्तुग्रहणमेव न स्यात् । स्वरूपातिरेके च सत्यत्वे द्वैतापातः । मिथ्यात्वे एतत्प्रतियोगिकाभावस्यैव त्रैकालिकत्वावश्यंभावात् अयमभावः कथं त्रैकालिकः ? यदि तत्तदभावयोर्न विरोधः, तर्हि शुक्तिरजतभ्रमस्थले मिथ्याभूतरजततदभावयोरविरोधात् रजतप्रतीतिकाले तदभावप्रतीतिरपि स्यात् । नेदं रजतमित्यभावप्रतीतिकालेऽपि रजतबुद्धिर्न निवर्तेत । रजतनिवृत्तेरपि मिथ्याप्रतियोगिकतया मिथ्यात्वे नेदं रजतमितिवत् नेदानीं रजतनिवृत्तिरित्यपि स्यात् । रजतनिवृत्तिकल्पकस्य दोषान्तरस्य कल्पनाप्रसङ्गश्च । अतो मिथ्यावस्तुप्रतियोगिकाभावस्य परमार्थत्वमेव स्वीकर्तव्यम् । तत्र प्रातिभासिकरजता-

भावस्य व्यावहारिकसत्त्वम्, व्यावहारिकवस्तुप्रतियोगिकाभावस्य पारमार्थिकसत्त्वमिति विभागः परं स्यात्।

एवञ्च ब्रह्मणि नित्यत्वशुद्धत्वादयोऽभावाः गृह्यमाणाः परमार्था एव वाच्या इति तेषां तद्भिन्नत्वे द्वैतापत्तिः, अभिन्नत्वे स्वरूपप्रकाशसद्भावात् तत्प्रतीत्युदयासंभव इत्युभयतःस्पाशा रज्जुः। न च-ब्रह्मस्वरूपा एव नित्यत्वादयः। एवमपृथग्भूता एव पृथगिवावभासन्ते। एवञ्च तत्र पृथक्त्वमत्या तद्ग्रहणाय प्रयत्यते। तदग्रहणं यावच्च संसारानुवृत्तिरिति वाच्यम्—धर्म्यनतिरिक्तेषु तेषु धर्मत्वभ्रान्तेरपि अज्ञानाधीनत्वात् प्रकाशमाने च स्वरूपे अज्ञानविषयत्वस्याप्रसक्तेः। "यत् साक्षादपरोक्षात्" इति निरपेक्षमपरोक्षं प्रकाशमानस्य निरंशस्य निर्विशेषस्य न कथमप्यज्ञानावरणसंभवः। यस्मिन् अपरोक्षे सति तत्प्रतियोगिभूतवस्तूपस्थितौ सत्यां तद्वस्तुप्रतियोगिकभेदग्रहणमपरोक्षवस्तुनि नास्ति, तस्य तद्भेदरूपता न भवितुमर्हति। गोत्वे त्वपरोक्षे महिषाद्युपस्थितौ तद्भेदो गवि स्वत एव गृहीत इति भवति गोत्वं महिषभेदः। तस्मात्—

त्यज्यतां स्वप्रकाशत्वं गृह्यतां वा सधर्मता।
केवलाद्वैतसिद्धान्तः केवलं कल्पना तु वः॥ ६४

एवञ्च ब्रह्मणो निर्धर्मत्वस्वप्रकाशत्वाङ्गीकारात् शतदूषण्याम्—"सामान्यतो विदिते विशेषतश्च वेदितव्ये तत्प्रवृत्तेः" इति जिज्ञासाया अयोगोपपादनं तदवस्थम्। ब्रह्मणि निर्विशेषे च न सामान्यविशेषरूपांशद्वयमस्ति। आरोहपरिणाहादिसामान्यज्ञाने स्थाणुत्वादिविशेषानिर्णये च हि जिज्ञासा दृष्टा। क्वचिद्विशेषे ज्ञाते सामान्ये जिज्ञासा, यथा—शब्दे शब्दत्वरूपविशेषवत्तया ज्ञाते द्रव्यं गुणः कर्म वेति सामान्यसंशयात् जिज्ञासेत्यप्याहुः। तत्राप्याकारद्वयमवर्जनीयम्। परन्तु तत्रापि सत्तारूपशब्दगतसामान्यधर्मो ज्ञातः, द्रव्यत्वादिर्विशेषधर्मो न ज्ञात इति शक्यत एव वक्तुम्। अत एव वैशेषिकदर्शने—"सामान्यप्रत्यक्षात् विशेषाप्रत्यक्षात् विशेषस्मृतेश्च संशयः"

इति । असाधारणधर्मज्ञानमपि संशयहेतुरित्युक्तं न्यायदर्शनादौ । वैशेषिके तु सर्वः संशयः साधारणधर्मज्ञानादेवेति वेदितम् । विशेषादर्शनमिति च न सर्वविधविशेषधर्माणामदर्शनं विवक्षितम् । किन्तु संशयविषयकोटिविरुद्धकोटिरूपविशेषादर्शनमात्रम् । तत् सर्वत्र सामान्यतो विदितत्वं विशेषेणाविदितत्वं चाक्षतम् । विस्तरोऽस्मत्कृते **वैशेषिकरसायने** । **न्यायप्रदीपे** चास्मत्कृते न्यायभाष्याशयो द्रष्टव्य इत्यलं प्रसक्तानुप्रसक्तेन ।

प्रकृते च धर्मिमात्रे ब्रह्मणि अगृहीतो विशेषो न कश्चिदिति कथं जिज्ञासेति । एवञ्च जिज्ञासाफलं वैशद्यमित्यपि प्रत्युक्तम् । वैशद्यं ह्यनावरणमित्युच्यते । अप्रकाशितांशस्य दुर्निरूपत्वे सति आवरणं न केनापि भविष्यति । सच्चिदानन्दे तत्र सत् चित् आनन्द इति धर्मभेदः अज्ञानवशात् कल्पितः । तन्निवृत्तिः जिज्ञासाफलमिति चेत्—किं सच्चिदानन्दनिवृत्तिः, किं वा तेषु धर्मेषु मिथः, ब्रह्मणश्च भेदस्य निवृत्तिः, आहो भेदकल्पनायाः ? नाद्यः, ब्रह्मण एव निवृत्त्यापत्तेः । न द्वितीयः, पूर्वमेव भेदस्याभावेन तन्निवृत्तेर्दुवचत्वात् । न तृतीयः, ब्रह्मणि सच्चिदानन्दरूपधर्मत्रयमस्तीति हि न लोकतो ज्ञातुं शक्यम् । शास्त्रेणैव तज्ज्ञापने च तत्कल्पनानिवृत्त्यर्थं शास्त्रमिति दुर्वचम् । प्रत्यगात्मनश्च सच्चिदानन्दत्वस्यापरोक्षतया ब्रह्मणस्तदभेदे तस्यापि तथात्वं सिद्धमिति श्रुतौ ब्रह्मणि तद्वर्णनं व्यर्थञ्च । अभेदश्रुतीनामन्यादृशतात्पर्यमभिसन्धाय जीवब्रह्मभेदमातिष्ठमानानामपि ब्रह्मणि सच्चिदानन्दत्वप्रत्ययसंपादनार्थं श्रुतौ तद्वर्णनमिति चेत्—तर्हि स्वजातीयादिभेदसत्त्वेन सविशेषे ब्रह्मणि सच्चिदानन्दत्वानि आदायापि सविशेषत्वमेवास्तु । किं तद्भेदापलापप्रयासेन ।

किञ्चाज्ञानतिरोहितं किं स्वातिरिक्तं ब्रह्म, स्वात्मकं वा ? नाद्यः भवन्मते तदभावात् । ननु जगत्कारणीभूतं ब्रह्मैकमपूर्वतया ज्ञापयित्वा तदभेदः सच्चिदानन्दभूते स्वात्मनि ज्ञाप्यते श्रुत्येति चेत्—स्वातिरिक्तं जगदस्तीति ज्ञानवन्तं प्रति तस्य जगतः कारणं किञ्चिदस्तीति श्रुत्या ज्ञापनीयम् । तेन

ब्रह्मातिरिक्तं जगन्नास्तीति तन्निषेधः कृतो भवति। अथ ब्रह्मणः स्वस्य चाभेदे ज्ञापिते ब्रह्मापि निषिद्धं भवतीति स्वमात्रपरिशेष इति हि भवदाकूतम्। तत्र स्वातिरिक्त जगदस्तीति ज्ञानमिदं भ्रमात्मकं कीदृगज्ञानप्रयुक्तम्। भ्रमो हि तत्त्वाज्ञानादेव भवति। तत्त्वञ्च सच्चिदानन्दस्वात्मकं निर्विशेषं प्रकाशमानमेवेति न तत्राज्ञानप्रसक्तिः। अथाज्ञानं विनैव पूर्वपूर्वभ्रमवासनायत्ताः पश्चात्तनभ्रमा इति मन्यते, सोऽयमविद्यायास्तर्ह्यनपेक्षितत्वादपसिद्धान्तः। तादृशभ्रमनिवृत्तिरपि स्वयंप्रकाशस्वरूपातिरिक्तस्य कस्यचित् जगद्ब्रह्माभेदस्य धर्मस्य ज्ञानरूपात् तत्त्वज्ञानादेव वक्तव्या। स्वरूपस्वयंप्रकाशे सत्यपि भ्रमाणां जाततया तन्मात्रज्ञानेन तन्निवृत्त्ययोगात्। अतो न निर्विशेषपरिशेषः।

किं कुर्मः। श्रुतौ एकत्वाज्ञानावृतत्वयोरुक्तत्वात्तथैव स्वीकार्यमिति चेत्—तर्हि सविशेषज्ञानादपि प्रपञ्चनिवृत्तिः, अर्चिरादिगत्यैव मुक्तिरित्याद्यपि श्रुतिबलादेष्टव्यम्। एतेन—निरंशेऽपि ब्रह्मणि सर्वप्रपञ्चोपादानत्वश्रुत्युपपत्त्यर्थं अनाद्यज्ञानवशात् सदादिस्वरूपभेदकल्पनमिति निरस्तम्; ब्रह्मणः प्रपञ्चोपादानत्वं नाम शुक्तेः प्रातिभासिकरजतोपादानत्वतुल्यम्। तत्र शुक्तेरज्ञानं रजतप्रतिभासश्च यथा, तथा ब्रह्माज्ञानं प्रपञ्चाध्यासश्च। अत्र सदादिस्वरूपभेदकल्पना कुत्रोपयुज्यते। ब्रह्मापेक्षया सच्चिदानन्दत्वधर्माः अन्ये इति कल्पनायां सत्यामेव प्रपञ्चाध्यासप्रसक्तिरिति हि दुरुपपादम्। अस्ति भाति प्रियमिति प्रपञ्चे सच्चिदानन्दत्वं विदुषः सच्चिदानन्दात् सच्चिदानन्दप्रपञ्चोत्पत्तिरिति कार्यकारणभावौचित्यसंपादकमेवच ब्रह्मणि सच्चिदानन्दाभेदज्ञानमिति; अभेदज्ञानस्यैव प्रपञ्चकल्पनाप्रयोजकत्वात्। अतः प्रपञ्चोपादानत्वान्यथानुपपत्त्या अनादिकर्मप्रवाहो जीवानामेषितव्य इत्येतावदेव स्यात्। स च प्रवाहः सत्त्वचित्त्वानन्दत्वादिपरश्शतगुणयोगिपरमपुरुषयाथात्म्याज्ञान इति काममस्तु। तस्मात् भेदाज्ञानकृतमेव सर्वमिति॥

यत्तु—माध्यमिकमतवैलक्षण्यवर्णनमद्वैतमते—तत्रेदमुच्यते। "भामतीमते अविद्यानिवृत्तिपरं शास्त्रम्। न तु शुद्धविषय"मिति, "भामतीमते प्रत्यग्ब्रह्मै-

कथं जीवत्वेश्वरत्वोपलक्षितं शुद्धं चिन्मात्रं न शास्त्रतात्पर्यविषयः" इति च भवतोक्तम्। एवञ्च ब्रह्मज्ञानं न शास्त्रकार्यम्; किन्तु भेदप्रपञ्चमिथ्यात्वज्ञानमेवेत्युच्यते चेत्—माध्यमिकमतेऽपि तद्भावेन तेन सह भवतां कुतो विवाद इति शतदूषणीप्रश्नस्य किं समाधानमत्र? माध्यमिकेनापि मिथ्यात्वमेव व्युत्पाद्यते, तदेव तथैव श्रुत्यापीति अस्याप्यागमस्य तदागमादविशेषः किल स्यात्। न खलु, 'भावरूपं ब्रह्म किञ्चिदिह प्रतिबोध्यते' इतीदानीं भवान् वक्तुमर्हति, शुद्धस्य शास्त्राविषयत्वपक्षाश्रयणात्। उपहितब्रह्मविषयकत्वमस्ति शास्त्रस्येति चेत्—तदुपधानं केन? वृत्त्या वा अन्येन वेति प्रागेव व्यचीचराम। उपहितत्वाकारेण तदपि मिथ्यैवेति तन्मिथ्यात्वमपि हि शास्त्रवेद्यमिति कथं तस्य शास्त्रतात्पर्यविषयता? अस्तु शास्त्रकार्यमविशिष्टम्, अस्मन्मते ब्रह्म सद्रूपम्; माध्यमिकमते तु न सत्, नासत्, न सदसत्, न चाप्यनुभयात्मकमिति सदादिचतुष्कोटिविनिर्मुक्तमिति भेदोऽस्तीति चेत्—किं तेन प्रकृते? ब्रह्म न ज्ञेयम्; भेदमिथ्यात्वज्ञानमात्रसिद्धिः पर्याप्तेति स्वीकृतत्वात् तादृशब्रह्मसाधनेन बाधनेन वा कर्तव्यस्य कस्यचिदभावात्। किञ्च ब्रह्म सद्रूपमिति वदता भवता किं ब्रह्मणि सत्त्वमिति कश्चित् धर्मः स्वीक्रियते, उत धर्मिमात्रम्। आद्ये, अपसिद्धान्तः। अन्त्ये, शून्यं तत्त्वमिति अभावरूपतत्त्ववादापेक्षया अत्र किं वैलक्षण्यम्? निर्धर्मव्यक्तिस्वीकारस्याविशिष्टत्वात्। शब्द एव हि भेदः; नार्थे। माध्यमिकप्रयुक्तः शब्दो भवताऽपि स्वीकर्तव्यश्च। "असदेवेदमग्र आसीत्" इति श्रुतिदर्शनात्। अस्माकं तु मते ब्रह्मणि सत्त्वमिवासत्त्वमपि सूक्ष्मावस्थारूपधर्मात्मकं किञ्चिदस्तीति माध्यमिकमताद्विशेषः तच्छ्रुत्यर्थवर्णनेऽप्यस्ति। भवदीयमुपसंहारवाक्यमपि माध्यमिकैक्यमेव भवतः स्थापयति, यदुच्यते—"तथा च कल्पिताकारभेदशून्यत्वज्ञानार्थं ब्रह्मजिज्ञासेति सूपपन्नम्" इति। शून्यत्वज्ञानार्थं शून्यजिज्ञासैव कार्या, कथं ब्रह्मजिज्ञासा? ब्रह्मेति पदेन कल्पिताकारभेदशून्यमेव विवक्षितं चेत्—बौद्धकृता शून्यजिज्ञासैवेयं स्यात्।

यच्च—" अशुद्धं ब्रह्म जिज्ञास्यमित्यस्य अज्ञानोपहितं ब्रह्म जिज्ञास्यमित्यर्थकल्पनया यदि दूषणम्, तर्हि अनुक्तोपालम्भः"—इति- -तच्च न। (61) पुटे, "भामतीमते त्वज्ञानोपहितं नाजिज्ञास्यतामर्हति" इति भवतैवोक्ततया, तदुक्तेश्च भवत्पूर्वपुरुषोक्तिमूलकतया अनुक्तोपालम्भप्रसक्त्यभावात्। विकल्प्य दूषणं तु न्यूनतापरिहारार्थमनुक्तार्थविषयेऽपि भवितुमर्हति। वृत्त्युपहितत्वं तु व्युदस्तमेव।

एतेन, "भूरन्ध्रभ्रमात् रज्जुदर्वीकरभ्रमनिवृत्तिवत्" इत्यादिः शतदूषणी निरूढा। यत्तु—शुद्धब्रह्मणि वृत्त्यवच्छिन्नचैतन्यविषयत्वस्य घटादाविवासंभवेऽपि वृत्तिमात्रविषयत्वमस्तीति—तत् प्रागेव विचारितम्। वृत्तेर्जडायाः विषयीकरणाशक्तत्वात्। अन्यथा तत्र चैतन्यप्रतिफलनस्य घटादिग्रहणार्थमप्यनपेक्षितत्वात्। वृत्त्यवच्छिन्नचैतन्यविषयत्वस्यापि संभवात्। वृत्तिचैतन्यरूपार्थद्वयकल्पकप्रमाणाभावाच्चेति। यदि च वृत्तिमात्रविषयता, तर्हि जिज्ञास्यम्, ज्ञेयमित्यादिशब्दप्रयोगायोग एव। वृत्तिप्रतिफलितचैतन्यस्यैव ज्ञानपदार्थत्वस्य भवदभिमतत्वात्। अतः सुष्ठूक्तम्—" शुद्धमपि ते न जिज्ञास्यम्; ज्ञप्त्या तत्स्वरूपस्पर्शानभ्युपगमात्" इति।

यत्तु—ब्रह्मणो नित्यशुद्धत्वे आकरवचनमुपात्तम्—"तत्रैवं सति यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यत" इति—तन्न। साधकम् उपोद्घातभाष्यस्थस्य तस्य तत्त्वज्ञानानन्तरं पुनर्दोषासंस्पर्शपरतयैव भामत्यां व्याख्यातत्वात्। 'एवं सती'ति पदे वाक्यनैर्भेयम्। ततः पूर्वं तु दोषादिमत्त्वमेव॥

शुद्धब्रह्मणो नित्यत्वे च जिज्ञासा किमर्था? अशुद्धिनिरासार्थत्वायोगेऽपि अशुद्धिभ्रमनिरासार्थेति चेत्—अशुद्धिभ्रमोऽप्यशुद्धिरेव। स भ्रमो जीवस्यैवेति न ब्रह्मण्यशुद्धिरिति चेत्—कोऽसौ जीवः? अन्तःकरणं वा, अन्तःकरणगतप्रतिबिम्बो वा, अन्तःकरणावच्छिन्नचैतन्यं वा। आद्ये

जीवब्रह्मैक्यं त्यक्तं स्यात् । जडाजडयोस्तदयोगात् । अत एव न पक्षान्तरमपि । प्रतिबिम्बस्यच वस्तुतो बिम्बानातिरेक एव भवदीयेष्ट इति तस्य भ्रान्तत्वे ब्रह्मणोऽपि भ्रान्तत्वमेव । अत एव न तृतीयोऽपि । शुद्धाद्विशिष्टमतिरिक्तमिति चेत्—तर्हि न तस्य ब्रह्मैक्यम् । अन्तःकरणावच्छिन्नत्वादित्यागेनैवैक्यं ब्रूम इति चेत्––विशिष्टस्यातिरिक्तत्वे विशेषणत्यागेऽपि घटपटयोरिवैक्यमसंभावितमेव ॥

यच्चाविद्यावत्त्वमात्रेण न भ्रान्तत्वं शुद्धस्य ब्रह्मण इति––तदपि न; यो हि दोषाश्रयः स एव लोके भ्रान्तः । अविद्या चेह दोषः । तदाश्रयत्वस्य ब्रह्मणीष्टत्वे कथं न भ्रान्तत्वम् । काचकामलादिदोषवत्त्वदशायां लोके पुंसां भ्रान्तत्वमस्ति । तत्र शुद्धपुरुषापेक्षया काचकामलादिमान् अन्य इति कृत्वा पुंसां भ्रान्तत्वचनमयुक्तमिति को ब्रूयात् । यः पुमान्, स एव काचादिमान्–यदा यः काचादिमान्, तदा स एव भ्रान्त इति व्यक्तम् । तथा ब्रह्म यदा भवत्यविद्याश्रयः, तदा भ्रान्तमपि तदेवेति नाविद्याश्रयत्वाकारेण तस्य ईश्वर इति नामान्तरकल्पनमात्रेण भ्रान्तत्वनिवर्तनेति ।

यत् पुनरुपरि कथ्यते, ईश्वरोऽपि न भ्रान्तः; तदीयज्ञानस्य तद्विषयस्य च व्यवहारकाले अबाध्यत्वात् । व्यवहारकालबाध्यस्थल एव शुक्तिरजतादिविषये भ्रान्तिव्यवहारादिति । तन्न । भ्रमलक्षणस्याक्षतत्वात् । बाध्यज्ञानत्वं हि भ्रमलक्षणं सर्वसंमतम् । न तत्र व्यवहारकालीनत्वरूपं बाधविशेषणं लोकसंमतमस्ति । अन्यथा शुक्तिरजतज्ञानवानपि मदीयज्ञानस्य मदीयं तद्व्यवहारं यावद्बाधात् प्रमात्वमेवासीदिति कलहायेत । किञ्चान्यथाख्यातिपक्षे तदभाववति तत्प्रकारकत्वं भ्रमलक्षणम्, भवन्मते अनिर्वचनीयविषयकत्वं तत्, तच्च सर्वज्ञज्ञानेऽप्यक्षतम् । ब्रह्मणि कल्पितस्य प्रपञ्चस्य विषयीकरणात् । स्पष्टमिदमध्यासभाष्ये । आत्मज्ञानप्राक्कालाबाध्यज्ञानं प्रमा, तत्कालबाध्यज्ञानं भ्रमः इति लक्षणं तु केवलाद्वैतगोष्ठीविश्रान्तं न सर्वलोकप्रसिद्धप्रमाभ्रमशब्दार्थतामर्हति । बाधकस्यात्मज्ञानस्य लोके अनङ्गीकारात् ।

किञ्च भगवान् जीवान् प्रति तत्त्वज्ञानमुपदिशन्—शुद्धब्रह्मज्ञानं तत्त्वज्ञानम्, अन्यत् मिथ्याज्ञानमित्येवोपदिशति। "भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः" इति च भगवान् पराशरः। "द्वैतिनोऽतथ्यदर्शिनः" इति च। अतो मिथ्याविषयकं ज्ञानं भ्रान्तिरेव। एवञ्चेश्वरः सर्वज्ञश्चेत्, भ्रान्त एव; सर्वस्य मिथ्यात्वात्। सर्वज्ञत्वादेव सर्वमिदं मिथ्येत्येतदपि जानाति चेत्—जानातु। पीतशङ्खभ्रान्तिमान् पित्तदोषं यावत् अनुवृत्तभ्रान्तिरेव लक्ष्यते। जानाति च तदेव, ज्ञानमिदं दोषायत्तं भ्रम इति। तावता भ्रान्तत्वं प्रतिष्ठितमेव भवति। तथेहापि। तस्मादद्वैतिदृष्ट्याऽत्रेष्टापत्तिरेव युक्ता। न पुनरीश्वरद्वेषीति लोकनिन्दापरिहारार्थमभ्रान्तत्वनिर्वाहाय काशकुशावलम्बनं युक्तम्।

यच्च विवेचनम्—काचकामलादीनां लोके दोषत्वम् शुक्त्याद्यज्ञानस्य च रजताद्युपादानत्वम्। ब्रह्माश्रिताविद्यायास्तूपादानत्वमपि, दोषत्वमपीति—तेन किमुक्तं भवति? अथ भवदाशयमेवं निष्कष्टुमिच्छामः—ईश्वरो भ्रान्तः, अविद्यापरिणामविषयकज्ञानवत्त्वात् शुक्तिरजतभ्रान्तिमत्पुरुषवदित्यनुमानं चेत् प्रयुज्यते—तत्र दोषानात्मकाविद्यापरिणामविषयकज्ञानवत्त्वमुपाधिरिति—तत्र दूषणं च द्मः। संभवति सामान्यस्य प्रयोजकत्वे विशेषप्रयोजकत्वकल्पने मानाभावात् अप्रयोजक उपाधिरिति। दोषाधीनज्ञानत्वमेव भ्रान्तित्वे प्रयोजकम्। न तु अयं दोषः, स दोष इति विशेषाधीनत्वम्। अन्यथा काचाधीनस्य भ्रमत्वम्, न तु कामलाधीनस्येत्यपि स्यात्। तथा दोषभिन्नस्यैव कस्यचिदनिर्वचनीयोपादानत्वस्य लोके दर्शनात् दर्शनानुगुणं कल्प्यमानमुपादानमविद्याख्य दोष एव न भवेदिति अन्यकल्पनापत्तिश्च। दोषानात्मकाविद्याजन्यस्यैव मिथ्यात्वदर्शनात् दोषात्मकाविद्यापरिणामस्य प्रपञ्चस्य मिथ्यात्वानापत्तिश्च। ईश्वरसमवेतस्य सर्वविषयकज्ञानस्य तत्त्वज्ञानत्वापत्तिश्च। मिथ्याविषयकज्ञानस्यैव बाध्यत्वदर्शनात् प्रपञ्चज्ञानस्य तद्विषयस्य च बाध्यत्वायोगश्च। तस्मादप्रयोजकमविद्ययोः दोषात्मकत्व तदनात्मकत्वरूपं—वैलक्षण्यम्। अतोऽन्तःकरण-

परिणामरूपवृत्तेरेव भ्रमत्वमित्युक्तौ तद्वृत्तिविशेषस्यैव प्रमात्वमपीति अविद्यापरिणामभूताया वृत्तेर्ज्ञानत्वमेव न स्यादिति सर्वज्ञत्वमेव भगवतो दुर्घटं भवेत् ।

नन्वेवं रज्जुसर्पादिवत् घटादेरपि दोषजन्यत्वाविद्यापरिणामत्वाविशेषे प्रतीतिसमानसत्ताकत्वमपि स्यात् । यावान् घटपटादिराध्यासिकः, तावानपि सर्वदा भासमानः स्यात् । ततश्च किञ्चित् कदाचित् ज्ञानकर्मेति प्रतिनियतकर्मव्यवस्थारूपा प्रतिकर्मव्यवस्था हीयेतेति चेत्—हीयेतैव । अत एव वैलक्षण्यात् जगतो मिथ्यात्वबुद्धिस्त्यज्यतामिति ब्रूमः । **अद्वैतसि**द्ध्युक्तं वा भवद्भिरनुसर्तव्यम् । अन्तःकरणं यदा वृत्त्यात्मना परिणमते, तदैव तद्ग्रहणमिति । एतदुक्तं भवति—रज्जुसर्पादिकं जीवदोषसहकृतरज्ज्वाद्यज्ञानरूपतूलाविद्याकल्पितं प्रतीतिसमसत्ताकम् । घटादिकं तु जगत् ब्रह्माज्ञानरूपमूलाविद्यामूलमीश्वरसृष्टं घटोऽयमित्येवं यावद्विषयसत्त्वं अविद्यावृत्त्या तेन गृह्यमाणं तदीयतादृशप्रतीतिसमसत्ताकं भवितुमर्हति । सोऽयं घट इत्यादिप्रत्यभिज्ञाबलाच्च न जीवप्रतीतिकालमात्रस्थता घटादेः । तादृशे च वस्तुनि जीवज्ञानकर्मत्वमन्तःकरणवृत्तिसामग्रीसमवधानकाल एव । तत्र चक्षुरादिद्वारा निर्गतान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्याभेदे प्रत्यक्षता ; अनिर्गमे परोक्षतेति । इदमेव वृत्तिसापेक्षं भासकत्वं **चन्द्रिकाया**मेवं संगृहीतम्—"बिम्बप्रतिबिम्बचितोरीशजीवत्वपक्षे शुद्धचिदेव तदुभयानुगता साक्षिणी जगदुपादानं च ; अविद्याप्रतिबिम्बमनःप्रतिबिम्बयोरीशजीवत्वे तु अविद्याबिम्बत्वोपहिता चित् तथा । अविद्यामनोगतचिदाभासयोरीशजीवत्वे त्वीश एव तथा । तत्राद्यः पक्षो विवरणकृतः ; द्वितीयः संक्षेपशारीरककृतः ; तृतीयो वार्तिककृतः । वाचस्पतिमते तु जीव एव तथा । तस्यैवाविद्याविषयत्वोपहिते ईशे तादात्म्येनानुगतत्वात् ........ ईशं प्रति दृश्यमात्रस्यानावृतत्वात् तं प्रति जीवस्य भासकत्वं न वृत्तिसापेक्षम्' इति । सर्वमिदं दृग्दृश्यसंबन्धानुपपत्तिवादे चिन्तनीयमित्यलमत्र ।

तस्मादीश्वरस्य भ्रान्तत्वं भवन्मतेऽनपलपनीयम् । शुद्धब्रह्मणोऽपि वस्तुतो जीवेश्वराभ्यामभिन्नतया तयोर्भ्रान्तत्वे भ्रान्तत्वमपरिहार्यमित्यप्युक्तमेव । न हि शुद्धत्वादिविशेषणमात्रेण व्यक्तिभेदप्रसक्तिः । तस्मादीशस्य सर्वज्ञत्वमप्यङ्गीकर्तव्यम्, अभ्रान्तत्वमपीत्याशा चेत्—जगत्सत्यत्वं जीवेश्वरभेदश्च स्वीकर्तव्ये । अन्यथा नित्यशुद्धत्वश्रुतिविरोधो भवन्मत एव । सगुणब्रह्मणोऽपि नित्यशुद्धत्वं भवदिष्टमिति भवद्वर्णनं दुरुपपादमिति एतावतैव व्यक्तम् । गुणानामेव सर्वज्ञत्ववात्सल्यादीनां मिथ्याभूतप्रपञ्चविषयकत्वेन भ्रान्तिरूपतया भ्रान्तसार्वभौमतया भवत्स्वीकर्तव्यस्य तस्य नित्यशुद्धेर्वर्णयितुमशक्यत्वात् । एवमपि तस्य दुःखानुभवाभावान्नित्यशुद्धत्वमिति चेत्—तर्हि तमुपसंपद्य तत्परमसाम्यमुपेतानामपि नित्यशुद्धत्वमेव, सुखानुभवश्चानवधिकातिशय इति सगुणब्रह्मप्राप्तिरूपः स एव मोक्षो महनीय इति किं निर्विशेषब्रह्मभावरूपेण सुखानुभवसुदूरेण दुःखाभावमात्रात्मना मनोरथकल्पितेन मोक्षान्तरेण ॥

यत्तूक्तम्—मुण्डकोपनिषदि, "यत्तदद्रेश्य" मित्यादिना निर्विशेषमजगत्कारणं प्रक्रम्य, 'भूतयोनि'मिति जगत्कारणत्वोपसंहारात् अजगत्कारणमेव जगत्कारणमित्युपनिषदोच्यत इति सिद्ध्यति । तस्मादध्यारोपापवादन्यायेन सर्वबाधे श्रुतितात्पर्यमिति—तत्राद्रेश्यमित्यादिना कतिपयविशेषराहित्यकथनेऽपि निर्विशेषत्वम् सर्वविशेषाभावः कुतोऽवगम्यते ? अजगत्कारणत्वबोधकं तु नैकमपि पदमस्ति । सूत्रकारश्च मुण्डकमिदं विचारयन्, "अदृश्यत्वादिगुणको धर्मोक्तेः"इति सूत्रयन् अदृश्यत्वादीनामभावानां भावरूपत्वं गुणत्वमन्येषां धर्माणामत्र सद्भावं च मुक्तकण्ठमुपदिशन् निर्विशेषब्रह्मवादं निराचष्ट इति स्पष्टमिति ॥

यदत्र **सिद्धान्तसिद्धाञ्जन** उक्तम्—"ब्रह्मजिज्ञासेत्यत्र इष्यमाणं ज्ञानं न विचारस्तदधीननिर्णयो वा, सुखात् दुःखाभावाच्च विलक्षणतया तयो-

रिष्यमाणत्वायोगात्; अनुकूलवेदनीयापरोक्षस्यैव प्रयोजनत्वात्। अतोऽपरोक्षस्वरूपावगतिरूपं ब्रह्मज्ञानमिष्यमाण''मिति—तन्न—अथातो धर्मजिज्ञासेत्यादावगतेः। न ह्यपरोक्षधर्मज्ञानं तत्र फलं भविष्यति। अन्यत्तु सुखादिविलक्षणत्वात् अनिष्यमाणमुच्यते इहेति तत्र जिज्ञासैव न स्यात्। अतो लोके यत्रयत्र जिज्ञासापदप्रयोगः स्थाणुपुरुषादिसंशयस्थलेषु, तत्रापि संभवत् किञ्चिदिष्यमाणं ग्राह्यम्। तच्च निर्णयात्मकं विचारात्मकं वा। उभयमपि फलसाधनत्वात् पुत्रपश्वादिवत् फलमेव। तत्र विचारात्मकज्ञानग्रहणे कर्तव्यत्वप्रतिज्ञा कण्ठोक्ता भवति। अन्यथा तु जिज्ञासा निर्णयविषयकेच्छारूपा, 'कोऽसौ' इति प्रश्नवाक्यादाविव विचारमन्तरेणाप्तोपदेशेनापि कदाचिदुपशाम्यतीति जिज्ञासाशब्दप्रयोगान्यथानुपपत्त्या विचारो दुर्लभश्च स्यात्। अतो ब्रह्मप्रश्न इत्येतद्वैलक्षण्यस्य प्रकृते ज्ञप्तये विचिचारयिषारूपजिज्ञासास्वीकार उचितः। वाक्यार्थनिर्णयो जिज्ञासाघटकं ज्ञानमिति स्वपूर्वसंमतमर्थम्, 'अवगतिपर्यन्तं ज्ञानम्' इति शाङ्करभाष्याविरुद्धमेव विचारात्मकं ज्ञानं तदित्यस्मदिष्टमर्थञ्चोपेक्ष्य ब्रह्मप्राप्तिरूपपरमफलमत्र ज्ञानमिति वदतोऽस्य मतं चेत् सूत्रकृदिष्टं स्यात्, 'अथातो ब्रह्मप्रिप्सा'इति सूत्रार्थः पर्यवस्येत्। ब्रह्मप्रिप्सा च मुमुक्षैव। एवञ्च साधनचतुष्टयान्तर्गतमुमुक्षानन्तरं मुमुक्षेति सूत्रार्थो वर्णितो भवतीति सुशोभनमेतत्। एवं धर्मजिज्ञासाञ्च स्वर्गादिफलप्राप्तीच्छारूपां किं विवक्षतु भवानिति विचित्रमेतत्। सन्प्रयोगस्तु रागप्राप्तत्वस्य विचारे ख्यापनायेति वक्ष्यते। अतोऽपि ज्ञानमिह तर्करूपमेव युक्तम्॥

ज्ञानं यत् ब्रह्मजिज्ञासाशब्दार्थघटकं मतम्।
चिद्वा तत् वृत्त्यवच्छिन्नचिद्वा स्यात् वृत्तिरेव वा ॥ ६९ ॥
नाद्यो न ब्रह्म यस्मात् तद्विषयस्तदभेदतः।
सनोऽर्थस्य च नैतत् स्यात् साध्यं नित्यत्वसंमतेः ॥ ७० ॥
न द्वितीयः चिदंशेऽत्र पूर्वदोषानपायतः।
न तृतीयो नाजडं हि जडस्य विषयो भवेत् ॥ ७१ ॥

यदि वोपहितं ब्रह्म विषयस्तत्र कल्प्यते ।
विशेषणं स्याद्विषयो न तु ब्रह्म स्वभासि यत् ॥ ७२ ॥

किं तद्विशेषणं यस्य वृत्तौ विषयतेष्यते ।
धर्मिणो ग्रहणाभावे केवलं धर्मधीः कथम् ॥ ७३ ॥

अद्वितीयत्वादिरूपमभावात्म विशेषणम् ।
प्रतियोग्यनुयोग्यंशसध्रीचीनग्रहास्पदम् ॥ ७४ ॥

तत्रानुयोगि तु ब्रह्म स्वतो भातं न गोचरः ।
प्रतियोग्यनुयोग्यर्थश्लिष्टेऽभावे च गोचरे ॥ ७५ ॥

अखण्डब्रह्मवृत्तित्वं कथं स्यादुपपादितम् ?
शुद्धस्य वृत्तिव्याप्यत्वे जिज्ञासोपहिते कथम् ॥ ७६ ॥

वृत्त्यवच्छिन्नचैतन्यविषयत्वं चितो यदि ।
दृश्यत्वात् स्याच्च मिथ्यात्वं मिश्रधीस्तु न तत्त्वधीः ॥ ७७ ॥

जिज्ञासानुपपत्तिमित्थमुदितामालक्ष्य जिज्ञासितुं
ज्ञातुं लक्षयितुं परीक्षितुमपि ब्रह्मार्हमादृत्य च ।
मिथ्याकल्पनजालनिर्गमनिराबाधप्रचाराः स्फुरत्—
सत्पक्षाः सुखलभ्यवैष्णवपदाः सन्तो लसन्ति क्षितौ ॥ ७८ ॥

सविशेषमेव तापत्रयातुरैर्ब्रह्म भवति जिज्ञास्यम् ।
शुद्धं तु न जिज्ञास्यं न च तापहमित्यभाषिष्ट ॥ ७९ ॥

शुभमस्तु

---

श्री :

## (४) ऐकशास्त्र्यप्रसाधनम् ॥

अथ शब्दस्य सौत्रस्य प्राच्यार्थप्रतिपादने ।
ऐकशास्त्र्यं भाषितं यत् तदप्येवमनाकुलम् ॥ ८० ॥

तथाहि—पूर्वमध्यमोत्तरमीमांसानां वा पूर्वोत्तरमीमांसयोर्वा कर्मब्रह्मविचारयोर्वा न कश्चिदेकत्वं वक्तुं शक्नोति; तत्तदंशभेदात् । अतः सर्वं संहितमेव मिलितमेवैकं शास्त्रमिति संमन्यते । इदञ्च, ब्रह्मविचारपूर्ववृत्तत्वं कर्मविचारस्य यत् इष्टं प्राचाम्, तदुपपादकमप्यस्तीत्येवैतदुपन्यासः श्रीभाष्यादौ । यद्यप्यथ-शब्दस्य कर्मविचारानन्तर्यरूपार्थस्वीकारे ऐकशास्त्र्यस्वीकारे चाद्वैतमतहानिरिति वा, तदुभयास्वीकारे विशिष्टाद्वैतमतहानिरिति वा न कथञ्चिदापतिष्यति । अतः ऐकशास्त्र्यम्, विविदिषासाधनत्वमित्यादिकमपि मुख्यांशमात्रविचार-प्रवृत्तैरुपेक्ष्यमेव । अत एवास्माभिः **सिद्धान्तकौस्तुभे** एतद्विचार उपैक्षि—अथाप्यत्र मा नामाद्वैतिनां नैर्भर्यं भूदिति बोधनार्थमेवेह परमार्थप्रकाशिका-यामिव किञ्चित् प्रस्तूयते । अथशब्दस्य कर्मविचारानन्तर्यमर्थ इति, पूर्वोत्तरमीमांसे मिलिते एकं शास्त्रमिति च न श्रीभाष्यकारकल्पितं किञ्चित्; किन्तु प्राचां पन्था एवायमिति स्पष्टमद्वैतग्रन्थतोऽपि । अत एव सूत्रभाष्ये—"नन्विह कर्मावबोधानन्तर्यं विशेषः" इति प्राचां व्याख्यानं परासितुमनूदितम् ।

तत्र च **विवरणे**,—"तथा च वृत्त्यन्तरे वर्णितम्, कर्मणामधि-कारपरम्परया शब्दतो वा संस्कारतया वा यथाविभागं तादर्थ्यावगमात् निःश्रेयसप्रयोजनत्वाच्चानन्तर्यवचनोऽथशब्दः अधिगतानन्तरमिति" इति वृत्त्य-न्तरमुदाहारि । समनन्तरमन्याऽपि वृत्तिरुदाहृता—"तत्राथातश्शब्दौ प्रथम एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति, पूर्वप्रकृतां धर्मजिज्ञासामपेक्ष्य अनन्तरं ब्रह्मजिज्ञासाप्रारम्भार्थः । अत इति पूर्वनिर्दिष्टस्यैवार्थस्य हेतुतामाचष्टे

ब्रह्मजिज्ञासां प्रतीति''इति । एतत् वृत्तिद्वयमपि श्रीभाष्यादृतमिति स्पष्टमिह । तत्र प्रथमवृत्तौ कर्मविचारस्यानेकप्रकार उपयोगो दर्शितः। अशोधितकर्मस्वरूपाः खलु पुमांसः कदाचित् आपातवाक्यार्थक्षोभितहृदयाः निःश्रेयसे ब्रह्मविचारफले कथं चिदनाश्वासं दध्युः। कर्मणामधिकारपरम्परायां फलस्वाम्यपरम्परायां परिशीलितायां (काम्यकर्मणां फलान्युत्पद्यमानानि क्रमेण कर्तारं कीदृशं कलयिष्यतीति विचारे वर्तित इति यावत्) ब्रह्मविचिचारयिषाप्रतिबन्धकीभूतायाः कर्मविचिचारयिषाया अपसृततया ब्रह्मविचारः सुप्रसर इति एकं कर्मविचारप्रयोजनम्। इदञ्च शब्दतो ज्ञातम्। " परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" इत्यादयश्च शब्दाः श्रीभाष्यकारादिप्रदर्शिता एव। एवं संस्कारतयाऽप्युपयोगः कर्मणाम्। " यस्यैते चत्वारिंशत् संस्काराः, अष्टौ चात्मगुणाः स ब्रह्मणः सायुज्यं गच्छति" इत्यादिवचनात्। एवं यथाविभागमुपयोगो ग्राह्यः। अत्र भामत्युक्तमप्यनुसंधेयम्––"अत्र च यज्ञादीनां श्रेयःपरिपन्थिकल्मषनिर्हरणद्वारेणोपयोग इति केचित्। पुरुषसंस्कारेणेत्यन्ये। यज्ञादिसंस्कृतो हि पुरुषः आदरनैरन्तर्यदीर्घकालैरासेवमानः अब्रह्मभावनामनाद्यविद्यावासनां समूलकाषं कषती''ति। अत्र प्रथमवृत्तिव्याख्याने कर्मणां तादर्थ्यवत् निःश्रेयसप्रयोजनत्वमप्युक्तम्। तेन कर्मणा समसमुच्चितं ज्ञानमुपाय इत्यपीष्यत इव। अस्तु वा, " सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः। नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते" इत्युक्तरीत्या उपासनरूपोपायकोटिप्रविष्टकरणत्रयसाध्यकीर्तनयजननमस्करणादिकर्माभिप्रायं निःश्रेयसप्रयोजनत्वकथनमिति। एवं द्वितीयवृत्तिव्याख्याने च विवरणदर्शिते कर्मावबोधानन्तर्यस्याथशब्दार्थत्ववत् विंशतिलक्षणमेकमिदं शास्त्रमित्यपि स्पष्टम्; "प्रथम एवाध्याये''इति, "पूर्वप्रकृतां धर्मजिज्ञासाम्" इति च वचनात्। नूनमत्रापि वृत्तौ, "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन''इति श्रीभाष्योदाहृतमपि वचनं स्यात्; अन्यत्र वा। सर्वथा पूर्वव्याख्यानमेवमिति सुनिश्चितम्।

एवं स्थिते, "संकर्षकाण्डानन्तर्यमपि ब्रह्मविचारस्य कुतो न मन्यते" इति भवदाक्षेपः किमनिष्टं कल्पयति ; षोडशलक्षणानन्तर्यस्यैव संमतत्वात् । इदमपि विवरणे द्वितीयवर्णके दर्शितम्—"भवति संकर्षपर्यन्ते वेदार्थविचारावसानमिति" इति । संकर्षेण ब्रह्मविचारसिद्धिर्न भवतीति श्रीभाष्यकृदभिप्रायश्च भवतैवानन्तरमनूद्यते च । द्वादशलक्षणीशेषत्वेन च संकर्षकाण्डः प्रवृत्त इति न तत्र ब्रह्मविषयकविचारस्य प्रसक्तिरपि ।

एवं पूर्वाचार्यैः कर्मावबोधानन्तर्यरूपेऽथशब्दार्थे, तदर्थमैकशास्त्र्ये च प्रदर्शिते सति तत्परित्यागेन स्वातन्त्र्येणान्यथावर्णनमयुक्तमनपेक्षितञ्चेत्यास्माकाशयः । ऐकशास्त्र्यं कर्मविचारानन्तर्यरूपमर्थं कथं स्थापयेदिति चेदुच्यते—अथशब्दस्य स्वघटितवाक्यप्रकरणादिरूपपदसमुदायपूर्वभाविपदसमुदायप्रतिपाद्यानन्तर्यनिरूढत्वमनुभवसिद्धम् । अतो व्युत्पत्तिसिद्धोऽयमर्थः । यत्रैवमर्थालाभः, तत्रार्थान्तरं वा अपेक्षितबुद्धिस्थयत्किञ्चिदानन्तर्यरूपोऽर्थो वा स्वीक्रियते । यथा, 'अथशब्दानुशासनम्', 'अथातो धर्मजिज्ञासा'इत्यादौ । अथ प्राचीनोक्तमप्यनुपपन्नत्वादैकशास्त्र्यं नेष्यते ; कर्मावबोधानन्तर्यरूपाथशब्दार्थोऽपीति चेत्—ऐकशास्त्र्यं तावत् सर्वथा भवदीयैस्त्यक्तमिति न भवता शक्यं वक्तुम् ; यतः तत्स्वीकारे गमकं बहु तत्र तत्र लक्ष्यते । तदुच्यते—विवरणे द्वितीयवर्णकोपक्रमे शङ्कितम्—"सिद्धैव ननु ब्रह्मजिज्ञासा, अथातो धर्मजिज्ञासेति सकलवेदार्थविचारस्योदितत्वात्" इति । अनेन धर्मजिज्ञासेत्यस्य वेदार्थजिज्ञासेत्यर्थः प्राच्यवर्णित इति सम्यगवगम्यते । न खलु ब्रह्मजिज्ञासेत्यनेनैव, 'सर्वे वेदा यत् पदमामनन्ती'त्यादिरीत्या सर्ववेदवेद्यब्रह्मनिरूपणेनैव सर्वस्य व्याख्यातत्वात् धर्मजिज्ञासा नारब्धव्येति कश्चित् पूर्वपक्षः, तत्परिहारश्च, 'अथातो धर्मजिज्ञसे'त्यत्र दृष्टः। सा च पूर्वमीमांसा, शारीरकमुत्तरमीमांसेति च प्रसिद्धम् । यद्यपि बादरायणो जैमिनिमिव, जैमिनिरपि बादरायणं स्वसूत्रे निर्दिशति, "औत्पत्तिकस्तु" इति सूत्रे, "तत्प्रमाणं बादरायणस्य" इति—अथापि ब्रह्मसूत्रे, 'तदुक्त' मित्येवं पूर्वमीमांसानुवादभूम्ना तस्याः पूर्वत्वं निर्विवादम् ।

एवमपि तया सहास्याः ऐकशास्त्र्यगमकं किमित्येव प्रश्नः। तत्रेदं ग्राह्यम् प्रथमसूत्रे—'स्वाध्यायानन्तर्यं तु समानम्' इत्येतद्भाष्यावतरणसन्दर्भे परिमळे, "धर्मजिज्ञासासूत्रस्य सकलवेदार्थविचारप्रतिज्ञापरत्वमात्रेणास्य शास्त्रस्य गतार्थत्वं नापद्यते। इह व्युत्पादयिष्यमाणानां सिद्धब्रह्मपरवाक्यार्थनिर्णायकन्यायानां पूर्वतन्त्रव्युत्पादितेभ्यः कर्मपरवाक्यार्थनिर्णायकन्यायेभ्यो विलक्षणत्वात्। किन्तु शास्त्रारम्भप्रतिज्ञैक्येन वक्तृभेदेऽपि एकप्रबन्धतामात्रं तदानीमापद्यते। तदपि सिद्धान्ते—मतान्तरमिष्यत एव। तदाश्रित्य भाष्यटीकयोः, 'एक आत्मनः शरीरे भावात्' इत्यधिकरणे—शङ्कोद्घाटनम्—समाधानञ्च करिष्यते" इत्युपवर्ण्य, अथ विरुद्धयोरेकप्रबन्धत्वायोगमाशङ्क्य परिहारः प्रपञ्चेन कृत इति नाद्वैतिनां पूर्वोत्तरमीमांसयोरैकशास्त्र्यमनिष्टम्। एवमपशूद्राधिकरणे, 'शूद्रानधिकारस्य पूर्वतन्त्र एव सिद्धत्वात् पुनः कथमाशङ्केति विचार्य, 'तत्रानग्नित्वं मुख्ययुक्तिः। अग्निश्चाग्निसाध्ये कर्मण्येवापेक्षितः; न विद्यायाम्; अविद्यत्वं तु शूद्रस्य तत्रोक्तं न प्रधानयुक्तिः; किन्त्वभ्युच्चयमात्र'मित्येवं परिहारप्रवर्तनादप्यैकशास्त्र्यमवसीयते। शास्त्रान्तरत्वे तु एकत्रोक्तस्याप्यन्यत्रोक्तिर्न दोषाय; शाखायामेकस्यां विहितस्याग्निहोत्रादेरन्यत्रापि विधानवत्। धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तिः यदि सूत्रकृदिष्टा स्यात्, तं प्रति पूर्वमीमांसोक्तापशूद्राधिकरणस्याकार्यकरत्वात् पृथग्वचनमवश्यमेव हि भवति। एवं तत्र तत्र, "तदुक्त"मिति पूर्वमीमांसोदाहरणमपि सूत्रकृत् परित्यजेत्, अजिज्ञासितधर्मणो ब्रह्मसूत्रेऽधिकृतस्य मा नाम भूत् क्लेश इति। भवताऽपि एतद्वादपरीक्षान्ते—" परमार्थतस्तु " इत्यारभ्य, " सर्वेषां विचाराणामैक्येऽपि न हानिः " इत्यूरीकृतमैकशास्त्र्यमप्पय्यदीक्षितोपपादितार्थप्रद्वेषभियेति किमैकशास्त्र्यखण्डनव्यसनेन। एतदनुबन्धि भवदुक्तमैकशास्त्र्यबाधकोपन्यसनमप्यनुपपन्नमिति प्रसक्तविचारं परिसमाप्य निरूपयेम ॥

तस्मादैकशास्त्र्ये सत्यपि कर्मावबोधानन्तर्यरूपार्थः परम् अथशब्दस्य नेष्यत इत्येव भवता वक्तव्यम्। उक्तं च तत् परिमळे, "न चैवं कर्मब्रह्मवि-

चारशास्त्रयोरैकशास्त्र्याभ्युपगमे ब्रह्मजिज्ञासासूत्रगताथशब्दस्य कर्मविचारानन्तर्यमर्थः स्यादिति वाच्यम्; भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन तदप्रसक्तेः। न हि ज्वरादिवाजीकरणान्तचिकित्साप्रतिपादकानां वैद्यकसंहिताग्रन्थानामेकग्रन्थत्वमात्रेण तत्तच्चिकित्साप्रकरणं विचारयिष्यता ज्वरचिकित्सामारभ्य विचारणीयम्' इति। तत्सिद्धमनेककर्तृकत्वं वा, विभिन्नार्थप्रतिपादकत्वं वा, समुदायप्रतिज्ञाराहित्यं वा न ऐकप्रबन्ध्यपरिग्रहविरोधि संभवति एकानुगमकोपाधिग्रहणेन तदुपपादने इति सिद्धम्। अत ऐकशास्त्र्ये वा, तदभावे वा न कर्मविचारानन्तर्यमथशब्दार्थः अनुपपन्नत्वादिति वक्तव्यम्। का तावदियमनुपपत्तिः? निर्विशेषब्रह्मात्मैक्यसाक्षात्कारस्यैव मिथ्याज्ञाननिवर्तकत्वात् भेदावलम्बिनः कर्मणश्च तदैक्यसाक्षात्काराहेतुत्वात् प्रत्युत बाधकत्वादनपेक्षेति चेत्—अत्रान्वारुह्यवादं विनैव आर्जवेन प्रत्युत्तरं तावत्, ऐक्यज्ञानं न शास्त्रार्थः। किन्तु कर्मोपजीवि उपासनमेवेति। एतद्विस्तर एव श्रीभाष्योपक्रमे। अभ्युपगम्याप्यैक्यज्ञानमिदमुच्यते—यदि कर्म तत्र विरोधि, भक्तिरप्युच्चनीचपुरुषद्वयसापेक्षत्वात् विरोधिन्येवेति कथं भवन्मते भक्तिसाध्यत्वं ज्ञानस्य? यदि भक्तिर्भगवदनुग्रहरूपा अदृष्टविधया कारणम्, तथा कर्माप्यस्तु; भक्तेः कर्माङ्गकत्वाच्च तदर्थे कर्मणामत्याज्यतैव। कर्मणां कल्मषनिबर्हणत्वस्येष्टत्वात् निबर्हित एव कल्मषे सत्त्वविवृद्ध्या साक्षात्कारभावादपि कर्माणि न त्याज्यानि। काम्यानि कर्माणि, कथं कल्मषहरणानीति चेत्—मा भूवन् काम्यप्रयोगे तानि तथा; 'विविदिषन्ति यज्ञेने'ति विनियोगबलात्तु भविष्यन्ति। वेदनेच्छाजनकत्वमेव ततः कर्मणामिष्यत इति चेत्—नैष नियमः भवन्मते वेदनसाधनत्वस्यापि कर्मसु संप्रतिपत्तेः सिद्धान्तलेशसङ्ग्रहादावुपपादितत्वात्। वेदनेच्छापक्षेऽपि वेदनं नाम किम्? किं श्रवणमेव? तर्हि, "ब्रह्म वेद ब्रह्मैव भवती"ति श्रवणमात्रे मुक्तिप्रसङ्गः। वेदनं साक्षात्कार इति चेत्—तदिच्छायास्तदुत्पत्तिपर्यन्तमनुवर्तनीयत्वात् तदर्थे सिद्धं कर्मानुष्ठानम्। न च सकृल्लब्धवेदनेच्छेन पुनर्वेदनेच्छालब्धये कर्म न कार्यमिति राज्ञ आज्ञा। पौनःपुन्येन फलापेक्षायां

कर्मावृत्तेर्वेदलोकसंमतत्वात् । भवदाचारविरोधाच्च । न चोत्पन्नायां सकृद्वेदनेच्छायां स्वत एव तदनुवृत्तिः आसिद्धीति नियमोऽस्ति । कति न सन्ति सत्पथे प्रवृत्य यथायथं कुण्ठितास्तिक्याः प्रबलकर्मप्रतिहतगतयो भ्रष्टनष्टाः प्रारम्भशूराः पुरुषमानिनः । ननु संन्यस्तस्यैव श्रवणेऽधिकारस्य सिद्धान्तसिद्धाञ्जनोक्तत्वात् प्रथमतो वेदनेच्छायां संन्यासे कृते पुनर्वेदनेच्छाप्रतिबन्धेऽपि न कर्मानुष्ठानप्रसक्तिः संन्यस्तत्वादिति चेन्न—तदाश्रमकर्मणां तत्रावश्यकर्तव्यत्वात् । यदि न स पूर्वजन्मानुष्ठितकर्मबलादेवेह जन्मनि स्वतो जातवेदनेच्छः, तदा सुतराम् । किञ्च तदा साधनचतुष्टयसंपत्त्यनन्तरमिति किमित्यथशब्दार्थ उच्यते ; संन्यासानन्तरमित्यस्यैव पर्याप्तत्वात् । चतुर्मुखलोकप्राप्त्यादिरूप–मुक्तिव्यतिरिक्तफलार्थोऽपि संन्यासोऽस्तीति चेत्–न—अधिकारापादकसंन्यासविशेषस्यैव प्रकृते विवक्षणात् । वेदनेच्छामूलकः संन्यासो ह्यपेक्षितः । किञ्चैवं गृहस्थादीनां वेदान्तश्रवणं न कर्तव्यं स्यात् । तेषामपि संक्षेपशारीरकादावधिकारसमर्थनादिष्यत एव गौणाधिकारितेति चेत्—तर्हि ब्रह्मजिज्ञासा नियमेन यदपेक्षते, यद्विना ब्रह्मजिज्ञासा न भवति, तदेव पूर्ववृत्तं वक्तव्यमिति कर्मावबोधं परित्यजतां भवतां संन्याससाधनचतुष्टयसंपत्त्यादिकमपि परित्याज्यमेव भवति ; तदभावेपि जिज्ञासाया भूम्ना लोकेऽनुष्ठीयमानत्वात ब्रह्मजिज्ञासां प्रति तेषामकारणत्वावधारणात् । संन्यासादिमतैव ब्रह्मजिज्ञासाविधानमुचितमिति । उचितविषये तस्य नियमेनापेक्षितत्वमेवेति चेत्–तुल्यं कर्मावबोधेऽपि; साङ्गवेदाध्यायिनः संपन्नामापातप्रतीतिं शोधयितुकामस्य मुख्याधिकारिणः कर्मविचारे प्रथमं प्रवृत्त्यौचित्यम् । अथ ब्रह्मविचार इति स्थितेः ।

किञ्च भवन्मते वेदार्थविचारवैधत्वस्येष्टतया कर्मविचारं ब्रह्मविचारान्ते वा विधायैव स्नातव्यमिति ब्रह्मचारिणामुभयोरावश्यकत्वे, ब्रह्मविचारे च शारीरके कर्मविचारतो बहुंशोदाहरणात्, तत्रत्यप्रमाणाध्यायाद्यर्थापेक्षादर्शनात्, "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषा" दित्यादौ आदिपदार्थज्ञानस्य तदभावेऽभावात्, विहितत्वाच्च पश्चात् कर्तव्यः कर्मविचारः पूर्वमेव कर्तुमुचित इत्येव धीरुदिया-

दिति न धर्मजिज्ञासायाः प्राक् वेदान्तविचारप्रवृत्तिसंभवः। ननु कृते ब्रह्मविचारे ज्ञाते चाद्वैते वधोऽपि कर्मविचारो विरोधात् त्यक्ष्यत इति न पश्चात् तत्करण-प्रसक्तिरिति चेत्—विदुषो वेदविधिकिङ्करत्वाभावात् यदि वधत्यागः, तर्हि ब्रह्म-विविदिषायामुपनयनादूर्ध्वं प्रागपि वा कस्य चिदन्यजन्मानुष्ठितकर्मवशादुत्पन्नायां कर्मणां वैधानामिवाध्ययनस्यापि वैधस्य त्यागप्रसङ्गः; उपनयनस्यापि। कथं वेदमनधीत्य ब्रह्मविविदिषेति चेत्—काममस्तूपनिषदध्ययनम्। अथवा निर्विशेष-ब्रह्मविविदिषोपयोगिमहावाक्यमात्राध्ययनमस्तु, निषादस्थपतेर्यागान्यथानुपपत्त्या तदौपयिकभागमात्राध्ययनवत्। वेदान्ताध्ययनात् पश्चादेवापातप्रतीतिबलात् ब्रह्मविविदिषेति चेत्—तर्हि साङ्गसमग्रवेदाध्ययनस्यैव शास्त्रार्थत्वात् कर्मविषये-ऽपि जिज्ञासा स्थास्यत्येव। "पुण्यचितो लोकः क्षीयत" इति वाक्यश्रवणात् कर्मफलास्थिरत्वज्ञानात् सा न स्थास्यतीति चेत्—"ब्रह्मलोकमभिसंपद्यते। न च पुनरावर्तत" इति विदितत्वात् ब्रह्मविविदिषाऽपि न स्थास्यति। असत्यपि क्षयित्वश्रवणे ब्रह्मज्ञानफलक्षयित्वसंशयात् जिज्ञासानुवृत्तिश्चेत्—"अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती"ति श्रवणे सत्यपि कर्मफलस्थिरत्वसंशयो नानुवर्तत इति कथम्? एवमपि हितोपदेशिवचनात तत्र तत्त्वनिर्णय इति यदि, तत् ब्रह्मजिज्ञासायामपि तुल्यम्। ततः किम्? इदं ततः। निर्विशेष-ब्रह्मनिर्णयस्य सुखमुपदेशतस्त्वरया संपाद्यतया शारीरके मा भूत् प्रवृत्तिरिति। यदि शारीरकमुखेन निर्णये सत्येव श्रद्धापरिकर्मितं भवति स्वान्तं विचारकुशल-विलक्षणमनीषाणामिति मन्यते, धर्मजिज्ञासायामपि दृष्टिरियं दीयताम्। तत् सिद्धं साधनचतुष्टयाद्यभावेऽपि असंन्यासिभिरपि प्रवचनादीच्छया श्रद्धया च गुरुमुखमेव ब्रह्मजिसायाः क्रियमाणतया न साधनचतुष्टयापेक्षापि नियमेनास्तीति। एवञ्च कर्मविचारापेक्षायामत्र चानियमस्तुल्यः। न हि साधनचतुष्टयाद्यभावेऽपि ब्रह्मविचारेऽवतीर्य निर्णीततत्त्वस्य पश्चाद्वैराग्यमुमुक्षादिसंपत्तौ संपादितचरो निर्णयो न फलेग्रहिर्भवतीति काचित् राजाज्ञा। अतस्तत्संपत्तिपूर्वकत्वे ब्रह्म-विचारस्य हृद्यत्वमित्येव वक्तव्यम्। तथा अधीतसमग्रवेदस्य विचारकुशलस्य

अक्षोभ्यनिर्णयलिप्सोरादितः कर्मविचारेण व्यक्तकर्मतत्त्वस्यैव ब्रह्मजिज्ञासावतरणं हृद्यमौत्सर्गिकश्चेति मन्तव्यम्। अधिकरणसारावळौ चायमर्थः समग्राहि—

" श्रावण्यं प्राक् त्रिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि
व्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरसौ स्याच्च मुख्यक्रमेण ।
मानत्वादिर्विचार्यः पुरत इह तथा वाक्यवेद्यात् पदार्थः
दृष्टान्तश्चोपमेयात् यदि मधु सविधे यातु चाद्रिं किमर्थम् ॥"इति।

अयमाशयः—पूर्वमीमांसापञ्चमाध्यायोक्तानि क्रमनियामकप्रमाणानि यथायथमत्र लक्ष्यन्ते। तावता क्रमविधिरिति न ब्रूमः; विचारस्य वैधत्वाभावात्। रागप्राप्तश्च विचारः कृत्स्नविषयकः इति तत्रौचित्यस्थापितोऽयं क्रम इति ह्यन्यत्रोक्तम्। तत्र भवद्भिरधीतवेदान्तस्य ब्रह्मजिज्ञासोच्यते, अन्यस्य वा? अन्त्यमनिष्टम्। "स्वाध्यायानन्तर्यं तु समान"मिति सूत्रभाष्येऽप्युक्तेः। आद्येऽपि किं कृत्स्नाध्यायिनः, किं वा वेदान्तमात्राध्यायिनः। नान्त्यः, न ह्युपनिषन्मात्राध्ययनं शास्त्रार्थः, "स्वाध्यायोऽध्येतव्यः" इति कृत्स्नाध्ययनस्यैव विहितत्वात्। न च तर्हि सर्वशाखाध्ययनापत्तिरिति वाच्यम्; स्वेति विशेषितत्वात्। ग्रहैकत्वाविकरणन्यायेनोद्देश्यविशेषणमविवक्षितमिति चेन्न—स्वपदवैयर्थ्यपरिहारायैव, 'यस्योभयं हविरार्तिमार्च्छे'दित्यादौ उभयत्वादेरिव विवक्षणीयत्वात्। किञ्चोद्देश्यविशेषणस्य तत्रैवाविवक्षा, यत्र परस्परान्वयव्युत्पत्त्यभावात् वाक्यभेदः प्रसज्यते। इह तु स्वस्याध्याय इति षष्ठीतत्पुरुषे वा, स्वश्चासावध्ययश्चेति कर्मधारये वा समासत्वात् विशिष्टार्थव्युत्पत्तिभावान्न वाक्यभेदप्रसक्तिः "ग्रहं संमार्ष्टि" त्यत्र च वचनं विना प्रयोगस्यासाधुत्वात् प्रथमातिक्रमे कारणाभावादेकवचनमित्युपपत्तिः। ननु तर्हि एकशाखाध्ययनमात्रात् कथं ब्रह्मविचारः, ब्रह्ममीमांसायां बहुशाखान्तर्गतबहूपनिषद्विचारस्यैव क्रियमाणत्वादिति चेत्—यतः स्वाध्यायमात्राध्ययनं विधाय विचारव्यासक्तं प्रति गुर्वभिगमनं विदधाति श्रुतिः, अतः इतरशाखानध्ययनेऽपि विचारमनुमन्यत इति स्वीक्रियताम्। अनेक

शाखावचनपरामर्शप्रभवनिर्णयविषयस्याप्यर्थस्याध्ययनगृहीतस्वकीयाध्यायार्थत्वेन तदनुष्ठानतः फलसिद्धेरक्षतत्वात्। एवमेव, 'अथातो धर्मजिज्ञासे'त्यत्र नानाशाखावाक्यविचारात्मकमीमांसायां स्वाध्यायाध्ययनानन्तर्यवर्णनं निर्वाह्यमित्यलं प्रासङ्गिकेन। तथा च कृत्स्नस्वाध्यायसाङ्गाध्ययनसमुदितापातबुद्धेरेव पुंसो ब्रह्मजिज्ञासा वक्तव्या। स कथं सत्यां कर्मजिज्ञासायां कर्मविचारं त्यक्ष्यति। उपदेशमात्रेण तृप्त्या विचारे न प्रवर्तेतेति तु ब्रह्मविचारेऽपि तुल्यम्। परक्षोभपरिहरणक्षमप्रकृष्टविवेकविवित्सव्यापृतानाञ्च विशिष्टधिषणानामुपदेशमात्रतृप्तिर्न भवितुमर्हति। यदाहुः—

"नो चेत् रोचेत शङ्काकबलितमनसः केवलं कोपदेशः (मी-पा-27)"इति,

"आदत्ते ब्रह्मचारी स्वविहितमनघं न स्वयं चिन्तितार्थः
तद्वत् कुर्यात् गृहस्थप्रभृतिरपि मुधा तत्र मीमांसनं स्यात्।
तन्नाशेषैः परोक्त्या स्वचरितचरणं श्रद्दधानाभिनन्द्यं
मूलं जिज्ञासमानैः स्वयमधिगतये निर्विशङ्को विचारः॥" (38)

इति च। दीर्घकालादरपरिश्रमसाध्येषु स्वयं सुबहु विमृश्यैव प्रवृत्तिरिति च सर्वजनीनमेतत्। श्रुतिरपि गुरुमुखाच्छ्रुतेऽपि विषये मननं विदधाति, "श्रोतव्यो मन्तव्य" इति, अन्यथा निर्विशङ्कप्रवृत्तिर्न स्यादिति। अन्यथा शास्त्रवश्यानां मध्ये मतिभेदाः मतभेदाश्च कथं प्रसरं लभेरन्? क्वचिदंशे दोषसद्भावेऽप्यत्र गुणो भूयानित्ययमेवास्तिकानां पन्थाः। कल्पसूत्रादिना कर्मकलापनिर्णयेऽपि श्रुतिविचारे प्रवृत्तिरावश्यकी। स्मरन्ति हि श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव बलीयसीति। न च विचारमन्तरा श्रुतिस्मृतिविरोधपरिशीलनं सुकरम्। ब्रह्मयज्ञादौ प्रसिद्धेऽपि श्रौतस्मार्तप्रयोगभेदो दृश्यते। श्रुत्यनुसारार्थैव खलु कल्पसूत्रादीनामपि पौरुषेयत्वं स्थापितं कल्पसूत्राधिकरणे। अत एकैकोऽपि कर्मविचारेऽपि सजेदेव।

न केवलं तद्विचारे एव, विचार्य विहातव्येषु काम्येष्वपि सजेदेव। यौवनोद्भेदे कामप्रावण्यं सर्वप्राणिसाधारणम्। अर्थप्रावण्यं पुनः अशेषास्वव्यव

स्थासु मनुजं न जहाति। संन्यासोऽपि ख्यातिलाभपूजाप्रतीक्षां विना परमेण वैराग्येण भवन् संप्रति न लक्ष्यते। बहुमुखपरिशीलितप्रत्यक्षितकर्मफलफल्गुभावानां परमास्तिकानामपि बलवद्दृढं प्रमादि चञ्चलमेव मन इति स्थिते का कथा तत्फलस्थैर्यसंभावनाडोलायितस्वान्तस्य नवशक्तिसक्तिरक्तनिर्भरस्य बालिशस्य। नास्तिकः केवलमर्थकामयोरासजेत्; आस्तिकस्तु बालोऽर्थकामावविहाय धर्ममोक्षयोरपि सजेदित्ययमेव विशेषः। ईदृक् च बालः साङ्गाध्ययनसंपन्नापातबुद्धिरित्थं परिशीलयेत्—अल्पकालानुभाव्यस्याप्यैहिकस्य सुखस्यायमभिनन्द्यस्तावदास्वादः, "वरमद्य काकः श्वो मयूरा"दिति ह्याभाणकः। तत् किमन्येन? अथ यदीदमेव कर्ममहिम्ना स्थिरं कर्तुं शक्नुयाम, किमन्यस्य गवेषणेन। 'को हि तद्वेद, यदमुष्मिन् लोकेऽस्ति वा न वेति'इत्यपि श्रूयते। कर्मजन्यं फलं सर्वमप्यस्थिरमिति कोऽयं नियमः। फलं सर्वमस्थिरमिति कस्मान्न भवेत्। जन्यमपि किञ्चित् स्थिरं यदि शास्त्रं विधित्सति, कस्तत्र प्रतिबन्धा। तस्मात् रुचिविषयं विसृज्य विलक्षणं नान्वेषणीयम्। यद्येवं कर्मविचारे अवतीर्णानामस्माकं कथमपि तत्फलेषु वैराग्यमेव कदाचिदुदियात्, तदापि न कर्मविचारः क्रियमाणो निष्फलो भविता। उपासनाङ्गत्वेनोपरिष्टादप्युपादेयत्वादिति। प्रतिपुरुषमेवंरीत्या विमर्शस्य सहजतया कर्मविचिचारयिषेयं प्रातिबध्नात्येव ब्रह्मविचारम्। इदमेव दर्शयति श्रुतिः—"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेने"ति। परीक्षायां कृतायामेवाकृतं कर्मतो दुर्लभमित्यध्यवसायो भवेत्, निर्वेदश्च तदैव भवेदिति तथा निर्विण्णमधिकारिणं गुर्वभिगमने प्रेरयति श्रुतिः, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति। अनेन कर्मविचारं कश्चित् कामं स्वयमेव वा करोतु। ब्रह्मविचारस्तु गुर्वधीन एव कर्तव्यः। "अनन्यप्रोक्ते गतिरत्र नास्ति", "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इत्याद्यनुसंधेयमिति दर्शितमिव।

अत्र परीक्ष्येति ल्यपा कर्मविचारानन्तर्यं ब्रह्मविचारे बोध्यत इति श्रौतोऽयं क्रमः। अपरीक्ष्य निर्वेदं नाप्नुयात्। न स स्थिरो भवेत्; न च वास्तवः।

परीक्ष्य तु निर्वेदमायादित्यपि विवक्षितमत्र। उपासनाङ्गत्वस्य कर्मसु सद्भावादार्थः क्रमोऽस्ति। यवागूं पचति प्राक्; पक्काया यवाग्वा पश्चादग्निहोत्रं जुहोति। तथा प्राक् कर्माण्यनुतिष्ठति। ततश्चित्तकल्मषे क्षालिते सत्त्वादिविवृद्ध्या ज्ञानमारोहति, वर्धते च। न च काम्यकर्मणां कल्मषहरत्वाभावात् तद्विचारो व्यर्थ इति मन्तव्यम् सर्वस्यापि कर्मणः फलान्तराभिसन्धिपरित्यागेन, 'विविदिषन्ति यज्ञेने'ति विनियोगात् काम्यकर्मविचारस्यापि कार्यकरत्वात्। "सर्वकर्मफलन्यासं प्राहुस्त्यागं विचक्षणाः", "एतान्यपि तु कर्माणि" इति च भगवानगासीत्। अतः सर्वमुपासनाङ्गम्। कदाचित् कारीर्यादीनि कामनयापि कर्तव्यानि भवन्ति, यदि भक्तिरन्यथा न सेत्स्यतीति निर्धार्येत। अतः काम्यत्ववेषेणापि विचारः सफलः। एवं ब्रह्मविचारः पूर्वं क्रियमाणः कर्मानुष्ठानेऽवश्यमुपयुज्यत इति तु नास्ति। ऐहिककर्म देहात्मभ्रान्त्याऽपि स्वनुष्ठानम्। आमुष्मिकं तु देहातिरिक्तात्मबुद्धिमात्रमपेक्षते; नाधिकम्। अतस्त्रिवर्गप्रावण्ये किमिति मुधा ब्रह्ममीमांसया कालोऽत्यवाह्यतेति पश्चात् क्लिश्येत च। यदाहुः—

"योऽसौ शारीरकांशे निरवधिमहिमा साध्यते विश्वकर्ता
यो वा को वा स भावी तदितरसदृशः सोऽपि यष्टव्य इष्टः।
निर्धारस्तस्य पश्चादथ तु परमिहानागतावेक्षणं स्यात्
कर्मैवं किं न पश्चात्तनमिति न विभोः शुद्धधीर्नात्र मृग्या (१५) इति॥

एवं पाठक्रमोऽप्यस्ति। कर्मभागस्य पूर्वत्वात् ब्रह्मभागस्य परत्वात्। विचारभूता च मीमांसा वेदस्येतिकर्तव्यता। यदाहुः—"धर्मे प्रमीयमाणे तु वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति" इति। करणत्वाच्च वेदो मीमांसाया अङ्गी। अङ्गिनि कर्मपरस्य प्राथम्यात् अङ्गे विचारेऽपि कर्मविषयकस्य प्राथम्यं युक्तम्। एवं व्याख्यानस्य व्याख्येयक्रमेण प्रवृत्तिरुचिता। अवश्यञ्च नित्यकर्मणामनुष्ठानस्य यथावत् कार्यतया तदर्थे कर्मविचारे प्रथममवतरितव्यम्। पञ्चपादिकायामप्युक्तम्—अधीतवेदस्यावश्यकरणीयानि नित्यनैमित्तिकानि अकरणे प्रत्यवायजननानि प्रतिपद्यते।

तान्यनन्तरमेवावश्यविचारणीयानीति। अतो विचारकाले प्रथमकालः नित्यकर्मविचारस्थानमासीदिति काम्यादिकर्मविचारोऽपि तदैव क्रियते लाघवात्। नित्यकर्मगतवैलक्षण्यवेदनायापि काम्यकर्मविचारोऽपि तदैव कार्यः। एवञ्च कर्मविचारब्रह्मविचारयोरापातप्रतीतिबलात् सहकरणापत्तौ तस्य कालस्य नित्यकर्मकालत्वात् तद्विचारः पूर्वमिति। एतेन ब्रह्मज्ञानविशेषस्य कर्मसापेक्षत्वेऽपि ब्रह्मविचारस्य कर्मविचारसापेक्षत्वाभावात् कर्मविचारो न पूर्वमिति निरस्तम्। बहुभिर्हेतुभिः कर्मविचारे प्रवृत्तौ प्रथमं जातायामर्थात् कर्मविचारानन्तर्यसिद्धेरप्रत्यूहत्वात्। कर्मविचिचारयिषायाः ब्रह्मविचारप्रतिबन्धकत्वस्य प्रागुक्तत्वात् ब्रह्मविचारस्य प्रतिबन्धकाभावरूपकारणसापेक्षत्वात् प्रतिबन्धकाभावसंपादकतया कर्मविचारापेक्षणात्। इच्छाया विषयसिद्धिनिवर्त्यत्वात् कर्मविचिचारयिषारूपस्य प्रतिबन्धकस्य विचाराधीननिर्णयनाश्यतया प्रतिबन्धकाभावसंपत्तेः। एवं विचारस्य विचारान्तरापेक्षा प्रकारान्तरेणाप्यस्ति। पूर्वमीमांसायां प्रमाणानां प्रथमाध्याये निरूपणं कस्मात्? "मानाधीना मेयसिद्धि"रिति वक्ष्यमाणस्य सर्वस्य मानापेक्षत्वात्। तच्च श्रुतिस्मृत्यादिरूपं प्रमाणं यथायथं ब्रह्मविचारेऽप्यपेक्षितम्। द्वितीयाध्यायोक्तकर्मभेदकप्रमाणानां शारीरकविवक्षितोपासनभेदव्युत्पादनायापेक्षितत्वमस्ति। परविद्यानां वर्णधर्माणां दृष्टिरूपविद्यानां पाशुपतवैश्वानरविद्यादिश्रुतभस्मधारणाप्राणाग्निहोत्रादीनां मध्ये किमङ्गि, किमङ्गमित्यादिनिर्णयाय तृतीयाध्यायोक्ताङ्गताबोधकप्रमाणानि अपेक्षितानि। 'नास्याब्रह्मवित् कुले भवती'त्यादिश्रुतफलादीनां प्रयोजकत्वमस्ति न वेति चतुर्थाध्यायमपेक्ष्य निर्णयम्। एवमाद्यपेक्षा व्यक्तमेवादर्शि शतदूषण्याम्। तथा, 'विविदिषन्ति यज्ञेने'ति श्रुतो यज्ञो नाम कः? स कतिविधः? किं मासाग्निहोत्रवत् विलक्षणोऽयम्, प्रागुक्त एव वा। तत्रापि नित्यनैमित्तिकमात्रम्, अथ वा काम्यमपि इत्यर्थनिर्धारणं तद्वाक्यार्थघटकयज्ञरूपपदार्थविषयकविशदज्ञानाभावे दुष्करम्। सूत्रकारश्च पूर्वमीमांसोपपादितानि बहूनि दृष्टान्तविधयोपन्यस्यति। तद्विज्ञानाभावे कथं सूत्रार्थावधारणं भवति। किञ्चकर्ममात्रं फलोपाय

इति कर्मकाण्डादवगम्यते। कर्मज्ञानयोः समुच्चायकं वाक्यं बहु वेदान्तेषु। तत्र,

लघुनैव फले सिद्धे किमर्थं गुरुचिन्तनम्।
इति शीलयताऽप्यादौ युज्यते कर्मचिन्तनम् ॥ ८१ ॥

तदिदमुक्तम्—"यदि मधु सविधे यातु चाद्रिं किमर्थम्" इति। यदाहुः—"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इति। अन्यदपि भाव्यम्। वेदस्याध्ययनं विहितम्। विचारो रागप्राप्तः। अधीतो विचारितश्च वेदः कार्येषूपयोक्ष्यते। तत्राध्ययनेन संस्कृतत्वाय येन क्रमेण प्रवृत्तिः कृता, विचारणोपस्कृतत्वाय च तेनैव क्रमेण प्रवृत्तिरुचिता। अतः आदौ कर्मविचारः पश्चात्, ब्रह्मविचार इति।

एतदुक्तं भवति—पूर्वमीमांसायां श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि हि क्रमनियामकप्रमाणानि षट् उपदिष्टानि। तानि सर्वाण्यत्र भवन्ति। तथा हि—यथा तत्र, वेदं कृत्वा वेदिं करोतीति दर्भमुष्टिविशेषनिर्माणानन्तर्यं वेदिकरणे क्लृप्तं श्रुतिबलात्; तथेहापि "परीक्ष्य लोकान्" इति हि श्रुतिरस्ति। पाठश्च कर्मकाण्डस्य पूर्वम्, ब्रह्मकाण्डस्य पश्चात्। तथा जैमिनिना पूर्वमीमांसा प्रागेव कृता, पश्चादेव शारीरकं बादरायणेन। अतः "समिधो यजति, तनूनपातं यजती"तिवत् पाठक्रमोऽपि। आपातप्रतीतिजन्यकर्मब्रह्मविचारस्थानभूतः प्रथमकालः नित्यकर्मादिपरस्य कर्मस्थानभूत एव भवतीत्यप्युक्तम्। विचारितब्रह्मापि आ जीवन्मुक्ति कर्म न त्यक्तुमर्हतीति भवत्सिद्धान्तः। अतः कर्मविचारः सर्वसाधारण एव। तथा च "साद्यस्के सह पशूनालभेत" इति वचनात् अग्नीषोमीयादिपशुयागत्रयस्य सह कर्तव्यत्वे सति स्थानातिक्रमसाम्यादिना सवनीयस्थाने कर्तव्यत्वे सति यथा सवनीयस्यादावनुष्ठानम्, तस्य तत्स्थानत्वात्—तथेह स्थानक्रमोऽपि। अध्ययनक्रमेण विचारक्रमः, यथा उपाकरणक्रमेण नियोजनमिति प्रवृत्तिक्रमोऽपि। अवशिष्टस्तु अर्थक्रमः प्रागत्रोपपादित एव बहुप्रकारम्। अतः "अग्निहोत्रं जुहोति, यवागूं पचतीत्यत्र

यवागूपाकाग्निहोत्रहोमयोरिव कर्मब्रह्मविचारयोः साध्यसाधनभावमूलोऽर्थक्रमोऽप्यस्तीति ।

एवञ्च यदुक्तं सूत्रभाष्ये, "हृदयस्याग्रेऽवद्यति, अथ जिह्वाया" इतिवत् न श्रौतः क्रम इति—तन्निरस्तम् । श्रौतक्रमस्य परीक्ष्येति श्रुत्या दर्शितत्वात् । अन्येषां क्रमप्रमाणानां सर्वेषामपि सद्भावाच्च । यत्तु प्रयाजपूर्णमासयोरिव न शेषशेषिभावः, दर्शेऽधिकृतस्य प्रणयनाश्रितगोदोहनादाविवाधिकृताधिकारश्च नास्तीति—किं तेन ? कर्मविचारस्य प्रतिबन्धकापनयनमुखेन कारणत्वादेः पूर्वमपेक्षिततायां उपपादितत्वात् । प्रकारान्तरेणापि शारीरकार्थज्ञाने कारणत्वञ्च प्रागुक्तम् । विचार्यमाणस्य कर्मणः ब्रह्मज्ञानस्य च शेषशेषिभावोऽप्यस्ति । अधिकृताधिकारोऽप्यन्यादृशोऽस्ति । नित्यनैमित्तिकाधिकृतस्यैवोपासनेऽप्यधिकारात् । अन्यथा उपासनस्य नैष्फल्यात् । किञ्च "अथातो धर्मजिज्ञासे" त्यत्राथशब्दार्थः वेदाध्ययनानन्तर्यमिति कथमवधारितम् ? तत्र, "हृदयस्याग्रेऽवद्यति, अथ जिह्वाया" इतिवत् वाक्यं किमस्ति ? अध्ययनाभावे विचारो दुष्कर इति चेत्—इहापि अध्ययनाभावे स दुष्कर एव । एवञ्च तदानन्तर्ये उक्ते सति तस्योभयमीमांसासाधारण्यात् पूर्वमीमांसाव्यावर्तनाय तदानन्तर्यसहिताध्ययनानन्तर्यमथशब्दविवक्षितम् । तत्र कर्मविचारानन्तर्ये कथिते अध्ययनानन्तर्यमप्यर्थसिद्धमिति तावन्मात्रोक्तिरिति स्वरसमेतत् ।

यत्तूक्तं परिमळादौ—शारीरक एव पूर्वमीमांसातोऽधिगन्तव्यं सर्वमधिगमितं बादरायणेनैवेति न पूर्वमीमांसापेक्षा । "अत एव च नित्यत्वम्" इति वेदनित्यत्वस्थापनात् ; तथा "नानाशब्दादिभेदात्" इति भेदकप्रमाणकथनात् ; "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इति शाखाभेदेन विहितार्थभेदाभावस्याप्युक्तेः ; "श्रुत्यादिबलीयस्त्वाच्च न बाधः" इति श्रुतिलिङ्गादिकथनाच्चेत्यादि—तदिदमहृदयम् । यदि वेदप्रामाण्यस्थापनाभावे ब्रह्मनिरूपणं न श्रद्दध्यादिति तन्निरूपणमत्रेष्टं स्यात्, प्रारम्भ एव वेदनित्यत्वं सूत्रयेत् ।

"अत एव च नित्यत्व"मिति सूत्रभङ्गी तत्सूत्रस्थानञ्च तत्स्थापनस्यान्यादृशीं प्रसक्तिं प्रकटयतः। पूर्वमीमांसामूलप्रामाण्यनिश्चयाधीनं वेदान्तविचारं सर्वं बहुदूरं कृतवतैव प्रसङ्गात्, देवताविग्रहाद्यङ्गीकारे अनित्यार्थसंयोगादप्रामाण्यं स्यादिति प्रामाण्यभङ्गभिया पृच्छन् हि समाधीयते; न तु प्रामाण्यप्रतिषेधी नास्तिकः। एवं 'शब्दादि', 'चोदनादि', 'श्रुत्यादि' इति आदिशब्दघटितवाक्यैः सिद्धानुवादिभिरेव तानि तान्युद्दिष्टानि लक्षितानि परीक्षितानि चेति को नाम संमन्येत। तस्मात् सर्वमिदं पूर्वमीमांसोपजीवनस्यैव स्थापकमिति सहृदयं भाव्यम्।

तत् सिद्धमेकशास्त्र्यवादे कर्मविचारानन्तर्यरूपार्थस्वीकारे च न काचिदनुपपत्तिरिति। निष्कृष्टञ्च पूर्णशास्त्रप्रमेयमुक्तमधिकरणचिन्तामणौ—"प्रथमकाण्डप्रतिपन्नसर्वकर्मसमाराधनीय-मध्यमकाण्डप्रतिपन्नसर्वदेवनान्तर्यामिरूपं परं ब्रह्म चरमकाण्डे प्रतिपाद्यते" इति

अनयैवोपपादनसरण्या शतभूषण्युक्तं सर्वं समाहितप्रायम्। अथापि विशिष्याप्यनूद्य वैशद्याय परिहारमार्गः प्रदर्श्यते। अथशब्दस्य प्रथमसूत्रगतस्य सङ्कर्षकाण्डानन्तर्यमर्थः कुतो न भवतीति प्रश्नस्तावन्न युक्तः। तस्यास्माभिरिष्टत्वात्। परन्तु सङ्कर्षकाण्डस्य द्वादशाध्यायीशेषत्वात् साङ्गकर्मविचारानन्तरमित्यर्थवर्णनम्। अत एव संकर्षकाण्डस्य पृथगुपासनापरत्ववर्णनमपि नावश्यमेष्टव्यम्। यद्यपि संकर्षकाण्डे चतुर्ष्वध्यायेषु—"स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम्। फलञ्च देवताकाण्डे देवतानां तु कथ्यते" इति अधिकरणचिन्तामणौ (5 श्लोके) देवताकाण्डाध्यायार्थसंग्रहः कृतो लक्ष्यते—यद्यपि च, "अन्ते हरौ तद्दर्शनात्, तं ब्रह्मेत्याचक्षते" इति संकर्षकाण्डान्तिमांश उदाह्रियते—अथापि तत्र न नैर्भर्यमाचार्याणाम्। अत एव शतदूषण्याम्, "तत्त्वविदां संप्रदायः" इति, तत्त्वटीकायाञ्च "एवं तर्किते कर्मणि संकर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूपभेदगुणप्रकर्षैर्निरकृष्यत।

तत्समाप्तौ च 'अन्ते हरौ तद्दर्शनात्', 'स विष्णुराह हि तं ब्रह्मेत्याचक्षते' इति विचारयिष्यमाणमुपचिक्षिपे इति तत्त्ववृद्धाः" इति परोक्तानुवादमात्रमकारि। अत्र संकर्षकाण्डस्य कर्मशेषत्वं स्पष्टमुपपादितम्। स्वतन्त्रोपासनपरत्वं परमतानुवादरूपेणापि नादर्शि। तत्त्ववित्पदमिह **माध्व**निर्दिदिक्षया प्रयुक्तमिति चाहुः। तेषु तत्त्वविदिति व्यवहारश्च प्रसिद्धः। तथा, "मध्यः काण्डश्च लुप्तस्थितिः"इति तस्य दृष्टिगोचरत्वाभाव एव मीमांसापादुकायां प्रत्यबोधि। साक्षात् ग्रन्थस्यादृष्टत्वादेवाधिकरणसारावळावपि—

"वृत्तिग्रन्थे तु जैमिन्युपरचिततया षोडशाध्याय्युपात्ता
संकर्षः काशकृत्स्नप्रभव इति कथं **तत्त्वरत्नाकरोक्तिः?**"

इत्याशङ्क्य आप्तवचनत्वात् उभयमपि मुख्यामुख्यार्थाश्रयणेन निर्वाह्यमिति सामान्येनोक्तम्। उपलभ्यमाने च सङ्कर्षे पूर्वोदाहृतानि वचनानि न लक्ष्यन्ते। दर्शितानि तु वचनानि दैवमीमांसास्थत्वेन माध्वग्रन्थ एवोदाहृतानि। स कश्चित् संकर्षग्रन्थः काशकृत्स्नकृतः स्यादिति संकर्षद्वयं संमन्तुमर्हतीति विमर्शनं प्राप्तावसरम्। तत्रोपासनादिकं काममुदितमस्तु। न स जैमिनीयः; नाप्यत्र शास्त्रे निविष्टः। एवमपि जैमिन्युक्तदेवताविषयवैशद्यविधायित्वात् सोऽपि संकर्षग्रन्थ आस्तिकैराद्रियते। काशकृत्स्नस्य बादरायणप्रमाणीकृतपरमर्षित्वात्। "अवस्थितेरिति काशकृत्स्नः" इति हि परापेक्षया परिग्राह्यार्थवित्त्वेन स प्रस्तूयते। "जयति मुनिः काशकृत्स्नोऽपी" त्यादौ अपिशब्दः संकर्षकृतं जैमिनिमपि ग्राहयति। अत एव शतदूषण्यामत्रैव वादे, "देवताकाण्डश्च कर्मकाण्डशेषतया भाष्यकारैः परिगृहीतम्" इति शेषत्वमेव स्वाभिमतमुक्तम्।

परिमलोक्तरीत्या चैतत विवरीतुं युक्तम्। तत्र हि—देवताकाण्डविषयस्येति शास्त्रैकदेशतया काण्डपदगृहीतसंकर्षस्वरूपं प्रतिपादयतैवमुक्तम्—"संकर्षकाण्डो न देवताविचारार्थप्रवर्तितः; किंतु द्वादशलक्षण्यविचारितनाना-

विषयन्याय विचारात्मकः इत्यभिधाय— उपक्रमोपसंहारसूत्राणि निर्दिश्य कर्मशेषभूतार्थप्रकीर्णविचारपरः संकर्षो न देवताविचारप्रधान इत्याशङ्क्य,—अथापि संकर्षे—उपांशुयाजादिषु देवताऽस्ति न वेति, क्वचित् का देवतेति, क्वचित् कति देवता इति, 'यां देवतां वषट्करिष्यन् स्यात् तां देवतां मनसा ध्यायेत्' इत्यादौ किं देवताशब्दध्यानं, तदर्थध्यानं वेति विविधं देवताविचारात् तस्य देवताकाण्ड इत्यपि व्यवहारः' इत्युक्तम्। अतो न जैमिनीयस्य संकर्षस्य देवतास्वतन्त्रोपासनादिपरत्वम्। "प्रदानवदेव तदुक्त"मिति ब्रह्मसूत्रपर्यालोचने च कर्माङ्गदेवतादिविचारकस्यैव संकर्षकाण्डस्य मीमांसान्तर्भावो ज्ञायते ; न तु स्वतन्त्रोपासनपरस्य।

एवञ्च, 'एतच्छास्त्रपूर्वभागात्मकात् संकर्षादेव सर्वसिद्धौ व्यर्था ब्रह्मजिज्ञासा' इति शतभूषणीशङ्कायाः क्रियासमभिहारेण क्रियमाणायाः न कथमप्यवसरो लक्ष्यते। संकर्षस्य कार्त्स्न्येन साक्षाददृष्टत्वादेव पञ्चपादिकातद्विवरणादिष्वपि संकर्षस्पर्शमात्रं कृतम् ; न तु द्वादशलक्षणीवत् तल्लक्षणार्थाः विशिष्यानूदिताः। संकर्षान्तोपरि ब्रह्ममीमांसारम्भे प्रथमाधिकरणपूर्वपक्षप्रकारोऽपि श्रीभाष्यादृतपद्धतितुल्यः प्राच्यवृत्तिकारैस्तथा तथा कृतः पञ्चपादिकायामेवानूदितः। सर्वपरिष्कारेण सैव रीतिः श्रीभाष्ये उपन्यासीति सर्वमास्माकं प्राच्यसमादृतम्॥

साम्प्रतमुपलभ्यमानसङ्कर्षग्रन्थतश्चेदं स्पष्टम्—यत् सङ्कर्षकाण्डः न देवतातदुपासनफलविचारात्मकः ; किंतु उपदेशादिभिन्नषट्कद्वयशेषभूतः प्रकीर्णको भाग इति। उपलभ्यमानश्च जैमिनीयः (सङ्कर्षणकाण्ड इति च) व्यवह्रियमाणः **भास्करभट्टीयचन्द्रिकायुक्तः**। प्रत्यधिकरणं तत्र पूर्वपक्षसिद्धान्तौ यथावदुपपादितौ स्तः। परं तु शाबरभाष्यवत् तत्तत्सूत्रपृथग्व्याख्यानरूपत्वाभावात् शाबरभाष्यं सङ्कर्षकाण्डीयं दृष्ट्वा शास्त्रदीपिकाभाट्टदीपिकादिच्छायया अधिकरणरचनापरत्वात् सूत्राणि न सर्वाण्यनूदितानि। तत्तदधिकरणप्रथमसूत्रप्रक्रमपदं तु प्रतीकरूपेण कृत्वा तत्तदधिकरणसर्वसूत्रार्थक्रोडीकरणं कृतम्। तथा हि तत्र प्रथमसूत्रम्, "अनुयजतीति" इत्येताव-

देवादर्शि । परिमळे तु—“ अनुयजतीत्यनुवषट्कारश्चोद्यते”इति पूर्णं सूत्रं व्यलेखि । काण्डावसानाधिकरणे तु अधिकरणारम्भसूत्रे पूर्वपक्षविषयं नोपात्तम् । किन्तु तत्समापनसूत्रम्, “ विद्यते वाऽन्यकालत्वात् यथा याज्यासंप्रैषः यथा याज्यासंप्रैषः”इति । पूर्वपक्षसूत्रं तु, “ पशावुत्तमे प्रयाजे स्रुगादापनो न विद्यते संप्रेषितत्वात् ” इतीदमिति परिमळात् ज्ञायते । एवं प्रदानाधिकरणे बादरायणाभिमते सङ्कर्षाधिकरणेऽपि, “ नाना वा ” इत्येतावत् प्रतीकरूपेण धृतमस्ति । समस्तं तु सूत्रम्, “ नाना वा देवतापृथग्ज्ञानात् ” इति शाङ्करभाष्ये उदाहारि । अत्र ज्ञानादित्यस्य व्याख्यानं कैरपि न कृतम् । शाङ्करभाष्य एव पूर्वं देवतापृथक्त्वादित्येव भाषितत्वात् उपलभ्यमानसंकर्षव्याख्यानेऽपि पृथक्त्वादित्येव लेखनात् श्रीभाष्ये, ‘नाना वा देवतापृथक्त्वा’दिति प्रदर्शितः पाठ एवोचितः स्यात्, पृथग्ज्ञानादिति लेखकप्रमाद इत्यध्यवसीयते इत्यन्यदेतत् ; एवं प्रत्यधिकरणं सिद्धान्तादिषु गुणसूत्राण्यपि सन्तीति अत्रत्यपरिमळादेवावसीयते । ‘ नाना वे’त्यधिकरणस्थतया, अन्यार्थ(प्र)दर्शनाच्चेति गुणसूत्रस्योपादानात्। एतत् नानात्वाधिकरण पूर्वाधिकरण सूत्रमपि “ तेषां पृथक्” इत्येतावदुपात्तं भाट्टचन्द्रिकायाम् । पूर्णं तु परिमळे, “ तेषां पृथक् ” कृतानां निरवदानं यथाऽन्येषाम् हविःपृथक्त्वात्”इति पूर्वपक्षसूत्रम् । अथ च सिद्धान्तसूत्रम्, “वचनात् सर्वेषां सहावदीयते” इति । न केवलमेतावत्, क्वचित् सूत्रतया मुद्रितं सूत्रनिविष्टमपि नेत्यवसीयते । तथा हि—चतुर्दशचतुर्थे, “ स्थितादुत्तरम् ” (26) इत्येकं सूत्रतया दर्शितम् । तदयुक्तम् । यत्रारब्धस्याधिकरणस्यासमाप्तौ मध्येचिन्तारूपाण्यधिकरणान्तराणि भवन्ति, तत्रान्तरालिकाधिकरणावसाने आरब्धपूर्वाधिकरणशेषविवरणप्रवृत्तैर्व्याख्यातृभिः स्थितादुत्तरमित्यारभ्यत इति परिपाटी । सेयं पूर्वमीमांसाभक्षपेटिकादौ शारीरके प्रमिताधिकरण श्रीभाष्ये च द्रष्टव्या । चन्द्रिकाकारः स्थितादुत्तरमिति लिलेख । सूत्रं त्वन्यदिति । तदेवमुपलभ्यमाने सङ्कर्षकाण्डग्रन्थे यथावत् सूत्रग्रहणायोगेऽपि अधिकरणरचना, प्रतिपाद्यविषयेदन्ता च सुज्ञानैव ।

एवमस्य देवताविचाररूपत्वाभावे कल्पतरौ देवताकाण्डेति अस्य

व्यवहारः किंकृत इति विमृश्य परिमळे कथञ्चित समर्थितम्। तदिदं तत्र तत्र विशिष्टार्द्धिक्रिते देवताकाण्डमिति व्यवहारेऽपि तुल्यमिति न काऽपि दूषणप्रसक्तिः। काशकृत्स्नग्रन्थस्तु वस्तुतो देवतास्वरूपादिविचाररूपः देवताकाण्डशब्दव्यवहार्यः स्यात् ; दैवमीमांसेति च। उभयोः सङ्कर्षप्रसिद्ध्या ग्रन्थालाभाच्च तत्र कुतो देवताकाण्डव्यवहारोऽस्यापि कल्पतरुकारेणानीतः। भामतीकारस्यापि संकर्षग्रन्थो न दृष्टिगोचर इति ज्ञायते। यो मीमांसाविषयप्रस्तावमहाकुतूहली स तत्र तत्रैवात्र नानात्वाधिकरणे विस्तरेण व्यक्तीकार्ये प्रायः शाङ्करभाष्यवाक्यानुपठनमात्रेणोपरराम। याज्यानुवाक्याव्यत्यासविधानादिकञ्च न व्यवृणुत, नापि सूत्रं प्रादर्शयत्। परिमलकृत्तु ग्रन्थलाभात् भवस्वामिव्याख्यानलाभाच्च यथावत् व्यवृणोत्। शाङ्करभाष्योक्तो व्यत्यासश्च प्रथमद्वितीययागसंबन्धिन्योर्याज्ययोः द्वितीयतृतीययागपुरोनुवाक्यात्वम्, प्रथमयागपुरोनुवाक्यायाःतृतीययागयाज्यात्वमित्येवंरूपो न कल्पतरुग्रन्थादपि सुखमवगन्तुं शक्यते। एवमत्र व्यत्यासवचनञ्च वस्तुस्थितिकथनम्। तन्निबन्धनयाज्यानुवाक्याभेदादपि प्रयोगभेद इति वक्तव्यमिह।

एवं सङ्कर्षकाण्डारम्भे पृथक् देवतानिरूपणप्रतिज्ञाऽपि नास्ति। प्रकीर्णकविचारावत् अवान्तरप्रतिज्ञापि तत्र तत्र द्वादशाध्याय्यामिवेह नादृता। क्वचित् क्वचित्तु पादे प्राय एकविषयत्वमाकलय्य यूपपादः, इष्टकापादः, अवदानपादः, प्रैषपादः, होमपादः, कालपादः, अग्निपादः, ग्रहपादः, वरणपादः, सामिधेनीपादः, निगदपादः, वषट्कारपादः इत्येवं विशेषनिर्देशोऽप्यस्ति। सर्वथा न सङ्कर्षोऽयं देवताविचारात्मा।

इदमप्यवधेयम्—जैमिनीयद्वादशाध्यायीसमाप्तौ शास्त्रसमाप्तिद्योतकोऽभ्यासः कोऽपि न लक्ष्यते। षोडशाध्यायावसाने तु, सूत्रान्तिमभागः, "यथा याज्यासंप्रैषः यथा याज्यासंप्रैषः" इत्यभ्यस्तोऽस्ति। तेन तावत्पर्यन्त एको ग्रन्थः। तत्र बादरायणकृतरीत्या अध्यायसमाप्तिद्योतकपदाभ्यासात् शास्त्रपरिसमाप्तिद्योतकात् कृत्स्नसूत्राभ्यासाच्च वैलक्षण्येन एकभागस्याभ्यसनात्

अध्यायसमाप्तितः शास्त्रसमाप्तितश्च विलक्षणः पूर्वभागसमाप्तिरूपोंशो हृद्गत इति ज्ञायते। तत् सिद्धं जैमिनीयेनानेन षोडशलक्षणेन संहितं शारीरकमेकं शास्त्रमिति।

यत्तूच्यते ब्रह्मविचारस्य जैमिन्यभिमतत्वे संकर्ष एव तद्विचारः कृतः स्यादिति— तन्न— आचार्येणाभगवता बादरायणेन चिकीर्षित इत्यप्रवर्तितत्वात्। "शेषत्वात् पुरुषार्थवाद" इति सूत्र एव ज्ञाते जैमिनिः सत्यब्रह्मसद्भावं नेच्छतीत्युक्तिरपि न युक्ता, 'अन्यार्थं तु जैमिनिः', "साक्षादप्यविरोधं जैमिनि" परं जैमिनिर्मुख्यत्वात्" इति ब्रह्माङ्गीकारस्य स्पष्टं प्रतिपन्नत्वात्। न चोपासनार्थं ब्रह्मकल्पनामात्रं तदिष्टमिति सुवचम्; उपासनप्राप्यफलभूतत्वस्य ब्रह्मणि कथितत्वात् "परं जैमिनि"रिति। न हि प्राप्यस्य तस्यासत्यता। तर्हि, "शेषत्वात् पुरुषार्थवाद" इति कथं जैमिनिमतमिति चेत्— नात्र ब्रह्मापलापः प्रतीयते; कर्मब्रह्मज्ञानयोर्मध्ये अङ्गित्वं कतरस्येत्येव विचारावगमात्। तत्र जीवब्रह्मणोरैक्ये ब्रह्मज्ञानं जीवात्मज्ञानमेवेति कर्त्रात्मपरत्वं पुरुषार्थवादभूतोपनिषदाम्, भेदे तु ब्रह्मजन्यत्वतच्छेषत्वतन्नियम्यत्वादिज्ञानपूर्वं कर्मानुष्ठानं काम्यमकाम्यं वा श्रेय इति सर्वथा कर्मप्राधान्यं जैमिनिशङ्कितमितिमन्तमित्यलम्।

यत्तु— ब्रह्मचर्यादेव संन्यस्तानां ब्रह्मजिज्ञासायां कथं कर्मविचारप्रसक्तिरिति— असंन्यस्तानामिहामुत्रफलभोगविरागविकलानाममुमुक्षूणां ब्रह्मचारिणां गृहस्थानामनन्तानां ब्रह्मविचारे साधनचतुष्टयस्य न प्रसक्तिरिति तुल्यम्। ब्रह्मविचारे प्रवर्तमानेन अनुष्ठितसर्वकर्मणा तत उपरतेनैव भाव्यमिति न नियमः। ब्रह्मचारिणा द्वितीयमाश्रमं प्रविवक्षताऽपि कर्मविचारेण कर्मफलगुत्वावधारणसमयोपनतनित्यफलेच्छामूलकोपायान्तरजिज्ञासेन, तस्यापि तदानीमवधारणे कृते सति पश्चात् तदुचितकाले उपयोगः स्यादिति मन्वानेन ब्रह्मविचारकरणसंभवात्।" इदमेव सञ्जातमोक्षाभिलाषस्ये"ति श्रीभाष्येऽप्यभिहितम्। एवं

ब्रह्मचर्यात् संन्यस्तेनापि कर्मविचारः पूर्वं कर्तुं शक्यते। कर्मणस्तेनाननुष्ठास्यमानतया किमर्थं तद्विचार इति चेत्—तदनुष्ठेयकर्मकलापेयत्तावधारणार्थमेव। इहामुत्रफलभोगविरागेण मुमुक्षया ब्रह्मजिज्ञासायामवतीर्णं प्रति वैराग्यपादः कथं ब्रह्मसूत्रे प्रवर्तितः ? उत्पन्नवैराग्यद्रढिम्ने इति चेत्—कर्मविचारोऽपि काम्यकर्माद्यनुष्ठाननिवृत्तिदार्ढ्यायैव भविष्यति। मठाधिपतीनां तु महासंन्यासिनां उपसन्नशिष्यजनविपरीतबुद्धिविनिवर्तनपूर्वकोचितोपदेशसिद्धयेऽपि भविष्यति। अन्यथा आदिशङ्कराचार्यादिभिः कर्मविचारः किमिति कृत इत्यपि विचार्यम्। न चाविचारितकर्माणस्ते इति तद्ग्रन्थेष्वधीतिभिराक्षेप्तुं शक्यम्।

वस्तुतो धर्मविचारस्येव ब्रह्मविचारस्यापि अध्ययनानन्तर्ये आवश्यके सिद्धे तदा बादरायणः औपनिषदब्रह्मविचिचारयिषया प्रवृत्तः, 'धर्मब्रह्मसर्वप्रतिबुबोधयिषया भारतादि प्रणीतवानयं परमर्षिः कुतो नु धर्मपरवेदभागविचारं विहायैतन्मात्रं चिकीर्षतीति कश्चिन्मा शङ्किष्टेति मन्यमानः, 'जैमिनिमुखेन कर्मविचारस्य कारितत्वात् तदनन्तरं परिशिष्टब्रह्मजिज्ञासैव प्राप्ते'त्युपदिशतीत्यतोऽपि हेतोः कर्मविचारनन्तर्यमर्थ इति।

ननु विचारस्य वैधत्वानङ्गीकारात् न कर्मविचारस्य पूर्ववृत्तत्वमावश्यकमिति चेत्—वैधत्ववादिनां भवतां कथं तदनावश्यकम्। कर्माननुष्ठानेऽपि तद्विचारावश्यकताया उपपादितत्वात्। वैधत्वादेव चावश्यकत्वात्। एतेन—देवानां कर्मविचारानधिकारिणां ब्रह्मविचारे प्रवृत्त्या न कर्मविचारानन्तर्यं नियतमित्यदिनिरस्तम्; वैधत्वादेव तैरपि तत्करणसंभवात्। अध्ययनेऽनधिकारात् ते न कर्मविचारेऽधिक्रियन्त इति चेत्—ब्रह्मविचारेऽपि तत एव नाधिक्रियेरन्। अध्ययनस्याकरणेऽपि प्राक्तनजन्माधीतवेदान्ताविस्मरणात् न दोष इति चेत्—अत एव कर्मविचारोऽप्यस्तु। अविचार्यैव ते निर्णीतकर्माण इति चेत्—निर्णीतब्रह्मणोऽपि भवेयुः। इन्द्रविरोचनादयः ब्रह्मजिज्ञासया प्रजापतिमुपसन्नाश्छान्दोग्यादौ दृष्टा इति चेत्—ते देहात्मभ्रान्तिमन्तोऽपि तत एव दृष्टा इति कथं तेषां

पूर्णो निर्णयः। अज्ञानम्, विस्मरणम्, बृहस्पत्यादिमुखेन कर्तव्यावधारणमित्यादि तेषामपि लक्ष्यत एव। जिज्ञासमाना अपि जैमिनीयं किमपेक्षन्ते ते इति चेत्—बादरायणीयमपि भौमं ते किमपेक्षन्त इति समानम्।

विचारो रागप्राप्त इत्यस्माकं मतम्; वैध इति भवन्मतमित्युच्यते। वस्तुतो वैधत्वनिर्बन्धो न भावत्कानामपि। तथा हि—"स्वाध्यायोऽध्येतव्य" इत्यध्ययनविधिरर्थज्ञानोद्देश्यकविचारेतिकर्तव्यताकाध्ययनविधिपर इति पक्षे विचारे वैधत्वम्। तदा "अधीत्य स्नायात्" इति विहितं समावर्तनं विचारात् पश्चादेव कार्यं स्यात्। न च "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत"इत्यत्र तृतीयाश्रवणात् फलभावनाकरणत्वनिर्वाहाय पूर्णप्रयोगानन्तर्यलाभेऽपि, इह फलभावनापर्यन्ताध्ययननिवृत्तेरलाभ इति **परिमलोक्तं** युक्तम्—इहापि अध्ययनस्य करणत्वेनैव भावनायामन्वयात् स्वाध्यायोऽध्येतव्य इत्यत्रेव फलभावनाकरणत्वप्रतीतेरक्षतत्वात् विचारेतिकर्तव्यताकाध्ययनानन्तर्यस्यैव स्नाने वक्तव्यत्वात्। यस्य भावनायां कर्मत्वेनाधिकरणत्वेन वाऽन्वयः, तत्र साङ्गस्य तस्य ग्रहणं नेत्येव मीमांसकोक्तेः। अत्र तु अध्ययनं करणत्वेनान्वेतीति। अन्यथा कर्मविचारोऽपि समावर्तनात् प्राङ् न कर्तव्यः स्यात्। यदि समावृत्य गृहस्थभूतेन कर्मणां कर्तव्यत्वात् विचारं विना तदसंभव इति प्रागेव तद्विचारमपि कुरुत इति, एवमर्थसिद्धत्वे विचारस्य वैधत्वं त्यक्तमेव स्यात्। भवेच्च ब्रह्मचारिकर्तृकसंध्योपासनादिवत् गृहस्थधर्माणामप्युपदेशमात्रेण कियन्तमपि कालमनुष्ठानम्। अतो विचारवैधत्ववादिनां कर्मविचारस्य प्राक् कर्तव्यत्वे तुल्यगत्या ब्रह्मविचारस्यापि वैधत्वमापततीति साधनचतुष्टयसंपत्त्यनन्तरमेव ब्रह्मविचार इति नैव सिद्ध्येत्। अतः सूत्रभाष्ये साधनचतुष्टयापेक्षत्वस्य ब्रह्मविचारे कथनात्, कर्मविचारं विनापि ब्रह्मविचारकरणसंभवस्य भाषणाच्च विचारस्य वैधत्वं न भाष्यसंमतमिति प्रतीयते। न च ब्रह्मविचारं कृत्वा पश्चात् कर्मविचारकरणात् न विचारवैधत्वहानिरिति वाच्यम्—ब्रह्मविचारे प्रवृत्तस्य त्यक्तसर्वकर्मतया

पश्चात् कर्मविचारप्रसक्त्यभावात् । यदि च गृहस्थीभविष्यत्कर्तृकाध्ययन एव विचारस्याङ्गत्वम्, तर्हि ब्रह्मविचारोऽपि तत्कर्तृक एव स्यात् । स्वाध्यायोऽध्येतव्य इति विहिताध्ययनव्यक्तिषु सर्वत्र विचारस्याङ्गत्वानङ्गीकारे च न तत्र भावनायां विचारस्येतिकर्तव्यतात्वेनान्वयसंभवः । अथ विचारस्यार्थज्ञानार्थत्वात् यावदर्थज्ञानं यस्य कार्यकरम्, तावद्विचारमात्रमेव तं प्रति विहितं भवतीति चेत्—तर्हि अध्ययनमपि तावन्मात्रविश्रान्तमिति पूर्णाध्ययनावश्यकत्वसंप्रदायभङ्गः। एकवर्णगतस्य एकाश्रमनिष्ठस्य वर्णाश्रमान्तरनिष्ठपुरुषप्रतिबोधनरूपकार्यसंभवेन ब्रह्मचारिणाऽपि ब्रह्मविचारस्य करणमुपपद्यते। अतो विचारस्य रागप्राप्तत्वमेव भाष्याद्यनुकूलम् ।

एवम्, "अध्ययनमात्रवत" इति सूत्रमपि तदनुकूलम्। 'अधीत्याभिसमावृत्ये'ति अध्ययनानन्तर्यमेवोच्यते आचार्यकुलात् स्वगृहं प्रति समावर्तने; न तु विचारानन्तर्यमपीति तदर्थात् । तत्रत्यशाङ्करभाष्यमपि नाध्ययनविधेरर्थज्ञानार्थत्वं दर्शयति । एतावत्तु तत्रोक्तम्—यत्—अधीत्येत्यध्ययनमात्रोक्तौ अर्थज्ञानस्यासिद्ध्या कर्मस्वनधिकारः स्यात् । न स्यात् । 'न ह्यविद्वान् अधिकृतोऽस्ती'ति न्यायात् अर्थज्ञानस्यानुष्ठानार्थतायाः लोकसिद्धत्वात् कर्मविधिरर्थज्ञानवत्येव प्रवर्तते । अध्ययने च विहिते अध्ययनमूलकापातप्रतीतिजनितजिज्ञासाधीनार्थनिर्णयशालिनि लब्धे कर्मविधिरर्थज्ञानं कस्यचित् स्वयं नाक्षिपति । तत्र यदर्थज्ञानं यत्रोपयुक्तम्, तदन्यस्यार्थज्ञानस्य न तत्रापेक्षा । यथा क्रत्वन्तरज्ञानमन्यस्य क्रतोरनुष्ठाने नोपयुज्यते, तथोपनिषदर्थज्ञानमपि न कर्मानुष्ठाने उपयुज्यत इति । अत्र भामत्यां तु—किमर्थज्ञानेन ? अध्ययनमपि अन्यभागविषयकम् अन्यभागार्थानुष्ठानं प्रति नोपयुज्यत इति विशेष उक्तः । सौत्रस्य मात्रपदस्य अर्थज्ञानं कर्मानङ्गमिति बोधनपरत्वं नास्तीत्येतावत्परत्वमेव भाष्याद्युक्तम् । सूत्रस्वरसार्थश्च—अध्ययने निष्पन्नेऽभिसमावर्तनदेवान्ततो श्रुतिविवक्षितम् । समावर्तमानस्तु शास्त्राविहितमपि विचारं सौकर्याय स्वयं करोति यथायथम्-इत्येतावानेव । अत्र भामत्याम्, अर्थज्ञानो-

द्देशेनाध्ययनविधिपक्षेऽपि सूत्रं निर्वोढुं प्रयत्नः कृतः, "उपनिषदध्ययनापेक्षं मात्रग्रहणम्, नार्थबोधापेक्षम्" इति । अयमस्यार्थः—अर्थावबोधपर्यन्ततत्तत्कर्मभागाध्ययनमात्रवतः तत्तदनुष्ठातृत्वमिति सूत्रार्थः । अन्यभागाध्ययनमर्थज्ञानञ्च न तत्रोपयुज्यत इति तद्भावः । श्रीभाष्ये तु, 'अध्ययनविधेरक्षरग्रहणमात्रार्थत्वात् मात्रपदेनार्थज्ञानस्य विध्यन्वयव्यवच्छेदः । अर्थज्ञानपर्यन्ताध्ययनविधिश्रद्धायां तु मात्रपदं तादृशश्रवणाधिकोपासनरूपविलक्षणज्ञानस्य कर्माङ्गत्वासंभवदर्शकम्'इत्यभाषि । एवमक्लेशेनोभयत्र सूत्रनिर्वाहेऽपि अर्थज्ञानार्थमध्ययनविधानं सूत्रकृतो नेष्टमित्येव तत्तद्भाष्यकृद्दिष्टम् । न हि तद्भागमात्राध्ययनवत इति वा, अर्थश्रवणमात्रवत इति वा सूत्रमस्ति । किन्तु, 'अध्ययनमात्रवत' इति । भवद्वार्तिककारश्च **नारायणसरस्वती** विस्तरेणाध्ययनविधेरक्षरग्रहणमात्रार्थतां विचारस्य रागतः प्राप्तिञ्च प्रत्यपीपददिति नास्माभिरिदमपूर्वतया प्रतिबोधनीयम् । अतः एतत्पक्षखण्डनैर्भयं न युक्तमद्वैतिनाम् ।

"फलजिज्ञास्यभेदाच्चे"ति भवद्भाष्ये फलभेद उक्तो भवद्भिरेव न सामस्त्येनेष्टः। विविदिषाद्वारा कर्मणां ब्रह्मविचारसंबन्धात् अभ्युदय एव फलमित्यस्याभावात् । जिज्ञास्यभेदस्तु विचारणीयः । तत्र धर्मजिज्ञासेत्यत्र ब्रह्मापि जिज्ञास्यतयोक्तमिति कश्चित् पक्षः । तेन जिज्ञास्यभेदरूपहेत्वसिद्धिः । जिज्ञास्यभेदेऽपि शास्त्रैक्यं प्रकारान्तरेण भवतीति पक्षे च व्याप्यत्वासिद्धिः । धर्मपदस्य ब्रह्मपरत्वं बहुधोपपाद्यते । धर्मजिज्ञासे त्यत्र धर्मपदस्य वेदार्थपरत्वात् ब्रह्मापि वेदार्थत्वेन गृहीतमेवेत्येकः पक्षः । धर्मशब्दस्य वेदार्थपरत्वं प्राभाकरैरप्युक्तमिति व्यक्तं पञ्चपादिकादौ । वेदाध्ययनानन्तरं वेदस्य विवक्षितार्थकत्वाद्धेतोः वेदार्थविचारः क्रियत इति तदभिमतः सूत्रार्थः । कृत्स्नवेदाध्ययनानन्तरं जायमानाजिज्ञासा हि न धर्ममात्रे भवितुमर्हति । एवं धर्मजिज्ञासापि धर्मस्य वेदार्थत्वज्ञानप्रयुक्तैवेति वेदार्थविचार एव पुरुषस्येष्टः । अत एवाधर्मोऽपि

विचार्यमाण: संगृहीतो भवतीति तदाशय: । परंतु धर्माधर्मातिरिक्तो ब्रह्मरूपो वेदार्थ: कश्चिदस्तीति न प्राभाकरो मन्यते; मन्यते तु वेदान्तीति विशेष: ।

**पञ्चपादिकाकारस्तु**—" तत्रापि न निखिलवेदार्थविचारप्रतीति: " इत्यादिना धर्मजिज्ञासेत्यस्य वेदार्थविचार इत्यर्थेऽपि पूर्वमीमांसायां यावद्विचारितम् तावद्वेदार्थप्रतिज्ञैव ग्राह्या । अत: ब्रह्मविषयप्रतिज्ञा तत्र न कृतेति, अथातो ब्रह्मजिज्ञासेति प्रतिज्ञायां न पौनरुक्त्यमित्याशेते । एवं धर्मशब्दस्य वेदार्थपरत्वं **भामत्या**मप्यादृतम् । " स्वाध्यायानन्तर्यं तु समानम् " इति भाष्यव्याख्यानावसरे, "धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवत् ब्रह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्यादित्यर्थ:" इति । यत्त्वत्र **परिमले** उक्तम्—" न त्र टीकायां धर्मशब्दस्य वेदार्थलक्षकत्वमिष्टम् ; किन्तु अत:शब्दस्य वेदार्थसामान्यपरत्वाभिप्रायमिति व्यक्तीभविष्यति प्रथमसूत्रार्थव्याख्यानावसरे" इति—तत सर्वथैवोदक्षरमिति स्पष्टम् । सूत्रार्थवर्णनस्थलेऽपि भामत्याम्, " फलवदर्थावबोधपरतां स्वाध्यायाध्ययनविधे: सूत्रयता, ' अथातो धर्मजिज्ञासे'त्यनेनैव प्रवर्तितत्वात्, धर्मग्रहणस्य च वेदार्थोपलक्षणत्वेनाधर्मवत् ब्रह्मणोऽपि उपलक्षणाच्च यद्यपि धर्ममीमांसावत् ब्रह्ममीमांसाऽप्याक्षेप्तुं शक्यते, तथापि प्राच्या मीमांसया न तत् व्युत्पाद्यते ; नापि ब्रह्ममीमांसाया अध्ययनमात्रानन्तर्यमिति ब्रह्ममीमांसारम्भाय नित्यानित्यविवेकाद्यानन्तर्यप्रदर्शनाय चेदं सूत्रमारम्भणीयमित्यपौनरुक्त्यम् " इत्यानुपूर्वी । अत्र, ' अतश्शब्देन सर्वस्यापि वेदस्य विवक्षितार्थकत्वमेवाभिमतम् । धर्मजिज्ञासापदघटकं धर्मपदं वेदार्थलक्षकमिति न टीकाशय:' इति परिमळोक्त तु दुरुक्तमेव । वेदार्थमीमांसेति प्रतिज्ञा । तत्र सामान्यकोडीकृतत्वात् विशेषभूतधर्ममीमांसाऽप्याक्षिप्यते । ब्रह्ममीमांसाऽप्याक्षेप्तुं शक्यत " इति हि स्पष्टमुक्तम् । धर्मजिज्ञासापदस्य धर्ममीमांसामात्रार्थकत्वे तस्या आक्षेपलभ्यत्वकथनं कथम् । 'धर्मग्रहणस्य च वेदार्थोपलक्षणत्वेने'ति च धर्मशब्दस्यैव जहदजहल्लक्षणावृत्तत्वं

स्पष्टमुक्तम् । अतश्शब्दस्य वेदभागसामान्यस्य विवक्षितार्थकत्वपरत्वं सर्वसंमतम् । तत्र "धर्मग्रहणं वेदार्थोपलक्षण"मिति कथमन्वियात् । प्रत्युत धर्मशब्दः धर्मरूपार्थस्यैव वेदविवक्षितत्वात् धर्ममात्रजिज्ञासेति अतश्शब्दार्थसङ्कोचकः कदाचिद्भवेत् । तथाऽर्थवर्णनं तु मीमांसकेन वा शारीरकपार्थक्यवादिना वा न केनापि कृतम् । अतोऽत्र भामतीकारोऽपि पञ्चपादिकाकृदिव वेदार्थलक्षकत्वं धर्मपदे स्वीकृत्य तावता ब्रह्मजिज्ञासासूत्रस्य न पुनरुक्ततेत्येवाह । कथं पौनरुक्त्यपरिहार इति चेत्—तत्र वेदार्थजिज्ञासेति प्रतिज्ञा धर्मस्येवाधर्मस्यापि सङ्ग्रहार्था परं स्यात्; न तु ब्रह्मसंग्रहार्था । ब्रह्मणस्तत्राविचारितत्वादित्येको निर्वाहः । निर्वाहान्तरं तु—स्यान्नाम ब्रह्मणोऽपि जिज्ञास्यत्वं प्रतिज्ञातम् । अथापि ब्रह्मजिज्ञासायाः साधनचतुष्टयसम्पत्त्यानन्तर्यं वक्तुमिदं सूत्रम् । तेन धर्मविचारवत् ब्रह्मविचारः नाध्येतृसामान्याधिकारिक इत्युक्तं भवतीति । सर्वमिद मुपात्त भामती वाक्यस्थमेन । अत्र प्रथमनिर्वाहे ऐकशास्त्र्यं नावगम्यते । द्वितीये तु तदप्यवगम्यत इति विशेषः ।

एवमद्वैतप्रस्थानद्वयेऽपि धर्मजिज्ञासापदस्य वेदार्थमीमांसेत्यर्थस्य प्राभाकरपक्ष इव दर्शनात् विशिष्टाद्वैतिभिरपि वेदार्थत्वाविशेषात् ब्रह्मविचारः प्रतिज्ञातः प्रागेवेत्येवोच्यते । तत्र सामान्यप्रतिज्ञानन्तरम्, 'चोदनालक्षणोऽर्थो धर्म"इति विशेषलक्षणकथनात् विशेषप्रतिज्ञा अर्थ सिद्धा । तदनुबन्धिविशेषप्रतिज्ञा च तत्र तत्र कृताऽस्ति '। अथातः शेषलक्षणम्', 'अथातः क्रत्वर्थ पुरुषार्थयोर्जिज्ञासे' त्येवम् । एवं सपरिकरे धर्मे निरूपिते देवताकाण्डेऽपि कर्मशेषनिरूपणस्यैव कृतत्वात्, ब्रह्मणः सिद्धवस्तुनः प्राधान्यासंभवे च षोडशलक्षणीश्रा विणा समालोचिते--'अध्ययनकालापातप्रतीतस्य ब्रह्मणोऽपि विचारः कर्तुमर्ह एव; तदेकमेव' शिष्यत इति प्रतिबोधनाय विशिष्य तद्विचारप्रतिज्ञेति न पुनःप्रतिज्ञावैयर्थ्यमिति विशिष्टाद्वैतिनिर्वाह इति ।

एवं वेदार्थलक्षकत्वपक्षो दर्शितः । विनैव लक्षणामपि निर्वाहः क्रियते, धर्मशब्दस्य सिद्धासाध्योभयविधधर्मवाचित्वात् ब्रह्मणोऽपि ग्रहण मिति—

तत्र यत् **सिद्धान्तसिद्धाञ्जना**नुवादेन दूषणमुक्तम्, तत्रेदं सारभूतं समाधानम्। "श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते" इति वार्तिकोक्त वेदावगतश्रेयस्साधनताकत्वरूपं धर्मलक्षणं तावत् ब्रह्मणोऽप्यविशिष्टम्। "द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते" इति द्रव्यगुणादीनां सिद्धानामपि धर्मत्वं तदुक्तमेव। यद्यपि व्यापारानाविष्टस्य दध्यादेः, "दध्नेन्द्रियकामस्य जुहुयात्" इत्यादौ साधनत्वायोगेन कथञ्चित् व्यापारविषयत्वं सिद्धस्यापीष्टम्—तथापि व्यापारानाविष्टत्वे धर्मलक्षणं न भवतीति न मन्तव्यम्। शास्त्रतः साधनत्वं यस्यावगम्यम्, तस्य धर्मत्वस्य संप्रतिपन्नत्वात्। अत एव क्रियादिर्वा धर्मः, तार्किकरीत्या अदृष्टविशेषो वेति विमृश्य क्रियादिषु धर्मशब्दप्रयोगं प्रदर्श्य **भाट्टरहस्ये** अदृष्टस्याप्यविशेषेण धर्मशब्दवाच्यत्वं **खण्डदेवेन** स्थापितम्। तावता कर्तृकालादीनामपि धर्मत्वापत्तिरिति तु न। तेषां फलसाधनोपसर्जनतया, साधनत्वस्य मुख्यस्य तत्राभावात्। अत एव प्रयाजादिषु धर्मशब्द प्रयोगोऽपि न मुख्यः। 'दध्नेन्द्रियकामस्य जुहुयात्', 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्', 'पञ्चमे ब्रह्मवर्चसकामस्य' इत्यादिफलार्थद्रव्यगुणकालादिष्वेव धर्मत्वोदाहरणात्। एवमपि अदृष्टस्य धर्मत्वमिष्यते। तद्द्वारैव क्रियादीनां फलहेतुत्वात् कर्तृकालदेशादेरिव क्रियोपसर्जनत्वाभावात्। अतोऽनन्यथासिद्धं कारणं क्रियादि, अदृष्टश्च। अदृष्टश्च वेदान्तसिद्धान्ते भगवत्सङ्कल्पादनतिरिक्तमिति सिद्धं संकल्पस्य धर्मत्वम्। न चादृष्टस्य साधारणकारणत्वमेवेति वाच्यम्—अदृष्टत्वेन कार्यसामान्यकारणत्वेपि तत्तदृष्टत्वेन तत्तद्विषयविशेषितसङ्कल्परूपेण तत्तत्कार्यनिरूपितासाधारणकारणत्वस्याप्यक्षतत्वात्। ईदृशः सङ्कल्पश्च सर्वकर्मसमाराध्ये सर्वस्वतन्त्रे प्रतिनियतदेशकालादिसाक्षात्कारिणि भगवत्यायत्त इति सोऽपि धर्मः। "रसोऽहमप्सु कौन्तेय!" इत्यादिप्रयोगं पश्यतां स्पष्टमिदं यत् धर्मपदं निष्कर्षकमपि परमात्मानं बोधयतुमीष्टे इति।

एवं धर्मशब्दमुख्यार्थत्वे संभवति, "कृष्णं धर्मं सनातन"मित्यादीनां लाक्षणिकत्वकल्पनमयुक्तम्। तदेवं धर्मशब्दमुख्यार्थजिज्ञासान्तर्भूतैव ब्रह्मजिज्ञासाऽपि। सा प्रथमं निबद्धाऽपि षोडशलक्षणीविचारानन्तरं प्रसक्तक्षोभा पुनः प्रतिज्ञया पर्यवस्थाप्यते। तदिदं पञ्चपादिकादिप्रदर्शनेन प्रागेव प्रत्यबोधि। एतेन—धर्मशब्दस्य मुख्यगौणार्थद्वयपरत्वं न युक्तम्। युगपद्वृत्तिद्वयविरोधात्। अन्यथा मन्त्राणां गौणेऽर्थेऽपि विनियोगापत्तेः। अर्थद्वयप्रतिपादनाय सूत्रस्यावृत्त्यङ्गीकारे च स एव दोषः—इत्यादि निरस्तम्। अर्थद्वयस्याप्यनुगमेन मुख्यत्वात्। अपि चेदं सिद्धान्तसिद्धाञ्जनं भवन्मतमेवास्कन्दति, यो हि सूत्रस्वारस्यविचारे एवमाह स्म—'ब्रह्मशब्दः सविशेषनिर्विशेषसाधारणः तन्त्रेण प्रयुक्तः, सविशेषांशो वाच्यमर्यादया, निर्विशेषांशस्तु लक्ष्यमर्यादया। सूत्रेष्वेकस्य पदस्यानेकार्थत्वं भूषणम्...........वाक्यभेदेनाऽऽवृत्त्या योजनमपि भूषणम्" इति।

अथ पक्षान्तरम्। धर्मजिज्ञसेति विधेयमात्रस्य प्रतिज्ञा; न ब्रह्मणः। अतः पृथक् ब्रह्मजिज्ञासा प्रतिज्ञायते। उभयसमाहारेण साधारणप्रतिज्ञायाः उन्नयनसंभवात् नैकशास्त्र्यहानिरिति। अत्रेदमैकशास्त्र्यरहस्यं प्रतिबोधयामः। आदौ जैमिनिः कृत्स्नधर्मजिज्ञासां प्रतिजज्ञे। धर्मश्च यागदानहोमादिवत् उपासनारूपश्च। वेदपूर्वभागविहितानां यागादीनां निरूपणं षोडशलक्षण्या सिद्धम्। समन्वयसूत्रभाष्ये चोपासनानामपि कर्तव्यतया धर्मपदवाच्यत्वं स्पष्टमुक्तं प्रतिपत्तिविधिपक्षनिराकरणावसरेऽपि। अथोपासनात्मके धर्मे निरूपणीये भगवान् बादरायणो जैमिनिमेवमाह—कर्माणि तावत् आराध्यदेवतास्वरूपतत्प्रीत्यादिविवेकविकलेभ्योऽपि फलं ददतीति स्यान्नाम तेषां प्राधान्यम्। ब्रह्मोपासनानि तु ब्रह्मणः प्राधान्ये, ("प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती" इति रीत्या) तत्प्रीणनार्थविहितत्वे चाविज्ञायमाने न फलिष्यन्ति। फलस्यास्य मुख्यत्वात् अनुभवितव्यशाश्वतापरिमितफलरूपमोक्षानुरूपत्वादुपासनस्य; 'यमेवैष वृणुते तेन लभ्यः', नान्यः पन्था अयनाय विद्यते" इत्यादिश्रुतेश्च। अतो

ब्रह्मणः प्राधान्यं प्रतिबोध्य तच्छेषतयैव तदुपासनानि व्युत्पादनीयानि। तदहं प्रथमं प्रतिबोध्यमुपदिश्य पश्चादुपासनं प्रस्तोष्यामीति। जैमिनिश्च शिष्यः तदधीनवृत्तिरुपरराम। अथ बादरायणः अत एव अथात उपासनप्रतिज्ञे त्यनुक्त्वा अथातो ब्रह्मजिज्ञासेति ब्रह्मप्राधान्यं प्रदर्श्याध्यायद्वयेन तत्स्वरूपस्वभावादिकमवस्थाप्य अथ जैमिनिविवक्षितमुपासनादि तृतीयतृतीये प्रस्तोष्यन्, यदर्थमिदमध्यायद्वयं सपादद्वयं मध्ये न्यबन्धि, तत् मुक्तकण्ठमुज्जगार। 'फलमत उपपत्तेः', 'श्रुतत्वाच्च' परमात्मैव फलप्रदः प्रधानभूतः। एवं स्थिते 'धर्मं जैमिनिरत एव' यदाह फलप्रदम्—तन्न युक्तम्। अत इदं मन्तव्यम्, "पूर्वं तु बादरायणो हेतुव्यपदेशात्'इति। अतः तत्त्वविदां साधारणधर्मस्थलेऽपि परमपुरुष एव देवतान्तरद्वारा साक्षाद्वा फलप्रद इति स्थिते किमुत ब्रह्मोपासनेष्वित्येवं। ब्रह्मप्राधान्यं प्रतिज्ञापूर्वकमुपपाद्याथ, अथातो धर्मजिज्ञासेति प्रतिज्ञातेषु धर्मेषु यदवशिष्टम्, तन्निरूपयामास तृतीयतृतीय इति। एवं खलु पूर्वापरयोरैकग्रन्थ्ये समञ्जसे संलक्ष्यमाणे ऐकशास्त्र्यखण्डनसंरम्भः, स्वाभिमतनिर्विशेषब्रह्मवादो मा नाम लुपदित्यभिनिवेशेनेत्येवावधेयम्। विधेयात् धर्मभूतात् ज्ञानादन्यत् न मोक्षसाधनमिति समनन्तरवाद एव दर्शयिष्यते।

यत्तु—सिद्धफलं ब्रह्मज्ञानमनुष्ठानानपेक्षमिति—तत् केवलं स्वमतसिद्धवत्कारेण। ब्रह्मज्ञानस्यापि ध्यानरूपस्यानुष्ठानसापेक्षस्यैवास्माभिरङ्गीरात्। अतो हेत्वसिद्धिः। एकव्याख्येयाव्याख्यानत्वेन ऐकशास्त्र्ये सर्वेषामङ्गानां सर्वेषां विद्यास्थानानां सर्वेषां वेदभाष्याणाञ्चैकग्रन्थत्वापत्तिरिति यद्दूषणम्, ईदृशं सर्वं शतदूषण्यामेवाशङ्क्य शमितम्। क्रमविशेषनियामकसङ्गतिविशेषविशिष्टाविरुद्धावान्तरार्थशास्त्रान्तरव्यावृत्तासाधारणोपकारार्हसप्रकारार्थत्वमिति ह्युक्तं तत्र; "न चैवं वेदार्थानुबन्धित्वाविशेषात् विद्यास्थानभेदविलयप्रसङ्ग इति वाच्यम्—उपकारभेदेन तद्भेदव्यवस्थापनात्" इति च। न ह्येकमङ्गमेकं विद्यास्थानं वा यादृशोपकारोद्देशेन प्रवर्तितम्, तादृश एवो पकारः परस्यास्ति। न चैकस्यान्यस्य च मिथः क्रमनियामकसङ्गतिरस्ति। अतोऽधिकरण-

सरण्या वेदवाक्यार्थनिर्णयात्मकतया वैलक्षण्येन मीमांसापदव्यपदेश्यं पूर्वपूर्वसङ्गतिमूल प्रवर्तितसर्वांशमिदमाराधनाराध्योभयोपसर्जनकब्रह्मरूप प्रधानैकार्थमेकं शास्त्रमिति। एष विशिष्टोऽर्थश्चैवमुपनिषद्येवोदघोषि—"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः। तदेवाग्निस्तद्वायुः तदु सूर्यः तदु चन्द्रमाः" इति।

यत्तु—पूर्वोत्तरमीमांसयोर्विरुद्धार्थत्वात् विभिन्नकर्तृकत्वाच्च न संहतत्वमिति तत् सर्वं परिमल एव परिहृतमस्तीति किं वृथा शङ्कनेन ? यत्तु—शबरस्वामिकुमारिलभट्टादिपूर्वमीमांसाव्याख्यात्रसंमतमिदमैकशास्त्र्यम्; अतो न पूर्वोत्तरमीमांसयोरेकत्वम्। गोशृङ्गशशशृङ्गयोरिव" इति—तत्रोच्यते। यदि व्यवहारे भाट्टनय इति वादिनां भवतां कौमारिलाशयानुसरणमावश्यकम्, यदि उत्तरमीमांसा तद्दृष्ट्या शशशृङ्गम्, तर्हि भवद्भिरुत्तरमीमांसा तुच्छत्वेन त्याज्या स्यात्। यदि तद्बुद्ध्या शशशृङ्गमप्यास्तिकबुद्ध्या सा सत्या, तर्हि अपव्याख्यातृपरिहारकास्मद्बुद्ध्या तद्वदेवैकशास्त्र्यमपि सत्यमेव। वस्तुतस्ते वेदान्तमैकशास्त्र्यञ्चाद्रियन्त एव। "दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन" इत्युक्तेरित्यलम्। '**भगवदुपवर्षाचार्याः** ब्रह्मपरिणमज्ञानकर्मसमुच्चयवादिनः अस्मत्प्रतिकूलाः' इति यदुक्तम्—तत्रास्मदिष्टो यादृशः परिणामः, यादृशश्च ज्ञानकर्मसमुच्चयः, तद्विपरीतवादिनस्ते इत्यत्र न किञ्चिद्भवता प्रमाणमुपन्यस्यम्। न च पूर्वमीमांसाव्याख्यानान्यर्वाञ्चि सर्वाण्यविशेषेण ग्राह्याणीति वयं ब्रूमः। एतावता प्राच्यव्याख्याप्रातिकूल्यं भवतामेव भवता दर्शितं भवति।

यदपि **उपवर्षभास्करादयः** शास्त्रैक्यवादस्य पितरः। तन्मतज्ञानकर्मसमुच्चयादिखण्डनात् शास्त्रैक्यवादस्वीकाराच्च पितृहत्यया पैतृकधनजीवनमस्माभिः क्रियत इति—तत्र शास्त्रैक्यवादस्य चेत् ते पितरः—तावता कथमस्माकं पितृहत्यादोष इत्युच्यते। न ह्यस्माकं ते पितरः; किंतु शास्त्रैक्यवादस्य। अन्यथा भवद्भिरपि तत्खण्डनात् भवतामपि पितृहत्या निराबाधा।

वस्तुतो ज्ञानकर्मसमुच्चयाद्यामयनिरसनेन शास्त्रैक्यादितच्छरीरपोषणादस्माभिरते पितरः परिरक्ष्यन्त इत्येव मन्तव्यम्। यत्तु—स्वाध्यायोऽध्येतव्य इत्यध्ययनस्य स्वशाखामात्रविषयकत्वात् पूर्वोत्तरमीमांसयोश्चाधीतानधीतसर्वशाखोपनिषद्विचारात्मकत्वात् न स्वाध्यायाध्ययनविधिसिद्धवेदव्याख्यानता विचारयोरिति—तेन किं सिद्धं भवति। अध्ययनविधौ मीमांसाया इतिकर्तव्यतात्वेनान्वयो न युक्तः, अथातो धर्मजिज्ञासेत्यत्राथशब्दस्य स्वाध्यायाध्ययनानन्तर्यमित्यर्थश्च न युक्त इत्येव। तेन पूर्वमीमांसकरूपज्येष्ठभ्रातृहत्या, विचारवैधत्ववाद्यात्महत्या, मीमांसयोरेकव्याख्येयव्याख्यानात्मत्वाभिधाय्याकरग्रन्थविधायिस्वपितृहत्या चैव सिद्ध्यति। अथवा तत्त्वज्ञानच्छद्मना सर्वहत्याव्यसनिनां कियदिदम्। एवं प्रतिदूषणप्रसक्तिमपरामृश्य किमिति पितृहत्यादोषापादनसंरंभः?

ऐकशास्त्र्यविरोधि यदन्यदुपन्यस्तम्—तत् सर्वं परिमळ एव प्रत्युत्तरितम्; प्रागस्माभिश्च। शतदूषणीव्याख्यातारश्चण्डमारुतकारा महाचार्याः मूलग्रन्थकर्तृष्वाचार्येषु महत् गौरवं बिभ्रतः तत्र तत्र, 'तैरुक्त'मिति वक्तव्ये, "तैरनुगृहीत"मिति लिखन्ति। तत्राभ्यसूयुना चानुग्रहोपन्यासा इमे निग्रहोपन्यासा एवेति दूष्यते। यत्यतां कामम्। अनुग्रहो न कथमपि निग्रहो भविष्यति। भागद्वयमेकमिति न ब्रूमः; किन्तु भागद्वयमेकं शास्त्रमिति। अन्यथा वर्णा अनेके कथमेकं पदं स्यात्; पदानि वा वाक्यमेकम्; अवान्तरवाक्यानि वा महावाक्यमेकम्। महावाक्यानि च प्रबन्ध एक इति। कथञ्च शतभूषणीयं बहुकर्तृका एककर्तृका वा बहुभागात्मिका भवत्येकः प्रबन्ध इति विमृश्यताम्। कृत्स्नोऽपि वेदो महान् एको वृक्ष इति महर्षिवर्णितम्। तत्र शाखाः नाना। मन्त्रब्राह्मणात्मना भिन्नानेक वाक्यराशिसंस्यैवैकैकशाखात्वेन व्यवहारश्च दर्शितः। 'सर्वे वेदा यत्पदमामनन्ती'त्यादिना सपरिकरब्रह्मरूपैकार्थप्रतिपादकत्वमपि प्रसिद्धम्। एवं व्याख्येयस्यैकत्वात् तत्र पूर्वोत्तरभागसंबन्धिनामेकरूपव्याख्याभागानामैक्यं कथं नामापलपितुं शक्यते? व्याख्येयानामनेकत्वेऽपि तत्सर्वानुबन्धिविचारात्मा भवितुमर्हत्येकः प्रबन्धः, यथा कवि-

काव्य-शास्त्रतदवान्तरप्रस्थानचरित्रविमर्शादि:। अत: किञ्चिद्रूपेणैक्यमुपन्यस्यमानं विशिष्य ग्रन्थकर्तृहृदयारूढं न शक्यं प्रत्याख्यातुम्। एवमपि जैमिनिर्वेदार्थजिज्ञासेति वक्तव्ये धर्मजिज्ञासेति धर्मशब्दं प्रयुञ्जान: सूचयति, धर्माणां यागदानादीनां वस्तुतो ब्रह्मसमाराधनत्वेनैव कार्यकरत्वेऽपि तत्तत्त्वमविदुषामपि धर्मा: न नाम न फलन्ती—इत्यादि। सूचनाद्धि सूत्रमित्याहु:।

यत्तु—वेदार्थविचारस्य रागप्राप्तत्वे कृत्स्नस्य वेदस्य विचार: कर्तव्य इति कथं सिद्ध्येदिति—तत्रोच्यते। विचार: कर्तव्य इति मा सैत्सीत्। किं तेन?। लोके च विध्यधीनप्रवृत्तिस्थलापेक्षया च रागप्राप्तप्रवृत्तिस्थले प्रवृत्तिबाहुळ्यमेव लोकसिद्धम्। 'स्वाध्यायोऽध्येतव्य' इत्यक्षरराशिग्रहणस्य सङ्गविषयकस्य सर्वेष्टत्वाच्च तत्र विध्यधीनं प्रवृत्तानां रागप्राप्तविचारप्रवृत्ति: स्वयमेव सेत्स्यति। "ब्राह्मणेन निष्कारणेन षडङ्गो वेदोऽध्येतव्यो ज्ञेयश्च" इति विधिसद्भावात् कथं विचारस्यावैधत्वमिति चेन्न—तेनैव वाक्येन अध्ययनविधेर्विचारविधिपरत्वाभावस्य ज्ञायमानत्वात्। यद्यध्ययनविधिरेवार्थज्ञानपर्यन्तसर्वविचारमपि विदध्यात्, तर्हि ज्ञेयश्चेति व्यर्थमेव भवेत्। अङ्गविषये अक्षरराशिग्रहणमात्रं न पर्याप्तमिति बोधयितुमपि ज्ञेयश्चेत्युक्तं स्यात्। वस्तुतो यत् विधिप्राप्तं षडङ्गवेदाध्ययनम्, यश्च रागप्राप्त: विचार:, तत् सर्वं निष्कारणपरिशीलनं कार्यं। ब्राह्मणस्य, प्रवचनप्रधानत्वात्। अत: स्वानुष्ठानोपयुक्तमात्रं स्वविचार्यमिति धियं विसृज्य परोपकारधिया कृत्स्नविचार: कर्तुमुचित इत्येतावदेवात्र विवक्षितम्। तथा च **शङ्ख:**—"एतानि ब्राह्मणोऽधिकुरुते स च वृत्तिं दर्शयतीतरेषाम्" इति। **मनुश्च**—"विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नत:। शिष्येभ्यश्च प्रवक्तव्यं सम्यक्—॥" इति।

यदपि—षडङ्गसर्ववेदार्थविचारस्यापि एकग्रन्थत्वापत्तिरिति—तत्र किञ्चित् तादृगपीष्टमेव। केनचित् सर्वाण्यङ्गानि सर्वञ्च वेदमधिकृत्य कस्यचिदेकस्य ग्रन्थस्य कर्तुं शक्यत्वात्। यथा सर्वदर्शनसङ्ग्रह:, सर्वमत-

सङ्ग्रहः इत्यादि । अलङ्कारग्रन्थाश्चैवम्भूता लक्ष्यन्त एव । यद्यपि वेदे अर्थविशेषनिर्णयो व्याकरणाधीनोऽपि—अथापि व्याकरणमात्राधीनत्वमन्तरा व्याकरणविचाराधीनत्वे साऽपि मीमांसैव ; न्यायमूलं निरूपणात् । यथा अहीनशब्दस्य, न हीनः इति व्युत्पत्त्या, "अह्नः खः क्रतौ" इति वृत्त्यन्तरेण चेत्येवम् । उक्तं हि—

"रूढिश्चेयं द्विरात्रादौ सा च योगात् बलीयसी ।
तत्रापि यौगिकत्वं चेत् न सत्रेऽस्वप्रयोगतः ॥

मध्योदात्तं पदं चेदं अतः खप्रत्ययान्ता (3-38)" इति ।

परंतु क्वचित् जैमिनीयादिकण्ठोक्त्या, क्वचिन्न्यायातिदेशेन, क्वचित् स्वतन्त्रविचारेण च स निर्णयो भवेत् । सर्वथा स विचारस्तु न व्याकरणम् । किञ्च वाक्यार्थनिर्णयः वाक्यरूपमीमांसाशास्त्राधीनः । पदार्थनिर्णयस्तु व्याकरणादिनाऽपि ।

यत्तु—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इत्युक्तं वाक्यैकत्वं न जैमिनीयधर्ममीमांसाबादरायणीयब्रह्ममीमांसयोरिति—तत्र किं "देवस्य त्वा सवितुः प्रसवे" इत्यादाविव परस्परान्वितपदसमुदायत्वरूपं वाक्यैकत्वं न भवतीत्युच्यते, किं वा, "स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते" इत्युक्तविधया वाक्यैकवाक्यतारूपमहावाक्यत्वं नास्तीति । आद्यमस्माकमपीष्टम् । अन्त्यं तु दुर्वचम् । ब्रह्मणः कर्मसमाराध्यत्वात् ब्रह्मज्ञानस्य कर्माधीनत्वादङ्गाङ्गिबलादेकवाक्यतास्वीकारात् । न हि जैमिनिः स्वतन्त्रफलसाधनत्वमेव मीमांसायामाहेति मन्तव्यम् । श्रुत्यादिप्रमाणानां विनियोजकत्वे व्युत्पादिते तद्बलेन यत्र यस्य विनियोगः तस्य तदर्थतायास्तदिष्टत्वस्य दुरपह्नवत्वात् । न हि मीमांसान्यायः, यत् उदाहृतम्, तन्मात्रविषयक इति कश्चित् मन्येत । एक-

मादर्शयतस्तादृशां सर्वेषामेवाभिसंहितत्वात् । न च जैमिनिर्विघ्नवशात् ब्रह्ममीमांसां न चकारेति ब्रूमः ; बादरायणे तु गुरावायत्तत्वादेवेति ।

यत्तु—द्वयोर्मीमांसाकारयोर्गुरुशिष्यभावं भारतोक्तं स्वीकृत्यापि—मध्यमाधिकारिविषयं शिष्यकृतं शास्त्रम् ; उत्तमाधिकारिविषयं गुरुकृतमिति भेदकल्पनम्—तेन मध्यमाधिकारिणमप्युत्तमाधिकारिणं कारयितुमेव गुरुः शिष्यं निबन्धने न्ययूयुजत् । सोऽपि क्षुद्रफलाद्युपदेशेन वैराग्यमभिवर्ध्य ब्रह्मविचारे प्रैरयदित्येकवाक्यत्वमेव । अन्नमयप्राणमयादिस्थलेऽप्येकवाक्यताऽस्त्येव । एवं भूमविद्यायामपि, "श्रुतं ह्येव मे भगवद्दृशेभ्यः" इत्याद्युपक्रमानुसारेणैकवाक्यताऽप्यस्त्येव । भवताऽपि, "स्वशिष्यजैमिन्युपदिष्टमार्ग एव विश्रान्तान् पुनरपि तापत्रयातुरान् कर्मफलानित्यत्वदर्शनेन तत्र विरागेण नित्यफलान्वेषिण उद्दिश्य ब्रह्ममीमांसा प्रवर्तिता" इति स्वाभिमतोपपादकेनैव वाक्येनैकशास्त्र्यमप्युपपादितमेव ; कर्मविचारानन्तर्यस्येष्टत्वात् । सूत्रकारश्च गृहस्थस्येव यत्यादेरपि यथायथं कर्मापेक्षां दर्शयति, "विहितत्वाच्चाश्रमकर्मापि", "अत एव चाग्नीन्धनाद्यनपेक्षा", "यज्ञादिश्रुतेरश्ववत्" इत्येवम् । यज्ञादीत्यादिपदम्, "तपसाऽनाशकेने"त्येतदपि गृह्णाति । विधुरादीनामप्यधिकारं स्थापयन् सर्वत्रेतिकर्तव्यतां यथार्हं दर्शयत्येव । एवं तृतीयस्य तृतीये विद्याम्, चतुर्थे कर्म च निरूपयन् तदन्ते, "ऐहिक"मिति सूत्रे कर्मतो विद्योत्पत्तिकालं च निरूपयन् कर्मणां विद्याङ्गत्वमेव मन्यते । न हि भवद्भाष्येऽपि ऐहिकसूत्रे कर्मजन्या विविदिषा ऐहिकी वाऽन्यथा वेति विचारितम् । अतः उक्तसर्वाश्रमकर्मसाध्या विद्येति स्पष्टम् ॥

यत्तु पृच्छ्यते कर्मफलानित्यत्वं जैमिनितदनुयायिभिः कुत्र व्युत्पादितमिति—तत्र ब्रूमः । 'कर्मफलमेव नित्यम्, तस्मात् ब्रह्मेति किञ्चिदस्तीति न मन्तव्यम्', इति तावत् जैमिनिर्नोपदिदेश । अतो विरुद्धत्वं न संभवति । एवञ्च "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतञ्च तत् सुखं स्वः

पदास्पदम्' इति स्वर्गस्य नित्यत्वश्रवणात्—'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती'ति वाक्यतः चातुर्मास्ययागे कृते सर्वस्यापि सुकृतस्य नित्यफलकत्वसंभावनया च कर्मफलनित्यत्वप्रत्याशया प्रवृत्तस्य तत्स्वीकारेण प्ररोचनस्याभिधानादेव, 'पुण्यचितो लोकः क्षीयते' इत्येव तदभिसन्धिरिति विज्ञायेत व्युदपादि च तदनित्यत्वमपि—तद्यथा—"फलस्य कर्मनिष्पत्तेः तेषां लोकवत् परिमाणतः फलविशेषः स्यात" (1—2—17) इति सूत्रे कर्मफलं यथायथं भवत् परिमितमित्युक्तम् ।

एवं 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः,' 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ती''ति क्षयिष्णुतया प्रतीयमानात् स्वर्गात् अतिशयितं मोक्षं कर्मणः साक्षात् फलं नैच्छत् जैमिनिः । यतश्चतुर्थतृतीये कर्मणामनुभूयमानफलानां सर्वफलजनकत्वं स्यादित्याशङ्क्य, 'एकं वा चोदनैकत्वा'दित्येकमेव फलमित्यभिधाय, तदपि फलम्, "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" इति सूत्रेण स्वर्ग एवेत्याह । तेन ज्ञायते कर्मजन्येषु फलेषु स्वर्ग एवातिशयित इति । अत एव नित्यफलसिद्धिः कर्मतो नास्ति, अल्पास्थिरफलकं कर्मेति व्युत्पादितं भवति । एवं कर्मणां साक्षात् नित्यफलानुपयोगेऽपि किञ्चिद्द्वारा भवत्युपयोग इति "विविदिषन्ति यज्ञेने"त्यादि प्रदर्श्य व्युदपादि बादरायणेन । एवं तत्र योगसिद्ध्यधिकरणे प्रतिफलं कर्म पृथक् प्रयोक्तव्यमिति बोधनात्, स्वर्गातिरिक्तफलार्थं विहितस्य स्वर्गार्थत्वं न भवतीति बोधनाच्च पुरुष एवं शिक्षितो भवति—येनोपायेनानुष्ठीयमानेन यस्य फलस्य लाभे सर्वमन्यत् समुद्रे गोष्पदमिव तत्रान्तर्भवेत्, तदेव फलं तेनोपायेन संपाद्यम् । किमेभिरसकृदावर्त्यमानैः कर्मभिरिति । पञ्चमे च, "अङ्गवत् क्रतूनामानुपूर्व्यम्" (3—32), "न वाऽसंबन्धात्" (33) इत्यत्र, 'यथापाठं न काम्यानुष्ठानम्-किन्तु यस्य यत्काम्यकर्मजन्यफलकामना यदा, तेन तस्य तदाऽनुष्ठानमित्येवं काम्यकर्मानुष्ठानानियमोऽपि दर्शितः । तत्रैव, ."स्याद्विद्यार्थत्वात्''इति पाठक्रमस्य विद्यायां (अक्षरराशिग्रहणे) उपयोग उक्तः ।

षष्ठे च "कर्तुर्वा श्रुतिसंयोगात् विधिः कार्त्स्न्येन गम्यते" (1-5) इत्यत्र तिर्यगादीनामनधिकारे शबरस्वामी अभाषिष्ट, "न देवानां देवतान्तराभावात ; न ऋषीणाम्, आर्षेयाभावात्". इति। देवानां विग्रहाद्यभावादनधिकारो नोक्तः ; किन्तु देवतान्तराभावात्। इमं जैमिन्यभिप्रायमेव मधुविद्यायामतिदिश्य बादरायणः, "मध्वादिष्वसंभवादनधिकारं जैमिनिः" इति पूर्वपक्षं प्रवर्त्य—"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः। तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥" इति (9) गीतोक्तरीत्या सर्वत्रान्तर्यामिपर्यन्तयजनस्यैव विध्यर्थत्वात् देवाः स्वान्तर्यामिणमाराधयितुमर्हन्ति। यथा हिरण्यगर्भः इन्द्रादिदेवत्यमश्वमेधयज्ञमनुतस्थौ। किञ्च वसुत्वेन स्थितस्यापि पुंसोरुद्रादिभोगस्येदानीमभावात्, मधुविद्यायाः तस्यापि फलस्य भावात् अस्ति वसूनामप्यधिकारः। अपि च न केवलं वस्वादिप्राप्त्यर्था मधुविद्या। उदयास्तमयराहित्येन एकरूपस्थितिरूपमोक्षफलस्याप्यत्रोपक्षिप्तत्वात्। अत एव चेयमुपासना न कदापि वस्वादिमात्रविषयिणी भवितुमर्हति। देवतान्तरमात्रोपासने मोक्षायोगात्; "नान्यः पन्थाः" इति श्रुतेः। एवञ्च मधुविद्यावाक्यनिविष्टं ब्रह्मविद्यापदं वेदविद्यामित्यर्थपरं वाऽस्तु, वस्तुतो ब्रह्मविषयकत्वात् तद्विद्येत्यर्थपरं वा। सर्वथा देवताधिकारः सिद्ध्यत्येवेत्यभिसन्धाय तेषामप्यधिकारोऽस्तीति सिद्धान्तयामास। अतो जैमिनेः देवताविग्रहाद्यपलापो नेष्टः।

देवताधिकरणे च (8—1—9) व्याख्यातृभिः देवताविग्रहादौ निषिध्यमानेऽपि न जैमिनिस्तथा लक्ष्यते। अतिथिवत् देवतायाः प्राधान्यं परं निषेधति। लोके आतिथ्ये अतिथिः प्रधानम्। तत्प्रीतिमुद्दिश्य क्रियमाणमातिथ्यं तदिच्छानुरोधेनोच्चावचं तदिष्टभक्ष्यभोज्यादिसंग्रहणेन स्यात्। यागे तु, तत्तत्काले देवता कामयत इति कृत्वा श्रुतिविहितं द्रव्यं यागप्रकारं च परिहृत्य

न द्रव्यान्तरेणान्यथा यष्टुं शक्यम्। यागहोमादि यत् यथा विहितम्, तत् तथैव कार्यमिति देवताया उपसर्जनत्वमेव। देवतायाः संप्रदानत्वेन देयद्रव्यभाक्त्वेनाभिप्रेयमाणतया प्राधान्यसद्भावेऽपि फलस्यैव मुख्यप्रयोजनतया भाव्यत्वेन भावनायामन्वितत्वात् देवता गुणतयैवान्वेति विधिवाक्ये इत्येव चाह।

एकादशे च (11-1-29) 'क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात्' इत्यत्र काम्यकर्मणामावृत्तौ फलभूमवत् अङ्गावृत्तौ फलभूमानमाशङ्क्य परिहृत्य क्रतुफलान्यत्वादावृत्तिर्युक्तेत्युक्तम्। किञ्चाग्निहोत्रादेर्नित्यमनुष्ठीयमानादेव स्वर्गार्थे सङ्कल्प्य तत्प्राप्तौ शक्यायां स्वर्गार्थिनानाकाम्यविधानं ज्ञापयति— एकविधस्वर्गप्राप्ताविव स्वर्गान्तरेपीच्छा संभवतीति। एवं प्रकृतिक्रतुनैव साध्ये स्वर्गे विकृतिक्रतुविधानतोऽपिफलवैषम्यादि ज्ञापितं द्रष्टव्यम्। बहुकर्मनिष्पाद्यानि बहुविधानि फलानि युगपदनुभवितुमशक्यानि क्रमेणैवीभोक्तव्यानोति सिद्धमेव कर्मफलानित्वमिति।

यत्तूच्यते कर्मविचारेण कर्मणामल्पास्थिरफलत्वे निश्चिते ब्रह्मविचिचारयिषेति चण्डमारुतोक्तमनुपपन्नम्। "यथेह कर्मचितो लोकः क्षीयते" इति प्रत्यक्षदृष्टान्तानुगृहीतानुमानबलेनैव तदनित्यत्वसिद्धेरिति—तन्न। श्रुत्या नित्यत्वेनावगतस्य दृष्टान्तबलेनानित्यत्वानुमानायोगात् विचार्यैव तस्य निर्णयत्वात्। व्यक्तमिदमादावेव श्रीभाष्ये। "धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" इति भवद्भाष्यम्, अध्ययनस्य वैधत्वेऽपि विचारस्य वैधत्वाभावात् कर्मविचारं विना ब्रह्मविचारकरणेऽपि न प्रत्यवाय इत्येतावत् ज्ञापयेत्। तथा धर्मविचारेछभाविरहविशिष्टब्रह्मविचारेच्छा ब्रह्मविचारकारणम्। तत्र धर्मविचारेच्छाविरहः धर्मविचारस्य निष्पन्नत्वाद्वा स्यात, विचारफलस्य कर्मफलानित्यत्वनिर्णयस्य प्रकारान्तरेण संपन्नत्वाद्वेति तदाशयः। 'ब्रह्मज्ञाने कर्मणामनुपयोग' इति सिद्धान्तस्यैवासिद्धेः, कर्मफलानित्यत्वनिर्णयायेव तदनुष्ठानार्थमपि तद्विचारस्य कार्यतया विचारनिष्पन्नताप्रयुक्त एव विचारे-

च्छाविरह इति विचारानन्तर्यं प्राचीनव्याख्याहतं समीचीनमिति श्रीभाष्य-हृदयम्। किञ्च अथातो धर्मजिज्ञासेत्यत्र अथेति वेदाध्ययनानन्तर्य-मुच्यते। तत्राध्ययनानन्तरमेव कर्मविचार इति सूत्रतात्पर्यम्, उत अध्यय-नानन्तरं कर्मविचार एवेति। आद्ये अध्ययनं विना न कर्मविचार इत्येव सिद्ध्या न, अधीत्य स्नायादित्युक्तस्नानबाधावश्यकता। अन्त्ये धर्मजिज्ञा-सायाः प्राक् ब्रह्मविचारे तद्विरोध इति।

यत्तु...."चण्डमारुत (?) मपि शारीरके पूर्वमीमांसोपजीवित्वाभावस्य साधिका युक्तीः परीमळोक्ताः हृदयेन आद्रियते" इति—तदिदं विप्रलम्भमा-त्रम्। पूर्वमीमांसोपजीवित्वं प्रायेण शारीरकसूत्रे प्रत्यक्षमीक्ष्यमाणं भवद्भिः नेत्रे पांसुभिरवकीर्यैव निषेधनीयमिति किं पिष्टपेषेण। शतदूषण्यां कर्ममात्रे विचारं सङ्कोचयतः कबन्धमीमांसकस्य दूषणावसरे, "कर्मशेषभूतस्यात्मनः शास्त्रान्तराद्विचार इति वदताऽपि शारीरकं शास्त्रैकदेश इति स्वीकर्तव्यम्" इत्युक्तं दूषयितुं यदुपन्यस्यते—कर्ममीमांसाप्रतिपाद्य आत्मा अहमर्थः कर्तृत्वादि-विशिष्टः, ब्रह्ममीमांसावसेयं तु चिन्मात्रमकर्तृ अभोक्तृ चेति, तथा देहाति-रिक्तत्वज्ञानमात्रमात्मनः प्रत्यक्षानुमानादिगम्यम्, न वेदान्तविचाराधीनमिति च—तत्रोच्यते—ब्रह्ममीमांसायां चिन्मात्रमकर्तृ अभोक्तृ चेति आत्मस्वरूपं कुत्र प्रतिपादितमस्ति? प्रत्युत, "ज्ञोऽत एव" इति सूत्रेण ज्ञातृत्वम्, "कर्ता शास्त्रार्थवत्त्वात्" इति कर्तृत्वम्, तथा, तत एव, "भोगमात्र-साम्यलिङ्गाच्च" इत्यादिना च भोक्तृत्वञ्चैवात्मनो मुक्तकण्ठं स्थाप्यते। "एक आत्मनः शरीरे भावात्" इत्यधिकरणं मनसिकृत्य शतदूषण्यामेव-मुक्तमित्याशयवर्णनमपि विचार्यम्। भवत्संमतव्याख्यादरणे ह्येतदधिकरणं मनसि कृतं स्यात्। श्रीभाष्यवर्णितव्याख्याप्रकारसमादरणे तु नेदमधिकरणं हृद्गतं भवितुमर्हति। असन्मते देहातिरिक्तात्मस्थापनार्थमेतदधिकरणप्रवृत्त्य-भावात्। परमात्मवत् जीवात्मनोऽप्युपास्यतया, तत्स्वरूपं कीदृशमनुसन्धेयमिति विचार्य अपहतपाप्मत्वादिप्रजापतिवाक्योक्ताकारविशिष्टतच्छुद्धस्वरूपोपासननि-

र्णयार्थत्वादस्य । तर्हि वयम् अयमकर्तृत्वाभोक्तृत्वादिविशिष्टचिन्मात्रात्मशोधनार्थमिति ब्रूम इति चेत्—"आनन्दादयः प्रधानस्य" इति ब्रह्मस्वरूपानुसन्धानस्य शिक्षिततया जीवब्रह्मैक्यात् जीवस्वरूपानुसन्धानप्रकारः पुनरपि न वर्णनीय इत्य-धिकरणवैयर्थ्यापातात् । भवद्भाष्याद्यावपि देहातिरिक्तात्मस्थापनार्थमेवैतदधि-करणं स्वीकृतम् । अतः यदुक्तं भवता, प्रत्यक्षानुमानावगम्यः देहातिरेकः न वेदान्तविचार्य इति, तेन भवद्भाष्यदूषणमेव कृतं भवति । देहातिरेकस्थापनार्थ-ताया एव तदिष्टेः ।

उक्तं हि—"इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय" इति । अत्र कृत्स्नशास्त्रेति पूर्वोत्तरमी-मांसैकशास्त्र्यं विवक्षितमिति समनन्तरमेव निरूपयिष्यते । अत्र क्रियमाणो विचारः पूर्वमीमांसोक्तकर्मकलापानुष्ठानोपयोगीति स्पष्टं ब्रुवता हि कर्तृत्वभोक्तृत्व-विशिष्टाहमर्थस्थापनमेवात्र क्रियत इति वक्तव्यम् ।उपासनेष्वपि तादृशस्यैवाधि-काराच्च । सर्वथा देहातिरेकस्थापनार्थत्वं मुक्तकण्ठं भाष्याभिहितमेवेति तस्यांशस्य प्रत्यक्षानुमानगम्यत्ववादिना भाष्यमिदं प्रत्याख्यातमेव भवति । पूर्वमीमांसातः प्रागेवात्मनो देहातिरेके असंदिहानस्य द्वितीयाध्यायतृतीयपाद—तृतीयाध्याय-प्रथमपादाद्यर्थावगत्यनन्तरमप्ययं महान् संदेहः समापतित इति विचित्रमेतत् । तर्हि शतदूषण्यां केनाशयेन शारीरकं कबन्धमीमांसकदूषणावसरे प्रस्तावमना-यीति चेत्—अस्तु तत् भवद्भाष्यदृष्ट्या । वस्तुतो, "नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः, "ज्ञोऽत एव", "कर्ता शास्त्रार्थवत्त्वात्" इत्यादीनि सूत्राणि तत्राभिसंहितानीति प्रतिपद्यताम् । अत एव,

"इत्याह नास्तिक्यनिराकरिष्णुः आत्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥"

इति कुमारिलवचनं तन्मूलभूतं शबरोपवर्षादिवचनमपि तत्तत्सूत्राभि-प्रायेणेति वेदितव्यम् । "ब्रह्मसूत्रपदैश्चैव" इति गीताभाष्ये च, "नात्मा

श्रुते''रित्यादिब्रह्मसूत्राभिप्रायेण श्लोकप्रवृत्तिः स्पष्टमुक्तेति, "प्रयाति वेदान्तनिषेवणेने''त्येतदपि तद्विषयमेवास्मत्पक्षे ।

भवता चात्र शरीरेभावाधिकरणं प्रस्तुवता तत्र भवद्भाष्ये कण्ठरवेणोक्तमैकशास्त्र्यं प्रतिक्षिप्यत इति कुतोऽयं विप्रलम्भः ? । तथा च भाष्यम्— "ननु शास्त्रप्रमुखे एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तम् । सत्यमुक्तं भाष्यकृता । न तु तत्रात्मास्तित्वे सूत्रमस्ति । इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम् ; अत एव चाऽऽकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ, शारीरके वक्ष्याम इत्युद्धारः कृतः । इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय'' इति । अत्र भाष्यकृतेति पूर्वं निर्दिश्य पृथक् शबरस्वामिप्रस्तावात् शाबरभाष्यातिरिक्तं प्राचीनं किञ्चिद्भाष्यमासीदित्यपि स्वरसतो गम्यत इत्यन्यदेतत् । कर्मफलोपभोगयोग्यदेहातिरिक्तात्मस्वरूपस्थापनं पूर्वोत्तरतन्त्रशेषमत्र क्रियत इति स्पष्टम् । पश्यत जैमिनिबादरायणयोः परमं सङ्केतम्—'शरीराधीनकर्मतदनुबन्धिदेवताविचारः प्रथमेन कार्यः; तत्कर्तृजीवात्मतदाराध्यपरदेवतारूपशारीरद्वयविचारः शारीरके द्वितीयेन कार्य' इति । एवं मिथः सापेक्षत्वात् सुदृढमैकशास्त्र्यमिति भवद्भाष्यमेव दर्शयति । अर्वाचीनाः परस्सहस्रयुक्तिप्रदर्शनेन यथामनोरथं नृत्यन्तु । सर्वं शाङ्करभाष्यस्पष्टविरुद्धमिति सर्वथोपेक्षणीयमेव । कर्मविचारानन्तर्यमथशब्दार्थ इति शाङ्करभाष्ये न स्वीक्रियत इति सत्यम् । ऐकशास्त्र्यं स्वीकृत्यैव तन्नेष्यत इत्येतदेव हृद्यम् । अतः ऐकशास्त्र्यसमर्थनवादोऽपि भवता वादान्तरद्वयवत् न परीक्षणीय इत्यलमेतावत् । अथापि शेषमपि भवदुक्तं मात्रया विमृश्यते ।

"संविन्मात्रमज्ञातृ आत्मस्वरूपं तु कर्मविचारे अनुपयुक्तमिति कृत्वा आत्मतत्त्वविचारस्तत्र न कृत'' इति भवतोच्यते । यदुपर्युक्तं स्वरूपं देहातिरिक्तत्वनित्यत्वादिरूपम्, तदपि तत्र न विचारितम् । भवदिष्टमात्मस्वरूपं वाद-

रायणेनापि न विचारितमिति प्रागेवोक्तम् । भवदिष्टात्मस्वरूपपरत्वाभावाच्छारीरकस्य पूर्वतन्त्रेणैकशास्त्र्यं सुस्थम् । बृहत्यां तु यद्वाक्यम्, "विज्ञानरूपता तु विज्ञातुरनाशङ्कनीया अनाशङ्कितत्वा , युक्तश्चानाशङ्कित"मित्यादि, तत्र प्रथमवाक्यं तावत, 'आत्मा न ज्ञानरूपः तथाशङ्काया अप्यनवकाशा'दिति वेदान्तिपक्षमुपमर्द्य, युक्तश्चेत्यादिना अङ्गीकृत्यापि समाधानमुच्यते । सर्वं वाक्यमेकपक्षपरमेवेति स्वीकारेऽपि विज्ञातृत्वेन सहितं ज्ञानरूपत्वमेव तेनोच्यत इति अस्मन्मतानुकूलमेव तद्वाक्यम् । "विज्ञानरूपता तु विज्ञातुः" इति किल वाक्यमुदाहृतम् । तत्र विज्ञातृत्वमिष्टमिति स्पष्टम् । वस्तुतः इमे गुरवः प्रभाकाराः अद्वैतवादं खण्डयन्त्येव । जगन्मिथ्यात्वनिर्विशेषसत्यत्वयोः तदानिष्टत्वा । यदिमे, "यत्तु ब्रह्मवादिनामेष निश्चयः, यदुपलभ्यते, न तत् तथ्यम् ; यन्नोपलभ्यते तत् तथ्यम् इति । नमस्तेभ्यः ; विदुषां नोत्तरं वाच्यम्"इत्यद्वैतिलोकं परिहसन्ति ।

पूर्वोत्तरमीमांसयोर्मिथ उपजीव्योपजीवकभावः उक्तरीत्या नापह्नवमर्हति । धर्ममीमांसायाः पूर्वत्वञ्च सर्वसंमतम् । वक्ष्यमाणमुपजीव्य पूर्वं किञ्चिद्विचार्यत इत्येतत् पूर्वतन्त्रे शारीरके च बहुळं प्रसिद्धम् । कर्मविचारमन्तरा तत्फलास्पत्वादिनिर्णयो न भवतीति, 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजे'दिति च प्रागेवोक्तम् । भवताऽपि संन्यस्तव्यतिरिक्तानाम् आजीवन्मुक्ति यज्ञादिकर्मानुष्ठानावश्यकत्वस्वीकरणात् सांप्रतिकानाञ्च विचारकाणां प्रायेणासंन्यस्तत्वात् ते कर्मविचात् पूर्वमेव ब्रह्मविचारे प्रवर्तितुमर्हन्ति । संन्यस्ता अपि शिष्यगृहस्थादिशिष्यशिक्षाकौशलसंपत्तिकामास्तथैवेति सिद्धं भूयसांन्यायात् कर्मविचारानन्तर्यं ब्रह्मविचारे अथशब्दविवक्ष्यं भवतीति । काचित्कव्यतिरेकमात्रेण तदस्वीकरणे साधनचतुष्टयसंपत्तिरप्यद्यतनेषु विचारकेषु व्यतिरेकादुपेक्ष्येति चोक्तमेव ।

श्रुतिलिङ्गादिबलाबलादिकं ब्रह्मतर्कसिद्धं लोकसिद्धञ्चेति न चण्डमारुतेऽपि दूरितमिते यदुच्यते—तत्र ब्रूमः । यत् स्वत एव दूरे पतितम्, न तत् चण्डमारुतेनापि प्रक्षेप्यम् । ब्रह्मतर्कः शशशृंगायमाणः । लोकोऽपि स्वातन्त्र्येण श्रुतिलिङ्गादिषु न व्युत्पत्तिलवमप्यश्नुवानो दृश्यते ।

न हि जैमिनिरपि श्रुतिलिङ्गादेर्बलाबलमविद्यमानं प्रभावतः साधयतीति कश्चिन्मन्वीत। स्थितस्य व्युत्पादनं तु तत्कृत्यम्। जैमिनिव्यापारव्यवरहितलोकमूलं तदद्यत्वे नानाशास्त्रनिष्णातानामपि न ज्ञातं भवतीत्यानुभविकमेतत्। सर्वेऽपि ग्रन्थकाराः पाश्चात्यानामनभिज्ञानां ज्ञानसंपत्त्यर्थमेव ग्रन्थान् ग्रथ्नन्ति। एवमेव बादरायणोऽपि। 'किमनेन बादरायणेन, अस्माभिस्स्वबुद्ध्यैवाध्ययनसमय एवावधारितत्वात्'इति यदि कश्चिन्मन्यते, तावता बादरायणकृत्यं न निष्फलं भविष्यति। अन्यथा श्रवणमात्रेण साक्षात्कृतब्रह्मजीवैक्यानां मननादिं व्यर्थमिति कृत्वा, "मन्तव्यो निदिध्यासितव्य" इत्यादिश्रुतयोऽपि नाद्रियेरन्।

उपकारभेदात् विद्यास्थानपार्थक्यमिति प्रागेवोक्तत्वात्, "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इति विद्यास्थानानां चतुर्दशत्वगणना निर्बाधा। अत्र मीमांसेति संग्रहणात् मीमांसाशास्त्रमेकमिति न वयं ब्रूमः। प्रमाणान्तरसिद्धानामेकानेकभूतानां विद्यास्थानानामुपकारभेदात् चतुर्दशभूतानां परिगणनपरत्वाद्वाक्यस्य। उपकारभेदश्च पुराणानां सेतिहासानां वेदार्थोपबृंहकत्वम्, न्यायस्य तर्कानुमानस्वरूपशोधकत्वम्, मीमांसायाः वेदवाक्यार्थनिर्णायकतर्कसमर्पकत्वम्, धर्मशास्त्राणां धर्मसारसङ्ग्राहकत्वम्, अङ्गानां वर्णपदतदर्थनिर्णयहेतुत्वम्, वेदानां हौत्राध्वर्यवोद्गात्रब्रह्मधर्मविशिष्टपुरुषार्थसाधनावबोधित्वमित्येवंरूपः। "मीमांसा वेदवाक्यविचाररूपे"ति च मिताक्षरा। अतो नेदं मीमांसापदम् अभेदस्य भेदस्य वा साधकम्। तदिदं शतदूषण्यामेवोक्तम्, "न च धर्मशास्त्रवत् महर्षिभिः पृथक् परिसंख्यानम्" इति। प्रत्युतैक्यमेव वृत्तिकारादिभिः उपवर्णितमिति किमित्यकाण्डे तन्निषेधसंरम्भोऽर्वाचामिति च श्रीभाष्यादितोऽपि सिद्धमेव। यत्तु—अत्र श्लोके धर्मपदविद्यापदयोः श्रवणात् धर्ममीमांसा विद्यामीमांसा च विभिन्नेत्येव ज्ञाप्यत इति—तन्न—तथा सति पञ्चदशत्वप्रसङ्गात्। विद्यानामिति, स्थानानीति च बहुवचनात् पुराणादिव्यप-

न्वयात् विद्यास्थानानि पुराणादीनि चतुर्दश, धर्मस्थानानि तदन्यानि चतुर्दशेति अष्टाविंशतित्वप्रसंगो वा । एवं स्थिते, "उपकारभेदात् प्रस्थानभेदं वदन्तः शतदूषणीकाराः स्वदन्तैः स्वाङ्गुळिं दशन्ती''ति भवद्दूषणमलमम् । धर्मविद्यान्यतरस्थानत्वमनुगतधर्म इति चेत्—तर्हि वेदे कर्मब्रह्मभागभिन्नेऽप्येकत्वमिव, निर्बाधं मीमांसैकत्वम् । अतः सर्वस्यापि शब्दराशेः तत्त्वज्ञानजननमुखेनैवानुष्ठानोपयोगात् सर्वाण्यपि विद्यास्थानानि च धर्मस्थानानि चेत्येव श्लोकार्थः । तावता च शारीरकस्यापि धर्मस्थानत्वस्यावश्यकत्वात् अविधेयज्ञानैदम्पर्यमस्य भवत्संमतमनेन याज्ञवल्क्यवचनेन व्युदस्तं भवति । तेन बृहदारण्यके याज्ञवल्क्योपदेशाः सर्वे धर्मभूतोपासनैदम्परा इति च ज्ञापितं भवति ।

यत्तु—पुराणानां सात्त्विकराजसतामसविभागः न सत्त्वरजस्तमोमूलत्वकृतः ; किन्तु सत्त्वाद्यधिष्ठातृदेवतापरत्वकृत इति—तत्खण्डनं **भावप्रकाशिकायां** जिज्ञासाधिकरणे स्थितम् । तथा स्वीकारेऽपि सात्त्विकानुसारिणामेव योगसंसिद्ध्या मोक्षवर्णनात् अन्यपुराणानामुपेक्ष्यत्वं स्पष्टम् । पुराणानामष्टादशत्वनिर्देशवत् मीमांसात्रित्वद्वित्वविषयप्रमाणाभावात् प्राक्तनोक्तमैक्यं निर्बाधम् ।

यत्तु—सङ्कर्षोदाहरणेन जैमिनेः सेश्वरत्वस्थापनमयुक्तम् । तस्य काशकृत्स्नकृतत्वादित्यादि—तत्रेदमवधेयम् । 'हरौ प्रतिष्ठा'मिति, 'हरौ प्रतिष्ठे'ति वा सङ्कर्षवाक्यं नाचार्यैरुदाहारि । "अन्ते हरौ तद्दर्शनात्" इत्यादि पुनरुदाहारि । अस्तु तावदयं संकर्षः काशकृत्स्नकृत इति—अथापि जैमिनीयसङ्कर्षान्तरप्रवचनपरेण काशकृत्स्नेन तद्द्रढयितुमेतत्करणात् काशकृत्स्नोक्तिबलादेव जैमिनेरपि सेश्वरत्वसिद्धिः । अस्यैव जैमिनिकृतत्वे तु सुतराम् । काशकृत्स्नकृतस्य जैमिनिकृतं प्रवचनमिति पक्षेऽप्येवम् । अत्राधिकरणसारावल्यादिश्लोकोदाहरणपूर्वकं वक्तव्यं सर्वमुक्तमधस्तात् ।

यत्तु ब्रह्ममीमांसायाः पाशुपतपाञ्चरात्राभ्यामिव धर्ममीमांसयाऽपि नैक्यम्, सिद्धान्तार्थविरोधादिति—तत्राविरोधे सर्वत्र ग्रन्थैक्यमिति न कश्चित् ब्रवीति। पाञ्चरात्रब्रह्ममीमांसयोः सिद्धान्तविरोधो नास्तीति भवदीयकृतं कल्पतरुमादायैव प्राक् स्थापितम्। तत् तस्य पाशुपतेन सह घटनं पूर्वाचार्यबहिष्कृतपाशुपतपक्षपातस्य हृद्गतस्य प्रदर्शकमात्रम्।

"शारीरके क्वचित्, 'तदुक्त' मित्येतावन्मात्रमुच्यते। 'अल्पश्रुतेरिति चेत्—तदुक्तम्' इति; अन्यत्र च दृष्टान्तोपन्यासपूर्वम्, 'प्रदानवदेव तदुक्तम्' इति। एतद्वैषम्यदर्शनात् ज्ञायते केवलं तदुक्तमिति प्रयोगः एकशास्त्रान्तर्गतविषयविवक्षायाम्। दृष्टान्तपुरस्सरं प्रयोगः भिन्नशास्त्रविषयाभिप्रायेणे"ति यदुक्तम्—तदनुपपन्नमेव, पृष्टस्य विषयस्यैव प्रागुक्तत्वे, "तदुक्त" मित्येतावन्मात्रप्रयोगः। प्रष्टस्य समाधाने विषयान्तरस्थितन्यायातिदेशेन वर्ण्यमाने तद्विषयनिरूपणप्रकारं स्मारयितुं दृष्टान्तोपन्यासपूर्वं तदुक्त मिति च प्रयोग इति वैषम्यहेतौ स्पष्टे अस्य शास्त्रभेदसाधकत्वकथनस्यासंबद्धत्वात्। न केवलं 'तदुक्त'मित्येव; अन्यथाऽपि पूर्वमीमांसां गृह्णाति;—"न चाधिकारिकमपि पतनानुमानात् तदयोगात्" इत्यत्र आधिकारिकपदेन मीमांसाषष्ठाध्यायरूपाधिकारलक्षणोक्तप्रायश्चित्तग्रहणात्। ग्रन्थान्तरं तु "समाचारे" इति नाम्ना निर्दिशति सर्ववेदान्तप्रत्ययाधिकरणे। एवं ग्रन्थनामनिर्देशं विना स्थलमात्रनिर्देशात् अस्य तस्य च भागस्य एकग्रन्थनिवेशोऽभिमत इति स्वरसमवसीयते।

यत्तु—धर्ममीमांसको जैमिनिः विरुद्धार्थवादी अन्यः। अविरुद्धवादी शारीरकोक्तो जैमिनिरन्यः। अत एव जैमिनिना कश्चिदन्यो जैमिनिः, "प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यात्", इति सूत्रे निर्दिष्टः इति—तत्रोच्यते—तर्हि "जैमिनीयेन षोडशलक्षणेने"ति वृत्तिकारेण गृहीतो जैमिनिः अविरुद्धार्थवादी जैमिनिरेवास्तु। तेन कर्मविचारः शारीरकानुकूलमेव शारीरकात् पूर्वं कृतोऽस्तु। तद्ग्रन्थमूलकर्मविचारानन्तर्यमेव प्राच्यैरस्माभिश्चोच्यत इत्यस्तु। तत्र कर्मफलानित्यत्वादिकं सुबहु वर्णितं स्यात्। एवंस्थिते

निरीश्वरमीमांसकजैमिनिकृतकर्मविचारमेव षोडशलक्षणीविलक्षणं द्वादशलक्षण्यात्मकं प्रपञ्चयन्तो निरीश्वरवादिनो व्याख्यातारः स्वग्रन्थप्रचारणेन महनीयग्रन्थप्रचारलोपमापादयामासुः, शाङ्करभाष्यप्रचारबलेन पूर्वाचार्यविहितानेकव्याख्याविलोपमिवेति मन्यताम्। तत् सुप्रतिष्ठितं विंशतिलक्षणमेकं शास्त्रमिति। कथमप्रसिद्धतमार्थोपन्यास एवमिति चेत्—जैमिनिद्वयविषयेऽपि तुल्यमेतत्।

षष्ठे प्रयुक्त जैमिनिपदविषयेऽप्युच्यते। तत्र 'कर्मभेदे तु जैमिनि....' *(6-34)* इति न सूत्राकारः; किंतु कर्माभेदं तु जैमिनिः—इति। यद्यपि आकरे सूत्रस्यास्य पूर्वपक्षविषयत्वमभिसंधाय, प्रयोगविधिनैकेनाङ्गप्रधानत्वाभिमतसर्वकर्मग्रहणात् प्रयोगविधौ काल्योगः सर्वेषामविशिष्ट इति दर्शपदेन पूर्णमासपदेन च सर्वग्रहणात् कर्मस्वविशेष इति सर्वोपसंहारशक्तस्यैवाधिकार इति व्याख्यानात् तस्य सिद्धान्तिजैमिनिपक्षत्वायोगात् अन्योऽसौ जैमिनिरिति विभावनीयमस्ति—अथापि वस्तुतः सर्वं सिद्धान्तविषयतयै वसुयोजम्।

तथा हि—"अपि वा"इति सूत्रेण प्रधानमात्रानुष्ठानेऽपि प्रत्यवायपरिहाररूपार्थनिवृत्त्या तावत्तु अवश्यकम्, अन्यदुपसर्जनमित्युक्तम्। तथापि, शक्तस्याङ्गानाचरणे दोषोऽस्तीति तत्प्रयुक्तोऽपि विशेषो ग्राह्यः, अङ्गानां प्रधानसंबन्धं विनाऽनुपयोगादिति, "तदकर्मणि च" इति सूत्रेण व्युत्पादितम्। तर्हि, एकेन एकमङ्गमनुष्ठीयते, अन्येन द्वे, अपरेण त्रीणीत्यव्यवस्थया अनेकप्रयोगवचनकल्पनापत्तिः; पुरुषभेदेन समयभेदेन चानेकप्रयोगवचनकल्पनमशक्यञ्चेत्याशङ्कायाम्—कर्माभेदन्त्विति सिद्धान्तोपपादकं सूत्रं प्रवृत्तम्। अङ्गसंबन्धभेदप्रयुक्तविशेषसद्भावात् प्रयोगवचनभेदमपि केचिन्मन्यन्ते। जैमिनिस्तु नैवम्। कर्मणः तदनुष्ठेयवर्गस्य अभेदं—क्रोडीकारमेवाह जैमिनिः। कथमभेदः, तत्तच्छक्तिभेदेन भेदादिति चेन्न—प्रयोगवचनेनैकेनैव सर्वेषामुपदेशात्। "यथाशक्त्यङ्गसहिताभ्यां दर्शपूर्णमासाभ्यां यावज्जीवं यजेत" इति यथाशक्तिपदनिवेशात् यथायथं सर्वसंग्रहः। शक्तस्याङ्गत्यागे प्रत्यवायश्च तत एव। इदमेव प्रकारान्तरेणोक्तं **पार्थसारथिमिश्रैः**, यदा यावन्ति शक्नोत्युपसंहर्तुमिति। सोमनाथीये च, "तदा तावद्भिरङ्गैरुपेतं

प्रधानमेनः क्षपयति" इति। यथाशक्तीत्युपबन्धे किं नियामकमिति चेत्— यावज्जीवं दर्शपूर्णमासाभ्यामिति वाक्ये उत्पत्तिवाक्यश्रुतकालसंबन्धितया दर्शपूर्णमासपदवाच्ययागषट्कमात्रे जीवननिमित्तकत्वावगमात् तदवश्यकर्तव्यत्वे सिद्धे, निष्फले प्रवृत्त्ययोगात् पापक्षयार्थतया दर्शपूर्णमासविनियोगे पश्चात् क्रियमाणे करणस्येतिकर्तव्यतापेक्षायां तदीयसर्वाङ्गान्वयप्रसक्तौ प्रथमश्रुतनिमित्तसंबन्धज्ञापितावश्यकर्तव्यत्वाविरोधेनाङ्गान्वयस्य स्वीकार्यत्वे सति यथाशक्तीति सर्वानुगमकोपबन्धसिद्धिः। अतः प्रत्यवायनिवृत्तिरेकस्याङ्गस्यानुष्ठानेऽपि सिद्धयति। यथा क्रत्वन्तरेषु सर्वस्वदक्षिणादौ विधीयमाने तत्तद्धनस्येयत्तायां तारतम्ये सत्यपि सर्वस्वपदं यथार्हं तत्तदधिकारिदीयमानं धनं युगपदेव ब्रूयात्, तथेह शक्यसर्वाङ्गविशिष्टेन प्रधानेन कुर्यादिति अनुगमय्य श्रुतिर्वक्तीति न शक्यत्यागप्रसक्तिः। इदमुपरि, "अर्थस्ये" त्यादिसूत्रेणोच्यते। शाबरत्यागेन वार्तिककौस्तुभादौ सूत्राणामर्थान्तरवर्णनं बहुत्र द्रष्टव्यम्; **सेश्वरमीमांसाया**मपि। तथेहाप्यस्तु। अयमस्मद्वर्णितश्च सूत्रार्थः अधिगतभाट्टदीपिकागमनिकानां सुग्रह एव। शाबरभाष्यमादृत्यापि एक एव जैमिनिः पूर्वपक्षे स्वनाम निर्दिशतीत्युक्तावपि नातीव नोऽनुपपत्तिः। प्रायः परोद्भावितानां पूर्वपक्षाणां परिहाराय न्यायं निबध्नन्ति। तत्र सिद्धान्तस्य बहुमुनिगृहीतत्वे तदुक्तिमात्रम्। अन्यानालोचितस्यातिशयितस्य स्वनिर्णीतस्य सिद्धान्तस्य कथने सिद्धान्ते स्वनाम निबध्नन्ति। यत्र तु पूर्वपक्ष एव स्वयमेव सयुक्तिकमुपपाद्यते, निर्णयश्च सुखं न लब्धः, तत्र स्वोद्भावितोऽयं पूर्वपक्ष इति ज्ञापनाय स्वनाम पूर्वपक्षेऽपि निबध्येत। अतोऽपीदं न जैमिनिद्वित्वे प्रमाणं भवितुमर्हति। जैमिनिद्वयत्रयादिसद्भावेऽपि न काऽपि हानिः। "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन" इति प्राचीनपरिगृहीतजैमिनिग्रन्थेनैवैकशास्त्र्यस्याभिवर्णनात्। प्रसिद्धजैमिनेरेव प्रसिद्धबादरायणशिष्यभावौचित्यात्। सूत्रमिदं सिद्धान्ते संभाविताशङ्कापरिहारार्थं सिद्धान्तिनैव जैमिनिना स्वनामनिर्देशपूर्वमेवोक्तमिति निर्वाहः संभवतीति चोपपादितम्। सर्वथा नैतावन्मात्रं पुरस्कृत्य जैमिनिद्वयकल्पनं युक्तिमत्॥

**तत्त्वटीकाया**मुपवर्षबोधायनयोरैक्यं तु नोक्तम्। प्रक्षिप्तवाक्यं कतिपयग्रन्थमुद्रितं विलोक्य तथैव गृहीत्वा दूषणं न कार्यम्। उपवर्षवाक्यान्यपि न श्रीभाष्यविरोधीनीत्यलं बहुना ॥

वृत्तिग्रन्थे शाबरे चौपवर्षे भाट्टे भामत्यादिके शांकरे च।
स्पष्टं यत् खल्वैकशास्त्र्यम्, भवन्तो नो चेदेतत् रोचयन्ते ततः किम् ॥

सूत्रं भाष्यं पूर्वतन्त्रं निरदिक्षत् क्वचित् क्वचित्।
पदे पदे भामती तु, कथं तस्यानपेक्ष्यता ॥

सूत्रतद्भाष्यतद्व्याख्याः सर्वास्त्यक्त्वा पृथग् यदि।
निर्विशेषब्रह्मचिन्ता सा मा भूदेकशास्त्रगा ॥

एवं साधनचतुष्टयसंपत्तिः कर्मचिन्तनं न विना।
तद्वक्ष्यते वरं तत् स्वीकरणं प्राच्यवर्णितार्थस्य ॥

वादावसाने परमार्थभूतं समादृतं यद्भवतैकशास्त्र्यम्।
सुदूरमागृह्य कथं पुरस्ताददूषि तत् हन्त वृथा विचारः ॥

ईशः कारुण्यतन्त्रस्तनुकरणमुखं भव्यदृक् संप्रदिश्य
प्रापय्याध्यायमङ्गैर्निखिलहितविमर्शार्थितामातनोति।
जीवो ज्ञाताऽपि विघ्नैर्बहुभिरुपहतो वर्धयन् मुक्तिवाञ्छां
कर्मोपश्लिष्टविद्यारत इह शनकैः कल्पते सत्फलाय ॥

शुभमस्तु

---

श्रीः

## (५) अविधेयज्ञानभङ्गप्रसाधनम् ।

भगवति पुरुषार्थं शाश्वतं दातुकामे
श्रुतिविहितमुपायं साधु सद्भयश्वरङ्गयः ।
निखिलमिदमतथ्यं हन्त सञ्चिन्त्य केचित्
निजगदुरविधेयाः ज्ञानमेवाविधेयम् ॥

सर्वं ज्ञानं विधेयमिति वा, अविधेयमिति वा न विशिष्टाद्वैतिनः नाप्यद्वैतिनः स्थापयितुं पारयन्ति । अस्ति किञ्चित् पुरुषतन्त्रम् । अस्ति चान्यत्; यथा प्रत्यक्षं वस्तुप्रमाणोभयतन्त्रम्, अनुमानादि तु प्रमाणतन्त्रमिति । उक्तं हि शतदूषण्यामेव—"यत् पुनः वाक्यतः सिद्धस्यैव ज्ञानस्य विधेयत्वं न संभवतीति, तदस्माकमिष्टमेव" इति । तत्रादृष्टविधया ज्ञानस्य मुक्तिहेतुत्वमातिष्ठमानाः विधेयं ज्ञानमुपायमिच्छन्ति । तत्त्वसाक्षात्कारस्य मिथ्याज्ञाननाशकत्वस्य लोके दर्शनात् तथैव ब्रह्मज्ञानस्य कारणत्वं मन्यमानास्तु अविधेयम् । एवञ्च, "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यत्र दर्शनं तत्तदभिमतमुक्तिहेतुज्ञानपरम् । अत्र, 'तव्यप्रत्ययचतुष्टयमप्यनपेक्षितम्, ज्ञानस्याविधेयत्वात् । सर्वमिदं वाक्यमेव वा व्यर्थम्; तत्त्वमसीति शब्दश्रवणत एव ज्ञानस्य जायमानत्वात् । अतो बहिःप्रवृत्तिविमुखीकरणार्थमिति अद्वैतिनिष्कर्षः । एवञ्च विधेयज्ञानस्य मोक्षहेतुत्वाभावः जगन्मिथ्यात्वसिद्ध्यधीनः । अविधेयज्ञानस्याहेतुत्वञ्च जगत्सत्यत्वसिद्ध्यायत्तम् । एवञ्चास्य पृथग्विचार एवानपेक्षितः । तदिदं शतदूषण्यामेव निरदेशि, "सिद्धे विश्वस्य मिथ्यात्वे धीमात्रात् तन्निवर्तनम् । तदेव न घटेतेति यथावदभिधास्यते ॥" इति ॥

एवं स्थिते ज्ञानं विधेयमिति ज्ञप्तये इदमारभ्यते । तत्र द्रष्टव्य इत्यादिप्रत्ययस्वारस्यमपि प्रदर्श्यते । तत्र यदुच्यते—"विष्णुरुपांशुयष्टव्यः" इत्यादाविवाविधित्वं न दोष इति—तत्रेदं वक्तव्यम्—तत्र "उपांशुयाजमन्तरा यजति" इति वाक्यत एव यागस्य विहितत्वात् अत्र विष्णुवाक्यादौ विधि-

विषयत्वमनूद्यत इतीष्यते ; न तु बाधितमिति । इह तु प्रमाणपरतन्त्रे ज्ञाने विधिविषयत्वं न भवतीति भवदिष्टत्वात् अन्वयबाध इति वैषम्यम् । वयं तु ज्ञानस्य विधिविषयत्वं संभवतीति ब्रूम इति नान्वयबाधः । परं तु बहुतव्यप्रत्ययश्रवणेऽपि "एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते" इत्यत्रेव संभवत्येकवाक्यत्वे वाक्भेदस्यान्याय्यत्वात् एकस्य वा तव्यप्रत्ययस्य विधिपरत्वमावश्यकमिति ब्रूमः । तत्र च "निदिध्यासितव्यः' इति अन्तिमतव्यप्रत्ययो विधायकतद्विधानार्थमन्यत् त्रयमपेक्षितानुवादमात्रम् । अत एव 'द्रष्टव्य' इत्यस्यान्तेऽनुक्तिः ॥

यत्तु—ज्ञानस्य वृत्त्युपहितचैतन्यरूपतया वृत्त्युपहितत्वेन रूपेण भाव्यत्वम् । वृत्तेर्भावार्थत्वेऽपि वृत्त्युपहितस्य न भावार्थत्वम् । चैतन्यस्य स्वरूपतः अंशत्रयविशिष्टभावनाननुप्रवेशेऽपि वृत्त्युपहितत्वेन रूपेणानुप्रवेश इति—इदं मिथो विरुद्धम् ; भाव्यत्वादिवत् भावार्थत्वस्यापि संभवात् । तदसंभवे तुल्ययुक्त्या अन्यस्याप्यसंभवात् । यत्तु श्रवणमनननिदिध्यासनानामपि न विधेयत्वमित्येव भामतीमतम् । विवरणमते तेषां विधेयत्वेऽपि न ज्ञानरूपत्वमिति, तन्न—ज्ञानं हि द्विविधम् । पुरुषतन्त्रमपुरुषतन्त्रञ्च । तत्र प्रथमं मानसक्रियात्वेनापि व्यपदिश्यते ; कृतिसाध्यत्वात् । तावता न ज्ञानत्वापलापः । सर्वस्यापि ज्ञानस्य धात्वर्थत्वरूपक्रियात्वसंभवेऽपि पुरुषेच्छाधीनतया, कर्तुम् अन्यथा कर्तुञ्च शक्यतया च क्रियाशब्दव्यपदेश्यं यत् तद्विलक्षणमपुरुषतन्त्रमेव कामं भवद्भिः ज्ञानमिति परिभाष्यताम् । लोकव्युत्पत्तिस्तु नैवम् । "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" इत्याचार्यो **गौतमः**, यं खलु प्रमाणयति सूत्रभाष्ये, "दुःखजन्मप्रवृत्ती"ति सूत्रोदाहरणेन, "तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्" इति । सूत्रमिदं जगत्सत्यत्वं कर्मणामकृतप्रायश्चित्तानां भोगैकनाश्यत्वञ्चाभ्युपगतवता प्रणीतं महर्षिहृदयानुसारे नातीवानुकूलमिति मत्वा भामत्यामुक्तम्—"न त्वक्षपादसंमतं तत्त्वज्ञानमिह संमतम्" इति । एवमस्थानेऽपि सूत्रभाष्यगौरवितेन गौतमेन महर्षिणा, बुद्धिर्ज्ञानञ्चैकमिति लोकानुभवः प्रदर्श्यमानः कथंकारमुपेक्षितुं सांप्रतम् । सूत्रभाष्ये, "पञ्चाग्नि-

विद्यायां योषित्पुरुषादौ अग्निबुद्धिर्मानसी पुरुषतन्त्रा, प्रसिद्धेऽग्नौ अग्निबुद्धिर्न चोदनातन्त्रा" इति काचिद्बुद्धिः चोदनातन्त्रत्वात् क्रिया, काचिदतादृशीति बुद्धित्वमुभयत्र कथितम्। ज्ञानत्वमपि ह्येवमेव। एवञ्च संपद्रूपम्, अध्यासरूपं वा, आज्यावेक्षणदेवताध्यानादिरूपं वा ज्ञानमिच्छाकृतिसाध्यं क्रियापदेनापि व्यपदेश्यम्। किञ्चित्तु शुक्तिरूप्यादिज्ञानं वस्तुप्रत्यक्षादिज्ञानं वा पुरुषेच्छानिरपेक्षम् अनिच्छायामपि, माभूदिति मत्यामपि च जायमानमपुरुषतन्त्रमित्येव विभागः। किं बहुना। ब्रह्मज्ञानं क्रिया न भवतीति सूत्रभाष्ये सत्यपि भामत्याम्, 'ब्रह्मज्ञानं मानसी क्रियापि न विधिगोचरः' इति तस्यापि क्रियात्वमुक्तम्। अतः क्रियात्वे ज्ञानत्वं न भवतीति न। अतश्च श्रवणमनननिध्यानादेर्ज्ञानत्वे विधेयत्वं न संभवतीति न।

सिद्धान्तलेशसंग्रहे श्रवणस्य विधेयत्वपक्षे व्यापाररूपत्ववर्णनेऽपि ज्ञानत्वेऽपि विधेयत्वं भवितुमर्हतीत्युक्तमेतावता। अस्तु तावत् श्रवणमननयोः प्राप्तत्वादविधेयत्वम्; ध्यानस्यात्र विधेयत्वमेव, देवताध्यानादिवत्। यद्यपि श्रवणमनननिध्यासनानां साक्षात्कारहेतुत्वं लोकक्लृप्तमिति न तत्र विधिरपेक्षित इति भवतां विवक्षितम्—एवमपि प्रतिनियतगुणस्थानादिविशिष्टब्रह्मध्यानं विधेयमेव। किञ्च ध्यानस्य साक्षात्कारकारणत्वं कथमिति तावद्विचारणीयम्। कामिनीध्यानादौ तत्साक्षात्कारो लोकसिद्ध इति चेत्—नैष वास्तवः साक्षात्कारः। वस्त्वभावेऽपि भावात्। दर्शनसमानाकारं ज्ञानं तु द्रष्टव्य इत्यत्र भवता न विवक्षितम्। ध्रुवादिभिर्भगवतो ध्याने भगवानाविरभूदित्यश्रौष्मेति चेत्—तद्ध्यानं विधिविहितं भगवदनुग्रहरूपादृष्टद्वारा साक्षात्कारहेतुरिति तद्रीत्यनुसरणे ध्यानं विधेयमापद्यते। ब्रह्मात्मैकत्वध्यानप्रीणनीयश्चानुग्राहको न कश्चिदस्तीति तद्रीत्यसंभवश्च। रत्नादेः षड्जादिस्वरस्य च ध्याने तत्साक्षात्कारो भवतीति चेत्—न; तत्र ध्यानपदेन सावधानेन्द्रियसन्निधापनस्यैव विवक्षितत्वात्। न ह्यसन्निहिते रत्नादौ ध्यानं तदर्थकरम्। इहापि तावदेव ध्यानमस्त्विति चेत्—न—"श्रवणं तात्पर्यावगमः, मननमालोचनम्; उपासनं

प्रत्ययावृत्तिः'' इति कल्पतरूक्तेः । किञ्च प्रत्यक्षायोग्यं वस्तु न ध्यानेऽपि प्रत्यक्षितं भवितुमर्हति । ब्रह्म वा ब्रह्मजीवैक्यं वा प्रपञ्चनिवृत्तिर्वा न प्रत्यक्षयितुं शक्यते ; ब्रह्मणः शास्त्रैकसमधिगम्यत्वात् । ध्रुवादिगते प्रत्यक्षेऽपि न ध्यानं कारणम् । तत् अनुग्रहसंपादकमात्रम् । प्रत्यक्षं तु चक्षुरादिप्रतिनियतसामग्र्यायत्तम् । प्रपञ्चनिवृत्तिस्तु प्रत्यक्षाप्रत्यक्षानेकपदार्थप्रतियोगिका नैव प्रत्यक्ष्या । योगजधर्मबलात् सर्वप्रत्यक्षमिति चेत्—स्वीकृतस्तर्हि ध्यानस्य चोदनाविषयत्वपक्षः । तज्जन्यो भगवदनुग्रह एव हि योगजधर्मः ।

अपि च द्रष्टव्य इत्यत्र दर्शनं फलरूपः साक्षात्कारश्चेत्—तव्यप्रत्ययार्थान्वयानुपपत्तिः । एवं श्रवणादीनामपि विधेयत्वायोगे तव्यानुपपत्तिरेव । फलस्यापि सांशभावनान्वयो दृष्ट इति चेत्—सत्यम् । परंतु " यजेत स्वर्गकामः" इत्यादौ प्रवृत्त्यविषयस्यैव स्वर्गस्योद्देश्यत्वम् । "दध्ना जुहोती''त्यादौ होमस्य प्राप्ततयोद्देश्यत्वेऽपि प्रवृत्तिविषयत्वमस्ति । विधेर्हि कार्यद्वयम् । अज्ञातज्ञापनमप्रवृत्तप्रवर्तनञ्चेति । तत्र ज्ञाप्यत्वं दध्नः । प्रवृत्तिविषयत्वं तु तस्य होमादिव्यापारविशिष्टतयैव वक्तव्यमिति प्रवृत्तिविषयत्वं धात्वर्थ एवावतिष्ठते । प्रकृते दर्शनस्य फलस्य पुरुषव्यापारसाध्यत्वास्वीकारात् तव्यप्रत्ययार्थान्वयानुपपत्तिरेव । दर्शनसमानाकारध्यानमेव दृश्यर्थ इति मते तु दर्शनसमानाकारत्वाश्रयध्यानव्यक्तेः विधिविषयत्वस्येष्टतया संभवितया च नान्वयबाधः । 'द्रष्टव्य' इत्यस्य दर्शनविरोधिप्रवृत्तिं मा कार्षीरित्यर्थाङ्गीकारे तु अत्यन्तजघन्यवृत्तिरापद्यते । 'श्रोतव्य' इत्यादौ श्रवणादेः प्राप्तत्वेन विधेयत्वत्यागेऽपि प्रवृत्तप्रवर्तनात्मकप्रैषरूपतव्यप्रत्ययार्थान्वयेऽनुपपत्तिर्नास्ति । एवं परिशील्यैव ध्यानमात्रविधिं स्वीकृत्य दर्शनसमाना कारत्वस्य तद्विशेषणतामाकलय्य आर्षेयवरणवाक्य इवात्रैकवाक्यत्वमुक्तं श्रीभाष्यादौ । 'द्रष्टव्य' इत्यस्यैव प्रथमश्रुतस्य दर्शनसमानाकारत्वाश्रयध्यानव्यक्तिविधायित्वम्, 'श्रोतव्य' इत्यादिना तु तत्स्वरूपप्रदर्शनेन तदुपपादनमिति वाऽस्तु । सर्वथा विधेयत्वस्वीकारात् नानुपपत्तिः । अतो ध्यानस्य वस्तुसाक्षात्कारं वास्तवं प्रति कारणत्वस्य लोके क्लृप्त्यभावात् ध्यानं विधेयमिति,

तदुपयोग्यंशानुवादरूपमन्यदिति स्वरसपक्षोपेक्षणम्, 'द्रष्टव्य' इत्यादेः दर्शनश्रवणमनननिदिध्यासनविरोधिप्रवृत्तीर्मा कार्षीरिति विरोधिप्रवृत्तिविमुखीकरणपरत्वरूपजघन्यवृत्तिस्वीकरणञ्च न युक्तम्।

यत्तु---'द्रष्टव्य' इत्यस्य फलपरत्वाभावे फलान्तरकल्पनात् गौरवमिति---तन्न। दर्शनस्य फलत्वं स्वत इष्टत्वं हि न सिद्धम्। कुत्रापि दर्शनमात्रस्य फलतायाः अक्लृप्तत्वाच्च। न च फलकल्पना; "आत्मा वाऽरे द्रष्टव्यः" इत्यतः पूर्वम्, "येनाहं नामृता स्याम्, किमहं तेन कुर्याम्। यदेव भगवान् वेद तदेव मे ब्रूही" ति अमृतत्वप्राप्तिरूपस्य फलस्य श्रुतत्वात्। तदुपायस्यैव मैत्रेय्या पृष्टत्वेन द्रष्टव्य इत्युपायविधानस्यैव युक्तत्वात्। 'द्रष्टव्य' इति स्ववाक्यश्रुतफलग्रहणं युक्तमिति चेत्---दर्शनं साक्षात्कारः कस्य फलम्? विहितस्य हि फलाकाङ्क्षा। न च श्रवणादीनामपि विधेयत्वं भवदिष्टम्। 'द्रष्टव्य' इति 'श्रोतव्य' इत्यादि च पृथक् तव्यप्रत्ययघटितं पृथग्वाक्यमित्येव स्वरसम्। तथा च स्ववाक्यश्रुतं फलमित्यपि न भवति। दर्शनस्य फलरूपतया श्रवणमपि नास्ति; स्वर्गकामः, सर्वेभ्यः इतिवत् कामपद चतुर्थ्यादेरभावात्।

यत्तु प्रकरणात् फललाभ इति न सुवचम्। प्रकरणस्य क्रिययोरङ्गाङ्गिभाव एव प्रमाणत्वात् फलकर्मणोरङ्गाङ्गिभावे तदनुपयोगादिति---तन्न; श्रुतिलिङ्गवाक्यप्रकरणेति तृतीयाध्यायोक्तविनियोजकप्रमाणान्तर्गतस्य प्रकरणस्य इतिकर्तव्यताकाङ्क्षारूपस्य क्रियामात्रविनियोजकत्वेऽपि अन्यत्र प्रकरणशब्दप्रयोगस्यानुचितत्वाभावात्। मीमांसका अपि हि मन्त्राणां प्रकरणादङ्गत्वमिति लिखन्त्येव। उभयाकाङ्क्षा प्रकरणमित्येतावन्मात्रेण स व्यवहारः। तथाचोभयाकाङ्क्षारूपस्थानप्रमाणं तत्र विवक्षितम्। अन्यतराकाङ्क्षारूपं स्थानप्रमाणमन्यदप्यस्ति। नवीनमीमांसकास्तत् समर्थयन्ते च। वस्तुतः अङ्गाङ्गिविषय एव प्रकरणपदं प्रयोक्तव्यमिति निर्बन्धोऽपि न। श्रुत्यादिशब्दानामपि मीमांसकवर्णितार्थः तत्तत्स्थलमात्रदृष्ट्या;

न तु सर्वानुगतार्थपरिशीलनेन। अतः शक्त्या अर्थप्रतिपादनं श्रुतिरिति रीत्या सर्वमन्यथा परिष्करणीयमिति सर्व एव वेदान्तिनः सम्प्रतिपद्यन्त इति तुल्यं प्रकरणशब्देऽपि। अन्यथा, "प्रकरणाच्च", "प्रकरणात्" इति ब्रह्मसूत्रादिषु का गतिः? तस्मात् प्रकरणपदमिह, 'मिथ आकाङ्क्षामूल इहामृतत्वब्रह्मदर्शनयोः फलकरणभावः इति, न तु कल्पनीयं फल'मित्येतावत् ज्ञापयेत्। किञ्च इतिकर्तव्यताकाङ्क्षा स्वोपकार्यक्रियाकाङ्क्षाविशिष्टैव प्रकरणमिति मीमांसकपरिष्कारस्वीकारे यत्र क्रियातिरिक्तमेव "दध्नेन्द्रियकामस्य जुहुयात्" इति गुणफलसंबन्धविधिस्थलीयगुणरूपं दध्यादि, उक्थ्यादिसंस्थादिकञ्च फलसाधनम् अक्रियात्मकम्, तस्यापि प्रकरणात् किञ्चिदङ्गसंबन्धसंभवात् तत्र क्रियाकाङ्क्षाविशिष्टत्वरूपं दलं दुर्लभम्। वस्तुतः प्रकृतम्=प्रस्तुतम्, प्रकृत्य=प्रस्तुत्य इतिवत् प्रकरणपदस्यार्थ इह ग्राह्यः। एवं "समानप्रकरण" इत्यादौ प्रकरणपदप्रयोगरीतिमनुसृत्याप्यत्र प्राकारणिकसमन्वयो भाव्यः।

उपासनासाध्यत्वे मोक्षस्यानित्यत्वापत्तिरिति चेत्—भवदीयो मोक्षः साध्यो न वा। आद्ये, पूर्वमेव सिद्धत्वे कृतं वेदान्तप्रवर्तनेन। अन्त्ये, कथमनित्यत्वापत्तिपरिहारः। अविद्यानिवृत्तेर्नित्याभावरूपतया न दोष इति चेत् - तुल्यम्। अविद्यानिवृत्तिर्मोक्ष इति सर्वे अभ्युपयन्त्येव। नित्यानित्यविवेके च शास्त्रं प्रमाणम्। तेनापुनरावृत्तौ कथितायाम्, मोक्षः साध्यश्चेदनित्य इति कुतर्कस्तत्र न पदं निधास्यति। अन्यथा प्रायश्चित्तेन पापनिवृत्तौ साधितायां साध्यस्यानित्यत्वात् पापपुनरुन्मज्जनप्रसङ्गः। स्वरूपाविर्भावरूपत्वाच्च नित्यत्वम्। एवं शतदूषण्यभिहितोपरि किमप्यनुक्त्वैव, "उपासना ह्यदृष्टविधयैव मुक्तिं साधयती" ति तदनित्यत्वापादनमापाततोऽपि न रमणीयम्।

यच्च, "अविद्यानिवृत्तिः कर्मणा उपासनेन वा कुतो न भवेत्; काचकामलादिदोषाणां ज्ञानातिरिक्तेनोपायेन निवृत्तिसंपादनात्; अविद्याया अपि

दोषत्वाविशेषा'' दिति शतदूषणीमधिकृत्य लिख्यते—'अविद्यायाः काचकामलादेश्चास्ति वैलक्षण्यम्। अज्ञानं हि स्वसमानाधिकरणसमानविषयकज्ञानैकनिवर्त्यम्; यथा रज्जुत्वाज्ञानम्। काचादिस्तु नेत्रादिगतः न ज्ञानविनाश्य' इति। तत्रोच्यते—लोके काचादिर्दोष इति प्रसिद्धिः; न रज्जुत्वाज्ञानं दोष इति। भवद्भिश्च दोषमन्तरा भ्रान्तिर्न भवतीति लोकदृष्ट्या जगद्भ्रमहेतुर्दोष आवश्यक इति स्वीकृत्य स दोषोऽप्यविद्यैवेति मन्यते। दोषाज्ञानयोः मिथो वैलक्षण्ये महति जाग्रत्येवाविद्यैवाभयरूपा भवद्भिरिष्यते। एवञ्चाज्ञानत्वाकारेण ज्ञाननिवर्त्यत्ववत् अज्ञानं ज्ञानविरोधि, विद्याविरोधीत्यविद्यारूपदोषत्वाकारेण उपायान्तरनिवर्त्यत्वमप्यस्तु इत्याशयकृतः शतदूषणीप्रश्नो हि समुचित एव। उपायान्तरेण काचादिनिवृत्तिर्भवन्ती न सर्वात्मना निवृत्तिः। अपित्ववस्थान्तरेण सद्भाव एवेति चेत्—काममविद्याऽपि दोषत्वावस्थाप्रहाणेन शाश्वती भवतु। का नो हानिः? दोषत्वाभावे भ्रान्त्याद्ययोगादिष्टसिद्धेः। तथाच तत्त्वज्ञानमेव नापेक्षितम्। अवस्थान्तरापन्नाविद्यासद्भावनिबन्धनस्य कस्यचिदनिष्टस्याभावात्। न चेदमसत्कल्पनामात्रम्। ''स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः'' इत्यादिश्रुतिसिद्धत्वात्। अत एवोक्तम्, 'श्रुते तदभावात्' इति।

किञ्च काचादिदोषः किं रज्जुत्वाज्ञानजनकः, उत तज्ज्ञानप्रतिबन्धकः? नाद्यः। तद्दोषराहित्यदशायामपि रज्जुत्वाद्यसन्निकर्षाद्वा कारणान्तराद्वा रज्जुत्वाज्ञानसद्भावात्। ज्ञानप्रागभाव एवाज्ञानमिति पक्षे तु नतरां तज्जनकत्वं दोषस्य। अतो ज्ञानप्रतिबन्धकत्वमेव वक्तव्यम्। तथा प्रकृतेऽप्यविद्यारूपो दोषस्तत्त्वज्ञानप्रतिबन्धक एवेति तत्सद्भावे ज्ञानोदयस्यैवायोगादवश्यमुपायान्तरेण काचादिकमिव तां निवर्त्य ज्ञानं संपादनीयम्। एवञ्च किमनेनाजागळस्तनेन तत्त्वज्ञानेन? अथाविद्यायाः दोषत्वाकारो नेष्यत इति चेत्—अपसिद्धान्तः। एवञ्च सहकारिकारणविरहादज्ञानं न स्वकार्यं जनयेत्। अन्यथा लोकेऽपि काचादिदोषो मा भूत्। तथा सति रज्जुत्वज्ञानं तत्रापद्यत इति चेत्—अत्रापि ब्रह्मात्मैक्यज्ञानापत्तिरस्त्येव। यथा च काचादिदोषनिवृत्त्यर्थमिवाज्ञाननिवृत्त्यर्थमपि कश्चित् प्रयत्नो लोके पृथङ्न लक्ष्यते,

तथा ब्रह्मात्मैक्याज्ञाननिवृत्त्यर्थविज्ञानार्थप्रयत्नोऽपि नापेक्षितः । दोषनिवर्तनस्यैव पर्याप्तत्वात् ।

अपि च रज्जुत्वाज्ञानं नाम किञ्चिद्वस्तु अनिर्वचनीयसर्पाद्युत्पत्तिहेतुरस्तीति स्वयं कल्पयित्वा तन्न्यायेन जगत् अनिर्वचनीयं भावरूपाज्ञानकल्पितमित्यध्यवसाय, तन्निवृत्तये तत्त्वज्ञानमावश्यकमित्युच्यते भवद्भिः । तन्न ; अज्ञानस्य स्वविषयविरोधिवस्तूत्पादकत्वस्य लोकाननुभूतत्वात् अस्याप्रामाणिकत्वात् । अविद्या नाम, "अविद्या कर्मसंज्ञाऽन्या" इति श्रीविष्णुपुराणोक्तं पुण्यपापात्मकं कर्मैव । तन्निवृत्तिश्च कर्मभिरुपासनेन वेति सुष्ठूक्तं शतदूषण्याम् । यदि च दोषस्य ज्ञानेन नाशः, अद्वैतसाक्षात्कारशालिभिः किमिति दोषशान्तये हरीतकी खाद्यते । मिथ्यात्वाध्यवसायमहाभेषजेन दोषस्य निवर्तितत्वात् । जीवन्मुक्तानामप्यविद्या यदि न निवृत्ता, तर्हि कथं ते मुक्तपदव्यपदेश्याः । मूलाविद्यानाशेऽपि शारीरदोषो न निवृत्त इति चेत्—मूले नष्टे कथमङ्कुरादि । एवं तर्हि अविद्यायां नष्टायामपि सञ्चितपुण्यपापादिनिवृत्तौ कारणाभावात् तन्निवृत्तये कर्म वोपासनं वाऽनुवर्त्यताम् । एवमविद्याशब्दस्य भावरूपाज्ञानातिरिक्तत्वज्ञानेतरनिवर्तनीयत्वादिकमपि श्लोकोदाहरणव्याजेन शतदूषण्यां दर्शितमेव, "यथा हरीतकीखादः क्रियते दोषशान्तये । तद्वत् दुरितशान्त्यर्थं क्रियतां हरिकीर्तनम् ॥" इति ।

एतेन ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति ज्ञानवतः वर्णाश्रमादिमत्त्वज्ञानाभावात् स्वकर्मादौ प्रवृत्तिर्दुर्वचेति निरस्तम् । देहित्वाद्यभिमानाभावात् हरीतकीखादेऽपि प्रवृत्त्ययोगात् । तथा क्षुत्पिपासादिमत्त्वप्रयुक्तभोजनादिप्रवृत्तिरपि दुर्घटा । एवञ्च काचकामलादिवैषम्यस्याज्ञाने उपपादनमात्मसिद्धान्ते अवद्यप्रदर्शन एव पर्यवसितमिति ।

एवं ज्ञानेतरनिवर्त्यत्वे अविद्यायाः सत्यत्वापत्तिरिति चेत्—ततः किम् ? तत्कार्यत्वात् जगतोऽपि सत्यत्वं स्यादिति चेत्—तर्हि काचकामला-

दिदोषकार्यस्य रज्जुसर्पादेः काचादिवत् व्यावहारिकसत्त्वापत्तिः, प्रातिभासिकत्वानापत्तिः। अविद्यायाः दोषविधयैव कारणत्वम्; न तु परिणाम्युपादानत्वमिति वाचस्पतिमतस्य भवतैवोक्ततया च दोषं निदर्श्यासत्कृतमापादनमुचिततरम्। उपादानत्वस्वीकारिविवरणमतेऽपि प्रातिभासिकरज्जुसर्पाद्युपादानं किम्? रज्जुत्वाज्ञानमेव। तच्च तूलाविद्यारूपं न प्रातिभासिकमिति तत्कार्यस्य रज्जुसर्पादेः कथं तत्सालक्षण्यविरहः। तथा च तद्वदेव सत्यभूताविद्याकार्यस्यापि जगतः तादृशसत्ताश्रयत्वे को दोषः? ब्रह्मण एव च विवर्तोपादानत्वस्य सर्वभवदीयसंमतत्वात् तत्र कारणवैलक्षण्यं निराबाधम्। नन्वविद्यायाः सत्यत्वे कथमद्वैतसिद्धिरिति चेत्—मा भूत्। वस्तुतस्तस्याः उपासनादिनिवर्त्यतया नित्यवस्त्वद्वैतस्य शास्त्रार्थतया स्वीकारान्नानुपपत्तिरिति वा निर्वहत। अपि च ब्रह्मात्मैकत्वविषयकवृत्तिज्ञानोत्पत्त्या अज्ञाने निवृत्ते पश्चात् ब्रह्म तत् ब्रह्मात्मैकत्वं जानाति न वा। आद्ये वृत्तिज्ञानस्य नित्यतया अद्वैतहानिः। अन्त्ये ब्रह्मणः पुनरपि तत्त्वविषयकाज्ञानप्रसंग इति अनिर्मोक्षः स्यादित्यलं सुदूरं गत्वा।

यत्तु—ज्ञानेतरबाध्यत्वं काचादिवदविद्यायाः, अविद्यावत् ज्ञानबाध्यत्वं वा तस्येति विमर्शे लाघवात् ज्ञानबाध्यत्वमुभयत्र युक्तमिति—तदिदं मिथ्यात्वाध्यवसायमहाभेषजस्य सद्भावात् किमिति साक्षात्कृताद्वैताः दोषशान्तये हरीतकीखादनादौ घटन्त इति पृष्टचरस्यार्थस्य पुनरापादने त्वरयति। काचादिदोषं परिजिहीर्षुश्चाद्वैताचार्यमाश्रित्यार्थव्ययमन्तरा निर्दोषः स्यात्। अतः प्रत्यक्षविरुद्धं लाघवमनुपयुक्तम्। प्रत्युताविद्यायाः ज्ञानेतरनिवर्त्यत्वमेव ज्यायः। ज्ञाननिवर्त्यत्ववादिना ह्यनादिभेदवासनानिरसनार्थमभेदवासनाभ्यासेन आत्मा क्लेशयितव्यः। उपायान्तरं तु अभ्यस्तभेदवासनस्यापि सुकरम्; ज्ञानयोगापेक्षयेव कर्मयोगः। वस्तुतो न लाघवगौरवविमर्शावसरः; श्रुत्यैवाविद्याग्रन्थिनिवर्तकतयोपासनोपदेशात् निर्विशेषचैतन्याश्रिताज्ञाननिवर्तकं ज्ञानेतरत् कुत्र श्रुतमिति

चेत्—निर्विशेषस्य कस्यचिदभावात् तथा श्रवणविरहेऽपि अविद्यानिवृत्तिकरं ज्ञानेतरत् श्रुतमेव।

"विद्वान् नामरूपाद्विमुक्तः" इत्यत्र विद्वत्पदं नोपासकपरमित्युक्तमपि न। "यः सर्वज्ञः सर्ववित्" इति पूर्वं सगुणब्रह्मण एव भूतयोनेः प्रक्रमात्। "परात् परं पुरुषमुपैति दिव्यम्" इति, "कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इति च द्युलोकस्थपुरुषविशेषप्राप्तिरूपफलश्रवणाच्च विद्वच्छब्दः उपासकपरः। "ब्रह्मविदाप्नोति परम्" इत्यत्राप्याप्नोतीति श्रवणात् सगुणमेव विवक्षणीयमिति प्रागेवोक्तम्। सत्यं ज्ञानमित्यत्र ज्ञानपदमन्तोदात्तत्वात् अर्शआद्यजन्तं सत् ज्ञानगुणकमित्यर्थकम्। विपश्चितेति च श्रुतम्। "आत्मन आकाशः संभूतः" इति नियन्तृत्वमात्मशब्दादवगम्यते। आनन्दमयत्वरूपमानन्दप्राचुर्यञ्च। "एतत् साम गायन् आस्ते" इति गानकर्तृत्वादि चावसाने फलप्राप्तौ श्रूयते। अतः सगुणमेव ब्रह्म तत्रापि विवक्षितम्। एवञ्च ब्रह्मविदाप्नोतीत्यत्रापि सविशेषस्यैव वेद्यत्वे वेदनमुपासनमित्यत्र कः सन्देहः? विद्युपास्योर्व्यतिकरस्थले उपासनापरत्वेऽपि सर्वत्रैकार्थ्यं मा भूदित्युच्यते भवता। एवमपि "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यत्र विद्युपास्त्योर्व्यतिकरस्थल इवोपास्तिविवक्षा स्पष्टा। द्रष्टव्य इत्यस्य फलरूपदर्शनपरत्वेष्टावपि ध्यानोपदेशात् तत्सिद्धेः। ब्रह्मविदाप्नोतीत्यत्र च शाङ्करोपनिषद्भाष्ये, विदित्यत्र श्रवणमननध्यानपर्यन्तविवक्षा, "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्युदाहरणेन दर्शिता। "सगुणस्थले उपासनं पुरुषतन्त्रं विवक्षितं यथाश्रुति। निर्गुणस्थले तु श्रवणमनननिध्यासनविधिदर्शनेऽपि बहिर्विषयप्रवृत्तिवैमुख्यार्थमेव तावदुच्यते, न तु तत् सर्वं विधीयत" इति वैषम्यं समन्वयसूत्रभाष्यमूलकममूलमेव कल्प्यते भवद्भिः, **भर्तृप्रपञ्चा**दिमतमुपासनाविधिपरत्वं परास्यते च। एवं स्थिते श्रवणमननयोरपि पुरुषतन्त्रक्रियारूपत्वे ध्यानवत् विधिरेव युक्तः, नानूद्यमानतेति भवदुक्तं विवरणसंमतमित्यभिमन्यमानमपि भाष्यभामत्यादिविरोधात् न वस्तुतो भवदिष्टम्।

किन्तु केवलं परमते दोषापादनमात्रदृष्टिकृतम्। आपादनञ्चायुक्तम्। न हि पुरुषतन्त्रक्रियात्वे विधिरेवेति नियमः; अप्राप्तस्यैव विधातुमर्हत्वात्।

"स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष" इति वाक्यं सगुणोपासनविषयमिति भवतोच्यते। एवञ्च भूमविद्या सगुणब्रह्मविद्येति भवतेष्यते। एष्टव्यञ्च। "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्", "भूमात्वेव विजिज्ञासितव्यः" इति ध्यानादिविधेः, "सर्वेषु लोकेषु कामचारो भवति", "स एकधा भवति त्रिधा भवति" इत्यादिसगुणफलश्रवणाच्च। परन्तु इदं भूमाधिकरणभाष्यविरुद्धम्। "तरति शोकमात्मवित्", "तन्मा भगवान् शोकस्य पारं तारयतु," "तमसः पारं दर्शयति भगवान् सनत्कुमारः" इत्याद्यनुरोधेन निर्गुणपरत्वस्य तदनुरोधे वक्तव्यत्वात्। एवञ्च "स्मृतिलम्भे" इत्यनन्वितं भवतः। वयं तु सगुणोपासनमेव तमःपारगमकं शोकनिवर्तकमातिष्ठामह इति सर्वसामञ्जस्यम्। प्रतिप्रकरणं पदे पदे भवद्भिः—इदं सगुणविषयम्; इदं निर्गुणविषयम्; अस्य प्रकरणादुत्कर्षो बहिष्कारनामा; अस्यान्यार्थकल्पना इति परमः क्लेशोऽनुभूयते सगुणनिर्गुणविभागमुष्टिग्रहेण। 'यत्र नान्यत् पश्यति नान्यत श्रृणोति' इति भूमविद्यावाक्यं भवद्भाष्ये, 'धर्मोपपत्तेश्च' इति सूत्रे गृहीतम्, भूमगतधर्मप्रतिपादकवाक्यान्तरग्रहणे भूम्नः स्वविशेषब्रह्मतापत्तिभिया। गृहीतमपि वाक्यं भूमानं पश्यन् अन्यत् न पश्यतीत्येवार्थं प्रतिपादयति। तेन भूमद्रष्टा कश्चिदस्ति, अन्यदप्यस्ति; परन्तु तन्न पश्यतीत्येव सिद्ध्येत्। न तु सर्वाभावः। क्षुद्रपुरुषार्थवैमुख्यमेव ततोऽवसीयेत। 'सर्वं ह पश्यः पश्यती'ति प्राकरणिकवाक्यान्तरानुसारेण सर्वमपि अन्यत्वेन न पश्यति, परमात्मानुभवान्तर्भूतमेव पश्यतीत्यर्थान्तरं वा वर्ण्यताम्। द्रष्ट्राद्यपलापस्तु ततो न सेत्स्यतीत्यलमत्र।

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति वाक्यं द्रष्टव्यवाक्याभिप्रायमिति यदुक्तम्—तदपि न। द्रष्टव्यवाक्ये दर्शनरूपफलकथनं

हि भवदिष्टम्। इदं तु कर्मक्षयोपायभूतं दर्शनमाह। "स्मृतिपदगृहीतम् इदं चैकमिति ग्रन्थिविमोक्षस्योभयत्र कथनादवगम्यते। अत एव दर्शनसमानाकारा स्मृतिरित्यैकरस्यं ब्रूमो वयम्। यत्तु पृथक् फलसाधनत्वात् न विकल्पावसर इति, तन्न—गुणोपसंहारपादे, "विकल्पोऽविशिष्टफलत्वात्" इति सर्वविद्याविकल्पमेवाह। निर्गुणविद्यां फलान्तरपरां नैव दर्शयति। अतः तत्त्वहितपुरुषार्थास्ते सर्वथैवासिद्धा इति तत्कल्पनया विकल्पजालविनिर्मोकोद्योगो न कल्पते। "नाना शब्दादिभेदात्" इति सूत्रं विधेयविद्याभेदपरमिति सर्वभाष्यनिर्धारितम्। "स्मृतिलम्भे" इति सगुणविषयम्, दर्शनं निर्गुणविषयमिति व्यवस्थापि भाष्यभामत्यादिविरुद्धा। "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रे—'सगुणोपासनानां ईश्वरसाक्षात्कारद्वारा फलसाधनत्वात् विकल्पः; "काम्यास्तु" इति सूत्रे नामब्रह्मोपासनादीनामदृष्टद्वारा फलसाधनत्वात् यथाकामं समुच्चय' इति कथनात् सगुणोपासनस्थले साक्षात्कारस्यावश्यकत्वसिद्धेः।

अपि च, "द्रष्टव्यः" इत्यनेन अविधेयं ज्ञानमुच्यते इति वदतामाशयः कः? किं दर्शनस्याविधेयत्वं कृत्यसाध्यत्वात्, किं वा फलत्वात्? नाद्यः; घटाद्यर्थकुलालकुविन्दादिव्यापारवत् तत्त्वज्ञानार्थप्रवृत्तेः शतशो दर्शनेन ज्ञानस्य प्रयत्नसाध्यत्वस्यापि सत्त्वात्। यत्र पुरुषप्रवृत्त्यभावेऽपि, ज्ञाने द्वेषसद्भावेऽपि प्रमाणसमावेशबलात् ज्ञानं जायते, तत्र कामं प्रयत्नसाध्यत्वं मा सैत्सीत्। यदि ज्ञानानुकूलमनःप्रणिधानश्रोत्रसंविधानाद्यर्थैव प्रवृत्तिः; न तु साक्षात् ज्ञानार्थमित्युच्यते; तर्हि कुलालादिकृतिरपि कारकव्यापारनिष्पादनार्थेति व्यवधानात् घटादिरपि कृत्यसाध्यः स्यात्। अतः तत्तत्कार्यकारणसमवेतक्रियोत्पादककृतिमत्त्वेनैव पुरुषस्य तत्तत्कर्तृत्वम्। तत् यत्र, घटायोन्मीलितं चक्षुः घटं पटं च दर्शयति, तत्र घटज्ञानं कृतिसाध्यम्; पटज्ञानं स्वत इत्येवं विवेचनीयम्। ननूभयोः शिष्ययोः अवहितमनसोरेकस्य ज्ञानं जायते, अन्यस्य न जायते; अतो न कृतिसाध्यत्वं ज्ञानस्येति चेत्—न;

कालादृष्टादिवत् कारणान्तरपौष्कल्यवतः पुंसः ज्ञानं कृतिसाध्यमित्येव स्वीकारेणादोषात् ।

अथ व्यापार एव लोके विधिविषयः, व्यापारावेशवशाच्च सिद्धवस्त्वपि क्वचित् । न तु कृत्युद्देश्यस्य विधिविषयत्वम् । घटपटादेः कृतिसाध्यत्वेऽपि विधेयत्वं न लक्ष्यते । तथा ज्ञानमपि । तथा च फलत्वान्न विधेयत्वमिति द्वितीयः पक्ष एवास्त्विति चेत्—व्यापाराणामपि यागादीनां द्रव्यार्जनादितदर्थव्यापारान्तरफलत्वेऽपि विधेयत्वसत्त्वात् न फलत्वमात्रमविधेयत्वे प्रयोजकम् । किन्तु भावनायां तदा फलत्वेनान्वयः । एवञ्च—

पातकानां प्रणाशार्थं पश्य सेतुमनुत्तमम् ।
आपीठात् मौळिपर्यन्तं पश्य वा पुरुषोत्तमम् ॥'

इत्येवं फलान्तरोद्देशेन दर्शनादिविधिरुपपन्नः । एवमाज्यावेक्षणादिविधिरपि यागादौ स्पष्टः । तत्र कृतिसाध्यत्वविधेयत्वयोः स्वीकार एवोचितः । अस्त्वेवम्, अथाप्यत्र, "द्रष्टव्यः" इत्यत्र दर्शनं फलत्वेनैवान्वेति भावनायामिति चेत्—न—विधेयान्तराश्रवणात् । विधौ विधेयान्वयो मुख्यः ; फलं तु उपात्तं चेत्, अन्वेति ; नो चेत्, कल्प्यत इत्येव सर्वत्र स्थितिः । श्रवणमनननिदिध्यासनविषये तु पृथक् विधिश्रवणात् न तत्रान्यतमस्यात्र विधेयत्वेनान्वयसंभवः । अपि च दर्शनशब्दार्थस्य तत्त्वसाक्षात्कारस्य किं फलान्तरमस्ति ; किं वा परमं फलमिदमेव । आद्ये तत्राविद्यानिवृत्त्यादावस्य साधनत्वात् करणत्वेन भावनान्वयो न विरुध्यते । अन्त्यस्तु न । सुखदुःखनिवृत्त्युभयविलक्षणस्य दर्शनस्य परमफलत्वायोगात् । तत्त्वसाक्षात्कारस्यैवाविद्यानिवृत्तिरूपत्वस्येष्टतया परमफलत्वमिति चेत्—तस्य साक्षात्कारस्य निदिध्यासनानन्तरभावित्वात् ध्यानजन्यत्वमेव मोक्षस्य स्वीकृतं स्यादित्यस्मिन्नंशे अस्मत्पक्षादविशेषः स्यात् । तथा च 'ध्यानान्मोक्ष' इत्येतन्न दूष्यम् । किञ्च दर्शनमिदं वृत्तिरूपं वा

ब्रह्मैव वा । आद्ये वृत्तेरविद्यापरिणामत्वात् नाविद्यानिवृत्तिरूपता । अन्त्ये फलत्वेनापि न भावनान्वयः ; असाध्यत्वात् ।

यत्तु वाक्यस्यापरोक्षज्ञानजनकत्वे आदावेव कथं तदनुत्पत्तिरित्यत्र लिखितम्—'मननादिना भेदवासनायां निरस्तायामेव साक्षात्कारः ; विपरीतवासनायाः ज्ञानोत्पत्तिप्रतिबन्धकत्वात् । अपरोक्षभेदवासना ह्यपरोक्षसाक्षात्कारेणैव निवर्तते इति—तदतीव स्खलीयः । विपरीतवासनायाः ज्ञानसामान्योत्पत्तिप्रतिबन्धकत्वे श्रवणस्यैवानुत्पन्नत्वात् कथं मननादि ? भेदवासनानिरासानन्तरं साक्षात्कार इति प्राक् विलिख्य, साक्षात्कारेण भेदवासनानिवृत्तिरिति लेखनञ्च व्याहतम् । अपरोक्षसाक्षात्कारेणेति आम्रेडनञ्च दोषः । एवं लिखितस्य व्याहतत्वेऽपि भवत्पूर्वोक्तमेव प्रकृते विवेक्तव्यम् । भेदवासनासद्भावेऽपि वाक्यात् प्रत्यक्षं कुतो न जायते? मैत्र इति भेदवासनायां दृढायामपि चक्षुस्सन्निकर्षबलात् चैत्र इति प्रत्यक्षस्यानुभविकत्वात् । यद्यत्र प्रत्यक्षं न भवति, ततो वाक्यं न प्रत्यक्षकारणमित्येवावसातव्यम् । पश्चात् भेदवासनाविरहादियत्सहकारेण वाक्यस्य प्रत्यक्षजनकत्वमिष्यते, तस्यैव कारणत्वमस्तु । किमन्यथासिद्धेन वाक्येन । तस्य प्रत्यक्षकरणत्वं न क्लृप्तमिति चेत्—तुल्यं वाक्येऽपि । एवं भेदवासनानिरासः किंजन्यः ? अभेदनिध्यानजन्य इति चेत्—तत एव सर्वनिवृत्तिरस्तु । किमपरोक्षेण । अपरोक्षो भेदभ्रमः अपरोक्षेणैव निवर्तनीय इति चेत्—तर्हि अपरोक्षभ्रमस्य वासनाहेतुत्वमपि नापरोक्षव्यतिरिक्तेन निवर्त्येत । 'प्राचीनभेदवासनानामभेदनिध्यानबलान्निवृत्तिः । तादात्त्विकभेदभ्रमाधीनवासनास्तु भ्रमनिवृत्तौ निवर्तन्त'इति चेत्—जातो भ्रमः स्वयमेव क्षणिकत्वात् निवर्तते । सजातीयभ्रमानुत्पादस्तु अपरोक्षज्ञानाधीनः । उत्पन्नानां वासनानां तु निवृत्तिः कथम् ? स्याद्वा सर्वासामप्यपरोक्षज्ञानाद्वा, अपरोक्षज्ञानाधीनाभेदवासनातो वा निवृत्तिः अपरोक्षभेदभ्रमवासनानाम् । न तु परोक्षध्यानाधीनाभेदवासनातः । परोक्षस्यापरोक्षभ्रमनिवर्तकत्वस्य भवदनिष्टत्वात् तुल्यन्यायात् । अस्तु तथैवेति चेत्—तर्हि भेदवासनासद्भावेऽप्यपरोक्षज्ञानोत्पत्तेरभ्युपगतत्वात् प्रथमत एव वाक्यादपरोक्षज्ञानमुत्पद्यताम् ।

तस्माल्लोकानुभवविरुद्धमिदम्, यद्वाक्यस्यापरोक्षज्ञानजनकत्ववर्णनम्, भेदवासनायाः अपरोक्षप्रतिबन्धकत्ववर्णनञ्च। तस्मात् पद्धतिमेनां परित्यज्येत्थं गम्यताम्। मनस इन्द्रियाणाञ्च बहिर्विषयप्रावण्यात् प्रत्यगाभिमुख्यं मनसः संपादयितुं चित्तवृत्तिनिरोधो ध्यानं विधीयते; न तु भेदवासनानिरसनार्थम्। ततो ब्रह्मापरोक्षे सविलासाविद्यानिवृत्तौ भेदवासना अपि मिथ्यत्वाविशेषात् सहैव निवर्तन्त इति। एवञ्च योगो मनो वा दर्शनकरणं स्यात्; न वाक्यम्। अस्तु तर्हि भामतीसंमतो मनःकरणकत्वपक्ष इति चेत्—अस्तु। तथापि अविद्यानिवृत्तये दर्शनमुपायतया पूर्वं विधीयते, तदर्थे पश्चात् ध्यानमित्युपपादनसंभवात् नाविधेयज्ञानवादः। प्रसिद्धश्च गीतासु योगविधिः। न च सर्वं तत् सिद्धानुवादरूपं वा स्यात्, अतत्परं वेति। यदा तु सगुणमेव ब्रह्म जीवातिरिक्तं स्थानगुणदिव्यमङ्गळविग्रहविशिष्टं भक्तियोगगोचर इति सिद्धान्तः, तदा विग्रहादेः सर्वत्रासंनिधानात्, "वृक्षे वृक्षे च पश्यामि", "रुक्माभं स्वप्नधीगम्यम्" इत्याद्यनुरोधेन दर्शनसमानाकारत्वमेव ध्यानस्य सर्वत्रानुगतम्; न तु ध्यानजन्यप्रत्यक्षम्। वस्तुतो यत्र तद्विग्रहादि विलसति, तत्स्थतया तदनुपलम्भात्; योगकाले पुरतो दृश्यमानत्वात्; परितोऽपि दृश्यमानत्वादिति योगिविज्ञेयमेतदिति यदि विभाव्यते, तदा "द्रष्टव्यो निदिध्यासितव्य" इत्युभयमेकविशिष्टार्थविधायकं सदेकं वाक्यमिति सेत्स्यति। अन्यथा फलभूतसाक्षात्कारस्य स्वतो भवतो विवक्षितत्वे, 'द्रष्टव्य' इति तव्यप्रत्ययायोगादिकमपि प्रागुपपादितमेव।

वस्तुतः अपरोक्षं विनापि भ्रमनिवृत्तिर्भवति। दिङ्मोहालातचक्रचलद्वृक्षमरीचिकाजलादिभ्रमानुवृत्तिरपि पीतशङ्खादाविव दोषानिवृत्तेरेव। इह तु अविद्यादोषो मिथ्या।

यत्तु "ब्रह्म वेद ब्रह्मैव भवती"त्यत्र वेदनं न भक्तिः; "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते

30

तदनन्तरम् ॥" इति भक्तेर्वेदनसाधनत्वेनैवोपदेशात् इति—तत्रोच्यते । उपात्तः श्लोको भवन्मतप्रतिकूलः । तथा हि—तत्र भवद्भाष्ये, यावान् यश्चास्मीत्युक्तसर्वविभूतिगुणविशिष्टपरमात्मविषयिणी तदधीनजीवगता भक्तिर्नोक्ता ; किन्तु, 'यावान् यश्चास्मि, तादृशस्य मम सर्वविशेषणत्यागेन जीवेनैक्यज्ञानरूपा भक्ति'रित्युक्तम् । इत्थमेव भक्तिः, "चतुर्विधा भजन्ते माम्" इत्यत्र चतुर्थी ऐक्यज्ञानरूपा वर्णिता । ऐक्यज्ञानं भक्तिरिति विचित्रेयमद्वैतिपरिभाषा न लोकशास्त्रव्युत्पत्त्यनुसारिणी । एतादृशभक्तेः ज्ञानस्य चैकत्वात्, 'ततो मां तत्त्वतो ज्ञात्वा'इति भक्त्यानन्तर्यं ज्ञाने गीतमनन्वितम् । अनेन ज्ञानेन सगुणब्रह्मलोकगमनतत्प्रवेशादेरभावात् भवद्भिरस्वीकाराच्च ज्ञानप्रवेशयोरैक्यात्, "विशते तदनन्तरम्" इतीदमप्यनन्वितम् । भक्तिज्ञानप्रवेशानामैक्यं मा भवादृशा उल्लेखिषुरिति विमृश्यैव भगवान्, 'ततः' 'तदनन्तरम्' इत्येवमधिकमगासीदिति ज्ञायते । भगवद्भक्त्या ज्ञानमुदेतीति भवत्संप्रदायव्यवहारमात्रम् ; लोकप्रलोभनपर्यवसायि च । आन्तरस्तु भवन्मतेष्टो भक्तिशब्दार्थो भक्तिभक्त्यर्थोऽतिविलक्षणः । कथञ्चित स्वाभिमतभक्तिज्ञानादिभेदकल्पनदन्धनं तु न कृतार्थतामावक्ष्यति । ईदृशं दौःस्थ्यं सर्वमविमृश्य किमित्यस्मन्मते मुधा श्लोकार्थानुपपत्तिराविष्क्रियते ।

अस्माभिर्हि परभक्तिः, तदनन्तरं परज्ञानं साक्षात्कारात्मकम्, ततः परमभक्तिः, ततोऽर्चिरादिना भगवत्पदारविन्दप्रवेशश्च यथावदङ्गीक्रियते । तच्च परज्ञानं अस्मत्प्रयत्ननिरपेक्षम्, भगवदनुग्रहकृतमिति अविधेयं स्वतो भावि । अतः परभक्त्युपरितनस्य सर्वस्य फलकोटिप्रवेशात् मोक्षार्थमस्माभिः कर्तव्यं भक्तियोगमात्रमिति तदेवोपायत्वेनेष्यते । योगी च निष्पन्नध्यानः भगवत्स्वरूपसाक्षात्कारे तेन करुणया कारिते परभक्त्या तत्प्राप्तौ त्वरमाणः, "यं योगिनः प्राणवियोगकाले यत्नेन चित्ते विनिवेशयन्ती"त्युक्तमन्तिमप्रत्ययं विधिवशः प्रयत्नेन निष्पादयति । अन्यच्चावधेयम्—अत्र श्लोके "भक्त्या मामभिजानाती"त्युक्तमेवादरादनूद्यते, "मां तत्त्वतो ज्ञात्वे"ति । पूर्वार्धे एव ज्ञानस्य भक्तिजन्यत्वं स्पष्टम् । ज्ञानानन्तर्ये प्रवेशस्य क्त्वाप्रत्ययोक्तं

**तदनन्तर**मिति भवन्मतखण्डनाय पृथगप्यनूदितम् । एवं च **तत** इति पदं व्यर्थं मा भूदिति **विशते** इत्यत्रान्वयमर्हति । **तत** इति भक्तित इत्यर्थकम् । एवञ्च मोक्षोपायत्वं भक्तेः कण्ठोक्तम्, "भक्त्या त्वनन्यया शक्यः ।" इति वाक्य इव ।

"यावान् यश्चास्मि तत्त्वतः" इति उभयविभूतिवैशिष्ट्ये तात्त्विकत्वेन कथ्यमाने सर्वमिदं प्रतीयमानमुपेक्ष्य ऐक्यज्ञानं विवक्षितमिति कथनं गीतायाः व्याख्यानं वा प्रत्याख्यानं वेति परामृशत । **मा**मिति भगवान् सकलकल्याण-गुणविशिष्टं स्वं यदि नाविवक्षिष्यत्, ऐक्यं चेद्विवक्षितम्, 'भक्त्या त्वामभि जानाति यावान् यश्चासि तत्त्वतः । ततस्त्वां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्', "त्वयि चानन्ययोगेन भक्तिरव्यभिचारिणी" इत्यप्यगास्यत् । एवमपि वा, "भक्त्या त्वामभिजानीयां यावान् यश्चासि तत्त्वतः । ततस्त्वां तत्त्वतो ज्ञात्वा विशेयं तदनन्तरम्" इति ।

एतेन "मयि चानन्ययोगेन भक्तिरव्यभिचारिणी" इति वचनमपि व्याख्यातम् । यत्तु—ज्ञानयोगसाध्यत्वे भक्तियोगस्य संमते कथं भक्तिसाध्यत्वं ज्ञानस्योच्यत इति—तत्र भक्तिप्रकाराणामनेकत्वस्य लोकसिद्धत्वात् "नायमात्मा प्रवचनेने"ति श्रुतौ तत्तदुपयोगिभक्त्यनेकत्वस्याभिमतत्वात्, "भक्त्या शास्त्राद्वेद्मी" त्यादौ प्राथमिकश्रवणेऽपि भक्तेरपेक्षितत्वात् भक्तियोगरूपमुक्त्युपाय-विलक्षणविविधभक्तिग्रहणेन निर्वाहो ग्रन्थेषु दर्शित एवेति कृतं विस्तरेण ।

"उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्' इत्यत्र भगवतो मुक्तात्माधीनस्थितिकत्वविवक्षा स्वसिद्धान्तविरुद्धेति च उक्तकृत्स्नार्थग्रहणेनानुभाव्यं स्वारस्यमननुभूय किमप्युद्गलितम् । भक्तपराधीनत्वं भगवतः परःसहस्रप्रमाण-विदितम् । "इमौ स्म मुनिशार्दूल किङ्करौ समुपस्थितौ" इति च किङ्करत्वं भगवान् किञ्चित्प्रकारेणाभिनन्दति । एवम्, "अनन्याधीनः सन् भवति परतन्त्रः प्रणमताम्" इत्ययं विषयः इह, 'ज्ञानी त्वात्मैवे'ति भगवता ज्ञाप्यते ।

'ज्ञानी त्वात्मैवे'त्यस्य ज्ञानी मत्स्वरूपमेव अहमेव इति नार्थः। सर्वेषामपि जीवानां तत्स्वरूपत्वस्याविशिष्टत्वात् विशिष्य कथनायोगात्। अत एव ज्ञानिनं मदभिन्नतया जानामीत्यर्थोऽप्ययुक्तः। सर्वानपि हि भगवान् स्वाभिन्नत्वेन पश्यति सर्वज्ञत्वादिति। ज्ञानी मदभिन्नत्वेन स्वज्ञानवानित्यर्थवर्णनमप्ययुक्तम्। ज्ञानी-त्यस्य ब्रह्मात्मैक्यज्ञानीत्येवार्थात् घटो घट इतिवत् बोधायोगात्। 'मे मत'-मित्यस्य वैयर्थ्याच्च। अत "आत्मानं मानुषं मन्ये" इतिवत्, 'मे मत'मित्यस्य भगवद्गताहार्यज्ञानविशेषपरत्वम्। तच्च निकृष्टे उत्कृष्टारोपात्मकमभिनन्द्यं श्रोतृचमत्कारि चेति विमृश्य, आत्मशब्दस्वारस्यञ्चानुसृत्य, 'मदधीन-स्वरूपस्थितिप्रवृत्तिकमपि ज्ञानिनं मदन्तर्यामिणं मन्ये; अन्तर्यामिणि नियम्यस्य, शेषस्य यावान् भाव उचितः, तावन्तं भावं निक्षिपामी'ति परमेण वात्सल्येन वदति भगवानित्यास्माकभाष्यादिगतिः। अन्यथा, मे मतमिति व्यर्थम्। न केवलमत्रैव; मे मतमित्येतत् "उदाराः सर्व एवैते" इत्येतत्प्रभृति अन्वेति। न हि भगवतः ऐहिकामुष्मिकप्रतिग्राहिणः भगवन्तं प्रति उदाराः वदान्याः भवन्ति। एवमपि भगवान् प्रतिगृहीतॄन् वदान्यान् मन्ये इत्याह। तद्वदेव स्वात्मनि मदधीनत्वज्ञानिनः अहं मदध्यक्षत्वेन मन्ये इत्याह। तन्नूनं स्वारस्यानुभवसमर्थाः भक्ताः सहृदयाः इतिहासपुराणप्रबन्धपरायणाः एतस्यार्थस्य स्वागतभाषिणः; नान्ये।

भाष्यकारा अन्ये चाचार्या न्यायविशेषोहापोहाभ्यां वेदान्त-शास्त्रपरीक्षकाः स्थितप्रज्ञा एवेति भवानाह। एवमप्रामाण्यज्ञानानास्कन्दिततत्त्व-ज्ञानोदयत एव निवृत्ताविद्याः कथमेवं भेददर्शिनः। अविद्या केनाप्यंशेना-स्तीति चेत्—तर्हि अविद्या न मिथ्या। प्रारब्धावसानमपि अविद्यानिवृत्तौ कारणं चेत्—ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं न हि सेत्स्यति। अस्मन्मते तु ईश्वरस्य जीवस्य च भिन्नत्वात सर्वज्ञत्वाज्ञत्वादिभेदकाकारसत्त्वाच्च उपदेष्टृत्व-मुपदेश्यत्वञ्च निराबाधम्। तत्र, "कथं सर्वशरीरकत्वमात्मन्यनुसन्दधानो भगवान् स्वाविनाभूतमर्जुनं विनाभूतमिव मत्वोपदिशती"ति भवत्प्रश्नः अर्थशून्यः प्रतिबन्द्या किमपि प्रष्टव्यमिति प्रवर्तितः। विनाभूत इव किमर्थमर्जुनस्तेन

मन्तव्यः; अन्यथा किमुपदेशो न घटेत ? अद्वैतीतरेषां द्वैततत्त्वाज्ञाने अद्वैतिन एवापराध्यन्तीति न शतदूषण्यामुक्तम्। अतो नानपराधित्वोपपादने यतितव्यम्। अद्वैतिवाक्यश्रवणेनाद्वैतिसंमतमिदमिति तदीयतत्त्वज्ञानस्थितेरद्वैतीतरैरप्यधिगततया अत एव तद्दूषणकरणाच्चाद्वैतिनामपि तज्ज्ञानमावश्यकम्; अर्थं बुद्ध्वा शब्दरचनेति न्यायादिति नाद्वैतिनामुपदेशकानां तत्त्वज्ञानाभावः सुवचः। तथा च तत एव विशदज्ञानादविद्या प्रथमत एव निवर्तेत॥

'अपरोक्षज्ञानादेव निवृत्ति'रित्यप्यनियतम्। आप्तोपदेशादिजन्यशाब्दादितत्त्वज्ञानादप्यज्ञाननिवृत्तेरनुभवसिद्धत्वादित्येवोच्यते। एवञ्च, 'विशदज्ञानमेव निवर्तकम्। वैशद्यं तु आपरोक्ष्यरूपमिति निरस्तम्। परोक्षस्यानिवर्तकत्वे मानाभावात्। येषां तु अदृष्टद्वारा ज्ञानस्य मोक्षसाधनत्वम्, तेषां वचनबलात् दर्शनरूपज्ञानमेव निवर्तकमिति वचनं युज्यते। दृष्टरीत्यैव तत्त्वज्ञानस्य निवर्तकत्ववादिनां तु भवतां परोक्षज्ञानस्याप्यज्ञाननिवर्तकताया लोकेऽनुभवात् अपरोक्षनियमो निष्प्रमाणकः।

यत्तु विधेयस्योपासनादेर्मोक्षसाधनत्वस्वीकारे, 'अथातो धर्मजिज्ञासे'ति धर्मविचारेणैव गतार्थत्वात् ब्रह्मजिज्ञासाप्रतिज्ञानं व्यर्थम्। अतो ब्रह्मज्ञानमविधेयं बोधयितुं शास्त्रमिदमिति—तत्र शारीरकतृतीयतृतीये उपासनविचारः सर्वोऽप्यनुपपन्नः स्यात्। उपासनानां धर्मताया भवद्दिष्टत्वेत धर्मजिज्ञासयैव गतार्थत्वात्। तत्र तानि न विचारितानीति चेत्—तर्हि यथाप्रतिज्ञं विचारस्याविधानात् जैमिनेर्न्यूनता स्यात्। अतो यो धर्मः आराध्यस्य फलप्रदत्वविषयविशदज्ञानाभावेऽपि स्वयं फलसाधनत्वेनावगतोऽनुष्ठीयमानोऽपि फलायालम्। तादृशधर्मजिज्ञासा प्राक् जैमिनिचिकीर्षिता। यस्तु धर्मः आराध्यदेवताज्ञानपूर्वमनुष्ठित एव फलं दद्यात्, तद्विचारो बादरायणस्यादरणपदमासीत्। अत एव ब्रह्मणः प्राधान्यं दर्शयितुं ब्रह्मजिज्ञासैव प्रतिज्ञाता, सर्वमिदमैकशास्त्र्यवादे व्युदपादि।

इदमप्यत्र भाव्यम् । मुक्तिसाधनतया वा भवतु साक्षात्कारसाधनतया वा, यदि ध्यानं विधेयमिष्यते मुमुक्षूणाम् , तर्हि नाविधेयज्ञानवादः । यदि तु—ध्यानमपि न विधेयम् , बहिर्विषयप्रवृत्तिवैमुख्यमात्रपरो ध्यानविधिः । अतः सावधानस्य स्वयमेव साक्षात्कारो भवतीति न किञ्चिद्विधेयम्, असंभवादित्युच्यते, तदेव मुख्यं दूष्यम् । ध्येयं वस्तु कीदृशमिति विचारस्त्वन्यः । इदञ्च बोध्यम् । ध्यानरूपत्वाभावेऽपि विधेयमेव ज्ञानं मुक्तिहेतुरिति ज्ञायते । यतो भगवता बादरायणेन तृतीयतृतीये विद्यागुणोपसंहारविचारः कृतः । सा किमसकृत् , आप्रायणाच्चावर्तिता इति तु तुरीयप्रथमे विचारयिष्यते । तृतीयचतुर्थे च आवृत्त्यादिविचारात्प्रागेव विद्यायाः श्रवणाधिकत्वं "अधिकोपदेशात्तु" इत्युच्यते । एवमावृत्तत्वादिनिर्णयात्प्रागेव विद्यायाः चोदनाद्यविशेषात् भेदं साधयता, "विकल्पोऽविशिष्टफलत्वात्" इत्यादिना विद्याविधिं फलार्थं दर्शयता विधिविषयः सङ्कल्पपूर्वकमनुष्ठित एव विद्याविशेषः फलसाधनमिति व्युत्पाद्यते । तत्र सकृत्त्वमपर्याप्तमिति चतुर्थे विशदयिष्यते इति ।

उदितविविदिषत्वादुज्झिताः कर्मभेदाः
उपनिषदुपदिष्टोपास्तयश्चाप्यपास्ताः ।
वचनजनिततत्त्वाभासविज्ञानमात्रा-
दमृतमभिनयद्भिर्वैदिकोऽर्थो व्यलोपि ॥

अजनि विविदिषेति प्राक् परित्यज्य धर्मान्
श्रवणविषयवाक्यात् वस्तु दृष्टं वदन्तः ।
विजहति च विधेयं ध्यानमास्तां तदेतत्
श्रवणमपि यथार्थं नाद्रियन्ते बतैते ॥

शुभमस्तु

——:o:——

श्रीः

# श्रीः बाधितानुवृत्तिभङ्गप्रसाधनम्

अबाधितार्थविज्ञानविधानव्यग्रमानसम् ।
अपरं तुरगास्यं तं वन्दे वेदान्तदेशिकम् ॥
बाधितस्यानुवृत्तिश्चेत् बाधे मानं न सिद्ध्यति ।
अतत्त्वज्ञानमेतत् स्यात् स्याद्वा सत्यं जगत् समम् ॥

शतभूषणीकारः बाधितानुवृत्तिभङ्गवादबाधितार्थानुवृत्तिं स्वपरीक्षायामनुवादभङ्ग्या कलयन् बाधितानुवृत्तिं स्थापितां मन्यत इति नात्र वादे वक्तव्यं किञ्चिदस्ति । अथापि मुखान्तरेण शतदूषण्युक्तमेव व्युत्पाद्यते । तत्रादौ विशिष्टाद्वैतिमतेऽपि दर्शनसमानाकारस्मृतिसन्तानेनाविद्यारूपकर्मनिवृत्त्या करचरणाद्यवयवानामपि निवृत्तत्वात् कथमुपदेष्टृत्वमिति प्रतिबन्दी महति विस्मयसागरे विदुषो निमज्जयति । जगतस्तत्करणभूताविद्यायाश्च मिथ्यात्वात् तत्त्वज्ञानेन निवृत्त्या कस्मै केनोपदिश्यत इति प्रश्नः अस्मान् प्रति हि न कथमपि भवितुमर्हति । सर्वस्य स्थितत्वात् कर्मणामेव पुण्यपापरूपाणां शरीरधूननकाले प्रक्षयात्। त्यक्तस्य शरीरस्याप्यवस्थान्तरेण पश्चादपि भावात् उपदेष्टृणामुपदेश्यानाञ्च दाऽप्यबाधात् उपदेशं प्रति श्रवणमननयोः साक्षात्कारस्य च यथासंभवं कारणत्वेऽनुपपत्त्यभावात् । तस्मात् स्वमते दोषपरिहारार्थं एव शतभूषण्या प्रयतनीयम् । अन्यथा स्वोपरि गळिष्यद्भिर्जम्बालैर्गगनतलमालिम्पति शतभूषणीत्येव वक्तव्यम् । तत्र बाधितानुवृत्तिपक्षे शतदूषण्युक्तदूषणान्मुक्तिर्न भविष्यतीति मनसिकृत्य प्रथमं यत् किञ्चिदुक्तमव्यक्तम्—तच्छोभनम् । तस्यायं सारः—न वयं बाधितानुवृत्तिं स्वीकुर्मः । अविद्याया अंशतोऽपि प्रायणात् प्रागबाधात् । तर्हि जीवन्मुक्तिर्न स्यादिति चेत्--साऽपि नेष्यत एव । तत्त्वसाक्षाकारे जाते मिथ्याभूतस्य तत्त्वज्ञाननिवर्त्यत्वात् कथं मध्येऽविद्याद्यनिवृत्तिरिति चेत्—साक्षात्कारः प्रायणकाल एव भवतीति ब्रूमः । "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्त-

त्त्वदर्शिनः" इत्युक्तमुपदेष्टृगतं तत्त्वदर्शनञ्च नापरोक्षम्; किन्तु तत्तुल्यं परोक्षमेव। इदं परोक्षज्ञानमुद्दिश्यैव निध्यानपर्यन्तविधिरित्यपि केचित्—इति। एवमभिप्रयन्नयं यदि निष्प्रपञ्चीकरणनियोगभङ्गवादादिकमिव बाधितानुवृत्तिभङ्गवादमपि एकदेशिवादखण्डनमिष्टमेवेति विसृष्टवान् स्यात्, शोभनतरं भवेत्। एवं खलु विमर्शे बहवो वादाः सुखमेव त्यक्ताः स्युः। मिथो विरुद्धानेकमताभासस्थापनार्थप्रयत्न एवाद्वैतिनामनर्थकरो भवति। इतः परमद्वैतिभिः सद्भिरेवं संकेतः कार्यः। सिद्धान्तलेशसङ्ग्रहादिदर्शितेषु तत्र तत्र बहुषु पक्षेषु एकतममेव निष्कृष्य स्वीकुर्वन्तोऽन्यान् उपेक्षमाणाः परेषां दूषणात् सर्वतोमुखादात्मानं रक्षेमेति।

अस्त्वेतत्। बाधितानुवृत्त्यनङ्गीकारेण एवमेतदुट्टङ्किते ऽप्येवं दोषो भाव्यः। यदि 'द्रष्टव्य' इत्यत्र दर्शनतुल्यं परोक्षज्ञानं विवक्षितम्, तर्हि विशिष्टाद्वैतिभिः पूर्वपादे उक्तस्य दर्शनप्रकारस्य किमिति खण्डनम्। परोक्षदर्शने ध्यानस्य कथं जनकत्वम्। तदतिरिक्तस्य साक्षात्कारस्यैवाविद्यानिवर्तकत्वे का श्रुतिः प्रमाणम्। सर्वत्र दर्शनस्येदृशपरोक्षरूपत्वात्। साक्षात्कारं विना परोक्षस्यैव निवर्तकत्वे काऽनुपपत्तिः। द्विचन्द्रदिङ्मोहालातचक्रचलद्वृक्षादौ च दोषस्य तत्त्वज्ञानानाश्यत्वात् भ्रमानुवृत्तिः; अत्र तु दोषस्याविद्यायाः मिथ्यात्वात् कथं तदनिवृत्तिः। भ्रान्तिः स्थिताऽप्यप्रमाण्यज्ञानास्कन्दितैव स्यादिति भ्रमाधीनं कार्यं न भवितुमर्हति। एवञ्च तत्त्वदर्शी भ्रान्तोऽपि न किञ्चित् कुर्यात्। भ्रान्तेरप्रामाण्यज्ञानास्कन्दितत्वात्। एवं द्विचन्द्रवैषम्यात् साक्षात्कार एव निवर्तक इत्यत्र मानाभावात् आप्तोपदेशादितोऽपि प्रत्ययितात् भ्रमनिवृत्त्युपलम्भात् श्रवणकाल एवाविद्यानिवृत्त्या भवितव्यम्। तथा च बाधितानुवृत्तिरवर्जनीया। मिथ्यात्वं वा जगतस्त्याज्यम्। अतोऽयमपि पक्षोऽद्वैतिनामनुपपन्न एव।

अथ बाधितानुवृत्तिपक्षं ब्रह्मसिद्धीष्टसिद्ध्यद्वैतसिद्ध्यादिषूपपादितं स्वीकृत्य दूषणपरिहारे प्रयतमानः अशक्त्या प्राच्योक्तमेव मुखान्तरेणानूद्य

तृप्यति । तत्राविद्यायाः अनिवृत्तिर्वा अंशतो निवृत्तिर्वा तन्निवृत्तावपि तद्वासनानुवृत्तिर्वा भवदिष्टा । आद्यो न बाधितानुवृत्तिपक्षः । न द्वितीयः । तत्रैकांशपरिशेषः कथम् ; तस्य मिथ्यात्वेन निवर्त्यत्वात् । न तृतीयः ; वासनाया अपि तत्कार्यतया मिथ्यात्वादविशेषात् । यदि तत्त्वज्ञानस्याविद्यानिवर्तकत्वमात्रम्—तर्हि सञ्चितकर्माण्यपि न निवर्तेरन् । श्रुतिसूत्रादिषु प्रारब्धपरिशेष उक्त इति चेत्—अत एव मिथ्यात्वं नेष्टमिति निर्णीयताम् । तत्त्वज्ञानं हि मिथ्यानिवृत्तये न कारणान्तरमपेक्षते । यदि विलम्बेनैव संस्कारादिनिवर्तकता, तर्हि समर्थस्य क्षेपायोगात् कालादिकारणान्तरापेक्षेति मिथ्यात्वहानिरेव । अवशिष्टस्य वासनादेर्भगवत्सङ्कल्पान्नाश इत्युक्तावपि सत्यत्वमेव सिद्ध्येत् । एवं 'वासनाया मिथ्यात्वे तु देहपाते विनाश एव' इत्युक्तमयुक्तम् । मिथ्याभूतस्य हि निवृत्तिरेव ; न तु नाशः । एवमविद्यैव निवर्तते, न तु भेदप्रतिभासादीत्यप्ययुक्तम् । मिथ्यात्वाविशेषात् सर्वनिवृत्तेरेव वक्तव्यत्वात् वृत्त्या वस्तुविनाश इत्युक्त्ययोगात् । किञ्च उपदेष्टुर्वासुदेवस्य भगवतः तत्त्वविषये परोक्षज्ञानमात्रस्वीकारे सर्वसाक्षात्कर्तृत्वरूपसर्वज्ञत्वानङ्गीकारादपसिद्धान्तः । सर्वसाक्षात्कर्तृत्वादेव सर्वनिवृत्त्यात्मकब्रह्मसाक्षात्कारः ईश्वरस्य नास्तीति चेत्—पश्चात् भविष्यति, न वा । आद्ये कदा ? कथम् ? श्रवणमननादिनिरपेक्षं चेत्—इदानीमपि भवितुमर्हति । जीवानां तादृशब्रह्मसाक्षात्कारेऽपि कारणदुर्भिक्षे तस्य किं कारणं भविष्यति ? निदिध्यासनान्तकारणकलापस्य विशदपरोक्षरूपदर्शनहेतुत्वस्यात्र भवदुक्तत्वात् । अलं तावदेवेति चेत्—अस्तु ; ईश्वरस्य तु तत् कथम् ? अन्त्ये,

स एव सर्वदा बद्धो जीवाः स्युर्मोक्षभागिनः ।
जीवानामीश्वरीभावो मुक्तिश्चेत् तत्त्वविप्लवः ॥

"तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुत्या श्रवणमनननिदिध्यानाधीनाविच्छिन्नात्मसाक्षात्कारवचनेन अन्तेऽविद्यालेशसंस्कारनिवृत्तिर्ज्ञायत इति च न युक्तम् । सकृत् साक्षात्कारस्यैव मिथ्या-

ज्ञाननिवर्तकतया अविच्छिन्नसाक्षात्कारापेक्षणायोगात्। साक्षात्कारं विनैव प्रायेणाविद्यानिवृत्तिः, साक्षात्कारात्तु अविद्यालेशनिवृत्तिरिति च नोपपत्तिमत्। कुतश्च साक्षात्कारः प्राङ्नासीत्? पूर्वज्ञानस्यापि तत्समानविषयकत्वे पूर्वस्यानिवर्तकत्वे उत्तरमप्यविशेषादनिवर्तकमेव स्यात्। सहकार्यपेक्षस्य निवर्तकत्वे मिथ्यात्वं न भवेत्। भोगेन सर्वस्य क्षयाच्च साक्षात्कारनिवर्त्यः कश्चिदविद्याभागोऽपि न परिशिष्यते। "भोगेन त्वितरे क्षपयित्वे":त्येव सूत्रमपि। "भूयश्चान्ते विश्वमायानिवृत्ति"रित्येतदर्थश्चास्मदीये **परिष्कारे** द्रष्टव्यः। 'मायां तु प्रकृतिं विद्या'दित्युक्त्वा प्रकृतिश्चेत् मायापदार्थः, तस्याःनिवृत्तिर्नाम न नाशो बाधो वा, किन्तु "रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात्। पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः" इत्युक्त्वा निवृत्तिरेव। अत्रैव श्वेताश्वतरे समनन्तरमन्त्रे निवृत्तमायस्य विश्वैश्वर्यरूपफलकीर्तनात् मायानिवृत्तिपूर्वकनित्यविभूतिप्राप्त्यवगमात् न निर्विशेषाद्वैतप्रसक्तिः। "न ह्यागमाः सहस्रं घटं पटयितुमीशते" इति न्यायेन श्रुतिरेव निवर्तकतत्त्वज्ञाने सत्येव मिथ्याभूतस्य कञ्चित्कालमनिवृत्तिं कथं ब्रूताम्? सर्वमिदं मिथ्यात्वनिरासार्थमेवोपयुज्यते। **न्यायरत्नावळि**निर्वचनञ्च प्रागेव निराकारि।

यत्तु ज्ञाननिवर्त्यत्वरूपमिथ्यात्वं परिष्कुर्वता **लघुचन्द्रिकाया**मुक्तम्—ज्ञानप्रयुक्तनाशप्रतियोग्यज्ञानतत्संस्कारान्यतरत्वं मिथ्यात्वमित्युक्तमित्यादि—तन्न। तत्र संस्कारस्यापि ज्ञाननाश्यत्वस्येष्टत्वे ज्ञानप्रयुक्तनाशप्रतियोगित्वमित्यस्यैव पर्याप्ततया संस्कारादिघटनस्य व्यर्थत्वात्। अज्ञानत्वतत्प्रयुक्तत्वेतिशब्दप्राग्भाविनः ज्ञानप्रयुक्तनाशप्रतियोगीति पदस्य तत्प्रयुक्तत्वेत्यत्रान्वयायोगेन ज्ञाननाश्यः संस्कार इत्यत्र भवल्लिखितवाक्यस्य प्रमाणत्वायोगाच्च। ज्ञाननाश्ये संस्कारे मिथ्यात्वस्यासिद्धिप्रसङ्गात्। वासनानाशे वासनाया एव कारणत्वमिति स्वयंहेतुकत्वे उत्पन्नविनष्टैव भवेदिति वासनाकल्पनैव व्यर्था। ज्ञानानाश्यत्वेऽपि सदसद्विलक्षणत्वरूपं मिथ्यात्वमस्तीति चायुक्तम्। सदसद्वि-

लक्षणत्वस्यापि 'प्रतीयमानत्वादसद्विलक्षणम्, बाध्यमानत्वात् सद्विलक्षणम्' इत्येवोपपाद्यतया नाश्यत्वं विना तदयोगात्। किं बहुना। अंशो यः कश्चिदस्तु। सर्वथा तस्य मिथ्यात्वात् अवश्यमेव तेन तदैव निवृत्तेन भाव्यम्। वस्तुतो जीवन्मुक्तविषये बाधितापेक्षया स्थितस्यैवाधिक्यं सर्वप्रपञ्चपरिदर्शनबलादेष्टव्यमिति अविद्यालेशानुवृत्तिरित्यप्ययुक्तम्।

अथेदमपि विचारयामः—'तत्त्वज्ञानेनाविद्या बाध्यते, तथापि तदंशोऽनुवर्तत' इत्यत्र कोऽयमंशो नाम? **भामती**कारेणाविद्याया निमित्त-कारणत्वमात्रस्वीकारात् विक्षेपशक्त्यभावात् आवरणशक्तिमात्रमेवास्ति, तस्या एव कश्चिदंशोऽवशिष्टोऽस्तीति चेत्—तर्हि तया शक्त्या ब्रह्मणः किञ्चिदा-वृतत्वमपि स्वीकार्यमिति न तदा पूर्णब्रह्मसाक्षात्कारः। निरवयवे निर्धर्मणि च ब्रह्मणि आवृतानावृतांशविवेचनञ्च दुष्करम्। अतः तत्त्वज्ञानस्य चाविद्यालेशस्य च यौगपद्यं दुर्घटम्। **विवरण**कारस्तु प्रथमसाक्षात्कारेणैवाविद्यागताया आवरणशक्तेर्निवर्तितत्वात् विक्षेपशक्तावेकदेश एव शिष्ट इत्याह। अयमपि पक्षो न युक्तः। प्रपञ्चनिवर्तकं तत्त्वज्ञानं शिष्यमाणशक्त्यंशातिरिक्तसर्वप्रपञ्च-मात्रनास्तित्वविषयकम्, उतैतद्विषयकमपि। नाद्यः; तावन्मात्रमिथ्यात्वग्राह-कप्रमाणाभावात्। नान्त्यः; सर्वविषयकत्वे कतिपयपरिशेषायोगात्। भगवदिच्छया सर्वं संभाव्यत इति चेत्—न; भगवतोऽपि निर्विशेषतत्त्व-ज्ञाननिवर्तनीयत्वेन सङ्कल्पयितुरेवाभावात् तत्परिशेषायोगात्। न च शुक्ति-तत्त्वज्ञानेऽपि भगवत्सङ्कल्पवशात् रजतबुद्धिर्न निवर्तत इति क्वचिदनुभूतमस्ति।

अपि च केयं बाधितानुवृत्तिर्नाम? न तावत् बाधितस्यानुवृत्तिः। बाधितत्वानुवर्तमानत्वयोर्विरोधात्। ननु बाधितत्वं वस्तुतो नास्तीति गृहीत-तत्त्वम्, एवं गृहीतस्याप्यनुवृत्तिर्भवितुमर्हति इति चेत्—श्रवणकाल एव सर्वनास्तित्वग्रहणस्य संपन्नत्वेन तदाप्रभृत्येव बाधितानुवृत्तिः सुवचेति किमिति जीवन्मुक्तमात्रविषये तदुक्तिः? अथ बाधितसजातीयस्यानुवृत्तिः; द्विचन्द्र-

पीतशङ्खादौ तथा भावादिति चेत्—तदेव दुर्वचम्, दोषस्यापि बाधितत्वादित्युक्तम्। यदा च जीवन्मुक्तः स्वेन कदाऽप्यपरिचितमचिन्तितचरं विज्ञानिभिरुत्पादितमन्यद्वा पश्यति, अश्रुतं वा शास्त्रार्थे मतान्तरं वा शृणोति, तत्र कथं बाधितानुवृत्तिः? न चेत्, स न जीवन्मुक्तः।

बाधितस्यानुवृत्तिर्हि जीवन्मुक्तेषु वर्णिता।
जीवन्मुक्तिनिरासेऽपि निरस्तैषा भविष्यति॥

प्राच्यं नव्यं बहुविधमपि ग्रन्थकं दर्शयन्तो-
ऽप्यस्मद्भाष्ये यदिह भणितं नेशते तन्निषेद्धुम्।
व्यक्तं वक्तुं तदुपरि लसत्यस्मदाचार्यसूक्तिः
भाव्या नेतः कथमपि बुधैर्बाधितस्यानुवृत्तिः॥

---

श्रीः

## (७) विविदिषासाधनत्वभङ्गप्रसाधनम्

उक्तं विविदिषार्थत्वे यदधृष्यं हि दूषणम्।
तद्विसृज्य बहूक्त्या किं न चात्र नियमोऽपि वः॥

वस्तुतो विविदिषासाधनत्वभङ्गवादोऽप्यद्वैतिभिरादरणीय एव। तेषु व्यपदिष्टैरेव विविदिषासाधनत्वदूषणेन वेदनसाधनत्वस्यापि स्वीकरणात्। शतभूषण्यामपि, "भामतीमते विविदिषाज्ञानोभयसाधनत्वं कर्मणाम्" इति, "ब्रह्मसिद्धिकाराः ज्ञानप्रतिबन्धकपापनिरसनद्वारा कर्मणां ज्ञाने उपयोगमभिप्रयन्ति" इति चोक्तम्। न हि विविदिषाप्रतिबन्धकपापनिरसनद्वारा विविदिषायामुपयोग इत्युक्तम्; किन्तु ज्ञानप्रतिबन्धकनिरसनद्वारा ज्ञाने इति। "ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः" इति ज्ञानसाधनत्वे पापक्षयद्वारा कर्मणां दर्शयत् वचनमप्यनूदितम्। एवञ्च वेदनसाधनत्वे यज्ञादेः कथं न श्रुत्यर्थः? अथ "विविदिषन्ति यज्ञेन दानेन तपसा-

ऽनाशकेन" इति श्रुतौ सन्नन्तश्रवणात् सनो वैयर्थ्यं मा भूदिति विविदिषैव फलमिति चेत्—"यजेत स्वर्गकाम" इत्यादौ कामपदवैयर्थ्यं मा भूदिति कामनैव फलं कस्मान्नेष्यते। ननु कामना यागकरणात् प्रागेवास्ति। न च कामपदवैयर्थ्यम्; कामपदोपबन्धादेव स्वर्गस्य काम्यत्वस्य फलत्वस्यावगमादिति चेत्—तुल्यम्। इहापि यज्ञाद्यनुष्ठानं फलकामनाविरहे न भवतीति फलकामना वाच्या। फलञ्च यदि विविदिषा, सा वेदनेच्छा। इच्छा चेष्यमाणप्रधानेति स्वर्गकामादिनिदर्शनेन परिमळेऽप्युक्तम्। अतः तस्याः स्वयंप्रयोजनत्वाभावात् इच्छायाः फलं वेदनमित्येव वाच्यम्। एवञ्च लोके फलेच्छां विनोपायेच्छाया अयोगात् वेदनेच्छां प्रति च वेदनस्य फलत्वात् वेदनेच्छा पूर्वम्, ततस्तत्साधनभूतायां वेदनेच्छायामिच्छा, ततस्तत्साधनयज्ञादिचिकीर्षेति वक्तव्यम्। न चेच्छाविषयकेच्छाविरहे कार्यचिकीर्षा न भवतीति लोकेऽनुभूतमस्तीत्यन्यदेतत्। एवञ्च यज्ञाद्यनुष्ठानात् प्रागेव वेदनेच्छाया जातत्वेन वेदनेच्छाकामो यज्ञादीननुतिष्ठेदिति न वाक्यार्थवर्णनं शक्यमिति शतदूषण्युपपादितमनुसंधीयताम्। अथ तीव्रेच्छालाभार्थमिति चेत्—तत्राप्युक्तं तत्रैव, वेदनतीव्रेच्छाभावे वेदनेच्छाविषयकतीव्रेच्छा न भवतीति।

यत्तु—भवदुक्तं वेदनेच्छाप्रतिबन्धकनिवृत्तिरेव विविदिषेति—तत्र पूर्वोक्तदोषस्तदधिकश्च। यो हि इच्छाप्रतिबन्धकनिवृत्तिं कामयते, स इच्छाविषयमपि पूर्वं कामयत एव। एवञ्च वेदनस्यैव फलत्वे संभवति प्रतिबन्धकनिवृत्तिफलत्ववर्णनं किमर्थम्? तथोक्तौ "विविदिषन्ति" इति श्रुतं वेदनं तदिच्छां चोलङ्घ्याश्रुतस्य प्रतिबन्धकनिवृत्तिरूपस्य फलस्य भावनान्वये लक्षणाऽपि दोषः। इतो वेदनप्रतिबन्धकनिवृत्तिलक्षणायां लाघवमपि। परिमळे च, 'पूर्वमेव वेदनेच्छासद्भावात् कथं वेदनेच्छा काम्यत' इत्याशङ्क्य संसारदुःखैकमयत्वनिश्चयपूर्वकतज्जिहासामूलकब्रह्मजिज्ञासा कर्मसाध्यतयेष्यत इत्युक्तम्। तदप्येतेन निरस्तम्। एवं हि सति ब्रह्मजिज्ञासायाः प्रागेव सद्भावात् संसारजिहासायाः तद्धेतोः दुःखैकमयत्वनिश्चयस्य वा प्राक् अभा-

वात् तदर्थं कर्मानुष्ठानमित्येव पर्यवस्यतीति गतं विविदिषासाधनत्वम् । बुभुक्षादृष्टान्तस्तत्रोक्तोऽपि शतदूषण्यामेव शमितः । परिमळकृतैव शिवार्कमणिदीपिकायां भोजनेच्छायां सत्यामपि भोजनविषयोत्कटप्रवृत्तिप्रतिबन्धकरोगनिवृत्तिरेव भेषजसेवनफलमित्युक्ततया तद्वदिह वेदनप्रवृत्तिप्रतिबन्धकपापनिवृत्तिरेव फलत्वेन वक्तव्या । एवञ्च तन्मध्ये इच्छापदार्थघटनमेव न । ज्ञानस्य कृतिसाध्यत्वं भवदनिष्टं किञ्चिदापद्यत इति विशेषः । अत्रापि 'विविदिषन्ती'ति श्रुत्युक्तफलत्याग एव । अतो वेदनस्य फलत्वेनान्वयो भाव्यः । एवञ्च सन्प्रत्ययः कामपदवत् तस्य फलत्वार्हत्वमाविष्करोति ।

नन्वसिना जिघांसतीत्यादौ हिंसायाः साध्यत्वविवक्षा युक्ता । तत्र हिंसेच्छायाः असिकार्यत्वाभावेन साध्यत्वानर्हत्वात् । नत्विह ; विविदिषायाः कर्मसाध्यत्वार्हत्वेन प्रत्ययार्थत्यागायोगादितीदमपि शतदूषण्यामेवोद्भाव्य परिहृतमिति न किञ्चिदवशिष्टम् । इदं हि 'विविदिषन्ती'ति वाक्यं न लोकसिद्धार्थानुवादरूपम् ; किंतु पञ्चमलकारस्वीकारात् विनियोजकवाक्यम्, वेदानुवचनयज्ञदानादिना फलं भावयेदिति । तत्र विविदिषाकाम इति वा, वेदनकाम इति वा पदं परिणमनीयमितीदानीं विमर्शः । वेदानुवचनादिकरणकभावनायाः भाव्यापेक्षायां यत् भाव्यत्वेन श्रुतम्, तस्य तथाऽन्वयो युक्तः । भाव्यत्वमुद्देश्यत्वम् । कृत्युद्देश्यत्वं च कृतिजनकेच्छाविषयत्वम् । तच्च वेदने श्रुतम् ; विविदिषायां तु कल्पनीयमिति गौरवम् । किञ्च विविदिषाकाम इति न भवति, विविदिषाकामनातः प्रागेव विविदिषायाः सिद्धत्वस्य प्रागेवोपपादितत्वात् । इच्छां प्रति विषयसिद्धेः प्रतिबन्धकत्वात् । तथा च वेदनकाम इत्येव प्रयोक्तव्यमिति वेदनमेव फलमिति ।

एतेन—"वेदानुवचनस्येव यज्ञस्यापीच्छासाधनतया विधान"मिति भामत्युक्तमपि—प्रत्युक्तम् । उपरि च तत्रैव, "ज्ञानमुत्पद्यत"इति वाक्यमुपादाय ज्ञानसाधकत्वमप्युक्तम् । तदैकार्थ्ये विविदिषन्तीत्यस्य परित्यज्य किं बहु साधितमिति च पृच्छामः । विविदिषासाधनत्वे वर्णिते पुंसो जन्मान्त-

रानुष्ठितकर्मवशात् विविदिषायां जातायां तदैव कर्मत्यागो महान् लाभ इति चेत्—न—विविदिषन्तीति वाक्यबलात् कर्मानुष्ठानासंभवेऽपि, "ज्ञान-मुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः" इति वाक्ये साक्षात् ज्ञानप्रतिबन्धकस्य पापस्यापि कर्मक्षपणीयत्वावगमेन तदर्थं कर्मानुष्ठानस्य तज्जन्मनि संभवात्। तत्रापि ज्ञानेच्छोत्पत्तिद्वारा ज्ञानोत्पत्तिरेव पापक्षयाद्विवक्षितेति चेत्—किं कर्मत्यागः कर्तव्य इति मुष्टिग्रहेणैवमर्थवर्णनम्, आहो अयमेव स्वरसार्थ इति सहृदयमुच्यताम्। ज्ञानेच्छाया मध्ये जायमानत्वेऽप्युद्देश्यकोटौ निवेशायोगश्च प्रागेव दर्शित इति असिना जिघांसतीत्येतत्तुल्यमेवेदमपि।

ज्ञानस्य फलत्ववादिनामस्माकमपि पापक्षयद्वारकत्वमिष्टमेव। परं तु "आरादुपकारकत्वं तत्त्वज्ञानोत्पादं प्रति चित्तसत्त्वशुद्ध्या कर्मणां युक्तम्" इत्युक्तं भामत्याम्। उपासनेन सह कर्माण्यनुष्ठेयानि फलसिद्धये इत्यारादुप-कारकत्वं कर्मणां भास्करोक्तम्। तद्वैलक्षण्याय कर्मणां संनिपत्योपकारकत्वमेव युक्तमिति विशिष्टाद्वैतिनः। वैलक्षण्योपपादनं तु ज्ञानसाधनचित्तशुद्धिसंपाद-कतया भामत्युक्तप्रकारेणैव। परन्तु न तत्र विविदिषाया उद्देश्यकोटिप्रवेश इति विशेषः। न च वाक्यान्तरं विविदिषाया साधनत्वावबोधि किञ्चिदस्ति। इदं तु अन्यथासिद्धम्, "अश्वेन जिगमिषती"तिवत्।

किञ्च वेदनेच्छापेक्षया वेदनस्योद्देश्यत्वकल्पनं युक्तम्। अनुष्ठितेषु कर्मसु वेदनेच्छां जन्मान्तरे ब्राह्मणादिवर्णप्रदानेनोत्पाद्य श्रवणादौ भगवता प्रवर्तनीयं विविदिषापक्षे। वेदनपक्षे तु यस्यानादौ संसारे प्राग्जन्मसंपन्नं श्रवणं, तस्य जननकाल एव स्वतोजातं वेदनमापादयति भगवान्, यस्य तु न, तस्य पूर्वयज्ञादिवशादेव श्रवणादिमात्रं घटयतीति सौकर्यात्। वेदनेच्छायां जातायामपि प्रतिबन्धकवशात् श्रवणादौ प्रवृत्तिः कुण्ठिता चेत्, तदर्थकर्तव्या-न्तरप्रवृत्तिविधानादिश्रमपर्यालोचनया वेदनार्थत्ववर्णनं युक्तमिति च सिद्धान्त-लेशसङ्ग्रहे उक्तम्। तस्मात् विविदिषायां जातायामपि वेदनार्थं प्रवृत्य

प्रथमवेदनोत्पत्तिक्षणावधि कथञ्चित् व्यग्राग्रासादि सोढ्वा सत्कर्मानुष्ठीयताम्। त्यज्यतां वेदनप्राप्तिसमनन्तरमेव सर्वम्।

वस्तुतो विविदिषन्ति यज्ञेनेति जनकं प्रति उपदेष्टा याज्ञवल्क्यः गृहस्थो ब्रह्मिष्ठः। न चैष ब्रह्मिष्ठोऽपि इदानीमश्रुतवेदान्त इति वा कर्मत्यागीति वा सुवचम्। अतो ज्ञायते श्रवणात् परस्तादपि कर्मानुष्ठानमस्तीति।

इषितश्च वेदनमिदमुपासनरूपमिति च पूर्वापरसन्दर्भादपि सुज्ञानम्। कर्मणामुपासनार्थत्वमिष्यतां मा वा; कर्मानुष्ठानं तु न शक्यं वर्जयितुम्। 'विविदिषन्ति यज्ञेन' इति वाक्येन तद्विनियोगेऽप्युत्पन्नविविदिषस्य तदर्थं तदनुष्ठानप्रसक्त्यभावेऽपि यावज्जीवादिश्रुतिबलादनुष्ठानं ह्यक्षतमेव। सम्यग्विमर्शे तु जीवन्मुक्तोऽपि कर्म न त्यक्तुमर्हति। तत्त्वज्ञानस्य जीवनमध्यभाविनः शरीरपातपर्यन्तप्रारब्धेतराविद्यांशमात्रनिवर्तकतया प्रारब्धान्तर्गतपापक्षयस्य तादात्विकनित्यकर्मानुष्ठानेन संपादयितुमुचितत्वात्। परं तु तत्कर्म तत्तदाश्रमोचितनित्यनैमित्तिकमात्रम्। एवञ्च विविदिषायां सत्यां संन्यास एव कार्य इति निर्बन्धाभावात्, "एतमेव पुरुषधौरेयमधिकृत्य श्रूयते—यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदिति" इति भामत्युक्तमपि नावश्यकत्वाभिप्रायम्। तथा सति "विविदिषन्ती" त्यस्य संन्यासपर्यन्तवैराग्योपश्लिष्टविविदिषार्थमित्यर्थः स्यात्। तदा लक्षणा, श्रुतवेदान्तानामपि तादृशवैराग्योपश्लिष्टविविदिषार्थे यज्ञाद्यनुष्ठानञ्चेति दोषद्वयम्।

शाङ्करभाष्ये च, 'यज्ञादिश्रुतेरश्ववत्', 'सहकारित्वेन च' इति सूत्रद्वयेऽपि वेदनसाधनत्वं कर्मणां क्रियासमभिहारेणोक्तम्। "विविदिषासंयोगाच्च" इति वाक्यमपि विदिधातूपरि सन्श्रवणात् वेदनस्येषितत्वेन यज्ञादिफलत्वं तस्य दर्शयतीत्यर्थकमेव; न तु विविदिषासाधनत्वपरमिति वाक्यत एव व्यक्तम्।

किञ्च सन्प्रयोगे कारकाणां नेच्छान्वयो दृष्टः; किन्तु क्रियान्वय एव। 'अयं मनसा पिपठिषति, अयं ज्ञानेन पिपठिषति इत्यादिप्रयोगाभावात्। अन्यथा

मनसः इष्टसाधनताज्ञानस्य चेच्छां प्रति कारणत्वात्तथा प्रयोगापत्तेः। एवं 'धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सूत्रेण सनोऽर्थे इच्छायां धात्वर्थस्य कर्मत्वेनान्वयात्, तमेतं विविदिषन्ति, शास्त्रं पिपठिषतीत्यादौ द्वितीयार्थकर्मत्वं सनप्रकृत्यर्थवेदनपठनादिनिरूपितमिति निर्विवादम्। एवञ्च तुल्यन्यायात् सर्वं कारकं तन्निरूपितमित्येव सिद्ध्यति। इच्छां प्रति कर्तृत्वं विवक्षितमिति च समानकर्तृकादिति निर्देशबलात् ज्ञायते। तावता वेदनकर्तृत्वं न त्यज्यते। अत एव कर्मकर्तरि, "भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्" इति वार्तिकानुशिष्टे, चिकीर्षते कटः इति सन्नन्तप्रयोगे इच्छायाः पुरुषनिष्ठत्वेऽपि कटस्य कथं कर्मकर्तृत्वमिति विचारे कृञ्धात्वर्थकर्तृत्वमुक्त्वैव कर्मस्थक्रियात्वमुपपादनीयमिष्टम्। क्रियमाणस्य कटस्यैव क्रियाकर्तृत्वं विवक्षितम्, न त्विच्छाकर्तृत्वम्। कटश्चिकीर्ष्यते, ओदनो बुभुक्ष्यते, इत्यादावपि न सन्प्रत्ययार्थेच्छां प्रति साक्षात् कर्मत्वं कटौदनादौ विवक्षितम्; किन्तु धात्वर्थकर्मत्वद्वारैवेच्छासंबन्धस्तत्र वेदितो व्युत्पत्तिवादे। इच्छाविशेष्यत्वस्य तत्राङ्गीकारे च गृहं तिष्ठासति, गृहं तिष्ठास्यत इति प्रयोगोऽप्यापादितः। अतः समभिव्याहृतकारकाणां धात्वर्थसंबन्धित्वमेव, न तु सन्प्रत्ययार्थसंबन्धित्वम्। अतो यज्ञादेर्वेदनकरणत्वमेव। एवं ब्राह्मणाय गां दित्सति, वृक्षात् पर्णं पिपतिषति, स्थाल्यामोदनं पिपक्ष्यतीत्यादिसंप्रदानादिप्रयोगश्च प्रकृत्यर्थकारकत्व एव युज्यते। यदि च यज्ञेनेत्यादेः कारकविभक्तित्वं नेष्यते, तर्हि सोऽपि दोषः।

यत्तु—"वेदनस्य यज्ञादिफलत्वं भामत्युक्तरीत्याऽसंभवादेव; न तु विरोधात्" इति—तत्रोच्यते। भामत्याम्, उपासनतः फले कर्मणां नोपयोगः, क्रियाकर्तृकरणेतिकर्तव्यताप्रपञ्चमतात्त्विकं निश्चिन्वन् कथमधिकृतो नाम। विदुषो ह्यधिकारः। अभिमानिकर्तृके कर्मणि नानभिमानिनोऽधिकारः इति नोपासनाकार्ये कर्मापेक्षा" इत्युक्त्वा, "अत एव नोपासनोत्पत्तावपि" इत्युक्तम्। व्याख्यातञ्च कल्पतरौ—"यत एवावगतब्रह्मभावो विधिषु नाधिकारी, अत एव ज्ञानानन्तरं कर्मानुष्ठानासंभवात् नोपासनोत्पत्तौ कर्मापेक्षेति"।

भामत्यामेव च, “ निर्विचिकित्सशाब्दज्ञानोत्पत्युत्तरमनधिकारः कर्मणी”त्युक्तम् । एवं विरोधस्य दर्शितत्वात् स नास्तीत्युपपादनाय शतदूषण्यां संभावितसर्वविकल्पोद्भावनेन दूषणं नानुपपन्नम् । भवत्सिद्धान्तसंमतं निर्विशेषब्रह्मवेदनं स्वीकृत्यैवाविरोध उपपादनीय इति तु न सत् । तस्य शशविषाणायमानत्वात् प्रामाणिकस्य वेदनस्य प्रामाणिकानां कर्मणाञ्च विरोधो नास्तीत्येतावदेव श्रुति सामञ्जस्याय प्रदर्शनीयम् ।

यदपि, “भक्तिसाधनत्वं कर्मणामदृष्टद्वाराऽपि दुर्वचम् । भक्तेः स्वयंफलत्वाभावात्; फलसाधतत्वस्य चानवगमात् । भक्तेरपि, “ भक्त्या मामभिजानाती”ति ज्ञानसाधनत्वावगमे तत्फलभूतस्य वेदनस्यैव ग्रहणसंभवात्” इति—तन्न--तथा सति भक्तिवत् कर्मणामपि तज्जन्यसाक्षात्कारात्मकवेदनसाधनत्वस्यैव युक्तत्वात्। भक्तिवत् इच्छायाः स्वयंफलत्वाभावात् कर्मसाध्यत्वेनान्वयायोगात् । एवञ्च विविदिषन्तीत्यत्र वेदनमेव भाव्यमिति। भक्त्यपेक्षया ज्ञानं पुरुषार्थ इति तदा स्यात् , यदा चिदचिदीश्वरभेदो मिथ्या, निर्विशेषमेकमेव तत्त्वमिति निर्धार्येत । अन्यथा ज्ञानं चिद्विषयकं जीवमात्रज्ञानं भविष्यति । तदपेक्षया च भक्त्यादिक प्रकृष्टतत्त्वविषयकत्वात् परमः पुरुषार्थ एवेति ।

अथ भवान् पृष्टो व्याचष्टाम्—किं भवन्मते ब्रह्मविषयकवृत्तिज्ञानं पुरुषार्थः, उत ब्रह्मैव । नाद्यः ; तस्य निवर्त्यकोटिनिविष्टत्वेन पुरुषार्थत्वायोगात् । निवर्त्यं भवदपि अविद्यानिवृत्तिहेतुत्वात् पुरुषार्थ इति चेत्—न तर्हि मुख्यं पुरुषार्थत्वम् । भक्तेरिव फलान्तरहेतुत्वात् । नान्त्यः ; “ साक्षात्कारे जननीये” इति जन्यफलत्वोक्त्ययोगात् । भक्त्यपेक्षयाऽपि साध्यत्वात् तदपेक्षयाप्यतिशयितं पुरुषार्थत्वमनिवार्यम् । वस्तुतो वेदनस्य तदा पुरुषाभावेन न पुरुषार्थत्वम् । एवं ब्रह्मणोऽपि आनन्दादिपदव्यपदिष्टस्य वस्तुतो दुःखाभावमात्रत्वात् तत्परिशेषेऽपि पुरुषापेक्ष्यमाणत्वाभावात् पुरुषार्थत्वमत्यन्तं गौणमेव । भक्तिरेवोत्कृष्टनिकृष्टाद्विविधात्मसमकालिकत्वात् निरतिशयभोग्यभूमसुखविषयकत्वाच्च मुख्यः पुरुषार्थ इति ।

"ब्रह्म वेद" इत्यादौ साक्षात्काररूपवेदनवादिभिः विविदिषन्तीत्यत्रापि साक्षात्कारेच्छैव वक्तव्येति च तस्याः श्रवणमननध्यानपर्यन्तकालानुवृत्तये यज्ञाद्यनुष्ठानमवर्जनीयम्। अत उपक्रम एव कर्मत्यागरूपभवदभीष्टासिद्धिरेव विविदिषावादेऽपि। "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।" इत्यत्र च गीताभाष्ये (6–3) ध्यानयोगे अवस्थातुमसमर्थस्य कर्म कारणमित्युक्त्या निष्पन्नयोगस्यैव कर्मत्यागः प्रतीयते; न तु श्रवणेच्छावेलायामेव। अतो विविदिषोद्देश्यत्वपक्षस्थापनसाध्यं न किञ्चिदस्ति। साक्षात्काररूपवेदनोद्देश्यकत्वपक्ष एव भवन्मतेऽपि सांप्रतमिति।

व्युत्पत्तिस्वरसोज्झनात् विविदिषावाञ्छाक्षतेर्गौरवात्
मुख्यार्थत्यजनात् वचोन्तरहतेः भाष्यादिभूयोबलात्।
प्राज्ञानुष्ठितिसंप्रदायविहतेः साक्षात्कृतीच्छया
कर्माप्त्येष्टहतेश्च वो विविदिषासाध्यत्वपक्षः क्षतः॥

शुभमस्तु।

——:o:——

श्रीः

## (८) शब्दजन्यप्रत्यक्षभङ्गप्रसाधनम्

साक्षात्कारं मुक्तिहेतुं वदत्सु प्राञ्चस्तस्मिन् कारणं शब्दमूचुः।
पक्षे नव्यैः खण्डितेऽप्यात्मनीनैरस्मिन् बिभ्रत्याग्रहं किं न्विमेऽद्य॥

दर्शनसमानाकारं विधेयं ध्यानं मोक्षसाधनमिति प्रागुक्तम्। दर्शनमेवाविधेयं मोक्षसाधनमिति पक्षश्च प्रतिक्षिप्तः। अथ दर्शनं तत् किंकरणकमिति विमर्शे तत्त्वमस्यादिशब्दकरणकमेवेति प्राच्यैरुक्तम्। तन्निरसनार्थोऽयं शब्दजन्यप्रत्यक्षभङ्गवादः। नवीनैः पुनरत्र स्वागतव्याहार एव समुचितः; यतः भामत्यादिषु शब्दकरणकत्वं विस्तरेण व्युदस्तमस्ति। तदत्र शतभूषणी अन्यवादमिव इममपि वादमुपेक्षितुमेवार्हति। एवं स्थितेऽपि भामत्याद्यनुकूलं

वादं प्रतिवक्तुं प्रयतमाना भामत्यादिपरासन एव प्रयतत इत्यद्वैतिभिरवगन्तव्यम्। तथा हि—भामत्यामथशब्दार्थविचारघट्टे, "न चैष साक्षात्कारो मीमांसासहितस्य प्रमाणस्य फलम्; अपि तु प्रत्यक्षस्य। तस्यैव तत्फलत्वनियमात्। अन्यथा कुटजबीजादपि वटाङ्कुरोत्पत्तिप्रसङ्गात्। तस्मात् निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम्" इत्युक्तम्। कल्पतरौ च, "अपरोक्षप्रमाकरणादेव तत्साक्षात्कारः। अन्तःकरणञ्च सोपाधिके आत्मनि जनयत्यहंवृत्तिमिति सिद्धमस्यात्मन्यपरोक्षधीहेतुत्वम्। शब्दस्तु नापरोक्षप्रमाहेतुः क्लृप्तः। प्रमेयापरोक्ष्ययोग्यत्वेन प्रमायाः साक्षात्कारत्वे देहात्मभेदविषयानुमितेरपि तदापत्तिः। 'दशमस्त्वमसी'त्यत्रापि तत्सचिवात् अक्षादेव साक्षात्कारः। अन्धादेस्तु परोक्षधीरेव" इति शब्दस्य परोक्षहेतुत्वं न कुत्रापीत्युपपादितम्। परिमळेऽपि, "अपरोक्षार्थविषयकज्ञानत्वं ज्ञानगतमापरोक्ष्यम्। ब्रह्मणश्च साक्षादपरोक्षत्वात् तज्ज्ञानस्य प्रत्यक्षतेति पक्षो न युक्तः। ब्रह्मविषयकश्रवणमननादेरप्यपरोक्षत्वापत्तेः। प्रत्यक्षस्य शब्दकरणकत्वे मनःकरणकत्वपरगीताभाष्यादिविरोधश्च" इत्युक्त्वा, अपरोक्षार्थविषयकत्वं ज्ञानस्यापरोक्ष्यमिति पक्षं बहुधा विकल्प्य, निराकृत्य, "स्वाविषयविषयकज्ञानाजन्यज्ञानत्वं ज्ञानापरोक्ष्यमिति निर्वचनं कृतम्। अनुमित्यादेः स्वाविषयधूमादिविषयकज्ञानजन्यत्वात् प्रत्यक्षे विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वेऽपि स्वाविषयविषयकज्ञानाजन्यत्वात् लक्षणं सुस्थम्। तत्त्वमसीति वाक्यज्ञानजन्यमखण्डार्थज्ञानञ्च स्वाविषयशब्दादिविषयकज्ञानजन्यमिति न तत्र प्रत्यक्षलक्षणमिति तदाशयः। एवं ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति लक्षणान्तरमपि ग्राह्यम्। शब्दलिङ्गादिस्थले तत्तज्ज्ञानमेव वस्तुतः करणम्; प्रत्यक्षे तु वस्तुसदेव चक्षुरादि करणमिति विशेषात्। अनुपलब्धिस्थले च, यद्यत्र घटः स्यात्, तर्ह्युपलभ्येतेति तर्कस्यापि कारणत्वात् अभावज्ञानाविषयविषयकतर्करूपज्ञानजन्यत्वमस्तीति न प्रत्यक्षमित्यपि तत्रैवोक्तम्। तदेवं भामती-

प्रस्थानानुकूलं शतदूषणीवादमिमं खण्डयन्ती शतभूषणी भामत्यादिग्रन्थान् उपात्तान् कुतो न खण्डयति ? अयमप्येकः श्वश्रूभिक्षाप्रतिक्षेप इति मन्यत इव। तदत्राद्वैतिभिरेव कार्यं शतभूषणीखण्डनं तत्सौकर्याय वयमेव कुर्मः।

तत्रादौ इन्द्रियजन्यं प्रत्यक्षमित्युक्तौ अनिन्द्रियजन्ये प्रत्यक्षेऽव्याप्तिः स्यादिति इन्द्रियमनिन्द्रियं वा प्रत्यक्षप्रमाकरणं सर्वं प्रत्यक्षमित्याशय्य प्रत्यक्षप्रमालक्षणं यदुक्तम्, विषयावच्छिन्नचैतन्याभिन्नं वृत्त्यवच्छिन्नं चैतन्यमिति—तत् उपक्रान्तविषयेऽप्यनन्वयादुपेक्ष्यमेव। न हीदं लक्षणं तत्त्वमसिवाक्यजन्यप्रत्यक्षे समन्वेति। तत्र विषयो ब्रह्म। तदवच्छिन्नचैतन्यञ्च न प्रसिद्धमिति। वृत्तिः चैतन्यमिति द्वयस्य तयोरवच्छेद्यावच्छेदकभावस्य च लोकप्रसिद्धत्वाभावादपि नेदमनुभवसिद्धं लक्षणम्; किन्तु स्वसङ्केतमात्रमूलम्। अनुपलब्धेः प्रत्यक्षं प्रति करणत्वाभावः परिमळ एव वर्णितः। **परमार्थप्रकाशिकायामस्माभिश्चा**नुपलब्धेः प्रमाणत्वमेव प्रतिक्षिप्तमिति किमनेन ? अनुमानस्य प्रत्यक्षकारणत्वाभावे पर्वतो वह्निमानित्यत्र पक्षांशे प्रत्यक्षं कथमिति चेत्—चक्षुःसंनिकर्षादेव। पर्वतो वह्निमानित्यनुमितेः पक्षांशे प्रत्यक्षत्वं तु न युक्तम्। अनुमितित्वप्रत्यक्षत्वयोर्विरुद्धयोरेकत्रासमावेशात्। भवताऽपि पर्वताकारवृत्तिवह्न्याकारवृत्त्युभयावच्छिन्नं चैतन्यमेकमनुमितिरित्युक्तम्। तत्र पर्वतवृत्तिश्चक्षुर्जन्या, वह्निवृत्तिश्चानुमानजन्येति वर्णनसंभवात् नानुमानं करणं पर्वतप्रत्यक्षे। एवं वृत्तिद्वयावच्छिन्नैकज्ञानस्वीकारे क्वचित् प्रत्यक्षानुमानशब्दादिबहुप्रमाणसामग्रीसमावेशप्रयुक्तमेकं ज्ञानमपि जायताम्। तस्य नाम किञ्चिदितस्तर्कणीयं भविष्यति। तस्मात् पर्वतमात्रविषयकप्रत्यक्षापेक्षया वह्निमत्पर्वतरूपभिन्नविषयकानुमितिरपि जायते; समनन्तरञ्च पर्वतप्रत्यक्षमपीति क्षणविवेकविलयादनुमितिप्रत्यक्षयोरेकत्वारोपमात्रम्। एवं दशमस्त्वमसीत्यादावपि भाव्यम्। अन्यथा वह्निमत्त्वेन पर्वतमनुमिनोमीति पर्वतेऽप्यनुमितिवृत्तिविषयत्वानुभवो विरुध्येत। कारणवैचित्र्यबलादेव ह्यनुमिति-

शाब्दबोधादिषु परोक्षज्ञानेषु वैजात्यम् । एवं विजातीयं प्रति हेतुत्वेन क्लृप्तात् प्रत्यक्षं परं कथमुदियात् ?

यत्तु—'संवित् स्वप्रकाशा', 'दशमस्त्वमसी'त्यादेर्वाक्यस्य प्रत्यक्ष-जनकत्वात् तत्त्वमस्यादिवाक्यमपि तथेति । तत्र दृष्टान्तासिद्धिरित्थम् । अतीतानागतवर्तमानभेदभिन्नानां सर्वासां संविदां स्वप्रकाशत्वस्यात्राभि-धीयमानत्वात् तासां सर्वासां युगपत् प्रत्यक्षविषयत्वं न संभवतीति । किञ्च संविदिति वृत्तिग्रहणं वाचैतन्यग्रहणं वा । आद्ये तस्याः न स्वयंप्रकाशत्वम् । अन्त्ये चैतन्यस्य परकीयस्यानुमेयत्वं शाब्दबोधविषयत्वं च संप्रतिपन्नम् । प्रत्यक्षविषयत्वं तु न तथा । नैयायिकैस्तस्य जडतयाऽनुव्यवसायविषयत्वस्वी-कारेऽपि स्वयंप्रकाशत्ववादिभिस्तदस्वीकारात् । अतः, 'संवित्पदस्वपदप्रकाश-पदवाच्यस्य सर्वस्य प्रत्यक्षविषयत्वात् तद्वाक्यं प्रत्यक्षवृत्तिजनक'मिति न शक्यं वक्तुम् । एतदपेक्षया संविदादिपदार्थस्य स्वयंप्रकाशत्वात् संवित् स्वयंप्रकाशेति वाक्यादपि तत्प्रकाशो न जायत इति यदि भवद्वर्णनम्, भवेत् श्रेयः ।

यत्तु संविदः स्वयंप्रकाशत्वेऽपि अस्तीति, भातीति, स्वप्रकाशमिति वा न प्रकाशत इति—तन्न—तथा सति संवित्प्रकाशकालेऽपि संविन्नास्ति, न भातीति विपर्यासापत्तेः । स्वप्रकाशत्वं न ज्ञायत इति तु युक्तम् । अत एव तार्किकादयो जडत्वमातिष्ठन्ते संविदः । किञ्च, इदं स्वयंप्रकाशत्वम्, स्वजन्यव्यवहारविषयत्वं वा स्वेतरनिरपेक्षव्यवहारविषयत्वार्हत्वं वा । तत्र व्यवहारादिपदार्थानां प्रत्यक्ष्यत्वनियमाभावात् तद्घटितं स्वप्रकाशत्वमपि न प्रत्यक्षम् । व्यवहारातिरिक्तस्तु प्रकाशः स्वविषयकः स्वजन्यो वा न भवति । तस्य संवित्स्वरूपानतिरेकात् । प्राकट्यानङ्गीकारात् ।

एवं दशमस्त्वमसीत्यत्रापि दशमत्वं दशत्वसंख्यापूरकत्वम् । दशत्व-संख्या च दशविषयकापेक्षाबुद्धिजन्या । एतद्वाक्यश्रवणकाले अपेक्षाबुद्ध्य-भावे सा न जातेति अवर्तमानत्वात् कथं प्रत्यक्षा ? अतो 'वक्त्रपेक्षबुद्ध्याद्यधी-

नदशमत्वप्रत्यक्षपूर्वकवाक्यप्रयोगे दशमत्वशब्दबोधे जाते श्रोता स्वयमपेक्षाबुद्ध्या दशमत्वमुत्पाद्य प्रत्यक्षीकरोति । तथा च चक्षुरादिकमेव करणमिति किमनेन वाक्येन चरितार्थेन ? दशत्वसंख्यापूरकत्वमित्यत्र पूरकत्वं च किम् ? दशत्वान्वयिनवपुरुषविशिष्टत्वमिति चेत्—स्वातिरिक्तपुरुषनवकवृत्तिदशत्वविशिष्टरूपार्थघटकानां नवानामदर्शनकाले वाक्यं न प्रत्यक्षजनकं स्यात् । दर्शनकालेऽपि दशमस्त्वमसीति वाक्यार्थश्रवणजनितगणनव्यापारानन्तरमेव दशमत्वप्रत्यक्षमिति न शब्दात् प्रत्यक्षसंभवः । किञ्च दशमोऽहमस्मीति ज्ञानस्य प्रत्यक्षत्वे किं नियामकम् ? अहमर्थविषयकत्वमिति चेत्—अहं पुण्यापुण्यवानित्यस्यापि प्रत्यक्षत्वाप्रसङ्गः । किञ्च, अहमिति आत्मा वा, देहो वा ? आत्मनो न बाह्यप्रत्यक्षविषयत्वमस्ति । मानसप्रत्यक्षं तु भवन्मतेऽपि मनसः पृथक् प्रत्यक्षकरणत्वानङ्गीकारात् दुर्वचम् । सुवचत्वेऽपि नवानामन्येषामात्मनामप्रत्यक्षत्वेन तद्गतदशत्वसंख्याया अप्यप्रत्यक्षत्वात् दशत्वसंख्यापूरकत्वरूपं दशमत्वमपि तथा । अहमिति देहग्रहणे अन्धस्य दशमोऽहमिति धीः कीदृशी ? चाक्षुषाभावेऽपि स्पार्शनं परिमळचिन्तितमस्त्विति चेत्—तत्रापि परेषां नवानां युगपत् त्वगिन्द्रियेणाग्रहणात् तद्गतदशत्वस्य त्वगिन्द्रियाग्राह्यतया दशमत्वांशे स्पार्शनं दुर्वचमेव । अतः कल्पतरूक्तरीत्या परोक्षैव । एवञ्च इन्द्रियसन्निकर्षे सति दशमोऽहमिति प्रत्यक्षम्, न चेन्नेति सिद्ध्या अवश्यक्लृप्तमिन्द्रियं विहायान्यथासिद्धस्य शब्दस्य कारणत्वं नैव भवितुमर्हतीति कल्पतरूक्तं सिद्धम् । अधिकमुपरिष्टात् ।

यत्तु प्रत्यक्षरूपस्य देहात्मभ्रमस्य परोक्षज्ञानान्निवृत्तिर्न भवतीति—तत्रोच्यते । प्रत्यक्षादपि न भवितुमर्हति । ऐन्द्रियकप्रत्यक्षात्तन्निवृत्त्यनङ्गीकारात् । 'तस्य दुष्टत्वात् तथा ; शाब्दं तु प्रत्यक्षं अदुष्टहेतुकत्वात् निवर्तक' मिति चेत्—तर्हि अदुष्टहेतुकत्वमात्रं प्रयोजकमस्तु । किं प्रत्यक्षत्वस्य संमेळनेन ? । तथा च वाक्यजन्यं श्रवणमेव निवर्तकं भवतु । श्रुतवेदान्तस्यापि जगन्निवृत्त्यदर्शनात् नैवमिति चेत्—दृष्टब्रह्मात्मैक्यानामपि न भवतीति

तुल्यम्। अत एव भुज्यमानादृष्टाभावविशिष्ट एव साक्षात्कारः, "तस्य तावदेव चिरम्" इति श्रुत्यनुसारात् निवर्तकत्वेन भवदिष्टः। एवञ्च तदा श्रवणमेवाविद्यानिवर्तकमस्तु ; किं प्रत्यक्षेण ? अतः साक्षात्कार एव निवर्तक इत्यत्र नियामकाभावात्, श्रुतौ च दर्शनश्रवणमनननिदिध्यासनानामुक्तत्वात् अदृष्टविधया मोक्षहेतूपायविशेषविधानपरत्वमेव श्रुतेरुन्नीयते।

अपि च प्रत्यक्षं शब्दजन्यमित्यत्र न किञ्चित् प्रमाणम्। लोके वेदे चादृष्टेः। ऐन्द्रियकत्वे दुष्टहेतुकत्वापत्त्या शब्दकरणकत्वमेष्टव्यमिति चेत्। शब्दोऽप्यनाप्तवचसां दर्शनात् दुष्ट एव। वेदस्त्वपौरुषेयः कथं दुष्ट इति चेत्—मनोऽपि कर्मोपासनाक्षपितकल्मषं रजस्तमसो र्निबर्हितत्वेन शुद्धमदुष्टं भविष्यति। यथा श्रूयते, "न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन" इति। अत्र वाचः सर्वात्मना निषेधात् मनसः शुद्धस्य स्वीकारात् अपौरुषेयं वाक्यमपि नोपायभूतं ज्ञानमुत्पादयितुमीष्ट इति स्पष्टम्। अतः शाब्दप्रत्यक्षमेतत् उक्तश्रुतिनिषिद्धमेव। यदि च मनसोऽविद्याख्यदोषजन्यत्वेन दुष्टत्वं मन्यते, तदपौरुषेयत्वेनाभिमते वेदेऽपि तुल्यम्। अन्यथा, वेदस्याविद्यानधीनत्वे सत्यत्वे च द्वैतप्रसङ्गात्।

भवदुपात्तवचनानि च शाब्दप्रत्यक्षस्यासाधकानि। तथा हि—"वेदान्तविज्ञानसुनिश्चितार्था" इत्यत्र सुनिश्चितपदस्य प्रत्यक्षितपरत्वेऽपि तस्य सुनिश्चयस्य वेदान्तविज्ञानजन्यत्वावसायात् ध्यानजन्यत्वमेव बुद्ध्यते। न तु शब्दजन्यत्वम्। अन्यथा विज्ञानपदवैयर्थ्यञ्च। "स्वाध्यायश्चक्षुरुत एकमस्य" इति वचनात् एकेनैव चक्षुषा यदि प्रत्यक्षम्, तर्हि—"योगो द्वितीयमभिवीक्षणाय" इति द्वितीयचक्षुर्व्यर्थम्। उभयस्य प्रत्येकमसामर्थ्ये च उभयं मिलितमेव चक्षुरिति प्रत्येकं चक्षुष्ट्वकथनमयुक्तम्। अतो विशदज्ञानं क्रमेण भवतीत्यत्रैव चक्षुःपदनैर्भर्यम्। यथा, "चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना" इत्यादौ। न हि धर्मादिकार्यार्थसाक्षात्कारस्तत्र राज्ञो विवक्षितः। एवं अध्ययनमन नयन इत्यपि निरूढम्। अन्यथा एषां वाच्यार्थपरत्वे

चक्षुष्ट्वादिकमपि तेषां मुख्यमापद्यते। एवं नानाचक्षुःश्रवणाच्च शाब्दमेव प्रत्यक्षमिति सिद्धान्तभङ्ग एव। मनस्सहकृतः शब्दः प्रत्यक्षहेतुरित्यपि वार्तम्। अखण्डब्रह्मवृत्तिजननायावश्यस्वीकर्तव्यस्य मनस एव करणत्वसंभवे श्रवणहेतु-तयाऽन्यथासिद्धस्य वाक्यस्य कारणत्वस्यैवाभावे करणत्वकल्पनानुपपत्तेः। मनःसहकृतः शब्दः संविदः स्वप्रकाशत्वं साधयतीत्यप्ययुक्तम्। तत्त्वमसी-त्यत्राखण्डात्मप्रत्यक्षहेतुत्वेनाभिमतस्य स्वप्रकाशत्वप्रत्यक्षकारणत्वाभावात्।

किमिदं वाक्यं शक्तिस्मरणपदार्थोपस्थित्याकाङ्क्षायोग्यताज्ञानादिसहकृतं सत् प्रत्यक्षजनकम्, स्वतन्त्रं वा? नाद्यः; अभेदध्यानानुवृत्तिशीलस्य तत्प्रत्यक्षावसरे अनन्तभेदज्ञानावश्यकत्वकल्पनस्यानुचितत्वात्। अत एव नान्त्यः। अनेकवर्णतदानुपूर्वीरूपभेदात्मकवाक्यज्ञानस्याप्यावश्यकत्वं हि न युक्तं कल्पयितुम्। अर्थोपस्थित्यादेरनपेक्षितत्वे अतदर्थकात् इषेत्वेत्यादेर-प्यदुष्टात् वेदशब्दात् प्रकृतप्रत्यक्षप्रसङ्गात्।

यत्तु—त्वं सुखीति वाक्यजन्यम् अहं सुखीति ज्ञानं प्रत्यक्षजन्यमिति परिभाषोक्तमिति—तन्न। सुखवर्तमानतादशायां सुखस्य साक्षिभास्यतया शब्दस्य तत्रानपेक्षितत्वेन, शब्दाभावेऽपि जायमानतया च तस्य प्रत्यक्षस्य शाब्दत्वे मानाभावात्। तर्हि शब्दः किं करोतीति चेत्—समाने विषये प्रत्यक्षसा-मग्र्याः प्राबल्यात् प्रत्यक्षस्य च स्थितत्वात् मा किञ्चित् करोतु। करोतु वा; शाब्दत्वप्रकारकेच्छाविरहविशिष्टप्रत्यक्षसामग्र्या एव प्रतिबन्धकत्वात्, शाब्दं ज्ञानं जायतामितीच्छाकाले तदुत्पत्तिसंभवात्। साक्ष्यधीनभानस्य परोक्षान्तः-करणवृत्तेश्चाविरोधात् यौगपद्यं वाऽस्तु। एवं दशमस्त्वमसीत्यत्रापि भाव्यम्।

यत्तु—शब्दजन्यवृत्तिः सन्निकृष्टविषयिणी प्रत्यक्षरूपैवेति—तत्र कोऽयं सन्निकर्षः? यदि समीपस्थत्वम्—तर्हि अन्धादेः घटोऽयमित्यादिवाक्यादपि प्रत्यक्षापत्तिः। इन्द्रियसंबन्ध इति चेत्—केनेन्द्रियेण संबन्धः? अन्ये-न्द्रियसंबन्धे अन्येन्द्रियग्राह्यघटादिप्रत्यक्षस्य शब्दात् वारणाय तत्तद्वस्तुग्राह-केन्द्रियसन्निकर्षविवक्षायां ब्रह्मग्राहकस्येन्द्रियस्य भवताऽनङ्गीकारात् मनसः

किञ्चित्प्रत्यक्षकरणत्वस्य चानङ्गीकारात् स्वग्राहकेन्द्रियसन्निकर्षो ब्रह्मणि दुर्वचः। नित्यविभुनि च ब्रह्मणि मनस्संबन्धस्य सर्वदैव सत्त्वात् श्रवण-मननवेळायामेव शाब्दप्रत्यक्षं कुतो नाभूत्? एवमिन्द्रियाणां शरीरान्त-स्थपदार्थानाञ्च मनस्सन्निकर्षसत्त्वात् शरीरान्तरवयवानां योग्यत्वस्याप्यन-पायात् तद्विषयकशब्दप्रयोगकाले तत्तत्प्रत्यक्षापत्तिः। तत् किं चाक्षुषं स्पार्शनं वेति चेत्—चक्षुरादिवत् पृथक् शब्दस्य करणत्ववादी शाब्दं प्रत्यक्षं चाक्षुषा-दिरूपं कथं चिन्तयितुमर्हति? 'गुरुत्वादेरसन्निकृष्टत्वात् अप्रत्यक्षत्वं युक्त'मि-त्युक्तमप्ययुक्तम्। गुरुत्वादेः सन्निकृष्टत्वेऽप्ययोग्यत्वादप्रत्यक्षत्वमित्येव वक्त-व्यत्वात्। इन्द्रियायोग्यत्वे शाब्दप्रत्यक्षं चेन्न भवति, ब्रह्मण्यपि न स्यात्। 'विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यरूपप्रत्यक्षत्वं ब्रह्मज्ञाने दुर्वचम्, ब्रह्मणो विषयस्यैव चैतन्यतया विषयावच्छिन्नचैतन्याप्रसिद्धे'रिति च प्रागेवोक्तम्।

'शुक्तिरूप्यादौ शुक्त्यादिविषये चक्षुर्वृत्तिः, रूप्यादावविद्यावृत्तिः, उभयावच्छिन्नं चैतन्यमेकमिति प्रत्यक्षमेकम्; न तु तत्र चक्षुर्जन्यत्वं रूप्यप्रत्यक्षे' इति च न युक्तम्। रूप्याद्यंशे स्मरणरूपत्वेऽपि उभया-वच्छिन्नचैतन्यैक्यस्य सुवचतया रूप्याद्यंशे प्रत्यक्षत्वस्वीकारः, अनिर्वचनीय-तत्कल्पना च कुतः? रजतं साक्षात्करोमीति प्रत्ययनिर्वाहस्तदैवेति चेत्—रजतं चक्षुषा पश्यामीत्यादिनिर्वाहाय तर्हि चाक्षुषवृत्तिरप्येष्टव्या। यदि स्फटिके जपाकुसुमलौहित्यवत् शुक्तिवृत्तिगतं चक्षुर्जन्यत्वं रूप्यवृत्तौ भासत इत्यु-च्यते, प्रत्यक्षत्वमपि तथैव सुवचमिति व्यर्थं तत्कल्पनमित्यादि **परमार्थ-प्रकाशिकायां** प्रतिपादितमेवास्माभिः। सन्निकृष्टविषये सर्वं प्रमाणं प्रत्यक्षजनकमिति च सन्निकर्षशोधनेन प्रागेव परास्तम्। अतः प्रत्यक्षसामग्रीसद्भावे प्रत्यक्षवत्, तदैव परोक्षज्ञानसामग्र्यां सत्यां परोक्ष-मपि काममस्तु; न पुनः प्रत्यक्षजनकत्वं परोक्षज्ञानसामग्र्याः कल्पनीयम्।

एवमुपपादने क्रियमाणे केनचिदाशङ्कि—प्रत्यक्षे सत्येव विषये यदि परोक्षप्रकाशः स्यात्, तदा शुक्तित्वप्रकाशेऽपि रजतविषयकः परोक्षः प्रकाशः स्यादिति—तत्रोत्तरितं शतदूषण्याम्, शुक्तौ इदं रजतमिति ज्ञानं जायमानं किं परोक्षं मन्यसे ? येन तद्विषयपरोक्षोपादानं करोषीति—तस्मात् त्वया परोक्षापरोक्षविभागत्यागेन शुक्तित्वप्रत्यक्षकालेऽपि रजतभ्रान्तिरेवापादनीया। सा च विशेषदर्शनरूपप्रतिबन्धकसद्भावात् सामग्र्यभावान्न भवतीति च। एवं स्थिते शतभूषणी, परोक्षज्ञानेनापरोक्षभ्रमनिवृत्तिरत्र शतदूषण्यामुच्यत इति कृत्वा, तथा सति शुक्तित्वपरोक्षेण शुक्तित्वाज्ञानस्य निवर्तितत्वे रजतभ्रान्तिः प्रत्यक्षरूपा मा भूदित्यापाद्य प्रकृतशतदूषणीग्रन्थं "भावानवबोधात्" इति दूषयति। अत्र शतदूषणीभावानवबोधः शतभूषणीकृत एवेति विपश्चितो निश्चिन्वन्ति। अज्ञानवैविध्यं तु अनन्तरमेव विचारयिष्यामः।

यदि वस्तुनः प्रत्यक्षत्वेऽपि परोक्षं स्यात्, शुक्तित्वप्रकाशेऽपि रजतप्रकाशः स्यादिति यदि कश्चिदद्वैती आपादयेत्—तन्न युक्तम्—तर्काभासत्वादित्युच्यते उपरि **श्रीपुण्डरीकाक्षाचार्यग्रन्थांशो**दाहरणेन शतदूषण्याम्। स्वयंप्रकाशतया प्रत्यक्षमेव चैतन्यं श्रवणवेळायां परोक्षज्ञानविषयत्वेनाद्वैतिस्वीकृतमिति आपादकस्य स्वानिष्टत्वं न भवति। शुक्तित्वप्रत्यक्षेऽपि इदं रजतमिति वाक्यादिना परोक्षज्ञानस्यापि संभवात् आपाद्यस्यास्मदनिष्टत्वं न भवति। अप्रामाण्यज्ञानास्कन्दितप्रत्यक्षज्ञानं शङ्खः पीत इति यथा विवेकिनोऽपि, तथा परोक्षमप्यप्रामाण्यज्ञानास्कन्दितं जायताम्; का तत्र हानिः। विशेषादर्शनरूपसामग्रीवैकल्यात् रजतप्रकाशायोग इति तार्किकसमाधानमपि प्रागुक्तमेव।

यदत्र लिख्यते, "प्रत्यक्षस्य ब्रह्मणः परोक्षत्वं नाद्वैतिस्वीकृतम्। अज्ञानं हि—त्रिविधम्, असत्त्वापादकम्, अनानन्दतापादकम्, अभानापादकञ्चेति

तत्र श्रवणेन प्रथमाज्ञाननिवृत्तिः । मननेन द्वितीयनिवृत्तिः । निध्यानेऽपि जाते तृतीयनिवृत्तिः । तदा ब्रह्मप्रत्यक्षम् । न च तदानीं ब्रह्मणः परोक्षत्वम्" इति—तत्रोच्यते । परिच्छिन्नत्वसप्रपञ्चत्वाद्यापादकानि अज्ञानानि कुतस्त्यज्यन्ते ? श्रवणमनननिद्ध्यानानि समानविषयकाणीति संप्रतिपन्नम् । तत्र श्रवणादेः पृथक् पृथक् अज्ञाननिवर्तकत्वं च कथम् ? आनन्दो ब्रह्मेति श्रवणात् अनानन्दतापादकाज्ञानानिवृत्तिश्च कुतः ? अभानापादकाज्ञानमित्यत्र च भानं नाम किम् ? यदि विषयत्वम् ? तर्हि श्रवणविषयत्वसिद्ध्यैवाविषयत्वापादकाज्ञाननिवृत्तिरिति किं निध्यानपर्यन्तेन ? वस्तुतोऽविषयभूते ब्रह्मणि विषयत्वापादकमज्ञानमेव वक्तुं युक्तम् ; न त्वविषयत्वापादकमज्ञानमिति च भाव्यताम् । अत एव भानं नाम साक्षात्कारताख्या लौकिकविषयता ; तदभावापादकमज्ञानमिति पक्षोऽपि क्षिप्तः । किञ्च निध्यानेन कथं तदज्ञाननिवृत्तिः । प्रत्यक्षोत्पत्त्यनन्तरमेव तदज्ञाननिवृत्तेर्युक्तत्वात् । एवञ्च श्रवणादिकमपि श्रवणाद्यविषयत्वापादकाज्ञानानिवर्तकमित्येकरूपं प्रतिनियतांशवर्णनं युक्तम् । सर्वमपि च ज्ञानमसत्त्वानानन्दत्वापरिच्छिन्नत्वादिसर्वविषयाज्ञाननिवर्तने उपकरिष्यति । साक्षात्कारात् प्रागेव सर्वाज्ञाननिवृत्तौ च साक्षात्कार एवानपेक्षितः स्यात् । साक्षात्कारनिवर्त्यानाद्यज्ञानान्तरसद्भावे चाज्ञानत्रैविध्यवर्णनमयुक्तम् । वस्तुतः एकस्याज्ञानस्यांशभेदा इमे इति युक्तम् । न त्वेवं विभागोऽपि ।

अपि च अहं नास्मि, अहमननुकूल इति कस्यापि प्रतीत्यनुदयात् आत्मनः असत्त्वाननुकूलत्वयोरापादकमज्ञानं सर्वथैव न भवति । अनुकूलत्वमेव चानन्दत्वम् । अत एव स्वयंप्रकाशत्वादभानापादकमज्ञानञ्च न संभवति । तथा च शाङ्करभाष्यम्—"सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति, अस्मत्प्रत्ययविषयत्वादपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः" इति । अतो देहाद्यतिरिक्तत्वाद्याकारेण सत्त्वाशङ्कायां तन्निवर्तकं श्रवणादीत्येव वाच्यम् । एवञ्चैकरूपेण प्रत्यक्षस्यैव रूपान्तरेण परोक्षज्ञानविषयत्वमिष्टमेव भवतीति । न हि ब्रह्मरूपं धर्मि अनिर्दिश्य तत्र नित्यत्वादिकं श्रुतिः श्रावयितुमर्हति । अतः

प्रत्यक्षे सत्येव परोक्षत्वमद्वैतीष्टमेव । एवं घटोऽस्ति, पटोऽस्तीत्यादावपि अस्तीति भातं ब्रह्मेति स्वीकारात् तदेव श्राव्यते श्रुत्यापीति सिद्धं प्रत्यक्षेऽपि परोक्षम् । अत एव अस्ति, भातीति सिद्धत्वादपि निध्यानेनैवाभानापादकाज्ञाननिवृत्तिवचनमयुक्तं भवति ।

अथ आप्तोपदेशादिभिः शुक्तित्वप्रकाशेऽपि दुष्टेन्द्रियादिना रजतावभासानुवृत्तेरिष्टत्वात्, सामान्यतः शुक्तित्वप्रकाशे रजतावभासः स्यादित्यापादनमशक्यमिति शतदूषण्युक्तमनूद्य कृतं दूषणञ्चातिविचित्रम्। 'सर्वज्ञानयाथार्थ्यवादिविशिष्टाद्वैतिरीत्या नेदं वक्तुं शक्यम्; तद्दृष्टेः सर्वानुभवविरुद्धत्वात्। नाद्वैतिदृष्ट्या; परोक्षशुक्तिप्रकाशे रजतभ्रमानुदया'दिति हि दूषणम्। इदं हि सर्वथैवायुक्तम्। सर्वज्ञानयाथार्थ्यवादिभिर्भ्रमप्रमाव्यवहारस्य निर्वाहः क्रियत एव। स च, 'यथार्थं सर्व विज्ञान'मिति निरूपयतः **प्राभाकरस्य** ग्रन्थादपि सुग्रह इति नात्र सर्वानुभवविरोधः। परोक्षप्रकाशेऽपि विपरीतभ्रमो न भवतीति वादस्तु स्वसिद्धान्तसंपूर्णविस्मरणनिबन्धनः। श्रवणमनननिदिध्यानकालेऽपि जगद्भ्रमानुवृत्तेः, "द्रष्टव्य" इत्युक्तदर्शनानन्तरमेव तन्निवृत्तेश्चैव सिद्धान्तिसंमतत्वात्। अन्यथा श्रवणस्यैव पर्याप्तत्वात्। अनुभवविरोधश्च; शङ्खश्वैत्यचन्द्रैक्यादिविषयकपरोक्षनिश्चयेऽपि पैत्त्यद्वित्वादिप्रत्यक्षदर्शनात । दिङ्मोहालातचक्राद्युदाहरणमपि स्मर्यतामिति।

यत्तूक्तं—जीवन्मुक्तानां न भ्रान्तिकथापीति—तत् व्याहतम्। भवतैव जीवन्मुक्तिभङ्गवादपरीक्षायां जीवन्मुक्तानां देहप्रतिभासादेरिष्टत्वात् । तस्य च ब्रह्मातिरिक्तविषयकस्य भ्रान्तित्वावश्यंभावात्। तत्र तेषामप्रामाण्यज्ञानमप्यस्तीत्यन्यदेतत्। तावता भ्रान्तिकथैव नेति दुर्वचम्।

एवमेतदुपरि, ज्योतिष्टोमादिधर्मो न योगिप्रत्यक्षविषयः चोदनैकप्रमाणकत्वात्। तथा योगिप्रत्यक्षं न प्रमाणम्। अन्यथा तन्मूलकद्वैताद्वैतविशिष्टाद्वैतादिसर्वसिद्धान्तानां प्रामाणिकत्वप्रसङ्गादित्युक्तमप्यभिनिवेशापादितं स्वसिद्धा-

न्तविरुद्धमेव। योगर्द्धेश्च सूक्ष्मव्यवहितविप्रकृष्टसर्वविषयकसाक्षात्कारहेतुत्वं सर्वतान्त्रिकसंमतम्। तत एव भोगेन सर्वकर्मक्षपणसामर्थ्यमात्मविद इति तार्किकादयः। भामत्याञ्च तदधिगमाधिकरणे, "योगर्द्ध्यैव वा दिवि भुव्यन्तरिक्षे बहूनि शरीरेन्द्रियाणि निर्माय फलान्युपभुज्य ऋद्धेन योगसामर्थ्येन योगी कर्माणि क्षपयित्वा मोक्षी संपत्स्यत" इति तन्मतमन्ववादि। न च सिद्धान्ते योगजधर्माधीनः सर्वसाक्षात्कारो न्यषेधि। किन्तु, 'अनादिकालप्रवृत्ताः कर्माशयाः अनियतकालविपाकाः अल्पेन कालेन कर्मान्तराण्यसञ्चिन्वानेन क्षेतुं शक्या इति न निर्धारयितुं सांप्रत'मित्येव। जैनसौगतादिधर्मस्यापि धर्मत्वमस्तु, तेषामपि योगित्वादित्यादिकं तु वेदबाह्यनिराकारिणा जैमिनिनैव समाहितम्। न खलु वयं विपरीतयोगप्रवृत्तपुरुषभावनाप्रकर्षाधीनं भ्रान्त्यात्मकसाक्षात्कारं वारयामः, न च प्रमाणयाम इति किमनेन ?

तस्मात्, "श्रोतव्यो मन्तव्यो निदिध्यासितव्य"इत्यत्र कुत्रापि न विधिः बहिर्मुखप्रवृत्तिनिरोधार्थमेव तव्यप्रयोग इति वदद्भिः, योगस्य तद्वविधानात योगजः साक्षात्कारो न भवेदिति द्रष्टव्यशब्दस्याघटमानतां विमृशद्भिः सहसा शब्दस्य प्रत्यक्षप्रमाणत्वमप्रमाणमेव कल्पितमिति भामत्यादिपथ एव कथञ्चिदुचितः। "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति वचनाच्च सनत्कुमारस्यैव दर्शकत्वं ज्ञायते ; न तु शब्दस्य। "तमसः परस्तात्" इत्यादिवत "तमसः पारम्" इति स्थलविशेषोऽपि विवक्षितः स्यात्। तस्यानुग्रहबलेन प्रदर्शनमपि संभाव्यते। यथा व्यासेन प्रसन्नेन सञ्जयस्य विश्वरूपभगवत्प्रदर्शनम्। दर्शनमिह विशदज्ञानमात्रमित्युक्तौ तु न काऽपि क्षतिः। "शास्त्रदविरोधाच्च" इति सूत्रे शास्त्रेण यत् दृष्टं तद्विरोधादित्यर्थपक्षे दर्शनं हि विशदज्ञानमात्रम् ; न तु प्रत्यक्षम्। सूत्रकारश्च, "दर्शनात् स्मृतेश्च" इति अनुभावकमात्रपरतया वेदे दर्शनपदं प्रयुङ्क्ते। परोक्षानुभवेऽप्युपलब्धिपदं न्यायसूत्रभाष्यादिषु सुप्रसिद्धम्। तथेदमपीति निश्चप्रचमेतत्। "तं त्वौपनिषदं पुरुषं पृच्छामी"ति श्रुतिश्च पुरुषसूक्तादौ जगत्कारण-

त्वलक्ष्मीपतित्वादिनाऽवगतस्य अद्भुतरूपस्वरूपगुणविभूतिविस्तारस्य शास्त्रैकवेद्यत्वमेव ग्राहयेत् ; न तु शब्दजन्यप्रत्यक्षविषयं निर्गुणं किञ्चित्। "यतो वाचो निवर्तन्त"इति श्रुतिर्वेदान्तेतरवागविषयत्वमेव ब्रह्मणो ब्रवीतीति शतभूषण्युक्तं तु नाद्वैतिमतं विशिष्टाद्वैतिमतं वाऽनुरुध्य। किन्तु तात्कालिकस्वकपोलकल्पनामात्रादरणेनेति सर्वे विदन्ति।

"ब्रह्मविदाप्नोति परम्" इत्यारभ्य वल्लीद्वयं कुत्राप्युपासिशब्दानाम्नानात् उपासनविलक्षणनिर्विशेषब्रह्मसाक्षात्कारमात्रविषयमित्युक्तमप्ययुक्तम् ; वल्लीद्वयेतत्र तत्रोपासिश्रवणात्। येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते इति पृथक्। 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेत् वेद' इति विद्युपासिद्वयम्। भृगुवल्ल्यामपि, तत्प्रतिष्ठेत्युपासीतेत्यादि। अतः श्रुतिः उपास्यर्थमेव वेदेत्येतावन्मात्रप्रयोगेऽपि विवक्षतीत्यैकरूप्यमुचितम्। यदि नैवम्, वेदनमिदं साक्षात्काररूपमित्यत्र किं प्रमाणम्? श्रवणस्य वा स्वयंजातवेदनस्यापि वाऽत्रोपायत्वकथनोपपत्तेः। 'आत्मा वा अरे द्रष्टव्य' इति बृहदारण्यकाद्यैककण्ठ्याय, तथेष्यत इति चेत्—तर्हि, 'आत्मानमेव लोकमुपासीते'त्याद्यैककण्ठ्याय ब्रह्मविदित्युक्तमुपासनमेवास्तु। कथं भेदसाक्षात्कारः परोक्षज्ञानेन निवर्त्येतेति चेत—यद्यप्रामाण्यज्ञानास्कन्दितः स्यात्, साक्षात्कारोऽप्यनिवर्तक एव। प्रामाण्यदार्ढ्ये च परोक्षमपि निवर्तकमेव। साक्षात्कारपर्यन्तोत्पत्तावेव यो विस्रम्भं वहति, तं प्रति दर्शनोपदेशः, अन्यस्य तु विवेकिनो वेदनसामान्यं पर्याप्तमिति क्वचित् विदिमात्रश्रवणमस्तु चन्द्रैकत्वनिश्चये निष्कम्पप्रामाण्यमनुसन्दधतोऽपि द्विचन्द्रज्ञानानुवृत्तिस्तु तद्धेतोर्दोषस्य चन्द्रैकत्वज्ञानेनानिवर्तितत्वादिति प्रागेवोक्तम्। न केवलं चन्द्रैकत्वपरोक्षे सति, तदपरोक्षे स्थितेऽप्यङ्गुल्यवष्टम्भादिना द्विचन्द्रप्रत्यक्षं भवत्येव। अतः कारणसत्त्वे कार्यं भवत्येव। जातेऽपि तत्राप्रामाण्यग्रहस्तु अपरोक्षे च तुल्यः। इह तु दोषस्यापि मिथ्याभूततया प्रामाण्यदार्ढ्यसिद्धौ श्रवणमेवाविद्यां निवर्तयिष्यति।

अत एव देहातिरिक्तस्वात्मनि शास्त्रजो निश्चयः परोक्षः देहात्मभ्रान्तिं निवर्तयत्येव। यत्तु तत्र स्थूलदेहात्मभ्रान्तिनिवृत्तावपि सूक्ष्मदेहात्मभ्रान्तिर्न निवर्तत इति—तदयुक्तम्। स्थूलसूक्ष्मरूपदेहद्वयसद्भावस्य लोकानुभवदूरत्वेन सूक्ष्मदेहात्मभ्रान्तेरननुभवात्; स्थूलदेहकाले सूक्ष्मदेहस्थितौ प्रमाणाभावाच्च। सत्यपि विवेके देहात्मभ्रान्त्यनुवृत्तिर्दृश्यत इति चेत्—अस्तु; तत्र तद्धेतोर्दोषस्य द्विचन्द्रस्थल इव परोक्षज्ञानेनानिवर्तितत्वादेव सा भवितुमर्हति। स तु दोषो वास्तवयोगबलेनैव निवर्त्यते। "प्रयत्नात् यतमानस्तु योगी संशुद्धकिल्विषः" इत्यादिप्रामाण्यात्। तथा च यत्र विशेषादर्शनमात्रात् भ्रमः, तत्र सति विशेषदर्शने जायमानानां ज्ञानानां भ्रान्तिविषयार्थविषयकत्वाभावात् विषयापहार एव भ्रान्तिनिवृत्तिरित्युच्यते; न जातायाः भ्रान्तेर्निवृत्तिर्विशेषदर्शनेन। तस्याः क्षणिकतया स्वयमेव निवृत्तेः। यत्र तु दोषविशेषो भ्रान्तौ प्रधानकारणम्, तत्र दोषसमुच्छेदं यावत् भ्रम उत्पद्येत। अथापि तद्विषयस्य सत्यत्वाध्यवसायराहित्यमेव तादृशस्थले भ्रान्तिनिवृत्तिर्नाम। इदञ्चापरोक्ष इव परोक्षेऽपि तत्त्वज्ञाने भवितुमर्हतीति श्रुतौ निध्यानदर्शनपर्यन्तापेक्षितत्वकथनं जगन्मिथ्यात्वपक्षेऽनपेक्षितमेव। अतो दोषोच्छेदकं विलक्षणशक्तिकमुपायं विधातुमेव तदिति वक्तव्यम्।

शतदूषण्यां निवृत्तिविषयके विकल्पे क्रियमाणे उक्तम्—भ्रान्तिज्ञानस्य निवृत्तिर्नाम नाशः। स च उत्तरोत्पन्नेन तत्त्वज्ञानेन जन्यत इत्यङ्गीकारे पूर्वपूर्वज्ञानस्य उत्तरोत्तरज्ञाननाश्यत्वस्य यत्किञ्चिज्ज्ञानसद्भावेऽपि सुवचत्वादुत्तरेण तत्त्वज्ञानेनैव भाव्यमिति न नियम इत्येवम्। तत्र यदुक्तम्—अधिष्ठानज्ञानस्यैव भ्रान्तिज्ञाननिवर्तकत्वस्वीकारात् अधिष्ठानज्ञाननिवर्त्यं मिथ्येत्युच्यते इति—तावता शोध्यमाननिवृत्तिपदार्थतत्त्वं कीदृशमिदं कथितं भवति। अधिष्ठानज्ञाननाश्यत्वं मिथ्यात्वमित्युक्तौ भ्रमनिवृत्तिर्नोपपादिता भवति। यत्किञ्चिदुत्तरज्ञानेनापि तन्नाशदर्शनेनाधिष्ठानज्ञानत्वेन कारणत्वासिद्धेः। शुक्तिरूप्यादेः पदार्थस्य नाश्यत्वमपि दुर्वचम्। प्रातिभासिकपदार्थोत्पत्तावेव मानाभावस्य

वक्ष्यमाणतया नाश्यत्वपर्यन्तकथाया अप्रसक्तेः। मिथ्याभूतस्य निवृत्तिर्नाशपदेन व्यवहारं नार्हति। तत्त्वज्ञानव्यतिरिक्तोपायाधीनाभावस्थल एव नाशपदव्यवहारात्। अत एव प्रातिभासिकस्य नाश इत्यपि न स्वरसम्। एतेन स्वरूपप्रच्युतिरेव ध्वंस इति मिथ्यार्थव्यतिरिक्तस्थले कुत्र दृष्टमिति प्रश्नोऽपि गळहस्तितः। भवद्भिरेव ध्वंसस्य निवृत्तेश्च वैलक्षण्यस्य तत्र तत्र प्रदर्शितत्वात्। मुद्गराद्यभिघाताधीनो घटनाशो हि नाम मृत्स्वरूपप्रच्युतिरेव। स्वरूपप्रच्युतिर्नाम धर्मिणि पूर्वस्थितविरोध्यवस्थाप्राप्तिः। सा कथं मिथ्यार्थे तत्त्वज्ञाननिवर्तिते स्यात्, धर्म्यभावादिति शतदूषण्या प्रतिबोधितोपरि, "वयं तु पश्यामः, मिथ्यार्थस्यैव प्रच्युतिः, शुक्तिरूप्यादौ दर्शनात्। न तु वस्तुस्वरूपस्ये"ति लेखनं ग्रन्थार्थापरिज्ञानविलसितम्।

यत्तु—जगन्मिथ्यात्वसाधकस्य दृश्यत्वरूपहेतोः न ब्रह्मणि व्यभिचारः। वृत्तिविषयत्वरूपस्य दृश्यत्वस्य धर्म्यन्यूनसत्ताकस्यैव हेतुत्वादिति—तन्न—फलव्याप्यत्वरूपं दृश्यत्वं मिथ्यात्वसाधकमिति भवतोक्तम्; वक्ष्यते च। अत्र तु वृत्तिव्याप्यत्वमेव परिष्कृत्य व्यभिचारवारणे यत्यते। तत्र दृश्यत्वं प्रत्यक्षविषयत्वरूपं अनुभवविषयत्वरूपं वा चैतन्यविषयत्वरूपं वा विवक्षितं चेत्—हेतुप्रसिद्धिः स्यात्। ब्रह्माख्यचैतन्यविषयत्वं वा वृत्तिविषयत्वं वा दृश्यत्वं प्रतिवादिभिरन्तःकरणवृत्तिरूपसविषयकपदार्थानङ्गीकारादुभयसंमतस्यैव हेतुत्वसंभवादहेतुरेक। एवं विशेष्यस्यैवासिद्धौ तत्र धर्म्यन्यूनसत्ताकत्वमिति विशेषणस्य का प्रसक्तिः? तदप्यव्यावर्तकम्। मिथ्यात्वसाधकानुमानं किलेदम्। सत्तायां त्रैविध्यञ्च मिथ्यार्थसिद्ध्यनन्तरग्राह्यम्। ततः प्राक् तु सत्ता सर्वत्र एकरूपैव गृहीताऽस्तीति धर्म्यन्यूनसत्ताकत्वं ब्रह्मगतदृश्यत्वेऽप्यस्त्येव। दृष्टान्तासिद्धिश्च; शुक्तिरूप्यमिति कस्यचिदनिर्वचनीयस्यानङ्गीकारात्। सर्वमिदं परस्तात् प्रपञ्चयिष्यते।

यत्तु—विनश्यतोऽपि मिथ्यार्थज्ञानस्य तत्कारणभूताज्ञाननिवृत्त्या बाध्यत्वमपीष्यत इति—तन्न—नाशबाधयोर्वैलक्षण्यात्। यदि मिथ्यार्थस्य प्रति-

पन्नोपाधौ नास्तीतिग्रहवत् जातस्य मिथ्यार्थज्ञानस्यापि विषये स्यात् बाधज्ञानम्, न मे शुक्तिरूप्यज्ञानमासीदिति——तदैव तद्बाधप्रसक्तिरिति। यदपि——प्रत्यक्षेण भ्रान्तिनिवृत्तिरित्यस्यार्थविकल्पे भ्रान्तिनिवृत्तिर्नाम भ्रान्तिज्ञानकारणोच्छेद इत्यर्थस्वीकारे शतदूषणीदत्तं यद् दूषणं भ्रान्तिज्ञानकारणानुच्छेदे यथावस्थितप्रत्यक्षज्ञानानुदयादिति——तत्र भवद्दूषणम्——अधिष्ठानज्ञानेनैवाविद्यानाशः क्लृप्तः। एवञ्च निवृत्तेः पूर्वत्वमधिष्ठानज्ञानस्य च परत्वमित्यपूर्वेयं कल्पना शतदूषणीकाराणामिति—अत्रापूर्वं कल्पनं किं लोकानुभवानुसारिणां शतदूषणीकाराणाम्, उताद्वैतिनां भवतामिति सहृदयं चिन्तनीयम्। यावत्तिमिरादिदोषस्थिति चन्द्रैकत्वप्रत्यक्षं नोदेति; यावत् पित्तस्थिति श्वेतः शङ्ख इति नाध्यक्षम्। भ्रान्तिकारणस्य तस्य भेषजादिना समुच्छेदे च तत्तत्प्रत्यक्षमिति सर्वजनीनमेतत्। एतद्विरोधेनाद्वैतिभिर्वर्ण्यते ब्रह्मणि जगद्भ्रान्तिकारणभूतो दोषः अधिष्ठानसाक्षात्कारेण निवर्त्यत इति। दोषनिवृत्तेः पूर्वत्वं प्रत्यक्षस्य परत्वं चानुभविकमुपेक्ष्यापूर्वेयं कल्पना खल्वद्वैतिनामेव। एतत्साधनाय च शुक्तितत्त्वप्रत्यक्षेण शुक्तिरूप्यभ्रमकारणनिवृत्तिरित्यत्यन्ताप्रसिद्धमुदाह्रियते। शुक्तिरूप्यमनिर्वचनीयमप्रसिद्धम्। अप्रसिद्धतरं तदुपादानभूतं किञ्चित्, यत् शुक्तिसाक्षात्कारेण निवर्त्यं स्यात्। अज्ञानस्वरूपायथाग्रहणमूलकं तत्रोपादानत्वकल्पनया समापतितोऽयमनर्थः।

अत्राधिष्ठानज्ञानात् संसारनिवृत्तिरित्यत्र केयं निवृत्तिरिति विचारे यदि संसारनिवृत्तिर्नाम संसारभ्रान्तिकारणसमुच्छेदः, तर्हि स नाधिष्ठानज्ञानजन्यः; तस्यैव तज्जनकत्वादित्युक्तस्य दूषणावसरे——"निमित्तकारणनाशस्य कार्यनाशप्रयोजकत्वं न कुत्रापि दृष्टम्" इति वचनमनवसरम्। नाशयोः कार्यकारणभावस्याप्रस्तुतत्वात्। निमित्तकारणनाशोऽपि क्वचित् कार्यनाशप्रयोजक इष्यते। यथा अपेक्षाबुद्धिनाशात् द्वित्वादिसंख्यानाशः। एवं देहादिनाशस्य सुखादिनाशः हेतुत्वमपि केचिदिच्छन्ति। एवं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति भवद्भाष्यपरिगृहीतन्यायसूत्रोक्तमपि द्रष्टव्यम्। किञ्च

भामतीपक्षे जगत् प्रति अविद्या निमित्तमात्रम्। ब्रह्म विवर्तोपादानमिति प्रागुक्तम्। जगन्निवृत्तिश्चाविद्यानिवृत्त्यैव स्वीकृता; न तु ब्रह्मनिवृत्त्या। एवञ्च निमित्तकारणनाशादेव भवतां संसारनाशः।

एतेनोपादानकारणोच्छेदादेव कार्यनाश इति निरस्तम्। उक्तस्थले वैपरीत्यात्। अपि च यो हि तार्किकोऽसत्कार्यवादी उपादानसमवेतं द्रव्यान्तरमुपादेयं कार्यमिच्छति, तस्य युज्यते उपादानोच्छेदात् कार्योच्छेद इति। सोऽपि परमाणूच्छेदं विनैव द्व्यणुकोच्छेदसत्त्वात् उपादानोच्छेदं कारणत्वेन न मन्यत इत्यन्यदेतत्। वेदान्ती तु सत्कार्यवादी द्रव्यस्य सर्वदा सत्ताम्, अवस्थानामेवापूर्वत्वमातिष्ठते। एतन्मते उपादानकारणोच्छेदो नाम कः? किं द्रव्योच्छेदः? उत कारणतावच्छेदकपूर्वावस्थोच्छेदः? आद्यस्त्वसिद्धः। उत्तरत्र कारणत्वावच्छेदकपिण्डत्वावस्थाप्रहाणस्य घटत्वावस्थारूपतया घटत्वावस्थापन्नकार्यस्योच्छेदं प्रति तस्य हेतुत्वं कथम्? प्रत्युत कार्यलयोत्तरमप्युपादानस्य यथायथमवस्थितेरेव प्रामाणिकत्वात् नोपादानोच्छेदादुपादेयोच्छेदः। क्वचिदेव त्विदं सुवचं स्यात्। यथा पटोच्छेदे पटकार्याच्छादनाद्युच्छेद इति। यत्तु निमित्तकारणोच्छेदस्य मिथ्यार्थनिवृत्तिरूपत्वं नाङ्गीक्रियत इति—किं तेन? संसारनिवृत्तेः कारणोच्छेदरूपत्वरूपविकल्पकोटिरयुक्तेति चेत्—तन्न—न हि संसारनिवृत्तिः संसारनिमित्तकारणभूतकिञ्चिन्निवृत्तिरूपा तत्रोक्ता। किन्तु संसारविषयकभ्रान्तिं प्रति यत् कारणं तदुच्छेदरूपेति किल विकल्पः कृतोऽस्ति। न च भ्रान्तिकारणपदेन भ्रान्त्युपादानं स्वीकर्तुं शक्यते। तद्धि आत्मा वा स्यात्, अन्तःकरणं वा। नाद्यः, आत्मनोऽनुच्छेद्यत्वात्। अन्त्यस्तु शुक्तितत्त्वज्ञानेनान्तःकरणनाशादर्शनादनुपपन्नः। अतो भ्रान्तिकारणपदेन भ्रान्तिनिमित्तकारणमेव ग्राह्यमिति शतदूषण्युपपादितमेव साधीयः। अथ संसारनिवृत्तिर्नाम संसारोपादानकारणाविद्यासमुच्छेद इति पक्षः कस्मान्नोद्भावित इति चेत्—प्रतिभासमानमिथ्यार्थप्रध्वंसमभिप्रेत्येति प्रथमपक्ष एव सोऽन्तर्गत इति। क्वचिदपि मिथ्यार्थस्य प्रध्वंसाभावादिति तत्पक्षे कृतं दूषण-

मेवाविद्योच्छेदपक्षनिरासकं भवितुमर्हति ; शुक्तितत्त्वज्ञानेन शुक्तिरूप्यतत्कारणाविद्योभयोच्छेदस्यैव भवद्भिरुक्तत्वात्। भ्रान्तिकारणपदेन भ्रान्तिविषयशुक्तिरूप्यादिवस्तूपादानकारणभूतस्याज्ञानस्य ग्रहणं तु क्लिष्टम्। अज्ञानस्यानिर्वचनीयविषयोत्पादन एवोपक्षीणत्वात्। विषयद्वारैवाज्ञानस्य भ्रान्तिकारणताया वक्तव्यत्वात् विषयोच्छेदविषयकेण प्रथमेन विकल्पेनैव तत्कारणभूताज्ञानोच्छेदस्यापि कबलीकृततया पृथक् दूषणप्रसक्त्यभावाच्च। एवमद्वैतिसर्वस्वं पक्षं प्रथमत उद्भाव्य निरस्य, अथ जगत्सत्यत्ववादिभिरपि संमतान् पक्षान् विकल्प्य निवृत्तिस्वरूपविवेचनेन परमार्थो व्युत्पादितः शतदूषण्यामित्यध्यवसेयम्। अतोऽन्यथा गृहीत्वा, 'अपूर्वेयं कल्पने'ति दूषणं संरम्भकृतमेव।

दोषोच्छेद एवाविद्यानिवृत्तिरिति शतदूषण्युक्तमित्यप्ययुक्तम्। चन्द्रद्वित्वादिहेत्वविद्यानिवृत्तिर्दोषोच्छेदश्चैक इति शतदूषण्यामभाषणात्। यत्र दोषाविद्ययोरैक्यम्, तत्र दोषोच्छेद एवाविद्यानिवृत्तिरित्यस्य भवद्भिरपलपितुमशक्यत्वात्। दोषः सदसदनिर्वचनीयानाद्यविद्यैवेति हि भवन्मतम्। एवञ्च, दोषस्य तस्योच्छेदं विना अधिष्ठानतत्त्वसाक्षात्कारो न भवितुमर्हति। तथैव चन्द्रैकत्वादिसाक्षात्कारे दर्शनादित्युक्तिर्ह्यामोदनीयैव। इतः परं भवद्भिः—'अविद्याया दोषत्वं नेष्यते ; किन्तु, भेदवासनाया एव। सा चाभेदभावनाबलेन प्रथमं निरस्यते, ततः साक्षात्कारः, ततोऽविद्यानिवृत्तिरिति वक्तव्यम्। एवं तर्हि पूर्वपूर्वभेदवासनयैवोत्तरोत्तरकल्पनोपपत्तौ भावरूपाविद्यायामेव न प्रमाणम्। भेदवासनासन्ततिरेव चेत् अविद्यापदेन विवक्ष्यते, दोषाज्ञानयोरैक्यनिबन्धनो दोषस्तदवस्थ एव। भेदवासनायां निरस्तायां स्थिताऽप्यविद्या न संसृतिकल्पिकेति तन्निरसनमपि व्यर्थम्। भेदवासनाविरहविशिष्टस्य परोक्षस्यैव तन्निवर्तकत्वसंभवादपरोक्षकल्पनवैयर्थ्यञ्चेत्यादि द्रष्टव्यमित्यलम्। भ्रान्तिविषयसत्यत्वाध्यवसायशैथिल्यमपरोक्षज्ञानत इव परोक्षज्ञानतोऽपि भवत्येव। अन्यथा श्रवणमननानन्तरं ध्यानादावप्रवृत्तिप्रसंगात्। देहात्मभ्रमविषयसत्यत्वाध्यसायशैथिल्याभावे पारलौकिकप्रवृत्तीनामघटमानत्वाच्च। मिथ्यार्थः कश्चित् ज्ञाननिवर्त्य

इतीदं सर्वदैवासंभावितमिति प्रथमविकल्पत एव दूषितत्वात् तत्सिद्धवत्कारेण तदर्थे साक्षात्कारपर्यन्तधावनमपि मुधैव। एवञ्च मिथ्यार्थनिवृत्तेरेवानभ्युपगमात् तस्याः ब्रह्मरूपत्वं वा पञ्चमप्रकारत्वं वेत्यादिः काकदन्तपरीक्षैव। साऽपि समये क्रियताम्; किमत्र; तावताऽपि, 'साक्षात्कार एव तद्धेतुः, स च शब्दजन्य एवेत्यत्रान्वयव्यतिरेकोपपादनायोगस्य ग्रन्थ एव दर्शितत्वात्।

शब्दस्य सूक्ष्मव्यवहितविप्रकृष्टार्थबोधकत्वं सर्वसंमतमेव। तद्विषयकप्रत्यक्षजनकत्वं तु न **शबर**प्रभृतिभिरपीष्टम्। ब्रह्म तु—"न चक्षुषा गृह्यते नाऽपि वाचा" इति वागवेद्यतया, "मनसा तु विशुद्धेन" इति मनोवेद्यतया चोक्तम्। न च वाग्वेद्ये तत्र वागवेद्यत्वं भवितुमर्हति। तेन ब्रह्मविषयकप्रत्यक्षजनकत्वं यथा चक्षुषो नास्ति, तथा वाचः ब्रह्मप्रतिपादिकाया अपि प्रत्यक्षजनकत्वं नास्ति। मन एव तु शुद्धं तत्प्रत्यक्षजनकमिति श्रुतिरियमुपदिशतीति, शब्दजन्यप्रत्यक्षसद्भावपक्षे ज्ञायेत। अत. श्रुत्यापि शब्दजन्यप्रत्यक्षभङ्ग एव। यत्त—इन्द्रियजन्यप्रत्यक्षाविषयत्वादेव मनोजन्यप्रत्यक्षविषयत्वस्यायोगः, मनसोऽपीन्द्रियत्वादित्यभिप्रायेण, 'मनसः इन्द्रियस्ये'ति लेखनम्—तत स्वसिद्धान्तविरुद्धम्; भवतां मनसोऽनिन्द्रियत्वात्॥

यत्तु—ज्वालैक्यप्रत्यक्षं ज्वालाभेदप्रत्यक्षेणैव बाध्यते, न त्वनुमानादिना; दीपादिसन्निकर्षे तद्भ्रमबाधाभावादिति—तत्रोच्यते। पूर्वं प्रत्यक्षितज्वालैक्यस्य पुंसः पश्चात् ज्वालाभेदप्रत्यक्षं कथं जायते? अविशेषात् पुनरपि ज्वालैक्यप्रत्यक्षं वा कुतो न जनिष्यते? तस्मादेवं वक्तव्यम्—ज्वालायां प्रतिक्षणं सामग्रीभेदमपरिशीलितवतः एकसामग्रीजन्यत्व(सामग्र्यैकत्व) भ्रान्तिरूपदोषवशात् घटादाविवैक्यभ्रमः प्राप्तः। स च सामग्रीभेदनिश्चयेन दोषे अपसारिते न जायते। ज्वालाभेदप्रत्यक्षमेव सति सन्निकर्षे भवतीति। तावता पुनर्ज्वालैक्यप्रत्यक्षानुत्पत्तिरुक्ता भवति। तथापि ज्वालाभेदानुमाने सति ज्वालैक्यप्रत्यक्षस्य पूर्वस्य न बाध इति कथम्? अद्वैतसिद्धावेव प्रत्य-

क्षस्य लिङ्गाद्यबाध्यत्वे बाधकस्योपन्यस्तत्वात् । लैङ्गिकज्ञानेन प्रत्यक्षस्य परिभव (अप्रामाण्यज्ञानास्कन्दितत्वादि) एव हि शतदूषण्यामुक्तः । "दीपासंनिकर्षे ज्वालाभेदानुमानेन तदैक्यभ्रमबाधाभावा"दित्यस्य च कोऽर्थः ? किं तदा तदैक्यप्रत्यक्षरूपभ्रमो भवतीति, स्मृतिरूपभ्रम इति, अनुमित्यादिरूपभ्रम इति, भ्रान्तावप्रामाण्यज्ञानमपि न जायत इति । नाद्यः, दीपस्यासन्निकृष्टत्वकथनात् धर्मिण एवाप्रत्यक्षे कथं तदैक्यप्रत्यक्षमिति । न द्वितीयः ; भेदानुमितिकाले पूर्वं मे ऐक्यप्रत्यक्षमासीदित्यैक्यप्रत्यक्षस्मृतौ बाधकाभावात् ऐक्यमात्रस्मृतिर्न भवतीत्यत्र नियामकाभावात् । अनुमितिरूपपरोक्षज्ञानस्य परोक्षभ्रमप्रतिबन्धकत्वसंभवेन स्मृतिर्न भवतीति सुवचत्वाच्च । अत एव न तृतीयः । न च तुरीयः । द्विचन्द्रप्रत्यक्षेऽपि चन्द्रैक्यपरोक्षज्ञानबलादप्रमाण्यज्ञानोत्पत्तेरद्वैतसिद्ध्यादिसर्वसंमतत्वेन परोक्षज्ञानोत्पत्तिस्वीकारेऽप्यप्रामाण्यज्ञानानुत्पत्तौ कारणाभावात् । तस्मात् तदा तदैक्यभ्रमबाधाभावकथनमयुक्तम् । यत्तु—ज्वालाभेदानुमानतोऽपि भेदप्रत्यक्षं भवितुमर्हति, पर्वतो वह्निमानित्यानुमानिकप्रत्यक्षवदिति—तदयुक्तम्—पर्वतो वह्निमानित्यत्र पर्वतांशे प्रत्यक्षत्वे विवादेऽपि वह्न्यंशेऽनुमितिरित्यत्राविवादात् । इह ज्वालाप्रत्यक्षविषये विवादाभावेन भेदविषय एव तद्विचारात् तत्र प्रत्यक्षत्वस्य तद्दृष्टान्तेन साधनायोगात् । यत्र वह्न्यंशेऽपि सन्निकर्षः, तत्स्थलीयानुमानिकप्रत्ययो दृष्टान्त इति चेत्—तत्रानुमानतः प्रत्यक्षं भवतीति न खल्वभ्युपगमप्रसक्तिः । सन्निकर्षादेव तदुत्पत्तेः । अनुमितौ सिद्धेः प्रतिबन्धकतया अनुमितिसामग्र्यभावाच्च । अनुमित्सारूपोत्तेजकसत्त्वे चानुमितेरेवावश्यम्भावात् । प्रत्यक्षानुमितिरूपकार्यद्वयस्योत्पत्तावप्यविरोधेन तत्रानुमितिसामग्र्याः प्रत्यक्षजनकत्वस्वीकारस्याऽऽवश्यकत्वाभावाच्च ।

यत्तु इन्द्रियस्य दुष्टत्वसंभावनया ब्रह्मसाक्षात्कारस्यैन्द्रियकत्वे तेन भेदसाक्षत्कारस्याभिभवो न भवतीति—तदयुक्तम्—तत्त्वमस्यादिवाक्यजन्यस्य श्रवणस्य परोक्षस्यापौरुषेयवाक्यजन्यतया प्रामाण्ये सुस्थे तन्मूलभावनाधीनस्य

तत्समानविषयकस्य प्रत्यक्षस्यापि तद्वदेव प्रामाण्यस्य सुस्थतया एतद्विषये इन्द्रियस्य निर्दुष्टत्वानुमानसंभवेन इन्द्रियस्य संभाव्यमानदोषत्वायोगात्। निर्मूलशङ्का तु शब्दजप्रत्यक्षेऽपि प्रत्यक्षत्वाविशेषमात्रपुरस्कारेण भवितुमर्हति। यच्च—**आगमबाधोद्धारे अद्वैतसिद्ध्यादौ** असंभाव्यमानदोषत्वेन परत्वेन चाद्वैतवाक्यप्रामाण्यस्य स्थापितत्वात् शब्दजप्रत्यक्षं नाप्रामाण्यशङ्कास्पदमिति—तदप्येतेन निरस्तम्। किञ्च शब्दस्यापौरुषेयतया निर्दुष्टत्वेऽपि शब्दज्ञानस्य आकाङ्क्षासन्निधियोग्यतातात्पर्यज्ञानशक्तिलक्षणादिज्ञानसहकारेणैव ज्ञानजनकतया तेषां ज्ञानानां पुंगतानां दोषमूलभ्रमत्वसंभावनया निर्विशेषविषयकश्रवणादेरप्यसंभाव्यमानदोषत्वानिश्चय एव। यत्तु—वेदस्यापीन्द्रियवत् अविद्यारूपदोषमूलत्वेऽपि अविद्यायाः काचकामलादिवत् आगन्तुकत्वाभावात् अप्रामाण्याप्रयोजकत्वमिति—तन्न—आगन्तुकस्यैवाप्रामाण्यप्रयोजकत्वे अनादेस्तत्प्रयोजकत्वं किंपुनर्न्यायसिद्धमित्येवोचितम्। यथा सांसिद्धिकदोषवतः तैमिरिकजनस्य द्विचन्द्रज्ञानमप्रमैव, तथेति। तत्र चन्द्रैकत्वग्राहिपुरुषान्तरसंवादविरोधात् तथेति चेत्—इहापि तत्त्वमस्यादिवाक्यस्यार्थान्तरनिरूपकनिपुणपुरुषसंवादविरहस्तुल्यः।

यत्तु—दर्शनसमानाकारध्यानजन्यो मोक्ष इति स्वसिद्धान्तविरुद्धं शतदूषण्यामपरोक्षज्ञानस्य मोक्षसाधनत्वकथनमिति—तदिदम् "तावन्मात्राभ्युपगमेऽपि न नः काचित् क्षतिः" इति सूक्तावपिशब्दस्वारस्यापरिशीलनविजृम्भितम्। एवं मूलत एव स्पष्टं सिद्धान्तसंमतेऽर्थे ज्ञापिते सति किमत्र **चण्डमारुतेन** ज्ञापनीयमस्ति? येन तस्यात्र जोषम्भावो दोषः स्यात्। प्रत्यक्षस्य शब्दजन्यत्वं न साधयितुं शक्यमित्येतावदत्र वादे विवक्षितम्। न तु, प्रत्यक्षं मोक्षहेतुः, उत प्रत्यक्षसमानाकारं ज्ञानमिति विचिचारयिषितम्। तद्विचारस्तु प्राक् अविधेयज्ञानभङ्गवाद एव प्रस्तुत आसीदिति ह्यत्र शतदूषणीतात्पर्यम्। यदि च भामतीमनुरुरुत्सतो भवतोऽपि निर्विशेषसाक्षात्कारस्यानैन्द्रियकत्वे नास्त्याग्रहः, तर्हि कस्मादयं शब्दजन्यप्रत्यक्षभङ्गवादो नोपेक्षितः?

दृश्यत्वानुमानस्य ब्रह्ममिथ्यात्वापादकत्वादि प्रागेवोक्तम् ।; पृथक् वक्ष्यते चेत्यलमत्र। ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति लक्षणं परोक्षव्यावृत्तम् अपरोक्षसर्वानुगतं योगिप्रत्यक्षादिसाधारणमिति, "अस्तु वा कथञ्चिदापरोक्ष्य-परिशेषः" इति शतदूषणीसूक्त्या ज्ञापितमेव ॥

अथानुमानविचारः—विगीतं ज्ञानं साक्षात्कारि, तत्त्वमस्यादिवाक्य-जन्यज्ञानत्वात् तत्स्वरूपगोचरश्रावणज्ञानवदिति प्रयोगः। वाक्यविषयकश्रावण-प्रत्यक्षस्य वाक्यार्थज्ञानस्य च वाक्यजन्यत्वसत्त्वात् शब्दसाक्षात्कारदृष्टान्तेन शब्दार्थज्ञानस्यापरोक्षत्वसाधनमत्रेष्टम्। तत्र श्रोतव्य इत्युक्तश्रवणव्यभिचारः शतदूषण्यामापादितः। तत् परिजिहीर्षता च भवता मनननिदिध्यासनसहकृत-वाक्यजन्यज्ञानत्वादिति हेतुः परिष्क्रियते। एवञ्च दृष्टान्तः साधनविकलः। शब्दप्रत्यक्षे वाक्यमात्रस्य कारणत्वात् मनननिदिध्यासनयोः सहकारिकारणत्वा-भावात्। अथ निद्ध्यानानन्तरत्वे सति वाक्यजन्यज्ञानत्वादित्यस्तु—न; एक-दिनध्यानानन्तरत्वस्यान्यदिनवाक्यजन्यध्यानेऽपि सत्त्वेन व्यभिचारात्। ध्याना-तिरिक्तत्वे सतीति विशेषणे चासिद्धिः। दर्शनसमानाकारत्वस्यास्माभिरुक्ततया तन्निराकरणायैव भवता साक्षात्कारित्वसाधनात्। न च ध्यानस्य वाक्यजन्यत्वा-भावात् हेत्वभावादेव न व्यभिचार इति वाच्यम्—पक्षेऽपि वाक्यजन्यत्वस्य सन्दिग्धत्वात्। वाक्यजन्यश्रवणमूलतया परम्परया वाक्यजन्यत्वं तु ध्यानेऽप्य-क्षतम्। पुनरपि वाक्यजन्यत्वासिद्धिः सुवचा; अर्थज्ञानस्य वाक्यज्ञानजन्य-त्वेऽपि वाक्यजन्यत्वाभावात्। वाक्यज्ञानजन्यत्वनिवेशे च दृष्टान्तस्य साधन-वैकल्यम्। किञ्च वाक्यं नाम पदसमुदायः, तत्र वर्णानामनित्यत्वे नित्यत्वे-ऽपि वा युगपत् प्रत्यक्षं तु न भवति। प्रत्येकवर्णप्रत्यक्षं च न वाक्यजन्यम्। पूर्वपूर्ववर्णप्रत्यक्षाधीनतावत्स्मृतिघटितान्तिमवर्णमात्रप्रत्यक्षस्य च न वाक्यजन्य-त्वम्। नतरां सर्वांशे स्मृतिरूपस्य। एवं वाक्यजन्यज्ञानत्वस्य फलभूतार्थ-ज्ञान इव व्यापारभूतपदार्थस्मरणयोग्यताज्ञानादावपि सत्त्वात् व्यभिचारश्च। निर्व्यापारत्वे करणत्वासंभवात्। व्यापारस्य वाक्याजन्यत्वे फलस्यापि तदयो-

गात्। वाक्यस्याकारणत्वं वाक्यज्ञानस्यैव कारणत्वमिति चोभयत्र तुल्यम्। एवं तत्त्वमसिवाक्येन हेतुना यदि किञ्चिदनुमीयेत, तदा ज्ञायमानं लिङ्गमनुमितिकरणमिति पक्षे वाक्यजन्यज्ञानत्वमनुमितावपीति तत्र साध्याभावात् व्यभिचारः। तथा निर्विशेषब्रह्मज्ञानस्य पक्षत्वे आश्रयासिद्धिः। तत्त्वमसिवाक्यार्थज्ञानस्य पक्षत्वे परोक्तत्त्वमसिवाक्यार्थज्ञानस्यापि प्रत्यक्षत्वापत्तिः। 'सत्यं ज्ञान'मिति वाक्यस्यापि संगतार्थकतया सत्यज्ञानादिजन्यज्ञानेऽपि तत्त्वमसिवाक्यार्थ ज्ञानत्वसत्त्वात् तत्र तत्त्वमसिवाक्यजन्यत्वाभावात् भागासिद्धिः। तत्त्वमसिवाक्यजन्यज्ञानत्वेन पक्षत्वे श्रवणरूपवाक्यार्थज्ञानस्यापि पक्षतया पुनर्भागासिद्धिरेव। श्रवणातिरिक्तत्वानिर्धारणात् पक्षासिद्धिः। श्रवणं हि शाब्दबोधः। वाक्यजन्यवाक्यार्थज्ञानं सर्वं शाब्दबोधात्मकमेव नः संमतमिति। विवादविषयीभूतव्यक्तिमात्रस्य पक्षत्वेऽपि तत् ज्ञानं न साक्षात्कारि, तत्त्वमसिवाक्यजन्यवाक्यार्थज्ञानत्वात् श्रवणवदिति सत्प्रतिपक्षश्च।

अप्रयोजकश्च हेतुः। अन्यथा ज्योतिष्टोमादिवाक्यार्थज्ञानं प्रत्यक्षं, ज्योतिष्टोमवाक्यजन्यज्ञानत्वादिति सर्वत्र प्रत्यक्षापत्तिः। श्रवणत्वेनाभिमतं तत्त्वमसिवाक्यर्थज्ञानं प्रत्यक्षं तत्त्वमसिवाक्यजन्यज्ञानत्वादिति प्रथमज्ञानस्यापि प्रत्यक्षत्वप्रसङ्गः। एवञ्च शाब्दबोधसामान्यस्य प्रत्यक्षत्वे शब्दस्य प्रत्यक्षातिरिक्तप्रमाणत्वानापत्तिश्च। सन्निकर्षसहकृतस्यैव शब्दस्य प्रत्यक्षजनकता, न त्वसन्निकृष्टविषयेऽपीति चेत्—कोऽयं सन्निकर्षः? हन्त तर्हि तत एव प्रत्यक्षसंभवे शब्दादिप्रमाणजन्यत्वस्वीकारस्तत्र व्यर्थ इति श्रवणनिदिध्यासनानन्तरभाविनि ज्ञाने तत्त्वमसिवाक्यजन्यत्वरूपहेत्वसिद्धिः। एवं ज्ञानाकरणकज्ञानत्वमुपाधिः। ऐन्द्रियके योगिप्रत्यक्षादौ सर्वत्र ज्ञानाकरणकज्ञानत्वसत्त्वेन साध्ये साक्षात्कारित्वं प्रति तस्य व्यापकत्वात् पक्षे साधनाव्यापकत्वाच्च। अथ साध्यभूतं साक्षात्कारित्वमपि तदेव। अतः साध्योपाध्योरैक्यान्न स उपाधिरिति चेन्न—ज्ञानाकरणकज्ञानत्वस्य साध्यत्वे ज्ञानकरणकत्वस्यात्रेष्टत्वेन हेतोर्बाधितत्वापत्तेः। "औपनिषदं पुरुषं पृच्छामी"ति वा, "तस्मिन् दृष्टे परावरे"

इति वा श्रुतिः शब्दजन्यज्ञानं प्रत्यक्षमिति वा साक्षात्कारः शब्दजन्य इति वा न साधयितुमीष्टे। अतः साक्षात्कारित्वसाधकहेतोरागमसंवादाभावादप्रयोजकत्वमक्षतम्। सन्निकृष्टार्थविषयकस्य च वाक्यस्यापरोक्षं प्रति कारणत्वे 'श्रोतव्य' इत्युक्तश्रवणादेरपि प्रत्यक्षत्वापत्तिः। सन्निकर्षश्च दुर्वच इति प्रागेवोक्तम्।

तत्त्वमस्यादिवाक्यं प्रतिपाद्यविषयकसाक्षात्कारजनकं स्वप्रकाशार्थोपदेशरूपत्वादित्यद्वैतिप्रयोगः खण्डितः शतदूषण्याम्। भवता तु प्रयोगमविज्ञाय, विगीतं ज्ञानं साक्षात्कारीति प्रतिज्ञां विधाय तत्र ज्ञानपक्षकानुमाने स्वप्रकाशार्थोपदेशरूपत्वं हेतुरुच्यते स्वरूपासिद्ध्यादिकमप्यविमृश्य। अत्र वाक्यार्थज्ञानं पक्ष इति लिखित्वा, अयमेव मुख्योपदेश इति लेखनमपि विचित्रम्। तदुपरि, 'स्वप्रकाशार्थोपदेशरूपस्य श्रवणजनितवाक्येऽपि सत्त्वा'दिति, 'केवलश्रवणस्य च परोक्षज्ञानजनकत्वेऽपी'ति च लेखनमतिविचित्रम्। अनन्वितव्यस्तसमस्तत्रिविधपदगुम्भनेनैव ग्रन्थान् पूरयन्त ईदृशा हन्तानुमानप्रयोगेऽप्येवमेव प्रवर्तन्ते। तदिदं साहसमपाकर्तुं दूषणान्युद्भावयतां दिङ्मात्रप्रदर्शनायापि न पर्याप्तः कालः।

अहो बत वृथा कालः सर्व एवातिवाह्यते।
इत्यस्माभिरिहेदृक्षं दोषोद्भावनमुज्झ्यते॥

अथान्यदनुमानम्—विगीतं ज्ञानं साक्षात्कारि प्रत्यक्षार्थविषयत्वादिति। अत्र श्रवणादौ व्यभिचारस्तदवस्थः। अत्र यल्लेखनम्—"मननजनितवाक्यार्थज्ञानेऽपि स्वतः प्रत्यक्षार्थविषयत्वेन हेतुसत्त्वेन............मननजन्यस्यापरोक्षत्वाभावान्न बाधः"—इति—तदपि एवमनन्वितमेव। साक्षात्कारित्वमपरोक्षत्वम्; तस्याभावश्चेदस्ति, तर्हि बाध एवेति कथं "न बाध" इत्युच्यते? विगीतं ज्ञानमिति पक्षनिर्देशात् अपेक्षितव्यक्तिमात्रग्रहणसंभवे, "केवलमननजन्यज्ञानस्यापक्षत्वात्" इति वा किमर्थमुच्यते? ब्रह्मसाक्षात्कारस्य निदिध्यासनमननसंहकृतश्रवणविषयवाक्यजन्यत्वेनैव प्रत्यक्षत्वमिति यदुक्तम्—तत्र निदिध्यासनसहकृतं श्रवणं किं शाब्दबोधः, उत श्रोत्रजन्यशब्द-

प्रत्यक्षम् ? आद्ये तद्विषयत्वं वाक्यस्य कथम् ? अन्त्ये निदिध्यासनानन्तरमस्य योगिनः तद्वाक्यश्रावयिता कश्चिदावश्यक इत्यापतति। यत्तु—शीघ्रमेव श्रवणादिना साक्षात्कारजनने योगिनां विषये योग उपकरोतीति—तत्र पृच्छ्यते दशमोऽहमस्मीति प्रत्यक्षोत्पत्तौ योगाभावात् कियान् विलम्ब आपतितः ? आत्मतद्गतदशमत्वोभयप्रत्यक्षकालेऽप्यनपेक्षितो योगः अखण्डाकारात्ममात्रप्रत्यक्षशीघ्रोत्पत्तये कथमपेक्षितः स्यात्। एवं योगस्य विहितत्वे च निदिध्यासितव्य इतीदं न विधिपरमिति कथम् ? योगं विना प्रत्यक्षजननापेक्षया योगात् प्रत्यक्षजनन एव तु विलम्बो दशमोऽहमिति प्रत्यक्षं मन्यमानैरनपलप्यः। इदं पुनरद्वैतिभिर्वक्तुं युक्तम्—नादृष्टार्थो ध्यानविधिः निदिध्यासितव्य इति। चित्तवृत्तिनिरोधमन्तरेणैकाग्र्यायोगात् दुर्ग्रहवस्तुग्रहणे च ऐकाग्र्यस्यापेक्षितत्वात् सुसूक्ष्मब्रह्मग्रहणे च संपूर्णश्चित्तवृत्तिनिरोधोऽप्यपेक्षित इति स एव लोकप्रक्रियाक्रमसिद्ध उपायो योग इत्युच्यते। एवं युक्तिसिद्धांशप्रतिबोधनरूपमिदं तव्यप्रत्ययघटितं वाक्यं वस्तुतोऽनुवादरूपमेव। तेन च अवधानेन संनिकृष्टमात्मवस्तु प्रत्यक्ष्यत इति—तावताऽपि शब्दस्य तज्जनकत्वमसिद्धमेव। अवधाननिहितस्य चित्तस्यैव तत्र साधनत्वसंभवात्। वृत्तिजनकत्वेन क्लृप्तस्य तस्यैव प्रत्यक्षरूपवृत्तिकरणत्वोपपत्तेः। यदा पुनरद्वैतप्रमेयमनुपपन्नमिति परमात्मध्यानमेवात्र विधीयत इत्यवधार्यते, तदा विशिष्टाद्वैतसरणिरेव समादर्तव्येति।

यत्तु—भगवत्सङ्कल्पत एव बन्धनिवृत्तिस्वीकारे कर्मयोगत एव भगवत्संकल्पानुगृहीतात् बन्धनिवृत्तिसंभवादुपासनं व्यर्थमिति-तदिदं वक्तुं भगवदभिन्न एवात्मा प्रभवति। बन्धनिवृत्तिसाधनं साक्षात् कर्मयोग एवेति कथं विना शास्त्रमस्माभिरवधार्येत। अयमयम् अस्मिन् अस्मिन् फले साक्षाद् परम्परया वोपाय इति भगवदुपदिष्टात् शास्त्रादेवावधारणीयम्। अन्यथा भोजनादपि भगवत्सङ्कल्पानुगृहीतात् बन्धनिवृत्तिः स्यादित्यपि कल्पयित्वा कर्मयोगादितोऽप्युपरम्येत। तत्सिद्धं परज्ञानपरमभक्तिफलकः परभक्तिरूपो योगो दर्शनसमानाकार एव श्रवणमननक्रमभावी भगवदनुग्रहद्वारा भगवत्पादारविन्दपरिचरण-

रूपपरमनिःश्रेयसहेतुरिति । शतभूषणी तु शब्दजन्यप्रत्यक्षसाधनव्याजेन,—“तत्त्वमस्यादिवाक्यापरोक्षसाधनत्वसिद्धान्तः प्रामाणिकः प्राचीनैराचार्यैः संप्रदायाविच्छेदेन परिपाल्यमान” इत्युपसंहरन्ती, “तत्प्रतिकूलवादाश्च केषाञ्चन आस्तिकानां मुमुक्षूणाञ्च सर्वेषां प्रमोहनमात्रं केवलमनर्थाये”ति निगमनमुखेन विशिष्टाद्वैतिप्रभृतीनिव शाब्दापरोक्षदूषणपरायणान् भामतीकल्पतरुपरिमळकारादीनपि पराकृतान् मन्यत इति नवीनप्रस्थाननिष्णातैरयतनैरद्वैतिभिरवधेयम् ।

यत् साक्षादपरोक्षम्, अत्र महसि प्रत्यक्षवृत्तिः कुतः ?
प्रत्यक्षात् परमप्यनुस्रुतभवाः जीवद्विमुक्ताः स्थिताः ।
प्रामाण्ये ह्यचले परोक्षमपि नः शक्तं परं बाधितुं
शाब्दत्वं नतरामिहोपकुरुते किं तेन चित्ते स्थिते ॥

शुभमस्तु

---

श्रीः

## ॥ साधनचतुष्टयपूर्ववृत्तत्वभङ्गप्रसाधनम् ॥

यत् पूर्ववृत्तं सत् अपेक्षितं स्यात् तदुत्तरत्वार्थमथेति शब्दम् ।
वदन्त एवाहुरनीदृशं यत् चतुर्विधं साधनमेतदर्थम् ॥

“अथातो ब्रह्मजिज्ञासा” इत्यत्राथशब्दार्थानन्तर्यप्रतिसंबन्धि साधनचतुष्टयम्—नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, शमदमादिसाधनसंपत्, मुमुक्षुत्वञ्चेति। एतस्मिन् सत्येव ब्रह्मविचारभावादिति ब्रह्मजिज्ञासासाधानत्वमेषु चतुर्षु इच्छन्ति। कथमेषां साधनत्वमिति विचार्यम्। यद्युत्तरोत्तरस्य पूर्वपूर्वो हेतुरित्युच्यते, तर्हि मुमुक्षुत्वमेकमेव अनन्यथासिद्धत्वात् साधनमिति, अन्येषां साधनत्वाभावात् भवद्रीत्या तत्पूर्ववृत्तताया अर्थसिद्धत्वाच्च

चतुष्टयगणनं व्यर्थम् । नूनमिदमेव मनसिकृत्य पञ्चपादिकायाम्—"जिज्ञासायां मुमुक्षाक्रिययोरेकस्याः कारणान्तरसिद्धायाः पूर्ववृत्ततया हेतुत्व"मित्यादिना मुमुक्षामेकामेव गृहीत्वा तस्या एवानन्तर्यप्रतियोगित्वं जिज्ञासायाः कर्तव्यत्वञ्चोक्तम् । तथा साधनचतुष्टयस्य पूर्ववृत्तत्वविधायकं वाक्यमपि न दृश्यते । "परीक्ष्य लोकान् कर्मचितान्" इति वाक्यं यः कर्मफलानित्यत्वज्ञानेन निर्वेदमाप्नुयात्, स गुरुं तत्त्वज्ञानार्थमभिगच्छेदिति निर्विण्णपुरुषापेक्षित-तत्त्वज्ञानमुद्दिश्य गुरूपसदनं साधनं विदधाति । अकृतं किञ्चिदस्ति, न वा ; तल्लाभः कथमिति जिज्ञासयैव गुरूपसत्तिः । न तदा नित्यानित्यविवेकः । "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्"इति श्रुतिः दर्शनं प्रत्येव शमदमादिकं साधनत्वेन दर्शयति ; न जिज्ञासां प्रति ;

नापि साधनचतुष्टयस्य साधनत्वम् । कथञ्च साधनत्वम् ? अथ संभवति दृष्टद्वारे अदृष्टकल्पनायोगात् साधनचतुष्टयं दृष्टद्वारैव साधनमिति चेत्—नित्यानित्यवस्तुविवेकस्य कथं साधनत्वम् ? यदि सर्वमनित्यमिति ज्ञाने सति ब्रह्मजिज्ञासायां न प्रवर्तेत ; अनित्यत्वाविशेषे कर्मफलवैराग्यपूर्वकैतज्जिज्ञासाया अनावश्यकत्वादित्युच्यते-तर्हि वैराग्यस्य मुमुक्षुत्वस्य चाभावादेवाप्रवृत्त्युपपत्तिरिति कृतं नित्यानित्यवस्तुविवेकादरणेन । किञ्च सर्वमनित्यमिति जानन्नपि फलान्तरे दुःखमिश्रत्वादि परिशील्य मोक्षे तदभावसंभावनया पुरुषः प्रवर्तेतेति न नित्यत्वनिश्चयस्यात्र कारणत्वम् । एवं सर्वस्यापि फलस्य नित्यत्वनिश्चयेऽपि विनिगमकाभावात् पूर्वादृष्टपरिपाकवशाच्च कश्चिदन्यत्रैवान्यो मोक्षफलेऽपि प्रवर्तेत । तथा नित्यत्वाविशेषेऽपि दुःखमिश्रत्वतदभावरूपवैलक्षण्यस्य ज्ञानादपि ब्रह्म केनचिज्जिज्ञास्येत । तस्मान्न नित्यानित्यवस्तुविवेकस्यावश्यकता ।

किञ्च कोऽयं नित्यानित्यविवेक इति विवेक्तव्यः । अत्र भामतीकारेण—"विपर्ययात्मा (भ्रमरूपः) नित्यानित्यविवेको न कारणं वस्तुतत्त्वब्रह्मजिज्ञासायाम् । किन्तु अनित्ये नित्यत्वभ्रान्त्या धर्मजिज्ञासायामेव । तथा

च विरागोऽपि न सिद्ध्येत्। संशयात्मको विवेकश्च तथा। स वेदाध्ययन-कालेऽप्यस्ति। ब्रह्मजिज्ञासया प्रवृत्य विदितवेदान्तार्थस्यैव तु वास्तवो नित्या-नित्यवस्तुविवेको भवति। स कथं ब्रह्मजिज्ञासापूर्वभावीत्याशङ्क्य, नित्यानित्य-वस्तुविवेको नाम इदं नित्यमिदमनित्यमिति व्यक्तिविशेषेषु नित्यत्वानित्यत्व-निश्चयरूपो न; किं तर्हि? सामान्यतः लोके नित्यमप्यस्ति, अनित्यमप्य-स्तीति विवेकमात्रमित्युक्तम्। अथ, "सत्यमिथ्यार्थविवेको नित्यानित्यविवेकः" इति चोक्तम्। तदयुक्तम्—यद्ययमिदं नित्यमिदमनित्यमिति न विशिष्य जानीयात्, कथमसौ इहामुत्रफलभोगाद्विरज्येत्? हिरण्यगर्भप्राप्तिपर्यन्तसर्व-फलानित्यत्वविवेके सत्येव ब्रह्मजिज्ञासेति पञ्चपादिकायामुक्तत्वादपि नायं विशेषाविवेकरूपः सामान्यविवेकः साधनचतुष्टयान्तर्गतः। सर्वस्य नित्यत्व-निश्चये, सर्वस्यानित्यत्वनिश्चयेऽपि ब्रह्मजिज्ञासा भवितुमर्हतीत्यपि प्रागुपपादितम्। इहामुत्रफलभोगविरागहेतुर्विवेकः अल्पत्वास्थिरत्व-दुःखमूलत्व-दुःखमिश्रत्व-दुःखोदर्कत्व-विपरीतवासनावर्धकत्व - स्वाभाविकानन्दविरुद्धत्वरूपबहुंशविषयक इति तत्र नित्यानित्यवस्तुविवेकमात्रकथनमप्ययुक्तम्।

नित्यमप्यल्पमुज्झित्वा परमानन्दनिर्भरम्।
अनित्यमप्याद्रियन्ते श्लाघन्ते च विवे च काः॥

तस्मान्नित्यत्वमात्रमप्रयोजकम्।

सत्यत्वमिथ्यात्वविवेक एव नित्यानित्यविवेक इति च सर्वथैवोदक्षरम्। ब्रह्मविचारारम्भात् प्रागेव जगन्मिथ्यात्वनिश्चयोऽपि चेत्—प्रथमाधिकरणे, आरम्भणाधिकरणे च मिथ्यात्वसाधनसंरम्भः कुतः? फलान्तराणामनिश्चयेनैव सर्वेषु तान्त्रिकेषु विषयवैराग्यं मुमुक्षाञ्च श्रुतिस्मृत्यनुसारेणाप्युपपादयत्सु, सत्यमिथ्यात्वविवेके सत्येव वैराग्यमिति कथं नियन्त्र्यते? सर्वस्य मिथ्यात्वे अनुभूयमनस्य दुःखस्य, तदनुभवस्य, तन्मूलरोगादेश्च मिथ्यात्वावसायात् परिहरणीयस्यापूर्वार्थस्यादर्शनात् किमिति विषयतो विरज्येत्? कुतो वा

मुमुक्षुरात्मानं मोक्तुमिच्छेत् । भाष्यानुक्तः सत्यमिथ्यात्वविवेकः किमिति भामत्यामुक्त इति परिमळकृदाशंक्य इत्थं परिहरति—नित्यानित्यवस्तुविवेके सति पुमान् प्रथमतो नित्यं प्रेप्सति । तत्प्रेप्सायामनित्ये विरज्यति । अतो नित्यप्रेप्सां प्रागुक्त्वा फलान्तर वैराग्ये पश्चाद्भाषितव्ये सति यस्मात् भाष्यकारः इहामुत्रफलभोगविरगं प्राङ्निर्दिश्य नित्यप्रेप्सादि पश्चादाह, तेन ज्ञायते, सत्यमिथ्यात्वविवेकोऽपि तत्संमत इति । मिथ्यावस्तुनि वैराग्यं तु सत्यकिञ्चिद्वस्तुप्रेप्सायां जातायामिति न ; यतः शुक्तिरजते अरजतत्वबुद्धौ जातायाम्, "वास्तवरजतं कुत्र लभ्यत' इत्यविचार्यापि शुक्तिरजतं त्यजत्येवेति—तद्युक्तम् । शमदमादिरूपस्य साधनस्य संपत्=प्रकर्षः, ततोऽस्य संसारबन्धनान्मुमुक्षेति मुमुक्षां प्रति शमादिसंपदः कारणत्वमुक्तं भामत्याम् । पञ्चपादिकायामपि, "ततो मुमुक्षुत्वं तत्साधनशमदम–"इति शमादेर्मुमुक्षुत्वसाधनत्वसाधनमुक्तम् । शमश्च फलान्तरार्थव्यापारविरतिः । इहामुत्रफलभोगरागे सति दुरुपपादेति वैराग्यं तत्र कारणम् । एवं साधनत्वादेव विरागस्यान्यतः प्राङ्निर्देशे उपपन्ने एतद्भाष्यस्य सत्यानृतविवेकतात्पर्यकत्वारोपेण भामतीरक्षणमयुक्तमिति । अतः नित्यानित्ययोः यद्वस्तु=वर्तमानं नित्यत्वानित्यत्वहेयत्वोपादेयत्वरूपम्, तद्विवेक इति वाऽर्थो वर्ण्यताम् । नित्यस्यानित्यस्य च वस्तुनः विवेकः सामान्यतोऽस्तित्वनिर्णय इति वा । सर्वथा क्लिष्टमिदं व्याख्यानम् ।

नित्यात् अनित्यस्य विवेकः, नित्यस्यानित्यात् विवेकः नित्यस्य चानित्यस्य च मिथो विवेकः-यथावस्थितज्ञानम् इदं नित्यमिदमनित्यमितीत्यर्थ एवाक्लिष्टः ।स च वेदान्तविचारात् प्राङ्न भवतीति भामत्यामेव न्यरूपि । अतः पञ्चपादिकाद्यादृतमपीदं न जिज्ञासापूर्वभावि ; व्यर्थमिति चोपपादितमेव । भाषितश्च श्रीभाष्ये, "नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्त" इति । अतः कर्मनिर्णयेत्येकेन पदेनास्माभिः संगृहीतं भवद्भिश्च चतुर्धा विभज्यासंभावितार्थक्रोडीकारेण निर्दिश्यत इत्येतावदेव स्यात् ; न कर्मावबोधस्य प्राच्यत्वं पराकर्तुं शक्यमेतत्स्वीकारे ।

ननु ब्रह्मजिज्ञासेत्यस्य ब्रह्मप्राप्तीच्छेत्यर्थः। नित्यानित्यवस्तुविवेकाच्च तदुत्पत्तिर्युक्तेति चेत्—उच्यते—अथशब्दार्थानन्तर्यं नित्यानित्यवस्तुविवेकादिसाधनसंपत्तिप्रतियोगिकम्। तस्य ब्रह्मजिज्ञासेत्यत्रान्वयः। तत्र, 'ब्रह्मजिज्ञासा कर्तव्या', 'ब्रह्म जिज्ञासितव्य'मिति द्वेधा शाङ्करभाष्ये श्रीभाष्ये च निर्देशः समानः। जिज्ञासाशब्दार्थवर्णनावसरे च, 'अवगतिपर्यन्तं ज्ञानं सन्वाच्येच्छायाः कर्मे'त्युक्तम्। 'ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्मे'त्यादिना च, संसारबीजानर्थनिबर्हणत्वात् अवगतिर्ब्रह्मानुभव इष्टः, तत्साधनतया प्रमाणत्वात् ज्ञानमिष्टमित्युपपादनात् अवगतिसाधनं जिज्ञासापदघटकज्ञाधात्वर्थ इति निश्चितम्। जिज्ञासा कर्तव्येत्युक्तत्वात् इच्छायामनुभवे वा कर्तव्यत्वानन्वयात् किं कर्तव्यमिति विचारे लक्षितो विचारः कर्तव्यतया प्रतिज्ञायते इति विवरणादावुक्तम्। कर्तव्यत्वेन शाङ्करभाष्यनिर्दिष्टं ज्ञानं विचारात्मकमिति तु विशिष्टाद्वैत्यनुसारे सिद्ध्यति। विचारश्च कर्तव्यत्वेन विहितः। "तद्ब्रह्म विजिज्ञासितव्यम्", "श्रोतव्य" इत्यादाविति तदङ्गभूतं नित्यानित्यवस्तुविवेकादीति शाङ्करभाष्यप्राचीनव्याख्यानसरणिः। अतोऽवगतिसाधनभूतज्ञानेच्छैव ब्रह्मजिज्ञासेति ब्रह्मप्राप्तीच्छावयास्तदर्थत्वाभावात् न वेदान्ताधीननित्यानित्यवस्तुविवेकस्यात्रान्वयसंभवः। सिद्धान्तसिद्धाञ्जनोक्तं तु शमितमेवास्माभिरैकशास्त्र्यप्रसाधनासरे। एवं सूत्रार्थे च सूत्रमिदम्, "अनावृत्तिः शब्दात्" इति शारीरकोपसंहारे पठनीयम्। सविशेषप्राप्तिरूपमोक्षस्य सूत्रकृदुक्तत्वात् तस्य च भवतामनित्यत्वात्। तथा सूत्रपाठे सत्येव सविशेषानुभवपर्यन्तसर्वत्यागेन निर्विशेषप्राप्तिः सूत्रकृदिष्टेति भवत्पक्षस्य कुशकाशावलम्बनं भवेत्। तथा नित्यानित्यवस्तुविवेके च सविशेषजिज्ञासा न प्रतिज्ञातव्या स्यात्। अतः उभयसाधारणी प्रतिज्ञेति भवदुक्तं व्याहन्येत। सूत्रे उपरि सविशेषफलसाधनादिविषयं सर्वम्, शारीरकमेव वा कृत्स्नं न प्रतिज्ञातनिरूपणपरं स्यात्।

अपि च नित्यानित्यवस्तुविवेको वेदान्तविचारात् प्राङ् न भवतीति भामतीमतमपि कर्मविचारपूर्ववृत्तत्वानङ्गीकारहेतुकं स्यात्। कर्मविचारे

पूर्ववृत्तमास्थाय चेत्—तत्र नात्यन्तिकं दुर्भिक्षम्। यद्यपि परवासुदेवाभिधानं परं ब्रह्म, तदीया नित्यविभूतिः, नित्यसूरयः इत्येवं विलक्षणभोग्यभोक्तृभोगस्थानादि-समृद्धं शाश्वतमस्तीति न कर्मविचारतो निश्चीयेत, तथापि कर्मणामनित्य-फलत्वं भोक्तृणामात्मनां नित्यत्वञ्च ततो निश्चीयेतैव। आमुष्मिकफल-भोक्तृत्वस्य बहुधा शोधनात् नानाजन्मभाक्त्वस्य जीवेषु सिद्ध्या अनादीनां तेषां नित्यत्वस्य सिद्धेः। एवं स्वस्य सार्वदिकत्वनिश्चये सत्येव मुमुक्षावर्णनमपि घटते। यथा प्रागेवात्मनित्यत्वनिश्चये सत्यपि शारीरके आत्मविषयविचारस्य सर्वस्योपपन्नत्वम्, यथा च पूर्वमीमांसायामधीतिनां कर्मफलानित्यत्वनिश्चय-संभवः, तथा प्रागेव निपुणं न्यरूपि। भवद्भिः, "तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितः" इति वाक्यश्रवणमात्रेण कर्मफलानित्य-त्वनिश्चयो भवतीत्युच्यते। वयं तु आपातप्रतीतेरध्ययनानन्तरभाविन्याः संशय-विपर्ययसहत्वात् न निश्चयत्वमिति ब्रूमः। "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती"त्यपि हि श्रूयते। किञ्च कर्मफलानित्यत्ववचनं सामान्यभूतं चातुर्मास्यादिविशेषव्यतिरिक्तविषयं भवत्वित्यपि विमृशेदध्येता। अक्षय्यमित्या-देरर्थवादत्वमिति चेत्—अर्थवादोऽयं केवलं प्राशस्त्यपर इति निश्चय एव हि न मीमांसाश्रवणमन्तरेण संभवति। श्रुतमीमांसस्यापि पुनर्वेदान्तश्रवणावसरे अर्थवादानामप्रबाधितयथाश्रुतार्थत्यागे मानं नास्तीति वेदान्तिनिष्कर्षश्चेत् मनसि लग्नः स्यात्, पुनरपि चातुर्मास्यसुकृताक्षय्यत्वविषये विशयः प्रसरतीति स्थिते का कथा केवलाधीतवेदस्याशिक्षितन्यायमार्गस्य? निरूपितन्यायमार्गः पुनरधीतमीमांसः अकण्ठोक्तानप्यनेकान् अर्थान् उपदर्शितानेकन्यायसञ्चारण-विवेचनकौशलेन निराबाधं निष्कृष्टुं पारयतीति कथमीदृशस्य कर्मफलानित्यत्व-संदेहस्यावसरः। अतः ब्रह्मतत्प्राप्त्यादिरूपनित्यपदार्थाज्ञानेऽपि, आत्मनित्य-त्वकर्मफलानित्यत्वरूपनित्यनित्याविवेक एव शाङ्करभाष्येष्ट इति, स विवेको मीमांसायामेवायतते। सांख्यादीनि शास्त्राणि तु अनवसरग्रस्तानीत्यावेदित-मेवास्मत्प्राच्यग्रन्थेषु।

इहामुत्रफलभोगविरागो द्वितीयं साधनमुक्तम्। तेन किमुक्तं भवति? इहामुत्रफलभोगरागो यावदस्ति, तावत् न मुमुक्षेति वा, जाताऽपि न स्थिरेति वा। तदावश्यकोऽयं विरागः कथमुत्पद्यते। यावता त्रिवर्गप्रावण्यातिशयात् "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्"इत्यादितः तन्नित्यत्ववेदनाच्च राग एवानुवर्तते। दुःखमिश्रत्वात् तत्र वैराग्यमित्यत्र च प्रतिविहितं पञ्चपादिकादौ "न हि मृगाः सन्तीति शालयो नोप्यन्ते" इत्यादि निदर्श्य। भामत्युक्तमधुविषसंपृक्तान्नत इव ततो निवृत्तिश्च, प्रवृत्तावात्महानिरिति निश्चयाधीना। स च निश्चयः शुद्धात्मस्वरूपस्थित्यादि वेदान्तात् यावत् नावबुद्ध्यते, तावन्न भवितुमर्हति। यत्तु—"अक्षय्यं ह वै चातुर्मास्यम्"इति वाक्यमर्थवाद इत्युक्तम्—तत् अर्थवादत्वात् यथाश्रुतार्थे तात्पर्यं नेत्यपि मीमांसात एवावसेयमिति समाहितम्।

यत्तु—"यदिह वा अप्यनेवंवित् महत् पुण्यं कर्म करोति, तद्धास्यान्ततः क्षीयते" इति श्रुत्या सर्वकर्मफलानित्यत्वनिश्चय इति विवरणोक्तम्—तत्रैवं प्रतिब्रूयात्। यथावस्थितकर्त्रात्मस्वरूपज्ञानाभावे हि कर्मक्षयस्तत्रोक्तः। "स य आत्मानमेव लोकमुपास्ते, न हास्य कर्म क्षीयते" इति आत्मज्ञानपूर्वकस्य कर्मणः अक्षयत्वस्यानन्तरमेव वचनात्। अत्र हि यत् कर्म क्षयित्वेन गृहीतम्, तदेवात्मज्ञानसंवलितमक्षयिफलमिति स्वरसतोऽवगतम्। यदि तु कथञ्चिदुपासनाख्यस्य कर्मणः अक्षयिफलत्वं विवक्षितमित्युच्यते; अस्तु तावत्। सर्वथा कर्मविलक्षणस्य ज्ञानस्याक्षयिफलत्ववादिनामद्वैतिनामिदं वचनं विरोध्येव। यदि च, अथातो ब्रह्मजिज्ञासेत्यस्य आत्मज्ञानसहितकर्मणामक्षयफलत्वनिश्चयात् आत्मजिज्ञासेत्यर्थः स्यात्, तर्हि कर्माङ्गभूतं किञ्चिदात्मज्ञानं यथावस्थितं संपादयितुमात्मजिज्ञासेत्यपि पर्यालोचनसंभवात् कर्मविचारग्रन्थं पूर्वमधीत्यैव ब्रह्म विचारे यतेतेति कर्मविचारानन्तर्यं ब्रह्मविचारस्यावर्जनीयम्।

अतश्शब्दस्य कर्मफलक्षयिष्णुत्वनिश्चयादित्यर्थश्च कुतो लभ्यते? यस्तु भामत्याशयः—ब्रह्मजिज्ञासेत्यत्र ब्रह्मशब्देन वेदोपस्थितौ वेदघटकस्य च,

"एवमेवामुत्र पुण्यचितो लोकः क्षीयत" इति वाक्यस्य स्मरणात् क्षयिष्णुत्वावगम इति—तत्रोच्यते। अथशब्दानन्तरप्रयुक्तो ह्यतश्शब्दः अथशब्दार्थमानन्तर्यं तत्प्रतिसंबन्धि वा हेतुत्वेन यदि निर्दिशेत्, तत् स्वरसम्। तद्विहाय आत्मार्थिकतया प्रयुक्तेन ब्रह्मशब्देन वेदोपस्थापनम्, ततः स्वापेक्षितवाक्यमात्रस्मरणमिति शाखाचङ्क्रमणं कस्मै रोचेत? भवतु तर्हि नित्यानित्यवस्तुविवेक एवानन्तर्यप्रतिसंबन्धी अतश्शब्देन हेतुतया विवक्ष्यत इति—तन्न—भामत्यां नित्यानित्यवस्तुविवेक इत्यस्य विलक्षणार्थवर्णनात्। तावता सामान्यतः किञ्चित् नित्यं किञ्चिदनित्यञ्चेत्यवगमेऽपि तत्फलक्षयिष्णुत्वस्य ततोऽनिर्धारणात्। दूषितश्च स नित्यानित्यविवेकः प्रागेव। किञ्च भवन्मते सगुणोपासनस्याप्यनित्यत्वनिश्चये ततोऽपि विराग आवश्यक इति शारीरकारम्भ एव न भवेदिति, कर्मकाण्डोक्तकर्मफलक्षयिष्णुत्वमात्रमेव ज्ञातम्; तत्रैव च विराग इत्येव वक्तव्यम्। सर्वमिदं कर्ममीमांसैकावसेयमिति।

साधनचतुष्टये निर्दिष्टे एकतमेनान्यतमस्य गतार्थता भवति, न वेति च चिन्तयितव्यम्। तत्र नित्यानित्यविवेके सत्यपि कस्यचिदनित्येऽप्युत्कटो रागः स्यात्। तदा ब्रह्मविचारे प्रवृत्तिर्न भवतीति इहामुत्रफलभोगविरागो निर्देष्टव्यः। नित्यानित्यवस्तुविवेकस्तु किमर्थम्? अविवेकेऽप्यन्यत्र वैराग्ये संपन्ने ब्रह्मविचारसंभवात्। एवं वैराग्ये सति तत्तत्फलार्थव्यापारव्यासङ्गप्रसक्त्यभावात् शमदमादि स्वत एवोक्तं भवतीति तत्पृथङ्निर्देशश्च व्यर्थः। सिद्ध्यत्येव शमादिकम्; अथापि शीतोष्णादिद्वन्द्वसहत्वरूपतितिक्षार्थं तदुक्तमिति चेत्-यदि द्वन्द्वं न सहते, तदा तद्बाधानिवृत्तिरूपैहिकफलार्थं प्रवर्तेत इति सिद्ध्या तस्य पूर्वोक्तवैराग्यः कथम्? अथ शमदमादेः संपदिति संपत्पदे नैर्भर्यमिति चेत्—तथापि संपत्पदेन पुष्कलः शमादिरेवाभिप्रेयत इति विराग एव पुष्कलः तज्ज्ञापनायालम्। वस्तुतः शमदमादीनि साधनानि आत्मावलोकने; श्रुतौ तथैव प्रतीतेः; न तु ब्रह्मविचारे इति प्रागेवोक्तम्। चतुर्णामपि साधकत्वे सति शमदमादौ परं साधनशब्दनिर्देशोऽपि व्यर्थः। एवं संपदित्यपि सर्वत्राविशिष्टम्। मुमुक्षा-

मात्रं पर्याप्तम् ; अन्यत् व्यर्थमिति च प्रागुक्तम्। शमदमादीति निष्फलनित्य-कर्मत्यागोऽपि विवक्षित इति चेत्—तथा सति "शमदमाद्युपेतः स्यात्" इति सूत्रे यज्ञादिना सह शमादेः समुच्चयवचनं न घटते। एवं खलु सति, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति पूर्वपक्षसूत्रम्, शमदमादीति च सिद्धान्त-सूत्रमित्यापद्येत। किञ्च शमादिकं ब्रह्मविद्याङ्गमिति, 'तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात" इति सूत्रखण्डे स्पष्टमुक्तम्। अङ्गत्वञ्च परोद्देशप्रवृत्तकिञ्चित्कारकत्वेन विहितत्वम्। अत एव "आत्मन्यात्मानं पश्येत्" इत्यत्र, "पश्येत्" इति विधिकल्पनमिष्टम्। विधिबलाच्च शमादिकमनुष्ठेयं सूत्रकृदाह। अतो ब्रह्मविद्याकामेन एवं पर्यालोचनीयम्—अहं ब्रह्मविद्याकामोऽस्मि संन्यस्तोऽधिकारी, मया तदर्थे शमाद्यनुष्ठेयम्—शास्त्रविहितत्वादिति। एवञ्चेदयं स्ववर्णाश्रमशास्त्रवश्यत्वादि प्रतिसंधत्ते, तर्हि, 'विदुषः तादृशप्रतिसंधानाभावात् नित्यकर्मस्वनधिकारः' इति कथम्?। अतः शमादयोऽपि यावज्जीवमनुवर्तन्ते आश्रमकर्मापीति तदविरोधेनैव शमादिशब्दार्थो वाच्यः ; एवं विधिवश्यत्वे स्वीकृते अर्धजरतीयायोगात्। शमदमादिकमर्थसिद्धं चेत्—विधिबलात्तदनुष्ठेयत्वप्रतिपादकसूत्रविरोधः। किञ्च संन्यासिनां मुण्डत्वैकदण्डत्वभिक्षाचरत्व-काषायधारित्वादिकं विहितमित्यनुष्ठीयते, उत स्वेच्छया? अन्त्ये गृहस्थाश्रमे स्थितोऽपि संन्यासी गण्यताम्। आद्ये सर्वधर्मत्यागरूपशमदमादि कथम्? यस्य यत् विहितमवर्जनीयञ्च तद्व्यतिरिक्तविषय एव शमादीति चेत्—तत् सर्वं इहामुत्रफलभोगविरागोत्तयैव सिद्धमिति व्यर्थः शमदमादिपृथङ्निर्देशः।

अपि च केयं मुमुक्षा? किं निर्गुणब्रह्मभूयं प्राप्तुमिच्छा। किं वा सविशेषब्रह्मप्राप्तीच्छाऽपि?। आद्य, 'शान्तो दान्त' इत्युक्तशमादीनामसाधनत्वम्। शारीरकोक्तयोगरूपसविशेषब्रह्मोपासननिष्ठविषये कर्मत्यागस्य भवद्भिरस्वीकृतत्वात्। तथा प्रकृतशारीरकारम्भे तादृशमुमुक्षाशाली नाधिकारी स्यात्, सगुणब्रह्मविचारस्यैवात्र आमूलाग्रं स्थितेः। पञ्चमम‍ध्यायं चिरजीवी बादरायणः कदा भवतामाविर्भावयिष्यतीति प्रतीक्ष्यम्। द्वितीये च वैराग्यादिपौष्कल्यासिद्धिः। सर्वथा साधनचतुष्टयनिर्देशो व्यर्थः।

अपि च साधनचतुष्टयाभावे ब्रह्मविचारारम्भः कथं न घटते? अत्र तावत् भामत्यामुक्तम् सर्वापेक्षाधिकरणे, "चतुर्विधं तावत् ज्ञानं भवति, एकमध्ययनजन्यम्, यत् श्रवणमित्युच्यते; द्वितीयं मीमांसासहकृतवाक्यजन्यम्; तृतीयं तदावृत्तिरूपं ध्यानम्, तुरीयं तज्जन्यं प्रत्यक्षम्। तत्रोत्तरोत्तरं पूर्वपूर्वस्मात् कर्मनिरपेक्षादेव भवतीति तत्र कः कर्मोपयोगः इति—ईदृशः प्रश्नः प्रकृतेऽप्यवतरति। साधनचतुष्टमसंपत्त्यभावे किं ब्रह्मविचारो नोदेतुमर्हति; तद्रहितैरपि संप्रति भूम्ना विचारस्य क्रियमाणत्वदर्शनात् विचारं प्रति तस्यैव सामग्रीत्वमित्यस्यासिद्धेः। (विवरणे गुरूपसत्तिपूर्वकविचारस्य श्रवणस्य च ऐक्यवर्णनात् भामत्यामपि मीमांसापुरस्सरं ज्ञानं मननमिति स्वयं हेतुभिः श्रुतार्थप्रतिष्ठापनं क्रियमाणमेव विवक्षितं स्यादित्यन्यदेतत्।) यदि च नित्यानित्यवस्तुविवेकादीनामधिकारिविशेषणानामदृष्टविधयोपयोगः, तर्हि एतददृष्टाभावे का हानिरिति विवेक्तव्यम्। एतदभावे साक्षात्कारो न भवतीति स्वीक्रियताम्। गुरूपसत्तिविधेरेवमेवोपयोगस्य वक्तव्यत्वादिति चेत्—तन्न—श्रवणमननध्यानानां लोकावगतप्रक्रियैव प्रत्यक्षकारणत्वस्य भवदिष्टतया तत्रादृष्टस्य कस्याप्यनुपयोगात्। गुरूपसत्तिजन्यादृष्टाभावे श्रवणरूपनिश्चयज्ञानं नोदेतीति कथञ्चिद्गुरूपसत्तेरुपयोगः स्यात्, न तु साधनचतुष्टयस्य। तदभावेऽपि भवादृशानां भवन्मतनिश्चयदर्शनात्। तत सिद्धं साधनचतुष्टयं कर्मविचारनिरपेक्षं भवत् ब्रह्मविचारं वर्तयिष्यतीत्यसिद्धमिति ॥

अथ भवदुक्तांशनिरासः संगृह्यते। अकृतकर्मविचाराणामपि ब्रह्मविचारः सुकर इत्यत्र, असंपन्नसाधनचतुष्टयानामपि ब्रह्मविचारः संपद्यत इति विस्तरेण प्रतिविहितमेव। यत्तु—कर्मविचारस्य ब्रह्मविचारकाधिकारिविशेषणत्वे वेदाध्ययनस्यापि तत् स्यादित्यापादानम्, तत्रेष्टापत्तिरेव। 'स्वाध्यायानन्तर्यं तु समानमिति भवद्भाष्येऽप्युक्तेः। ब्रह्मचर्यादेव संन्यस्ताः, अकृतकर्मविचाराः, देवाश्चानुपनीताः ब्रह्मविद्यायामधिक्रियन्त इत्येतत् सत्यम्। अत्र वक्तव्यम्, "औचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः", "काक-

क्षेपाक्षमत्वात् कतिचन कृतिनः शीघ्रमन्ते रमन्ते" इत्यादिभिरुक्तमाचार्यपादैः। ब्रह्मविद्याधिकारिणोऽपि देवाः प्रकृतब्रह्मविचारे नियमेन प्रवर्तन्त इति दुर्वचम्। कर्मविषयकनिर्णयानन्तर्यमेवास्माकमथशब्दार्थः। स च मीमांसापेक्षिणां कर्मविचारात्; अन्येषामन्यथापीति। किञ्च देवाः ब्रह्मविद्याधिकारिण इति सत्यम्। तावता शारीरकाध्ययनाधिकारित्वमपि नावश्यकम्। तथात्वे तेषां संन्यासवैराग्यशमदमादिदूराणामप्यधिकारवर्णनात् भवता साधनचतुष्टयस्य पूर्ववृत्तत्वमेव भञ्जितं भवति। यत्तु—साधनाध्याये "तदन्तरप्रतिपत्तौ", "शमदमाद्युपेतः स्यात्" इत्यादौ वैराग्यशमदमाद्यौपयिकविचारकरणात् तस्य तस्याधिकारिविशेषणत्वं प्रतीयते, न तु कर्मविचारस्येति—तत् विपरीतसाधकम्। ब्रह्मविचारेऽवतीर्णस्य तृतीयाध्याये एव वैराग्यशमदमादिसंपत्त्यर्थविषयविवेचनात् वैराग्यादेः ब्रह्मविचारारम्भकाले अनावश्यकत्वम्, कर्मविचारविषये तथा किञ्चिदनुक्तेः कर्मविचारस्य प्रागेव सिद्धत्वञ्चावधार्येत इत्यभ्यूहस्यैव समुचितत्वात्।

यदपि न्यायरक्षामण्युक्तरीत्या सगुणब्रह्मोपासनाफलब्रह्मलोकान्तविरक्तानां ब्रह्मविद्यामात्रपराणामुत्तमाधिकारिणां न कर्मापेक्षेति—तत्र तथाविधब्रह्मविद्याभ्युपगमेऽपि न तादृशां प्रकृतब्रह्मजिज्ञासायामधिकारः। अत्र सविशेषनिरूपणस्यैव सामग्र्येण दृष्टेः। अतः अत्रत्योऽथशब्दः कर्मनिर्णयस्यापेक्षितस्यानन्तर्यमभिधातुमर्हतीति मन्तव्यम्। संकर्षकाण्डविचारश्च प्रागेव कृतः। यत्तु—नित्यनैमित्तिककर्ममात्रकारिणां न कर्मविचारापेक्षेति—तन्न—एवं तर्हि विदुषामेव नित्यनैमित्तिकाधिकार इति वैदुष्यमनपेक्षितमित्युक्तं स्यात्। न च जनकादयो नित्यनैमित्तिकमात्रकारिण इत्यत्र प्रमाणमस्ति। "एतान्यपि तु कर्माणि संगं त्यक्त्वा" इति वचनानुसारेण काम्यकर्मणामपि फलाभिसन्धिरहितमनुष्ठानस्य सर्वेष्टत्वेन जनकादीनामपि तादृक्त्वात्। विविदिषार्थं वा क्रियमाणानां कर्मणां सर्वाङ्गोपसंहारस्यापेक्षिततया वैदुष्योपेक्षणायोगात्। यस्य जनकस्य याज्ञवल्क्यादप्यतिशयितं कर्मविज्ञानं बृहदारण्यकादितः प्रस्फुटमव-

गम्यते, यतः तेनाग्निहोत्रादौ विशेषो रथारूढं राजानममुम्। उपसृत्य प्राप्त आसीत्; तस्य राजर्षेः कर्मविचारवैधुर्यं कथं नु भवान् फणितुमर्हति ?

यत्तु अधिगताल्पास्थिरेति श्रीभाष्यमनूद्याशयवर्णनम्—तत्र, "कर्मविचारं विना ब्रह्मविद्यायां (?) नाधिकारः। विरक्तैरधीतकृत्स्नवेदार्थविचारः कर्तव्य एव" इति लेखनमयुक्तम्। "शीघ्रमन्ते रमन्ते", "औचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः" इत्यस्माभिरुक्तेः। देवतानां ब्रह्मविद्याधिकारस्थापनमिन्द्रादिभावे मनुष्याणां वैराग्यवर्धनाये"ति लेखनस्य चाशयः कः ? किमर्थात् वैराग्यं वर्धितं भवत्यनेन विचारेणेति ? किं वा देवानां वस्तुतोऽधिकारस्थापनं नाधिकरणार्थ इति। अन्त्यमपसिद्धान्तः। आद्यं तु प्रकृतानुपयुक्तम्। यत्तु—वैराग्यमुमुक्षयोरत्र भाष्ये प्रदर्शनात् शतदूषण्यपि साधनचतुष्टयान्तर्गतं साधनद्वयं शिरसा श्लाघत इति—किं तेन ? गुणदोषयोः गुणश्लाघनमपि न युक्तमिति न वयं मन्यामहे। तच्छ्लाघनमपि तयोर्वैराग्यमुमुक्षयोः कर्मनिर्णयाधीनत्वादुपजीव्यहिंसनं भवद्भिः क्रियमाणमयुक्तमिति ज्ञापनार्थैव। कर्मफलानित्यत्वनिर्णयः कर्मस्वरूपनिर्णय इत्युभयमपेक्षितं मुमुक्षोः। तत्र कर्मस्वरूपनिर्णयः कर्मविचारमपेक्षते इति संप्रतिपन्नम्। भवन्मते कर्मणो बहिरङ्गत्वात् तदुपेक्षा। यदा तु भवन्मतप्रक्रियायां दौःस्थ्यं श्रीभाष्यनिरूपितं स्थास्यति, तदा, कर्मापेक्षा श्रीभाष्यवर्णिता न शक्या निषेद्धुमिति मतस्वरूपविवेचनमेव कार्यमिति किमनेनाथशब्दार्थविचारेण। कर्मफलानित्यत्वनिर्णयोऽपि केषाञ्चिदौपदेशिकः, केषाञ्चित्, "तद्यथेह कर्मचितो लोक" इति वाक्याध्ययनमात्रात्, निरूपकपरीक्षकाणां तु विचारानन्तरमेवेति नेदं विप्रतिपत्तुमर्हति।

यत्तु—भास्कराभिमतस्य कर्मसमुच्चयस्य श्रीभाष्यकृदनभिमतत्वात् कथं कर्मविचारानन्तर्यमथशब्दार्थ इत्यत्र भास्करस्य प्रमाणीकरणमिति—तन्न—क्वचिद्विषये विवादेऽपि अन्यत्र तत्प्रामाण्यस्वीकारे दोषाभावात्। "दुःखजन्मप्रवृत्तिदोषे"ति न्यायसूत्रं प्रमाणीकुरुते भवद्भाष्यकारः। न हि तत्र तद्दर्शितमोक्ष

मोक्षनिष्पत्तिप्रकारो भवदभिमतः। परं तु यादृशं तादृशं भवतु। तत्त्वज्ञानं मिथ्याज्ञानमित्युभयमुक्तम्। तावन्मात्रे तत्सूत्रोदाहरणमित्येव वक्तव्यम् उक्तञ्च तथैव भामत्यां वैषम्यप्रदर्शनेन। वस्तुतस्तदपेक्षयाऽत्र भास्करप्रमाणीकरणे बह्वौचित्यमस्ति। किञ्च भास्करो न कर्मप्राधान्यवादी। तथा भवल्लेखनञ्चा-युक्तम्। प्रयाजादिवत् कर्मणामङ्गत्वस्य तत्संमतत्वात्। कर्मसमुच्चयस्तु सत्यपि किञ्चिद्वैषम्येऽस्माभिरपीष्यत एव। "विद्याञ्चाविद्याञ्चे"ति मन्त्रस्य श्रीभाष्य एव यथावद् व्याख्याय दर्शितत्वात्।

यत्तु—नित्यानित्यवस्तुविवेकाभावेऽपि इहामुत्रफलभोगविरागो रोगग्र-स्तानां परलोकविद्वेषिणाञ्च भवतीति—तेन किमुक्तं भवति? नित्यानित्यविवे-कस्य वैराग्यसंपादकतया भवन्मते साधनत्वेन परिगणनमेव भवता खण्डितं भवति। सर्वमन्यदा ऐकशास्त्र्यप्रसाधनावसर एव प्रपञ्चितम्। ब्रह्ममीमांसाया-माकाशादिनित्यत्वविचारवत् कर्मफलनित्यत्वानित्यत्वविचाराभावात् अध्ययन-मात्रादेव तद्विषये निर्णयो जात इति न सिद्ध्येत्। किन्तु ब्रह्मविचारात् प्रागेव तन्निर्णयो जात इत्येतावदेव। तज्जननं च कर्मविचारस्य वृत्ततया बहु-विधन्यायोहापोहसामर्थ्यसंपत्त्येति ब्रूमः। एतेन, "प्रथमं कर्मणः आपाततो ब्रह्मविचारप्रतिबन्धकनिवृत्तिसूचनमनन्तस्थिरफलतया ब्रह्मविचारस्य" इत्यनन्वित-वादोऽपि निरस्तः। आपाततः कर्मणः ब्रह्मविचारप्रतिबन्धकत्वं न शतदूषणी-विवक्षितम्। किन्तु कर्मविशेष्यकानन्तस्थिरफलत्वप्रतीतेरेव। तन्निवृत्तिश्च कर्मविचारत इति प्रपञ्चितमेतत्।

यत्तु—कर्मविचारे यज्ञादिपदार्थनिर्णयो न कुत्रापि कृत इति—तदप्ययु-क्तम्। तत्र द्वितीयप्रथमे, "शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्" इति सूत्रे अपर्यायधातुरूपात् शब्दान्तरात् धात्वर्थभेदात् तदनुबद्धा भावनाऽपि भिन्ने-त्युक्तम्। तेन यजतिददातिजुहोतीनामपर्यायत्वमाविष्कृतम्। तथा प्रकरणा-न्तराधिकरणे, कुण्डपायिनामयनाग्निहोत्रं प्रसिद्धाग्निहोत्रविलक्षणं प्रकरणान्तरात्, समिधामंतनूनपाद्यागादिर्मिथोभिन्नः अभ्यासादित्येवं यागावान्तरभेदोऽपि व्यु-

त्यादितः । चतुर्थद्वितीये, " यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् " इति सूत्रेण देवतोद्देश्यकद्रव्यत्यागात्मके यागे द्रव्यदेवतात्यागरूपांशत्रयसद्भावस्य, अनन्तरे च, "तद्युक्ते श्रवणात् जुहोतिरासेचनाधिकः स्यात्" इति सूत्रे होमे देवतोद्देश्यकद्रव्यत्यागवत् प्रक्षेपस्यापि प्रवेशात् प्रक्षेपनिरुक्तत्यागोभयात्मत्वस्य च वर्णनात् तत्तत्स्वरूपशोधनस्य सिद्धेः । सूत्रद्वयं किमर्थं प्रवृत्तमित्यत्र **शास्त्रदीपिकाया**मभिप्रायभेदस्य प्रदर्शितत्वेऽपि सूत्राभ्यां वर्ण्यमानं यागहोमस्वरूपवैषम्यमिति निर्बाधम् । एवं दशमषष्ठे, "द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात्", "यजतिचोदनादहीनत्वं स्वामिनाश्चास्थितपरिमाणत्वात् " इति सूत्रद्वयेन सत्राहीनस्वरूपशोधनेन द्वादशाहस्य सत्रत्वमहीनत्वञ्च वर्णितमिति यागावान्तरभेदोऽपि पूर्वमीमांसायां प्रदर्शित एव । एवमिष्टिपशुसोमयागवैलक्षण्यादिकमप्यतिदेशाध्यायतोऽवगम्यते । याज्ञिकप्रसिद्ध्यादिना सामान्यतोऽर्थावगमेऽपि निष्कर्षो मीमांसाधीनः । लोकप्रसिद्धबर्हिराज्यप्रोक्षणीनिर्मन्थ्यादिशब्दार्था हि, यवक्राहत्रिवृच्चरुपिकादिशब्दार्थाः तृतीय इव प्रथमस्य, चतुर्थे विचार्यैव निर्णेतव्या आसन् । सुतरां यूपाहवनीयादिशब्दार्थाः । अतिप्रसिद्धऋग्यजुस्सामादिपदानामप्यन्तरेण मीमांसां वेदपरत्वं मन्त्रपरत्वं वेति दुर्विज्ञानम् । तस्मात् पूर्वमीमांसायां पदार्थशोधनं नास्तीति न । परन्तु आस्तिकलोकप्रसिद्धान् शब्दान् प्रसिद्ध एवार्थे पूर्वमीमांसाऽपि व्यवहरतीति आस्तिकैरन्यथाऽपि तत्तदर्थावगमः पूर्वमीमांसाध्ययनादूर्ध्वमिव प्रागपि सुलभ इति कथ्येत । तथापि पूर्वमीमांसातः तद्वैशद्यलाभादस्ति विशेषः । तेन 'विविदिषन्ति यज्ञेन दानेन' इत्यादौ मासाग्निहोत्रादिवत् अपूर्वयज्ञादिकमेव करणं विहितमस्तीति कश्चिच्चेदाक्षिपेत्, भेदकप्रमाणप्रसराभावात् अपूर्वग्रहणायोगात् प्रसिद्धसर्वयज्ञविषयकं विनियोगान्तरमेवेदमिति अप्पय्यदीक्षितदेश्यो मीमांसक एव तादृशमाक्षेपं परिहरेदित्यस्त्यत्र मीमांसाया उपयोगः ।

यस्त्वाक्षेपः—" स्वाध्यायोऽध्येतव्यः " इति विधेः कर्मब्रह्मविचारं सर्वं

कृत्वा, अधीत्य स्नायादिति समावर्तनं कर्तव्यं स्यात्। अधीत्येत्यस्य कर्मकाण्डविचारानन्तरमित्यर्थवर्णने च तदनन्तरं स्नानं केनचित् क्रियते, केनचित् ब्रह्मविचार इत्यव्यवस्थेत्येवंरूपः—स नैव भवति। अध्ययनस्याक्षरराशिग्रहणमात्रार्थतया अस्माभिरुक्ततया, "अधीत्य स्नायात्" इत्यस्य अक्षरराशिधारणानन्तरं समावर्तनं कार्यमित्येतदर्थकतया कर्मविचारस्यापि ततः पश्चात् संभवेन ब्रह्मविचारे कर्मविचारानन्तर्यस्याक्षतत्वात्। अतः पुरुषप्रवृत्तिभेदेन न शास्त्रार्थविप्लवः। अथातो ब्रह्मजिज्ञासेति रागप्राप्तो विचार एवोच्यते, न तु विधिरिति च प्रागेवोक्तम्। संपन्नकर्मनिर्णयस्य ब्रह्मविचारे औचित्यं सौकर्यञ्चास्तीत्येतावदेव ब्रूमः। "उपनिषदमावर्तयेत्" इति वाक्यं तु नोपनिषन्मात्रप्राथमिकाध्ययनविधायकम्। किन्तु अधीतोपनिषदावर्तनीयत्वपरमिति प्रागेवोक्तम्।

यत्तु—कर्मविचारस्य शारीरकतृतीयचतुर्थपादेन कर्मरूपेतिकर्तव्यतापरेणैव संगतत्वात् ब्रह्मविचारात् पूर्वं कथं कर्मविचार इति—तन्न—कर्मनिर्णयो हि द्वेधोपयुज्यते—ब्रह्मविचारप्रतिबन्धकनिवर्तने, ब्रह्मविद्येतिकर्तव्यताभूतकर्मविवेके च। तत्र प्रतिबन्धकसद्भावात् ब्रह्मविचारेऽनवतीर्य कर्मविचारे कृते, प्रतिबन्धके निवर्तिते ब्रह्मविचारो भवतीति न ब्रह्मविचारपाश्चात्यता कर्मविचारस्य। एवं कृतस्य विचारस्य पुनः कर्तव्यत्वप्रसक्त्यभावात् तृतीयचतुर्थारम्भे पुनर्विचारो न व्यधायि। तृतीयचतुर्थपाद एव शारीरके प्रथमं निबध्यतामिति चेत्—तदपि न—कर्मणां परब्रह्माराधनत्वविशेषेणैवोपासनां प्रति इतिकर्तव्यताभावात् ब्रह्म निरूप्य, "फलमत उपपत्तेः" इति ब्रह्मणः कर्माराध्यत्वमपि व्युत्पाद्य तदुपासनरूपमङ्गि च प्रतिबोध्य पश्चादेव तदितिकर्तव्यतात्वस्य प्रागुक्तेषु कर्मसु ज्ञापनीयत्वात्। अतः श्रुतप्रकाशिकाभिप्रायमगृहीत्वा न संरब्धव्यम्। कर्मब्रह्मविचारविषययोः कर्मब्रह्मणोः कः संबन्धः? साध्यत्वोपकार्यत्वादेरभावादिति चेन्न—आराध्याराधनभावरूपस्य संबन्धस्य जागरूकत्वात्। ब्रह्मविचारस्य कर्मविचारानन्तर्यं निरूपयन्त्यां शतदूषण्यां निरीश्वरमीमांसकैरित्यादिना तेषामप्यस्याङ्गीकृतप्रायत्वमस्तीति वर्ण्यते। तदेवमेतदाशयः—निरीश्वरमीमांसकत्वादीश्वरं विचार्य

स्थापयितुमनिच्छन्तः जैमिनीयव्याख्यातारोऽर्वाञ्चः, "अथातो धर्मजिज्ञासे" त्यस्य कृत्स्नवेदाध्ययनानन्तरं कृत्स्नवेदार्थविचार इत्यर्थं वर्णयन्ति । परं द्वादशाध्यायीव्याख्यानमात्रे विरमन्ति । न हि तावतैव कृत्स्नो वेदार्थो विचारित इति तैर्वक्तुं शक्यम् । 'जैमिनीयं षोडशलक्षण'मित्यस्य, द्वादशोपरि सङ्कर्षभागसत्त्वस्य शबरस्वाम्यादिग्रन्थत एव संप्रतिपन्नत्वात् । एवञ्च कृत्स्नवेदार्थप्रतिज्ञां विधाय क्वचिद्विरमन्तः शेषमपि निरूप्यैव प्रतिज्ञापूर्तिं कर्तव्यां मन्यन्त इति स्वीकर्तव्यम् । एवञ्च तैः अनुक्तोऽप्यनभ्युपगतोऽपि ब्रह्मविचारः शिरोभूतोऽभ्युपगन्तव्यो भवति । तत्र विचारितानामुपनिषदामधीतवेदान्तर्गतानां षोडशलक्षणे विचारितत्वाभावेन तद्विचारं विना कृत्स्नवेदार्थप्रतिज्ञापूर्त्यभावात् । यदि ब्रह्म नाभ्युपेयते, तर्हि यदर्थपरत्वमुपनिषदामिष्टम्, तदर्थवर्णनार्थं वा कश्चित् षोडशलक्षणोपरितनो भागः स्वीकर्तव्यः । तत्र ब्रह्मास्तीति वा निरूप्यताम्, नास्तीति वेति । भवदीयैरपि कैश्चित् शारीरकस्य शास्त्रान्तरत्वादुपनिषद्भागचिन्तेति वदद्भिः पूर्वशास्त्रे उपनिषदां विचारो न वृत्त इति ज्ञाप्यते । तद्विचारार्थं कश्चिद्भागः एष्टव्य एव भवति । न चेत् कृत्स्नवेदार्थविचारप्रतिज्ञा निरीश्वरमीमांसककृता न घटते इति । अत्र '**त्वदीयैः कैश्चित्**''इत्यत्र "कैश्चित्''इत्यनेन भवदीयाः प्रायः ऐकशास्त्र्यवादिन एव ; शारीरकस्य शास्त्रान्तरत्वमिति भवदीयेषु एकदेशिमतमेवेति शतदूषण्या प्रतिबोध्यत इति ध्येयम् । एवं प्रकृतानुसारिशतदूषण्यर्थापरिशीलनेन तत्सूक्तिदूषणसंरम्भः कोलाहलमात्रम् । सर्वमिदम्, "शास्त्रान्तरत्वादुपनिषद्भागचिन्तेति पक्षस्य च त्वदीयैः कैश्चित् परिग्रहात्" इति शतदूषणीवाक्यमिति मुद्रितग्रन्थस्थितिमनुसृत्योक्तम् । वस्तुतोऽत्र शुद्धताळकोशपाठोऽन्यः । "**शास्त्रान्तरत्वा**दुपनिषद्भागचिन्तेति पक्षस्य **तदीयैः** कैश्चित् परिग्रहणात्" इत्याकारकः । तदर्थश्च—शाबरानुयायिभिः पूर्वमीमांसकैरेव शारीरकस्य शास्त्रान्तत्वमेकशास्त्रचरमकाण्डत्वम्, अत एव वेदचरमभागोपनिषद्विचारात्मकत्वञ्चाभ्युपगतमिति ।

अत्रेदमपि बोध्यम्—"अथातो ब्रह्मजिज्ञासे"त्यत्र अथशब्दस्याध्ययनानन्तर्यरूपार्थः कस्मादुपेक्ष्यते ; अध्ययनाभावे वेदान्तविचारायोगेन तस्यावश्यकत्वात् । यदि, "स्वाध्यायानन्तर्यं तु समान"मिति तत्त्यागः, तर्हि पूर्वमीमांसायामपि सोऽर्थो गळहस्तित एव भवेत् ; "अथातो धर्मजिज्ञासे" त्यत्रापि अथशब्दस्य ब्रह्मविचारसाधारणस्य अध्ययनानन्तर्यस्यार्थत्वायोगात् । अत्र इहामुत्रफलभोगविरागोऽधिकारिविशेषणश्चेत्, तत्र बुभुक्षुत्वमधिकारिविशेषणं युक्तमिति तदानन्तर्यमेवाथशब्दार्थ इति वक्तव्यम् । तथाऽनुक्त्वा बुभुक्षुमुमुक्षुसाधारणस्याध्ययनानन्तर्यस्य तत्रार्थत्वकथनात् बुभुक्षं मुमुक्षुञ्चाधिकृत्य विचार्यं सर्वं प्रतिज्ञायते तत्रेति विज्ञायते । न च भवदीयेषु कैरपि पूर्वमीमांसाघटकस्याथशब्दस्यार्थो मीमांसकवर्णितो दूषितोऽस्ति । प्रत्युत परिगृहीत एव भाष्यभामत्यादिषु । अपि च वेदवाक्यार्थविचारे वृत्ते यत्र यादृशार्थो निर्णीतो भवति, तादृशार्थानुरोधेन पुरुषार्थप्रवृत्तिः पुंसां भवेत् । कर्मविचारे प्रवृत्तैः यदि स्वर्गादिकं षष्ठाध्यायोपपादितरीत्या साध्यभावमनुभवितुमीष्ट इति निश्चयः, तदैव स्वर्गादिबुभुक्षा यथावद्भवन्ती तदर्थेषु कर्मसु पुरुषं प्रयोजयति । तथा यदा शारीरकेण ब्रह्मविचाररूपेण ब्रह्मस्वरूपं यथावत् शोधितम्, तत्प्राप्त्यपुनरावृत्तिरूपत्वादि च अवधारितम्—तदैव स्वर्गाद्यपेक्षयाऽतिशयस्य सुगृहीतत्वात् आत्मस्वरूपानुरूपत्वस्यावसितत्वाच्च भवति मोक्षाख्ये फले समुत्कटो रागः । एतावदवधार्यापि भूम्ना त्रिवर्गप्रावणा एव पुमांसो भ्रमन्तीति स्थिते एतदवधारणात् प्रागेव मुमुक्षा यथावदुदिताऽस्तीति सर्वथा दुर्वचम् । वेदविचारप्रवृत्तस्य परीक्षणनैपुण्यप्राप्तिक्रमेण मुमुक्षापि तरतमभावापन्ना क्रमेण वर्धमाना भवतीति तु कामं स्यात् । अतः ब्रह्मविचारनिष्पत्तेः प्राक् पुष्कलमुमुक्षायाः दुर्वचत्वात्, आपातरूपायाश्चाधीतवेदवेदान्तस्यादौ बुभुक्षया सहैव सत्त्वात् प्रबलया बुभुक्षया तस्याः प्रतिबद्धत्वात फलान्तरवैराग्यविशिष्टमुमुक्षायाश्च फलान्तरस्वरूपशोधनमन्तरेणासंभवात् वेदमात्रप्रामाण्यस्वीकारिणश्च शास्त्रान्तरोपेक्षया वेदवाक्यतस्तन्निर्णयस्यापेक्षितत्वेन तदर्थं वेदविचार एव प्रवृत्तः पूर्वमीमांसयैव सर्वविधाक्षेपप्रतिक्षेपपूर्वकं तत्तत्फलस्वरूपनिर्धारणं संपाद्यमिति कर्मनिर्णयानन्तर्यमप्रतिषेध्यम् । परन्तु

इदमपि वैराग्यं यावन्मोक्षस्वरूपनिर्णयो न भवति तावत्पर्यन्तं न पुष्कलम्। यदि मोक्षोऽपि नित्यत्वेन शास्त्रतो निर्धार्यो न स्यात्, यदि पुरुषस्यानादिसञ्चितानन्तकर्मक्षयः कथमप्यसंभावितः स्यात्, यदि च मोक्षे आनन्दानुभवप्रसक्त्यभावेनापुरुषार्थतैव(भवन्मत इव)स्यात्, तर्हि, 'अन्धत्वात् वरं काणत्वम्' इति अल्पास्थिरभोगव्याप्त्या महादुःखमग्नतानिवर्तनमेव न्याय्यमिति भोग एव सजेत् पुरुषः। अतो वैराग्यमुमुक्षुत्वे त्यक्तकर्मविचारस्य ब्रह्मविचारात् प्राक् यथावद्दुरुपपादे। नित्यानित्यवस्तुविवेकशब्दार्थस्तु भवद्भिरेवासंभवचिन्तयाऽन्यथितः। शमदमादिसाधनसंपच्च, न प्राथमिकश्रवणोपयोगिनीति साधनचतुष्टयपूर्ववृत्तत्वं दुःस्थमेव। प्राचीनादृतकर्मनिर्णयपूर्ववृत्तत्वदूषणञ्च संरम्भकृतमेवेति।

अतो ब्रह्मत्यागिनिरीश्वरमीमांसकोपरि प्रवृत्तस्य कोपस्य विलसितमेतत् यत्, कर्मत्यागेन ब्रह्मैवादृत्यमिति मुष्टिबन्धनम् तदर्थं तत्क्रियमाणस्य कर्मविचारस्य स्वयमुपेक्षणे नैर्भर्थभरणञ्चेति। एवम्भूतान् द्विविधान् अधिकारिण एव कबन्धमीमांसकान् राहुमीमांसकांश्चाधिकृत्य सूक्तमीशोपनिषदि—"अन्धं तमः प्रविशन्ति येऽविद्यामुपासते। ततो भूय इव ते तमो य उ विद्यायां रताः॥" इति। कर्ममात्रपरापेक्षया कर्मत्यागिनां विद्वदाभासानां क्लेशमधिकं दर्शयन्ती श्रुतिरत्यर्थमनुक्रोशते; सैवान्धतमसनिवर्तनेनामृतप्रापणायालमिति मा भूत् कर्मोपेक्षणमिति। अतो ब्रह्म विचिचारयिषुणा विरक्तेन मुमुक्षुणा वैराग्यवृद्धये मोक्षविषयोत्कटेच्छासंपत्तये मोक्षोपायनिष्पत्तये, अन्यथा प्रत्यवेमेति भिया कर्मानुष्ठानाय च कर्मविचारमावश्यकं विधाय, "वर्णाश्रमाचारवता पुरुषेण परः पुमान्। विष्णुराराध्यते पन्थाः नान्यः तत्तोषकारकः" इति प्राप्तेन कर्मणा भगवन्तं भक्तिपूर्वमाराधयता, तद्विचारे प्रवृत्य तत्त्वनिर्णयः संपाद्यः। अत एवाद्यत्वे ये "कालक्षेपाक्षमत्वात् कतिचन कृतिनः शीघ्रमन्ते रमन्ते", तेषामाह्निकमात्रं वा यथावदुपदिश्य ब्रह्मजिज्ञासायां प्रवृत्त्याधानमाचार्यैर्विधीयते॥

नित्यानित्यविवेको नारकदुःखेऽप्यनित्यताधृत्या।
इहफलभोगविरागो बहुशिष्यस्तोमवन्ध्यभावाय॥

आमुष्मिकवैराग्यं त्वायासार्थव्ययाद्यसहनेन ।
शमदमसंपत् शाश्वतधर्मानुष्ठानयत्नवैधुर्यात् ॥
भवति मुमुक्षा चाद्य प्रतिमोक्तव्यस्य मोचनोपगमात् ।
साधनचतुष्टयमिदं त्वद्यत्वे ब्रह्मकाम्यमभिनयताम् ॥

नित्यं फलं यदि, विरज्य फलान्तरेभ्यः
तत्साधनेषु विविधेष्वपि चाप्रवृत्य ।
तत् प्राप्नुयामिति खलूदयते मुमुक्षा
तस्मान्न साधनचतुष्टयमिष्टमस्ति ॥

विचार्य श्रुत्यन्तान् विदितपरमार्थस्तु पुरुषो
महानन्तानन्दाधिगमहृतनानाभिलषितः ।
अवर्ज्यं सत्कर्म श्रुतमथ चरन् शान्तिजलधिः
मुमुक्षामक्षोभ्यां भजति ; महिते रज्यति हिते ॥

---

श्रीः

## (९) कथानधिकारप्रसाधनम् ॥

यदीक्षणोपेक्षणगोचरत्वात् यथार्थविज्ञानविपर्ययाद्यम् ।
तदीयहेषायितसाधुवादान् सतः परेषाञ्च हितान् प्रपद्ये ॥

प्रामाणिकपरिग्राह्यायां कथायां प्रपञ्चापलापिनामनधिकार इति प्रकटाविशेषं प्रच्छन्नविषयेऽप्युपपदितं कथानधिकारवादे । स्वकीयानामधिकारस्थापनार्थञ्च चार्वाकमाध्यमिकानामप्यधिकारं स्वीकृत्य खण्डनखण्डखाद्यादिषु यदुक्तम्, तत् खण्डनाय चानादरणीयमिति श्रीभाष्यविवरणव्याजेन आशयमुद्घाट्य प्रस्तुत्य, "तत्र यत् तावत् खण्डितम्" इति खण्डनग्रन्थस्यार्थतोऽनुवादारम्भः । संपूर्णमनूद्य तन्निरसनेन स्वमतमण्डनमत्र वादे आचार्यैर्विस्तृतम् ।

परन्तु **तात्पर्यचन्द्रिका**द्याचार्यग्रन्थान्तरेषु तत्रतत्रैव, अत्रापि ग्रन्थपात आपतितः। तदद्यत्वे श्रीभगवद्यामुनाचार्यविरचितेश्वरसिद्धिरिव कथानधिकार-वादोऽयं पूर्वपक्षांशेऽप्यपूर्ण एवोपलभ्यते। **चण्डमारुतादौ** तु स्थितमात्रेणापि कार्यनिर्वाहार्थं वाक्यार्थवर्णने क्लेश उह्यते। अस्वरसवेदितयैव **नृसिंहराजीये** चण्डमारुतानुरोधेन स्वरूपव्याक्रियैव निराक्रियेति पूर्वमुक्त्वा, "केचित्तु अत्र सिद्धान्तग्रन्थपातमाहुः" इत्युक्तम्। पूर्वपक्षानुवादोऽप्यन्ते नष्ट इति ज्ञेयम्। तालकोशेषु च केषुचित् उपलभ्यमानपर्यन्तं विलिख्य वादान्तरेष्विव, "इति........शतदूषण्यां............"इति समाप्तिवाक्यमविलिख्य ग्रन्थपातसूचनाय उपलम्भे सति लेखनसौकर्याय च तत्र ताळपत्रे शिष्टं भागमधिकस्थानक्षरं संरक्ष्य तदुपर्येव स्वप्रकाशभङ्गवादप्रारम्भः कृतोऽस्तीत्यतो भ्रष्टग्रन्थालाभं प्राञ्चः प्रदर्शितवन्तः सन्तीति स्वीकर्तव्यम्। तदत्र, "तत्र यत् तावत् खण्डित"मित्यारब्धस्यानुवादस्यासमाप्तत्वात्, यदित्यस्य प्रतिसंबन्धितच्छब्दनिर्देशपुरस्सरं तत्र दोषोपन्यासस्य कार्यत्वाच्च उपरितनबहुंशभ्रंशसंप्रदाय एव समञ्जसः।

अथात्रानूद्यमानखण्डनग्रन्थखण्डनाशयः संगृह्यते— अधिकारः फलस्वाम्यमिति मीमांसकाः। स कथाधिकारस्तस्य भवति, यः कथाजन्यफलभोक्ता भवति। कथाफलञ्च तत्त्वनिर्णयोत्पादनम्। अन्यस्य वस्तुतस्तदभावान्न तद्भोक्तृत्वरूपाधिकारः। तत्त्वनिर्णयश्च कथायां प्रमाणतर्काभ्यां साधनोपालम्भयोः करणात् भवतीति वक्तव्यम्। वादिप्रतिवादिभ्यामुपन्यस्तौ पक्षप्रतिपक्षौ न्यायात्मकौ हि कथा नाम। तत्राद्वैतिभिः प्रपञ्चापलापस्य कृतत्वात्, तन्मते प्रमाणानामप्यभावात् केन किं कथं साध्यते? अत एवोक्तं **न्यायभाष्ये,** "किंसाधनः परमुपालभेत" इति। एतेन यदुक्तं सर्वनिर्वचनखण्डनव्यसनिना खण्डनकारेण, "स्वपक्षसाधनानभिमतया परपक्षविदळनमात्रया वितण्डया कथाप्रवृत्तौ न दोषः" इति—तदपि निरस्तम्। परपक्षविदलनस्य प्रतिज्ञाहेत्वादिरूपेणैवोपन्यसनीयत्वात् प्रपञ्चापलापिभिः पक्षसाध्यसाधनादीनामसिद्ध्या मूकीभावस्यैवावलम्ब्यत्वात्। अन्यच्चोक्तं न्यायभाष्ये—यो ज्ञापयति, यो जानाति

येन ज्ञाप्यते, यच्च ज्ञाप्यते, एतच्चतुष्कं प्रतिपद्यते यदि, तदा वैतण्डिकत्वं जहाति । सर्वापलापी वैतण्डिकः वाचं विस्रष्टुमेव नेष्टे । विदळनप्रवृत्तस्य वैतण्डिकस्य, विदळनं स्वेन परस्मै वाक्यप्रयोगेण तन्मूलकशाब्दबोधेन कार्यमित्येतदपि यदि नाध्यवसीयते, कथं कथाप्रवर्तनम् । यद्यध्यवसीयते, तदा कथं सर्वनास्तित्वमिति । अनध्यवसाये च, "नायं लौकिको न परीक्षक इति उन्मत्तवदुपेक्षणीयः" इत्यप्युक्तं न्यायभाष्ये । वैनयिकीं सांसिद्धिकीं वा शिक्षामप्राप्तः लौकिकः, विचारसमर्थः परीक्षक इति "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यम्" इति न्यायसूत्रभाष्ये द्रष्टव्यम् ।

कथायां प्रवृत्तः किं निर्णीततत्त्वः उतानिर्णीततत्त्वः ? आद्ये सर्वस्य तद्बुद्ध्या बाधितत्वात् प्रतिपाद्यपुरुषादीनामेवाभावात् व्यवहारसामान्यमेव न प्रसज्यते ; कथं कथा ? न च एकस्य जीवस्य तत्त्वनिर्णयेऽपि जीवान्तरस्य स उत्पाद्य इति युक्तम् । जीवान्तरस्यापि स्वकल्पितत्वान्मिथ्यात्वात् । ब्रह्मेतरत् मिथ्येति सङ्ग्राहकेण जीवान्तराविद्यादीनामपि बाधितत्वेन तदप्रसक्तेश्च । नान्त्यः, वादिप्रतिवादिनोः स्वस्वविषयनिर्णययिस्यावश्यकत्वात् अन्यथाऽनधिकारत्वात् । अथ स्वपक्षस्य कस्यचिदभावात् वैतण्डिकस्य न तन्निर्णयोऽपेक्षित इति चेन्न । न हि वैतण्डिकस्य पक्ष एव नास्ति । किन्तु स्वपक्षं स्थितमपि न स्थापयतीत्येतावदेव । अत एव सूत्रम्—"स्वपक्षस्थापनाहीनो जल्पो वितण्डा" इति । खण्डनकारोऽप्यद्वैतश्रद्धयैव हि प्रववृते । कामं तस्य कश्चित् सिद्धान्तो मा भूत् । वादिसंमतस्यार्थस्य विषयेऽनुपपन्नत्वनिश्चयस्तावदस्त्येव । अत एव विदलनारम्भः । स च निर्णयस्तेन सति अवसरे समर्थनीय एव अन्यथा वादी विजयते । यदि चाद्वैतं शून्यं वा स्वपक्षत्वेनास्वीकृत्य कश्चिद्वैतण्डिकः तत्तन्मतस्थैकदेशिवत् वाद्युक्तेऽनुपपत्तिमात्रमाविष्करोति, तर्ह्येतावता बौद्धाद्वैतिप्रभृतीनां कथानधिकारं प्रतिपादयतोऽस्मान् प्रति न किञ्चिद्भवता कथाधिकारस्थापनोपयोगि दूषणमुक्तं भवति ॥

ननु प्रतिवादिपक्षे वस्तुतः सर्वस्याभावेऽपि वादिना सर्वास्तित्वस्य स्वीकृततया तत्पक्षरीत्या तत्र दूषणोद्भावने को दोषः इति चेत्—अत्र,

"सर्वथा सदुपायानां वादमार्गः प्रवर्तते ।

अधिकारोऽनुपायत्वात् न वादे शून्यवादिनः" (श्लोकवार्तिके निरालम्बनवादे १२-१२८) इति वदन् **भट्टकुमारिल** एवं दूषणं दर्शयति,

"योऽपि तावत् परासिद्धः स्वयंसिद्धोऽभिधीयते ।

भवेत् तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया?"इति। उभयमतसिद्ध एव हेतुर्भवति, नान्यतरासिद्धः। स्वमतमात्रसिद्धे तूपन्यस्यमाने परेणासिद्धौ शङ्कितायां तत्सत्त्वसमर्थनेन शक्यते तत्त्वनिर्णयः कर्तुम्। स्वस्यैव यत् असिद्धत्वेनाभिमतम्, तदुपन्यासे तु असिद्धिशङ्कायां ओमित्येवोत्तरमिति कथं ततस्तत्त्वनिर्णयः?

यत्तु—व्यावहारिकं सत्त्वमस्माकमिष्टमिति—तत्रासत्त्वस्यैव व्यावहारिकं सत्त्वम्, सांवृतिकं सत्त्वमिति नामान्तरमिति निरूपयिष्यामः। अन्यदत्र चण्डमारुतोक्तमपि ग्राह्यम्। यथा—

"प्रातिभासिकमानेन व्यावहारिकबाधने ।

व्यावहारिकमानेन तत्त्वं सिद्ध्येत्; न चान्यथा ॥" इति। यदि व्यावाहारिकसता हेतुना व्यावारिकसदेव किञ्चित् साध्यते, तदस्तु। सत एव प्रतिवादिसंमतस्य व्यावहारिकमिति विशेषणमात्रस्य भवता दीयमानत्वात्। वादिसंमतेन वादिसंमतस्यैव साधनादसिद्धिदोषाभात्। सिद्धसाधनं तु स्यान्नवेत्यन्यदेतत्। व्यावहारिकविलक्षणं तु पारमार्थिकं व्यावहारिकेण न शक्यं साधयितुम्। तथासति प्रातिभासिकं शुक्तिरजतस्वाप्नपदार्थादिकं बाध्यमानमपि तादृशबाध्यतारहितव्यावहारिकवस्तुसाधकं भवतु। न हि वास्तवरजतादिसाध्यं सर्वं शुक्तिरजतादिसाध्यं कश्चिद्दूरीकुर्यात्। शुक्तिरजतप्राप्तिमात्रेण धनिकत्वाङ्गुलीयकवत्त्वादेरसिद्धेः। अत्र, यदि प्रातिभासिकमानं व्यावहरिकसाधनं स्यात्, व्यावहारिकमानं पारमार्थिकसाधनं स्यादिति चण्डमारुतार्थमनवबुद्ध्य यदुक्तम्,

"न हि चण्डमारुतोक्तरीत्या भ्रमज्ञानं व्यावहारिकसाधनमित्यद्वैतसिद्धान्तः" इति---तदेतेन निरस्तम्। तथा अद्वैतसिद्धान्त इति तत्रानुक्तेः। विपर्ययपर्यवसायिना तर्केण तदभावस्यैव तु ज्ञापनात्। यद्यपि प्रातिभासिकस्य व्यावहारिकं तद्विषयकं ज्ञानं प्रति जनकत्वमस्ति—अथापि न व्यावहारिकरजतसाध्यस्य सर्वस्य प्रातिभासिकं रजतं साधकम्। एवं स्वाप्निकराज्यभरणादेः प्रमोदादिजनकत्वेऽपि भाव्यम्। वस्तुतस्तत्र नासतो ज्ञानकारणत्वमपि। अकारणभूतमपि तत् ज्ञाने आलम्बनमात्रमिति व्यक्तीकरिष्यते। एवमनुमापकत्वविषयेऽपि। उक्तञ्च श्लोकवार्तिके,

"ननु लोकप्रसिद्धेन पूर्वमेतेन हेतुना।
साध्यसिद्धिर्भमाप्यासीत् परमार्थोऽस्य नास्तिता॥
योऽधुना परमार्थेन नास्तीत्येवं प्रतीयते।
कथं पूर्वमसावासीत् असंश्चेत् साधनं कथम्॥
साधनं चेदवश्यञ्च परमार्थोऽस्तिता भवेत्।
सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते॥
न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता।
बाष्पादिनाऽप्यधूमेन मिथ्या वह्न्यादिबोधनम्॥
तस्मादसत्यहेतोर्या परमार्थे मतिस्तव।
साऽप्यसत्या न सत्यं हि सत्याभासेन युज्यते" इति॥

ननु बाष्पादिनाऽपि क्वचिद्वह्निः साध्यमानो दैवादबाध्य एव यद्यस्ति, तदा व्यावहारिकसाधकत्वं बाष्पधूमस्य सिद्धमिति चेन्न—प्रातिभासिकधूमसाधितो वह्निः प्रातिभासिकविलक्षण इत्यत्र प्रमाणाभावात्। प्रमाणान्तरेण तत्र व्यावहारिकवह्निग्रहणेऽपि तेन प्रातिभासिकस्य विरोधाभावात्। तादृशधूमप्रत्यायितस्तादृशवह्निस्तु बाधित एव। अन्यस्तु प्रमाणान्तरवेदितो वह्निरस्तीति भवन्मते वक्तव्यम्। अन्यथा प्रमाणान्तरेण वह्निमविदुषः धूमस्य च प्रतिभासि-

कत्वमध्यवसितवतोऽपि तत्साधितवह्निविषयकनिष्कम्पप्रवृत्त्यापत्तेः । क्वचित् बाष्पधूमसाधनस्थले वह्न्यनुपलम्भान्न निष्कम्पप्रवृत्तिरिति चेत्—तर्हि आभासहेतुनिष्ठायां व्याप्तौ आभासात्मकसाध्यनिरूपितत्वमवर्जनीयम् । क्वचिदनाभासनिरूपितत्वमपि दैवादित्युक्तं भवति । एवञ्च बाधितस्यापारमर्थिकत्वं स्वरसप्राप्तम् । पारमार्थिकत्वं तु प्रमाणान्तरनिर्णेयमित्युक्तं भवति । तथा च यावत् अनाभासभूतं प्रमाणं किञ्चित् न संपाद्यते, तावत् वस्त्वसिद्धिरेवेति ॥

एतदुक्तं भवति—यत्र पुंसः प्रथमतो बाष्पे धूमत्वभ्रमेण धूमवानयमिति भ्रमः, तदनन्तरञ्च वह्निमानयमित्यनुमितिः, तत्र पश्चात्, 'बाष्पमेव धूमत्वेनाध्यमवसितम्, न तु वस्तुतो धूमोऽस्ती'ति निश्चये, तदा वह्निव्याप्याभाववांश्चायमिति प्रमोदये च सति वह्निग्राहकमानान्तराभावात् पूर्वजाता वह्न्यनुमितिः प्रमेति वक्तुं न पार्यते । तथा च तत्स्थलीयं बाष्पधूमज्ञानजन्यवह्निज्ञानं मिथ्याविषयकमेव । तद्वत् प्रकृते ब्रह्मज्ञानजनकस्य शास्त्रज्ञानस्य भ्रमत्वे निश्चिते ब्रह्मज्ञानजनकप्रमाभूतज्ञानान्तराभावनिश्चये च सति ब्रह्मज्ञाने भ्रमत्वनिश्चयो निराबाधः । स्यादेतत्—क्वचिद्बाष्पधूमज्ञानजन्या वह्न्यनुमितिः प्रमापि भवतीति तार्किकोक्तं कथमिति चेत्—श्रूयताम्—बाष्पधूमज्ञानं हि धूमवानयमित्याकारकम् । तत्र धूमत्वेन बाष्पस्य विषयत्वात् यद्यपि तदंशे भ्रमत्वमस्ति; अथापि न तद्भ्रमत्वमनुमितिभ्रमत्वप्रयोजकम्, किन्तु यद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वमनुमितिजनकतावच्छेदकं तद्रूपावच्छिन्नाभाववद्विशेष्यकत्वविशिष्टतद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वमेव परामर्शात्मकस्वनिष्ठं स्वजन्यानुमितौ साध्यभ्रमत्वप्रयोजकम् । अन्यथा परामर्शस्योदासीनयत्किञ्चिद्विषयकभ्रमरूपत्वेऽप्यनुमितिप्रमानुदयापत्तेः । अत्र च बाष्पस्येव धूमस्यापि पक्षे सद्भावात् धूमत्वात्मकतद्रूपाच्छिन्नाभाववद्विशेष्यकत्वं तज्ज्ञाने नास्तीति न तज्जन्यानुमितेर्भ्रमत्वम् । न च यत्र धूमो नास्ति, अयोगोलक इव वह्निः परम्, तत्र बाष्पे धूमत्वभ्रमात वह्न्यनुमितौ कथं प्रमात्वमिति शङ्क्यम् । यतो वह्निव्याप्यधूमवान्, तद्व्याप्यभस्मवान्, तद्व्याप्यवानिति नानापरामर्शानुगमेन व्या-

प्यत्वावच्छिन्नाभाववद्विशेष्यकत्वविशिष्टतादृशप्रकारताशालिज्ञानत्वमेव परामर्शनिष्ठमनुमितौ व्यापकविषयकभ्रमत्वप्रयोजकमितीष्यते । प्रकृते च बाष्पस्य व्याप्यत्वाभावेऽपि वस्तुतो वह्निमति तद्व्याप्यस्य यस्य कस्याप्यावश्यकत्वेन तदभाववद्विशेष्यकत्वाभावान्नानुमितिभ्रमत्वप्रसक्तिः । वह्निव्याप्यस्य कस्याप्यभावे तु वह्न्यनुमितेर्भ्रमत्वमिष्टमेव । अत एवमपरिशील्यासल्लिङ्गकपरामर्शात् भ्रमादप्यनुमितिः प्रमेष्यत इति न शङ्कितुमुचितम् ।

अथ सल्लिङ्गकपरामर्शादप्यनुमितेर्भ्रमरूपायाः स्वीकृतत्वात् प्रमाणत्वाभिमतशास्त्रजन्यं ज्ञानं ब्रह्मविषयकं भवत्पक्षे कथं न भ्रमः स्यात् ? अङ्गीक्रियते हि **मणिकारा**दिभिः, वह्निव्याप्यधूमवान् पर्वत इति परामर्शात् आद्यक्षणावच्छिन्नः, अथवा शिखरावच्छिन्नः पर्वतो वह्निमानित्यनुमितिः । एवमाद्यक्षणावच्छिन्नघटो गन्धवानित्यादिश्चेति चेन्न—तत्रापि परिशीलनीयांशभावात् । यद्विषयकत्वं प्रति सत्परामर्शस्य प्रयोजकत्वं तदंशेऽनुमितेर्न भ्रमत्वमित्येव हि विवक्षितम् । अत्र साध्यविशिष्टपक्षांशे भ्रमत्वस्य न प्रसक्तिः । आद्यक्षणावच्छिन्नत्वादिविषयकत्वे तु नायं परामर्शः प्रयोजकः । अन्यथा कदाचिदाद्यक्षणावच्छिन्नत्वम्, कदाचिच्छिखरावच्छिन्नत्वम्, कदाचिदन्यदित्यव्यवस्थाविरहप्रसङ्गात् । अतस्तन्नियामकमन्यदेव किञ्चिल्लाघवज्ञानादीति न नियामकान्तराधीनतद्विषयकत्वमादायानुपपत्त्युद्भावनप्रसक्तिरित्यलम**द्वैतसिद्धिचन्द्रिका**द्युक्तार्थाधिकविमर्शनेन ॥

तत् सिद्धं प्रातिभासिकमानेन व्यावहारिकसिद्धिर्न भवतीति । यत्तु—स्वतः प्रामाण्यवादिनां वेदान्तिनां प्रामाण्यग्रहे मानान्तरसंवादस्य कथमुपयोग इति—तत्रोच्यते—भवतैव प्रमास्थल इव भ्रमस्थलेऽपि स्वतः प्रामाण्यग्रहस्य प्रागुक्ततया वास्तवप्रामाण्यनिश्चयाय मानान्तरसंवादापेक्षोपपत्तेः । यत्तु प्रागुक्तम्—ज्ञानेन व्यवहारान्यथानुपपत्त्या यथायथं प्रातिभासिकव्यावहारिकसत्ता सिद्ध्यतीति—तन्न—कोऽयं व्यावहारिको नाम ? यदि वाचिकशब्दप्रयोगः,

तत्र वस्तुज्ञानमेव कारणम्, न तु वस्तु; अतीतानागतयोरपि व्यवह्रियमाणत्वादिति न ततः सत्तासिद्धिः। कायिक उपादानादिरूपस्तु व्यवहारः प्रातिभासिकेष्वसंभावितः। सत्तात्रैविध्यञ्चोपरिष्टान्निराकरिष्यते।

यत्तु—हेतुत्वं वस्तुसत्तां नोपेक्षते, किन्तु पूर्वकालसंबन्धमात्रमिति खण्डनश्लोकप्रदर्शनेनोक्तम्—तत् प्राक् सूत्रस्वारस्यभङ्गप्रसाधनावसर एव निरस्तम्। किञ्च ज्ञानं किं सत्तामेव न गृह्णाति, किं वा गृहीताऽपि सा बाध्यत इति? आद्ये सत्ताया एवासिद्धौ प्रातिभासिकव्यावहारिकपारमर्थिकभेदेन त्रैविध्यकल्पना नोपपद्यते। नान्त्यः, किं बाधोऽयं वस्तुबाधः, उत तन्निष्ठसत्ताबाधः, आद्ये स वस्तुबाधः किं बाधज्ञानकाले वस्त्वभावरूपः, उत प्रागपि? प्रथमे, प्राक्काले वस्तुन इष्टत्वात् न मिथ्यात्वम्। द्वितीये प्रागपि वस्त्वभावे का नाम तस्य प्रातिभासिकी व्यावहारिकी वा सत्ता नाम। अन्त्ये, वस्तुन्यबाधिते सत्ताबाधः कथमित्यास्तां तावत्।

अथ खण्डनवादः साक्षान्निरस्यते—कथकाभ्यां प्रमाणादीनां सत्त्वमभ्युपेयमित्येतच्चतुर्धा विकल्प्य खण्डितम्। तत्र प्रथमविकल्पः—प्रमाणादिसत्ताभ्युपगमसाहित्यनियतत्वात् व्यहारस्य तदभावे व्यवहारः प्रवर्तयितुं न शक्यत इति। स खण्डितः—चार्वाकमाध्यमिकादिभिः सत्तानभ्युपगमेऽपि व्यवहारस्य क्रियमाणत्वादिति। अत्रोच्यते—अनुमानमेवानभ्युपगच्छन् चार्वाकः, अनुमानरूपन्यायप्रयोगात्मिकायां कथायां कथमधिकुर्यात्? अनधीतवेदस्य यागादावनधिकार इति ब्रूमः। तत्र शूद्रः कश्चित् करोतीति प्रदर्श्य न हि शूद्रानधिकारवादः प्रतिक्षेप्तुं शक्यते। तस्मात् तथा व्यवहरन्नपि सोऽनधिकार्येव। किञ्च प्रमाणादिसत्ताभ्युपगमसाहित्यनियतस्य व्यवहारस्येत्यत्र साहित्यपदं व्यर्थम्। एवं सत्ताभ्युपगमस्य व्यवहारव्यापकत्वमिति विकल्पार्थश्चेत्, प्रवर्तयितुमशक्यत्वादित्यधिकलेखनं व्यर्थम्। अभ्युपगमं विना प्रवर्तयितुमशक्यत्वमेव चेत् प्रथमविकल्पार्थः, तर्हि अभ्युपगमस्य व्यवहारकारणत्वमेव व्यतिरेकमुखेनोक्तं भवतीति, "उत व्यव-

हारं प्रति तस्य हेतुत्वात्" इति द्वितोयविकल्पादविशेषः। अभ्युपगम-व्यवहारयोर्व्याप्यव्यापकभावखण्डनेनैव कार्यकारणभावस्यापि खण्डितत्वात् द्वितीयविकल्पानुत्थानञ्च। एतत्पक्षे द्वितीयविकल्पस्य प्राथम्यम्, प्रथमस्य द्वितीयत्वञ्च युक्तम्। कार्यकारणभावाभावेऽपि व्यवहारो दृश्यत इति यत् समाधानम्—तदुभयपक्षाविशिष्टमेव। यत्तु—व्यवहारस्य साधनबाधनाक्षमत्वं प्रति प्रमाणाद्यनभ्युपगमो न प्रयोजकः, किन्तु व्यवहारगतमाभासत्वमिति—तन्न—आभासत्वस्य तत्रैव पर्यवसानात्। व्यवहारस्याभासत्वं नाम, अपशब्द-गर्भत्वं वा, प्रमेयबाधो वा: आद्ये, निग्रहमात्रम्, न तु प्रमेयदोषः। अन्त्ये तूच्यते—व्यवहारो हि प्रतिज्ञाहेत्वादिन्यायप्रयोगः। तत्र पक्षसाध्यहेत्वादीनां सत्तानभ्युपगमे आश्रयासिद्ध्यादयो दोषा जाग्रत्येव। सत्तानभ्युपगमे, पक्षे साध्यमस्ति, हेतुरस्ति, हेतौ साध्यव्याप्तिरस्ति, दृष्टान्तेऽपि साध्याद्यस्तीत्या-देर्वक्तुमशक्यत्वात्। यत्तु—न वयं प्रमाणादीनि न सन्तीत्युक्त्वा कथामारभामहे, किन्तु, तत्सत्त्वासत्त्वविचारे उदासीना इति—तन्न—पक्षे हेत्वादेः, हेतौ साध्यव्या-प्त्यादेश्च सत्तास्वीकारे औदासीन्याभावात्। अस्वीकारे हेतोराभासत्वापत्तेः। यच्च प्रामाण्याद्यभ्युपगम्य कथां कुर्वतो वादिन एवेयं नियमभरयन्त्रणा; अभ्युप-गतत्यागे निग्रहादिप्रसङ्गात्। अभ्युपगममन्तरेण औदासीन्येन प्रवृत्तस्य तु न दूष-णमिति—तन्न—उदासीनव्यवहारस्याप्याभासत्वे असाधकत्वस्योक्तत्वात्। 'यो हि-गच्छत एव स्खलतमिति न गच्छति, गमनफलं तु ग्रामप्राप्तिमन्यनिरपेक्षो वाच्छति' तादृगेषः। न च प्रमाणादिकमङ्गीकृत्य कथा प्रवर्तनीया, उतान्यथाऽपीति विचार-रूपा कथा यथा प्रमाणाद्यङ्गीकारनिरपेक्षैव प्रवर्तते, तथैव सर्वा कथा प्रवर्त्यतामिति वाच्यम्—तादृशविचार एव विवेकिभिः लोके अप्रवृत्तेः। प्रवर्तमानो हि प्रमाणं विनैव विचारस्य कर्तुं शक्यत्वं स्थापयन् तत्र हेतुमुपाददानः प्रमाणस्वीकार्येव भवति; न्याये आगमः, प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षम्, उपनय उपमानमिति प्रमाणानां सर्वेषां समवायस्य न्यायभाष्ये दर्शितत्वेन सर्वप्रमाणस्वीकारस्य न्यायं प्रयुञ्जाने आवश्यकत्वात्। व्याहतवादी तु न वास्तवकथकः; किन्तु उच्चैरुद्घुष्य विजिगीषमाण इति किं तेन?

"नाभाव उपलब्धेः" इति सूत्रभाष्ये च, "यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्यते, तत् संभवति, यत्तु न केनचिदपि प्रमाणेनोपलभ्यते, तन्न संभवति। इह तु यथास्वं सर्वैरेव प्रमाणैः बाह्योऽर्थ उपलभ्यमानः कथं न संभवतीत्युच्येत" इत्यभाषि। तेन प्रमाणतो वस्तुसत्ता स्वीकृता। "प्रमेयता च तुलाप्रामाण्यवत्" इति न्यायसूत्रोक्ततया प्रमाणमपि प्रमाणेन साध्यमानं प्रमेयं भवतीति सिद्धा प्रमेयस्येव प्रमाणस्यापि सत्ता। तस्मात् सत्ताभ्युपगमः कथाप्रवृत्तौ नान्तरीयकः। किं बहुना, खण्डनग्रन्थ एव, "नन्वैद्वतश्रुतयो वर्णपदविभक्तितदर्थादिभेदान् उपजीव्य अर्थं प्रतिपादयन्त्यः स्वोपजीव्याभिः भेदबुद्धिभिः न कथं बाध्यन्ताम्? उपजीवकस्योपजीव्यात् दुर्बलत्वात्" इत्याशङ्क्य, "मैवम्, न वयं भेदस्य सर्वथैवासत्त्वमभ्युपगच्छामः। किं नाम? न पारमार्थिकं सत्त्वम्। अविद्याविद्यमानत्वं तु तदीयमिष्यत एव। तदेव च कार्यकारणभावोपयोगि" इति लिखन् उपक्रमे प्रमाणादिसत्ताभ्युपगमाभावं स्वोक्तं स्वयमेव निरस्यति। अनेन हीदमुक्तं भवति—सर्वथा सत्त्वानङ्गीकारे कार्यकारणभावः, यः कश्चिद्व्यवहारो वा नोपपादयितुं शक्यते। तस्मात् यया सत्तया विना सर्वमिदं दुर्घटम्, सा सत्ता नान्तरीयकतया स्वीकर्तव्येति। ननु सत्यमेतत्, सा सत्ता व्यावहारिक्येवेति चेत्—अव्यावहारिकी किमन्या काचित् सत्ताऽस्ति; व्यवह्रियमाणत्वात् सर्वस्या अपि सत्तायाः। सैव च पारमार्थिकी। यदि यदा कदाऽप्यस्ति, तर्हि सा सत्ता पारमार्थिक्येव। यदि तदापि बाध्यते, तत्कालवृत्त्यभावप्रतियोगित्वेन गृह्यते, तर्हि नास्त्येवेति बाधिते सत्तायाः दुरुपपादत्वात्। ननु सत्तामनभ्युपगम्य विचारः सुकरो न वेति विचारः प्रमाणादिसत्तानभ्युपगमेऽपि भवतीत्युक्तमिति चेत्—विवेकिनस्तथा कथा न भवतीत्यप्युक्तम्। उक्तञ्च **वेदार्थसंग्रहतात्पर्यदीपिकायाम्**, "शून्यवादिनं प्रति अनुपायत्वात् वादानधिकार इत्युक्ते वादः प्रवृत्त एवेति व्याहतमिदं वादानधिकारकल्पनमिति चेन्न—ग्रन्थाभिप्रायाज्ञानकृतमिदं चोद्यम्।

वादो नाम स्वाभिमतार्थसाधकत्वम्। अनुपायस्य स्वाभिमतार्थसिद्धिर्नास्ति, साधकाभावात्। अतो निष्प्रयोजनत्वमुक्तम्; न तु, अनुपायस्य वादानधिकार इति वाक्प्रयोगस्यप्ययोग्यत्वम्। यद्वा अनेन ग्रन्थेन शून्यवादिनो व्याहतिरापाद्यते कथाप्रवृत्तेन त्वया कथाप्रवृत्तिविरुद्धमङ्गीकृतमिति। तस्मान्नात्र चोद्यम्'' इति। अस्तु व्याहतिरिति यदि ब्रूयात्, तदा किमिति चेत्—'सन्तु वचनाभासाः, हेत्वाभासाः, निग्रहस्थानानि च; अथापि अहं सदर्थवादी'ति यदि ब्रूयात्, तदा किमिति तुल्यम्? तस्मात् अनधिकारिणा कथायां प्रवृत्तौ क्रियमाणायां कारुणिकाः हितैषिणः कथास्वरूपं प्रतिबोध्य अधिकारं सम्पाद्य प्रवर्ततामिति साधूपदिशन्ति परम्। न पुनः कथां कर्तुं प्रवर्तन्त इत्येव भाव्यम्। इदं कथकाभिमानिना सह साक्षात् सल्लापे। अन्यथा तु शिष्यादीन् प्रति तस्यानधिकारं व्युत्पादयन्ति हितोपदेशरूपेण।

अत एव यदुक्तम्, "शिष्यादयस्तु तस्य कथानधिकारं ज्ञाप्यन्ते। न तु स साक्षात् कथायामुपवेश्यते। अत एव न्यायभाष्ये, 'सप्रयोजनमनुयुक्तो यदि प्रतिपद्यते'इति प्रथमपुरुषप्रयोग आहृतः; न तु, "प्रतिपद्यसे" इत्युक्तम्'' इत्युद्भाव्य—"शिष्यादीन् प्रत्यपि, चार्वाकादीनामयं दोषः इत्येवाभिधातव्यम्। कथञ्च तथा स्यात्? कथायामेव हि निग्रहः''—इति—तदपि निरस्तम्—उभाभ्यामपि पक्षप्रतिपक्षपरिग्रहानुगुणन्यायप्रयोगो हि कथा। यदा तु शिष्यः स्वयं न्यायप्रयोगमकुर्वन् केवलं जिज्ञासते, तदा तदुपपादनस्य कथारूपत्वं न भवति। अस्तु नाम कथायामेव पारिभाषिको निग्रहः। अन्यत्र तद्गतदोषख्यापनं तु न न शक्यम्। स तु निग्रहो भवतु, मा वा। एवमेव खण्डनमण्डनग्रन्थानां कथारूपत्वेनास्वीकृतानामपि प्रवृत्तिर्न्यायभाष्यादौ दर्शिता। न्यायभाष्ये प्रतिपद्यसे इति प्रयोगाभावस्योपष्टम्भकत्वमप्ययुक्तम्। तत तथाप्रयोगप्रसञ्जकगत्यभावात्। तद्भाष्यार्थश्च **अस्मत्कृतेन्यायभाष्यप्रदीपे** द्रष्टव्यः॥

एवं प्रथमविकल्पनिरसनेनैव द्वितीयोऽपि विकल्पो व्युदस्तः। अथान्य-

दपि किञ्चिदुच्यते—यत् तत्रोक्तम्—"तत्त्वावधारणं वा परपराभवं वा अभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति, तावदनुरोद्धव्यम्। स च, प्रमाणेन तर्केण च व्यवहर्तव्यं वादिना। प्रतिवादिनाऽपि तत्तत् निग्रहस्थानं प्रदर्शनीय'मित्यादिरूपः समयबन्ध इति—तेन तत्त्वनिर्णयजय-पराजय - तर्कप्रमाण - तत्तन्निग्रहस्थानादीनां सत्त्वमभ्युपगतमेव हि भवति। न हि खपुष्पशशविषाणादिव्यवहारसमयबन्धोऽयम्। अतः सत्त्वशब्दप्रयोगाकरणेऽप्यनक्षरमेव सत्त्वमाविष्कृतं भवति। व्यावहारिकसत्त्वानङ्गीकारे सर्वं दुष्करमिति खण्डनोक्तं प्रागेव स्मारितमत्रानुसन्धेयम्। सति प्रमाणादौ निर्णयादिः, असति न स इति सत्त्वस्याप्यवश्येष्टत्वात्। पारमार्थिकसत्तातिरिक्ता व्यावहारिकसत्ता दुर्वचेत्यपि प्रागुक्तम्।

कुत्र वा भवतां पारमार्थिकसत्ता ? ब्रह्मणीति चेत् तर्हि ब्रह्म, सत्ता चेति द्वैतापत्तिः। साऽपि व्यावहारिकीति चेत् ब्रह्माविशेषं सर्ववस्तुसत्तामेव वयं ब्रूमः। अस्ति तु विशेषः, सार्वकालिकत्वकादाचित्कत्वादिः। तस्मात् सत्तानभ्युपगमे कथाप्रवर्तनस्यायोगात् न तदभ्युपगमस्य नैरर्थक्यम्।

एतदुक्तं भवति—प्रमाणादीनां व्यवहारहेतुत्वं माध्यमिकादिष्वपि प्रदर्शयता भवता हेतुत्वादेव तत्सत्त्वमभ्युपगतं भवति। नन्वेवं मयाऽभ्युपगतं भवतीत्यपि भवद्भिः कयाचन नियमस्थित्या प्रवर्तितया कथयैव निरूपणीयमिति सत्त्वाभ्युपगमात् प्रागेव कथाप्रवृत्तिरिति चेन्न—नियमस्थित्या कथाप्रवृत्तिरिति कथयता तत्सत्त्वस्याभ्युपेतत्वात्। समयबन्धमात्रेण कथाप्रवृत्तिरित्युक्तावपि समयबन्धसत्त्वमभ्युपगतमेव। समयबन्धपूर्वं कथाप्रवृत्तिरित्यत्र च को हेतुः ? निर्णयविजयमूलत्वेन लोकसिद्ध एव व्यवहारनियमः उभाभ्यां हेतुमन्तरेणैवाद्रियत इति चेत्—लोकपदेन पामरलोकग्रहणम्, परीक्षकलोकस्य वेति तृतीयपक्षे भवत्करिष्यमाणस्य विकल्पस्यानवतारमवधेहि।

पामरलोकसिद्धस्याकिञ्चित्करत्वेनानुपादेयत्वात् । परीक्षकलोकसिद्धस्य च कथाप्रवर्तनेन परीक्ष्यैव निर्णेयतया ततः प्राक् ग्रहणायोगात् । " हेतुमन्तरेण " इत्युक्तमप्ययुक्तम् । हेतोरभावे कार्यस्य जन्मनः कादाचित्कत्वस्य च असिद्धिप्रसङ्गात् । स्थितोऽपि हेतुर्न निरूप्यत इति चेत्—यद्येवमनिरूपितहेतुकस्यापि व्यवहारनियमस्य प्रसिद्धिमात्रेणादरणीयत्वम् , प्रामाणिकत्वञ्च, तर्हि कथं प्रतिवादिकोटेः परं निरूपणं विना न स्वीकारः ? तस्मात् प्रमाणसत्त्वविषये विवादाभावादेव तत्तद्वस्तुस्वीकार इति । प्रमाणमूलकत्वाभावेऽपि पदार्थेष्टौ तु विचारतत्फलविप्लव एव । " अनादिपारम्पर्यागते तत्र स्वतश्शुद्धिरस्ति । लोकसंवादित्वात् असम्भवान्यथाभावौ च न स्तः " इति चेत्—अनया भङ्ग्या तस्य तस्य सत्त्वमेवेष्टं भवतीति ।

अत्र खण्डनखण्डखाद्ये, " अविद्यमानादिपारम्पर्यायातस्य लोकव्युत्पत्तिगृहीतसंवादस्य च तस्यान्यथाभावासंभाव्यतालक्षणस्वतस्सिद्धिपरिशुद्धत्वात् " इति पङ्क्तिर्दृश्यते । तत्रानादीति प्रयोक्तव्ये अविद्यमानादीति लेखनं ग्रन्थकर्तुः वक्रकारित्वस्वाभाव्यात् इति व्याख्यात्रैव तद्गुणविशेषोऽनुभूत आविष्कृतः । इदं शब्द इवार्थेऽपि भाव्यम् । ईदृशक्लिष्टसरण्युपेक्षणेन च शतदूषण्यामत्र वादे तद्ग्रन्थस्य सरसमर्थतोऽनुवादः कृतोऽस्तीत्यास्तामिदम् । अन्यथाभावेत्यादिवाक्यांशं क्लिष्टं अनेकधा व्याख्यातुं प्रयस्यन्ति । आचार्योपलब्धस्त्वत्र खण्डनपाठः शुद्धः, "असंभवान्यथाभावाभावलक्षणस्वतश्शुद्धिसिद्धत्वात्" इत्येतदर्थकः कश्चिदिति विभाव्यम् ।

तस्मात् सति विवादे कथा प्रवर्तनीयेति यथा वादिप्रतिवाद्युभयाभ्युपेतम् , तथा प्रमाणतर्कसत्त्व एव तत्त्वनिर्णय इत्यप्युभयाभ्युपेयमेव । अनभ्युपेता कथाप्रवृत्तस्त्वन्यतरेण हितोपदेशसरण्या शिक्षितः कथायामुपवेश्यः, न चेदुन्मत्त इत्युपेक्षणीय इति तत्त्वम् । अत एव व्यवहारनियमव्यतिरेके कथाप्रवृत्तिर्न भवति, विप्रलम्भकस्यैवेति भवदीयोक्तम् । न च व्यवहारनियम इष्यते, प्रमाणादिसत्ता तु नेष्यत इति वक्तुं शक्यम् । व्यवहारनियमस्य लोकसिद्धत्वस्य भवदुक्ततया तस्य प्रमाणादिसत्तागर्भतयैव सिद्धत्वात् ॥

अथ तृतीयविकल्पश्चिन्त्यते। प्रमाणादिसत्ताभ्युपगमः लौकिकव्यवहार-सिद्धत्वादिति कल्पो विकल्प्यते खण्डनकारेण, प्रामाणिकलोकसिद्धत्वाद्वा पामरलोकसिद्धत्वाद्वेति—तत्र यत् आद्यपक्षदूषणम्, प्रमाणिकव्यवहारसिद्धत्वं विचारमन्तरेण दुर्निरूपमिति—तन्न—शास्त्रसंस्कारवन्तो हि प्रामाणिकाः। ते च तत्तत्सिद्धान्तग्रन्थाध्ययनेन व्यवहारनियमे व्युत्पन्ना एवेति किमिति कथाप्रवृत्तिकाले तद्विचारः। पूर्वं तु अध्ययनकाले विचारो निष्पन्न एवास्ति। अत्रेदमपि वक्तव्यम्—वादिप्रतिवादिनोर्द्वयोरपि प्रमाणिकलोकसंमतव्यवहारनियम एवादरणपदम्, परन्तु अन्यतरसंमतकोटिसाधकयुक्तेराभासत्वावश्यम्भावात् वस्तुतः प्रमाणत्वमुभयत्र दुर्वचम्। अत एव, "प्रमाणतर्कसाधनोपालम्भ" इत्यत्र प्रमाणतर्कत्वाभिमताभ्यां साधनोपालम्भौ तत्त्वनिर्णयार्थे भवतः इति **तात्पर्यटीका**यामुक्तम्। अस्तु तावत् विचारमन्तरेण दुर्निरूपत्वम्—तथापि प्रामाणिकलोकव्यवहार एवानुसर्तव्य इत्यत्र तावन्न विवादः। किं तर्हि? अयमंशः प्रामाणिकव्यवहारसिद्धो न वेति क्वचित् स्यात्। यदि तावत् प्रामाणिकव्यवहाराभावे को दोष इति शङ्क्यते, तत्र वक्तव्यं पामरव्यवहाररूपविकल्पदूषणमुखेन भवदुक्तमेव भविष्यतीति किं तेन? यश्चायं द्वितीयो विकल्पः पामरव्यवहारो वेति, तत्र यद्दूषणमुक्तं शरीरात्मत्वादेरपि परिग्रहः स्यादिति—तत्रोच्यते—यदि वादी क्वचित् शरीरात्मतापक्षस्थापनार्थमुद्युञ्जीत, तदा तदपि गृह्णीयादेव।

किञ्च पामरव्यवहारोऽपि कदाचिदादरणीयो भवति, यदि प्रामाणिकत्वेन विकत्थमानोऽपि लोकानुभवं सर्वात्मना अपह्नुत्य कुतर्केण स्वाभिमतार्थे मुष्टिं बध्नीयात्। न खलु पामरानुभव इति हेतुना सर्वं प्रत्यक्षमपलपितुं साम्प्रतम्। तर्हि तृप्त्यर्थभोजनादेरपि पामरपरिगृहीततया निषेधप्रसङ्गात्। अथोच्येत अबाधितलोकव्यवहारसिद्धमादर्तव्यमिति—तर्हि प्रमाणादीनां पश्चात् बाधो भविष्यतीति किं भवता मन्यते? उत न भविष्यतीति! अन्त्ये सत्ताभ्युपगमः। अस्माभिस्तु बाधो नेत्येव कथायां प्रवृत्यते। अद्यत्वे बाधाभावेऽपि देशान्तरे कालान्तरे वा बाधो न भवितेति कथं निश्चितमिति चेत्—निर्हेतुक-

शङ्काया उपेक्ष्यत्वात्। बाधनियामकाग्रहे बाधशङ्काया अयोगात्। देशकालान्तरसद्भावनिश्चये हि बाधशङ्का स्यात्,देशान्तरं कालान्तरं वाऽस्तीत्यत्र किं प्रमाणमिति तत्रैव शङ्कायाम्, बाधो भविष्यतीति न शक्यं मन्तुम्। उपनिषद्भिर्बाधप्रदर्शनात् प्रमाणादीनां बाध्यत्वमवसीयत इति चेत्—उपनिषदो यदि प्रामाण्यम्, तदा न सर्वप्रमाणबाधः। शब्दप्रत्यक्षव्युत्पत्तिग्रहतदौपयिकानुमानयोग्यतादिपरिशीलनादिसापेक्षतया शब्दप्रामाण्यमेव प्रत्यक्षानुमानप्रामाण्यमपि स्थापयतीत्यतोऽपि न सर्वप्रमाणबाधः। यदि च उपनिषदो न प्रामाण्यम्, तदा तन्मूलस्य बाध्यत्वस्यैव बाध्यतेति। ननु बाधाभावात् प्रमाणादिसत्त्वाभ्युपगमेऽपि लोकव्यवहारात् प्रमाणादिसत्त्वं न सिद्ध्यतीति चेत्—अबाधितलोकव्यवहारादित्युक्त्या तत्सिद्धेः। अस्तु तावदबाध्यत्वादेव तत्सिद्धिः। सर्वथा प्रमाणादिसत्ता स्वीकृतेति सिद्धं नः समीहितम्। बाधाभावः कथं निश्चित इति चेत्—बाधकप्रमाणानुपलम्भादेव।

ननु प्रमाणादिसत्त्वाभ्युपगमं प्रति अबाध्यत्वं प्रयोजकम्; अबाध्यत्वं प्रति विचारः प्रयोजकः; विचारश्च कथया इति कथाप्रवृत्तिः प्रमाणसत्त्वाभ्युपगमं विनापीति चेन्न—कथायाः प्रमाणादिघटितमूर्तितया प्रमाणाद्यनभ्युपगमे कथाप्रवर्तनायोगात्। प्रमाणाद्यभ्युपगमः प्रमाणादिसत्त्वाभ्युपगम एवेति प्रागेवोक्तम्। अतश्च कथाप्रवर्तनमूलं प्रमाणाद्यभ्युपगमव्युत्पादनमधिकरणसिद्धान्तनयमूलार्थसिद्धिप्रदर्शनमात्रम्। यो हि कश्चित्, "दर्शनस्पर्शनाभ्यामेकार्थग्रहणा" दिति वदन्नेवाविवेकात् इन्द्रियभेदं गुणगुणिभेदञ्च न स्वीकारोमीति रभसादाह, यो वा, "सहोपलम्भनियमादभेदो नीलतद्धियोः" इति वदन्नेव नीलतद्धियोरैक्यमविवेकादाद्रियते, तं तं प्रति तदुक्तिशोधनमात्रेणापि अधिकरणसिद्धान्तनीत्यैव नानेन्द्रियसद्भावगुणद्रव्यभेदयोः विषयतज्ज्ञानभेदस्य च सिद्धेः कथमेवमिति यथा व्युत्पादनम्, तादृगिदम्, यत्—प्रमाणादिसत्त्वानभ्युपगमेन कथायां प्रवृत्तं प्रति, कथाप्रवृत्तिरेव प्रमाणादिसत्त्वाभ्युपगमं ते दर्शयतीति व्युत्पादनमिति ध्येयम्॥

एवं चतुर्थकल्पखण्डनमपि खण्ड्यम् । प्रमाणादिसत्तानभ्युपगमे कथाफलातिप्रसङ्गो न भवति । सत्ताभ्युपगन्तृतुल्यं व्यवहारनियमस्य तदनभ्युपगन्त्राऽप्यवलम्बनादिति हि खण्डनम् । तदयुक्तम्—वह्निसाधकस्य धूमरूपप्रमाणस्य ह्रदे असद्भावेऽपि पर्वतो वह्निमान् धूमादितिवत् ह्रदो वह्निमान् धूमादिति व्यवहारस्य करणेन साध्येष्टौ हि कथाफलातिप्रसङ्ग एव । अथानाभासव्यवहार एव साधक इति चेत्—तर्हि पक्षे हेतुरूपप्रमाणसत्त्वमिष्टमिति सत्तानभ्युपगमेन वा सत्ताविषये औदासीन्येन वा व्यवहार इति कथम्? पक्षसाध्यहेतुदृष्टान्तादिनिर्देशाः तत्तत्सत्त्वनिर्देशा एवेति, “तत्तदभ्युपगमेऽपि न तत्तत्सत्ताभ्युपगमः” इति वचनमर्थहीनमेव । योऽयं पर्वतोऽस्ति, आसीत्, भविष्यति वा, तत्र वह्निरस्ति, आसीत्, भविष्यति वा, यतोऽत्र धूमोऽस्ति, आसीत्, भविष्यति वेत्येवमेव तदर्थ इति न सर्वथा सत्तापलापः । केयं सत्ता? या सत्ताशब्दप्रयोगाभावेऽपि उक्तप्राया भवतीति चेत्—या खलु लोकप्रतीता भवद्भिरपलपितुमशक्या च सती, ‘अस्तु सा व्यावहारिकी’ति व्यावहारिकत्वविशेषणेन विशेष्यते, सैवेति किं तद्व्युत्पादनेन? सत्त्वस्य अनुभूयमानत्वादेव हि तस्य पारमार्थिकत्वव्यावृत्तये व्यावहारिकत्वविशेषणदानम् । यदि च वस्तुनो बाध्यत्वम्, तत् त्रैकालिकाभावप्रतियोगित्वमेवेति सत्त्वप्रसक्तेरेवाभावात् कुत्र वा व्यावहारिकत्वं विशेषणं दीयेत? तत् सिद्धमनाभासानामनाभासतया, आभासानामभासतया च अस्तित्वमिति न सत्तापलाप इति ॥

एवं चतुर्धा विकल्प्य प्रमाणादिसत्ताभ्युपगमं खण्डयतैव खण्डनकारेण तदुपरि व्यवहारनियमे समयबन्धे वा सर्वत्र सत्तानुप्रवेशोऽस्तीति पुनराक्षेपं प्रवर्त्य, एतदप्यसद्वादिनं प्रति कथाप्रवर्तनेनैव साधनीयमिति अस्त्येव कथाधिकारोऽसद्वादिन इति समाधाय तदुपरि, नात्र कथाप्रवर्तनम्, असद्वाद्युक्तेः सत्ताभ्युपगमपर्यवसानव्युत्पादनमेवेति पुनरप्याक्षेपमुद्भाव्य परिहृतम्, “व्यवहारं प्रति सत्ताज्ञानमेव कारणम्; न सत्ता । ज्ञानं तु अविद्यमानस्यापि मरुमरीचिकादौ भवति । अबाधितमेव ज्ञानं वस्तुसाधकम् । वादिप्रतिवाद्यादिगतं ज्ञानं

कालान्तरे देशान्तरे पुरुषान्तरेऽप्यबाधितमिति तावन्निश्चेतुमशक्यम्। केवलं तदातनबाधाभावमात्रेण सद्व्यवहारः क्रियते। तावता सत्तेयं व्यावहारिकसत्तैव भवति, न पारमार्थिकी इत्यादि। अत्रोच्यते—एवं संशयालोरनुमानप्रामाण्यमेव न सेत्स्यति। इष्टमेवेदं खण्डनकारस्येति चेन्न—शब्दप्रामाण्यस्यापि विलयप्रसङ्गात्, अनुमानाधीनव्युत्पत्तिग्रह-अर्थौचित्यविमर्शाद्यायत्तत्वात् शाब्दबोधस्य। अन्यथा तत्त्वमसीत्यादौ अग्निर्माणवक इतिवद्वा, नीलो घट इतिवद्वा, स्थाणुः पुरुष इतिवद्वा सामानाधिकरण्यम्, तदित्येतत् तस्मादित्यर्थकं वा, अतदिति पदच्छेद एव वेत्यादिविचारवैयाकुलीपरिहारपूर्वकयथावस्थितार्थनिश्चयायोगात्। किं बहुना, पूर्वोत्तरमीमांसाधिकरणानि सर्वाण्यपि तर्कानुमानदूषकस्याश्रद्धेयानि भवेयुः। उच्चावचतर्ककरम्बितः स्वग्रन्थ एव चासमञ्जसः तेन मन्तव्यः स्यात्। बाधशङ्कया व्याप्त्याद्यनिश्चयेऽनुमानदौःस्थ्ये सर्वप्रमाणभङ्गात्। तर्हि सर्वप्रमाणभङ्गे प्रमेयस्याप्यसिद्धेः शून्यमेव तत्त्वमिति खण्डनग्रन्थप्रथमोपक्षिप्तसिद्धिरेवेति चेत्—न—शून्यमिति किमभाव उच्यते, अभाववद्वा? आद्ये, अभावस्य प्रतियोग्यनुयोगिसापेक्षत्वात् तयोरसिद्धौ तस्याप्यसिद्धिरेव। अन्त्ये, अभाववतस्तस्य कस्यचित् सिद्धौ कथं प्रेमयासिद्धिः? कथञ्च प्रमाणाभावे तस्य परं सिद्धिः? न हि सिद्धिः साधकाद्यभावे भवितुं प्रभवति। यत्तु खण्डने, असतोऽपि कारणत्वादिकं भवितुमर्हतीत्युक्तम्—तत् सर्वं प्राक् प्रथम एव प्रसाधने पराकृतम्। असतः कारणत्वे च, "आशामोदकतृप्ता ये ये चोपार्जितमोदकाः। रसवीर्यविपाकादि तेषां तुल्यं प्रसज्यते" इति शङ्का दुरुत्तरा। आशामोदकादपि रसवीर्यविपाकादिजननञ्चाशामोदकमात्रम्; अदर्शनात्। स्वप्ने दृश्यते इति चेत्—तदा रसवीर्यादिकमपि स्वाप्निकं स्वाप्निकमोदकादेव भवतीति न कश्चिद्विशेषः। "द्वे सत्त्वे समुपादाय बुद्धानां धर्मदेशनाः। लोके संवृत्तिसत्त्वं च सत्त्वं च परमार्थतः" इति प्रच्छन्नाभिमतस्य बौद्धमतस्य प्रकटीकरणमप्येवं बहिष्कारायैव भवति। लौकिकस्य सत्त्वस्यापारमार्थिकत्वस्य साधयितुमशक्यत्वात्। तदतिरिक्तपारमार्थिकसत्तायां प्रमाणाभावाच्च। सतो विरहे सत्ताया दुर्वचत्वात्। तस्यापि स्वीकारे शून्यस्य अद्वैतस्य वा सिद्ध्ययोगात्।

सर्वमनिर्वचनीयं भावयतः पारमार्थिकसत्ताऽपि व्यवहारपथमतीता नूनमनिर्वचनीयैव । तदसिद्धं तदपारमार्थिकत्वम् । किं बहुना, सत्ताप्रतीतिस्तावत् प्रतिपुरुषमनुभवसिद्धा नापह्नवमर्हति । बाधकप्रमाणञ्च लौकिकं न किञ्चिदुपलभ्यते । तर्कश्चाप्रतिष्ठितः खण्डनकारदूषितश्च । बौद्धागमश्च वैदिकानां न प्रमाणम्, अमूलत्वात् । श्रुतौ च न बौद्धानां श्रद्धा । वैदिकाश्च सत्ताबाधनस्य श्रुत्यर्थतां नाभ्युपगच्छन्ति । अतः प्रतीतस्यापलापायोगात् सर्वस्य सत्त्वं सुस्थम् । अन्यथा प्रदश्चाधिष्ठानमप्यसदेवहेतुरित्यद्वैतासिद्धिरेव ।

अपि च असदपि कारणमित्यत्र असत्पदेन कियान् अर्थो विवक्ष्यते; असत्पदघटकं सत्पदं किमर्थकमिति च विचार्यम् । किमर्थक्रियाकारित्वं सत्त्वम्, किं वा वर्तमानकालसंबन्धः, उत कालसंबन्धमात्रम्, आहो प्रमाविषयत्वम् । अथवा असत्त्वं बाधितत्वम्? अन्योन्याभावप्रतियोगित्वम्, प्रागभावप्रतियोगित्वम्, ध्वंसप्रतियोगित्वम्, अत्यन्ताभावप्रतियोगित्वं वा, तुच्छत्वमेव वा? आद्ये असत्—अर्थक्रियाकारिभिन्नं कारणमित्युक्त्या व्याघातः । अर्थक्रियाकारित्वं हि कारणत्वमेव । न द्वितीयः, सिद्धसाधनात् । वर्तमानकालिकभिन्नं वर्तमानकारणत्वाश्रय इति तु व्याहतमेव । अत एव न तृतीयः, कारणत्वस्य प्राक्कालवृत्तित्वरूपतया कालासंबन्धिनि असति कारणत्ववचनस्य व्याहतत्वात् । प्रमाविषयत्वरहिते कारणत्वादर्शनात् न चतुर्थोऽपि । शुक्तिरजतव्यवहारे च इदं रजतमित्याकारके न रजतस्य कारणत्वम्; किन्तु रजतज्ञानस्य । तत्र ज्ञानं प्रत्यपि न रजतं कारणम्; असतोऽपि ज्ञाने भानस्य अतीतानागतग्रहणकाले आनुभविकत्वात् । ज्ञानसामान्ये तु विषयस्य न कारणत्वम् । असतोऽपि कारणत्वेष्टौ च अविद्यमानेनैव चान्नेन तृप्त्याद्युत्पत्तौ कारणनिष्पादनक्लेशो न कदापि सोढव्यः स्यात् । कारणत्वस्य प्रमाणत एव साधनीयतया तदाश्रयस्य प्रमाविषयत्वाभावे तत्र कारणत्वं दुःसाधञ्च । न च पञ्चमः । बाधितात् रज्जुसर्पादेरपि भयाद्यापत्तेः । अन्योन्याभावप्रतियोगित्वादिकं तु न सर्वात्मना वस्तुनः सत्त्वनिषेधकम् । त्रैकालिकात्यन्ताभावादिस्वीकारे च पुनः कारणत्वव्याहतिरेव ।

अन्यथा खपुष्पादिनापि किञ्चित् वास्येत, अलङ्क्रियेत। लोके च कार्यात् कारणानुमानमप्रत्यक्षविषयस्थले प्रतिपन्नम्। तदनुमानं हि नाम तत्सत्त्वानुमानमेव। न तु तदसत्त्वानुमानम्। अन्यथा धूमेन वह्न्यभावोऽप्यनुमेयः स्यात्। असतोऽप्यग्नेः धूमसंभवात्। असत्त्वानिष्टौ च सत्त्वं सिद्धमेव। अत एव तुच्छत्ववचनमपि तुच्छमित्यलम्॥

यत्तु—बौद्धैः सांवृतसत्यत्वमेकमेवेष्यते, अद्वैतिमते तु पारमार्थिकव्यावहारिकप्रातिभासिकरूपसत्तात्रयमिति उभयोर्वैलक्षण्यमिति—इदमपि दुर्वचमित्येव तत्त्वविदः। आस्तामीषद्भेदः। प्रमाणादिविषये उभयोरपि सत्त्वमेकरूपमेव; अविद्यासंवृतिशब्दभेदमात्रेण वैलक्षण्यासिद्धेः। किञ्च तथागतानामपि कथाधिकारं साधयतां खण्डनकारानुकारिणां मतद्वयवैषम्यप्रदर्शनमस्थाने॥ यत्तु—"कथामविधाय स्वगोष्ठ्यां मतान्तरनिरसनेन जयपताकासमारोपणमेव भवेदिति गेहेनर्दनमेव स्यात्। तथा च सूत्रकाराणां सौगतादिनिरसनमसांप्रतमेव स्यादिति—तत्रोच्यते। न वयमनधिकारिणोऽप्यधिकारयितव्या इति मन्महे। तत्त्वबुभुत्सून् प्रति तेषामनधिकारं स्थितमाविष्कुर्मः। तथा व्युत्पादिताश्च सहृदयाः निःश्रेयसं प्रतिपद्यन्त इति न नैष्फल्यम्। भगवान् बादरायणश्च अधीतवेदान्तान् मुमुक्षूनधिकृत्य ब्रह्मजिज्ञासां प्रवर्तयन् तान् प्रत्येव बौद्धादिनिरसनप्रकारमुपदिशतीति तथाविधजयपताकासमारोपणं न भवद्दूषणीयतामसादयितुं सांप्रतम्। यदि च बौद्धा अपि केचिदसत्त्वपक्षमनागृह्य विजिगीषुतां विसृज्य वादपथे स्थित्वा वैदिकन्यायप्रयोगश्रवणेन तत्त्वं निर्णिनीषन्ति, तर्हि तान् प्रत्यप्यस्तिककृत उपदेशः फलेग्रहिरेव। अथ वा यथा विजिगीषुतया जल्पकथाप्रवृत्ता अपि, 'इदमिदं निग्रहस्थानं नोद्भावनीयम्। एष परं हेत्वाभासविशेषो नोद्भावनीयः। अन्यमात्रोद्भावनेनैव जये यतनीय'मिति ससमयविशेषबन्धं प्रौढ्या प्रवृत्ताः तदंशत्यागेन कथां प्रवर्तयन्ति—तथा तथागता अपि अस्मदिष्टमसत्त्वमनुद्भाव्य सत्तावलम्बिन एवास्मान् कृत्वा विधान्तरेण असत्पक्षदूषणान्युपन्यसितुं कथा प्रवर्त्यतामिति यदि समयबन्धेन कथकीबुभूषन्ति, तर्हि कामं भवतु तैः साकमपि

कथाप्रवर्तनम् । एवं कृत्वाचिन्तायामपि ते अंशान्तरेण पराजिताश्चेत् , स्वयमेवापसरिष्यन्ति । अन्यदापि कृत्वाचिन्तोद्घाटनेन प्रमाणासिद्ध्या प्रमेयासिद्धिः तन्मते प्रतिष्ठाप्या । सर्वत्र कृत्वाचिन्तास्थले कृत्वाचिन्तोद्घाटने प्रकृतविषये निर्णीतप्रमेयपरित्याग एव हि प्रस्पष्टो मीमांसादौ । यथा भक्षपेटिकायाम् , निवीताधिकरणादौ च ॥

सांख्यवैशेषिकादीनां कथानधिकारस्यास्माभिरनुक्तया तेषामपि सौगताविशेषं सङ्कलनेन दूषणोपन्यासनमयुक्तम् । यत्तु वेदप्रमाण्यावलम्बनेन कथाधिकार एव वेदान्तिनां कथाधिकार इति स्थितेऽपि सौगतैः साकं कथाप्रवर्तनवत् अद्वैतिभिः सावं प्रवर्तनमपि युक्तमिति—तन्न । उभयसंमतप्रमाणपुरस्कारेण कथायामधिकार एव ह्युभयोः कथकयोरिष्यते । यदि सौगतः किमपि प्रमाणं वेदान्तिसंमतं स्वीकरोति, तदैव तेन कथा । न चेत्—तस्यानधिकार एवेति तथैवाद्वैतिविषयेऽपि । इदमेव हि स्पष्टमुपक्रान्तमत्र शतदूषणीवादे । अद्वैतिभिर्ब्रह्मण एकस्याबाधिततया स्वीकारमात्रेण कथाप्रवृत्तिर्नघटते । कथाङ्गभूतानां सर्वेषां सत्त्वे किल कथा भवेत् ; न ब्रह्मसत्त्वमात्रेण ।

यदुक्तम् , अप्रमाणम् प्रमाणमित्यभिमानमात्रे प्रमाणं न भवतीति—सत्यमेतत । कथां प्रति प्रमाणत्वाभिमान एव प्रवर्तकः । अप्रमाणे प्रमाणत्वाभिमानोऽयमिति यावत् प्रतिवादी न प्रत्यवतिष्ठते, तावत् स्वपक्षसिद्ध्यभिमानो वादिनो नापैति । प्रमाणमप्यप्रमाणत्वेनाभिमन्यमानस्तु बौद्धः तदितरो वा कथां प्रवर्तयितुमेव न प्रभवतीति ।

यत्तु—निर्विशेषवाक्यानां प्रामाण्यमद्वैतिभिरेव स्वीक्रियत इति तेषामेव तद्विचाराधिकार इति—तन्न । तेषां वाक्यानां सविशेषवाक्यबाधितनिर्विशेषस्वरूपार्थवर्णने अप्रामाण्यं भवतीति सदर्थवर्णनेन प्रामाण्यमेव हि अद्वैतीतरैरिष्यते । अतो विषयबाधात् अद्वैतपरत्वे तानि वाक्यान्यप्रमाणानि स्युः; तथा दोषमूलत्वादप्यप्रमाणानीति अद्वैतिनामेव अनधिकारः । अन्येषां तु कृत्स्नस्यैव वेदस्य तत्तद्वाक्यानामपि प्रामाण्यं न कथमप्यपैतीति ॥

यत्तु—इष्टसिद्धिकारवचनत्वेन बह्वनूदितम्—तत्र खण्डनानुवादिशत-दूषणीवाक्यमेवाधिकम्। इष्टसिद्धिवचनं तु, "सत्यमस्ति प्रसिद्धिः, किन्तु नास्याः मूलं पश्यामः" इत्येतावदेव। तदपि चितः चेत्यस्य च मिथो भेद-प्रसिद्धिविषयमिति तत्रैव व्यक्तम्। यच्चोच्यते—यावत्पर्यन्तमन्येषां दृष्ट्या प्रमाणादीनां सत्त्वम्, तावत्पर्यन्तमद्वैतिदृष्ट्यापि प्रमाणादीनां सत्त्वमस्तीति न कथाप्रवर्तनानुपपत्तिरिति—तन्न—अद्वैती प्रमाणादीनां वस्तुतो बाधिष्यमाण-त्वमवगच्छति, न वा? न चेत्—न सोऽद्वैती। अवगच्छति चेत्—तद्दृष्ट्या प्रमाणादीनां त्रैकालिकात्यन्ताभाव एवेति कथं तत्सत्त्वमिति।

श्रीभाष्ये, 'महासिद्धान्तावसरे अद्वैतानभ्युपेतप्रक्रियाविशेषावलम्बनं कृतमिति वचनं तु पूर्णाद्वैतप्रक्रियापरिज्ञानविरहमूलकम्। सर्वस्यापि श्रीभाष्यकारदर्शित-स्याद्वैतमतानुवादस्य तत्र तत्रोपलभ्यमानत्वात्। अद्वैतिनः पुनरव्यवस्थितानेकपक्षप्रवर्तकाः कदाचिदेकपक्षविषये दूषणे उपन्यस्यमाने, पक्षान्तरपरिग्रहेण तं पक्षमपलपन्ति। सुप्रसिद्धश्च विवरणभामतीप्रस्थानभेदः। सिद्धान्तलेशसंग्रह-ग्रन्थश्चाव्यवस्थितानेकपक्षाद्दर्पणः। श्रीभाष्यकारकालादत्यन्तार्वाचीने च तत्र, प्राचीनग्रन्थाः यावन्त उपलब्धाः श्रुता वा कथमपि, तावन्मूलावगतार्थसंक-लनमात्रमकारि। न ह्यद्वैतिन इयन्त एव एतावदंशवादिन एवेति कश्चित् प्रतिज्ञातुं प्रभविष्णुः। ग्रन्थेष्वनिबद्धा अपि केचिद्विषयाः स्वयं वादाहवविधा-नावसरे परैः प्रत्युत्थापिताः प्रत्यस्त्रप्रयोगेण प्रशमनीया भवन्ति। क्वचित् पूर्वोत्तरमीमांसाधिकरणरचनान्यायेन स्वयमेव परमतानुकूलतया संभावितसर्व-प्रकारविलोडनेनापि दूषणं विधेयमित्येष प्राज्ञमणिपरिगृहीतः पन्थाः। सूत्रभाष्ये कामाद्यधिकरणे, सूत्रविरोधमपि सोढ्वा दहरविद्या छान्दोग्यस्था सगुणविषया, बृहदारण्यकस्था निर्गुणविषयेत्युक्तम्। अद्वैतात्यन्तश्रद्धया सूत्रभाष्यमप्यतिलंघ्य उभयत्रापि निर्गुणविषयत्वस्थापने कश्चिच्चेत् बद्धपरिकरः, सोऽपि निरस्यः स्वीकृतः श्रीभाष्ये, सर्वथाप्यद्वैतासिद्धिस्थापनाय। आस्तामेतत्। तस्मात् कूपमण्डूकायमानैरगृहीतोपपादनप्रक्रियास्वारस्यैरेवं कल्पनं सर्वथैवायुक्तम्।

प्रमाणादिसत्त्वं कृत्वाचिन्तया कथाप्रवृत्तिः कृत्वाचिन्तोद्घाटने सति प्रमेयसाधिका न भवतीति प्रागेवावाचि। उपक्रमादितात्पर्यलिङ्गपरीक्षापूर्वं वाक्यार्थपरीक्षणमर्थक्रियाकारीति तदेव स्यात्, यदि वाक्यमुपक्रमादीनि लिङ्गानि च वास्तवानि भवेयुः। यत्तु पृच्छ्यते—अद्वैतिनां कथानधिकारे किमिति शतदूषण्यादयो ग्रन्थाः क्रियन्त इति—तत्र आदित आरभ्य एवावदुक्तमेव पुनरनुसंधातव्यम्। अनधिकारी कथां प्रवर्तयन् कथाफलं न लब्धुमर्हतीत्येव ब्रूमः; अन्तेवासिनः शिक्षयितुमनेके ईदृशाः ग्रन्था इति च; कथां विनैव हितैषितया अनधिकारं प्रतिबोध्याथ बौद्धादिष्वङ्गीकाराभिनयेन संहृतेषु तन्मतसारदूषणाय प्रवृत्तिरित्येवम् अभ्युपगमस्य कथाप्रवर्तनं स्यादिति च; अनधिकारिणां अधिकारभ्रान्तेः सत्त्वात् तां भ्रान्तिमादौ अपनुद्य अधिकारमारोप्य उपवेश्य तन्मतदूषणान्युपवर्ण्य तेषु सहृदयानां तत्र संमतिं संपाद्य तदनन्तरं वास्तवं तेषां कथानधिकारमपि हितैषितया व्युत्पादयाम इति च। यत् पुनर्निमीलितनेत्रस्य वाक्पारुष्यम्—"सर्वज्ञानयाथार्थ्यवादिभिः (प्राभाकरैर्विशिष्टाद्वैतिभिरन्यैश्च) मातरि भार्यात्वभ्रममातिष्ठमाना अपि सप्रशंसं प्रवर्तिता भवेयुः" इति—तत्र सर्वज्ञानयाथार्थ्यस्वरूप—प्रमाभ्रमव्यवहारनिर्वाहादेर्महदुपपादितस्य विषयलेशतोऽपि परिचयवैकल्यकलितमिदमिति निर्णीय, 'आत्मद्रुहममर्यादं—सुतरामनुकम्पेत'इत्यनुशोचनमेव साधीय इत्यास्तिका आशेरते। श्रीभाष्याद्यनुयायिनोऽप्यद्वैतसिद्धान्तमेव वस्तुगत्या प्रच्छन्नमनुसरन्तीति लेखनमपि न विस्मयमावहति। मृषावादिवितन्यमानेषु मृषावादेष्वयमपि कश्चिदिति हि स्वध्यवसानम्। "अद्वैतिन एव वैदिकसिद्धान्तं सर्वेषामुद्बोधयन्तः अन्तः बहिः सर्वत्र एकरूपं व्यवहरन्तः सर्वलोकतारकाः, न प्रतारकाः" इति लेखनमप्यद्वैतिलोकतृप्त्यर्थं कामं क्रियमाणं समस्तु। नैतावता विवेकिजनप्रतारणं शक्यम्। अतः प्रतारणार्थमिदं लेखनं विवेकिनामप्रतारकं स्वेषामतारकञ्च।

इदं तु इह पृच्छामः। भवन्मतसिद्धं ब्रह्म तावत्, "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इति वाङ्मनसागोचरम्। तत्र, "गुरोस्तु

मौनं व्याख्यानं शिष्यास्तु च्छिन्नतसंशयाः" इति गुरूणां तूष्णीम्भाव एव श्रेयान्। ईदृशानां स्वमतसाधनाय वाचमेकामपि विस्रष्टुमक्षमाणां कथं नु कथायां सर्वविधप्रमाणपरिशीलन-साधनोपालम्भसंभृतायां प्रवृत्तेः प्राभवस्य वा प्रसक्तिः। किमर्थञ्च परस्सहस्राणां ग्रन्थानां निर्माणम्। एवमवाच्यस्य सिद्धान्तस्य किमिदं सर्वेभ्य उद्बोधनं नाम? अव्यवहार्यस्य विषये कोऽयमन्तर्बहिश्च एकरूपो व्यवहारः? ईदृशस्य संपूर्णाद्वैतसाक्षात्कारे सत्यपि स्वयमनुत्तीर्णस्य कथं नु सर्वलोकतारणप्रावीण्यम्? स्वयमुत्तीर्णत्वे च स्वाभिन्नतया सर्वोऽप्युत्तीर्ण एवेति उत्तारणीयः कोऽपि नास्तीति कस्मा उपदेशः। अद्वैताज्ञानेऽपि सर्वोऽप्युत्तीर्ण एव; संसारस्य मिथ्यात्वात्। भ्रान्तिरपोहनीयेति चेत्-ननु साऽपि मिथ्यैवेति न किञ्चिदपोहनीयम्। एतावत् विद्वानपि यदि स्वसिद्धान्तमाग्रहेण स्थापयितुं यतते, स कथं न प्रतारक इत्यलमाग्रहकृतानामाक्षेपवचसामुत्तरणेन ॥

प्रत्यक्षादिप्रमाणाद्यं सर्वं धाष्टर्याद‌पह्नुवन्।
प्रतारकत्वमप्येवमपह्नोतु ततोऽपि किम्? ॥

न शक्यं निर्वक्तुं किमपि जगतीति प्रतिवदन्
न शक्तो निर्वक्तुं तदपि परमं ब्रह्म निपुणम्।
वितण्डाशुण्डालप्रतिकथकवेतण्डदमनः
समिन्धे सिंहोऽयं स्फुरणविहितारण्यकसुखः ॥

॥ शुभमस्तु ॥

श्रीः

# निर्विशेषस्वयंप्रकाशत्वभङ्गप्रसाधनम्

जयति जगदशेषं धारयन् निर्विशेषं
जनितनिजजनार्थानेकजन्मा य एषः ।
मधुजितमनघं तं संप्रणम्यार्यसेवी
शमयति शतभूषण्यादृतं निर्विशेषम् ॥

प्रमाणान्तराभावेऽपि स्वप्रकाशबलादेव निर्विशेषसिद्धिमद्वैतिसंमतां निरसितुं प्रवृत्तं वादं परीक्षमाणेन निर्विशेषप्रकाशश्चेदुपपाद्येत, तर्हि तत् श्रोतव्यं भवेत् । तद्विहाय आदौ, किमिदं स्वप्रकाशत्वमिति विचारस्तावत् व्यर्थविस्तर एव । तत्र जीवात्मपरमात्मतद्धर्मभूतज्ञानात्मकस्वप्रकाशानेकवस्तु-स्वीकारसम्मते स्वप्रकाशत्वं किं तत्सर्वसाधारणम्, उतासाधारणमिति विकल्प एव न युक्तः । तेषां सर्वेषां स्वप्रकाशत्वस्वीकारिभिः अनुगत-स्वप्रकाशत्वनिर्वचनस्यैव कार्यत्वात् । अन्यत्तु स्वस्मै प्रकाशमानत्वम्, स्वाश्रयाय प्रकाशमानत्वमिति वैलक्षण्यं न स्वप्रकाशत्वरूपं भवितुमर्हति । स्वाश्रयायेति लेखितव्ये स्वाश्रयतयेति लेखनमपि अव्युत्पत्तिकौशलं दर्शयति । एवं स्वस्मै प्रकाशमानत्वस्य आत्मनि, स्वाश्रयाय प्रकाशमानत्वस्य च ज्ञाने तार्किकैः आत्मतज्ज्ञानयोर्जडत्ववादिभिरपि स्वीकृतत्वात् स्वयंप्रकाशत्वस्य च तद्-निष्ठत्वात् इत्थं स्वयंप्रकाशत्वनिर्वचनमप्यसंभावितम् । तथाच निर्विशेषत्वं स्वप्रकाशबलात् न गृह्यत इति शतदूषण्युक्तार्थं साक्षात् दूषयितुमसमर्थस्य स्वप्रकाशत्वदुर्विकल्पनमिदं वृथा विस्तरमात्रम् । एवमेव प्राय एतद्वादे, अथवा एतद्ग्रन्थ एव कृत्स्ने ॥

यत्तु—जीवपरमात्मगतं स्वप्रकाशत्वं किं स सोऽनुभवति, उतान्यः । धर्मभूतज्ञानगतं च तत् तदेवानुभवति, उतान्य इति विकल्पनम्—तत्रानुभवस्य

प्रत्यक्षानुमित्याद्यनेकरूपत्वात् यथायथं जीवः परमात्मा च स्वयमप्यनुभवति, परश्चेत्युक्तौ नानुपपत्तिः। धर्मभूतज्ञानस्य च ज्ञानाश्रयत्वाभावात् अनुभवितृत्वविकल्पोऽनुपपन्नः। यदि स्वयंप्रकाशत्वानुभवितृत्वं स्वयंप्रकाशत्वविषयकत्वरूपम्, तत् धर्मभूतज्ञान एव; न तु कुत्राप्यात्मनि। प्रकृतानुपयोगी चायं विकल्पः। मम निर्विशेषसंवित्प्रकाशत्वमनुभवसिद्धमिति वा, निर्विशेषसंवित् अनुभवसिद्धेति वा यदि कश्चित् ब्रूयात्, तत्रान्यस्य कथं विस्रम्भ इति प्रश्ने, या प्रतिबन्दिः, 'भवन्मतेऽपि एकेनाऽऽत्मना स्वस्य स्वप्रकाशत्वानुभवे कथ्यमानेऽन्यस्य न तत्र विस्रम्भेण भाव्य'मिति—तत्रोच्यते। आत्मनो वा धर्मभूतज्ञानस्य वा स्वप्रकाशत्वमीश्वरस्यैव प्रत्यक्षविषयः। अन्येषां तु प्रमाणान्तरावसेयम्। प्रकाशमानत्वस्यानुभविकत्वेऽपि स्वयंप्रकाशमानत्वस्यातथात्वात्। अत एव तार्किका जडत्वमातिष्ठन्ते। यदि तु कश्चित् परीक्षकः अनुमानेन वा शास्त्रेण वा स्वस्य स्वज्ञानस्य वा स्वयंप्रकाशत्वं निश्चिनुयात्, तथैवान्योऽपि स्वस्वज्ञानस्वयंप्रकाशत्वं सर्वेषामेव वा स्वयंप्रकाशत्वं तादृशेनैव प्रमाणेन निश्चेतुमर्हतीति न विस्रम्भवैधुर्यावकाशः। एवं स्वस्मै प्रकाशमानत्वं स्वस्य यथा अनुभवसिद्धम्, तथा प्रत्यात्मं तत्तद्दशानुभविकत्वमनपलपनीयम्। निर्विशेषसंविदस्तु स्वयं प्रकाशमानता किं निर्विशेषसंविदैवानुभूय प्रतिबोध्यते, उत जीवेन केनापि। आद्यमसिद्धम्। निर्विशेषतया तस्याः अनुभवितृत्वप्रतिबोधयितृत्वयोरयोगात्। नापि द्वितीयः, प्रमाणं विना तदनुभवायोगात्। प्रमाणस्वीकारे प्रथमप्रतिज्ञाभङ्गात्। प्रमाणान्तराभावेऽपि स्वानुभवेनैव निर्विशेषसंवित् स्वप्रकाशेत्युक्तौ, किमात्मनः संवित्स्वरूपं स्वप्रकाशमित्यर्थः, उत, तद्गतनिर्विशेषत्वम्? आद्ये निर्विशेषत्वासिद्धिः। अन्त्यविषये तु न कस्याप्यनुभवः। ममानुभवोऽस्तीति यदि कश्चित् ब्रूयात्, अनुपपादिते तस्मिन्नर्थे कथमन्यस्य विस्रम्भ इति स्थित एव दोषः।

यत्तूक्तम्—स्वस्मै प्रकाशमानत्वमात्मनः स्वतश्चेत्, निर्विशेषस्वप्रकाशत्ववाद इव क्रियात्वकर्मत्वकर्तृत्वायोगः समान इति—तन्न। भवद्भिः

संविदतिरिक्तप्रकाशानङ्गीकारात् क्रियात्वकर्तृत्वयोगापत्तिः । अस्माकं तु आत्मातिरिक्तप्रकाशपदार्थाङ्गीकारात् न प्रकाशरूपक्रियातत्कर्त्रोरैक्यम्। कर्तृकर्मत्वसमावेशस्तु, "चैत्रः स्वं पश्यति" इत्याद्यनुभवसिद्धः । यत्तु—अन्यवेद्यत्वे घटादिवत् अचेतनत्वापत्तिरिति—तत् किमात्मनः ? उत संविदः ? नाद्यः ; अन्यवेद्यत्वे सत्येव चेतनत्वस्वीकारे बाधकाभावात् हेतोः व्याप्यत्वासिद्धत्वात्। नान्त्यः ; संविदः जानामीत्यनुभूयमानायाः अचेतनत्वस्येष्टत्वात्। स्ववेद्यत्वेऽपि तत्र ज्ञानान्तरानाश्रयतया अचेतनत्वसंभवेन अन्यवेद्यताया अचेतनत्वप्रयोजकत्वाभावाच्च ॥

यदपि—धर्मिभूतस्य ज्ञानस्यापि ज्ञानत्वात् सविषयकत्वसङ्कोचविकासवत्त्वानित्यत्वाद्यापत्तिरिति—तदपि न । विषयत्वं नाम विषयत्वाभिमतेन साकं ज्ञानप्रसरसम्बन्धविशेषः । धर्मिणि सङ्कोचविकासानिष्ट्या तन्न भवति। नापि सङ्कोचाद्यापत्तिः ईश्वरनित्यमुक्तज्ञानेषु ज्ञानत्वे सत्यपि तदभावात् व्यभिचारात् । नाप्यनित्यत्वम् । तत् किं कस्मिंश्चित् काले सर्वदेशावच्छेदेन वस्त्वभावः उत पूर्वावस्थाविरुद्धोत्तरोत्तरावस्थावत्वम् । नाद्यः, धर्मभूतज्ञानेऽपि नित्ये तदसंप्रतिपत्तेः ॥ सत्कार्यवादिवेदान्तिमते सर्वस्य द्रव्यस्य नित्यत्वात्। नान्त्यः, ईश्वरज्ञानादौ सङ्कोचाभावेन तादृशनित्यत्वनिरूपितव्याप्त्यभावस्योक्तत्वात् । धर्मिग्राहकप्रमाणेन ईश्वरादिदिव्यमङ्गळविग्रहादीनां सावयवत्वेऽपि नित्यत्वसिद्ध्या सावयवत्वादेरप्यनित्यत्वापादकत्वायोगे सति ज्ञानत्वादेस्तदापादकत्वस्याप्रसक्तेश्च । अतः आगमविरुद्धार्थारोपेण आर्हतमतप्रवेशापादनमास्तिकः कर्तुं नार्हति । कथञ्च धर्मभूतज्ञानस्य सङ्कोचविकासशालिनोऽपि नित्यत्वं श्रीभाष्यदर्शितमिति **भूमिका**शेषे लिखता अत्र ज्ञानत्वात् धर्मभूतज्ञानवत् आत्मनोऽप्यनित्यत्वमपाद्यते ?

अथ जैनमत इवास्मन्मतेऽपि ज्ञानस्यानित्यत्वं दुर्वार मित्येतत्खण्डनमप्यत्र नः प्राप्तकालम् । सावयवत्वसविकारत्वादिकमसति शब्दप्रमाणबाधे

वस्तुनि अनित्यत्वसाधकमिति आनुभविकम् । आत्मनां चास्मन्मते नित्यत्वं शास्त्रसिद्धम् । जैनानामपि तदागमसिद्धमिति चेत्—आगमस्य कस्य प्रामाण्यं युक्तमिति विचार्य तन्निवार्यम् । यत्तूक्तं परस्परागमप्रामाण्याप्रामाण्यवादः परस्परस्य समान इति—तदिदं वेदप्रामाण्यमन्याप्रामाण्यं च स्थापयतां जैमिनिबादरायणादिपरमर्षीणां भावमनुवर्तमानेन वैदिकेन वक्तुमसाम्प्रतम् । यच्च—" न च पर्यायादप्यविरोधो विकारादिभ्यः " इति सूत्रश्रीभाष्यानुक्तं धर्मभूतज्ञानस्य नित्यात्मस्वभाविकधर्मतया नित्यत्वं कथं तत्र टीकायामुक्तमिति —तत्र को दोषः ? न हि मूलोक्तादन्यत् टीकायां न वक्तव्यमिति नियमः । विरुद्धं तु नूनं नोच्यते । न चात्र विरोधः । श्रीभाष्ये धर्मभूतज्ञानप्रस्तावस्या-कृतत्वात् तावदनुक्तिः । टीकार्थोऽप्यवधानेन ग्राह्यः । धर्मभूतज्ञानस्योत्पत्ति-विनाशरूप नानावस्थाभाक्त्वस्य जिज्ञासाधिकरणे विशदमेवोक्ततया तद्विरोधि नित्यत्वं तावदिह टीका न मन्तुमर्हति । अतः तार्किकैरागन्तुकत्वस्य ज्ञाने इष्टत्वात् तद्व्यावृत्तेः स्वमते प्रदर्शनाय किञ्चिद्रूपेणानित्यस्यापि धर्मभूतज्ञानस्य नित्यवस्तुनिरुपाधिकधर्मत्वरूपं नित्यत्वं ब्रूम इत्युक्तम् । तथा च धर्मभूत-ज्ञानस्यावस्थानामागमापायित्वेऽपि सर्वकालसंबन्धित्वरूपं नित्यत्वमस्तीत्युक्तं भवति । तर्हि तद्वदेव जैनमतेऽपि सङ्कोचविकासरूपावस्थाशालिन एवात्मनः सर्वकालसंबन्धरूपं नित्यत्वमस्तिवति चेत्—अस्तु । आपादितमनित्यत्वं तु तद्गतस्य पर्यायस्य तस्य तस्य यत्किञ्चिदुत्तरकालासंबन्धित्वरूपं परिमितकाल-संबन्धित्वमेव । तेन मोक्षेऽप्येकरूपपर्यायायोगात् मोक्षानित्यत्वमित्याशयः । एतदुपरि यत् जैनशङ्कितम्, तन्निरस्यते तदनन्तरेण सूत्रेण । किञ्च, " न च पर्यायादपी " ति सूत्रे पर्यायशब्दस्य सङ्कोचविकासरूपावस्थारूपार्थभाषणेऽपि श्रीभाष्ये शाङ्करभाष्योक्तः " अवयवापगमोपगमाभ्याम् " इत्यार्थोपि अपि शब्देन ग्राह्यत्वेनाभिमतः । तदपेक्षया सङ्कोचादिना निर्वाहस्य समीचीनत्वात्तु पर्यायशब्देन तस्य कण्ठोक्तिः । तथा अवयवापगमादिकल्पने, तदपेक्षया युक्ततरमिति सङ्कोचादिकल्पने च विकारादिदोष इति सूत्रार्थः । तत्रापि-

शब्दसूचितार्थे प्राप्तः अनित्यत्वादिदोषः आदिपदेन गृह्यते इति च मनसिकृत्य श्रीभाष्ये अनित्यत्वाद्यापादनम्। टीकायामनित्यत्वपदस्य परिमितकालवर्तित्वरूपमर्थं पूर्वमुक्त्वा अनित्यत्वं विनाश इति व्याख्यानान्तरं विधाय विकारपदं तदतिरिक्तजन्मादिपरं दर्शितम्। एवं विकारशब्दं प्रयुञ्जानः सूत्रकारः श्रुत्यनुरोधेन निर्विकारत्वनिरवयवत्वादिकमात्मन्यङ्गीकुर्वाणः युक्तिबलेन पदार्थान् गणयतां पक्षे सविकारत्वसावयवत्वादि आपादयन् ततः पराक्त्वाचेतनत्वादिकमप्यापादनीयं दृष्टानुरोधेन मन्यत इति भाव्यम्। यथा श्रुतित्यजस्तर्कशरणान् प्रति पत्यधिकरणे, 'करणवच्चेन्न भोगादिभ्यः', 'अन्तवत्त्वमसर्वज्ञता वा' इत्युक्तानि दूषणानि न श्रुत्युपजीविनां भवन्ति, तथैव प्रकृतेऽपीति सहृदयं विमृश्यम्।

यत्तु धर्मभूतज्ञानस्य सन्निकृष्टविप्रकृष्टदेशसंयोगरूपसंकोचविकासमात्रेणोत्पत्तिविनाशव्यपदेशो न युक्तः, नलिनस्य सङ्कोचविकाससत्त्वेऽपि तदभावादिति —तत्र वक्तव्यं भवतैव चिन्त्यम्, यत उच्यते, "दीपप्रभादिस्थले प्रभोत्पन्ना, नष्टेत्यनुभवात् सङ्कोचविकासावप्युत्पत्तिविनाशाविति लोकसिद्धम्" इति। वस्तुतो नलिनविकासावसरे नलिनदलेषु परिमाणस्यान्यादृशस्यादर्शनात् नोत्पत्त्यादिव्यपदेशः, यत्र तत्तदंशे परिमाणतारतम्यम्, तत्र तद्व्यपदेश इति धर्मभूतज्ञाने तद्व्यवहारो युक्त एव॥ यत्तु—परिणामित्वे अनित्यत्वमवश्यं स्वीकार्यमिति, जैनमते आत्मन इव, धर्मभूतज्ञानस्य विशिष्टाद्वैतिमते दुर्वारमनित्यत्वमिति—तत् "श्रुतिविरुद्धं तु परिणामित्वहेतुकमनित्यत्वानुमानम्" इति भवदुक्तिव्याहतम्। अद्वैतिमते परिणामि सर्वमनित्यमित्यपि न; परिणामिन्या अविद्यायाः सर्वकालसंबन्धित्वरूपनित्यत्वस्यैव स्थितेः। तत्त्वज्ञानेन बाधोऽस्तीति चेत्—बाध्यत्वमनित्यत्वं च भिन्नम्। यदि कालसत्त्वेऽपि वस्त्वभावः, तदा खल्वनित्यत्वम्। अविद्याबाधे तु कालाद्यपि अविशेषात् बाध्यत एव। अतो न नित्यत्वहानिः।

यत्तु—"मीमांसकमते आत्मनो ज्ञानात्मना परिणामित्वम्"

इति—तदपि चिन्त्यम् । न हि मृत्पिण्डस्य घटरूपेणेव आत्मनो ज्ञानात्मना परिणामः ; ज्ञानस्याद्रव्यत्वात् । धर्मधर्मिणोर्भेदाभेदस्वीकारेऽपि गुणत्वद्रव्यत्वयोः तत्र तत्र व्यवस्थितत्वात् । **शास्त्रदीपिकायां** च आत्मवत् ज्ञानमानन्दश्च नित्ये इति कश्चित् पक्ष उपन्यस्तः,

"नित्यं यत्त्वात्मचैतन्यमानन्दश्चेष्यते तु यः ।
यच्च नित्यविभुत्वादि तैरात्मा नैव मुच्यते ॥" इति **वार्तिक**-

**प्रामाण्येन** । अथ च परमतोपन्यासनिविष्टं तदिति कृत्वा ज्ञानाभावेऽपि ज्ञानशक्तिरात्मन्यस्तीति वार्तिकमतमाशय्य, "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादिश्रुतिनिर्वाहः कृतः । अत्र पक्षद्वयेऽपि विशिष्टाद्वैतमतादूरविप्रकर्षो भाव्यः । "न विज्ञातुः" इत्यादिश्रुतेः विज्ञात्रभिन्नार्थविज्ञातेर्विपरिलोपो नास्तीत्यर्थवर्णनं तु हठकृतम् । स्वरसगृहीतलिङ्गभेदवचनगतिवैघट्यात् । धर्मधर्म्युभयप्रद्वेषाद्धि एवं कल्पना । एवमपि 'विज्ञातुः' इति तृजन्तेनैव ज्ञानतदाश्रययोर्भेदस्य प्रतिपन्नत्वात् तदपलापो न संभवति । विज्ञात्रभिन्नविज्ञातिः विपरिलोपरहिता अविनाशित्वादित्युक्तौ हेतुसाध्यैक्यापत्तिश्च । विज्ञातिर्विपरिलोपरहिता विज्ञातुरविनाशित्वादित्युक्तौ तु सामञ्जस्यम् । अत एव, "अविनाशी वा अरे अयमात्मा" इत्यात्मनः अविनाशित्वमुक्त्वा अत एव 'अनुच्छित्तिधर्मे'ति धर्मभूतज्ञानस्याप्यनुच्छिद्यमानत्वं श्रुतिः श्रावयति । कथं धर्म्यनाशे धर्मानाश इति चेत्—धर्मस्य स्वाभाविकत्वाभिप्रायेणेति मन्तव्यम् । अयमेव श्रुत्यर्थो जैनाधिकरणटीकायामुपक्षिप्त इति न तस्य तत्कपोलकल्पितत्वम् । अत्र विवक्षितश्च नित्यत्वमुत्पत्तिविनाशरूपावस्थाद्वयाश्रयस्यापि ज्ञानद्रव्यस्य सर्वकालावच्छेदेन सत्त्वमेव । "किं नित्ये धर्मधर्मिणी अपृथक्सिद्धे दृष्टचरे श्रुतचरे वा श्रीभाष्यसिद्धान्तादन्यत्र" इति प्रश्नस्तु सर्वथैवानुपयुक्तः । एकमतप्रतितन्त्रसिद्धान्तस्य अन्यत्र दृष्टत्वश्रुतत्वयोः प्रायेणायोगात् । "निर्विशेषाद्वैतं दृष्टचरं श्रुतचरं वा शाङ्करादन्यत्र" इति किञ्चिदालोच्यताम् । (अत्र धर्मधर्मिण्यपृथक्सिद्धे इति सन्धिकल्पनं

प्रमादः) । किञ्च दृष्टचरे एव धर्मधर्मिणी अपृथक्सिद्धे, यथा जातिव्यक्ती, गुणगुणिनौ, कर्मतदाश्रयौ, प्रभाप्रभावन्तौ च; श्रुतचरे च, यथा देहात्मानौ, अचेतनेश्वरौ, चेतनेश्वरौ चेत्यन्यत्र व्यक्तम्; श्रुतिप्रामाण्यात् ।

यत्तु ज्ञानस्योत्पन्नत्वविनष्टत्वयोः सर्वलोकसाक्षिकयोः तद्विरोधेन नित्यत्ववर्णनं साहसमिति—तदिदमुत्पत्तिविनाशपदार्थशोधने सति न स्थास्यति । तथा हि—घट उत्पद्यते, घटो नश्यतीत्यादिव्यवहारगोचरीभूतः उत्पादो विनाशश्चावस्थाविशेषः, न त्वन्यः । द्रव्यान्तरारम्भस्य भावातिरिक्ताभावस्य चानङ्गीकारात् अवस्थाभेदमादायैव सर्वनिर्वाहो लाघवादित्यारम्भणाधिकरणे स्थितम् । यत्र तु गुणादौ अवस्थाया असंभवः, तत्रोत्पत्तिव्यवहारः उत्पत्तौ उत्पत्तिव्यवहारवत् गौणः । न ह्युत्पत्तौ काचिदुत्पत्तिरन्याऽस्ति; अनवस्थाप्रसङ्गात् । एवञ्च 'घट उत्पन्नः' इत्यत्र धर्मिणि समभिव्याहृतपदार्थतावच्छेदकीभूतघटत्वरूपावस्थालाभस्य, 'घटो नष्ट' इत्यत्र धर्मिणि तादृशघटत्वावस्थोत्तरावस्थालाभस्य च प्रतीतिरिति तदनुसारेण, प्रत्यक्षं जातम्, नष्टमित्यादौ विभिन्नावस्थालाभग्रहणं सति संभवे मुख्यमुचितमिति अनेकावस्थाविशिष्टमेकं वस्तु आत्मनिष्ठम्; तत्तदवस्थाभेदानाञ्च तत्तज्ज्ञानत्वव्यवहारः, मृदीव घटशरावादित्वव्यवहार इति । एवमङ्गीकारे चानुभवानुगुण्यमेव; नानुभवविरोधः । नन्वेवं सति ज्ञानस्यावस्थाभाक्त्वेन द्रव्यत्वापत्तिरिति कथं तस्यात्मनिष्ठत्वमिति चेत्—तत्र परमात्मापृथक्सिद्धद्रव्ये प्रकृत्यादाववस्थावत्त्वतन्निबन्धनद्रव्यत्वसद्भावात् द्रव्ये द्रव्यसद्भावेऽनुपपत्तिर्न काचिदिति विमृश्यम् । प्रादर्शि च प्रत्यक्ष एव दृष्टान्तः—यथा तेजोद्रव्यं प्रदीपाख्यं, प्रभाख्य तेजोद्रव्यविशिष्टं भवति यथा चाश्रयस्य तेजोद्रव्यस्यैकरूपत्वेऽपि आश्रितस्य प्रभाद्रव्यस्य सङ्कोचविकासाभ्यां नानारूपत्वम्, तद्वदात्मद्रव्यं ज्ञानद्रव्यविशिष्टम्, आत्मन्येकरूपे च ज्ञानं नानारूपमवतिष्ठत इति ।

**समालोचन**ग्रन्थे, 'प्रदीपस्य प्रभा परिणामः तथा ज्ञानमात्मपरिणामः स्यात् । आत्मनस्ततोऽनित्यत्वम्, जैनमतसाम्यञ्च स्यात्' इत्युक्तमप्यत एव

दत्तोत्तरम्। न खलु प्रदीपः पूर्वमुत्पद्य पश्चात् प्रभारूपेण परिणमति। किन्तु प्रदीपस्तदा तदा समुत्पद्यमानः स्वसामग्रीबलात् प्रभाविशिष्ट एवोत्पद्यते। आत्मनि नित्यं स्थितं ज्ञानं परिणमतीति किलास्माकः सिद्धान्तः। न पुनरात्मा परिणमतीति। प्रदीपव्यक्तेरेकैकस्याः भिन्नभिन्नप्रभाश्रयत्ववत् आत्मनोऽपि विभिन्नज्ञानवत्त्वापत्तिरित्यपि न वाच्यम्; प्रदीपेऽपि कालभेदेन भिन्नभिन्न-प्रभोत्पत्त्यनङ्गीकारात्। किन्तु तदा तदा तत्तत्प्रभाविशिष्टः तत्तद्दीप उत्पद्यत इत्येवेति। एकस्मिन् प्रदीपे एककालावच्छेदेनानेकप्रभासत्त्वात् आत्मन्यपि तथा अस्त्विति चेत्—स्यादप्येवम्, यद्येकज्ञानेनानिर्वाहः। न च दृष्टान्तदृष्टं सर्व-मपि दार्ष्टान्तिकेऽप्येष्टव्यमिति निर्बन्धः। एवं तर्हि दृष्टान्तजातीयतया दार्ष्टान्तिकत्वभङ्ग एव स्यात्। एतेनानित्ये प्रदीपे अनित्यप्रभास्वीकारेऽपि नित्ये आत्मनि नित्यज्ञानस्वीकारो न युक्त इत्याक्षेपोऽप्यसंगतः क्षिप्तः। अनित्ये नित्यद्रव्यस्वी-कार एव ह्यनुपपन्नः। प्रदीपापेक्षया च तत्प्रभायाः द्रव्यान्तरत्वं निर्विवादमिति न तस्याः तत्परिणामत्वमपि। शाङ्करभाष्य एव (२–३–२९), "प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम्" इत्युक्तम्। तद्वदेव ज्ञानस्य द्रव्यत्वं नानुपपन्नमिति निरूपयामः। किञ्च दृष्टान्तबलेनैव सर्वत्र वस्तुसिद्धिरित्यपि न नियमः। अनुमा-नेन साधने तु दृष्टान्तान्वेषणमावश्यकम्। अन्यत्र तु संभावितत्वद्रढिम्ने बुद्ध्यारोहाय च दृष्टान्तोपन्यासः। अतो दृष्टान्तक्षोभेऽपि न प्रकृतप्रमेयस्या-सिद्धिः। तत् सिद्धं ब्रह्मण्यपृथक्सिद्धचिदचिद्द्रव्यसिद्धिवत् आत्मनि ज्ञानद्रव्य-सिद्धिरिति। अन्यच्च धर्मभूतज्ञानमधिकृत्य वक्तव्यमवसरे वक्ष्यामः।

प्रासङ्गिकपरोक्तीनां परिहारच्छलादिमे।
नित्यात्मधर्मविज्ञानपरमार्थाः प्रदर्शिताः॥

एवं धर्मभूतज्ञानस्य स्वप्रकाशत्वं नाम स्वाश्रयतया प्रकाशमानत्वम्, तच्च आत्माश्रिततया प्रकाशमानत्वमित्यबद्धं कृत्वा, तर्हि अद्वैतिमते साक्ष्याश्रिततया प्रकाशमानस्य शुक्तिरूप्यसुखान्तःकरणज्ञानादेरिव धर्मभूतज्ञानस्यापि जडत्वं किं नेति कुचोद्यकरणमपि हेयम्। को हि नाम जडत्वापादकविधया

स्वप्रकाशत्वं परिष्कुर्यात्। न चात्र स्वपदं स्वरसतो ज्ञानाश्रयात्मवाचि। न च शुक्तिरूप्यं साक्ष्याश्रितम्। तदनाश्रितस्य तदाश्रिततया प्रतीतिश्चेत्, भ्रान्तित्वापत्तिः। सुखस्य च स्वयंप्रकाशत्वमप्रामाणिकमिष्टमेव। अज्ञानस्य भावरूपं निरसिष्यते; शुक्तिरूप्यादि च। अद्वैतिमात्रसिद्धग्रहणेन विशिष्टाद्वैतिमते जडत्वापादनस्य दुष्करम्। आत्मगताणुत्वानित्यत्वनिरवयवत्वाद्यनेकोभयसंमतवस्तुग्रहणेन जडत्वापादने सुकरे किमित्येतावान् प्रयासः। किं विस्तरेण। जडत्वव्यावृत्त्यर्थमिष्टस्य स्वप्रकाशत्वस्य स्वयमन्यथा निर्वचनेन जडत्वापादनं यथावस्थितस्वप्रकाशत्वाज्ञानमूलकमेव। प्रदीपसंकोचविकासौ विना, प्रभासङ्कोचविकासौ न स्त इत्येतदप्यनुभवविरुद्धम्। तिरस्करिण्यादिना आवरणेऽपि प्रभासङ्कोचदर्शनात्। धर्मभूतज्ञानसङ्कोचविकासौ कर्मायत्ताविति पक्षो लोकानुभवविरुद्ध इति कथम्? कर्मानायत्तौ ताविति लोकतोऽनवगमात्। अवगमे च तत्सङ्कोचविकासधर्मिप्रसिद्ध्या भवता तदपलापस्य कृतस्यायुक्तत्वाच्च। वस्तुतः शास्त्रवेदितमेतत्। "यथा न क्रियते ज्योत्स्ना मलप्रक्षाळनान्मणेः। तथा हेयगुणध्वंसादवबोधादयो गुणाः प्रकाशयन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥," "अविद्या कर्मसंज्ञाऽन्या," "तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता सर्वभूतेषु भूपाल तारतम्येन वर्तते" इत्यादीनि निर्विकारात्मधर्मस्य ज्ञानस्य नित्यत्वसङ्कोचायत्ततारतम्यपराणि वचनान्यनुसन्धेयानि।

यत्तु—अन्तःकरणसङ्कोचविकासाभ्यां सांख्यमत इवान्तःकरणवृत्तिद्वारैव सर्वव्यवहारनिर्वाहे धर्मभूतज्ञानस्वीकारः किमर्थ इति—तत् विपरीतम्। व्यवहारं प्रति ज्ञानं कारणमिति सर्वलोकसंप्रतिपन्नम्। तत्संकोचविकासाभ्यामेव सर्वनिर्वाहे अन्तःकरणनिर्गमवृत्त्यादिकल्पनैव निष्प्रमाणा अनुभवविरुद्धा च। तत्र भगवद्बादरायणनिरस्तसांख्यमतप्रक्रियावलम्बनात् अद्वैतस्याश्रद्धेयत्वमेव स्यात्। "सांख्यप्रक्रियामनुसृत्य" इत्यस्य, "जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रप्रकाशनूरीकुर्वती" त्यत्रैवान्वयो वाच्यः। न च जीवेश्वरैक्यमविद्यानिवृत्त्यादि च सांख्यमतमिति वाच्यमनभिधानात् ॥

" सविशेषानुभवानां तु निर्विशेषाविषयकत्वान्न निर्विशेषविषयंता " इति भवदुक्त्या लोकप्रसिद्धानामनुभवानां निर्विशेषासाधकत्वं स्पष्टम्। निर्विशेषा संवित् काचिदलौकिकी नैव स्फुरतीति सर्वथा तदसिद्धिरेव। अत्र वाक्ये साध्यहेत्वोरभेद इति च पश्यतु भवान्। एवमसिद्धे निर्विशेषानुभवे केन कस्य विरोधः, येन परस्परविरोधे अपच्छेदन्यायादिभिः सविशेषत्वबाधः स्यात्। श्रुत्यादिना निर्विशेषत्वव्यवस्थापनमिति चेत्—नायं प्रकृतवाद-विषयः। स्वप्रकाशतया निर्विशेषत्वसमर्थनस्यैवात्र विचार्यमाणत्वात्। 'अप्रत्यक्षेऽपि ह्याकाशे बालाः तलमलिनतादि अध्यस्यन्ति' इति शाङ्करभाष्यस्येह ग्रहणमप्यनुपपन्नम्। तद्वाक्यं प्रौढिवादः आकाशवत् आत्मनः अप्रकाशाभावादिति भामत्यां व्यक्तम्। आकाशवत् अप्रकाशत्वस्वीकारेण तद्भाष्यादरणे च निर्विशेषसंवित्स्वयंप्रकाशत्वोपपादनस्य प्रकृते कर्तव्यस्य विरुद्धमेव तत् स्यात्। कवितार्किकचक्रवर्तिनृसिंहभट्टोपाध्यायादिभिरधिष्ठानज्ञानं पृथक्तया भ्रमकारणत्वेन न स्वीकृतमिति तावत् सिद्धान्तलेशसंग्रहोक्तम्। तावता संवित्प्रकाशः सविशेषत्वभ्रमात् पूर्वं नापेक्षित इति प्रकृते स्यात्। एवञ्च निर्विशेषत्वं स्वयंप्रकाशम् इति प्रकृतस्थापनीयस्य, अस्य च कः सम्बन्धः? पूर्वं निर्विशेषत्वविशिष्टस्वप्रकाशोऽस्तीति चेत्—नेदमानुभविकम्। तदस्तित्वे तदनन्तरं सविशेषत्वानुभवायोगश्च। निर्विशेषत्वांशमात्राप्रकाशे च स्वप्रकाशत्वविधया तत्समर्थनप्रत्याशैव नास्तीति॥

" यत्तु—" निर्विशेषता तु संविद्रूपा, न तु संविद्धर्मः " इति—तेन किमुक्तं भवति? निर्विशेषत्वस्य पृथगनुभवाभावेऽपि संविदनुभव एव निर्विशेषत्वानुभवतया स्वीकर्तव्य इति चेत्—तर्हि संविदो नानाविशेषविशिष्टतयैव लोकेऽनुभूयमानत्वात् तत्र विशेषाभावरूपनिर्विशेषत्वस्य दुर्वचत्वेऽपि संविद एव निर्विशेषत्वमिति नामान्तरं पारिभाषिकं कल्प्यत इत्युक्तं भवति। अभावस्याधिकरणात्मकत्वाभिप्रायेण तदुक्तिरिति चेत्—अभावप्रतीतौ सत्यां किल, स किमतिरिक्तः, अधिकरणमेव वेति विचार्यम्। न तद्विरुद्धे सविशेषत्वेऽनुभूयमानेऽप्रतीतमभावमधिकृत्य विचारप्रसक्तिः।

यत्तु—सुषुप्तौ निर्विशेषप्रकाशोऽस्तीति–तत्र किं प्रमाणम्? आश्रयस्याहमर्थस्य विषयाणाञ्च तदा लीनत्वादिति चेत्—एकस्य सुषुप्तत्वेऽपि अन्यैर्बहुभिः सविशेषानुभवानां क्रियमाणतया विषयादिलय इत्यस्यैवासिद्धेः ॥

विडालो मीलयेन्नेत्रे न लोकोऽस्तमियात् ततः ।
अहमर्थलये च स्यात् सुषुप्तादन्य उत्थितः ॥

सुषुप्तिर्नामाप्रबोधः—ज्ञानाभाव इति यावत् । तेन सर्वस्य सद्भावेऽपि ज्ञानं नास्तीत्येव सिद्ध्येत् । सर्वं लीनम्, ज्ञानं परमस्तीति सुषुप्तिवर्णनं तु सर्वलोकपरिहास्यम् । एवञ्च सुषुप्तौ ज्ञानाभावोऽपीष्यते चेत्–अप्रबोध इति व्युत्पत्तिः रक्षिता स्यात् । नन्वेवं सुषुप्तौ न किञ्चित् प्रकाशते चेत, सुखमहमस्वाप्समिति प्रबोधकालिकस्य परामर्शस्य कथं निर्वाह इति चेत्—एतत्परामर्शविचारश्चावसरे करिष्यते । अत्र पुनरयं संवित्प्रकाशस्य तदातनस्य स्थापकः कथमिति पृच्छामः । अत्र हि, सुखम्, अहमर्थः, स्वापः इति वस्तुत्रयमुल्लेखविषयः; चतुर्थः कालोऽपि वा । तत्र संविदः कुत्रान्तर्भावः, येन तत्स्फुरणं सेत्स्यति । सुखप्रकाश एव संवित्प्रकाश इति चेत्–सुखं खल्वन्तःकरणवृत्तिविशेषः, तत् कथं तदा? तदतिरिक्तमानन्दभूतमात्मस्वरूपं सुखपदग्राह्यमिहेति चेत्–किं तस्य सुखत्वेन प्रकाशः, उत स्वरूपमात्रेण? आद्ये कथं निर्विशेषप्रकाशः? अन्त्ये सुखमिति पदप्रयोगो न युक्तः । सुखत्वाविवक्षयेव दुःखत्वाविवक्षया दुःखमहमस्वाप्समित्यपि परामृशेत् । सदहमस्वाप्सम्, ज्ञानमहमस्वाप्सम्, संविदहमस्वाप्सम्, ब्रह्माहमस्वाप्सवित्येवमपि परामृशन्तु । अधिकमुपरिष्टात् ॥

मुक्तौ संवित् प्रकाशते इति च न युक्तम् । निर्विशेषानुभवं स्वप्रकाशरूपमुपपादयितुं प्रवृत्तेन लोक एव तस्य प्रदर्शनीयतया मुक्तौ भविष्यतीत्युक्तौ विस्रम्भायोगात् । किं भवता मुक्तावनुभूय पुनरागत्योपन्यस्यते, किं वा मुक्तौ भविष्यतीति श्रुत्यादितोऽवगम्य? आद्यमसिद्धम् । अन्त्ये निर्विशेषश्रुतिसमधिगम्यं तत् स्यात्, न स्वप्रकाशसिद्धम् । तत्रापि विशेषाभावविशिष्टतया संवित्

प्रकाशते चेत्—विशेषाणां प्रतियोगिभूतानां तदभावस्य च सह प्रकाशनात् न संविन्मात्रप्रकाशः। विशेषाणां प्रकाशं विना संविन्मात्रप्रकाश एव विवक्षित इति चेत्—तदापि किं संवित् तदा केवलमस्ति, उत प्रकाशतेऽपि? अस्ति च, प्रकाशते चेति चेत्—अस्तित्वप्रकाशमानत्वरूपांशद्वयविशिष्टायाः संविदः कथं निर्विशेषता? अंशयोर्धर्मिणा सह सर्वथैवैक्ये, अस्तीत्यतः प्रकाशते इत्यनेन किमधिकमुक्तं स्यात्। अस्ति, न तु प्रकाशते इति प्रकाशाभाव एव तदेत्युक्तौ को दोषः? संवित्प्रकाशयोरैक्यमनुभवसिद्धम्, अतो न तस्या अप्रकाशत्वमिति चेत्—उपपाद्यताम्। घटमहं संवेद्मीत्युक्तौ घटो मे प्रकाशते इति खल्वर्थः। अतः संविदः प्रकाशस्य च ऐक्यमिति चेत्—सत्यं सविशेषसंविदैक्यं सविशेषप्रकाशस्य। तावता निर्विशेषस्य संवित्त्वं प्रकाशत्वं च न सेत्स्यति। विषयग्रहणकाल एव संवित्प्रकाशस्यानुभूयमानतया निर्विशेषतादशायां विषयाग्रहणादस्फूर्तिरेव स्यात। किञ्च संवित् प्रकाशते स्वयंप्रकाशा इत्यादिव्यवहारे प्रकाशाश्रयत्वमेव संविदः प्रतीयते; न तु प्रकाशरूपत्वम्। एवञ्च संविन्निष्ठः प्रकाशो नाम कश्चिद्धर्मः स्वीकार्यः। स च प्राकट्यं वा व्यवहारानुगुण्यं वा किमप्यस्तु। तस्य च सर्वकुक्षिम्भरौ मोक्षे दुर्भिक्षमेवेति कथं मुक्तौ संवित् प्रकाशत इति वाच्यो युक्तिः। सविशेषानुभवरूपायां तु मुक्तौ सर्वमिदं घटते। तथा च संविदः प्रकाशश्चेत्, सविशेषत्वमेव। निर्विशेषत्वे चाप्रकाश एवेति॥

तत्त्वमसीत्यखण्डवाक्यार्थस्फूर्तौ संविन्मात्रप्रकाश इति च विचारितम्; विचारयिष्यते च। पदार्थद्वयान्वयमनिच्छतां तत्त्वमसिवाक्ये कथमन्विताभिधानवादः, अभिहितान्वयवादो वा। मीमांसकपरिभाषितस्य अन्विताभिधानस्याभिहितान्वयस्य च तदभिमतार्थानङ्गीकारेण तात्पर्यविषयाभिधायकत्वतदनुभावकत्वरूपार्थवर्णनमपेक्ष्य, नास्माभिः मीमांसकसरणिः समानाधिकरणवाक्येषु; विशिष्य ब्रह्मपरेषु वेष्यत इति यदद्वैतिनो वदेयुः; तत् युक्ततरम्। जिज्ञासानुपपत्तिप्रसाधनावसरे प्रागिदं किञ्चिद्विचारितम्। शेषमुपरिष्टात्। एवमखण्डार्थपर-

त्वस्य वाक्येऽङ्गीकारे, 'प्रमाणान्तरं नास्ति, स्वयंप्रकाशत्वमेव निर्विशेषस्ये'ति च कथम्? निर्विशेषपदं विशेषाभावत्वोपलक्षितस्वरूपपरमित्ययुक्तम्; विशेषाभाववत् इत्येव तदर्थात् विशेषाभाववत्त्वोपलक्षितेति तु स्यात्; न तु विशेषाभावत्वोपलक्षितेति। निर्विशेषमित्यस्य विशेषाणामभाव इत्यर्थे अव्ययीभावत्वे निर्विशेषा संविदिति प्रयोगानुपपत्तिः। अस्तु तावदुपलक्षणमभावत्वं वा अभावो वा। सर्वथा निर्विशेषपदस्य पदद्वयात्मकस्य विशेषतदभावतदुपलक्षितसंविदेतावत्पर-त्वेन अखण्डपरत्वं दुर्वचम्। जहल्लक्षणया तत्परत्वं तु सविशेषपदेऽपि भवितुमर्ह-तीति कोऽत्र विशेषः। तस्मान्निर्विशेषमित्युक्तौ अभावस्याधिकरणात्म-कत्वस्वीकारे धर्मधर्म्युभयं विना धर्मिमात्रेण निर्वाह इत्यालोच्य निर्वि-शेषमित्युक्तावपि अभावरूपे तस्मिन् अभावत्व—विशेषप्रतियोगिकत्व—पदतात्पर्यविषयत्वाद्यनेकविशेषसद्भावात् सर्वविशेषाभाववत्त्वं दुर्घटमेवेति विशेषपदस्यार्थसङ्कोचः सर्वथैवावर्जनीयः। ते विशेषा अपारमार्थिका इति चेत्—तर्हि पारमार्थिकविशेषराहित्यं निर्विशेषत्वमिति विशेषपदस्य विशेषपर्यव-सानमेव। घटपटादीनां समानश्चेदं पारमार्थिकविशेषराहित्यम्। धर्मिसमान-सत्ताकविशेषराहित्यं निर्विशेषत्वमिति चेत्—विशेषपदसङ्कोचस्तदवस्थ एव। एवमावश्यके च सङ्कोचे प्रत्यक्षानुमानश्रुत्यन्तराद्यनुरोधेन जगदनपह्नवेन समुचि-तविशेषसंङ्कोचकल्पनेन वाक्यार्थवर्णनं श्रेयः॥

यश्चोपरि निष्कर्षः—सोऽप्यनिष्कर्षमेव दर्शयति। दृग्रूपत्वं स्वप्रकाश-त्वमिति हि निष्कृष्टम्। संविदः स्वयंप्रकाशत्वं तार्किकादिवैलक्षण्याय साधयद्भिः किं नाम स्वयंप्रकाशत्वमिति प्रश्ने संवित्त्वं स्वयंप्रकाशत्वमि-त्युक्तिर्यादृशी, तादृश्येवेयमपि। दृक्संवित्पदयोः समानार्थकत्वात्। अविवादविषयस्य संवित्त्वरूपदृक्त्वस्य विवादविषयस्य स्वयम्प्रकाशत्वस्य चैक्या-योगात्। उपरि, सविशेषस्य ये विशेषाः, ते स्वप्रकाशाः, परप्रकाशा वेति विकल्प्य आद्ये ते विशेषाः दृग्रूपा वा दृश्या वेति विकल्पनमप्यरम्यम्-विशे-षाणां स्वयंप्रकाशत्वपक्षे दृक्त्वस्वयंप्रकाशत्वयोरैक्यस्य भवदुक्ततया दृश्यत्व-

कोटिकविकल्पायोगात् । उपरि कृतविकल्पानां यथाक्रमं समाधिरपि नाकारि । एवं संवित्प्रकाश्यत्वमन्यप्रकाश्यत्वं वेति विकल्पोऽप्ययुक्तः । संविदतिरिक्तस्याप्रकाशकत्वात् । श्रीभाष्यमते प्रकृतितद्धर्माणां स्वप्रकाशत्वमिति पक्षोद्भावनमप्यसंभावितम् । "तमेव भान्तनुभाति सर्वम्" इति श्रुतिश्च भगवत्प्रकाशाधीनप्रकाशाश्रयत्वं सूर्यादेर्दर्शयति । सूर्यादीनां यादृशं भानं प्रभाश्रयत्वम्, तत् भगवद्गततादृशभानाधीनमिति किल स्वरसम् । तेन भगवद्दिव्यविग्रहप्रकाशाधीनत्वं ज्ञायते । "चक्षोः सूर्यो अजायत", "सूर्यस्य तपतो लोकान् अग्नेश्चन्द्रस्य चाप्युत । अंशवो ये प्रकाशन्ते ममैते केशसंज्ञिताः । सर्वज्ञाः केशवं तस्मात् मामाहुर्द्विजसत्तमाः" इत्यादिकमत्र भाव्यम् ॥

उपरि शतदूषण्यनुवादे निर्विशेषस्वयंप्रकाशत्वं किं संविदेव वदति, उतान्य एवेत्यर्थानुवादे, "तटस्थस्तामुपलभ्ये"ति अनुवदनीयस्य, अशुद्धमुद्रणग्रन्थावलोकनेन अर्थे सर्वथैवानवधानं वहता, 'तटस्थतामुपलभ्ये'त्यनुवादः, अथ, "स तमुपलभमानः ततोऽन्यथा वा तथैव वा स्यात्" इत्यनुवादे कर्तव्ये, "अन्यथा वा, "तथैव वे"त्यनुवादश्चान्यथाग्रहणमनुवदितुरतिस्पष्टं दर्शयति । "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति (७-२५) इति गीतया—'योगमायासमावृतत्वात् मदीयं यथावस्थितं स्वरूपं सर्वेषां न प्रकाशमानमस्ति । ते मूढाः । मन्मायायाः मां प्रत्यावारकत्वाभावात् न मे ज्ञानप्रतिबन्धः'इत्यर्थे शाङ्करभाष्यतो मूलतश्च विस्पष्टे तद्विपरीतं यत् लिखितम् - "भगवान् स्वस्य मायिकं रूपमेवावृतमप्रकाशञ्चाह । पारमार्थिकं स्वरूपं तु न कस्याप्यप्रकाशम्" इति—तदीदृशविपरीतार्थवर्णनं विना स्वमतासिद्धिं स्वान्तर्गतामाविष्करोति ॥

यत्तु—योगस्य कस्यापि भ्रान्तित्वं विषयबाधेन वा, स्वरूपमिथ्यात्वेन वेति विकल्प्य आद्यं बाधितम्, अन्त्यमपि (विषयासत्यत्वेऽपि) ज्ञानसत्यत्वं स्थापयतामाशयविरुद्धमिति दूषणम्—तदपि स्थवीयः । योगस्य कुत्रापि भ्रान्तित्वं न भवतीति न हि युक्तम् । भ्रमात्मकानुभावाधीनस्य संस्कारपाटवाधिक्यायत्तदर्शनसमानाकारताजुषोऽपि स्मृतिसन्तानस्य योगस्य भ्रान्तित्वाव-

श्यम्भावात् । भावनाप्रकर्षजन्मनो योगिप्रत्यक्षस्य पुरः स्थितत्वेन दूरस्थविषयग्राहित्वमपि भ्रमत्वापादकमित्यन्यत्र व्यक्तम् । कपिलादियोगिनां यदि सांख्यादिशास्त्रदर्शितरीत्यैव तत्त्वसाक्षात्कारः, स तर्हि भ्रम इति च स्थितं स्मृत्यधिकरणे । भवतैव शब्दजन्यप्रत्यक्षविचारावसरे योगिप्रत्यक्षस्य परस्परविरुद्धतत्तत्सिद्धान्तावलम्बिसर्वाचार्यनिष्ठत्वं जैनादीनाञ्च योगित्वमुक्तमिह स्मर्तव्यम् । यच्च—ज्ञानस्य स्वरूपमिथ्यात्वेन भ्रान्तिशब्दवाच्यत्वमिति विकल्पनम्—तत् अनुक्तमनुल्लेख्यमसंभावितञ्चेति किं तत्र विस्तरेण ?

यत्तु—ज्ञानत्वविशिष्टस्य न स्वयंप्रकाशत्वम्, किन्तु ज्ञानत्वोपलक्षितस्येति निर्विशेषस्वयंप्रकाशत्वप्रत्याशयोक्तम्—तदप्यनुभवदूरम् । घटमहं जानामीति ज्ञानस्य ज्ञानत्वमुखेनैव प्रकाशात्=विशिष्टस्य स्वयंप्रकाशत्वस्यावश्यकत्वात् । धर्मिमात्रप्रकाशग्राहकस्यानुभवस्य लेशतोऽप्यभावात् । एवं प्रत्यक्षानुमितित्वादिविशेषधर्मविशिष्टतयाऽपि ज्ञानस्य प्रकाशमानत्वमानुभविकम् । तथास्वयंप्रकाशत्वे बाधकाभावात् लाघवाच्च न धर्मविषये ज्ञानान्तरापेक्षा । अन्यथा धर्मग्रहणार्थापेक्षितज्ञानत एव धर्मिणोऽपि भानसंभवे स्वयंप्रकाशत्वमेव न सेत्स्यति । " स्वप्रकाशं निर्विशेषं व्यवहारदशायामस्वप्रकाशं वर्तते " इति लेखनात् संसृतौ तदप्रकाशः सिद्धः । पूर्वं (४५) " स्वप्रकाशत्वञ्चेदं स्वातिरिक्तप्रकाशापेक्षप्रकाशाभाव एव " इति लेखनात्, "स्वयं सिद्धिरूपत्वमेव, न तु प्रकाशमानत्वम् " इति लेखनाच्च ज्ञानत्वस्वयंप्रकाशत्वयोरविशेषः, मुक्तावपि तदप्रकाशश्चैवोक्तो भवतीति, संविदः अप्रमेयभूतायाः स्वयंप्रकाशत्वस्याप्यभाव एव भङ्ग्यन्तरेणोक्तो भवतीति साधु स्वयंप्रकाशत्वभङ्गपरीक्षणम् । अतश्च समुचितमेव भवत्कृतमेतन्नाम, " निर्विशेषस्वयंप्रकाशवादपरीक्षा " इति । तत्परीक्षेत्यस्य तत्रानुपपत्त्युद्घाटनमित्यर्थः किल भवदभिसंहितः । अत्र च स्वयंप्रकाशत्व एवानुपपत्तिरुच्यत इति नाम स्वयं समुचितं संपन्नम् । मामन्यञ्च न जानामीति प्रतीतौ यदि संवित्स्वरूपमज्ञानाश्रयतया प्रकाशते, कथं तर्हि निर्विशेषस्य ततो वेद्यत्वम् ? श्रुतिबला-

निर्विशेषस्वीकारश्चेत्—स्वयंप्रकाशबलात् सिद्धिरिति प्रमाणान्तरागोचरत्वाभिधानपूर्वकं तत्सिद्धिः किमित्युच्यते ?

अत्रेदं बोध्यम्—प्रकाशो नाम ज्ञानविषयत्वं वा, प्राकट्याख्यधर्मो वा, व्यवहारानुगुण्यं वा यथायथमद्वैत्यतिरिक्तमते उपपादयितुं शक्यम्। मोक्षेऽपि कर्मानधीनव्यवहारवादिनां तत् सुवचम्। निर्विशेषत्वमातिष्ठमानानां तु संविदि कथमेतत्संभवः ? दृश्यत्वादिविशेषाङ्गीकारे मिथ्यात्वं स्यादिति मिथ्याभिया तस्य सर्वस्यासंमतेः। संमतावपि यदा जागर्यादौ ज्ञानविषयत्वादीनामुक्तानां संभवः, तदा निर्विशेषा संविन्न प्रकाशते। सुषुप्त्यादौ तु प्रकाशत इत्युच्यते। कथमेतत् ? सुषुप्तौ ज्ञानव्यवहारयोरभावात्। मुक्तौ कस्याप्यभावाच्च। अतस्तदा तदा प्रकाशते संविदिति विप्रलम्भमात्रम्। यदि प्रकाशो नाम संविदेव, सा च तदाऽस्तीति संवित् स्वयंप्रकाशत इत्युच्यते, तर्हि जागर्यादावपि संविदस्त्येवेति कुतो न सा प्रकाशते तदा ? एवञ्च सद्भावातिरिक्तप्रकाशाभावात् प्रमाणाभावे घटाद्यस्तित्वासिद्धिवत् संविदस्तित्वासिद्धिरेव स्यात्। संविज्जडेऽपि तार्किकपक्षश्च न निराकृतः स्यात्। स्वयंप्रकाशत्वमन्यानधीनप्रकाशत्वञ्चेत् - तादृशप्रकाशानङ्गीकारादसिद्धिः। किञ्चिदधीनप्रकाशाभाव एव स्वयंप्रकाशत्वञ्चेत् - शशविषाणमपि स्वयंप्रकाशं स्यात्। अथ स्वभिन्नकिञ्चिदधीनप्रकाशाभाव एव स्वयंप्रकाशत्वम्। शशविषाणस्थले च स्वपदार्थाप्रसिद्ध्या न तस्य स्वयंप्रकाशत्वापत्तिरिति चेत् - संविदः प्रकाशान्तरेण सिद्ध्यभावे शशविषाणवदिहापि तत्समन्वयदौर्घट्यमेव। अप्रसिद्धत्वाविशेषात्। अन्यतःसिद्धौ अन्याधीनप्रकाशाभावभङ्गः। न चान्या काचित् स्वतस्सिद्धिरस्ति। किं बहुना - अद्वैतिमतं सच्चिदानन्दस्वरूपं ब्रह्म; तत्र चिदानन्दरूपत्वाविर्भावो मुक्ताविति मोक्षः पुरुषार्थ इत्यदिवचनमकृतबुद्धिसंमोहनमात्रम्। सत्त्वचित्त्वानन्दत्वानामभावात्। मुक्तौ धर्मिसद्भावातिरिक्तस्य स्फुरणस्याभावेन आनुकूल्याद्यभानाच्च मोक्षस्यनुभवरूपत्वं न भवति। एवञ्च पाषाणकल्पमोक्षवादितार्किकपक्षात् तदंशे स्यादेवाविशेषः। तैर्भावातिरि-

काभावाङ्गीकारात् सर्वात्मविशेषगुणध्वंसरूपदुःखनिवृत्तिः साध्या भवति । अद्वैतिभिस्तदनिष्टया अविद्यानिवृत्त्याः साध्यत्वमपि दुर्वचम् । तस्याः ब्रह्मातिरिक्तत्वस्य नित्यत्वस्य च स्वीकारे द्वैतापत्तिः । ब्रह्मरूपाधिकरणाभेदे च तस्य संसृतावपि सद्भावादद्यापि मोक्षोऽस्तीत्येव स्यात् । अस्त्येव, सर्वस्य प्रपञ्चस्य असत्यत्वात्, नित्यमुक्तत्वात् ब्रह्मण इति चेत्—तर्हि किमर्था वेदान्तचिन्ता? एवमस्तीति ज्ञानार्थमेवेति चेत्—ज्ञानाभावे क उपप्लवः? संसारबन्ध इति चेत्—ननु स मिथ्यैवेत्युक्तम् । मिथ्येत्यमत्वा मुधा श्राम्यन्तीति तत्परिजिहीर्षया तच्चिन्तेति चेत्—श्रमोऽपि मिथ्यैवेति का तत्परिजिहीर्षेत्यलमधिकेनास्मिन् वादे । विनैव प्रमाणान्तरं संवित् निर्विशेषैव सिद्ध्यति स्वयमेवेति प्रतिज्ञामनुपपाद्य पुनःपुनः प्रतिज्ञामात्रकरणेन स्वयंसिद्धिं परित्यज्याप्रसक्तप्रमाणान्तरोपन्यासप्रयासेन च ग्रन्थविस्तरणं वृथाभिनिवेशकृतमेव । निर्विशेषश्रुतिरूपप्रमाणन्तरं च तदवसरे शोधयिष्यते ॥

स्वतः स्फुरति निर्गुणं किमपि निर्विशेषं सदे-
त्युपन्यसनवञ्चितो भवतु नाम कश्चिद्भुवि ।
वद स्फुरणमीरितं किमिदमस्य, कस्मै स्फुर-
त्विदं तदिति पृच्छको भवति नैव तद्वञ्चितः ॥

---

श्रीः

## निर्विशेषनिर्विकल्पकभङ्गप्रसाधनम्

अद्रीकृतमहातल्पमविकल्पदयानिधिम् ।
आश्रितप्रार्थनाकल्पमाकल्पयतु मे मनः ॥

वन्ध्यापुत्रो गगनकुसुमं धारयन् क्रीडतीति
श्रुत्वा द्रष्टुं व्यवसितवतोऽन्धस्य जात्यन्ध एकः ।
नेता पृष्टः कथमिदमिति प्रौढितो निर्विशेष-
ज्ञानात् सिद्धिं निखिलविषयां निर्विकल्पादवोचत् ॥

कतिपयमात्रविषयकत्वनिबन्धनं निर्विकल्पकत्वमेव स्वरसतया स्वीकृतम् । एवं स्थिते शतभूषण्याम् , " विगीता बुद्धिः विशिष्टज्ञानपूर्विका, विशिष्टबुद्धित्वात् संमतिपन्नज्ञानवत् इत्यनुमानात् निर्विकल्पकं नैयायिका इवाद्वैतिनोऽपि स्वीकुर्वन्तीति " इति लेखनम्—स्वसिद्धान्तविरुद्धम् ; शतदूषण्यामस्य वादस्य नैयायिकनिरसनांशघटितत्वात् कस्मिन् अंशे अद्वैतिखण्डनमित्यविविच्य एकरूपनिर्विकल्पकमद्वैतिनैयायिकोभयस्वीकृतं स्यादित्युत्प्रेक्षणमात्रमूलकञ्च ॥

एवं नैयायिकनिर्विकल्पे निरस्ते प्रामाणिकैः क्रियमाणो निर्विकल्पकसविकल्पकरूपप्रत्यक्षावान्तरभेदव्यवहारः किमभिप्रायक इति विवेचनीयम् । परिभाषोक्तरीत्यां हि सोऽयं देवदत्त इत्यादौ क्वचिदेव निर्विकल्पकं भवति । न तत् सार्वत्रिकप्रामाणिकनिर्वाहायालम् । तत्रापि निर्विकल्पकत्वं नेति तदवसरे वक्ष्यते । अत्र विशिष्टाद्वैतिनः—प्रथमाक्षसन्निपातजन्यं प्रत्यक्षं निर्विकल्पकम् , तदधीनमनुभूतांशानुवृत्तिसाहित्येन विशिष्टवस्तुग्राहि सविकल्पकमिति । युक्तश्चैतत् ; " आलोचनमिन्द्रियाणाम् , विकल्पस्तु मनसः " इति सांख्यव्यवहारस्यापि एतदभिप्रायकत्वसम्भवात् । अन्यैरन्यथा गृह्यमाणोऽपि स व्यवहारो नूनमेतदभिप्रायक एव । तत् विविच्यते—" आलोचनमिन्द्रियाणाम् , विकल्पस्तु मनसः, अभिमानोऽहङ्कारस्य, अध्यवसायो बुद्धेः " इति वदतां सांख्यानामयमाशयः—प्रथममिन्द्रियं चक्षुरादिकं सर्वसन्निकर्षरूपसामग्रीसद्भावात् इयं गौरिति विशिष्टं प्रत्यक्षमेव जनयति । इदमालोचनम् । पश्चादेतद्दर्शनाधीनसंस्कारोद्बोधे सति पूर्वानुभूतमिदञ्चैकीकृत्य, इयमपि गौरिति वा, सेयं गौरिति वा गृह्णाति । अयं विकल्पः अनुभूतानुभूयमानयोः विभिन्नयोः समाहारात् । तत्र पूर्वज्ञाने व्यक्तिभेदः, जात्यनुवृत्तिग्रहणम् ; द्वितीयज्ञाने देशकालभेदः, व्यक्त्यनुवृत्तिग्रहणम् । अयञ्च विकल्पः नेन्द्रियमात्राधीनः, संस्कारस्येन्द्रियवशत्वाभावात् । एवं विकल्पे जाते सति पूर्वानुभूतवस्तुना स्वस्य भोगं प्राग्भूतं स्मरतः तथाभूते संप्रति सन्निकृष्टे वस्तुनि तादृशभोगोपयोगित्वचिन्तनया ममेदमित्यभिमानो अहङ्कारकार्यो जायते ।

अथ च बुद्धितत्त्वसहायस्तदेव वस्तु स्वव्यापाराविष्टं कर्तुमध्यवस्यति, इदं कर्तव्यम् , इदमुपादातव्यमित्येवम्। अतो विशिष्टज्ञानस्यैव प्राथमिकत्वात् न नैयायिकोक्तं निर्विकल्पकमस्ति।

ननु लौकिकस्य निर्विकल्पकस्य तदसाधकत्वेऽपि अलौकिकं निर्विकल्पकं निर्विशेषसाधकमस्तीति चेत्—तत्र किं मानम्? नैयायिका हि सविकल्पकान्यथानुपपत्त्या तत्कारणतया निर्विकल्पकमतीन्द्रियमनुभवानारूढमपि कल्पितवन्तः। विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणतायाः अद्वैतिभिरप्यनङ्गीकृतत्वस्योपदर्शिततया, निर्विशेषत्वात् ब्रह्मणः तद्विषयसविकल्पकस्य दुर्वचतया च तत्कारणतया निर्विकल्पकल्पनं तु न भवति। अतो विशिष्टज्ञानकार्यबलात् ब्रह्मनिर्विकल्पकानुमानप्रत्याशाया नावसरः। सर्वसंसारसमूलोन्मूलनार्थमन्ते संपाद्यमानत्वेनाभिमतस्य ब्रह्मनिर्विकल्पकस्य सांसारिकविशिष्टज्ञानकारणत्वं कथमपि न भविष्यति। शास्त्रं प्रमाणमिति चेत्—शास्त्रं वृत्त्या वा समुदायतात्पर्येण वा न निर्विकल्पजनकम्। तथा निर्विशेषासिद्धेः वक्ष्यमाणत्वात्। शेषमखण्डार्थविचारे॥

"सन्मात्रोपलम्भः स्वरूपमात्रग्रहणं निर्विकल्पकम्" इति वदतश्च न नैयायिकैककण्ठ्यम्। "जातिगुणादीनां स्वरूपतो भिन्नत्वात्" इति विलिख्य, "भेदराहित्येऽपि देवोऽहमित्यादौ सामानाधिकरण्यप्रतीतिदर्शनात्" इत्येवं व्याहतलेखनं ग्रन्थाशयाग्रहणेन दूषणसंरम्भमात्रम्। अपृथक्सिद्धत्वस्य सामानाधिकरण्यप्रयोजकत्वे शरीरमहमित्यपि सामानाधिकरण्यापत्तिरिति दूषणं प्रथमपर्वण्येव श्रीभाष्ये निरस्तमस्ति। नीलो घट इति सामानाधिकरण्ये रूपं घट इति कस्मान्नेति प्रश्न उभाभ्यामपि परिहर्तव्यः। गोशब्दस्य जातिवाचिनो जातिविशिष्टव्यक्तिवाचित्वस्वीकारे जातिपदस्यापि तदस्तु इति प्रश्नः तार्किकेण यथा समाधीयते, तथैवेहापि। भिन्नसामग्रीवेद्येषु स्वरूपमात्रग्रहणमिति कुत्रोक्तम्? येन विशिष्टाविषयकनिर्विकल्पस्यासम्मते आपत्तिः स्यात्। भिन्नसामग्रीवेद्यपदार्थवैशिष्ट्यं न भासते इत्येतावता एक-

सामग्रीवेद्यवैशिष्ट्यबाधः कथम्? न हि घटस्य घटत्वस्य च विभिन्नसामग्रीवेद्यत्वम्। स्वरूपनिरूपकधर्मविशिष्टधर्मिग्रहणं इदमित्थमित्याकारकं सर्वत्र निराबाधमिति न विशिष्टाविषयकज्ञानप्रसक्तिः। तत्त्वमस्यादिवाक्यस्य निर्विशेषे एव तात्पर्यात् तावन्मात्रप्रतिपत्तिजनकत्वमस्तीत्येतत् अखण्डवाक्यार्थविचारे निराकरिष्यत एव।

अत्रेदमवधेयम्—स्वरूपं जतिगुणाद्यात्मकमिति कश्चित् पक्षः तद्विषयकं निर्विकल्पकमिति पक्षनिरासायानूदितः शतदूषण्याम्। शतभूषणी तु एतद्वादे, किं किं मतं निरस्यते; कः प्रधानपूर्वपक्षः; निर्विकल्पनिरासकश्रीभाष्यस्य कीदृशमवतरणमत्र उपन्यस्यत इत्येतत् सर्वमनवधाय, दूषणं सर्वं स्वपक्षदूषणमेवेति कृत्वा, सर्वत्र समाधाने संरभमाणा किमपि किमप्याह। स्वरूपस्य जातिगुणाद्यपेक्षया भेद एवेति शतदूषण्यामनुपदमेव वक्ष्यत इति किमर्थं शतभूषणी प्रयत्नं वहति। व्यावहारिकतत्त्वविषये सर्वत्र यथायथमव्यवस्थयैव व्यवहरतामद्वैतिनां कदाचित् भेदाभेदपक्षोऽप्यनुकूलश्चित्ते समुन्मिषत्येव।

अत एव वैशेषिकनिराकरणप्रसङ्गे जगन्मिथ्यात्व इवान्यत्रापि विषये बौद्धवासनावशतया शाङ्करभाष्ये, "इह तु शुक्लः कम्बलः" इत्यारभ्य "तस्मात् द्रव्यात्मकता गुणस्य" इति द्रव्याभेदं गुणादीनामुपसंहृत्य "एतेन कर्मसामान्यविशेष.मवायानां द्रव्यात्मकताऽव्याख्याता" इत्युक्तम्। यदि द्रव्यस्य गुणादिना साकमभेदोऽत्रानभिमतः स्यात्—न वैशेषिकप्रक्रियावैलक्षण्यं स्वमतस्योक्तं स्यात्। तत्रैव, "उभयथा च दोषात्" इति सूत्रे प्रमाणोपन्यासपूर्वकम्, "गन्धादयः परस्परं संहन्यमानाः पृथिव्यादयः" इति भामत्यामुक्तम्। कल्पतरौ च, "परस्परे गन्धादीनामनुप्रवेशात् द्रव्यसंज्ञां लब्धा, रसादयः पृथिवीभूत्वा गन्धं धारयन्ति, रूपादय आपो भूत्वा रसं धारयन्ती"त्यादि। उपरि च, "पूर्वं स्वमते स्थित्वा द्रव्यस्य गुणसंघातमात्रत्वमुक्तम्। इदानीं तु वैशेषिकदृष्ट्या द्रव्यं किञ्चिदभ्युपेत्य द्रव्यसामानाधिकरण्यप्रतीत्या गुणादेः द्रव्यमात्रत्वमुच्यत" इति। तस्मात् गुणगुण्यभेदोऽप्यद्वैतसंमत एवेति, शत-

भूषण्यां तत्खण्डननैर्भर्यमयुक्तम् । शतदूषण्यां तु आनेकात्मकत्वे वस्तुनः स्वाभिमतं निर्विकल्पकस्य निर्विशेषाद्वैतविषयकत्वं भज्येतेति द्रव्यस्य जातिगुणाद्यात्मकत्वमनभ्युपगम्यात्र विषये, "व्यवहारे भाट्टनयः" इति प्रवादमनादृत्य प्रत्यक्षस्य परमार्थाद्वैतविषयत्वं स्थापयितुमद्वैती य उदयुङ्क्त, तन्मतोपन्यास इति ॥ एवमुपरितनांशेष्वपि भाव्यम् । एतद्वादान्ते च शतदूषण्याशयः सङ्ग्रहीष्यते ॥

यत्तु—असंप्रज्ञातसमाधौ निर्विशेषात्मभानमिति—तत् योगशास्त्रे कस्मिन् वाक्ये कथितमिति प्रदर्श्यताम् । संप्रज्ञातासंप्रज्ञातशब्दार्थशोधने यावत् स्वीकर्तव्यमस्ति, तावतोऽधिकस्य यदि कश्चिदद्वैतवासनया कल्पनमभिमन्येत, तावता न तथैव महर्षिहृदयं भविष्यति । योगश्च सविशेषविषयको नैव भवतीति न कश्चित् वक्तुं पारयति । यावन्निर्विशेषं किञ्चिदसिद्धम्, तावत्, तद्विषयकोऽपि योगोऽस्तीति दुर्वचमेव । एतावत्तु योगशास्त्रतोऽवगम्यते, यत्—अभ्यासवैराग्याभ्यां प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपवृत्तिनिरोधे समाधिः संपद्यते । समाधिर्नाम अर्थमात्रनिर्भासं स्वरूपशून्यमिव ध्यानम् । अर्थाविशेषं ज्ञातृज्ञानयोर्भाने सत्यपि तत्स्मरणौपयिकसंस्काराधानप्रतिबन्धेन ज्ञेयमात्रैदम्पर्यप्रवृत्तस्मृतिसंतान इति यावत् । स च समाधिर्द्विविधः संप्रज्ञातः असंप्रज्ञातश्च । प्रथमश्चतुर्विधः सवितर्कः सविचारः सानन्दः सास्मितश्चेति । बाह्यस्थूलालम्बनविषयः सवितर्कः । सूक्ष्मतद्विषयः सविचारः । तन्मूलानन्दालम्बनः सानन्दः । अहमित्यभिमन्यमानदेहादिविशिष्टतया स्थितस्य स्वस्य ध्यानं सास्मितः । सर्वोऽयं संप्रज्ञातः सालम्बनः सबीजः । असंप्रज्ञातस्तु पूर्वोक्तालम्बनग्रहणविरामेण शुद्धात्मविषयकप्रत्ययाभ्यासरूपेण तत्संशीलनेन संपाद्यः समाधिः । वृत्तीनामुपरततया संस्कारमात्रमवशिष्यते । तदुक्तम्, "विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" इति । समाधिपादे च किञ्चिद् विवृतम्—चित्तस्य ध्याने प्रवृत्तस्य स्थूलग्रहणे शब्दज्ञानाभ्यामनुवेधः, तदा सवितर्का समापत्ति । अननुवेधेनार्थमात्रनिर्भासे निर्वितर्का । एवं सूक्ष्मविषये तन्मात्रादिप्रकृतिपर्यन्ते तदनुवेधे

सविचारा समापत्तिः। तदनुवेधाभावे निर्विचारा। निर्विचारवैशारद्ये यथावस्थितस्वरूपग्राहिणी ऋतम्भरा नाम प्रज्ञा। तदधीनसंस्कारस्यापि निरोधे आत्मविषयको निर्बीजः समाधिरिति। तस्मात् बाह्यालम्बनाविषयकत्वादसंप्रज्ञातत्वमिति न निर्विशेषविषयकत्वं तत्रेष्टम्। तत्त्वविषये योगशास्त्रोक्तप्रकारश्च भगवता बादरायणेन, "एतेन योगः प्रत्युक्तः" इति प्रतिक्षिप्त इति चेहानुसंधेयम्। अतोऽसदनुवादः शतदूषण्यामित्युक्तं विपरीतमिति। "अहं मनुरभवम्" इत्याद्यनुसन्धानं निर्विशेषमात्रविषयकमिति प्रतिज्ञामात्रेण न सिद्ध्येत्। अनुभवापलापस्यात्यन्तस्पष्टत्वात्। अहं पूर्वस्मिन् जन्मनि मनुरासमिति स्वर्थः शङ्क्येत। तत्तु "अहं कक्षीवान् ऋषिरस्मी" ति वर्तमानकालिकप्रत्यक्षबाधितैक्यपरवाक्यप्रदर्शनेनाविवक्षितत्वेन ज्ञापितः। अतो मदन्तर्यामी, मन्वन्तर्यामीत्यर्थवर्णनमदूष्यम्॥

यत्तु—शरीरे शरीरितादात्म्यानुसन्धानमदृष्टम्। किन्तु शरीरिणि शरीरतादात्म्यग्रानुसन्धानमेव। अतो वामदेवादीनां परमात्मतादात्म्यानुसंधानवादः कथमिति—तत्र शास्त्रतः परमात्मनि स्वान्तरात्मतया बुद्धे तदन्तर्यामिकत्वरूपतादात्म्यस्य शरीरभूते वस्तुन्यनुसन्धानं कथं न भवेत्? अदर्शनं तु लोके परमात्मन एवाज्ञानात् शरीरात्मभावज्ञानस्य सर्वथैवाग्रहणात्। यदि च शरीरे शरीरितादात्म्यग्रहणं नास्ति, कथं देहात्मभ्रम इति व्यवहारः? देहे आत्मभ्रमः तादात्म्यभ्रम इति खल्वेतदर्थः। "अनात्मन्यात्मबुद्धिर्या" इति च भगवान् पराशरः देहविषयकजीवतादात्म्यभ्रमं दर्शयति।

"संस्थानरूपत्वाद्यनुवृत्तिधर्मविशिष्टविशेष्यकज्ञानत्वे सविकल्पकत्वं गोत्वादिधर्मविशिष्टविशेष्यकज्ञानत्वमात्रत्वं निर्विकल्पकत्व" मित्यनन्वितपरिष्कारो बहिष्कार्य एव॥ यत्तु—संस्थानं विना संस्थानिमात्रप्रतीतीच्छासहकृतेन्द्रियसन्निकर्षः स्वरूपमात्रविषयकप्रत्यक्षं जनयतीति निर्विकल्पकसाधनम्—तदपि त्याज्यम्। ज्ञानं न पुरुषतन्त्रम्, किन्तु वस्तुतन्त्रमिति सुप्रसिद्धतया स्वीकृतं सुतरां प्रत्यक्षविषये दुरपह्नवम्। आह च

आचार्योदयनः, "यद्यबुभुत्सिते विषये ज्ञानसामग्रीमेव सा निरुन्ध्यात्, घटायोन्मीलितं चक्षुः पटं नैव दर्शयेत्। न त्वेष बुभुत्साया महिमा, यत् सत्यामपि सामग्र्यां तत्र न ज्ञानम्। किन्तु न तत्र संस्काराधायकः प्रत्ययः" इति। नैयायिकाः निर्विकल्पकम्, "न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्" इति प्रमाभिन्नं वदन्त एव अनुभवविभागद्वैविध्यस्य ग्रन्थदर्शितस्य निर्वाहाय विशेष्यावृत्तिप्रकारकत्वाभावः प्रमात्वमित्युपवर्णयन्तीति नेदं प्रामाण्यस्यापेक्षितस्य साधकम्। विशेष्यवृत्तिप्रकारकत्वं प्रामाण्यम्, तदभावोऽप्रामाण्यमित्युक्त्वा निर्विकल्पकमपि अप्रमावर्गेऽपि कश्चित् निवेशयेत्। यथावस्थितव्यवहाराननुगुणत्वादप्रमेत्यादि कश्चित् ब्रूयात्। न हि निर्विकल्पमात्रेण कश्चिद्व्यवहारः शक्यः। अत एव सविकल्पवत् निर्विकल्पस्य तार्किकादिग्रन्थेषु आकाराप्रदर्शनमिति किमनेन निर्वचनमात्रेण॥

निर्विशेषविषयनिर्विकल्पसाधनपरेण, "स्वप्रकाशत्वात् केवलं स्वत एव सिद्ध्यति" इति मध्ये लेखनमसङ्गतम्। तथा ब्रह्मणः स्वतः सिद्धेः श्रुतिगम्यत्वे स्वाधीनसिद्धिकत्वरूपधर्मविशिष्टब्रह्मबोधिकायाः श्रुतेः कथं निर्विशेषबोधकत्वम्? स्वेतराप्रकाश्यत्वमेव स्वतस्सिद्धिकत्वम्; ब्रह्म ब्रह्मेतराप्रकाश्यमिति तदर्थ इति चेत्—एवंरूपेण श्रुत्या ब्रह्मणि प्रकाश्यमाने ब्रह्मेतराप्रकाश्यत्वं कथम्? यदीतरेण स्वयंप्रकाशं ब्रह्म प्रकाश्यते, तदा अप्रकाशत्वं बाधितम्। यदि न प्रकाश्यते, तर्हि अप्रकाश्यत्वेन तत् ज्ञातमिति श्रुतिरनुवादमात्रम्। तथा च श्रुतिः न ब्रह्मणि, न वा तत्स्वतस्सिद्धत्वे प्रमाणमिति। इन्द्रियजन्यनिर्विशेषविषयकनिर्विकल्पाभावेऽपि शब्दजन्यनिर्विशेषविषयनिर्विकल्पप्रत्यक्षाङ्गीकारात् न दोष इत्यपि वार्तम्—शब्दजन्यप्रत्यक्षस्य खण्डितत्वात्। शक्तेर्लक्षणाया वा निर्धर्मकवस्तुन्ययोगात् अविषये तात्पर्यविषयत्वायोगाच्च शब्दात् तत्प्रतीतेरप्ययोगात्। भ्रमज्ञानस्य धर्म्यंशे प्रमात्वम्, धर्मांशे भ्रमत्वमित्यस्तु। तावता तस्य ज्ञानद्वयरूपत्वं प्राभाकरादिवत् न भवदिष्टम्। इदमंशे चाक्षुषवृत्तिः, रजतांशेऽन्तःकरणवृत्तिरिति वृत्तिद्वयस्वीकारेऽपि इदमिति तद्देशतत्कालसंबन्धि-

त्वेन वस्तुग्रहणस्य परिभाषाद्युक्ततया न निर्विशेषग्रहणप्रसक्तिः। शुद्धवस्तुमात्रग्रहणेऽभिमन्यमानेऽपि इदमथस्य शुक्त्यादेर्वस्तुतः शुक्तित्वादिविशिष्टतया न निर्विशेषवस्तुग्रहणं तत्। विशेषाग्रहणमात्रेण च न निर्विशेषत्वसिद्धिः॥ यत्तु—इदन्त्वादिकं प्रतीतमपि श्रुतिविरुद्धत्वादसत्यमिति—तत् शुक्तिरूपधर्मिविषयेऽपि भवन्मते समानमिति प्रत्यक्षविषयः सर्वोऽपि मिथ्यैवेति न प्रत्यक्षं निर्विशेषसत्यकिञ्चिद्विषयकं भवितुमर्हति। सन्मात्रग्राहित्वपक्षश्च समनन्तरवादे विचारयिष्यते। न वयमैन्द्रियकं निर्विकल्पकं निर्विशेषे ब्रूमः; अपि तु शाब्दमेवेति ऐन्द्रियकप्रत्यक्षस्य सविशेषविषयकत्वव्यवस्था आम्रप्रश्ने कोविदारकथनमेवेति चेत्—व्याहतमेतत्। भवतैवैतद्वादारम्भे, विशिष्टबुद्धिः सर्वा स्वरूपज्ञानपूर्विकेति नैयायिकनिर्विशेषमद्वैतिभिरपि निर्विकल्पकैन्द्रियकप्रत्यक्षस्वीकारकथनात्। ईदृशभवादृशव्याहतवादव्युदासायैव नैयायिकनिर्विकल्पखण्डनच्छलेन भवदीयान्तरतत्पक्षपातस्यापि निरसनमिति नेदमस्थाने। एवञ्च सन्मात्रग्राहिप्रत्यक्षभङ्गोऽपि कया चिद्विधया कृतो भवतीत्यपीदमावश्यकम्॥

यत्तु—शाब्दमेव निर्विकल्पकमद्वैतीष्टमिति—तत्र कोऽसौ शब्दः तथा बोधजनकः? तत्त्वमसीत्यादिरिति चेत्—सर्वत्र तच्छब्दस्य यादृशं वस्तु प्राक् कथितम्, तादृशतत्परामर्शित्वस्वाभाव्यात् जगज्जन्मस्थितिलयकारणत्वतदौपयिकसर्वज्ञत्वसर्वशक्तित्वचिदचिद्विशिष्ट्यादिपरिकर्मितब्रह्मपरं तत्पदम्, त्वमिति आभिमुख्यविशिष्टचेतनवाचीति कथं निर्विकल्पकबोधः? अत एवास्माभिः प्रतीतविशेषणानां परित्यागेन शुद्धस्वरूपमात्रे लक्षणास्वीकारेण निर्विशेषपरत्वमिष्यत इति चेत्—एवं कल्पने किं प्रमाणम्? न चेदमेव वाक्यं तत्र प्रमाणम्; आत्माश्रयात्। शब्दातिरिक्तं तु प्रमाणं भवतापीदानीं नेष्टम्। अद्वैतसिद्धान्तं सिद्धं कृत्वा एवं हठात् श्रुतसर्वविशेषणत्यागे च भवन्मत एव भवदुक्तं स्वल्पपरिमाणोष्णीषानुगुणमधिकपरिमाणस्वशिरःकर्तनमापतति। भिन्नभिन्नत्वेन प्रमाणान्तरावसितयोर्वस्तुनोर्विरुद्धधर्मापलापेऽपि न धर्म्यैक्यं भवितुमर्हति। न जातु, 'घटः पटो भवती'ति वाक्यं साधु। घटत्वपटत्वरूपयोर्धर्मयोस्त्यागेऽपि व्यक्त्यैक्यस्यायोगात्। अधिकविस्तरश्चाखण्डार्थवादे॥

न च लोके किञ्चिन्निर्विशेषपरं दृष्टम्। सोऽयं देवदत्त इत्यनुभूयत इति चेत्—कथम्? तत्रापि तद्देशतत्कालसम्बन्धी तच्छब्दार्थः, इदमर्थश्च एतद्देशैतत्कालवर्तीति वाक्यस्य विशिष्टपरत्वमेव। ननु तद्देशतत्कालवर्तित्वविशिष्टस्य एतद्देशैतत्कालवर्तित्वविशिष्टेन साकमभेदो दुर्घटः, विशिष्टैक्ये विशेषणैक्यस्याप्यावश्यकत्वादिति चेत्—तर्हि नीलो घट इत्यत्रापि नीलत्वघटत्वयोर्भेदात् नीलत्वविशिष्टघटत्वविशिष्टयोरैक्यं दुर्घटमिति धर्मत्यागः स्यात्। इष्टापत्तिरेव समानाधिकरणवाक्येषु सर्वेष्विति चेत्—तर्हि किमिति सोऽयं देवदत्त इत्युदाहरणान्वेषणम्? परसंमतत्वादिति चेत्—न कश्चिदद्वैतवासनावासितान्तःकरणादन्यः सोऽयमित्यत्र धर्मत्यागवादी परोऽस्ति,। किञ्च घटे नैल्यमिति वाक्यमिव नीलो घट इति वाक्यमपि घटविशेष्यकनैल्यप्रकारकसंशयनिवर्तकं न वा। आद्ये, कथं नीलत्वघटत्वत्यागेन धर्मिमात्रभानम्? अन्त्यस्तु पक्षोऽनुभवविरुद्धः। घटे नैल्यमिति व्यधिकरणवाक्येऽप्यनुपपत्तिर्भवत्प्रक्रियया समस्त्येव। घटत्वविशिष्टनिरूपिताधेयतायाः नैल्ये दुर्घटत्वात्। विशिष्टनिरूपिताधेयता हि तत्रैवोचिता, यत्र विशेषणनिरूपितापि सा भवितुमर्हति। न च घटत्वनिरूपिता स्यात् नैल्ये आधेयता, अतः सर्वत्र विशेषणत्याग एव। एवं नैल्यत्वरूपधर्मविशिष्टे घटवृत्तित्ववैशिष्ट्यस्य दुर्घटत्वात्, अन्यथा नैल्यत्वेऽपि घटवृत्तित्वापातात् सर्वविशेषणत्याग एवेति कुत्रापि नान्विताभिधानम् अभिहितान्वयो वा। ततश्च वाक्यसामान्यं धर्मिमात्रोपस्थापकमिति विवक्षितार्थाबोधकत्वादप्रमाणमेव भवेत्। तस्मात् सोऽयं देवदत्त इति वाक्यमपि न विशेषणरहितधर्मिमात्रबोधकम्। अन्यथा तद्देशतत्कालवर्ती एतस्मादन्य इति विपर्ययनिवर्तकत्वाभाव प्रसङ्गात्। कथं तर्हि तद्देशविशिष्टे एतद्देशविशिष्टत्वमिति चेत्—किमेककालावच्छेदेनोभयदेशसंबन्धो न भवतीति शङ्क्यते, किंवा एकदेशावच्छेदेन नानाकालसंबन्धो न भवतीति, किंवा एतद्देशस्यापि तद्देशसंबन्धित्वाभावे तन्न भवतीति। नाद्यः; देशवत् कालस्यापि पृथग्भूतस्य तत्रैव भानात् तत्कालावच्छेदेन तद्देशसंबन्धी, एतत्कालावच्छेदेनैतद्देशसंबन्धी-

त्येव तदर्थात् कालभेदेन विरोधपरिहारात् । न द्वितीयः, विरोधलेशस्याप्यप्रसक्तेः । एकस्यैव वस्तुनः एकत्रैव देशे चिरकालस्थितेरानुभविकत्वात् । न तृतीयः ; विशिष्टैक्ये कथ्यमाने विशेषणयोरप्यैक्यम्, आधाराधेयभावो वा कथ्यत इति नियमाभावात् । अतः प्रागनुभूतदेशकाल तत्संबन्धदेवदत्तानामत्र प्रतीतौ अविशेषेण स्फुरणात् त्याज्यस्य कस्याप्यभावात् न लक्षणालेशोऽपि इत्युदाहरणाभावादपि तत्त्वमसीति वाक्यं विशिष्टार्थविषयकमेवेति न शब्दतोऽपि निर्विकल्पकसिद्धिरित्यलमत्र ।

इदमत्रावधेयम्=शतदूषण्यां निर्विकल्पकभङ्गवादे प्रथममद्वैतिना निर्विकल्पप्रत्यक्षस्य सर्वाङ्गीकृतत्वात् तेन निर्विशेषब्रह्मसिद्धिरिति स्वपक्ष उपक्षिप्तः । अथ वैयाकरणमते सर्वत्र शब्दानुवेधाङ्गीकारात् कथमविशिष्टविषयापरोक्षज्ञानमिति शङ्कायां शब्दानुवेधपक्षः तेनैवाद्वैतिना दूषितः । अतो निर्विकल्पकं स्वरूपमात्रविषयकमिति चोक्तम् ।

अथ भाट्ट-भास्करादिभेदाभेदवादिमतरीत्या शङ्का—अयं घटः, अयं शुक्ल इत्यादिसविकल्पे स्वरूपे जातिगुणाद्यात्मकत्वं सामानाधिकरण्यबलात् विषयीभवति । एवं जातिगुणाद्यात्मकमेव सदपि स्वरूपं निर्विकल्पके न तथा तत्तदभिन्नतया गृह्यते । अथापि अनेकात्मकमेव तत् स्वरूपतो गृहीतमिति नाद्वैतविषयकं निर्विकल्पकम्, किन्तु अनेकविषयकमिति । तत्र—सामानाधिकरण्यबलादभेदे, आत्मा मनुष्यो जात इत्यादिसमानाधिकरण्यबलात् शरीरात्मनोरप्यभेदापत्त्या स्वरूपस्य जात्यादितो भेद एव प्रामाणिक इति न निर्विकल्पकभातं स्वरूपं जात्याद्यात्मकम्; अपि तु निर्विशेषमेकमेवेत्युक्तम् ।

अथ नैयायिकेन जात्यादीनां सर्वेषामेव विशेषणविशेष्यभावं विना भाने आशङ्किते निर्विकल्पसविकल्पवैलक्षण्यं न स्यादिति तदपि खण्डितम् ।

अथ जात्याद्यविषयकस्वरूपमात्रविषयकनिर्विकल्पकस्वीकारे नीलपीतादिनिर्विकल्पकज्ञानभेदे भासमानानां स्वरूपाणां भिन्नत्वात् सर्वं निर्विकल्पमेका-

द्वितीयस्वरूपविषयकमिति न सिद्ध्यतीति पुनराशक्यम्—एकस्यैव स्वरूपस्य सर्वनिर्विकल्पकविषयत्वेऽपि नीलपीतादिनानाविकल्पोत्पत्तेः तत्तद्वासनाप्रादुर्भावरूपसहकारिवैलक्षण्यादेव सिद्ध्या वासनायाश्च पूर्वपूर्वविकल्पाधीनतया न निर्विकल्पज्ञानभेदेन विषयभेदस्यावश्यकता। बाह्यविषयापलापिना बौद्धेनापि विषयाभावेऽपि वासनावशादेव विकल्पवैचित्र्यं स्वीकृतमस्ति। अतो निर्विकल्पभेदेन विषयभेदो नापेक्षित इति परिहृत्य सर्ववादिसंमतस्य निर्विकल्पकस्याद्वैतिसंमतनिर्विशेषवस्तुविषयकत्वमन्तरा न निर्वाह इति अद्वैतिमतमुपसंहृतम्।

एवंप्रवृत्तपक्षखण्डनपरतया च पराभिमतनिर्विकल्पकनिरासपरश्रीभाष्यग्रन्थोऽवतारितो व्याख्यातश्च। एवञ्च श्रीभाष्यग्रन्थः नैयायिकनिर्विकल्पकनिरासकमिवाद्वैतानुयाय्युत्प्रेक्षितनिर्विकल्पनिरासपरश्च। अतः सन्मात्रग्राहिप्रत्यक्षोपन्यासप्रकार इवायमपि कश्चिदद्वैतानुयाय्युपन्यस्तः निर्विकल्परूपब्रह्मविषयकैन्द्रियकप्रत्यक्षोपन्यासप्रकारः। अद्वैतपरिशेषौपयिकाः सर्वेऽपि तत्तदुत्प्रेक्षाप्रकाराः परस्परविरुद्धा अपि हि सिद्धान्तश्रद्धया सामोदं परिगृह्यन्ते। एवं शतदूषणीगतिमविदुषा, 'आम्रान् पृष्टः कोविदारान् आचष्टे' इति न्यायमनुसरति शाब्दनिर्विकल्पवादिनामद्वैतिनां पुरस्तात् ऐन्द्रियकनिर्विकल्पकव्यवस्थेति व्याहतवादसंरम्भः शतभूषण्या क्रियत इति शतदूषण्युक्तं सुस्थम्॥

निर्विकल्पमुररीकृतं बुधैरन्यथा न सविकल्पधीरिति।
निर्विशेषविषयं न चेदिदं का नु हानिरिति किञ्चिदुच्यताम्॥
निर्विशेषशशशृङ्गभूषणं निर्विकल्पकसरोजमास्थितः।
आनुरूप्यघटनात् परोभवेदद्भुतार्थनिपुणः परो विधिः॥

---

श्रीः

# सन्मात्रप्रत्यक्षभङ्गप्रसाधनम्

जयन्ति सन्तः सन्मात्रग्राहिणोऽसद्वगुदासिनः ।
अध्यक्षागमसंवेद्यसद्विशेषानपह्नवात् ॥

प्रत्यक्षं सन्मात्रग्राहीति वादिनः प्रष्टव्याः । प्रत्यक्षमिदं चैतन्यरूपं ब्रह्मैव वा, अन्तःकरणवृत्तिर्वा । आद्ये तस्य न सन्मात्रविषयकत्वम्, स्वस्य स्वविषयत्वायोगात् । ब्रह्मणो वृत्तिव्याप्यत्वमेव, न फलव्याप्यत्वमिति पौनःपुन्येन लेखनाच्च । चैतन्यस्येन्द्रियाजन्यतया ऐन्द्रियकप्रत्यक्षं सन्मात्रग्राहीत्युक्तेरयोगाच्च । नान्त्यः, वृत्तिरियं ब्रह्मविषयिणी तत्त्वमसिवाक्यार्थप्रत्यक्षसमानाकारेति लौकिकैतद्वृत्तिबलादेव मुक्तिप्रसङ्गात् । तथाच उपरि विकल्पाद्युत्पत्तिरेव न भवेत्; अविद्याया एव निवृत्तेः । अनिवृत्तौ अखण्डाकारशाब्दसाक्षात्कारादपि तुल्ययोगक्षेमान्न तन्निवृत्तिः स्यात् । अप्रामाण्यज्ञानास्कन्दितत्वात् न निवर्तत इति चेत्—तस्याप्रामाण्यज्ञानस्याकार उच्यताम् । अप्रामाण्यं प्रामाण्याभावः, तद्वति तत्प्रकारकत्वरूपप्रामाण्याभावश्चेत्—तत्त्वमसिवाक्यार्थज्ञानस्याप्यप्रामाण्यापत्तिः; तत्र प्रकाराभावात् । तदभाववति तत्प्रकारकत्वरूपं यदप्रामाण्यम्, तज्ज्ञानास्कन्दितत्वं दुर्वचम् । सन्मात्रग्राहिज्ञाने किञ्चित्प्रकारकत्वाभावात् । अद्वितीयत्वाद्यवगाहित्वाभावादविद्यानिवर्तकत्वं नास्तीति चेत्—तत्त्वमसीतिवाक्यजन्याखण्डाकारप्रत्यक्षेऽपि तुल्यमेतत् । अतः सन्मात्रग्राहिप्रत्यक्षपक्षे संसारानुवृत्तिः नैव प्रसजेदिति वृश्चिकभिया पलायमानस्याशीविषमुखे निपातः । प्रत्यक्षविरोधस्य शास्त्रे स्वीकारो मा भूदिति हि शास्त्रप्रत्यक्षयोरेवं समानविषयकत्वं साध्यते । तथा च शास्त्रस्य वैयर्थ्यमेव; संसारानुवृत्त्यभावप्रसङ्गश्चेति । कथञ्च, "पराञ्चि खानि व्यतृणत् स्वयम्भूः तस्मात् पराङ् पश्यति नान्तरात्मन्" इति श्रुतिविरोधेन सन्मात्रस्येन्द्रियग्राह्यत्वमिष्यताम् ॥

किञ्च रज्ज्वादौ अहिभूदलनाम्बुधारादिवत् घटः सन्, पटः सन् इत्यत्र सति घटादिप्रतीतिरिति घटादिर्मिथ्येति तावदस्तु। घटादौ प्रत्यक्षविषयत्वं कथं वार्यते। न हि अहिभूदलनादि तत्राप्रत्यक्षम्। सर्पं साक्षात्करोमीत्यादि-प्रतीतिनिर्वाहार्थमेव हि प्रातिभासिकपदार्थः स्वीकृतः। यदि तत्र रज्जुविषयिणी अन्तःकरणवृत्तिरन्या, अह्यादिविषयिणी अविद्यावृत्तिरन्या, तथेहापीति सन्मात्र-विषयकवृत्तौ न घटादेर्भानमित्युच्यते—तन्न—प्रातिभासिकानामिव घटादेरपि साक्षिभास्यत्वप्रसङ्गात्। सर्वस्यापि प्रातिभासिकतुल्यमारोप्यमाणतया अविद्या-वृत्तेरेव सर्वत्र सुवचतया सन्मात्रस्य च स्वत एव प्रकाशमानतया तदतिरिक्तान्तः-करणवृत्तिकल्पन एव प्रमाणाभावाच्च। घटादीनां चाक्षुषत्वाद्यस्वीकारे चक्षुरादी-न्द्रियकल्पकप्रमाणाभावाच्च। रूपादिग्रहणव्यवस्थानिबन्धनं हि चक्षुरादिविभिन्ने-न्द्रियकल्पनम्। ग्राह्यार्थवैलक्षण्याभावे च किमिति विभिन्नेन्द्रियकल्पनेति। घटा-दिभ्रमस्य च तत्तत्कालभाविप्राचीनवासनावैचित्र्यायत्तत्वस्यैव वक्तव्यतया घटचक्षु-स्सन्निकर्षादेः कारणत्वकल्पनं च व्यर्थम्। अतश्चान्धबधिराद्यभावापादनं श्रीभाष्यकृतं सुस्थम्।

अपि च, घटः सन्, पटः सन् इत्यादिप्रतीतेः, अयमहिः, इदं भूद-लनमिति प्रतीतितुल्यत्वं दुर्वचम्। यद्देशकालावच्छिन्नरज्जुविशेषे अहिबुद्धिः तद्देशाद्यवच्छिन्ने तस्मिन्नेव हि भूदलनबुद्धिरपि। इह त्वेकत्र सति घटबुद्धिः, अन्यत्र क्वापि सति पटबुद्धिरिति वैलक्षण्यम्। एवञ्च घटः सन् इति प्रतीते सद्वस्तुन्येव यदि, 'पटः सन्नयम्, न तु घट' इति बाधबुद्धिः स्यात्, घटो बाधितो भवेत्; एवंभूतबुद्ध्यन्तरेण पटस्यापि क्रमात् बाध्यत्वमिति च स्यात्। न त्वेवम्॥

यदि घटस्य पटभेदरूपत्वात् घटचक्षुःसन्निकर्षकाले च पटरूपप्रतियोगि-ज्ञानस्याभावात् न घटस्य प्रत्यक्षविषयत्वमिति—तर्हि सन्मात्रप्रत्यक्षमपि न भविष्यति। सन्मात्रस्य नेति नेतीति ग्राह्यस्य सर्वव्यावहारिकप्रातिभासिकपदार्थ-भेदरूपतया भेदप्रतियोगिनां सर्वेषां ज्ञानं विना तद्ग्रहणायोगात्। शुक्तौ इदं

रजतमिति बुद्धौ जातायां नेदं रजतमिति बाधबुद्धौ चोत्पन्नायां तत्र पूर्वगृहीत-प्रातिभासिकरजतभेदस्य शुक्तौ गृह्यमाणस्य प्रातिभासिकं रजतं प्रतियोगि। इह तु सन्मात्रे सर्वस्य प्रपञ्चस्याध्यस्ततया व्यावहारिकमपि सन्मात्ररूपभेद-प्रतियोगि। तज्ज्ञानाभावाच्च भेदग्रहणायोगात् भेदात्मकं सन्मात्रं कथं गृह्येत। अथ भेदस्य भेदत्वेन ग्रहणे कर्तव्य एव प्रतियोग्यपेक्षेति चेत्—सिद्धं तर्हि घटादेरपि प्रथमत एव प्रत्यक्षम्।

यद्येवं घटादिकं प्रथमं न गृह्यते, तर्हि पश्चाद्वा कथं गृह्यते। यदि पश्चादपि न गृह्यते? तदा घटोऽस्ति पटोऽस्तीत्यादिप्रतीतीनां वैलक्षण्यं न स्यात्। अश्वादिविशेषज्ञानाभावात् अश्वार्थित्वादिकमपि न स्यात्। सन्मात्र-ज्ञानस्याश्वार्थित्वापादकत्वमसंभावितम्। संभवे च महिषोऽस्तीति प्रतीतावप्यपेक्षितसन्मात्रज्ञानसत्त्वात् अश्वार्थी प्रवर्तेत। चाक्षुषश्रावणादिप्रत्यक्षसामान्यस्य समानविषयकत्वादन्धबधिराद्यभावश्च प्रसज्यते। ननु प्रथमप्रत्यक्षे घटादेरविषयत्वेऽपि तदनन्तरं कारणान्तराधीनं घटादिज्ञानं जातम्। तस्यायमभिलापः, घटोऽस्तीति। तदेव तु ज्ञानं ज्ञानान्तरविलक्षणमिच्छाप्रवृत्त्यादि-विशेषहेतुरिति न दोष इति चेन्न—तज्ज्ञानं भ्रान्तिरभ्रान्तिर्वा? उभयत्रापि तज्जनकं किम्? भ्रान्तिश्चेत्—कुत्र तद्विषयकप्रमा? सर्वत्र भ्रान्तेः प्रमापूर्वकत्वात्। वास्तवरजतप्रमाधीनतत्स्मृत्यभावे रजतभ्रमादर्शनात्। पूर्वपूर्वभ्रान्त्यधीनवासनवशादुपर्युपरि भ्रान्तिप्रादुर्भाव इति चेत्—अस्तु नाम। तद्वासनोद्बोधकं किम्? सर्वस्यापि प्रत्यक्षस्य सन्मात्रविषयकतया प्रत्यक्षवैचित्र्यमूलको हि विचित्रवासनोद्बोधो दुर्वचः। एवञ्च अश्वोऽस्तीति भ्रान्तिप्रयोजक-सन्मात्रप्रत्यक्षकाले महिषोऽस्तीति भ्रान्तिरेव किं न जायेत? अनुमानादीनां प्रत्यक्षमूलकत्वात् प्रत्यक्षे यावत् वैलक्षण्यं नेष्यते, तावत् प्रमाणान्तराधीन-मुद्बोधवैलक्षण्यमपि दुर्भणम्। अत एवानुमानादिजन्या घटादिभ्रान्तिः, न तु स्मृतिरूपेत्यपि वक्तुमशक्यम्। प्रत्यक्षवैलक्षण्याभावे घटानुमापकविलक्षण-हेतुज्ञानमेवेदानीमित्यत्र नियामकाभावेन घटोऽस्तीत्यनुमानस्थाने पटोऽस्ती-

त्यप्यनुमानसंभवात् । अविशेषात् सर्वं ज्ञानं सर्वविषयकं वा भवेत् । तत्रानौचित्ये चिन्त्यमाने च सर्वं पुनः सन्मात्रविषयकमेव भवेत् । सर्वविषकत्वे च अथार्थी महिषदर्शनेऽपि प्रवर्तेत । सन्मात्राधिकविषयकज्ञानस्यैवाभावे च सर्वलोकानुभूयमानसर्वव्यवहारबाधप्रसङ्गः । अनुभूयमानस्य व्यवहारस्य कथमप्यनिर्वाहे च तथा निर्वहणासमर्थोपन्यस्यमानं मतमखिलैरप्यनादरणीयमेव स्यात् । तस्मात् सुष्ठूपपन्नं श्रीभाष्यकृतं सन्मात्रविषयकत्वे प्रत्यक्षस्य घटोऽस्तीत्यादिप्रतीत्यवैलक्षण्य—अश्वार्थिमहिषदर्शनानिवृत्ति - प्रतिनियतघटादिशब्दमात्रास्मरणाद्यापादनम् ॥

एतेन- अनुपलब्धिरूपाभावप्रमाणेन वा अनुमानेन वा पटादिभेदरूपघटादिज्ञानं भवितुमर्हति । प्रत्यक्षस्य प्रतियोगितदभावोभयविषयकत्वायोगेऽपि प्रमाणान्तरस्यानेकविषयकत्वसंभवात् अनुमाने पक्षसाध्याद्यनेकविषयकत्वदर्शनादिति निरस्तम् । अनुपलब्ध्यनुमानादिग्राह्याणां तत्तत्पदार्थानामपि तत्तदितरप्रतियोगिकभेदरूपतया प्रतियोगिग्रहणाभावे तत्तद्ग्रहणायोगात । पर्वतो वह्निमानित्यनुमित्यां पर्वतेतरेषां प्रतियोगिनां भानस्यानुभवविरुद्धत्वेन तद्भेदरूपपर्वतग्रहणायोगात् । किञ्च घटोऽस्तीतिज्ञानं घटानुमितिरूपञ्चेत्, तदा पटरूपप्रतियोगिमात्रज्ञानमस्ति, उत घटेतरसर्वज्ञानम् । नाद्यः ; पटमात्रज्ञाने पटभेदस्य कुड्येऽपि सत्त्वेन कुड्यमस्तीत्याकारकमेव तत् ज्ञानं किं न स्यात् । घटेतरसर्वपदार्थरूपप्रतियोगिसामान्यज्ञानञ्च न कस्यापीति तद्भेदरूपघटज्ञानं नैवोदेष्यति । न च तावज्ज्ञानमसर्वज्ञस्य सम्भावितम् । अनुपलब्धिजन्यञ्चाभावज्ञानमधिकरणप्रतियोग्युभयाविषयकं न दृष्टम् । अधिकरणस्याधिकरणतया प्रतियोगिनश्च प्रतियोगितया भानं विना अभावज्ञानमनुपलब्धिप्रयोज्यं न दृश्यते इति घटोऽस्तीत्यनुभवे तत्तदभानात नानुपलब्धिः कारणं भवितुमर्हति ।

किञ्च अनुपलब्ध्यनुमानादिकं भेदग्राहिप्रमाणं भेदरूपघटादिना सह अस्तित्वं गृह्णाति, न वा ? अन्त्ये घटादिग्रहेऽपि सन्मात्राग्रहात् सन्मात्रस्या-

नुवर्तमानत्वं घटादेर्व्यावर्तमानत्वमिति वैलक्षण्यं न स्यात्। व्यावर्तमानतया सन्मात्रमपि मिथ्या भवेत्। आद्ये, सन्मात्रग्राहि तत् प्रमाणं तदैव प्रतियोगिग्रहणसापेक्षभेदग्रहरूपं कथं स्यात्? पश्चादेव भेदग्राहीति चेत्—विरम्यव्यापारापत्तिः। क्षणिकत्वादनुपलब्धिजन्यज्ञानस्य पश्चात् ग्राहकत्वासम्भवश्च। अनुपलब्धिः सन्मात्रग्रहणार्थं प्रवर्तते। ततः प्रागेव प्रतियोगिग्रहादिसामग्रीमेलनात् शक्नोत्येव तदैव भेदमपि ग्रहीतुमिति चेत्—एवमिन्द्रियमपि पूर्वजातप्रतियोगिग्रहादिसापेक्षं सत् सन्मात्रं भेदञ्च स्वावसरे गृह्णीयात्। तथाच पटादौ प्रत्यक्षाभिमानमात्रमिति न युक्तम्॥

यत्तु—घटत्वं पटादिव्यावृत्तिरेव, न तु जातिरतिरिक्तः पदार्थ इति—तत् सत्यम्। तावता अवयवसंस्थानविशेषरूपभावपदार्थातिरिक्तेयं पटादिव्यावृत्तिरित्यत्र न प्रमाणम्। भावातिरिक्ताभावानङ्गीकारात्। अभावस्यातिरिक्तत्वेऽपि स्वरूपतस्तद्भाने प्रतियोग्यपेक्षा नास्तीत्येव स्वीकर्तव्यम्। अन्यथा पटादिकमजानता घटाद्यपि दुर्ग्रहं स्यात्। एकैकस्यापि पुरुषस्य सर्वज्ञत्वाभावेन परिमितज्ञानमपि न स्यात्। सर्वप्रतियोगिज्ञानाभावेन ज्ञानोदयायोगात्॥ भेदः स्वरूपं धर्मो वेति विकल्प्य घटस्य पटभेदरूपत्वं निराकुर्वता च घटः पटादिव्यावृत्तिरेवेति दुर्वचम्। पूर्वापरविरुद्धं तदा तदा भातमवसरानुसारेणोक्त्वा विजयाभिलाषो न तत्त्वस्थापनाय प्रभवति। तत् सिद्धं घटोऽस्तीत्यादौ विषयादिभेदो दुरुपपाद इति।

एवं प्रत्यक्षवेद्यं चेत् ब्रह्म, तत्र शास्त्रमप्रमाणं स्यात्। यदुच्यते-ब्रह्मविषयकत्वे समानेऽपि आनन्दात्मना ज्ञानाभावात् अस्ति वैलक्षण्यम्। अत एव घटादिभ्रमोऽपीति—तन्न—लोकप्रसिद्धे सन्मात्रे आनन्दत्वरूपधर्मविशेषप्रतिपादकं चेत् शास्त्रम्, तर्हि निर्विशेषप्रतिपादकत्वं न स्यात्। एतेन— अखण्डब्रह्म लोकतो न सिद्धमित्यपि निरस्तम्। सत्मात्रग्रहणमेव ह्यखण्डग्रहणम्। तत् कथमसिद्धमिति॥

घटः सन्, पटः सन् इत्यनुवर्तमानत्वात् सत् सत्यम्। व्यावर्तमानत्वात् घटादिर्मिथ्येति च न युक्तम्। घटोऽसन् इत्यत्र घटस्यानुवर्तमानत्वात् सतो व्यावर्तमानत्वाच्च विपरिवर्तप्रसङ्गादिति शतदूषण्युक्तोपरि, "नासतो विद्यते भावो नाभावो विद्यते सतः" इति श्रीगीतावचनोदाहरणेन किमप्यनन्वितमेवोच्यते। गीतावचनं तु पूर्वापरसन्दर्भविरोधात्, 'घटादेरसतः अनुवृत्तिर्नास्ति, सतः व्यावृत्तिर्नास्ति' इत्यर्थकं न भवतीति विमृश्य, सांख्यादिमतसत्कार्यवादपरत्वमप्यसङ्गतमिति चालोच्य शाङ्करभाष्याद्यर्थमुपेक्ष्य प्रकृतयोर्देहात्मनोर्मध्ये देहस्य न स्थैर्यम्, आत्मनो न विनाश इत्येवम्परं श्रीगीताभाष्य एव व्याख्यातम्। घटोऽसन्, पटोऽसन्, पटो नष्टः इत्यादौ सतो व्यावृत्तेः स्पष्टतया प्रसञ्जितस्य परिहारस्तावन्न लक्ष्यते। ननु "न सन्" इति नञर्थविशेषणतया सतोऽनुवृत्तिरस्त्येवेति चेत्—तर्हि घटोऽपि सर्वत्रानुवर्तमान एव। 'घटः सन्' इत्यादौ घटानुवृत्तिर्निर्विवादा। 'पटः सन्' इत्यादावपि तदनुवृत्तिरस्ति। पटस्य घटादिभेदरूपतया पटादितत्तत्प्रतीतौ प्रतियोगिविधया घटादेर्भानस्याप्यावश्यकत्वात्। न च पटोऽस्तीत्यत्र पटेतरभेदास्तित्वग्रहणमेव परमार्थः। तत्र घटस्य पटेतरत्वेन प्रवेशोऽपि न घटत्वेन विशिष्य प्रवेश इति वाच्यम्—तथा सति तत्र इतरत्वप्रतियोगितया भासमानः पटः केन रूपेण गृह्यत इति विवेचनीयत्वात्। तत्र पटत्वं जातिरिति चेत्—उक्तिविरोधः। प्रागेव च तद्युक्तं स्वीकर्तुम्। तस्य पुनस्तदितरभेदरूपत्वोक्तौ आत्मश्रयादिदोषश्च। एवं पटग्रहणं भेदग्रहणरूपमिति प्रतियोगिग्रहणानन्तरं तद्भानमेव किल भवदिष्टम्। एवञ्च पटादिप्रतीतिसामान्ये घटस्य प्रतियोगिविधया, घटोऽस्तीत्यत्र साक्षाच्च घटस्य भानात् सर्वत्रानुवृत्तिरेव घटस्येति न मिथ्यात्वं स्यात्।

एवं घटः पृथिवी, घटो द्रव्यम्, घटो मृत्, घटः सन् इत्यादौ व्यावर्तमानतया पृथिव्यादेर्मिथ्यात्वं घटस्य सत्यत्वं च स्यात्। एवं रज्जुभूदलनाम्बुधाराः पृथक् पृथक् गृहीत्वा, अयं सर्पः, अयं सर्पः, अयं सर्प इति ग्रहे

इदमर्थानां भिन्नतया व्यावर्तमानत्वात् सर्वत्र सर्पानुवृत्तिदर्शनात् तेषां मिथ्यात्वं सर्पसत्यत्वं चापद्यते । तत्र धर्मिणां भिन्नभिन्नत्वमिति चेत्—घटः सन्, पटः सन् इत्यत्रापि तुल्यम् । न च सर्वप्रतीत्यनुवृत्तिः सतो भवद्भिरिष्यते । 'नीलो घटः', 'सत्यं ज्ञानमनन्तं ब्रह्म' इति समानाधिकरणवाक्येषु अस्तीत्यध्याहारे अखण्डवस्तुबोधे क्लेशं विमृश्य तत्त्वमसीत्यादौ धातुश्रवणस्थले कथञ्चित् क्लेशसहनेऽप्यन्यत्र, "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायं मनसिकृत्य, अध्याहारस्यानावश्यकत्वमुक्त्वा नीलत्व-घटत्व-सत्यत्वादिधर्माणाञ्च त्यागेन शुद्धधर्मिमात्रबोधस्य वर्णितत्वात् । एवञ्च सदनुवृत्तिं विना घटाद्यनुवृत्तिरस्तीति सन्मिथ्या स्यात् । एवमत्रास्तीत्यध्याहारस्यानिष्टौ घटः पटो नेन्यत्रापि तदनिष्टिरेवेति सद्व्यावृत्तिः घटाद्यनुवृत्तिश्च भाव्ये ।

एवमस्तीत्यनेन सद्रूपब्रह्मबोधं प्रतियतां पक्षे, 'तत्त्वमसी' त्यत्र तत्पदमपि व्यर्थम् । 'त्वमसी' त्यस्यैव 'सदेवेदमग्र आसीत्' इति प्रक्रान्तसन्मात्रजीवस्वरूपैक्यप्रतिपादनसमर्थत्वात् । एवं घट आसीत्, घटो भविष्यतीत्यादावपि सदननुवृत्तिर्भाव्या । न हि तत्रासीदिति धातूक्तं सन्मात्रं भवितुमर्हति, भूतादिकालानन्वयात् अन्यादृशसत्ताया एव वक्तव्यत्वात् । तत्रापि सन्मात्रग्रहणे, 'सदेव सोम्येदमग्र आसीत्' इत्यत्रापि धातुनैव तादृशसन्मात्रस्योक्ततया सदिति व्यर्थम् । तथा, आसीत्, भविष्यतीत्यादौ धात्वर्थे कालानन्वयेनान्यत्र तदन्वयस्वीकारे पचति, पक्ष्यति, अपाक्षीदित्यादौ क्लृप्तव्यवस्थाभङ्गप्रसङ्गः । धातोः क्रियावाचित्वं साध्यावस्थापन्नार्थवाचित्वमनुशासनाभिमतञ्च त्यक्तव्यं स्यात् । एवञ्च धातुलक्षणाभावेनाधातुत्वात् तिङ्विभक्त्यादिप्रत्ययानामसंभवः । बुभूषतीत्यादौ इच्छाद्यर्थान्वयासंभवश्च ।

एवं घटो जलं धारयतीत्येवं क्रियान्तरयोगेऽपि सदननुवृत्तिरनुसन्धेया । तस्मादनुवर्तमानत्वेन सतः सत्यत्वं दुरुपपादम् । विशिष्य चानुवृत्तिव्यावृत्तिस्वरूपे व्यावर्तमानत्वानुमानभङ्गप्रसाधने शोधयिष्येते इत्यलमत्र । एवं दृश्यत्वविषयेऽपि । प्रागपीदृशं दृश्यत्वं शोधितमेव ।

यस्तु—"सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते। प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥" इति भवन्मतश्लोकः, स नावश्यम्, 'सन्मात्रस्य प्रत्यक्षविषयत्वम्। न तु घटादेः' इत्यस्यापि साधकः। घटादिना सह अस्तीति सद्रूपब्रह्मग्रहणपक्षेऽपि तच्छ्लोकसामञ्जस्यात्। ब्रह्मणि प्रत्यक्ष-विदिते सिद्धे शास्त्रवैयर्थ्यमित्याशङ्क्य निष्प्रपञ्चत्वरूपाद्वितीयत्वांशस्य मानान्तरानवसितत्वात् तत्प्रतिपादनेन शास्त्रं सार्थमिति तदर्थात्। एतेन—'प्रत्यक्षं सद्वितीयं ब्रह्म ग्राहयति। अनुमानादिना च द्वितीयस्य मिथ्यात्वं वस्तुतोऽभावो न सिद्ध्येत्। अतो मानान्तराप्राप्ततत्परं शास्त्रम्' इति सिद्ध्या प्रत्युत सन्मात्रग्राहित्वपक्षप्रतिकूल एवायं श्लोक इत्यपि स्यात्। अस्तु यथाकथञ्चिदयं श्लोकः; किं तस्याप्रमाणस्यार्थशोधनेन ॥

प्रत्यक्षस्य सन्मात्रग्राहित्वे अश्वार्थिनो महिषदर्शने निवृत्तिर्न स्यादिति वर्णयतः श्रीभाष्यात्, 'घटपटादयः परस्परमभिन्नाः सद्बुद्धिविषयत्वा' दित्यर्थः कथं लभ्यते? तत् अबद्धं कृत्वा कुचोद्योद्योगः अनवसरः। एवमर्थश्च प्रत्यक्ष-बाधित इति कथनमप्यसमञ्जसम्। प्रत्यक्षस्य सन्मात्रविषयकत्वसमर्थकैः घट-पटादिभेदस्य प्रत्यक्षाविषयतया प्रत्यक्षबाधितत्ववर्णनायोगात्। अद्वैतिमते घटपटादीनां सति कल्पितत्वात् सत्यमिथ्याभूतयोरैक्यस्याप्रक्ततया, "घटाभिन्न-सदभिन्नः पटः" इति बुद्धिपूर्विका घटार्थिनः पटे प्रवृत्तिरिति न वक्तुं शक्यते। श्रीभाष्यार्थश्च प्रागेव व्युत्पादितः। अश्वार्थिनो महिषदर्शनं निवर्तकं कदा भवेत्? यदि महिषरूपमश्वभेदं विषयीकुर्यात्। प्रत्यक्षस्य भेदरूपमहिषग्राहक-त्वे च सदित्येव सद्दर्शनमिति तस्याश्वसाधारण्यात् कथं निवृत्तिरिति तदर्थे सति, तावता अश्वमहिषैक्यं कथमुक्तं भवति?

एवं बहुविधानुपपत्तिग्रस्तत्वादेव सद्रूपब्रह्मविषयकत्वं घटोऽस्तीत्यादेः दुर्वचमिति विवेचितवन्तः अर्वाचीना अद्वैतिनः अस्तीति क्रियाविशेषबोधनमेव सर्वतान्त्रिकाविशेषं संगिरमाणाः, ब्रह्मास्ति, घटोऽस्ति, (शुक्तौ) रजतमस्तीति प्रयोगेषु यथाक्रमं पारमार्थिकव्यावहारिकप्रातिभासिकसत्ताप्रतीतिं स्थापयन्त एकसत्तावादं स्वयमेवोपेक्षांचक्रिरे।

"स्वशरीरप्रकृतिपरिणामत्वात् सर्वेषां कार्याणां स्वस्याप्यौपचारिकं परिणामित्वम् इति सिद्धान्तावलम्बिनाम्" इति परिणामित्व औपचारिकत्वं सिद्धान्त इत्यर्थानुवाद आग्रहमेवाविष्करोति। औपचारिकत्वस्यास्माभिरनुक्तेः। एतत्तत्त्वमुपादानविचारे प्राप्स्यति वैशद्यम्। प्रकृते औपचारिकपदाघटनेन लेखनं भवदभिमतस्यात्यन्तोपयुक्तमिति तद्धटनमयुक्तमेव। तर्हि एकब्रह्मकार्यत्वाविशेषात् घटार्थिनः पटे प्रवृत्तिः कुतो नेति प्रश्नः कथं परिह्रियत इति चेत्—किं ब्रह्मपर्यन्तगमनेन? एकप्रकृतिकार्यत्वादविशेष इति शङ्का सांख्येन यथा परिह्रियते, एकाविद्यापरिणामत्वादविशेष इति शङ्का चाद्वैतिना यथा, तथैव। अश्वदर्शनं सन्मात्रविषयकत्वादेव प्रवर्तकं चेत्—महिषदर्शनमपि तावन्मात्रविषयकत्वात् अनिवर्तकम्; प्रत्युत प्रवर्तकमेवेत्यद्वैतिनामुपरि विहितं दूषण कथमन्यान् अस्कन्दिष्यति। अश्वादेः प्रत्यक्षविषयत्वात् अश्वत्वप्रकारकप्रत्यक्षत्वस्य यादृशप्रवृत्तिहेतुत्वम्, तादृशप्रवृत्तिहेतुत्वस्य महिषत्वप्रकारकप्रत्यक्षे प्रसक्त्यभावात्। यथा पुंस एकत्वेऽपि पुत्रत्वजामातृत्वपतित्वराजत्वादिप्रकारभेदायत्तबुद्धिभेदायत्तः प्रवृत्तिभेदः, तदा का कथा धर्मिस्वरूपेऽप्यंशतो भिन्ने घटपटादाविति। विवर्तोपादानत्वं भवन्मताभिमतं लोकानुभवदूरमत्यन्तासिद्धमिति प्रागेवोक्तम्; वक्ष्यते च॥

पञ्चीकरणप्रक्रियापरिशीलने शुक्त्यादावपि रजतांशसद्भावात् शुक्तौ रजतप्रतीतेः यथार्थत्ववाद्यसन्मते लोके प्रमाभ्रमनिर्वाहप्रकारः श्रीभाष्ये विशदं व्युत्पादित एवेति तदग्रहेण वा तद्ग्रहेऽप्याग्रहेण वा क्रियासमभिहारेणासंभावितानुपपत्त्युद्धाटकं पिष्टपेषणपर एव समाधातुमर्हति। अश्वार्थिनः सन्मात्रज्ञानस्य प्रवर्तकत्वे महिषदर्शनमपि प्रवर्तकमस्तु इति अस्मत्कृतमापादनं हि शुक्तौ इदं रजतमिति ज्ञानस्यापि सन्मात्रविषयकत्वध्रौव्यात्, वास्तवरजतज्ञानतौल्यात् तद्वदेव तत्र प्रवर्तकं स्यादिति भवन्मते दोषापत्तिं तुल्यनयात् दर्शयत्येव। तद्दोषपरिहारमार्गान्वेषिणा च भवता अस्मन्मते प्रतिबन्दिप्रदर्शनेन कथञ्चित् कृतार्थीबुभूष्यते। तत्रास्माभिर्वक्तव्यं समाधानं भवतैवोपरि, "कार्योपयोगिनो

रजतस्यासत्त्वात्" इति विलिख्यत एव । "यावदपेक्षितरजतलाभार्थमेव किं न यतत " इति तदुपरि भवत्प्रश्नस्तु विचित्रः । कार्यानुपयोगित्वे सिद्धे यावदपेक्षितलाभार्था कथं प्रवृत्तिः । न ह्यत्र सहस्रकामस्य तत्रैकलाभोऽपि न त्याज्य इति नयस्य प्रसक्तिरस्ति । सहस्रशुक्तिसंभरणेऽपि शुद्धरजतपृथक्करणस्याशक्यताया अन्यत्र निरूपितत्वात् । पृथक्करणशक्तः प्रकारान्तरेण रजतमलभमानः क्लेशेन शुक्तितो रजतमार्जयत्विति चेत्—शक्तः करोतु ; प्रयस्यतु कनकापगासैकतात् कनकमुत्क्रष्टुम् । कस्तद्वारयिष्यति ।

तत् सिद्धम्—शास्त्रस्य निर्विशेषब्रह्मपरत्व-जगन्मिथ्यात्वबोधकत्वं न बाध्यमिति ज्ञप्तये शास्त्रप्रत्यक्षाविरोधसंपादनाय प्रत्यक्षस्य सन्मात्रग्राहित्वपरिकल्पनप्रयासः प्राप्तार्थकत्वेन पुनः शास्त्रस्याप्रमाण्यापादक एव, वस्तुतः सन्मात्रविषयकत्वं प्रत्यक्षस्य न कथमपि च वक्तुं शक्यमिति ॥

विरोधे शास्त्रार्थं गणयति बुधो नेत्यत इमे
विरोधिप्रत्यक्षं विघटयितुमाश्चर्यमुदिताः ।
वियाताः अन्वीक्षां निखिलनिगमादीन्यपि तथा
निकृन्तन्तु स्वैरं निजमतबुभूषैकमुदिताः ॥

---

श्रीः

## भेददूषणभङ्गप्रसाधनम्

अपरिमितमहिम्नामङ्घ्रिपद्मं गुरूणा-
मवनमति विनेष्यन् भेदविद्वेषिणोऽयम् ।
अनृतजडपरिच्छिन्नेतरत् " नेति नेती "
त्यखिलमपलपन्तो भेदमेतत् य आहुः ॥

अद्वैतमास्थितैः सजातीयविजातीयस्वगतभेदरहितं ब्रह्मेति भेदशब्दः प्राक् वस्तुषु प्रयुक्त आसीत् । एवं भेदव्यपदेशभाजां वस्तूनामनिर्वचनीयत्वे

तैरभिप्रेयमाणे लोके भेदशब्दस्यान्योन्याभावे भूरिप्रयोगदर्शिभिः पाश्चात्यैः भेद इत्यन्योन्याभावमेव गृहीत्वा अनिर्वचनीयस्थापनाय तदपलापे महान् संरम्भः कृतः। एवं कृतवद्भिरेवान्ते सानुशयमुच्यते—"न वयं सर्वात्मना भेदमपलपामः, किन्त्वनिर्वचनीयत्वमेव तस्यैवं स्थापयन्तो व्यवहारोत्तीर्णताद-शायां तदभावमेव मन्यामहे" इति। एवञ्च यावत्प्रपञ्चसत्त्वं भेदोऽप्यस्तीति स्थिते प्रपञ्चानिर्वचनीयत्ववादतः कोऽयमन्यो भेदानिर्वचनीयत्ववादः। यदि घटपटादिरूपप्रपञ्चान्तर्गतपदार्थानां मिथो भेदोऽपलप्यते, तर्हि घटपटाद्यैक्यमेव संमन्तव्यं स्यात्। यदि ब्रह्मणि, "सत्यं ज्ञानमनन्त" मिति अनृत-जडपरिच्छिन्नभेदः श्रुत एवापलप्यते, तर्हि अनृताद्यैक्यात् ब्रह्मणोऽप्यसिद्धौ शून्यमेव स्वीकृतं स्यात्। द्वयोर्मिथो भेदापलापो हि नाम द्वयोः स्वीकारेण तन्मात्रनिषेध एव, यथा नीलघटयोर्भेदापलापे। ननु वस्तूनामभावा-देवाभेदो भेदश्च न स्तः। अत एव भामती, "न खल्वनन्यत्वमित्यभेदं ब्रूमः, किन्तु भेदं व्यासेधामः" इतीति चेन्न—तर्हि वस्तुमिथ्यात्वे सामान्येनैव मन्तव्ये किमिति भेदापलापप्रयासः। मिथ्याभूतं भेदमधिकृत्य च कोऽयं विचारः, भेदः स्वरूपं धर्मो वेति। एवं हि सति ब्रह्मणि अनृतादिभेदः स्वरूपं धर्मो वा। आद्ये ब्रह्म अनृतादिभेद इति सामानाधिकरण्येन व्यवहारा-पत्तिः। एवमनृतादिभेदवत् ब्रह्मेति व्यवहारानापत्तिः। एवमपि तस्मिन् इष्यमाणे ब्रह्म ब्रह्मवत् इत्यादिव्यवहारापत्तिः। अन्त्ये, भेदरूपधर्मस्य ब्रह्मणश्च यो भेदः सोऽपि तद्धर्मः, तस्यापि भेदस्तथेत्यनवस्थेति दोषप्रसक्त्या भेदासिद्धौ अनृतादिरूपमेव स्यात् ब्रह्म। अथानृतादेरेवाभावात् केनैक्य-मापाद्यत इति चेत्—अनृतादेरभावे घटपटयोरप्यभावे कयोर्भेदः स्वरूपं धर्मो वेति विकल्पितो भवद्भिः। एवं महावाक्याधीनबाधोदयं यावत् वस्तूनामिव तद्भेदस्यापि सद्भावे आवश्यके घटपटादिभेदापलापः विभूतिभेदापलाप इत्यादिकं व्यवहारमार्गे कियन्तमनर्थं काण्डे आपादयतीति किञ्चिद्भवद्भिरेव विमृश्यम्। व्यावहारिकस्य घटपटपुत्रापुत्रदारादारादिभेदस्यैव विकल्पनेन दूषणे

विधीयमाने प्रातिभासिकस्य घटपटाद्यभेदस्य दूषणं सुतरां संभावितमिति कस्मात् तयोरभेदोऽपि भवद्भिर्विकल्प्य न दूष्यत इत्यपि पर्यनुयोक्तव्यम् । नीलघटयोरभेदः तादात्म्यं किं धर्मिस्वरूपं धर्मो वा ? आद्ये, नीलज्ञानमेव घटाभेदज्ञानमिति किमिति घटशब्दप्रयोगः ? अन्त्ये, घटाभेदो नीलवृत्तिरित्यत्र नीलवृत्त्यभेदो घटाभेदनिष्ठः धर्मिस्वरूपं धर्मो वेत्यनवस्था दुष्परिहरेति व्यावहारिकाभेदोऽपि विकल्प्य दूष्यताम् । एवं भेदापलापिभिश्च घटः सन् इत्यादौ घटादेः पटभेदादिरूपतया सप्रतियोगिकतया सता सह प्रत्यक्षेण ग्रहणं दुष्करमिति कथमुपन्यस्यते । प्रत्यक्षस्य सन्मात्रग्राहित्ववादी कश्चिदन्यः, भेदस्यासंभावितत्ववादी च तदितर इति नैतद्दूषणमिति चेन्न—प्रथमतः तत्तन्मतप्रवर्तकयोर्भेदेऽपि न तौ संप्रत्यस्माभिः पर्यनुयुज्येते । किन्तु भवन्त एव, ये तावुभावपि वादौ स्वीकृत्य प्रत्यवतिष्ठन्ते । तस्मात् भेददूषणनिस्तारवादपरीक्षेयं सन्मात्रग्राहित्वपरीक्षावत् विविदिषासाधनत्वपरीक्षादिवच्च परित्याज्यैव सहृदयैरद्वैतिभिः । तदिदमवगच्छन्त्येव शतभूषणी सगोत्रदूषणपरिजिहीर्षया तत्रापि किञ्चित् व्याप्रियते ॥ तत्र—

अधिष्ठानज्ञानमेव चेत् भेदज्ञानम्, तर्हि शुक्तिग्रहणकाले रजताध्यासः कथमिति यत् पृष्टम्—तत् स्ववीयः । शुक्तिरेव रजतभेद इत्यस्माभिरनङ्गीकारात् । "यस्मिन् यद्दर्शने येषामध्यासो नोपपद्यते । तस्य भेदः स तेभ्यः स्यात्" इति खलु शतदूषणी निष्कर्षति । भाष्ये च शुक्तित्वादेरेव रजतभेदत्वं स्पष्टमिति प्रश्नोऽयमस्थाने । घटस्य पटभेदरूपत्वमुक्त्वा घटस्यात एव प्रत्यक्षाविषयत्वमप्युपपाद्य सन्मात्रग्राहित्वसमर्थनप्रवृत्तानां पक्षे किलायं दोषः, यत् शुक्तिग्रहणस्यैव रजतभेदग्रहणरूपत्वादध्यासो न स्यादिति । एवं खलु शोधने घटघटत्वादीनां प्रत्यक्षविषयत्वस्य सर्वानुभवसिद्धतया भेदरूपत्वे तदयोगात् तार्किकपक्ष इव, 'भेदातिरिक्तं घटघटत्वादिकं भावात्मकम् ; भेदस्तु तदन्य एवाभावपदार्थः' इति वक्तुं साम्प्रतम् । अस्ति चाद्वैतिनां पक्षः, भावातिरिक्त एवाभाव इत्यपि । भेदः स्वरूपं धर्मो वेति विकल्प्य दूषयितुं

प्रयतमानः दूष्यदूषकभेदं वाच्यवाचकभेदं वर्णभेदं पदभेदमर्थभेदं धर्मधर्मिभेदमेवमादिमनन्तं भेदमुपजीव्य कथं तमपलपितुं पारयेत्। अनुपजीवने च कथं व्याहरेदिति विभाव्यताम्। आर्जवेन चेदद्वैती वादे प्रवर्तते, एवं वदितुमर्हति-भेदस्य घटत्वाद्यवस्थारूपतायाः प्रतिवादिनोऽप्यभिमतत्वात् अवस्थायाश्च विकारत्वेन वाचारम्भणश्रुत्या मिथ्यात्वावसायात् भेदमिथ्यात्वं सिद्धमेवेति न भेदः पृथक् परिश्रम्य प्रतिबोधनीयः, न च प्रतिषेधनीय इति। एवं हि सति वाचारम्भणश्रुति-वास्तवार्थविचारेण वादः शीघ्रं शमितः स्यात्। अतः पृथक् भेदचिन्तेयं वृथा कालयापनेन प्रतिवादिनः परमार्थशोधनार्थमवकाशाप्रदानायाद्वैतिभिराद्दतेति ॥

यत्तु—इयं शुक्तिरित्येव बाधकं ज्ञानम्; नेदं रजतमिति तत्फलानुवादमात्रमिति बाधकज्ञानस्य न भेदग्राहित्वमिति—तन्न—नेदं रजतमिति ज्ञानस्यापि कदाचित् बाधकज्ञानत्वात्। किञ्च तद्वत्ताबुद्धिं प्रति तदभाववत्ताविश्चयस्य प्रतिबन्धकतया इयं शुक्तिरिति निश्चयोऽपि रजतभेदनिश्चय एव। यदि कश्चित् शुक्तावपि रजतत्वं स्यादिति भ्राम्येत्, तस्य, नेदं रजतविति भेदज्ञानं शुक्तिज्ञानफलं न भविष्यतीति तं प्रति नेदं रजतमिति ज्ञानस्यैव बाधकत्वात् बाधकज्ञानस्य भेदग्राहित्वमबाध्यम्।

यत्तु—भेदाभेदयोर्मध्ये भेदो मिथ्या, अभेदस्तु धर्मिस्वरूपत्वात् सत्य इति—नैष विवेको युक्तः। ब्रह्मण्यनृतजडपरिच्छिन्नभेदस्यापि सत्यत्वात्। अन्यथा अनृतादितादात्म्यप्रसङ्गात्। घटपटादेः परस्परमभेदस्याप्यसत्यत्वात्। "ब्रह्माभिन्नेन प्रपञ्चेन ब्रह्मणो भेदः श्रीभाष्यकृदिष्टः" इति अयथानुवादेनाभिनिवेशेन दूषणमद्वैत्यपि व्युत्पन्नो न श्रद्दध्यात्॥ यत्तु—भेदस्य धर्मधर्म्युभयरूपत्वं शतदूषण्युक्तमयुक्तम्, व्याघातादिति—तन्न—आशयानवधारणात्। भेदः क्वचित् धर्मरूपः, अन्यत्र क्वचित् धर्मिरूपः इत्येव विवरणात्। यथासंभवमिति भवतैवानूद्यमानत्वाच्च। सर्वज्ञानयाथार्थ्यवादिभिः शुक्तौ नेदं रजतमिति बाधबुद्धिर्भवतीति दुर्वचमिति—तन्न—यदंशस्य भूयस्त्वम्, तदंशग्रहणेनैव तथातथा व्यवहारात् रजतांशभूयस्त्वाभावेन न रजत-

मिति व्यवहारे अनुपपत्त्यभावात्। शुक्तिधर्मिण्यंशद्वयसत्त्वेन एकांशे रजताभेदग्रहणमंशान्तरे रजतभेदग्रहणं च ह्युपपन्नमेव ॥ यत्तु—परमार्थत इतरव्यावृत्त्यतिरिक्तधर्मास्वीकारात् धर्मस्य भेदतावादो न युक्त इति–तदिदम्, गोत्वमगोव्यावृत्तिमात्रम्; न कश्चित् धर्म इति भावपदार्थविद्वेषिबौद्धपक्षश्रद्धानुवृत्तिविजृम्भितम्। गोत्वादेस्तार्किकसंमतजातिरूपत्वस्य वेदान्त्यसंमतत्वेऽपि अवस्थारूपतायामसंमत्यभावात्। अन्यथा लोकदृष्टानामवस्थानां सर्वासामभावरूपत्वे धर्मधर्म्यभेदस्यापि प्रागद्वैतभाष्यादितो दर्शितत्वात् जगद्धेतुरज्ञानमप्यभाव एवेति भावरूपाज्ञानवादः परिणामवादे इति, विवर्तवादे ब्रह्माप्यभावरूपमेव संमन्तुमर्हमिति च शून्यवाद एव स्थापितः स्यात्। कथञ्च अगोव्यवृत्तिरेव गोत्वम्। किं तत्रागौरिति महिषादेः कस्यचित् तत्त्वेन ग्रहणम्, उतागोत्वेन सर्वस्य? आद्ये, अगोव्यावृत्तिरश्वेऽपीति सोऽपि गौः स्यात्। अन्त्येऽश्वमहिषादीनामसर्वज्ञदुर्ज्ञानतया विशिष्य ग्रहणायोगात् गोभिन्नत्वेन ग्रहणे अगोव्यावृत्तिपदार्थस्य गोत्वघटिततया आत्माश्रयान्योन्याश्रयादिदोष उन्मिषेत्। तस्मात् धर्म एव भावरूपो गोत्वादिः,। भेदस्तदन्य इति तार्किकाः। धर्मः स एव भेद इति वेदान्तिनः ॥

यत्तु—सन् घट इत्यादौ घटो वा घटत्वं वा भेदः न स्वरूपं भवितुमर्हति—अखण्डब्रह्मस्वरूपावगत्यनन्तरं घटादिव्यवहारायोगात् तदवगत्यनन्तरं घटादेरभावादिति—अनेन स्वपक्षरक्षणं कियत् कृतं भवति? ब्रह्मणि न कश्चित् धर्म इति भवतैवानन्तरमुच्यते। तदा च सदिति अखण्डब्रह्मग्रहणं वा न वा? न चेत्—प्रकृतविरोधः। सन्मात्रब्रह्मग्रहणं प्रत्यक्षेणेत्येवेह निरूप्यमाणत्वात्। ब्रह्मैव गृह्यत इति चेत्—तर्हि तदवगत्यनन्तरं घटादेरभावस्य भवतैवोक्तत्वात् कथं घटादिव्यवहारवर्णनम्। एवञ्च प्रत्यक्षेण सन्मात्रग्रहणम्, घटादिकं तु भ्रान्तिरूपविकल्पग्राह्यमिति भवत्पक्षो भग्नः, भ्रान्तेरेवानवकाशात्। बाधकज्ञानस्योदितत्वात्। तथा च, सदिति ब्रह्म न गृह्यत इत्युक्तावेव व्यवहारनिर्वाह इति सिद्धं भवत्पक्षखण्डनम्; सिद्धश्चा

स्तपक्षः । घटादिरूपस्य भेदस्य ब्रह्मस्वरूपत्वे वा तदभावे वा सन्मात्रब्रह्म-ग्रहणादेव त्वदुक्तदोषस्यापत्त्या सदित्यपि न ब्रह्म, घटाद्यपि न ब्रह्मेत्येव ह्येतावतोक्तं भवति । पटादिभेदो घटत्वादिस्वरूप इत्येवास्माभिरुच्यते; न तु घट घटत्वादिरूपो भेदो ब्रह्मस्वरूप इति, न युक्तं तादृशप-क्षोद्भावनपूर्वं दूषणप्रदानम् । यदि च सन्मात्रग्रहणानन्तरमपि घटा-दिकं तद्व्यवहारश्चानुवर्तितुमर्हतीति वेत्यखण्डब्रह्मज्ञानस्यास्य च वैलक्षण्या-भिमानेन वक्तुं प्रयत्यते, तत् घटादिरूपस्य भेदस्य ब्रह्मस्वरूपत्वपक्षेऽपि तुल्यमिति च भाव्यताम् । असंभवि तयोर्वैलक्षण्यमिति चाधस्तादेवावोचाम । सन् घट इति प्रत्यक्षस्य च सदंशे प्रमाणत्वेन सन्मात्रसद्भावात् माध्यमिकमत-वैलक्षण्यमिति मन्यमानेन सन्मात्रस्वयंप्रकाशत्वपक्षः त्याज्य एव स्यात् । शब्दस्याविद्यानिवृत्तावेव तात्पर्यम्, ब्रह्म तु स्वयंप्रकाशमिति वदता खलु आविद्यकविरहस्यैवागमप्रमेयत्वमेषितव्यम् । तद्वत् प्रत्यक्षमप्याविद्यकविरह-विषयकमिति दुर्वचम् । अविद्यातत्कार्यरूपप्रतियोगिग्रहसापेक्षत्वात् विरह-ग्रहस्य, प्रत्यक्षेण प्रथमं तद्ग्रहणायोगात् । तथासति तदंशस्यापि ज्ञाततया ब्रह्मणश्च स्वयंप्रकाशतया शास्त्रवैयर्थ्यतादवस्थ्याच्च । आविद्यकविरहरूपेण तद्भानायोगेऽपि यत्किञ्चिद्भावरूपेण तद्भानं प्रत्यक्षे युक्तमिति चेत्—घटादेरपि पटादिभेदात्मतां विना भावरूपेण भानं युक्तमिति समः समाधिः ।

यत्तु—भेददूषणे **खण्डनखण्डखाद्यं** बहु पराक्रमते । तत्र न किञ्चित् स्पृष्टं शतदूषण्येति—तन्नूनं वञ्चनया वा स्यात्, अनवधानतो वा । यतः शतदूषण्यां खण्डनमिह खण्डितमेव । खण्डने हि, भेदः किं स्वरूपभेदः, किमन्योन्याभावः, किं वैधर्म्यम्, अन्यदेव वेति विकल्प्य दूषितम् । तत्र चतुर्थः पक्षश्च पृथक्त्वमिति, " अत एव च भेदो नाम—धर्मान्तरं पृथक्त्वा-परनामकमित्यपि परास्तम् "—इति चतुर्थपक्षखण्डनावसरोक्तवाक्यादवगम्यते । श्रीभाष्ये, शतदूषण्यां च यो विकल्पः कृतोऽस्ति भेदः स्वरूपं धर्मो वेति, तत्रानन्तर्भूतमपूर्वं किमत्रास्ति ? इदमेव मनसिकृत्योक्तम्—

" विकल्पाटोपेन श्रुतिपथमशेषं विघटयन्
यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति ।
वितण्डाहुंकुर्वत् प्रतिकथकवेतण्डपृतना-
वियातव्यापारव्यतिमथनसंरम्भकलहः ॥ " इति ।

गभीरभाषिणा श्रीभाष्यकृता कृते विकल्पे सर्वोऽयं कोलाहलोऽन्तर्गत एव । तदिदं मुक्तकण्ठमेव निर्दिष्टं शतदूषण्याम्, " एवञ्च स्वरूपधर्मयोरन्यतरकोटिबहिर्भावाभावात् अन्योन्याभावपृथक्त्ववैशेषाणामपि भेदत्वं पलायितम्" इति । न च खण्डनग्रन्थमात्रं चिखण्डयिषितं शतदूषण्याम् । तत्कल्पा अनेके ग्रन्था अपि । अनुक्ता अपि पुरुषबुद्धिकल्पनागोचराः स्वयं विकल्प्य निरस्यन्ते । प्रायेण च प्राञ्चः ग्रन्थपुरुषनामनिर्देशं विनैव विषयदूषणमात्रे व्याप्रियन्ते व्यक्तिप्रद्वेषविरहात् । वयमपि स्थलसुग्रहत्वायैव नाम प्रायो निर्दिशामः ; व्यक्तिद्वेषं तु नेषदपि रोचयामहे ।

तत् खण्डितमेवात्र शतदूषण्यां खण्डनखण्डखाद्यम् । अथ शतभूषणीतृप्तये विशिष्याप्यत्र खण्डनग्रन्थमामृशामः—

यदुक्तं खण्डने—घटभेदः पटस्वरूपश्चेत्—घटात्मकप्रतियोगिविशिष्टो भेदः पट एवेत्यायाति । तथा च पटस्वरूपे घटस्यापि निविष्टत्वात् पटघटैक्यमेव प्रत्यक्षगृहीतं स्यादिति—तन्न—न हि घटरूपप्रतियोगिविशिष्टो भेदः पट इत्यस्य घटः भेदश्च पट इत्यर्थः । येनैव मापादानं स्यात् । भेदस्य भेदान्तरात् व्यावर्तनार्थं हि प्रतियोगितया घटो निवेश्यते । भेदाभेदयोर्विरोधात् भेदमुल्लिखत् प्रत्यक्षं अभेदरूपमैक्यं कथमुल्लिखेत् ? रावणभेदस्य रामात्मकत्वे रामरावणयोरैक्यं कथमापद्यते ? अविद्याभेदस्य ब्रह्मस्वरूपत्वे अविद्याब्रह्मणोरैक्यं भवन्मत आपद्येत ॥ 'घटभेदे घटस्य प्रविष्टत्वात् पटेऽपि घटप्रवेश इति घटपटैक्य'मित्यस्य च कोऽर्थः ? तत्प्रविष्टत्वं किं तदन्तरवयवावच्छिन्नसंयोगाश्रयत्वम् ; किं वा तद्घटकत्वं स्वाविषयकप्रतीत्यविषयतत्कत्वरूपम् ? आद्ये प्रवेष्टृप्रवेश्ययोर्भेद एव स्पष्ट इति नैक्यसिद्धिप्रसक्तिः । अन्त्येऽपि

विशेषणविशेष्ययोर्भेद एव प्रायो दृष्टः। सुतरामभेदसंबन्धातिरिक्तेन केनचित् भेदसंबन्धेन विशेषणत्वे इति नैक्यसिद्धिः। यत्तूच्यते—पारमार्थिकभेद मिच्छन्तोऽपि अविद्याधीनं भेदं न प्रत्यादिशाम इति—तन्न—प्रत्यक्षसिद्ध-भेदविरोधेन पारमार्थिकाभेदस्वीकारासंभवात्। अद्वैतश्रुतिरभेदपरा जागर्तीति सिद्धवत्कृत्य सहस्रकृत्वो व्यवहरणमात्रेण नाभेदसिद्धिः। अवसरे तत्तच्छ्रुत्यर्थश्च भेदपरतायां स्वारस्यप्रदर्शनेनोपपादयिष्यते। यत्तु भेदस्य प्रतियोगिनिरूप्यस्य पटस्य चैक्यं न संभवतीति—तदपि न; देवदत्तपुत्रो यज्ञदत्त इत्यत्र पुत्रयज्ञदत्तयोरैक्यानापत्तेः, पुत्रपदस्य देवदत्तपदसाकाङ्क्षत्वात्, यज्ञदत्तपदस्य चातथात्वात्। एवं पटरूपे भेदे घटस्य प्रतियोगित्वे घटे पटप्रतियोगित्वमुक्तं भवति। प्रतियोगित्वञ्च घटादभिन्नमिति पटप्रतियोगित्वे पटस्य प्रवेशात् घटेऽपि पटः प्रविष्ट इति भवति घटपटैक्यमित्यपि निरस्तम्। प्रवेशस्य भेदसाधकत्वात्। घटे पटप्रतियोगित्वं धर्म इति पक्षे प्रतियोगित्वस्य धर्मत्वे पटस्यापि घटधर्मतापत्तिरिति यत् आपादनम्, तत् कुत्रैवं व्याप्तिग्रहणमूलकम्? अग्रहे च व्याप्तेः आपादनमनवसरमिति सर्वं संमुग्धसंमोहनमात्रम्।

अथ यदुक्तं—धर्मधर्मिणोः संबन्धः स्वरूपं वा अन्यद्वा। अन्यत्वे संबन्धान्तरकल्पनादनवस्था। स्वरूपत्वे धर्मसंबन्धयोरिव धर्मधर्मिणोरप्यैक्यमेव वस्तुतोऽस्तु इति—तन्न—धर्मधर्मिणोरभेदे नैल्यं घटः इति प्रयोगापत्तेः। सर्वाद्वैतश्रुतिरपि कारणेन कार्यस्य सर्वस्यैक्यमेव दर्शयति; न तु कार्ययोर्मिथ ऐक्यम्। घटशरावयोर्मृत्पिडेनाभेदेऽपि घट एव शराव इत्यैक्यप्रतीत्यभावात्। ब्रह्माभिन्नेऽपि घटपटादौ मिथ ऐक्यस्यानुभवविरुद्धत्वात्। धर्मधर्म्यैक्यं तु न श्रुत्या कुत्राप्युच्यते। ऐक्येऽपि धर्मधर्मिभावे शौक्ल्यं धर्मी घटो धर्म इत्यपि जातु प्रतीतिः स्यात्—अविशेषात्। घटस्य शौक्ल्यमितिवत् शौक्ल्यस्य घट इत्यपि प्रयोगापत्तिः। "भेदव्यपदेशाच्चान्यः" इतिच आधाराधेयभावेन सूत्रे भेदसाधनमयुक्तं स्यात्। सर्वस्याभिन्नत्वे सर्वस्याभेद एव संबन्ध इति भेद-संबन्ध एव कश्चित् न स्यात्। सर्वेषां पदानां समानविभक्तिकतयैव प्रयोगापत्तिश्च;

भेदसंबन्धस्यैवाभावात् तदर्थं विभक्त्यन्तरस्याप्रसक्तेः। कथं तर्हि संबन्धसंबन्धिनोरभेद इति चेत्-नायं सर्वत्र; घटवद्भूतलमित्यादौ संयोगस्यातिरिक्तस्य संबन्धस्योपलम्भात्। तस्य संबन्ध्यभिन्नत्वे वियुक्तावस्थायामपि घटवत् भूतलमिति व्यवहारापत्तेः। यत्र तु संबन्धिनोर्द्वयोः संबन्धो नित्यः तत्रैव स्वरूपं संबन्ध इत्यतिरिक्तः संबन्धो नेष्यते। न तावता सर्वस्य सर्वाधारत्वापत्तिः। यथानुभवमाधारत्वस्याधेयत्वस्य च तत्र तत्र मिथोभिन्ने व्यवस्थितत्वात्। अतः, 'अर्थानामभेदः स्वाभाविकः, भेदस्तु काल्पनिक'इति न युक्तम्। अनुभवहीनस्याभेदस्य काल्पनिकतयाऽप्यप्रसक्तौ स्वाभाविकत्वस्य का प्रसक्तिः? काल्पनिकभेदवादिनापि व्यावहारनियमहेतुः कश्चिदेषितव्य इति न कश्चिद्विशेषः। तत्र हेतौ तदधीनव्यावहारे तद्विषये च सर्वत्र वास्तवत्वमसति बाधे सिद्धम्। अद्वैतश्रुतिस्तु न बाधिकेति वक्ष्यते। अस्तूपर्युपरि संबन्धकल्पनादनवस्थैवेति चेत्—काममस्तु, का नो हानिः? अनवस्थामपि सोढ्वा वरमनैक्यं स्वीकर्तुम्; न पुनः घटपटाद्यैक्यमत्यन्तविरुद्धम्। एवं घटीयस्य पटप्रतियोगित्वस्य घटाभेदेऽपि तन्निविष्टत्वमात्रेण न घटपटैक्यम्। प्रतियोगित्वेन साकमैक्यस्य विरोधात्। अन्यथा शीतोष्णयोरप्यैक्यापत्तेः।

यत्तु—एक एव घटः इतरनिरपेक्षं वीक्ष्यमाणः घट इति प्रतीयते। पटादिना निरूपणे च भेद इत्ययुक्तम्। निर्देशभेदबलादेव वस्तुभेदस्यावश्यकत्वादिति—तन्न—शब्दस्वभावनिबन्धनत्वान्निर्देशवैलक्षण्यस्य। छेदनस्योद्यमननिपातनात्मकव्यापाररूपत्वेऽपि काष्ठं छिनत्ति, परशुमुद्यच्छति, निपातयतीति दृष्टो; व्यवहारभेदः; पुष्पाणीच्छति, पुष्पेभ्यः स्पृहयते, घटं करोति, घटे यतत इति च बहु द्रष्टव्यम्। पटस्य घटभेदरूपत्वस्वीकारमात्रेण घटभेदे घटस्य निविष्टतया पटघटैक्यापत्तिरिति को नु ब्रूयात्? प्रतियोग्यभावयोः मिथो विरुद्धयोरैक्यायोगात् भेदघटयोरैक्याभावे घटपटयोरनैक्यमेव हि सिद्धम्। जलं गन्धाभाववदिति प्रतीतिमादाय जलगन्धयोरैक्यम्, अद्वैतं द्वैताभाववदिति द्वैताद्वैतैक्यमित्यादि न व्युत्पन्नो वक्तुमर्हति। एवं हि सति कलहस्यैवानवकाशात्

किमित्यद्वैती किञ्चित् कथयितुं यतते । तन्निविष्टत्वमात्रेण तदैक्यस्वीकारे नीलो घट इत्यादौ घटे नीलभेदोऽप्यापद्यते । नीलाभेदस्य नीलभेदाभावस्य घटरूपत्वे तादृशभेदाभावनिविष्टस्य नीलभेदस्य घटस्य चैक्यापत्तिः भेदस्य चाधेयताव्यहारानुभवात् नीलाभिन्नो घटो नीलभिन्न इत्यापि वक्तव्यं भवेत् ।

भेदमनङ्गीकुर्वता चाभेदोऽपि दुर्वचः, अभेदस्य भेदज्ञानाधीनज्ञानकत्वात् । अपि च भेदमनङ्गीकुर्वन् स्वरूपं वा अन्योन्याभावो वा वैधर्म्यं वा पृथक्त्वं वेति विविधं कल्पं कथमुद्भावयति ? एवं भेदमूलं व्यवहारं कुर्वन्नेव भेदमपलपन् किं व्यवहारदशायां तदभावं मन्यते, उतान्यदा? आद्यमशक्यम् । अन्त्यमप्रसिद्धम् । न च व्यवहारोत्तीर्णतादशायां पटो घटश्च स्तः, ययोरैक्यं तदा अध्यवसीयेत । यदा च स्तः, तदा न तयोरैक्यमिति । वस्तुतोऽस्मामिर्घटादिभेदस्य पटनिष्ठस्य न पटस्वरूपत्वमिष्यते, किन्तु पटत्वस्वरूपत्वमेवेति च ध्येयम् ।

अथान्योन्याभावपक्षोक्तदूषणमपि निरस्यते । अन्योन्याभावो हि अन्योन्यतादात्म्याभावः घटपटतादात्म्यस्याभावः । घटपटतादात्म्यञ्च शशविषाणवदप्रसिद्धम् । अतस्तदभावो दुर्वच इति हि दूषणम् । अन्योन्याभाव इत्यस्य तथार्थास्वीकारात् । यादृशो ह्यभावः एकस्यान्यस्मिन्निव अन्यस्याप्येकस्मिन् नियमेन भवति, सोऽन्योन्याभावः । संसर्गाभावसामान्ये तु नैवं भवतीति तद्वारणम् । अन्ततः घटतादात्म्यस्य पटे पटतादात्म्यस्य च घटेऽभाव एवान्योन्याभावः । तत्र च प्रतियोगि नाप्रसिद्धम् । एवं तादात्म्यसंसर्गावच्छिन्नघटनिष्ठप्रतियोगिताकोऽभावो घटान्योन्याभावः, तत्संसर्गानवच्छिन्नप्रतियोगिताकाभावश्च संसर्गाभाव इत्यपि प्रसिद्धमेव संसर्गाभावान्योन्याभाववैलक्षण्यम् । अन्योन्यप्रतियोगिकोऽभावः अन्योन्याभावः । 'एक एव भेदः घटप्रतियोयिकः सन् पटानुयोगिकः, पटप्रतियोगिकः सन् घटानुयोगिकः । संसर्गाभावे तु नैवं विनिमय' इति वैलक्षण्योक्तावपि न दोषः । न च तदा एकस्मिन् भेदे घटप्रतियोगिकत्वघटानुयोगिकत्वयोः सत्त्वात् घटो घटाद्भिन्न

इति प्रयोगापत्तिः; घटप्रतियोगिकत्वावच्छिन्नभेदनिरूपिताधिकरणतयाः घटेऽनङ्गीकारेणादोषात्। एवं घटे पटत्वाभावस्य चैक्यस्वीकारात् अन्योन्याभाव एव मुखान्तरेण संसर्गाभावोऽपि। ननु पटत्वे वर्तमानो घटत्वाभावः पटत्वस्वरूपः। एवञ्च घटत्वाभावे घटत्वस्यापि निविष्टतया पटत्वं घटत्वस्वरूपमपि। एवञ्च घटे पटत्वनिषेधे घटत्वमपि निषिद्धं स्यादिति चेन्न---प्रविष्टत्वे ऐक्यमित्यस्य प्रागेव दूषितत्वादस्य वितण्डावादस्याप्रसक्तेः।

एवं वैधर्म्यपक्षदूषणमपि परास्तम्—घटे पटवैधर्म्यं यदस्ति, तत्रवैधर्म्ये पटवैधर्म्यं किञ्चित् नेष्यते चेत्—तत् पटः स्यात्; इष्यते चेत्, उपर्युपरि वैधर्म्यस्वीकारात अनवस्थेति दूषणस्यायुक्तत्वात्। परप्रकाशकस्य चैतन्यस्य स्वप्रकाशत्ववत् घटे वैधर्म्यव्यवहारस्थापकस्य पटवैधर्म्यस्यैव स्वस्मिन्नपि सति सभवे तद्व्यवहारप्रयोजकत्वस्वीकारात्। अस्तु वा घटव्यक्त्याश्रितत्वरूपधर्म एव पटवैधर्म्यं घटत्वनिष्ठम्। आश्रितत्वञ्च तन्निरूपिताधेयतावत्त्वम्। पारमार्थिकस्वारसिकमतुप्प्रकृतिभूतव्यवहारविषयत्वमित्यादि परोक्तं वा यथानुभवं ग्राह्यम्। ननु वैधर्म्यं घटे निविशमानं किं पटभिन्ने तत्र निविशते, उताभिन्ने। अन्त्यमसंभवि। आद्ये भिन्नेत्युक्तोः भेदः किं भिन्ने निविशते, उताभिन्ने इत्यनवस्थेति चेत्—न—पूर्वमभिन्नं पश्चाद्भिन्नं भवतीति वा, पूर्वं भिन्नं सत् पश्चात् भेदाश्रय इति वा अनभ्युपगमात्। वस्तुनः, तन्निष्ठस्य भेदस्य च यौगपद्यात् यावदात्मभावित्वात्। अतो नानवस्था। अथ घटस्वरूपमेव पटभेदश्चेत्, पटस्यापि स्वरूपत्वात् पटोऽपि पटभेदरूपः स्यात्। स्वरूपविशेषः पटभेद इति चेत्, कोऽयं विशेषो नाम? स्वरूपस्य भिन्नभिन्नत्वाच्च शक्तिग्रहो न शक्यः—इति चेत्—भिन्नभिन्नस्य तत्तत्स्वरूपस्यैव भेदत्वात्। कथं शक्तिग्रह इति चेत्—अगृहीतशक्तिकश्चेत् कथं भवान् स्वरूपशब्दं व्यवहरति? यथा भवतः, तथैव सर्वेषामिति वृथाऽयं विचारः। अद्वैतसिद्धान्तेऽप्यनुगतजातेःगोत्वादिरूपायाः नित्यायाः अनङ्गीकारात् संस्थानातिरिक्तजातौ प्रमाणाभावात् संस्थानस्य च प्रतिव्यक्तिभिन्नत्वात् कथं घटादिपदात् संगतिग्रहः? एवं वाच-

कानां घटपदरूपव्यक्तिविशेषाणामानन्त्यात् कथं सर्वासु तासु व्यक्तिषु शक्तत्वग्रहः ? घकारोत्तराकारोत्तरटकारोत्तराकारत्वरूपधर्मश्च विभिन्नोत्तरत्वरूपधर्मघटितो नैकः । अतः सौसादृश्यमेव सर्वत्र शरणमिति ।

पृथक्त्वमिति चतुर्थः कल्पश्चात एव न पृथङ्निरसनीयः । सर्वमिदं शतदूषण्यां विना विस्तरं खण्डनोक्तविकल्पमनूद्य निरसनेन ज्ञापितमेव सुखग्रहणायेह विशदं व्युत्पादितम् ॥

सन्मात्रग्राहितापक्षः सत्तात्रैविध्यवादिभिः ।
यथा नेष्टः, तथा भेददूषणश्चेति शाम्यत ॥
यद्यनिर्वाच्यतास्थित्यै यत्नः प्रत्येकखण्डने ।
खण्डनानिर्वाच्यतायामन्यत् सर्वमखण्डितम् ॥
खण्डनं खण्डनग्रन्थखण्डिनां खाद्यमेव यत् ।
अत एव तथा नाम तस्य दैववशैः कृतम् ॥
इति खण्डनखण्डखाद्यकृत्याः कुटिलाया इह शब्दतोऽर्थतश्च ।
हतसौगतसौहृदोत्थहर्षोद्गलिताया गतिभङ्गदिग् विभाव्या ॥

अथ शतभूषण्याम्, "सत्त्वाच्चापरस्य" इति सूत्रभामत्यादिकं भेदस्य कल्पितत्वोपपादकमुद्धृतं विचार्यते । वस्तुतः सूत्रमिदमद्वैतवादखण्डनार्थं प्रवृत्तम् । कथं कार्यकारणयोरनन्यत्वम्, कारणस्य सत्यत्वात्, कार्यस्य च मिथ्यात्वादित्याशङ्कायाम्, परस्य अकार्यस्यापि कारणवत् सत्त्वात् वस्तुतः सद्भावात् मिथ्यात्वाभावात् नानन्यत्वहानिरिति । सूत्रभाष्ये कारणस्य ब्रह्मण इव कार्यस्यापि त्रिषु कालेषु सत्त्वं भाषित्वा, "एकञ्च पुनः सत्त्वम्" इत्युक्तम् । तदर्थ उच्यते भामत्याम्, "कार्यकारणयोः सत्त्वस्य एकत्वात् अभिन्नसत्त्वानन्यत्वात् कार्यकारणे अप्यभिन्ने" इति । अत्रेदं वक्तव्यम्—कारणस्य ब्रह्मणः त्रिषु कालेषु सत्त्ववत् कार्यस्य त्रिषु कालेषु सत्त्वं भाष्योक्तमयुक्तम् । कार्यस्य नाशप्रागभावयोरानुभविकत्वात् इति शङ्का अवतरति । अत एव कार्यकारणयोः भेदशङ्कायाम्—कार्यकारणयोरेकद्रव्यत्वस्वीकारात् कार्यात्मना त्रैकालि-

कत्वाभावेऽपि कारणात्मना तथात्वमिष्यत इति प्रदर्श्य, अत एव कारणसत्त्वं कार्यसत्त्वमिति पृथग्भूतस्य सत्त्वद्वयस्य न त्रैकालिकत्वमुच्यतेऽस्माभिः, येन कार्यसत्ता न त्रैकालिकीति शङ्का स्यात्। कारणात्मनैव कालत्रयसत्त्वकथनात् एकमेव सत्त्वं त्रैकालिकमिति न दोष इत्युच्यत इति तावदृजुः शाङ्करभाष्याशयः। तत्र भामतीकारेण यदुक्तम्—अभिन्नसत्त्वानन्यत्वात् कार्यकारणयोरभेद इति—तदनन्वितम्। सत्त्वस्य धर्मत्वात् कार्यकारणयोश्च धर्मित्वात् कथं सत्त्वानन्यत्वं तयोः सिद्धं कृत्वा व्यवह्रियत इति। सत्त्वं ब्रह्मेति स्वपक्षवासना तु न परैः श्रद्धेया भवति। कथञ्च धर्मस्यैकत्वे धर्मिणोरैक्यम्? घटत्वस्यैकत्वेऽपि घटव्यक्तीनां भिन्नत्वात्। घटपटसंयोगस्यैकत्वेऽपि घटपटयोर्भेदात्। अत्र सत्त्वे कार्यकारणयोरारोपितत्वेन तद्व्यतिरेकेणाभावः इति कारणमप्यारोपितं कथयन् कल्पतरुकारः, ब्रह्मणः कारणत्वस्यैव भाष्योक्तत्वात् ब्रह्मैव कल्पितं मन्यत इति विचित्रमेतत्। अथ तु शुद्धस्य ब्रह्मणः कारणत्वायोगात् अविद्याशबलितस्यैव कारणत्वात् शुद्धे शबलितं ब्रह्मप्यारोपितम् कार्यवत् इति कथञ्चित् निर्वाहः कार्यः। (अत्र भामतीकल्पतर्वोः पाठाशुद्धिरपि परिमलतो ज्ञायते इत्यन्यदेतत्।) द्रव्यैक्यनिबन्धनं कार्यकारणैक्यमेव प्रकृताधिकरणार्थः; न तु कार्यकारणयोः सत्त्वमेकं स्वीकृत्य तदैक्यमूलकं कार्यकारणैक्यम्। एवं हि सति सत्त्वव्यतिरेकेणान्यस्याभाव इति भामत्यभिमतः प्रकृताधिकरणार्थः स्यात्; न तु कारणव्यतिरेकेण कार्यस्याभाव इति। न च कारणानन्यत्वं कार्यस्येति वाक्यस्य निर्विशेषसत्त्वातिरिक्तं किमपि नास्तीत्यर्थं कश्चित् स्वरसमनुमन्वीतेति ध्येयम्।

अथ भामतीकारः, कार्यकारणयोर्भेदात् सत्त्वस्यापि भेदो वा सत्त्वाभिन्नत्वात् कार्यकारणयोरेवाभेदो वेत्यत्र किं विनिगमकमिति विचारयन्, "वयं तु पश्याम" इत्यादिना अभेदं वास्तवं भेदञ्च कल्पितमुपपादयति। तत्र भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वात् भेदग्रहणमन्तरेण च प्रतियोगिग्रहणानुपपत्तेः अन्योन्याश्रयापत्तेः भेदः कल्पितः इति वचनमभेदेऽपि तुल्यम्। तथा हि—भेदग्रहस्य न केवलं प्रतियोग्यपेक्षत्वम्; अपि तु अनुयोग्यपेक्षत्वमपि।

एवमभेदग्रहोऽपि प्रतिसंबन्धिद्वयसापेक्षः । अयमस्मात् भिन्न इतिवत् अयमस्मादभिन्न इत्येव व्यवहारात् । अभेदश्च भेदाभावः । तत्रेदमर्थप्रतियोगिकभेदं क्वचिन्निर्धार्य तदभाव इह ग्राह्य इति तत्रापि वस्त्वन्तरज्ञानसापेक्षत्वमपरिहार्यम् । न चाभेदः तादात्म्यम्, तद्वृत्तिधर्म एव । अतो न भेदस्य घटकतेति वाच्यम्—अयमस्मादभिन्न इति पञ्चम्यन्तव्यवहारस्य भेदपदार्थघटनविरहेऽनुपपत्तेः । सूत्रकारश्च, "तदनन्यत्व"मिति **अन्य**पदं घटितवानस्ति । यदि च—भेदस्याभेदत्वेन न ग्रहणम्; किं तु वस्तुस्वरूपेण; अतो न प्रतियोग्याद्यपेक्षेत्युच्यते—तर्हि भेदोऽपि पटभेदादिरूपः घटादौ घटत्वादिरूपेणैव गृह्यत इति मास्त्विहापि प्रतियोग्यपेक्षा । किञ्च भेदस्यान्योन्याश्रयात् ग्रहणायोगात् भेदः कल्पित इति भवतोच्यते । भेदं तु सर्वे वयं गृह्णीमः; व्यवहरामश्च । यद्यन्योन्याश्रयः स्यात्—कथं गृहीतः स्यात्? अतः कार्यनिष्पत्तेर्निस्संशयत्वेनान्योन्याश्रयदोषस्येहाभाव एव निर्धार्य इति न भेदस्य काल्पनिकत्वम् । भेदस्य कल्पनाऽपि हि भ्रान्तिरूपं ज्ञानमन्योन्याश्रयदोषे जाग्रति भेदत्वेन कथमुदियात्? कथमन्योन्याश्रयस्याभाव इति चेत्—श्रूयताम् । भेदस्यभेदत्वेन ज्ञान एव प्रतियोग्यपेक्षा; प्रतियोगिनश्च प्रतियोगित्वेन ज्ञान एव भेदापेक्षा । यदा तु वस्तुतः प्रतियोगिभूतं वस्तु बुद्ध्यारूढम्, भेदाश्रयः पदार्थश्च तथा—तदा तत्प्रतियोगिकभेदः तादृशभेदत्वेनानुयोगिनि विशिष्टरूपेण गृह्यत इत्यनुभवात् नैवान्योन्याश्रय इति ।

एतदधिकरणारम्भे च भामत्याम्, "न खल्वनन्यत्वमित्यभेदं ब्रूमः । किं तु भेदं व्यासेधामः" इति लेखनं स्मरन् कल्पतरुरिहाह—"न हि सत्त्वेन कार्यकारणयोः साक्षादभेदं ब्रूमः । किन्तु तत्र तयोरारोपितत्वेन तद्व्यतिरेकेणाभावम्" इति । एवञ्च भेदेनाभावः इहाभेद इति कल्पितं भवति । अस्तु तावदिह विग्रहसौष्ठवम् । एवञ्च, 'अभेदग्रहस्य निरपेक्षतया अन्योन्याश्रयानापत्तेः अभेदग्रहोपादाना भेदकल्पना' इति भामत्युक्तं कथं घटताम्? अभेदस्यापि तदनिष्टत्वात् भेदघटितत्वाच्च । अभेदग्रहोपादाना भेदकल्पना" इति च

वार्तम् । अभेदग्रहे प्रतिबन्धके स्थिते भेदकल्पनायोगात् । एकप्रतियोगिकाभेदज्ञानमन्यप्रतियोगिकभेदकल्पनाकारणमिति चेत्—घटे घटप्रतियोगिकाभेदग्रहे पटप्रतियोगिकभेदप्रमाया एव संभवेन भेदज्ञानस्य कल्पनारूपत्वे प्रमाणाभावः । एतेन—स्वरूपग्रह एवाभेदग्रह इत्युच्यते । ततो भेदकल्पनेत्यपि निरस्तम् । कल्पनात्वनियामकस्याभावात् । एवमभेदग्रहस्योपादानत्वमपि न भवति । भ्रान्तिं प्रति प्रमाया उपादानत्वस्य अद्वैतिभिरप्यनुक्तेः । अतो भामत्युक्तं सर्वमनन्वितम् । कल्पतरौ तु, "भेदः कार्यकारणलक्षणः, सत्त्वम् अभेदः" इति व्याख्या क्रियते । एवं तर्हि भेदग्रहस्य प्रतियोग्यपेक्षा कथम् ? ईदृशं कल्पतरुमनूद्य च शतभूषणी परिमलोक्तं सर्वं स्वोक्तिभङ्ग्या विलिखति । तत्रावधाने क्रियमाणे मूलोक्तमसमञ्जसमित्येव परिमलकृता तत्राविष्कृतमिति सिद्ध्येत् ॥ यत्तु परिमले समाधानम्—स्वप्नेन्द्रजालादिमूलप्रासादनगरादीनामिव व्यावहारिकस्य भेदग्रहस्य कारणकलापसापेक्षत्वाभावान्नानुपपत्तिरद्वैतमत इति—तदिदमयुक्तम् । वास्तवकारणकलापसापेक्षत्वं कुत्र वा स्वीकृतमद्वैतिभिः ? कुत्राप्यस्वीकारे च कार्यकारणभावस्यैवासिद्धिरिति कथं कारणकलापसापेक्षत्ववर्णनम् ? एवं निश्चिन्वानेन चाद्वैतिना भोजनार्थमन्नभिक्षणपचनादौ न व्यापरितव्यम् । स्वक्रियाव्याघातरूपे दोषे आपादितेऽपि यदि कारणमनभ्युपयन्नेव कारणसंनिधाने सर्वत्र प्रयतते, कथमयं स्वहृदयविसंवादेनैव व्यवहरमाणः सम्यञ्चं पन्थानमानीतो भविष्यतीति नूनमुपेक्षणीय एवेदक्ष इत्यलमधिकेन ॥

निर्वोढुं व्यवहारमेभिरखिलैर्भेदो न निर्धूयते
गृह्णन्तोऽपि गदन्ति कल्पनशतव्यग्रा इमं दुर्ग्रहम् ।
ब्रह्माप्येवमुदीरयन्त्यभिमतं यद्दुर्ग्रहं दुर्वचं
भेदो ब्रह्मसमोऽस्तु तत्र यदि वा ब्रह्मास्तु भेदोपमम् ॥

---

श्रीः

# वेदप्रमाण्यपरिग्रहानुपपत्तिप्रसाधनम्

अनादि परमं सत्यमशेषपुरुषार्थदम् ।
अबाध्यमृषिभिर्जुष्टमनन्तं ब्रह्म संश्रये ॥

अद्वितीयब्रह्मातिरिक्तमशेषं मिथ्येति वदद्भिः अध्यक्षानुमाने अप्यवधूय शब्दब्रह्मण्येव पुष्कलं प्रामाण्यं पर्यग्राहि । प्रत्यक्षविरोधे शास्त्रमप्रमाणं स्यादित्याक्षेपं दुष्परिहरं मन्वानैश्च तैः प्रत्यक्षमपि शास्त्रार्थमेव दर्शयतीति सन्मात्रप्रत्यक्षवादेन प्रत्यवस्थितम् । तदापि शास्त्रं प्रत्यक्षगृहीतग्राहित्वात् पुनरप्रमाणमेवापतेत्; अनधिगताबाधितार्थप्रतिपादकत्वस्यैव प्रामाण्यपदार्थत्वादिति पुनस्ते पराकृताः । अथ वेदे प्रत्यक्षादिविरोधचिन्ता तावदास्ताम् । वेदप्रामाण्यमद्वैतिभिः सौगतागमवैलक्षण्येन सर्वथा दुर्वचमिति स्थाप्यते शतदूषण्याम् ।

तत्राद्वैतमते स्थित्वा यत् निष्कृष्टं निरूपणीयम्, तत्रापारयन्ती शतभूषणी विशिष्टाद्वैतिनां पाञ्चरात्रप्रामाण्यास्थायितया बौद्धाद्यागमवैलक्षण्येन कथं पाञ्चरात्रं प्रमाणमभिलष्यत इति प्रतिबन्दीं प्रवर्तयन्ती शतदूषणीकृतविकल्पान् सर्वान् तत्र संभवासंभवपर्यालोचनं विनैवारोप्य विस्तृणाति । अस्मन्मते वेदप्रामाण्यस्याविचालिततया नास्माकं वैदिकगोष्ठीतो बहिष्कारप्रसक्तिः । बौद्धाद्यागमाविशेषं पाञ्चरात्राप्रामाण्यं यद्युपपादयितुं शक्यम्, तावता पाञ्चरात्रत्याग एव कर्तव्यो भवेत्, न विशिष्टाद्वैतसिद्धान्तहानिः । तत्परवेदप्रामाण्यस्य सुस्थत्वात् । "चार्वाकसौगताद्यागमाः वेदनिरपेक्षतत्तत्प्रक्रियावलम्बनात् अहिंसादितत्त्वविषयेऽपि न प्रमाणं मन्तव्या इति वैदिकानां राद्धान्तः" इति शतभूषण्यामेवोक्ततया अद्वैतागमवत् सौगतागमोऽपि प्रमाणमेवेति नाद्वैतिनः वक्तुमुद्युञ्जीरन् । अतः सौगतागमाप्रामाण्यं यया पद्धत्या स्थाप्यते, तयैव वेदस्याप्यप्रामाण्ये आपतिते कथमवैदिकत्वान्निर्मोक इति ते प्रष्टव्याः । तस्मात्

वृथा पाञ्चरात्रप्रामाण्याप्रामाण्यचर्चेयं विना स्वपक्षे वेदप्रमाण्यसंभवोपपादनमवश्यकर्तव्यम् । शतभूषणी तु विष्णुशिवसाम्यबुद्धिमर्वाक्कालप्रसृतामात्मविरूढामनुरुध्य वा, शैवपक्षे पतित्वा वा पाशुपतात् पाञ्चरात्रस्यातिशयं सूत्रभाष्यकल्पतर्वादिसंमतमप्यननुमन्यमाना स्वपूर्वाचार्यपद्धतिं परित्यज्य विषमे पदं निक्षिपति । सूत्रस्वारस्यभङ्गप्रसाधनावसर एव सूत्रभाष्यं कल्पतरुवाक्यं च प्रदर्श्य, 'पाञ्चरात्रस्य, न केवलं सौगताद्यागमवैलक्षण्यम्, पाशुपताद्यागमवैलक्षण्यमप्यप्रधृष्यमस्तीति, 'कल्पतरुकारः पाञ्चरात्रस्य साकल्येण प्रामाण्यमेव प्रतिपादयती'ति च सम्यगुपपादितमस्माभिरिति न परिमलादिलोभात् मलिनयितव्यमद्वैतिभिरात्मनो मन इति कृतं पिष्टपेषेण ।

सौगतमत इवाद्वैतिमतेऽपि जगतो मिथ्यात्वात् प्रामाण्यपारमार्थ्यस्य प्रतीतिसत्यत्वस्य चाभावात् अभिमानमात्रस्य चोभयपक्षेऽप्यविशिष्टत्वात् न वैलक्षण्यमिति अस्माभिरुच्यमानमस्मदुपरि भूषणी न कथमप्यारोपयितुं पारयति । 'बौद्धा अपि क्षणिकविज्ञानसत्यत्वं वदन्ति । तदागमः सत्य इति चाभ्युपयन्ति । तस्मादविशेषः' इत्यादिः कोलाहलः किं साधयिष्यति ? वित्तिवेद्यवेदवेदितॄणां सर्वेषां वस्तुतः सत्यत्वनित्यत्वादेर्यथायथं वास्तवत्वस्य, सौगतादिसम्बन्धिनाञ्च तादृशानामाभिमानिकतया काल्पनिकतया वास्तवत्वाभावस्य चोपपादनेन वैषम्यस्य जागरूकत्वात् । अद्वैतिनां पुनः सर्वमाभिमानिकमात्रमित्यविशेष एव ॥

"यदि सौगतागमस्य स्वतन्त्रबुद्धकर्तृकत्वेनाप्रामाण्यम्, तर्हि पाञ्चरात्रस्यापि नारायणकर्तृकत्वादप्रामाण्यमेव ; उभयोः पौरुषेयत्वेन सादित्वात्" इति वदन्ती भूषणी मन्वादिस्मृतीनां शाङ्करभाष्यादीनाञ्चाविशेषेणाप्रामाण्यमेव दर्शयेत् । अपौरुषेयवेदाविरुद्धतया पौरुषेयस्यापि प्रामाण्ये तु पाञ्चरात्रस्यापि तदस्तीत्येव पराक्रान्तमस्मत्प्राच्यैरेवेति किमत्र वक्तव्यमवशिष्यते ? न खल्वेवं सौगतागमोऽपि श्रुत्यविरुद्धः । भगवान् बादरायणो महाभारते

पाञ्चरात्रप्रमाण्यं प्रपञ्चयन् सांख्याद्यागमानां विभिन्नमतिमूलत्वमभिधाय पौरुषेयत्वेऽपि, " पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् " इति परमाप्तपुरुषोत्तमप्रणीततया पाञ्चरात्रप्रमाण्यमविचाल्यं प्रतिपादयति । भूषणी तु तादृशमपि नारायणमनाप्तकोटौ निक्षिपतीति अहो आग्रहः! अत्र श्लोके स्वयंपदस्वारस्यं सुबहु अनुभवनीयम् । उपरि च, " नारायणस्य सर्वज्ञत्वं शास्त्रैकसमधिगम्यम् । बुद्धस्य सर्वज्ञत्वं तु सर्वलोकप्रसिद्धम् , सर्वज्ञः सुगतो बुद्धः " इति लेखनञ्च पाञ्चरात्रादिकमपि परिहृत्य बौद्धपक्षपातिभिरद्वैतिभिर्भाव्यमित्यात्मनोऽन्तर्गतमाशयमाविष्करोति । कति कति प्रशंसाप्रवृत्तपरिकल्पितानन्वर्थबिरुदधारिणः सन्ति वैदिका लौकिकाश्च । वास्तवार्थस्वीकारश्रद्धायां तु प्रतिविहितमभियुक्तैः, " सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ? तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः ?" इति ॥

पाञ्चरात्रस्वीकारे यदि परमार्थभूतप्रामाण्याश्रयत्वं प्रमातृसत्यत्वं प्रमितिसत्यत्वमित्यादि कारणम् , तत् सर्वं सौगतदृष्ट्या तदागमस्वीकारेऽप्यक्षतमिति वदन्त्या भूषण्या स्वाभिमतवेदप्रामाण्यमप्येवमेवापैष्यतीति नूनं न परिशील्यते । अथ वेदसौगतागमयोर्वैषम्यं यददर्शि––तत् समनन्तरं परिशीलयिष्यामः । यत्त्वन्ते किञ्चिदनुयुक्तम्––अद्वैतमते वेदसौगतागमयोः साम्यापादनमन्यैः क्रियमाणं किंफलकमिति––तत्रानुयोगमात्रेणोपरमे प्रत्युत्तरं वक्तव्यमुक्त्वाऽस्माभिर्विरम्येत । उपरि विकल्प्य दूषणात्तु तद्दूषणमप्यवसरप्राप्तम् । यस्तत्र विकल्पः–वेदसौगतयोः साम्ये उभयोरद्वैतसौगतयोः प्रामाण्यं व्यवस्थितमिति वा, एकतरेणान्यतरबाधो वा, अभयोरप्रामाण्यमेव वेति––तत्रोच्यते-वस्तुनि विकल्पायोगात् वस्तुविषये मतद्वये एकमेव स्वीकार्यं भवेत् ; न द्वयम् । क्रियाविषये विकल्पसंभवेऽपि क्रियाबोधकस्य प्रामाण्ये विसंवादे तत्रापि न विकल्पप्रसक्तिः । एकस्य स्वीकार्यत्वमपि तदैव, यदि तस्य प्रमाणिकत्वं सुवचम्––अन्यथा पुनः रज्जुविषये सर्पभूदलनबुद्ध्योरिव द्वयोरपि मतयोर्बाध्यत्व-

मेव । तदत्र एकस्य प्रामाणिकत्वसिद्धावेव तेनान्यस्य बाध इति तदभावे सौगतमिवाद्वैतमपि प्रबलेनान्येन बाध्यमेव । यत्तु तत्रोक्तम्—एतेन विशिष्टाद्वैतप्रामाण्येन अद्वैतप्रामाण्यसौगतप्रामाण्योभयबाधापेक्षया विशिष्टाद्वैतप्रामाण्यबाध एव युक्त इति—तेन अद्वैतप्रामाण्यमिवावैदिकसौगतमतप्रामाण्यमपि भुवि स्थापयितुं भवान् वाञ्छति, न पुनर्विशिष्टाद्वैतप्रामाण्यं क्षणमपि वर्तयितुमिति ज्ञायते । यतो हि भवता अद्वैतप्रामाण्येन सौगतप्रमाण्यविशिष्टाद्वैतप्रामाण्योभयोपमर्द इत्युपपादने प्रवृत्तिर्नाधायि । विमृष्टे तु, एकेनाद्वैतप्रामाण्येन भूयिष्ठानां द्वैतमतप्रामाण्यानां निषेधस्यानुपपन्नत्वात् अद्वैतप्रामाण्यमेव न सिद्ध्येत् । एवमेकैकमतप्रामाण्यमपि प्रतिषेध्यबहुत्वात् न स्थातुमर्हतीति स्यात् । अत्र विषमयोरेकतरेणान्यतरबाधः । वेदसौगतयोः वैषम्यञ्चास्माभिरुक्तम् । भवन्मते वेदसौगतयोः साम्यादेकतरेणान्यतरबाधो न भवतीति च । तत्र वेदेन सौगतबाधो न भवतीति वा, सौगतेनैव वेदबाध इति वा भवतोपपादितं चेत्—अस्माकमनिष्टमुक्तं स्यात् । तद्विहाय विशिष्टाद्वैतप्रामाण्येण एकेन अद्वैतसौगतद्वयबाधो न युक्त इति वर्णनञ्चास्थान इति ध्येयम् । एवञ्चात्रेदं निष्कृष्टम्, यत्—सौगतमतखण्डनेन लोके श्रौतमतप्रचारणपरमप्रयासिप्रथमशङ्कराचार्यप्रवर्तितं मतं सौगतागमसाम्यस्यैव सर्वेष्वाम्नायेषूपपादनात् स्वलक्ष्यविघातकमेवापतितमिति । अत एवादिशङ्कराचार्यणामाशयोऽन्य एव कश्चित् क्रमेण कृत्स्नवेदसंरक्षणगोचर ऊह्य इत्यास्तिका आतिष्ठन्ते । अन्यसाम्यसिद्धौ तु बौद्धमते स्थित्वाऽपि श्रेयोलाभाभिमानसंभवात् उदयनाचार्योक्तरीत्या सप्तघटिकाभोजनादिसौगतदर्शितसुखमार्गमुपेक्ष्य कायक्लेशाद्यापादके वैदिके पथि न कश्चित् प्रवर्तेतेति सर्वथा वैदिकहानिः स्यादिति प्रतिबोधितं भवतीति ध्येयम् ॥

अथाद्वैतरीत्या वेदसौगतसाम्यमेव किञ्चिद्विशदीक्रियते—अद्वैतिभिरद्वितीयात्ममात्रसत्यत्वम्, अन्यस्य सर्वस्य मिथ्यात्वं च मन्यमानैरपि, मन्त्रब्राह्मणात्मकवेदवेदितेनैव वर्त्मना संचरमाणाभिः प्रजाभिर्भवितव्यमिति,

धर्माधर्मयोः वेद एव प्रमाणमिति च स्वीक्रियते। कुत एवम्? मानाधीनत्वान्मेयसिद्धेः, बौद्धाद्यागमानां सदोषतया प्रामाण्याभावात् नित्यनिरवद्यवेदप्रामाण्यस्य च स्थितत्वादिति वक्तव्यम्। तदिदमेव परीक्षणीयम्। कथं बौद्धागमोऽप्रमाणम्, वेदः परं प्रमाणमिति। अत्र यदुक्तं भूषण्याम्, "क्रमविशेषापेक्षोच्चरितत्वरूपपौरुषेयत्वतदनपेक्षोच्चरितत्वरूपापौरुषेयत्वाभ्यामेव वैषम्यमनादित्वसादित्वाभ्याम्" इति—तत्र प्रथमं तावत् अनन्वितत्वमपि दूषणम्। अपौरुषेयस्यैव पूर्वपूर्ववर्णक्रमसापेक्षोच्चरणविषयत्वादेवं विपरीतवर्णनायोगात्। व्याहतश्च; स्वयमेवोपरि, "पूर्वपूर्वक्रमानपेक्षक्रमकत्वरूपं पौरुषेयत्वम्" इति, "पूर्वपूर्वक्रमापेक्षक्रमकत्वरूपापौरुषेयत्वमेव" इति चोक्तेः। तत्र, "सर्वज्ञस्यापि बुद्धस्य स्वतन्त्रकर्तृकत्वम्" इति लेखनमप्यनन्वितम्। अस्तु तावदीदृशी सर्वत्राशुद्धिः। विषय एव शोधनीयः। वेदस्तावन्न स्वरूपतो ब्रह्मेवानादिः। अविद्यापरिणामशब्दसंघातरूपत्वात्। न चानादित्वमात्रेण सर्वमुपादेयम्। अनादित्वेऽप्यविद्याया हेयत्वात्। अत एव नित्यनिरवद्यो वेद इत्यपि नाद्वैतिभिः सुवचम्। ब्रह्मज्ञानबाधिष्यमाणतया प्रवाहनित्यत्वस्याप्यसंभवात्। अतः पौरुषेयत्वापौरुषेयत्वाभ्यां वैषम्यवर्णन एव नैर्भर्यम्। पौरुषेयत्वञ्च स्वतन्त्रपुरुषप्रणीतत्वम्। मन्वादेश्च स्वातन्त्र्याभावान्न तत्स्मृत्यादेरप्रामाण्यम्। एवमपौरुषेयत्ववर्णनमपि पुरुषदोषमूलकत्वनिबन्धनाप्रामाण्यशङ्कामात्रपरिहारकं स्यात्। न त्वप्रामाण्यसामान्यस्य वक्तृदोषाधीनत्वम्, इन्द्रियदोषायत्तस्याप्यप्रामाण्यस्य दर्शनात्। शब्दस्याप्रामाण्यं वक्तृदोषाधीनमेव दृष्टमिति चेत्—कोऽसौ वक्तृदोषः? भ्रमप्रमादविप्रलम्भादिरिति चेत्—वक्तृसमवेतस्य भ्रमत्वे किं नियामकम्? दुष्टकारणजन्यत्वात् भ्रमत्वमवधार्यत इति चेत्—तर्हि दुष्टकारणजन्यज्ञानाधीनशब्दस्याप्रामाण्यमित्युक्तं भवति। तेन शब्दाप्रामण्ये कारणदोषः साक्षात् परम्परया वा हेतुरिति स्थिते यदि वेदस्यापि दोषमूलकत्वम्, तर्ह्यप्रामाण्यमापतितमेव। यावदविद्यामूलकत्वं वेदस्य न परित्यज्यते, तावत् दोषमूलकत्वं न हातुं शक्यम्। एवञ्च दोषा-

धीनं वेदवाक्यज्ञानमवाक्ये वाक्यभ्रान्तिरूपं घट इहास्तीति वाक्ये पट इहास्तीति वाक्यभ्रान्तिरिव विपरीतार्थबोधकमिति सिद्धं वेदस्याप्रामाण्यम् ॥

यत्तु—बौद्धागमस्य प्रत्यक्षानुमानोपजीवकत्वादप्रामाण्यम्, अद्वैतमते तु वेदोपजीवित्वमेव प्रत्यक्षानुमानयोरिति स्वतन्त्रत्वाद्वेदः प्रमाणमिति—तत्र किमिदमुपजीवित्वम्? यदि शाब्दबोधजनने प्रत्यक्षानुमानापेक्षत्वं बौद्धागमस्य, तत् वेदस्यापि तुल्यम्, व्यवहारादेव संगतेर्ग्राह्यत्वात् तत्र प्रत्यक्षानुमानोभयस्थितेः। यदि चोपजीवित्वं जन्यत्वं, तर्हि प्रात्यक्षस्य न वेदजन्यत्वम्। एवं धूमेनाग्न्याद्यनुमानमपि न वेदजन्यम्। "वेदशब्देभ्य एवादौ देवादीनां चकार सः" इत्युक्तरीत्या वेदस्य सर्वजनकत्वे च सुगतवच एव जनकमिति सौगतहठात्कारे कः समाधिः? अस्तु वा वेदोपजीवित्वं प्रत्यक्षादेः, तावता तस्यामुख्यं प्रामाण्यमिति कुतः? एवं निर्विशेषवस्तुविषयकानुमानप्रत्यक्षयोः श्रवणोपबृंहणत्वकथनमप्ययुक्तम्। अश्रुतवेदान्तस्यापि सन्मात्रविषयकमेव प्रत्यक्षमित्येव भवद्भिरुक्तेः। न चाद्वैतश्रुतिश्रवणानन्तरमेव सन्मात्रविषयकत्वावधारणं प्रत्यक्षस्येति वाच्यम्—अश्रुतवेदान्तानामप्यनुपपत्तिस्फुरणे सति तदवधारणोपपत्तेः। बौद्धैरश्रुतवेदान्तैरेव, 'प्रत्यक्षं स्वलक्षणापरपर्यायव्यक्तिमात्रग्राहि। अन्यत् सर्वं विकल्पविषयः' इति प्रत्यक्षस्यैकमात्रविषयकत्वकल्पनात्। नूनं बौद्धमतमेव भङ्ग्यन्तरेणाद्वैतिभिरत्र विषयेऽप्युपन्यस्तमिति तु तत्त्वम् ॥

किञ्च—यद्यपीश्वरो गतकल्पीयं वेदमेव स्वबुद्धिस्थमस्मिन् कल्पेऽप्युपदिशतीति नापूर्ववेदरचना प्रतिकल्पम्—अथापि वेदमिव तदर्थान् कालं देशमुपदेष्टॄंश्च सर्वान् ज्ञात्वैवोपदिशतीति अर्थज्ञानपूर्वकमेव वेदोच्चारणमीश्वरस्य प्रतिकल्पमिति तादृशार्थज्ञानस्य मिथ्याभूतार्थविषयकतया भ्रान्तित्वावश्यम्भावात् तदधीनोच्चारणशब्दसन्दर्भो भ्रान्तिमूलक। एव एतेन बाध्यार्थविषयकत्वादपि वेदस्याप्रामाण्यं व्याख्यातम्। सर्वस्यापि जगतः तत्त्वज्ञानबाध्यत्वस्वीकारेण वेदप्रतिपाद्यवर्णाश्रमधर्माधर्मतत्फलादेः सर्वस्य बाध्यत्वात्। एवञ्च सौगता-

गमाविशेष एव श्रुतीनाम् । बाधिष्यमाणा अपि वर्णाश्रमादय इदानीं सन्तीति चेत्—प्रश्नोऽयं नाश्यबाध्यार्थविषयविवेकवैधुर्यमूलकः । यत् खलु नाश्यम्, तत् नङ्क्ष्यदपीदानीमस्तीति सुवचम् । न तु बाधिष्यमाणस्य बाधात् प्राक् सद्भावः । अन्यथा त्रैकालिकात्यन्ताभावप्रतियोगित्वाभावेन मिथ्यात्वस्यैवासिद्धेः । ततश्चाविद्यमानमेव सर्वं वेदवाक्यतः प्रतीयते, यथा बुद्धवाक्यतोऽन्यादृशं सर्वमित्यविशेष एव । ननु व्यावहारिकसत्यत्वं वेदोक्तानामर्थानामिष्यते, बौद्धोक्तानां तु प्रातिभासिकमिति चेत्—उभयं भ्रान्तिमूलकमिति तावत् संप्रतिपन्नम् । तत्र बौद्धः स्वसंमतानां व्यावहारिकसत्यत्वं वेदसंमतधर्माधर्मादेश्च प्रातिभासिकत्वं मन्यते ; अद्वैती तु विपरीतमिति नात्रान्यतरावधारणनियामकमस्ति । अथ वेदानादित्वभ्रान्तिमूलेयमास्तिकानां वैदिकार्थभ्रान्तिरनादिः । बौद्धागममूला तु भ्रान्तिर्न चिरन्तरनीति विशेष इति चेत्—किं ततः ? विवेकिभिरुभयमश्रद्धेयमेव । तत्रानादिभ्रान्तिवशः कश्चित्, अभिनवभ्रान्तिवशश्चान्य इति विवेकी विद्वान् न खलु, 'एवं न भ्रमितव्यम्, किं तु तथैवेति वक्तुं वाञ्छेत् । अपि तु वैदिकधर्मचारिणः सौगतधर्मश्रद्धालूंश्चोभयानप्यवेक्ष्याद्वैती सौगततत्त्ववेदी—

न धर्मो न फलं किञ्चित् न तयोर्हेतुसाध्यता ।
मुधा भ्राम्यन्ति हन्तेमे इति तुल्यं विभावयेत् ॥

नन्वतत्त्वविद्भिर्धर्मानुष्ठाने फलं भविष्यत्येवेति चेत्—यदि भविष्यत्येव, तर्हि जगत् सत्यम् ; तस्य बाध्यत्वेनावधारणमद्वैतिनिष्ठमेव भ्रान्तिरिति स्यात् । पश्चात्तनबाधे सत्यपि व्यवहारमध्ये न वैदिकधर्मबाध इति चेत्—अस्त्येव बाधः सौगतसमयिभिः । तत् बाधज्ञानं मिथ्येति चेत्—वैदिकधर्मस्यापि वस्तुतोऽभावः अद्वैतिनामपि संमतः । सोऽयमभावोऽद्वैतिबुद्धिविषयश्चेत्—तज्ज्ञानममिथ्या, सौगतबुद्धिविषयश्चेत्—तज्ज्ञानं मिथ्येति श्वश्रूभिक्षाप्रतिक्षेपमिमं भिक्षवस्तावदविशिष्टमेव ग्रहीतुमर्हन्ति । यद्यपि सौग-

तानामत्र बाधज्ञानमस्ति—अथाप्यस्माकं तथाज्ञानं न जातमिति अस्मत्कल्पितधर्मादिकमाबाधमस्मान् प्रति स्थास्यत्येवेति चेत्—सौगतकल्पितं सांवृतिकं वस्त्वपि तथैव तस्य बाधज्ञानोदयपर्यन्तं स्थास्यत्येव ; न पुनरस्माभिस्तन्निषेधमात्रेणापैष्यतीति तुल्यम्। वस्तुतो भ्रान्तिस्थलेऽनिर्वचनीयोत्पत्तेरुत्तरत्र विस्तरेण निरसिष्यमाणत्वात् सर्वत्र कल्पनामात्रम्, न तु व्यावहारिकसत् किञ्चिदिति न वैषम्यलेशस्याप्यवसरः। अपि च वैदिकधर्मानुष्ठान एव फलम्, न सौगतधर्मानुष्ठान इत्यादिकं वेदप्रामाण्यतदागमाप्रामाण्यनिश्चयाधीनम्। यदा च दोषमूलकत्वात् भ्रान्तिमदीश्वरोच्चरितत्वात् बाध्यार्थविषयकत्वाच्च वेदप्रमाण्यमेव दूरापेतम्, तत्र कथमेवं वैषम्यवर्णनप्रसक्तिः?

तुल्यनयात् अधर्मानुष्ठानमपि न निन्द्यं स्यादद्वैतिनाम्। तस्य अनिष्टजनकतायाः बाध्यत्वात्। सेश्वरस्य जगतः सत्यत्वाभिसन्धौ सति खल्वीश्वरो नरकादौ पातयेदिति पातकाद्भेतव्यम्। सर्वमिथ्यात्वे चावधृते पापस्य च फलस्य च तयोः कार्यकारणभावस्य च मिथ्यात्वं सुनिश्चितमिति द्वितीयाभावान्न भीप्रसक्तिः। यदि कश्चित् सत्यत्वाभिमानी पापभीरुरितिकर्तव्यतामूढः स्यात्, तं प्रति तत्त्वमस्यर्थमुपदिश्याभयं ब्रह्म प्राप्तोऽसीति वक्तव्यम्। स चात्मानं जीवन्मुक्तं मन्यमानः कुलालचक्रभ्रमणन्यायेन पूर्ववासनावशापतितेषु परश्शतेष्वपि लौकिककर्मसु परदृष्ट्या निषिद्धकर्मप्रायेष्वपि असंगात्मनः संसर्गमपश्यन् न कथञ्चित् भेष्यतीति नूनमलेपकमतमेव मुखान्तरेण समासादितं भवति। एवं स्थिते पापान् प्रेक्ष्य, 'नैवं पापं चरथ, पतिष्यथ घोरे नरके' इति न ह्युपदेशस्यावसरः। एवञ्च निषिद्धाचरणेऽपि न किञ्चिदिति सर्वे स्वैरगामिन एव भवितुमर्हन्तीति तत्र सौगतमतावलम्बनेऽपि न कश्चित् प्रत्यवेयादद्वैतिदृष्ट्येति किमिति, 'वैदिकं ग्राह्यम्; अवैदिकं त्याज्य' मिति विभागविधानम्?

अतो वैदिकेष्वपि सौगतमतप्रचारार्थमिदं वैदिककर्मादिष्वतिशयिताद-राभिनयमात्रं मिथ्यामतस्थानामिति निरूपयितुं जगत्सत्यत्वमेवास्थितैरद्वैतिभिरेवा-

न्यादृशैः, "वेदोऽनृतो बुद्धकृतागमोऽनृत" इति गाथा काचिदगायि, या शतदूषण्यामन्ववादि ॥

अद्वैतिनस्तु मन्यन्ते, आतत्त्वज्ञानोदयमखिलमपि वर्णावर्णपुण्यापुण्यस्वर्गनरकादिकमबाधितमवतिष्ठते, अनाद्यविद्यानिबन्धनानिर्वचनीयोत्पत्तिस्वीकारात्। बुद्धादिदेशनास्तु सद्यो रज्जुसर्पव्यवहारवत् प्रातिभासिकविषयाः तदा तदैव बाध्यन्ते इति। अत्र सर्वत्र भ्रान्तावपूर्वपदार्थोत्पत्तिरप्रमाणिकी च निष्कारणा च अनुभवदूरा चेत्यवसरे वक्ष्याम इति प्रागेवोक्तम्।

किञ्च प्रत्यक्षादीनां व्यावहारिकं प्रामाण्यमित्यप्यप्रामाण्यस्य परिभाषा। तथाहि—किमिदं व्यावहारिकं प्रामाण्यं नाम ? व्यवहारविषयभूतं प्रामाण्यमिति चेत्—शुक्तिरूप्यज्ञानप्रामाण्यमपि तदा व्यवहारविषय एव। व्यवहार कालवर्ति प्रामाण्यं तदिति चेत्—वस्तुतः प्रामाण्यस्य कालत्रयेऽप्यभावात् व्यवहारकालवर्तित्वमपि दुर्वचम्। व्यवहारकालवर्तित्वेन प्रतीयमानं प्रामाण्यं तदिति चेत्—शुक्तिरूप्यज्ञानप्रामाण्यमपि यावद्बाधं तथा प्रतीयत एव। अथ व्यवहारकालो नाम निष्प्रकारकब्रह्मसाक्षात्कारपूर्वकालः; तत्कालावच्छिन्नबाधविषयत्वाभाववत् प्रामाण्यमेव तदिति चेत्—तर्हि कदा बाधविषयत्वं प्रामाण्यस्य ? निष्प्रकारब्रह्मसाक्षात्कारानन्तरमिति चेत्—तदनन्तरं मूलनाशात् कथं प्रामाण्यबाधज्ञानमुदेष्यति। अखण्डब्रह्मसाक्षात्कारस्तु न तद्विषयक इति न प्रामाण्यस्य बाधविषयत्वम्। वस्तुतः अद्वैतश्रवणानन्तरं साक्षात्कारात् प्राक् प्रामाण्यादिकं परमार्थतो नास्तीति बुद्ध्युदयेन तस्य व्यवहारकालत्वात् तात्कालिकबाधविषयत्वाभावः प्रामाण्ये दुर्भणः। ननु बाधज्ञाने सत्यपि नेदानीं पदार्थो बाध्यते, न निवर्तत इति यावत्। तथा च व्यवहारकालिकनिवृत्त्यभाववत्पदार्थकत्वं व्यावहारिकप्रामाण्यमिति चेत्—केयं निवृत्तिः ? न तावत् ध्वंसः। असत्यपदार्थस्य ध्वंसायोगात्। न हि यथावास्थितशुक्तिज्ञानानान्तरं शुक्तिरूप्यं नष्टमिति कश्चित् प्रत्येति। नाप्य-

भावः, अभावधीर्वा निवृत्तिः । वस्तुतो व्यवहारकालेऽपि प्रपञ्चाभावेन व्यवहारकालिकाभावाभाववत्त्वस्य, अद्वैतश्रवणानन्तरमभावधीसत्त्वेनाभावधीविषयत्वाभाववत्त्वस्य च प्रपञ्चरूपेऽर्थे असंभवात् । अथ तर्हि अद्वैतश्रवणपूर्वकाल एव व्यवहारकालः । तथा च तात्कालिकाभावधीविषयत्वाभाववदर्थकत्वं व्यावहारिकप्रामाण्यमिति चेत्—तदपि न; शून्यवादिबौद्धसिद्धान्तश्रवणे प्रपञ्चाभावबुद्धेरुदयेन तादृशाभावधीविषयत्वसत्त्वेन तदभाववदर्थकत्वाभावात् । न हीयमभावधीर्भ्रमः; ब्रह्मसद्भावविषये युवयोर्विवादेपि प्रपञ्चाभावबुद्धेरुभयविधाया अप्येकरूपतया असत्यात् सत्युबुद्धिवादिभवद्दृष्ट्यापि प्रमात्वस्याक्षतत्वात् । अद्वैतश्रवणप्राक्कालेपि प्रपञ्चो बाध्यत इति कस्यचिद् भ्रमे सति तादृशाभावधीविषयत्वस्यानिर्वचनीयस्य सत्वेन तदभावस्यार्थे दुर्वचत्वाच्च । न च पारमार्थिकं यत् अभावधीविषयत्वम्, तदभावो विवक्षित इति वाच्यम्—ब्रह्ममात्रपारमार्थ्यपक्षे तस्याप्रसिद्धत्वात् । न च पारमार्थिकमिति स्थाने व्यावहारिकमिति निवेशः । इदमभावधीविषयत्वं व्यावहारिकमिति कस्यचिद् भ्रमदशायां व्यावहारिकत्वस्यापि कल्पितस्य सत्त्वात् । एवं शुक्तिरूप्यज्ञानप्रमाण्यमपि स्यात् । तत्र व्यवहारकालिकाभावधीविषयत्वं नास्तीति भ्रमदशायामनिर्वचनीयतत्सत्त्वेन तादृशाभाववदर्थकत्वस्यानपायात् । एवमनिर्वचनीयवादिनां तात्त्विकं प्रामाण्यम्, व्यावहारिकं प्रामाण्यम्, तादृशमप्रामाण्यमित्यादीनां सर्वेषामपि अनिर्वचनीयतया कल्पनसंभवात् सर्वत्र सर्वसंकरापत्तिरेव । अतोऽनिर्वचीयस्याभावात् अस्तिनास्तीतिपक्षद्वये आद्यस्वीकारे अद्वैतश्रुतेर्न तन्निषेधकत्वम् । अन्त्ये प्रत्यक्षादेरप्यप्रामाण्यमेवेति । अपिच—

बद्धमुक्तव्यवस्थार्थं नानाजीवोपगामिनाम् ।
अविद्याभेदसंमत्या ह्यनिर्वाच्यं विभिद्यते ॥

तत्तज्जीवाश्रिताविद्यापदब्रह्मविवर्तनात् ।
वेदतद्बाह्यलोकादेः सर्वस्यापि भिदा स्थिता ॥

प्रतिजीवं जगद्भेदे मिथः संवाददर्शनम् ।
कथं घटेत भिन्नत्वात् तत्तद्दृष्टस्य वस्तुनः ॥
शुक्तौ रजतबुद्धीनां जीवभेदेन जन्मनि ।
यथा रजतनानात्वेऽप्यैक्यभ्रान्तिस्तथेति चेत्—
एवं नानाजगन्नानेश्वरसद्भावकल्पनाम् ।
वेदलोकानुभूबाह्यां नैव लोकोऽनुमन्यते ॥
गामेकोऽश्वं खरश्चान्यो भ्राम्यन् विवदते यदि ।
अविद्याभेदमूलत्वात् भेदोऽस्तीत्यश्रमो भवेत् ॥
भूयोजनानुरोधेन परदृष्टेस्तु बाध्यता ।
सर्वदृष्टपदार्थैक्ये स्यात् न त्वन्यान्यकल्पने ॥
तस्य तस्य हि जीवस्य तत्तत्कल्पितवस्तुधीः ।
स्वक्लृप्तपरसंवाददृष्ट्या तत्रैक्यधीरपि ॥
तथापि तत्र नानात्वमिति यो निपुणो वदेत् ।
सोऽद्वैती पृच्छ्यते, कुत्र नानात्वं संमतं तव ? ॥
त्वदविद्याक्लृप्तजीवतदर्थाः परक्लृप्ततः ।
भिद्यन्ते खलु तत् ते स्यात् तत्र नानात्वधीः कथम् ?॥
अविद्यमाने जगति जगद्भ्रान्तिस्त्वयोदिता ।
जीवभेदप्रसिद्ध्या च जगन्नानेति कल्पितम् ॥
नानाजगत्यैक्यबुद्धिः भ्रान्तिरित्यथ कल्पितम् ।
तन्नानात्वं कदोत्पन्नमनिर्वाच्यं जगद्गतम् ॥
जगता सह नोत्पत्तिः कल्पनाहेत्वभावतः ।
परिक्षकाद्वैतिचिन्तासमकालं जनिर्यदि ॥
ततः प्राक् जगदेकं वा नाना वा कथ्यतामिदम् ।
न नानात्वमनुत्पत्तेः एकं चेत् केन कल्पितम् ? ॥

प्रत्यात्मं कल्पनाभेदे कथमैक्यवचोऽन्वयः ।
जगत्स्वरूपं नानात्वमिति चेत् नैक्यधीर्भवेत् ॥
बद्धमुक्तव्यवस्थार्थं जीवनानात्ववादिभिः ।
जगदैक्योपपत्त्यर्थं त्याज्याऽनिर्वाच्यकल्पना ॥
एवं सतश्च जगतो न तत्त्वज्ञानबाध्यता ।
एतद्बोधितया वेदो मानं बौद्धी त्वसत्यवाक् ॥
अन्यथा त्वास्तिकाविद्याक्लृप्तधर्मार्थवेदवत् ।
आगमः सौगताविद्याकल्पितोऽप्याद्दतो भवेत् ॥

एवं तावत् धर्माधर्मादिविषयाणां भेदश्रुतीनां प्रामाण्यम्, सौगतागमस्य त्वप्रामाण्यमिति भेदस्थितिरद्वैतपक्षे न घटत इत्युक्तम् । अथ मा भूवन् भेदश्रुतयः प्रमाणम्, आस्तिको नास्तिकः, सदाचारो दुराचारः, पापभीरुः पातकी इति सर्वेऽप्यद्वैततत्त्वजिज्ञासायामुपवेश्योपदेश्याः । तत्त्वज्ञानाग्निदग्धसर्वभेदकक्षाः जीवन्मुक्ता इति तदुपयोगितया केवलमद्वैतश्रुतीनां प्रामाण्यमतिष्ठामह इति चेत्—एवं तर्हि योगाचारागमः चिन्मात्रपरः कथं न प्रमाणमिति पृच्छ्यते । अभ्युपगतस्यापि चिन्मात्रस्यात्मनः क्षणिकत्वानेकत्वकल्पनादप्रमाणमिति चेत्—कीदृशमात्मस्वरूपमङ्गीकर्तव्यम्? नित्यत्वैकत्वश्रुतिप्रामाण्यादीदृशमिति चेत्—तर्हि नित्यत्वैकत्वादिधर्मविशिष्टात्मवादिन्यः श्रुतयः सविशेषपरत्वादद्वैतिदृष्ट्या कथं प्रमाणं स्युः? विशिष्टार्थबोधकत्वेऽपि विशेषणांशे तात्पर्याभावात् निर्विशेषविषये प्रमाणमेवेति चेत्—योगाचारस्यापि चिन्मात्रव्यतिरिक्तस्यापारमार्थ्यात् क्षणिकत्वादेरपि विषयस्य विषयव्यतिरिक्ततया मिथ्यात्वमिति निर्विशेषमेव पर्यवसितमिति तत्परस्तदागमोऽपि नाप्रमाणमद्वैतिनाम् । तस्मादबाधितार्थविषयकतया प्रामाण्यमद्वैतश्रुतीनामिति पक्षेऽपि योगाचारागमस्यापि तदिति न तद्बहिष्कारसंभवः । विषयबाधाभावे च पौरुषेयत्वापौरुषेयत्वादिकल्पनावैषम्यमकिञ्चित्करम् ॥ शून्यवादिबौद्धोपन्यासेन योगाचा-

रमतमपास्तमिति चेत्——अद्वैतियोगाचारयोरन्ततो भेदाभावे तन्मतस्यापास्तत्वे इदमप्यपास्तमेव । इदमपि श्रीभाष्ये एवोपरि व्यक्तम् । तस्मात्, “ तदेतत् संवृतिरिति गीयते ” इति सौगतोक्तसंवृतिपक्षश्लाघिनं स्वगोष्ठीगरिष्ठत्वेनाभिमन्यमानं वैतण्डिकप्रकाण्डं खण्डनखण्डखाद्यकारमनुसृत्य स्पष्टं सौगतमतमेव वैदिकमतमिति मत्वा तन्निरसनमुपेक्ष्यताम् । वैदिकावैदिकमतवास्तववैषम्यज्ञानेन वा जगन्मिथ्यात्वचिन्मात्रसत्यत्वादिपक्षमुपेक्ष्य द्वैतवाद एव स्थित्वा सर्ववेदप्रामाण्यमास्थीयतामिति ॥

अमानत्वं भेदश्रुतिषु यदि मन्येत भवतात्
अभेदश्रुत्या वा सुगतवचनैर्वाऽपि तदिदम् ।
अभेदश्रुत्या च स्फुटमिह विशिष्टैक्यवचनम्,
न चेत्, योगाचारो न कथमनुरोद्धव्यवचनः ॥

---

श्रीः

## दृश्यत्वानुमानभङ्गप्रसाधनम्

यो दृष्टिश्रुतिमतिगोचरः समग्रः प्रत्यक्ष्यः प्रशमितविभ्रमैर्विशिष्टैः ।
सत्योऽसौ त्रयचिदचिद्विभूतिभव्यो मिथ्योक्तिप्रशमकरो ममाविरस्तु ।
मानाधीनां मेयसिद्धिं गृणन्तो दृश्यत्वे खल्वास्थिता वस्तुसत्ताम् ।
तत् दृश्यत्वं वस्तुनास्तित्वहेतुं मन्वानानां स्यान्मृषावादसौख्यम् ॥

प्रतीयमानत्वं ब्रह्मणोऽप्यस्तीति तस्य मिथ्यात्वाभावाय प्रतीयमानत्वे सति बाध्यमानत्वं मिथ्यात्वमिति वदन्त एवाद्वैतिनः दृश्यत्वमात्रेण मिथ्यात्वं साधयन्ति । तन्नूनं शून्यवादिसंमतमेव हेतुमनवधाय प्रयोक्तुमारभन्त इति युक्तमभ्यूहितुम् । तदनुमाननिरासप्रवृत्तं शतदूषणीवादं परीक्षमाणा शतभूषणी

यल्लिखति; श्रुतौ निर्विशेषवाक्यप्राबल्यं सविशेषवाक्यदौर्बल्यञ्चाद्वैत्यभिमतमिति—तत् सत्यम्। परंतु निर्विशेषवाक्यत्वेनाभिमतायाः श्रुतेः वास्तवार्थं वर्णयन्तस्सन्तः प्राबल्यं मन्यन्ते, उतार्थान्तरकल्पनयेति विचारः शिष्यते। यत्तु—तत्र सविशेषवाक्यप्राबल्यं निर्विशेषवाक्यदौर्बल्यं च विशिष्टाद्वैतिसंमतमिति—तत्पुनरयुक्तम्। निर्विशेषश्रुतेरपि स्वरसार्थस्यैव वर्णनात्। उभयोरप्यबाधितार्थपरतया दौर्बल्यस्याप्रामाण्यप्रयोजकस्य कुत्राप्यभावात्। यत्तु—मिथ्याविशेषप्रतिपादकतया कतिपयश्रुतिवाक्यनिर्देशपूर्वं कथितम्—श्रुतिप्रतिपादितार्थप्रतिपादकत्वात् अनुमानं निर्दुष्टमिति—तत्रेदं वक्तव्यम्। "श्रोतव्यो मन्तव्यः" इति श्रवणानन्तरं यन्मननं विहितम्—तन्नूनं श्रवणप्रतिष्ठार्थम्। श्रवणञ्च मीमांसारूपमिति विचारपूर्वकार्थनिर्णये अनुत्पन्ने यदनुमानम्, न तत् श्रवणप्रतिष्ठार्थं भवितुमर्हति। एवञ्च मिथ्यात्वपरत्वाभिमतानां वाक्यानां मिथ्यात्वपरत्वं वाऽर्थान्तरपरत्वं वेति विवाद एव यावन्न शमितः, न तावदनुमानस्य श्रुत्युपष्टब्धत्वम्। श्रुत्युपष्टब्धमप्यनुमानं निर्दुष्टमेव प्रयोक्तव्यम्। अन्यथाऽनुमानस्य श्रवणप्रतिष्ठार्थत्वमेवं भज्येत। उपात्तश्रुतीनां वास्तवार्थश्चान्यः। तथाहि—सदसद्भिन्नं तम आसीत् प्रलय इति प्रथयत् वाक्यम्, 'तदानीं सदसन्नासीत्; इदानीं तु सदसदस्ती'ति बोधयत् जगतः सदसद्रूपतामेव गमयेत्, न तु सदसद्विलक्षणत्वम्। 'नेह नानास्ति किञ्चने'ति श्रुतेः ब्रह्मणि नानाभूतजगन्निषेधपरत्वे किञ्चनेति पदं व्यर्थम्। अतो नानेत्यस्य पृथगित्यर्थः। संसारे ब्रह्मापृथक्सिद्धमेव सर्वमित्युक्तं भवति। अतो नेयं जगतः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वदर्शिनी। "अथ परा यया तदक्षरमधिगम्यते" इति श्रुत्या च अक्षरब्रह्मण एव प्रतीयमानत्वमवगम्यते। भूतयोनित्वादिविशिष्टोपासनेनावर्णत्वादिविशिष्टाक्षरप्राप्त्यभिधानात् तत्क्रतुन्यायेनोपासितगुणप्राप्तेरपि वक्तव्यतया भूतयोनित्वस्यावर्णत्वादेश्चाविरोधस्य, वास्तवत्वस्य च प्रतीयमानतया ब्रह्मणो जगदत्यन्ताभावाधिकरणत्वमितो दुर्ज्ञानम्। "अतोऽन्यदार्तम्" इति श्रुतिश्च ब्रह्मवैलक्षण्यं जगति बोधयेत्। तत् मिथ्यात्वरूपसद्विविक्तत्वमेवेति तु न ततः सिद्ध्येत्।

किञ्च सदसद्विलक्षणत्वमनन्वितं कथं श्रुतिः प्रत्याययेत्? असत्पदस्य सद्भिन्नार्थकतया सन्नासीदित्युक्तौ असदासीदित्येव सिद्धया तस्यापि निषेधायोगात्। तत्र कीदृशार्थवर्णनेनोभयसंघटनम्, "परस्परविरोधे हि न प्रकारान्तरस्थितिः" इति न्यायादिति विचारे, यत् सर्वदा सत् तद्भिन्नम्, यच्च सदैवासत्, तद्भिन्नञ्च तदित्यर्थवर्णने किञ्चित्कालस्थितं तदा आसीदित्येव प्रतीयेत॥ मिथ्यात्वनिर्वचनशोधनावसरे च शेषं विशदीकरिष्यते; श्रुत्यर्थविचारावसरे च।

एवं श्रुतिचतुष्टयार्थाः स्वल्पमत्र संगृहीताः परपक्षाननुकूलत्वप्रदर्शनाय। अत्रास्मदीयपरमार्थप्रकाशिकादिकमपि द्रष्टव्यम्।

दृश्यत्वानुमानस्य श्रुत्युपष्टम्भतया प्राबल्यस्थापनाय स्मृत्यधिकरणोदाहरणञ्चायुक्तम्। तत्र हि श्रुतिविरुद्धायाः स्मृतेर्दौर्बल्यस्य पूर्वमीमांसासिद्धत्वेऽपि सर्वशाखोपसंहारेणावधारणीयस्योपनिषत्तत्त्वार्थस्यास्मादृशैरेकदेशदर्शनमात्रेणावधारयितुमशक्यत्वात् स्मृत्यपेक्षायां कपिलस्मृतिरनवकाशा ग्रहणमर्हतीत्याशंक्य भूयस्स्मृतिविरोधस्य कपिलस्मृतौ स्पष्टत्वात् भूयःस्मृतिसङ्कोपनिषद्यथाश्रुतार्थ एव ग्राह्य इत्युक्तम्; न पुनः सर्वशाखोपसंहारनिरपेक्षं सुगतादिभिरपि सुकल्पं सर्वश्रुत्यन्तरविरुद्ध - कतिपयश्रुत्यापातमुख्यत्वाभिमतयत्किञ्चिदर्थानुकूलमनुमानमेवानेकश्रुतिप्रत्यक्षानुगुणनिर्दोषानन्तानुमानविरुद्धमप्यादर्तव्यमिति। भेदश्रुतियथाश्रुतार्थानुगुण—जगत्पारमार्थ्यसाधकानुमानानामेव तुल्यन्यायेन श्रुत्युपष्टम्भतया प्राबल्यमिति किं न स्यात्? एवञ्च मिथो विरोधे आभासस्य त्यागः, अनाभासस्य स्वीकार इति स्थिते श्रुत्युपष्टम्भवर्णनं हि व्यर्थमेव। प्रत्यक्षागोचरविषय एव च श्रुतिरन्यथयितुमशक्या। प्रत्यक्षगोचरविषयं तु तद्विरुद्धं श्रुतिर्वक्तुं नालम्। "न ह्यागमाः सहस्रमपि घटं पटयितुमीशते" इति च वाचस्पतिमिश्रः। न हि, 'आदित्यो यूपः', 'यजमानः प्रस्तर' इत्यादौ यथाश्रुतार्थस्वीकारोऽद्वैतिभिरपि क्रियते। वस्तुतः अबाधेनोपपत्तौ बाधायोगात्,

'तत्त्वमसि', 'नेह नानास्ति किञ्चने'त्यादीनामद्वैतिवर्ण्यमान एवामुख्योऽर्थः, मुख्यस्तु विशिष्टाद्वैतिवर्ण्यमान एवेति स्वावसरे वक्ष्यमाणत्वाच्च न कथमपि दृश्यत्वानुमानस्य श्रुत्युपष्टम्भप्रसक्तिरस्ति ।

प्रपञ्चो मिथ्या दृश्यत्वादित्यत्र साध्यस्वरूपं प्रथमं शोधनीयम् । ततो हेतुस्वरूपम् । ततः प्राक्, यत् हेतोरनैकान्तिकत्वं वा बाधितत्वं वा नास्तीत्युपपादितम्, तद्विचार्यते । दृश्यत्वरूपहेतोः ब्रह्मण्यपि सत्त्वात् अनैकान्तिकत्वमिति शङ्कापरिजिहीर्षया स्वाधिकरणान्यूनसत्ताकत्वरूपं विशेषणं दृश्यत्वे दीयते । ब्रह्मणः पारमार्थिकत्वात् ब्रह्मगतदृश्यत्वस्य च व्यावहारिकत्वात् ब्रह्मन्यूनसत्ताकं दृश्यत्वमेव तत्रेति स्वाधिकरणान्यूनसत्ताकं दृश्यत्वं घटपटादिदृश्यत्वमेवेति न दोषः; शुक्तिरूप्ये च दृष्टान्ते यत दृश्यत्वं तत्सत्ता न शुक्तिरूप्यन्यूनेनि न साधनवैकल्यमिति तदुपपादनम् । तत्र विचार्यते--- दृश्यत्वं नाम किमित्युपरि विचारे दृश्यत्वं वृत्त्यवच्छिन्नचैतन्यविषयत्वमिति च वक्ष्यते । एवञ्च तस्य ब्रह्मण्यभावादेवानैकान्तिकत्वे परिहृते किमर्थमिदं विशेषणम्? अथ वृत्तिव्याप्यत्वरूपदृश्यत्वपक्षेऽपि निर्दुष्टत्वसंरक्षणार्थमिति चेत्-- अस्तु तावत् । दृश्यत्वं तावत् दर्शनविषयत्वम् । तच्च दर्शनकाले वस्तुन्यस्ति; नान्यदा । एवञ्चाधिकरणसत्तापेक्षया दृश्यत्वसत्ता प्रायो न्यूनैवेति कथं तत्र प्रपञ्चान्यूनसत्ताकत्वम्? यदि तु परमार्थिकत्वापारमार्थिकत्वादिरूपं वैजात्यं सत्तायां विवक्षितम्, तर्हि स्वाधिकरणसत्तासजातीयसत्ताकत्वमिति परिष्करणीयम्; न त्वेवंरीत्या । यदि दृश्यत्वं दर्शनस्वरूपयोग्यत्वरूपम्, कोऽसौ योग्यत्वरूपो धर्मः? यदि वस्तुनः स्वरूपमेव? तर्हि ब्रह्मस्वरूपमेव ब्रह्मगतं दृश्यत्वं भवतीति तत्र ब्रह्मान्यूनसत्ताकत्वमक्षतमेव । वस्तुगतधर्मविशेषश्चेत्--- तस्य ब्रह्मण्यभावादेवानैकान्तिकत्वपरिहारे व्यर्थं विशेषणम् । सधर्मके वस्तुनि धर्मरूपम्; स्वरूपतो भासमाने च स्वरूपात्मकमेवेति चेत्---एवमपि स्वरूप्यन्यूनसत्ताकदर्शनविषयस्वरूपकत्वं ब्रह्मण्यक्षतमेवेति पूर्वोक्तस्यानैकान्तिकत्वस्य

तादवस्थ्यमेव । अथोक्तरूपसाजात्यघटितपरिष्कार एव क्रियते । दर्शनविषयत्वं च ब्रह्मसत्ताविजातीयव्यावहारिकसत्ताकमिति न दोष इति चेत्— दृष्टान्तः साधनविकलः; शुक्तिरूप्यस्य प्रातिभासिकत्वेऽपि तद्दर्शनस्य व्यावहारिकत्वात् तद्गतदृश्यत्वे शुक्तिरूप्यसत्तासजातीयसत्ताकत्वाभावात् । सत्तायां व्यावहारिकत्वप्रातिभासिकत्वरूपवैलक्षण्यस्य प्रतिवाद्यसिद्धतया च सर्वत्र सत्ता भवत्येकजातीयैवेति ब्रह्मण्यपि हेतुसत्त्वादनैकान्तिकत्वमेव । सत्तात्रैविध्यानङ्गीकार्यद्वैतिमते हेत्वप्रसिद्धिश्च ।

यच्च प्रपञ्चे सत्यत्वस्य प्रत्यक्षसिद्धतया बाधशङ्कायां प्रत्यक्षस्य दुष्टकारणजन्यत्वसंभावनया बाधकत्वं न भवतीति—तत्र संभावनाकारणं किमिति वाच्यम् । श्रुत्या सर्वस्य निषेधेन मिथ्यात्वस्य गमितत्वात् स्थितः सत्यत्वानुभवः दुष्टकारणजन्यत्वेनोत्प्रेक्ष्यत इति चेत्— अनुभूतसत्यत्वविरोधात् श्रुतिरेव सर्वं निषेद्धुं न पारयतीति ब्रूमः । प्रपञ्चो मिथ्येत्यनुमानसहकारात् पारयतीति चेत्—अनुमानमपि बाधितत्वादकिञ्चित्करमिति खल्विहोच्यते । श्रुत्युपष्टब्धत्वादनुमानं प्रबलमिति चेत्—अनुमानसहकृतत्वात् श्रुतिः पारयतीत्युक्तम् ; अनुमानस्यासामर्थ्ये कथ्यमाने च श्रुत्युपष्टम्भात् प्राबल्यमित्युच्यत इत्यन्योन्याश्रयः । श्रुतिरनुमानमित्युभयं मिलितं प्रत्यक्षं प्रतिरुणद्धीति चेत्—न संख्याधिक्यमात्रेण विजयप्रत्याशा । चतुर्दश सहस्राणि हि रक्षसां भीमकर्मणामेकेन श्रीरामेण पराजीयन्त । इदञ्च प्रत्यक्षम् । किञ्च भेदश्रुतिप्रत्यक्षतदनुगुणानुमानत्रयमभेदश्रुत्यनुमानोभयं परिभविष्यति । भूयस्त्वमपि भेदश्रुत्यादिष्वेव । निरस्तपुंदोषत्वनिरूपकमपौरुषेयत्वं तत्राप्यविशिष्टम् ।

प्रपञ्चपदेन च शुक्तिरूप्यस्यापि ग्रहणे सिद्धसाधनम् । ब्रह्मकोडीकारे च बाधः । प्रातिभासिकपारमार्थिकसत्ताशून्यमिति प्रपञ्चपदार्थविवक्षायां तादृशसत्ताद्वयाप्रसिद्ध्या पक्षासिद्धिः । जगति तच्छून्यत्वस्यानुमानात् प्राक्

असिद्धंया च शशविषाणमेव वः पक्षः स्यात्। श्रुत्या तत्सिद्धौ चानुमानवैयर्थ्यम्। श्रुतार्थमननमेवं क्रियत इति चेत्—तदपि अनुमानसरणिमनुसृत्यैव कार्यम्। विवादे वादिनं प्रति अनेनानुमानेन विवक्षितसाधनस्यासंभवात्। अतो नेदृगनुमानेन परपक्षप्रतिक्षेपः।

अथ मिथ्यात्वविकल्पविचारः—अन्यथाख्यातिवादे संसर्गारोपमात्रम्, न तु रूप्याद्यारोपोऽपीति न युक्तम्। एकेन संसर्गेण वर्तमानस्य संसर्गान्तरेण ग्रहणे संसर्गारोपः; तत्संबन्धितयाऽननुभूतस्य तत्र ग्रहणे तु वस्त्वारोप इति द्विविधस्याप्यारोपस्य अन्यथाख्यातिवादीष्टत्वात्। मुखे चन्द्रत्वाद्याहार्यारोपवत् शुक्तौ रजतत्वारोपस्य ग्रहणेनैव तदभाववति तत्प्रकारकत्वरूपायथार्थानुभवत्वोपपादनाच्च। "तत्तदधिष्ठानारोपितत्वं मिथ्यात्वमित्युक्तौ न कोऽपि दोषः" इत्युक्तमप्ययुक्तम्। आरोपसामान्यस्याधिष्ठानसापेक्षत्वात् आरोपितत्वस्थले अधिष्ठानारोपितत्वस्याप्यक्षततया प्रपञ्चसत्यत्वपक्षेऽपि तदन्तर्गतकतिपयपदार्थानामन्यत्रारोपस्यानुभविकत्वेन सिद्धसाधनदोषानतिवृत्तेः।

सदसद्विलक्षणत्वमित्यात्रासत्त्वं क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं तुच्छमात्रगतम्। सत्त्वपदेन च सत्त्वं तद्विपरीतं विवक्षितम्। ईदृशसदसद्विलक्षणत्वं मिथ्यात्वमित्युक्तमपि न सम्यक्। सत्त्वं तद्विपरीतमित्यस्य क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हभिन्नत्वमित्यर्थकतया प्रपञ्चान्तर्गतपदार्थानामपि यथायथं क्वचित् सत्त्वेन प्रतीत्यर्हतया अनर्हभिन्नत्वरूपसत्त्वसत्त्वेन सद्विलक्षणत्वासंभवात्। यदि तद्विपरीतमित्यस्य सर्वत्रोपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपसत्त्वपरत्वम्, तर्हि ब्रह्मणो निराधारत्वात् विभुत्वाच्च उपाध्यवच्छिन्नसत्त्वाभावात् सद्विलक्षणत्वापत्तिः। ब्रह्मशशविषाणभिन्नत्वरूपसदसद्विलक्षणत्वस्य प्रपञ्चे परेष्टतया सिद्धसाधनमर्थान्तरञ्च। यत्तु—सदसद्विलक्षणत्वमित्यत्राप्रसिद्धविशेषणत्वदोषं परिहरतोक्तम्, प्रतीतिबाधान्यथानुपपत्त्या शुक्तिरूप्यादौ तत् प्रसाध्यानुमानान्नाप्रसिद्धिरिति—तत्रोत्तरं शतदूषण्यामेव दत्तमस्ति—"अर्थापत्तिप्रसिद्धं

तदिति चेन्न—तस्याः स्वावसरे दूषयिष्यमाणत्वात्" इति ॥ यच्च अनिर्वचनीयख्यात्यादरेणोक्तम्—"परेषामख्यातिवादः अन्यथाख्यातिवादो वा सर्वानुभवविरुद्ध इति—तत्र भ्रमस्थले यत्र यदारोपः, तत्र तद्भेदाग्रहस्य तदसंसर्गाग्रहस्य वा सर्वैरवश्यं स्वीकृततया भेदग्रहादिरूपविपरीतानुभवाभावेन च सर्वतीर्थकरसंमतविषये सर्वानुभवविरुद्धत्ववर्णनं सर्वानुभवाख्यातिमूलकमेव। एवमन्यथाख्यातिः सर्वानुभवविरुद्धेत्यप्यन्यथाख्यातिरेव। समग्राहि चेदं द्वयमाचार्यपादैरेव, "स्वारस्यमन्यथाख्यातावाख्यातौ लाघवं स्मृतम्" इति। तस्मादनिर्वचनीयवाद एवानिर्वचनीयः सर्वलोकानुभवविरुद्धश्च। अत्र शुक्तिरूप्यदृष्टान्ते उपन्यस्ते दृष्टान्तासिद्धिः कथं न वर्णितेति प्रश्नश्चायुक्तः, अप्रसिद्धविशेषणत्वकथनेनैव भवत्संमतान्यादृशशुक्तिरूप्यासिद्धेर्गमितत्वात्। शुक्त्यारोपितरूप्यमित्यापणस्थरूप्यग्रहणे तु नासिद्धिः; किंतु साध्यवैकल्यमेवेति।

बाध्यत्वरूपं मिथ्यात्वं बाध्यमबाध्यं वेति विकल्पे यदुक्तम्—बाध्यत्वस्य बाध्यत्वेऽपि न जगत्सत्यत्वप्रसक्तिः। बाध्यत्वस्यापि प्रपञ्चान्तर्गततया प्रपञ्चस्य तस्य च बाधनात् प्रपञ्चस्थित्ययोगादिति—तत् स्वावसरे विवेचयिष्यते। किञ्चित्त्विहोच्यते—प्रपञ्चबाधो हि नाम प्रपञ्चाभावः। तद्बाधश्च प्रपञ्चाभावाभावः। स च प्रपञ्च एवेति कथं प्रपञ्चापलापः? वस्तुतः इह बाध्यत्वमिदं साध्यं मिथ्याभूतं वा सत्यभूतं वेत्येव विकल्पार्थः। तत्र प्रपञ्चमिथ्यात्ववादिभवत्कल्पितं यत् बाध्यत्वं प्रपञ्चस्यानिर्वचनीयमध्यस्तम्, तस्य वस्तुतःस्थितप्रपञ्चीयसत्यत्वनिवारकत्वं न भवति, न हि शुक्तिरूप्यस्य शुक्तित्वनिवर्तकत्वमिति बाध्यत्वपक्षे दूषणमुक्तमिति नात्र भवदभिमतार्थोपन्यासप्रसक्तिरस्ति। न च पारमार्थिकबाध्यत्वाश्रय इति साध्यम्—मिथ्याभूते बाध्यत्वे भवत्कल्पितपारमार्थिकत्वसत्त्वेन पारमार्थिकबाध्यत्वस्याप्यक्षतत्वात्। तस्मादनिर्वचनीयस्य शुक्तिरजतादेरर्थापत्त्या सिद्धावपि न जगत्सत्यत्वापलापः; भवद्दर्शितानुमानस्यानिर्वचनीयबाध्यत्वमादायैव निर्वाहादभिमतासिद्धिरेवेति।

यच्च—बाध्यत्वमबाध्यमिति पक्षे बाध्यत्वं ब्रह्मेत्युक्त्वा बाध्यत्वोपलक्षितं ब्रह्मेति निष्कृष्य बाध्यत्वोपलक्षितत्वञ्च बाध्यत्वप्रपञ्चोभयाभाववत्त्वेनेत्युक्तम्—तदप्यसङ्गतम्। ब्रह्मण एकस्यैवाबाध्यतया बाध्यतायाः ब्रह्मरूपत्वमित्यस्तु। ब्रह्मणः तदुपलक्षितत्वं कथम्; स्वस्य स्वोपलक्षितत्वायोगात्। किञ्च यत् कदाचित् संबद्धमन्यदा चासंबद्धम्, तत् उपलक्षणं भवति। न च बाध्यत्वं जगत इव ब्रह्मणोऽपि जात्वस्ति। तथा सति तदपि मिथ्येत्यापत्तेः। ननु शाखा चन्द्रस्योपलक्षणम्; तत्र न शाखासंबन्धः कदापि चन्द्रस्येति चेत्—सत्यम्। तत्साक्षात्संबन्धित्वाभावेऽपि परम्परया तत्संबन्धित्वात् तदुपलक्षितत्वं तत्र। शाखाचन्द्रयोरेकऋजुप्रदेशवर्तित्वेन शाखायाः उपलक्षणत्वात्। अत्र कथम्? बाध्यताश्रयजगत्संबन्धित्वात् ब्रह्मणो बाध्यत्वोपलक्षितत्वमिति चेत्—किमर्थमिदमुपलक्षितत्ववर्णनम्? जगति बाध्यत्वरूपमिथ्यात्वस्यैव प्रकृतत्वात्। व्याहतञ्च; बाध्यत्वप्रपञ्चोभयाभाववत्त्वेन बाध्यत्वोपलक्षितत्वस्यैव भवदुक्तत्वात् प्रपञ्चसंबन्धित्वस्यानुक्तत्वात्। उभयाभाववत्त्वेनेत्युक्तमपि न घटते। यदि प्रपञ्चाभाववत्त्वं ब्रह्मणः, तर्हि प्रपञ्चनिष्ठबाध्यत्वं नाम प्रपञ्चाभाव एव, प्रपञ्चनिष्ठं ब्रह्मनिष्ठाभावप्रतियोगित्वं वा? आद्ये, तदाश्रयत्वमेवास्तीति न तदुपलक्षितमिति वक्तव्यम्। अन्त्ये च प्रतियोगित्वस्य स्वनिरूपकाभावाश्रयत्वसंबन्धेन ब्रह्मसंबन्धित्वमित्येव सुवचम्। प्रपञ्चाभाव एक क इति च पुनर्विचार्यम्। स ब्रह्मैवेति चेत्—अभाववद्ब्रह्मेत्याधाराधेयभावभङ्गः। अभावस्य ब्रह्मत्वे तस्य सर्वदैव सत्त्वात् प्रतियोगिभूतः प्रपञ्चः कदापि न भवेत्; न च भायात्। अभावस्य मिथ्यात्वे च सत्यमिथ्यार्थयोः संबन्धायोगः। तदुपलक्षितत्वे तूच्यमाने किं तदुपलक्षितमिति पुनश्शोधनीयतयाऽनवस्थैवेति। "बाध्यत्वस्य प्रथमं विशेषणतया भातस्य पश्चादभावेनोपलक्षणत्वम्" इत्युक्तमप्ययुक्तम्। बाध्यत्वस्य ब्रह्मविशेषणतया भातत्वाभावात्। न हि ब्रह्म बाध्यम्। जगन्निष्ठबाध्यत्वस्वरूपे विचार्यमाणे बाध्यत्वोपलक्षितं ब्रह्मेत्युपन्यासश्चासङ्गतः। 'प्रपञ्चाभावो ब्रह्मातिरिक्तः सत्य एव। तत्सत्त्वेऽपि न भावा-

द्वैतहानिः ब्रह्मसिद्धिकारादिपक्षावलम्बनात्' इति चेत्—भावान्तराभाववादस्यैव प्रामाणिकत्वात् भावद्वैत एव तर्हि पर्यवसानम्। एकत्वाद्वितीयत्वादेरभावसत्यत्वपक्षेऽप्यनाञ्जस्यमेव ; धर्मधर्मिरूपानेकसत्त्वात्। आञ्जस्ये, अनेकभावस्वीकारेऽप्याञ्जस्यं सुवचम्। अस्तु तर्हीष्टसिद्ध्यभिमतः प्रपञ्चनिवृत्तेः पञ्चमप्रकारतेति चेत्—चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका एव जगदुः। तद्रीत्या ब्रह्मापि तादृशमापद्यते इति बौद्धमत एव पर्यवसानम् ॥

किञ्चास्मिन् पक्षद्वयेऽपि अविद्यानिवृत्तिरूपस्य मोक्षस्य नित्यस्य ब्रह्मव्यतिरिक्तत्वात् ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति ग्रहणकवाक्यगृहीतत्वमावश्यकमिति कथं मिथ्यात्वाभावः। मिथ्यात्वेष्टौ च कथं मोक्षस्य नित्यत्वम्। अनिष्टौ च दृश्यस्वरूपहेतुसत्त्वात् साध्याभावादनेकान्तः। मुक्तिदशायां दृशिविषयत्वं नास्तीति चेत्—तदानीं मा भूत्। इदानीं श्रुतितोऽनुमानतश्चावगतत्वादेव दृश्यत्वमक्षतम्। स्वान्यूनसत्ताकदृश्यत्वं यत्र, तत्रैव मिथ्यात्वमिति चेत्—घटपटादीनामपि कदाचिदेवानुभूयमानत्वात् शास्त्रैकसमधिगम्यानाञ्च कदाचिदेव ततोऽवगमाच्चान्यूनसत्ताकदृश्यत्वाभावात् मिथ्यात्वासिद्धिप्रसंगः। हेतोर्भागासिद्धिश्च। तथा तदितरमात्रपक्षीकारे कादाचित्कदृश्यत्वाश्रयं दृष्टान्तीकृत्य केवलदृश्यत्वहेतुनैव सर्वस्य सत्यत्वस्थापनसंभवात् सत्प्रतिपक्षश्च। दर्शनकाल एवानिर्वचनीयमस्ति, न त्वन्यदेति चेत्—अदर्शनदशायां घटाद्यभावे दर्शनकालभेदेनानिर्वचनीयभेदे च सोऽयं घट इति प्रत्यभिज्ञादि भज्येत। एवं दृश्यत्वगतसत्तायाः ब्रह्मगतसत्ताविलक्षणत्वस्य मिथ्यात्वसिद्धेः पूर्वमनिश्चितत्वात् हेतुनिश्चयो दुर्लभ इति च प्रागेवोक्तम् ॥

यत्तु अद्वैतसिद्धौ—दृश्यत्वं शब्दाजन्यवृत्तिविषयत्वम्, सप्रकारकवृत्तिविषयत्वं वा। इदञ्च न ब्रह्मणि। तस्य श्रुतिरूपशब्दमात्रजन्याखण्डाकारज्ञानविषयत्वात्। नापि पञ्चमप्रकारायामविद्यानिवृत्तौ ; अज्ञानसमकालिकत्वस्यापि हेतुविशेषणत्वादिति—तन्न—घटोऽस्तीत्यादि-

प्रत्यक्षविषये ब्रह्मणि शास्त्रमात्रजन्यवृत्तिविषयत्वस्य दुर्वचत्वात्। ज्ञानसामान्यस्य प्रमाणजन्यस्यापि ब्रह्मरूपतया भ्रान्तेश्चाधिष्ठानज्ञानघटितमूर्तिकतया ब्रह्मणः सर्ववृत्तिविषयतया व्यभिचारतादवस्थ्यात्। पञ्चमप्रकाराविद्यानिवृत्तौ च यदि वृत्तिविषयत्वं नास्ति, तदानीमज्ञानकालवृत्तित्वं विशेषणं न देयम्। यद्यस्ति, अज्ञानकाल एव तत् समन्वेतीति तद्दोषतादवस्थ्यम्। तत्र तत्र व्यभिचारवारणाय हेतौ विशेषिते सति विशेषणानाक्रान्तदृश्यत्वविशिष्टमिव तादृशदृश्यत्वविशिष्टमपि अमिथ्यैवास्त्वित्यप्रयोजकशङ्का दृढीकृतैव भवतीति व्याप्यत्वासिद्धिश्च ॥

यत्तु—स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वरूपमिथ्यात्वविकल्पविमर्शे उक्तम्—अतस्मिन् तत्प्रकारत्वं तदर्थः ; तदभाववति तत्प्रकारत्वमिति पर्यवसन्नम्। अत्र तदभावाधिकरणत्वमसंभवीति शतदूषणीप्रतिपादनमयुक्तम्—तदधिकरणत्वस्य भ्रान्त्या ग्रहणेऽपि बाधप्रमया तदभावाधिकरणत्वग्रहोपपत्तेरिति—तन्न—तद्भिन्ननिरूपितप्रकारताश्रयत्वमिति प्रथमोक्तं यथाश्रुतं तावत् न मिथ्यात्वम्। आधेयानां स्वभिन्नयत्किञ्चिदाधारनिरूपितप्रकारताश्रयत्वस्यैव घटवद्भूतलमित्यादौ सर्वत्रानुभविकतया मिथ्यात्वरूपत्वाभावात्। प्रत्युत तदेव तथ्यम्। स्वस्य स्वं प्रत्याधेयतया प्रकारत्वमेव मिथ्यात्वाय भवेत्। अतः स्वभिन्ननिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताश्रयत्वं मिथ्यात्वमिति वक्तव्यम्। तत्र तदभाववति तत्प्रकारत्वमितिपर्यवसानं किमर्थम् ; पूर्वं तत्पदं धर्मिग्राहि, इह तत्पदं धर्मग्राहीति वैलक्षण्यात्। अथ तत्प्रकारत्वमिति तार्किकोक्तभ्रमलक्षणवासनाविलसितश्चेत्, तत्प्रकारकत्वमित्यर्थपरं सत् अनन्वितम् ; ज्ञान एव तत्सत्त्वात् प्रकारे तदभावात्। तन्निष्ठं प्रकारत्वमित्यर्थश्चेत्—स्वात्यन्ताभाववन्निरूपितप्रकारताश्रयत्वमिति लेखनमेव ऋजु ; न त्वेवम्। अस्य पर्यवसितार्थस्य स्वात्यन्ताभावेति शतदूषणीग्रन्थ एव स्पष्टतया, प्रथमम्, अतस्मिन्नित्यादिवचनम्, अथ पर्यवसानमिति विस्तरो वृथैव।

किञ्च कस्यचित् क्वचित् विषये भ्रमः, उन्मत्तस्य तु सर्वत्रैव भ्रम इति तदभाववन्निरूपितप्रकारताश्रयत्वं वस्तुषु जगत्सत्यत्ववादितार्किकादिसर्वसंमतमेवेति नेदं भवदभिमतं मिथ्यात्वं भवितुमर्हति । अथ "स्वात्यन्तभावाववत्येव प्रतीयमानत्वमिति एवकारघटनान्न दोषः । सत्यत्ववादिभिः तदधिकरणे तदभावाधिकरणे च तत्प्रतीतेरभ्युपगमादिति चेन्न—उपरि भवता, "कपालादौ घटादेः स्वाभावसामानाधिकरण्यस्य सर्वलोकप्रत्यक्षविरुद्धत्वेऽपि ब्रह्मणि प्रपञ्चाभावज्ञानं न बाधितुं शक्यते"इत्युक्तया प्रपञ्चान्तर्गतघटादेः कपालादौ प्रतीतेरिष्टतया स्वात्यन्ताभाववत्येव प्रतीयमानत्वस्यासंभवात् । पृथिव्यादेः कूर्माद्याधारकत्वस्य, कृत्स्नस्य प्रपञ्चस्य सगुणब्रह्मरूपेश्वराधारकत्वस्य च शास्त्रप्रतिपन्नत्वात् घटं प्रति कपालस्येव तस्य तस्य नियमेन तत्तदाधारकत्वात् एवकारार्थानन्वयात् । एवं ब्रह्मणोऽपि चैतन्यस्य अहं जानामीत्याद्यनुभवेन व्यञ्जकाहमर्थनिष्ठतया प्रतीयमानतया स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वमस्तीति तदेव मिथ्या स्यात् ।

अपि च, नेह नानास्तीति श्रुतिः ब्रह्मणि प्रपञ्चाभावं बोधयति, उत भूतलादौ घटाद्यभावम्? नान्त्यः, भूतलस्य सत्यत्वे घटस्यापि सत्यत्वेन तन्निष्ठस्य तदवृत्तित्वकथनायोगात् । घटस्य मिथ्यात्वेन वस्तुतस्तदभावस्य विवक्षितत्वे तुल्ययुक्तया भूतलस्याप्यभावेन तत्र घटाभावाधारत्ववर्णनायोगात् । आद्ये अप्रसक्तप्रतिषेधः स्यात् । श्रुत्या ब्रह्मणि प्रपञ्चसत्ता बोधिता बाध्यत इति चेत्---तन्न युक्तम् । श्रुतिबोधितत्वे बाधायोगात् । उपपादयिष्यत इदमुपरिष्टात् । निषेधेऽपि हृदे अग्न्यभाववचनवत् ब्रह्मणि तदभावमात्रं सिद्ध्यति चेत्---कथं जगन्मिथ्यात्वम् । एतेन घटः सन् इति प्रत्यक्षत एव ब्रह्मणि जगत्प्रतीतिरिति निरस्तम् । घटः सन्, भित्तिः सती, गृहं सत्, घटोऽस्तीत्यादिविचित्रप्रतीतिसिद्धिविशेषणभावस्य सत्त्वस्य स्वतन्त्रब्रह्मरूपत्वासिद्धेः । भूतले घटोऽस्तीत्यादौ ब्रह्मण एव सत्तारूपाधेयतात्वेन भ्रम इति चेत्—न तर्हि सत्पदं पारमार्थिकसत्तापरम् । यदि च सत्तापदमाधेयतात्वेन ब्रह्मग्राहकम् ।

घटादिपदमपि तर्हि घटत्वेन ब्रह्मग्राहकं मन्येत। इष्टमेवेति चेत्—तेन् घट इत्युदाहरणानुधावनं व्यर्थम्। घटोऽस्तीत्यादौ घटस्यान्यविशेषणतयाऽनुभव एव न। नतरां कल्पितत्वेन। किञ्च घटोऽस्तीत्यादौ ब्रह्मणि सति घटतादात्म्यभ्रान्तिरेव वक्तव्या। तादृशभ्रान्तिनिवृत्यर्था चेत् श्रुतिः, नेह नानेति सप्तम्यन्तनिर्देशो न घटते। नेदं नानेत्येव हि तदा युक्तम्। तस्मात् श्रौतं ब्रह्मणः प्रपञ्चवत्त्वमेव श्रुत्या निषेध्यमिति निषेधायोग एव॥

एवं तदभावाधिकरणे प्रतीयमानत्वं प्रत्यक्षविरुद्धम्। लोके कृत्स्नप्रपञ्चस्य साधिकरणत्वेन प्रतीयमानत्वस्यैवाभावात्। घटवद्भूतलमित्यादौ क्वचिद्भूतलादेरधिकरणत्वेन प्रतीतिरस्तीति चेत्—तस्य घटाभावाधिकरणत्वं प्रकृतानुमानाभिमतं नेति भवतैवोक्तम्। अप्रसिद्धश्च घटादेः सर्वत्र त्रैकालिकोऽभावः। श्रुतिबलसिद्ध इति चेत्—तर्ह्यनुमानेन मिथ्यात्वं न साधनीयम्॥

अथ शतभूषण्यनुक्तविधामप्याशङ्क्य परिहरामः। स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं हि नाम तुल्यगत्या स्वप्रकारकप्रतीतिविशेष्यवृत्त्यत्यन्ताभावप्रतियोगित्वम्। इदमत्यन्ताभावप्रतियोगित्वं प्रकृतहेतुना साध्यत इति चेत्—व्यवहारदशायां भूतलवत् घटस्यापि सत्त्वेन अन्यदा चोभयोरप्यभावेन विशेष्यपदेन भूतलग्रहणं न भवति; भूतलसत्त्वे घटस्यापि तत्र सत्त्वात् तदभावायोगात्। भूतलाभावे च तदधिकरणकत्वस्य अभावे दुर्वचत्वात्। प्रतीतिविशेष्यत्वं ब्रह्मण इति चेत्—यो हि भवादृशवाक्यात् ब्रह्मास्तीति बुद्ध्वा पश्चात् विमृशति, प्रपञ्चो न ब्रह्मविशिष्ट इति—तदीयप्रतीतिविशेष्यवृत्त्यत्यन्ताभावप्रतियोगित्वं ब्रह्मणोऽपीति तस्य मिथ्यात्वापत्तिः। वस्तुतः तत् बाध्यं तत्र नास्तीति चेत्—प्रपञ्चे परमस्तीति कथमवसितम्। प्रकृतेन दृश्यत्वानुमानेनैवावसीयत इति चेत्—अग्न्यनुष्णत्वानुमानवत् बाधितो हेतुः। अथैतदवसायः श्रुत्येति चेत्—उक्तं तावत् तदाऽनुमानं व्यर्थमिति। न च श्रुतिरपि, तस्य अन्यार्थकत्वात्। तदिदमुक्तं शतदूषण्याम्, "प्रत्यक्षाद्यैस्तद्वि-

धायकैस्तदभावग्रहासम्भवात् । श्रुतीनामपि निषेधिकानामन्यत्र व्यवस्थापनात्" इति । एतेन, "ब्रह्मणि प्रपञ्चाभावानुमानस्य प्रमात्मकश्रुतिसिद्धप्रपञ्चाभावज्ञानोपष्टब्धत्वात्" इति निरस्तम् ॥

अथ सद्विलक्षणत्वरूपमिथ्यात्वमप्यामृश्यते । जगतो व्यावहारिकसत्ताश्रयत्वेन, सामान्यतः सद्विलक्षणत्वं बाधितम् । पारमार्थिकसत्ताश्रयविलक्षणत्वं साध्यमिति चेत्—किमिदं पारमार्थिकत्वम्? अबाधितत्वमिति चेत्—तर्हि तादृशसद्विलक्षणत्वं नाम बाधितत्वमेव । तच्चात्यन्ताभावप्रतियोगित्वमिति प्रागुक्तादविशेषः । अत्र सद्विलक्षणत्वसाधने सिद्धसाधनम् । सत्सामान्यभिन्नत्वसाधने च बाध इत्यादि शतदूषण्यामेव विस्तृतम् । यतुक्तं—सद्विविक्तत्वं दोषासहकृतकरणजन्यज्ञानविषयान्यत्वं ब्रह्मतुच्छव्यावृत्तमिति--तन्न---" न चक्षुषा गृह्यते" इत्यादिना ब्रह्मणः चक्षुरविषयत्वात् प्रपञ्चप्रत्यक्षार्थमेवेन्द्रियाणां क्लृप्तत्वात् शुक्त्यादेः रजताद्यात्मना भाने दोषसापेक्षत्वेऽपि शुक्त्यादिस्वरूपप्रत्यक्षे दोषापेक्षाविरहात् दोषासहकृतकरणजन्यज्ञानविषयत्वस्यैव प्रपञ्चे सत्त्वेन बाधात् । ब्रह्मण्येव त्विदं साध्यं स्यात् । तस्य करणागोचरतायाः, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिसिद्धत्वात् । एवं तुच्छव्यावृत्तत्वमपि न । तस्य करणजन्यज्ञानविषयान्यत्वात् । दोषसहकृतकरणजन्यज्ञानविषयत्वमेवेति चेत्---तदापि सिद्धसाधनम् । प्रपञ्चे प्रमाविषयत्ववत् भ्रान्तिविषयत्वस्यापीष्टत्वात् । अत्र दोषपदेन काचकामलादि गृह्यत इति किल भवतोक्तम् । घटादि च काचाद्यसहकृतचक्षुर्जन्यज्ञानविषय एव । यच्चाविद्याया दोषत्वं ब्रह्मावरणादिति—तन्न ; आवारकदोषसद्भावपर्यन्तं ब्रह्मज्ञानोत्पत्त्ययोगेन तत्त्वमस्यादिवाक्यात् ब्रह्मज्ञानासंभवप्रसङ्गात् । यच्च....भ्रान्तिसिद्ध इति निष्कर्ष इति---तत्र केयं भ्रान्तिः? तदभाववति तत्प्रकारकज्ञानमिति चेत्---तदिह पूर्वविकल्प एव चर्चितम् ।

अनिर्वचनीयविषयकज्ञानविषयत्वमपि बाधितम् । अनिर्वचनीयत्वस्यानिर्वाच्यत्वादप्रसिद्धिश्च ।

यच्च—सद्विविक्तत्वं ब्रह्मभिन्नत्वं, तच्च ब्रह्मतादात्म्यम्। तादात्म्यस्य भेदघटितत्वात्। अत एव ब्रह्मणो न ब्रह्मतादात्म्यमिति—तदिदं व्यवहारपथानारूढम्। को हि भिन्नत्वं तादात्म्यञ्चैकं ब्रूयात्? भिन्नत्वतादात्म्ययोः भिन्नत्वस्यैव सर्वलोकप्रसिद्धत्वात्। नीलो घट इतिवत् 'घटो घट' इति व्यवहाराभावात् समानाधिकरणप्रयोगः, किञ्चिद्रूपेण भेदे सति तादात्म्यं यत्र, तत्रेत्युच्यते। तावता तादात्म्यं भिन्नत्वञ्चैकमिति को ब्रूयात्? भेदघटिततादात्म्याङ्गीकारे च भेदाभेदस्वीकारात् भास्करमतप्रवेशापत्तिः। असम्भवि च ब्रह्मतादात्म्यं जडप्रपञ्चस्य। किञ्च, भामत्याम्, "न खल्वनन्यत्वमित्यभेदं ब्रूमः। किन्तु भेदं व्यासेधामः" इत्युक्तम्। तथा च न भेदः, नाप्यभेदो ब्रह्मणः प्रपञ्चस्येति कथमिदं तादात्म्यम्?॥

अस्मन्मते शरीरशरीरिणोः भेदात् प्रपञ्चे ब्रह्मभिन्नत्वं सिद्धमेवेति शतदूषण्युक्तविषये यदुच्यते---भेदे ब्रह्मपरिणामवादः परित्यक्तः स्यात्। ब्रह्मशरीरभूतप्रकृतिपरिणाम इत्युक्तौ च प्रकृतेरेवोपादानत्वम्, न ब्रह्मण इति नाममात्रमभिन्ननिमित्तोपादानत्ववचनमिति। एवं क्रियासमभिहारेण ब्रह्मणः उपादानत्वमस्मन्मते औपचारिकमिति घोषणमात्रेण न शक्यं ब्रह्मण उपादानत्वं मुख्यमपलपितुम्। भाव्यवस्थावतः पूर्वावस्थाश्रयत्वं ह्युपादानत्वम्। अवस्थाश्रयत्वं च ब्रह्मणोऽप्यस्तीति विस्तृतमन्यत्र। विवर्तोपादानत्वमेव तु लोकाप्रसिद्धमिति ब्रह्मण. उपादानत्वानुपपत्तिर्भवन्मत एवेत्युक्तमधस्तात्। प्रकृतिगतामवस्थामादाय अवस्थाश्रयत्वं ब्रह्मण उच्येत चेत्—मुख्योपादानत्वभङ्ग इति च कुतोऽवगम्यते? "काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः" इति भगवता **पराशरेण** भूमिगतं काठिन्यमादाय ब्रह्मणः काठिन्यवत्त्वमुक्तम्। साक्षादिव स्वाश्रयाश्रयत्वसंबन्धेनापि तद्वत्त्वव्यवहारोऽनुभवारूढो न हातुं शक्यः। विवेकिभिरयःपिण्डे औष्ण्यव्यवहारः क्रियमाणः तथैव निर्वोढव्यः। सुरभि जलमित्यादिरपि। साक्षादवस्थाश्रयत्वमेवोपादानत्वमिति न

श्रुतिरस्ति ; न वा युक्तिः । पदार्थस्वरूपस्वभावेष्ववगतेषु यत्र यत्रोपादानत्वव्यवहारः श्रुत्यादिष्ववगम्यते, तत्र तत्रानुगतिर्यादृशनिर्वचनादरणे भवितुमर्हति, तादृशमेव वक्तव्यमिति साक्षात् वा, परम्पराविशेषेण वा अवस्थाश्रयत्वमेवोपादानत्वमुपादेयत्वञ्च । अत एव चेतनानां कार्यत्वकारणत्ववचनानि सङ्गच्छन्ते । अन्यथा निर्विकारे तत्र तदनिर्वाहात् । तदेतत् स्वावसरे विशदीभविष्यति । नियम्यनियामकभावमात्रेणौपचारिकः शरीरात्मत्वव्यवहार इत्यपि खण्डयिष्यते । केन रूपेण मुख्यस्तद्व्यवहार इति च भवता निरूपणीयमित्यलमाग्रहवचनोपरि अनवसरे विस्तरेण ॥

किञ्च सत्यभिन्नमिति ब्रह्मण एकस्यैव सत्यत्वात् तद्भिन्नत्वं प्रपञ्चे उच्यते सत्यत्वेन रूपेण गृहीत्वेति पक्षे, सत्यत्वस्य ब्रह्ममात्रनिष्ठतया तस्य लोकानवगतत्वेन शास्त्रादवसेयतया तत्र एव शास्त्रात् विश्वमिथ्यात्वमप्यवसीयत इति व्यर्थमिदमनुमानम् । 'श्रोतव्यो मन्तव्य' इत्युक्त मननमेवं क्रियत इति चेत्—तदपि सिषाधयिषामात्रेण प्रयोगपक्षे कथञ्चित् स्यात् , न तु साध्यविषयकशङ्कातङ्कशामकं मननमिति पक्षे । हेतोरप्रयोजकशङ्कायामनुमानस्यासाधकतया शङ्काया अपरिहरणात् । अत एव श्रुतिप्रामाण्यवादिनां तदप्रामाण्यवादिनां च विश्वस्मिन् कल्पितस्य सत्यत्वस्य निषेधार्थमनुमानमित्यपि निरस्तम् । हेतोरप्रयोजकत्वात् । प्रत्यक्षबाधितत्वेनानुमानस्याभासत्वाच्च । प्रत्यक्षेण सत्यत्वमगृहीतमिति चेत्—तर्हि अप्रसक्तं न प्रतिषेधनीयम् । ब्रह्मगतं सत्यत्वं द्वैतिभिरारोपितमिति चेत्—तत् सर्वकालसंबन्धरूपम् , अन्यद्वा? आद्ये तदभावसाधने सिद्धसाधनम् । तस्य द्वैतिभिरवचनात् अनारोपात् । अन्त्ये, श्रुत्यप्रामाण्यवादिभिरपि विश्वस्मिन् सत्यत्वग्रहात् तैः ब्रह्मगतस्य सत्यत्वस्य श्रौतस्यागृहीतत्वेन तदारोपायोगात् प्रपञ्चगतमेव तत् सत्यत्वमिति नारोपप्रसक्तिः । अत एवानारोपात्मकप्रत्यक्षसिद्धं सत्यत्वं न दुर्बलेनानुमानेन शक्यं निरसितुम् । चन्द्रप्रादेशिकत्वप्रत्यक्षं बाध्यते किलेति चेत्—तत्र श्रुति-

प्रमाण्यात् दूरत्वदोषस्य अल्पताभ्रमहेतुत्वस्याञ्जसा क्लृप्तत्वाच्च तथा। न च प्रकृते श्रुतेरिदानीं वादिप्रतिवादिभ्यां मिथ्यात्वरूपार्थावधारणमविशेषेण। न च लोकक्लृप्तः कश्चिदिह दोषः समस्ति। शेषं शास्त्रविरोधपरिहारप्रसाधने।

नभोनैल्यप्रत्यक्षं दोषायत्तमिति न केवलं श्रुत्या, किन्तु, अन्तिके नभसि नैल्यस्य प्रत्यक्षबाधितत्वात् यस्मिन् कस्मिंश्चित् नीलत्वेन गृह्यमाणे नभस्त्वारोप इति पर्यालोचनयाऽप्यवगम्यते। "नभोनीरूपत्वानुमानस्य च विपक्षे बाधक-तर्कसचिवत्वाच्च" इति लेखनात् दृश्यत्वानुमानं विपक्षे बाधकरहितं न श्रुत्य-नुग्राहकमिति विदितप्रायम्। 'युक्त्युपन्यासः तर्काप्रतिष्ठानार्थम्; न तु तर्के-णैव किमपि तत्त्वं साधयितु' मित्यस्तु। तावता नापेक्षिताङ्गविकलत्वेनावधृतस्य तर्कस्य तर्काप्रतिष्ठानप्रदर्शनार्थता। अन्यथा तर्कपादे साङ्ख्य–तर्क–सौगतादि मतखण्डनार्थमुपक्षिप्तान् तर्कान् पूर्वपक्षे निक्षिप्य तन्निरस्तान् तत्तद्वादिपूर्वपक्षतर्का-नेव सिद्धान्ततया ते वादिनोऽनूद्य विजयोद्घोषं विदध्युः। यत्तु—सत्यत्वा-त्यन्ताभावाप्रसिद्धिपरिजिहीर्षयोच्यते, सत्यत्वं किञ्चिन्निष्ठाभावप्रतियोगि, धर्म-त्वादित्यनुमानेनाभावसिद्धिरिति—तन्न--न ह्यत्र शतदूषण्यां सत्यत्वात्यन्ताभावा-प्रसिद्धिरुद्भविताऽस्ति, येनैवमनुमानप्रयास आदरणीयः स्यात्। 'श्रुत्यनुपजीव-नेन प्रत्यक्षबाधितमनुमातुमशक्यम्। श्रुत्युपजीवने चानुमानं व्यर्थम्। श्रुतिर-प्यन्यार्थेति नोपजीव्या भवती'त्येतावदेवेहोच्यते। यदि च तथापि सामान्यतः सत्त्वाभावस्य वस्तुतो बाधितत्वात् अप्रसिद्धत्वाच्च घटादौ वस्तुतः स्वानधिकरण-त्वेन प्रत्यक्षसिद्धतत्तद्वस्तुनिरूपितसत्त्वाभावरूपविशेषः शुक्तौ रूप्यतादात्म्या-भाववत् सिषाधयिष्यते, तर्हि सिद्धसाधनदुष्टश्चेदं धर्मत्वरूपं किञ्चिन्निष्ठाभाव-प्रतियोगित्वानुमानम्। एवं केवलान्वयिधर्मेषु साध्याभावात् हेतोः सत्त्वाच्चा-नैकान्त्यम्। किञ्च, किञ्चिदिति कस्य ग्रहणेन पक्षे साध्यसाधनम्? तुच्छ-स्येति चेत्—कथं तत् असत् कस्यचिदाधारभूतम्। अतः तन्निष्ठत्वे-नाभावो दुरुपपादः। यदि तु अभावप्रतियोगित्वं तदनुयोगित्वं च शश-विषाणादेरपीष्यते, तर्हि सत्यत्वात्यन्ताभावस्यैव तुच्छे प्रसिद्धिः सुवचेति

किमर्थमिदमनुमानम् ? किञ्च प्रतिभासिके सत्त्वाभावस्येष्टत्वात् भवतां नाप्रसिद्धिरपि । वयं तु शुक्तिरूप्यादेर्विलक्षणस्य पदार्थस्याभावात् दृष्टान्तासिद्ध्याऽनुमानमेव दुःस्थं ब्रूमः । शुक्तिश्च रूप्यञ्च पृथक् सत्यमेव, अन्यच्च नेति दृश्यत्वहेतुः सत्यत्वसाधकत्वात् विरुद्ध एव । प्रपञ्चदृष्टान्तेन शुक्तिरूप्ये दृश्यत्वहेतुना सत्यत्वसाधनं प्रत्युत युक्तम् । आह च कणादः, "अविद्या च विद्यालिङ्गम्" इति । अतो भवदुक्तस्य दृश्यत्वहेतोः दृष्टान्ताभावात्, 'स्तम्भादिप्रत्यया असद्विषयकाः बाध्यार्थविषयकाः प्रत्ययत्वात् शुक्तिरूप्यप्रत्ययवदित्येवानुमातव्यम् । तदा च बौद्धमतप्रवेश एव । तत्र च, "नाभाव उपलब्धेः" इति सूत्रतच्छाङ्करभाष्यादिकमप्युत्तरं भविष्यति ।

यत्तूक्तम्—"परमार्थतस्तु प्रत्यक्षेण मिथ्यात्वविरोधि सत्त्वं न गृह्यते । त्रिकालाबाध्यत्वमेव सत्त्वम् । तस्यातीतानागतकालादिघटिततया न प्रत्यक्षयोग्यत्वम्" इति—तत्र मिथ्यात्वविरोधिसत्त्वं प्रत्यक्षेण गृह्यत इति अद्वैतसिद्ध्युक्तखण्डनेन शास्त्रबलीयस्त्वपरीक्षणावसरे प्रपञ्चयिष्यते । एतावत् पुनरिहोच्यते ; अबाध्यत्वं बाध्यत्वत्वावच्छिन्नप्रतियोगिताकाभावः सत्त्वम् । न तत्र अतीतानागतकालादेर्विषयता । एवम्, "ज्ञानप्रामाण्यग्राहिणा सक्षिणा विषयगतमबाध्यत्वं गृह्यते । अन्यथा प्रामाण्यग्राहित्वासंभवात्" इति तदुक्ततया, तद्रीत्यैवाबाध्यत्वरूपमपि सत्त्वं प्रत्यक्ष्यं भवति । न च व्यवहारकालाबाध्यत्वमात्रं साक्षिभास्यमिति वाच्यम्—व्यवहारादेः साक्ष्यग्राह्यत्वेन तद्घटिताबाध्यत्वस्य साक्षिणा ग्रहणायोगात् । बाध्यत्वसामान्याभावग्रहणमन्तरा किञ्चित्कालाबाध्यत्वग्रहणमात्रेण सत्यत्वायोगाच्च । बाध्यं शुक्तिरूप्यादिकमपि हि न सर्वदा बाध्यं लक्ष्यत इति तस्यापि सत्यत्वापत्तेश्च । शतदूषण्युक्तेषु सत्त्वविकल्पेषु स्वानभ्युपगतकोटीनां स्वयमपि शतदूषण्युक्तदूषणानुवादो वृथा । "अतोऽन्यदार्तम्" इति श्रुतिः ब्रह्मव्यतिरिक्तस्य नासत्त्वं बोधयति । आर्तमित्यस्य मिथ्यापर्यायत्वाभावात् । यत्तु—प्रामाणिकत्वं सत्त्वमिति शतदूषण्यभिमतार्थखण्डनम्, "मिथ्यात्वस्यापि दृश्यत्वानुमानसिद्धस्य सत्त्वापत्तेः । एवञ्चा-

नुमानेनापि सत्त्वमेव गृहीतमिति न प्रत्यक्षेण मिथ्यात्वानुमानबाधः" इति—तन्न—दृश्यत्वानुमानस्य प्रमाणत्वे तदनुमितं मिथ्यात्वं सत् भवेत्। न तु तदेव सत्त्वम्। अतो मिथ्यात्वानुमानं न सत्त्वानुमानं भवति। मिथ्यात्वाश्रयत्वेनाभिमतानां वस्तूनां सत्त्वं प्रामाणिकत्वमस्तीति तेषां मिथ्यात्वमप्रामाणिकत्वरूपमनुमातुं न शक्यते इति ब्रूमः। तदत्र भवदुक्तमनन्वितम्। न च दृश्यत्वानुमानं प्रमाणम्, प्रामाणिकेषु अप्रामाणिकत्वसाधकतया बाधितत्वात्। प्रमाणानि हि प्रत्यक्षानुमानागमादीनि ब्रह्मातिरिक्तपदार्थप्रमित्यर्थमेव स्थितानीति चैषां प्रामाणिकत्वमविचाल्यम्।

अथ—मिथ्यात्वं नाम नाप्रामाणिकत्वम्; किन्तु पश्चात्तनबाधविषयत्वम्। यावद्बाधं मिथ्यात्वेनानिश्चीयमानार्थविषयकज्ञानविषयत्वेन प्रामाणिकत्वमस्ति। अत एव व्यवहारयोग्यतारूपं सत्त्वमपि नासंभवीति चेत्—तन्न-व्यवहारयोग्यत्वं प्रामाणिकत्वं च न भिन्नम्। व्यवहारयोग्यता हि व्यवहारप्रयोजकज्ञानविषयत्वम्। व्यवहारश्च प्रमाणजन्यज्ञानत एव, न शुक्तिरूप्यादिज्ञानात्। कायव्यापाररूपव्यवहारासिद्धेः। अत्र यावद्बाधं मिथ्यात्वेनानिश्चीयमानत्वमात्रेण प्रामाणिकत्वस्वीकारे शुक्तिरूप्यादेरपि प्रामाणिकत्वापत्तिः। बाधात् पूर्वमपि, बाधिष्यमाणमिति ज्ञाने सति प्रामाणिकत्वं नेष्यते, यथा, पीतः शङ्खः इति प्रत्यक्षे पीतरूपादौ। तथात्राद्वैतशास्त्रजन्यज्ञानेन बाधिष्यत इति यो मन्यते, स कथं यावद्बाधं मिथ्यात्वेनानिश्चीयमानत्वं ब्रूयात्। सर्वथा बाधिष्यमाणार्थज्ञानसाधनस्य प्रमाणत्वमपि नास्तीति प्रामाणिकत्वरूपसत्त्वपरित्याग एव स्यात्। अतः शुक्तिरूप्य स्वाप्निकपदार्थादौ तदात्वे प्रामाणिकत्वबुद्धिरिवेहापि व्यवहारदशायां प्रामाणिकत्वबुद्धिमात्रम्; वस्तुतः प्रामाणिकत्वं नास्त्येवेति पक्ष एव भवतां युक्तः। तथा कथनञ्च बाधप्राप्त्यनन्तरमेव युज्यते। व्यवहारमध्ये तु अनुभवविरोधात् अनाप्तत्वेनाध्यवसितपुरुषोक्तात्, नेदं रजतमिति वाक्यात् जायमानं ज्ञानमिव जगन्मिथ्यात्वज्ञानमेव मिथ्याविषयकमध्यवसीयेत। नन्वनाप्तवाक्यतस्तथाऽस्तु; अनाप्तीयविलक्षणात् तत्त्व-

मस्यादिवाक्याज्जाते ज्ञाने कथं मिथ्याविषयकत्वनिश्चय इति चेत्—अनुभवविरोधात् अनाप्तीयविलक्षणमिदं वाक्यं न विपरीतार्थबोधनक्षममिति वाक्यस्यार्थान्तरपरत्वाध्यवसायात् तात्पर्याविषयतादृशार्थज्ञानं मिथ्याविषयकमिति तत्रापि निश्चीयेत। नन्वाप्तेनेश्वरेणोपदिष्टे अद्वैते कथमश्रद्धेति चेत्—न; अदर्शनात्। ईश्वरस्तावत् असाक्षात्कृततत्त्वो न भवितुमर्हति। साक्षात्कृतवांश्च स्वातिरिक्तस्योपदेश्यस्य पुंसोऽभावात् कस्मै उपदिशेत्? सर्वं मिथ्येति व्यवसाये च न हेयं किञ्चिन्निवर्तनीयमस्ति; न च भोग्यं किञ्चित्प्राप्यमस्ति; यदर्थं उपदेशः स्यात्। न च नित्यसाक्षात्कारिणः बाधज्ञानपूर्वस्थितानुवृत्तिरवशादापततीति सुवचम्। न च तत्त्वोपदेशो बधितानुवृत्त्यात्मा। अतः एवमर्थतत्त्वे सति उपदेष्टृत्वायोगात् आप्तस्येश्वरस्य वचनमन्याभिप्रायमिति विवेचनादद्वैतज्ञानं मिथ्याविषयकं निश्चीयेतेति ॥

यत्तु—सत्त्वं नाम प्रामाणिकत्वमित्युक्तौ सत्त्वं न प्रत्यक्षयोग्यं स्यात्, चक्षुरयोग्यप्रमादिघटितत्वात्। अन्योन्याश्रयश्च—सदर्थविषयकत्वं ज्ञानस्य प्रमात्वम्। अर्थस्य सत्त्वं च प्रमाविषयत्वमिति। न च सन् घटः इति ज्ञानस्य ज्ञानान्तरं विषयः, येन प्रमान्तरविषयत्वरूपं सत्त्वं घटे ज्ञानेनान्येन गृह्यत इति स्यादिति पराक्रान्तमद्वैतसिद्ध्यादाविति—तत्राद्वैतसिद्धिपराक्रमः शास्त्रबलीयस्त्वविचारे प्रतिहनिष्यते। एतावत्त्विहोच्यते—घटोऽस्तीति व्यवहारो द्विविधः। भूतले घटोऽस्तीत्येवं सोपपदः, केवलश्च। आद्ये, सत्ता भूतलादिनिरूपिताधेयतारूपा। अन्त्ये तु न सत्त्वमाधेयत्वम्। घट इति कश्चित् पदार्थः प्रामाणिको न वेति विचारावसरे तन्निर्णयाय तथा प्रयोगात्। अत एव तत्र सत्त्वं प्रामाणिकत्वमेव। प्रामाणिकत्वञ्च प्रमाणजन्यप्रमितिविषयत्वम्। तच्च ज्ञानविषयस्य वस्तुनः यथागृहीतं सद्भावः अर्थतथात्वमिति यावत्। घट इति किञ्चिदस्ति न वेति प्रष्टुश्च वस्तुनि घटत्ववत्त्वमस्ति न वेत्येव प्रश्नपर्यवसानम्। अतः अस्ति घट इत्यस्य घटत्वाश्रय एव वस्तु इति बोधनपरत्वम्। पण्डितो भवतीत्यादौ भूधातोः पाण्डित्यरूपसमभिव्याहृतपदार्थ-

तावच्छेदकधर्मवत्त्वमर्थः इत्यानुभविकम्। "अस भुवि" इति धात्वर्थपरामर्शे घटोऽस्तीति प्रयोगोऽपि ज्ञानविषये वस्तुनि घटत्ववत्तामेव गृह्णाति। इदमेव च प्रामाणिकत्वम्। इदञ्च चक्षुरादिग्राह्यमेव। मिथ्यात्वं च तद्रूपत्वेन प्रतीते तदभावः। घटोऽस्तीत्यनेन च यत् घटत्वेन प्रतीयते, तत्र घटत्वमस्तीति बोध्यते। एवं प्रमाविषयत्वं सत्त्वमित्युक्तावपि न दोषः। घटविषयकप्रमा हि जायमाना स्वप्रकाशत्वात् घटं स्वञ्च प्रकाशयति। अत एव घटमहं जानामीत्याकारः ज्ञानस्य प्रदर्श्यते। एवञ्च यावदुक्तं भवति, घटोऽनुभूयते, घटः प्रमीयते इति, तावदुक्तं भवति घटोऽस्तीति। किञ्च घटविषयकप्रमायामेकस्यां जातायां प्रमान्तरेण तद्विषयीकारोऽपि नायुक्तः। ज्ञानस्य ज्ञानान्तरवेद्यत्वसंमतेः। सर्वथा सत्त्वं प्रत्यक्षगम्यम्—वस्तुतथात्वं चेत् - बहिरिन्द्रियग्राह्यम्। प्रमाविषयत्वं चेत् - आन्तरप्रत्यक्षविषय इति॥

"घटोऽस्तीत्यत्र न पारमार्थिकसत्ता प्रतीयते। किन्तु व्यावहारिकी" इत्यप्ययुक्तम्। पारमार्थिकत्वेन सत्ताया अनुभवात्। दृश्यत्वानुमानेन तन्निषेधश्च बाधादयुक्त एव। सत्तात्रैविध्यञ्च निर्मूलम्। एवं निर्मूलानेककल्पनानां सर्वत्र सिद्धवत्कारेणोपन्यासक्रियासमभिहारमात्रेण न वस्तुसिद्धिः। यदपि—घटोऽस्तीत्यत्र सन्मात्रं गृह्यते, घटादिकं विकल्पितम्। अतो न घटादिसत्ता ग्रहविषय इति - तत्तु सन्मात्रग्राहित्वभङ्गे परास्तमेवेति किमत्र पुनः प्रस्तावेन। सन्मात्रग्राहित्वे च प्रत्यक्षस्य ग्राह्यवैजात्याभावात् ग्राहकेन्द्रियभेदसद्भावेऽपि न प्रमाणम्। यदि घटोऽस्तीत्यादिकं न घटादिगतसत्ताग्राहकम्, तर्हि घटादौ सत्तायाः प्रसक्त्यभावात् घटे सत्त्वाभावरूपमिथ्यात्वानुमानेन तन्निषेधः किमर्थः। प्रत्यक्षस्वरूपशोधनमात्रस्य पर्याप्तत्वात्। तदा च घटादेरप्रत्यक्षत्वात् दृश्यत्वरूपहेत्वसिद्धिश्च। ब्रह्मण एव दृश्यत्वात् तस्यैव मिथ्यात्वं स्यात्। ज्ञेयत्वसामान्यमेव दृश्यत्वमित्युक्तावपि ब्रह्मणो मिथ्यात्वनपरिहार्यम्। चैतन्यविषयत्वं घटादेरेव; न तु वृत्तिमात्रविषयस्य ब्रह्मण इति चेत् - घटोऽस्तीति प्रत्यक्षं चैतन्यं वा वृत्तिर्वा? आद्यस्य न सद्विषय-

कत्वम् । अन्त्ये, घटादयः सत्याः वृत्तिविषयत्वात् ब्रह्मवत् इति विरोध एव स्यात् । अस्तीति ब्रह्मणो ग्रहणे च घटोऽस्तीतिवत् घटो ब्रह्म घट आत्मेत्यादिव्यवहारस्याप्यापत्तिः। शुक्तिरूप्यादिभ्रमे शुक्त्यादेर्विशेषरूपेणा-भानवत् ब्रह्मणो न विशेषरूपेण भानं युक्तमिति चेत्–घटोऽस्तीत्यत्र केन रूपेण भानम् ? इदं रजतमिति पुरोदेशवर्तमानकालस्थितत्वेन रूपेण शुक्तिभानवत् सत्त्वेन ब्रह्मभानमिति चेत्–निर्धर्मके ब्रह्मणि किमेवं कश्चिद्धर्मोऽस्ति ? अन्य-गतधर्म आरोपितस्तत्रेति चेत्—तर्हि घटोऽस्तीति घटगतमेव सत्त्वं भासते ; धर्मि पुनः ब्रह्म तथा गृह्यते इत्युक्तं भवति । तथा च गतं पारमार्थिकसत्तया । घटादिरेव पारमार्थिकसत्ताश्रयो भाव्यः । एवं भ्रमत्वसाधनाय ब्रह्मभानमत्रेति कल्पनामात्रम् । स्वरूपतो ब्रह्मभानवत् घट एव स्वलक्षणभूतः स्वरूपतो भासते। घटत्वसत्त्वादिकं विकल्पविषयभूतमिति सौगतच्छायैव कस्मान्न स्यात् ? यदि घटस्य पटभेदरूपतया प्रतियोगिग्रहणमन्तरा प्रत्यक्षेण ग्रहणायोगः, ब्रह्मणो-ऽप्यनृतजडपरिच्छिन्नभिन्नतया प्रतियोग्यग्रहणात् प्रत्यक्षविषयत्वायोग एव । स्वरूपेण तद्भानं संभवतीति चेत् - घटादेरेव तत् संभवतीति किमप्रसिद्ध-वस्तुग्रहकल्पनयेत्यलम् ।

एतेन - ब्रह्मणि सत्त्वं कल्पितम् । सद्रूपमेव ब्रह्म; न तु सत्त्वविशिष्टम् , सद्विविक्तत्वरूपमिथ्यात्वं च ब्रह्मभिन्नत्वापरपर्यायमित्यपि - निरस्तम् । कल्पितस्य सत्त्वस्य वस्तुतो य आश्रयः तद्विषयतयैव प्रतीतिनिर्वाहे ब्रह्मविषयकत्वप्रतीति-भ्रमत्वादिकल्पनानुपपत्तेः । सतो ब्रह्मपर्यायत्वे घटोऽस्तीतिवत् घटो ब्रह्मेति व्यवहारापत्तेरुक्तत्वाच्च । सत्त्वाभावेऽपि सद्रूपमिति व्यवहारश्च व्याहतः ॥

यत्तु - शतदूषण्युक्तसर्वविकल्पस्वीकारप्रत्याशया प्रत्युक्तम् - सद्भिन्नत्वं नाम निर्हेतुकभिन्नत्वं ब्रह्मविवर्तत्वरूपम् । अतो न सिद्धसाधनमिति - तन्न--- सत्पदस्य, "यः सदाऽस्तीति केवल"मिति निर्वचनानुसारात् भावविकारराहि-त्यपरत्वे निर्हेतुकत्वलाभ इति हेतोः भवदुक्तं स्वीकुर्मः । परन्तु सद्भिन्नत्वं

निर्हेतुकभिन्नत्वात्मकसहेतुकत्वरूपं वा, अपक्षयविनाशपरिमाणर्द्धिजन्मवत्त्वं वा भविष्यतीति तत्र विवर्तत्वरूपविशेषपर्यवसानं कथम्? परिणामत्वस्याप्यहेतुकत्वाभावरूपत्वसंभवात्। एवमपि मिथ्यात्वस्यासाधनादर्थान्तरं स्यात्। गोमयविवर्ते वृश्चिकादावपि विवर्तत्वसत्त्वेन शुक्तिरूप्य इव तत्र मिथ्यात्वस्यासिद्धेश्च। शुक्तिरूप्येऽपि विवर्तत्वस्य परैरनङ्गीकृततया तद्दृष्टान्तेन साधनासंभवश्च। एतेन सद्भिन्नत्वं नाम स्वयंप्रकाशभिन्नत्वम् परप्रकाश्यत्वं ब्रह्माश्रिताज्ञानतत्कार्यान्यतरत्वरूपम्, तत् परमतेऽसिद्धं साध्यत इत्यपि निरस्तम्। दृष्टान्ते शुक्तिरूप्यादौ परैस्तदसंमतेः। शुक्त्यज्ञानस्य ब्रह्माश्रितत्वाभावाच्च। श्रुत्यनुपजीवने ब्रह्मण एवासिद्ध्याऽप्यप्रसिद्धिः। स्वयंप्रकाशभिन्नत्वस्याज्ञानतत्कार्यान्यतरत्वे पर्यवसानञ्च कथम्? सत्यभूतप्रकृतितत्कार्यान्यतरत्वेऽपि पर्यवसानसंभवात्। अज्ञानमिति ज्ञानाभावश्चेत्, न तत्कार्यत्वं प्रपञ्चस्य। भावरूपाज्ञानञ्चाप्रसिद्धम्; दृष्टान्तेऽप्यस्वीकृतम्। अज्ञानं कर्मेति पक्षे च सिद्धसाधनत्वं तदवस्थम्।

यच्च तृतीयम्—सद्भिन्नत्वं नाम सत्त्वाभावे सति सद्रूपं यत् तद्भिन्नत्वमिति - तत्र सत्त्वाभावविशिष्टसद्रूपत्वमेव विरोधात् न संभवति। नतरां तद्भिन्नत्वम्। सत्त्वाभावविशिष्टसद्रूपभिन्नत्वं च सत्त्वविशिष्टसद्रूपत्वरूपं भवत् जगतः सत्त्वं सत्यत्वमेव गमयतीति मिथ्यात्वविपरीतसिद्धिः स्यात्। प्रपञ्चस्य सद्रूपत्वं श्रुतिविरोधात् बाधितमिति चेन्न—सदेवेदमिति श्रुत्या प्रपञ्चे सद्रूपत्वस्यैव बोधनादविरोधात्। एतेन सद्रूपभिन्नत्वानुमाने प्रपञ्चे सद्रूपत्वमादायार्थान्तरकथनायोग इति प्रत्युक्तम्। सत्त्वाभावविशिष्टसद्रूपभिन्नत्वस्य सत्त्वविशिष्टसद्रूपत्वे पर्यवसानसंभवात्॥ यत्तु - अन्यथाख्यातिवादिभिः सत्यरजतस्यैवापणस्थस्य शुक्तिस्थलेऽभावात् तन्निष्ठाभावप्रतियोगित्वरूपं मिथ्यात्वमस्तीति न वाच्यम्; तत्तदधिकरणे अध्यस्यमानत्वस्यापि विवक्षणादिति—तेन कथमन्यथाख्यातिवादिवैलक्षण्यम्? अध्यासो हि तैरपीष्यत एव। तुच्छवारणायाध्यस्यमानत्वनिवेश इति तु स्यात्। न त्वारोपितसत्यरजतवारणायेति। अध्यासमात्रविषयत्वं विवक्षितमिति चेत्—तन्निष्ठाभावप्रतियोगित्वदळं

व्यर्थम्। कश्चायमध्यासः ? तदभावाधिकरणविशेष्यकतद्वत्ताप्रतीतिरिति चेत्--तर्हि अधिकरणनिष्ठाभावप्रतियोगित्वघटितमेव मिथ्यात्वमुक्तं भवतीति तद्दलमधिकमेव । एवं मात्रपदमपि व्यर्थम् । सत्यरजतवारणायेति चेत्—यदि भ्रमस्यानिर्वचनीयविषयकत्वमिति नियमं परित्यज्यापणस्थरजतादिविषयकत्वमिष्यते, तर्हि तत एव भ्रमसामान्यनिर्वाहे अनिर्वचनीयकल्पनमेवासंभवि । यदि त्वनिर्वचनीयमित्येव साध्यते, दृष्टान्तः साध्यविकलः । शुक्तिरजतादेरनिर्वचनीयत्वस्य प्रतिपक्षिभिरस्वीकारात् । उभयसंमतस्यैव दृष्टान्तत्वात् । "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः" इति हि न्यायसूत्रम् । शुक्तिरजतादिकमनिर्वचनीयमिति प्रथमं संस्थाप्य तत एवं दृष्टान्तप्रदानमिति चेत्---वयमपि स्थापनां निरस्य पुनर्दृष्टान्तासिद्धिमेव निरूपयेम । तद्विस्तरेण करिष्यते च । किमिदमनिर्वचनीयत्वमिति प्रश्ने पुनर्मिथ्यात्वनिर्वचनान्येवानुवदितव्यानीति दुरुत्तरतैव ।

अथ दृश्यत्वानुमानस्यास्य मिथ्यात्वे मिथ्यात्वासाधकत्वापत्तिः, सत्यत्वे विश्वान्तर्गतस्यास्य सत्यत्वान्न विश्वमिथ्यात्वमिति प्रश्ने यदुक्तम्—दृश्यत्वस्य मिथ्यात्वं न दृश्यत्वप्रयुक्तम् , किन्तु प्रमाणत्वप्रयुक्तमिति—तदिदं स्ववीयः । दृश्यत्वस्य यदि मिथ्यात्वप्रयोजकत्वं नास्ति, कुत्रापि दृश्यत्वेन मिथ्यात्वं न सिद्ध्येत् । यद्यस्ति, दृश्यत्वगतं दृश्यत्वमपि तत्साधकमेवेति कथं तन्मिथ्यात्वं न दृश्यत्वप्रयुक्तम् ? प्रमाणत्वप्रयुक्तं तदिति च न युज्यते । न हि यत् प्रमाणं तत् मिथ्येति कश्चिन्नियमोऽस्ति । यद्यत् मिथ्याभूतम् , तत्र सर्वत्रानुगतस्यैव मिथ्यात्वनियामकस्य वक्तव्यतया प्रमाणत्वस्य कतिपयमात्रवर्तिनो हेतुत्वायोगात् । शुक्तिरजतादौ दृष्टान्ते तदभावाच्च । प्रत्यक्षादिप्रमाणानां दृष्टान्तत्वे च तत्र मिथ्यात्वस्य प्रागसिद्धतया तद्दोषतादवस्थ्यम् । किञ्च प्रयोजकं किमपि भवतु । मिथ्यात्वमिष्टञ्चेत् कथमनुमापकत्वम् ? असतोऽपि कारणत्वं संभवत्येवेति च व्याघातान्न भवतीति कथानधिकारप्रसाधने, तथा प्रथमतश्च प्रपञ्चितमेव । ब्रह्मसिद्ध्यादौ मिथ्याभूतस्याप्यर्थक्रियाकारित्वमुपपादितमिति चेत् संवित्सि-

द्ध्यादौ तद्दूषितमेवेति न तथा निर्देशमात्रेण वस्तुसिद्धिः। प्रत्यक्षविरोध-दृष्टान्तासिद्ध्यादिना एतदनुमानासंभवश्च प्रागुक्त एव। सत्त्वं प्रत्यक्षयोग्यमपि प्राक् विवेचितमेव। अतः, विश्वमिथ्यात्वानुमानमिदं प्रत्यक्षाविरोधसहकृतशुक्तिरूप्यदृष्टान्तोपबृंहितयोगानुभवसिद्धमपीति वचनमपार्थम्।

अपि चात्रानुमानस्य योगानुभावसिद्धत्वं वर्णयता योगिनाऽप्यनुमानेनानुभवसिद्धेनानुमेयमेव विश्वमिथ्यात्वं मन्यत इव। युक्तश्चैतत्। अविद्यमानं मिथ्यात्वं कथं योग्यपि अध्यक्षयितुमर्हति। अतोऽनुमितिरेव प्रमितिरूपा वा भ्रान्तिरूपा वा तेनाप्यनुमानेन संपाद्यते। न च योगानुभावः सर्वोऽपि प्रमारूप इत्यपि सर्वे संप्रतिपद्यन्ते। विपरीतभावनामूलस्य योगजानुभवस्य भ्रान्तिरूपताया एव संप्रतिपन्नत्वात्। एवं भ्रान्त्यापि विश्वमिथ्यात्वं प्रत्यक्षीकर्तुं योगिनाऽप्यशक्यम्। ज्ञानस्य स्वयंप्रकाशतया अहं विश्वमिथ्यात्वमनुभवामीति किल तदनुभवाकारेण भाव्यम्। स्वस्य, स्वसमवेतज्ञानस्य चास्य सद्भावं गृह्णन् एष कथं विश्वमिथ्यात्वमनुभवेत्। मिथ्यात्वज्ञानञ्च सत्यत्वभ्रमनिवर्तकमिति वक्तव्यम्। निवर्त्यनिवर्तकभावश्च समानाधिकरणयोरेव ज्ञानयोः। अतः निवर्तकज्ञानं स्वाश्रये स्वयं सदेव निवर्तकमिति सर्वमिथ्यात्वे तदयोग एव। अनुमानस्याप्रमाणत्वशङ्का त्रिचतुरकक्ष्याविश्रान्तैव भवतीति भवतोच्यते। अनुमानं तु प्रथमकक्ष्यायामेव, व्याघातादिभिर्विलयमासादितमिति शतदूषण्याविष्कृतमिति तस्यैवाभावे किं तदप्रमाणत्वशङ्कया? अपच्छेदनयविचारश्चाद्वैतसिद्ध्याद्यामर्शेन सगुणनिर्गुणश्रुतिव्यवस्थापनप्रसाधनावसरे प्रपञ्चयिष्याम इति नात्रानुमानविचारे तत्प्रपञ्चनं युक्तम्।

"मिथ्यात्वानुमानस्य निरासोऽयं शिवद्रोहे तात्पर्येणैव" इत्यनन्तद्रोहिण आग्रहवचनमप्यसङ्गतत्वादुपेक्ष्यमित्यच्युतशेषसर्वज्ञशिवस्वरूपविदां वैष्णवानां शिव एव पन्थाः। जगन्मिथ्यात्ववादिन एव तु सर्वदेवताद्रोहितया शिवद्रोहिणः। न खलु राजानं कश्चिन्न सेवत इत्येतावता राजद्रोही स भवेत्।

इदं त्विह भाव्यम् । प्रत्यक्षस्य मिथ्यात्वानुमानेन परेण बाधः परस्य प्राबल्यादिति यदि, मिथ्यात्वानुमानस्य मिथ्यात्वभावानुमानेन परेण बाधः स्यादेव । तथा मिथ्यात्वाभावानुमानोपबृंहितेन मिथ्यात्वानुमानानन्तरमप्यनुस्यूतं प्रवहता सत्त्वप्रत्यक्षेणाप्यनुमानबाधः । यदि च शुक्तितत्त्वज्ञानस्य पश्चात्तनेन शुक्तिरूप्यभ्रमेण बाधाभावाय परेण भ्रान्तितया दुष्टकारणजन्यतया निर्धारितेन पूर्वबाधो न भवतीत्युच्यते, तदाऽपि मिथ्यात्वानुमानस्यापि अनन्तदोषदुष्टतया दोषमूलानुमितेर्भ्रान्तितया न प्रत्यक्षबाध इति सिद्धम् ।

यत्तु—दुष्टकारणजन्यत्वं प्रत्यक्ष एव भ्रमत्वप्रयोजकम्, न तु परोक्ष इति—तत् किं परोक्षज्ञानस्य भ्रान्तित्वमेव नास्तीति, किं वा भ्रान्तिर्भवदपि तत् कारणदोषं विनैव जायत इति, आहो दोषस्यापेक्षितत्वेऽपि दोषजन्यत्वं भ्रमत्वांशे प्रयोजकं न भवतीति । सर्वमिदं भ्रमसामान्यस्य दोषाधीनत्वस्य सर्वतीर्थकरसंमततया तदुपमर्दकयुक्त्यभावाच्च न शक्यशङ्कमपि । अभ्यधाम चाधस्तात् भ्रमात्मकपरामर्शादेः प्रमात्मकानुमितिजनकत्वं नैयायिकोक्तमपि न जाघटीति ; सुतरामनिर्वचनीयवस्तुस्वीकार्थद्वैतमत इति । अनुमानसामान्यस्य प्रमाणत्वे तु प्रत्यधिकरणं पूर्वपक्षिणामनुमानान्यबाधितानि भवेयुरिति गतं सिद्धान्तन्यायैः । । उभयसमावेशेन सर्वविरोधस्वीकार एव वा । एवञ्च सत्यत्वानुमानान्यपि सुस्थानि । तदैक कण्ठ्यात् सत्यत्वग्राहिप्रत्यक्षमपि नान्यथयितव्यमिति किमित्यपच्छेदनयावतारणम् ? अत एव भवदीयसूत्रभाष्यवार्तिकमपि व्युदस्तं मन्तव्यम् ।

एवं दृश्यत्वनुमानमिथ्यात्वे विश्वमिथ्यात्वासिद्धिस्थापन्या शतदूषण्या साध्यस्य मिथ्यात्वस्य मिथ्यात्वे विश्वसत्यत्वसिद्धिरपि,

"मिथ्यात्वस्य च मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् ।
सत्यत्वस्य तु सत्यत्वे सत्यत्वं स्थापितं भवेत् ॥"

इत्यन्यत्राचार्यदर्शितरीत्या व्युत्पादिता वेदितव्या । तदुपपाद्यते—मिथ्यात्वं हि प्रपञ्चस्य ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वम् । तस्य यदि मिथ्यात्वम्, ब्रह्मणि सत्त्वमेवोक्तं भवतीति न विश्वमिथ्यात्वसिद्धिः । न च मिथ्यात्वं यत् प्रपञ्चनिष्ठम्, तदपि प्रपञ्चवत् मिथ्येति वदतामद्वैतिनां पक्षे प्रपञ्चस्येव प्रपञ्चगतमिथ्यात्वस्यापि ब्रह्मण्येव कल्पितत्वमस्तु, तथा च ब्रह्मज्ञानेन प्रपञ्च इव तेन सह तन्मिथ्यात्वमपि बाध्यत इति सूपपादम् । एवञ्च मिथ्यात्वबाधदशायां प्रपञ्चस्यापि बाधिततया एकबाधकबाधिते तत्र कथं सत्यत्वप्रसक्तिरिति शङ्क्यम्—यतः प्रपञ्चे सत्यत्वस्यैव व्यवहारसिद्धतया व्यावहारिकस्य च तस्य ब्रह्मज्ञानबाध्यत्वस्यैव भवन्मते आवश्यकतया न प्रपञ्चगतं मिथ्यात्वं व्यावहारिकसत्यं भवितुमर्हति । सत्यत्वमिथ्यात्वयोर्विरोधात् । किञ्च लोके पारमार्थिकं प्रातिभासिकं चेति द्विविधमेव मिथ्यात्वं प्रसिद्धम्; न तु व्यावहारिकमिति किञ्चित् । अतः प्रतिभासिकं वा पारमार्थिकं वा मिथ्यात्वमिष्यत इति विकल्प्य प्रथमपक्षे दूषणमुच्यते—"मिथ्यात्वस्य च मिथ्यात्वे सत्यत्वं स्थापितं भवेत्" इति । अपि च तन्निष्ठं मिथ्यात्वं तत्सत्ताविषमसत्ताकमेव लोके प्रसिद्धम् । यथा शुक्तिरजतं प्रातिभासिकम्, तन्मिथ्यात्वं पारमार्थिकम् । वास्तवरजते आरोपितं च मिथ्यात्वं तद्रजतविलक्षणतया प्रातिभासिकम् । अतश्च व्यावहारिकप्रपञ्चगतमिथ्यात्वमपि व्यावहारिकसत्ताविलक्षणसत्ताकम्, प्रपञ्चसत्ताविलक्षणसत्ताकं तन्मिथ्यात्वत्वात् । यत् मिथ्यात्वं यदीयम्, तत्, तद्विषमसत्ताकमिति सामान्यमुखी व्याप्तिः । एवञ्च मिथ्यात्वे प्रपञ्चवैलक्षण्यस्यावश्यकतया तन्मिथ्यात्वं पारमार्थिकं प्रातिभासिकं वा वाच्यम् । तत्र पारमार्थिकत्वे द्वैतापत्तिः । दृश्यत्वहेतोस्तत्र सत्त्वात् साध्याभावात् दृश्यत्वानुमानस्यानैकान्तिकता च । न च न मिथ्यात्वस्य दृश्यत्वमिति वाच्यम् । मिथ्यात्वमिति शब्दगम्यतयैव दृश्यत्वस्याप्रतिषेध्यत्वात् । ज्ञानसामान्यविषयत्वमेव हि दृश्यत्वम् । अपारमार्थिकप्रपञ्चधर्मस्य मिथ्यात्वस्य पारमार्थिकत्वायोगश्च । एतेन प्रपञ्चमिथ्यात्वं ब्रह्मस्वरूपमित्यपि निरस्तम् । ब्रह्मणि कल्पितस्य प्रपञ्चस्य धर्मभूतं मिथ्या-

त्वं स्वाधारप्रपञ्चाधिष्ठानब्रह्मरूपमित्यसंभावितमेतत् । अन्यथा प्रपञ्चो मिथ्येत्यस्य प्रपञ्चो ब्रह्मवानित्यर्थः स्यात् । एवं मिथ्यात्वस्य ब्रह्मणश्चैकत्वेऽपि व्यवहारवैलक्षण्यप्रयोजकाकारभेदस्य स्वीकारे तस्याकारस्य मिथ्यात्वगतस्य पारमार्थिकत्वे तमादायैव द्वैतापत्तिः । तस्य मिथ्यात्वे मिथ्यात्वमिथ्यात्वपक्ष एव भङ्गयन्तरेणोक्तो भवति । अस्तु तदेव ; तस्यैव प्रकृतपक्षत्वादिति चेत्—तर्हि अपारमार्थिकं तत् मिथ्यात्वं प्रातिभासिकमिति तस्य शुक्तिरजतादिवत् व्यवहारकाल एव बाधात् प्रपञ्चसत्यत्वं सिद्धम् ।

ननु प्रपञ्चसत्यत्वं व्यावहारिकं मा भूत् । किन्तु प्रातिभासिकमेव । तद्विलक्षणञ्च प्रपञ्चमिथ्यात्वं व्यावहारिकम् । तच्च प्रपञ्चेन सह ब्रह्मज्ञानबाध्यमिति ब्रह्माद्वैतसिद्धिरिति चेन्न—व्यावहारिकं हि नाम वाचिककायिकव्यवहारानुबद्धम् । प्रातिभासिकं च प्रतिभासानुगुणकायिकादिव्यवहारानुपयोगित्वे सति प्रतिभासमात्रसंबद्धम् । यदि प्रपञ्चः सत्य इति मत्वा प्रवर्तमानः शुक्तिरजतबुद्ध्या प्रवर्तमान इव तदनुगुणं कार्यं निर्वर्तयितुं न प्रभवेत्, भवेत् तत् सत्यत्वं प्रातिभासिकम् । न चैवमस्ति । मिथ्यात्वं तु प्रातिभासिकम् । सर्वं मिथ्येति सङ्गिरमाणा अपि हि सौगताः क्षुत्पिपासाकुलाः भिक्षार्थं भ्रमन्ति । न च क्षुदादिकं मिथ्येति मन्यमाना जोषमासते । तेन तन्मिथ्यात्वबुद्धिः आस्तिकानामिव तेषामपि सत्यत्वबुद्ध्या बाध्यते इति । अतो व्यवहारविसंवादात् प्रपञ्चमिथ्यात्वं प्रातिभासिकम् । किञ्च यत् ब्रह्मप्रमाबाध्यम्, तत् व्यावहारिकम्, यत् तदन्यतोऽपि बाध्यम्, तत् प्रातिभासिकम् । तत्र प्रपञ्चसत्यत्वं यदि ब्रह्मज्ञानेतरबाध्यम्, तर्हि प्रपञ्चोऽपि तेन बाध्येतैव । न हि तदस्तित्वं बाधितम्, तत् पुनरबाधितमनुवर्तत इति युक्तम् । एवञ्च प्रपञ्चस्य परतो बाधे ब्रह्मप्रमैवानपेक्षिता स्यात् । अतः प्रपञ्चसत्यत्वस्य प्रपञ्चबाधकब्रह्मप्रमामात्रबाध्यतया व्यावहारिकत्वमेवेति प्रपञ्चमिथ्यात्वं व्यावहारिकं न भवितुमर्हति । एवञ्च प्रपञ्चमिथ्यात्वस्यैव प्रातिभासिकत्वेन प्रपञ्चसत्यत्वस्य

प्रातिभासिकत्वं **चन्द्रिकेष्ट**मयुक्तम्। तथा प्रपञ्चमिथ्यात्वस्य प्रपञ्चसत्यत्वस्येव अद्वैतसिद्ध्युक्तं व्यावहारिकत्वमपि ॥

इदं तु स्यात्—एवं प्रपञ्चमिथ्यात्वस्य मिथ्यात्वेऽपि तावता प्रपञ्च-सत्यत्वस्य सिद्धावपि तत् सत्यत्वं व्यावहारिकं प्रपञ्चेन सह ब्रह्मज्ञानबाध्य-मस्त्विति—तत्रोच्यते। प्रातिभासिकव्यावहारिकादिविभागः अनिर्वचनीय-पदार्थनिष्पत्त्यधीनः। तदप्रामाणिकत्वे चोपपादिते विभागोऽयं न स्थास्यति। अतः प्रपञ्चस्य वाऽन्यस्य वा कस्यचिदस्तित्वे अबाध्यत्वमेव ; बाध्यत्वे च नास्तित्वमेवेति न व्यावहारिकसत्त्वप्रसक्तिः। एवं च तन्मिथ्यात्वं नाम तत्प्रकारकज्ञानविशेष्यनिष्ठाभावप्रतियोगित्वम्। यद्वा प्रमाणगम्यत्वाभावः। तत्र प्रपञ्चगतमिथ्यात्वस्य मिथ्यात्वे, प्रपञ्चनिष्ठं यत् अभावप्रतियोगित्वं तस्या-भावः प्रपञ्चनिष्ठाभावप्रतियोगित्वमुच्यत इत्यायाति। अतश्च यथा पर्वतनिष्ठा-भावप्रतियोगित्वस्य वह्निनिष्ठाभावप्रतियोगित्वे कथ्यमाने पर्वते वह्न्यस्तित्वम्, तथा प्रपञ्चास्तित्वमेवोक्तं भवतीति सिद्धम्, 'मिथ्यात्वस्य च मिथ्यात्वे सत्यत्वं स्थापितं भवेत्' इति। किञ्च, 'नेह नानास्ती'ति वाक्येन ब्रह्मेतरत् मिथ्येति बोध्यत इति काममस्तु। तत्रेतरशब्देन प्रपञ्चवत् प्रपञ्चगतं मिथ्यात्वमपि ग्रहीतुमशक्यम्। मिथ्यात्वविधानात् पूर्वं प्रपञ्चमिथ्यात्वरूपपदार्थस्यैवासिद्ध-तया प्रमाणान्तरसंभावितप्रसिद्धिपदार्थमात्रं ब्रह्मेतरपदेन गृहीत्वा तन्मात्रानुवादेन मिथ्यात्वस्य विधेयत्वात्। ब्रह्मेतरत्वाविशेषात तद्ग्रहणमिति तु अनुवाद्यत्वसंभवे शक्येतापि ; न तु मिथ्यात्वविधेः पूर्वम्। यथा, सर्वं त्यजेति त्यागे विधीयमाने त्यागस्यापि सर्वपदेन ग्रहणेन त्यागत्यागोऽपि विधीयत इति दुर्वचम्, तथेहापि ॥

ननु मिथ्यात्वे मिथ्यात्वं तत्र च मिथ्यात्वमित्यनन्तमिथ्यात्वधारा-प्रसङ्गादनवस्था स्यादिति मिथ्यात्वस्य मिथ्यात्वं नेष्यत इति चेत्—तर्हि प्रथमं मिथ्यात्वं प्रपञ्चगतं पारमार्थिकं स्यात्। तच्च ब्रह्मनिष्ठाभावप्रतियोगित्वम्।

अन्ततो ब्रह्मनिष्ठः प्रकाशाभाव धर्मोऽपि तस्याधिकरणस्वरूपत्वे प्रागप्यधिकरणभूतब्रह्मप्रकाशसत्त्वात् अप्रकाशत्वमिव न स्यादिति ब्रह्मनिष्ठधर्मविशेषत्वमवश्याश्रयणीयमिति द्वैतापत्तिरनिवार्या । तथाचाविशेषात् सर्वाबाध एव वरम् । श्रुत्यर्थवर्णनरीतौ तदैव अस्त्विति ॥

अथ दृश्यत्वरूपहेतुशोधनम् । तत्र चाक्षुषत्वादिरूपत्वे दृश्यत्वस्य शतदूषण्युक्तदूषणप्रसङ्ग इति स्वयमेव परिहृत्य ज्ञानविषयत्वरूपं विकल्पं गृहीत्वा, 'तन्निर्दुष्टम्, ब्रह्मणि वृत्तिविषयत्वेऽपि वृत्त्यवच्छिन्नचैतन्यविषयत्वरूपहेत्वभावात् नानैकान्तिकत्व'मिति यदुक्तम्—तत्रोच्यते । चैतन्यविषयत्वमात्रहेतुकथनेनैव निर्वाहे चैतन्ये वृत्त्यवच्छिन्नत्वविशेषणप्रवेशात् हेतुर्दुष्टः । अप्रसिद्धञ्च चैतन्ये वृत्त्यवच्छिन्नत्वम् । न हि वृत्तिर्लोकतः प्रसिद्धा । नतरां चैतन्ये वृत्त्यवच्छिन्नत्वम् । ज्ञानानुमेयत्वादिभाट्टपक्षे ज्ञानसामग्र्यैव ज्ञानकार्यसिद्ध्या किमन्तर्गडुना ज्ञानेनेति तदसिद्धिरेव स्यादिति न्यायकुसुमाञ्जल्यादौ व्यक्तमपि । तेन—'अनुभवसिद्धं लाघवयुक्त्या नापह्नोतुं शक्यम् । अनुभवाभावे च लाघवशरणैरतीन्द्रियस्य वस्तुनः सिद्धिः प्रमाणाभावे दुस्साध'मिति सिद्ध्यति । न च वृत्तिः चैतन्यमिति द्वयं लोकेऽनुभूयमानमस्ति । अतो हेत्वसिद्धिः । चैतन्यस्य वृत्त्यवच्छिन्नत्वस्यासिद्धेः । पारमार्थिकस्य चैतन्यस्यातात्त्विकवृत्त्यवच्छिन्नतासम्बन्धायोगात् । अध्यासाधिष्ठानभावातिरिक्तः सम्बन्धो हि मिथ्यासत्ययोर्न भवितुमर्हति । अत एव चैतन्यविषयत्वमप्यहेतुः । विषयत्वस्य तत्संबन्धत्वायोगात् । वृत्तिस्वीकारे घटादेरपि वृत्तिविषयत्वेनैव दृष्टत्वानुमितत्वश्रुतत्वादीनामुपपन्नतया चैतन्यविषयत्वकल्पने प्रमाणाभावश्च । वृत्तिर्जडा न स्वतो विषयीकर्तुं शक्नोतीति चेत्—ज्ञानमपि विषयीकुर्वत् कुत्र दृष्टम्? निर्विषयकचैतन्यरूपस्य च ज्ञानस्य विषयीकरणासंभवः सुतराम् । एवं वृत्तेर्निर्विषयत्वे ब्रह्मणो वृत्तिविषयत्वायोगात्, "आत्मा वा अरे द्रष्टव्यः" इत्यादीनामनिर्वाह एव । दर्शनश्रवणादीनां चैतन्यरूपतया एवानुभवसिद्धतया तेषां ब्रह्मचैतन्याभेदे ब्रह्मणि विषयत्वस्य दुर्वचत्वेन च ब्रह्मातिरिक्तचैतन्यत्वमेव

तेषां युक्तमिति चैतन्यविषयत्वरूपहेतोर्ब्रह्मण्यनैकान्त्यं दुष्परिहरम्। वृत्त्यवच्छिन्नचैतन्यस्य विशिष्टतया शुद्धब्रह्मातिरिक्तत्वमिष्यते चेत्——विषयविषयिभावोऽपि तत एव ब्रह्मविषयेऽपि सुवच इति पुनरनैकान्त्यमेव ॥

यदि च ब्रह्म स्वयंप्रकाशम्, तत्रान्तःकरणवृत्त्या किं साध्यम्। आवृतचैतन्यमनावृतचैतन्याभिन्नमित्यभेदाभिव्यक्तिः फलमिति चेत्——यत् आवृतम्, तत् तदैवानावृतमपीति दुर्वचमेतत्। एतद्विशेषणविशिष्टानुयोगिप्रतियोगिकाभेदविषयकाभिव्यक्तिहेतुश्च वृत्तिर्न कथमप्यखण्डैकरसब्रह्मविषयिणी भवितुमर्हति। अभेदो यदि ब्रह्मैव, तर्हि स्वप्रकाशं ब्रह्म कथं वृत्त्या प्रकाश्यत इति प्रश्नस्तदवस्थ एव। यद्यतिरिक्तः, तर्हिसत्यज्ञानान्मुक्तिरुक्ता स्यात्। एवं चिदुपरागार्था वृत्तिरिति पक्षोऽप्ययुक्तः। उपरागस्य दुर्निरूपत्वात्। उपरक्तञ्च ज्योतिर्यथावदप्रकाशमानञ्चाविमुक्तञ्च स्यात्। एवंभूतायाश्च वृत्तेरविद्यानिवर्तकत्वमप्यसंभावितम्। तत्त्वविषयकवृत्तेरेवातत्त्वनिवर्तकत्वात्; शुद्धब्रह्मणश्चैतद्वृत्त्यविषयत्वात्। आवरणाभिभवार्था वृत्तिरिति पक्षश्चायुक्तः। आवरणकालेऽपि चैतन्यस्यावृतस्याहमिति प्रकाशमानत्वात्। "युष्मदस्मत्प्रत्ययगोचरयो"रिति, "अपरोक्षत्वात् प्रत्यगात्मप्रसिद्धे"रिति चैवमात्मप्रकाशस्य सर्वदा सुषुप्त्यादिदशायामपि स्वीकृततया आवरणस्यैवाभावात्। अंशः कश्चिदावृत इति च निरंशे ब्रह्मणि न शक्यं वक्तुम्। वृत्तिप्रयोजनञ्च जिज्ञासानुपपत्तिप्रसाधने प्रागेव परिशीलितमित्यलमत्र ॥

विषयत्वमात्रोक्तौ वृत्तिविषयत्वमादाय ब्रह्मणि तुच्छे चानैकान्तिकतेति न द्वितीये दृश्यत्वे व्यर्थविशेषणतेति यदुक्तम्——तत्र किञ्चिद्विचार्यम्——अशुद्धमुद्रणग्रन्थनिरीक्षणेन ज्ञानविषयत्वं दृश्यत्वमिति विकल्पो द्वितीय इति भवता मन्यत इव। अयं तु वस्तुतस्तृतीयविकल्पः। प्रत्यक्षज्ञानविषयत्वमिति तु द्वितीयं दृश्यत्वम्। तदेव विवक्षितमिति चेत्——विषयत्वमात्रोक्ताविति वचनं न घटते। द्वितीयविकल्पे व्यर्थविशेषणत्वं प्रत्यक्षरूपविशेषणविषये खलु

शतदूषण्यामुक्तम् । तद्वैयर्थ्यपरिजिहीर्षुणा च ज्ञानविषयत्वमात्रोक्ताविति वक्तव्यम् । तथैव तात्पर्यमिति न । भवता ज्ञानविषयत्वमित्यस्य वृत्त्यवच्छिन्न-चैतन्यविषयत्वमित्यर्थस्य प्राक्निरुक्तत्वेन ब्रह्मण्यनैकान्तिकत्वप्रसक्त्यभावेन तत्-परिहारार्थं विशेषणमिति निरूपणासामञ्जस्यात् । अस्त्वेतत् । तुच्छे हेतुर्यदि, "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति **योगसूत्रा**नुसारेण विकल्पा-ख्यवृत्तिविषयत्वमिष्यते, तर्हि साध्यमपि तत्रास्तीत्यनैकान्तिकत्वं परिह्रियताम् । ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्य तत्र संभवात् । सत्त्वेन प्रतीयमानत्वे सति अत्यन्ताभावप्रतियोगित्वं साध्यम् ; तन्न तुच्छे इति चेत्— साध्यविशेषणदळं व्यर्थम् । जगत्सत्यत्ववादिभिः सत्यत्वेन प्रतीयमानत्वस्य संमतत्वेन तदंशस्यासाधनीयत्वात् अत्यन्ताभावप्रतियोगित्वमात्रसाधनसंभवात् । बौद्धं प्रति साधने तदावश्यकमित्यपि न ; बौद्धेन संवृतिवादिना सत्त्वस्या-संमतत्वेऽपि सत्त्वेन प्रतीयमानत्वस्य स्वीकृतत्वात् अत्यन्ताभावप्रतियोगि-त्वस्यापि संमतत्वात् सिद्धसाधनापत्तेः । वृत्त्यवच्छिन्नचैतन्यविषयत्वरूप-हेत्वप्रसिद्धिरपि तदुद्भावनीया भवतीत्यपि न बौद्धं प्रति प्रयुक्तमिदमनुमानम् ॥

यच्च वृत्त्यतिरिक्तत्वरूप दृश्यत्वनिर्वहणम्—दृग्व्यतिरिक्तत्वं दृग्भेदघ-टितदृक्तादात्म्यम्—तच्च ब्रह्मतुच्छव्यावृत्तमिति—तच्च तुच्छसाधारणस्य दृग्भेदमात्रस्य हेतुत्वेऽप्यदोषस्य प्रागस्माभिः प्रतिबोधितत्वादुपेक्ष्यम् । कथञ्च प्रपञ्चे भेदघटितं तादात्म्यम् । तदनन्यत्वमित्यत्र, "न वयमनन्यत्वमित्यभेदं ब्रूमः किन्तु भेदं व्यासेधामः" इति ब्रह्मभेदस्य प्रपञ्चे निषिद्धत्वाद्धि न भेद-घटिततादात्म्यसंभवः । जडाजडयोरभेदासंभवपर्यालोचनयैव, "अभेदं न ब्रूमः" इत्युक्तत्वात् तादात्म्यमप्यसंभवि । दृग्व्यतिरिक्तत्वरूपहेतुघटको व्यतिरेकः पारमार्थिकः, अपारमार्थिको वेति विकल्प्य - प्रथमे, शुक्तिरजतादौ साधनवै-कल्यम् , द्वितीये ब्रह्मण्यनैकान्त्यमिति शतदूषण्यां दूषयन्त्यां तदग्रहेण, "न पार-मार्थिकव्यतिरेकित्वं शुक्तिरजतादावनैकान्तिकम्" इति अनैकान्तिकत्वपरिहार-प्रयासो व्यर्थः । व्यतिरेकीति पदस्य हेतुपदघटकत्वाभावेन तत्र मतुबर्थवर्णन-

संरम्भः, "व्यतिरेकिंपदेन मत्वर्थनिनिप्रत्ययान्तेन" इत्यपूर्वप्रत्ययघटनञ्च तथैव मुधा। व्यतिरेकप्रकारकधीविशेष्यत्वविवक्षणात् न तुच्छे व्यभिचार इत्यपि वार्तम्। तुच्छवारणस्यानपेक्षिततताया उक्तत्वात्। शशविषाणं न ब्रह्मेति बुद्ध्या च व्यतिरेकप्रकारकधीविशेष्यत्वं तुच्छेऽपि सुवचम्। "पारमार्थिकत्वं च त्रिकालाबाध्यत्वम्। तच्च न प्रपञ्चे" इत्युपपादयता पारमार्थिकात् व्यतिरेकित्वं पारमार्थिकव्यतिरेकित्वमित्यर्थो विवक्षित इव। न चैतत् शतदूषणीसंबद्धम्। प्रपञ्चेऽपीदं पारमार्थिकत्वमस्ति च; कालत्रयेऽपि प्रपञ्चसत्त्वात्। प्रपञ्चेन सह कालस्यापि बाध्यमानत्वात् कालाबाधदशायां प्रपञ्चस्य सत्त्वाच्च तस्य त्रिकालाबाध्यत्वम्। ब्रह्मण एव तु कालत्रयासंबन्धित्वम्। पारमार्थिकस्य ब्रह्मणः मिथ्याभूतेन कालेन कालिकसंबन्धेन संबद्धत्ववर्णनस्यासंभवात्। एवं प्रातिभासिकव्यतिरेकप्रकारकधीविशेष्यत्वमिति परिष्कारोऽपि हेयः। ब्रह्म दृग्व्यतिरिक्तमिति ज्ञानीयव्यतिरेकप्रकारकधीविशेष्यताश्रयत्वस्य ब्रह्मण्यक्षतत्वात्॥

अन्यच्च श्रूयताम्—दृक्पदेन चक्षुरिन्द्रियविवक्षायां तद्व्यतिरिक्तत्वस्य चक्षुष्यभावेन हेतोर्भागासिद्धिः। तत्र मिथ्यात्वासिद्धिप्रसङ्गश्च। ब्रह्मणि तद्व्यतिरेकसत्त्वादनैकान्तिकता च। ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यमपि ब्रह्मण्यस्तीति न व्यभिचार इति चेत्—तर्हि प्रपञ्चेऽप्येतदनुमानं ब्रह्मानाधारकत्वमेव साधयेत्; न तु मिथ्यात्वमित्यर्थान्तरं दोषः। दृक्पदं चैतन्यार्थकं चेत्—प्रतिवादिना नानाजीवानां धर्मभूतज्ञानानाञ्च चैतन्यरूपत्वस्य स्वीकृततया तत्र तद्व्यतिरेकरूपहेत्वसिद्ध्या तन्मिथ्यात्वासिद्धिः स्यात्। ब्रह्मभिन्नत्वं दृग्व्यतिरिक्तत्वमिति चेत्—विशिष्टस्य शुद्धातिरिक्तत्वायोगेनाद्वैतिपक्षे जीवेश्वरादेः मिथ्यात्वासिद्ध्यापत्तिरित्यलम्॥

यच्च-वृत्तिविषयत्वरूपदृश्यत्वपक्षे चाधिकरणान्यूनसत्ताकविषयताश्रयत्वविवक्षणान्न ब्रह्मणि व्यभिचार इति—तत्र प्रपञ्चसत्तायाः ब्रह्मसत्तायाश्च यावत् वैलक्षण्यमसिद्धम्, तावदिदमनुमानमसंभवि। सिद्धौ चानुमानवैयर्थ्यमित्यादि प्रागुक्तमेव। हेतोरप्रयोजकत्वादिकमपि ईदृशस्थले भाव्यम्॥

अथाद्वैतसिद्ध्युक्तेषु, विमतं मिथ्या दृश्यत्वादित्यनुमाने मिथ्यात्व-दृश्यत्वरूपसाध्यहेतुपरिष्कारेषु सारांशमुद्धृत्य प्रतिक्षिपेम । तत्र---

सदसद्विलक्षणत्वरूपप्रथममिथ्यात्वनिरूपणे यदुक्तम्---सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयवत्त्वं मिथ्यात्वम् । न च सत्त्वासत्त्वयोर्मिथो विरोधात् तदत्यन्ताभावयोरपि समावेशायोगात् व्याघातः । अत्र सत्त्वपदस्य त्रिकालाबाध्यत्वार्थकत्वात् ; असत्त्वस्य च सत्त्वेन प्रतीयमानत्वानधिकरणत्वरूपत्वात् । तथा च त्रिकालाबाध्यविलक्षणत्वं क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वञ्च मिलितं साध्यम् । प्रथमं दळं ब्रह्मव्यावर्तकम् । द्वितीयं तुच्छव्यवच्छेदकमिति---तत्रोच्यते---त्रिकालाबाध्यविलक्षणत्वं हि त्रिकालबाध्यत्वाभाववद्भिन्नत्वम् । ब्रह्मणो निर्धर्मकत्वेनाभावरूपधर्मानधिकरणत्वस्याप्यद्वैतसिद्धावेवैतदन्ते उक्तत्वेन बाध्यत्वाभाववत् तत्र भवितुमर्हतीति तद्विलक्षणमेव ब्रह्म । तर्हि बाध्यत्वाभाववत् अप्रसिद्धमिति चेत्---तर्हि साध्याप्रसिद्धिरपि दोषः । **एतेन** निर्धर्मकत्वादेव अबाध्यविलक्षणत्वरूपधर्मस्याप्यभावेन नातिप्रसक्तिरिति निरस्तम् । ब्रह्मणि कस्यापि धर्मस्याभावेन यस्य कस्यापि साध्यत्वेऽपि ब्रह्मण्यतिप्रसक्त्यभावात ईदृशगुरुदळनिवेशस्यायोगश्च । प्रपञ्चे किञ्चित्कालावच्छेदेन बाधोऽपि दुर्वचः । ब्रह्मेतरत् मिथ्येति तत्त्वज्ञानेन प्रपञ्चस्य कालेन सहैव बाध्यमानत्वात् बाधपूर्वक्षण एव कालसत्त्वेन तत्र कालावच्छिन्नत्वस्य दुर्वचत्वात् । कालाभावे बाधस्योत्तरकालवर्तित्वरूपं कार्यत्वं कथमिति चेत्---अद्वैतिभिरेव तद्विमृश्यम् । बाधो वा दुरुपपादत्वादुपेक्ष्यः । अथ, बाधो नाम न निवृत्तिः किन्तु नास्तीति ज्ञानम् । तदुत्पत्तिश्च कालान्तिमक्षण इति कालावच्छिन्नबाधविषयत्वं प्रपञ्चस्येति चेत्---ब्रह्म नास्तीति ज्ञानमादाय ब्रह्मणोऽपि बाध्यत्वापत्तिः । निर्धर्मके कथं तदिति चेत्---ब्रह्मगतसत्त्वमेव प्रपञ्चे आरोप्यत इति कथनं कथम्? सत्त्वस्याप्ययोगात् । सत्त्वाभावेऽपि सद्रूपमिति चेत्-बाध्यत्वाभावेऽपि बाध्यरूपं भवतु ।

यदि ब्रह्मणि सत्त्वधर्मं विना सद्रूपतयैव व्यवहारनिर्वाहः, सर्वत्रापि वस्तुनि तत्तद्धर्मानङ्गीकारेण तत्तद्रूपं तदित्येवोक्तया व्यवहारनिर्वाह इति सर्वं निर्धर्मकं भवतु। अतः प्रपञ्चे प्रकृतरीत्या साध्यसाधनमप्ययुक्तम्। अथेदं ब्रह्मणि नास्तीति ज्ञानं भ्रमः; नास्तीति प्रमाविषयत्वमेव बाध्यत्वमिति चेत्—किमिदं प्रमात्वम्? तद्वति तत्प्रकारकत्वमिति चेत्—भ्रमेऽपि क्वचिदंशे तदस्ति। अबाधितार्थविषयकत्वमित्युक्तावपि स एव दोषः। बाधितार्थाविषयकत्वमिति चेत्—कोऽयं बाधो नाम? अस्तु तदभाववति तत्प्रकारकज्ञानभिन्नत्वं प्रमात्वमिति चेत्—एतदपेक्षया अभावप्रतियोगित्वं बाध्यत्वमित्येवालम्।

एवमत्र त्रिकालाबाध्यविलक्षणत्वस्थाने बाध्यत्वमेव सुवचमिति वृथा विस्तरः। एवं सत्त्वेन प्रतीयमानत्वमित्युत्तरदळेऽपि सत्त्वमित्येव पर्याप्तम्। प्रपञ्चे ब्रह्मसत्ताया एवारोपः, न तु पृथक् सत्त्वमिति पक्षेऽपि निर्वाहाय सत्त्वमित्यनुक्त्वा, सत्त्वेन प्रतीयमानत्वमित्युक्तिः, अस्तु वा सत्तादात्म्यं चन्द्रिकोक्तमिति चेत्—तर्हि बाध्यत्वे सति सत्त्वेन प्रतीयमानत्वमित्येव निष्कृष्टं भवति। तत्र बाध्यत्वमत्यन्ताभावप्रतियोगित्वं चेत्—ब्रह्मण्यपि तदस्ति। जगतो ब्रह्म प्रति अनाधारत्वात् ब्रह्मात्यन्ताभावस्य सर्वत्र स्थितेः। बाध्यत्वं निवृत्तिप्रतियोगित्वमिति चेत्—कथं निवृत्तिः? अत्यन्ताभाव इत्युक्तौ प्रागुक्तो दोषः। न च निवृत्तिर्ध्वंसः। अनित्यप्रपञ्चे ध्वंसप्रतियोगित्वस्य प्रतिवादीष्टत्वेन सिद्धसाधनात्। नास्तीति विषयत्वमिति चेत्—पूर्ववत् धीः प्रमा वाच्या। प्रमात्वं च पुनः किमिति पृच्छ्यते। अत्यन्ताभावप्रतियोगित्वप्रकारक प्रमितिविषयत्वं ब्रह्मण्यप्यस्तीति प्रागुक्तदोषस्तदवस्थः। ननु स्वप्रकारकप्रतीतिविशेष्यवृत्त्यत्यन्ताभावप्रतियोगित्वं बाध्यत्वम्। ब्रह्मणः प्रपञ्चवत्त्वस्य तदभावस्य च शास्त्रेण बोधनात् प्रपञ्चप्रकारकधीविशेष्ये ब्रह्मणि प्रपञ्चाभावोऽस्तीति प्रपञ्चे समन्वयः। ब्रह्मवत्त्वेन च कस्याप्यग्रहणात् ब्रह्मणः स्वपदेन ग्रहणायोगात् न ब्रह्मण्यतिव्याप्तिरिति चेत्—तर्हि शशशृङ्गप्रकार-

कधियोऽप्रसिद्धयैव तद्वारणात् सत्त्वेन प्रतीयमानत्वादिति दळं व्यर्थम्। इष्टापत्तिरिति चेत्—एवमपि सिद्धसाधनम्। प्रापञ्चिकपदार्थानां तत्तद्वृत्तया भ्रान्त्या गृहीते धर्मिणि तत्तन्निषेधसंभवेन स्वप्रकारकप्रतीतिविशेष्यवृत्त्यभाव-प्रतियोगित्वसत्त्वेनार्थान्तरम्। स्वप्रकारकप्रतीतिविशेष्ययावद्वृत्त्यभावप्रतियोगि-त्वं विवक्षितमित्यपि न युक्तम्। घटादीनां ब्रह्मणि बाधेऽपि भूतलादौ तदधि-करणे बाधाभावेन प्रतीतिविशेष्ययावद्वृत्त्यभावप्रतियोगित्वस्य प्रपञ्चेऽप्ययो-गात्। ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वं साध्यमिति चेत्—तावता प्रपञ्चस्य ब्रह्मानाधारकत्वं वास्तवमित्येव सिद्ध्येत्; न तु प्रपञ्चस्य सर्वथाऽपलाप इति पक्षभेदेन सिद्धसाधनमर्थान्तरञ्च ॥

एवं सत्प्रतियोगिकभेदासत्प्रतियोगिकभेदोभयवत्त्वं मिथ्यात्वमित्य-प्ययुक्तम्। घटरूपकिञ्चित्सत्प्रतियोगिकभेदस्य पटादौ सत्त्वेन पटादेस्तथ्य-त्वेऽपि समन्वयात् विवक्षितासिद्धिः। सत्त्वावच्छिन्नप्रतियोगिताकभेद इत्युक्तौ ब्रह्मणः सद्रूपत्वेऽपि सत्त्वानङ्गीकारात् सत्त्वावच्छिन्नप्रतियोगिताकभेदसत्त्वात् मिथ्यात्वापत्तिः। एवं मिथ्यात्वस्यैवं परिष्कारेऽपि प्रकृते जगत्सत्यत्ववादिनः प्रतिवादिनः समाधानाय सत्प्रतियोगिकभेदमात्रस्य निवेश्यतया शिष्टं व्यर्थम्। सत्प्रतियोगिकभेदस्य तुच्छेऽपि सत्त्वेन स दृश्यत्वे प्रयोजको न भवतीति विशिष्ट-साध्यकथनमिति चेत्—मिलितस्यापि दृश्यत्वं प्रत्यप्रयोजकत्वमेव। दृश्यत्वं प्रति दर्शनसामग्र्यन्वयस्यैव प्रयोजकत्वात्। किञ्च, सत्पदेन ब्रह्मग्रहणं वा शुक्त्यादेरपि वा? आद्ये ब्रह्मभेदप्रयुक्तः शुक्तिरूप्ये मिथ्याव्यवहार इति स्यात्। तन्न युक्तम्। शुक्तिभेदप्रयुक्तो हि तत्र तथा व्यवहारः। तथा ब्रह्मभेदतुच्छभेदोभयसाधने सिद्धसाधनम्। अन्त्ये शुक्त्यादेः सत्त्वानङ्गीका-रात् सत्प्रतियोगिकभेदः शुक्तिमादाय दुर्वचः। सत्तादात्म्यवद्भेदविवक्षायां न दोषः; शुक्तिरस्तीति प्रतीत्या शुक्तौ सत्तादात्म्यस्वीकारादिति चेत्—शुक्तिरूप्ये-ऽपि तदस्ति; शुक्तिरजतमस्तीति प्रतीतेरविशेषादिति न तस्य भिन्नत्वमिति।

एवं सत्त्वात्यन्ताभावविशिष्टासत्त्वात्यन्ताभाववत्त्वं मिथ्यात्वमित्यपि निरस्तम् । सत्त्वादेः पूर्वोक्तरीत्या विवेचने पूर्वदोषाणामेव जागरूकत्वात् । ब्रह्मणः सत्त्ववत्त्वाभावेन मिथ्यात्वापत्तेश्च । निर्धर्मके ब्रह्मणि सत्त्वाभावाधिकरणत्वमपि नास्तीति न दोष इति चेत्—एवं तर्हि अनृतजडपरिच्छिन्नव्यावृत्त्यादीनामप्यभावात्, 'अस्थूलमनणु', 'नेतिनेती'त्यादिश्रुत्यर्थसमन्वयोऽपि ब्रह्मणि न स्यात् । भावाभावरूपसर्वधर्मत्यागे च ब्रह्म न कथमपि वक्तुं शक्यम् । पारमार्थिकधर्माभावेऽपि व्यावहारिकसत्त्वात् श्रुत्यादिसमन्वय इति चेत्—तथैव प्रकृतसमन्वयः । प्रपञ्चशुक्तिरजतादिष्वपि हि अपारमार्थिकधर्ममादायैव साध्यसमन्वयादविशेष इति । तत् सिद्धं प्रथममिथ्यात्वनिरुक्तिरयुक्तेति ॥

अथ प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं द्वितीयं मिथ्यात्वं विचार्यते । तत् किं निष्कृष्टं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्, यद्वा यथाश्रुतानुसारेण प्रथममुक्तं स्वप्रकारकधीविशेष्यवृत्त्यत्यन्ताभावप्रतियोगित्वम् । नाद्यः, अनिर्वचनीयस्य वस्तुनो यत्रात्यन्ताभाव उच्यते, तत्र तत् पूर्वं स्थितमस्थितं वा ? आद्ये अत्यन्तमभावो दुरुपपादः । अन्त्ये स्वसामानाधिकरण्यमभावे दुर्वचम् । एकदेशावच्छेदेन प्रतियोगि स्थितम्; देशान्तरावच्छेदेन तदत्यन्ताभाव उच्यते इति चेत्—तर्हि संयोगादिवत् अव्याप्यवृत्तित्वमेव सिद्ध्येत्; न तु मिथ्यात्वम् । द्रव्यस्याव्याप्यवृत्तित्वं संमतमेवेति सिद्धसाधनञ्च । न द्वितीयः, स्वप्रकारकधीविशेष्यभूतं धर्मि स्वस्याधिकरणं न वा ? आद्ये स्वसमानाधिकरणेत्येव लघु सुवचम् । सामानाधिकरण्यस्वीकारेऽनुपपत्तिस्तु प्रागुक्तैव । तद्धर्मि स्वानधिकरणमेवेति चेत्—स्वप्रकारकधीविशेष्ये यत्र क्वचित् यस्यात्यन्ताभावः, अन्यत्र तु तादृशे तत्सत्त्वम्, तस्यापि मिथ्यात्वापत्तिः । यथा जपास्फटिकौ रक्तौ इत्यत्र रक्तिम्नः । न च स्फटिके तदनिर्वचनीयमेवेति वाच्यम्—तत्र परिभाषायां अनिर्वचनीयोत्पत्तिनिरासात् । तथा तत् स्वं शुक्तिरजतं किं क्वचिदधिकरणे उत्पद्यते, उतानधिकरणक उत्पद्यते, आहो नोत्पद्यत एव ? तृतीये अनिर्वचनीयस्यासिद्धिः । द्वितीयस्तु न युक्तः; उत्पद्यमानानां देशे

काले च क्वचिदुत्पत्तेरेवानुभविकत्वात्। अतः प्रथमपरिशेषे तदधिकरणे तस्मिन् कथं तदत्यन्ताभावः? यत्र निषेधः क्रियते, तद्भिन्नमेव शुक्तिरजताधिकरणमिति चेत्—किं भूतले उत्पन्नस्य शुक्तिरजतस्य निषेधं कृत्वा मिथ्यात्वं सिषाधयिषसि? न ह्येवं कपालादावुत्पन्नस्य घटादेः तन्त्वादौ निषेधमात्रेण मिथ्यात्वं मनीषिणोऽध्यवस्यन्ति?

अथात्यन्ताभावमधिकृत्य किञ्चिदुच्यते—ध्वंसं प्रागभावमन्योन्याभावश्चादाय घटवृत्तिध्वंसादिप्रतियोगितया श्यामरूपादौ मिथ्यात्वव्यवहाराभावादत्यन्तेति निवेश्यते। एवमप्यव्याप्यवृत्तिसंयोगादौ मिथ्यात्वाभावस्तुल्यः। तदर्थं स्वावच्छेदकदेशावच्छिन्नात्यन्ताभावेति परिष्करणमयुक्तम्। तथा हि सति प्रतियोग्यवच्छेदकदेशस्यात्यन्ताभावावच्छेदकत्वायोगात् अनन्वय एव। स्वावच्छेदकत्वेन प्रतीतदेशावच्छिन्नात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमित्युक्तावपि उत्पन्नमनिर्वचनीयं शुक्तिरजतं वस्तुतः किञ्चिदवच्छेदेनोत्पन्नं न वा? न चेत्, न तदुत्पन्नत्वं स्यात्। द्रव्यसामान्यस्य किञ्चिदवच्छेदेनोत्पत्तेरेव दृष्टत्वात्। आद्ये तु विरोधात् तदवच्छेदेन तन्निषेधायोगः। अन्यावच्छेदेन निषेधे च संयोगादेरपि तथात्वेन मिथ्यात्वापत्तिः। किञ्चेदमभावगतमत्यन्तत्वम्? कालत्रयसंबन्धित्वमिति चेत्—एकप्रदेशावच्छेदेन प्रतियोगितदभावोभयसंबन्धित्वमयुक्तम्। काले प्रतियोगिसंबन्धानङ्गीकारे च उत्पत्तिरेव दुर्वचा। आद्यक्षणसंबन्धो ह्युत्पत्तिः। मा भूदनिर्वचनीयोत्पत्तिरिति चेत्—तर्हि कस्य मिथ्यात्वमिष्यते? किं निर्वचनीयस्यापणस्थरजतादेः?, किं वा नित्यस्य कस्यचिदनिर्वचनीयस्य?

अपिच शुक्तौ रजताध्यासे इदं रजतमित्याकारके विशेष्यत्वं शुक्तेरेव। एवं सप्रकारकधीविशेष्यशुक्तौ रजतस्य तादात्म्येनैवाध्यासात् तत्र रजतात्यन्ताभावस्य भ्रान्तेनापि संप्रतिपन्नत्वात् भ्रान्तिकालेऽपि इदं रजतं मिथ्येति प्रतीत्यापत्तिः। संयोगसंबन्धावच्छिन्नस्वनिष्ठप्रकारताकधीविशेष्यत्वं

भूतले उपपाद्य समन्वय इति चेत्—नात्र रजतमिति प्रतीतिस्तावत् न प्रातिभासिकरजतमात्रविषयिणी; प्रतिभासिकव्यावहारिकसाधारण्येन रजतत्वेन गृहीतस्यैव निषेधात्। तस्य च त्रैकालिकाभावो भूतले दुर्वचः। कदाचित् तत्र व्यावहारिकरजतसंभवात्। अस्तु दृष्टान्ते। पक्षे कथं समन्वयः? "सदेव सोम्येदम्", "सर्वं खल्विदं ब्रह्म", 'घटोऽस्ति', 'पटोऽस्ति' इत्येवं ब्रह्मणि प्रपञ्चतादात्म्याध्यासस्यैव प्रामाणिकत्वात् शुक्तिरूपेदमर्थे रजतात्यन्ताभावस्येव ब्रह्मणि प्रपञ्चात्यन्ताभावस्य तादात्म्याध्यासकाल एव संभवेन तावता मिथ्यात्वायोगात्। शुक्त्यधिकरणभूतलवत् ब्रह्माधिकरणमन्यत्तु दुर्वचम्। ब्रह्मणो भूतलस्थानापन्नत्वमेवास्त्विति चेत्—तर्हि किंविषयकाज्ञानात् प्रपञ्चकल्पना? भूतले शुक्त्यज्ञानवदत्रापि कस्यचिद्वाच्यत्वात्। अन्यकिञ्चिदुक्तौ तत्तत्त्वज्ञानादेव मुक्तिरिति न ब्रह्मज्ञानं मोक्षाय। शङ्खे शौक्ल्यज्ञानं यथा पीतनिवर्तकम्, तथा ब्रह्मणि किञ्चिदंशाज्ञानात् प्रपञ्चः, न तु ब्रह्मावारकाज्ञानादिति तस्मिन्नंशे एव जगत्तादात्म्याध्यासो युक्त इति, सर्वं खल्विदं ब्रह्मेत्यादेः तिरस्कार एव। तादृशतत्त्वेतरत् मिथ्येति तत्त्वज्ञानात् प्रपञ्चस्येव ब्रह्मणोऽपि तदितरत्त्वाविशेषात् बाधश्च स्यात्॥

अत एव—'नेदं रजतमिति बाधज्ञानं न साक्षात् मिथ्यात्वसाधकम्। अत्यन्ताभावघटितत्वात् मिथ्यात्वस्य। नात्र रजतमित्येव तु बाधज्ञानम्। शुक्तेश्च प्रागेव भेदस्य स्थितत्वात्। अपि तु इदं रजतमिति ज्ञानेन लौकिकपरमार्थिकरजततादात्म्येन शुक्तौ अनिर्वचनीयस्य प्रतीतत्वात् तत्रानिर्वचनीयरजतम् इदमिति गृहीत्वा नेदं रजतमिति व्यावहारिकरजततादात्म्यनिवर्तनं क्रियत' इति निरस्तम्। अत्यन्ताभावघटितमिथ्यात्वस्य प्रपञ्चे दुर्वचत्वात्। नेदं रजतमित्यत्र इदम्पदं च नानिर्वचनीयपरम्। नेदं रजतं, किन्तु शुक्तिरेवेति प्रतीतौ इदमर्थे शुक्त्यैक्यस्य भानात्। अन्यथा अनिर्वचनीये पुनश्शुक्त्यारोपरूपतया भ्रान्तित्वापत्तेः। शुक्तिरित्यत्रानुषक्तमिदम्पदमर्थान्तरपरमिति तु साहसम्। इदं रजतमिति पूर्वं भ्रान्तिविषयस्य शुक्तेरेव हि नेदं

रजतमित्यत्रापि इदमर्थत्वं युक्तम्; आवश्यकञ्च। तर्हि व्यावहारिकशुक्तौ प्रातिभासिकरजतभेदस्य प्रागेव स्थितत्वात् अनिर्वचनीयोत्पत्तिवाद्यद्वैतिमते भ्रान्तिकालेऽपि नेदं रजतमिति प्रतीत्यापत्तिरिति चेत्—भवत्वेव तत्र पर्यालोचनीयम्। इदमर्थस्य शुक्तित्वेनाग्रहणात् तत्र रजततादात्म्यमारोपयतीति चेत्—किं प्रातिभासिकतादात्म्यम्, उत व्यावहारिकतादात्म्यम्? अन्त्ये अनिर्वचनीयकल्पनं व्यर्थम्। आद्ये प्रातिभासिकस्य व्यावहारिककार्याङ्गुलीयकादिकार्यकरत्वाभावात् न प्रवर्तेत। प्रवर्तते प्रातिभासिके व्यवहारिकतादात्म्याध्यासादिति चेत्—तर्हि अन्यथाख्यातिं परिहृत्यानिर्वचनीयख्यातिमभिमन्यमानैः प्रतिभ्रममन्यथाख्यातिद्वयमवश्यमिष्टं स्यात्—शुक्तौ प्रातिभासिकरजततादात्म्यारोपः, प्रातिभासिके व्यावहारिकतादात्म्यारोपश्चेति।

'प्रातिभासिकव्यावहारिकसाधारणं रजतत्वम्। न तु प्रातीतिकमात्रवृत्तिरजतत्वमन्यत्। तथोभयसाधारणरजततादात्म्यत्वेन तादात्म्यं संसर्गः। एवं सामान्यरूपेण प्रातीतिकरजतं सामान्यधर्मावच्छिन्नप्रातीतिकतादात्म्यसंसर्गेण भासते' इति चन्द्रिकापक्षेऽपि तत् तादात्म्यं शुक्तौ नास्तीति तदारोपात् अन्यथाख्यातिरेव। यथा हि व्यावहारिकरजततादात्म्यं शुक्तौ बाधितम्, तथा प्रातिभासिकरजततादात्म्यमपि। तादात्म्यं भेदघटितमिति चेत्—अस्तु; तथाप्यैक्यमपि घटकमेव। घटो घट इति वत् घटः पट इत्यप्रयोगात्। तादात्म्यं नाम तत्पदार्थविशेषणभिन्नविशेषणवत्त्वे सति तत्पदार्थादभिन्नत्वम्; यद्वा जातिमान् घट इत्यादिसंग्रहाय तत्पदार्थाविषयकप्रतीतिविषयत्वे सति तदैक्यम्; अथ वा स्वाविषयकप्रतीतिविषयत्वतदविषयकप्रतीतिविषयत्वान्यतर—स्वाभिन्नत्वोभयसंबन्धेन किञ्चिद्विशिष्टत्वम्। जातिमान् घट इत्यादौ जातिमदविषयकप्रतीतिविषयत्वं घटे, दण्डवान् रक्तदण्डवानित्यादौ रक्तदण्डवद्रूपतदविषयकप्रतीतिविषयत्वं दण्डवतीति यथायथं समन्वयः। सर्वथा ऐक्यं तु न परित्यक्तम्। सिंहो माणवक इत्यादौ तत एवोपचार आश्रीयते। ऐक्यञ्च शुक्तिरजतयोः

कथमपि न भवतीति अविद्यमानतादात्म्यस्य संसर्गत्वे अन्यथाख्यातिरवर्जनीयेति अनिर्वचनीयकल्पनं व्यर्थमेव। विशिष्य चानिर्वचनीयं पृथक् निरसिष्यामः ॥

एवम् इयं शुक्तिरिति ग्रहणानन्तरं दोषवशात् इदं रजतमेवेतिभ्रमे नात्र शुक्तिरिति प्रातिभासिकाभावप्रतीतौ शुक्तेरपि स्वप्रकारकधीविशेष्यवृत्तिर्थः प्रातिभासिकोऽत्यन्ताभावः तत्प्रतियोगित्वमस्तीति मिथ्यात्वापत्तिः। अप्रातिभासिकात्यन्ताभावप्रतियोगित्वमिति निरुक्तौ च स्वाप्निकशुक्तिरजतस्य मिथ्यात्वायोगः; तत्र स्वाप्निकधर्मिणि स्थितस्य नेदं रजतमिति निषेधस्यापि स्वाप्निकस्य प्रातिभासिकतया अप्रातिभासिकत्वघटितलक्षणायोगात्। तथा, नात्र शुक्तिरिति पूर्वोक्तस्थले, अयमभावः पारमार्थिकोऽप्रातिभासिक इत्येव मतिसत्त्वेन प्रातिभासिकस्याप्रातिभासिकत्वस्यात्यन्ताभावे सत्त्वेन स दोषस्तदवस्थ एव। सर्वं ब्रह्ममयमिति वेदान्तार्थबाधिनां नात्र ब्रह्मेति भ्रान्तिमादाय निरुक्तात्यन्ताभावप्रतियोगित्वं प्रातिभासिकमुपपाद्य ब्रह्मण्यपि मिथ्यात्वमापादनीयम्। व्यावहारिकमिति वा पारमार्थिकमिति वा अप्रातिभासिकमिति वा विशेषणदानेनाप्यद्वैतिभिरिदं दुष्परिहरम्। निवेशितस्य दळस्यापि प्रातिभासिकस्य तत्र संभवेन दोषापादनस्य जागरूकत्वात्। अतः सर्वविधमपि मिथ्यात्वमित्थममिथ्यावस्तुन्यापाद्यमानमद्वैतिभिरशक्यपरिहारमेव ॥

अपि चायमप्रातिभासिकोऽत्यन्ताभावः व्यावहारिकः पारमार्थिको वा? नाद्यः, प्रपञ्चाभावस्य ब्रह्मनिष्ठस्य व्यावहारिकत्वे बाध्यत्वस्यावश्यकतया तत्प्रतियोगिनः प्रपञ्चस्य सत्यत्वसिद्धेः। नन्वभावस्य बाध्यत्वे प्रतियोगिनः सत्यत्वमिति न नियमः, स्वप्ने स्वाप्निकपदार्थाभावस्य प्रतीतस्य बाध्यत्वेऽपि तत्प्रतियोगिनः स्वाप्निकस्य सत्यत्वाभावादिति चेत्—न; जागरदशाकालिकप्रतीतिविषयस्य स्वाप्निकाभावस्यैव कदाचित् स्वप्नेऽपि प्रतीतिरित्येवोपपत्तौ अतिरिक्ताभावकल्पने गौरवात्। कथं जागरिकस्याभावस्येन्द्रियग्राह्यस्य स्वप्ने इन्द्रियोपरतौ प्रत्यक्षमिति चेत्—इन्द्रियनिरपेक्षं प्रातिभासिकप्रत्यक्षजन-

कसामग्र्या एव व्यावहारिकं प्रातिभासिकप्रतियोगिकमभावमपि प्रातिभासिकानुपलम्भकाले ग्राहयितुं प्राभवमस्तीति स्वीक्रियताम्। वस्तुतः स्वाप्निकपदार्थस्य स्वप्नमध्ये बाधो नाम नैकत्र देशेऽनुभूतस्यान्यत्राभावः; किन्तु प्रतिपन्नोपाधौ। तत्र जागरे शुक्तिग्राहकविलक्षणा यथा रजतग्राहिका दोषघटितसामग्री, तथा स्वप्नव्यवहारोपयोगिसामग्रीविलक्षणभूतया स्वाप्निकबाधबुद्धिनिवर्त्यदोषघटितया सामग्र्या स्वाप्निकशुक्तौ रजतभ्रमे पश्चात् तत्रैव स्वाप्निकसामग्र्या बाधो जायते। तत्र जागरे शुक्तिरजततदभावयोर्मध्ये यथा रजतसत्तापेक्षया तदभावसत्ताऽधिका, तथा स्वप्नमध्ये तद्रजतसत्तापेक्षया तदभावसत्ताऽप्यधिकैवेति सुप्तपुरुषदृष्ट्या अभावस्तावदप्रातिभासिक एव। उपर्यद्वैतसिद्धावेव "भिन्नसत्ताकयोरविरोधेऽपि समसत्ताकयोर्विरोधात्" इत्युक्त्याऽप्यत्र स्वाप्निकतदभावसत्तयोः समत्वाभावदर्शनात्। अतः स्वाधिकसत्ताकाभावप्रतियोगित्वमेव मिथ्यात्वं वाच्यमिति न प्रपञ्चाभावस्य प्रपञ्चवत् व्यावहारिकत्वमिति ॥

यत्तु अन्यूनसत्ताकाभावप्रतियोगित्वं मिथ्यात्वमिति—तन्न! अन्यूनसत्ताकत्वं हि समसत्ताकत्वमपि। तथा चोभयोर्विरोधे कतरस्य मिथ्यात्वमिति दुर्निश्चयं भवेत्। संयोगतदभावयोरिवाविरोधेनोभयसत्यत्वमेव स्यात्। किञ्चेदमन्यूनसत्ताकत्वम्? 'न्यूनसत्ताकत्वं नाम प्रातिभासिकस्याभावस्य व्यावहारिकपारमार्थिकप्रतियोगिकत्वं यत्, यच्च व्यावाहारिकस्याभावस्य पारमार्थिकप्रतियोगिकत्वम्, तदन्यतरवत्त्वम्। तदभावश्चान्यूनसत्ताकत्व' मित्यादिपरिष्कारश्च व्यावहारिकपारमार्थिकरूपविधाद्वयसिद्धावेव घटते। मिथ्यात्वसाधनात् पूर्वं च विधाद्वयमनवगतमिति नैष परिष्कारः सुकरः। अपि चेदं पारमार्थिकत्वं मिथ्याभिन्नत्वमिति मिथ्यात्वघटितमेव मिथ्यात्वमित्यात्माश्रयः। ज्ञाननिवर्त्यस्वरूपमिथ्यात्वं घटकम्; घटितं तु मिथ्यात्वमन्यदिति चेत्—घटकं ज्ञाननिवर्त्यत्वमेव कृत्स्नं भवतु; किं बहुना? अस्तु तथैवेति चेत्--किमिदं निवर्त्यत्वम्? ज्ञानजन्या निवृत्तिर्नाम का? तत्रैव च न प्रमाणम्। शुक्तिज्ञानेन शुक्तिरूप्यं निवर्तत इति चेत्—दोषाधीनत्वात् रूप्यस्य दोषनिवृत्तौ निवृत्ति-

रित्यस्तु । न तु शुक्तिज्ञानेन तन्निवृत्तिः । द्विचन्द्रादिस्थले हि दोषनिवृत्त्यैव मिथ्यावस्तुनिवृत्तिर्दृष्टा । ज्ञानं तु जातं दुर्बलविपरीतज्ञानोत्पत्तिप्रतिबन्धकमात्रम् । न तु वस्तुनिवर्तकम् । एवं प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्, यच्च विनाशिनिष्ठं स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वम्, तदन्यतरवत्त्वमिति पारमार्थिकत्वाद्यघटितः चन्द्रिकोक्तः परिष्कारोऽपि हेयः । दृश्यत्वरूपहेतुना शुक्तिरूप्यदृष्टान्तेन साध्यमानं हि मिथ्यात्वं तद्वत् प्रातिभासिकनिष्ठं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव स्यात् । तत् यद्यसंभवि, तर्हि दृश्यत्वं मिथ्यात्वाप्रयोजकमित्येव स्यात् । न त्वन्यादृशमेकं दलं स्वीकृत्यान्यतरवत्त्वमिति परिष्करणं युज्यते । वस्तुतः स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वमेव पर्याप्तम् । तत्र च दोषः प्रागेवादर्शि ॥

यत्तु—घटध्वंसाधिकरणे कपाले घटात्यन्ताभावनिषेधेऽपि यथा न घटसत्त्वापत्तिः, तथा प्रपञ्चात्यन्ताभावस्य ब्रह्मणि निषेधेऽपि न प्रपञ्चसत्त्वापत्तिरिति—तन्न ; वैषम्यात् । तत्र हि ध्वंसप्रागभावाधिकरणे नात्यन्ताभाव इति प्राचीनतार्किकमते घटात्यन्ताभावं प्रति घटतद्ध्वंसतत्प्रागभावानां त्रयाणामपि प्रतियोगितया घटात्यन्ताभावाभावस्य अत्यन्ताभावविरोधिनि तदन्यतम एव विश्रम इति न घटैकपरिशेषसंभवः । यथा घटपटान्यतराभावाभावस्य न घटमात्रे पर्यवसानम्, तद्वत् । प्रकृते तु प्रपञ्चाभावस्य प्रपञ्चमात्रप्रतियोगिकतया तन्निषेधः प्रपञ्च एव पर्यवस्यति । अस्तु वा प्रपञ्चप्रागभावप्रध्वंसाभावान्यतरस्मिन्नपि पर्यवसानम् । तथापि ध्वंसप्रागभावयोः सत्यत्वे प्रपञ्चसत्यत्वमप्यर्थप्राप्तम् ; तन्निरूपणाधीननिरूपणत्वात् तयोः ॥

किञ्चैवमभावस्य व्यावहारिकत्वे कृत्स्नस्य वेदस्याबाधितार्थबोधकत्वरूपप्रामाण्यायोगः । किं श्रुतेः प्रामाण्यमबाधितब्रह्मबोधकत्वात्, उत अद्वितीयत्वादिबोधकत्वात् ? नाद्यः, स्वयंप्रकाशे तत्र शास्त्राप्रवृत्तेः । नान्त्यः, अद्वितीय

त्वादेर्व्यावहारिकत्वेन तद्बोधकस्य वेदस्याबाधितार्थकत्वाभावात् । ननु ब्रह्मातिरिक्तस्याताात्त्विकत्वं बोधयन्त्याः श्रुतेः कथमप्रामाण्यम् ? अतात्त्विकत्वमेव हि परमार्थ इति चेन्न--अतात्त्विकत्वं मिथ्यात्वम् ; स्वसमानाधिकरणः स्वाभावः । स च व्यावहारिकः बाध्य इति संप्रत्युच्यमानतया तस्यापारमार्थिकत्वात् । 'कर्मकाण्ड इव तत्रापि व्यावहारिकमेव प्रामाण्यम् । तत्त्वमसीति श्रुतिरेव प्रमाण'मिति चेत्—तदपि न—तस्याः प्राप्तार्थकत्वात् । अप्राप्ते हि शास्त्रमर्थवत् । तस्याः स्वयंप्रकाशाखण्डब्रह्मातिरिक्तांशबोधकत्वे तु श्रुत्यन्तरसमानयोगक्षेमत्वमेव । तत्त्वमसीत्यस्य तात्त्विकं प्रामाण्यमित्यपि स्थवीयः ; शब्दसामान्यस्य बाध्यतया तद्गतप्रामाण्यस्यापि बाध्यत्वेन तात्त्विकत्वायोगादिति ॥

अथ प्रपञ्चस्य व्यावहारिकतया तदभावस्य तत्समसत्ताकत्वे विरोध इति अत्यन्ताभावस्य पारमार्थिकत्वमेव स्वीकुर्म इति चेत्—तर्हि ब्रह्मणः तस्य चोभयस्य स्वीकारात् द्वैतापत्तिः । ब्रह्मैवायमभावः, अभावस्याधिकरणात्मकत्वादिति चेत्—तेन साकं प्रपञ्चस्य विरोधोऽस्ति न वा ? आद्ये ब्रह्मप्रकाशस्य सार्वदिकत्वात् प्रपञ्चप्रतीतिरेवानुपपन्ना । अभावस्य ब्रह्मणः प्रपञ्चप्रतियोगिकत्वाकारेण प्रागज्ञातत्वात् प्रपञ्चप्रतीतिरिति चेत्—तत् प्रपञ्चप्रतियोगिकत्वं परमार्थः अपरमार्थो वा ? आद्ये तदादाय द्वैतापत्तिः । तस्य ब्रह्माभेदे प्रपञ्चप्रतियोगिकत्वमपि प्रागेव ज्ञातमिति प्रपञ्चप्रतीतिर्न स्यादेव । अपरमार्थ इति चेत्--प्रपञ्चप्रतियोगिकत्वमभावे यदि मिथ्या, तर्हि प्रपञ्चसत्यत्वमेव । किञ्च तात्त्विकाभावप्रतियोगित्वादपि प्रपञ्चस्य तात्त्विकत्वापत्तिः । प्रपञ्चप्रतियोगिकत्वविशिष्टाभावरूपविशिष्टपदार्थे विशेषणस्यापारमार्थ्ये विशिष्टस्याप्यपारमार्थ्यात् । उक्तञ्च **न्यायकुसुमाञ्जलौ**—"न चापारमार्थप्रतियोगिकः पारमार्थिकोऽभावो नाम" इति । ननु शशशृङ्गं नास्तीति निषेधः अनुभवसिद्ध इति चेन्न—क्वचित् प्रसक्तस्यैवान्यत्र प्रतिषेधात् शशशृङ्गमस्तीति प्रतीत्यभावेन तन्नास्तीति प्रतिषेधाप्रसक्तेः । शशशृङ्गमस्तीति प्रतीतिरिष्यत इति चेत्—तर्हि, 'सत्त्वेन प्रतीयमानत्वाभावात् प्रपञ्चशशशृङ्गयोर्वै-

लक्षण्य' मिति स्वोक्तिव्याघातः। अनुभवविरोधश्च। कस्तर्हि शशशृङ्गं नास्तीत्यस्यार्थ इति चेत्—अशक्यं प्रयोक्तुमित्युक्तम्। अपिच पराक्रान्तमत्र **भट्टकुमारिला**दिभिरपीति किमधिकं स्थापनीयम्। तर्हि प्रपञ्चस्य सत्त्वेन प्रतीयमानत्वात् तदभावप्रतीतिर्न न घटते इति चेत्--घटतां नाम। तस्याभावस्य पारमार्थिकत्वे प्रपञ्चोऽपि पारमार्थिक इत्येव संप्रत्युच्यत इति। ननु प्रपञ्चः परमार्थः, तात्त्विकाभावप्रतियोगित्वादिति न युक्तम्। तात्त्विकाभावप्रतियोगिनः शुक्तिरजतस्य मिथ्यात्वादिति चेन्न—तस्य मिथ्यात्वे मानाभावात्। आपणस्थपारमार्थिकरजतस्यैव इदं रजतमित्यत्र प्रतीयमानतया तदभावस्यैव, नेदं रजतमिति बोधनात्। इदं रजतमिति भ्रान्तिकाले लौकिकं परमार्थिकमिदं रजतमित्येवानुभवात्। तदेतदनिर्वचनीयनिरसने निरूपयिष्यते। तथा च पारमार्थिकप्रपञ्चाधिकरणे पारमार्थिकस्याभावस्य दुर्वचतया अत्यन्ताभावस्यापारमार्थिकत्वमेव। ननु पारमार्थिकप्रतियोगिकस्याभावस्य परं कथमपारमार्थिकत्वमिति चेत्—अपारमार्थिकत्वकथनमिदमन्यत्राधिकरणे स्थितस्य प्रपञ्चाभावस्य आपणस्थरजततादात्म्यस्य शुक्ताविवात्रारोपाभिप्रायेण। अधिकरणान्तरे प्रपञ्चाभावः प्रसिद्धः। अप्रसिद्धौ तु सुतरां न प्रपञ्चनिषेध इति सिद्धं प्रपञ्चसत्यत्वम्॥

अथ तृतीयं ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं विचार्यते—

केयं निवृत्तिः? न तावत् ध्वंसः। उत्तरज्ञानाधीनपूर्वज्ञानविनाशमादाय पूर्वज्ञानस्य मिथ्यात्वापत्तेः। शुक्तिरजतं ध्वस्तमिति ध्वंसप्रतीत्यभावाच्च। यदा तत्त्वसाक्षात्कारः, तदातनानां तदधीननिवृत्तावपि तत्पूर्वभाव्यनादिसृष्टिनष्टपदार्थानां ज्ञानाधीननाशप्रतियोगित्वाभावेन मिथ्यात्वानापत्तेश्च। यदि ज्ञानोत्पत्तिकाले तत् सर्वं स्थितं स्यात्, नष्टं स्यादित्युल्लेखानुरोधात् ज्ञानप्रयोज्यत्वमतीतवस्तुनाशेष्वपि स्वीक्रियत इति चेत्—तादृशोल्लेखे किं प्रमाणम्? ज्ञानात् सर्वनाशश्रुतिरिति चेत्—न हि तथा श्रुतिरस्ति। प्रत्युत, "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्

दृष्टे परावरे ॥" इति कतिपयनाश एव श्रूयते । सत्कार्यवादे नाशस्य विरोध्युत्तरावस्थारूपतायाः घटो नष्ट इत्यादौ घटत्वविरोधितदुत्तरकपालत्वाद्यवस्थावत्त्वबोधके क्लृप्तत्वेन अनादिभावरूपाज्ञाने ज्ञाननिवर्त्यत्वाभिमते ईदृशावस्थाशालित्वकथनायोगेन मिथ्यात्वासिद्ध्यापत्तेश्च । तत्पदार्थनाशस्यापि व्यावहारिकस्य मिथ्यात्वेन तन्निवृत्तेरपि वक्तव्यतया नाशस्य नाशाभावेन निवृत्तेर्नाशरूपत्वायोगाच्च । नात्र रजतमिति रजताभावस्य प्राक्कालस्थितस्यापि ग्रहणेन नञो ध्वंसपरत्वायोगाच्च । ध्वंसो हि प्रतियोग्यनन्तरभावी ॥

निवृत्तिर्बाध इति चेत्—कोऽयं बाधो नाम ? कालत्रयेऽप्यभाव इति चेत्—अस्यात्यन्ताभावस्य नित्यत्वान्न ज्ञानजन्यत्वम् । अत्यन्ताभावज्ञानं बाधः । शुक्तितत्त्वज्ञानाधीनरजताभावज्ञानविषयाभावप्रतियोगित्वमेव रजतस्य ज्ञाननिवर्त्यत्वम् । तथा ब्रह्मज्ञानाधीनज्ञानविषयात्यन्ताभावप्रतियोगित्वं प्रपञ्चस्येत्युक्तयैवात्यन्ताभावे ज्ञानप्रयोज्यत्वनिर्वाहसंभवेऽन्यादृशप्रयोज्यत्वमप्रामाणिकमेव । अस्तु तथैवेति चेत्—किं कुत्रापि कदापि स्थितस्य प्रामाणिकस्य प्रपञ्चस्य ब्रह्मण्यभावः, उतास्थितस्य । नाद्यः, कदाचित् स्थितस्य सार्वकालिकाभावोक्त्ययोगात् । कादाचित्काभावमात्रविवक्षायाञ्चानित्यत्वमेव सिद्ध्येत् ; न मिथ्यात्वम् । नान्त्यः, "अविद्या च विद्यालिङ्गम्" इति **वैशेषिकसूत्रोक्त**रीत्या क्वचित् यथावत् गृहीतस्यैवान्यत्र विपर्ययग्राह्यतायाः अनुभवसिद्धत्वात् । न ह्यननुभूतयथाभूतरजतस्य पुंसः शुक्तौ रजतभ्रान्तिः संभवति । अतः भ्रमविषयताव्यापकत्वस्य प्रमाविषयतायामानुभविकत्वेन यथाभूतप्रपञ्चस्य कदाप्यभावे आरोपासंभव एव । पूर्वभ्रमाधीनसंस्कारोद्बोधवशादेवोत्तरभ्रम इत्यस्त्विति चेत्—इदमुत्तरोत्तरज्ञाने पूर्वपूर्ववासनामात्राधीनत्ववादिबौद्धमतानुसरणम् । तथा च वस्तूनां कार्यकारणभावादि सर्वमनपेक्षितं भविष्यति । ननु अस्थितस्य अन्यत्रस्थितस्य वा प्रपञ्चस्य नाधिष्ठानेऽभाव उच्यते । किं तर्हि ? अनिर्वचनीयोत्पत्तिस्वीकारात् ब्रह्मणि कल्पितस्य तत्र स्थितस्यैव तत्रैवाभाव उच्यत इति चेत्—भावरूपाज्ञानमनादि कीदृशसामग्रीबलात् कदा कथमुत्पन्नम् ? अनु-

त्पन्नत्वे कथं कल्पितत्वम् । उत्पन्नत्वे च कथमनादित्वम् ? दीपज्वालादिवत् अविद्यासन्ततिस्वीकारे च कथं जीवानादित्वम् ? पूर्वजीवादुत्तरस्य भिन्नत्वे चाकृताभ्यागमकृतविप्रणाशप्रसङ्ग इति ।

कथञ्च तत्र स्थितस्यैव तत्रैवाभावः । शुक्तौ इदं रजतमिति ज्ञानकाले तावत् तत्र रजतोत्पत्तिर्नाग्राहि । किन्तु स्थितं रजतं गृहीतमित्येव । अथ च नात्र रजतमिति प्रमया तत्र रजतस्य प्रागप्यभावोऽवधारितः । एवं प्रमागृहीत-रजतात्यन्ताभावविरुद्धं शुक्तिस्थले रजतसत्त्वं न शक्यं स्वीकर्तुम् । 'भ्रमात्मकरजतप्रत्यक्षान्यथानुपपत्त्या तत्साक्षात्कारतानिर्वाहाय रजतोत्पत्तिकल्पना किं युक्ता, किं वा रजतात्यन्ताभावग्राहिप्रमात्मकप्रत्यक्षाविरोधाय रजतसत्त्वं रजतोत्पत्तिश्च नाङ्गीक्रियता'मिति विमर्शे प्रमानुसारेण भ्रमस्यान्यथा निर्वाह एवोचित इति स्थिते अनिर्वचनीयस्थितिकल्पनायाः का प्रसक्तिः ? तर्हि सत्त्वेन प्रतीयमानत्वमिति भ्रान्तिग्राह्यत्वरूपविशेषसत्त्वेऽपि प्रमासिद्धस्यात्यन्ताभावस्याविशिष्टत्वात् तुच्छप्रपञ्चयोरविशेष एव तत्त्वतः स्यादिति चेत्—अस्तु कामम् । वस्तुतस्तु परमार्थस्यैव क्वचिदारोप इति भ्रान्तिविषयस्यात्यन्ताभावप्रतियोगित्वमस्ति । तुच्छं तु अप्रसिद्धमिति न तस्यात्यन्ताभावप्रतियोगित्वमपि । शशशृङ्गं नास्तीति प्रतीत्यनुपगमात् । अतः तत्र स्थितस्य तत्राभाव इति विरुद्धं नोपन्यसनीयम् ।

अपि चैवमत्यन्ताभावप्रतियोगित्वरूपमिदं मिथ्यात्वं प्रथमनिरुक्तमिथ्यात्वादिविशिष्टमिति न पृथक् कर्तव्यम् । न वा पृथक् दूषणीयम् ॥

एवमन्यादृशनिवृत्तिपदार्थासम्भवस्योक्ततया निरुक्तपरिष्कारे उत्तरज्ञाननाश्यपूर्वज्ञानादावतिव्याप्तिप्रसक्त्यभावात् ज्ञानत्वव्याप्यधर्मावच्छिन्ननिवर्तकताकत्वम् साक्षात्कारत्वावच्छिन्ननिवर्तकताकत्वमित्यादिपरिष्करणमप्यनुपादेयम् । किञ्च परोक्षभ्रान्तिस्थले अनिर्वचनीयमिष्यते न वा । अन्त्ये तत्र कीदृशी ख्यातिः? तद्वदेव प्रत्यक्षस्थलेऽपि लाघवादनिर्वचनीयाभावस्वीकारणं युक्तम् । परोक्षस्थलेऽप्यनिर्वचनीयमस्ति चेत्—तत्कल्पकस्याज्ञानस्य तत्सहकृतप्रमाणजन्यपरोक्ष-

ज्ञानेनैव सुनिरसतया तत्र साक्षात्कारान्वेषणस्य व्यर्थत्वादसम्भवाच्च तत्रानिर्वचनीये साक्षात्कारत्वावच्छिन्ननिवर्तकताकत्वं ह्यव्याप्तमेव भवतीति ।

चतुर्थमिथ्यात्वं तु स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं द्वितीयमिथ्यात्वमेव ; विशेषणविशेष्यभावविपर्यासमात्रमिति तद्विचारेणैव विचारितं भवति । तत्र विशेषाशङ्कापरिहारप्रकारे सिद्धयाद्दते तु स्थितमनौचित्यं मनागाविष्क्रियते । तत्कार्यसमवायिनि देशे तत्कार्यस्यात्यन्ताभावः कथम् ? अत्यन्ताभावसत्त्वे तु तस्योपादानत्वानुपपत्तिरिति शङ्का । तदधिकरणस्यापि तदत्यन्ताभावाधिकरणत्वस्य काले दर्शनात् देशेऽपि तथात्वं नानुपपन्नम् । अत्यन्ताभाववत् कार्यप्रागभावस्यापि कारणे सत्त्वादुपादानत्वञ्चेति परिहारः । तदिदं घटादिसमवायिनि कपालादावुपपादयन्ति । वेदान्तसिद्धान्ते समवायाभावात् घटकपालयोरैक्यात् घटाधिकरणत्वस्य कपाले वक्तुमशक्यत्वात्, "मही घटत्वं घटतः कपालिके" ति घटपश्चाद्भावस्य कपाले कथनाच्चानुपपन्नमिदम् । अथापि नोदाहरणमादर्तव्यमिति कथञ्चिच्छङ्कापरिहारे यतनीयमेव ; अवयवसंयोगविशेषरूपावस्थाविशेषात्मकघटत्वघटगतरूपादीनां स्वरूपात्मकसंबन्धेनाधिकरणे द्रव्ये तदत्यन्ताभावः कथमिति शङ्कापर्यवसाने परिहारस्यावश्यकत्वात् । कृतस्तु परिहारो न युक्तः । काले वृत्तौ देशस्यावच्छेदकत्वम्, देशे वृत्तौ कालस्यावच्छेदकत्वमिति नियमात् कालस्य प्रतियोगितदभावोभयाधिकरणत्वस्य विभिन्नदेशावच्छेदेनैवोपपादनात् घटाद्यवच्छेदेन घटरूपादिकं कालेऽस्ति, तदन्यदेशावच्छेदेन तु तत्तत्र नास्ति । एवं कार्यतत्प्रागभावाधिकरणत्वं घटस्य भिन्नकालावच्छेदेनेति च भाव्यम् । तद्वत् यदि कार्यतदत्यन्ताभावयोर्भिन्नकालावच्छेदेनैकत्रातिदेशेनोपपादनमिष्टम्, तदयुक्तम्—कार्यकालभिन्नकालावच्छेदेन स्थितस्याभावस्यात्यन्ताभावत्वायोगात् । त्रैकालिको ह्यत्यन्ताभावः । यच्च कार्यप्रागभावसत्त्वादुपादानत्वमुपपन्नमिति—तदपि न—कार्यतद्ध्वंसतत्प्रागभावानां त्रयाणामपि अत्यन्ताभावप्रतियोगितया अत्यन्ताभावसत्त्वे प्रागभावायोगात् प्रागभावसत्त्वे च

कार्यसत्त्वे इवात्यन्ताभावासंभवप्रश्नस्य जागरूकत्वात्। कालदृष्टान्तस्य च वैषम्यप्रदर्शनेन वारितत्वात् ॥

यत्तु—श्रुतिप्रामाण्यात् तदधिकरणेऽपि तदत्यन्ताभावस्वीकार इति—तदप्यनुपपन्नम्- -श्रुतिप्रतिपन्नत्वे विमतं मिथ्या दृश्यत्वादित्यनुमानस्यानपेक्षितत्वात्। प्रत्यक्षविरुद्धार्थस्य श्रुत्या बोधयितुमशक्यत्वाच्च। नेह नानास्तीति श्रुतेर्ब्रह्मणि घटादिप्रपञ्चाभावबोधकत्वेऽपि कपालादावुपादाने तदभावबोधकत्वाभावाच्च। यदि च इहेतिपदं कपालादितादात्म्यापन्नब्रह्मपरम्, ब्रह्मणस्तत्तत्तादात्म्यं केन प्रमाणेनावसितम्? "सदेव सोम्ये"ति श्रुत्यैवावगतमिति चेत्—तर्हि श्रुतिप्रतिपन्नार्थस्य श्रुत्या बाधायोगात् इहेति तत्तादात्म्यापन्नतया प्रकृतवाक्य एव ब्रह्मण उपात्तत्वेन तदविरोधेनैव, 'नाना नास्ती'त्यस्यार्थवर्णनं कार्यमिति तत्तादात्म्यापन्ने ब्रह्मणि किञ्चित्तादात्म्यापन्नानापन्नरूपार्थद्वयाभाव एव श्रुत्यर्थः स्यात्। अतो न पूर्वप्रमितार्थविरुद्धार्थपरता।

अन्यथा तदधिकरण एव तदत्यन्ताभावस्वीकारे भावाभावयोर्विरोध एवोच्छिन्नकथः स्यात्। द्वैताद्वैतयोरविरोधात् अद्वैतज्ञानञ्च कथं द्वैतनिवर्तकम्? कपाले सदा घटाद्यभावसत्त्वे च 'कपालं घटाभाववत्' इति ज्ञानस्याप्रमात्वानापत्तिः। घटानधिकरणत्वस्य कपाले तन्तौ च तुल्यतया तन्तावपि घटोपादानत्वप्रसङ्गः। तन्तोर्घटाधिकरणत्वं नास्तीति चेत्-कपालस्यापि तन्नास्ति, प्रतियोग्यधिकरणेऽभावस्याङ्गीकारात्। तन्तौ घट इति घटाधिकरणत्वप्रतीतिर्नास्तीति चेत् —तदुपादानत्वतदधिकरणत्वतत्प्रतीत्यादिकमेवापाद्यते। ननु समानसत्ताकयोर्भावाभावयोर्विरोधः, न तु भिन्नसत्ताकयोः। तदत्र श्रुतिप्रतिपन्नः अभावः पारमार्थिकः। तत्प्रतियोगितया चापारमार्थिको भाव इति न विरोध इति चेत्— एवं तर्हि कालदृष्टान्तवर्णनमयुक्तम्। न च पारमार्थिको घटाभावः कपाले वर्णयितुं शक्यः, ब्रह्मेतराभावज्ञानरूपतत्त्वज्ञानेन घटबाधकाले कपालस्यापि बाधितत्वेन घटाभावे कपालाधिकरणकत्वस्यायोगात्। तर्हि स्वाधिकरणपदेन

ब्रह्म गृहीत्वा तत्रैवात्यन्ताभावसमन्वयेन मिथ्यात्वमुपपादयाम इति चेत्---तर्हि कुत एवं घटकपालादिग्रहणेन विस्तरः। ननु सिद्धिग्रन्थो न कपालाद्यभिप्रायेण प्रवृत्तः, किन्तु ब्रह्माभिप्रायेणैव। ब्रह्मणि प्रपञ्चरूपकार्याधारत्वस्य संप्रतिपन्नत्वात् तत्र कथं तदभावः? लोके कार्यसमवायिनि देशे कार्यात्यन्ताभावादर्शनात्; तथासति ब्रह्मणः कार्योपादानत्वायोगश्चेत्येव प्रश्नः। अतः परिहारोऽपि ब्रह्माभिप्रायक एवेति चेत्---लोकन्यायेन परिहारायोगः प्रागुक्त एवेहाप्यनुसन्धेयः॥

यत्तु---कारणत्वं नियतपूर्ववृत्तित्वम्। नियतत्वं च व्यापकत्वम्। तच्च कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वम्। तद्वृत्यपि तदत्यन्ताभावस्वीकारे च कारणस्यापि कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वस्यैव सद्भावात् कारणत्वानापत्तिरित्याशङ्क्य साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकवत्त्वं व्याप्तिरित्यस्यापि नैयायिकसंमतत्वात् तत्रावच्छेदकत्वं स्वरूपसंबन्धविशेष इति तद्रीत्या दण्डादिसामानाधिकरण्यावच्छेदकघटत्वमेव घटस्य दण्डादिकार्यत्वमिति न दोष इति--तन्न--नियतपूर्ववृत्तित्वरूपकारणत्वस्यापि लौकिकनैयायिकसर्वसंप्रतिपन्नत्वात् अन्वयव्यतिरेकाभ्यां कारणत्वावधारणप्रवृत्तेर्नियतपूर्ववृत्तित्वस्योपेक्षणायोगाच्च तत्समन्वयस्याप्यावश्यकत्वात्। अथ दण्डादौ घटाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वसत्त्वेऽपि तदभावोऽप्यस्ति, प्रतियोग्यधिकरणेऽभावस्याङ्गीकारादेवेति न नियतत्वक्षतिरिति चेत्—तर्हि रासभादेरपि प्रतियोगित्वसत्त्वेऽप्यभावोऽप्यस्तीति कारणत्वापत्तिः। घटसामानाधिकरण्यावच्छेदकत्वं वा रासभत्वे कुतो नास्ति। रासभस्य घटनियतत्वाभावादिति चेत्—तर्हि लक्षणान्तरमपि नियतत्वनिरूपणसापेक्षमिति तदवस्थो दोषः। अथानुपपत्तिसद्भावेऽपि श्रुतेर्बलीयस्त्वात् प्रतियोगिमत्यप्यभावः एषितव्य इत्येव ब्रह्मणि प्रपञ्चाभावमात्रोपपादनाय ब्रूम इति चेत्—तर्हि विमर्शो वृथा। यथा यथा श्रुतिराह, तथा तथा तत् ब्रह्म तस्य प्रपञ्चेन संबन्धश्च स्वीकार्य इति। शारीरकमीमांसाऽपि, श्रुत्यर्थ आपातप्रतीतः सर्वोऽपि

श्रुतिप्राबल्यात् अनाक्षेपमादर्तव्य इत्येकमुपदेशं विधायोपरन्तुमर्हति; न पुनश्चतुरध्यायीरूपेण प्रवृत्य बहुविधपूर्वपक्षपरिहरणे तया प्रवर्तितव्यम्। अत एव उपरि लक्षणस्यास्य तुच्छेऽतिव्याप्तिमाशङ्क्य सत्त्वेन प्रतीयमानत्वं नास्तीति परिहृत्य, 'असदेवेदमग्र आसीत्' इति श्रुतावसतोऽपि आसीदिति सत्त्वेन प्रतीयमानत्वस्य प्रतीत्या पुनरतिव्याप्तिरित्याक्षिप्य, तत्र असदित्यत्र, 'अ-मा-नो-नाः प्रतिषेधवचनाः' इत्यनुशासनानुरोधेन अकारं पृथक्कृत्य, सदिदमग्रे नासीदित्यर्थाश्रयणात् असति न सत्त्वप्रतीतिः श्रौतीत्युक्तमप्युपेक्ष्यम्। अकारपृथक्कारपरिश्रममपरिगृह्य श्रुत्युक्तत्वादसतोऽपि सत्त्वेन प्रतीयमानत्वमस्तु इत्येव वक्तव्यत्वात्। 'लोके शशशृङ्गमस्तीति प्रतीत्यभावात् लौकिकं सत्त्वं शशशृङ्गस्य नास्ति; श्रुतिप्रामाण्यादलौकिकं तु सत्त्वमस्ती'ति सुवचत्वात्। असत्कार्यवादखण्डनश्रुतिस्तु अलौकिकसत्ताश्रयस्यैव शशशृङ्गस्य जगत्कारणत्वमात्रव्युदासिकेति न दोष इति च। अपिचात्र आशङ्कैवानुपपन्ना। स्वात्यन्ताभावाधिकरण एव प्रतीयमात्वं हि प्रागुक्तम्। न च शशशृङ्गमेवं प्रतीयते। 'प्रतीयत एव 'शशशृङ्ग'मिति; 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति पातञ्जलवचनादिति चेत्—न हि तत्र किञ्चिदधिकरणे प्रतीयमानत्वं विवक्षितम्। अधिकरणे प्रतीयमानत्वं हि अधिकरणविशेष्यकप्रतीतिविषयत्वं वा अधिकरणनिरूपिताधेयत्वप्रकारकप्रतीतिविशेष्यत्वं वा। तत् कथं शशशृङ्गे? यदि तु तदप्यस्ति, तर्हि सत्त्वेन प्रतीयमानत्वनिवेशोऽपि न निस्तारः। तस्मात् यदि **सिद्धिः** समर्थनीया, एवं वाच्यम्—स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमिति अधिकरणे इति सप्तमीनिर्देशप्रयोजनम्, असत्यतिव्याप्तिशङ्कापरिहारमुखेन सिद्धिर्दर्शयति। व्याख्यातारस्तु उपेक्षणीया इति। किं तद्ग्रन्थार्थयाथात्म्यशोधनेन। स्वाधिकरणस्यात्यन्ताभावाधिकरणत्वं तु न युक्तम्। पारमार्थिकापारमार्थिकत्वमुखेन विरोधपरिहारस्तु अर्थद्वयसद्भावनिश्चयायत्तः। श्रुतिश्च न विरुद्धमर्थं प्रतिपादयितुमीष्टे। इदमेव तावदेतन्मिथ्यात्वविकल्पनिराकरणप्रसङ्गे शतदूषण्या समग्राहि, "न च पञ्चमः, श्रुत्याद्यैस्तद्विधायकैस्तदभावग्रहासंभवात्। श्रुतीनामपि निषेधिकानामन्यत्र व्यवस्थापनात्" इत्यादिना॥

अथ पञ्चममिथ्यात्वविचारः। सदसद्विलक्षणत्वमेव प्रथमलक्षणवैलक्षण्याय मुखान्तरेणोच्यते। तत्रासद्विलक्षणत्वं सत्त्वेन प्रतीयमानत्वमिति प्रागुक्तमेव। सद्विलक्षणत्वे तु सद्भिन्नत्वे घटकं सत्त्वं प्रागुक्तात् अबाध्यत्वादन्यत् प्रमाणसिद्धत्वरूपम्। प्रमाणञ्च दोषासहकृतं सत् यत् ज्ञानकरणम्, तत। तथा च सद्भिन्नत्वं दोषासहकृतज्ञानकरणजन्यज्ञानविषयभिन्नत्वम्; दोषाजन्यज्ञानविषयभिन्नत्वमिति यावत्। न च ज्ञानसामान्यस्याविद्यामूलकत्वात्, अविद्यायाश्च दोषत्वात् दोषाजन्यज्ञानाप्रसिद्धिः। अविद्यापरिणामान्तःकरणवृत्तिरूपज्ञानानामन्तःकरणोपादानकतया अविद्योपादानकत्वाविशेषेऽपि तदन्तर्गतं तत्त्वविषयकं तत्त्वमसिवाक्यजन्यं ज्ञानं प्रति अविद्यायाः दोषविधया निमित्तकारणत्वानङ्गीकारात् दोषनिष्ठनिमित्तकारणत्वानिरूपकज्ञानत्वस्यैव दोषाजन्यज्ञानरूपतया तथाभूतं ज्ञानं तत्त्वमसिवाक्यजन्यं प्रसिद्धमित्यदोषात्। अथ **विवरणमते** शुद्धब्रह्मणो वृत्तिविषयत्वाङ्गीकारेण दोषाजन्यज्ञानप्रसिद्ध्या तद्विषयान्यत्वस्य ब्रह्मातिरिक्ते सत्त्वेन समन्वयेऽपि, **भामतीमते** तत्त्वमसिजन्यज्ञानस्याप्युपहितब्रह्मविषयकतया दोषाजन्यज्ञानाप्रसिद्धिरित्यसम्भवः। तथा ज्ञानस्य प्रमात्वाभावप्रसङ्गश्चेति चेत्—न—वृत्तिविषयत्वोपहितरूपविषयकज्ञानत्वं वृत्तिविषयत्वानुपहितरूपाविषयकज्ञानत्वं वा प्रमात्वमिति न तत्त्वमसिजन्यज्ञानस्य प्रमात्वानापत्तिरिति। अतः तत्त्वमसिवाक्यस्य प्रामाण्यं सुस्थम्। घटादिज्ञानं तु न वृत्तिविषयत्वोपहितरूपविषयकम्। कदाचित् वृत्तिविषयत्वोपहिततद्विषयकत्वाङ्गीकारेऽपि घटादेर्वृत्तिविषयत्वानुपहितरूपविषयकज्ञानविषयत्वमप्यस्ति। यस्तु कश्चित् ज्ञानसामान्यं ब्रह्मज्ञानं घटादिज्ञानं वा वृत्तिविषयत्वोपहितविषयकमेवेति भ्राम्यति, सः घटादिज्ञानं प्रमात्वेन व्यवहर्तुं प्रभवत्येव। तत्र (ज्ञाने मिथ्याभूतपदार्थविषयके दोषकारणकज्ञानान्यज्ञानत्वरूपप्रमात्वस्य तेन दुर्ग्रहत्वेऽपि) वृत्तिविषयत्वोपहितरूपविषयकज्ञानत्वादिरूपप्रमात्वस्य सुग्रहत्वात्। तथा च दोषनिष्ठनिमित्तकारणताकज्ञानान्यज्ञानविषयत्वं सत्त्वम्। तद्भिन्नत्वं सद्विविक्तत्वम्। घटादिज्ञानञ्च वृत्तिविषयत्वानुपहित-

रूपविषयकमेव वस्तुत इति दोषजन्यतादृशज्ञानं प्रपञ्चज्ञानम्, तदन्यज्ञानं तत्त्वमसिजन्यमिति नाप्रसिद्धिः। न चैवं वृत्तिविषयत्वोपहितब्रह्मणो मिथ्यात्वलक्षणसमन्वयो न स्यात्; तज्ज्ञानस्य प्रमात्वेन दोषनिमित्तकत्वाभावेन तस्यान्यज्ञानविषयत्वादिति चेत्—इष्टापत्तिः। शुद्धस्येव तस्योपहितस्यापि मिथ्यात्वस्यास्वीकारेणालक्ष्यतयैवादोषात्। न चैवं तत्र दृश्यत्वरूपहेतुसत्त्वाद्व्यभिचार इति शङ्क्यम्—ईदृशब्रह्माद्यविषयकवृत्तिविषयत्वरूपदृश्यत्वस्यैव हेतुत्वाङ्गीकारादिति तावदेतन्मिथ्यात्वनिष्कर्षः॥

अयं विचार्यते—अविद्यायाः दोषविधयापि कारणत्वे किं प्रमाणम्? भूतमनोज्ञानेन्द्रियकर्मेन्द्रियमुख्यप्राणाविद्याकामकर्मात्मकलिङ्गशरीरविशिष्टः जीवः। तत्र व्यावहारिकप्रपञ्चे जीवीयाविद्यारागादृष्टानां कारणत्वात् तेषामेव दोषत्वात् तथात्वमवसीयते। "तथा विद्वान् नामरूपाद्विमुक्तः" इति श्रुतिश्च व्यावहारिकप्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वमवगमयतीति चेदुच्यते--तदिदं तत्त्वमसिवाक्यजन्यज्ञानस्याप्यविशिष्टम्; अविद्यायाः, विविदिषायाः, भक्तिमूलकेश्वरसङ्कल्पादिरूपादृष्टस्य च तत्राप्यपेक्षितत्वात्। अथापि तेषां दोषविधया तत्र न कारणत्वमिति चेत्---तुल्यमन्यत्रापि। प्रपञ्चस्यापारमार्थ्यात् तज्ज्ञाने तेषां दोषविधया कारणत्वमेष्टव्यम्, शुक्तिरजतज्ञान इव शुक्त्यज्ञानादेरिति चेत्---प्रपञ्चापारमार्थ्यमेव किल किंरूपमितीदानीं विचार्यते। तथा च तत्र तस्यैव नियामकत्वाश्रयणे आत्माश्रयादि। न च, 'नामरूपाद्विमुक्त' इति श्रुतिः प्रमाणम्; कारागृहान्मुक्तश्चोरः, राहोर्मुक्तश्चन्द्र इत्युक्तिमात्रेण बन्धमिथ्यात्वस्य तत्र तत्र सर्वथैवाप्रतिपत्तेः। अस्तु प्रकृतदृश्यत्वहेतुरेव नियामक इति चेत्---दृश्यत्वं ब्रह्मालीकयोरप्यविशिष्टमित्युक्तत्वात् ब्रह्मज्ञाने तत्त्वमसिजन्येऽपि तेषां दोषविधया कारणत्वापत्तिः। अत एव दृश्यत्वहेतुर्ब्रह्मालीकविषयकवृत्तिभिन्नवृत्तिविषयत्वरूपेण परिष्कृत इति चेत्—प्रागेवाप्रयोजको हेतुरिदानीं सुतरामप्रयोजकः संवृत्तः। तत्तदनभिमतविषये तद्भिन्नत्वनिवेशस्य तेन तेन सुवचत्वात्।

किञ्च लोके शुक्तिरजतज्ञानं भ्रमः। अयं शुक्तिरजतज्ञानवानिति, अस्य शुक्तिरजतज्ञानं दोषजन्यमित्येवंज्ञानं तु शुक्तिरजतविषयकमपि प्रमाभूतमित्येवानुभविकम्। अन्यथा अस्मद्भ्रमविषयकज्ञानशालिनो भगवतोऽपि भ्रान्तत्वप्रसङ्गात्। तथा च प्रमाभूतज्ञाने कस्यापि दोषविधया कारणत्वं न युक्तम्। एवमत्र प्रपञ्चज्ञानं भ्रमः, प्रपञ्चज्ञानं पुंसां दोषजन्यम्, ब्रह्मणोऽद्वितीयत्वज्ञानं न भ्रमः, जीवब्रह्मैक्यज्ञानं प्रमा इत्यादिज्ञानेषु कस्यापि दोषविधया कारणत्वं न युक्तमिति दोषत्वव्याप्यधर्मावच्छिन्नकारणतानिरूपितकार्यताशालिज्ञानान्यज्ञानं तत्तदिति तद्विषयान्यत्वस्य प्रापञ्चिकपदार्थेष्वभावात् बाधः। तेषां ज्ञानानां भ्रमत्वेष्टौ च सिद्धं प्रपञ्चसत्यत्वम्।

अपि च यस्य भ्रमः प्रमेति द्वैधं ज्ञानस्येष्टम्, स प्रमां प्रति कारणत्वेन क्लृप्तादतिरिक्तं दोषमपेक्ष्य भ्रमोत्पत्तिं विवक्षुः कस्यचित् दोषविधया कारणत्वं स्वीकरोति। यस्य तु सर्वमेव वृत्तिज्ञानं भ्रमः, तदर्थमेव चेन्द्रियसन्निकर्षपरामर्शपदार्थज्ञानादि क्लृप्तम्, तस्य दोषविधया कस्यचिदन्यस्य कारणत्वस्य वा, तेषामेव दोषविधयाऽपि कारणत्वान्तरस्य वा कल्पनायां न किञ्चित् प्रमाणम्। तत्त्वमसिवाक्यजन्यवृत्तिज्ञानं प्रमेति तद्वारणाय कल्प्यत इति चेत्--तत् ज्ञानं प्रमेति किं श्रुत्योपदिष्टमस्ति? उपदेशेऽपि तदुपदेशाधीनज्ञानान्तरस्यापि प्रमात्वापत्तिः। अनुपदेशे चाविशिष्टमेव भ्रमत्वम्॥

अन्यच्च—शुद्धब्रह्मणो न वृत्तिविषयत्वम्, किन्तु वृत्तिविषयत्वोपहितब्रह्मण एवेति भामतीपक्षे उपहितं तत् मिथ्यैवेति तद्विषयकज्ञानस्य भ्रमत्वमेव युक्तम्। न च वृत्तिविषयत्वोपहितब्रह्मणो वृत्तिविषयत्वोक्तावपि वृत्तिविषयत्वरूपविशेषणस्य न वृत्त्यंशे विषयत्वम्; किन्तु अविषयस्यैव तस्य उपलक्षणविधया वृत्तिविषयतावच्छेदकत्वम्, तदादिपदशक्यतायां बुद्धिविषयत्वादेरिवेति वाच्यम्—एवं तर्हि बुद्धिविषयत्वाद्यविषयकपदार्थज्ञानस्य तदादित इव वृत्तिविषयत्वानवगाहिशुद्धब्रह्मज्ञानस्य स्वीकारसिद्ध्या विवरणपक्षात् भामतीपक्ष-

स्याविशेषप्रसङ्गात् । ब्रह्मनिष्ठवृत्तिविषयता विवरणमते अनवच्छिन्ना, भामतीमते वृत्तिविषयत्वावच्छिन्नेति विशेष इति चेत्---इदं वृत्तिविषयत्वमच्छेदकावच्छेद्यभूतवृत्तिविषयत्वापेक्षयाऽतिरिक्तमनतिरिक्तं वा ? आद्ये, प्रथमवृत्तिविषयतायामवच्छेदकं वृत्तिविषयत्वान्तरं नास्तीति तत्र विवरणमताविशेषः । अन्त्ये आत्माश्रयः । अगत्या सह्योऽयमात्माश्रयः, वह्नौ घृतं जुहोतीत्यत्र वह्निसंयोगानुकूलक्रियानुकूलव्यापारात्मकहोमान्तर्गतवह्निसंयोगांशे वह्नाविति वह्निसंयोगस्यागत्या **व्युत्पत्तिवादे** अन्वयस्वीकारवदिति चेन्न---तदर्थस्यापि विचारणीयत्वात् । जुहोत्यर्थस्य तदुक्तस्य मीमांसकमतविरुद्धत्वाच्च । देवतोद्देश-त्याग-प्रक्षेपत्रयं किल मिलितं जुहोत्यर्थः । प्रक्षेपश्च यत्र क्वापि प्राप्तः, "यदाहवनीये जुहोति", "पदे जुहोति" इति अग्नौ तद्भिन्नेऽप्यधिकरणे नियम्यत इति, वह्नौ घृतं जुहोतीत्यस्य न दृष्टान्तत्वं युक्तम् । आस्तां तत् । केयमगतिः ? प्रकृते विवरणमतरीत्यैवोपपत्तेः । वस्तुतो भामत्याशयः प्रागेव **जिज्ञासानुपपत्तिप्रसाधनाद्यौ** शोधित इति नेह तन्यते । अद्वैतसिद्धावेव हि दृश्यत्वविचारावसरे उक्तम्, "शुद्धं हि ब्रह्म न दृश्यम्, किन्तूपहितमेव । तच्च मिथ्यैव" इति । अतः एतस्य लक्षणत्वे वृत्त्युपहितब्रह्मभिन्नमेव लक्ष्यम्, अन्यथा अव्याप्तेरिति मिथ्याभूतस्यामिथ्यात्वकल्पनप्रयासश्चङ्किकाकृतो न युक्तः ।

अतः उपहितब्रह्मणो वृत्तिविषयत्वमिति पक्षे—उपाधेर्ब्रह्मणश्च वृत्तिविषयत्वमेव उपहितश्चानुपहितादन्यत् मिथ्याभूतमेव। तद्विषयवृत्तिज्ञानस्य भ्रान्तित्वमपि सह्यम् । अतो दोषविधया कारणत्वमविद्यादेस्तत्रापीत्येव वक्तव्यम् । तर्हि दोषजन्यज्ञानान्यज्ञानाप्रसिद्ध्या मिथ्यात्वलक्षणं दुर्वचमापद्यत इति चेत्—वस्तुतः सद्विविक्तमित्यस्य प्रमाणसिद्धभिन्नमित्यर्थात् तच्छोधने एवमर्थस्य प्राप्तावपि दोषजन्यज्ञानान्यज्ञानविषयान्यत्वं मिथ्यात्वमित्यस्य अन्ततो लाघवात् दोषजन्यज्ञानविषयत्वं मिथ्यात्वमित्यत्रैव पर्यवसानान्न दोष इत्येव युक्तम् । इदमपि खण्डनीयमेव; प्रमाभ्रमरूपद्विविधज्ञानाभावात् सर्वेषामपि कारणानां भ्रमं प्रत्येव कारणत्वात् दोषत्वेन कारणत्वस्याकल्पनीयत्वादीदृशं मिथ्यात्वं न भवतीति ।

तथा च शुक्तिरजतादौ तत्सत्त्वेऽपि प्रपञ्चे तत्सत्त्वे मानाभावात् हेतुरप्रयोजक इति न साध्यसिद्धिरिति । यद्वा सर्वस्यापि प्रेमयस्य प्रमाविषयत्ववत् भ्रमविषयत्वस्यापि प्रायः संभवेन सत्यतयाऽभ्युपगतेषु तेषु पदार्थेषु दोषजन्यज्ञानविषयत्वस्यापि सत्त्वात् सिद्धसाधनम् । शुक्तौ इदं रजतमिति ज्ञाने वास्तवरजतभानस्यैव तार्किकादिसंमतेः । यदि तु स्वविषयताव्यापकदोषजन्यज्ञानविषयताकत्वमिति मिथ्यात्वपरिष्कारः, तदा पूर्वोक्तदोषोऽस्त्येव । ज्ञानसामान्यस्याद्वैतिमते भ्रमत्वेन ज्ञानसामान्यकारणातिरिक्तदोषरूपकारणकल्पने मानाभावेन दोषत्वावच्छिन्नजनकतानिरूपितजन्यताश्रयज्ञानाप्रसिद्धेः । शुक्तिरजतादौ साध्यवैकल्यमपि । अयं शुक्तिरजतज्ञानवानिति परभ्रमविषयकप्रमायामपि रजतविषयतासत्त्वात् तस्याः दोषजन्यत्वाभावेन दोषजन्यज्ञानविषतायां स्वविषयताव्यापकत्वायोगादिति । अत एवाविद्यायाः उपादानत्वातिरेकेण दोषविधया कारणत्वाभावेऽपि इन्द्रियसन्निकर्षादीनामेव दोषविधया कारणत्वमिति चन्द्रिकोक्तमप्ययुक्तम्; सर्वज्ञानाप्रामाण्यस्यैव सौगतमत इव स्वीकार्यतया भ्रमं प्रत्येव सर्वस्य कारणतया दोषविधया कारणत्वकल्पनस्यैवाद्वैतिमतेऽनपेक्षितत्वात् । एवञ्चानुगतदोषत्वनिर्वचनायोगात् इन्द्रियसन्निकर्षादेः प्रातिस्विकरूपेणासर्वज्ञदुर्ज्ञानतया निवेशासम्भवाच्च कथं साध्यपरिष्कार इत्याशङ्क्य चन्द्रिकायां यदुक्तम्—भ्रमाजनकजन्यधीविषयान्यत्वं मिथ्यात्वमिति सुवचमिति—तदप्युपेक्ष्यम्—तादृशधिय एवाप्रसिद्धेः । किं नामैतद्घटकं भ्रमत्वमिति प्रश्ने दोषजन्यज्ञानमित्युक्तौ आत्माश्रयाच्च । अन्यथानिर्वचने च तादृशभ्रमविषयत्वं मिथ्यात्वमित्येवालमिति अन्यदनतिप्रयोजनकम् । लक्षणस्य लक्षणान्तरादूषकत्वमित्यादिकं तु गन्धवत्त्वनानारूपवत्त्वादिपृथिवीलक्षणादिस्थल एव सम्यक् समन्वयमर्हति । इदमेव मनसिकृत्य चन्द्रिकाकार एवान्ते लिखति, "भ्रमविषयत्वे, अविनाश्यवृत्तिधर्मवत्त्वे वा तात्पर्यम्" इति ।

अस्तु तावदेव लक्षणमिति चेत्—सिद्धसाधनम् । सत्यानामेव पदार्थानां सर्वेषां प्रमाविषयत्ववत् भ्रमविषयत्वस्यापि सर्वेष्टत्वात् । भ्रान्तेः

पुरुषधर्मत्वात् । यद्यपि स्वविषयताव्यापकभ्रमविषयताकत्वं मिथ्यात्वमिति परिष्क्रियतामिति वक्तुं शक्यम्---तथापि शुक्तिरजतादिभ्रमविषयकप्रमायां प्रागुक्तरीत्या तस्य विषयतया तद्विषयताव्यापकत्वस्य भ्रमविषयतायामभावात् साध्यवैकल्यम् । न च इदन्त्वावच्छिन्नविषयतामात्रनिरूपितस्वविषयताव्यापकभ्रमविषयताकत्वं मिथ्यात्वम्, तादृशी च स्वविषयता इदं रजतमित्येतावन्मात्रावगाहिज्ञानीयैव। तद्व्यापकत्वं भ्रमविषयतायामस्तीति न साध्यवैकल्यमिति वाच्यम्---आपणस्थरजतातिरिक्तानिर्वचनीयरजतादौ मानाभावेन इदन्त्वावच्छिन्नविषयतानिरूपितरजतविषयतायाः इदं रजतमिति प्रमायामपि सत्त्वेन साध्यवैकल्यात् । एवमविनाश्यवृत्तिधर्मवत्त्वं मिथ्यात्वमित्युक्तमप्ययुक्तम् । मिथ्याभूतानां तत्त्वज्ञानबाध्यत्वमेव ; न विनाशित्वमिति । व्यावहारिकौ उत्पत्तिविनाशौ स्त एव पदार्थानामिति चेत्—तावनित्य एव स्तः ; न त्वनाद्यविद्यादौ । घटो नश्यतीत्यस्य हि घटत्वावस्थाविरोधितदुत्तरावस्थावान् स इत्यर्थः । एवमविद्या नश्यतीति न प्रयोक्तुं शक्यते । अविद्यात्वविरोधितदुत्तरावस्थाभाक्त्वस्याविद्यायां दुर्वचत्वात् । अत्राविनाशीत्यनेन पूर्वावस्थाविरोध्यवस्थाशून्येत्येवार्थविवक्षणात् अविद्यायामवस्थाद्वयस्य संप्रतिपन्नतया न दोष इति चेत्---अवस्थानामवस्थावत्त्वाभावेनाविनाशिपदार्थत्वापत्त्या तत्र तद्वृत्तिधर्मवत्त्वरूपमिथ्यात्वासिद्धिः । अवस्थायामवस्थायाः कथञ्चिदुपपादने चावस्थावत्त्वमेव मिथ्यात्वमित्यलम् । सिद्धसाधनञ्च । जगत्सत्यत्ववादिभिरप्यस्य संमतत्वादिति । एवं द्रव्यस्य निरन्वयविनाशस्वीकारे वैनाशिकत्वमद्वैतिनोऽपि स्यात् ।

एवं मिथ्यात्वरूपसाध्यविषये सिद्ध्यादिकृतो विचारः संमृष्टः । अथ तत्कृतो दृश्यत्वहेतुविचारोऽपि संमृश्यते । **न्यायामृता**दौ विकल्प्य खण्डितेषु दृश्यत्वकल्पेषु वृत्तिव्याप्यत्वरूपदृश्यत्वसमर्थनं न युक्तम् । इन्द्रियग्राह्येषु घटादिष्वेवान्तः करणस्येन्द्रियद्वारा निर्गम्य व्यापनस्य स्वीकृततया अतीन्द्रियेषु वृत्तिव्याप्त्यभावेन तत्र पक्षैकदेशे हेत्वभावात् भागासिद्धेः । शुक्तिरजतादावन्तःकरणवृत्तिसंबन्धानिष्टया साधनवैकल्याच्च । अथ वृत्तिविषयत्वमेव वृत्तिव्याप्य-

त्वम् । तत् तत्राक्षतमिति चेत्—ब्रह्मण्यपि सत्त्वाद्व्यभिचारः । तत्त्वमसीत्यादिश्रुत्यधीनवृत्तिविषयत्वात् । न चाद्रेश्यमित्यादिश्रुत्यनुसारेण शुद्धब्रह्मणो वृत्तिविषयत्वं नेष्यते, उपहिते तु ब्रह्मणि वृत्तिविषयत्ववत् मिथ्यात्वमपीष्यत इति न दोष इति वाच्यम्—अद्रेश्यमिति श्रुत्या यदि शुद्धमदृश्यत्वेन वेद्यते, तर्हि कथं तस्य वृत्त्यविषयत्वम् ? अथ न वेद्यते, तर्हि तत्त्वमसीत्यादिश्रुतिवेद्यत्वस्य तत्र स्वीकारे किं बाधकम् । उपहितमेव वृत्तिविषय इत्येतदपि विमृश्यम् । किं प्रपञ्चोपहितम्, अविद्योपहितं वा वृत्तिविषय इति विवक्षितम्, उत वृत्त्युपहितम् ? नाद्यः, 'सर्वस्येशानः', 'मायिनं तु महेश्वरम्' इत्यादौ तादृशस्य वृत्तिविषयत्वेऽपि तत्वमसीत्यत्राखण्डार्थपरत्वाभिमते तथात्वायोगात् । तत्र वृत्त्युपहितं विषय इति चेत्—केयं वृत्तिः ? अखण्डाकारवृत्तिरेवेति चेन्न—अखण्डाकरवृत्तौ अखण्डाकारवृत्त्युपहितं विषय इत्यस्यायोगात् । न हि तत्रैव तस्या अपि विषयत्वम् ? स्वप्रकाशतया तदिष्टौ चापसिद्धान्तः । चैतन्यातिरिक्तस्यास्वप्रकाशतया वृत्तेस्तदयोगात् । अथ वृत्त्युपहितं ब्रह्म वृत्तिविषय इत्यस्य वृत्तिश्च ब्रह्म च वृत्तिविषय इति नार्थः ; किन्तु ब्रह्मैव वृत्तिविषयः ; तत्रोपाधिभूता वृत्तिः अविषय एवावच्छेदिकेति चेत्—तर्हि घटपटादेर्वृत्तिविषयत्वमपि वृत्त्युपहितस्यैव, न तु शुद्धस्येति स्यात् । वृत्त्यभावकाले वृत्तिविषयत्वाभावात ; वृत्तिकाले च वृत्त्युपहितत्वसंभवात् । किञ्चेदं वृत्त्युपहितत्वम् ? न तावत् वृत्त्याश्रयत्वम् । अन्तःकरण एव तत्संभवात् । नापि वृत्तिसंयुक्तत्वम् ; सत्यासत्ययोः संयोगायोगात् । अतो वृत्तिविषयताविशिष्टस्य वृत्तिविषयत्वमित्येव वक्तव्यम् । तथा वृत्तिविषयतां प्रति तस्या एवावच्छेदकत्वे आत्माश्रयः । विषयतासंबन्धेन वृत्तिविशिष्टं चैतन्यं वृत्तिविषय इति कृत्वा—वृत्तिविषयत्वमवच्छेद्यम्, वृत्तिर्विषयतासंबन्धेनावच्छेदिकेति नवीनदन्धनं तु प्रलोभनमात्रमिति प्रागेवोक्तम् ; अन्ततो वस्तुनोरभेदात् । एवमुक्तावपि शुद्धं ब्रह्म वृत्तिविषय इति स्वीकृतमेव । ब्रह्मनिष्ठविषयतायाः किञ्चिद्विषयत्वानिरूपितत्वात् । वृत्तिविषयत्वाच्छिन्ना ब्रह्मविषयतेति विषयतायाः अनवच्छिन्नत्वं नास्तीति चेत्—मा भूत् । 'शुद्धं विषय' इति वक्तुर्हि ब्रह्मविशेषणतया

किञ्चिन्न भासते इत्येव विवक्षितम् । तत्तु स्वीकृतमेवेति को विवरणपक्षात् भामतीपक्षे विशेषः ? विवरणकारोऽपि वृत्तिकाले ब्रह्मणि वृत्त्युपहितत्वं न प्रतिषेधिष्यति । एवञ्च वृत्तिविषयत्वांशे वृत्तिविषयत्वायोगेऽपि ब्रह्मणि वृत्तिविषयत्वस्य स्वीकृतत्वात् दृश्यत्वहेतुर्व्यभिचरित एव । वृत्तिविषयत्वं यदा, तदा ब्रह्मणि वृत्त्युपहितत्वमस्ति चेत्—अस्तु, किं तेन ? अतस्तदुपहितत्वात् तन्मिथ्येति चेत्—तर्हि यदा किञ्चिदुपहितं ब्रह्म, तदा तन्मिथ्या; यदा त्वनुपहितम्, तदा सत्यमिति अविद्यातदधीनप्रपञ्चतदन्तर्गतवृत्तिकालेषु ब्रह्मण उपहितत्वात् मिथ्यात्वम्; अथानुपहिततादशायां तथ्यत्वमित्युक्तं स्यात् । एवञ्चैकमेव कालभेदेन वो मिथ्या तथ्यं चेति व्याहतमेतत् ! ननूपहितमन्यत्, अनुपहितमन्यदिति न विरोध इति चेत्—अनुपहितमपि प्रपञ्चकालेऽस्ति, न वा ? न चेत् ब्रह्मणोऽनादित्वभङ्गः । अस्ति चेत्—तस्यानुपहितत्वं तदा दुर्वचम् । अतः शुद्धब्रह्मणो वृत्तिविषयत्वं न शक्यं प्रतिषेद्धुम् । अद्रेश्यमिति श्रुतिस्तु चैतन्यात्मनो ब्रह्मणश्चैतन्याविषयत्वमाहेति विवरणकारो निर्वोढुमर्हतीत्यन्यदेतत् ।

यद्युच्येत—ब्रह्मणः सत्यत्वात उपाधीनाञ्च मिथ्यात्वात् मिथ्यातथ्ययोश्च संसर्गायोगात् ब्रह्मण्युपहितब्रह्म कल्पितमन्यत् मिथ्याभूतम् । एवं जीवेश्वरयोरपि किञ्चिद्विशिष्टरूपत्वात् ब्रह्मणि कल्पितत्वं भिन्नत्वं मिथ्यात्वं च । प्रापञ्चिकपदार्थेषु पुनर्मिथ्याभूतेषु विशिष्टं शुद्धञ्चानतिरिक्तम् । मिथ्याभूतविशेष्ये मिथ्याभूतविशेषणसंसर्गस्य सुवचत्वात् । एवञ्च वृत्त्युपहितं ब्रह्म वृत्तिविषय इत्युक्तौ मिथ्याभूतस्यैव विषयतया तदतिरिक्तस्य शुद्धस्य न विषयत्वसंभव इति—एवं तर्हि जीवादेर्ब्रह्मणश्चाध्यासमूलकमेव सामानाधिकरण्यमिति तत्त्वमसीत्यादौ बाधार्थं सामानाधिकरण्यमेव स्यात्; नाखण्डब्रह्मपरता । तच्छब्दार्थस्य कारणस्य विशिष्टस्य त्वंशब्दार्थस्यान्यादृशविशिष्टस्य च शुद्धब्रह्मणि कल्पिततया ततो भिन्नत्वे तयोर्ब्रह्मणैक्यस्याभावेन विशेषणानां परित्यागे विशेष्यमखण्डब्रह्मैकं सिद्ध्यतीत्यस्य दुर्वचत्वात् । कथञ्चिदविद्यावच्छिन्नस्येश्वर-

स्याविद्यापरिणामावच्छिन्नस्य जीवस्य च मिथ्याभूतयोर्विशेष्यांशे ऐक्यमस्तीति सर्वविशेषणत्यागेनैक्यभावनायामपि मिथ्याभूतार्थविषयकज्ञानादेव मुक्तिर्वक्तव्या भवेत् । सा च मुक्तिः ईश्वरात्मैक्यरूपयाथात्म्यज्ञानिनि विषये ईश्वरकृतप्रसादभावितं साम्यमैक्यं वा किञ्चिदेवेति न जातु तत्त्वज्ञानादशेषाविद्याविलयप्रसक्तिः । यदा यदा तत्त्वज्ञानं जीवस्येश्वरस्य वा, तदा तदा तत् ब्रह्म वृत्त्युपहितमेव भवतीति उपहितब्रह्मणो ब्रह्मणश्च मिथो भेदस्याऽऽवश्यकतया कस्यापि तत्त्वज्ञानत्वायोगात् । तस्मात्, उपाधेरपि ज्ञाने विषयत्वेन विशिष्टविषयकत्वे अतत्त्वज्ञानत्वम्, उपाधेरविषयत्वे च शुद्धमेव गृह्यत इति तत्त्वज्ञानत्वञ्च वक्तव्यम् । अतो वृत्त्युपहितब्रह्मविषयिणी वृत्तिः शुद्धविषयिण्येवेति तत्र सत्ये दृश्यत्वरूपहेतुरनैकान्तिक एव ॥

अन्यथा, 'यत्तदद्रेश्यमग्राह्यम्', 'शुद्धं स्वप्रकाशम्' इत्यादावपि वृत्त्युपहित एवादृश्यत्वस्वप्रकाशत्वाद्यन्वयात् स्वाभिमतस्वरूपे तदसिद्ध्यापत्तिश्च । वृत्त्युपहिते तत् तत् बाधितमिति चेत्—कुत एतत् ? प्रत्यक्षाच्छास्त्रस्य बलीयस्त्वेन तदुक्तस्यादृश्यत्वस्यास्वीकारायोगात् । शुद्धब्रह्मण इव तस्याप्यदृश्यत्वे बाधकाभावात् । वृत्त्यंशे अदृश्यत्वं बाधितमिति चेत्—तदपि शास्त्रबलादेष्टव्यम् । सा वृत्तिः परमदृश्येत्येवास्तु । एवं स्वप्रकाशत्वमपि वृत्तेरापाद्यमानं नानिष्टम् । लोके मनोवृत्तीनां जातानामुपलम्भनैयत्यस्य संमतत्वात् ज्ञानस्वप्रकाशत्ववादिभिर्वृत्तिस्वप्रकाशत्वेऽपि संमतिसंभवात् । प्रकृत्याद्यपेक्षया अन्तःकरणे स्वच्छत्वादिरूपस्य वैलक्षण्यस्येव वृत्तिविशेषेषु स्वप्रकाशत्वस्यापि स्वीकारौचित्याच्च । तर्हि गतं चैतन्येनेति चेत्--वेदाननुसारे गतमित्येतदिष्टमेव । वेदाप्रमाण्ये तु तदप्यस्तु ; तदर्थे प्रतीतवृत्तिस्वप्रकाशत्वपरित्यागः कुतः ? शुद्धस्य वृत्तिविषयत्वे स्वप्रकाशत्वविरोध इति चेन्न—जात्वपि, नाहमस्मीति विपर्ययाद्यभावात्, सुखमहमस्वाप्समित्यादिबलाच्च स्वप्रकाशत्वमपीष्यते ; तावन्मात्रेण संसारोच्छेदाभावात् तदर्थे वृत्तिविषयत्वमपीष्यत इत्यविरोधात् । ज्ञानानां स्वकाले स्वाश्रयं प्रति स्वप्रकाशत्वस्य,

स्वाभावकाले स्वाश्रयं प्रति, स्वाश्रयभिन्नं पुरुषं प्रति सर्वदा च वृत्त्यधीनप्रकाशस्य चानुभविकत्वाच्च ।

मा भूद्वा वृत्तेः स्वप्रकाशत्वम् । अथापि शुद्धं स्वप्रकाशमिति वृत्तिकाले ब्रह्मणो वृत्त्युपहितत्वे सत्यपि न विशेष्यांशे स्वप्रकाशत्वहानिः । अज्ञानोपहितचैतन्यं साक्षीत्युक्तिः अज्ञानांशे साक्षित्वाभावेऽपि घटत इति सिद्धिग्रन्थे समनन्तरमेव वक्ष्यमाणत्वात् तद्रीत्या वृत्त्युपहितेऽपि विशेष्यमात्रे स्वप्रकाशत्वस्याप्युपपत्तेः । अतः शुद्धस्य वृत्तिविषयत्वे शुद्धत्वासंभव इति सिद्ध्युक्तम्, शुद्धस्य वृत्तिविषयत्वे स्वप्रकाशत्वायोग इति चन्द्रिकोक्तञ्चायुक्तम् । शुद्धं स्वप्रकाशमित्यस्य हि न ब्रह्मणि वृत्त्याद्युपधानराहित्यबोधकत्वम् । किन्तु वृत्तिप्रपञ्चाद्युपहितमपि ब्रह्म उपाध्यंशं विना स्वरूपमात्रे स्वप्रकाशमिति बोधकत्वमेव । न च वृत्तिविषयत्वस्वप्रकाशत्वयोर्विरोधः । प्रदीपस्य प्रदीपान्तरनिरपेक्षतया स्वयंप्रकाशस्याप्यानयनादिक्रियाकर्मत्ववत् ब्रह्मणः स्वयंप्रकाशस्य वृत्तिक्रियाकर्मत्वे बाधकाभावात् । तत् वृत्तिविषयत्वमसत्यं स्यान्नाम । तावता शुद्धस्य तन्न भवतीति कथम् ।

यदि च शुद्धस्य ज्ञानविषयत्वमेव न स्यात्, शुद्धविषयस्य विचारस्य वादिभ्यां क्रियमाणस्यैवासंभवः स्यात् । अत एव शुद्धं स्वप्रकाशमिति वाक्यस्य 'अशुद्धम्—उपहितमस्वप्रकाश' मित्यर्थवर्णनमप्यनपेक्षितम् । अत्र तथा वर्णनमसंभवि च । शुद्धपदेन स्वप्रकाशपदेन च शक्यार्थोपस्थापनद्वारैव लक्षणायाः वर्णनीयतया शुद्धब्रह्मातिरिक्तस्य तदर्थत्वाभावेन ततः शुद्धब्रह्मानुपस्थितौ लक्षणानुपपत्तेः । शुद्धमित्यत्र लौकिकशुद्धेः, स्वप्रकाशमित्यत्र प्रदीपप्रकाशादेश्च ग्रहणे अशुद्धमस्वप्रकाशमित्यत्र प्रकृतविशेषालाभः स्यात् । एवमुपहितमस्वप्रकाशमित्युक्तावपि शक्यार्थस्योद्देश्यत्वं विहाय लक्ष्यार्थस्योद्देश्यत्वमित्येव लाभात् प्रथमश्रुतत्वाच्च उपहितमुद्दिश्यास्वप्रकाशत्वमेव विधेयं स्यात् । तथा चोपहितत्वव्यापकमस्वप्रकाशत्वमिति पर्यवसाने स्वप्रका-

शोद्देशेनानुपहितत्वमिति [illegible] सिद्ध्येत् । न तु शुद्धोद्देशेन स्वप्रकाशत्वविधानस्य शुद्धं स्वप्रकाशमिति [illegible] सिद्धिः । एवमस्वप्रकाशमित्यस्य कोऽर्थः ? स्वाधीन[illegible]भिन्नत्वेन शुद्धातिरिक्तग्रहणे तदधीनप्रकाशासिद्धिः । शुद्ध[illegible] । स्वानधीनप्रकाशवत्त्वमस्वप्रकाशत्वम् । [illegible] उपहितानधीनः प्रकाशः किमधीनः, [illegible] ति [illegible], चेदन्यस्य शुद्धब्रह्माधीन इत्येवोत्तरमिति सिद्धं शुद्ध[illegible] । अपि च न प्रकाशोऽपि तदेवा । एवमुपहितत्वव्यापकं स्वा[illegible]पर्यवसाने, व्यापकाभावात् व्याप्याभाव इति रीत्या स्वानधीन[illegible] उपहितत्वाभावस्य च नियम उपपादनीय इति, तस्य [illegible]णेऽपि समन्वय इति न शुद्धं स्वप्रकाशमिति पर्यवसानस्यावश्यकता । स्वानधीनप्रकाशकभिन्नत्वमित्यस्य स्वाधीनप्रकाशकत्वमिति पर्यव[illegible] तस्यानुपहितत्वस्य च नियम इति चेत्—तर्हि स्वाधीनप्रकाशकमिति ब्रह्म गृहीतमेव भविष्यति ।

किञ्च [illegible]स्वप्रकाशत्वयोर्व्याप्यव्यापकभावे शुद्धस्वप्रकाशत्वपर्यवसानमित्यस्य कोऽर्थः ? [illegible]र्थान्तरपरत्वेऽपि व्यापकाभावात् व्याप्याभाव इति रीत्या गृह्यत इत्येव । तथा च मानसवृत्तिविषयत्वं शुद्धे सुस्थम् । पर्यवसानमित्यनेन, अनुपहितं स्वप्रकाशमिति ज्ञायत इति न विवक्षितम् ; किन्तु अनुपहितं स्वप्रकाशत्वाभाववदिति न ज्ञायत इत्येवेति चेत्—अत्रानुपहितमिति धर्मिग्रहणं कथम् ? स्वप्रकाशत्वरूपधर्माप्रसिद्धिश्च । स्वशब्देन शुद्धस्याग्रहणात् । अनुपहितं परप्रकाश्यमिति न ज्ञायत इत्यर्थ इत्युक्तावप्यनिस्तार एव । धर्मितया परत्वप्रतियोगितया च शुद्धग्रहणात् । अपि चोपहितं स्वानधीनप्रकाशकमित्युक्तौ पदार्थसामान्यं प्रमेयमित्युक्तौ, यथा पदार्थत्वव्यापकं प्रमेयत्वमिति सिद्धावपि न पदार्थातिरिक्तं प्रमेयतारहितमस्तीत्यर्थलाभः तथा (उपहितत्वं स्वानधीनप्रकाशकत्वं च केवलान्वयितया व्याप्यव्यापकभावापन्नमित्यप्यवगम्येतेति) नानुपहिते तत्स्वप्रकाशत्वस्य तत्रास्वप्रकाशत्वेन

पर्यवसानमिति । अत्र यथाश्रुतस्याभिन्नत्वस्य भेदाभावस्य विवक्षितत्वे अभिन्नत्वाभावो भेदएवेति भेदव्यापको भेद इत्युक्तं भवतीति भेदनिषेधेनाभिन्नत्वज्ञानमित्यस्य दुर्वचत्वात् अभिन्नत्वं तादात्म्यं विवक्षितम् । अस्तु तावदिदं तादात्म्यात्यन्ताभावव्यापकत्वस्य भेदे ज्ञानम् । तत्प्रतियोगिकात्यन्ताभावज्ञानञ्च, तादात्म्यस्य, अत्यन्ताभावस्य, भेदस्य, तदत्यन्ताभावस्य च यथायथमधिकरणं यत् तज्ज्ञानाभावे दुर्लभम् । विशिष्य चाभावस्य प्रतियोग्यनुयोगिनिरपेक्षं ज्ञानं न भवितुमर्हति । अनुयोग्यप्रसिद्धौ अभावाप्रसिद्धया: पदार्थत्वप्रमेयत्वादावनुभवात् । एवं स्वप्रकाशत्वाभावव्यापको योऽनुपहितत्वरूपशुद्धत्वाभाव इत्यत्र स्वपदार्थस्य स्वप्रकाशत्वाश्रयस्य उपहितत्वाभावाश्रयस्य च ज्ञानमपेक्षितमिति शुद्धज्ञानमवर्जनीयम् । एवम्, "भेदनिषेधेनाभिन्नत्वम्" इति वाक्यस्य चन्द्रिकोक्ते, "उपहितचित्तादात्म्यात्यन्ताभावव्यापकस्योपहितचिदत्यन्तभेदस्य शुद्धचिदन्यनिष्ठस्य प्रतियोगी उपहितचिद्भेदात्यन्ताभाव इति निश्चयोत्तरं तादृशात्यन्ताभावविशिष्टे उपहितचित्तादात्म्यं पर्यवस्यती" त्यर्थेऽप्यनुपपत्तिर्द्रष्टव्या । उपहितचिदभिन्नत्वं हि नाम उपहितचिद्भेदाभावः । उपहितत्वविशिष्टचित्त्वावच्छिन्नप्रतियोगिताकभेदाभावः । तच्चोपहितत्वविशिष्टचित्त्वमेवेति उपहितचित्त्वात्यन्ताभावव्यापकत्वनिवेशे शुद्धचित्यपि उपहितत्वविशिष्टचित्त्वाभावोऽस्तीति नोपहितचिदत्यन्तभेदस्य शुद्धचिदन्यनिष्ठस्य तद्व्यापकत्वमिति हि उपहितचित्तादात्म्यात्यन्ताभावनिवेशः । तत्तादात्म्यञ्च शुद्धचित्यप्यस्तीति न दोष इति । एवञ्च तत्तादात्म्यं शुद्धचिदादौ, तदत्यन्ताभावो घटादावित्येव समन्वयः कर्तव्य इति कथं शुद्धचिद्ग्रहणम् । एवमुपहितचिदत्यन्तभेद इति अत्यन्तपदप्रयोगोऽपि शुद्धचितः उपहितचिद्भेदवत्त्ववारणार्थः । तथा उपहितचिदत्यन्तभेदप्रतियोगितया उपहितचिद्भेदात्यन्ताभावग्रहणम्, उपहितचिद्भेदात्यन्ताभावः शुद्धचिति, तदभावस्य च प्रथमाभावप्रतियोगिस्वरूपतया भेदरूपत्वम् । अतस्तत्प्रतियोगित्वं शुद्धचिन्निष्ठे उपहितचिद्भेदात्यन्ताभावे इति विवेचनायत्तमिति च भाव्यम् ॥

एवं मायादिविशेषणविशिष्टब्रह्मज्ञानरूपदृशिविषयत्वादपि ब्रह्मण्यनैकान्त्यम्। न च-तत्र विशिष्टस्य मिथ्यात्वमिष्टम्। विशेष्यमात्रे तु दृशिविषयतापर्याप्त्यधिकरणत्वस्य हेतुत्वविवक्षया व्यभिचारपरिहारः। विशिष्टज्ञानीयविषयतापर्याप्तेः शुद्धेऽभावादिति वाच्यम्—तर्हि घटत्वादिविशेषणांशविविक्ते घटव्यक्त्यंशे दृशिविषयत्वपर्याप्त्यभावात् व्यभिचारात्। न च निर्विकल्पकविषयतापर्याप्तिस्तत्र, तदनङ्गीकारस्य प्रागेव दर्शितत्वात्। न चैवं तन्मात्रविषयकज्ञानाभावे तस्यालीकतापत्तिः, पृथक्तन्मात्राग्रहणेऽपि विशेषणैस्सह ग्रहणादेव तत्सिद्ध्या तदलीकत्वायोगात्। यथा कदाचित् पुंभिरज्ञायमानत्वमात्रेण वस्तुनो नाळीकत्वम्, तथा पृथगग्रहणमात्रेणालीकत्वमपि दुर्वचम्। अन्यथा संबन्धस्य, अभावस्य च अनुयोगिप्रतियोगिसाहित्येनैव ग्राह्यतया पृथगग्रहणमात्रेण तुच्छत्वं स्यादिति ॥

एवमज्ञानतत्कार्याविषयकज्ञानस्यैव संसारनिवर्तकतया तत्त्वमसिवाक्याधीनज्ञानस्य वृत्तिपर्यन्तसर्वाविषयकाखण्डब्रह्मविषयकज्ञानत्वमावश्यकमित्यपि शुद्धविषयकत्वसिद्धिः। उपरि "स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरूपं दृश्यत्वम्"इति परिष्कारे संवित्पदेन शुद्धचितोऽपि ग्रहणाच्च शुद्धस्य वृत्तिविषयत्वमस्तीति ॥

यत्तु—तत्त्वमसीति चरमवृत्तेरुपहितविषयकत्वेऽपि ब्रह्माज्ञाननिवर्तकत्वं नानुपपन्नम्। अज्ञानस्याप्युपहितविषयकत्वेन समानविषयकत्वात्। न ह्यज्ञानविषयीभूतं ब्रह्म अज्ञानकाले अज्ञानानुपहितं भवति। अतः समानविषयकत्वान्निवर्तकत्वमिति--तदपि न। "शुद्धं हि ब्रह्म न दृश्यम्; किन्तूपहितम्। तच्च मिथ्यैव" इति हि प्रागुक्तम्। शुद्धं तु ब्रह्म सत्यम्; अतस्तयोर्भेदः सिद्धः। एवमज्ञानोपहितं ब्रह्म अज्ञानविषयः। तदप्युपहितं तुल्यनयात् शुद्धाद्भिन्नम्। एवञ्च ब्रह्मणोऽपि भिन्नमज्ञानोपहितं ब्रह्म अज्ञानविरोधिवृत्तिमात्रोपहितब्रह्मतोऽपि भिन्नमेवेति कथं ज्ञानाज्ञानयोः समानविषयकत्वम्?

अग्न्युपहितस्यायःपिण्डस्यायःपिण्डादेव भेदे सति हि जलोपहितादयःपिण्डाद्भेदः किंपुनर्न्यायसिद्धः। यदि तूपहितविषयकस्य ज्ञानस्याज्ञानस्य चोपाध्यविषयकत्वेन विशेष्यमात्रविषयकतया एकविषयकत्वम्, तर्हि तदेकमेव कदाचिदज्ञानोपहितं कदाचित् वृत्त्युपहितमिति तत्र न शुद्धब्रह्माविषयकत्वम्। शुद्धब्रह्मविषयकत्वं हि नाम ब्रह्मेतराविषयकत्वे सति ब्रह्मविषयकत्वमेव। उपहितविषयकमित्यस्यापि उपलक्षणस्यैवोपाधिशब्दवाच्यतया पूर्वोक्त एवार्थ इष्ट इति नोभयोः पक्षयोर्विशेषोऽन्यत्र शब्दभेदात्।

यत्तु चन्द्रिकायाम्—उपहितविषयकत्वं नाम उपाध्यविषयकत्वे सति उपहितान्याविषयकत्वे सति उपहितविषयकत्वमिति--तत्र उपाधेरुपलक्षणत्वज्ञप्तये उपाध्यविषयकत्वदलनिवेशस्तावत् युक्तः। उपहितान्याविषयकत्वं तु कुतः? अज्ञानतत्कार्यप्रपञ्चप्रकारकब्रह्मज्ञानस्यापि चरमवृत्त्यविषयकत्वब्रह्मविषयकत्वयोः सत्त्वात् उपहितविषयकत्वापत्तिरिति तद्वारणार्थमिति चेत्—अस्तु तस्याप्युपहितविषयकत्वम्; ततः किम्? तद्यज्ञानसमानविषयकत्वं न भवति। अज्ञानस्योपाध्यविषयकत्वात् ब्रह्ममात्रविषयकत्वात् तत्समानविषयकत्वाभावे तद्विरोधित्वं न स्यादिति चेत्—किमिदं समानविषयकत्वम्? तत्समानविषयकत्वं नाम तद्विषयविषयकत्वे सति तद्विषयाधिकाविषयकत्वमिति चेत्—तन्न—लोकेऽधिकविषयकस्यापि तत्त्वज्ञानस्य संशयविपर्ययनिवर्तकत्वस्य दर्शनेनाधिकाविषयकत्वस्यानिवेश्यत्वात्। घटवन्न वेति, घटाभाववद्भूतलमिति च ज्ञानं प्रति घटपटोभयवद्भूतलमिति प्रत्यक्षमपि विरोध्येव। यदि तु चरमवृत्तेरज्ञानादिना सह विरोधात् तदुपहितब्रह्मज्ञाने अन्यस्य विषयत्वं न भवतीति मन्यते, तर्हि तत एव विरोधात् तदविषयकत्वे सिद्धे अन्याविषयकत्वनिवेशनं व्यर्थमेव। लोकप्रसिद्धमज्ञानमपि, स्वयं यद्विषयकम् तद्विषयकज्ञानात् निवर्तत इत्येवानुभविकम्। नाधिकविषयकत्वे तद्भङ्गः। तस्मादुपहितब्रह्मणो मिथ्यात्वे तद्विषयकज्ञानस्य भ्रमत्वापातात् अतत्त्वज्ञानात् ततो नाज्ञाननिवृत्तिः। निवर्तकत्वे च—तत्त्व-

ज्ञानान्मुक्तिरिति गतम्; "तरति शोकमात्मवित्" इत्यादिश्रुतिश्च कदर्थिता स्यात्। तत्त्वज्ञानत्वस्वीकारे च शुद्धब्रह्मविषयकत्वं दुर्वारमिति दृश्यत्वमनैकान्तिकमेव ॥

अत एवाद्वैतसिद्धावेव दृश्यत्वं शब्दाजन्यवृत्तिविषयत्वमिति प्रकारान्तरं पश्चादनुसृतमिति चेत्—न—घटोऽस्ति पटोऽस्तीति शब्दाजन्यसन्मात्रप्रत्यक्षवृत्तिविषयतया व्यभिचारात्। प्रत्यक्षस्य सन्मात्रब्रह्मविषयकत्वमिति पक्षास्वीकारेणैतदुक्तिरिति चेत्—न—वृत्तिश्चैतन्याधीनप्रकाशा जडत्वात् घटादिवत् इत्यनुमानेऽपि ब्रह्मणो विषयत्वात्। किञ्च किमिदं शब्दजन्यत्वम्? यथाश्रुतमेवेति चेत्—शशविषाणमिति शब्दस्याप्रयोगेऽपि शशविषाणविकल्पस्य जायमानतया तस्य शब्दजन्यत्वाभावेन शब्दाजन्यवृत्तिविषये तत्र तुच्छे व्यभिचारः। शब्दज्ञानाजन्येति ब्रूमः। शब्दस्याप्रयोगेऽपि तत्र तज्ज्ञानमस्तीष्यत इति चेन्न—तत्र वस्त्वभावेन शशविषाणशब्दज्ञानातिरिक्तस्य तज्जन्यज्ञानस्याभावात्। नन्वव्युत्पन्नस्य शशविषाणशब्दश्रवणं न विवक्षितविकल्पात्मकम्, व्युत्पन्नस्यापि, शशस्य विषाणित्वे भ्राम्यतो ज्ञानं न विकल्पः। तस्मादभ्रान्तव्युत्पन्नगतं शशविषाणज्ञानं शब्दज्ञानातिरिक्तं किमपीति चेत्—तर्हि तस्य शब्दज्ञानं विनापि शश-विषाण-तदसंबन्धज्ञानिनः स विकल्पो भवतु। ततः शब्दं स्मृत्वा व्यवहरतीति शब्दस्मरणमेव तत्र विकल्पजन्यम्; न तु शब्दज्ञानाधीनस्तत्र विकल्पः। तर्हि कथम्, "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति **पातञ्जलयोगसूत्रे** विकल्पे शब्दज्ञानजन्यत्वमुक्तमिति चेत्—न हि तत्र शशविषाणादिकं तुच्छमुदाहृतं भाष्ये; किंतु, "चैतन्यं पुरुषस्य स्वरूपम्" इति। पुरुषचैतन्ययोरभेदात् चैतन्यात्मकस्वरूपे पुरुषस्य भेदसंबन्धः षष्ठ्या निर्दिष्टो यद्यपि वस्तुतो नास्ति, अथापि भेदकल्पनया प्रामाणिकैः प्रमाणप्रत्ययगुणभावबुद्ध्यैव तथा व्यवह्रियते शास्त्रेषु। एवं राहोः शिर इत्याद्यपि। तत्र तादृशशब्दसमुदायबुबोधयिषितस्य वास्तवस्यैव कस्यचिदर्थस्य

पदान्तरार्थेन साकमन्वयोऽपि भवति। न खल्वेवं शशविषाणशब्देनोच्यमानं किञ्चित् सत्त्वेन प्रतीयमानं पदार्थान्तरान्वयार्हं भवति। तत्र च, 'चैतन्यं पुरुषस्य स्वरूपम्' इत्यादौ षष्ठीश्रवणादेव वक्तृतात्पर्याविषयभूतस्यैव भेदस्य कल्पना स्वयमनुपततीति शब्दज्ञानानुपाती इति तद्दर्शितम्। शशविषाणादिकं तु समभिव्याहृतपदार्थान्तरान्वयानर्हं तुच्छं न तत्रोदाजिहीर्षितमिति शशविषाणविषये तत्सूत्रप्रमाणीकरणमर्वाचामयुक्तम्। न च शशविषाणपदस्याभाव इत्यर्थः। घटाभाववद्भूतलमित्येतत्स्थाने घटशशविषाणवद्भूतलमिति प्रयोगापत्तेः। यदि तु शशाधिकरणको विषाणाभाव इति तदर्थः, तदा प्रमाणवृत्तिरेवेयम्; न विकल्पः। अत एव शशानुयोगिकविषाणप्रतियोगिकाभावः शशविषाणरूपेण प्रतीतत्वात् तुच्छ इत्यपि चिन्त्यम्—शशविषाणरूपेणेत्यस्यार्थासंप्रतिपत्तेः। शशविषाणशब्दाभिलप्यरूपेणेत्यर्थ इति चेत्—अस्तु शब्दः कोऽपि। विवक्षितार्थस्याभावविशेषस्य परमार्थतया कथं तुच्छत्वम्? लाक्षणिकशब्दबोध्यस्यातुच्छत्वात्। अतः शशविषाणं तुच्छं प्रतीतिक्रियाविषयीभवदपि अर्थक्रियासंबन्धविरहात् किञ्चिदन्वयितया कथयितुं ग्रहीतुमप्यनर्हं निरुपाख्यं तुच्छमिति॥ आस्तामेतत्। चन्द्रिकायामेव शशविषाणस्य शब्दाजन्यानुमानवृत्तिविषयत्वमस्तीत्युक्तमिति तत्राप्यनैकान्त्यमेव॥

अथ सिद्धिकार इदमपि विहाय सप्रकारकवृत्तिविषयत्वं दृश्यत्वमिति किञ्चिदाह। तदप्ययुक्तम्। 'सत्यं ज्ञानमनन्तं ब्रह्म', 'अद्वितीयं ब्रह्म' इत्यादौ अनृतजडपरिच्छिन्नव्यावृत्त्याद्युपस्थितौ तद्विशिष्टतया ब्रह्मणः शब्दतोऽर्थतो वा गम्यमानत्वात् तत्राभावरूपाणां प्रकाराणां वस्तुतो ब्रह्माभिन्नतया मिथ्यात्वायोगात्। विशेष्यस्य च सत्यत्वात्। अभेदेऽप्याधाराधेयभावसंभवस्य क्वचित् भवदीयेष्टत्वात् सप्रकारकधीविषये तत्र सर्वत्र मिथ्यात्वस्यायोगात्। तुच्छत्वप्रकारकधीविषये तुच्छे व्यभिचाराच्च। अत एव सोपाख्यधर्मप्रकारकप्रतीतिविषयत्वमिति परिष्कृतमिति चेत्—केयमुपाख्या? अस्तीतिप्रतीतिविषयत्वमिति चेत्—तर्हि सत्त्वप्रकारकप्रतीतिविषयत्वविशिष्टधर्मप्रकारक-

प्रतीतिविषयत्वादिति हेतुरुक्तो भवति। तुच्छे तुच्छत्वमस्तीति प्रतीत्या पुनस्तत्र व्यभिचार एव। एतदपेक्षया सत्त्वप्रकारकप्रतीतिविषयत्वादित्येव हेतुः पर्याप्त इति किमधिकेन? प्रतीतीत्यपि व्यर्थम्। सत्त्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयत्वादित्यलम्। "अस्ति ब्रह्मेति चेद्वेद" इति श्रुत्या तत् ब्रह्मण्यप्यस्तीति चेत्—सप्रकारकप्रतीतिविषयत्वमिति सिद्धयुक्तमप्यस्त्येव। विशिष्टतया प्रतीतं तन्मिथ्यैवेति चेत्—सत्यम्। श्रुत्युक्तं सर्वं मिथ्यैव। स्वानुभवसिद्धमेव तु सत्यं भवताम्। अस्तु कथमपीति चेत—बौद्धैः सर्वः प्रत्ययो मिथ्याविषयकः प्रत्ययत्वादित्युक्तम्। तदेव विषयपक्षीकारेण विमतं मिथ्या प्रत्ययविषयत्वादिति भवद्भिरुच्यते। एवं सामान्यरूपेणैव हेतोः साध्यप्रयोजकत्वे संभवति सप्रकारकधीविषयत्वादिति विशेषनिर्देशोऽप्रयोजकः। श्रुतिप्रामाण्यादेवमिति चेत्—श्रुतित एव मिथ्यात्वावगतौ अस्य हेतोः प्रयोजकत्वकल्पनं वृथा। विमतं मिथ्या तत्त्वादित्येवोक्तिसंभवात्। तर्हि दृष्टान्ते हेतुसमन्वयः कथमिति चेत्—शास्त्रसिद्धव्याप्यव्यापकभावमादाय हेतुप्रयोगे लोकदृष्टान्तो नापेक्षित इत्युक्तिसंभवात्। श्रुतिपरिशीलने च प्रकारविशिष्टानन्तपदार्थसत्यत्वमेव सिद्धयतीति हेतुरप्रयोजक एवेति।

अथ फलव्याप्यत्ववृत्तिव्याप्यत्वसाधारणं दृश्यत्वमपि युक्तम्। तच्च व्यवहारप्रयोजककिञ्चिद्विषयत्वरूपम्। व्यवहारः स्फुरणाभिवदनादिः। प्रयोजकश्च चित्, वृत्तिश्चेत्युभयमपि यथायथमिति यदुक्तम्—तदपि शुद्धब्रह्मण्यपि वृत्तिविषयत्वस्य प्रागुपपादितत्वादेव निरस्तम्। विषयत्वमात्रस्यैव पर्याप्तत्वात् तत्र प्रयोजकेति, तत्र व्यवहारेति च व्यर्थम्। एवं स्फुरणाभिवदनादिसाधारणस्य व्यवहारत्वस्य कस्यचिदभावात्, ज्ञानाकूलव्यापारो व्यवहार इत्युक्तौ तत्र ज्ञानपदं फलपरं वृत्तिपरं साधारणं वेति विकल्पस्य पुनः प्रवृत्तेश्च, अत्र विशिष्य चिद्विषयत्व(चित्तादात्म्य)वृत्तिविषयत्वान्यतरवत्त्वमिदं दृश्यत्वमिति परिष्करणमपि प्रतिक्षेप्यम्। एकतरस्यैव पर्याप्ततया द्वयोर्निवेशवैयर्थ्यात्। हेतोरप्रयोजकत्वं तु सर्वथाऽस्त्येव। अस्तु तर्हि चित्संबन्धित्वं दृश्यत्वम्।

सर्वेषामपि वस्तूनां वृत्तिविषयत्वे वृत्तौ च चैतन्यस्य प्रतिफलितत्वे तादृशचैतन्यसंबन्धित्वमव्याहतम् । चिति न चित्संबन्धः, संबन्धस्य भेदव्याप्यतया तदभावेऽभावादिति चेन्न---चैतन्यप्रतिफलनाधिकरणवृत्तिविषयत्वरूपचैतन्यसंबन्धित्वस्य चैतन्ये सत्त्वात् व्यभिचारात् ।

किञ्च व्यवहारं प्रति चितः प्रयोजकत्वे प्राक् व्यवहारप्रयोजकविषयत्वरूपदृश्यत्वनिर्वचने उक्तम् । चिद्व्यवहारे चितः प्रयोजकत्वञ्च तादात्म्येन । 'तादात्म्यस्य भेदघटिततया कथं चिति चित्तादात्म्य'मित्याशङ्क्य, व्यवहारकारणत्वोपहितचित्तादात्म्यं शुद्धचितीति चोक्तम् । एवञ्च तादात्म्यसंबन्धेन संबन्धित्वमस्तीति चिति अनैकान्त्यम् । एवमत्र, "तुच्छे च व्यभिचारः परिहरणीय" इति कथनमप्यनपेक्षितम् । अत्यन्तासतः सत्संबन्धायोगादव्यभिचारात् । कथञ्चित् चित्तादात्म्यापन्नविकल्पाख्यवृत्तिविषयतया चित्संबन्धित्वमस्तीति चेत्--चित्तादात्म्यस्य जगति भवतामिष्टतया तस्यैव हेतुत्वसंभवे किमित्येवं क्लेशः ? अस्तु तथैवेति चेत्---तत् प्रतिवाद्यसंमतम् । दुर्वचञ्च ; मिथ्याभूतेषु सत्यवस्तुतादात्म्यायोगात् । इदं रजतमिति प्रतीतिमात्रेण रजते शुक्तितादात्म्यस्य लोकरीत्या, अनिर्वचनीयोत्पत्तिवादिभवद्रीत्या चासंभवात् । अत एव जडाजडयोस्तादात्म्यायोगात् बाधार्थसामानाधिकरण्यं भवद्भिर्वर्ण्यते ।

अथ तद्भिन्नत्वे सति तदभिन्नत्वेन प्रतीयमानत्वमेवेह तादात्म्यमौपचारिकमिति चेत्---धर्मिणि धर्मभ्रमस्थले इदं न भवति । तर्हि तदसंबन्धित्वे सति तत्संबन्धित्वेन प्रतीयमानत्वादिति सामान्येनोच्यतामिति चेत्---तुच्छेऽस्याभावात् तत्र प्रकारान्तरेण व्यभिचारपरिहारप्रयासो व्यर्थः । प्रपञ्चे कथञ्चित् चित्संबन्धिनि तदसंबन्धित्वमपि कथम् ? तद्भिन्नत्वे सति तत्संबन्धित्वेन प्रतीयमानत्वादित्यस्तु हेतुरिति चेत्---प्रतीयमानत्वादिति व्यर्थम् । अस्तु तद्भिन्नत्वे सति तत्संबन्धित्वादित्येव । इदं तुच्छेऽप्यस्ति । तुच्छविषयकविकल्पाख्यवृत्तेरप्यन्तःकरणपरिणामतया वृत्तेः प्रतिफलितचैतन्यकतया स्वप्रतिफलनाधारवृत्तिविषयत्वरूपचित्संबन्धस्य तुच्छेऽपि संभवात् । अतः, "तुच्छे व्यभिचारः परिहरणीयः" इत्युक्तमपि संगच्छत इति चेत्---चिद्भि-

न्नत्वमेवालमिति किं चित्संबन्धित्वनिवेशेन ? इष्टापत्तिरिति चेत्—एवं तर्हि तुच्छवारणाय तद्भिन्नत्वस्यापि निवेशे सदसद्विलक्षणत्वरूपमिथ्यात्वं प्रति तदेव हेतुरित्युक्तं भवतीति साध्याविशिष्टो हेतुः। चित्वं हेतुघटकम्; सत्त्वं साध्यघटकमिति भेद इति चेत्—न खलु सत्त्वचित्वरूपधर्मद्वयं ब्रह्मण्यस्ति, येन तन्मुखेन भेदः स्यात्। अप्रयोजकश्च हेतुः। लोके च सत्त्वं व्यापकम्, चित्त्वं व्याप्यमिति प्रसिद्धम्। तत्र सद्भेदात् चिद्भेदः साधयितुं शक्यते। व्यापकधर्मावच्छिन्नाभावे सति व्याप्यधर्मावच्छिन्नाभावस्य संप्रतिपन्नतया प्रयोज्यप्रयोजकभावात्। अत्र तु वैपरीत्यमिति न व्याप्तिसिद्धिः॥

किञ्च यदिदं चित्संबन्धित्वं चिद्विषयत्वं वा लिङ्गमुक्तम्, तत् ब्रह्मण्यप्यक्षतम्। चित् ब्रह्मणो रूपमिति कल्पितभेदसत्त्वात् संबन्धसंभवात्। पारमार्थिकसंबन्धवत्त्वं विवक्षितमिति चेत्—संबन्धोऽयं पारमार्थिक इति बुद्धिकृतमनिर्वचनीयं पारमार्थिकत्वमपि तत्र स्यादेव। पारमार्थिकत्वाश्रयसंबन्धवत्त्वमित्येवमुक्तिपरम्परयाऽप्यमुक्तिरेव। ब्रह्मव्यावृत्तये दलान्तरनिवेशे, तदप्येवं कल्पितं सत् भवन्मते ब्रह्मण्यक्षतमित्यनिर्मोक्ष एव। एवं चिद्विषयत्वमपि चिति अस्त्येव। ननु घटादेरस्वप्रकाशतया, व्यवहाराय चिद्विषयत्वमेष्टव्यम्; चितस्तु स्वयम्प्रकाशतया किमर्थं तदिति चेत्—तर्हि चिद्विषयिणी वृत्तिरप्यनपेक्षिता। वृत्तेरावाज्ञानभङ्गो घटादिविषये दृष्ट इति तद्विषयत्वस्वीकार इति चेत्—वृत्तेर्जडायाः विषयीकरणसामर्थ्यविरहात् वृत्त्यवच्छिन्नचिद्विषयत्वमेव लोके स्वीकृतमिति चित्यपि वृत्त्यवच्छिन्नचिद्विषयत्वमेव संमन्तव्यम्। संभवति चोपहितचिति वृत्तिप्रतिबिम्बितविशिष्टचिद्विषयत्वम्। विशिष्टस्य भिन्नत्वात्। अतो ब्रह्मण्यनैकान्त्यमेव। वृत्तेरेव विषयीकरणसामर्थ्यमस्ति चेत्—घटादावपि चिद्विषयत्वमनपेक्षितम्। वृत्त्यैव निर्वाहादिति हेत्वसिद्धिः।

एवं स्वातिरिक्तसंविदपेक्षस्वव्यवहारसामान्यकत्वमिति दृश्यत्वनिर्वचनमपि हेयम्। अन्तःकरणावच्छिन्नचैतन्यरूपस्य जीवस्याविद्यावच्छिन्नचिद्प-

स्येश्वरस्य च मिथ्यात्वस्येष्टतया तत्र हेत्वभावाद्भागासिद्धेः। अहमितिस्फुरणे अहमित्युच्यमानस्यैवापेक्षिततयाऽतिरिक्तसंविदपेक्षायां प्रमाणाभावात्। अहमर्थ-स्वयंप्रकाशत्वस्य चानुभविकत्वात्। विशिष्टसंविदोऽस्वयंप्रकाशत्वमिति चेत्--यस्य स्वयंप्रकाशत्वमनुभूतम्, तस्य तन्नेष्यते, यत्तु किञ्चित् शुद्धं सर्वथैवानुभवानारूढम्, तत् स्वयंप्रकाशमितीष्यत इति क इममादेशमाद्रियते। एवं जीवेश्वरयोः वृत्त्युपहितचितश्च मिथ्यात्वे तत्र शुद्धचिदपेक्षव्यवहारकत्वेऽपि स्वातिरिक्तसंविदपेक्षव्यवहारकत्वं नास्ति। शुद्धापेक्षया स्वातिरिक्तत्वविशिष्टायाः तदुपहिताया वा संविदः ईषद्वैलक्षण्यप्रयुक्तस्य भेदस्यावर्जनीयतया शुद्धापेक्षत्वेऽपि एतदपेक्षत्वाभावात्। संवित्पदेन संवित्पदबोध्यत्वोपहितस्यैव ग्राह्यतया तादृशोपहिताधीनत्वस्य व्यवहारे अभावाच्च। किमर्थञ्च सामान्यपदम्? व्यवहारः स्फुरणाभिवदनादिः। तत्र चित्स्फुरणस्य नित्यत्वेन तत्र स्वातिरिक्तचिदपेक्षाविरहेऽपि अभिवदनादौ स्वातिरिक्तापेक्षाऽस्तीति ब्रह्मणि व्यभिचारः स्यादिति तन्निवेशः। व्यवहारे शब्दज्ञानादिकमपेक्षितम्; न तु स्फुरणरूपे इति व्यवहारसामान्ये तदपेक्षत्वाभावाद्वारणमिति चेत्—व्यभिचारः किं वृत्त्युपहिते; उत शुद्धे? नाद्यः, तस्य मिथ्यात्वस्येष्टत्वात्। नान्त्यः, शुद्धे निर्विशेषे हेतुरूपविशेषो नास्तीत्येव भवद्भिर्व्यभिचारस्य सुपरिहरत्वात्। स्वातिरिक्तसंविदपेक्षस्फुरणकत्वमिति लघुनिर्वचनस्यैव संभवे व्यवहारेति अतिप्रसञ्जकपदनिवेशस्य सामान्यपदप्रयोगस्य चायुक्तत्वाच्च। अस्तु तथैव; तदेव लघुचन्द्रिकोक्तमपीति चेत्—स्वातिरिक्तसंवित्कत्वमिति लघुतरमेवास्तु। ब्रह्मातिरिक्तसंविदभावादेव ब्रह्मणि न व्यभिचार इति। तथाच संविद्भिन्नत्वमेव दृश्यत्वमित्यापतति। तत्तु प्राक् दूषितमेव। न च स्वातिरिक्तेत्येवंरीत्या निवेशे वृत्तिप्रतिबिम्बितसंविदः, विषयावच्छिन्नचैतन्यादेश्च संवित्त्वात् तत्र स्वातिरिक्तत्वसत्त्वात् व्यभिचार इति स्फुरणान्तनिवेश इति वाच्यम्—तस्य तस्य चैतन्यस्य स्वात्यन्तातिरिक्तत्वाभावादेव वारणसंभवात्। स्वातिरिक्तसंविदधीनस्फुरणकत्वनिवेशेऽपि सर्वसंवित्तादात्म्यस्येष्टतया स्वाधीनस्य स्वस्फुरणस्य स्वातिरिक्तस्वतादात्म्यापन्नतत्तत्संविदधीनत्वस्यापि संभवेन व्यभिचारावारणात्। तादात्म्यं हि भेदाभेदोभयसहमिष्टम्। किञ्च किमिदं स्फुरणं नाम? प्रकाश इति चेत्—

ब्रह्मणि स्वातिरिक्तप्रकाशाख्यधर्माभावात् स्फुरणाश्रयत्वमित्येतावतैव तत्र व्यभिचारवारणेऽन्यत् सर्वं व्यर्थम् । धर्मस्वीकारे च सविशेषत्वापातः ।

एवं स्वात्मप्रकाशस्य नित्यस्य किञ्चिदधीनत्वाभावादेव वारणे स्वातिरिक्तसंविदिति व्यर्थमेव । अङ्गीकृतं हि स्फुरणं नित्यमिति चन्द्रिकायामपि । यत्तु तत्रोक्तम्—"ब्रह्मण्यानन्दांशाज्ञाननिवृत्तेस्तदाकारकवृत्त्यधीनतया तदंशे स्फुरणं सादि, न तु चिदंशे । वृत्तिं विनाऽपि, चिदस्तीति व्यवहारात्" इति—तत्रांशद्वयदुर्वचत्वादिदूषणमन्यत्र द्रष्टव्यम् । चिदस्तीति सर्वदा व्यवहारसद्भावकथनमप्ययुक्तम् । तथा स्फुरणस्य वा, अन्यस्य वा व्यवहारस्यानुपलम्भात् । चिदिति किं चैतन्यविशिष्टमुच्यते, उत चैतन्यमात्रम्? नाद्यः, विषयग्रहणवेलायामेव चैतन्यस्फुरणस्यानुभविकत्वेन सर्वदा चैतन्यविशिष्टवस्तुस्फुरणस्यादर्शनात् । दर्शने च निर्विशेषब्रह्मासिद्धिप्रसङ्गात् । नान्त्यः, तथा चैतन्यस्य स्फुरणे ज्ञानमागन्तुकमिति तार्किकविवादाभावप्रसङ्गात् । आत्मरूपचैतन्यमस्तीति व्यवह्रियत इति चेत्—एवं तर्हि आत्मनश्चैतन्यरूपत्वमपरोक्षमिति, आत्मा स्वयंप्रकाशो न वेति विवादस्यैव विलयापत्तिः । अतः, अहमिति वा, अस्मीति वा, सर्वदा स्फुरणादिति कथञ्चित् स्यात्, न तु, "चिदस्तीति व्यवहारात्"इति ।

उपरि, "शुद्धचितोऽज्ञानाविषयत्वे नित्यसिद्धे वृत्तेरप्रयोजकत्वेऽपि अज्ञानाविषयत्वविशिष्टचित एव तत्र क्षेमसाधारणप्रयोजकत्वात् शुद्धचितस्तद्विशिष्टत्वेन स्फुरणम्" इति लेखनमप्यनन्वितम् । स्फुरणं हि असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिदित्युक्तम् । घटादिविषये स्फुरणं नाम, तदसत्त्वापादकं यत् अज्ञानम्, तदविषयत्वप्रयोजकम् घटादिवृत्तिसामग्रीति उपर्युक्तम्, यद्वा घटाविषयिणी वृत्तिः, तत्प्रतिफलितत्वरूपं चिति तद्वैशिष्ट्यम् । शुद्धचितः स्वत एवाज्ञानाविषयत्वात् तत्र वृत्त्यपेक्षा नास्तीति असत्त्वापादकाज्ञानाविषयत्वप्रयोजकपदेन न वृत्तेर्ग्रहणं भवति । तत् किं तत्र प्रयोजकम्? चित्त्वमेवेति चेत्—किमिदं चित्त्वम्? स्फुरणमिति चेत्—आत्माश्रयः । चिदेवेति चेत्---तद्विशिष्टं चिदिति दुर्वचम् । अज्ञानाविषयत्वमिति चेत्---न तदेव

तत्र प्रयोजकम् । अखण्डो धर्मः कश्चिदिति चेत्---चितः सविशेषत्वापत्तिः । अज्ञानाविषयत्वस्य नित्यतया न तत्र प्रयोजकापेक्षाऽपि । ब्रह्मण्यानन्दांशे अज्ञानसद्भावात् अज्ञानाविषयत्वमपि दुर्वचम् । असत्त्वापादकाज्ञानमिति चेत्--- आत्मन्यसत्त्वग्रहस्य कदाप्यनिष्टत्वात् असत्त्वापादकाज्ञानमप्रसिद्धम् । ननु घटादावसत्त्वापादकस्याज्ञानस्य प्रसिद्ध्या सामान्यतः असत्त्वापादकाज्ञानाविषयत्वं चिति उच्यते ; तत्र चाज्ञानाविषयत्वविशिष्टचिदेव प्रयोजिकेति चेत्---नित्यस्याप्यभावस्य प्रयोज्यत्वस्वीकारेऽपि तत्रैव तद्विशिष्टस्य प्रयोजकत्वे आत्माश्रयात् । विशेषणांशस्य प्रयोजककोटिप्रवेशे मानाभावाच्च । " अज्ञानाविषयत्वविशिष्टत्वेन स्फुरणमिति च कथम् ? अहं नास्मीत्यज्ञानस्याभावस्तावदिष्टः । न तु, अहं नास्मीत्याकारकाज्ञानाविषयोऽस्मीति अज्ञानाविषयत्वविशिष्टस्वस्फुरणं सर्वदाऽस्तीति । अतः अज्ञानम्, तद्विषयत्वम्, तदभावः, चित् इत्येतेषां नित्यानां स्फुरणमपि नित्यमिति वर्णनं स्वहृदयविसंवादि ।

ईदृशस्फुरणस्यानुभवानारूढत्वादेव संवित्पदकृत्यवर्णनमप्ययुक्तम् । स्वातिरिक्तापेक्षस्फुरणकत्वोक्तौ अज्ञानाविषयत्वविशिष्टचित्स्फुरणे तद्धटकाज्ञानस्यापि प्रयोजकतया स्वातिरिक्तापेक्षत्वसत्त्वेन व्यभिचार इति हि संवित्पदसार्थक्यमुच्यते । न ह्यज्ञानाविषयत्वविशिष्टतया चित्स्फुरणं प्रसिद्धमस्ति । तथासति, इदं स्फुरणं नित्यमित्यपि विरुद्ध्यते । नित्यत्वे अस्य स्फुरणस्य मोक्षेऽपि स्वीकार्यत्वात् तदानीमज्ञानाभावेन तत्प्रयोज्यत्वस्यायोगात् व्याघातात् । अतीतानागतघटाद्यज्ञानाविषयत्वस्यापि चिति सत्त्वेन तादृशाज्ञानस्य प्रयोजकत्वायोगाच्च । अज्ञानविषयत्वाभावविशिष्टचिदित्यत्रायमभावः चिदेव वा तद्धर्मो वा ? आद्ये, नाज्ञानादिकं तत्स्फुरणे प्रयोजकम् । अन्त्ये विशिष्टचितोऽस्य शुद्धचिदपेक्षयाऽतिरिक्ततया तत्र मिथ्यात्वस्य सङ्गमनीयतया तद्व्यावृत्तहेतुनिर्वचने भागासिद्धिः स्यात् । अतः शुद्धचित्स्फुरणस्यैव प्रकृतत्वात् तत्र स्फुरणेऽतिरिक्तापेक्षाभावात् संवित्पदवैयर्थ्यमेव । अत एव संवित्पदं विनैवोपरि सिद्धौ प्रयोगः । सर्वांशवैयर्थ्यञ्च प्रागुक्तमेव ।

अनन्तरदृश्यत्वनिर्वचने चन्द्रिकायाम्, "आनन्दांशस्य स्वान्यचिदंशाधीनापरोक्षताकत्वात् न स्वप्रकाशत्वम्" इत्युक्तत्वात् स्वातिरिक्तसंविदंशापेक्षस्फुरणकतया आनन्दांशस्य मिथ्यात्वापत्तिः। अतश्चानन्दरूपता मुक्तेर्न जाघटीति। सत्यासत्यचिदानन्दांशद्वयविशिष्टं ब्रह्म कृत्स्नं सत्यं निर्विशेषमिति वादे चास्मिन् विविधो व्याघातः। अप्रयोजकश्च हेतुः। संविदपेक्षव्यवहारकत्वं प्रत्युत संविदमिव विषयमपि साधयेदेव। अन्यथा स्तम्भादिप्रत्ययो मिथ्याविषयकः, प्रत्ययत्वात् स्वप्नादिवदिति सौगतमतमेव स्वीकृतं भवेदिति॥

एतेन—अस्वप्रकाशत्वं दृश्यत्वम्—इत्यप्यपास्तम्। स्वप्रकाशत्वं च स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वमित्युक्तम्। तच्च अतिरिक्तानपेक्षापरोक्षत्वकत्वम्। तथा च तद्भिन्नत्वमस्वप्रकाशत्वम्। नञ्द्वयत्यागे चातिरिक्तापेक्षापरोक्षत्वकत्वमेव। अपरोक्षत्वं च स्फुरणम्। पूर्वनिर्वचने व्यवहारत्वेन व्यवहारं निवेश्य दोषवारणाय सामान्यांशनिवेशनस्यानतिप्रयोजनत्वात्, व्यवहारत्वस्याननुगतस्याभावेन स्फुरणाभिवदनाद्यन्यतमत्वेन निवेशनीयतया अत्यन्तगौरवाच्च स्वातिरिक्तसापेक्षस्फुरणकत्वमेव पूर्वं निष्कृष्टमिति ततो नास्य भेद इति हि नेदं पृथक् दूषणीयं भवति। न च स्वातिरिक्तापेक्षापरोक्षत्वकत्वमतीन्द्रियेष्वसिद्धमिति तत्संग्रहाय स्वातिरिक्तानपेक्षापरोक्षताकभिन्नत्वरूपं निरुक्तमिति वाच्यम्—अपरोक्षत्वं तदपरपर्यायं स्फुरणञ्चापेक्ष्य व्यवहारप्रयोजकस्य परोक्षापरोक्षसाधारणस्य प्रकाशस्यैव घटनेनासिद्धिपरिहारात्। सर्वस्यापि योगिप्रत्यक्षविषयतया अपरोक्षतायाः परोक्षेऽप्यक्षततया स्वातिरिक्तपेक्षापरोक्षताकत्वस्यैव पर्याप्तवाच्च॥

अत्र, "तथा चानान्याधीनापरोक्षत्वं पर्यवस्यतीति तन्निरूपितभेदवत्त्वं हेतुः" इति सिद्धिवाक्यस्य पूर्वमस्वप्रकाशत्वमित्युपक्रमानुरोधात्, भेदवत्त्वमिति मतुबनुसाराच्च अन्यानधीनापरोक्षत्वावच्छिन्नप्रतियोगिकभेदानुयोगित्वमित्यर्थे स्फुटं प्रतीयमाने तद्विरोधेन चन्द्रिकायाम्, अन्यानधीनापरोक्षत्वावच्छिन्नानुयोगिताकभेदप्रतियोगित्वमित्यर्थवर्णनमप्यनादेयम्। यथाश्रुते बाधकाभावात्। ननु च स्वप्रकाशत्वं स्वातिरिक्तचिदनधीनापरोक्षताकत्वमित्युक्तौ ब्रह्मण्यसमन्वयः। स्वातिरिक्तचितोऽप्रसिद्धेः। अतः स्वनिष्ठापरोक्ष-

त्वप्रयोजकस्वान्यत्वात्यन्ताभाववच्चित्कत्वमेव स्वप्रकाशत्वम् । ब्रह्मरूपा च चित ब्रह्मनिष्ठापरोक्षत्वप्रयोजिका, ब्रह्मान्यत्वात्यन्ताभाववती चेति लक्षणसमन्वयः । स्वपदेन घटादिकं न ग्राह्यम् । तन्निष्ठापरोक्षत्वप्रयोजिकायाश्चितः तदन्यत्वात्यन्ताभावावत्त्वायोगात् । इदञ्च किञ्चिद्विशेषणविशिष्टचित्त्वरूपं स्वप्रकाशत्वं चित्त्वरूपधर्मापेक्षया गुरुभूतम् । संभवति लघौ गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानङ्गीकारात् तदवच्छिन्नप्रतियोगिकभेदस्य दुर्वचत्वात् तदवच्छिन्नानुयोगिताकभेदेत्युक्तमिति चेन्न—गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वस्वीकारेण ग्रन्थः प्रवृत्त इत्येव सुखं व्याख्येयत्वात् । स्वनिष्ठापरोक्षत्वाप्रयोजकस्वभिन्नसामान्यकत्वमिति चित्त्वाघटितरूपात्मकस्वप्रकाशत्ववर्णनसंभवाच्च । स्वातिरिक्तचिदनधीनापरोक्षताकत्वमित्यत्र यथामूलं चिदंशाघटनेनैव परिष्करणसंभवाच्च । स्वातिरिक्तेत्यनेन अविद्याया ग्रहणेन दोषापादनमयुक्तमिति च प्रागेवोपापादि । न च—निरुक्तस्वप्रकाशत्वस्य भावरूपतया शुद्धब्रह्मणि च तदयोगात् तदवच्छिन्नभेद एव ब्रह्मण्यस्ति; भेदस्याधिकरणात्मकतया, आधाराधेयभावस्वीकारेण च तदक्षतेः । एवञ्च तत्र मिथ्यात्वरूपसाध्याभावाद्व्यभिचारः । स्वप्रकाशत्वावच्छिन्नानुयोगिकभेदप्रतियोगित्वस्य हेतुत्वे तु प्रतियोगित्वस्य भावरूपतया निर्धमके ब्रह्मणि तदभावादेव न व्यभिचार इति वाच्यम्--भावरूपनिरुक्तधर्मस्य निर्विशेषब्रह्मण्यनङ्गीकारे, अन्यत्र च स्वयंप्रकाशत्वाभावेन त्वयंप्रकाशत्वस्यैवाप्रसिद्ध्या तदवच्छिन्नानुयोगिकाभावस्याप्यप्रसिद्ध्या तद्घटितहेतुपरिष्करणस्यैवायोगात् । प्रतियोगित्वस्य भावरूपतया ब्रह्मण्यप्रसिद्ध्या व्यभिचारवारणाभिप्राये च प्रतियोगित्वादित्येव हेतुरलम् । अन्यत् व्यर्थं स्यात् । जीवो ब्रह्म न, ईशो ब्रह्म नेति ब्रह्मप्रतियोगिकभेदवर्णनमुरि कृतमपि न सङ्गच्छेत । ब्रह्मणः प्रतियोगित्वायोगात् । शशविषाणादिप्रतियोगिकभेदस्य स्वयंप्रकाशे सत्त्वेन तुच्छे तत्र व्यभिचारश्च स्वाभिमतस्वयंप्रकाशत्वनिरुक्तावपि तुल्यः ।

यच्च सिद्धौ भेदस्य कल्पितस्य ब्रह्मणि सत्त्वेऽपि स्वयंप्रकाशत्वावच्छिन्नभेदस्तत्र न; किन्तु जीवत्वेश्वरत्वावच्छिन्नभेद एवेति—तन्न—शुद्धचितः

किञ्चिद्विशिष्टस्य च भिन्नत्वेन स्वयंप्रकाशत्वविशिष्टप्रतियोगिकभेदस्यापि ब्रह्मणि संभवात्। स्वयंप्रकाशत्वोपलक्षितप्रतियोगिकभेदो नास्तीत्यस्य च जीवत्वादिविषयेऽपि तौल्यात् जीवत्वाद्युपलक्षितप्रतियोगिकभेदस्यापि शुद्धे दुर्वचत्वात् । किञ्च प्रातिभासिकः स्वयंप्रकाशत्वावच्छिन्नभेदः ब्रह्मण्यस्तीति व्यभिचार एव। न चाप्रातिभासिकत्वेन विशेषणान्न दोष इति वाच्यम् — अप्रातिभासिकोऽयं भेद इति प्रतीतौ सत्यामप्रातिभासिकत्वस्यापि तत्रानिर्वचनीयस्य सत्त्वेनावारणात् । स्वयंप्रकाशत्वविशिष्टप्रतियोगिकेत्यनुक्त्वा स्वयंप्रकाशत्वोपलक्षितप्रतियोगिकेत्युक्तिर्हि शुद्धस्य प्रतियोगित्वाभिप्रायेण । न च शुद्धे निर्धर्मके प्रतियोगित्वमस्ति ? तत् यदि तत्र कल्पितमस्ति, तथेदृशमप्यस्तीति व्यभिचारग्रहादनुमानप्रतिबन्ध एव । किञ्चोपलक्षितप्रतियोगिकभेदः जीवत्वावच्छिन्नप्रतियोगिताकभेदः ; स्वयंप्रकाशत्वोपलक्षितजीवत्वोपलक्षितयोरैक्येन जीवत्वावच्छिन्नप्रतियोगितायाः स्वयंप्रकाशत्वोपलक्षितनिष्ठत्वात् । न च स्वयंप्रकाशत्वमुपहितनिष्ठप्रतियोगितावच्छेदकम् , उपलक्षणस्येदृशस्थलेऽवच्छेदकत्वकल्पकमानाभावात् । अवच्छेदकत्वस्वीकारे तु शुद्धचिति तदवच्छिन्नप्रतियोगिताको भेदोऽपि दुर्वार इत्यलम् ॥

अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वाभावो दृश्यत्वमित्यपि न युक्तम्। अत्र सत्यन्तार्थस्य नाभावेऽन्वयः, किन्तु योग्यत्वे । अन्यथा घटादावपरोक्षे हेतोरसिद्धिः, शुक्तिरूप्यादौ साधनवैकल्यञ्च। अतो घटादावपरोक्षव्यवहारयोग्यत्वसत्त्वेऽपि तस्यावेद्यत्वविशिष्टतया तत्राभावात् विशिष्टाभावसंपत्तिः। ब्रह्मणि वेद्यत्वस्य फलव्याप्यत्वरूपस्याभावात् अवेद्यत्वविशिष्टापरोक्षव्यवहारयोग्यत्वमेवास्तीति न व्यभिचारः । वृत्तिविषयत्वरूपवेद्यत्वनिवेशे तु ब्रह्मणि तत्सत्त्वेनावेद्यत्वाभावात् अवेद्यत्वविशिष्टापरोक्षव्यवहारयोग्यत्वं नास्तीति व्यभिचारः स्यादिति फलव्याप्यत्वरूपवेद्यत्वनिवेशः । तर्हि अवेद्यत्वविशिष्टापरोक्षत्वं यथा ब्रह्मण्यस्ति तथा शुक्तिरूप्यादावपि । वृत्तिप्रतिफलितचैतन्यस्यैव फलपदार्थतया साक्षिभास्ये शुक्तिरूप्यादौ फलव्याप्यत्वाभावेनादृश्यत्वस्यापि सत्त्वा-

दिति साधनवैकल्यमिति चेन्न — अपरोक्षव्यवहारयोग्यत्वेत्यस्याज्ञाननिवर्तक-वृत्तिविषयत्वयोग्यत्वेत्यर्थात् । शुक्तिरूप्यादिप्रातिभासिकविषयकाज्ञानानङ्गीकारेण तन्निवर्तकवृत्तिविषयत्वस्य तत्राभावात् । अतो विशेष्याभावादेव तत्र विशिष्टाभावरूपहेतुसंपत्तिः । योग्यत्वविशेषस्तु यदा ब्रह्मणः वृत्तिविषयत्वं नास्ति, तदा फलव्याप्यत्वाभावरूपविशेषणसत्त्वेऽपि वृत्तिविषयत्वरूपविशेष्याभावाद्विशिष्टाभावरूपहेतुसत्त्वाद्व्यभिचारः स्यादिति तत्परिहाराय । विषयत्वाभावेऽपि तदा तत्राक्षतं योग्यत्वसत्त्वमिति अयं तावत् सिद्धिवाक्यार्थः ।

अत्र फलव्याप्यत्वमात्रस्य हेतुत्वे शुक्तिरजतादौ साधनवैकल्यं स्यादिति तन्माऽस्तु । अज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वाभावमात्रमस्तु । तर्हि घटादावसिद्धिरिति चेत् — उच्यते । ब्रह्मणि व्यभिचारवारणमत्र कथम् ? वृत्तिविषयत्वयोग्यतासत्त्वादिति चेत् — केयं योग्यता ? अज्ञानविषयत्वमेव । घटाद्यवच्छिन्नचित एवाज्ञानविषयत्वाङ्गीकारात् घटादौ तदनङ्गीकारात् अज्ञानविषयत्वरूपविशेष्यदलस्य फलव्याप्यत्वाभावरूपविशेषणस्य चोभयस्याभावात् विशिष्टाभावः; शुक्तिरजतादौ च अज्ञानानङ्गीकारात् अज्ञानविषयत्वरूपविशेषणाभावादिति चेत् — अज्ञानविषयत्वं योग्यतेत्यनुक्त्वा चित्त्वमेव योग्यतेत्युच्यताम् । तथा च चित्त्वाभाव एव पर्याप्तो हेतुरिति सर्वं व्यर्थम् । हेतोरप्रयोजकत्वं तु सर्वत्राविशिष्टम् । स्वसिद्धान्तमात्रसिद्ध — परासंमतार्थघटनेन हेतुपरिष्करणे यो हेत्वप्रसिद्धिदोषः, स इह नास्तीति च कश्चिद्विशेषः ॥ यच्च — अविद्यानिवृत्तेः पञ्चमप्रकारत्वपक्षे तत्र व्यभिचारवारणाय अज्ञानकालवृत्तित्वं विशेषणं देयमिति — तन्न — काले कालवृत्तित्वाभावात् भागासिद्धेः । अज्ञानेति विशेषणस्य व्यर्थत्वाच्च । मुक्तौ कालाभावेन कालवृत्तित्वाप्रसक्तेः । सत्त्वासत्त्वान्यतरानाश्रयस्यैवाप्रसिद्ध्या तृतीयप्रकार एव दुर्वचः, प्रागेव तु पञ्चमः प्रकार इति च प्रतिपादयिष्यते ।

सिद्ध्युक्तमिदं लक्षणं चन्द्रिकाकारः स्वरसार्थं परित्यज्यान्यथा व्याख्याति । फलव्याप्यत्वपदेन वृत्तिव्याप्यत्वमेवोक्तं मन्यते । वृत्तिव्याप्यत्वरूप-

वेद्यत्वप्रतियोगिकाभावरूपस्यावेद्यत्वस्य ब्रह्मणि शुक्तिरजतादौ स्थितिदर्शकसिद्धिवाक्यनिर्वाहाय च तदेवं परिष्करोति—स्वावच्छिन्नचिद्विषयकं यत् अभानापादकमज्ञानम्, तन्निवर्तकवृत्तिव्याप्यत्वं वेद्यत्वम्, तदभावश्चावेद्यत्वम्। स्वपदेन ब्रह्मग्रहणे स्वावच्छिन्नचिदप्रसिद्धया ब्रह्मणि वेद्यत्वं दुःसंगममिति तस्यावेद्यत्वसिद्धिः। शुक्तिरजतस्य सतो भानं नियतमिति अभानापादकाज्ञानाभावात् तन्निवर्तकवृत्तिव्याप्यत्वरूपं दृश्यत्वं तत्रापि नेति तस्याप्यवेद्यत्वसिद्धिः। अज्ञाने अभानापादकत्वानिवेशे तु शुक्तिरजते समन्वयो दुर्घटः। तस्यातीततादशायां शुक्तिरजतमासीदित्यनुमितिरूपया वृत्त्या शुक्तिरजतासत्त्वापादकाज्ञाननिवृत्तिदर्शनात् तस्यापि दृश्यत्वप्रसंगादिति। भवतु तावदेवं ब्रह्मशुक्तिरजतयोरदृश्यत्वम्। अपरोक्षव्यवहारयोग्यत्वरूपविशेष्यदलमपि तत्रास्त्येवेति चेन्न—विशेष्यदलस्याज्ञानसामान्यविरोधितयोवृत्तिविषयतायोग्यत्वमित्येतद्रूपत्वात्। तच्च योग्यत्वमभानापादकाज्ञानविषयत्वम्। शुक्तिरजतस्य च नियमेन भानादभानापादकाज्ञानविषयत्वं नास्तीति तद्वारणम्। न च—घटादेरपीयं योग्यता न संभवति। न हि तत्राज्ञानविषयत्वम्। जडस्याज्ञानविषयत्वस्यानिष्टेरिति वाच्यम्—अभानापादकाज्ञानविषयतदवच्छेदकान्यतरत्वं योग्यत्वमित्युक्तिसंभवात्। घटावच्छिन्नचिद्विषयकाज्ञाने घटस्यावच्छेदकत्वात् समन्वय इति।

ईदृशास्वरसोत्थिववर्णनमप्यनुपपन्नम्। स्वावच्छिन्नचिद्विषयकत्वमभानापादकत्वञ्चाज्ञानविशेषणं कृत्वा तादृशनिवर्तकत्वरूपविशेषणस्य वृत्तौ निवेशो हि मूलोक्तं ब्रह्मशुक्तिरजतयोरदृश्यत्वसंगमनं निर्वोढुमेव; न पुनरन्यत् किञ्चित् प्रयोजनमस्ति। अतस्तद्विसृज्य वृत्त्यविषयत्वमात्रमदृश्यत्वं विवक्षित्वा तदनुगुणमुपरितनदलपरिष्करणमेव युक्तम्। शुक्तिरजतादेरसत्त्वापादकाज्ञानसद्भाववर्णनञ्चायुक्तम्। शुक्तौ, रजतं नासीदित्यज्ञानं किं बाधज्ञानिन उच्यते, उतान्यस्य? नाद्यः; तत्र रजतप्रतियोगिकत्रैकालिकाभावज्ञानस्य बाधज्ञानरूपस्य प्रमात्वेन तदा तदसत्त्वापादकाज्ञानस्य दुर्वचत्वात्। अन्यथा परमात्मनोऽप्य-

ज्ञत्वापत्तेः । नान्त्यः, स किं प्रागगृहीतशुक्तिरजतः, उतान्यः ? नाद्यः ; तस्यानुभूतप्रतिसंहितरजतस्य नासीदित्यज्ञानप्रसक्त्यभावात् । अनुभूतविस्मृतशुक्तिरजतस्य रजतं नासीदिति यत् ज्ञानम्, तत्कालेऽपि न तद्रजतासत्त्वापादकाज्ञानमावश्यकम् । तद्धि, रजतज्ञानमत्र मे पूर्वं नासीदिति रजतज्ञानाभावभ्रमाधीनम् । तत् ज्ञानं शुक्तौ रजतभ्रमे, नेदं रजतमिति बाधे, समनन्तरमेव रजतमेवेदमिति पुनः प्रबलभ्रमे च मध्यज्ञानवत् अज्ञानं विना बाधज्ञानमात्रतयाऽप्युपपन्नमिति । अगृहीतशुक्तिरजतस्य तु शुक्तौ, रजतं नासीदिति ज्ञानं यथावस्थितार्थकमेवेति न तत्राज्ञानकल्पनाप्रसक्तिः । असत्त्वापादकमज्ञानं हि सतो वक्तव्यम् । प्रातिभासिकञ्च न प्रतिभासात् प्राक् सत् । ततः प्रातिभासिकस्थले असत्त्वापादकाज्ञानकल्पनमप्यनपेक्षितमेव । एवमपरोक्षव्यवहारयोग्यत्वं हि सर्वत्रैवापरोक्षेऽपि स्वरससिद्धमिति तत्र योग्यताया अज्ञानविषयतारूपत्वकल्पनमयुक्तमेव । एतत्सर्वापेक्षया अज्ञानतदवच्छेदकान्यतरत्वं दृश्यत्वमित्येतावत एव हेतुत्वं संभवति । सर्वोऽयं परिष्कारः स्वसिद्धान्तवासनावासितान्तःकरणं प्रत्येव च शोभते ; न तु प्रतिवादिनं प्रतीति अहेतुरेवायं वस्तुगत्येत्यलमधिकेन ॥

इति पक्षगतिमुपेक्ष्य तु साध्ये हेतौ च सिद्धिचन्द्रिकयोः ।
मिथ्यात्वे दृश्यत्वे गतिरामृष्टेह सज्जनप्रीत्यै ॥

दृश्यत्वातिरिक्तहेतुदूषणञ्चानन्तरे वादे द्रष्टव्यम् ॥

अप्रत्यक्षमपह्नुवन् अचकथत् दृश्यं परं तात्त्विकं
चार्वाकः, तदपोह्य सद्भिरुदिता तुल्यं परोक्षप्रमा ।
सर्वं दृश्यमदृश्यमप्यपलपन् बौद्धो जजृम्भे मुधा
सत्यं मानविदूरमिच्छति मृषावादी च मेयं मृषा ॥

शुभमस्तु

श्री:

# व्यावर्तमानत्वभङ्गप्रसाधनम्

भक्तिज्ञानविरक्तिभूरखिलतो व्यावर्तमानः सतां
वेलातीतदयापयोधिलहरीमालापनीतक्लमः ।
श्रीमल्लक्ष्मणवेदमौलिगुरुराण्मुख्यावतारायितः
श्रीमान् दीव्यतु रङ्गलक्ष्मणमुनिः श्वःश्रेयसायेह नः ॥

दृश्यत्वात् मिथ्यात्वमिति वदद्भिः मिथ्यात्वे व्यावर्तमानत्वादिति हेत्वन्तरमप्युच्यते । दृश्यत्वं वृत्त्यवच्छिन्नचैतन्यविषयत्वम् । तस्य हेतुत्वं वदन्त एव कतिपयवृत्त्यवच्छिन्नचैतन्याविषयत्वरूपव्यावर्तमानत्वमपि मिथ्यात्वे हेतुं मन्यन्त इति विचित्रमेतत् । तत्र तेषाम्, "नासतो विद्यते भावः" इति गीताशाङ्करं प्रमाणम् । सन्मात्रप्रत्यक्षभङ्गप्रसाधनावसरे च तत्र वक्तव्यमुदितमेव । शेषमत्र संगृह्यते—"यद्विषया बुद्धिर्न व्यभिचरति, तत् सत्; यद्विषया बुद्धिर्व्यभिचरति, तदसत् इति सदसद्विभाग" इति भाष्याद्धि सर्वबुद्धिविषयः सत्, कतिपयबुद्ध्यविषयोऽसत् इत्येव स्वरसतः प्रतीयते । इदमेव कतिपयबुद्ध्यविषयत्वं व्यावर्तमानत्वम् । तद्विहाय—सद्बुद्धिव्यभिचरितत्वं व्यावर्तमानत्वमिति निर्वचने तु सदसद्विभागौपयिकं व्यावर्तमानत्वं सद्बुद्धिव्यभिचरितत्वरूपमित्युक्त्या सत्त्वमादायैव सत्त्वनिरूपणादात्माश्रयः स्यात् । किञ्च व्यावर्तमानत्वात् मिथ्या, अनुवर्तमानत्वात् सत्यमित्यनेन सद्बुद्धिव्यभिचरितत्वात् असत्यम्, सद्बुद्धिव्यभिचरितत्वाभावात् सत्यमित्युक्तं भवेत् । एवं हि सति घटबुद्धिव्यभिचरितत्वात् अघटः, घटबुद्धिव्यभिचाराभावात् घट इतीदृशमिदं स्यात् । अथ सद्बुद्धीत्यत्र सत्पदं नामिथ्यात्वरूपसत्यत्वार्थकम्, किन्तु अन्यैव सत्तेति चेत्—तादृशसत्ताविशिष्टविषयकबुद्धिव्यभिचरितत्वस्य मिथ्यात्वप्रयोजकत्वे मानाभावः । सद्बुद्धिव्यभिचरितत्वं हि न सद्बुद्ध्यतिरिक्तबुद्धिविषयत्वम् । सर्वस्या अपि बुद्धेः सद्विषयकत्वमिति भवत्सिद्धान्तभङ्गप्रसङ्गात् ।

सद्बुद्ध्यविषयत्वं तद्व्यभिचरितत्वमिति चेत्—शशविषाणातिरिक्तस्य सर्वस्य सद्बुद्धिविषयतया अविषयत्वाभावात् शशविषाणादावेव तद्व्यभिचरितत्वमिति सिद्धसाधनात् कतिपयसद्बुद्ध्यविषयत्वमेव तद्व्यभिचरितत्वं वाच्यमिति तत् मिथ्यात्वं प्रत्यप्रयोजकमेवेति। "यत्किञ्चिद्बुद्धिव्यभिचरितत्वं, न मिथ्यात्वप्रयोजकम्, तेन घटबुद्धिव्यभिचरितत्वेन पटस्य न मिथ्यात्वम्" इति विलिख्य, "ब्रह्म न सद्बुद्धिव्यभिचरितम्, घटादिबुद्धिव्यभिचरितं वा, घटादिबुद्धावपि ब्रह्मणः सद्रूपेण भानात्" इति लेखनं व्याहतम्। घटादियत्किञ्चिद्बुद्धिव्यभिचरितत्वेन पटादिमिथ्यात्वस्यैवोत्तरवाक्यतःसिद्धेः। तथैव सन्मात्रप्रत्यक्षवादिनामिष्टत्वाच्च॥

शतदूषणीकृतेषु व्यावर्तमानत्वविकल्पेषु यतःकुतश्चिदन्यत्वमिति प्रथमः कल्पः। तत् युष्मदस्मत्प्रत्ययगोचरयोरिति सूत्रभाष्यबलात् ब्रह्मण्यपि परागर्थभिन्नेऽस्तीत्यनैकान्तिकमित्युक्तम्। तत्र यदुक्तम्—युष्मदस्मदित्यादिकं पूर्वपक्षभाष्यम्; न सिद्धान्त्यभिमतमिति-तत्रोच्यते-पूर्वपक्षवाक्यगतं सर्वं सिद्धान्त्यनभिमतमिति न नियमः। अत्र हि अहमिति आत्मप्रत्ययस्य सर्वदा सत्त्वात् तद्विरुद्धोऽध्यासः कथं भवितुमर्हतीति शङ्का। अनादेरध्यासाधीनव्यवहारस्यानुभविकत्वात् आत्मानात्मविवेकाग्रहादध्यास इत्येष्टव्यमिति परिहारः। एवञ्च आत्मानात्मविवेकस्य स्थितस्याग्रहणमिति भामत्यादौ सिद्धान्ते इष्टमेव। एवञ्च तत् नेतिनेतीति घुष्टे ब्रह्मण्यस्तीत्यनैकान्त्यवर्णनं शतदूषणीकृतं दुष्परिहरमेव॥

सद्विशेष्यकस्वातिरिक्तविषयकबुद्ध्यविषयत्वं व्यावर्तमानत्वमिति परिष्कारं विधाय शतदूषणीविकल्पस्य सर्वस्यात्रैव पर्यवसानमिति दूषणोन्मोकोद्योगश्चायुक्तः। यतःकुतश्चिदन्यत्वमित्यादेः बुद्ध्यघटितत्वेन तथा पर्यवसानवर्णनायोगात्। किञ्च दुःसमन्वयमिदं घटादौ; घटपटाद्यनेकविषयकसद्विषयकबुद्धावपि स्वातिरिक्तविषयकत्वसत्त्वेन तदविषयत्वस्य घटे दुर्वचत्वात्। स्वातिरिक्तमात्रविषयकेति च न युक्तम्—स्वातिरिक्तसद्विषयकत्वात्। सद्विषयकस्वाविषयकबुद्ध्यविषयत्वं व्यावर्तमानत्वमित्येवास्तु—तदपेक्षया सद्विषयकस्वाविषयक-

बुद्धिकत्वमित्येव लध्विति चाधिकं व्यर्थम्। सद्विषयकेति च व्यर्थम्। स्वाविषयकबुद्धयविषयत्वस्यैव पर्याप्तत्वात्। सति ब्रह्मणि सर्वबुद्धिविषयत्वसत्त्वेन स्वाविषयकबुद्ध्यप्रसिद्ध्या स्वपदेन सद्ग्रहणायोगेन तत्रानैकान्त्याभावात्। अन्ततो यत्किञ्चिद्बुद्ध्यविषयत्वादित्येवालम्। बुद्धिनिष्ठाभावप्रतियोगिविषयिताकत्वादिति निवेशे तु यत्किञ्चिदित्यप्यनपेक्षितम्। अन्यथा सद्विशेष्यकेत्येवं निवेशे साधनवैकल्यमपि; रज्जुसर्पादौ इयमम्बुधारेत्यादिबुद्ध्यविषयत्वस्य वक्तव्यत्वात् तत्र इयमिति रज्ज्वा एव विशेष्यतया सद्विशेष्यकत्वाभावात्। रज्ज्वच्छिन्नचैतन्यमिदमर्थः। अतः सद्विशेष्यकत्वमस्तीति चेत्—तत् लोकप्रसिद्ध्यभावात् प्रतिवाद्यसंमतमिति हेत्वप्रसिद्धिरेव। अथ स्वाधिष्ठानविशेष्यकस्वातिरिक्तविषयकबुद्ध्यविषयत्वमिति पक्षदृष्टान्तानुगतहेतुनिष्कर्ष इति चेत्—स्वाधिष्ठानमित्यस्य कोऽर्थः? घटोऽस्तीत्यादौ सतो घटाद्याधारत्वरूपाधिष्ठानत्वमिति चेत्—सति घटादेरध्यास इत्यसिद्धम्। घटादेर्मिथ्यात्वसिद्धौ सति तदध्याससिद्धिः, तत्सिद्धावेतत्सिद्धिरित्यन्योन्याश्रयश्च। स्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयत्वं स्वाध्यासाधिष्ठानत्वमिति चेत्—घटः सन् इत्यादौ सदेव विशेष्यम्, न तु घट इत्येतदनुभवविरुद्धम्। अथ स्वविषयतानिरूपिततादात्म्यसंसर्गविषयतानिरूपितविषयताश्रयविषयकस्वातिरिक्तविषयकज्ञानाविषयत्वं हेतुरिति चेत्—यत् सत् घटसमानाधिकरणं प्रतीतम्, तदेव पटतादात्म्येनापि प्रतीयत इत्यत्र मानाभावात् इयमम्बुधारेत्यादिवैलक्षण्यात् हेत्वसिद्धिः। विषयतापदेन सत्त्वावच्छिन्नविषयतात्वेनानुगतविषयताग्रहणात् सतो विभिन्नत्वेऽपि न क्षतिरिति चेन्न—विभिन्ने सति विभिन्नवस्तुतादात्म्यस्याविरुद्धत्वेनान्यतरमिथ्यात्वमप्यनाश्रयणीयम्; कुत उभयस्येति। घटः पृथिवी, घटो द्रव्यमिति, घटो नीलः, घटः शुक्ल इति प्रतीतिमादाय पृथिवीत्वादेः नीलत्वादेश्च मिथ्यात्वापत्तिश्च। अध्यासाभावात् तत्र मिथ्यात्वस्यानेनोपपादनायोगात्॥

एवं यत्र कुत्रचित् देशादावसत्त्वमिति द्वितीयकल्पस्य पूर्वोक्तस्वाधिष्ठानविशेष्यकबुद्धिघटितपरिष्काररूपत्वमप्ययुक्तम्। बुद्ध्यघटितस्य तद्घटितरूप-

त्वायोगादिपूर्वोक्तदोषात्। यत्तु यत्रकुत्रचिदसत्त्वमित्यनेन विषयतायां देशकालविशेषाववच्छिन्नत्वलाभ इति स्वाधिष्ठानविशेष्यकस्वातिरिक्तविषयकबुद्धिविषयतानिरूपितदेशकालविशेषावच्छिन्नविषयत्वाभावो हेतुरिति फलतीति—तन्न—इयमम्बुधारेत्यादौ अम्बुधाराविषयतायां देशकालविशेषावच्छिन्नत्वाभावात्। भवत्वम्बुधारायामपि साध्यसत्त्वात् तत्प्रतीतिमादायापि तादृशविषयत्वाभाव इति चेत्—तर्हि स्वातिरिक्तविषयकेति दलनिवेशः कुतः? एवमनपेक्षितानेकदलघटितपरिष्कारपरत्वं द्वितीयकल्पवाक्यस्य स्वीकर्तुं न साम्प्रतमिति। यत्तु—सतो व्यावृत्तत्वस्य असत्यत्वं विनाऽनुपपन्नत्वाद्धेतुर्नाप्रयोजक इति—तन्न—सतो व्यावृत्तत्वं हि निरुक्तरूपमेव। तच्च एकबुद्धावन्यस्याविषयत्वम्। तत् तत्तदंशग्राहकसामग्र्यभावप्रयुक्तम्, न तु मिथ्यात्वप्रयुक्तम्। यत् यत् सत्यम्, तेन सर्वेणैकैकबुद्ध्युपारूढेन भाव्यमिति नियमे मानाभावात्। प्रमाणानि यथायथं क्वचित् संप्लवन्ते, क्वचित् व्यवतिष्ठन्ते च। न चैकप्रमाणगम्यस्य प्रमाणान्तरागम्यत्वमात्रेण मिथ्यात्वम्। न च ज्योतिष्टोमेनेति वाक्याविषयत्वात् अग्निहोत्रमिति वाक्यविषयो मिथ्या। तस्मात् यत्रक्वचिद्देशादावसत्त्वमित्यस्य यो वास्तवोऽर्थः किञ्चिदनुयोगिकाभावप्रतियोगित्वमिति, तस्यैव भवदुक्तस्य सद्बुद्धिव्यभिचरितत्वरूपक्लिष्टार्थस्याप्यप्रयोजकत्वमविशिष्टम्।

यत्तु—ब्रह्मणः सर्वत्राधिष्ठानत्वात् स्वाधिष्ठानविशेष्यकस्वातिरिक्तविषयकबुद्ध्यविषयत्वरूपनिरुक्तहेतुस्तत्र नास्तीति नानैकान्त्यमिति—तन्न—शुक्तिरजतबुद्धौ शुक्तेरेवाधिष्ठानत्वस्य लोकसंप्रतिपन्नत्वात् शुक्त्यवच्छिन्नचैतन्यस्यानुभवानारूढत्वात् ब्रह्मणि स्वाधिष्ठानविशेष्यकस्वातिरिक्तविषयकबुद्धिविषयीभूतं यत् तदन्यत्वस्य सत्त्वादनैकान्त्यात्। अतः, 'अधिष्ठानविशेष्यकोक्तबुद्धिविषयत्वात् ब्रह्मणो न हेतुमत्त्व'मिति भवदुक्तमयुक्तम्। किञ्च शुक्त्यवच्छिन्नचैतन्यमधिष्ठानम्, उत शुद्धम्? शुद्धं तु इदं रजतमित्यत्र न सर्वथा भानमर्हति। अवच्छिन्नचैतन्यं तु मिथ्या। वृत्त्युपहितचैतन्यस्यैव मिथ्यात्ववादिभिः शुक्त्यवच्छिन्नचैतन्ये सत्यत्वाङ्गीकारस्यायोगात्। एवञ्च तस्याप्यधिष्ठानत्वमनुपपन्न-

मेव । तच्चेदुपपद्यते, शुक्तेरेव तदुपपद्येतेति न युक्तमभासमानस्यावच्छिन्नचैतन्यस्याधिष्ठानत्वकल्पनम् । विशिष्टाद्वैतिनः सर्वत्रान्तर्यामि ब्रह्म प्रमाणबलादभ्युपयन्तः आपातप्रत्यक्षे तद्भानायोगात् शास्त्र-तन्मूलयोगिप्रत्यक्षादिमात्रगोचरं तदाहुः । अद्वैतिनस्तु तद् ब्रह्म तत्तद्विषयावच्छिन्नचैतन्यरूपं वदन्तोऽप्यन्तर्यामिरूपं तदिति न मन्वते । परंत्वनुभवविरोधमप्यनाकलय्य सर्वत्र बुद्धौ तद्भानमप्याशेरते । तदयुक्तं शुक्तिरजतज्ञानादेरधिष्ठानतया ब्रह्मविषयकत्वम् । एवं तु कथञ्चित् स्यात् — प्रकृतहेतौ बुद्ध्यविषयत्वरूपे प्रतियोगिनि स्वत्वं न विवक्ष्यते ; किंत्वनुयोगिनि ; तथा च यत्र हेतुसमन्वयः कार्यः, स एव स्वपदार्थः; तत्र स्वपदेन ब्रह्मग्रहणं न भवति, तत् प्रति कस्यचिदधिष्ठानस्याप्रसिद्धेः; अतो ब्रह्मणि नानैकान्त्यमिति । इदमपि स्वाधिष्ठानविशेष्यकत्वं घटादिबुद्धावप्रसिद्धमित्युक्तिपूर्वकं तन्निर्वचनशोधनेनैव निरस्तं वेदितव्यम् । स्वतादात्म्यापन्नवस्तुविषयकत्वं स्वाधिष्ठानविषयकत्वमिति परिष्कारे तु शुक्त्यवच्छिन्नचैतन्यं ब्रह्मेति ज्ञानमादाय निरुक्तस्वाधिष्ठानविषयकत्वं संपाद्य तादृश-स्वातिरिक्तविषयक-लोकप्रसिद्ध-बुद्ध्यविषयत्वं ब्रह्मणीत्यनैकान्त्यमिति । अस्तु तावदिदम् । सर्वथा न द्वितीयकल्पस्य चास्य चैक्यम् । तथापि तत् अप्रयोजकमिति च सिद्धमित्यलमधिकेन पिष्टपेषणेन ।

यत्तु ध्वंसवत्त्व व्यावर्तमानत्वमिति पक्षं समर्थयितुमुक्तम् — ध्वंसबाधयोर्यद्यपि प्रतिनियतव्यवहारोऽस्ति, लब्धसत्ताकस्य स्वरूपप्रच्युतिर्विनाशः, कारणात्मनाप्यसत्त्वं बाध इति — तथापि तस्य, कारणात्मना सत्त्वं विनाशः, कारणात्मनाऽप्यसत्त्वं बाध इत्यभिप्रायकत्वात् बाधस्य कारणात्मनापि ध्वंसरूपत्वात् ध्वंसपदमुभयसाधारणमिति—तन्न ; प्रतिनियतव्यवहारदर्शनेऽपि तद्विरोधेन स्वयमर्थान्तरकल्पनामात्रेण मुख्यार्थविरोधस्यापलापायोगात् । अमुख्यतादृशप्रयोगसाध्यस्य कस्याचिदभावाच्च । कारणात्मनापि ध्वंसो बाध इत्यस्य दुर्वचत्वाच्च । ध्वंसो हि प्रकृतावस्थाविरोध्युत्तरावस्था, यथा घटध्वंसः कपालत्वावस्थेति । सा चेत् कारणावस्था, तर्हि लय इत्यपि व्यवह्रियते, अन्यथा ध्वंस

इत्येवेत्यन्यदेतत् । तत्र कारणात्मनाऽपि ध्वंस इत्यस्य प्रकृतावस्थातत्कारणावस्थोभयविरोध्यवस्थेत्यर्थः । न चावस्था द्रव्यं धर्मि विहाय स्थातुमर्हति । एवञ्च तत्त्वज्ञानात् प्रपञ्चबाध इत्यस्येदृशावस्थारूपत्वं कथं वक्तुं शक्यम्; मूलाज्ञानप्रभृतिनः सर्वस्य निवृत्तत्वात् अवस्थाविशेषतदाश्रयोभयस्य तदानवस्थितेः । अतो धर्मिनिवृत्तेः त्रैकालिकात्यन्ताभावरूपायाः धर्मिगतावस्थान्तररूपध्वंसस्य च नैक्यसंभवः । अद्वैतिभिस्तु बाधे क्वचित् ध्वंसशब्दप्रयोगः कामं मोहनाय वा लक्षणाभिप्रायेण वा भवतु ; किं तेन ? अतः प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमिति चतुर्थकल्पस्य बाध्यत्वपर्यवसितस्य ध्वंसवत्त्वरूपतृतीयकल्पस्य च भेदे शतदूषण्यभिमते जाग्रति किमिति छलेन सर्वस्य कल्पस्य स्वाभिमतयत्किञ्चिद्रूपेण नयनम्, दूषणपरिहरणप्रयत्नश्च । एतदपेक्ष्य नायं कल्प इष्यत इत्येवोत्तरमृजु ।

बाधपक्षश्च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमिति चतुर्थः कल्पः । तच्च स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वमिति निर्वचनमसाधु । शुक्तिर्ह्यधिष्ठानं रजतस्य । तत्र शुक्तिनिष्ठात्यन्ताभावप्रतियोगि रजतमिति ज्ञाने सति शुक्तिः रजतवतीति ज्ञानमेव प्रतिबध्येत, न तु शुक्तिविषयकम्, इदं रजतमिति ज्ञानम् । तादात्म्यभ्रमं प्रति अत्यन्ताभावप्रतियोगित्वज्ञानस्य बाधकत्वायोगात् । तत्तादात्म्यस्य तदत्यन्ताभावस्य च सामानाधिकरण्यसंभवादविरोधात् । अथाधिष्ठानसाक्षात्कारनिवर्त्यत्वमेव तदिति पर्यवसानविधानमप्ययुक्तम् । निवर्त्यस्य सर्वस्य मिथ्यात्वं संप्रतिपन्नमिति अधिष्ठानसाक्षात्कारेति दलवैयर्थ्यात् । अधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं वा निवर्त्यत्वं वा न प्रपञ्चे सिद्धमिति च न तेन मिथ्यात्वानुमानम् ।

'नेह नानास्ती'ति सिद्धं तत् दृश्यत्वहेतुना साध्यत इति चेत्, श्रुतिसिद्धस्यार्थस्य हेतुना साधनं किमर्थम् ? एवं बाधितेनानेन साधनीयस्य मिथ्यात्वस्य अस्य चैक्यादपि नेदं व्यावर्तमानत्वम् । नन्वधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वरूप व्यावर्तमानत्वेन ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं साध्यत इति चेत्—

पूर्वमत्यन्ताभावप्रतियोगित्वस्याधिष्ठानसाक्षात्कारनिवर्त्यत्वे पर्यसानमुक्त्वा पुनस्तस्य तत्साध्यत्वस्वीकारो व्याहतः। स्वाधिष्ठाननिष्ठेत्यस्य स्वाध्यासाधिष्ठानेत्यर्थाश्रयणे अत्रैव मिथ्यात्वस्यान्तर्गततया न पृथक् तत् साधनीयमपि। अधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वे सत्यपि अद्वैतीतरसंमतरीत्या इदं रजतमिति ज्ञानमात्रनिवृत्त्यैव कार्यसिद्धौ शुक्तिरजतादिरूपानिर्वचनीयकल्पन एव मानाभावेन ज्ञाननिवर्त्यत्वं शुक्तिरजतादावेवासिद्धमिति न प्रपञ्चे ततस्तत्सिद्धिरिति च भाव्यम्।

सन्निष्ठात्यन्ताभावप्रतियोगित्वं व्यावर्तमानत्वमिति निष्कर्षविधानमप्ययुक्तम्; शुक्तिरजतादेः शुक्तिदेशनिष्ठात्यन्ताभावप्रतियोगित्वस्यैव लोकगृहीतत्वात् सन्निष्ठात्यन्ताभावप्रतियोगित्वस्याग्रहात्। शशविषाणादावपि हेतुसत्त्वेनानैकान्त्याच्च। तदर्थं सत्त्वेन प्रतीयमानत्वरूपविशेषणदाने च सन्निष्ठेत्यादिनिष्कर्षविधानस्य व्यर्थत्वात्। सति घटादितादात्म्यस्य भ्रान्त्या गृहीतत्वस्य भवद्भिर्वक्तव्यतया तत्र सन्निष्ठात्यन्ताभावप्रतियोगित्वग्रहस्याविरोधितया ततस्तन्मिथ्यात्वस्यासिद्धेश्च। घटः सन् इत्यादौ गुणक्रियान्तरवत् सत्तैव विशेषणम्; न तु सन्मात्रं किञ्चित् तत्र विशेष्यतया भासत इति च शतदूषण्यामुपपादितमेव। यत्तु घटादीनां कल्पितत्वात् कल्पितानाञ्चाधिष्ठानेन सहभानस्यैवानुभवसिद्धत्वात् घटादिना सह भासमानं सत तादृशब्रह्मैवेति—तन्न; घटादीनां कल्पितत्व एव प्रमाणाभावात्। भवन्मते शुक्तिरजतस्याप्रातिभासिकस्य इदं रजतमिति प्रत्यक्षविषयतयां तद्गोचरे, रजतं प्राक् तत्राहमद्राक्षम् इति ज्ञाने तद्रजतोल्लेखमात्रस्य पर्याप्ततया अधिष्ठानग्रहो भवन्मते तत्र न वक्तव्यः; नास्ति चेति।

कदा चित् क्वचिदेव प्रकाशमानत्वमिति पञ्चमपक्षे एवकारादधिष्ठानविशेष्यक स्वातिरिक्तविषयकबुद्ध्यविषयत्वस्यैवोक्तया द्वितीयकल्पाविशेष इति न दोष इति यदुक्तम्—तदपि न। एवकारेण कालान्तरे देशान्तरे अप्रकाशमानत्वमित्येव लभ्यते। तेन कालान्तरावच्छिन्नं यत् देशान्तरस्थतया किञ्चिज्ज्ञानम्, तदविषयत्वमित्युक्तं भवति। तावता अधिष्ठानविशेष्यकत्वादिलाभः

कथम्? यदि स्वविषयकज्ञानाविषयत्वस्य स्वस्मिन् वक्तुमशक्यत्वात् ज्ञानस्य च निर्विषयत्वायोगात् स्वातिरिक्तविषयकत्वं सिद्धम्; अधिष्ठानभूतस्य च सतः सर्वत्रापि ज्ञाने भानस्य संमतत्वात् अधिष्ठानविशेष्यकत्वमपि लभ्यते इत्युच्यते— तर्हि अनुक्तिसिद्धस्याधिष्ठानविशेष्यकत्वस्याधिकस्य हेतुकोटिप्रवेशे धूमादित्यत्र नीलधूमादित्यस्येव व्याप्यत्वासिद्धिप्रसंगः। तावता द्वितीयकल्पाविशेष इत्यपि न युक्तम्—यत्र क्वचिदसत्त्वस्य यत्र क्वचिदप्रकाशमानत्वस्य चैकत्वायोगात्। असत्त्वमप्रकाशमानत्वमिति लाक्षणिकभवद्विवक्षानुरोधे तु भवता, यतः कुतश्चिदन्यत्वमिति प्रथमकल्पमपि यतः कुतश्चिद् व्यभिचरितत्वमिति कृत्वा, "यतः कुतश्चिद् व्यभिचरितत्वं व्यावृत्तत्वम्" इति शतदूषण्यनूदितप्रथमकल्पे यतः कुतश्चित् सद्बुद्धेर्व्यभिचरितत्वमित्येवार्थः इति निष्कृष्टत्वात् प्रथमकल्पाविशेषोऽपि भवता सुवचः। एवञ्च तत्रोक्तस्य दोषस्य जागरूकत्वात् कथं निर्दोषता।

यत्तु एवकारार्थघटनेन, यत्रक्वचित् प्रकाशमानत्वस्य हेतोरप्रयोजकत्वेऽपि एवकारसिद्धार्थस्य नाप्रयोजकत्वमिति—तन्न; क्वचिद्देशे कदाचिदप्रमितत्वस्य एवकारार्थस्यापि मिथ्यात्वं प्रति अप्रयोजकतायाः शतदूषण्यामेव विशदितत्वात्। भवदुक्तैवकारार्थस्याप्रयोजकत्वं प्रागेवावोचाम। सद्विशेष्यकघटादिबुद्धौ पटादेरविषयत्वं हि पटादिग्राहकसामग्र्यभावात् घटस्य पटादिभिन्नत्वाच्च स्यात्; न तु तस्य मिथ्यात्वात्। सर्वप्रतीतिविषय एव सत्यम्, अन्यदसत्यमित्यत्र नियामकाभावात्। परिभाषिककल्पनया लोकव्यवहारनियन्त्रणायोगात्। यद् यत्र नास्ति, तत् तत्र बाधितमित्यपि नास्तीति सन्मात्रप्रत्यक्षभङ्गे प्रसाधितमेव। अन्यथा ब्रह्मण आनन्दांशस्यास्फूर्त्यैव संसारं वर्णयतां भवतां तस्य कथञ्चिच्चरमवृत्तिविषयत्वसंमतावपि सर्वप्रतीतिविषयत्वस्य दुर्वचतया तस्य मिथ्यात्वापत्तेः। यत्र क्वचित् प्रमितत्वमपि सत्यत्वप्रयोजकमिति च दर्शितमेव शतदूषण्याम्। "कालदेशविशेषे प्रकाशमानं प्रमैवेति न नियमः" इति चेत्—प्रमीयमाणमेवेति न नियम इत्युच्यताम्; न तु प्रमैवेति; अन-

न्वयात् । तथापि न वक्तव्यम् । देशकालविशेषे अप्रकशमानमसदित्यपि नियमाभावात् : तथा च यत्र देशे काले यत् प्रकाशते, असति बाधे तत्र तत् सदेव ; यत्र न प्रकाशते सत्यामपि सामग्र्याम्, तत्र तन्न सदित्येव नियमः। तावता क्वचित् प्रतीयमानस्य सर्वस्य न मिथ्यात्वम् । "न वयं कालान्तरादाव-प्रकाशमात्रेण घटादिप्रतीतीनां भ्रमत्वं वदामः ; किंतु घटाद्यधिष्ठानाश्रयविषय-काज्ञानकल्पितविषयकत्वेन" इति चेत्—अत्राधिष्ठानाश्रयेति पदद्वयं कुतः। किञ्चैवं सति अधिष्ठानाज्ञानकल्पितत्वात् प्रपञ्चो मिथ्या ; न त्वधिष्ठानविषयक-किञ्चिज्ज्ञानाविषयत्वादित्येवोक्तं भवतीति, प्रागुर्ध्वञ्चाधिष्ठानविशेष्यकस्वाति-रिक्तविषयकज्ञानाविषयत्वस्य हेतूकरणं व्याहतम् । मिथ्यात्वं विनैव स हेतुर्निर्व-हतीति च प्रागेवोक्तम् । यत्तु ब्रह्मणः सर्वाधिष्ठानत्वात् तत् प्रति अधिष्ठानस्या-न्यस्याप्रसिद्ध्या सर्वप्रतीतिषु सतस्तस्य विषयत्वाच्च न व्यावर्तमानत्वं निरुक्तं तत्रेति—तत्, दृश्यत्वान्मिथ्या, प्रतीतिविषयत्वे मिथ्यात्वमिति पूर्वोक्तिव्याह-तम्। यदि यत्किञ्चित्प्रतीतिविषयस्यापि मिथ्यात्वम्, तर्हि तस्य प्रतीतिविषय-त्वरूपहेतोः पुष्कलत्वात् सर्वप्रतीतिविषयस्य सतो ब्रह्मण एव प्रथमं मिथ्या-त्वेन परिगणनं कार्यम् ।

यत्तु ब्रह्मणोऽप्रकाशमानत्वमज्ञानावरणप्रयुक्तम् । अतस्तस्य न मिथ्या-त्वम् । घटादेस्त्वप्रकाशमानत्वं व्यावर्तमानत्वरूपमिति तन्मिथ्येति—तन्न ; व्यावर्तमानत्वं किमित्येवेदानीं विमर्शात् । यथाकथञ्चिदप्रकाशमानत्वं तदिति पक्षे अज्ञानकृतमप्रकाशनमादाय ब्रह्मण्यतिप्रसंगो हि भवत्येव । यदि तु अज्ञानप्रयुक्ताप्रकाशवद्वस्तुवारणायाप्रकाशे अभावप्रयुक्तत्वं निवेश्य अभावप्रयु-क्ताप्रकाशवत्त्वान्मिथ्येति मन्यते, तर्हि अभावप्रतियोगित्वरूपमिथ्यात्वस्य साध्य-त्वात् साध्याविशिष्टो हेतुः। अलञ्च अभावप्रतियोगित्वमात्रमिति अप्रकशमान-त्वमुपेक्षणीयं स्यात् । द्वितीयकल्पादविशेष इति तत्रोक्ताः दोषाश्च सन्त्येव ।

यदि पुनरज्ञानावरणप्रयुक्ताप्रकाशाभाववत्त्वं हेतूक्रियते, तदा चिन्मात्रे-णानैकान्त्यम्, स्वप्रकाशस्य स्वरूपस्याज्ञानावरणप्रयुक्ताप्रकाशस्याभावात् । कथञ्च

घटादेस्तादृशहेतुमत्त्वम् । घटाद्यपि कदाचित् यथा क्वचिदविद्यमानं न गृह्यते, तथा विद्यमानमपि दोषवशान्न गृह्यत एव । अत एव हि शुक्त्यज्ञानात् रजतप्रतिभासः । एवञ्च शुक्त्याद्यज्ञानावरणप्रयुक्तः शुक्त्याद्यप्रकाश इति पुनर्हेत्वसिद्धिः । अज्ञानकार्याणां शुक्तिघटादीनामज्ञानेनावरणं न भवतीति चेत्—अज्ञानावरणस्यानुभविकत्वात् अज्ञानकार्यत्वमेव तर्हि तेषां त्याज्यं स्यात् । मूलाज्ञानकार्यत्वं तूलाज्ञानावृतत्वञ्चाविरुद्धमिति वा वाच्यम् । अवश्यञ्च वृत्तेरावरणभङ्गार्थत्वपक्षे चैतन्येनैव घटादेः प्रकाश्यमानत्वात् वृत्तिरज्ञानरूपमावरणमेव भनक्तीति वक्तव्यम् । घटावच्छिन्नं चैतन्यं तिरोहितम् ; न तु घट इति चेत्—चैतन्यस्य सर्वदा स्वप्रकाशस्यातिरोहितत्वात् प्राप्ताप्राप्तविवेके विधीयमाने घटावच्छेदो वा घटो वा तिरोहित इत्येव वक्तव्यं भवति । घटावच्छिन्नत्वञ्चेदं चैतन्यस्य किं घटविषयकत्वम् , किं वा गगनादेरिव संयोगादिना तद्विशिष्टत्वम् । आद्ये घटांशाज्ञान एव पर्यवसानम् । अन्त्यं त्वसिद्धम् । लोके घटानुभवकाले घटसंयुक्तं चैतन्यं मयानुभूयत इति अवहितमनसाऽप्यनुच्यमानत्वात् । घटोऽस्तीति सदनुभूयते । सच्च चैतन्यञ्चेत्येकं तत्त्वमिति चेत्—तर्हि घटावच्छिन्नसदित्येवोच्यताम् ; किमिति चैतन्यपद प्रयोगः । सतो जडत्वे प्रकाशकत्वस्य दुर्ग्रहत्वात् , वृत्तेश्च जडाया अग्राहकत्वात् चैतन्येन घटप्रकाश उपपादनीय इति घटावच्छिन्नचैतन्यमित्युच्यते ; न तु घटावच्छिन्नसदिति ; तथापि तदेवोक्तं भवतीति चेत्—इदमपि नानुभविकम् । सतो घटस्य चाभेदस्यैवोपलम्भात् गगने घटावच्छिन्नत्वस्येव सति तदवच्छिन्नत्वस्याग्रहात् । यदि च घटो नाज्ञानतिरोहितः, तर्हि सर्वदा प्रकाशेत, यावत्सत्त्वं वा प्रकाशेत । अपि च यथा—यत् सत् , तत् सर्वदा सत् ; अन्यत्तु न सदित्युच्यते—तथा यत् प्रकाशते तत् सर्वदा प्रकाशते, अन्यत्तु न प्रकाशत इति च स्वीक्रियताम् । घटादीनां कदाचित् प्रकाशमानत्वानुभवविरोध इति चेत्—सत्त्वविषयेऽपि तुल्यम् । तस्मात् कदाचित् प्रकाशमानानां विद्यमानत्वेऽपि कदाचिदप्रकाशमानानां घटादीनामज्ञानतिरोहितत्वमस्त्येवेति नाज्ञानावरणप्रयुक्ताप्रकाशवत्त्वाभावस्तत्र ।

अथाज्ञानावरणाप्रयुक्ताप्रकाशवत्त्वं हेतुरिति मन्येत—तदापि अयमप्रकाशो नाज्ञानावरणप्रयुक्त इति कथमवसीयेत। विद्यमानस्याप्रकाशः अज्ञानप्रयुक्तः, अविद्यमानत्वे तु अभावप्रयुक्त एवेति चेत्—एवं खल्वभावप्रतियोगित्वमेव मुखान्तरेण हेतूकृतं भवति। तत्र तथैव हेतुप्रयोगे वा अज्ञानावरणाप्रयुक्ताप्रकाशवत्त्वादिति प्रयोगे वा हेतोरप्रयोजकत्वं स्थितमेव। अप्रकाशस्याभावप्रयुक्ततायाः कदाचित् भावप्रयुक्तप्रकाशस्य च स्वीकारात् मिथ्यात्वं हि दूरापेतमेव। प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वस्यैवमसिद्धिदर्शनात्। यावच्चाज्ञानं भावरूपमावारकमसंप्रतिपन्नम्, तावत् प्रतिवादिनं प्रति ईदृशहेतुप्रयोगो न शक्य इति च भाव्यम्।

उपरि च शतदूषण्यामत्र पञ्चमकल्पे—अत्यन्तमप्रकाशमानत्वं वा, नित्यप्रकाशराहित्यं वा, नित्यप्रकाशवत्त्वेनास्माभिरज्ञायमानत्वं वा, अस्मान् प्रति नित्यमप्रकाशमानत्वं वा न व्यावर्तमानत्वम्; घटादेः सर्वप्रकाराप्रकाशमानत्वायोगात्। घटादेः स्वरूपतः, शुक्तिरूप्यादेः भ्रान्तिबुद्धिगोचरत्वेन चेश्वरनित्यप्रकाशविषयत्वात्, ईश्वरनित्यप्रकाशवत्त्वेनास्माभिर्ज्ञायमानत्वाच्च हेत्वसिद्धेः। ब्रह्मणोऽप्यस्मान् प्रति नित्यमप्रकाशमानत्वेनान्तिमपक्षेऽनैकान्त्याच्चेति यत् सूक्तम्, तद्विषये किञ्चिद्विवक्षया यदुल्लिखितम्, "घटादीनां तिरोधानं जीवानामेव तत्प्रकाशप्रतिबन्धकम्। ईश्वरस्य तु मायोपहितचैतन्यस्य न स्वोपहितब्रह्मावरणम्; न वा प्रमाणजनितवृत्त्यपेक्षा। घटादिभानं तस्य स्वाश्रितमायावृत्त्या। अत एव सर्वज्ञत्वम्। न तावता जीवानां नित्यं घटादिप्रकाशो वा" इति—सर्वमिदमसंबद्धविस्तरमात्रम्; उद्भावितदोषाणामपरिहारात्; प्रत्युत तद्दार्ढ्यस्यैवापादनात्। न चात्र नित्येश्वरबुद्धिविषयत्वेन सर्वेषां सर्वप्रकाशापत्तिः क्रियते। आपादने कृते तु भवद्भिस्तत्परिहारो दुष्कर एव। जीवब्रह्मणोर्वस्तुत एकत्वात् सौभर्यादिभिरेकशरीरावच्छेदेनानुभूतस्यान्यशरीरावच्छेदेनप्रतिसंधानवत् एकैकेनापि जीवे नब्रह्मजीवान्तरानुभूयमानसर्वप्रति-

संधानस्य कर्तुं शक्यत्वात्। न च भेदग्रहरूपप्रतिबन्धकवशात् तदुपपत्तिः, स्वरूपस्य छेदनभेदनानर्हतया स्वरूपतः कार्त्स्न्येन विज्ञानघनस्य स्वयंप्रकाशमानतया देहेषु मिथो भेदग्रहसद्भावेऽपि आत्मनि भेदग्रहस्यायोगात्। एवं सत्येव यदि भेदग्रहोऽनुभवसिद्धः, तर्हि स्वरूपैक्यस्य वस्तुगत्याऽलाभावादित्येव वक्तव्यम्। न च भेदग्रहोऽप्रतिसंधाननियामकः; देहात्मभ्रान्तिमतां बाल्ययौवनादिभेदेनात्मभेदग्रहेऽपि प्रतिसंधानस्याक्षतत्वात्। अतो वास्तवभेद एवाप्रतिसंधानहेतुः। न चायं प्रकृते इत्यलं प्रासङ्गिकेऽधिकक्षोदेन।

तत्र तत्र शतदूषणीग्रन्थस्य, 'भ्रमसंशय' इत्याद्यशुद्धमुद्रणदर्शनानुसारमर्थग्रहणमन्तरैवायथावदनुवादोऽप्यवधानमर्हति। एवमयथावदनुवादः, षष्ठकल्पविचारे, "स हि बाधितत्वम्, तत्फलभूतभ्रान्तिनिवृत्तिर्वा" इति वाक्येऽपि भाव्यः। बाधपर्यायः किल कश्चिदनुपलभ्यमानत्वेनोच्यते शतदूषण्याम्। बाधस्तु प्रतिपन्नोपाधौ निषेधः प्रागेव परास्तः। विषयत्वनिवृत्तिरित्यत्रापि विषयनिवृत्तिरिति व्यावृत्तिस्वरूपशोधकश्रीभाष्यानुसारेण मन्तव्यम्। भ्रमनिवृत्तिर्व्यवहारनिवृत्तिश्चात्राभिसंहिते इति पक्षेऽपि तदनुगुणं भाव्यम्। वस्तुभ्रान्तिविवृत्तिरेव वस्तुनि भ्रान्तिविषयत्वनिवृत्तिरिति वा, भ्रान्तेर्विषयत्वं मूलत्वं यत्र व्यवहारे तस्य व्यवहारस्य निवृत्तिरेव भ्रान्तिविषयत्वनिवृत्तिरिति वा क्लिष्टं कल्पनमिष्यते चेत्— अस्तु कामम्। एवम्भूतार्थशोधनं भूषण्यां चेत् क्रियेत, तर्हि युक्तं स्यात्। तद् विहाय बाधनिरासनिरसनप्रयासः प्रयासमात्रम्। अनुपलम्भादिनिरस्तत्वादिति सूक्तेश्चायमर्थः—मिथ्यात्वसाधकहेतुरुपलभ्यमान एव किल हेतुर्भवति। अनुपलम्भे च तस्यैवासिद्ध्या तेन कथं मिथ्यात्वानुमानमिति। एवं स्थिते यद् भूषण्यामुक्तम्—निर्विचिकित्सपरोक्षज्ञानिनां विदुषां तत्त्वसाक्षात्कारानन्तरमनुवृत्ताज्ञानलेशानां जीवन्मुक्तानां वा तदुपलम्भोऽस्त्येवेति—तन्न घटते। किं जीवन्मुक्तान् निर्विचिकित्सपरोक्षज्ञानिनश्च प्रति मिथ्यात्वं साध्यते, उत विवदमानान् प्रति। अतीतश्रवणमननपथानां तेषामनुमानापेक्षाविरहात्। तेषां निर्विचिकित्सं साध्यस्यैव ग्रहणं सुवचम्। यदि ते केचित् सन्ति, अन्यान् प्रति

हेतुरसिद्ध एव। 'जीवन्मुक्तानां वा' इति चकारं विना वाकारप्रयोगो भवत-स्तत्र डोलायितमनस्कत्वं ज्ञापयति। अपरोक्षज्ञानमेव बाधकमिति मन्वानानां भवतां परोक्षज्ञानस्य बाधकत्ववर्णनमशक्यमिति जीवन्मुक्तिरनुधाविता। जीवन्मुक्तिमप्यद्वैतिन एव कतिपये न स्वीकुर्वते। तत्त्वसाक्षात्कारे निष्पन्ने लेशतोऽप्य-परमार्थभूताया अविद्याया अवशेषस्य दुर्वचत्वात्। तान् मनसिकृत्य तत्रा-प्यनास्था वाकारेण सूचिता। एवञ्च न केऽपि सन्ति उपलब्धारः। परमुक्तौ तु उपलब्धा नास्त्येव। सर्वथा हेतुमात्रोपलम्भी साध्योपलम्भविधुरः कश्चिद् वक्तु-मशक्य एव।

अस्मिन् व्यावर्तमानत्वानुमाने अप्रयोजकत्वं व्यतिरेकासिद्धिश्चेति दूषणद्वयमुपन्यासि। तत्राप्रयोजकत्वे उपरम्य व्यतिरेकासिद्धिविषये यदुक्तम्—ब्रह्मणि प्रागुक्तं षड्विधमपि व्यावर्तमानत्वं नास्तीति, तत् प्रतिज्ञामात्रम्। पूर्वोक्तेषु निर्वचनेषु बहूनां ब्रह्मणि सद्भावस्य तत्र तत्रैवोपपादितत्वात्। सन् परमार्थः अनुवर्तमानत्वादित्यनुमाने च सिद्धसाधनम्। सतः पारमार्थ्यस्यास्मादृशेष्टत्वात्। अनुवर्तमानत्वं तु तत्र न प्रयोजकम्; वर्तमानत्वातीतत्वादिमतामपि परमार्थ-त्वात्। घटः सन् इत्यादिप्रतीतौ ब्रह्मणो विषयत्वस्यासंप्रतिपन्नतया तन्मु-खेनानुवर्तमानत्वमसिद्धमपि। यदि च सद् ब्रह्म शास्त्रतः सिद्ध्यति, तर्हि पर-मार्थ एव सिद्ध्यतीत्यनुमानं व्यर्थम्। यदि न, तदा चाश्रयासिद्धो हेतुरि-त्यलमत्र।

अन्यान्यपि मिथ्यात्वसाधकानुमानानि उक्तयैव दिशा निरस्तानीति शतदूषणी। "विस्तरश्चाद्वैतसिद्ध्यादौ द्रष्टव्यः" इति शतभूषण्युक्ततया सिद्ध्युक्त-मेवात्र संग्रहेणानूद्य निरस्यते—जडत्वं नाम ज्ञानभिन्नत्वम्, अनात्मत्वम्, अस्वयम्प्रकाशत्वं वा मिथ्यात्वं प्रति हेतुरिति सिद्धिकारः। तत्र ज्ञानभिन्नत्व-घटकं ज्ञानं नाम किम्। सविषयकत्वं ज्ञानत्वमिति तावत् सर्वलोकसंप्रतिप-न्नम्; तथा तस्य साश्रयत्वमपि। तादृशज्ञानभिन्नत्वं ब्रह्मण्यप्यस्तीति तस्य मिथ्या-त्वापत्तिः। तथा लोकप्रसिद्धे ज्ञाने मिथ्यात्वानापत्तिश्च। एतेन व्यवहारहेतुत्व

ज्ञानत्वमित्यप्यपास्तम्। चिद्रूपत्वं प्रकाशरूपत्वं वा ज्ञानत्वमिति पर्यायपदप्रयोगेऽपि न लोकसिद्धज्ञानव्यावृत्तिः। निर्विशेषज्ञानभिन्नत्वं हेतुरिति चेत्— ज्ञानपदं व्यर्थम्। व्याहतिश्च; ज्ञानत्वरूपविशेषवति निर्विशेषत्वायोगात्। अप्रसिद्धश्च निर्विशेषम्। ज्ञानपदवाच्यभिन्नत्वं हेतुरित्युक्तावपि ब्रह्मण्यनैकान्त्यम्; ब्रह्मणि वाच्यत्वस्यासंमतत्वात्। ज्ञानपदलक्ष्यभिन्नत्वमित्युक्तौ, 'ज्ञोऽविदर्थस्य करणे' इत्युक्तरीत्या ज्ञानपदलक्ष्यानेकार्थसत्त्वात् तत्र मिथ्यात्वासिद्धिप्रसंगः। एतेन ज्ञानपदजन्योपस्थितिविशेष्यभिन्नत्वमित्यपि प्रत्युक्तम्।

अर्थविषयकत्वोपलक्षितव्यक्तिभिन्नत्वं हेतुरिति चेत्—तार्किकादीन् प्रति हेत्वसिद्धिः। अर्थविषयीकरणं विना ज्ञानसत्तायास्तदनङ्गीकृतत्वात् अर्थविषयकत्वोपलक्षितव्यक्तेरप्रसिद्धेः। आत्मातिरिक्तज्ञानस्यैव सविषयकत्वम्, न त्वात्मनामिति पक्षे तादृशव्यक्तिभिन्नत्वस्य ब्रह्मण्यपि सत्त्वेन तस्य मिथ्यात्वमात्मगतज्ञानस्य सत्यत्वञ्चोक्तं स्यात्। दृग्दृश्ययोर्विषयविषयिभावादिसर्वसंबन्धानङ्गीकारिभिरर्थविषयकत्वं चिन्मात्रे दुर्वचञ्च। किञ्च तदुपलक्षितत्वं नाम तदत्यन्तायोगव्यवच्छेदः। स च प्रतियोगिव्यधिकरणतदभावाभावः। काकवद्गृहमित्यादौ गृहे काकाभावः प्रतियोगिसमानाधिकरण इति प्रतियोगिव्यधिकरणतदभावस्याभावसिद्धिः। चिन्मात्रे च भवद्भिरर्थसंबन्धानिष्टेरर्थात्यन्ताभावस्यैवोक्तेः प्रतियोगिव्यधिकरणतदभाव एवास्तीति न तदभावरूपमुपलक्षितत्वम्। एवं स्वानुयोगिकार्थसंबन्धानवच्छेदककालावच्छिन्नत्वमर्थोपलक्षितत्वमित्युक्तावपि उपलक्षितत्वस्याभाव एव। ब्रह्मणि, अर्थाभावे कालस्यापि मिथ्यात्वेन कालाभावोऽपीति कालावच्छिन्नत्वस्य दुर्वचत्वात्। सर्वानधिकरणे कालावच्छिन्नत्वस्याप्ययोगाच्च।

अर्थाध्यासाधिष्ठानभूतचिद्भिन्नत्वं हेतुरिति चेत्—तदापि हेत्वसिद्धिः। श्रुतितस्तदुपपादने च तत एव मिथ्यात्वसिद्धेरनुमानं व्यर्थम्। श्रुतिस्तु न काचित् तत्रेति वक्ष्यते। एवमनात्मत्वं जडत्वमित्यपि निरस्तम्। ज्ञानत्वातिरिक्तस्यात्मत्वस्यानुक्तत्वादपि तद्धेतुरुपपादयितुमशक्य इति सिद्धम्। असत्य-

म्प्रकाशत्वं जडत्वमिति चेत्—घटमहं जानामि, इच्छामि, सुख्यामि, दुःख्यामीत्यनुभावानुसारात्, ज्ञानाभावात् इच्छासुखाद्यप्रकाश इत्यस्य चाभावात् तेषां स्वयम्प्रकाशत्वमेव युक्तमिति तद्भिन्नत्वाभावात् तेषु मिथ्यात्वं न सिद्ध्येत्। ब्रह्मभिन्नत्वान्मिथ्येत्युक्तावपि अप्रयोजकत्वं दुर्वारम्। अथ परिच्छिन्नत्वं मिथ्यात्वहेतुरित्यत्र किमिदं परिच्छिन्नत्वम्? अत्यन्ताभावप्रतियोगित्वमन्योन्याभावप्रतियोगित्वं वा। सर्वथा जगतो ब्रह्म प्रति अधिकरणत्वाभावेन जगति ब्रह्मभेदसत्त्वेन च ब्रह्मण्यप्युभयसत्त्वादनेकान्तः। स्वसमसत्ताकात्यन्ताभावान्योन्याभावप्रतियोगित्वं हेतुः। जगन्निष्ठश्च ब्रह्मात्यन्ताभावो भेदो वा जगदविशिष्ट- इति न तस्य ब्रह्मसमानसत्ताकत्वमिति यदुक्तम्—तन्न; जगतो मिथ्यात्वे प्रकारान्तरेण सिद्धे ब्रह्मसत्ता जगत्सत्ता च विषमेति हेतुनिश्चयः, तन्निश्चये च मिथ्यात्वानुमानमित्यन्योन्याश्रयात्। श्रुत्यादिना सिद्धौ चानुमानवैयर्थ्यम्। अत एवं स्वसिद्धान्तवासनामात्रमालम्ब्य प्रतिवादिनां पुरतो मिथ्यात्वसमर्थनं मुधैवेति।

अथ चित्सुखाचार्योक्तत्वेन सिद्धावनूदितमंशित्वानुमानमप्यसाधकम्। तद्धि एवम्—अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात् इतरांशिवत्। अत्रांशित्वं सोपादानकत्वरूपमुपादेयत्वम्। तन्तुकार्यमपि पटस्तन्निष्ठात्यन्ताभावप्रतियोगी पटान्तरादिवदिति—इदमनुपपन्नम्—एतत्तन्तुरूपरसादौ हेतुमति साध्यस्याभावात्। सिद्धसाधनाच्च; यतस्तन्तव एव व्यतिषङ्गविशेषभाजः पट इत्युच्यन्ते वेदान्तिमते, अतस्तन्तुपटद्रव्यैक्यात् उपादानोपादेयद्रव्ययोराधाराधेयभावाप्रसक्तया तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं हि पटे इष्टमेव; स्वस्य स्ववृत्तित्वायोगात्। न च तादात्म्यस्य भेदघटितत्वात् तन्तुपटयोस्तादात्म्यमपि भेदसहमिति तद्वृत्तित्वमपि तस्येति वाच्यम्—तादात्म्यस्यैक्यस्य भेदसहत्वाभावात्। नीलो घट इत्यादौ नीलघटयोस्तादात्म्यं हि न नीलद्रव्यस्य घटद्रव्यस्य च भेदं साधयेत्। विशेषणभेदसहितविशेष्यैक्यस्यैव सामानाधिकरण्यप्रयोजकतया तन्तुत्वपटत्वरूपावस्थाभेदस्यैव ततः सिद्धेः तन्तुपटयोर्भेदायोगात्। भेदा-

भेदयोरविरोधे चानेकान्तवाद एव परिगृहीतः स्यादिति जितं जैनैः । न च अभेदो नेष्यत एव । तदनन्यत्वाधिकरणस्याप्यभेदसाधनैदम्पर्यं नास्ति; किंतु भेदव्यासेधमात्रपरतेति भामत्युक्तेरिति वाच्यम्—तर्हि सत्कार्यवादत्यागप्रसंगात् । सत्कार्यवादो हि नाम कार्यं कारणञ्चैकद्रव्यमिति वादः । कार्यकारणयोर्भेदे च तद्विरोध एव । न चैक्ये कार्यकारणभावव्याहतिः; कार्यतावच्छेदककारणतावच्छेदकधर्मभेदमात्रेण तदुपपत्तेः । अविकृतं कार्यं न भवति । अवस्थान्तररूपविकाराभावे कार्यकारणभावो दुर्वच इत्येतावदेव, "असंभवस्तु सतोऽनुपपत्तेः" इत्यत्र भाष्येऽप्युक्तम् । यदि कारणात् कार्यस्य भेद इष्टः, तर्हि कथम्, "भेदं व्यासेधामः" इति भामती ।

किञ्च तार्किकमते ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावस्यापि नव्यैः स्वीकारात् पटोत्पत्तेः प्रागूर्ध्वञ्च पटस्य तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमिष्टमेवेति न तावता मिथ्यात्वसिद्धिः । अतः सत्यस्यैव मिथ्येति स्वयं परिभाषणमात्रम् । संयोगसंबन्धेन पटकालेऽप्यभावसत्त्वेन सिद्धसाधनञ्च । समवायसंबन्धावच्छिन्नप्रतीयोगित्वं विवक्षितमिति चेन्न—वेदान्तिभिः समवायानङ्गीकारेण तद्घटितसाध्यस्याप्रसिद्धत्वात् । अत्यन्ताभावीयतादात्म्यसंबन्धावच्छिन्नप्रतियोगित्वं साध्यमिति चेन्न—अन्योन्याभावीयप्रतियोगिताया एव तादात्म्यसंबन्धावच्छिन्नत्वात् । अथान्योन्याभावप्रतियोगितायाः संबन्धावच्छिन्नत्वमेव नेष्यते । न च तर्हि ध्वंसप्रागभावयोरन्योन्याभावस्य चाविशेषः; अनादिरनन्तोऽन्योन्याभाव इति वैषम्यस्य जागरूकत्वात् । तथा ध्वंसप्रागभावप्रतियोगितयोः संबन्धावच्छिन्नत्वं धर्मावच्छिन्नत्वञ्चेत्युभयं नेष्यते; पटभेदादिरूपान्योन्याभावप्रतियोगिता तु संबन्धानवच्छिन्नाऽपि पटत्वावच्छिन्ना भवतीति विशेषः । अतोऽत्यन्ताभावप्रतियोगिता तादात्म्यसंबन्धावच्छिन्नापीति चेन्न—तत्तद्ध्वंसप्रागभावयोस्तत्तत्प्रतियोगिसमवायिदेशमात्रवृत्तितया ध्वंसप्रागभावसामान्याधिकरणस्य कस्य चिदभावात् इत्यादिना हेतुना ध्वंशप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वादिकं नेष्यत इति तार्किकसरणिः । प्रकृते संयोगादि-

संबन्धावच्छिन्नत्वस्यैवात्यन्ताभावीयप्रतियोगितायां भूतले घटो नास्तीत्यादौ प्रसिद्धत्वात् तादात्म्यसंबन्धावच्छिन्नत्वे मानाभावः। घटः पटो नेत्यत्र तु भेदप्रतियोगितैव। सा च संबन्धानवच्छिन्नेति भवदिष्टमिति। तदिदं प्राक् मृत्तिकैवासीत्, न तु घटादीत्यादिप्रतीतिरपि अन्योन्याभावमेवावगाहते। समानविभक्तिकप्रतियोग्यनुयोगिपदघटितत्वात्। मृत्पिण्डे घटो नास्तीत्यदौ तादात्म्यसंबन्धभानेष्टौ च न किञ्चित् प्रमाणम्; घटत्वावस्थाविरहस्यैव तत्र पर्यवसितत्वात्। किञ्चेदं तादात्म्यम्? न तावदैक्यम्। तस्य संसर्गताया भवदनिष्टत्वात्। इष्टत्वे अन्योन्याभावीयप्रतियोगितायास्तदवच्छिन्नत्वप्रसंगः। न च तद्वृत्तिधर्मः, घटपटयोरपि तादात्म्यप्रसंगात्। द्रव्यत्वरूपधर्मसत्त्वात्। तद्वृत्त्युभयावृत्तिधर्म इति चेत्—ईदृशधर्मरूपतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकत्वं घटः पटो नेत्यादावपि सुवचम्। अथ मृत्पिण्डेन घटस्य स्वरूपं संबन्ध इति चेत्—घटस्तद्भिन्नः सन् स्वरूपसंबन्धप्रतियोगी, उताभिन्नस्सन्। आद्ये, भेदप्रयुक्तस्वरूपसंबन्धगोचरसमानाधिकरणवाक्यप्रयोगस्वीकारे रूपवान् घट इत्येतत्स्थाने रूपं घट इति प्रयोगापत्तेः। यदि तु स्वरूपसंबन्धस्य तद्वत्ताबुद्धिनियामकत्वमेव तत्र दृष्टम्। तर्हि मृद्घट इति समानाधिकरणप्रतीतिर्न तत्संबन्धावगाहिनी। यावच्च मृन्न घटः, घटो न मृत् इत्येवं भेदप्रत्ययो मिथ्या, तावत् उपादानोपादेययोर्भेदस्वीकारोऽप्ययुक्तः। तर्हि कथमैक्येऽपि समानाधिकरणप्रयोगे घटः कलश इति न प्रयोग इति चेत्—ऐक्यसंबन्धावच्छिन्नार्थबोधं प्रति भिन्नप्रवृत्तिनिमित्तकपदजन्योपस्थित्योः कारणत्वस्वीकारेण तत्परिहारः। अत ऐक्यातिरिक्तस्य तादात्म्यस्यात्राभावात् तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावे मानाभावात् संबन्धान्तरेणात्यन्ताभावस्य घटीयस्य मृदीष्टत्वाच्च नैतत् साध्यं भवितुमर्हति।

अपिचायं पट एतत्तन्तुनिष्ठाभावप्रतियोगीति साधयतः पटमिथ्यात्वमेव खल्वभिमतम्। मिथ्यात्वञ्चास्य किं ब्रह्मज्ञानबाध्यतया, किंवा तन्तुज्ञानबाध्यतया। अन्त्यमनुभवापेतम्। तन्तवः पट इति प्रतीतेरेवाबाधितत्वात्। आद्ये

तु पटेन सह तन्तवोऽपि बाधिता इति तदा तेषामेवांभावात् तन्निष्ठाभावप्रतियोगित्वं पटस्य दुस्साधम् । अन्यच्च—एतत्तन्तुनिष्ठाभावप्रतियोगित्वसिद्धावपि न सर्वत्र तदभावसिद्धिः । भूतलादौ पटादिसत्त्वस्यानुभविकतया बाधश्च । अथापि तत्र न कार्यतावच्छेदकसंबन्धेन पट इति चेत्—कोसौ संबन्धः ? समवाय इति चेत्—स वेदान्तिनामप्रसिद्धः । संयोग इति चेत्—किं तन्तुषु संयोगेन पटो जायते ? तन्तुषु मा जनिष्टः तन्तवो यत्र, तत्र तेन संबन्धेन पटो जायतं इति चेत्—तर्हि भूतलेऽपि तन्तुसंयुक्ते पटः संयोगेन जायत इति न कार्यतावच्छेदकसंबन्धेन भूतले पटात्यन्ताभावः । तादात्म्यं कार्यतावच्छेदकसंबन्ध इति चेत्—तत् ऐक्यादविलक्षणमिति तत्संबन्धावच्छिन्नैतत्तन्तुनिष्ठाभावप्रतियोगित्वमेव साधनीयम् । यदि पट ऐक्यसंबन्धावच्छिन्न वस्त्वन्तरनिष्ठाभावप्रतियोगी सन् तत्संबन्धावच्छिन्नैतत्तन्तुनिष्ठाभावप्रतियोग्यपि स्यात्, कार्यमेव न भवेत् । कार्यस्य कार्यतावच्छेदकसंबन्धेन कारणवृत्तिताया आवश्यकत्वात् । अन्यथा तस्य संबन्धस्य कार्यतावच्छेदकत्वेन व्यवहारोपि न घटते । तथाचांशित्वरूपकार्यत्वहेतुः पटस्य कारणवृत्तित्वं कारणनिष्ठत्रैकालिकाभावप्रतियोगित्वाभावं साधयन् विरुद्ध एव स्यात् । एवं पट एतत्तन्तुनिष्ठत्रैकालिकाभावप्रतियोगी न भवति एतत्कार्यत्वात् यन्नैवम्, तन्नैवम्, यथा पटान्तरमिति सत्प्रतिपक्षश्च । न चात्र व्यतिरेकव्याप्तौ एतत्कार्यत्वाभावं प्रति एतत्तन्तुनिष्ठत्रैकालिकाभावप्रतियोगित्वं न प्रयोजकम्; किंतु एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वमेवेति वाच्यम्—प्रागभावप्रतियोगित्वतदभावयोः कार्योत्पत्तितदभावोन्नेयत्वेन पूर्वमग्रहात् । तार्किकैरपि कैश्चित् प्रागभावानङ्गीकाराच्च । यत्तु तदुपादानकान्यत्वमेव तत्रोपाधिस्तत्र प्रयोजक इति चन्द्रिकोक्तम्—तन्न—एतत्कार्यत्वाभावस्य एतदुपादानकभिन्नत्वस्य चैकतया तत्रैव तस्यानुपाधित्वात् । कार्यतावच्छेदकसंबन्धेन कारणे कार्यासत्त्वे कार्यकारणभावस्य दुर्ग्रहतया एतत्तन्तुनिष्ठत्रैकालिकाभावप्रतियोगित्वैतत्कार्यत्वाभावयोरनुकूलतर्कबलसिद्धायां व्याप्तौ अप्रयोजकशङ्काया अकिंचित्करत्वाच्चेति ।

विमतं मिथ्या ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात् स्वाप्नवदिति विद्यासागरानुमानमप्यनूदितमेवं निरस्यम्। अस्य, "नाभाव उपलब्धेः" इति सूत्रतद्भाष्यादिनाऽप्यपास्तत्वात्। ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात् यदि विषयो मिथ्या, विषयं विनाऽनुपलभ्यमानत्वात् ज्ञानमपि मिथ्या स्यात्। यत् केनचिद्विना नोपलभ्यते, तन्मिथ्येति च न व्याप्तिः। रूपं विना प्रभा नोपलभ्यते इति रूपं सत्यम्, प्रभा तु मिथ्यैवेत्यपि स्यात्। तेन विनानुपलभ्यमानत्वञ्च सहोपलम्भनियमः। तेन साहित्येनोभयमेव मिद्ध्येत्। नैकतरमात्रम्। चन्द्रिकायां तु ज्ञानव्यतिरेकेणानुपलभ्यमानत्वादित्यस्य स्वप्रकाशभिन्नत्वादित्यर्थ उक्तः। तदा च विमतं मिथ्या स्वप्रकाशभिन्नत्वादिति तार्किकं प्रति कथने हेत्वप्रसिद्धिः; स्वप्रकाशस्य कस्यचित् तेनास्वीकारात्। अनुभूतिः स्वप्रकाशा परप्रकाशकत्वादित्यनुमानेन तत्साधने पराभावात् परप्रकाशकत्वस्य मिथ्यात्वे स्वप्रकाशत्वमपि मिथ्यैवेति प्रकाशानात्मकं वा स्वरूपतोऽपि मिथ्यैव वा ज्ञानमपि स्यादित्यलं प्रासङ्गिकार्थप्रपञ्चनेन॥

स्वमतैकसिद्धविविधार्थनिर्भरैः
उपजीव्यसाध्यमतिभिर्मृषात्मकैः।
अपि बाधितैर्बत मृषात्वसाधनैः
अवधीरयन्ति जगदीशसत्यताम्॥

शुभमस्तु

---

श्रीः

# दृग्दृश्यसंबन्धप्रसाधनम् ॥

अदृश्यमपि दृश्यतां नयति यस्य दिव्या दया
फलञ्च यदनुग्रहः सुखमिहापि सूते स्थिरम् ।
अनर्घगुणशेवधिर्हृयमुखावतारः श्रित-
त्रयीशिखरदेशिको जयति रङ्गरामानुजः ॥

विमतं मिथ्या दृश्यत्वादित्यनुमाने विपक्षजिज्ञासायामुक्तमद्वैतसिद्धौ, 'सत्यत्वेऽपि दृश्यत्वोपपत्तिर्न वक्तुं शक्यते; दृग्दृश्यसंबन्धानुपपत्तेः' इति । विवरणे च संबन्धविषये विविधान् विकल्पान् विधायाध्यासिकसंबन्धमात्रपरिशेषणेन । ईदृशाद्वैतिहृदयोद्घाटनेनैवोत्तरितं शतदूषण्याम् , दृग्दृश्यसंबन्धोऽनुपपद्यमानोऽर्थापत्तिविधया प्रपञ्चमिथ्यात्वं कल्पयतीति यद्यभिप्रेयते, तन्न घटते । दृश्यमिथ्यात्वं हि दृग्दृश्यसंबन्धप्रतिक्षेपकम्; न तु स्थापकमिति । बहुधा विकल्प्य संबन्धं निरस्यन्त एव एवं संबन्धं स्थापयन्तीति विचित्रमेतत्। यदि च दृग्दृश्यसंबन्धो नास्ति, दृश्यत्वादिति हेतुप्रयोग एव न घटते । युक्तं पुनः अदृश्यत्वान्मिथ्येति प्रयोक्तुम्। तदा हि तदुपरि दृश्यत्वसद्भावात् हेत्वसिद्ध्याद्याशंकायां संबन्धं विकल्प्य निरस्यादृश्यत्वस्थापनं क्रियमाणं सुलग्नं स्यात् । शतभूषण्यनूदितब्रह्मसिद्धिवाक्यमप्यवशादागतमदृश्यत्वस्य हेतुत्वौचित्यमाविष्करोतीव, "परमार्थतश्चादृश्यमानं दृष्टव्यतिरिक्तमस्तीति दुर्भणम्" इत्यदृश्यमानपदप्रयोगात् । कस्यापि दृक्संबन्धित्वाभावे दृक्संबन्धित्वरूपदृश्यत्वस्यैवाप्रसिद्ध्या तदभावः कथं हेतुरिति चेत्—दृश्यत्वं हेतूकुर्वद्भिरपि भवद्भिस्तत् परिचिन्त्यमेव । सुवचश्च हेतुः दृङ्निष्ठाभावप्रतियोग्यनुयोगिताकसंबन्धसामान्यकत्वं स्वासंबन्धिदृक्त्वरूपमदृश्यत्वं प्रपञ्चे । दृशि आत्मनि प्रपञ्चप्रतियोगिकतया प्रसिद्धसंयोगसमवायादिसकल-

संबन्धानुयोगित्वाभावस्य भवदिष्टत्वात् । अतो दृश्यत्वसंबन्धानुपपत्तिवादिभिः दृश्यत्वादिति हेतुप्रयोगो न स्वरसः ॥

सत्यत्वे संबन्धायोग इति चेत् — मिथ्यात्व स्वीकारेऽप्ययोगस्तुल्यः । तत्राऽऽध्यासिकसंबन्धस्वीकारे दृश्यानां सत्यत्वेऽपि स सुवचः, यथा लोहितः स्फटिक इत्यत्रेति न दृश्यत्वं वस्तुमिथ्यात्वसाधकम् । संबन्धानिर्वचनीयत्वेनैवोपपत्तौ संबन्ध्यनिर्वचनीयत्वस्यानावश्यकत्वात् नानिर्वचनीयस्वीकारपक्षेऽपि दृश्यमिथ्यात्वसिद्धिः । यदि च दृगनुयोगिकापारमार्थिक संबन्धवत्त्वरूपं दृश्यत्वं हेतुरिष्यते, तर्हि अवश्यघटनीयस्यापारमार्थिकत्वस्याप्रयोगो दोषः । अपारमार्थिकत्वे च तस्य दृगनुयोगिकत्वं प्रपञ्चप्रतियोगिकत्वञ्चासंभावितमिति शङ्कया हेत्वसिद्ध्यापत्तिश्च । लोहितः स्फटिक इत्यादौ लौहित्यस्फटिकयोः संनिकृष्टतया संसर्गारोपादन्यथाख्यातिरिति परिभाषायुक्तस्य शतभूषण्यामपि स्वीकृतत्वात् तद्वत् अपारमार्थिकसंबन्धवत्त्वेऽपि प्रपञ्चस्य लौहित्यस्येव सत्यत्वसंभवात् तावतापि प्रपञ्चमिथ्यात्वं न सेत्स्यति । ननु मानाधीनत्वात् मेयसिद्धेः ज्ञानस्य च ज्ञेयेन वास्तवसंबन्धाभावात् कथं दृश्यसिद्धिरिति चेत्—कुत्रापि मेयस्य मानतः सिद्धिमनिच्छतां भवताम्, 'मानाधीनत्वान्मेयसिद्धे'रिति वचनमेवासंभावितम् । अन्यच्च शतदूषण्यामुक्तम्, संबन्धापारमार्थ्येन संबन्धिनो दृश्यस्यापारमार्थ्ये संबन्ध्यन्तरस्य दृशोऽप्यपारमार्थ्यमेवेति । स्वतः सिद्धत्वात् दृगस्तीति चेत्---दृशः स्वतःसिद्धत्वमेव कथं सिद्धम् ? दृक् स्वप्रकाशा, परप्रकाशकत्वात् इत्यनुमानादिति चेन्न — परप्रकाशकत्वाभावस्यैवैतावता भवदुक्तत्वाद्धेत्वसिद्धेः । न च दृशः स्वप्रकाशकत्वमपि स्वप्रकाशम् । तीर्थकराणां ज्ञानस्वप्रकाशत्वे विवाददर्शनादेव तस्य मानान्तरवेद्यत्वस्यावश्यकत्वात् । युक्तश्च घटादेरपि स्वप्रकाशत्वम् । घटादीनां व्यवह्रियमाणतया प्रकाशावश्यम्भावे दृक्संबन्धस्य च तत्र दुर्वचत्वे स्थिते पराप्रकाश्यस्यापि व्यवह्रियमाणत्वं स्वप्रकाशनिबन्धनमित्येष्टव्यमिति । तर्हि सर्वदा व्यवहारोऽस्त्विति चेत् — दृशोऽपि सर्वदाऽस्तु । सामग्रीसमवधानतदभावाभ्यां कार्यतदभावाविति तु सर्वत्र समानम् ॥

शतभूषण्या तु दृश्यत्वं द्वेधा विभज्य आत्मरूपदृक्संबन्ध एव प्रपञ्चे दुर्वच इत्युच्यते ; वृत्तिरूपदृक्संबन्धस्तु न निषिध्यत इति मन्यते । अद्वैतसिद्ध्यादौ पुनः, "आत्मस्वरूपस्य तद्गुणस्य वा ज्ञानस्य ज्ञेयेन संयोगसमवाययोरभावात्" इत्यादिना ज्ञानसामान्यस्य, अथ वा लोकप्रसिद्धस्य ज्ञानस्यैव ज्ञेयसंबन्धाभाव उपपादितः । पूर्वञ्च दृश्यत्वात् इति हेतुविकल्पावसरे फलव्याप्यत्वातिरिक्ताः दृश्यत्वप्रकाराः हेतुतया सूपपादा इति सिद्धावुक्ततया वृत्तिव्याप्यत्वरूपदृश्यत्वस्यापि दृश्यत्वपदार्थतया तत्संबन्धानुपपत्तिरपि दुर्वचेत्यभिमतमिति गम्यते । अपरि, "ज्ञानजन्यफल", — "ज्ञानजन्यहानादि" — ज्ञानकर्मत्व" — ज्ञानाकारार्पकत्वा"दिविकल्पांशाः वृत्तिरूपदृग्ग्रहणेनैव प्रवृत्ताः । आह च, "अनुमित्यादिविषये आकारार्पकत्वं नास्ती"त्यादि । तेन प्रत्यक्षवृत्त्यादौ चतुर्थपक्षादिसमन्वयोऽनुमन्यते । "वृत्तिग्रहणेन विकल्प्य दूषणं प्रौढिवाद इत्येव वयं ब्रूमः" इति शतभूषणी ब्रवीति । तदा चापसिद्धान्तः । सर्वाद्वैतिदूषणमस्मत्कर्तव्यं शतभूषणी स्वयमेव चरतीति संपन्नमनुकूलम् ॥

अपि च विचार्यते — दृश्यत्वमित्यत्र दृक्पदेन निर्विशेषचिन्मात्रं जिघृक्षितं चेत् — हेत्वप्रसिद्धिः । तस्य स्वसिद्धान्तमात्रत्वात् । सत्यासत्यसर्वदृक्साधारणस्य दृक्त्वस्यासंभवात् न सामान्यतो दृक् तदर्थः स्यात् । वृत्तिरूपदृक्संबन्धित्वस्य शतभूषणीष्टतया न मिथ्यात्वाभावे हेत्वनुपपत्तिरपि ; सत्यत्वेऽपि सांख्यमत इव तत्संभवात् । एतेन मुख्यगौणयोर्मुख्ये कार्यसंप्रत्यय इति शुद्धचैतन्यमात्रपरं दृक्पदमित्यप्यपास्तम् ; तस्याप्रसिद्धेः । आत्मा स्वयंप्रकाशः संमन्यत एव विशिष्टाद्वैतिभिरिति चेत्—तस्य स्वप्रकाशत्वेऽपि सूर्यादेरिव परप्रकाशत्वानङ्गीकारात् तद्धर्मभूतज्ञानस्यैव प्रभाया इव परप्रकाशकत्वात् तादृशदृग्विषयत्वं प्रपञ्चे नेष्टमिति दृश्यत्वासिद्धिरेव ॥

कुतश्चात्मभूतदृक्संबन्धः प्रपञ्चे दुर्वचः? वृत्तिरूपज्ञानस्य चेत् संबन्धः सुवच इति शतभूषणी मन्यते, सोऽवश्यं सत्यदृग्ग्रहणेऽपि संभवत्येव । यदि तु संबन्धस्य द्विनिष्ठत्वात् तस्य च संयोगरूपस्य दृग्दृश्यविषये अयोगात् विषय-

विषयिभावादेश्च द्विष्ठत्वाभावेन संबन्धत्वायोगात् संबन्धाभाव एवेत्युच्यते, तर्हि तुल्ययुक्तया वृत्तिज्ञानसंबन्धोऽपि सर्वत्र दुर्वच एव । तथैव खण्डनग्रन्थादिषूक्तं खण्डितमेवात्र शतदूषण्याम् । कथञ्च द्विष्ठः संबन्ध इति निर्णीतम् ? प्रायःप्रतियोग्यनुयोगिभावाधाराधेयभावजन्यजनकभावपितापुत्रभावस्वस्वामिभावादीनां संबन्धानामद्विष्ठत्वेनैवानुभवात् । संयोग एकस्तु द्विष्ठोऽनुभूयते इति स्यात् । बहुविधसंबन्धानुभावाविरोधायान्यादृशसंयोगस्यैव संबन्धत्वं त्याज्यमस्तु । दण्डी पुरुष इत्यादौ कः संबन्ध इति चेत् — यत्रैकस्यानुयोगित्वम्, अन्यस्य तु प्रतियोगित्वमिति नियमः, तत्र प्रतियोगिनिरूपितः संयोगोऽनुयोगिमात्रनिष्ठ इत्येवास्तु । यत्र तु संयोगे अनुयोगिप्रतियोगिभावनियमगमकदुर्भिक्षम्, तत्र संयोगद्वयं जायते । एकैक एकैकत्र संबन्धः । अविवेकात्तु संयोगैक्यव्यवहार इत्यस्तु । विमतं मिथ्येत्यत्र पक्षशोधनावसरे चन्द्रिकायाम्, इदं रजतम्, रजतमिदमित्यत्र इदंप्रतियोगिकतया रजतप्रतियोगिकतया च तादात्म्यद्वयस्वीकारोऽत्रापि स्मर्तव्यः । द्विष्ठत्वेन संयोगं स्वीकृत्यानुभवसिद्धसर्वसंबन्धापलापापेक्षया संबन्धस्वभावदर्शनाविरोधेन संयोगस्याप्येकस्थतायाः एव सुवचत्वात् । संयोगो द्विष्ठ इति तु तार्किकवासनाविजृम्भितम् । स्वीक्रियतां वा संबन्धस्य द्वैविध्यमनुभवानुरोधात् । अतः संबन्धं प्रति एकस्य निरूपकत्वम्, अन्यस्य चाश्रयत्वमेव भूम्ना प्रसिद्धमिति न तदपलापः शक्यः ॥

दृक्प्रपञ्चयोराध्यासिकसंबन्धवादिभिरद्वैतिभिरुच्यमानः स एव संबन्धः किं द्विष्ठः उतैकनिष्ठ इति चिन्तनीयम् । कोऽयमाध्यासिकसंबन्धो नाम ? किमध्यासप्रयोजकः संबन्धः ? उताध्यासविषयः ? उभयथापि स संबन्धो न संयोगसमवायादिर्भवति । ज्ञानस्य पदार्थैः सह तस्य संबन्धस्यानभिमतत्वात् । न च व्यवहारानुगुण्यम् — तस्य वस्तुगत्या स्थितत्वेनाध्यासिकत्वायोगात् । अस्य ज्ञानस्यैतद्व्यवहारानुगुण्यमेव, न तु तद्व्यवहारानुगुण्यमित्यत्रापि नियामकस्य संबन्धान्तरस्य वक्तव्यत्वाच्च । विषयविषयिभावरूपविलक्षणसंबन्धस्वीकारे तु तस्य वास्तवत्वान्नाध्यासिकत्वम् । तादात्म्यं संबन्ध इति चेत् — कस्य केन ?

किं चिद्रूपात्मनो दृश्येन, उत वृत्तेर्दृश्येन ? आद्ये आत्मनि सर्वस्यापि पदार्थस्य कल्पितत्वात् सर्वतादात्म्यं तत्रास्तीति अयं घटः, घटोऽस्तीत्यादौ सर्वप्रकाशापत्तिः । वृत्तितादात्म्यमिति चेत् — कथं वृत्तेर्विषयस्य च तादात्म्यम् । वृत्त्यवच्छिन्नचैतन्यविषयावच्छिन्नचैतन्ययोरैक्यादिति चेत् — स्यादिदं प्रत्यक्षे ; न तु परोक्षे । इदं रजतमिति प्रत्यक्षभ्रमेऽपि दुर्वचमिदं वृत्त्यनङ्गीकारात् वृत्त्यवच्छिन्नचैतन्याभेदायोगात् । वृत्त्याद्यवच्छिन्नत्वमेव चैतन्यस्य किंरूपम् ; सत्यानृतयोःसंबन्धस्य साक्षादयोगात् । वृत्तिः विषयश्च चैतन्येऽध्यस्यत इति चेत् — चैतन्यस्य सर्वाध्यासाधिष्ठनतया वृत्त्यवच्छिन्नचैतन्यस्यैव विषयवाच्छिन्नचैतन्यैक्यमित्यत्र न किञ्चिन्नियामकमस्ति । अतो वृत्तेः विषयस्य च सर्वत्र तादात्म्यं न संभवति । आरोपितं तादात्म्यम्, न तु वस्तुत इति चेत् — घटमहं जानामीत्यत्र घटस्य वृत्तेश्च तादात्म्यमारोपितमपि नानुभूयते । घटोऽन्यो विषयभूतः, ज्ञानमन्यद्विषयिभूतमिति भेदएवानुभूयते । भेदेऽपि संभाव्यमानमन्यादृशं तदात्म्यमिदमिति चेत् — तदेव कीदृशम् ? कुत्रेयं तादात्म्यपरिभाषेत्येव पृच्छामः ॥

एतेन इदं रजतमित्यादौ शुक्तिरजतयोस्तादात्म्यं संबन्ध इत्यपि व्युदस्तम् । वस्तुगत्या तत्र तादात्म्यायोगात् । आध्यासिकतादात्म्यमित्युक्तावपि किं शुक्तितादात्म्यं रजते आध्यासिकम्, उत रजततादात्म्यं शुक्तौ ? अविशेषादुभयमपि वा । उभयमित्यपि हि शक्यं वक्तुम् ; यतः **पञ्चपादिकायामुक्तम्**, "यद्यनात्मन एवाध्यासः, तदा आत्मा न भ्रमे भासेत । तस्मादात्मानात्मनोर्द्वयोरप्यहमनुभवेऽध्यासः" इति । **संक्षेपशारीरके** च, "इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवस्त्विदमि । इतरेतराध्यसनमेव ततश्चितिचेत्ययोरपि भवेदुचितम्" इत्यादि — परं तु आत्मनोऽप्येवं देहादावध्यासस्येष्टत्वेऽध्यस्यमानं मिथ्या, अध्यासाधिष्ठातं तदपेक्षया सत्यमिति व्यवस्था त्यक्ता भवति । तथा च सर्वत्राधिष्ठनमपि परमार्थतोऽसदेव भवितुमर्हतीति गतमद्वैतेनेत्यन्यदेतत् । अध्यासाभाष्येऽप्युक्तम्, "अन्योन्यस्मिन् अन्योन्यात्मकतामन्योन्य-

धर्मश्चाध्यस्य" इति। तत्र शुक्तितादात्म्यं चेत् — तद्वास्तवं नापरमार्थरजत-निष्ठं भवितुमर्हति। रजततादात्म्यं तु मिथ्याभूतं न शुक्तौ सत्यायां स्यात्। अतः आध्यासिकतादात्म्यमित्यस्य तादात्म्याध्यास इत्येवार्थो वर्णनीयः। तत्रा-ध्यासस्य वस्तुनश्च कः संबन्धः? यदि कश्चिदिष्टः तर्हि, स एव सर्वत्र ज्ञान-विषययोरिति किमाध्यासिककिञ्चित्कल्पनेन? एतेन, "आध्यासिकसंबन्धः अधि-ष्ठानारोप्ययोः स्तादाम्यम्; ज्ञानस्वरूपस्याधिष्ठानत्वात् विषयस्यारोप्यत्वात्। तत्रापीदम्" इति चन्द्रिकाभिमतमप्यपास्तम्। अधिष्ठानारोप्ययोर्वस्तुतस्तादा-त्म्यायोगात्। "ह्रदो वह्निमान्" इत्यत्र वह्निह्रदयोः तादात्म्यस्य कथमप्यभा-वाच्च।

अपि चेह तादात्म्यमित्यत्र तत्पदं किम्परम्? यदि ज्ञानपरम्? तर्हि तत्प्रतियोगिकतादात्म्यं विषयगतमेव, यदि विषयपरम्, तत्तादात्म्यं ज्ञानैकस्थम्। तत्प्रतियोगिकसंबन्धस्य तन्निष्ठत्वायोगात्। तदिदं न द्विष्ठमिति कथं संबन्धता? अस्य संबन्धत्वे विषयविषयिभावजन्यजनकभावादीनां संबन्धत्वायोगवर्णनं संरम्भमात्रम्। सर्वथा वास्तवसंबन्धाभावेन संबन्धाध्यासे स्वीकर्तव्ये, अध्या-सस्य ज्ञानरूपतया तस्य संबन्धस्य च कः संबन्ध इति विमर्शे अवश्यमेव कश्चिदनुगतो विषयविषयिभावनामा स्वीकर्तव्य इति किं तदपलापेन।

अध्यासभाष्ये च परत्र पूर्वदृष्टावभास इति अध्यासलक्षणमुक्तम्। "अध्यस्य मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य लोकव्यवहार" इति भाष्ये च सत्यमनृतं च एकबुध्यारूढे कुर्वतः अध्यासरूपमिथ्याज्ञाननिमित्तको व्यव-हार इति अध्यासमिथ्याज्ञानयोरैक्यं भामत्युक्तम्। अतो ज्ञानविषययोः संबन्धो-ऽनिर्वचनीयोऽपि दुर्वचः। अध्यासस्य संबन्धोऽप्याध्यासिक इति चेत्, तस्या-ध्यासस्य संबन्धोऽपि तथेत्यनवस्थैव स्यात्। अध्यास एव संबन्ध इति चेत् — तर्हि एकविषयकमिथ्याज्ञानविषयत्वमन्यस्येत्युक्तं भवतीति सिद्धं ज्ञानस्य सविषयकत्वम्॥ अनुभवापलापाग्रहे तु संयोगमपि संबन्धं घटपटादौ निराकुर्वन् सौगत एवान्ततो भवति। तेन द्वयोर्नैरन्तर्यातिरेकेण संयोगस्य गुणस्यासंमतेः।

समवायस्तु वेदान्तिभिरपि नेष्टः। अतः स्वरूपसंयोगादिवत् अनुभूयमानत्वाविशेषात् ज्ञानविषययोरपि विषयविषयिभावसंबन्धोऽस्तु। यद्यपि ज्ञानस्य द्रव्यत्वपक्षे संयोग एव विषयतेति सत्यमिष्यते, अथापि द्रव्ये संयोगः, अन्यत्र संयुक्ताश्रितत्वमित्यादिसर्वसङ्क्रमहाय घटपटादिसंयोगव्यावृत्तये च तस्य तस्यैव संबन्धस्य विषयविषयिभाव इति सामान्यपरिभाषेति। अतीतानागतविषये कथं संबन्धोत्पत्तिरिति चेत्---संबन्धोऽयं ज्ञाननिष्ठः, विषयस्तु निरूपकमात्रमित्यस्तु। निरूपकविशेषनियमश्च सामग्र्यायत्तः, यथा ध्वंसप्रागभावयोरसमानकालिको भावः प्रतियोगी, तथात्रातीतानागते अपीत्यनुभवानुरोधात् संमन्तव्यम्। अतीतानागताद्यवच्छिन्नं ज्ञानमित्युक्तावपि तत् अवच्छेदकत्वमेव विना संबन्धं न भवितुमर्हतीति स कश्चिदेष्टव्य एव। योगिनां सर्वसाक्षात्कारनिर्वाहाय योगजधर्मसंबन्धं बाह्यान्तरेन्द्रियसंबन्धश्चातीतानागतविषयेष्वपि **प्रशस्तदेवादयः** प्राहुरिति स्थिते ज्ञानस्य विषयसंबन्धे कः सन्देहः?

किञ्च लोके मिथ्याज्ञानं सत्यानृतयोर्मिथुनीकारमूलकम्। तत्र सत्ये कस्यचिदसत्यस्याध्यासः किञ्चित्संबन्धपुरस्कारेणैव भवति। यथा शुक्तौ रजतस्य तादात्म्येन, शङ्खे पीतिम्नः समवायेन, अभावे प्रमेयत्वस्य प्रतियोगितया, अन्यधने चैत्रस्य स्वत्वेन, ह्रदे वह्नेः संयोगेनेत्येवं यथायथम्। अतश्चाध्यासिकसंबन्धवादिनाऽपि येन संबन्धेन कस्यचित् क्वचिदध्यासः, स वक्तव्यः। तत्र घटं जानातीति वक्तव्ये यदि कश्चित् पटं जानातीति भ्राम्यति, तदा घटविषयकज्ञाने विषयतया पटमध्यस्यतीत्येव व्यवहारः। तस्मात् शुक्त्यादौ रजतादेरिव दृशि दृश्यस्याध्यासोऽपि किञ्चित्संबन्धगर्भ एवेति सर्वसंबन्धनिषेधेऽध्यासोऽपि दुर्वच एव।

अपि च दृशो दृश्येन साकमध्यासिकः संबन्ध इति कं परीक्षकमात्रविदितम्, किं वा लौकिकपरीक्षकसाधारण्येन व्यवह्रियमाणम्? नाद्यः; तस्य सर्वजनीनव्यवहारविषयसंबन्धनिर्वचनपरत्वायोगात्। नान्त्यः, तथाऽननुभवात्।

न हि कश्चिल्लोके घटं जानामीति वदन्, मया ज्ञाने घटोऽध्यस्यत इति विवृणोति। ननु लौकिकज्ञानस्य विषयेण संबन्धोऽस्त्येव। परमार्थभूतस्य चिन्मात्रस्य तु विषयेणाध्यासिकसंबन्धं ब्रूम इति चेत्—न—लौकिकज्ञानविषयसंबन्धस्यैवाद्वैतसिद्ध्यादिग्रन्थेषु निराकरणात् तद्विरोधात्। यदि चिन्मात्रात्मकदृङ्निरूपिताध्यासिकसंबन्धकत्वरूपदृश्यत्वहेतुविवक्षा, तर्हि स हेतुः पक्षे शुक्तिरूप्यादिदृष्टान्ते च प्रागसिद्ध एव। वस्तुमिथ्यात्वसिद्ध्यधीनत्वादाध्यासिकसंबन्धग्रहस्य। शुक्तिरूप्यादेश्चिन्मात्रेऽध्यासस्यासंप्रतिपत्तेश्चेति कृतमधिकेन ॥

अथात्र शतभूषण्युक्तपरिशीलनं क्रमेण सङ्ग्रहीष्यते—यत् पञ्चदशीद्वैतविवेकप्रकरणप्रमाणीकरणेनोक्तम्—स्वरूपतो विद्यमानमज्ञातञ्च जगत् ईश्वरसृष्टम्, ज्ञातत्वादिवेषेण जीवसृष्टम्। ईश्वरसृष्टत्वं मायोपहितचैतन्यांशे जगदध्यासात्; जीवसृष्टत्वमीश्वरसृष्टे तत्तदाकारवृत्त्युपहितचैतन्यतादात्म्येनेति—तत्र मिथ्याभूतस्य जगतः स्वरूपतो विद्यमानत्वं तावन्न भवति। कल्पनैकप्राणताया एव तत्रानुभवसिद्धत्वात्। अत एवेश्वरेण सदाज्ञायमानत्वाच्चाज्ञातत्वमपि न घटते। ईश्वरज्ञातत्वेऽप्यस्मदज्ञातत्वमस्तीति चेत्—एकबुद्ध्या कल्पितमनिर्वचनीयमन्येनाज्ञातमेवेति कोऽत्र विशेषः? अत एवेश्वरसृष्टवस्तुनि जीवीयवृत्त्यवच्छिन्नचैतन्यतादात्म्यवचनमप्ययुक्तम्। चैत्रकल्पिते वस्तुनि मैत्रवृत्तिविषयत्वायोगात्। न हि चैत्रकल्पितमेव रजतं मैत्रः इदं रजतमिति साक्षात्कारोतीति भवद्भिः सुवचम्। यदि च विद्यमान एव वस्तुनि वृत्त्यवच्छिन्नचैतन्यतादात्म्यमात्रम्, तावता तत्र जीवसृष्टत्वव्यपदेशश्चायुक्तः, तदेतत् दृष्टमिति वक्तव्ये सृष्टमिति संभ्रमापतितमनुवर्तेत इत्येव तत्त्वम्। दृष्टिसृष्टिवाद एवास्माकमिति चेत्—तर्हि अनिर्वचवीयमेव न स्थापनीयम्। दृष्टौ सृष्ट्यारोपात् रजतोत्पत्तिकारणादिकल्पनक्लेशस्य हेयत्वात्। 'आत्मन आकाशः संभूतः', 'तत् सृष्ट्वा' 'तत् तेजोऽसृजत' इत्यादीनि वाक्यानि चान्याविशेषमकूपारे प्रक्षेपणीयानि। तदा च, तदैक्षत, तत् तेजोऽसृजतेति वाक्यद्वयवैयर्थ्यम्। ईक्षणसर्जनयोः शोधने भेदाभावात्। भ्रमो मे भूयादित्यशास्य भ्रममलभतेत्यर्थ

इति चेत्—संकल्पकाले जगत्प्रत्यक्षं भ्रमात्मकमीश्वरस्यास्ति वा न वा? न चेत्, सदा सर्वज्ञत्वस्य हानिः। अस्ति चेत, भ्रमोऽस्त्येवेति किमर्थः संकल्पः? उत्पादनार्थमिति चेत्—ननूत्पादनं भ्रान्त्या विषयीकरणमिति प्रागेवोक्तम्। एवमेकतरेणापि यत् सृष्टं न भवति, तत्र एकैकस्मिन् वस्तुनि ईश्वरसृष्टत्वं जीवसृष्टत्वमित्युभयसद्भाववचनम्, शोधने जीवानामानन्त्यात् जीव भेदेनापि नानाविधसृष्टत्ववचनं च नूनमद्वैतरक्षणश्रद्धामूलानेकद्वैतकल्पनासाहसमात्रमिति न क्षोदक्षमं भवति॥

यदुच्यते मायाशरीरकब्रह्मपरिणामवादे गौणे ब्रह्मणा प्रपञ्चस्य न साक्षात् संबन्धः, किन्तु विवर्तवाद एवेति तत्र-तादृशब्रह्मपरिणामवादो नैव गौण इति स्थाने स्थास्यति। विवर्तवादस्यामुख्यत्वञ्च प्रागप्युक्तम्। तत्र वक्ष्यते च। तदैव प्रपञ्चस्य ब्रह्मणा साक्षात् संबन्ध इति तु कथम्। ब्रह्मप्रपञ्चयोराध्यासिकसंबन्धस्यैव भवदुक्तेः ततः साक्षात् संबन्धाभावस्यैव सिद्धेः। यस्य वस्त्वेव नास्ति, स कथं तेन कस्यचित् साक्षात्संबन्धं ब्रूयात्। अस्माकं तु ब्रह्मप्रपञ्चयोराधाराधेयभावादयोऽनेके साक्षात्संबन्धा आगमगम्या अबाधिताः सन्ति। अतो विपरीतमिदं भवद्वचनम्, असंबन्धे सति साक्षात् संबन्ध इति कथनादत्यन्तासंबद्धमिति। अध्यासाधिष्ठानभावस्थले कार्यकारणभावव्यवहारस्य लोकेऽभावात्, प्रपञ्चस्य ब्रह्मकार्यतया कार्यकारणभावप्रयुक्तः संबन्ध इत्यप्यनुपपन्नम्। न हि, इदं रजतमिति भ्राम्यन् कश्चित् अहमत्र रजतमुत्पादयामीति मन्यते। एवमेवेश्वरोऽपि चैतन्यमात्रे जगदहमुत्पादयामीति नाध्यवसातुमर्हति। विशिष्य च तत्त्वज्ञः कथं सृजेयमिति संकल्पयेत्।

अपि चाध्यस्यमानत्वेन ब्रह्मकार्यत्वस्वीकारे अविद्याया अप्यनादिभूतायाः कार्यत्वापत्तिः। भावरूपाज्ञानस्य, अज्ञानं मेऽस्तीति सत्सामानाधिकरण्येन प्रतीतिश्च दुरपलपा। अध्यस्यमानत्वाभावे च मिथ्यात्वमेव न स्यात्। अध्यस्यमानत्वेपि नाविद्यायाः कार्यत्वमिति चेत्—प्रापञ्चिकपदार्थ एकैकोऽप्ये-

वमस्तु । तथा कल्पनयैवं सर्वनिर्वाहे कस्यापि कार्यत्वं न स्वीकर्तव्यम् । अज्ञाने उत्पत्तिप्रतीत्यभावादनादित्वम् ; प्रपञ्चे पुनस्तत्प्रतीत्या कार्यत्वमपीष्यत इति चेन्न — कल्पनाया उत्पत्तेश्च विरुद्धत्वात् । अन्यथा शुक्तिरजतमुत्पद्यत इति प्रतीयेत । नेदानीमुत्पद्यत इति बाधोऽप्यस्ति । अध्यस्यमानेष्वधिष्ठानगतोत्पत्तिप्रणाशयोरारोप एवानुभविकः । शुक्तिनाशे रजतं नष्टमिति, शुक्तिजन्म मनसिकृत्य च पूर्वमेव रजतं जातं तत्र स्थितमिति च प्रतीयमानत्वात् । यदि च चिन्मात्रे प्रपञ्च आरोपितः स्यात्, चिन्मात्रगतस्यैव धर्मस्य तत्रारोपः स्यात् ; नोत्पत्तिप्रणाशादेः । चिन्मात्रे तदभावात् । अधिष्ठानान्तरस्य चास्वीकारात् । अतः काल्पनिकमपि कार्यत्वं न घटते । यत्तु—यत्र संबन्ध आध्यासिकः तत्र संबन्धप्रतियोगिन एव मिथ्यात्वं दृष्टम् ; न त्वनुयोगिनः । शुक्तौ रजताध्यासे रजतमेव ह्यनृतम् ; न शुक्तिरनुयोगिनीति—तन्न—परस्पराध्यासस्य सूत्रभाष्यादिसिद्धत्वात् । चितोऽप्यन्तःकरणादावारोपस्य तत्र तत्रोक्ततया चाध्यासप्रतियोगित्वस्य चित्यप्यक्षतेः । शुक्तिरजतयोर्लोकप्रसिद्धः कोऽपि संबन्धो नास्तीति च यदुक्तम्—तत्र किं काल्पनिकोऽपि कश्चित् संबन्धो नास्तीति मन्यते ? नैतद्युक्तम् । तादात्म्यस्यैव तत्र कल्प्यमानत्वात् । अन्यत्र संयोगसमवायादिरपि कल्प्येत, इह तु तादात्म्यम् । अन्यथा समानाधिकरणप्रतीतिरेव नोदियात् । आध्यासिकसंबन्धस्तादात्म्यमिति चन्द्रिकाऽपि शोधने तादात्म्यसंबन्धेन वस्त्वध्यास इत्यत्रैव पर्यवस्येत् ।

"विकल्पासहत्वेन संबन्धाभावं सिद्धं कृत्वा" इति शतदूषणीग्रन्थस्य अनिर्वचनीयसंबन्धं सिद्धं कृत्वेत्यबद्धव्याख्यानं विधाय, "मेरुमन्दरयोः" इत्याद्युपरितनग्रन्थानुस्थितिवर्णनमप्ययुक्तम् । उपरि वक्ष्यमाणदूषणानुगुणं यथाश्रुतं स्वरसमर्थं स्वयं विसृज्य ग्रन्थानुस्थितिवर्णनायोगात् । अथ वक्तृतात्पर्याभावेऽपि अद्वैतिनामिहायं दूषणपरिहारप्रकार इति यद्युच्यते—तत् पृथगुच्यताम् । किं ग्रन्थस्यान्यथा व्याख्यानेन ? दूषणपरिहारप्रकारश्च न घटते । संबन्धस्यारोपितत्वेऽपि अनिर्वचनीयत्वास्वीकारात् । अनिर्वचनीयत्वेऽपि संबन्धस्य द्विष्ठताया

भवदिष्टत्वात् अनुयोगिरूपाधिष्ठाने प्रतियोगिरूपाधिष्ठाने च कश्चित् संबन्धोऽध्यस्त इति सुवचतया दृशिवत् दृश्यस्यापि सत्यत्वमेवोपपन्नमिति नातस्तन्मिथ्यात्वानुमानप्रसक्तिः। अनिर्वचनीयसंबन्धप्रतियोगित्वमनिर्वचनीयत्वसाधकमिति च प्रागेव परास्तम्। शुक्तिरजतादावप्यनिर्वचनीयत्वस्यानिष्टत्वात्। अथ दृश्यसद्भावे किं प्रमाणमिति चेत्—भवदिष्टनिर्विशेषदृशिसद्भावेऽपि न किञ्चित् प्रमाणमिति व्यक्तं शतदूषण्याम्। संबन्ध एव प्रतियोग्यनुयोग्युभयाभावेऽनुपपद्यमानः दृशिमिव दृश्यमपि कल्पयन् दृशिवदेव पारमार्थ्यमपि दृश्यस्य स्वीकारयति।

यदि च दृक्संबन्धाभावेऽपि दृश्यं प्रकाशते, तर्हि स्वयंप्रकाशत्वमवर्जनीयम्। तर्हि सर्वदा स्वप्रकाशोऽस्त्विति चेत्—चिन्मात्रीयानन्दांशस्येव तिरोधानं कल्प्यम्। अज्ञानकार्यं जडं प्रपञ्चमज्ञानमेव कथं तिरोदध्यादिति चेत्—स्वयप्रकाशत्वे समापतिते जडत्वं कुतः? कादाचित्कप्रकाशबलेन तिरोधाने सिद्धे तिरोधायकमज्ञानं वा भवतु, अन्यद्वा किञ्चित्, कार्येण कारणस्य सिद्धत्वात्। यत्तु कदापि न निर्विशेषतया स्वयं प्रकाशते, तत् स्वप्रकाशं चिन्मात्रमिष्यते; यत्तु कदाचिदपि प्रकाशते घटादि, तस्य तु तन्नेष्यत इति च विलक्षणमेतत्। स्वप्रकाशत्वे प्रपञ्चस्य चित इव ज्ञानरूपत्वापत्तिरिति चेत्—किमिदं ज्ञानत्वम्? यदि सविषयकत्वम्? तन्नापाद्यम्। चित्यपि दृश्यसंबन्धसुदूरायां तदभावात्। यदि प्रकाशरूपत्वम्? तत् स्वीकृतस्वयंप्रकाशत्वानतिरिक्तमिति नानिष्टापादानं तत्। तर्हि ज्ञानातिरिक्तविषयाभावात्, "नाभाव उपलब्धेः" इति दूषितयोगाचारमतप्रवेशः स्यादिति चेत्—कं प्रत्येतद्दोषापादनम्? न विशिष्टाद्वैतिनं प्रति। ज्ञानस्य तज्ज्ञेयस्य बाह्यस्य चोभयस्य तदिष्टत्वात्। न च योगाचारमतैक्यप्रसक्तिः। योगाचारो हि बाह्यं ज्ञेयमपलपन् ज्ञानमात्रमिच्छति। इदानीं तु—आन्तरज्ञानवत् बाह्यं ज्ञेयमपि बाह्यमेव सत् स्वप्रकाशत्वमात्रेण ज्ञानपदवाच्यं भवेत, यदि ज्ञानेन ज्ञेयस्य संबन्धो नेष्यते इत्युच्यते। तत्रास्त्येव वैलक्षण्यम्। एवमप्यैक्यमभिप्रेयते चेत्—तर्हि

भवन्तं प्रत्येव खल्विदमापादनम्, ज्ञेयस्य स्वप्रकाशतयैव सिद्ध्यावश्यकत्वेन ज्ञेयज्ञानतावादियोगाचारमतावैलक्षण्यं भवतः स्यादिति। वैधर्म्यसूत्रप्रस्तावश्च न प्रकृतोपयोगी। स विषयः प्रागेव परास्तश्च॥ सूत्रकारश्च, "न स्वप्नादिवत्" इति प्रथममुक्त्वा स्वाशयमुद्धाटयत्येवानन्तरसूत्रेण, 'न भावोऽनुपलब्धेः', इति।

यत्तूच्यते—दृश्यस्य संविद्वेद्यत्वं नाम दृश्याकारपरिणतान्तःकरणवृत्तिफलितचित्तादात्म्येनेति — तन्न — अनुमित्यादिस्थले अन्तःकरणवृत्तेः दृश्याकारेण परिणामे प्रमाणाभावात्। दृश्याकारत्वं हि दृश्यगतसंस्थानवत्त्वमिति। न च तादृशसंस्थानोत्पत्तौ किञ्चिन्नियामकम्। न च विना संबन्धं दृश्यं वृत्तौ स्वसंस्थानं जनयितुं प्रभवति। संबन्धान्तरस्वीकारे च, "अर्थेनैव विशेषो हि निराकारतया धियाम्" इत्युक्तनयेन घटवृत्तिः पटवृत्तिरित्यादेर्निर्वाहे आकारान्तरोत्पादकल्पना सौत्रान्तिकमत इव व्यर्था। न चान्तःकरणस्य बहिर्निर्गम्य कुल्याद्वारा क्षेत्रप्रसृतस्य सलिलस्येव विस्तरणे प्रमाणमस्ति। न च वृत्तौ चितिः प्रतिफलितुमर्हति, नीरूपत्वात्। "विज्ञातृपुरुषाभिमुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिस्रोतः प्रवर्तितं मुखसंयुक्तं मुखं ग्राहयत् दोषवशात् तद्देशतामनभिमुखतां च मुखस्याग्राहयत् पूर्वदृष्टाभिमुखादर्शोदकदेशतामाभिमुख्यं च मुखस्यारोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवति" इति लिखन्त्या भामत्यैव चैतन्यप्रतिफलनं प्रतिक्षिप्तमेव। न चान्तःकरणवृत्त्यवच्छिन्नं चैतन्यमित्यवच्छेदवादः। सत्यस्यानृतावच्छिन्नत्वरूपसंबन्धे प्रमाणाभावात्। न चान्तःकरणसंबन्धित्वेनाध्यास एवेहान्तःकरणसंबन्धित्वमिति सुवचम्; अन्तःकरणस्य घटादिग्रहकाले भानाभावात्। न च दृक्तादात्म्यं दृश्यस्य। सत्यानृतयोरत्यन्तभेदात्। तादात्म्यमित्यस्य परिभाषितोऽर्थोन्य इति चेत — स किमभेदघटितः, अघटितो वा? अन्त्यः सर्वथैवासम्भवी। आद्ये च भेदो दुर्घट इत्युक्तम्। दृश्ये दृशितादात्म्यभ्रम इति चेत् — भ्रमस्यैव दृश्येन साकं कः संबन्ध इति कथ्यताम्। तस्मात् प्रत्यक्षरमबद्धमेतत्।

अनुमानादिस्थले चितोऽसत्त्वापादकाज्ञाननिवर्तकवृत्त्यवच्छिन्नत्वमात्रम्, न तु विषयतादात्म्यं तस्येत्युच्यते। तत्र वृत्तेरज्ञाननिवर्तकत्वमेव कथम्? न हि प्रदीपः क्वचिदरोपितोऽस्तीति स्थलान्तरे तमसो निवृत्तिः। तदर्थे दृश्येन साकं वृत्तिसंबन्धः कश्चिद्वक्तव्य एव। तत्र यदि स सुवचः, सुवच एव तर्हि दृशोऽपि दृश्यसंबन्धः। दृशः सत्यत्वात् दृश्यस्यासत्यत्वाच्च स न भवतीति तु दृश्यमिथ्यात्वसिद्धेः प्रागिदानीं दुरुपपादम्॥

यत्तु — दृशो न दृश्यत्वम्, अखण्डाकारवृत्त्या आवरणनिवृत्तौ स्वयमेव प्रकाशादिति — तत्र वृत्तेः किमिदमखण्डाकारत्वं? निराकारे ब्रह्मण्यखण्डाकारा-योगात्। निर्विशेषब्रह्मविषयकत्वमेव चेत् — ननु वृत्तिरपि दृश्यान्तर्गता। तथा कथं दृशेः कश्चित् संबन्धः? अथ दृशेः किञ्चित्प्रति विषयत्वमस्ति, किञ्चि-द्विषयकत्वं तु नास्तीति चेत् — तदनुभवविपरीतमत्यन्तदूरं वा। दृश्यस्य खल्वयं स्वभावः, न दृशेः॥

यत्तु शतदूषण्यामपि दृग्दृश्यसंबन्धस्यानिर्वचनीयत्वमेव हृदयेनानुमन्यते, संज्ञाविशेषादेर्दुर्वचत्वस्याभिमतत्वादिति — तन्न — दुर्वचत्वाभिमत्यभावात्। विष-यविषयिभावादिपुरुषेच्छावशानेकसंज्ञासंभवस्यैवोक्तत्वात्। न च लक्षणाद्यनुक्ति-मात्रेण सदसद्विलक्षणत्वरूपानिर्वचनीयत्वप्रसक्तिः। न हीक्षुक्षीरगुडादिरसाः निर्वक्तुमशक्या अपि अनुभवदूराः अपलप्याश्च भवन्ति। आख्यातुमशक्यत्वे-ऽप्यर्थसत्यत्वमेव खल्वाह, "इक्षुक्षीरगुडादीनां माधुर्यस्यन्तरं महत्" इति। अनुभवसिद्धेऽर्थे लक्षणमेव त्वनपेक्षितम्। प्रत्यक्षदृष्टेऽर्थेऽनुमानशब्दादीनामन-पेक्षितत्वात्। यदि शतदूषण्यभिमतरीत्यैव दृग्दृश्यसंबन्धो भवदिष्टः, यदि वा स्वाभिमतमेव शतदूषण्युक्तमित्याशयः, सर्वथा न तत्र प्रत्युत्तरविधाने प्रयतनी-यम्। नानासंज्ञासंभवं दृग्दृश्यरूपानुयोगिप्रतियोगिकत्वं तत एव बाह्यसंबन्धवैल-क्षण्यम्, अतीतानागतादिप्रतियोगिकत्वं दृक्समसत्ताकत्वमेवमादिकमनेकमाकारं तस्य निर्बुवाणायां शतदूषण्याम्, अद्वैत्यभिमतमनिर्वचनीयत्वमेव सा मन्यत इति वचनमनार्जवकृतम्। उपरि खण्डनादिग्रन्थाश्च तत्राखण्डिषत।

यत्तु—संविद उपादानत्वात् उपादानत्वस्य च विवर्तविधयैव वक्तव्यत्वात् अन्यथा प्रपञ्चस्य भास्कराभिमतब्रह्मपरिमाणतापत्तेः शुक्तिरजतयोरिव संवित्प्रपञ्चयोर्विषमसत्ताकत्वात् दृश्यमिथ्यात्वमिति दृश्यमिथ्यात्वात् दृग्दृश्यसंबन्धो मिथ्याभूतः। न च मिथ्याभूतसंबन्धः सत्यप्रतियोगिको भवति, शुक्तावारोपितस्य रजतसंबन्धस्य मिथ्यारजतप्रतियोगिकत्वादिति—तन्न—लोके दृश्यमिति व्यवहारः जगत्कारणभूतां संविदमादायेति न कस्याप्यानुभविकम्। अतः संविदः कारणत्वमेव न सिद्धम्; नतरामुपादानत्वम्, नतमां विवर्तोपादानत्वम्। एवं दृग्दृश्यमिथ्यात्वे पूर्वमेव सिद्धे तत एव दृग्दृश्यसंबन्धे चाध्यवसीयमाने दृक्संबन्धबलान्मिथ्यात्वानुमानमिति संप्रत्युच्यमानमपि न घटते। आरोपितसंबन्धस्यानारोपितप्रतियोगिकत्वं लोहितः स्फटिक इत्यत्र परिभाषायुक्तमेवेति नैतदनिष्टम्। तर्ह्यन्यथाख्यातिः स्यात्, अनिर्वचनीयख्यात्यभावप्रसंग इति चेत्—नास्माकमिदमनिष्टम्। "इदं रजतमित्यत्र इदंरजततत्संसर्गविषयकैकज्ञानभङ्गापत्तेर्मीमांसाभिमताख्यातिमतप्रवेशापत्तिः। श्रीभाष्यानुयायिनामपीदमनिष्टम्" इति लेखनं तु सर्वथैवायुक्तम्। अख्यातिपक्षस्यैवास्माभिराश्रयणात्। यत्र विशिष्टज्ञानमेकं भ्रमस्थलेऽपि संभाव्यते—त्रिवृत्करणादिश्रुत्यनुरोधात्—तत्र परमनुभावानुरोधादेकं ज्ञानम्। अन्यत्र लाघवादख्यातिरेव। सर्वथा यथार्थं सर्वविज्ञानमिति **प्रकरणपञ्चिकोक्तं** मीमांसकमतमादृतमेवास्माभिः। अभिहितश्चाचार्यैरेव—"स्वारस्यमन्यथाख्यातौ अख्यातं लाघवं स्मृतम्" इति। तस्माल्लाघवोपेक्षायां लोहितः स्फटिक इत्यादाविव सर्वत्रान्यथाख्यातिरेवेति नानिर्वचनीयख्यातेरवकाशः। विशिष्य चेयं निराकरिष्यते।

यदपि—यदि दृश्यस्य सत्यत्वं स्यात् संवेदनसंबन्धाभावप्रसंग इति तर्कस्य विपर्ययपर्यवसानं दुर्वचमिति कथितोपरि समाधानम्—प्रतीयते चायं संबन्ध इति विपर्ययपर्यवसानं घटते। परिदृश्यमानसबन्धोपपत्तये दृश्यमिथ्यात्वमाश्रीयते। संबन्धानुपपत्त्या विश्वमिथ्यात्वमित्यर्थः। आरोपितसंबन्धानुप-

पत्तिवचनेन तत्प्रतियोगिनोऽप्यारोपितत्वमाक्षिप्तम् इति — तन्न — प्रतीयते चायं संबन्ध इति प्रतीयमानत्वेन स्वीकृतः संबन्धः किं संबन्धत्वेन प्रतीयते, उत विशेषरूपेण? अन्त्ये, किमाध्यासिकत्वरूपविशेषेण? उत, विषयविषयिभावादिरूपेण? अन्त्यप्रथमनानुभविकम्। दृश्यस्येव दृग्दृश्यसंबन्धस्यापि निर्विशेषब्रह्मज्ञानबाध्यत्वेनैवापारमार्थ्यस्वीकारात् व्यवहारदशायां तत्प्रतीतेराध्यासिकत्वगोचरत्वायोगश्च। यदीदानीमप्याध्यासिकत्वप्रतीतिः, तर्हि शुक्तिरजतादिवत् प्रातिभासिकत्वमेव स्यात्। एवञ्च दृश्यतत्संबन्धयोः समसत्ताकत्वं भवदिष्टं भज्येत। द्वितीये तु परसंमतसंबन्धविशेषस्वीकारात् न संबन्धानुपपत्तिरस्ति। पारमार्थिकसंबन्धानुपपत्तिरस्तीति चेत् — प्रतीतस्य विषयिविषयभावादिरूपसंबन्धस्य पारमार्थिकत्वानुपपत्तिरित्यत्रैव हि त्वदुक्तेः पर्यवसानम्। संबन्धविशेषस्य भासमानत्वापलापायोगात्। अस्तु तथैवेति चेत् — संबन्धपारमार्थिकत्वानुपपत्तिः, संबन्धिपारमार्थिकत्वानुपपत्तिसंबलितैव प्रमाणेन युगपज्ज्ञेयेति नैतदपारमार्थ्यस्य दृश्यापारमार्थ्यसाधकत्वम्। सामान्यरूपेणैव संबन्धभानमित्याद्यपक्षे तु सामान्यस्य सत्यत्वमिथ्यात्वसाधारणतया न मिथ्यात्वानुमापकतेति। आरोपितसंबन्धातिरिक्तसंबन्धानुपपत्तिरिति, आरोपितसंबन्धानुपपत्तिरिति च व्यामिश्रलेखनमपि न सुष्ठु। अनारोपितसंबन्धकल्पने परिणामवादापत्तिरिति च तदा स्यात्, यदि विषयग्राहिकाणां दृशां जगदुपादानस्य ब्रह्मणश्चैक्यमवतिष्ठेत — तत्तु लोकवेदविरुद्धमिति स्फुटम्। यत्तु दृशि दृश्यारोपो नान्यथाख्यातिः, दृश्यस्य कारणात्मनाऽवस्थानदशायामसन्निकृष्टत्वादिति — तत्रोच्यते — अन्यथाख्यातावारोप्यसन्निकर्षो नापेक्षितः। वस्तुतस्तु दृश्यप्रतीतिस्तावत् दृश्यरूपकार्यात्मनाऽवस्थानदशायामेव। तदा दृश्यं सन्निकृष्टमेव। चक्षुरादिसन्निकर्षसद्भावात्। दृशः सन्निकृष्टत्वमावश्यकमिति चेत् — तन्नास्तीति कथं सिद्धम्? घटोऽस्तीत्यादौ सन्मात्रस्य तस्य भानस्वीकारेण सन्निकर्षकार्थस्यापेक्षितस्याक्षतेः। "दूरस्थवनस्पत्योः संयोगभ्रमोऽपि चण्डमारुतोपक्षिप्तो व्याख्यातः"। इत्येतदप्ययुक्तम्। असन्निकृष्टत्वादन्यथाख्यातिर्न भवतीति व्रत

वक्तुं न शक्यते। दूरस्थत्वे सन्निकृष्टत्वं कथमिति चेत् — दूरस्थत्वं ह्यन्तरालाग्रहणप्रयोजकम्। न वनस्पत्योः चक्षुस्सन्निकर्षस्तेन निवारयिषितः। अतोऽक्षतं सन्निकृष्टत्वम्। तथा च तत्रैव दृग्दृश्ययोः पारमार्थिकत्वेऽपि संबन्धापारमार्थ्यसंभवात् संबन्धापारमार्थ्यमनैकान्तिकमिति॥

शतभूषणी च शतदूषण्युक्तं दूषणं हृदि निधाय, **तत्त्वदीपिका** खण्डनखण्डखाद्यादौ — संबन्धसामान्यं दुर्वचत्वात् खण्डितम्, तस्यैव समर्थनं कृत्वाचिन्तया प्रौढिवादमात्रमवलम्ब्याद्वैतसिद्धिलघुचन्द्रिकादौ कृतमिति लिखन्ती-यावद्दृश्यसत्त्वं तत्समसत्ताकः संबन्धोऽभ्युपेय एव। वृत्त्यवच्छिन्नचैतन्यरूपदृशोर्दृश्यस्य चानुभवसिद्धस्य संबन्धस्याप्रतिषेध्यत्वात्। यदा तु दृश्यं नास्ति, तदा दृश्यसंबन्धप्रसक्त्यभावात न तदात्वे संबन्धो निषेधनीयः, दृश्यस्थितिकाले चास्त्येव संबन्ध इति मन्यमाना, शुद्धदृशा सहैव प्रपञ्चस्य संबन्धायोगमभिप्रैति। तेन दृश्यस्य वृत्त्यवच्छिन्नचैतन्येन सह यादृशोऽनिर्वचनीयसंबन्धः, तादृशोऽपि मुख्यदृशा सह दुर्वच इति तदाशयः सिद्ध्यति। सर्वविधदृग्दृश्यसंबन्धखण्डनप्रवृत्तः सिद्धिकारोऽपि, "न च प्रमाणजातं स्वविषयावरणेत्युक्तया, दृग्विषयत्वरूपदृश्यत्वस्येहैव हेतूकरणेन च त्वयाऽपि विषयत्वं निर्वाच्यमेवेति वाच्यम्। तत्त्वतोऽनिर्वाच्यत्वेऽपि अध्यस्तत्वेन घटादिसमकक्ष्यनिर्वाच्यत्वस्य संभवात्" इति लिखन् विषयविषयिभावरूपं संबन्धं प्रपञ्चतुल्यमनिर्वचनीयं स्वीकृतवानेव। एवञ्च ब्रह्मणि चिदात्मके सर्वप्रपञ्चाध्यासवत् प्रपञ्चविषयकत्वस्याप्यध्यास इत्येवोक्तं भवति। तत्र दृश्यसत्यत्ववादिनः दृग्दृश्यसंबन्धमपि सत्यमातिष्ठन्ते, दृश्यासत्यत्ववादिनस्तु तत एव संबन्धमप्यसत्यमित्येतावति स्थिते—यद्यनिर्वाच्यसंबन्धो हेतूक्रियेत, तदा दृश्यमिथ्यात्वमनुमातुं शक्यम्। यदि निर्वाच्यसंबन्धः, तदा दृश्यसत्यत्वम्। यदि तु सामान्यतः संबन्धमात्रं हेतुः, तावता संबन्धिनं विना संबन्धायोगात् दृक्सबन्धरूपहेतुः संबन्धिनमेवाऽऽक्षिपेत्, न तु संबन्धिनः सत्यत्वमसत्यत्वं वेति दृश्यत्वान्मिथ्यात्वसिद्धिवचनमयुक्तमेव। मिथ्याभूतसंबन्धत्वेन हेतूकरणमशक्यमिति च सिद्धिकृतोऽपीष्टम्,

"न ह्यध्यस्तसंबन्धत्वेनाक्षेपकता, किन्तु संबन्धत्वेन" इति लेखनात् । वस्तुतः अध्यस्तत्वेन मिथ्यात्वेन विना सामान्यतः दृक्संबन्धज्ञाने सति ज्ञानस्य स्वतः प्रामाण्यात् पारामर्थ्यमपि ज्ञानान्तरन्यायेन गृहीतमेवेति दृक्संबन्धज्ञानं जातं सत्त्वेन दृक्संबन्धज्ञानरूपमेव । तच्च दृश्यसत्यतां प्रत्येव प्रयोजकमिति तस्य मिथ्यात्वप्रतिकूलत्वमेवेति च ध्येयम् । अपि च दृक्संबन्धत्वेन सामान्येन रूपेण तस्य हेतुत्वे, यदि दृश्यस्य सत्यत्वं स्यात् दृग्दृश्यसंबन्धोऽनुपपन्नः स्यादिति सामान्येनानुपपत्तिवचनं कथम्? अध्यस्तसंबन्धस्योपपन्नत्वात् । अतः पारमार्थिकसंबन्धोऽनुपपन्न इति वा अपारमार्थिकसंबन्धोऽनुपपन्न इति वा वक्तव्यम् । तत्र नाद्यः; तर्कस्य विपर्ययपर्यवसानरूपाङ्गविशिष्टत्वध्रौव्याद्विपरीतसिद्धेः । यदि दृश्यं सत्यं स्यात्, दृग्दृश्यपारमार्थिकसंबन्धोऽनुपपन्नः स्यात् । यतः पारमार्थिकसंबन्धोऽस्ति,अतो दृश्यं मिथ्येति किल विपरीतपर्यवसानरीतिः । न च पारमार्थिकसंबन्धो भवदिष्टः । न च तादृशसंबन्धस्य मिथ्यात्वसाधकत्वं भवदिष्टम् । न च तत् संभवति । नान्त्यः; अपारमार्थिकसंबन्धोऽनुपपन्न इति वचनमपारमार्थिकत्वस्य संप्रतिपन्नत्वादेव न युक्तमित्युक्तत्वात् ॥

अथ दृशि प्रपञ्चस्याध्यास इति वदता किमध्यासरूपारोपविषयः कश्चित् संबन्ध इष्यते, उताध्यास एव संबन्धः? आद्ये संबन्धिद्वयसत्यत्वेऽपि स्फटिकलौहित्ययोरिव संबन्धस्यारोपसंभवान्न ततो दृश्यमिथ्यात्वमित्युक्तमेव। अन्त्येऽध्यासस्य कः प्रपञ्चेन दृशा च संबन्धः? न हि विषयविषयिभावः, तदनङ्गीकारात् । अन्यथा दृक्प्रपञ्चयोरेव तदुक्तिसंभवात् । अध्यासस्य संबन्धोऽध्यासान्तरमिति चेत्-अनवस्था । 'वृत्त्यवच्छिन्नचैतन्यरूपज्ञानेऽवच्छेदिकायाः वृत्तेर्जडायाः अध्यस्तत्वेऽप्यवच्छेद्यस्य चैतन्यस्य प्रकाशरूपस्यानध्यस्तत्वेन तत्र दृश्यस्यानध्यासान्नानवस्था'इति सिद्धिग्रन्थो नेमामनवस्थां परिहर्तुं प्रभवति । अध्यासो हि वृत्तिविशेषावच्छिन्नचैतन्यम् । तत् किं सत्यमुतासत्यम्? नाद्यः, अपसिद्धान्तात् । शुद्धचैतन्यं विहायान्यत् किञ्चिदुपहितं

चैतन्यमचैतन्यं वा सर्वं मिथ्येत्येव हि भवद्भिरुच्यते। नान्त्यः, तस्य दृशि संबन्धस्य दुर्वचत्वात्। वृत्त्यवच्छिन्नचैतन्यघटकं विशेष्यं चैतन्यं ब्रह्मैवेति पारमार्थ्यपक्षेऽपि तस्याध्यासपदार्थस्य दृशा संबन्धः, प्रपञ्चेन दृश्येन संबन्धश्च पुनर्दुर्वच एव। अथ वृत्तिमात्रमध्यास इति चेत्—तस्याः प्रपञ्चविषयकत्वमेव कथम्? वृत्तिप्रपञ्चयोरिष्टः संबन्धो दृक्प्रपञ्चयोरेवेष्यताम्। एवं वृत्तेर्दृशश्च कः संबन्धः? घटोऽस्तीति सद्रूपचितो विषयत्वात् विषयत्वमेवेति चेत्—एवं सत्यमिथ्यासाधारण्येनानुभविके विषयत्वे सति कथमसंबन्धवर्णनम्। एवं वृत्त्यवच्छिन्नचैतन्यतादात्म्यमेव दृशोरित्युक्तावपि तदपेक्षया वृत्त्यवच्छिन्नत्वमेव संबन्ध इत्येवालम्; तदप्यवच्छिन्नत्वं विविच्यमानं दुर्निरूपमेव। न चानिर्वचनीयवादिनां दुर्निरूपत्वं साधकमेवेति वाच्यम्—एवं तर्हि ब्रह्मलक्षणस्य कारणत्वस्य सत्यत्वज्ञानत्वानन्दत्वादेः सर्वस्यापि दुर्निरूपतया ब्रह्माप्यनिर्वचनीयमापद्यते। इक्षुक्षीरगुडादिरसानामप्यभावः स्यात्। अथ सत्त्वेऽप्यनिर्वाच्यत्वोपपत्तेः न तावन्मात्रेण मिथ्यात्वम्। आकारान्तरनिर्वचनाभावेऽपि अनुभूततया सत्त्वेन निर्वक्तुं शक्यत्वेच मिथ्यात्वं न भवति। लक्षणा निरुक्त्यादिकं तु मिथ्यात्वबाधकानुपलब्धौ मिथ्यात्वसाधकमाने वा सति मिथ्यात्वं स्यादित्युच्यते इति चेत्—न; सत्त्वस्यैव दुर्निरूपत्वे सत्त्वेन निर्वक्तुं शक्यत्वस्यानिर्धारणात्। बाधकानुपलब्ध्या साधकमानेन च मिथ्यात्वे सिषाधयिषिते लक्षणानिर्वचनादिखण्डनप्रयासस्य खण्डनादिपरिगृहीतस्य व्यर्थविस्तररूपत्वात्। मिथ्यात्वसाधकमानस्यानुमानरूपस्यैवाद्य विचारदशापन्नत्वात् तत्सद्भावकथनायोगात्। श्रुतेश्च मिथ्यात्वसाधिकाया अन्यत्र प्रतिक्षिप्तत्वात्। अतोऽद्वैतसिद्ध्युक्तं सर्वमेवमसाधकमिति सिद्धम्॥

शतभूषण्यनूदित ब्रह्मसिद्धितद्व्याख्याग्रन्थतोऽप्येतावदेव निष्कृष्यम्। दृग्वत् दृश्यस्यापि पार्थक्ये संबन्धो दुर्वचः। भिन्नयोस्तादात्म्यायोगात्। संयोगादेश्चाननुभवात्। न च दृशोरर्थस्य चैकान्तःकरणसङ्क्रान्त्या दृग्दृश्यसंबन्धः। शुद्धायाश्चितः अन्तःकरणसङ्क्रमेऽपि करणवत् परिणामायोगात्। निष्क्रिय-

तया सङ्क्रमाभावाच्च । अन्तःकरणरूपजडसङ्क्रम एव शुद्धायाश्चितः कथमिति विचार्यत्वाच्च । ननु शब्दार्थयोर्वाच्यवाचकभाववत् दृग्दृश्ययोःग्राह्य-ग्राहकभावे संबन्धेऽनुभूयमाने कथं तन्निषेध इति चेत्—सत्यमनुभूयते । बिम्बप्रतिबिम्बस्थल इव वस्त्वैक्ये सत्येव स उपपादनीयः । चितः वस्तुग्रहण-रूपविलक्षणक्रियायाः शब्दार्थस्थले वचनक्रियया इवादर्शनादिति । अत एव, "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" इति श्रुतिरिति ॥

अत्रेदं समाधानम्—भवतां मते आत्मविज्ञानात् पूर्वमेव प्रपञ्चस्य दृश्यमानतया सर्वस्य विज्ञातता, न त्वात्मनि विज्ञाते । तस्मिन् ज्ञाते तु सर्वस्य विलोपितत्वान्न किञ्चित् ज्ञायते । आत्माऽप्यथ न ज्ञास्यते । स्वयंप्रका-शत्वरूपं चेत् ज्ञातत्वं विवक्षितम्, तत् सर्वदैवास्तीति 'आत्मनि विज्ञाते' इति कादाचित्कता प्रतीयमाना बाध्येत । तथा सति आत्मना चिता सर्वं जड-भूतं भास्यत इत्येतावान् अर्थः स्यात् । तेन दृग्दृश्यसंबन्धोऽस्तीत्येव श्रुत्या बोधितं स्यात् । ज्ञानस्य विषयग्रहणरूपक्रिया नास्तीत्यपि वार्तम् । ज्ञानं विषयं गृह्णातीति, शब्दोऽर्थं वक्तीतिवत् क्रियाप्रतीतेरानुभविकत्वात् । निर्वि-कारायां चिति कथमिदामिति चेत्—तर्हीयं सविकारा चित् ततोऽन्येति मन्यताम् । अत एव धर्मभूतज्ञानमन्यदिति वयम् । अपि च ज्ञानं स्वतो निर्व्यापारमपि इन्द्रियव्यापारादिसहकारिसमवधानबलात् वस्तु विषयीकरोतीति यथानुभवमेष्टव्यम् । अनुभवापलापे संयोगोऽपि संबन्धो दुर्निरूप एव । संबन्धसामान्यानुपपत्तिवादिना तु स्ववाक्यगतपदार्थमिथोऽन्वयस्य दूष्यदूषण-भावादेश्चानुपपन्नतायाः संमन्तव्यतया सर्वोच्छेद एवेति न, विमतं मिथ्येत्याद्य-नुमानाद्यवकाशः । तत्रापि संबन्धानुपपत्तेरित्येवालम् । किमिति दृग्दृश्य-संबन्धानुपपत्तेरिति कथनम् ? एवं संबन्धसत्त्वाद्विमतं मिथ्येति विपर्यये पर्यवसानञ्च दुष्करम् ।

किञ्चाद्विष्ठत्वाद्विषयविषयिभावादिकं संबन्धमस्वीकुर्वता कार्यकारण-भावोऽपि त्याज्यः । तथा च कथं ब्रह्मप्रपञ्चविषये उपादानोपादेयभावात्मक-

विवर्तवादस्य प्रसक्तिरिति तन्मूलकमिष्टं कारणात्कार्यस्यान्यत्वाभाव इत्याद्यपि दुर्वचं भवेत्। अपि च संयोग एकः संबन्धो भवेत्, द्विष्ठत्वात्, न त्वन्य इति वदन् दृग्दृश्यसंबन्धमपि न निषेद्धुमर्हति। अस्यापि प्रायः संयोगरूपत्वात्। भवति हि दृश्यस्य प्रकृतिप्राकृताद्यात्मकस्य सर्वस्य दृशा द्रव्येण संयोगः। प्रदीपादिप्रभावत् ज्ञानमप्यात्मगतं द्रव्यं सङ्कोचविकासाद्यवस्थाश्रयभूतमिन्द्रियादिप्रणालिकया निःसृत्य विषयेण संयुज्यते। तत्र प्रत्यक्षत्वानुमितित्वादिकं सामग्रीभेदायत्तं वैलक्षण्यम्। यानि तु द्रव्याश्रितानि तेषु दृशः कः संबन्ध इति चेत्— द्रव्यस्य तेषां च मिथः संबन्धः कः। आधाराधेयभावस्याद्विष्ठत्वादनङ्गीकारात्। समवायस्य वेदान्तिभिरनभ्युपगमात्। अथ संबन्धाभावात्तेषां मिथ्यात्वमस्त्विति चेत्— तावता न प्रपञ्चापलापः। द्रव्यस्य स्वीकारात्। अस्तु तादात्म्यं गुणगुणिनोरिति चेत्—तर्हि दृशस्तेषाञ्च स्वसंयुक्तद्रव्यतादात्म्यमेव संबन्धोऽस्तु। तद्घटकयोः संयोगतादात्म्ययोः संबन्धत्वसंमत्या विशिष्टस्यापि संबन्धत्वोपपत्तेः। सर्वथा द्रव्यविषये न तदपलापप्रसक्तिः। अतीतानागतद्रव्यविषये कथं संयोग इति चेत्—सत्कार्यवादिनामवस्थानामेव कादाचित्कतया द्रव्यस्य त्रैकालिकतया न तत्र साक्षादतीतत्वानागतत्वे भवितुमर्हतः। तर्हि तत् द्रव्यं ब्रह्मैवेति चेन्न—"नित्यो नित्यानां चेतनश्चेतनानाम्", "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि", "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते", 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते', 'अक्षरे परमे व्योमन्' इत्यादिना अन्येषामपि, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्यवगतनित्यभावब्रह्मतौल्यश्रवणात् त्रैकालिकं यत्, तत् ब्रह्मैवेति निर्णयायोगात्। सर्वथानुपपत्तौ खलु तेषां मिथ्यात्वं शङ्कनीयम्। भवत्येव संयोगः संबन्ध इति न यौक्तिकबाधोऽपि॥

यदि मन्येत— ब्रह्मरूपां दृशमादायैव सर्वनिर्वाहे दृगन्तराणि न स्वीकार्याणि। ब्रह्मणोऽपि दृश्येन साकं कार्यकारणभावरूपः संबन्ध एष्टव्यः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वाहाय। तथा च तदतिरिक्तसंबन्धो

नापेक्षितः। स चोपादनोपादेयभावः विवर्तात्मा। तेन शुक्तिरजतादिवन्मिथ्यात्वं दृश्यस्य सिद्धमिति—तर्हि उपादानोपादेयभावसंबन्धानुपपत्त्या मिथ्यात्वाभिमतौ दृक्कार्यत्वादिति हेतुः प्रयोक्तव्यः; न तु दृश्यत्वादिति। विवर्तवादस्योपरि दूषयिष्यमाणत्वात्, रजताद्यनुपादाय मृगतृष्णादिदृष्टान्तप्रदर्शिश्रुतिविरोधात् अनेकनित्यपदार्थग्राहिपूर्वोक्तानन्तश्रुतिविरोधाच्चायुक्तमेतत्। अनुमानात् प्रागेव ब्रह्मातिरिक्तसर्वाभावे सिद्धे तु मिथ्यात्वानुमानमनपेक्षितमेव॥

यत्तु—जीवं प्रति प्रकाशप्रतिबन्धकनिरासमात्रार्थं धर्मभूतज्ञानमिति—नैतत् विशिष्टाद्वैतिसंप्रतिपन्नत्वेन सुवचम्। न हि चक्षुरालोकप्रदीपप्रकाशादितुल्यत्वं धर्मभूतज्ञानस्य। साक्षात् वस्तुव्यवहाररूपप्रकाशकारणत्वाच्च न प्रकाशप्रतिबन्धकनिरासमात्रार्थता। यदि धर्मभूतज्ञानेन प्रतिबन्धे कस्मिंश्चिन्निरस्ते आत्मरूपं ज्ञानं प्रकाशं स्वयं जनयतीति स्यात्, तदेत्थं स्यात्। न चैतदस्ति। आत्मनो यावदंशप्रकाशकत्वं स्वतः, तावदंशप्रकाशे धर्मभूतज्ञाननैरपेक्ष्यस्य सार्वकालिकत्वात्। अधिकांशप्रकाशे तु साक्षात् धर्मभूतज्ञानमेव कारणम्। न तु प्रतिबन्धकनिरासमात्रे। भवन्मतेऽपि वृत्तिरावरणभङ्गार्थेति कथम्? किं चैतन्यांशस्य आवरणभञ्जनं वृत्त्या क्रियते, उत घटादिविषयस्य? नाद्यः, तस्य स्वयंप्रकाशत्वात् सर्वदा स्फुरणात्। आनन्दांशो न स्फुरतीति चेत्—न स तर्हि स्वयंप्रकाशः। घटादिवृत्त्या तदंशस्फूर्तिरपि न लक्ष्यते। घटादिरूपविषयावरणभञ्जनमेव वृत्तिकार्यमिति चेत्—तदपि न—विषयस्याज्ञानकार्यतया तदभिन्नत्वात् अज्ञानस्याज्ञानेनाऽऽवरणास्वीकारात्।

किं बहुना—अन्ततः शोधने भवद्भिरेवमेव वक्तव्यम्। विमतं मिथ्या अध्यस्तत्वादिति। तत्रासिद्धिशंकायाम्, विमतं दृश्यध्यस्तं प्रकारान्तरेण दृगसंबन्धित्वे सति दृक्संबन्धित्वादित्येव वक्तव्यम्। तत्र प्रथमप्रयोगे अध्यस्तत्वमात्रं हेतुः। न तु दृश्यध्यस्तत्वम्; व्यर्थविशेषणत्वात्। शुक्तिरजतादौ दृश्यध्यस्तत्वस्य लोकतोऽसिद्ध्या साधनवैकल्यशङ्कापत्तेश्च। दृश्यध्यस्तत्वं तु उत्तरप्रयोगावसेयम्। ततः

पूर्वहेत्वसिद्धिपरिहारश्चेति—नैतत् युक्तम्—दृश्यध्यासे दृक्पदेन वृत्तिज्ञानग्रहणे घटो ज्ञानमिति प्रयोग आपद्यते। आत्मभूतचैतन्यग्रहणे च अहं घट इति। अथ तादात्म्येनारोप एव तथापत्तिः, न त्वन्यथेति चेत्, तर्हि येन संबन्धेनारोपः, स कः? घटं जानामीति द्वितीयावगतं कर्तृत्वं विषयविषयिभावरूपमिति चेत्—तर्हि तस्मिन् संबन्धे सति प्रकारान्तरेण दृगसंबन्धित्वरूपविशेषणासिद्धिः। निर्विषये चैतन्ये कथं विषयविषयिभावः। तादृशचैतन्यातिरिक्ता च दृक् नास्तीत्यादिकं तु स्वमतसिद्धवत्कारमूलकं स्वगोष्ठीमात्रविश्रान्तं न परप्रत्यायनायोपयुज्यते। आगमादेरन्यविधार्थपरत्वस्यैवान्यैरवधारितत्वादित्यन्यत्र विस्तरः॥

नित्यानेकस्वप्रकाशात्मधर्म-
स्यास्तुज्ञानस्याप्यसत्यार्थपूर्णम्।
ज्ञानानन्दं ज्ञानशक्तिप्रकर्षात्
सर्वं हेतुं श्रीनिवासं श्रितोऽस्मि॥

शुभमस्तु

श्रीः

# बाह्यप्रकाशानुपपत्तिप्रसाधनम्

जयन्ति सन्तः सदसद्विवेकवित्ताः प्रसादाहितसर्ववित्ताः ।
यदन्तरङ्गं श्रयदन्तरङ्गसूरिव्रजस्येशितुरस्ति रङ्गम् ॥

दृग्दृश्यसंबन्धानुपपत्तिमानिभिः दृशि ब्रह्मणि दृश्यस्य सर्वस्य आध्यासिकमेव संबन्धमभिप्रयद्भिः दृशि कथ्यमाना येयं दृश्यकल्पना, सोऽयं दृश्यानुभवः दृङ्निष्ठ एवान्ततः तैराशयितव्यः । तच्च ब्रह्मण्यज्ञानानुभवासंभवोपपादकेन भाष्येणैकहेलयैव निरस्तमिति निरूपयिषया प्रवृत्य, "अनुभूतिसद्विशेषयोश्च विषयविषयिभावेन" इति भाष्यव्याख्यारूपं दृग्दृश्यसंबन्धानुपपत्तिवादमनु अनुभूतेरननुभाव्यत्वनिरासकभाष्यविवरणरूपात् अवेद्यत्वभङ्गवादात् प्राक् वादद्वयमन्तर्भावितं शतदूषण्याम् । तत्र प्रथमे बाह्यप्रकाशानुपपत्तिवादे शतभूषणीसंभ्रमः प्रसृतः संप्रति परिह्रियते ॥

ब्रह्मणो नित्यमुक्तत्वात् स्वप्रकाशत्वात् चैतन्यैकस्वरूपत्वाच्च नाज्ञानानुभवितृत्वसंभव इत्यज्ञानानुभवासंभवभाष्यमज्ञानकार्यसर्वानुभवस्याप्यसंभवाभिप्रायम् । तत्राज्ञानाननुभवे उपपादिते बाह्यसर्वाननुभवोऽप्युपपादित एव भवति । अत्र शतभूषणी—निर्विशेषचिन्मात्रस्य ब्रह्मणः अज्ञानं प्रति आश्रयत्वं विषयत्वं च विवरणमत एवेष्टम् । अथापि ब्रह्मसिद्धिकारादिभिर्जीवानामेवाज्ञानाश्रयत्वमभिहितम् । जीवब्रह्मणोरेकत्वेऽपि जैवरूपेणैवाविद्याश्रयत्वात् अविद्याद्यनुभवादिकं जीवानामेवेति न नित्यमुक्ते ब्रह्मणि तत्प्रसक्तिरिति । तथा च ब्रह्मण्यज्ञानानुभवाद्यसंभवोपपादने इष्टापत्तिरिति शतभूषण्याशयो वाच्यः । अत्रोच्यते—अज्ञानं ब्रह्माश्रितं वा जीवाश्रितं वेति विचारोऽन्यः । स च ब्रह्माज्ञाननिरासवादेनानन्तरेण, जीवाज्ञाननिरासवादेन च चत्वारिंशेन करिष्यते । तत्र ब्रह्मसिद्धिकारेण यावदुक्तं शतभूषण्यामप्यनुवदिष्य-

माणं चत्वारिंशवादे, तावदपि श्रीभाष्ये आरम्भणाधिकरणे तथैव ब्रह्माज्ञान-वादिमुखेनैवानूदितं निरस्तञ्च। विशिष्य चात्र चत्वारिंशे आचार्यैरपीति अत्र ब्रह्मसिद्धिकारपक्षप्रस्तारेण वादवर्धनं वृथेति तमंशं तत्रैव शोधयिष्यामः। अत्र पुनरिदं पृच्छामः—भवता ब्रह्मणः किं जैवरूपं विना स्वरूपेणाज्ञानानु-भवितृत्वमस्तीति विवरणमतमिति मन्यते, उत ब्रह्मसिद्ध्यादिवत् जैवरूपे-णैवेति। आद्ये श्रीभाष्ये चात्र च ब्रह्मण्यज्ञानानुभवासंभवोपपादनं नास्थाने। अन्त्ये, किमिति भवता ब्रह्मसिद्धिकारपक्षोपन्यासविस्तरेण जीवा-नामेवाज्ञानानुभवादिसंसारित्वोपपादनम्। यदि च, "ब्रह्माश्रिताज्ञानपक्षस्य ब्रह्माज्ञानाननुभववादस्य च न कोऽपि संबन्धः", तर्हि ब्रह्मसिद्धिकारोक्त-नानाजीवाश्रितनानाविद्यावादस्य क इह संबन्धः? विवरणकारोऽपि ब्रह्मणः अज्ञानाश्रयत्वं तद्विषयत्वमपि स्वीकुर्वाणोऽपि तदनुभवनं जैवरूपविशिष्ट एव यद्युररीकुर्यात्, वृथैव हि जीवाश्रयाविद्याविचार इह। यदि पुनरविद्याश्रयत्वं शोध्यमानमविद्यानुभवितृत्व एव पर्यवसास्यति, ब्रह्मण्यज्ञानानुभवासंभवोपपादन-मास्माकग्रन्थकृतमुपपन्नं संगतमेव। न च ब्रह्मसिद्धिकारस्वीकृतत्व एव स पक्षः खण्डनीयः, न तु विवरणकारस्वीकृतत्वे इति नः पक्षपातः। यदि च विवरणोक्तमयुक्तमित्यभिमत्य ब्रह्मसिद्धिपक्ष एव भामत्यादिपरिगृहीतत्वादादर-णीय इत्यर्वाचां भवतामाकूतम्, तर्हि समनन्तरः ब्रह्माज्ञाननिरासवादो भवद्भिः शिरोवाहं श्लाघनीय इति तद्वादपरीक्षणप्रवृत्तिरेव न युक्ता, यथा निष्प्रपञ्ची-करणनियोगवादादिविषये। अथ डोलायमानमानसैरुभयमपि गृहीतपरित्यक्तमेव क्रियमाणम्, तर्ह्यत्र ब्रह्मसिद्धिकारपक्षवीक्षणं न दूषणान्मोचयिष्यतीति॥

अज्ञानाद्यनुभवो जीवानाम्; न तु नित्यमुक्तब्रह्मण इति वदद्भिः को जीव इति वक्तव्यम्।

तत्र, यत्र भवत् चित्प्रतिबिम्बमीश्वरः तस्या मायायाः प्रदेशेष्वेवाविद्या-शब्दवाच्येषु भवन्तश्चित्प्रतिबिम्बा एव जीवा इति **प्रकटार्थविवरणकारः**। मायाविद्याभेदवादी **तत्त्वविवेककारः**। एकैव मूलप्रकृतिर्विक्षेपप्राधान्येन

मायेति, आवरणप्राधान्येनाविद्येति व्यपदिश्यमाना यथाक्रममीश्वरजीवोपाधिरित्यपि किञ्चिन्मतम्। अविद्याप्रतिबिम्ब ईश्वर इति कृत्वा अन्तःकरणप्रतिबिम्बमेव जीवं मन्यते संक्षेपशारीरककृत्। योगिनः एकस्यैव कायव्यूहे नानान्तःकरणविशिष्टनानाकायाधिष्ठानस्य भाष्यादिसिद्धत्वात अन्तःकरणप्रतिबिम्बजीवत्वपक्षे तत्रापि जीवभेदापत्तेरज्ञानप्रतिबिम्ब एव जीवः। ईश्वरस्तु न प्रतिबिम्बः, किन्तु बिम्बभूत इति विवरणानुसारिणः। अचाक्षुषस्य प्रतिबिम्बायोगात् अवच्छेदवाद एव युक्त इत्यन्तःकरणावच्छिन्नं चैतन्यमेव जीवः। न च भुवि कर्तृत्वावस्थायामन्तःकरणावच्छिन्नचैतन्यप्रदेशात् दिवि भोक्तृत्वदशायामन्तःकारणावच्छिन्नः प्रदेशो भिन्न इति अकृताभ्यागमकृतविप्रणाशप्रसङ्ग इति वाच्यम् — एकान्तःकरणावच्छिन्नप्रदेशत्वरूपसामान्यपुरस्कारेणैकजीवत्वमिति समर्थनेनादोषात्। अस्तु वा अविद्यावच्छिन्नं चैतन्यं जीव इति चावच्छेदपक्षरुचयः। **परिमले** (1-1-4) च,

" इत्थं सत्संप्रदायाध्वप्राप्तयोः पक्षयोर्द्वयोः।
समर्थनं यथाबुद्धि कृतं प्रीत्यै विपश्चिताम्॥"

इति पक्षद्वयमपि समर्थितम्। अत्र प्रतिबिम्बजीववादे बिम्बप्रतिबिम्बयोः वस्तुतो भेदोऽस्ति न वा। आद्ये प्रतिबिम्बधर्माणामौपाधिकानां बिम्बे प्रसक्त्यभावः संभाव्यते। परं तु प्रतिबिम्बानामुपाध्यधीनस्थितिकानामुपाधिनाशे नाशात् जीवनाश एव मोक्ष इति वक्तव्यम्। न चैतत् युक्तम्। न हि नाशो मोक्ष इति चैकं तत्त्वम्। बद्धस्य बन्धं विना स्थितेरेव मोक्षशब्दार्थत्वात्। अहं मुक्तः स्यामिति च मुमुक्षुप्रवृत्तिरानुभविकी। किञ्च प्रतिबिम्बस्य भिन्नत्वे तत्त्वमसीति वाक्यप्रतिपाद्यमेकत्वं नोपपाद्येत। तथा च 'यदर्थमयमारम्भः तत्कार्यमवसादितं' भवति। महावाक्य तात्पर्यविषयैक्यनैर्भर्येण ह्यद्वैतं रोचयन्ते। यद्यद्वैतवादेऽपि तत्रैक्यप्रत्यायनायोगः, अन्यथैव वर्णनं च, तदा किमद्वैताभिनिवेशेन? अतो बाधार्थसामानाधिकरण्यपक्षाश्रयणमद्वैतत्याग एव। यदि तु भामत्यां दर्पणप्रतिहतचाक्षुषरश्मिभिर्यथावस्थितमुखग्रहणे प्रतिबिम्बव्यवहार इति

प्रतिबिम्बस्यैवासद्भावकथनात् जले सूर्यप्रतिबिम्ब इत्यस्य जलोपाधिकप्रतीतिविषय-सूर्य इत्येवार्थ इतिरीत्या अन्तःकरणोपाधिकभानावच्छिन्नं चैतन्यमेव प्रतिबिम्बपद-विवक्षितो जीव इत्याशयः, तदा अवच्छेदवादसमानगुणदोषोऽयमपि पक्षः।

तत्र ब्रह्मसिद्धौ, 'मणिकृपाणाद्युपाधिगतश्यामत्वह्रस्वत्वादीनां यथा न बिम्बे संभवः, किन्तु प्रतिबिम्बमात्रे। कुतः उपाधेः प्रतिबिम्बपक्षपातित्वात् ?—तथा जीवेष्वेवाज्ञानतदनुभवसुखदुःखादी'ति कथनात् जीवानामविद्याप्रतिबिम्ब-त्वमिष्टम्। भवता पुनरवच्छेदपक्षे एव ब्रह्मसिद्धिमपि तिष्ठापयिषुणा प्रतिबिम्ब-स्थल इव ब्रह्मणि अज्ञानाद्यनुभवाद्यसंभवकथनमात्रे ग्रन्थतात्पर्यम्। न त्विह प्रतिबिम्बवाद इति चत्वारिंशवादे वक्ष्यते। अतः जीवो नाम अविद्यावच्छिन्नं चैतन्यम्। तत्राविद्यानां नानात्वात् घटमणिकशरावाद्यवच्छिन्नाकाशप्रदेशभेद-वत् तत्तदविद्यावच्छिन्नजीवभेद इति स्थितम्। तत्राविद्यावच्छिन्नब्रह्मण्यज्ञाना-नुभवितृत्वमित्यस्य किमविद्यायामनुभवितृत्वमस्तीत्यर्थः, उत ब्रह्मणीति। न हि अविद्याब्रह्मोभयातिरिक्तं किञ्चिदस्ति। योऽप्यविद्यायाः प्रकृतब्रह्मणश्च संबन्धः स संबन्धिस्वरूपात्मक इति पूर्वोक्तविकल्पान्तर्भूत एव। तत्राविद्यायाः अज्ञा-नानुभवितृत्वमयुक्तम्, अचेतनत्वात्। अज्ञानस्य ज्ञाननिवर्त्यत्वात् सामाना-धिकरण्यमावश्यकमिति च नाज्ञानानधिकरणेऽविद्यायां ज्ञातृत्वप्रसक्तिः। अपि चाज्ञानानुभवो नाम साक्षिचैतन्याधीनः अज्ञानप्रकाशः। न च सोऽविद्यानिष्ठः; किन्तु अज्ञानविषयकः। तदाश्रयत्वं चात्मन एव वक्तव्यम्। एवञ्च जीवस्या-ज्ञानानुभवितृत्वपक्षेऽपि जीवशब्दार्थघटकचैतन्यांश एवाज्ञानप्रकाशरूपानुभवा-श्रयत्वस्य वक्तव्यत्वात् आत्मनो ब्रह्मणोऽज्ञानानुभवाद्याश्रयत्वे नित्यमुक्तत्वं कथम्, नित्यमुक्तत्वेष्टौ चाज्ञानानुभवादिरूपं संसारित्वं कथमिति शतदूषणी-प्रश्नस्तदवस्थ एव।

अथावच्छेदवादेऽपि कतिपयप्रतिबिम्बवादिपक्ष इवाविद्यावच्छिन्नचैतन्य-रूपो जीवः ब्रह्मापेक्षया भिन्न एवेत्यास्थीयेत, तर्हि तत्त्वमसिवाक्यार्थवर्णना-दाक्सामञ्जस्यमिति प्रागेवोक्तम्। किञ्चाविद्यावच्छिन्नचैतन्यात्मको जीवो ब्रह्मणो

भिन्नः सत्यश्चेत्, अद्वैतासिद्धिः; असत्यश्चेत्, स कदा केन कल्पितः? अकल्पितश्चेत्, नासत्यस्स्यात्। ब्रह्मणश्च शुद्धस्य न कल्पकत्वसंभवः। तदतिरिक्तो यः कल्पकः, तत्रापि सत्यासत्यविचारे पूर्वोक्तदोषस्य तथैवावतारः। स्वेनैव स कल्पित इति चेत्—कल्प्यमानवस्त्वतिरिक्तकल्पकपुरुष-कल्पनाकारणाद्यभावेऽपि कल्प्यमानसिद्धिस्वीकारे लोकेऽपि सर्वं कल्प्यमानमेवं निरपेक्षं सेद्धुमर्हति। अनादिभूतत्वात् स्वयं कल्पकनिरपेक्षमिति चेत्—किमिदं प्रवाहानादित्वम्, उत मुख्यम्? आद्ये, आमोक्षात् प्रतिजीवं स्थैर्यं सर्वसंमतं न सिद्ध्यतीत्यपसिद्धान्तः। अन्त्ये, कल्पितत्वमनादित्वञ्च व्याहतम्। यदि चानुभवविरोधमपि सोढ्वा कल्पितस्यानादित्वं कल्पकान्तरनिरपेक्षत्वञ्च मन्यते, तथाऽधिष्ठानं विनाऽपि कल्पनं कामं स्वीक्रियेत। ततस्तदविशेषात् सर्वत्र निरधिष्ठानभ्रमानुज्ञानप्रसङ्गात् शून्यवाद एवावतारितः स्यात्। कल्प्यकोटिनिविष्टतयेश्वरस्यैव मिथ्यात्वे तत्प्रवर्तितं वेदाख्यं शास्त्रमपि तथैवेत्यप्रमाणतया किमपि न सिद्ध्येत्। दिष्ट्या तु भवता ब्रह्मसिद्ध्याद्यनुसारेण जीवब्रह्मणोरैक्यमेवोररीकृत्य जीवरूपेण ब्रह्मैव अज्ञानादिकमनुभवति, स्वरूपतस्तु नित्यमुक्तत्वमित्युच्यत इति तत्र ब्रह्माभिन्ने जीवे अविद्यादिरूपे विशेषणांशे अज्ञानाश्रयत्वतदनुभवादेरुक्तरीत्यैवायोगात् विशेष्यभूतब्रह्मांश एव तदिति नित्यमुक्ते विशेष्यांशे तदयोगोपपादनं शतदूषणीकल्पितं सुस्थम्। यद्यपि शुद्धाकाशघटाकाशवत् ब्रह्मजीवयोर्भेदः, तथापि आकाशे घटसंबन्धः, किं शुद्धे उत किञ्चिदवच्छिन्ने इति प्रश्ने यथा शुद्ध एवेत्येतत् अनपलप्यम्। घटमणिकादेः परिच्छिन्नतया तत्संयोगस्याव्याप्यवृत्तितया च तत्तदवच्छिन्नाकाशप्रदेशभेदस्यौपचारिकस्य सद्भाववर्णनवत् इह तत्तदविद्यावच्छिन्नब्रह्मप्रदेशभेदस्य कथञ्चिद्वर्णनेऽपि तथा तत्तदविद्यासंबन्धरूपमज्ञानाश्रयत्वं विशेष्ये ब्रह्मणि नापलपितुं शक्यते। तथा प्राप्ताप्राप्तविवेके अज्ञानाद्यनुभवाश्रयत्वमपि तत्र न शक्यमपह्नोतुम्। एवमेतदुपपादनञ्च कथं स्यात्, यदि ब्रह्म विशेष्यभूतं नित्यमुक्तं स्यात्। आकाशः पूर्वमनवच्छिन्नः स्थित इदानीं घटाद्यवच्छिन्न इतिवत् पूर्वं मुक्तं ब्रह्म पुनरविद्यावच्छिन्नमापति-

तमिति तु कामं स्यात्। न पुनर्नित्यमुक्तं च तत् अज्ञानाद्यनुभवशालितया संसारि चेति। किञ्चिद्विशेषणविशेषितत्वमात्रेण वस्तु न भिद्यते। न खलु देवदत्तः स्वयमकृतकलञ्जभक्षण एव कलञ्जभक्षकवृन्दनिविष्ट एव कलञ्जमभक्षयदित्येतावता निविष्टानिविष्टयोर्भेदात् देवदत्तो नित्यं कलञ्जभक्षणप्रत्यवायरहित एवेति प्रत्येतुं युक्तम्। एतेन–श्रीभाष्यमतेऽपि ब्रह्मणः संविन्मात्रस्य जैवाज्ञानानुभवसत्त्वात् बन्धापत्तिः। यदि परगताज्ञानानुभवरूपत्वान्न बन्धकत्वम्, तदत्रापि तुल्यमित्युक्तं प्रत्युक्तम्। इदञ्च शतदूषण्यामेवोद्भाव्य परिहृतमिति नूनं तंत्रोक्तपूर्वपक्षोद्गिरणमात्रमेतत्। श्रीभाष्यमते जीवपरयोर्व्यक्तयोरेव भेदात् इह च तदैक्याच्च विशेषात्। यथा हि मायाशबलं ब्रह्मोपादानमिति भवत्पक्षे ब्रह्म उपादानमिति व्यवहारो न बाधितः, तथा अविद्यावच्छिन्नब्रह्मात्मकस्य जीवस्याज्ञानानुभववत्त्वे ब्रह्म अज्ञानानुभावीत्यप्यबाधितमिति कथं तदभावरूपं नित्यमुक्तत्वम्? नित्यमुक्तत्वे चाज्ञानानुभावित्वायोग एव।

यत्तु–सुषुप्तौ अज्ञानेनान्तःकरणाद्यात्मनोपहितस्य जीवस्य सत्त्वान्नाज्ञानानुभवभङ्गप्रसङ्ग इति–तदयुक्तम्। जीवस्वरूपान्तर्गतचैतन्यांशस्याज्ञानाश्रयत्वमस्वीकृत्यान्तः करणस्याज्ञानाश्रयत्वाङ्गीकारे सुषुप्तावन्तः करणविलयस्य भवदिष्टत्वान्नाज्ञानानुभवप्रसङ्ग इति ह्युच्यते। तत्र कारणात्मना अन्तःकरणसद्भावमात्रेण कथमज्ञानानुभवः। अज्ञानानुभवस्य ह्याकारः, अहं न जानामीति। तत्राहमिति कारणात्मकं वस्तु न गृह्यते; किन्त्वन्तःकरणम्। न च तदा तत् अज्ञानाश्रयो भवितुमर्हति। एवं निराश्रयत्वे सति, अहं नावेदिषमिति न युज्यते प्रतिसन्धानमिति निरूपणे क्रियमाणे अन्तःकरणाश्रितत्वरूपप्रकृतपक्षं विस्मृत्य सुषुप्तौ जीवसत्त्वात् अविद्यायाः जीवाश्रितत्वान्न निराश्रयत्वमिति समाधानवर्णनमसङ्गतम्। अन्तःकरणावच्छिन्नचैतन्यं जीव इतिपक्षे सुषुप्तौ जीवाभाव एव; विशिष्टस्यैव जीवत्वात् विशेषणस्य च तदानीं विलयात् विशिष्टस्य विरहात्। अज्ञानं सुषुप्तिकाले किमनुभूयते, उत स्थितं पश्चादनुमीयत इत्यन्यदेतत्। "स एव तु" (३-२-९) इति सूत्रकल्पतरौ, "सुषुप्त्यादौ

अन्तःकरणाद्युपाधिरभिभूतो भवति ; संस्कारात्मनाऽवतिष्ठते ; न तु सर्वात्मना नश्यति" इत्युक्तत्वात् यद्यपि अन्तःकरणस्य न निश्शेषविलयः—अथापि घटविलय इत्युक्तौ घटत्वावस्थाप्रहाणमित्यर्थवत् अन्तःकरणविलय इत्यस्यान्तःकरणावस्थाप्रहाणमित्येवार्थो भवति । तदा चान्तःकरणत्वेन तस्य जीवोपाधित्वं न युक्तं वक्तुम् । बाल्ययौवनाद्यवस्थाभेदेऽप्येकदेहत्वप्रतिसन्धानवत् अविद्याकार्यविशेषः अनेकावस्थासहः अन्तःकरणपदेन लक्षणीयः स्यात् । एवमपि कल्पभेदेनान्तःकरणभेदात् स्थिरजीवासिद्धिरेवेति वक्ष्यते ॥

एकानेकजीववादप्रस्तावश्चात्राप्रसक्तः । ब्रह्माश्रिताज्ञानपक्षेऽपि ब्रह्मणोऽज्ञानाश्रयत्वमात्रम्, अज्ञानानुभवस्तु जीवस्यैवेति तु न वक्तुं शक्यम् । अहं न जानामीत्याकारस्यैवानुभवस्य विवरणाद्युक्ततया अहमिति अज्ञानानुभवितुरज्ञानाश्रयस्यैकस्यैव ग्रहणात् आश्रयोऽन्यः, अनुभविता अन्य इत्यस्यायोगात् । न ह्यज्ञो देवदत्त इतीश्वरस्य अज्ञानानुसन्धानतुल्यमिदं भवितुमर्हति । तस्मादाश्रयस्यैवानुभवितृत्वम् । एवं ब्रह्मसिद्धिपक्षेऽपि अविद्यावच्छिन्नचैतन्यरूपजीवविशेषणभूताविद्यांशेऽज्ञानाश्रयत्वस्य दुरुपपादतया विशेष्यांश एव तदाश्रयत्वपर्यवसानमिति अज्ञानानुभवितृत्वमपि तस्याक्षतमिति न नित्यमुक्तत्वप्रसक्तिः ।

यत्तु—दर्पणस्य प्रतिबिम्बाद्बहिर्भूतस्य यथोपाधित्वम्, न तथा अविद्याश्रयप्रतिबिम्बस्थानीयजीवानन्तर्गतमुपाधिरिति । अत एव प्रसिद्धप्रतिबिम्बवैलक्षण्यादवच्छेदवाद एव ब्रह्मसिद्धिकारमते इति च—तदनन्वितमस्पष्टार्थमनुपपन्नञ्च । अविद्यान्तर्गतस्य चैतन्यस्याविद्यायां प्रतिबिम्बायोगस्य परिमलसिद्धान्तलेशसंग्रहादौ दर्शितत्वात् वास्तवप्रतिबिम्बभावस्तावन्न भवत्येव । इष्टौ तु दर्पणे मुखप्रतिबिम्बवत् अविद्यायां चैतन्यप्रतिबिम्बे प्रतिबिंबस्योपाधेश्च संबन्ध उभयत्राविशिष्टः । बिम्बभूतस्य मुखस्य दर्पणस्य च संबन्धो नास्ति । इह तु बिम्बभूतचैतन्यस्याविद्यायाश्च तथा बहिर्भावो दुर्वच इत्येव तत्त्वम् । अविद्यावच्छिन्नं चैतन्यमित्येव जीवस्वरूपं निरूच्य तदुपाधिरविद्येत्युक्तावपि चैतन्यांशं

प्रत्येवाविद्याया उपाधित्वम् ; न तु स्वविशिष्टं प्रति स्वस्योपाधित्वमित्यवश्यं वक्तव्यम् । अन्यथा घटावच्छिन्ने आकाशे घटः संबध्नाति, कर्णशष्कुल्यवच्छिन्नाकाशे कर्णशष्कुलीसंबन्ध इत्युक्तावात्माश्रयो दोषः । विस्तर उपरिष्टात् ॥ यत्तु—परमार्थतस्तु विशिष्टोपहितयोरपि भेदात् तयोः शुद्धब्रह्मरूपत्वाभावात् ब्रह्मण्यज्ञानानुभवोपपादनं बाधितमिति—तन्न—विशिष्टोपहितयोः काल्पनिकभेदव्यवहारेऽपि परमार्थतस्तावदभेद एव हि भवन्मते । यथा कर्णशष्कुल्यवच्छिन्ने आकाशे शब्दः उत्पद्यते इत्युक्तौ शब्दसमवायित्वमाकाशरूपविशेष्यांशस्यैव, यथा च गृहाकाशे शुको डयत इत्युक्तौ गृहान्तर्गताकाशप्रदेशस्यैव डयनाधिकरणत्वम् न तु भित्तिस्तम्भस्थलादेः, तथा अविद्यावच्छिन्नचैतन्यरूपो जीवोऽविद्यामनुभवतीत्युक्तौ चैतन्यांशस्यैवानुभवितृत्वम् ; नाविद्यारूपविशेषणस्येति तस्य नित्यमुक्तत्वे तदनुभवितृत्वायोग एवेति ॥

यत्तु—अज्ञानानुभवोऽयमविद्याश्रयस्य वृत्तिरेव, अखण्डाकारवृत्त्युपहितेन बाधकज्ञानेनाज्ञानस्येव तदनुभवरूपस्य साक्षिणोऽपि निवृत्तिरिष्टैवेति—तदपि व्याहतम् । अज्ञानानुभवस्य यदि वृत्तिरूपत्वम्, कथं तदनुभवरूपस्य साक्षिण इत्युक्तिः ? अज्ञानस्य साक्षिभास्यतया साक्षिणस्तदनुभवरूपत्वे च कथमज्ञानानुभवस्य वृत्तिरूपत्वम् । वृत्तिसाक्षिणोर्भेदात् । वृत्तेरेव बाधकत्वस्य पर्यवसितत्वात् वृत्त्युपहितेन बाधकज्ञानेनेत्यप्यसंगतम् । उपहितचैतन्यरूपसाक्षिणः उपाधिचैतन्योभयातिरिक्तत्वाभावेन चैतन्यस्य चाबाध्यतया उपाधिमात्रनिवृत्तिरित्येव निष्कृष्टं भवतीति अज्ञानस्येव साक्षिणोऽपि निवृत्तिरिष्टेति उभयसमुच्चयोऽप्यसंभावित एवेति ॥

यत्तु—प्रकाशस्वरूपस्य ब्रह्मणः अविद्यातिरोधाने स्वरूपनाशापत्तिरिति न; वृत्तेरेवाविद्याविरोधित्वात् ब्रह्मणस्तदविरुद्धत्वादिति—तदिदमाम्रप्रश्ने कोविदाराख्यानम् । ब्रह्मातिरिक्तप्रकाशरूपधर्मानङ्गीकारिमते प्रकाशनिवृत्तौ ब्रह्मनिवृत्तिरिति तिरोधानशब्दार्थशोधनेन दूषणे उद्भाव्यमाने वृत्तिरविद्यानिवर्तिका, उत ब्रह्मापीति विचारस्य किमर्थः प्रस्ताव इति ।

यच्च—अगतिकतया तिरोधानमाश्रीयते—दृश्यते हि सर्वेषां स्वरूपाज्ञानम्, तन्निबन्धनबन्धानुभवश्च। कां गतिं तस्य शतदूषणी पश्यति। अद्वैतिमते चेत् परस्सहस्राणि दूषणानि, श्रीभाष्यमतेऽपि तादृंशि सन्त्येवेति कथनम्—तदपि परिहारप्रकारमविदुषः सर्वसाम्यापादनेन तृप्तिसंपादनाय। नूनमीदृशं वचनमेषां पारम्परिकमेव। तथा हि ब्रह्मसिद्धिकारः–, "ननु जीवा अपि ब्रह्मतत्त्वाव्यतिरेकात् विशुद्धस्वभावाः, तत् कथं तेष्वविद्यावकाशः—वार्तमेतत्—'अवदातात् बिंबात् कृपाणादिषु प्रतिबिम्बं हि न तावद्भिन्नम्—**अन्यथा दुरवापैव विशुद्धिः स्यात्**" इत्याह। सूत्रभाष्येऽप्यादौ, "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यारभ्य—"मिथ्येति भवितुं युक्तम्" इत्याशंक्य अध्यासमूलकव्यवहारस्यानादेरनुभूयमानतया कथञ्चित् कारणमेष्टव्यमिति भाषणादनुपपत्तेरगत्या सोढव्यत्वमाविष्क्रियते। अत एव श्रीभाष्ये आनन्दमयाधिकरणे अद्वैतिवचनमनूद्य, "वैदिकः पक्षः परिगृह्यता"मित्युपदिष्टम्। न च वयं निर्धर्मकं संविन्मात्रमात्मानं ब्रूमः। न च लाघवादतिरोहितस्वरूपस्यैव स्वीकारापत्तिरिति भवदुक्तं युक्तम्। "न हि दृष्टेऽनुपपन्नं नाम" इति भवतैवोपयुक्तेः। अस्मदनङ्गीकृतमप्रामाणिकमर्थमस्मास्वारोप्य भवता दूषणमुद्भावयितुं यत्यते। अस्माभिः पुनर्भवदङ्गीकृतांश एव दोषः उद्भाव्यत इतीह भेदः प्रतिसन्धेयः। अपरिहार्यदोषजालजटिलं कन्थाशतग्रन्थिलमपि शास्त्रार्थत्वबुद्ध्या स्वीक्रियते इति चेत्—भास्कराद्यभिमतभेदाभेदपक्षादयः आश्मरथ्यौडुलोम्याद्यभिप्रायाश्च कथं शास्त्रार्थत्वबुद्ध्या नामोद्यन्ते। परोक्तमनुपपन्नं परित्याज्यम्, स्वोक्तं तु सर्वानुपपत्तिसन्दोहरूपमपि संग्राह्यमिति न हि युक्तम्। कर्मानादितामाश्रित्य संसारवैचित्र्यनिर्वाहस्तावत् सर्वसैद्धान्तिकसंमतः। ततः ईश्वरस्य वैषम्यनैर्घृण्यदोषपरिहारश्च भगवता बादरायणेनापि प्रत्यबोधि। तत्र कथं वैषम्यादिदोषपरिहार इति चार्वाकीभूय भवता प्रश्नं क्रियमाणं जाबालवादमिव राघवो न मर्षयिष्यति। पदेपदे धर्मभूतज्ञानप्रद्वेषेणाधर्मज्ञानरुचिवशेन क्रियमाणो विस्तरश्च सकृत् दूषणेनैव संशमित इति किमत्र पुनः प्रस्तावेन। धर्मभूतज्ञानं विनैव ब्रह्मणो बाह्यप्रकाश उपपद्यत इत्यादिप्रतिज्ञामात्रे तु कः

श्रद्धास्यति? तथा सति ब्रह्म सर्वगोचरज्ञानमेव वा, सर्वगोचरज्ञानाश्रयत्वरूपसार्वज्ञ्यशालि वा इति कुत्र प्रयोगसौष्ठवमितीदमेकं विभावयताऽपि धर्मभूतज्ञानं दुष्प्रतिषेधम् ॥

यत्तु—यावद्ब्रह्मसाक्षात्कारं जैवेन रूपेण ब्रह्मणोऽन्तःकरणधर्मवृत्तिज्ञानद्वारा बाह्यप्रकाशोपपत्तिरिति—तदपि विचार्यम्। किं जीवोऽन्तःकरणावच्छिन्नं चैतन्यमुताविद्यावच्छिन्नम् आद्ये, अन्तःकरणं किं नित्यम्, उतानित्यम्? प्रथमे आविद्यापरिणामत्वानिष्ट्या अपसिद्धान्तः; अविद्यापलापश्च। द्वितीये अन्तःकरणोत्पत्तेः प्राक् जीवाभावात् जीवस्यानादित्वभङ्गः। जीवसन्तानस्वीकारे आमोक्षाज्जीवैक्यमिष्टं त्यक्तं भवति। भौतिकसवान्तानस्य जीवत्वादिचार्वाकतौल्यञ्च। अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च। अविद्यावच्छिन्नचैतन्यपक्षे चान्तःकरणवृत्त्या कथं जीवस्य ज्ञानाश्रयत्वम्। अविद्यावच्छिन्नस्यैवान्तःकरणं विशेषाभिव्यक्तिस्थानमिति चेत्—एवमपि वृत्तिरूपपरिणामाश्रयत्वमन्तःकरणस्येति तदेव बाह्यप्रकाशवत् स्यात्। न तु जीवः। वृत्तौ प्रतिफलनात् जीवस्याश्रयत्वमिति चेत्—जीवो नामाविद्यावच्छिन्नचैतन्यम्। तत्र किमविद्याविशिष्टवेषेण स प्रतिफलति उत चैतन्यमात्ररूपेण? आद्यमनिष्टम्। अन्त्ये शुद्धचैतन्यमेव वृत्त्याश्रयः स्यात्, न जीव इति ब्रह्मण एव बन्धः स्यात्। न च वृत्त्याश्रयत्वमित्ययमाश्रयाश्रयिभावोऽपि सुवच इति च प्रागेवोक्तम्॥ सांख्यपक्षमाश्रित्यास्माभिः चैतन्यस्वरूपत्वमन्तःकरणवृत्त्यादि चेष्यत इति चेत्—श्रुत्या साक्षात् यदुक्तम्, तद्विरोधे सांख्यपक्षः कथमवलम्ब्यं स्यात्? श्रुतिश्च, "जानात्येवायं पुरुषः, द्रष्टा श्रोता मन्ता," "विज्ञातारमरे केन विजानीयात्" इत्यादिः स्पष्टमेव ज्ञानाश्रयत्वमाह। "सत्यं ज्ञानम्" इत्यत्रापि ज्ञानपदस्यान्तोदात्तत्वात् अर्शआद्यजन्तत्वमावश्यकमिति ज्ञानगुणकत्वमेव स्वरसम्। सूत्रकारोऽपि "ज्ञोऽत एव" इत्येवाह। "चिति तन्मात्रेण तदात्मकत्वात्" इत्यौडुलोमिपक्षमुपक्षिप्य, "एवमप्युपन्यासात्" इति मुक्तावपि धर्मभूतज्ञानमनपलप्यमाशेते। एतावद्विरोधे सति प्रतिक्षिप्तसांख्यपक्षावलम्बनं कथंकारं युज्यताम्। न

चान्तःकरणवृत्तौ चैतन्यप्रतिफलनादिकल्पनागमकं तुषमात्रमपि श्रुतौ संलक्ष्यमस्ति। अश्रुतमपि सति लाघवे कथञ्चिदामोद्येत। तार्किकपक्षात् सांख्यपक्षस्य गौरवग्रस्तत्वं च सुस्पष्टम्। न च सांख्यमतमपि यथावदनुस्रियते। अव्यक्तमहदहङ्कारतन्मात्रभूतानां सृष्टौ क्रमः इन्द्रियाणामेकादशानामाहङ्कारिकत्वं च सांख्यसंमतम्। भवन्मते तु परिभाषायाम्, अव्यक्तात् तन्मात्रभूतसृष्टौ अपञ्चीकृतभूतेभ्यः ज्ञानेन्द्रियाणां कर्मेन्द्रियाणामिन्द्रियातिरिक्तस्य अन्तःकरणस्य च मनोबुद्ध्यहंकारचित्तात्मकस्य सृष्टिवर्णनात्, "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनम्" इति स्थूलशरीरातिरिक्तं सूक्ष्मशरीरं प्रतीपाद्य, 'तत्र परं हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वम्, अस्मदादिलिङ्गशरीरं अहङ्कार' इति चाभिधानात् सांख्यमताद्भेदः सुस्पष्टः। अतः श्रुतिसांख्योभयरीतिविलक्षणैव भवन्मतप्रक्रिया॥

किमनेनेह बहुना। नित्यमुक्तत्वात् स्वप्रकाशत्वात् चैतन्यमात्रत्वाच्च ब्रह्म न बाह्यानुभवशालीति हेतुत्रयमप्यविचाल्यम्। बाह्यानुभवस्य संसाररूपस्य सद्भावे नित्यमुक्तत्वायोगात्, स्वप्रकाशत्वे स्वरूपस्य प्रकाशमानतया तद्विरोधिनोऽज्ञानस्य तत्कार्यस्य बाह्यस्य चानुभवायोगात्। चेतनस्यैवानुभवशालित्वसंभवात् अनुभवमात्रस्य ब्रह्मणोऽनुभवशालित्वायोगाच्च। न च स्वरूपप्रकाशो न बाह्यानुभवविरोधी, किन्तु वृत्तिरूपः प्रकाश एवेति वाच्यम् — अयुक्तेः। वृत्तिः किं वृत्तित्वात् संसारविरोधिनी? उताखण्डाकारत्वात्? आद्ये, घटपटादिवृत्तितोऽपि संसारनिवृत्तिप्रसंगः। अन्त्ये अखण्डाकारवृत्तेः ब्रह्ममात्रप्रकाशत्वेन विरोधित्वे ब्रह्मस्वरूपस्यापि तथात्वेन कथं विरोधित्वायोगः। अन्यथा ब्रह्मणः स्वयंप्रकाशत्व एव मानाभावः। यद्धि ज्ञानान्तरनिरपेक्षमेव संशयविपर्ययनिरोधि, तद्धि स्वयंप्रकाशम्। अहमिति प्रकाशस्य नाहमस्मीति विपर्ययविचिकित्सादिविरोधित्वात् स्वयंप्रकाशत्वं स्वीक्रियते। यदि तद्विरोधित्वं नेष्यते, तर्हि तस्य स्वयंप्रकाशत्व एव न किञ्चित् प्रमाणम्। यदि तु स्वप्रकाशेन ब्रह्मणा निवर्त्यो यः संशयादिः, तद्विलक्षणसंशयादिनिवर्तकत्वं ब्रह्मातिरिक्तायाः तद्विषयिण्याः

वृत्तेरिष्यते ; तर्हि तत्राखण्डब्रह्मातिरिक्तांशविषयकत्वमप्येष्टव्यम् । ब्रह्मणो वा किञ्चित्संशयादिनिवर्तकत्वमपि नास्तीत्यभिधायास्वयंप्रकाशत्वमेवाभिमन्तव्यम् । अन्यथा तु निर्युक्तिकवादः शपथमात्रमिति न श्रद्धीयेतेति । एवं चैतन्यमात्रत्वे अज्ञानतत्कार्याद्यनुभवाश्रयत्वमपि दुर्वचमेव । चैतन्यातिरिक्तानुभवाभावात् । तन्मात्रत्वेन संमतेऽनुभवाधारत्वायोगाच्च । अचैतन्यस्य कस्यचिदनुभवशब्दवाच्यत्वानुपपत्तेश्चेति कृतमधिकेन ॥

बद्धोऽस्मि संप्रति, विवेकधिया क्रमेण
मुच्येय जात्विति मतिप्रभृतेरवश्यम् ।
स्वीकार्यतामभिविमृश्य तदर्हमर्ह-
मात्मस्वरूपमुपगन्तुमितीह सूक्तम् ॥

दृग्दृष्टभेदमभिमत्य दृशः परेणा-
प्यैक्यम्, दृशस्त्वपलपन्त्यपि दृश्ययोगम् ।
मुक्तस्वयंप्रभचिदात्मनि हन्त शंस-
न्त्यज्ञानतज्जनिखिलानुभवाश्रयत्वम् ॥

॥ शुभमस्तु ॥

---

श्रीः

# ब्रह्माश्रयाज्ञानभङ्गप्रसाधनम्

स्वप्रकाशचितोऽप्युक्त्वा स्वाज्ञानाश्रयतां हि ये ।
स्वात्मानं मन्वतेऽभिज्ञं सर्वज्ञस्तन्मतिं द्यतु(स्यतु) ॥

ब्रह्मविषयकत्वमज्ञानस्य सर्वाद्वैतिसंमतम् । जीवानामेवाज्ञानाश्रयत्वमिति ब्रह्मसिद्धिभामत्यादिपक्षः । ब्रह्मण एव तदाश्रयत्वमिति प्राचीनं प्रस्थानम् । जीवाज्ञानपक्षो यथावसरं खण्डयिष्यते । अत्र दृग्दृश्यसंबन्धप्रस्तावे ब्रह्मण्यज्ञानानुभवनिरासवत् अज्ञानाश्रयत्वमपि निरस्यते । तेनाज्ञानाद्यनुभवमेकतो ब्रह्मणि ब्रुवन्त एवान्यतो ज्ञातृत्वमहङ्का[रा]गतमिति अज्ञातृत्वमेव ब्रह्मणि संगिरमाणाः अज्ञानाश्रयत्वं परमातिष्ठन्ते । [अ]त्र यदि ब्रह्म अज्ञानाश्रयःस्यात् ज्ञात्रपि भवेत् ; ज्ञातृत्वाभावे अज्ञानाश्रयत्वाभावस्य घटादिषु दर्शनादिति प्रतितर्कप्रयोगे तत्परिजिहीर्षया यत्, 'कृत्वाचिन्तया कथ्यत' इति कथनपूर्वकमुक्तम् —घटादीनामज्ञानानाश्रयत्वमज्ञानकार्यत्वप्रयुक्तम् ; न त्वज्ञातृत्वप्रयुक्तम् । अन्यथा सुषुप्त्यादिकाले ज्ञातृत्वाभावात् अज्ञानाश्रयत्वभङ्गप्रसङ्गात् इति— तन्न-कृत्वाचिन्तयाऽप्येवं वक्तुमशक्यत्वात् । अज्ञानानाश्रयत्वे अज्ञानकार्यत्वमेव प्रयोजकं चेत्—अज्ञानस्याज्ञानाश्रयत्वापत्तिः । तस्याज्ञानकार्यत्वाभावात् । अतः अज्ञानतत्कार्योभयसाधारणमज्ञातृत्वमेकमेव प्रयोजकम् । सुषुप्त्यादावज्ञानानाश्रयत्वं स्यात् ज्ञातृत्वाभावादिति तु न — ब्रह्मणि ज्ञातृत्वस्य सर्वथैवाभावात् अज्ञानानाश्रयत्वे आपाद्यमाने सुषुप्तिकाले अज्ञानाश्रयत्वभङ्गः स्यादिति केयं प्रत्युक्तिः ? किञ्च, " न तत् ज्ञातृत्वप्रसक्तिशून्ये ब्रह्मणि भवितुमर्हति "इत्येव शतदूषण्यामुक्तमिति सुषुप्तिकाले [ज्ञ]ातृत्वाभावेऽपि अन्यदा ज्ञातृत्वसत्त्वात् ज्ञातृत्वप्रसक्तिशून्यता दुर्वचा । ब्रह्मणि ज्ञातृत्वप्रसक्तिशून्यत्वस्येष्टत्वात् तत्राज्ञानाश्रयत्वं न स्यादित्येवोच्यते । किञ्च सुषुप्तावन्तःकरणलयेऽप्यज्ञानमस्तीत्यत्र किं प्रमाणम् ? न किञ्चिदहमवेदिषमिति प्रबुद्धस्य प्रतिसन्धान-

मिति चेत्—कोऽसौ प्रबुद्धः? अहंकाररूपोऽहमर्थ इति चेत्—स सुषुप्तिकाले स्वसद्भावं स्वस्मिन् अज्ञानसद्भावं च यदि प्रतिसंधत्ते, कथं तस्याहङ्कारस्य तदा विलयो भवद्भिरिष्यते? यद्ययं परामर्शः तदानीमहङ्कारसद्भावविषये न प्रमाणम्। अज्ञानसत्त्वविषये परं कथं भवितुमर्हति? यदि तदाऽप्यहंकारः किञ्चिद्रूपेणास्ति, तर्हि तद्विलयस्यात्र हेतुतया निर्देशो न युज्यते। अपि च ज्ञातुरेवाज्ञानाश्रयत्वमिति वादिनः ज्ञानाज्ञानयोः समानकालिकत्वं हि नाभिप्रेतम्, असंभवात्। अतश्च ज्ञातृत्वस्य कदाचिदभावः अज्ञानाश्रयत्वस्य न प्रतिपन्थी। किन्तु ज्ञातृत्वप्रसक्त्यभाव एवेति॥

यत्तु—अज्ञानस्य संविन्मात्राश्रितत्ववादे अखण्डाकारवृत्तिरूपज्ञानस्यापि संविन्मात्रजीवाश्रयत्वात् समानाश्रयत्वं वर्तत एवेति। नैतत् संविन्मात्रस्य जीवस्य च भिन्नत्वात्। अज्ञानस्यैकत्वेऽपि तदंशानामनेकत्वेन तत्तदंशप्रतिबिम्बभूतानां जीवानां मिथो भेदमभिमत्य तत्तज्जीवगतात् ज्ञानात् तत्तदज्ञानांशनिवृत्तिमुपपाद्य एकज्ञानेन सर्वमुक्तिप्रसङ्गं परिहरद्भिः कथं तावत् ज्ञानं संविन्मात्रगतमिति सुवचम्। तथा सति संविन्मात्रगतेन ज्ञानेनैकेन संविन्मात्राश्रितस्याज्ञानस्य कात्स्न्येन निवृत्तौ तदंशानामभावेन सर्वमुक्तेरेवापत्तेः। किंच ज्ञानपदेन किं चैतन्यं गृह्यते, उत वृत्तिः? नाद्यः, संविन्मात्रस्य संविदाश्रयत्वायोगात्। अन्तःकरणेऽहमर्थे यदि संविदः प्रतिफलनम्, तर्हि व्यङ्ग्यस्य व्यञ्जकस्थतया भानस्वीकारेऽहंकाराश्रितत्वमेव ज्ञानस्य संविद्रूपस्य स्यात्। यदि च वृत्तिः, तदा नतरां संविन्मात्रनिष्ठत्वम्; वृत्तिः यदीयः परिणामः, तत्रैव तत्स्थितेः, अतो यादृशस्य धर्मिणो ज्ञानाश्रयत्वम्, तादृशस्य तस्यैवाज्ञानाश्रयत्वं वाच्यमिति न शुद्धे संविन्मात्रे स्यादज्ञानम्। अन्यथा देवदत्तगतात् ज्ञानात् यज्ञदत्तगतमज्ञानमपि निवर्तेत। तदर्थं सामानाधिकरण्ये आवश्यके ज्ञानमपि संविन्मात्रे एषितव्यम्। अज्ञानं वा ज्ञानाश्रयत्वाभिमतेऽन्यत्र स्वीकर्तव्यमिति॥

यत्तु — देवदत्तीयघटज्ञानेन देवदत्तीयापाटाज्ञानानिवृत्त्या ज्ञानाज्ञानयोर्न सामानाधिकरण्यं निवर्त्यनिवर्तकभावप्रयोजकम्; किंतु समानविषय

कत्वमिति—सत्यमेतत्। अथापि देवदत्तीयघटज्ञानेन यज्ञदत्तीयघटाज्ञानस्य निवृत्त्यभावेन समानविषयकत्वमात्रमपि न तन्त्रम्। अतो ज्ञानं स्वविषयविषयकं स्वसमानाधिकरणमज्ञानं निवर्तयतीत्येव नियम इति सामानाधिकरण्यमप्यावश्यकमेवेति। यत्तु—समानाश्रयत्वयोग्यत्वमेव निवर्त्यनिवर्तकभावे प्रयोजकमिति—तेन किमुक्तं भवति? न हि संविन्मात्रे कदापि ज्ञानाधिकरणत्वप्रसक्तिरहिते योग्यत्वमपि संभाव्यते। न च योग्यतामात्रमज्ञाननिवर्तकम्। तथा सति कस्यापि किञ्चिद्विषयेऽप्यज्ञानासद्भावप्रसङ्गात्। विशिष्टदशायां ज्ञातृत्वम्, उपलक्षितदशायाश्चाज्ञातृत्वमित्यपि न—संसारदशायामहङ्कारविशिष्टतायाः संविन्मात्रे सत्त्वेनाज्ञातृत्वदशायाः उपलक्षितदशात्वायोगात्। सामानाधिकरण्ये सिद्धे किल दशाभेदचिन्ता। तदेव नेति किल संप्रत्युच्यते। यदि च ज्ञानं परंपरयैव संविन्मात्रं प्रत्यानीयते, तर्ह्यज्ञानमपि तथैवानेतव्यम्। तयोस्साक्षादधिकरणस्यैकत्वानुभवादिति अज्ञानाश्रयत्वमपि संविदो न स्यादेव। असामानाधिकरण्येऽपि दीपतमसोर्निवर्त्यनिवर्तकभाव इष्ट इति भवदुद्भावनं भवतैव दीपप्रभामादाय सामानाधिकरण्यस्य दर्शितत्वात् परिहृतमेव। ईश्वरसङ्कल्पस्य जीवगतकर्माख्याविद्यानिवर्तकत्वं दृश्यत इति निवर्त्यनिवर्तकयोर्वैयधिकरण्यशङ्कातत्परिहारौ शतदूषणीदर्शितावेव; नापूर्वौ। किञ्च, जीवगतकर्मेति किमुच्यते? न तावत् मनोवाक्कायव्यापारः जीवनिष्पाद्यः, तस्य तदैव नष्टत्वात् विलम्बितोत्पत्तिकेश्वरसङ्कल्पानिवर्त्यत्वात्। न चादृष्टं जीवात्मनिष्ठम्, अस्माभिस्तदनभ्युपगमात्। नापि निग्रहानुग्रहरूपावीश्वरज्ञानविशेषौ; तथा सति सङ्कल्पसामानाधिकरण्यस्याक्षतत्वात्। अतः शतदूषण्यां जीवगताज्ञानेत्यत्राज्ञानपदेन कर्मग्रहणमिति न मन्तव्यम्।

यत्तु—'शक्तिविशेषोपबृंहितत्वेन तदुपपत्ते'रिति वाक्यात् वैयधिकरण्येऽपि शक्तिविशेषे सति निवर्त्यनिवर्तकभावो भवतीत्याशयकल्पनम्—तदपि न युक्तम्। "ईश्वरादिगतेन ज्ञानेन तदनुग्रहविषयजीवगताज्ञाननिवृत्तिः" इति अनुग्रहविषयपदनिवेशेन विधान्तरेण सामानाधिकरण्यसंपादनस्य दर्शितत्वात्। विषयविषयिभावेन सामानाधिकरण्ये वर्ण्यमाने शक्तिविशेषोऽप्यपेक्षित इत्येतावत

एवात्र कथनात् । भवन्मते शक्तिविशेषस्य सहकारित्वस्वीकारे तु तत्त्वज्ञानादज्ञाननिवृत्तिरूपलोकदृष्टप्रक्रियापरित्यागात् जगन्मिथ्यात्वाद्यसिद्धिप्रसङ्गः । शापानुग्रहादिना वस्तुभूतपदार्थनाशाभ्युदयादिकल्पनरीतेरेव तदेष्टतया वस्तुसत्यत्वस्यैव तदानीं सिद्धेः । एवं सामानाधिकरण्येन स्वगतदोषस्य स्वसङ्कल्पतो नाशे प्रभविष्णुर्योग्यपि शक्तिविशेषसहकारेणैव तन्निवर्तक इति शक्तिविशेषापेक्षायां वैयधिकरण्यनियम इत्यपि न मन्तव्यम् । यत्तु—शास्त्रप्रामाण्यात् ज्ञानाज्ञानयोर्भिन्नगतयोरपि निवर्त्यनिवर्तकभावः किं न स्यादिति—तन्न—तथासत्येकज्ञानेन सर्वमुक्तेरपि स्वीकार्यत्वात् । जीवगतं वृत्तिज्ञानं सविन्मात्रगतमज्ञानं निवर्तयतीति, लोकमुल्लङ्घ्य शास्त्रबलात् स्वीकारे लोकन्यायेन जगतो मिथ्यात्वमप्रकल्प्य वस्तुभूतमेव जगत् वृत्तिज्ञानेन निवर्त्यते । तस्य तथाविधा च शक्तिः शास्त्रबलादेष्टव्येत्येव वर्णनसंभवादपसिद्धान्तावलम्बनं स्यात् । अयमेवाद्वैतिपरमाशय इति चेत्—अद्वैतिनिरसनपरिश्रमस्तर्हि लघूकृतो भवति । तथ्यमेव जगत् सर्वं स्थितमेवात्मनो बन्धाय न प्रभवति; विवेकवैशेष्यादिति वयम् । यूयं तु जगत्सत्यत्वे कदापि कथमप्यधःपातः स्यादिति भिया सर्वं ज्ञानमहिम्ना विनाश्य केवलीबुभूषथेत्येतावान् भेदः । जगद्विनाशमन्तरैव स्वात्मप्रवृत्तिप्रयोजकसामग्रीविघटनेन केवलीकरणं तु तार्किकेष्टम् । अन्ततो भवन्मतेऽपि पाषाणकल्प एव मोक्ष इति च वक्ष्यते इत्यलम् । जीवनिष्ठादृष्टादिनैव जैमिन्युक्तरीत्या निर्वाहे किमीश्वरसंकल्पेनेत्याद्यधनास्तिकवादस्तु बादरायणेन, भवद्भाप्यकृदादिभिश्च शमित इति किं वृथा केवलमहृदयं तत्प्रस्तावेन।

अतो जगन्मिथ्यात्वादिभिर्लोकन्यायेन तत्त्वज्ञाननिवर्त्यत्वस्याज्ञानमिथ्याज्ञानादौ वक्तव्यत्वात् लोके च समानाधिकरणस्थल एव निवर्त्यनिवर्तकभावदर्शनात् न जीवगतेनान्तःकरणगतेन वा ज्ञानेन ब्रह्माज्ञाननिवृत्तिसंभवः । अत एवाखण्डाकारवृत्तेः निवर्तकत्वं निरस्तम् । वृत्तेर्ब्रह्मनिष्ठत्वाभावादसामानाधिकरण्यात् ।

ज्ञानाधारत्वयोग्यस्य त्वज्ञानाधारता भवेत् ।
ज्ञानगोचरतार्हश्च भवेदज्ञानगोचरः ॥
ब्रह्मणस्तूभयाभावान्नाज्ञानास्पदतोभयी ।
दृश्यत्वे ब्रह्मणो जाड्यमिथ्यात्वादि प्रसज्यते ॥
यत्तु---वृत्तिव्याप्यता न जडत्वादिप्रयोजिका ।
चैतन्यविषयत्वं तु तथा, नैतच्चितस्त्विति---॥
तन्न; वृत्तिर्जडा यस्मात् चैतन्यग्रहणाक्षमा ।
दृग्दृश्ययोगव्यासेधात् न चिद्विषयता क्वचित् ॥
वृत्तेरज्ञानरोधित्वे मा भूत् चिद्गोचरो जगत् ।
वृत्त्यास्पदत्वं दृश्यत्वं स्यात् तज्जाड्यादिसाधकम् ।
चितस्त्वज्ञानरोधित्वे ब्रह्माज्ञानं न नङ्क्ष्यति ।
न ब्रह्मगोचरा यस्मात् चिदेवैतच्च चिन्तितम् ।
ब्रह्माज्ञानं ब्रह्मनिष्ठं शुक्त्यज्ञानं च शुक्तिगम् ।
वदन्नुपेक्ष्यो ज्ञात्रैकनिष्ठत्वानुभवात् तयोः ॥
अत एव ब्रह्मशुक्तिविषयाज्ञानमिष्यते ।
जीवे ज्ञानाश्रये भामत्यादिग्रन्थनिबन्धृभिः ॥
तद्वैलक्षण्यसिद्ध्यर्थं ब्रह्मण्यज्ञानसंश्रये ।
ज्ञातृत्वेष्टौ तुल्यनयात् नित्यसर्वज्ञता ध्रुवा ॥
तथा च कथमज्ञानसंश्रयत्वं भवेदिह ।
तत् सिद्धं प्रथमो हेतुरज्ञत्वं वारयेदिति ॥

यत्तु — स्वप्रकाशत्वात् ब्रह्म नाज्ञानाश्रय इति द्वितीयमनुमानं दूषयितुमनसोक्तम् — स्वप्रकाशत्वादपि अज्ञानाश्रयो ब्रह्मेति — तदयुक्तम् । स्वप्रकाशत्वस्याज्ञानाश्रयत्वसाधकत्वाभावात् । अन्यथा मुक्तावप्यज्ञानापत्तेः । तदत्र स्वप्रकाशत्वेऽप्यज्ञानस्याश्रय इति भाव्यम् । यत्तु — स्वप्रकाशस्य नाज्ञानविरोधित्वम्, अपि तु वृत्तेरेवेति — तत्र वक्तव्यम् ; किं स्वरूपप्रकाशः सर्वथैवाज्ञानानिवर्तकः,

उत आंशिकाज्ञानानिवर्तक इति। नाद्यः, नाहमस्मीति, अहं नैक इति च विपर्ययादिरूपस्याज्ञानस्याभावेन स्वरूपप्रकाशस्य तदज्ञानेन साकं विरोधस्य भाष्यादिसंमतत्वात् संविदात्मवादे भवतैवोक्तत्वाच्च तद्विरोधप्रसंगात्। नान्त्यः, निरंशे ब्रह्मणि आंशिकाज्ञानस्य दुर्वचत्वात्। सत्तांशेऽज्ञानाभावेऽपि आनन्दांशे तदस्तीति चात एव दुर्वचम्। आनन्दांशः कल्पितश्चेत् — तदज्ञानं गुण एव, सर्वज्ञस्य शुक्तिरजताज्ञानवत्। तदज्ञाननिवृत्तौ प्रयतमानस्तु कल्पिताकारग्रहणरूपविपरीतज्ञानसंपादने प्रयस्यन् तत्, तन्मूलमज्ञानञ्चात्मनि स्थापयतीति नैवं मोक्षःस्यात्। अतस्तेजस्तिमिरयोरिव स्वप्रकाशब्रह्मतदज्ञानयोर्विरोध एवेति। अग्निरिव धूमेनाज्ञानेन ब्रह्माऽऽव्रियत इत्यप्ययुक्तम्। जन्यजनकयोरग्निधूमयोरविरोधात्॥ सुषुप्तावात्मा प्रकाशत इति च सुप्तोत्थितपुरुषगतपरामर्शविशेषात् कल्पनीयम्। तथापि तस्यात्मनः संविन्मात्रत्वं स परामर्शो न स्थापयितुमीष्टे॥

यत्तु — प्रत्यक्षस्थले विषयदेशेऽन्तःकरणव्याप्तिरेषितव्या, अन्यथा प्रत्यक्षपरोक्षविभागानुपपत्तेरिति - तन्न - परोक्षत्वव्याप्यस्मृतित्वानुमितित्वशाब्दबोधत्वादिवैजात्यमन्तःकरणव्याप्त्यभावाविशेषेऽपि यथा सामग्रीवैलक्षण्यान्निरुह्यते, तथैव प्रत्यक्षत्वमपीति सुवचत्वात्॥ यच्च — शुक्त्यज्ञानमसत्त्वापादकमात्रम्: न त्वभानानानन्दतापादकमपीति — तत्र किं नियामकम्? ब्रह्माज्ञानस्य त्रैविध्यं तावदिष्टं शाब्दप्रत्यक्षविचारावसरे भवताऽप्युक्तम्। तत्र श्रवणं ब्रह्मासत्त्वविषयाज्ञानम्, मननं ब्रह्मानानन्दत्वविषयाज्ञानम्, ध्यानमभानापादकमज्ञानं च निवर्तयतीति चोक्तम्। तद्वदेव शुक्तिश्रवणं शुक्तिमननादिकं चान्यादृशमज्ञानं निवर्तयतीति किं न स्यात्। एवं ज्ञानसामान्यस्याज्ञाननिवर्तकत्वे शुक्तिरजतज्ञाननिवर्त्यमप्यज्ञानं स्वीकर्तव्यम्। प्रमात्मकज्ञानस्यैवाज्ञाननिवर्तकत्वे तु शुक्त्यज्ञानमपि न सिद्ध्येत्। शुक्तिज्ञानस्य वस्तुतो भ्रान्तिरूपत्वात्। शुक्त्यज्ञानं नाम शुक्त्यवच्छिन्नचैतन्याज्ञानमिति चेत् — शुक्तिरजताज्ञानमपि रजतावच्छिन्नशुक्त्यवच्छिन्नचैतन्याज्ञानमित्यस्तु। वस्तुतः शुक्त्यवच्छिन्नचैतन्यमपि शुद्धचैतन्यादन्यत्वात् मिथ्यैवेति तदज्ञानायोग एव। असत्त्वा-

पादकाज्ञानविषयत्वप्रयोजकवृत्तिविशिष्टचैतन्यं जानात्यर्थ इत्यपि न; विकल्प-विपर्ययादेरपि ज्ञानावान्तरभेदरूपतायाः लोकप्रसिद्धतया शशविषाणविकल्पस्य च भवद्भिष्टतया तत्सत्त्वानङ्गीकारेण तत्रासत्त्वापादकाज्ञानाविषयत्वप्रयोजक-विशिष्टचैतन्यरूपत्वस्य दुर्वचत्वात्। अखण्डाकारवृत्तिस्त्रिविधाज्ञानाविषयत्व प्रयोजिकेत्यपि न; अखण्डाकारवृत्तिप्राग्भाविश्रवणमननवृत्तिदशायामेव नियमेन द्विविधाज्ञाननिवृत्त्या त्रिविधाज्ञानाविषयताप्रयोजकत्वस्यात्र वृत्तावयोगात्। वस्तुतो ब्रह्मणः, अस्ति भाति प्रियमिति गृह्यमाणतया असत्त्वाभानानानन्दतापादकम-ज्ञानं दुर्वचम्; सुतरां स्वप्रकाशत्वादपीति, अज्ञानत्रैविध्यमयुक्तमिति च, अन्यच्च शब्दजन्यप्रत्यक्षभङ्गप्रसाधन एव प्रत्यपादीति कृतं बहुना ॥

यत्तूपाधिवर्णनम् — अज्ञानमिदं न ज्ञानमात्रब्रह्माश्रयमज्ञानत्वात् शुक्तिकाद्यज्ञानवदित्यत्रासत्त्वापादकशक्तिमात्रविशिष्टाज्ञानत्वमुपाधिरिति - तन्न; शुक्तिकाद्यज्ञाने असत्त्वमात्रापादकत्वमित्यत्र नियामकाभावस्योक्तत्वात्। शक्तिद्वयविशिष्टाज्ञानत्वे ज्ञानमात्राश्रितत्वं भवितुमर्हति, न त्वेकशक्तिमात्रा-ज्ञानत्वे इत्यत्र नियामकाभावाच्च न तस्योपाधिता। संभवति सामान्यस्या-ज्ञानत्वस्य प्रयोजकत्वे विशेषप्रयोजकतावर्णनस्यैव गुरुत्वाच्च। अन्यथा तुल्य-नयात् ब्रह्माज्ञानं वृत्त्येकनाश्यमज्ञानत्वात्, शुक्तिकाद्यज्ञानवदित्यत्रापि असत्त्वा-पादकशुक्तिमात्रविशिष्टाज्ञानत्वमुपाधिः स्यात्। अज्ञानस्य ज्ञानस्य च निवर्त्य-निवर्तकभावस्य संमतत्वात्, असमानाधिकरणत्वे च तदयोगात् ज्ञात्राश्रितत्व-मावश्यकमित्यनुकूलतर्कपुरस्सरमज्ञानत्वहेतुना ज्ञानमात्रानाश्रितत्वे साध्यमाने उपाधिवर्णनस्यासंभवाच्च। श्रीभाष्यमते जीवस्य संविन्मात्रत्वमित्येतच्चायुक्तम्। संविदाश्रयत्वस्यापीष्टत्वात्। अन्यदप्येवमपार्थविस्तरणमपास्यम् ॥

नित्यमुक्तत्वात् ब्रह्म नाज्ञानाश्रय इति तृतीयप्रयोगे यदुक्तम्, नाविद्या-श्रयत्वमात्रं बन्धः, किन्तु अन्तःकरणधर्मसुखदुःखाद्याश्रयत्वम्। तच्च प्रतिबिम्बविशेषरूपजीवभागगतम्। सुषुप्तावविद्याश्रयत्वेऽपि निरतिशयानन्दानु-भवस्य सर्वसाक्षिकत्वात्। प्रकृत्याक्षश्रऽपीश्वरे बद्धत्वस्य परैरनङ्गीकाराच्चेति—

तदपि न — प्रकृत्याश्रयत्वं प्रकृतिनिरूपितशरीरात्मभावः, प्रकृतिनियामकत्वमिति भवतैवानूदिततया अज्ञत्वरूपाज्ञानाश्रयत्वस्य तावता प्रसक्त्यभावात् परमते दोषानापत्तेः। न हीदृशमज्ञानाश्रयत्वं ब्रह्मणि प्रकटार्थकारो वा विवरणकारो वाऽन्यो वा कश्चिदद्वैती विवक्षति। सुषुप्तौ निरतिशयानन्दानुभवः सर्वसाक्षिक इत्यपि विचार्यम्। तार्किकमीमांसकादिभिः सुखमहमस्वाप्समिति प्रतीतेरन्यथैव निर्वाहः क्रियते। न चैतत्प्रतीतेरन्यत् प्रमाणमानन्दानुभवेऽस्ति। यद्यपि वेदान्तिनस्तदा सुखरूपात्मप्रकाशमभङ्गुरमाशेरते — तथापि शोधने क्रियमाणे तस्य सुखस्य निरतिशयत्वं तदाऽनुभूयमानमिति, सुखस्वरूपमात्रस्यापि तदाऽनुभवान्तरगोचरत्वमेव वा दुरुपपादमेव ; वृत्तिज्ञानस्य कस्यचित्तत्राभावात्। अन्यथा सुषुप्तिविरोधात्। वस्तुतो ग्रहणरूपवृत्तीर्विना स्वरूपमात्रं स्वयंप्रकाशमित्येतावदेव तदा सेत्स्यतीति निरतिशयानन्दानुभवेत्यादिवाग्विस्तरस्य न तत्र प्रसक्तिः। किञ्च सुषुप्तोऽपि बद्धत्वेनैव सर्वेष्टः— तत्रान्तःकरणधर्मभूतसुखदुःखाद्याश्रयत्वरूपो भवदुक्तो बन्धश्च दुर्वचः। अतोऽविद्याश्रयत्वमेव तदा स्थितं बन्धो भवितुमर्हति। अत एवोक्तं शतदूषण्याम्, "न ह्यज्ञानाश्रयत्वमनन्तर्भाव्य बन्धो नाम" इति। सुषुप्तौ च जीवस्याज्ञत्वमज्ञानाश्रयत्वमस्तीति स बन्धः। तच्चेत् ब्रह्मणि, तदपि बद्धमेवेति॥ अस्तु सुखदुःखौपयिकसंसर्गविशेषो बन्ध इति चेत्—स यदि ब्रह्मणः, तर्हि नित्यमुक्तत्वविरोधः। यदि तदन्यस्य, तर्हि कस्य? ब्रह्मातिरिक्तस्याविद्यावस्थागतप्रतिबिम्बरूपस्य जीवस्यैवेति चेत्—भवतैव प्राक् ब्रह्मसिद्धिवाक्यशोधनावसरे चिन्मात्रस्य प्रतिबिम्बवर्णनायोगात् अनवच्छिन्नजीववाद एव भामत्यादिहृदयारूढ इत्युपवर्णिततया अन्तःकरणावच्छिन्नचैतन्यं जीव इति पक्षे प्रलयादावन्तःकरणाभावेन जीवहानिप्रसङ्गात् अविद्यांशावच्छिन्नत्वरूपजीवत्वप्रयोजकाकारे स्वीकृते ब्रह्मानादिबद्धमेव भवतीति कथं तस्य नित्यमुक्ततेति। विशिष्टं शुद्धाद्भिन्नम्, शुद्धं नित्यमुक्तम्, विशिष्टं बद्धमित्यादिकं तु प्रागेव परास्तम्। तथा सति डित्थाकारेण कृतं कर्म जन्मान्तरे डपित्थीभूय नानुभवितुमर्हति।

कर्तुर्विशिष्टस्य भोक्तुश्च विशिष्टस्य भिन्नत्वात् । अन्यथा ह्यकृताभ्यागमकृत-विप्रणाशप्रसङ्ग इति ।

किञ्च प्रकटार्थकारेण मायाप्रतिबिम्बत्वेन, विवरणकारेण माया-बिम्बत्वेन च स्वीकृतादीश्वरात् बद्धाज्जीवाच्च विलक्षणं शुद्धं ब्रह्म नित्यमुक्तं किमित्यविद्याश्रयत्वेन स्वीक्रियते । अन्येषामविद्याकार्याश्रयतया नाविद्या-श्रयत्वं भवतीति चेत् — भवतु काममज्ञानमनादि निराश्रयमेव । ब्रह्म-विषयकज्ञानं मुक्तिहेतुरिति तन्निवर्त्याज्ञानविषयत्वस्य ब्रह्मणि स्वीकार्यत्वे ऽप्याश्रयत्वस्वीकारस्यानपेक्षितत्वात् । अज्ञानाश्रयत्वं यद्यनुभवानुसारा-दुच्येत, तर्ह्यहमज्ञ इत्यनुभव एव ग्राह्यः । स चाहमर्थस्याज्ञानाश्रयत्वं ज्ञापयेत् । तत्तु भवतामनिष्टम् । "मायिनं तु महेश्वरम्" इत्यादिश्रुतिश्च न शुद्धब्रह्मणि अविद्याश्रयत्वबोधनक्षमम् । एवं "तमसा गूढम्" इत्यादि-कमपि कथञ्चित् विषयत्वं बोधयेत्, नाश्रयत्वम् । एवं नित्यमुक्ताश्रितत्वे अविद्यायाः हेयत्वमपि न स्यात् । अतो मुक्तावपि तदनुवृत्तिप्रसङ्गः । निवर्तनीयत्वे च हेयत्वमवार्यम् । हेयभूताविद्यावत्त्वं नित्यमुक्तत्वं च मिथो व्याहतमेव । यदि च कल्पितेनाविद्याश्रयत्वेन नित्यमुक्तत्वस्य न विरोधः, तर्हि तन्निवर्तनप्रयत्न एव व्यर्थः । तथा सति, तत्त्वाभिज्ञेषु जीवन्मुक्तेषु च नित्यमुक्तत्वव्यवहारः, न तु यत्किञ्चिन्मात्रज्ञजीवविषये स व्यवहार इति भवदुक्तं न युक्तम्, तस्यापि जीवत्वस्य मिथ्यात्वेन नित्यमुक्तत्वाविरोधात् ॥

अथ सर्वज्ञत्वात् ब्रह्मणोऽविद्याश्रयत्वं न भवतीति शतदूषण्युक्ते यदु-च्यते—शुद्धं ब्रह्म अविद्याश्रयः, मायोपहित ईश्वरो जगत्कारणं सर्वज्ञ इति तयोर्भे-दात् सर्वज्ञे अविद्याश्रयत्वस्यास्माभिरनुक्तेरदोष इति—तत्रेदं वक्तव्यम्—सिद्धा-न्तलेशसंग्रहे विवरणानुसारिमतं प्रस्तुत्य सर्वज्ञत्वादिविशिष्टं मायाशबलमीश्वर-रूपमेवोपादानम्—बहुभाष्यग्रन्थानुरोधात् । संक्षेपशारीरके शबलोपादान-त्वनिराकरणमपि मायाया अप्युपादानकोटिनिवेशवारणाभिप्रायेण । अतो न

जीवसाधारणरूपेणोपादानत्वमित्युक्तं विवृण्वता, **अच्युतकृष्णानन्दतीर्थेन** "वियदादिप्रपञ्च ईश्वराश्रितमायापरिणामः" इत्युत्तरग्रन्थमप्यनुसृत्य ईश्वरस्यैव मायारूपाविद्याश्रयत्वं वदता मायाप्रतिबिंबभूतस्येश्वरस्य कथं मायाश्रयत्वमित्याशङ्क्य अविद्यागताघटितघटनापटीयस्त्वादिना तदुपपाद्य, "न च शुद्धचैतन्याश्रितैव माया तत्र प्रतिबिम्बभावं घटयतीति कुतो नाश्रीयत इति शङ्क्यम्— 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति श्रुतिविरोधात्। मायिनमिति तस्या ईश्वराश्रितत्वप्रतीतेः।" इति शुद्धचैतन्यस्याविद्याश्रयत्वं निरस्य ईश्वरस्याविद्याश्रयत्वं प्राच्याभिमतमुपपादितम्। ईश्वरश्च सर्वज्ञ इति तत्रैवोक्तम्। संप्रतिपन्नञ्च। एवंच सर्वज्ञत्वमीश्वरे, अविद्याश्रयत्वं शुद्धचैतन्य इति विवरणमतविवरणं भवतस्तद्विरुद्धम्। वस्तुतः सर्वज्ञत्वं नाम मायाशबलचैतन्यस्य सर्ववस्तुना साकं संबन्धः। ईश्वरस्याविद्याश्रयत्वं नामाविद्याप्रतिबिंबभूतचैतन्यस्याविद्यासंबन्धः। न चाविद्याप्रतिबिंबस्याविद्यां प्रत्याधारत्वं संभवति; प्रतिबिंबं प्रत्येवाविद्याया आधारत्वौचित्यात्, यथा जलस्य सूर्यादिप्रतिबिंबं प्रति। अतः प्रतिबिंबत्ववाचोयुक्तिरियमिति मायासंबन्धिनि अविद्याश्रयत्वमित्येव वक्तव्यम्। तत्र मायायां चैतन्ये चोभयत्राविद्याश्रयत्वस्यासंभवात् चैतन्यांश एवाविद्याश्रयत्वमुक्तं भवति; सर्वज्ञत्वमपि तत्रैवेति कथं तयोर्वैयधिकरण्यम्। तस्मात् तयोर्विभिन्नवृत्तित्वोपपादनमयुक्तम्। सर्वज्ञत्वेन साकमस्याविद्याश्रयत्वस्य विरोधो नास्तीति कामं चिन्त्यताम्; न तु वैयधिकरण्यम्। अस्तु तथैवेति चेत्—किमिदं सर्वज्ञत्वम्? जीवानां प्रपञ्चे पारमार्थिकत्वभ्रम इवेश्वरस्यापि सोऽस्तीति कृत्वा तत्सहमेव किं सर्वविषयकं ज्ञानम्, किं वा सर्वमिदं समूलकमपरमार्थः, चैतन्यमेव सत्यमिति विवेकविशिष्टम्। आद्ये, तस्य भ्रान्तत्वमसर्वज्ञत्वं च स्यात्। अन्त्ये, तत्त्वसाक्षात्कारात्मकसार्वज्ञ्यशालिनि कथमविद्येयमनुच्छिद्यमानाऽवतिष्ठताम्? यदि सत्यपि साक्षात्कारे सा न निवर्त्यते, सा तर्हि सत्यैव स्यात्। एवञ्च जैवात् तत्त्वसाक्षात्कारादपि न निवर्त्स्यति।

किञ्चेयमविद्या सर्वेश्वरं प्रति किमपि प्रतिकूलमाचरति, न वा ? आद्ये अपसिद्धान्तः, यतः सिद्धान्तलेशसंग्रह एवान्ते, "न च परमेश्वरस्य रघुनाथाद्यवतारे तम(प)स्वित्वदुःखसंसर्गादिश्रवणात् मुक्तानामीश्वरभावे पुनर्बन्धापत्तिः । तस्य विप्रशापामोघत्वादिस्वकृतमर्यादा-परिपालनाय कथञ्चित् भृगुशापादिसत्यत्वं प्रत्याययितुं नटवदीश्वरस्य तदभिनयमात्रपरत्वात् । अन्यथा तस्य नित्यमुक्तत्व - निरवग्रहस्वातन्त्र्य समाभ्यधिकराहित्यादिश्रुतिविरोधात् " इति भगवतोऽवतारदशायामपि दुःखाभिनयमात्रमित्यखिलहेयप्रत्यनीकत्वस्य स्वीकृतत्वात् । अन्त्ये तु—एवमीश्वरस्य सर्वविधविभूतिमुखेनानवधिकातिशयानन्दसन्दोहदुहस्तदाश्रिताया: अविद्याया: स्वयं जीवैस्तत्त्वज्ञानमुखेन विलयविधानं तदैश्वर्यानन्दभञ्जकमेव स्यादिति वरं तदनिवर्तनम् । यद्वा, मायाविद्याभेदमङ्गीकृत्य मायाश्रयत्वमीश्वरस्य, अविद्याश्रयत्वं जीवानामिति स्वीकृत्य जैवतत्त्वज्ञानात् माया न निवर्तते ; न च जीवैस्तदानन्दविघात इत्यप्यभ्युपेत्यम् । एवमपीयं माया न कदाचित् निवर्त्स्यति । निवर्त्यत्वे च यत् दुष्टं हेयम् , तदेव निवर्त्यमिति तदाश्रयस्येश्वरस्य ब्रह्मणो वा मोचनीयाश्रयत्वापत्तिरिति नित्यमुक्तत्वहानिः स्यात् । अतोऽविद्याश्रयत्वमयुक्तमेव ।

यदा पुनरेकजीववादे स्थित्वा जीवान्तराणामीश्वरस्य च तज्जीवकल्पनामात्रत्वमित्यद्वैतिपक्ष आद्रियते, तदा ब्रह्मैव बद्ध्यते मुच्यते चेत्यतो नित्यमुक्तत्वाविद्याश्रयत्वयोर्विरोध एव । वस्तुतस्तु छत्रित्ववासस्वित्वकुण्डलित्वादिविशेषणभेदेऽपि देवदत्तव्यक्तिभेदाभाववत् जीवत्वेश्वरत्वादिना ब्रह्मस्वरूपे भेदायोगात् अज्ञत्वसर्वज्ञत्वसर्वनित्यमुक्तत्वसार्वज्ञ्यान्तर्गताविद्यानिवर्तकज्ञानवत्त्वाविद्याश्रयत्वादीनां मिथो विरोध एव । भवताऽत्र, "सविशेषस्यानधिष्ठानत्वात् शुद्धब्रह्मण एवाधिष्ठानत्वात् " इति विलिख्य, "अविद्यानाश्रयस्यानधिष्ठानत्वात " इति व्याहतं लिख्यते । अथाविद्याश्रयत्वेन ब्रह्मण्यारोपः सर्वज्ञत्वादिविशिष्टस्येत्युक्तमपि न युक्तम् । जीवसृष्टि-

प्रयोजकसार्वज्ञ्यादिविशिष्टस्य जीवकल्पितत्वायोगात् । " शुद्धं ब्रह्म स्वप्रकाशत्वात् न सर्वं जानाति । शुद्धस्य केवलस्य सर्वासंबन्धात् " इत्यप्यनुपपन्नम् । स्वप्रकाशत्वसर्वज्ञत्वयोर्विरोधाभावात् । मायोपहितेश्वरचैतन्यघटकचैतन्यांशस्यापि स्वप्रकाशतया सर्वज्ञत्वमायाश्रयत्वाद्ययोगप्रसङ्गाच्च । अविद्योपहितचिन्मात्रे सर्वसंबन्धे सति उपहितस्य शुद्धस्य चैकव्यक्तितया शुद्धे सर्वसंबन्धो नास्तीति दुर्वचत्वाच्च ॥

अपिचेदं शुद्धचैतन्ये भवदिष्टमविद्याश्रयत्वं किंरूपम् ? न तावत् विशिष्टाद्वैतिमत इव नियन्तृत्वादिरूपम् । शुद्धे तदयोगात्; ईश्वर एव तस्य कथञ्चित् पर्यालोचनीयत्वात् । न च संयोगादिः । मिथ्याभूताविद्यायाः सत्यब्रह्मसंयुक्तत्वायोगात् । नाप्यविद्याश्रयत्वेन कल्प्यमानत्वम् । तद्घटकस्याश्रयत्वस्यापि शोधनीयत्वात् । अविद्याप्रकारककल्पनाविषयत्वमविद्याश्रयत्वमित्युक्तावपि प्रकारतावच्छेदकसंबन्धस्य निरूपणीयत्वात् । ब्रह्मण्यविद्याश्रयत्वसिद्ध्यनन्तरभूतायाः कल्पनायाः अविद्याश्रयत्वनिरूपकत्वायोगाच्च । अविद्याप्रकारककल्पनाऽप्यविद्यावत् अनादिरिति चेत्—कल्पनायाः ब्रह्मणश्च कः संबन्धः ? मिथ्याभूतायास्तस्याः सत्येन वास्तवसंबन्धायोगात् । कल्पनाविषयत्वप्रकारककल्पनाकल्पनापरम्परायाञ्चानवस्था । कल्पनाश्रयश्च कः ? ब्रह्मैवेति चेत्—शुद्धत्वभङ्गः । ईश्वर एवाविद्याश्रय इति सिद्धान्तलेशसंगृहीतपक्षे च सर्वज्ञे तत्र कल्पनाश्रयत्वं व्याहतम् । यत्किञ्चित् भवत्विदमविद्याश्रयत्वम्, तस्य शुद्धत्वेन साकं विरोधः स्यादेव ॥

यत्तु—शैववैष्णवगाणपत्यादीनां यथासंभवं प्रामाण्याभ्युपगमेन जगद्गुरवः षण्मतस्थापकाश्च हि भगवत्पादा इति .... तदिदं स्तवनं प्रस्तवनं वा नूनमकाण्डे । किमिदं यथासंभवं प्रामाण्यम् ? तत्त्वज्ञानोत्पत्तेः प्राक् प्रामाण्यमिति चेत्—शैवो विष्णुपारम्यवेदनात् प्राक् शैवं प्रामाण्यं मन्यत एवेति किमत्र स्थापनाप्रयासेन ? शिवपारम्यं विष्णुपारम्यं गणपत्यादिपारम्यं च

अविशेषं न भगवत्पादा अपि स्थापयन्तीति तदीयश्रीविष्णुसहस्रनामादिभाष्यादिष्ववहितमनसां सहृदयानां व्यक्तम् । वस्तुतो वेदप्रामाण्यस्यैवाद्वैतमते अभावात् बौद्धजैनादिबाह्यपक्षवैलक्षण्येन शैवादिपक्षं स्थापयितुं नाद्वैतिन पारयन्तीति प्रागेवाऽऽवेदि । एवञ्च षण्मतस्थापनाचार्या इति किं सङ्कोचेन, सर्वमतस्थापनाचार्या इत्येव घुष्यताम् । सर्वमिथ्यात्ववादिन एव सर्वमतस्थापका इतीयमपि काचित् प्रतारणसरणिरित्येव प्राज्ञाः । सत्यत्ववादिनस्तु वेदतदितरयोर्वैलक्षण्यव्युत्पादनेन वेदवेद्याः सर्वा अपि देवताः तत्प्रभावांश्चानपलपन्तः तत्र तत्र श्रद्धया अवतरतां तत्तत्प्रदेयफलप्राप्तिं तादृशफलप्राप्त्यादेः पुरुषोत्तमाधीनत्वं पुरुषोत्तमवेदिनामपुनरावृत्तिरूपतत्परमसाम्यप्राप्तिं च प्रतिपादयन्तः शैववैष्णवादीनि मतानि सर्वथाऽनुपेक्ष्य, "निष्ठा नारायणःप्रभुः" इति भगवद्बादरायणवचनं प्रमाणयन्ते । एवं वस्तुतत्त्वं व्युत्पादयन्त एव सर्वजनाज्ञानान्धकारनिरोधकत्वात् अशेषगुरवः सर्ववैदिकमतस्थापकाश्चेति । विस्तरस्त्वन्यत्र ॥

सार्वज्ञ्यं ब्रह्मणो मा भूदित्यद्वैतिविभाषणे ।
'नायं शाप' इति प्रोच्य प्रत्याह शतदूषणी ॥

इदमेव किञ्चिदुपधीकृतं ध्रुवं
'शतदूषणी हि शपती'ति वादिना ।
परिहासजल्प इति बालजल्प इ-
त्यतिशान्त एष किमिति ब्रवीत्यहो ॥

अविद्याश्रयतेदृक्षी ब्रह्मणीव न युज्यते ।
अस्मास्वपि ततः स्निग्धाः स्याम विद्यैकसंश्रयाः ॥

शुभमस्तु

---

श्रीः

# अवेद्यत्वभङ्गप्रसाधनम

वेद्यं भक्तैर्निखिलनिगमस्तोमतोऽन्यैरवेद्यं
सत्यानन्दानुभवनिलयं सच्चिदानन्दरूपम् ।
ज्ञानानन्दात्मकनिरुपमव्योमधामाधिवासं
धामानन्तं किमपि कलये कञ्जधामाधिवासम् ॥

अनुभूतेः स्वप्रकाशत्वसाधनव्यसनिभिरद्वैतिभिः तस्याननुभाव्यत्वं स्वीकृतम्, "अनुभाव्यत्वे घटादिवत् अननुभूतित्वप्रसङ्गात्" इति । स्वयंवेद्याया एवानुभूतेरनुभाव्यत्वमप्यविरुद्धमिति श्रीभाष्यस्थापितं शतदूषण्यामुपपाद्यते । तत्परीक्षणप्रवृत्तेन यत् प्रथमं ब्रह्मसिद्धिवचनमुपात्तम्, तन्न तदपेक्षितसाधनपर्याप्तमिति प्रतिपाद्य, अन्यत् तदुक्तं शोधयेम । लोकेऽनुभूयमानस्यैव पुरुषार्थत्वात् ब्रह्मरूपसंविदोऽसंवेद्यत्वेऽपुरुषार्थत्वापत्तिरित्याशङ्क्य, "न वयं संविदः संवेद्यत्वं नेति ब्रूमः, प्रमातुः प्रमारूपप्रमाणफलस्य च यथा परासंवेद्यतया स्वसंवेद्यतामात्रेणासत्कल्पत्वाभावः, तथा संविदोऽपि; स्वसंवेद्यत्वात्"इति तत्रोक्तम्——तत्र संविदः तथा प्रमातुः प्रमितेश्च स्वसंवेद्यत्ववर्णनात् अनुभूतितदाश्रयात्मोभयविलक्षणसंविद इव लौकिकानुभूतीनामपि स्वसंवेद्यत्वमेवेष्टं प्रतीयते । यदि चात्रानुभूतेरन्यैकवेद्यत्वकथनमनुपपन्नमित्येवाशयो वर्ण्येत, तदा न वयं नैयायिकमीमांसकादिवत् निरसिष्यामः । अन्याननुभाव्यत्वस्याप्यभिमतत्वात्तु तमंशं प्रतिक्षिपामः । स्वयंप्रकाशत्वस्य संमतत्वात् । अत एव **तत्त्वदीपिका**यामात्मनः इतरनिरपेक्षप्रकाशवत्त्वेन ज्ञानरूपत्वकथनस्यापि स्वागतमेव ।

यत्त्विह स्पष्टमिष्टसिद्धिवचनम्, अनुभूतेरनुभाव्यत्वेऽननुभूतित्वप्रसङ्ग इति——तत्तु न युज्यते——तत्रानुभाव्यत्वं निषिद्ध्यमानं किं स्वात्मकानुभवविषयत्वम्, उत स्वेतरानुभवविषयत्वम्? नाद्यः, तस्याप्यभावे संवेद्यत्वभङ्गः

स्यादिति स्वयमुक्तत्वात् । नान्यः, स्वात्मकानुभूतिविषयत्वरूपसंवेद्यत्वरूपेण विशेषेण घटादिवैलक्षण्ये अनुभूतित्वे च संपन्ने इतरानुभवविषयत्वस्वीकारस्यानुभूतित्वादिभञ्जकत्वाभावेन तदावश्यकत्वायोगात् । अथापि तत्स्वीकारः किमर्थं इति चेत्—अनुभवानुसारादावश्यकत्वाच्चेति निरूपयामः । अनुभूतित्वमन्यानुभाव्यत्वं च न मिथो विरुद्धम् । अनुभूतित्वं हि सत्तया प्रकाशमानत्वमिति वेदान्ती ब्रूयात् । परंत्विदं न सर्वतान्त्रिकसंमतम् । अनुभूतिपदस्य सर्वैरपि व्यवह्रियमाणतया सर्वसंमत एव कश्चित् तदर्थो ग्राह्यः । आत्मन्यनुभूतिशब्दप्रयोगश्च न तान्त्रिकान्तरसंमतः, नापि लोकप्रसिद्धः । अनुभवामि, जानामि, संवेद्मि इत्यादिव्यवहारविषयभूतज्ञानसंविदनुभवादिशब्दानां लोकव्युत्पत्तिगम्यं प्रवृत्तिनिमित्तं तावत् स्वतो विषयप्रकाशकत्वम् । इदमेव चार्थान्तरव्यवहारहेतुत्वम् । तेन स्वव्यवहारहेतुत्वरूपं स्वप्रकाशत्वं काममनुमीयताम् । तावता—'स्वेतराधीनव्यवहारविषयत्वरूपमनुभवान्तरागोचरत्वमप्यावश्यकम्, अन्यथा अनुभूतित्वभङ्गः' इत्यत्र तु न किञ्चित् प्रमाणम् । प्रत्युतानुभूतीनामेकात्मगतानां परकीयानुभवगोचरत्वादेः संप्रतिपन्नत्वात् तदनुमानं कालातीतमपि ॥

यत्तु—स्वसंवेद्यतयैवासत्कल्पत्वपरिहारे सिद्धे किमिति संविदन्तरसंवेद्यत्वं स्वीकर्तव्यमिति—तन्न—न ह्यसत्कल्पत्वपरिहारार्थमेव तत्स्वीकार इति केनचिदुक्तम् । अन्यार्थमपि तत्संभवात् । अन्यत् फलमनपेक्षितमिति चेत् — असत्कल्पत्वमपि मा नाम परिहारि; किं तेन ? यथा संविदन्तरनिरपेक्षमेव स्वसत्ताकाले स्वव्यवहारनिर्वाहः, तथा स्वाभावकाले स्वव्यवहारः संविदन्तरमपेक्ष्यैव कार्य इति तदर्थमेष्टव्यमेव संविदन्तरवेद्यत्वम् ।

यत्तूच्यते — संविदां स्वसंवेद्यत्वादनुभाव्यत्वमस्ति, संविदन्तरानुभाव्यत्वमेव तु निषिद्ध्यते इति — तेन किमुक्तं भवति ? अनुभूतिरननुभाव्येति प्रतिज्ञायाः अनुभूतिरनुभवाधीनप्रकाशरहितेति नार्थः, किन्तु अनुभूतिः स्वेतराधीनप्रकाशरहितेति । तत्र परेण परकीयानुभूतेरनुभवान्तरेण ग्रहणादिपर्या-

लोचनया — अनुभूतिः स्वेतरानधीनप्रकाशशालिनीत्येवमेव तदर्थोऽस्तु; तेन स्वाधीनप्रकाशः सिद्ध्यति; स्वेतराधीनोऽपि प्रकाशः संभवन् न वारणीय इत्येवोच्यते ॥ यच्चोक्तम् — संविदन्तरवेद्यत्वे स्ववेद्यत्वं न भवति, एतत्सत्त्वे च न तदिति — तत् कुतः? उभयोरविरोधात्। वेद्यस्यैकत्वेऽपि वेदितुर्वेदनकालस्य च भिन्नतया वेदनान्तरस्याप्यपेक्षितत्वात्। धर्मभूतज्ञाने अनुभवान्तरावेद्यत्वमनुभूतित्वप्रयुक्तं दृष्टमिति तु परमोऽपलापः; परेण परज्ञानानुमानादनुभवान्तरवेद्यत्वस्यैवानुभविकत्वात्। अनुभूतेः स्वसत्ताकाले स्वाश्रयपुरुषगतानुभवान्तराननुभाव्यत्वं तु स्वप्रकाशत्वप्रयुक्तम्। स्वप्रकाशत्वानङ्गीकारादेव तार्किकाः अनुभूतित्वे सत्येवानुव्यसायग्राह्यत्वमप्यास्थिषत। संविदो ज्ञानान्तरवेद्यत्वस्वीकारे सत्तामात्रेण प्रकाशमानत्वकथा कथामात्रमिति तु न। यं प्रति प्रत्यक्षवेद्यत्वम्, तदन्यं प्रति अनुमानादिवेद्यत्वमितिवत् यं प्रति सत्तामात्रेण प्रकाशमानत्वम्, तदन्यपुरुषं प्रति ज्ञानान्तरवेद्यत्वमित्युक्तौ अविरोधात्; धर्मभूतज्ञानात्मकसंविदः तदाश्रयपुरुषं प्रत्यपि स्वासत्ताकाले ज्ञानान्तरवेद्यत्वसंभवाच्च। अतोऽनुभूत्यननुभूत्युभयसाधारणतया लोकप्रसिद्धस्यानुभाव्यत्वस्याननुभूतित्वप्रयोजकत्वं न संभवति। ननु घटत्वपटत्वादेः प्रत्येकमननुभूतित्वप्रयोजकत्वे गौरवमिति चेन्न — अनतिप्रसक्तसर्वसाधारणधर्मरूपप्रयोजकान्तरालाभे विशेषधर्माणां प्रयोजकत्वस्वीकारेण गौरवस्यापि सोढव्यत्वात्। न च न तादृग्धर्मः। विषयाप्रकाशकत्वस्यास्वप्रकाशत्वस्य वाऽनुभूतिशब्दाव्यवहार्यत्वप्रयोजकत्वसंभवात्। अज्ञानाविरोधित्वमननुभूतित्वप्रयोजकमिति श्रीभाष्य एव भाषितत्वाच्च ॥

यत्तु — अननुभूतितत्वप्रयोजकमनुभाव्यत्वं तावत् प्रत्यक्षविषयत्वमेव; न तु ज्ञानसामान्यविषयत्वम्। अतः परानुभवानां परेणानुमानादिपरोक्षज्ञानेन ग्रहणेऽपि न ननुभूतित्वप्रसंग इति — तन्न — तथासति अतीन्द्रियाणां जडपदार्थानां परमाण्वाकाशप्रकृतिमहदादीनां प्रत्यक्षविषयत्वरूपाननुभूतित्वप्रयोजकाभावेनानुभूतित्वापत्तेः। तत्र प्रयोजकान्तरगवेषणे च भवताऽप्यनुगतप्रयोजक-

मनुक्तं भवति । एवं स्वप्रकाशत्वं प्रत्यक्षज्ञानान्तरविषयत्वं च व्याहतमित्यपि न युक्तम् । स्वात्मविषये स्वप्रकाशस्यैव ज्ञानस्य योगिप्रभृतिप्रत्यक्षज्ञानविषयत्वस्याप्यविरोधात् । एवं ज्ञानान्तरविषयत्वं परानुभवानामुपपादयतैव भवता, "तथा च ज्ञानान्तरसंवेद्यत्वे घटादिवदननुभूतित्वापत्तिर्दुष्परिहारा" इति निगमनं व्याहतमेव क्रियते ॥

अनुभूतिरसती अननुभाव्यत्वात् गगनकुसुमवदित्यनुमाने धर्मभूतज्ञाने व्यभिचारवर्णनमलग्नम् । तस्यानुभाव्यत्वस्यैव स्वीकृतत्वात् ॥ यत्तूक्तम् — असत्त्वप्रयोजकं नाननुभाव्यत्वम्, किन्त्वज्ञानाविषयत्वम् । न च घटादीनामज्ञानाविषयत्वमेवेति वाच्यम्—घटावच्छिन्नचैतन्यस्याज्ञानविषयत्वे घटादेस्तदवच्छेदकत्वात् । तथा चाज्ञानविषयतदवच्छेदकत्वान्यतराभाव एवासत्त्वप्रयोजक इति-तन्न—अननुभाव्यत्वापेक्षयाऽत्र कस्यचिल्लाघवस्यादर्शनात् । अज्ञानस्याज्ञानान्तरविषयत्वाभावेनाज्ञानाविषयतावत्त्वेनासत्त्वापत्तेश्च । न च विकल्पाख्यवृत्तिविषयत्वमेवासत्त्वप्रयोजकमिति वाच्यम्—असद्विषयकज्ञानस्यैव विकल्पपदार्थतया असत्त्वे असद्विषयकज्ञानविषयत्वं प्रयोजकमिति निरूपणस्य दुष्करत्वात् । वस्तुतो यदननुभाव्यम्, तदसत् तुच्छमिति न वयं ब्रूमः । सतामपि केषाञ्चित् सामग्रीविरहेणाज्ञायमानत्वसंभवात् । अनुभूतिर्यद्यनुभवान्तरानुभाव्या स्यात्, तर्हि असती स्यात् इति अनुभवान्तरदलघटनं तु नैवाभिमतम् । यत् प्रकाशानर्हं स्यात्, तत् असदित्येतावत एव प्रर्याप्तत्वात् । न चाननुभाव्यत्वप्रयुक्तमननुभूतित्वमित्यप्यस्मदाशयः, किन्तु अननुभाव्यत्वमिवानुभाव्यत्वमपि नानुभूतित्ववारकमिति ॥

यत्तु — अनुभूतेरनुभूतित्वरूपपक्षमात्रनिष्ठमप्रयोजकं धर्मं पुरस्कृत्य स्वयंप्रकाशत्वस्थापने घटः स्वप्रकाशः घटत्वादित्यप्यापद्यत इति शङ्कायामुच्यते—घटः स्वप्रकाशः अनुभाव्यत्वादिति भवन्मतेऽप्यापद्यत इति—तन्न—एतत्प्रतिबन्देराशङ्कितदोषपरिहारकत्वाभावात् । पक्षमात्रवृत्तिर्धर्मः अप्रयोजकत्वेन विवक्षितसाधको न भवति ; घटत्वादिवत् अनुभूतित्वमपीत्यत्रैव तात्पर्यात् । न

चानुभाव्यत्वं पक्षमात्रवृत्ति—पटादावपि सत्त्वात् । तत्रास्वप्रकाशे हेतुसद्भावाद्व्यभिचारश्च । यावत्सत्त्वं प्रकाशमानत्वस्योपाधित्वात् व्याप्यत्वासिद्धिश्च । यत्र यत्र स्वप्रकाशत्वम्, तत्र तत्र यावत्सत्त्वं प्रकाशमानत्वमप्यस्ति । अनुभाव्यस्तु घटादिश्चक्षुरादिसन्निकर्षकाल एव भासते ; अभानकाल एव चाधिक इति । यदि च घटादेः स्वप्रकाशत्वे किञ्चित् प्रमाणं स्यात्, तर्हि तत एव तत्सिद्धिरिति नानुभाव्यत्वं तत्र प्रयोजकम् । न च घटादौ तत्सत्त्वे किञ्चित् प्रमाणं भवति ॥ यत्तु पुनः—अननुभाव्यत्वमसत्त्वप्रयोजकं न भवति । असतः—शशशृङ्गादेर्धर्मिण एवाभावेन तत्र हेतुसाध्यान्वयवर्णनायोगेन हेतोर्दृष्टान्तरहितत्वादिति-तन्न-अभावयोर्व्याप्यव्यापकभावग्रहे तुच्छस्य गगनकुसुमादेर्दृष्टान्तीकरणस्य भवन्मतसुप्रसिद्धतया तथैव प्रकृतेऽपि संभवस्य भवतः प्रति वर्णनात् । असत्त्वरूपसाध्याभावस्य सत्त्वस्य, अननुभाव्यत्वरूपहेत्वभावस्य च, 'यत् सत् तत् अनुभाव्यम् यथा घटः' इत्येवं सर्वत्र व्याप्तेः सुग्रहतया व्यतिरेकव्याप्त्यैवानुमाननिर्वाहाच्च । एवं घटः स्वप्रकाशः अनुभाव्यत्वादित्यत्राज्ञानविरोधित्वमुपाधिः, स्वप्रकाशत्वव्यापकाज्ञानविरोधित्वाभावात्पटादिवृत्तित्वादनुभाव्यत्वं स्वप्रकाशत्वव्यभिचरितमिति ॥

यत्तु—घटादेरननुभूतित्वे अज्ञानाविरोधित्वं निबन्धनमिति श्रीभाष्यमयुक्तम् । स्वप्रकाशाया अनुभूतेरपि अज्ञानाविरोधित्वात् प्रमाणजन्याया वृत्तेरेवाज्ञानविरोधित्वात् अनुभूतेरप्यननुभूतित्वापत्तेरित्युक्तम्—तन्न—ज्ञानस्वरूपमपि ब्रह्म नाज्ञानविरोधि किन्तु वृत्तिरेव तद्विरोधिनीति भवत्सिद्धान्तस्यास्मदनभिमतत्वात् । न च भवद्भिरपि शुद्धचैतन्यस्याज्ञानविरोधित्वं नास्तीति सुवचम् । तथा सति चिन्नास्ति, अहं नास्मीत्यादिप्रतीत्यापत्तेः । असत्त्वापादकाज्ञानविरोधित्वस्वभावादेव हि तस्य तादृशाज्ञानाविषयत्वम् । अपरिच्छिन्नानन्दत्वाज्ञानमात्रमेव खल्वनुभूतिस्वरूपमात्रेण न निवर्त्यते । अतोऽनुभूतेरज्ञानविरोधित्वमसत्त्वादिव्यवहाराविषयत्वमस्त्येवेति । प्रपञ्चमूलभूताज्ञानविशेषविरोधित्वं तु अनुभूतिस्वरूपस्य भवद्भिर्नेष्यते, "तत्त्वमसी" तिवाक्यजन्यवृत्तिनिरोध्यत्वस्य

तत्र संप्रत्यर्थः। तस्मादक्षतं सामान्यतोऽनुभूतेरज्ञानविरोधित्वम्। यत्किञ्चिदज्ञानाविरोधित्वं तु सर्वविषयकज्ञानातिरिक्तस्य सर्वस्य ज्ञानस्य। तत्तु ज्ञानानां सर्वप्रकाशकत्वस्वीकारे बाधकं स्यात्; न तु स्वप्रकाशकत्वरूपविशेषे।

यदि चानुभूतेश्चैतन्यस्यात्मभूतस्य सर्वत्रिधाज्ञानाविरोधित्वमेवास्तीति मन्यते, तर्हि चैतन्यमस्वप्रकाशमज्ञानाविरोधित्वात् घटादिवदिति जडत्वमेवापद्येत.। अत्र, 'अनुभूतिस्वप्रकाशत्वानुमानेऽज्ञानाविरोधित्वमुपाधिरिति विवक्षणात् उपाध्यभावेन साध्याभावसाधनमत्या अनुभूतिरस्वप्रकाशा अज्ञानविरोधित्वादित्यनुमानं विवक्ष्यते। तत्र हेत्वसिद्धिः। अनुभूतेरज्ञानाविरोधित्वस्यैवाद्वैतिस्वीकृतत्वात्' इति कथनमनुक्तोपालम्भः, असदर्थकथनमपसिद्धान्तश्चेति ध्येयम्। यदि तु अनुभूतिः स्वप्रकाशा अनुभूतित्वादित्यनुमाने स्वप्रकाशत्वरूपं साध्यं स्वाधीनप्रकाशकत्वमित्येतावति तृप्तिमनुपगम्य स्वेतराधीनप्रकाशरहितत्वं स्वप्रकाशत्वं सिषाधयिषितम्, तदा तत्र व्यतिरेकव्याप्तौ यत्र स्वेतराधीनप्रकाशवत्त्वम्, तत्राननुभूतित्वमिति गृह्यमाणायामज्ञानाविरोधित्वमुपाधिर्भवत्येव। तत्र साध्यस्थानापन्नमननुभूतित्वं यत्र घटादौ, तत्राज्ञानाविरोधित्वसत्त्वात्। साधनस्थानापन्नं स्वेतराधीनप्रकाशवत्त्वं यत्र परानुभवादौ, तत्राज्ञानविरोधित्वसामान्याभावरूपमज्ञानाविरोधित्वं नास्तीति साधनाव्यापकत्वमिति। न हि भवन्मतसिद्धं यत् त्रिविधाज्ञानविरोधित्वं तदभावोऽस्माभिरज्ञानाविरोधित्वमित्युपाधितयाऽत्र विवक्ष्यते, येन साधनव्यापकत्वप्रत्याशा स्यात्। अज्ञानविरोधित्वसामान्याभावस्यैव सामान्यतोऽत्रोपाधितया विवक्षितत्वात्। एतेन वस्तुतस्त्वित्यादिकमुपपाद्य निरस्तं वेदितव्यम्॥

यच्चोक्तम्—अननुभूतित्वं स्वप्रकाशप्रत्यक्षसंविद्रूपत्वाभाव इति—तन्न--स्वप्रकाशपदवैयर्थ्यात्। प्रत्यक्षेति विशेषणायोगाच्च। प्रत्यक्षानुमित्युपमितिशाब्दबोधादीनामनुभवत्वं हि सर्वदर्शनसंमतम्। स्मृतिभिन्नं ज्ञानमनुभव इति च निर्ब्रुवन्ति। उपलब्धिपदमपीदृशसर्वविषयं प्रयुज्यते न्यायसूत्रतद्भाष्यादिषु;

किमुत अनुभवपदम् । भवद्भिश्च घटोऽनुभूयते, पटोऽनुभूयत इति, घटः सन्, पटः सन् इति सत इव सर्वानुगताया एवानुभूतेर्ब्रह्मत्वं वक्तव्यम् । तथैव प्राच्यैरुक्तञ्च । न चातीन्द्रियेषु प्रत्यक्षरूपानुभूतिग्रहणेऽनुगतिर्वर्णयितुं पार्यते । संवेद्मि, जानामीत्येतत्पर्यायाया एवानुभूतेर्विवक्षेति चेह स्पष्टम् । अतोऽनुभूतिः स्वप्रकाशेत्यत्रानुभूतिपदेन ज्ञानमित्येवविवक्षितत्वात प्रत्यक्षेति विशेषणदानं कथं घटतामिति । एवञ्चानुभूतित्वादिति हेतुरपि भागासिद्धिपरिहाराय सर्वपक्षव्यक्त्यनुगतं ज्ञानत्वमेवेति व्यतिरेकव्याप्तौ अननुभूतित्वं ज्ञानत्वाभाव एव। सर्वथा अभानापादकाज्ञानाविरोधित्वमितिविशेषणरूपेणोपाधिवर्णनं नैव चिकीर्षितम् । चिकीर्षितेऽपि नानुपपत्तिः, परानुभवस्य परं तदाश्रयं प्रत्यभानापादकाज्ञानविरोधितयोपाधेरभावेन साधनाव्यापकत्वस्याक्षतत्वादिति ॥

एवं तावत् परीक्षाग्रन्थकृतोपपादनसरणिः परीक्षिता । अथ विशिष्य शोधनेनानुभूतेरवेद्यत्ववादो निरस्यते—अनुभूतिरननुभाव्या अनुभूतित्वात् व्यतिरेकेण घटादिवदिति भावत्कमनुमानम् । अत्रानुभूतिरिति अनुभाव्यत्वमिति च किं विवक्षितमिति विवेक्तव्यम् । संवेद्यत्वं हि पञ्चविधं भवदिष्टम् । स्ववेद्यत्वम्, स्वाकारवृत्तिप्रतिफलितचैतन्यवेद्यत्वम्, साक्षिवेद्यत्वम्, प्रमाणजनितवृत्तिविषयत्वम्, विकल्पाख्यवृत्तिविषयत्वं चेति । तत्र प्रथमं चतुर्थञ्च संविन्मात्रस्य, द्वितीयं घटादेर्जडस्य, तृतीयमज्ञानस्य प्रातिभासिकादीनाञ्च, पञ्चमं तुच्छस्येति च विभागः । तत्रानुभूतिरिति संविन्मात्रविवक्षणे तस्य स्वसंवेद्यत्वतत्त्वमसिवाक्यजनितवृत्तिविषयत्वयोः सत्त्वान्नाननुभाव्यत्वरूपसाध्यवत्त्वम् । वृत्तिविवक्षायां तासामपि साक्षिवेद्यत्वात् बाध एव । न च संविन्मात्रस्य वृत्तिविषयत्वेऽपि संविन्मात्रविषयत्वं नास्ति; तथा च चैतन्यं चैतन्याविषयः चैतन्यत्वादित्येव प्रयोग इति वाच्यम्—ब्रह्मसिद्धौ, असंवेद्यत्वे अपुरुषार्थतेत्याशङ्क्य, "तस्मात् संवेद्यम्, आत्मप्रकाशत्वात्; असंवेद्यञ्च विषयवत् कर्मभावाभावात्" इति विषयतुल्यकर्मभावाभावेऽपि चैतन्यप्रकाश्यत्वस्य स्वीकृतत्वात् । पुरुषार्थत्वं ह्यनुकूलतयाऽनुभूयमानत्वम् । यदि चानुकूल्यविशिष्टस्वप्रकाशो न मुक्तौ स्यात्, कथं पुरुषार्थः प्राप्तः स्यात् । तत्र यदि ज्ञानान्तरेणानुकूल्यवि-

शिष्टं स्वमनुभूयत इति नेष्यते, स्वेन वा तत्प्रकाश एष्टव्यः । न चेत्, पाषाणकल्पमुक्तिवादादविशेषः स्यात् । तर्हि निर्विशेषत्वं कथमिति चेत्—मा भूत्। आस्तामेष विचारः । संविदन्तरावेद्यत्वमेव शतभूषण्यां सिषाधयिषितमिति चेत्—भवन्मते पक्षीभूतसंविन्मात्रातिरिक्तसंविदप्रसिद्ध्या साध्याप्रसिद्धिः । अस्तु तर्हि अननुभाव्यत्वं वृत्त्यविषयत्वमिति चेत्—तत्त्वमसिवाक्यजनितवृत्तिविषयत्वात् बाधः । प्रपञ्चविषयकवृत्त्यविषयत्वसाधने चार्थान्तरम् । अन्यविषयकवृत्त्यविषयत्वस्य घटादावपि संभवेन सर्वप्रकाराननुभाव्यत्वस्यासिद्धेः । वृत्तिप्रतिफलितचैतन्याविषयत्वं साध्यमिति चेन्न—अज्ञानस्य प्रातिभासिकादेश्च साक्षिवेद्यत्वस्य वृत्तिप्रतिफलितचैतन्याविषयत्वस्य च भवदिष्टतया ततो वैशेष्यासिद्धेः । सामान्यतश्चैतन्याधीनप्रकाशराहित्यमेव साध्यमिति चेन्न—स्वस्य स्वयंप्रकाशत्ववादिना स्वात्मकचैतन्याधीनप्रकाशाङ्गीकारेण बाधात् । ननु - अज्ञानादिषु, यदि चैतन्यं न स्यात्, तर्हि तत्प्रकाशो न स्यादिति विमर्शमूलं चैतन्याधीनप्रकाशत्वमिष्यते । चैतन्ये तु स्वस्मिन् स्वाधीनः प्रकाशः कश्चिन्नेष्यत एव । तथा च स्वयंप्रकाशत्वं नाम स्वेतराधीनस्वव्यवहारकत्वाभावः साध्यम् । इदञ्च सर्वव्यावृत्तमिति चेत्—पक्षीभूतस्य चैतन्यस्य स्वपदग्राह्यतया तद्भिन्नं ह्यचैतन्यमेव । न च तदधीनश्चैतन्यव्यवहारः परैरपीष्यत इति सिद्धसाधनम् । स्वेतरचैतन्याधीनेति निवेशे चाप्रसिद्धिः ; चैतन्यद्वयस्य भवन्मते अभावात् । स्वाधीनस्वविषयकव्यवहारसामान्यकत्वं साध्यम् । स्वविषयव्यवहारो यदि स्वेन कदाचित्, परेण च कदाचिदिति परैरिवास्माभिरिष्येत, तदा व्यवहारसामान्यं स्वाधीनं न भवेत् । न च तथेष्यत इति न दोष इति चेत्-न-सामान्यदलाभावेऽपि घटादिजडवैलक्षण्ये सिद्धे तन्निवेशस्यानपेक्षितत्वात । घटादिविषयकव्यवहारस्य नियमेन चैतन्याधीनतया चैतन्यस्य यया विधया चैतन्यकारणत्वं तया घटादेस्तद्व्यवहारकारणत्वाभावेन घटादौ स्वाधीनकिञ्चित्स्वव्यवहारकत्वमपि नास्ति अनुभूतित्वहेतुरपि नास्तीति अनुकूलतर्कस्य वा व्यतिरेकव्याप्तेर्वा सुवचत्वात् ॥

किञ्च चैतन्यमिति शुद्धसंविन्मात्रस्य पक्षीकरणम्, किं वा वृत्तिप्रतिफलितचैतन्यादेरपि। नाद्यः, चैतन्यपदस्य साधारणतया संकोचायोगात्। शुद्धचैतन्यविषयकव्यवहारस्याप्रसिद्ध्या साध्यसमन्वयायोगाच्च। प्रत्यक्षानुमित्यादिवृत्तिचैतन्यानां वृत्तिचैतन्यान्तराधीनव्यवहारकत्वाभावस्य प्रकृतानुमानतोऽसिद्धिप्रसङ्गाच्च। मा भूदिति चेत्—ब्रह्मसिद्ध्यादिप्राच्यग्रन्थविरोधः। येषामनुभवानामनुमेयत्वं भाट्टैरिष्यते, अनुव्यवसायादिविषयत्वं च तार्किकैः, तेषामेव परप्रकाशकत्वेन हेतुना स्वप्रकाशकत्वसाधनस्यैव तत्र तत्र वर्णितत्वात्। तादृशानुभवानामेव घटोऽनुभूयते, पटोऽनुभूयत इति प्रसिद्धत्वात्। प्रत्यक्षानुमित्यादिलोकप्रसिद्धचैतन्यविलक्षणस्य चैतन्यस्याप्रसिद्धतया आश्रयासिद्ध्यादिदोषापाताच्च। श्रुतिप्रसिद्धं तदिति चेत्—तत्र तत् यादृशं प्रसिद्धम्, तादृशं तत् सिद्ध्यत्येवेति किं तत्रानुमेयं किञ्चिदस्ति। यदि तत् स्वव्यवहारं स्वयमेव कुर्यात्, तस्य श्रुतिप्रसिद्धत्वगवेषणमपि खलु व्यर्थमेव। अविशेषात् तस्य सर्वं प्रति स्वप्रकाशत्वसंभवात्। तदभावे चास्वप्रकाशत्वस्यैव सिद्ध्या स्वप्रकाशत्वानुमानस्य बाधितत्वात्। तत् यदि चैतन्यं ब्रह्मभूतम्, स्वं प्रति स्वप्रकाशम्, परं प्रति चान्यथा, तथापि स्वाधीनस्वव्यवहारसामान्यकत्वानुमानं बाधितम्॥

ननु पक्षीकृता अनुभूतयः प्रत्यक्षादय एव। तदन्तर्गतैकैकव्यक्तेरपि तदितराधीनव्यवहारकत्वाभावः साध्यत इति चेत्—ता अनुभूतयः स्वसिद्धान्तसंमतब्रह्मरूपचैतन्यातिरिक्ता वा तदेव वा? आद्ये, तस्यैकस्यैव सत्यत्वं स्वप्रकाशत्वं च, अन्यस्य सर्वस्य मिथ्यात्वं जन्यत्वञ्चेति सिद्धान्तात् प्रत्यक्षाद्यधीनत्वं व्यवहारस्य दुर्घटम्। "तस्य भासा सर्वमिदं विभाती"ति तदेकाधीनप्रकाशत्वं किल सर्वस्य। अनुभवानुरोधात् अन्यासामप्यनुभूतीनां प्रकाशकत्वं व्यवहारहेतुत्वमिष्यत इति चेत्—तर्हि परानुभवादिविषयत्वमप्यनुभवाविरोधायैवेष्यतामिति बाध एव। सर्वेयमनुभूतिः तदेकं चैतन्यमेवेति चेत्—तदा प्रत्यक्षादेरनुमित्याद्यधीनव्यवहारकत्वस्य परानुभवस्य परानुमेयत्वानुमानानुसारेण स्वीकारेऽपि तत्तत्प्रत्यक्षानुमित्यादीनामन्ततस्तच्चैतन्याभिन्नतया प्रत्यक्षानुमित्योर्वि-

शिष्टविषया भेदेऽपि विशेष्यांशेनैक्यमेवेति अनुमित्यधीनव्यवहारोऽपि प्रत्यक्षाधीन एवेति नात्र परं प्रति साधनीयं किञ्चिदवशिष्यते। केवलमेतावदुपदेष्टव्यम्, यत् एकैवानुभूतिः विशेषणादिभेदात् प्रत्यक्षानुमित्यादिसंज्ञाभेदं लभत इति। अतः किमनेनावेद्यत्वानुमानेन? अस्तु तावदेवेति चेत्—लोकप्रसिद्धानुभूतीनां तस्य चैतन्यस्य चैक्यसाधकं प्रमाणं किम्? अनुभूयते इत्यनुगतप्रतीतिरेवेति चेत्—अनुगतप्रतीतिर्विभिन्नत्वेनावगतास्वनुभूतिव्यक्तिषु धर्ममेकमनुवृत्तं कथमपि साधयेत्, न त्वनुभवविरोधेनानुभूत्यैक्यम्। अन्यथा घटपटनीलपीततिक्तमधुरोत्क्षेपणावक्षेपणादितत्तत्पदार्थविषयेऽपि व्यक्त्यैक्यम्, एकस्या एव बहुभेदभात्त्वञ्च स्वीकार्यं स्यात्। न ह्येक एव लोके घटः, एक एव च पट इति कश्चित् प्रावादुकः प्रत्येति। श्रुतिः प्रमाणमिति चेत्—ब्रह्मरूपस्य चैतन्यस्य सर्वजगदैक्यं यादृशम्, तादृशमेव सर्वानुभूत्यैक्यमपि तदर्थो भवितुमर्हति। न च विशिष्यानुभूतीनां परमतादृशमैक्यं क्वचित् श्रूयमाणमस्ति। कथञ्च धर्मतया प्रतीयमानामनुभवानां स्वतन्त्रचैतन्यैक्यस्य श्रुतिविवक्षितत्वसंभावना?

अथ प्रत्यक्षरूपाऽनुभूतिरनुमित्यादिरूपानुभूत्यधीनस्वव्यवहारशून्येति साध्यत इति चेत्—तत्र प्रत्यक्षानुमितिपदाभ्यां चैतन्यरूपविशेष्यांशमात्रग्रहणम्, उत विशिष्टस्य? आद्ये बाधः स्पष्टः। तस्य चैतन्यस्यैकतया स्वाधीनव्यवहारत्वे अनुमित्याद्यधीनव्यवहारकत्वस्याप्यक्षतत्वात्। चैतन्यस्यानेकत्वस्वीकारे च तत्र वृत्तिविशेषप्रतिफलितत्वादिविशेषणदानं व्यर्थम्। परसंमतलोकप्रसिद्धरीत्यैव नानाभूतिग्रहणेन निर्वाहात्। विशिष्टचैतन्यविशेषस्यैव तत्तत्पदेन ग्रहणेऽपि परप्रत्यक्षमनुमिनोमि, परानुमितिं शाब्दयामीत्येवं विशिष्टप्रत्यक्षस्य विशिष्टानुमित्याद्यधीनव्यवहारकत्वस्य आनुभविकतया बाध एव। न च वृत्तिविशेषप्रतिफलितचैतन्यरूपप्रत्यक्षान्तर्गतविशेषणांश एवानुमितिरूपचैतन्याधीनव्यवहारः, विशेष्यांशस्तु स्वत एवेति वाच्यम्—विशेष्यांशविशेषणांशयोर्विशकलितव्यवहाराभावात् विशेषणभागस्यापि भानात्

वैशिष्ट्यस्य प्रतियोग्यनुयोग्युभयग्राहिज्ञानग्राह्यत्वात् । परकीयप्रत्यक्षस्य नष्टस्य परेणानुमाने विशिष्टस्य नष्टतया विशेष्यस्याप्यभावेनानुमितिकाले स्वयंभानायोगाच्च । विशेष्यभूतचैतन्यांशस्य नित्यतया भानमक्षतमिति चेत् न—तस्य अनुमित्यन्तर्गतविशेष्यांशचैतन्यस्य चैकतया चैतन्यस्यास्यैव तत्र प्रत्यक्षवृत्तौ प्रतिफलितत्वात् चैतन्याधीनस्य तादात्विकप्रत्यक्षवृत्तिप्रकाशस्य चैतन्यापेक्षयाऽतिरिक्तत्वाभावाच्च सर्वदा सर्वं प्रति तत्प्रत्यक्षप्रकाशस्य तदानीं तं पुरुषं प्रतीव संभवात्; अनुमित्यादिना तद्ग्रहणपर्यन्तविलम्बस्याभावप्रसङ्गाच्च । उक्तञ्च परिमले "चैतन्यस्यान्तःकरणादौ प्रतिफलने, तस्य निरवयवतया कृत्स्नमेव प्रतिफलेत्; नैकदेशः" इति । अतश्चैत्रीयप्रत्यक्षस्य मैत्रचैतन्यभास्यत्वमपि स्यादेव । तस्मादनुभवानुरोधात् विशेष्यांशेऽपि भास्यत्वस्वीकारे बाधकाभावाच्च प्रत्यक्षवृत्तिविशेषविशिष्टचैतन्यमनुमितिवृत्तिविशेषविशिष्टचैतन्यभास्यमित्येव युक्तम्; शुद्धचैतन्यं तु मा कामं भास्यतामिति वृत्तिचैतन्यानामननुभाव्यत्वं दुःसाधम् । विशिष्टं शुद्धादतिरिक्तमित्यद्वैतसिद्ध्यभिमतपक्षे तु विशिष्टचैतन्यस्यानुभाव्यत्वं सुतराम् ॥

अपि च वृत्तिश्चैतन्यमित्यंशद्वयं प्रतिज्ञानमस्तीत्यत्रापि न किञ्चित् प्रमाणम् । द्रागेव त्वन्तःकरणं बहिर्निष्क्रम्य विषयं व्याप्नोतीत्यत्र । अतो देवदत्तो घटप्रत्यक्षवान् तथा आप्तेनोक्तत्वादित्यनुमानादौ विषयभूतं प्रत्यक्षं चैतन्यापरपर्यायमेवेति अनुभूतिरननुभाव्येत्यनुमानं बाधितमेव । एवं शुद्धचैतन्यस्याप्यनुमित्यादिरूपविशिष्टचैतन्यविषयत्वाङ्गीकारे काऽनुपपत्तिः ? एकस्यैव विशेषणभेदेन भेदकल्पनया चैत्रः स्वं पश्यतीत्यादौ कर्तृकर्मभाववत् आकारभेदेन विषयविषयिभावस्यापि संभवात् । शब्द एव प्रमाणमिति चेत्—कोऽसौ ? "विज्ञातारमरे केन विजानीयात्", "यस्यामतं तस्य मतम्", "न शब्दगोचरो यस्य योगिध्येयं परं पदम्" इत्यादिरिति चेत्—ज्ञप्तिमतिश्रुत्यादिशब्दानां किं वृत्तिमात्रे मुख्यार्थः, उत वृत्तिप्रतिफलितं वृत्त्यवच्छिन्नं वा चैतन्यम् ? आद्यार्थस्वीकारे ब्रह्मणि वृत्तिविषयत्वस्य अबाधितया

तद्विरोधः। ज्ञानप्रकाश्यत्वस्य वस्तुविशिष्टतया वृत्तेर्जडतया प्रकाशकत्वाभावात् प्रकाशकवाचिनां श्रुतिमतिध्यानादिपदानां वृत्तिमात्रपरत्वमयुक्तञ्च। वृत्तिविशिष्टचैतन्यमर्थ इति चेत्—तदविषयत्वे कथ्यमाने एव, तस्य मतमिति तद्विषयत्वकथनं न घटते। अथ अमतमिति वृत्त्यवच्छिन्नचैतन्याविषयत्वमुच्यते, मतमिति वृत्तिविषयत्वम्, एवमनुभूत्यादिशब्दैरनुभूतेः प्रतिपाद्यत्वेऽपि वृत्तिविषयत्वमात्रस्येष्टत्वान्न दोषः। अतो वेद्यत्वविषयश्रुतीनां वृत्तिविशेषविशिष्टचैतन्याविषयत्वे तात्पर्यम्। वेद्यत्वश्रुतीनां वृत्तिविषयत्वमात्रे तात्पर्यमिति चेत्—सहश्रुतयोर्मतामतशब्दयोरर्थवैरूप्यकल्पनमनुपपन्नम्। न ज्ञानविषयत्वं ब्रह्मणः, किन्तु वृत्तिविषयत्वमात्रमिति कथनार्थम्, "अन्यदेव तद्विदितादथो अविदितादधि" इति महान् प्रघट्टक इति च व्यर्थम्। स्वस्मिन् स्वविषयत्वायोगस्यानुक्तिसिद्धत्वात्। प्रघट्टकोऽयम्, 'ब्रह्म अंशतो वेद्यते, अंशतो न वेद्यते च; अपरिच्छिन्नत्वात् पूर्णं न वेद्यत' इत्येवम्पर इति च, "अथ नु मीमांस्यमेव" इत्यन्तसन्दर्भश्राविणां स्पष्टमिति **परमार्थप्रकाशिकादौ** द्रष्टव्यम्। तथा वृत्तितत्प्रतिफलनतद्धेतुचैतन्यरूपत्रितयसद्भावे प्रमाणं न किञ्चिदिति च प्रागेवावोचाम॥

तस्मात् चैतन्ये चैतन्यविषयत्वस्यानुभूयमानतया चैतन्यैक्ये च स्वस्मिन् स्वविषयत्वायोगेन चैतन्यभेद एव स्वीकार्य इति कथमेकस्य चैतन्यस्यानुस्यूतत्वमिति शङ्कितवद्भिः वृत्तिविशिष्टचैतन्यस्यैकस्य प्रत्यक्षादिपदार्थत्ववादिभिः चैतन्ये चैतन्यविषयत्वस्यैवास्वीकारेण तत्परिजिहीर्षया अनुभूतीनामननुभाव्यत्वं कल्पयितुमुपक्रान्तमिति तत्त्वम्। तथाचानुभूतेरेकत्वात स्वस्य स्वविषयत्वायोगात् अनुभूतिविषयत्वाङ्गीकारे अनुभूतेरननुभूतित्वप्रसङ्ग इत्यद्वैतिहृदयम्। अनुभूत्यतिरिक्तवृत्त्यभावात् अनुभूतीनामनेकत्वस्य प्रत्यक्षादिसर्वप्रमाणसिद्धतया स्वस्य स्वविषयत्वायोगेऽपि स्वभिन्नानुभूतिविषयत्वं नानुपपन्नमिति न तावता अननुभूतित्वप्रसङ्ग इति सिद्धान्त्याशयः। अतोऽनुभूत्येकत्वनानात्वान्यतरनिर्धारणाधीनोऽयं विचारः। तन्नानात्वं च कालभेदाधारभेदादिना सिद्ध्यतीति समनन्तरवादेषु व्यक्तीभविष्यति॥

यत्तु— अनुभूतिः स्वप्रकाशाऽप्यज्ञानाविरोधिनी। वृत्तिरेव विरोधिनी। प्रमाणजन्यपरोक्षवृत्तिरसत्त्वापादकाज्ञानविरोधिनी। सर्वविधाज्ञानविरोधित्वं चापरोक्षवृत्तेरिति — तन्न — अनुभूतिर्हि अहमिति भासमानादात्मनो नातिरिच्यते। अहमिति भानादेवासत्त्वापादकाज्ञानं न स्थास्यतीति न तत्र परोक्षादिवृत्त्यपेक्षा। एवम्, जानामि, संवेद्मीत्याद्यनुभवेष्वपि अनुभूतेर्भानात् अनुभूत्यसत्त्वापादकमज्ञानं दूरापेतम्। नित्यमेकमनुभूतितत्त्वं ततो न वेद्यते इति प्रमाणापेक्षेति चेत्—तर्हि तद्गतनित्यत्वैकत्वाद्यसत्त्वार्थाज्ञानमेव वृत्तिनिरोध्यम्। न त्वनुभूत्यज्ञानम्। यदि त्वनुभूतिः साऽन्या, ज्ञानसंवेदनादिरूपा वृत्तिविशिष्टा त्वनुभूतिरशुद्धत्वान्मिथ्याभूता ततोऽन्येत्युच्यते, तर्हि सिद्धे भेदे किमित्यनुभाव्यत्वाननुभाव्यत्वकलहः। भिन्ना इमा अनुभूतयः किं वृत्तिविशिष्टाः, शुद्धा वा? मिथ्या तथ्या वेत्यादि तु विचार्यं स्यादिति॥

एकैकस्याप्यात्मनः स्वं स्वं प्रति स्वप्रकाशत्वेऽपि परं प्रति स्वप्रकाशत्वस्यास्वीकारात् स्वयंप्रकाशस्यापि परात्मस्वरूपस्य जीवगतश्रवणमननादिधर्मभूतज्ञानविषयत्वस्य प्रमाणप्रतिपन्नत्वाच्च न धर्मभूतज्ञानस्य तत्रानपेक्षितत्वम्। न वा तादृशज्ञानं विना बन्धनिवृत्तिः। ईश्वरसंकल्पस्यापि प्रसत्तिहेतुभक्त्याद्यायत्तत्वात्। न च कतिपयविषयत्वे ईश्वरसंकल्पः संकुचित इत्येतावता तदीयज्ञानस्य जीवज्ञानस्येव संकुचितत्वापत्तिः; संकल्पान्तरेणान्यस्यापि विषयीकरणात् सार्वज्ञस्यास्य निर्विवादत्वाच्च जीवतुल्यज्ञानसंकोचस्याप्रसक्तेः। तत् सिद्धमनुभूतीनां स्वप्रकाशानामेव सतीनामनुभाव्यत्वमप्यनुभवसिद्धं न निषेद्धुं शक्यमिति॥

बाह्याक्षवृत्तिरिव मानसवृत्तिरिष्टा
व्यापार एव करणस्य धियां प्रसूतिः।
प्रत्यक्षलैङ्गिकमुखाश्च धियो विचित्राः
प्रख्यातमाभिरिह साधनमात्मनाश्च॥

लोकानुभूतिमपलप्य वृथा प्रकल्प्य
त्वेकैकधीघटकतां चितिवृत्तियुग्मे ।
नित्यां च तां चितिमनात्मगतां तथैका-
मिष्ट्वा बत श्रुतिगिरोऽपि कदर्थयन्ति ॥

अत एतदुपेक्ष्य सर्वलोकप्रथितां ज्ञानविधां प्रवेदयन्तः ।
अमताननुभाव्यताद्यमन्यैरुदितं साधु विशोधयन्ति सन्तः ॥

---

श्रीः

## संविदनुत्पत्तिभङ्गप्रसाधनम्

श्रवणमननचिन्ताध्यानसंदर्शनादि—
प्रतिकलभवसंविद्वेद्यधीमोदरूपा ।
जनिमदजनिनानाकारविज्ञानधर्मा
जनयतु निरवद्यां संविदं नः स देवः ॥

अनुभूतिर्नोत्पद्यत इति अद्वैतिपक्षप्रतिक्षेपिणं संविदनुत्पत्तिवादं परीक्षमाणा शतभूषणी दृष्टिसृष्टिवादं विस्तरेण प्रस्तौति । दृष्टिसृष्टिवादं च चण्डमारुत उपक्षिप्य, अत्राहुरित्यारभ्य तत्खण्डनमनूद्य तदुपरि केनचित् कृतं समाधानमपि तथा प्रतिचिक्षेप - यथा तत्खण्डनखण्डनमानुपूर्व्येणाद्वैतसिद्धिकृतमपि प्रतिक्षिप्तमेव भवेत् । तस्यास्य दृष्टिसृष्टिवादस्यात्र विस्तरस्तावदस्थाने । विवक्षितं त्वन्ततः शतभूषण्या एतावदेव, यत् वृत्तिरूपाः संविद उत्पद्यन्त इति वयमपि वदामः, शुद्धं तु चैतन्यमन्यदेकं नोत्पद्यत इति । तत्र तस्याः संविदः श्रुतिसिद्धत्वे अनुत्पत्त्यनुमानप्रस्तावो वृथा । श्रुतिनिरूपणाशक्त्या अनुभूयमानानां लौकिकीनां संविदामेवानुत्पत्तिं प्रसाध्य तासां

संविदां लाघवादैक्यमेवेति निरूपणे तु संविदनुत्पत्तिदूषणवादोऽयम् अनुमानस्य-बाधितत्वादि प्रस्तौतीति सारभूतः समाधिः। एतावति पर्याप्तेऽपि अत्रान्य दपि किञ्चिदभिधाय प्रस्तुतात् विषयान् किञ्चिद्विमृशेम।

ब्रह्मभूताया अनुभूतेः पक्षत्वे तस्याः अनुत्पन्नत्वनिर्विकारत्वनानात्वादेः प्रायोऽङ्गीकारसंभवादनावश्यकत्वेन, भवतां कतिपयशतदूषणीवादपरीक्षणोपेक्षणवत् एषां वादानामप्युपेक्षणमेव युक्तम्। अपिच ब्रह्मणः परं पक्षत्वे अनुभूतिरिति निर्देशो न युज्यते। अनुभूतेर्ज्ञानापरपर्यायतया तार्किकादिसंमतज्ञानानामपि पक्षकोटिप्रवेशात् एकदेशबाधात्। अवच्छेदकावच्छेदेन साधनपक्षं परित्यज्य सामानाधिकरण्येन साधने इष्यमाणेऽपि हेतोरनुभूतित्वस्य तार्किकसंमतानुभूतिष्वपि सत्त्वादनेकान्तः। वृत्तिभिन्नानुभूतित्वविवक्षायामपि तार्किकादिभिः सर्वासामनुभूतीनां मनोवृत्तिभिन्नत्वस्येष्टतया स एव दोषः। वृत्त्यवच्छिन्नचैतन्यमनुभूतिपदविवक्षितं चेत् - चैतन्यं वृत्त्या कयाचिदवच्छिद्यते इत्यस्य प्रतिवादिभिरस्वीकृतत्वात् आश्रयासिद्धिर्हेत्वप्रसिद्धिश्च। अतो ब्रह्मात्मकानुभूतेरप्रसिद्धतया तद्ग्रहेण लौकिकानुभूतीरेव गृहीत्वा तासु प्रतीयमानमुत्पत्तिविकारनानात्वादिकं युक्तिभिर्निरस्य तस्या एकत्वं प्रसाध्य सैव ब्रह्मेति वक्तव्यमित्येव प्राचीनाद्वैतिनिरूपणसरणिः। अतः शतभूषण्याशयोऽत्र न परीक्षकसंमत इति॥

यत् प्रथममुक्तम् — जगन्मिथ्यात्वं प्रतिकर्मव्यवस्थया दृष्टिसृष्टिवादेन च द्वेधा निरूप्यत इति — तत्र प्रतिकर्मव्यवस्था न मिथ्यात्वसाधिका। प्रतिकर्मव्यवस्था हि नाम, प्रतिनियतकर्मकारकव्यवस्था। इदमस्य ज्ञानकर्मीभवति, न सर्वमिति नियमः। सेयं प्रतीतिमात्रशरीरस्वरूपमिथ्यात्वपक्षे नोपपद्यत इति शङ्कायां प्रतिकर्मव्यवस्थानुपपत्तिपरिहारमात्रे किल प्रयत्यते ; न तु प्रतिकर्मव्यवस्थया मिथ्यात्वं साध्यत इति स्पष्टमद्वैतसिद्धौ। दृष्टिसृष्टिवादे च दृष्टेः प्राक् वस्त्वभावात् प्रागपि वस्तुस्थितिमुपजीव्य प्रवृत्त-

प्रतिकर्मव्यवस्थापक्षभङ्ग इत्याशङ्क्य प्रतिकर्मव्यवस्थोक्तिर्मन्दाधिकारिविषयिणीत्युक्तम् । अयं भावः—यथा योगाचाररूपबौद्धपक्षं यथावत् ग्रहीतुमक्षमान् सौत्रान्तिकवैभाषिकप्रायमन्दाधिकारिणः प्रति अनुमेयतया बाह्यपदार्थास्तित्वं बुद्धेनोपदिष्टम्, तथा दृष्टिसृष्टिवादेऽस्मिन् अतृप्तान् मन्दान् प्रति प्रतिकर्मव्यवस्था काचिदद्वैतिभिरुपदिष्टेति । परन्त्विमं दृष्टिसृष्टिपक्षम्, "जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः षडस्माकमनादयः" इति अनादित्वेनाद्वैतिसंमतपदार्थषट्कव्यतिरिक्तविषयतया समर्थयतेऽद्वैतसिद्धिः । इदमपि किञ्चिन्मन्दाधिकारिविषयमिति युक्तमद्वैतिभिरध्यवसातुम् । सिद्धान्तलेशसङ्ग्रह एवानाद्यविद्यादिविषयेऽपि दृष्टिसृष्टिवादमुपन्यस्यानादिव्यतिरिक्तमात्रविषयकतया पक्षान्तरमुक्तम् । पूर्वत्रारुचेरेव पक्षान्तरोक्तिरिति चेत्—यदि पक्षान्तरप्रारम्भमात्रेण पूर्वत्रारुचिरिष्यते, तर्हि दृष्टिसृष्टिवादं द्वेधा, दृष्टिसमसमयपदार्थसृष्टिः, दृष्टिरेव सृष्टिरित्येवं प्रदर्श्य, "द्विविधेऽपि दृष्टिसृष्टिवादे मनःप्रत्ययमलभमानाः" इति तं वादं प्रत्येतुमनर्हं मुक्तकण्ठमुक्त्वा सृष्टदृष्टिवाद उपर्युपन्यस्त इति तत्रैव रुचिर्युज्यते ।

विचारणीयश्चेहापि मनागयं दृष्टिसृष्टिवादः । केयं दृष्टिः ? चैतन्यमात्रं चेत् दृष्टिः, तस्य नित्यतया तत्समानसत्ताकत्वात् सृष्टेः, घटादीनां सदातनत्वापत्तिरिति स पक्षोऽद्वैतसिद्धावेव त्यक्तः । वृत्तिरेव दृष्टिरिति चेत्, घटादेः प्रपञ्चस्य वृत्तिरूपदृष्टिसृष्टित्ववत् वृत्तेरपि दृष्टिसृष्टित्वमङ्गीकार्यमिति वृत्तिविषयकवृत्त्यन्तरकल्पनयाऽनवस्थापत्तिः । वृत्त्युपहितचैतन्यं दृष्टिरित्युक्तावपि तद्घटकवृत्तेर्जडाया अनित्याया दृष्टिसृष्टित्वमेष्टव्यमिति तदवस्थ एव दोषः । न च वृत्तः चैतन्यभास्यत्वात् चैतन्यमेवादाय तत्र दृष्टिसृष्टित्वमिष्टमिति वाच्यम्—चैतन्यभास्यत्वस्य घटपटादिसर्वसाधारणत्वात् । चैतन्यस्य सदातनतया पूर्ववत् वृत्तेरपि तत्समानसत्ताकतया सदातनत्वापत्तेश्च । तस्य तस्य दृष्टिसृष्टित्वं नाम तत्तद्विषयकवृत्त्युपहितचैतन्यरूपदृष्टिसृष्टिकत्वमित्येव वक्तव्यतया वृत्तौ वृत्तेर्विषयत्वाभावेन वृत्त्यन्तरस्य कल्पनीयतया अनवस्थाया अपरिहार्यत्वाच्च ॥

अपिचेयं वृत्तिरन्तःकरणस्येति वक्तव्यम् । न चान्तःकरणमज्ञानवत् अनादि । अतस्तस्य दृष्टिसृष्टित्वमिष्टं कथमुपपन्नम्? न हि स्वपरिणामभूतवृत्तिरूपदृष्टिसृष्टित्वं स्वस्य भवितुमर्हति । तद्वृत्तेःप्राक् तदसद्भावापत्त्या तद्वृत्तेरेव दुर्घटत्वाच्च । अन्तःकरणमज्ञानरूपेणावतिष्ठत इति चेत्—अन्तःकरणमिति किम्? घटपटादिकं सर्वमपि जगदज्ञानरूपेणावतिष्ठत एव । तथा च दृष्टिसृष्टिरेव न स्यात् ॥ एवं किञ्चित्परिणामो वृत्तिरित्यपि दुर्वचम् । कार्यकारणभावादेः कल्पनामात्रत्वादस्मिन् पक्षे । एवं कल्पकस्य द्रष्टुरभावे कल्पनाया एवानुदयात् कल्पक इष्टः कः? न तावत् शुद्धचैतन्यमेव । अनिर्मोक्षप्रसङ्गात् । न च किञ्चिद्विशिष्टं तत् । तस्य किञ्चित्पदार्थस्यापि दृष्टिसृष्टेरेव वक्तव्यतया तद्द्रष्टुरन्यस्यापेक्षयाऽनवस्थानात् । न चोत्तरोत्तरकार्यस्य पूर्वपूर्वकारणायत्तत्वेन अनवस्थायाः सर्वसंमतत्वादिहाप्युत्तरोत्तरदृष्टिः पूर्वपूर्वदृष्ट्यधीनेति न दोष इति वाच्यम्—एवं तर्हि पूर्वविज्ञानाधीनमुत्तरविज्ञानमिति विज्ञानात्मवादियोगाचारमतप्रवेशापत्तेः । न च किञ्चित्पदेनाज्ञानमविद्या गृह्यते, तदनादित्वाच्च तन्मतवैलक्षण्यमिति वाच्यम्—शुक्तिरूप्यादीनां मिथ्याभूतानां प्रतीतिमात्रशरीरकत्वदर्शनात् तथैव जगतोऽपि मिथ्यात्वात्तदावश्यकतया किल दृष्टिसृष्टिवाद इष्टः । सा मिथ्यात्वयुक्तिरविद्यादिषु परं दृष्टिसृष्टिवादं कथं नानुमन्यताम् । अप्रतीयमानतादशायामपि तत्सत्त्वे हि मिथ्यात्वमेव न सिद्ध्येत् । सत्यम्; अनादित्वभङ्गो मा भूदिति तत्र दृष्टिसृष्टिवादास्वीकार इति चेत्—युक्तौ सत्यामपि यदि स्वतन्त्र्येण तत्र नेष्यते, तर्हि युक्तिर्व्यभिचरितत्वादयुक्तिरेवेति प्रपञ्चविषयेऽपि दृष्टिसृष्टिवादो न स्यात् । तस्मात् अर्धजरतीयायोगात् ज्ञानेश्वरादीनामपि दृष्टिसृष्टित्वमेव । अनादित्वमपि काचित् दृष्टिसृष्टिरेवेति न तद्भङ्गः । दृष्टिसृष्टिवादाभावपक्षेऽप्यनादित्वं हि कल्पितमेव । मिथ्याभूतस्य कल्पनाविषयत्वस्यावश्यकत्वात् । चन्द्रिकाकारस्तु—वस्तुतस्तु ईशस्येव जीवेशभेदादेरपि स्थूलमनःपरिणामत्वमेव सुषुप्त्यन्यकाल एव तस्य सृष्टेः" इति लिखन् अज्ञानातिरिक्ते सर्वत्र दृष्टिसृष्टिवादमवतारयति । अज्ञानं तु सुषुप्तिप्रलययोर-

स्ति, अज्ञानसाक्षितया तदानीमात्मनोऽवस्थानादिति तदाशयः। तत्र न किञ्चिदहमवेदिषमिति सुषुप्तिकालिकानुभवः कथञ्चित् स्यात्, न तु प्रलयकालिकः। जन्मान्तरानुभूतानामपि विषये स्मरणाभावे स्थिते, प्रलये किञ्चिदनुभवस्य जातत्वेऽपि तत्स्मरणस्य प्रसक्त्यभावाच्च (प्रलयेऽहमासमिति स्वस्थितेरेवानिश्चितत्वात्) तदा न किञ्चिदहमवेदिषमिति निश्चयस्यानानुभविकत्वात्। शुक्तिरूप्यस्वप्नादेरिव सर्वस्यापि मिथ्याभूतस्य चैतन्यातिरिक्तकारणसापेक्षकल्पनाविषयत्वस्यैव दर्शनेनाज्ञानस्यापि तथात्वस्यैव कल्पयितुं युक्ततया अनादित्वायोगाच्च। प्रलयकालस्यापि दृष्टिसृष्टितयैव स्थितेर्वक्तव्यतया तदानीं दृष्टिप्रसक्त्यभावेन तत्कालस्यैवाभावेन तदाऽप्यज्ञानं स्थितमिति दुर्वचत्वाच्च। तस्मात् सर्वं कल्पनामात्रमित्येव स्यादिति बौद्धमतमेवेदम्। दृष्टिसृष्टिवादोऽपि मन्दाधिकारिविषयो भवेत्, यदि शून्यवादी माध्यमिको मध्ये प्रविशेत्॥

किञ्च दृष्टिसृष्टिवादे प्रमाणम्? "न तु तत् द्वितीयमस्ति, ततोऽन्यद्विभक्तम्, यत् पश्येत्" इति श्रुत्या तत्र सुषुप्तौ सर्वनिषेधात् प्रतीत्यभावकालेऽपि वस्तुसत्त्वे तथा निषेधायोगात् दृष्टिकाले एव वस्तुसत्तेति चेत्—तर्हि शरीरेन्द्रियतद्व्यापारतदधीनादृष्टतन्नियन्त्रीश्वरादिसर्वविलयः सुषुप्ताविति पुनर्जागरदृष्टिसृष्टिः कथम्? अज्ञानमस्तीति चेत्—तस्यापि द्वितीयान्तर्गततया तदभावोऽपि श्रुत्याऽवसीयते इति कथं तत् परं स्यात्। अज्ञानस्य साधारणत्वात्, सूक्ष्मांशानाञ्च दृष्टिसृष्टिवादे स्थित्ययोगाच्च सुप्तोत्थितेषु प्रतिनियतदृष्टिसृष्टिव्यवस्था दुर्घटा स्यात्। सुषुप्तौ नाहं किञ्चिदवेदिषमिति तादात्विकाज्ञानसाक्षित्वप्रतिसन्धानमपि काचित दृष्टिसृष्टिरेवेति न तस्याज्ञानरूपविषयसाधकता स्यादिति ध्येयम्॥

एवं दृष्टिसृष्टिपक्षे पूर्वापरकालस्वानुभूतस्वपरानुभूतवस्तुप्रत्यभिज्ञादिकः सर्वोऽपि लोकानुभवः सर्वथैवोपेक्षितः स्यात्। सिद्धयुक्तरीत्या स्वाप्नवत् सर्वं निरस्यत इति चेत्—न—स्वप्ने जागरवत् कार्यकारणनैयत्याद्यदर्शी-

नस्य चण्डमारुत एवोक्तत्वात् । यथा कथञ्चिन्निर्वाहप्रदर्शनमात्रेण न तत्तन्मत-प्रामाणिकत्वसिद्धिः । लाघवगौरवचिन्तया यत्र लाघवम् , तस्यैव पक्षस्य लोकानुभवानुकूलस्य सर्वसंमन्तव्यत्वात् । दृष्टिसृष्टिवादे दृष्टिकाल एव वस्तुसत्त्वादन्यदा नष्टत्वात् दृष्टिभेदेन च वस्तुभेदात् अन्तःकरणरूपाहमर्थस्य घटादिप्रमेयस्य च तदा तदा भिन्नतया दर्शनोपादानोपयोजनादीनां कर्तुरैक्यं दृश्योपादेयोपयोज्यैक्यञ्च न स्यादिति सर्वासिद्धिरिति बौद्धं प्रति शारीरकोक्तं सर्वं दूषणमापतति । तर्हि प्रतीतिमात्रकालिकत्वाभावे मिथ्यात्वं न स्यादिति चेत् — मा भूत् । सृष्टदृष्टिवादे मिथ्याभूतशुक्तिरजतादिसाजात्यं न निर्वहतीति दृष्टिसृष्टिस्वीकारे तत्राप्यनौचित्ये एवं मनसि विपरिवर्तमाने मिथ्यात्वपक्षत्याग एव स्थाने ।

किं परैस्तन्निरसनप्रकारस्यात्र प्रदर्शनेन । सिद्धान्तलेशसंग्रह एव स्वरूपव्याक्रियैव पराक्रियेति सरण्या दृष्टिसृष्टिवादस्याऽऽपातदृष्टिमूलतां प्रामाणिकदुष्परिग्रहतां च प्रतिपादयति । दृष्टिसृष्टिवादे, 'आत्मन आकाशः संभूतः' इत्येवं सृष्टिक्रमप्रतिपादकश्रुतयः कदर्थिताः स्युरित्याक्षिप्य, अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्तिर्भवतीति तदुपायतया तदा तदा यःकोऽपि क्रमोऽव्यवस्थया श्रुतिषूच्यत इति सर्वत्र न तात्पर्यमित्येव भाष्यादिद्घोष इति वदन् हि श्रुतिविरोधं दर्शयत्येव । व्यर्थस्तर्हि शारीरके वियत्पादप्राणपादयोः तत्तत्सर्गक्रमसमष्टिव्यष्टिनियमनप्रकारादिनिरूपणप्रयत्न इत्याशङ्क्य च, केवलं वाक्यार्थविचारकौशलसंपत्त्यर्थन्यायव्युत्पादनमात्रं सर्वम्; न तु तत्तन्निरूपितं प्रमेयं तथैव स्वीकार्यमिति समाधानात् शारीरकविरोधोऽपि जागर्तीत्याविष्करोति । एवमिह फलाध्यायदर्शितजीवोत्क्रमणक्रमार्चिरादिक्रमसगुणब्रह्मानुभवप्रकाराणां निर्विशेषब्रह्मैक्यप्राप्तिरूपमुख्यमोक्षकाङ्क्ष्यनुपयोगितया फलाध्यायत्यागे,तदपेक्षितभक्तिरूपोपायपरः तृतीयोऽप्यध्यायस्त्याज्यः, तादृशभक्तिगोचरस्य ब्रह्मणस्तत्कारणवाक्यप्रतिपाद्यानन्तगुणविशिष्टत्वतद्दुर्धर्षत्वप्रतिपादकौ प्राञ्चावप्यध्यायौ तत एव परित्याज्याविति स्थिते, तदुदाहृतश्रुतिस्मृतीतिहासपुराणादीनामपि तदुक्तार्थपर-

तया सिद्धे समुपेक्षणीयत्वे बहिश्शास्त्रमेवाद्वैततत्त्वहितपुरुषार्थनिर्णय इति तावत् प्रागेव प्राज्ञैः प्रत्यपादि यत्, ततोऽधिकमेवाद्वैतेऽस्मिन् अविस्रम्भकारणमापतितम्; यत एवं दृष्टिसृष्टिवाद एव मुख्याधिकारिग्राह्य इति मुष्टिग्रहेण शास्त्रप्रतिपादिततत्तदुपायकालान्तरभावितत्फलतद्विचारग्रन्थकृतव्यवस्थादि सर्वं कल्पनामात्रम्, न किञ्चित् कस्यचित् कारणम्; तृप्तिहेतुतया भोजनादिप्रवृत्तिरपि स्वाप्निकतुल्येति वैदिकावैदिकसर्वाविशेषपर्यवसायिन्या निरूपणसरण्या सर्वजनानियन्त्रणकारणेन सर्वमुत्पथं नीयते इत्यलमनेन ॥

सर्वथा अनुभूतिरनुत्पन्ना प्रागभावाभावादितीदृशानुमानेनानुभूत्यनुत्पत्तिसाधनस्य दृष्टिसृष्टिवादसृष्टदृष्टिवादसर्वसाधारण्यादत्र दृष्टिसृष्टिवादप्रपञ्चनं चण्डमारुतप्रासङ्गिकार्थदृष्टिसृष्टिमात्रमिति नातीवात्रोपयुज्यते। शतदूषण्युद्भावितानां दोषाणां क्रमेण परिहरणे प्रयत्ने कर्तव्ये तत्स्थाने विषयान्तरपूरणेन वादविस्तरमात्रत्वात्। अत्रानुत्पत्त्यनुमानेऽनुभूतिपदेन घटविषयकप्रत्यक्षादिरूपा संवित् गृह्यते, उत शुद्धसंविदिति विकल्प्य, आद्ये प्रत्यक्षसंविदोऽस्मदीयायाः अनादित्वे प्रत्यक्षस्य वर्तमानग्राहितया घटादेरप्यनादिताप्रसङ्गः। अन्त्ये चाश्रयासिद्धिः? निर्विषयनिराश्रयानुभूतेः कथमप्यसिद्धत्वादित्याह शतदूषणी। तत्र शुद्धसंवित्पक्षीकरणमेव भवदिष्टम्। तच्च इष्टसिद्ध्यादिग्रन्थगतिविरुद्धमपि। न च "अद्वैतमतं तु तत् निर्विषयमिति सर्वविदितमिदम्" इत्युक्तिमात्रेण भवन्मतसिद्धत्वमात्रेणाश्रयासिद्धिः परिहृता भवति। सुषुप्त्यादौ तादृशसंवित्प्रकाश इत्यपि दुर्वचम्; तादृशप्रकाशप्रतिसन्धानादर्शनात्। नाहं किञ्चिदवेदिषमिति प्रतिसंधानं तु अहमर्थे अज्ञानाश्रयत्वं ग्राहयेत्; न तु संविद्विशेषस्थितिम्। सुखमहमस्वाप्समिति प्रतिसन्धानमपि सुखरूपाहमर्थस्थितिं दर्शयेत्, न तु संवित्स्थितिम्। एतद्बलादनुमाने च अहमर्थो नोत्पन्न इत्यनुमानप्रयोगे प्रयत्नः क्रियताम्; न तु अनुभूतिरनुत्पन्नेति। तत्प्रतिसन्धानबलात् तदा सुखप्रकाशः अज्ञानप्रकाशश्च यद्यभिप्रेयते, तर्हि निर्विषयनिराश्रयप्रकाशस्फूर्तिस्तत्रेति कथं सिद्ध्येत्? तदा च सविषयसंवित्पक्षीकरणमेव

पुनः कृतं स्यात् । तत्रापि, ' सुषुप्तेः प्रागूर्ध्वं च तत्तद्वेदी अहं सुषुप्तौ न किञ्चित् अवेदिषम् ' इत्येव प्रतिसन्धानस्यानुभविकत्वात् अज्ञानविषयकसंविदः प्रागूर्ध्वञ्चाभावस्य गृहीततया उत्पत्तिविनाशोभयवत्त्वं निश्चितमिति अनुत्पत्त्यनुमानं कालातीतं स्यात् । पूर्वापरकालिकज्ञानविषयप्रापञ्चिकांशाज्ञानपरामर्शित्वाचास्य न प्रपञ्चप्रत्यनीकब्रह्मविषयकाज्ञानपरामर्शित्वं भवदिष्टं सिद्ध्येदित्यपि विभाव्यम् । प्रतिसंधानञ्चेदं सुषुप्तावहमर्थसमर्पकत्वात् भवन्मतप्रतिकूलम् । कारणात्मना अहमर्थोऽस्तीति चेन्न— कार्यात्मना स्वरूपेणाहमर्थस्थितेरेवात्र गृह्यमाणत्वात् । अन्यथा हि अज्ञानस्यैवाहमर्थकारणस्वरूपत्वात्, न ज्ञानमित्येवाकारः स्यात्; न तु, नाहं किञ्चिदवेदिषमित्येवम् । अहमित्यात्मा गृह्यत इति चेत् - तदेव ब्रूमः अहंरूपेणात्मग्रहणात् तद्रूप एव स तदाऽप्यस्तीति । दृष्टिसृष्टिवादे च सुषुप्तौ सर्वप्रपञ्चलयात् अहमर्थस्याप्यभावात् अनुपपन्नमेवेदं प्रतिसंधानम् ॥

एवं न किञ्चिदहमवेदिषमिति ज्ञानविशेषणतया अज्ञानविशेषणतया वा किञ्चिच्छब्देन विषयसमर्पणात् विषयविशिष्टाज्ञानप्रकाशस्यैव तदा वक्तव्यतया विषयप्रकाशे अज्ञानायोगात् विषयाप्रकाशे च विषयरूपविशेषणाग्रहेण तदज्ञानरूपविशिष्टप्रकाशायोगात् अज्ञानप्रकाशस्तदा दुर्घटः । यदा च भावरूपान्याद्दृशाज्ञानमेवाप्रामाणिकम्, ज्ञानाभावश्च सुषुप्तौ स्थितोऽपि न गृह्यमाणः; किन्तु पश्चादनुमीयमान इति प्राच्यबहुग्रन्थदर्शितं स्थास्यति—तदा दृष्टिसृष्टिवाद इवान्याद्वैतिवादेऽपि अज्ञानसाक्षित्वप्रसक्त्यभावात् सुषुप्तमुक्तयोरविशेष एव स्यात् । अस्मन्मते तद्दोषारोपणं तु गगनजम्बाललेप एव । मुक्तस्य सार्वज्ञ्यसर्वानुभावित्वादेरस्मदिष्टत्वात् । " शतदूषणी सुप्तमुक्तयोरात्मनोरविशेषं स्वीकारोति " इति च स्ववीयः । तत्र तत्प्रसक्त्यभावात् । निर्विशेषा संवित् पक्षीकर्तुं न शक्यते अप्रसिद्धत्वादित्येतदुपपादनायास्मन्मते स्वमात्रप्रकाशोऽप्यहमर्थः प्रत्यक्त्वानन्दत्वादिविशेषधर्मवत्तयैव प्रकाशते इति न निर्विशेषस्फूर्तिः, सुषुप्तौ धर्मभूतज्ञानं निर्विषयमपि न स्फुरति, न वा

निर्विशेषम्, धर्मिनिष्ठत्वादिनानाविशेषयोगित्वादिति ह्युच्यते। एतेन "धर्मभूतज्ञानं निर्विषयमेव सुषुप्तौ भासत इति श्रीभाष्यमतम्" इत्यादिकमपार्थं सिद्धम्। पदेपदे धर्मभूतज्ञानविचारप्रस्तवनं प्रद्वेषविशेषमेव प्रदर्शयेत्। न मात्रयाऽपि दूषणस्यावसरो भवितुमर्हतीति किं पिष्टपेषेण॥

यत्तु—अन्तर्यामिणः परमात्मनः अत्यन्तं जीवसन्निहितत्वात् न तत्प्रकाशाय सुषुप्तौ धर्मभूतज्ञानापेक्षेति—तन्न—तत्प्रकाशाय तदा धर्मभूतज्ञानापेक्षाऽस्तीति अस्माभिरुक्तेः। न च संनिहितत्वमात्रेण परमात्मा धर्मभूतज्ञानं विना प्रकाशेत। तथा सति हि जागरेऽपि प्रकाशेत। "तद्यथा हिरण्यनिधिम्", "नैनत् देवा आप्नुवन् पूर्वमर्षत्", "एष सर्वेषु सुप्तेषु गूढोत्मा न प्रकाशते" इति श्रुतिसहस्रमिह भाव्यम्। अत एव श्रुतीनां सार्थक्यम्; ध्यानादिविधीनाञ्च॥

यत्तु—ईश्वरस्योत्पत्त्यभावे अनादित्वे नित्यत्वे च न विप्रतिपत्तिरिति—तन्न—भवन्मते तस्यापि कल्पितत्वेन, अनुपदमेव चन्द्रिकावचनमपि प्रदर्श्य दृष्टिसृष्टिवादे तद्विषयेऽपि दृष्टिसृष्टेः प्रदर्शिततया च तस्योत्पत्त्यभावनित्यत्वयोरयोगात्। सर्वाद्वैतिमतेऽपि मुक्तौ चिन्मात्रातिरिक्तस्याभावेन साध्यस्येशस्य नित्यत्वासंभवाच्च विप्रतिपत्तेरक्षतेः। घटादिप्रकाशलक्षणसंविदोऽनुत्पत्तिमत्त्वे घटादेरप्यनुत्पत्तिः स्यादिति शतदूषण्याशयः उत्तरसूक्त्यां तत्रैव स्फुटः; प्रागेवेह स्पष्टीकृतश्च। तदर्थाग्रहणमूलं घटावच्छिन्नचैतन्यस्यानुत्पत्तौ घटानुत्पत्तिवर्णनमयुक्तमिति दूषणमिति ध्येयम्। कथञ्च घटादिविषयप्रकाशरूपसंविदितिशब्दे जाग्रति घटविषयकसंविदिति स्पष्टमर्थमुपेक्ष्य घटावच्छिन्नसंविदित्यर्थान्तरकल्पनया विकल्पनं घटते?

अपिच पृच्छयते, किमिदं घटावच्छिन्नत्वं संविदः? सर्वव्यापित्वात् संविद आकाशस्येव तदवच्छिन्नत्वमिति चेत्—न—अवच्छेद्यावच्छेदकभावो हि केनचित् संबन्धेन संबन्धिनो भवति। घटाकाशयोश्च संयोगः

संबन्धोऽस्तीति महत आकाशस्य परिच्छिन्नेन घटेन संयोगिनाऽवच्छेदः। अतोऽवच्छेद्यासंबन्धिनोऽवच्छेदकत्वायोगात् संवित्संबन्धो घटस्य क इति वक्तव्यम्। न तावत् संयोगादिः, परमार्थापरमार्थयोस्तदयोगात्। ज्ञानस्यातीतानागतादिकमसंबन्ध्यपि विषय इति विषयविषयिभाव एव संबन्ध इति चेत्—तर्हि घटावच्छिन्ना वा घटविषयिणी वेति कोटिद्वयात्मना विकल्पो न कल्पते। ज्ञानविषयत्वमपि वस्तुनः स्वयमसंबद्धत्वेऽपि स्वसामग्रीसंबन्धं वा पुरस्कृत्यैव भवितुमर्हति। अन्यथा सर्वस्य सर्वविषयत्वप्रसङ्गात्। न च नित्यचैतन्यस्य विषयगतसामग्रीसंबन्धाभावात्तो विषयविषयिभावो वक्तुं शक्यते। तथा, "दृष्टिरेव संविदिति दृष्टिरपरेति संविद्द्वयं वर्तते" इति भवदुक्तिव्याघातश्च। उक्तिमध्येऽपि च व्याघातः। न हि, दृष्टिरेव सृष्टिरिति वादे घटोत्पत्तिः घटदृष्टिरिति द्वयमिष्यते। किन्तु दृष्टिसमसामयिकी सृष्टिरिति दृष्टिसृष्टिवाद एव तु तदिति।

अधिष्ठानत्वमेवावच्छिन्नत्वमिति चेत् - अधिष्ठानत्वमेव किम्, केन संबन्धेन संबन्धित्वं तदिति निरुच्यताम्। घटाध्यासाधिष्ठानत्वमेव घटाधिष्ठानत्वमिति चेत्---नेदं तर्हि घटावच्छिन्नत्वम्। तथा सति घटावच्छिन्नपटावच्छिन्नचैतन्यैक्यप्रसङ्गात् अवच्छिन्नान्तवैयर्थ्यात्। चैतन्यरूपा वृत्तिरूपा चेति द्वयी संविदित्येव वक्तव्ये वक्रगतेरयुक्तत्वाच्च। मृत्पिण्डावच्छिन्नचैतन्यं घटरूपेण विवर्तत इत्युक्तौ मृत्पिण्डाध्यासाधिष्ठानं चैतन्यमित्यर्थवर्णने मृत्पिण्डाध्यासानन्तरमेव घटो भवतीति सिद्धौ, सर्वत्र कार्योदयात् पूर्वं कारणस्य ज्ञातव्यत्वापत्तेश्च। इदं रजतमिति भ्रमाभावप्रसङ्गाच्च। शुक्त्यवच्छिन्नचैतन्यस्य तदा सत्त्वात् तस्य च शुक्त्यध्यासाधिष्ठानरूपत्वात् शुक्त्यध्यासस्यापि तदानीमावश्यकत्वात्। अध्यासपदेन सद्भावमात्रविवक्षायां पुनरपि मिथ्यासत्ययोः संबन्धाभावदुर्वचत्वदोषः प्राप्नोति। एवञ्च दृष्टिसृष्टिवादव्यतिरिक्तवादेऽपि जडानां संविदश्च भास्यभासकभावातिरिक्तस्य दुर्वचतया विश्वव्याप्ता संवित् विश्वभासिकैवेति ज्ञाताज्ञातविवेक एव न स्यात्। सर्वं सर्वदा भासेत। कस्मै इति चेत्—कदाचित्

यस्मै पुंसे भासते। अन्तःकरणवृत्तिरूपकारणाभावात् न भासते इति चेत्—न तर्हि तदानीं तस्य चैतन्यस्य तत्तत्पदार्थावच्छिन्नता स्यात्। अन्तःकरणावच्छिन्नचैतन्यमेव प्रमातृ इत्यपि न सिद्ध्येत्। सर्वत्र चैतन्यस्य भासकत्वे सति भानाश्रयत्वरूपप्रमातृत्वस्य सर्वत्रावर्जनीयत्वात्। यदि त्वेवं स्यात्—अविद्याव्यापिचैतन्यस्येश्वरतया अविद्याकार्यघटपटादिसर्वावच्छिन्नस्यापि ईश्वरत्वमिति तेन चैतन्येन तस्य तस्य भास्यत्वादेव चेश्वरः सर्वज्ञ इति तं प्रति सर्वं सर्वदा भासत इतीष्टमेवेति—तर्हि अन्तःकरणस्याप्यविद्याकार्यतया अन्तःकरणावच्छिन्नचैतन्यस्याप्यन्याविशेषमीश्वरतया ईश्वरस्य च सर्वानुभावितया तत्तदनेकावच्छिन्नत्वेऽपि चैतन्यैक्यादेवेश्वरैक्यस्य वक्तव्यतया जीवस्याप्यन्तःकरणावच्छिन्नचैतन्यरूपतया जीवेश्वरैक्यमद्यापि संपन्नमितीश्वरवत् जीवोऽपि सर्वानुभावी स्यादिति। अवच्छिन्नत्वमेव किमिति शोधनावसरे तदनिरूपणेन कोऽयमुपन्यास इति च भाव्यम्। एतेन, 'अनादिः संवित् विश्वव्याप्ता' इत्यादिसूक्तिः किं दृष्टिसृष्टिवादमाश्रित्य, उत पक्षान्तरमिति विकल्पोऽपि व्युदस्तः। सर्वदैव दोषसद्भावस्योपपादितत्वात्॥

अथ स्वयं वयं किञ्चिदुद्भावयामः—घटावच्छिन्नत्वं नाम चैतन्यस्य घटरूपेण परिणताज्ञानविषयत्वमिति कदाचिन्मन्येत। तत्र विकल्प्यते-किं घटत्वावस्थापन्नाज्ञानविषयत्वम्, उत घटकारणीभूताज्ञानविषयत्वम्? नाद्यः; घटात्मना परिणतिदशायां तस्य सविषयकत्वायोगात्। न हि घटादीनां विषयित्वं ज्ञानादेरिव स्वीकर्तुं युक्तम्; अनुभवविरोधात्। नान्त्यः; घटप्राक्कालिकाज्ञानविषयत्वे अज्ञानावच्छिन्नत्वं तदा स्यात्, न तु घटावच्छिन्नत्वम्। अथ घटावच्छिन्नत्वं नाम कालिकसंबन्धेन घटविशिष्टाज्ञानविषयत्वम्। इदञ्च न घटकालातिरिक्तकाले इति—तदापि समानकालिकघटपटावादाय घटावच्छिन्नचैतन्यस्य पटावच्छिन्नचैतन्यस्य चाभेदः स्यात्; उभयसमानकालिकाज्ञानविषयत्वात्। तुल्यरीत्या अन्तःकरणावच्छिन्नचैतन्यं घटावच्छिन्नचैतन्यं चैकं स्यादिति प्रमातृचैतन्यविषयचैतन्याभेदनिबन्धना घटप्रत्यक्षता सर्वदा घटकाले

प्राप्नोति। अन्तःकरणविषययोः समानदेशत्वमपि प्रत्यक्षत्वे प्रयोजकमिति चेत्—अस्तु—अथापि घटावच्छिन्नचैतन्यं प्रलयावच्छिन्नचैतन्यमपि स्यात्ः अज्ञान एव घटकालावच्छिन्नत्वान्वयात् अज्ञानविषयत्वस्य चैतन्ये प्रलयकालेऽपि सत्त्वात्। घटकालीनाज्ञानसंबन्धक्षणावच्छिन्नत्वं चैतन्ये विवक्षितमिति चेत्—क्षणस्य मिथ्याभूतस्य परमार्थेन चैतन्येन संबन्धायोगात् क्षणावच्छिन्नत्वस्यापि दुर्वचत्वात्। ननु किमनेन विस्तरेण ? अज्ञानबलकल्पितः सर्वोऽप्यनुभूयमानः संबन्धः पदार्थानां संविदश्चेष्यत इति तन्मूलं तदवच्छिन्नत्वमपि अज्ञानकल्पितमस्त्येवेति चेत्—घटादिपदार्थमात्रस्यैव लोकानुभूतत्वात् नित्यसंविदः पदार्थानाञ्च संबन्धस्यानानुभविकत्वात्। परीक्षकलोकानुभवसिद्धमिदं सर्वमिति चेत्—परीक्षकतमलोकप्रतिषिद्ध्यमानतया व्यावहारिकदशामनासादितमवसादितमेव सर्वमिति ॥

यत्तूक्तम्—" न तु कल्पितेनाकारेणाद्वैतभङ्गभीरुता " इति—एवमभीरुभिः किमिति लोकप्रसिद्धसर्वानुभूतीः सर्वांश्च सतो गृहीत्वा सर्वानुभूत्यैक्य-सर्वसदैक्य-सदनुभूत्यैक्यादिस्थापनप्रयासभरः परिगृह्यते ? व्यावहारिकविषयेषु सत्यत्वबुद्ध्या प्रवृत्तेषु मतेषु यद्यदंशस्य यथा यथा स्वीकारे लाघवम्, प्रमाणगतिः, लोकानुभवसंमतिश्च, तत्तदंशस्तथातथैवेष्यते ; एवमिष्टं सर्वं ब्रह्मणि निर्विशेषे कल्पितत्वात् व्यावहारिकसत्यमेव सत् मिथ्या ' इत्येतावत एव कथनीयत्वात्। कस्यापि मतस्य दूषणे अप्रवृत्य तदंशे उपेक्षामेवोढ्वा स्वोत्प्रेक्षिताद्वितीयब्रह्मनिरूपणेन कालयापनस्यैव युक्तत्वात्। ज्ञानान्यपि लोकप्रसिद्धानि जायन्ते च नश्यन्ति चेति सर्वं यथानुभवमस्तीति किमिति अन्तःकरणबहिर्व्याप्त्यादिकल्पना, दृष्टिसृष्टिवादादिबौद्धपक्षानुमोदनम्, प्रतिकर्मव्यवस्था मन्दाधिकारिविषयेति कल्पनञ्च। वस्तुतोऽनुभूतीनामुपलभ्यमानानामुत्पत्तिविनाशादेर्भवदिष्टत्वात् स्वविषयैः सह तासां मिथ्यात्वसिद्धेः अहमिति चात्मनो यादृशाकारेण भानम्, तादृशाकारेण मिथ्यात्वात् निर्विषयनिराश्रयसंविदन्तरानुपलम्भाच्च निरूपणे क्रियमाणे नूनमद्वैतवादोऽयं शून्यवाद एवेत्यास्तां तावत् ॥

संविद उत्पत्तिर्न भवति, प्रागभावाभावादित्यत्र प्रागभावस्योपलभ्यमानतया नाभाव इति श्रीभाष्य एवोपपादितम्। विस्तृतश्च शतदूषण्याम्। तदुपरि दूषणमुद्भावयितुमपारयता दूषितांशस्य पङ्क्तिद्वयेन संगृह्यानुवादमात्रेण तत्खण्डितत्वबुद्धिः क्रियमाणा नोपपन्ना। दृष्टिसृष्टिवादे चण्डमारुतोक्त दूषणानामद्वैतसिद्धौ परिहार उक्त इति च न तृप्तिः कार्या। तत्रोक्तस्य समाधानस्य सर्वस्यापि सर्वं स्वाप्निकतुल्यमित्येवं बौद्धपक्षनिवेशपर्यवसायितया हेयत्वस्य प्रागेव प्रदर्शितत्वात् ॥

गणनरहिता नित्या संवित् परावररूपिणी
विलसति वचःप्रामाण्यादित्युशद्भिरिहादृताः।
सततजननध्वंसाः धर्मात्मधीपरिणामतः
जगदनुभवप्राप्ता नानाधियोऽपि यथायथम् ॥

शुभमस्तु।

---

श्रीः

# संविन्निर्विकारत्वभङ्गप्रसाधनम्

स्वरूपतः स्वभावाद्वा विकृतानामपीश्वरः।
नित्याविकृतचित्तेड्यो निर्विकारः परोऽस्तु नः ॥

ब्रह्मरूपा याऽनुभूतिः सैकैव लौकिकनानानुभूतिरूपेण स्फुरतीति लौकिकानुभूतीनामेव तदैक्यस्थापनकामनया अनुत्पन्नत्वनिर्विकारत्वादिकमद्वैतिनः प्राञ्चः प्रतिपादयामासुः। अन्यथा वेदान्तवेद्यस्य ब्रह्मणोऽनुत्पन्नत्वनिर्विकारत्वादेर्वेदान्तत एव सिद्धेरनुमानानपेक्षणात्। एवं स्थितेऽस्मदुक्तदूषणगणान्मोचनमार्गमलभमानया शतभूषण्या लौकिकानुभूतिपक्षकत्वपक्षपरित्यागेन ब्रह्मरूपानुभूतिपक्षकत्वमेवाद्रियते; सिद्धसाधनमपि भूषणं मन्यते। तत्र दृष्टान्तविधया निर्दिष्ट-

मनुमानान्तरं यत् , ब्रह्म निर्विकारं विकारात्मना विवर्तमानत्वात् यथा रजतात्मना विवर्तमानमिदं रजतशून्यमिति—तन्न समीचीनम् । ब्रह्मण्यप्यनन्तविकारसद्भावस्यात्रैव वादेऽन्ते शतदूषण्यां दर्शितत्वात् । परं तु ते विकारा नापुरुषार्थभूता इति विशेषः । दृष्टान्तश्च साध्यविकलः; रजतात्मना विवर्तमानायां शुक्तौ तदीयनानाविकारसद्भावस्य सर्वसंमतत्वात् । सर्वथा निरतिशयत्वे विवर्तकारणत्वायोगेन तदुचितसहकारिसमावेशस्य स्वीकार्यतया तत एव सविकारत्वाच्च । स्वविवर्तरहितत्वसाधने च विरोधः विवर्तमानत्वे सति विवर्तराहित्यायोगात् । विवर्तभूतविकारराहित्यसत्त्वे च सिद्धसाधनम् । अन्यादृशविकारशङ्कातङ्कशमनासिद्धिश्च । वृश्चिकात्मना विवर्तमाने गोमये विवर्तविकारस्यापि सद्भावेन व्यभिचारश्च । स्पष्टमिदं, "दृश्यते तु" इति सूत्रे । हेतौ च विकारात्मनेति दलं व्यर्थम् । गोमयवृश्चिकादिस्थल एव लोके विवर्तप्रसिद्धया शुक्तिरजतादौ तदप्रसिद्ध्या तादृशदृष्टान्तोक्त्ययोगश्च । अतश्च विवर्तमानत्वं विवर्तभूतविकारसाधकमेवेति हेतोर्विरुद्धत्वमेव । एवमनुभूतिर्निर्विकारा अनुत्पन्नत्वादिति प्रकृतेऽनुमानेऽपि पूर्वोक्तदोषा यथायथं भाव्याः ॥

यत्तु —अविद्यायामनुत्पन्नत्वरूपहेतुसत्त्वेऽपि न व्यभिचारः निर्विकारत्वरूपसाध्यस्यापि तत्र सत्त्वात् । परिणामिन्यामविद्यायां स्वसमानसत्ताकानेकविकारसत्त्वेऽपि अविद्यानिवृत्तौ तेषां विकाराणामपि निवृत्त्या निर्विकारत्वस्याक्षतेरिति—तन्न—अविद्यानिवृत्तेः प्राक् विकाराणां निवृत्त्यभावात् विकारनिवृत्तिकाले अविद्याया अपि निवृत्ततया धर्म्यभावेन तत्र विकारराहित्योपपादनायोगात् । "अविद्याप्रयुक्तानां विकाराणां अविद्यायाश्च युगपदेव निवृत्तिः" इति भवतैवोक्तत्वात् । अविद्यानिवृत्त्यनन्तरं विकारनिवृत्तिरिति पक्षस्यापि कतिपयेष्टत्वेऽपि विकारनिवृत्त्यनन्तरं अविद्यानिवृत्तिरित्यस्य सर्वैरनभ्युपगमाच्च । शुद्धचिति विकारराहित्यस्य निर्विवादतया अविद्याशबलायां चित्येव निर्विकारत्वं साध्यते । तत्र विशेषणीभूतत्वादविद्यायाः पक्षकोटिनिवेशात् तत्र व्यभिचारापादनं न भवतीत्युक्तावपि बाधः स्फुटः । अविद्यायाः सविकारत्वस्य

70

निर्विवादत्वात् । अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगीति पटकारणतन्तावेव पटाभावानुमानवत् अविद्यायां विकाराभावानुमानं सुवचमित्यपि न । तन्तौ पटाभावानुमानासंभवस्य प्रागेव दृश्यत्वानुमानभङ्गे दर्शितत्वात् । विकाररूपप्रतियोग्यधिकरणे विकारात्यन्ताभावस्य दुर्घटत्वात् । भावाभावयोर्विरोधात् । अविरोधे तु अद्वितीयत्वज्ञानेन सद्वितीयत्वाज्ञानं बाध्यमेव न भवेदिति ब्रह्मेतरस्य मिथ्यात्वमेव न सेत्स्यति ॥

यत्तु—अविद्यायाः पक्षकोटिप्रवेशाभावेऽपि न दोषः, अनुभूतिर्निर्विकारा, अनुत्पन्नत्वादित्यत्रानुत्पन्नत्वं धर्मिविषमसत्ताकमेव हेतुतया विवक्षितमिति—तन्न—अनुत्पन्नत्वमुत्पत्त्यभावः ब्रह्मणि वर्तमानः ब्रह्मसमानसत्ताक एव । परमार्थनिष्ठस्यापरमार्थप्रतियोगिकाभावस्यापि परमार्थताया एव युक्तत्वात् । शुक्तौ शुक्तिरजताभावस्य तथाविधत्वं ह्यनुभूयते । अतो विषयसत्ताकमनुत्पन्नत्वमसिद्धम् । स्वविषमसत्ताकत्वमुत्पत्तिविशेषणं कृत्वा तादृशोत्पत्त्यभावात् निर्विकारत्वं साध्यते चेत्—तदा ब्रह्मोत्पद्यते, अविद्योत्पद्यते इति भ्रान्तिसिद्धानिर्वचनीयोत्पत्तिमत्त्वस्योभयत्राक्षतत्वात् स्वविषमसत्ताकोत्पत्तिराहित्यमसिद्धं स्यात् । समसत्ताकोत्पत्तिराहित्यविवक्षायां ब्रह्मसमसत्ताकोत्पत्त्यप्रसिद्ध्या हेत्वसिद्धिः । स्वसमसत्ताकस्वोत्पत्तिकं यत्, तद्भिन्नत्वं हेतुः स्वपदेन घटादिग्रहणेन ब्रह्मणि सवन्वय इति चेत्—अविद्याया उत्पत्त्यभावेन स्वपदग्राह्यत्वायोगात् तत्र व्यभिचारस्तदवस्थः । अथानुपन्नत्वादिति हेतुप्रयोगो न युक्त एव । अथापि अविद्यायाः स्वयमुत्पन्नत्वाभावेऽपि तत्राकाशादीनामुत्पत्त्या उत्पत्तिरूपावस्थाश्रयत्वं तत्राक्षतम् । तथा च स्वसमानसत्ताकोत्पत्तिरूपावस्थाकं यत्, तद्भिन्नत्वं हेतुरिति न दोष इति चेत्—समानसत्ताकेति व्यर्थम् । यत्किञ्चिदुत्पत्तिरूपावस्थाविशिष्टभिन्नत्वस्यैव पर्याप्तत्वात् । अस्तु तथैवेति चेत्—अन्यतरासिद्धो हेतुः । ब्रह्मण आरम्भणाधिकरणन्यायेन कार्यत्वस्य संप्रतिपन्नतया विशिष्टाद्वैतिभिस्तस्येष्टतया च सोत्पत्तिकभिन्नत्वस्यायोगात् ॥

यत्तु—साध्यभूतनिर्विकारत्वघटकविकारशब्देनोत्तरावधिविवक्षायामविद्यायां व्यभिचारः, अनुत्पन्नायां तस्यां बाध्यायामुत्तरावधिराहित्याभावादित्येत-

त्समाधानाय विशेषणदानम्—स्वसमानसत्ताकोत्तरावधिर्यः तदभाव एव साध्यते। अविद्यानिवृत्तेरनिर्वचनीयत्वानङ्गीकारात् स्वसमानसत्ताकोत्तरावधिर्नास्ति। अतः साध्यस्यापि सद्भावान्न दोष इति—तन्न—ब्रह्मसमानसत्ताकोत्तरावध्यप्रसिद्ध्या साधनायोगात्। स्वसमानसत्ताकोत्तरावधिकं यत्, तद्भिन्नत्वं साध्यमिति चेत्—स्वपदेन शुक्तिरजतादिग्रहणमपि न स्यात्। तदीयोत्तरावधेः रजतादिनिवृत्तेः रजतादिसमानसत्ताकत्वाभावात्। सत्यम्, अथापि घटादिकमेव गृहीत्वा समन्वयः, उत्तरावधिर्हि नाशो निवृत्तिश्च। तत्र घटादीनां निवृत्तेर्लोके प्रसिद्ध्यभावेऽपि नाशप्रसिद्ध्या, तस्य च समानसत्ताकत्वाददोषादिति चेत्—न—पश्चान्निवर्तमाने शुक्तिरजतादावपि साध्यसत्त्वेन ब्रह्मणि शुक्तिरजततुल्यत्वशङ्कया निवृत्तिमत्त्वबुद्धेरनिवृत्ततया निर्विकारत्वसाधनप्रयोजनविरहात्। नाशाप्रतियोगित्वस्यैव साक्षात् साध्यत्वसंभवेन ईदृशवक्रीत्यवलम्बनस्य व्यर्थत्वाच्च। एवञ्च शून्यवादिनः ब्रह्मणो बाधं ब्रुवतः एतदनुमानमप्रतिकूलं स्यात्।

यत्तु—प्रागभावे व्यभिचारवारणाय हेतौ भावत्वे सतीति निवेशे तेनैवाविद्यायामप्यनैकान्त्यं वार्यते। तत्त्वदीपिकाग्रन्थे भावभावाविलक्षणत्वस्याविद्यायामुक्तत्वादिति—तन्न—भावत्वाभावत्वयोर्मिथो विरोधात् ज्ञानाभावरूपाज्ञानमुपेक्ष्य भावरूपज्ञानस्यैव प्राचीनोक्ततया तद्विरोधाच्च भावाभाववैलक्षण्योक्त्ययोगात्। "परस्परविरोधे च न प्रकारान्तरस्थितिः" इति न्यायेन भावत्वाभावत्वान्यतरस्यावश्यकत्वात्। अन्यथा भवता स्वच्छन्देन उत्पन्नानुत्पन्नोभयविलक्षणत्वस्याविद्यायां स्वीकारादव्यभिचार इत्यपि सुवचत्वात्। अज्ञानस्य भावाभावविलक्षणत्वे तत्परिणामभूतप्रपञ्चस्यापि तथात्वस्यावश्यकतया भावत्वस्य ब्रह्ममात्रे पर्यवसानात् तावन्मात्रस्य हेतुत्वसंभवेन अनुत्पन्नत्वरूपप्रथमहेतोः परित्यागप्रसङ्गाच्च। तथा च, "तर्ककुशलताऽऽविष्कृता भवती"ति श्रीभाष्योक्तिः सुप्रतिष्ठितम्। अविद्यायां व्यभिचारवारणाय पारमार्थिकविकारराहित्यस्य साध्यतया स्वीकारे पारमार्थिकविकारासिद्ध्या उद्भावितायाः परिहाराय पारमकर्थि-

त्वं स्वसमानसत्ताकत्वम्, तथा च न कश्चिद्दोष इति क्रियमाणो विस्तरः सर्वथैवानन्वित इति स्वयमेव परिशील्यताम्। ब्रह्मरूपानुभूतिमेव पक्षीकृत्य तत्र निर्विकारत्वसाधनेऽपि तत्र, "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति पञ्चपादिकासिद्धान्तात् तात् धर्मानादायापि सविकारत्वान्निर्विकारत्वं बाधितम्। अनारोपितविकारराहित्यं साध्यमिति चेत्—तादृशविकाराप्रसिद्धिदोषस्तदवस्थः। एवं मिथ्याभूतानन्तविकाराश्रयत्वादपि बाधितत्वम्। "यत् यत् उत्पन्नम, तत् तत् समसत्ताकविकारवत् यथा घटादि" इति व्यतिरेकव्याप्तिप्रदर्शनञ्चायुक्तम्। यत् साध्याभाववत् तत् हेत्वभाववत् इति हि व्यतिरेकव्याप्तिप्रदर्शननिष्कर्षः। तर्हि भवन्मते ब्रह्मणि निर्विकारत्वानुमानं कथमिति चेत्— न वयमनुमानेन निर्विकारत्वं सिषाधयिषामः। यत्पुनः अद्वैतिनः ईश्वरतत्त्वं प्रकृतिविविक्तं निर्विकारमेव मन्यन्त इति—तन्न—अद्वैतिमते सार्वज्ञ्यसर्वशक्तित्वादीनामपि मिथ्याभूतविकारतया तावदाश्रयस्येश्वरतत्त्वस्य निर्विकारत्वायोगात्। ईश्वरस्य सविकारत्वेऽपि तत्त्वं निकृष्टं निर्विकारमेवेति चेत्—ईश्वरेति किम्; जीवसाधारण्यादेतदर्थस्य। यच्चालोच्यमानम्, "प्रकृतिवियुक्तस्य चिन्मात्रस्य कथं सत्येन जगता संबन्धः श्रीभाष्यमते" इति—तत्र चिन्मात्रमितिपदेन यदि निर्गुणचैतन्यस्वरूपात्मविवक्षा, तर्हि तस्याभावादेव न संबन्ध आलोचनीयः। यदि मात्रपदस्य अंशतोऽपि जडत्ववारकत्वमात्रविवक्षया सगुणचैतन्यरूपात्मपरत्वम्, तथा किं जीवपरत्वमुत परमात्मपरत्वम्? आद्ये भोग्यभोक्तृभावप्रकारा एव संबन्धाः प्रसिद्धाः। अन्त्ये चाधाराधेयभावनियम्यनियामकभावादयोऽनन्ता इति किमत्र गवेषणीयम्? प्रकृतेरात्मनाञ्च पारमार्थिकतया न संबन्धे काचिदनुपपत्तिरस्ति।

यत्पुनः—चिदचिच्छरीरविशिष्टस्य परमात्मन उपादानत्ववर्णनात् चिदचिद्गतक्लेशजन्मादिविकारजालवत्त्वमपि परमात्मन्युच्यतामिति—तन्न—"स एव सृज्यः स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च। ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः" इति (१-२-७०) श्रीविष्णुपुराणोक्तरित्या

परमात्मनः सृज्यपाल्यसंहार्यजगद्भेदस्यापि स्वीकारात् कार्यकारणयोरनन्यत्वास्यारम्भणाधिकरणेऽपि स्थापितत्वाच्च विशिष्टब्रह्मण्युपादानोपादेयभावस्य, विशेषणमात्रे क्लेशजन्मादिविकारस्य विशेष्ये ब्रह्मणि नियन्तृत्वलीलारसानुभवितृत्वादेश्च व्यवस्थया सिद्धौ भवदुक्तदोषप्रसक्त्यभावात् । विशेषणांशमात्रे उपादानोपादेयभावं विशेष्यांशं वेदान्तादविद्वांसः कामं वर्णयन्तु । वेदान्ताधिगतव्युत्पत्तयस्तु विशिष्टे उपादानत्वमुपपादयन्ति । तत्र प्रकृतिगतमुपादानत्वं ब्रह्मण्यस्तीत्युच्यत इति कथम् ? किञ्च शब्दार्थनिष्कर्षः शास्त्रलोकव्यवहाराधीनः, न स्वच्छन्दकल्प्यः । तत्र क्लेशकर्माद्यशेषदोषासंस्पृष्टत्वेन प्रसिद्धे परमात्मनि जीवाचिद्गतक्लेशाद्याश्रयत्वं न शक्यमापादयितुम् । अत एव न तथा व्यवहारोऽपि । उपादानत्वव्यवहारस्तु स्फुटमुपनिषत्सूपलभ्यमानः इति उपादानशब्दस्यार्थे परिशील्यमाने साक्षादाश्रयत्व---आश्रयाश्रयत्वान्यतरसंबन्धेन स्थूलावस्थापूर्वभाव्यवस्थाविशिष्टत्वमेवोपादानत्वमिति निर्णीयते । यथा भावत्वं सत्ताविशिष्टत्वं द्रव्यगुणकर्मसामान्यविशेषसमवायेषु व्यवह्रियमाणतया समवायसामानाधिकरण्यान्यतरसंबन्धेन सत्ताविशिष्टत्वरूपं तार्किकैरिष्यते । "यत्र यदाश्रयत्वग्राहकप्रमाणमस्ति, तत्रैवान्तरालिकपदार्थानां तदव्यवधायकत्वम् । अत एव प्रासादे शेते, पर्यङ्के शेते, वेद्यां हवींष्यासादयति, बर्हिषि हवींष्यासादयति, इत्यादीनामान्तरालिकानां पर्यङ्कबर्हिरादीनामव्यवधायकत्वम्" इति चोक्तं **भावप्रकाशिकायाम्** । ब्रह्मण्येव मुख्यमुपादानत्वम्, न तु चेतनाचेतनयोः, कार्यकारणावस्थे च ब्रह्मगते एवोपादानोपादेयव्यवहारनियामिके शास्त्रसिद्धे । अतो न विशेषणगतावस्थामादाय विशिष्टव्यवहारकल्पनस्यावश्यकता इत्यादिकमप्युपादानत्वशोधनावसरे व्युत्पादयिष्याम इति किमत्र प्रासङ्गिकविस्तरेण ।

अद्वैतिमत एव तु ब्रह्मण्युपादानत्वं गौणं गौणतरं गौणतमं वा असंभाविततथाविधमपि वा । उपादानोपादेययोरैक्यं हि सत्कार्यवादिभिर्वेदान्तिभिः संप्रतिपन्नं स्वीकर्तव्यम् । न चोपादेयभूतेन जगता मिथ्या-

भूतेन उपादानत्वाभिमतस्य ब्रह्मण ऐक्यमस्ति । बाधार्थसामानाधिकरण्यस्यैवैक्यश्रुतिषु भवदिष्टत्वात् । अतोऽविद्यानिष्ठमुपादानत्वं ब्रह्मणि गौणम् । तदपि अविद्यागतकार्यपूर्वावस्थासजातीयकार्यपूर्वावस्थामात्रनिबन्धनं चेत्, युज्येत । तद्विहाय पूर्वावस्थाश्रयाविद्याक्रान्तत्वनिबन्धनमित्युक्तया मुख्यपदार्थवृत्तिगुणसजातीयगुणवत्त्वे सत्येव गौणत्वस्य वर्णनीयतया कार्यपूर्वभावित्वरूपगुणतुल्यरूपं परित्यज्याविद्याब्रह्मणोर्यः तिरोधायकतिरोधेयभावः संबन्धः, तत्संबन्धित्वमुभयगतं गुणमादायोपादानवाचोयुक्तिर्ब्रह्मणि निरूपणीयेति गौणतरम् । संबन्धस्य तिरोधायकत्वतिरोधेयत्वरूपभिन्नधर्मघटिततया एकरूपसंबन्धित्वाभावाच्च गौणतमम् । सोऽपि गुणः परमार्थतो नास्ति निर्विशेषे ब्रह्मणीति चासंभावितमेवेत्यन्यत्र विस्तृणुयाम ॥

सशरीरत्वस्य नित्यमङ्गलत्वादिकस्य च मम माता बन्ध्येतिवत् मिथो व्याहतिरिति यदुक्तम्—तत् स्वसिद्धान्तविरुद्धम् । भगवतो रघुनाथाद्यवतारेष्वपि दुःखाद्यभिनयमात्रमिति सशरीरस्यैव भगवतः सर्वदैव मङ्गलत्वस्य सिद्धान्तलेशसङ्ग्रहाद्युक्तस्य प्रागेव प्रदर्शितत्वात्; "स एकधा भवति" इत्यादिना नानाशरीरपरिग्रहस्य, तथात्वेऽपि, "न रोगं नोत दुःखताम्" इति मङ्गलत्वस्य च मुक्तेष्वपि श्रुत्या वर्णितत्वेन श्रुतिविरोधेऽनुमानस्यानुदयाच्च । निर्गुणे ब्रह्मणि नित्यमङ्गलत्वादिकं पुष्कलमिति कथं तत्रभवन्तः प्रतियन्तीति च स्वयमेव विमृश्यम् ॥

निखिलजगन्निदानमनवद्यगुणैकनिधिं
निजचरणश्रितेषु निरपायदयाप्रसरम् ।
निरुपधिसाम्यसौम्यतमरम्यरमानिलयं
निजकुलदैवमेव हृदयं मम भावयतु ॥

शुभमस्तु ॥

---

श्रीः

# संविन्नानात्वभङ्गप्रसाधनम्

नानाजातीयसंवित्पदनिजविभवो नित्यनाकाधिवासो
नानाकैङ्कर्यसंविन्निरुपममहिमानन्तनित्याभिवन्द्यः ।
नानाचाराविवेकोद्धतजनसुलभो यश्च नाना न किञ्चित्
नानाचाराङ्गधर्मप्रभुरघहरणो भातु नारायणोऽयम् ॥

आत्मनानात्वस्यासर्वसंमतत्वेऽपि धर्मभूतसंविन्नानात्वनिषेधकानुमानभञ्जनस्यैवात्र वादे मुख्यत्वात्, संविदनुभूत्यादिपदैरात्मविवक्षणेऽपि आत्मनानात्वस्यैव "नानात्मनो व्यवस्थातः", "शास्त्रसामर्थ्याच्च" इत्येवं कणाददर्शितरीत्या सर्वप्रमाणसंमततया तन्नानात्वप्रतिषेधस्य बाध्यत्वात् तत्र, "न त्वेवाहं जातु नासम्" इति श्रीगीताश्लोकमात्रं गृहीत्वा नानात्मस्थापनस्यात्र वादेऽनुपनिबद्धतया तद्वाक्यविचारेण परीक्षोपक्रमो वृथाविस्तरः । विचारितचरश्चैतच्छ्लोकार्थःप्रागेवेति किमत्र चर्वितचर्वणेन । यत्तु—"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन" इति परमात्मजीवात्मनां जन्मादि प्रतिपादयिष्यता भगवता, 'न त्वेवाह'मिति जन्मनिषेधः क्रियमाणो न घटत इति—सोऽयमनुक्तोपालम्भः । अस्य श्लोकस्य सार्वकालिकस्थितिमात्रपरत्वेनात्र जन्मतन्निषेधप्रस्तावगन्धस्याप्यभावात् । सर्वदा स्थितस्य कथं जन्मेति चेत्—कदाचित् स्थित्वा नष्टस्य बहूनि जन्मानि कथम्? "जीव ईशो विशुद्धा चित्" इति तदनादित्वस्य भवदिष्टतया एकं जन्मापि कथम्? जन्म नाम आमनः स्थितस्यैव शरीरेण संश्लेषः; स भवितुमर्हति सकृदसकृद्वेति चेत्—सिद्धस्तर्हि जन्मप्रतिपादकश्लोकस्य सार्वकालिकसद्भावप्रतिपादकप्रकृतश्लोकस्य चाविरोधः । योगवासिष्ठवचनं तु नात्यन्तं प्रमाणम् । न च तद्विरोधलेशोऽपि । "संविदाकाशमेवाहं भवानपि जना अपि । म्रियामहे नो कदाचित् कुतः संविद्विनश्यति?" इत्ययं श्लोको

हि प्रत्युत अहं, भवान्, जना इति आत्मानेकत्वं दर्शयत्येव। एवं दर्शयन्नेव सर्वेषां संविद्रूपत्वम्, आकाशवदतिसूक्ष्मत्वम्, अत एव सूक्ष्मतया, "अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्" इत्युक्तरीत्या इतराविनाश्यत्वञ्च बोधयति। उपाधिभूतशरीरविशिष्टाकारेणात्मनां नित्यत्वं तु न वयमपि ब्रूमः। तस्मात् देहातिरिक्तज्ञानस्वरूपाणामात्मनां देहनाशेऽपि न नाश इतीहोच्यमानार्थे आत्मैक्यसाधकत्वलेशस्याप्यभावादेतदुदाहरणमप्युपेक्ष्यमेव। एवं स्पष्टां भेदप्रतीतिं कथञ्चित् स्वमते निर्वोढुमेव प्रवृत्तं भाष्यम्, "भेदनिर्देशस्तु शरीरभेदाभिप्रायेण" इति; न तु साधकतया।

यत्तु—लोकप्रसिद्ध आत्मभेदः औपाधिकः प्रमात्राश्रितः न संविद्भेदं साधयतीति—तत्रात्मभेदः लोकप्रसिद्ध इति अभ्युपेतं युक्तम्। स्वाभाविके भेदे स्वरसे औपाधिकत्वमनर्तीतं किमिति कल्प्यम्? प्रमात्राश्रितो भेद इत्यपि सत्यम्। प्रमातृव्यतिरिक्तस्यात्मनोऽभावात्। आत्मनां संवित्त्वेन लोके प्रतीत्यभावादेव संवित्त्वेन रूपेण भेदाप्रतीतिः। संविद्भेदोऽपि तु लोकप्रसिद्धोऽस्त्येव। स च जानामि, अजानाम्, साक्षात्करोमि, अनुमिनोमि, प्रत्यभिजानामीति बहुप्रकारः। भवदुपात्तश्रुतिवाक्यम्, "एको देव" इत्यादिकमपि परमात्मन एकत्वमेव ब्रवीति, न संविदेकत्वमित्यवधेयम्॥

भवता चात्र संवित्पदेनात्मना ग्रहणम्, उत लोकप्रसिद्धज्ञानानामपि? आद्ये, संविदिति सामान्यनिर्देशो न युक्तः। तथा सति पक्षैकदेशे बाधप्रसङ्गात्। आत्ममात्रपक्षीकारेऽपि बाध एव। अप्रयोजकश्च हेतुः। अजानामपि परमाणूनामनेकत्वस्यानेकवादिसंप्रतिपन्नत्वात्। अजानामात्मनामेवानेकत्वस्य सांख्यादिभिरुक्तत्वात्। आत्मनः सच्चिदानन्दांशानां पृथग्भूतानामप्यजत्वाच्च। "जीव ईशो विशुद्धा चित्" इत्युक्तानां षण्णामनादित्वस्य भवदिष्टतया अनादित्वादेवाजत्वस्यावश्यकतया तन्नानात्वस्याप्यभ्युपगततया हेतुरनैकान्तिक एव॥

यत्तु—संविदि आत्मनि यतः कुतश्चिद्भेदोऽपि निषेद्धुं शक्यते। आत्मनो देहादिभेदवत्त्वेऽपि तस्य देहादेरपरमार्थत्वेन तद्भेदनिषेधसंभवात्। अत एव तदनन्यत्वाधिकरणे भामत्याम्, "भेदं व्यासेधाम" इति भेदनिषेधबोधनमिति—तदयुक्तम्। आत्मनः परमार्थत्वे देहादेश्चापरमार्थत्वे भेदस्यैवावश्यकतया तन्निषेधायोगात्। प्रत्युतापरमार्थप्रतियोगिकभेदस्य परमार्थभूतात्मस्वरूपतया वास्तवत्वेन तन्निषेधासंभवाच्च। अथ परमार्थापरमार्थयोस्तादात्म्यमिष्यते, इदं रजतमिति शुक्तिरजतयोस्तत्प्रतीतेरिति चेन्न—तत्र हि तादात्म्यप्रतीतिमात्रम्; न तु तादात्म्यस्य वास्तवता। किञ्च भवद्भिस्तादात्म्यं नाम भेदघटितः अभेद इति वर्णनात् भेदाभेदद्वये भास्करादिभिरिव स्वीकार्ये कथम्, "नाभेदं ब्रूमः, किन्तु भेदं व्यासेधामः" इति लेखनम्? उभयनिषेधात्तु परमार्थापरमार्थयोः अतादात्म्यमेव वास्तवं भवदिष्टं स्यात्। एतद्भामत्यर्थश्च प्रागेव प्रतिक्षिप्तः। यत्तूच्यते—"युष्मदस्मत्प्रत्ययगोचरयोः" इति भाष्ये पूर्वपक्षिणा देहात्मविवेके उपक्षिप्ते, "सत्यं विवेकोऽस्ति। स तु परोक्षः। न तादृशोऽपरोक्षभ्रममनादिमपाकर्तुं प्रभवति" इति देहात्मविवेकं कृत्वाचिन्तया समाधानमुक्तम्। वस्तुतो देहात्मविवेको नेष्ट एवेति—तत्रोच्यते—यदि देहात्मविवेको नेष्टः, किन्तु कृत्वाचिन्तैव, तर्ह्यध्यासं विनैव प्रमयैवान्योन्यधर्मग्रहणं निर्वाह्यम्। अन्योन्येत्येव न वक्तव्यमित्येवाशयः स्यात्। एवं तर्हि तमः—प्रकाशवत् विरुद्धस्वभावयोरिति विरुद्धस्वभावत्वमपि नेष्यत इति स्यात्। तथा चास्मत्प्रत्ययगोचरोऽपि तमः, युष्मत्प्रत्ययगोचरोऽपि प्रकाश एव वा। किमिदं युक्तम्? एवं देहात्मविवेकस्याभावे च, "एक आत्मनः शरीरे भावात्" इत्यधिकरणेन शारीरके विवेकव्युत्पादनमयुक्तं स्यात्। यदि च परमार्थापरमार्थयोरपि तादात्म्यमस्ति, तर्हि देहात्मवादो न प्रतिक्षेप्यः। यदि च भेदाभेदद्वयमिष्टम्, यदि वा भेदसह एषोऽभेदः, तर्हि तादात्म्यान्तर्गतो भेद एव देहात्मविवेकोऽस्तु। भेदाभेदद्वयसत्त्वे भेदाभेदोभयव्यासेधः तदनन्यत्वाधिकरणभामत्युक्तो न स्थास्यति। तादात्म्यं भेदाभेदोभयरूपमिती-

दञ्च प्रागेव परास्तम् । यदि च तादात्म्यान्तर्गतत्वमभेदस्य, तर्हि सोऽभेद एव तदनन्यत्वमित्युच्यताम् । किमिति भेदनिषेध एव चिकीर्षित इत्युच्यते । यदि चाभेदो नेष्टः, कथमिदमधिकरणमसत्कार्यवादनिरासेन सत्कार्यवादस्थापकं स्यात् । शोधने हि भवन्मते कार्यस्यैवापह्नवात् , न सत्कार्यवादः, नाप्यसत्कार्यवादः, किन्तु सदकार्यवाद एव । "आरम्भणशब्दादिभ्य" इति सूत्रनिर्दिष्टं आरम्भणपदञ्चावस्थारूपविकारतद्वाचिनामधेयोभयस्पर्शित्वं द्रव्यस्य दर्शयति । न च शुक्तेः रजताश्रयत्वं वा रजतत्वाश्रयत्वं वा रजतनामवत्त्वं वाऽस्ति । अतः श्रुतिविरोधश्च । सिद्धान्तेऽप्यध्यासभाष्ये अध्यासमूलकव्यवहारस्यानादितायाः अध्यासस्वरूपविवेचनस्य च क्रियमाणतया देहात्मैक्ये चाध्यासप्रसक्त्यभावात विवेक इष्ट एवेति । अतः विवेकं कृत्वा चिन्तयेत्येतदयुक्तमिति किं पिष्टपेषण ?

किञ्च संविन्न नाना अनुत्पन्नत्वादित्यनुमाने पक्षसाध्यहेतूनां मिथो भेदोऽस्ति, न वा ? अस्ति चेत्—कथं यतः कुतश्चिद्भेदस्य स्थितस्यापलापः ? न नानेति नानाप्रतियोगिकभेदस्य स्थापनादपि संविदि यतः कुतश्चिद्भेदोऽस्त्येव । नानेति पदेन तस्य भेदस्य ग्रहणे च नेति तदभावो दुर्वचः । अतो यतः कुतश्चिद्भेदो नानापदार्थो न भवितुमर्हति । हेतुसाध्यपक्षाणामैक्ये पुनरनुमानप्रयोग एव दुष्कर इति सामान्यतो भेदराहित्यसाधनं दुश्शकम् ॥

अथोच्येत—संविन्न नानेत्यस्य यत् जडप्रपञ्चभूतं तदुपहितचैतन्यरूपञ्च, तत् सर्वं ब्रह्मरूपसंविदि अध्यस्तमित्यत्रैवानुमानतात्पर्यम् । अयमेव च यतःकुतश्चिद्भेदनिषेध इत्युच्यत इति—अत्रेदं वक्तव्यम्—अस्याध्यासस्य कथं निवृत्तिः ? शुक्तौ रजताध्यासस्य, नेदं रजतमिति ज्ञानादिव, संविदि प्रपञ्चरूपेण संप्रति गृह्यमाणायां नेदं जगदिति ज्ञानान्निवृत्तिरिति चेत्—तर्हि प्रपञ्चभेदग्रहणं संविद्यावश्यकमिति कथं भेदाभावः संविदि ? एवञ्च तत्त्वज्ञानस्यैवाध्यासनिवर्तकत्वात् अत्र विषयभूतो भेदः पारमार्थिक इत्यपि

सिद्ध्येत् । अपारमार्थिकप्रतियोगिकभेदः पारमार्थिको न भवतीति भामत्यपि अत एवानुपपन्ना । भेदस्यापारमार्थ्ये प्रतियोगिपारमार्थ्यप्रसङ्गात् । भेदस्य पारमार्थ्ये अद्वैतरक्षणाय ब्रह्मस्वरूपत्वस्यावश्यवक्तव्यतया ब्रह्मणःप्रकाशमानतया भ्रान्तिरेव न स्यादिति भिया तु भामत्यां तदपारमार्थिकत्वमुक्तम् । सेयमुभयतस्पाशा रज्जुरिति । किञ्चानुत्पन्नत्वरूपहेतोरत्र साध्ये अप्रयोजकत्वमेव । अनुभूत्यवान्तरभेदनिषेधतात्पर्येत एव प्राच्यैरेतदनुमानप्रयोगात् तल्लक्ष्यासिद्धिश्च । आश्रयासिद्धिः, श्रुतिमूलत्वे सिद्धसाधनम्, अन्यथा बाधश्च ॥

'अविद्यातः परमार्थतो विभागः भेदापरनामा आत्मनश्चेदिष्यते, वस्तुतोऽविद्यैव स्यादात्मे'ति श्रीभाष्यं गृहीत्वा यदुक्तम्---भ्रान्तिकालीनं तादात्म्यमादाय यद्यापादनमिदम्, तर्हि न तत्त्वोपदेशसमारम्भ इति---इदमनुपपन्नम् । परमार्थतो विभागो नास्ति चेत्, तादात्म्यं पारमार्थिकं भवेदिति स्पष्टे श्रीभाष्यार्थे भ्रान्तिकालीनतादात्म्यापादनमिति कथमुच्यत इति । अविद्याया अपारमार्थिकत्वेऽपि अविद्याप्रतियोगिकभेदः ब्रह्मणि पारमार्थिक एव वक्तव्यः, शुक्तौ शुक्तिरजतभेद इव । स च भेदो द्वैतभिया ब्रह्मस्वरूप एवेष्यते, तदाऽप्याधाराधेयभावोऽपीत्यन्यदेतत् । एवञ्चायं पारमार्थिकभेदो नेष्यते चेत्, तर्हि ब्रह्मणि अविद्याया अविद्यात्मना स्वेन साकं यादृशमैक्यं तादात्म्यविलक्षणम्, तदेव ब्रह्मणा सहाविद्याया इति अविद्यावत् ब्रह्मापि मिथ्यैव भवेत् । एतदर्थप्रतिपादनार्थमेव वस्तुतःपदमेवकारश्च भाष्ये ॥

यत्तु संरम्भवचनम्--"अनुभूतिर्न नाना" इत्यत्र संविज्जातीयमात्राद्भेदनिषेध इति द्वितीयपक्षे शतदूषण्यां सिद्धसाधनवर्णनमसङ्गतम् । अहमर्थं संविद्रूपमहमर्थान्तरात् संविद्रूपाद्भिन्नमेव हि घण्टाघोषेण श्रीभाष्यानुयायिनो घोषयन्तीति---तत्रानवधानहेतुं संरम्भं परित्यज्य सूक्त्यर्थः परिशील्यतामिति प्रतिबोधयामः । संविदन्तरभेदनिषेधः किल चतुर्थः कल्पः । स च

निरसिष्यत एवोपरि, " भेदस्यापि सिद्धेर्निषेधायोगात " इति । अतो द्वितीयचतुर्थयोर्भेदमनाकलय्य किमित्येवं वर्णनम् ? अयं हि संविज्जातीयमात्राद्भेदनिषेध इति कल्पः । स च संवित्त्वावच्छिन्नप्रतियोगिताकभेदाभावः । न हि कस्मिंश्चिदपि घटे घटत्वावच्छिन्नप्रतियोगिताको भेदो भवितुमर्हति । तथा संविदि संवित्त्वावच्छिन्नप्रतियोगिताकभेदस्यासंभवः सर्वसंप्रतिपन्न इति सिद्धसाधनवर्णनं हि समञ्जसमेव । एवं द्वितीयचतुर्थयोर्भेदमनाकलय्योपरितनग्रन्थप्रवृत्तिरप्येवमुपेक्ष्येति ॥

यच्च—भेदवत्त्वेनप्रतीयमानसंवित्प्रतियोगिकभेदराहित्यस्य साध्यत्वे अविद्यायां संविद्भेदस्यैव सत्त्वात् हेतोर्विरोध इति शतदूषण्युक्तपरिहारायोक्तम्, अविद्यायाः संविद्यध्यस्तायाः संविदुपाधिभूतायाः संविदपेक्षया नात्यन्तं भेद इति भेदराहित्यसत्त्वान्न व्यभिचार इति—तत्र विरुद्धहेत्वाभासत्वे आपाद्यमाने व्यभिचरितत्वं नास्तीति भवद्वर्णनमन्यादृशमित्यन्यदेतत् । अविद्यायां साध्यसद्भावकथनमप्ययुक्तम् । न नानेति वादिनो हि संविदां प्रातीतिकभेदे सत्यप्यन्यादृशभेदो नास्तीत्यत्र तात्पर्यम् । तथा च संवित्प्रतियोगिकप्रातीतिकभेदस्य संविदि सद्भावात् तद्राहित्यं दुःसाधमिति पारमार्थिकभेदराहित्यसाधने संवित्प्रतियोगिकपारमार्थिकभेदाप्रसिद्ध्या साध्याप्रसिद्धिः । संविद्भिन्नस्य वस्तुनः परमार्थतः सत्त्वे किल तत्प्रतियोगिकः पारमार्थिकाभेदः प्रसिद्ध्येत् । तस्मात् भेदवत्त्वेन प्रतीयमानसंवित्प्रतियोगिक स्वाश्रयसमानसत्ताकभेदराहित्यं साध्यमिति वक्तव्यम् । एवं भेदः ; संविदि तत्समानसत्ताकः संवित्प्रतियोगिको भेदो नास्ति ; अविद्यायां तु अविद्यासमानसत्ताकः संवित्प्रतियोगिको भेदोऽस्तीति साध्याभावात् विरुद्धत्वमेव । उपाधेरुपाधिमदपेक्षया अत्यन्तं भेदो नास्तीति चायुक्तम् । घटावच्छिन्नआकाश इत्यत्र घटस्याकाशस्य चात्यन्तभेदस्यैव प्रामाणिकत्वात् । अध्यस्ताधिष्ठानयोरत्यन्तं भेदो नास्तीति चायुक्तम् । मिथ्यातथ्ययोः कथमप्यैक्यस्य कथयितुमशक्यत्वात् । अन्यथा बाधकालेऽपि शुक्तौ इदं रजतमिति व्यव

हारापत्तेः। अध्यासस्थले प्रातीतिकः कथञ्चिदभेदः स्यात्, उपाध्युपाधिमतोस्तु सोऽपि नास्ति। उभयत्रापि भेदस्तु अत्यन्तमेवास्तीत्येवानुभविकम्। तादात्म्यं भवदिष्टभेदाभेदघटितं नेति च प्रागेव प्रादर्शि॥

यत्तु—संविन्न नानेत्यस्य संविदि सर्वभेदनिषेधरूपत्वे सर्वमिथ्यात्वतात्पर्यकत्वम्। संविद्भेदनिषेधरूपत्वे च सर्वजीवैक्यपरत्वमिति—तन्न—न हि संविन्ननानेति किञ्चित् श्रुतिवाक्यमस्तीति कृत्वा तस्य कोऽर्थ इतीह विचार्यते। किन्तु भेदनिषेधानुमानम्। तत्रानुत्पन्नत्वादिति हेतुर्यस्यार्थस्य प्रयोजको भवितुमर्हति, स एवार्थो ग्राह्यः, न त्वन्यः। किञ्च संवित्पदेन संवित्त्वेन पक्षविवक्षा, उतान्यथा? आद्ये लौकिकानुभूतिष्वपि संवित्त्वप्रसिद्धिसद्भावात् तासु मिथो भेदस्यानुभविकतया भेदनिषेधे बाधः। एवं सत्यभूतद्वितीयराहित्यबोधनेऽपि; सत्यस्य ब्रह्मणः सत्त्वात्। तथा जीवस्य संवित्त्वस्वीकारेण मिथो जीवभेदनिषेधपरत्वे च जीवानां नानात्वस्यानुभविकतया बाध एव। ब्रह्मत्वेन पक्षीकारेऽनुत्पन्नत्वमप्रयोजकम्। श्रुत्या नानात्वनिषेधे तु तस्यास्तदर्थकत्वनिश्चयेऽनुमानवैयर्थ्यम्। अन्यदा तूक्त एव दोषः। न च ब्रह्मपक्षीकारे जीवनानात्वनिषेधानुमानप्रसक्तिरित्यादि द्रष्टव्यम्।

एतेन संवित् स्वभिन्ना नेत्यस्य 'तत्त्वमसि'वाक्यार्थवर्णनपरत्वमित्यप्यपास्तम्। न हि 'तत्त्वमसि' वाक्यमेतदर्थकमित्यनुमीयत इह। तदैक्यमर्थात् सिद्ध्यतीति चेत्—अनुमानस्यानाभासत्वे किल पश्चात् तत्परिशीलनम्। किञ्च यत्र यत्र स्वभिन्नत्वम्, तत्र तत्रोत्पन्नत्वमिति व्यतिरेकव्याप्तिर्न घटते। घटभिन्ने ब्रह्मण्यविद्यायाञ्चोत्पन्नत्वाभावात्। तत्पदलक्ष्यं स्वरूपं त्वंपदलक्ष्यस्वरूपाभिन्नमनुत्पन्नत्वादिति प्रयोगश्चायुक्तः। जीवेशाविद्यातद्भेदप्रागभावादिष्वपि हेतुसत्त्वात् त्वंपदलक्ष्यस्वरूपाभिन्नत्वाभावाद्व्यभिचारात्। न चानुत्पन्नत्वं प्रयोजकम्। उत्पन्नेषु घटादिष्वपि संवित्स्वरूपभेदसत्त्वात् अनुत्पन्नेष्वपि प्रकृतिपरमाण्वादिषु प्रतिवादिभिः संविद्भेदस्वीकाराच्च तत्त्वायोगात्। "सर्व-

भूतस्थमात्मानं सर्वभूतानि चात्मनि" इति श्लोकस्तावत्, "सर्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः" इतिवत् आत्मनो भूतानाञ्च मिथो भेदसंबन्धमेव सप्तमीस्वारस्यात् ब्रूयादिति न तस्य भवत्पक्षे स्वारस्यमिति तदुपादानमयुक्तम्। "सर्वत्र समदर्शिनः" इति च साम्यं सादृश्यमेव वक्ति; न त्वैक्यम्। एतेन, "यो मां पश्यति" इत्यपि व्याख्यातम्। एकैकस्याप्यात्मनः स्वस्मादभिन्नत्वसाधने च सिद्धसाधनमित्युक्तौ, तर्हि तदिष्टमेवेति शतभूषणीलेखनं तु विचित्रमेव। विवक्षितार्थासाधनादर्थान्तरम्, अनुमानस्यानवसरश्चेत्युक्तौ कथमिष्टमेवेत्युच्येताद्वैतिभिः? अविद्यायाः संवित्तादात्म्यस्वीकारात् तद्भेदराहित्यमेवास्तीति न व्यभिचार इति च वार्तमिति प्रागेवोपपादितम्। एवं तर्हि घटादावपि संवित्तादात्म्यमस्तीति संविद्भेद एवाप्रसिद्ध इति कुत्र व्यतिरेकव्याप्तिग्रहः। कथञ्च साध्याप्रसिद्धावनुमानप्रयोगः। एवं घटावच्छिन्नचैतन्यं प्रति घटस्योपाधितया तादात्म्यमपि भवता सुवचम्। घटानुपाहितसंविदपेक्षया घटे भेदोऽस्तीति चेत्—अविद्यानानात्वपक्षे एकाविद्यानुपहितं यदविद्यान्तरोपहितं चैतन्यं तद्भेदः अविद्यान्तर इति पुनर्व्यभिचार एव। एवमुपहितचैतन्यवत् अनुपहितचैतन्यस्यापि सर्वदा सत्त्वस्य स्वीकृतत्वात् तद्भेदः समस्त्येवाविद्यायाम्॥

'चन्द्रातिरिक्ततरङ्गचन्द्रनिषेधन्यायेन संविदन्तरनिषेध' इत्यत्र 'तरङ्गचन्द्रदृष्टान्तोऽपि विषम इत्यादिग्रन्थमनूद्य यदुक्तम्—बिम्बप्रतिबिम्बयोरभेदः सत्यता च संमन्यते। तथा च दृश्यमानसंविद्भेदः विषयाश्रयादिभेदोपाधिकत्वान्न स्वाभाविकः। प्रतिबिम्बस्य बिम्बात् भिन्नत्वे मिथ्यात्वे च स्वीकृतेऽपि बिम्बव्यतिरेकेण प्रतिबिम्बस्याभावकथनान्न दोष इत्यादि। एष आपातोपन्यासो न प्रदर्शितानुमानदूषणायालम्भविष्णुः। मिथ्यात्वं सत्यत्वं सर्वमप्यव्यवस्थितं भवदीयैरुच्यमानमभिसन्धाय यावद्वक्तव्यम्, तावदुक्तमेव शतदूषण्याम्। अतस्तद्दूषणापरिहारेण सिद्धान्तोपन्यासवैखरी नानुमानं प्राणयिष्यति। एवं ह्यत्रोच्यते—प्रतिबिम्बस्य मिथ्यात्वे तद्वत् संविदां सोपाधिकानां,

मिथ्यात्वेन शुद्धसंविदो भिन्नत्वात् तद्भेदराहित्यमयुक्तम् । भवन्मतेऽपि शुद्धसंविद्व्यतिरेकेण सोपाधिकसंविदामभाव इत्युक्तिरेव समञ्जसा । न तु शुद्धसंविदः सोपाधिकसंविद्व्यतिरेकेणाभावः ।

सोपाधिकसंविदां पक्षीकारे चानुत्पन्नत्वादिति हेत्वनन्वयः । एवं संवित्त्वेन सामान्येन पक्षीकारे तद्भिन्नसंविद्भेदाभाव इति साध्यनिर्देशायोगः ; तद्भिन्नसंविदप्रसिद्धेः । कस्याश्चित् संविदः पक्षत्वे लोके नानासंवित्सद्भावानुभवात् स्वभिन्नसंविद्भेदाभावबाधः । एवं संविदो मिथो न भिन्नाः अनुत्पन्नत्वादित्यनुमानेऽपि बाधासिद्धी वेदितव्ये । एवं सोपाधिकसंविदः शुद्धसंविद्व्यतिरेकेण न सन्ति अनुत्पन्नत्वादित्यभिप्रायकत्वेऽपि असिद्धिसाध्याप्रसिद्ध्यादयो वेदितव्याः । संविदेकत्वे श्रुतिप्रमाणतः सिद्धे तत्र सोपाधिकसंविद्भेदाभावः साध्यत इति चेत्—अनुमानमेव व्यर्थम् । श्रुतितस्तद्सिद्धिश्च वक्ष्यते तदवसरे ।

एवमाकाशघटाकाशयोरिव बिम्बप्रतिबिम्बयोरैक्येऽपि पक्षीभूता संवित् केति प्रकृतविकल्पपूर्वकदूषणं सर्वमतिदेष्टव्यम् । एवमनुमानदोषे उद्भाव्यमाने तदपरिहारेण वृथा सिद्धान्तकथा न युक्तेति । अत्रेदमवधेयम्—भवतो लौकिकसंविदां नानात्वमुत्पन्नवञ्चेष्टमेव । शुद्धसंविद एवानुत्पन्नत्वानानात्वादिसाधनमस्मदिष्टमितिहिप्रागुपन्यस्तम् । अत्र तु, "दृश्यमानसंविद्भेदः विषयाश्रयादिभेदोपाधिकत्वान्न स्वाभाविकः" इति लौकिकसंवित्सु ऐक्यसाधनमेवानुमन्यत इति व्याघात इति ॥

संविन्न नानेत्यस्य संवित् संवित्साजात्यरहितेत्यर्थे अविद्यायामनैकान्त्यमपि कश्चिद्दोष उपन्यासीति तत्र यदुक्तम्, "नाविद्या संवित्सजातीया" इति—तत्रोच्यते । किमिदं साजात्यम्? कथञ्च साध्यं निरुच्यत इति शोधनीयम् । यदि संवित्साजात्यं नाम संवित्त्वावच्छिन्नभिन्नत्वे सति संविद्वृत्तिधर्मवत्त्वम्, तत्र घटकीभूतो धर्मः कः? न तावत् संवित्त्वम्, संविद्भिन्ने

संविद्धर्मायोगात् । अथ यः कश्चित् ? तर्हि वस्तुत्वमेयत्वादिरपि । तत्र पक्षभूतसंविदि संविद्भिन्नत्वघटितसाजात्याभावात् साध्यसाधनम्, अविद्यायां तु संविद्भिन्नत्वे संविद्वृत्तिवस्तुत्वादिधर्मवत्त्वे चेति न साजात्यराहित्यमिति ग्रन्थतात्पर्यम् । अथ संवित्साजात्यराहित्यं नाम स्वभिन्नसंवित्कत्वाभाव इति चेत्—अविद्याभिन्नसंवित्सद्भावात् व्यभिचार एव । स्वसजातीयसंवित्कत्वाभावः साध्यमिति चेत्—तदपि स्वपदेनाविद्याग्रहणे संवित्त्वेन रूपेण स्वसजातीयत्वस्य संविदि दुर्वचत्वात् साध्यानन्वय इति व्यभिचार एव । यथा कथञ्चित् साजात्यविवक्षणे तु अविद्यायाः स्वसजातीयसंवित्कत्वमेवास्तीति स एव दोषः । स्वसजातीयसंवित्कं यत् तद्भिन्नत्वं तादृशत्वाभावः साध्यमिति चेत्—तत्र यच्छब्दवाच्यं किम् ? लौकिकसंविदां मिथः सजातीयत्वात् स्वसजातीयसंवित्कत्वमिति चेत्—तर्हि शुद्धसंविद एव पक्षत्वमिति फलति । तस्याः प्रमाणतः सिद्धौ अनुमानं व्यर्थम् । असिद्धावाश्रयासिद्धिः । संवित् सिद्धा, तदेकत्वमसिद्धं साध्यते इति चेत्—हेतुरप्रयोजकः । इदमेवाभिप्रेत्य सूक्तम्, "एकतया सिद्धौ च किमत्र पुनः साध्यम् । अत एव न पञ्चमः" इति । संवित् स्वसजातीयरहिता अनुत्पन्नत्वादित्यनुमाने चैकाविद्यांशानामेव जीवभेदकत्वमिति विवरणानुसारिपक्षविलक्षणे अविद्यानानात्ववादिभामतीपक्षे अविद्याभिरनैकान्त्यम् । संवित्त्वेन पक्षत्वे च बाधासिद्ध्यादीत्यपि भाव्यम् । संविदविद्ययोः दृग्दृश्यभावेन वैलक्षण्यात् साजात्यमपि नास्तीति वदन् तादात्म्यं स्वीकरोतीति च विचित्रमेतत् । न हीदं कार्यकारणयोरिवाभेदसहं वैलक्षण्यम् । यत्रयत्रोत्पन्नत्वम्, तत्रतत्र स्वसजातीयवत्त्वमिति व्यतिरेकव्याप्तिप्रदर्शनञ्च तन्मर्यादानवगमनिबन्धनम् ॥

संवित् स्वसजातीयरहिता अनुत्पन्नत्वादित्यनुमानतात्पर्ये च—यथा नानात्वाद्यविद्यापक्षे हेतुमत्यामविद्यायां साध्याभावात् व्यभिचारः, यत्रयत्र स्वसजातीयवत्त्वम्, तत्रतत्रोत्पन्नत्वमिति नियमस्यानाद्यनेकात्मपरमाण्वादिस्वीकारिमतेन असिद्ध्या व्यतिरेकव्याप्तेर्दुर्वचता च—तथा संविदामनेकत्वस्यानुभविकतया

बाधश्चेति, "अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, छेद्यभेदात् छेदनभेदवत्" इति श्रीभाष्ये उक्तम्। यत्तु—अयं भेदः उपाधिभेदप्रयुक्त इति— सोंऽशः श्रीभगवद्यामुनपादै रेव प्रतिक्षिप्तः — "प्रतिप्रमातृविषयं परस्परविलक्षणाः। अपरोक्षं प्रकाशन्ते सुखदुःखादिवत् धियः॥ संबन्धिव्यञ्ग्यभेदस्य संयोगेच्छादिकस्य तु। न हि भेदः स्वतो नास्ति नाप्रत्यक्षश्च संमतः॥" इति। यस्य भेदः संबन्धिभेदमूलमवसेयः, तस्य स्वाभाविकभेदराहित्यमेवेति वक्तुं न शक्यते। घटपटसंयोगस्य कुड्यकुसूल-संयोगस्य च भेदः संबन्धिभेदमादायैव निरूपणीयोऽस्ति। क्षुद्रफलेच्छायाः मुमुक्षायाश्च विषयभेदमूलमेव भेदज्ञानम्। न हि तावता तत्र तत्र भेदस्या-स्वाभाविकत्वं वा अनानुभविकत्वं वा। तद्वदेव संविद्विषयेऽपि, अन्यथा संयोगा-देरपि अनेकत्वासिद्धेः। तथा च घटादीनामप्यवस्थाभेदेनैव भेदस्य वक्तव्य-तया अवस्थायाश्चावयवसंयोगविशेषरूपतया संयोगैक्येन अवस्थैक्यमिति घटप-टाद्यैक्यमपि प्रसजेत्। न च पुण्यपापरूपकर्मोपाधिकं सुखं दुःखञ्चात्मनो वा-ऽन्तकरणस्य वेत्येतावता सुखदुःखरूपविभिन्नधर्मद्वयापलापः। न च बीजपूरे लाक्षारसावसेकोपाधिकः पुष्पे धवलिमेति तस्याविद्यमानता। अतः संबन्धि-भेदात् संयोगाद्युत्पत्तिवत् दृश्यभेदात् विभिन्नसंविदुत्पत्तिरेवानुभविकीति न प्रत्यक्षबाधेनैक्यवर्णनं सुशकम्।

कथं तर्हि नित्यज्ञानरूपात्मस्वीकार इति चेत्—किमत्रानुपपन्नम्? संविद्रूपाणामात्मनामनेकेषां वर्तमानत्वात् अनुत्पन्नत्वरूपहेतुमत्सु तेषु स्वसजा-तीयराहित्यरूपसाध्याभावात् व्यभिचार एव तदङ्गीकारे। आस्तामेतत्। निर्वि-षया संवित् स्वीकृतैव किलेति चेत्—यासां संविदां सविषयत्वं प्रत्यक्षसिद्धम्, तासां निर्विषयत्वं हि न स्वीक्रियते। विषयमनवगाह्याहमिति प्रकाशमानानां तु निर्विषयत्वम्, तथा प्रकाशमानत्वात् तत्र संविद्वाचोयुक्तिश्चेति न किञ्चिदनुपपन्नम्। धर्मभूतज्ञानं तु यदा प्रकाशते, तदा सविषयमेव प्रका-शते। विषयभेदेन ज्ञानानि तानि भिन्नान्येव। यथा च घटपटादीनां मह-

दादिपृथिव्यन्तानामपि वा भेदे सति सर्वपरिणामास्पदं प्रकृतिद्रव्यमेकम्, तथा तावत्परिणामशीलं द्रव्यमात्मधर्मभूतमस्तीति श्रुत्या तर्कसनाथया सिद्ध्यतीति प्रागेव व्युदपादि। तत्र ज्ञानपदव्यपदेशश्च ज्ञानपदवाच्यपरिणामभूयस्ततयेति न किञ्चिदवद्यम्। ज्ञानभेदानङ्गीकारे च, न जानामि, ज्ञास्यामीति कालभेदान्वयानुपपत्तिः; ज्ञानस्य विषयस्य च कालत्रयस्थायित्वात्। ज्ञानस्य विषयस्य च संबन्धः पूर्वमस्थितः पश्चाज्जायत इति चेन्न—दृग्दृश्यसंबन्धानुपपत्तिवादिभिस्तदुत्तयसंभवात्; स्वरूपातिरिक्तसंबन्धाभावेन संवित्स्वरूपं जातमित्यत्रैव पर्यवसानाच्च। एवं जायमानानां संविदां किं विभिन्नकालिकरूपरसादिवत् भेदमात्रम्, उत, किञ्चिद्द्रव्यपरिणामरूपत्वमित्येतत्तु सत्तर्कप्रमाणसमधिगम्यमित्यन्यदेतत्॥

यत्तु किंञ्चित्—दृश्यभेदे दर्शनस्यापि भेद इति भाष्यं कथं घटताम्? घटपटसमूहालम्बनज्ञानस्य दृश्यभेदेऽप्यैक्यादिति—नायमपूर्व आक्षेपः। शतदूषणीतत्त्वटीकादिष्वेव शङ्कित्वा परिहृतत्वात्। श्रुतप्रकाशिकादर्शितो भाष्याशयश्चात्रानुसंधेयः—यथा दृश्यानां भेदः अबाधितप्रतिपत्तिबलात् सिद्धः, तथा दर्शनानां भेदोऽपि तादृशप्रतिपत्त्यैव सिद्ध इति। अथौपाधिक एवायं भेदोऽस्तु इत्याशङ्क्य, तत्परिहारायोक्तम्, "छेद्यभेदात् छेदनभेदवत्" इति—यदि दर्शनरूपक्रियाया भेद औपाधिक इति क्रियानित्यत्वैकत्वादि, तर्हि छेदनक्रियानित्यत्वैकत्वाद्यपि आपाद्यते इति तदाशयः। अन्योऽप्याशयः—कश्चित्तु मन्यते—अनुमित्यादयः संविदः स्युर्नाम। दर्शनरूपाः संविदस्तु न भिद्यन्ते। एकसन्मात्रविषयकत्वादिति। तं प्रत्याह—पूर्वं 'घटोऽस्ति पटोऽस्तीति प्रतीतिषु दृश्यभेदानां विषयत्वं स्थापितम्। यदि तु सन्मात्रविषयकत्वमेव दर्शनानां प्रत्यक्षरूपाणामिति स्यात्, तर्हि दर्शनं सर्वमेकमेवेति शङ्क्येतापि। अबाधात्तु घटादिप्रतिनियतविषयकत्वमप्यस्तीत्युक्तमेव। तस्मात्, 'एकमात्रविषयकत्वात् सर्वं दर्शनमेकम्, उपाधिरूपविषयाणामेवाभावादुपाधिकृतोऽपि भेदो नास्ती'ति न वक्तुं शक्यमिति। अत्रेदमप्युक्तं भवति—चक्षुरादीनां रूपरसादिप्रतिनियतविषयग्राहितयैव सिद्धत्वात् अन्यथा तत्कल्पने

प्रमाणाभावात् विभिन्नेन्द्रियमात्रग्राह्याकारवत्तया वस्तूनां भेदस्य प्राक् समर्थितत्वात् ग्रहणवैलक्षण्यवर्णनमप्यन्तर्भूतमेवेति सिद्धं दर्शनानां भिन्नत्वम्। एवं दर्शनभेदे सिद्धे संविदैक्यस्य भग्नत्वात् अनुमितिशब्दबोधादीनामप्येवं भेदो वेदितव्य इति।

यत्तु--घटपटादिविषयभेदेनैव दर्शनभेदे स्वीक्रियामाणे एकघटदर्शनस्य सर्वघटविषयकत्वापत्तिरिति—तन्न—घटभेदेन दर्शनभेदो नास्तीत्यनुक्तेः। घटपटरूपविषयभेदेन दर्शनभेद इत्यस्याप्यनुक्तेः। दर्शनपदेन ज्ञानसंकोचविकासरूपार्थविवक्षायां दर्शनभेदो न सिद्ध्येदित्यपि वार्तम्। तद्विवक्षायां भेदस्यैव सिद्धेः। यद्विषयसंबन्धोपयोगी यः परिणामः सः, तदन्यविषयसंबन्धोपयोगी परिणामश्च सावयवद्रव्ये अवयवभेदेन जायमानः घटदर्शनपटदर्शनयोः भेदमेव साधयन् श्रीभाष्यं सम्यगेव हि संगमयेत्॥ यत्तु—विषयासंबद्धानां दर्शनानामिति लेखनम्—तन्न—विषयेण संयोगसंबन्धस्येष्टत्वात्॥ यत्तु—क्रियायामनेककारकसंबन्धो दृष्ट इति—सत्यमेतत्। अनेककर्मकारकसंबन्धो भेदं साधयति—यथा ग्रामगमनं सागरगमनञ्च भिन्नम्, तथेति। वस्तुतः शतदूषण्यां दृश्यभेदेत्यस्यार्थो विवक्षितो वर्णित एवेति किमनेन विस्तरेण?

एतदुक्तं भवति—देवतानां हविरुद्देश्यत्वत् दंपत्योः यागकर्तृत्ववच्चस्थितं व्यासज्यवृत्तिकर्मकारकत्वं यत्र भिन्नम्, तत्र दर्शनभेदः। दर्शनं जातं निर्विषयमवतिष्ठते। क्रमेण विषयैः संबद्ध्नातीत्यनुभवविरुद्धम्। अत एव विरम्यव्यापारायोगात् विषयसंबद्धमेव ज्ञानं यावत्सत्तमिति तान्त्रिकाः। तत्कदा यावत् विषयीकरोति तावन्निष्ठं कर्मत्वमेकम्। ग्रहणात्मकविषयतायाः कालभेदेन भिन्नत्वात् तत्कालावच्छिन्नविषयतारूपग्रहणनिरूपकं दर्शनं तत्कालानवच्छिन्नविषयतारूपग्रहणनिरूपकदर्शनाद्भिन्नम्। दर्शनैक्ये विरम्यव्यापारायोगात् पूर्वमेव पश्चाज्ज्ञातस्यापि विषयस्य गृहीतत्वप्रसङ्गादिति: एवञ्च कालभेदप्रयुक्तविषयताभेदप्रयुक्तत्वात् दर्शनभेदस्य एकेन दर्शनेन युगपदनेकग्रहणे वा

एकस्य विषयस्य कालभेदेन दर्शनभेदेन ग्रहणेऽपि वा न कश्चिद्दोष इति ध्येयम् । भवता तु, 'आत्मभूताया निर्विशेषायाः संविद एवैकत्वमिष्यते । लौकिकसंविदः पुनर्भिन्ना एवे'ति क्रियासमभिहारेण वदता तद्व्याहतमेवात्र, 'लौकिकसंविदामैक्यमेव । भेदस्त्वौपाधिकोऽपारमार्थिकः' इत्युच्यते ; अनुमानदूषणान्यपरिहृत्य च स्वसिद्धान्तोपन्यासमात्रेणोपरम्यत इति किमनेन ? ॥

यदि दृश्यभेदेन दर्शनभेदे अनेककर्मकारकसंबद्धस्य संविद्रूपेश्वरतत्त्वस्यानेकत्वापत्तिरिति शास्त्रं व्याकुलितं स्यादिति कथ्यते ? तर्हि ईश्वरतत्त्वं सकर्मकं न भवतीतीष्यताम् । एवं भवदुक्तिश्च एकस्याः संविदः अनेकोपाधिसंबन्धो न युक्त इत्यभिप्रायिका भवत्सिद्धान्तनिरासिकैवेत्यपि भाव्यम् ॥

गभीरभाष्यार्थविचारधोरणीं
सुविस्तृतामप्रतिपद्य यः पुनः ।
व्याख्याकृदुत्थापितपूर्वपक्षवा-
गंशानुवादो न स वादखण्डकः ॥

शुभमस्तु

---

श्रीः

# निर्विशेषत्वानुमानभङ्गप्रसाधनम्

अनितरसुलभैरवद्यदूरैरतिगणनैरनिशश्रितो विशेषैः ।
श्रुतिशतमहितः श्रितेषु सत्यः श्रियमिह संतनुतां श्रियःपतिर्नः ॥

अनुभूतिर्निर्विशेषा अनुभूतित्वादिति निर्विशेषत्वानुमानम् । अनुभूतौ स्वाभिमतं सर्वं केवलव्यतिरेकिणैव यतः सिषाधयिषन्ति, तत एवानुमानमत्राप्रमाणमिति सुगमम् । तत्रापि पक्षतावच्छेदकस्य हेतुत्वे सुतरामसाधकत्वम् ।

पक्षधर्मताज्ञानं हि तत्र अनुभूतिरनुभूतिरिति स्यात् । न चैवं वादे प्रयोक्तुमर्हति, घटो घट इतिवदबोधकत्वात् । किञ्चानुभूतिर्निर्विशेषेति प्रयोगकाल एवासति बाधके उद्देश्यतावच्छेदकविधेययोः प्रयोज्यप्रयोजकभावभानस्य प्रसिद्धत्वात् धनवान् सुखीत्यत्रेवानुभूतित्वप्रयुक्तं निर्विशेषत्वमिति लभ्येत यदि, प्रयोज्यप्रयोजकभावः संभवेत् । असंभवादेव तथाऽर्थलाभमसंमत्य कुत इति हेतुमाकाङ्क्षति । तदा च अनुभूतित्वादिति प्रयोगे तस्याप्रयोजकतायाः प्रागेवावधारितत्वादनुमित्यसंभव एव । प्रत्युतैवं प्रयोगः साधकहेत्वभाववचनपर्याय इत्येव सिद्ध्येत् । तथा प्रतिज्ञाविरोधोऽपि ; अनुभूतिरितीतरव्यावृत्तानुभूतित्वरूपधर्मवत्तया निर्देशं विधाय तद्विशेषवत्त्वेन ज्ञापितायां तत्र निर्विशेषत्वसाधनस्य मम माता वन्ध्येत्येतत्तुल्यशीलत्वात् । न च पारमार्थिकविशेषनिषेधे तात्पर्यम् । निर्विशेषेति पदस्य सर्वविशेषनिषेधपरताया एव स्वरसत्वात् तथा प्रयोगायोगात् । पारमार्थिकविशेषरहितेत्येव प्रयुज्यत इति चेत्—साध्याप्रसिद्धिः । व्यतिरेकव्याप्तिवर्णनासंभवश्च ; यत् पारमार्थिकविशेषवत् घटादि, तत् अनुभूतित्वरहितमिति दुर्वचत्वात् । न हि तत्र पारमार्थिको विशेषोऽस्ति । अनुभूतिः स्वसमानसत्ताकविशेषरहितेति साध्यत इति चेत्—एवमप्यप्रसिद्धिरेव । अनुभूतित्वरूपतादृशधर्मवत्त्वात् प्रतिज्ञाविरोधश्च । अनुभूतित्वमसमानसत्ताकं चेत्—यदा तन्नास्ति, तदा अनुभूतिरप्यननुभूतिः स्यात्—यथा घटः कपालभावे प्राप्ते न घटो भवति, तद्वत् । स्वपृथग्भूतस्वसमानसत्ताकविशेषरहितेति प्रयोगे चाप्रसिद्धिः । किञ्च स्वसमानसत्ताकेति विशेषणदानं धर्माणामपरमार्थत्वज्ञानाधीनम् । अपरमार्थत्वज्ञानञ्च सर्वविशेषनिषेधरूपप्रकृतानुमानावसेयम् । अन्यथा पारमार्थिकविशेषाभावस्य प्रागेव सिद्धेः अनुमानवैयर्थ्यात् । जगदपारमार्थ्यग्राहिका श्रुतिः ब्रह्मातिरिक्तं सर्वं मिथ्या, नेह नानेत्येव प्रतिपादयतीति हि भवन्मतम् । श्रुतमेव, मन्तव्यमिति वचनात् मन्यत इति चेत्—यत् मन्तुं शक्यम्, तदेव मननीयम् । शब्दस्याखण्डार्थबोधकत्वाभावात् अखण्डं श्रुतमेव न भवतीति कुतस्तन्मननम् । मननञ्च पक्षसाध्यहेतूनां मिथोऽन्वयसंभवे । न च निर्धर्मण्यन्वयसंभवः, न चानुमानमप्यखण्डसाधकमिति

भवद्भिरेतावत् प्रतिष्ठापितमस्ति । इतः प्रयत्नेऽप्यनुमानवार्तानभिज्ञतैव स्यात् । काल्पनिकधर्मधर्मिभावादरणेनानुमानप्रयोग इति चेत्—अनुभूतित्व-रूपकाल्पनिकधर्मवती विशेषाभावरूपकाल्पनिकधर्मवती अनुभूतित्वरूपकाल्प-निकधर्मवत्त्वादिति प्रयुक्तं स्यात् । तत्रैकस्य काल्पनिकत्वेऽन्यस्यापि काल्प-निकत्वमिति नियमाभावात् हेतुरप्रयोजकः । विशेषाभावरूपधर्मस्य काल्पनि-कत्वेऽनुमीयमाने विशेषाणां तत्प्रतियोगिनां वास्तवत्वमेव सिद्ध्येत् । ब्रह्मातिरि-क्तसर्वमिथ्यात्वप्रतिपादकश्रुत्या विशेषैस्तैः सहैव विशेषाभावस्यापि मिथ्यात्व-मवगमितमिति चेत् — अवगामितार्थप्रतिष्ठापनानुकूलमिदमनुमानं न भवतीत्येव ब्रूमः । तस्मात् भवद्भिरेवमनुमानमनुपपन्नम् ॥ अत एव अद्वैतसिद्धौ निर्वि-शेषत्वे किं प्रमाणमिति पृष्ट्वा अनुमानादेः प्रमाणत्वासंभवमादृत्य श्रुतिमात्रस्य प्रमाणीकरणम् ॥

यद्यप्येतावदुक्तप्रकारायोगेऽपि अन्यदनुमानमुद्भावयितुं शक्यम् । अनु-भूतिः अपारमार्थिकस्वगतसर्वविशेषवती अनुभूतित्वादिति । स्वविषमसत्ताकस्वग-तसर्वविशेषवतीति वा साध्यम् । यत्र स्वविषमसत्ताकस्वगतसर्वविशेषवत्त्वं नास्ति-तत्रानुभूतित्वमपि नास्ति, यथा घटादौ । तत्र घटत्वादीनां घटसमानसत्ताकत्वा-दिति—परं त्विदमप्यनुमानमनुभूतित्वादीनां पृथगिवावभासमानानामप्यपृथ-ग्भूतत्वस्य भवदभिमतत्वात , तत्र स्वसमानसत्ताकत्वस्यावश्यकत्वात् स्वगतसर्व-विशेषाणां स्वविषमसत्ताकत्वाभावात् बाधितम् । एवम् अनुभूतिः धर्मिसमान-सत्ताकधर्मवती पदार्थत्वात् इत्यनुमानेन सत्प्रतिपक्षितञ्च । धर्मीति पदस्थाने स्वेत्यपि सुवचन् । न च स्वपदधर्मिपदाभ्यां घटादि ग्राह्यं दृष्टान्ते समन्वयकाले ; पक्षग्रहणञ्चानुमिताविति अनुगमो नास्तीति अद्वैतसिद्ध्युक्तं युक्तम् । पर्वतो वह्निमान् धूमात् इत्यादावपि दृष्टान्ते ग्राह्यवह्न्यादिव्यक्तिरन्येति तुल्यत्वात् प्रायेणानुमानोच्छेदप्रसङ्गात् । तस्मात् , "शब्दस्वभावोपन्यासस्यानुमानं प्रत्य-प्रयोजकत्वात" इति सिद्ध्युक्तमपि चिन्त्यम् । अन्यथा तु स्वविषमसत्ताक-स्वगतसर्वधर्मवतीति प्रकृतानुमानेऽपि, ततः पूर्वमुक्तेष्वनुमानेष्वपि स्वपदेन

विभिन्नग्रहणादनुमानासंभवस्तुल्यः। वस्तुतः स्वपदमप्रयुज्यापि साध्यनिवेशः संभवति। स्वसमानसत्ताकधर्मवत् इत्यस्य धर्मविशिष्टमित्यर्थात्। वैशिष्ट्यञ्चाधेयतासंबन्धेन। आधेयता च सत्तासमानसत्ताकत्वसंबन्धेनेति। तस्मान्नेदृशक्षुद्रोपद्रवस्य प्रसक्तिः। यत्तु अनुभूतिरिति वा ब्रह्मेति वा पक्षीकरणमयुक्तम्; आश्रयासिद्धेरिति सिद्धयुक्तम्—तत् अनुभूतिः निर्विशेषेत्यनुमानेऽपि तुल्यम्। अथ स्यात्—श्रुत्याऽनुभूतेः सर्वविशेषराहित्यस्य प्रतिपन्नत्वान्नेदमनुमानं तन्निरसनक्षममिति—तन्न—अस्माभिरपि श्रुत्या सर्वविशेषसद्भावस्य प्रतिपन्नत्वान्न निर्विशेषत्वानुमानं क्षममिति सुवचत्वात्। किञ्च न श्रुत्या अर्थनिर्धारणावसरेऽनुमानेन तमर्थं दूषयामः। अनुमानेन साधनमयुक्तम् सप्रतिसाधनत्वादित्येव। तत् श्रुत्या निर्धारितत्वादनुमानमनपेक्षितमिति श्रुतिविचार एवावतरणीयम्। तदा च श्रुतिवचनानां न तथा निर्विशेषत्वमर्थ इति निरूपयामः। यदि तु श्रुत्या आपातप्रतीतार्थस्य तर्कोपष्टम्भेन साधनार्थमनुमानप्रयोगः, तदा तदनुमानं प्रतिपक्षितत्वादिसर्वदोषरहितमेव प्रयोक्तव्यमिति प्रकृतनिर्विशेषत्वानुमानं दुष्टमेव। यस्तु श्रुत्यर्थः वादिनोरुभयोरपि सुनिश्चितः, तस्य चेत् साक्षाद्वा अर्थापत्तिविधया बाधकत्वम्; तदा तद्विरुद्धमनुमानं नोदेष्यति। अन्यदा तु नानुमानस्य श्रुतिं प्रदर्श्य दूषणं प्रसजति। तथाच श्रुत्यर्थ एव विचार्यताम्, किमीदृशैः वृथाकालहरणैरनुभूतिनित्यत्वानुत्पन्नत्वनिर्विकारत्वनिर्विशेषत्वाद्यनुमानाभासैः।

एतावतैव निर्विशेषानुमानभङ्गपरीक्षा परास्ता। विशिष्यापि किञ्चिदुच्यते—यदुक्तम्—अद्वितीयपदेन द्वितीयनिषेधे अद्वितीयत्वरूपद्वितीयस्यापि निषेधसिद्धिवत् निर्विशेषत्वानुमानेन विशेषाभावरूपविशेषस्याप्यभावसिद्धिरिति—तन्न—दृष्टान्तस्यापि विचार्यत्वात्। द्वितीयपदेन द्वितीयाभावरूपप्रमेयस्यापि ग्रहणं कदा स्यात्? सिद्धे द्वितीयाभावे। तत्सिद्धिश्चाद्वितीयमिति वाक्यात्। तथा चाद्वितीयपदं प्रथमतो द्वितीयाभावातिरिक्तद्वितीयमात्रग्रहणेन तदभावं प्रतिबोध्याथ एवंसिद्धं द्वितीयाभावं द्वितीयत्वेन गृहीत्वा तदभाव-

बोधनेऽपि पुनरुर्याप्रियत इत्येव वक्तव्यम् । तदयुक्तम्—सकृत् प्रयुक्तस्य शब्दस्य सकृदेवार्थगमकत्वात् । स्वाध्यायोऽध्येतव्य इत्यत्र तु वाक्यान्तराणामिवास्यापि वाक्यस्य नित्यस्याध्ययनेन गृहीतत्वात् ज्ञातस्य सर्वस्य स्वाध्यायत्वेन क्रोडीकरणं नायुक्तम् । अनुगतेनापि प्रतियोगितावच्छेदकधर्मेण प्रतियोगितया स्वीकरणं तासामेव व्यक्तीनां स्यात्, यासामभावग्रहणात् पूर्वं ग्रहणयोग्यत्वम् । घटो नास्तीत्यत्र कस्यचित् घटस्य कदाचित् भानेऽपि अन्येषामपि घटानां प्रतियोगित्वमिष्यते । तदभावग्रहणात् प्राक् कदाचित् अन्येषामपि ग्रहणसंभवात् । अन्यथा अन्योन्याश्रयश्च—द्वितीयाभावे ज्ञाते द्वितीयत्वेन तद्ग्रहणम्; द्वितीयत्वेन तस्मिन् ज्ञाते द्वितीयाभावज्ञानमिति । अतो वैषम्यात् विरम्यव्यापारायोगाच्च अभावग्रहणात् प्राक् द्वितीयत्वेन यावतां भानं कालभेदेनापि संभाव्यते, तावतामेव प्रतियोगित्वमिति तावन्मात्रवृत्तिद्वितीयत्वविशेष एव प्रतियोगितावच्छेदकोऽपि भवितुमर्हति । अन्यथा प्रतियोगितावच्छेदकविशिष्टप्रतियोगिना साकमभावस्य विरोधात् विवक्षिताभावप्रतियोगिभूतस्य विशेषाभावस्य तस्य चैकत्र प्रतीत्यसंभवात् । प्रतियोगिज्ञानस्य भ्रमात्मकस्य प्रमात्मकस्य वा प्रमात्मकं भ्रमात्मकं वाऽप्यभावग्रहं प्रति विरोधित्वादनुमानस्यैवासंभवात् । अतो न अद्वितीयमिति पदेन द्वितीयाभावरूपद्वितीयस्याप्यभावः सुवचः । एवमेव निर्विशेषमिति न विशेषाभावरूपविशेषस्याभावबोधनम् ॥

यत्तु—साध्यभूतः विशेषाभावः नानुभूतिधर्मः, येन तद्रूपविशेषस्वीकारः प्रसज्येत; किन्तु सोऽनुभूतिरेव । न चैवं पर्यायतया पौनरुक्त्यप्रसक्तिः । विशेषाभावत्वोपलक्षितरूपेणानुभूतेः निर्विशेषपदेन बोधनादिति—तन्न—विशेषाभावत्वरूपं धर्ममादायानुभूतेः सविशेषत्वप्रसङ्गात् । भवन्मते शुद्धादुपहितं भिन्नं मिथ्या चेत्यद्वैतसिद्ध्यादिसिद्धतया अनुभूतित्वोपहितं पक्षपदबोधितं विशेषाभावत्वोपहितं साध्यपदबोधितञ्च शुद्धानुभूत्यतिरिक्तमिति अनेनानुमानेन शुद्धे ब्रह्मणि किमपि नोक्तं भवेत् । उपाधिभेदेनोपहितस्य भिन्नत्वात् अनु-

भूतित्वोपहिते विशेषाभावत्वोपहितेनैक्यं दुर्भणञ्च स्यात् । एवञ्च साध्यधर्मवि शिष्टधर्मिणोः तया अबाधितार्थबोधकत्वरूपं प्रामाण्यं आगमानुमानयोर्नास्त्येव । भवताऽप्युक्तम्, "पक्षसाध्यहेतूनां यथायथमन्वयापेक्षत्वात् कल्पितं धर्मधर्मिभावमादाय समन्वयो न व्याहन्येत" इति । एवं कल्पितार्थविषयकज्ञानस्य चाबाधितार्थविषयकतया प्रमात्वमक्षतमिति प्रागुक्तं व्याहतं वेदितव्यम् । साध्यकाल्पनिकार्थविषयकत्वस्यैवैतावतोक्तेः । यद्यपि प्रातिभासिकार्थविषयकज्ञानजन्यस्य कस्यचिद्व्यवहारादेः व्यवहारिकार्थविषयत्ववत् व्यावहारिकार्थविषयकज्ञानजन्यस्य ज्ञानस्य पारमार्थिकविषयकत्वं भवितुमर्हति—तथापि तत्रापि कारणीभूतस्वप्नज्ञानादेः कार्यभूतस्य च व्यवहारस्य स्वरूपतो व्यावहारिकत्वमविशिष्टम् । तथा आगमानुमानादेः तज्जन्यज्ञानस्य च स्वरूपतो व्यावहारिकत्वं तुल्यम् । तस्मान्नासत्यात् सत्योत्पत्तिः । भवन्मते शुद्धस्य प्रमाणग्राह्यत्वाभावात् पारमार्थिकविषयकत्वमपि ज्ञानस्य दुर्वचमेव ॥

अथास्तु स्वरूपातिरिक्तोऽपि धर्मः कश्चित् । सगुणवाक्यसिद्धास्तु विशेषा इह निषिद्ध्यन्त एवेति चेत्—अनुभूतिरिति लौकिकानुभूतीनां पक्षीकरणम्, उत सामान्यतो जीवानाम्, आहो निर्विशेषब्रह्मणः, अथ वा ब्रह्मणः ? नाद्यः, तत्र सगुणवाक्यप्रतिपन्नसार्वज्ञ्यादिनिषेधे सिद्धसाधनात् । अत एव न द्वितीयः । न च तृतीयः, आश्रयासिद्धेः । श्रुतितः प्रतिपन्नमिति नासिद्धिरिति चेत्—सिद्धावनुमानस्यानपेक्षणात् । श्रुतेरपि निर्विशेषब्रह्मबोधनासामर्थ्यस्य भवदभिमतत्वाच्च । स्वप्रकाशबलात् तत्सिद्धिरिति चेत्—स्वप्रकाशत्वं हि स्वाधीनस्वव्यवहाररूपकार्यानुमेयम् । कोऽसौ व्यवहारः ? न तावत् अनुभूतिरिति । तथा कस्याप्यननुभवात् । नाप्यहमिति । तथा सति, तत्रैकत्वानुभूतित्वादिविशिष्टतयैव प्रतीत्या निर्विशेषत्वासिद्धेः । विशिष्टतया सिद्धावपि विशेषाणामनन्यत्वं स्थाप्यत इति चेत्—स्थापकानुमान एव पक्षतया स्वीकृतं किमिति विचार्यत इति । न तुरीयः; शास्त्रवेद्ये तत्र शास्त्रप्रमितगुणानां निषेधायोगात् । अनुभूतित्वादिति हेतुरपि तादृशसगुणब्रह्मनिष्ठधर्मविशेष

एवेति तस्य न तदीयगुणाभावसाधकत्वमपि । न चानुमानायोगेऽपि निर्गुणमित्यादिश्रुतिबलात् तत्सिद्धिरिति वाच्यम्—तदर्थविचारस्य तदवसरे करिष्यमाणत्वात् । अत्रनिर्गुणत्वोपपत्तिघट्टे चाद्वैतसिद्धौ, "न हिंस्यात् सर्वा भूतानि" इति वाक्यस्याविशेषात वैधहिंसाविषयत्वापत्तिरित्याशङ्कां मनसिकृत्योक्तम्, "अहिंसावाक्यस्यावैधहिंसाविषयकत्वेन समानविषयकत्वाभावात्" इति । सा रीतिः निर्गुणमिति वाक्येऽपि कथं नावतरतीति सहृदयीभूय चिन्त्यताम् । समानविषयकत्वे विकल्पापत्तिरिति चेत्—विकल्पे शास्त्रस्य कादाचित्को बाधः; पारमार्थिकापारमार्थिकभावेन निर्वाहे तु सगुणवाक्यस्य सर्वदैव बाध इति सुतरामेवं न युक्तम् । अबाधेनोपपत्तौ बाधायोगो हि सर्वसंप्रतिपन्नः । नित्यत्वेन प्रतिपन्नानां जीवेश्वरादीनामपि निर्गुणादिवाक्यान्यथानुपपत्त्या कदाचित् निवृत्तिकल्पनं हि महत्तरो बाध एव । तं विनैव वाक्यार्थे अहिंसावाक्यस्येवोपपद्यमाने किमित्येतावत्कल्पनेत्यलमत्राधिकेन ॥

यत्तु—मिथ्याज्ञानस्यापि यावत्प्रवृत्तिविसंवादं प्रमाण्यमस्ति, मिथ्यात्वेनानिश्चीयमानार्थविषयकज्ञानत्वरूपस्य प्रामाण्यस्य स्वीकारादिति—तत्रेदं वक्तव्यम् । एवं प्रामाण्यं सर्वत्र स्वीकुर्वता भवता पूर्वम्, "यथार्थं सर्वविज्ञानम्" इति सर्वत्र प्रामाण्यस्वीकारिणः कथमुच्चावचमाक्षिप्यन्ते । प्रवृत्तिविसंवादपर्यन्तं प्रामाण्यं ब्रुवता भवता तत्राप्रामाण्यं हि पश्चात् वक्तुं न शक्यते । ज्ञानं हि तदा जातं यावत्सत्त्वं प्रामाण्यविशिष्टमेव स्थित्वा नष्टम् । अथ तु प्रवृत्तिविसंवादेन यदा प्रामाण्यं प्रतिषेद्धुमिष्यते, तदा धर्म्येव नास्तीति कथं तत्र प्रामाण्यापनयेनाप्रमाण्यमाविर्भावनीयं भविष्यतीति । वस्तुतः मिथ्यात्वेनानिश्चीयमानार्थविषयकज्ञानमित्यस्य अर्थविषयकज्ञाने मिथ्यात्वानिश्चयः, अप्रामाण्यानिश्चय इत्येवार्थ इति अप्रामाण्यानिश्चयमात्रमिदं कथं प्रामाण्यमेव भवेत्? एवं ज्ञानस्वयंप्रकाशत्ववादिभिः तत्रापि प्रामाण्यं गृह्यत इत्यप्युच्यते । एवमपि तस्यापि प्रामाण्यमस्तीति न युक्तम् । यद्यपि प्रातिभासिकविषयके ज्ञाने तत्र प्रातिभासिकं प्रामाण्यमनिर्वचनीयमुत्पन्नमिति मन्येत, तथा व्यावहारिकविष-

यकज्ञाने व्यावहारिकं प्रामाण्यमप्यस्तीति—तथापि पारमार्थिकविषयकज्ञानेऽपि पारमार्थिकं प्रामाण्यं अस्तीति तु न सुवचम् ; परमार्थद्वैतापत्तेः । अनित्यपरमार्थस्वीकारापत्तेः । अपारमार्थिकस्य ज्ञानस्य पारमार्थिकप्रामाण्याधारत्वायोगाच्च ॥

अतः परमार्थविषयकत्वमस्तीति प्रामाण्याधारत्वं वक्तव्यम् । तत्र किं नाम प्रामाण्यम्, कस्य च तदाधारत्वम्, कथञ्च तद्ग्रह इति कथ्यताम् । प्रामाण्यमर्थतथात्वमिति मीमांसकाः । तद्वति तत्प्रकारकत्वमिति तार्किकाः । परमार्थविषयकस्य च ज्ञानस्याखण्डार्थविषयकतया प्रकाराभानात् तदुभयमपि दुर्वचमेव । धर्मिव्यक्तिभानमात्रेण प्रामाण्ये तु इदं रजतमिति शुक्तिविषयकज्ञानेऽपि प्रामाण्यस्य वास्तवस्यापत्तिः । परिभाषायामपि तद्वति तत्प्रकारत्वं प्रामाण्यं वृत्तिगतं वृत्तिग्राहकसामग्रीरूपेण साक्षिणा भास्यमिति स्वतो ग्राह्यमित्युक्तम् । "तत्रान्तःकरणस्य जडतया विषयभासकत्वायोगेन विषयभासकचैतन्योपाधित्वमात्रम्" इति अन्तःकरणोपहितचैतन्यमेव विषयभासकमिति परिभाषायामेवाधस्तादुक्तत या, ततः प्राक्, "प्रतिफलितचैतन्यरूपं घटादिज्ञानम्" इति प्रतिफलितचैतन्यांशस्यैव ज्ञानत्वोक्त्या, "प्रत्यक्षप्रमा चात्र चैतन्यमेव" इति च चैतन्यस्यैव प्रमात्वोक्त्या च प्रमात्वरूपं प्रमाण्यमपि सर्वत्र चैतन्यनिष्ठमेव वक्तव्यम् ; न तु वृत्तिनिष्ठम् । अन्तःकरणस्य जडतया भासकत्वासंभवे कथितेऽन्तःकरणवृत्तेः तदसंभवः कथित एव । भानं भासनमेव विशेष्यताप्रकारतासंसर्गतारूपं प्रसिद्धमिति भासकस्यैव सविषयकत्वं वक्तव्यमिति तद्वति तत्प्रकारकत्वं चैतन्यस्यैव वक्तव्यम् ; न तु वृत्तेः । शुद्धचैतन्ये तदयोगेऽपि उपहिते वृत्तिप्रतिफलिते वा चैतन्ये तद्भवतीत्येव चाङ्गीकर्तव्यम् । निर्विशेषब्रह्मज्ञाने च प्रामाण्यं किन्निष्ठम्, केन भास्यम्, कथञ्च स्वतो ग्राह्यमिति विचारे तद्वति तत्प्रकारकत्वरूपप्रामाण्यस्य सर्वत्रेष्टस्यात्राभावात् प्रामाण्यमेव न संभवति । वृत्तिनिष्ठं तु नतराम् । वृत्तेर्जडायाः कुत्राप्यभासकत्वात् । चरमवृत्त्यायत्तत्वान्मोक्षस्य चरमवृत्तिस्वीकारेऽपि तद्व्याप्यत्वस्य शुद्धचैतन्ये संमतत्वेऽपि न

वृत्तिब्रह्मणोर्विषयविषयिभावः; तस्य चैतन्यनिरूपिततायाः अनुपदमेवोक्तेः; वृत्तेरपि चैतन्यभास्यत्वात् न चैतन्यस्य वृत्तिभास्यत्वरूपवृत्तिविषयत्वप्रसक्तिः। चैतन्येनैव चैतन्यं प्रकाश्यत इत्यपि न; स्वस्य स्वकर्मत्वायोगस्य ब्रह्मसिद्ध्यादावुक्तत्वात्। चैतन्यविषयकव्यवहारकरत्वं चैतन्यस्येति चेत्—चरमवृत्तिकालीनाखण्डार्थप्रकाशस्य व्यवहाररूपता न भवितुमर्हति। तदा सर्वबाधेन व्यवहारप्रसक्त्यभावात्। व्यवहारसामान्यस्य वक्तृविशेषाधीनतया तदा वक्तुरेवाभावात्। चरमवृत्तिव्यतिरिक्तानां सविशेषग्राहित्वमेव, निर्विशेषग्राहित्वं तु तदैवेति वदतां निर्विशेषव्यवहारः संसारकाले हि दुर्निरूपः। अतस्तद्विषयव्यवहाराप्रसिद्ध्या तद्भासकत्वरूपं प्रामाण्यं कस्यापि तदानीं न सिद्धम्॥

यत्तु—अबाधितार्थविषयकत्वं प्रामाण्यं परिभाषायामुपक्रमे स्पष्टम्, अबाधितार्थविषयकत्वरूपप्रमाण्यस्वीकारे घटादिज्ञानानामप्रामाण्यं स्यादित्याशंक्य, संसारकालीनबाधविषयत्वाभाववदर्थविषयकत्वं तदिति परिहृतं भामतीपरिभाषादौ। संसारकालश्च चरमवृत्तिप्राक्कालः। तदा चाद्वितीयब्रह्मज्ञानस्य बाध एव। सर्वैरपि सद्वितीयत्वेनैव ग्रहात् तदभाववत्ताज्ञानरूपबाधस्याक्षतत्वात्। ब्रह्मणोऽपि बौद्धैर्बाधाङ्गीकारात् निवृत्तिर्बाध इति चेत्—अद्वितीयं ब्रह्मेति वादिकलितमद्वितीयत्वं प्रपञ्चसत्यत्वप्रतिष्ठापक वास्तवश्रुत्यर्थप्रवणमतनिर्णीतार्थज्ञानेन संसारदशायामेव निवर्त्येत इति संसारकालीनबाधितार्थविषयकत्वस्यैव सत्त्वात् न प्रामाण्यसंभवः। किञ्च तत् कुत्रापि स्वतो ग्राह्यं न भवतीति न तत् प्रामाण्यम्। बाधितत्वतदभावादेर्घटादिवृत्तिव्याप्यत्वाभावात्। अत एव ह्यप्रामाण्यं स्वतो ग्राह्यं न भवतीत्यभिहितम्; तदभाववत्वादेः प्राक् वृत्त्या ग्रहणाभावात्; तद्वति तत्प्रकारकत्वरूपप्रामाण्यघटकांशेष्वेव वृत्तिव्यापनादिति। अतः अखण्डार्थज्ञानं प्रमेति वचनं प्रामाण्यस्य, तदाश्रयत्वस्य, तत्स्वतोग्राह्यत्वस्य चासंभवात् दुरुपपादमेवेत्यास्तां तावत्॥

यत्त—विशेषाभावस्याभावतया ब्रह्मण्यभावरूपधर्मस्वीकारेऽपि न भावरूपधर्मस्वीकार इति कुत एवं भावे प्रद्वेष इत्यत्र लिख्यते—न वयं भाव

इति द्विष्मः, प्रमाणपरतन्त्रा ह्यद्वैतिन इति—तन्न—धर्मातिरिक्तत्वपक्षे भावत्वेऽभावत्वे वा अद्वैतश्रुतिविरोधस्य तुल्यतया अभावमात्रस्वीकारस्यानुचितत्वात्। ब्रह्मणो भावत्वात् भावत्वेन सजातीयद्वितीयराहित्यमद्वैतमिति कथ्यत इति चेत्—ब्रह्मणः स्वतन्त्रत्वात् स्वतन्त्रद्वितीयाभाव एवाद्वैत मित्येव किं न स्यात्। यथा ब्रह्म सत्त्वेन प्रतिपन्नम्, तथा स्वतन्त्रत्वात् कारणत्वादिनापि प्रतिपन्नमिति तादृशद्वितीयाभावादप्यद्वैतं भवेत्। एवं यत्र विशेषाभावो भावरूप एव, तत्र भावाश्रयत्वमप्यवार्यम्। कालत्रयसंबन्धित्वाभावरूपो विशेषो यो घटादिगतः, तदभावो हि कालत्रयसंबन्धित्वं भावरूपमपि विशेषाभावरूपमिह कथितमिति ॥

नित्यत्वनिर्विशेषत्वादेः ब्रह्मणि प्रतिपन्नस्य मिथ्यात्वे सौगतवैशेषिकाद्यभिमतानित्यत्वसविशेषत्वाद्यापत्तिं शतदूषणीकृतामनूद्य खण्डनं क्रियमाणमति विचित्रम्। यद्युच्येत—कर्मभक्तिसाध्यज्ञानयोगगम्यं परतत्त्वं स्वीकृतमिति न सौगतादिमतप्रवेशापत्तिरिति—सौगतमतं वा भवतु, अन्यमतं वा, नित्यत्वनिर्विशेषत्वादेर्मिथ्यात्वे अनित्यसविशेषत्वापत्तिरित्यपसिद्धान्तो हि न शक्यते वारयितुम्। एवञ्चापाद्यमानस्य सौगतादिसंमतत्वात् तन्मतमुल्लिखितम्। स्वमतमुपेक्ष्य परमतं स्वीकृतं स्यादिति दूषणाशयः। सौगतादिनाऽस्मत्संमतपरतत्त्वं न स्वीकृतमिति चेत्—न हि तदंशे साम्यमस्तीत्युच्यते। अनित्यत्वसविशेषत्वांश एव तदुक्तेः। यत्तु—साध्यादिधर्मानन्वयादनुमानमेव नेत्यनुमानदूषणं निरालम्बम्। यदा साध्याद्यभावः सर्वबाधदशायाम्, तदाऽनुमानस्याप्यभावात्। व्यवहारदशायां साध्याद्यन्वय एव त्वस्तीति—तन्न—व्यवहारदशायां सर्वज्ञत्वादीनां विशेषाणामेव सत्त्वेन निर्विशेषत्वबाधादनुमानायोगात्। मिथ्यात्वस्य त्रैकालिकात्यन्ताभावप्रतियोगितारूपतया व्यवहारदशायां विशेषाः सन्ति, ऊर्ध्वमेव न सन्तीत्युक्तेरयोगाच्च ॥

निर्विशेषत्वमनुभूतिसमसत्ताकविशेषराहित्यमित्यपि न—तथा सति अनुभूतिः अनुभूतिसमसत्ताकविशेषरहिता अनुभूतित्वात् इत्यनुमाने यत्

अनुभूतिसमसत्ताकविशेषम्, तत् अनुभूतित्वरहितम्, यथा घटादीति व्यतिरेकव्याप्तिवर्णनायोगात्। यदि च स्वसमसत्ताकविशेषरहितेति स्वशब्दघटनेनानुमानप्रयोगः, स वादारम्भ एव दूषितः। सत्तात्रैविध्यस्याप्रामाणिकतया समसत्ताकेति विशेषणायोगश्च। पूर्वं बाष्पधूमभ्रमेण जायमाना वह्न्यनुमितिरपि प्रमैव; मिथ्याभूतस्याप्यर्थक्रियाकारित्वमस्तीत्यादि बहूक्त्वा, "यादृच्छिकसंवादिलिङ्गविभ्रमवत् तत्सिद्धिरित्यादिशङ्कासमाधानादिसंदर्भस्तु तथा अनभ्युपगमादाकाशमुष्टिहननमेव" इति समनन्तरमेव तद्विरुद्धलेखनमप्येवं हेयमेव। व्यावर्त्याभावात्। न च नित्यत्वादिस्वाभ्युपेतधर्मव्यावृत्तिः। दृश्यत्वं हि वृत्त्यभिव्यक्तचैतन्यविषयत्वम्। तत्तु नित्यत्वादिधर्मसाधारणम्। तद्विषयकवृत्तौ अविवादात्। चैतन्यं विना तद्भानायोगाच्च। एवं भेदादयः नानुभूतिधर्माः दृश्यत्वादिति प्रयोगे नित्यत्वादीनामपि पक्षत्वस्य भवदुक्ततयाऽपि तत्र हेतुभूतदृश्यत्वान्वयस्येष्टतया न दृश्यत्वमिह नित्यत्वादिधर्मव्यावृत्तम्। नित्यत्वादीनामनुभूतिधर्मत्वेऽनुभूयमाने तदभावसाधनमप्ययुक्तम्। तेषामनुभूतिधर्मत्वमपारमार्थिकमस्ति, पारमार्थिकत्वेन धर्मत्वाभावः साध्यत इति चेत्—पारमार्थिकत्वस्य व्यधिकरणधर्मत्वमसिद्धम्—अनुभूतिधर्मता पारमार्थिकी धर्मतात्वात् रूपादिनिष्ठघटादिधर्मतावदित्यनुमानेन पारमार्थिकत्वसाधनाच्च। न च शङ्खःपीत इति भ्रमात् पीतरूपनिष्ठशङ्खधर्मतायां व्यभिचार इति वाच्यम्—तादृशधर्मताया एवाप्रसिद्धत्वात्। अनिर्वचनीयधर्मोत्पत्तेरसिद्धत्वाच्च। घटादिधर्मतायां पारमार्थिकत्वमसिद्धमिति चेन्न—अनुभूयमानस्य सर्वस्य पारमार्थिकताया औत्सर्गिकत्वात्। ज्ञानानां स्वतःप्रामाण्यात्। श्रुत्या तत्पारमार्थिकत्वमपोद्यत इति चेन्न—श्रुतेस्तत्सिद्धौ अनुभूतिधर्मतायामप्यपारमार्थिकत्वं सहैव ततः सिद्ध्यतीति किमिति तन्मात्रानुमानेन। श्रुतिः प्रत्यक्षसिद्धपारमार्थिकत्वनिषेधिका नेति च स्वावसरे निरूपयिष्यते। किञ्च रूपादीनां यथा अनुभूतिधर्मत्वं नास्ति, तथा नित्यत्वादीनामपि तन्नास्तीति सामान्यतो धर्मत्वनिषेधानुमानमेव प्राप्तम्। तत्तु प्रत्यक्षसिद्धधर्मत्वापलापान्न संभवतीति पारमार्थि-

कत्वेन तदभावः सिषाधयिष्यते । इदञ्च पारमार्थिकत्वं तत्र नास्तीति अपारमार्थिक तदित्यधिगतं चेत् — स्यादपि । न चापारमार्थिकत्वमन्यतः सिद्धम् । न च रूपादिप्रकृतदृष्टान्तः अपारमार्थिकत्वांशसाधनोपयोगीति ।

अनुभूतिः सविशेषा भासमानत्वात् घटादिवत् इत्यनुमानेन निर्विशेषत्वानुमानं सत्प्रतिपक्षितमित्यत्र यदुक्तम् — अपारमार्थिकविशेषवत्त्वस्येष्टत्वात् सिद्धसाधनमिति — तर्हि तथैव निर्विशेषत्वानुमानेन अपारमार्थिकनिर्विशेषत्वमादाय सिद्धसाधनमिति भाव्यताम् । पारमार्थिकविशेषवत्त्वसाधने अप्रसिद्धिरित्ययुक्तम् । घटादेरपि पारमार्थिकतया पारमार्थिकविशेषवत्त्वस्य बहुलं दृष्टेः । अयं सर्प इति भ्रमविषये पारमार्थिकविशेषाभावाद्व्यभिचार इति च न — किं तत्र इदमर्थे साध्याभावः उत सर्पे । रज्वादिदमर्थे पारमार्थिकविशेषसद्भावस्याविगीतत्वात् । सर्पस्यात्र आपणस्थस्यैव भानात् तत्र विशेषाणामिष्टत्वाच्च ॥

अनुभूतिर्निर्विशेषा अनुभूतित्वादित्यनुमानं तावत् केवलव्यतिरेकि । केवलव्यतिरेकि चानुमानमेव न भवतीत्यन्यत्र प्रपञ्चितम् । तत्र प्रतिप्रयोगस्त्वन्वय्येव दृश्यते, यथा—अनुभूतिः सविशेषा भासमानत्वादिति । नन्वत्रानुभूतिरिति पक्षीकृतं किं स्वरूपचैतन्यम्, उत वृत्तिज्ञानम्? आद्ये, बाधः । अन्त्ये सिद्धसाधनममिति चेन्न—स्वरूपचैतन्यस्य जीवेश्वरभेदभिन्नस्य सर्वस्य नानाविशेषवत्त्वस्यैव प्रमाणप्रतिपन्नतया बाधलेशाभावात् । निर्विशेषचैतन्यसदसद्भावविचारस्यैवेदानीं क्रियमाणतया तत् सिद्धं कृत्वा बाधवर्णनस्यानुचितत्वाच्च । श्रुत्या तत् साधयाम इति चेत् — तर्हि श्रुत्यर्थविचार एवावतीर्यताम्; किमाभासानुमानप्रपञ्चनप्रयासेन । अस्माभिश्चात्र घटमहं जानामीत्येवं तिङन्तव्यवहारविषयीभूतमेव पक्षीकृत्य सविशेषत्वं स्थाप्यते । तत्रैव निर्विशेषत्वसाधने भवत्प्राच्यैः संरब्धत्वात् । एवं विवादाभावे च तत्साधनमप्युपेक्ष्यत एवेति न सिद्धसाधनप्रसक्तिः । यच्चानुभूतिर्निर्विशेषा अनुभूतित्वादित्यनुमा

नेन सत्प्रतिपक्षत्वमिति — तन्न — अनुभूतिसविशेषत्वस्यानुभवसिद्धतया तदनुमानेऽस्माभिः प्रथममप्रवृत्तेः। भवद्भिर्विपरीतानुमाने क्रियमाणे अनुभूतिः सविशेषेति सत्प्रतिपक्षानुमानमस्माभिः प्रयुज्यत इति किलात्र स्थितिः। भवतु तावदेवम्; अथापि अस्मदनुमानं निर्विशेषश्रुत्यनुगृहीतत्वात् प्रबलमिति चेन्न — श्रुत्युपजीवनत्वस्यावश्यकत्वेन तद्विचार एव क्रियताम्, किमनुमानैरित्यसकृदुक्तत्वात्॥ यत्तु—सविकल्पकज्ञानत्वमुपाधिः, ब्रह्मरूपसंविदि निर्विकल्पकज्ञाने वा उपाध्यभावेन साधनाव्यापकत्वादिति—तन्न—निर्विकल्पकज्ञानाभावस्य निर्विकल्पनिरासवाद एव प्रसाधितत्वात्। सविशेषत्वरूपसाध्यस्य घटादिष्वपि सत्त्वेन तत्र सविकल्पकज्ञानत्वाभावेन साध्याव्यापकत्वाभावाच्च। उक्तञ्च शतदूषण्याम्—"सविशेषत्वानुमानस्य विपक्षे बाधकमस्ति, निर्विशेषत्वानुमानस्य च तन्नास्ति" इति॥

यदपि—नित्यत्वादयोऽनुभूतिधर्माः अभ्युपगतानुभूतिस्वरूपं प्रति तद्धर्मतया प्रमाणतः साध्यमानत्वात् इत्यनुमानस्य दूषणम्—तदप्यनादेयम्। अत्र स्वाभ्युपगतानुभूतिस्वरूपं प्रतीति हेतुविशेषणस्य व्यर्थत्वात् व्याप्यत्वासिद्धिरिति वचने स्वेतिपदघटनादयथानुवादः; स्वपदस्य साधकपुरुषपरत्वस्यैवात्र वाक्ये स्वरसप्रतीतत्वात् तदादरणे चोपर्यनन्वयात्। यं प्रति साध्यते तद्ग्रहणे च तत्पदं सर्वथैव व्यर्थमिति। यः खलु तार्किकादिरात्मानमनुभूतिरूपं न मन्यते, तं प्रति नित्यत्वस्यानुभूतिधर्मतया साधनासंभवात्, तं प्रति अनुभूतिः नित्या मोक्षभागित्वादित्यनुमानप्रयोगे, जानामीति ज्ञाधात्वर्थस्यैवानुभूतित्वात् तदनित्यत्वस्य चानुभविकत्वात् तदतिरिक्तस्यात्मनोऽनुभूतित्वे मानाभावाच्च अनुभूतौ हेतोरेव अभावात् न साध्यसिद्धिरिति स प्रतिब्रूयात्। एवमनुभूतिमपि योऽपलपति शून्यवादी, तं प्रत्यप्यनुभूतिनित्यत्वं दुःसाधम्, आश्रयासिद्धेः। अतः अनुभूतेर्नित्यत्वसाधकस्य प्रमाणत्वमभ्युपगतानुभूतिस्वरूपंपुरुषं प्रति भवतीति ज्ञापनार्थं तत् पदम्। किञ्च योऽनुभूतिं तन्नित्यत्वमुभयं न मन्यते, तस्मै नित्यत्वविशिष्टानुभूतेरेव केनचिद्धेतुना साधने तद्धेतुरूपं प्रमाणमादायापि नित्यत्वे

तद्धर्मतया प्रमाणतः साध्यमानत्वादिति हेतुरस्ति। तावता नित्यत्वस्यानुभूतिधर्मत्वमेव, न त्वनुभूतिस्वरूपत्वमिति न नियन्त्रयितुं शक्यमिति हेतुरयमप्रयोजकः स्यात्। अतः अभ्युपगतानुभूतिस्वरूपं प्रतीत्युक्तम्। तेनेदमुक्तं भवति—यदि नित्यत्वमनुभूतिधर्मो न भवति, किन्त्वनुभूतिस्वरूपमेव, तर्हि अनुभूतेः सिद्धत्वे तन्नित्यत्वस्यापि सिद्धत्वात् तत्रापि विवादो न स्यात्। अनुभूतिस्वरूपमनुमन्यमान एव तु बौद्धस्तन्नित्यत्वे विवदते। अतः तत्स्वरूपाभ्युपगमशालिनं प्रत्यपि साध्यमानत्वात् स्वरूपातिरिक्तत्वमावश्यकमिति। अतो न तद्दलवैयर्थ्यम्। तं प्रत्यपि धर्मत्वातिरिक्ताकारेण साधने धर्मत्वं न साधयितुं शक्यम्। अप्रमाणेन केनचित् अनुभूतिनित्यत्वसाधनेऽपि तेन साध्यमानत्वरूपो हेतुर्न धर्मत्वस्थापने पारयेत। तस्मात् सर्वं दलं सार्थकम्। तत्राद्वैती एवं प्रतिबोध्यते। भवताऽनुभूतिर्नित्या मोक्षभागित्वादित्यादि बहूपन्यस्यते। प्रतिपाद्यश्चानुभूतिमभ्युपगच्छति। तन्नित्यत्वं पुनर्नेच्छति। यद्येकमेव तदुभयमपि स्यात्, एकज्ञानकालेऽन्यविषयकविवादो नैवाङ्कुरेत्। अत, इह धर्मधर्मिणोर्भेद एष्टव्य इति। एतेन भवत्कृतमप्रयोजकत्वशङ्कनमपि शमितं वेदितव्यम्। एवं स्थितेऽत्र प्रमाणपदेन श्रुतिग्रहणेन अन्योन्याश्रयदोषोद्भावनेन च दूषणमसङ्गतमित्यवधेयम्। एवं हेतुकोटिनिविष्टस्यास्यांशस्य त्यागे प्रतिज्ञान्तरमिति निग्रहस्थानमिति लेखनमप्यसंबद्धम्; हेतुप्रतिज्ञयोर्भेदात्।

अनुभूतिर्निर्विशेषा अनुभूतित्वादित्यनुमाने विपक्षे बाधकं यदुपन्यस्तम्, सविशेषत्वे अननुभूतित्व प्रसंगइति—तदयुक्तम्—सविशेषत्वमस्तु अननुभूतित्वं माऽस्त्विति तत्र तर्कघटकांशयोर्व्याप्त्यभावे शंक्यमाने समाधानस्य कार्यत्वादिति चण्डमारुतवर्णनं हि निर्दिष्टम्। यदुच्यते—व्यभिचाराग्रहे सति सहचारग्रहे व्याप्तिः सिद्ध्यत्येवेति—तन्न—सत्यां व्यभिचारशङ्कायां तदसिद्धेः। तस्मात् अग्निमान् धूमादित्यत्र व्यभिचारशङ्कायाम्, अग्न्यभावे धूमो न स्यादित्युक्तौ तत्रापि व्यभिचारशंकायां यथा यद्यग्निं विनापि धूमः स्यात् धूमोऽग्निजन्यो न स्यादिति तर्कः प्रवर्त्यते; तथे-

हापि व्यभिचारशङ्कायां तत्परिहारकः कश्चित् तर्कः प्रदर्शनीय एव। यावदाशङ्कं तर्कप्रवृत्तेरेव न्यायाचार्यैरप्युक्तत्वात्। अतो विपक्षे बाधकराहित्यान्निर्विशेषत्वानुमानमननुमानम्। सन्ध्योपासनादि कर्तव्यमित्यत्र युक्तिरुच्यतामिति केनचित् पृष्टे कश्चिदाह, संध्योपासनमवश्यकर्तव्यं सन्ध्योपासनत्वादिति; मोक्षस्य ज्ञानसाध्यत्वं कुत इति प्रश्ने कश्चिदनुमिनोति, मोक्षो ज्ञानसाध्यः, मोक्षत्वादिति; तादृगेवायमुपन्यास इति। श्रवणप्रतिष्ठार्थानि प्रतिवादवारकाणि परसंदेहप्रणोदकानि वा मननरूपाण्यनुमानानि नैवंविधानि भवितुमर्हन्तीति॥

दूरीकृत्य श्रुतिततिमिदंवेद्यमर्थं स्वतन्त्रैः
तर्कैरान्विक्षिक्यधिकमहितैः स्थापयन्तोऽपि नालम्।
इत्थंत्वे यः श्रुतिषु निजधीकल्पितापार्थमूलः
तर्काभासो बहुरिह मृषावादिनां तेन किं स्यात्॥

शुभमस्तु

---

श्रीः

## संविदात्मत्वभङ्गप्रसाधनम्

वेद्यो वेदैरशेषैर्जयति निरुपमो वेदिताऽस्याखिलस्य
स्वस्मै भातः स्वयं सन् अपृथगुपगताशेषविज्ञानवस्तुः।
ज्ञानानन्दस्वरूपाक्षरपरमपदाद्यन्तरः संविदात्मा
श्रीमानेष श्रितासः श्रुतिमतिभजनाद्यात्मसंवित्पदं नः॥

संवित् आत्मा अजडत्वादिति संवित्पक्षकानुमानं शतदूषण्युक्तमद्वैतिनामसंमतमिति कृत्वा स्वयम् आत्मा संविद्रूप इत्यात्मपक्षकानुमानं शिक्षयति शतभूषणी। तत्रेदं वक्तव्यम्—संविदात्मनोरैक्ये समर्थनीये द्वेधापि पक्षनिर्देशः

संभवन्न शक्य उपेक्षितुम् । उभयविधमपि निर्देशं निरस्यत्येव शतदूषणी, "अस्तु-तर्ह्यात्मानं पक्षीकृत्यात्मत्वादेव ज्ञानतादात्म्यसाधनम्" इत्युपर्युपन्यासात् । किञ्च लोकप्रसिद्धाः संविदः स्वाभ्युपगतनिर्विषयनिराश्रयसंविदनतिरिक्ता इति नियमयितुं संविदः प्रागभावस्याग्राह्यतया प्रागभावाभावम्, अत एवानुत्पत्तिम्, ततो निर्विकारत्वम्, नानात्वम्, निर्विशेषत्वञ्च स्थापयद्भिर्हि तदुपरि आत्मत्वम-प्युपन्यस्यते । एतावदनुमानकदम्बस्थापनीया तावत् स्वाभिमता निर्विषयनि-राश्रयसंवित् इतः पूर्वमप्रसिद्धेति न तां विशिष्य पक्षीकृत्य तत्र प्रागभावाद्यभावा-दिकं साधयितुं कश्चित् पारयेत् । अतः प्रसिद्धसंविद्ग्रहणेनैव सर्वं क्रियते । तत्रानुत्पत्त्यादिसाधने यत् पक्षीकृतं प्राक्, तदेव प्रक्रमानुरोधात् प्रकृतेऽपि पक्षीक्रियत इति सिद्धं संविदः पक्षत्वम् । लौकिकसंविदां सपक्षत्वान्न पक्षत्व-मिति तु न; संवित्पक्षकानुमाने तत्सपक्षत्वाविवक्षणात् । व्यतिरेकव्याप्तिरत्र प्रदर्श्यते । व्यतिरेकदृष्टान्तश्च घटादिः । यत्तु व्यतिरेक्यनुमानस्यागतिकगति-त्वमिति, तदभिनन्दामः । भवदीयैर्व्यतिरेकव्याप्तिरेव प्रायः परिगृह्यत इति वस्तुतो भावत्कप्रकारानुवादोऽयं भवतैव दूष्यते चेत्, किं नस्तेन? । वयं हि केवलव्यतिरेक्यनुमानं सर्वथैव निराकुर्मः, यद् भवद्भिर्विलक्षणतत्त्वसाधनाय विलक्षणं विशिष्याऽऽद्रियते—अनुभूतिः स्वतः सिद्धा अनुभूतित्वात्, प्रागभा-वरहिता स्वतःसिद्धत्वात्, अनुत्पन्ना प्रागभावाभावात्, निर्विकारा अनुत्पन्नत्वात्, अत एव भेदरहिता चेत्येवम् ।

यत्तु, "न चाद्वैतिनो दृष्टान्ततयैव निर्दिश्यमानस्य धर्मभूतज्ञानस्य पक्षत्वं मन्यन्ते । अत आत्मपक्षीकरणेन संविद्रूपत्वसाधनमेव" इति—तदिदमप्यद्वैतिग्रन्थविस्मरणनिबन्धनम् । इदं हि सर्वमास्माकानुवदनं श्रीभाष्ये शतदूषण्यादौ वा प्राचीनस्येष्टसिद्धिग्रन्थस्य । तत्र च, "याऽनुभूतिरजाऽमेयाऽन-न्ताऽऽत्माऽऽनन्दविग्रहा । महदादिजगन्मायाचित्रभित्तिं नमामि ताम्" इत्युपक्रम्य स्वयमेव तद् विवृते । तत्र च यच्छब्दः स्वतःसिद्धत्वपरः । स्वतः सिद्धत्वञ्च प्रसिद्धं लौकिकसंविद एव । तत्र च – यथा वर्णगततया प्रतीतानां

विकाराणां नादे निरूपणेन वर्णनित्यत्वस्थापनम्, तथा — संविन्निष्ठतया प्रतीतानां सर्वेषामन्यगतत्वाभिमत्या स्वाभिमतसंविद्विशेषत्वमेव लौकिकसंवित्स्वाशय्य संविन्नित्यत्वादिस्थापनकामनया सर्वमिदमुक्तम्। अनुभूतिगतमनुभूतित्वं यच्छब्दविवक्षिते स्वतःसिद्धत्वे हेतुः; स्वतःसिद्धत्वमजडत्वे; अजडत्वममेयत्वे; अमेयत्वमनन्तत्वे; अनन्तत्वमात्मत्वे; आत्मत्वमानन्दत्व इति क्रमः। उक्तञ्च तत्र, "नन्वनुभवित्रा आत्मना विनाऽस्त्यनुभूतिः। तत् कथं सा अनन्ता? नैष दोषः, यतः सैव सः। कथम्? उच्यते। सोऽप्यनुभूतिस्वभावश्चेत्, नास्या भेदः। अन्यथा सोऽनात्मेति नानुभविता। अतः सैवात्मा। अनन्तत्वाच्च। अथवा अनन्तत्वात् सैव परमात्मा" इति। अत्रानन्तत्वहेतुना अनुभूतेः त्वम्पदार्थात्मत्वं तत्पदार्थात्मत्वञ्च साधयता पूर्वम्, "अनुभूतिस्वभावश्चेत्, नास्या भेदः"-इति लिखता, अनुभूतिर्नात्मा तदाश्रितत्वात् अज्ञानवदित्यनुमानं दूषयितुम्, अनुभूतिरात्मा अनुभूतित्वादित्यप्यनुमानमभिप्रेतम्। अनन्तत्वादनुभूतेरात्मत्वमपि सिद्धमित्यर्थ इति च। तद्व्याख्यात्रा एतदनुमानानिर्देशेऽपि एतदभिमतमिति ग्रन्थस्वारस्यसिद्धम्। अनन्तत्वाच्चेति चकारप्रयोगादपि पूर्वः कश्चिद्धेतुर्विवक्षितोऽस्तीति ज्ञायत एव। तथाचानुभूतिनिष्ठमनुभूतित्वमजडत्वमित्यादिकं साधकं भवितुमर्हतीति सुदूरं विभाव्य शतदूषणी प्रयुङ्क्ते, "संवित् आत्मा अजडत्वात्" इति। एतावदपरामृश्य, "अद्वैतिनामसंमतं संवित्पक्षकानुमानम्" इति लेखनमतिसाहसम्। ईदृशग्रन्थानामन्यथानयनासंभवान्नैतदपलापे यतनीयम्।

ज्ञानोत्तमेन व्याख्यात्रा सहितस्त्विष्टसिद्धिकृत्।
विमुक्तात्माऽत्र स भवता विमुक्तः स्वेष्टहानितः॥

भवतैवानन्तरवादारम्भे, "अहमर्थो नात्मा सुषुप्तिमोक्षयोरननुवर्तमानत्वात्........चैतन्यमात्मा अनुवर्तमानत्वात्" इति चैतन्यपक्षकमनुमानमभिप्रेयत इव। एवं सिद्धान्तसिद्धाञ्जनादिकमपि भाव्यम्। अनुभूतिपक्षकात्मत्वानुमानमसाम्प्रदायिकमिति च न कुत्राप्युक्तम्। अत्रेष्टसिद्ध्यभिमतानामनन्-

भाव्यत्वाजडत्वामेयत्वादीनामसिध्द्युपपादनादेवानन्तत्वासिद्ध्या नानुभूतेरात्मत्वसिद्धिप्रसक्तिः ।

अथात्मपक्षकं भवदुक्तमनुमानमपि विचार्यम्—आत्मा संविद्रूप इत्यनुमानं किं तार्किकान् प्रति, उत परान् वेदान्तिनः प्रति । नाद्यः, संवित्कर्मतामन्तरेणापरोक्षत्वादिति हेतोरसिद्धेः । तैरनुव्यवसायमुखेनैवात्मप्रत्यक्षस्याभिमतत्वात् । ननु स्वतोपरोक्षत्वाभावे कदाचिदात्मनि, अहमनहं वेति संशयः स्यात; तथा नाहमिति विपर्ययोऽपि । घटपटादिकं हि ज्ञानाधीनप्रकाशं ज्ञानाभावात् कदाचित् संशयविपर्ययविषयोऽपि दृश्यते; न चैवमात्मेति चेन्न—एवं तर्हि शुद्धस्यात्मनः स्वप्रकाशत्वं न सिद्ध्येत् । अहंत्वेन रूपेणात्मा सर्वदा भासत इत्येष्टव्यं भवेत्, यथाऽस्मन्मते । तच्चाहंत्वं भवन्मते अहंकाररूपाचेतननिष्ठमिति तस्यापि तर्हि स्वप्रकाशत्वापत्तिः । किञ्च धर्मिज्ञानं विना संशयायोगात् अहमनहंवेति संशयात् प्राक् धर्मिज्ञानेन भाव्यम् । तदा च धर्मी आत्मा केनरूपेण गृह्यते । न चाहंत्वादिरूपेण गृहीते तत्संशय उदेतु । न च प्रकारान्तरेण तदनुभवे किञ्चित् प्रमाणम् । न च शब्दानुमानादिना आत्मा कश्चिदस्तीति ज्ञाने जाते सति तत्रात्मनि अहमनहंवेति संदेहोऽस्त्विति शङ्क्यम् – जाते ज्ञाने समनन्तरमनुव्यवसायोत्पत्त्या अहं जानामीत्याकारकेण च तेन अहमिति धर्मिणो ज्ञाततया संदेहानवकाशात् । अतः स्वप्रकाशतामन्तरेणाप्युपपत्तिः । यथा सुखदुःखयोर्नियमेनासंदिग्धं प्रकाशमानयोरपि भवन्मते संवित्कर्मतामन्तरेणापरोक्षत्वं नास्ति, तथैवात्मन्यपि । इयं तावत् तार्किकसरणिः ।

नापि वेदान्तिनः प्रतीति द्वितीयःकल्पः; सिद्धसाधनप्रसंगात् । किञ्च किमिदं साध्यं संविद्रूपत्वम्? 'स्वरूपसंवित् विवक्ष्यत' इति लिखित्वा, 'दृष्टान्ते स्वरूपसंवित्त्वाभावेऽपि न साध्यवैकल्यम्' इति भवदुक्तिर्व्याहता । वृत्तिरूपसंविद्विवक्षायाञ्च बाधः । संवेदनवदिति वृत्तिं दृष्टान्तीकृत्य तदभेदः कथमात्मनि साधयितुं शक्यते; पक्षदृष्टान्तयोर्भेदावश्यम्भावात् । स्वयम्प्रकाशत्वरूपसंवित्त्वञ्चेत् साध्यम्, तदाऽपि दृष्टान्तस्य

संवेदनस्य वृत्तिरूपताया भवदुक्तत्वात् वृत्तीनां संविल्कर्मतयैवापरोक्षत्वात् हेतुवैकल्यमिव साध्यवैकल्यमपि। अत एतदपेक्षया संवित्पक्षकव्यतिरेक्यनुमानमेव ज्यायः।

स्वसैभासमानत्वरूपाजडत्वस्यात्मनि नासिद्धिरिति च न युक्तम्; आत्मपक्षकत्वाभावादनुमानस्य; लोकप्रसिद्धसंवित्पक्षकत्वात्। यावदतिरिक्तात्मासिद्धिः, तावत् हेतुरयमसिद्ध एव। अव्यभिचरितप्रकाशसत्ताकत्वमजडत्वमिति पक्षे सुखादिभिर्व्यभिचार उक्तः परिजिहीर्ष्यते इतरानपेक्षाव्यभिचरितप्रकाशसत्ताकत्वमिति परिष्करणेन, सुखादिप्रकाशश्च साक्षिसापेक्ष इति न दोष इत्याशयेन। एवं तर्हि संदिग्धासिद्धिः संविदतिरिक्तात्मसद्भावे तत्संबन्धाधीन एव संवित्प्रकाशः स्यात्। तदभावे चेतरानपेक्षः स्यादिति।

एवमजडत्वं हेतुं निरस्याथेष्टसिद्धिदर्शितमनुभूतित्वमपि हेतुं निराकर्तुमुक्तं शतदूषण्याम्, अतो ज्ञानत्वहेतुः परिशिष्यत इति। तत्र यदुक्तम्, अर्थोपलक्षितप्रकाशत्वं ज्ञानत्वमिति—तन्न—अनुभूतिव्यतिरिक्तस्यानुभवितुः सद्भावात् कथमानन्त्यमित्याशङ्क्य हीष्टसिद्धौ उभयोरनुभूतिस्वभावत्वादभेद उक्तः। यदीदमनुभूतित्वमर्थोपलक्षितप्रकाशत्वरूपं स्यात्, न तत् आत्मनि स्यात्। आत्मनः स्वप्रकाशत्वेऽप्यर्थान्तरप्रकाशकत्वस्यासंप्रतिपन्नत्वात्।

अथात्मत्वरूपसाध्यशोधनावसरे आत्मत्वं न ज्ञातृत्वम्, किं तु ज्ञातृत्वोपलक्षितसंविन्मात्रत्वम्। सत्यंज्ञानमिति ज्ञानस्वरूपत्वप्रतिपादनादिति यदुक्तम्—तन्न—ज्ञातृत्वस्य प्रत्यक्षविरोधान्निरासे ज्ञातृत्वोपलक्षितसंविन्मात्रत्वस्यापि निराससिद्धेः। संविदि संविन्मात्रत्वसाधने सिद्धसाधनाच्च। सत्यं ज्ञानमित्यत्रान्तोदात्तस्वरबलात् ज्ञानाश्रयत्वरूपार्थावश्यकतायाः प्रागुक्तत्वाच्च। ज्ञोऽत एवेत्यस्य सूत्रस्य ज्ञानस्वरूपतापरत्ववर्णनमप्युदक्षरत्वादुपेक्ष्यम्। स्वरसप्रतीतज्ञानाश्रयत्वाविरोधेन विवक्षावशादर्थान्तरस्यापि कथञ्चिदुपलक्ष्यत्वस्यादरणीयत्वेऽपि प्रतीतबाधकल्पनाया अयुक्तत्वात्। अतोऽस्मन्मते ज्ञानत्व-

ज्ञानाश्रयत्वोभयविवक्षायामपि न दोष इत्यन्यत्र विस्तरः । ज्ञानस्वरूपत्वस्योभयसंप्रतिपन्नत्वेऽपि ज्ञशब्दस्य तदर्थकत्वमसंप्रतिपन्नम् । ज्ञानस्वरूपत्वलाभस्तु यावदात्मभावित्वाच्चेति चकारतो भवितुमर्हति; चितितन्मात्रेणेति सूत्राच्च । आत्मपदस्य ज्ञानाश्रयत्वार्थकत्वे आत्मनोऽचेतनत्वापत्तिरिति च विचित्रम् । ज्ञानाश्रयत्वमेव हि चेतनत्वम् । ज्ञानपक्षकात्मत्वसाध्यकप्रयोगं नाद्वैतिनः स्वीकुर्वन्तीत्येतत् इष्टसिद्ध्यादिग्रन्थविस्मरणविजृम्भितमिति प्रागेव प्रादर्शि । पाठक्रमादर्थक्रमो बलीयानितिन्यायेन संविदात्मेति लेखनेऽपि आत्मा संविदित्येव विवक्षितमिति च तथा तद्ग्रन्थनिर्वाहायोगस्य विस्पष्टत्वादेव परास्तम् । कथं नु धर्मभूतज्ञानस्य ज्ञानाश्रयत्वरूपमात्मत्वं कश्चित् साधयेदिति चेत्—कथं नु ज्ञानाश्रयस्यात्मनो धर्मभूतज्ञानाभिन्नत्वं कश्चित् साधयेदित्यपि तुल्यम् । न वयं विशिष्य तथा प्रयुञ्ज्महे; सामान्यतः आत्मा ज्ञानमित्येव । दूषयितारस्तु तथा विकल्पयन्तीति चेत्—तदिदमिष्टसिद्ध्यभिमते संवित् आत्मेति संवित्पक्षकानुमानेऽपि समानमिति । तस्मात्, "आत्मा संविद्रूप इति योजनामाश्रित्यैव सर्वत्र खण्डनं मण्डनं वा कार्यम्" इति भवतः शासनं न प्राचीना अद्वैतिनोनुवर्तिष्यन्त इत्यवधेयम् ।

ज्ञातृत्वमिति प्रथमकल्पानन्तरम् प्रत्येतुः प्रत्येतव्यादिति द्वितीयकल्पः प्रस्तुतः । तत्र सर्वत्र मुद्रणप्रमादं स्थितमविज्ञाय, प्रत्येतुः प्रत्येतव्यात् व्यतिरिक्तत्वम्' इत्येव पाठं प्रतीत्य, "संवेद्यभिन्नत्वमसंवेद्यत्वं वाऽऽत्मत्वम्"इति पर्यायप्रयोगमपि विधाय; "कल्पोऽयमनुकूल एव, अनुभूतेरवेद्यतायाः पूर्वमेव विशदीकरणात्" इति लेखनमपि उपरि प्रकृतविकल्पदूषणग्रन्थांशापरामर्शमपि दर्शयति । 'अवेद्यत्वाभिमतानुभूतेर्वेद्यत्वप्रसंगस्त्वधिकः' इति चोपरि कल्पोऽयं दूष्यते । प्रत्येतव्यात् व्यतिरिक्तत्वमिति संवेद्यभिन्नत्वं चेत् विकल्पार्थः, कथं संवेद्यत्वप्रसञ्जनमुपरिक्रियमाणं संगच्छेत । तस्मादत्र, "प्रत्येतुः प्रत्येतव्यादव्यतिरिक्तत्वम्" इति पाठः शोधनीयः । आह चोदयनाचार्य आत्मतत्त्वविवेके, "प्रत्येतुः प्रत्येतव्यादव्यतिरेकः प्रत्यक्त्वम्" इति । अन्ववादि चायमर्थो न्यायकुलिशे श्रीवादिहंसाम्बुवाहैराचार्याणामाचार्यैः; आचार्यैश्च

:तत्रतत्र । परमार्थप्रकाशिकायामस्माभिरपीदं परामृष्टम् । तथा च प्रत्येतुः प्रत्येतव्याद्व्यतिरिक्तत्वरूपं प्रत्यक्त्वमात्मपदविवक्षितं किमिति द्वितीयकल्पार्थः । तच्च ज्ञातृज्ञेयैक्यम्; आश्रयत्वविषयत्वोभयसंबन्धेन ज्ञानविशिष्टत्वरूपमन्यादृशं वा । पूर्वस्मिन् कल्पे आश्रयत्वमात्रमुक्तम्, अत्र विषयत्वमपि समुच्चितमिति विशेषः । ज्ञाता यदि स्वात्मानमेव तेन ज्ञानेन गृह्णाति, तदा प्रत्यगित्युच्यत इति तल्लक्षणसमन्वयरीतिः । तस्मादत्यन्तानवधानमूलकमिदं द्वितीयकल्पदूषणं शतभूषण्याम् । तृतीयादिकल्पानां शतदूषणीकृतं दूषण मपरिहृत्य सर्वमुपपन्नमिति सामान्यतो लेखनं न हृद्यम् । तस्मादग्निः सूर्यः तेजस्त्वादिति प्रयोगसमानयोगक्षेम एव, संविदात्मा अजडत्वादिति प्रयोग इत्यवधेयम् । आश्रयाश्रयिभावेन मिथोभिन्नत्वेन प्रसिद्धयोर्ज्ञानात्मनोरैक्यसाधनस्यात्यन्तबाधितत्वात् । औपचारिकश्चात्मशब्दप्रयोगः संविदि निष्प्रयोजनत्वान्न साधनीयः । यत्तु नित्यज्ञानस्य नित्यज्ञानाश्रयत्वस्यान्यत्रादर्शनादिति— तदपेशलम्; न ह्यन्यत्र दृष्टिरपि वस्तुसद्भावे प्रमाणम् । तथासति पृथिव्यप्तेजःप्रभृतिषु गन्धशीतोष्णस्पर्शादयोऽपि न सिद्ध्येयुः; अन्यत्रादर्शनात् । विलक्षणं ब्रह्मापि न सिद्ध्येत्, तस्य वैलक्षण्यस्यान्यत्रादर्शनादित्यलं विस्तरेण ।

यत्तु निर्गलिताहङ्कारादिबन्धस्य चिन्मात्रस्य संवित्पदेन ग्रहणे संविदात्मा अजडत्वादिति प्रयोगः स्वरस इति—तदपि न; तादृशचिन्मात्रस्याप्रसिद्धत्वादाश्रयासिद्धेः । श्रुतितः प्रसिद्धिरिति चेत्—तत्राप्यप्रसिद्धिरेव । प्रसिद्ध्यभिमाने चानुमानमेव व्यर्थम्; तत एव सर्वसिद्ध्यभिमतिसंभवात् । शुद्धसंवित् औपाधिकज्ञातृत्ववती अजडत्वादित्यनुमानपर्यवसानोत्प्रेक्षणञ्चायुक्तम्—एवं हि सति जडत्वस्य मुख्यज्ञातृत्वप्रयोजकत्वापत्तेः । अनुभूत्यतिरिक्तस्यानुभवितुः सद्भावनिषेधार्थं प्रवृत्तमिदमिष्टसिद्धिगतमनुमानं यद्यौपाधिकज्ञातृत्वसाधकं स्यात् संविदि, तावता मुख्यस्य ज्ञातुरन्यस्य निषेधो न सेत्स्यतीत्यर्थान्तराच्च ।

संविदात्मेति, आत्मा संविदिति वाऽनुमानप्रयोगे हेतुभूतमजडत्वमद्वैतसिद्ध्यभिमतमात्मत्वमेवेत्यपि न युक्तम्—संवित्पक्षकानुमाने आत्मत्वस्य

साध्यतया तस्यैव हेतुत्वायोगात् अजडत्वस्यात्मत्वरूपत्ववर्णनानुपपत्तेः। द्वितीये तु व्यतिरेकव्यनुमानमयुक्तम्, अगतिकगतित्वादिति प्राक् भवदुक्तत्वेन तद्विरोधप्रसंगात्। अतो नात्मत्वमजडत्वम्। यच्चैतदनुमानप्रयोजनवर्णनम्—सुषुप्त्याद्यवस्थास्वहंकारनाशात् आत्माऽपि नष्ट इति शङ्काशमनमेतत्कृत्यम्; आत्मा संविद्रूप इति तस्य मुक्तावपि स्थितिसिद्धिश्चेति—तन्न—संवित्स्वरूपत्वे साधितेऽपि पुनःशङ्कातादवस्थ्यात्। सुषुप्तिर्हि ज्ञानाभावः। अतः सुषुप्तौ, न मे किञ्चित् ज्ञानमासीत् इति ज्ञानाभावस्य पश्चात् प्रतिसंधानदर्शनेन आत्मनः संविद्रूपत्वे आत्मविनाश एव स्यात्; सुतरां प्रलयमोक्षयोरिति शङ्का व्यवतिष्ठते। अहमर्थनाशस्तु सुषुप्त्यादौ न लोकानुभवसिद्धः; किंत्वद्वैतिमतप्रक्रियाविशेषचिन्मात्रविज्ञेय इति नास्याः शङ्काया अपि प्रायः प्रसक्तिः। वस्तुत आत्मा नानहमर्थः, नानित्य इत्याद्यनुमानमेव तादृशशङ्काशमनं स्यात्। छान्दोग्ये, "अथातोऽहङ्कारादेशः" इत्येतदनन्तरम्, "अथात आत्मादेशः" इति श्रुतिः प्रवृत्ताऽस्ति। तदुपजीवनेनेदमनुमानमित्यप्ययुक्तम्—तत्राहङ्कारस्य वस्तुतः सत्ताया एवोपदेशावगततया आत्मनोऽहंग्रहग्राह्यत्वमबाधितं मन्तव्यमित्येव तद्वाक्यतः स्वरसतोऽवगन्तव्यतया आत्माऽहमर्थ इति स्थापन एव तच्छ्रुत्युपयोगेनाहमर्थत्वनिषेधानुमानस्य तद्विरुद्धत्वात्; संवित्त्वानुमानस्य तद्वाक्यस्य च संबन्धगन्धस्याप्यभावाच्च।

स्वरूपज्ञानस्य विषयोल्लेखाद्यवस्थाविशेषवत्त्वं मतद्वयेऽपि नास्तीति चायुक्तम्; भवन्मते सर्वस्यापि पदार्थस्यात्मभूतचैतन्यैकभास्यतया तद्विषयत्वेन चैतन्ये तदुल्लेखित्वाभावायोगात्। अन्यथा, "उपलब्धिवदनियमः" इति सूत्रभाष्य–भामतीकल्पतरुपरिमलादिबहुग्रन्थविरोधश्च। तत् पारमार्थिकमपारमार्थिकं वेत्यन्यदेतत्। अत एव, "श्रुतिशरणा हि न संविद्रूपमात्मानं विषयोल्लेखाद्यवस्थमाद्रियन्ते" इत्युक्तमप्यपास्तम्, ब्रह्मभूतचैतन्यातिरिक्तचैतन्याभावात्, चैतन्यातिरिक्तस्य च विषयभासकत्वाभावात् विशिष्टमविशिष्टं वा चैतन्यमेव विषयभासकमिति तदुल्लेखित्वस्य तत्रापलापायोगात्। अन्यथा जगदा-

ऽध्यप्रसंगात् । "विज्ञातारमरे केन विजानीयात्" इति श्रुतिर्मुक्तिदशायां विज्ञातृत्वाभावाभिप्रायेति यदुक्तम्—तत्र पृच्छ्यते—तथा सति विज्ञातृत्वेन रूपेणात्मानं केन प्रमाणेन जानीयात्; मुक्तिदशायामात्मा विज्ञातृत्वरहित एव विज्ञेय इति किं श्रुत्यर्थो मन्यते? वरमेतदपेक्षया, विज्ञातारं धर्मिणं केन विजानीयात्; ग्राहकप्रमाणाभावात् स्वरूपमपि नास्तीति शून्यवादावलम्बनम्; विज्ञातृत्वरूपविशेषणमात्रे निषेधसंकोचस्याप्रामाणिकत्वात् । किञ्चैवं सति विज्ञातारमित्यस्य विज्ञातृत्वेनेत्यर्थवर्णनादपीदं क्लिष्टम्; मुक्तिदशायामित्यध्याहारश्च दोषः। "अलं वा अरे इदं विज्ञानाय" इति सर्वज्ञानसामर्थ्ये आत्मन्युपदिश्यमाने तदनुरोधेन विज्ञातारमित्यस्य सार्वज्ञ्याश्रयमित्यर्थे स्वरसे तत्त्यागेन विज्ञातारमित्यस्य ज्ञानस्वरूपमित्यर्थवर्णनमप्ययुक्तम्, स्वस्वारस्य - वाक्यान्तरस्वारस्योभयभङ्गात् । सर्वविषयग्राहित्वमेव विज्ञातृपदार्थ इति चेत्—सोऽप्यर्थः क्लिष्ट एव; विषयग्राहिज्ञानाश्रय इत्यर्थस्यैव स्वरसत्वात् । भवता पुनरात्मनि विषयोल्लेखरूपावस्थापि नास्तीत्यपसिद्धान्तं ब्रुवता नायमर्थः सुवचः। "अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा" इति तूपात्तं वाक्यं भवन्मतप्रतिकूलमेव; तत्राविनाशिपदपौनरुक्त्यपरिहाराय अनुच्छित्तिधर्मेत्यस्य बहुव्रीहिगर्भबहुव्रीहितया अनुच्छित्तिकज्ञानरूपधर्मशालीत्यर्थस्यैव यथाप्रमाणं ग्राह्यतया धर्मभूतज्ञाननित्यत्वस्यैव सिद्धेः ।

यत्तूच्यते-केवलसंविदो मुक्तिदशायां श्रोतृत्वासंभवेऽपि बन्धदशायां तत्संभवात् मोक्षशास्त्रश्रोतृत्वमुपपन्नमिति—तन्न—श्रवणस्य वृत्तिविशेषस्याहङ्कार एवाश्रय इति स एव हि श्रोता भवेत्; न संवित् । अहंकारं प्रति च, 'त्वं मुक्तो भविष्यसी' त्युपदेष्टुमशक्यम्; मोक्षे तस्य नाशात् नष्टो भविष्यसीत्येव वाच्यम्। तेन च अहं मुच्येयेत्यनभिसंधाय नश्येयमित्येवाभिसंधातव्यम्। तथा चेयं न मुमुक्षा । अहमित्यस्याहङ्कारविशिष्टसंवित्पर्यन्तार्थकतया विशेषणनाशेऽपि विशेष्यांशसद्भावात् मोक्षभागित्वमुपपन्नमिति चेत्—एवमपि श्रोतृत्वं कस्य? संविदि वृत्त्याश्रयत्वायोगात् । अहंकारः शृणोति,

संविन्मुच्यत इत्युक्तौ अन्यमुक्त्यर्थमन्येन श्रवणं क्रियत इत्यायातम् । तदिदं स्वार्थाय वा स्वानर्थाय वेति चिन्त्यताम् । अनन्तरवादे चेदं विवेचयिष्यते । तत् सिद्धं लौकिकसंविदामेवाङ्गभञ्जनादिना आत्मत्वस्थापनमशक्यमिति ॥

अनुभाव्यैर्जनिमद्भिः सविकारैः सद्भिदैश्च सविशेषैः ।
मुख्यैर्ज्ञानैर्महितैरात्मभिरर्च्यः स मेऽस्तु परमात्मा ॥

इदम्प्रथमसंभवैरपि चिरप्ररूढैर्मतैः
अहम्प्रथमिकायुतैरिह यतः पतङ्गायितम् ।
अतः स्थिरशुभस्फुरद्रुचिमतप्रदीपप्रदः
परिष्कृतजगत्त्रयो जयति भूरि रामानुजः ॥

शुभमस्तु

---

श्रीः

## अहमर्थात्मत्वप्रसाधनम् ।

अहमहमिकाभाजो वाचो यदङ्घ्रिसरोरुह-
प्रवणमनसामर्थ्याः शुद्धाः लसन्ति मुखाम्बुजे ।
निगमशिखराचार्यः सोऽयं श्रियै स्वयमेतु मे
निरवधिदयापारावारो निधिर्हृदि संनिधिम् ॥

अहमर्थो नात्मेति वदद्भिरहमर्थ इति किं विवक्षितमिति विचार्यम् । प्रकृतिपरिणामविशेषोऽहङ्कारनामेति चेत् — इष्टमेव तस्यानात्मत्वम् । भूम्ना चाहङ्कार इत्येव तस्य प्रसिद्धिः ; न त्वहमिति । अहङ्कार इत्यस्य चाहम्बुद्धिरिति अहम्बुद्धिहेतुरिति वाऽर्थः स्यात् । कुम्भकारशब्दस्येवाहङ्कारशब्दस्य अहमर्थोत्पादक इत्यर्थश्च बाधितः । यदि चाहंकारपदविवक्षितोऽपि अहमर्थ एव स्यात्, तर्हि कारेत्यधिकं न प्रयुज्येत । तस्मादहंपदबोध्यमन्यत्,

अहङ्कारश्चान्य इति स्वरसप्रतीतमेतत् । ततश्च यत्र क्वचित् अहम्बुद्धिजनकत्वमहङ्कारद्रव्यलक्षणमित्यवगम्यते । तत्र घटपटादौ घटपटादिबुद्धिरिवाहमर्थे अहमिति बुद्धिः स्वत एव भवतीति न तदर्थं किञ्चिद्द्रव्यं परिकल्प्यमिति विमृष्टे, अनहमर्थेऽहंबुद्धिरूपविपर्ययहेतुरहङ्कार इत्यौचित्यात् सिद्ध्यत्येव । अत एव च्विप्रत्ययमन्तर्भाव्याहङ्कारशब्दं श्रीभाष्ये व्युत्पादयति । स चानहमर्थः यत्र यत्र लोके अहम्भ्रमः प्रसिद्धः स स देहादिः । तीर्थकराश्च देहेन्द्रियादावात्मबुद्धिं भ्रान्तिरूपां प्रदर्श्य प्रतिषेधन्ति । भगवान् पराशरश्च, "पिण्डः पृथक् यतः पुंसां शिरःपाण्यादिलक्षणः । ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहम्" इति देहतदवयवेष्वहंबुद्धिं निषेधन् मुख्योऽहमर्थोऽन्य इत्याह । ततः प्राक् च, "शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत । अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तलक्षणः॥"इति स्वरूपमेवात्मनि अहंशब्दं मुख्यवृत्तं दर्शयति ; नाहङ्कारे । एवञ्च, "आनात्मन्यात्मबुद्धिर्या"इत्यत्राप्यात्मबुद्धिरिति अहंबुद्धिरेव गृह्यत इत्यहमात्मनोरैक्यं पराशराभिमतमिति स्फुटम् । अहंबुद्धिशोधनेनात्मतत्त्वमुपदिशंश्चायम्, अहङ्कारतत्त्वमहंपदमुख्यार्थ इति न सूचनयाऽपि ज्ञापयतीति स्थिते कथमहंशब्द्यः स्यादहङ्कारः । अहङ्कार इति किञ्चित्तत्त्वमस्तीत्येव लोको न बुद्ध्यते । देहेन्द्रियमनःप्राणेषु अहंबुद्धिरेव लोकनिरूढा । सा भ्रान्तिः । आत्मन्यहंबुद्धिश्च शास्त्रव्युत्पादिता ; सा प्रमा । अत्यन्ताप्रसिद्धे अहङ्कारतत्त्वे चाहंबुद्धिर्न लोकसिद्धा ; न वा शास्त्रशिक्षिता ; किन्तु निर्विशेषात्मवादिकल्पितेत्येव तत्त्वम् । कणादश्च महर्षिः, "अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः" इति आत्मन्यहंत्वं प्रत्यक्षादिप्रमाणसिद्धं प्रतिपादयति । सांख्यवेदान्तिमात्रप्रसिद्धमहङ्कारतत्त्वं परैस्तीर्थकरैः नेष्यतेऽपि । तैश्चाहंबुद्धिः भ्रमरूपा प्रमारूपा चान्यत्रैव स्थापनीयेति सर्वानुभवसुदूरमेवेदमहङ्कारेऽहंत्वकल्पनम् ॥

कश्चायमहंकारः ? प्रकृतिजन्यमहत्तत्त्वजन्यः सांख्यप्रसिद्ध इति चेत्—न—तादृशसृष्टिक्रमस्य भवद्भिरनुक्तेः । उक्तावपि स प्रतिजीवं भिन्नो न

भवति । महत्तत्त्वमहङ्कारतत्त्वञ्चैकमेव खलूक्तम् । सात्त्विकराजसतामसभेदेन त्रैविध्ये इष्टेपि जीवभेदानुविधाय्यनेकाहङ्कारतत्त्वोत्पत्तिर्नेष्यते । न च तस्याहङ्कारस्य प्रतिसुषुप्ति लयो भवितुमर्हति ; एकत्र पुरुषे लये अन्येषामपि तदभावप्रसंगात् । अत एव तदेव प्रकृतिजन्य-महमर्थ इति भवदभिहितमयुक्तम् । भवद्भिश्च अहंत्वस्य शुद्धात्मनि स्वीकारे सविशेषत्वापत्तिः । आत्मन एकतया जीवान्तरेष्वपि अहमिति व्यवहारापत्तिः ; त्वमित्यादिव्यवहारानापत्तिः । सांख्यमते वस्तुतो जीवानां भिन्नत्वेन तन्मते जीवानामेवाहमर्थत्वे तन्मते निर्विकारत्वेऽपि जीवानां निर्वि-शेषत्वे प्रमाणाभावेन मुख्याहमर्थत्वेऽनुपपत्त्यभावेऽपि अद्वैतपक्षे दोषस्य स्थिति-रिति नूनं परिशील्य तद्भिया भवद्भिरात्मातिरिक्त एव क्वचिदहंत्वमारोपितम् । तत्र देहादौ तत्स्वीकारे बहुप्रमाणक्षोभः स्यादिति अहङ्कारतत्त्वं तथात्वेन वर्णि-तम् । एवमपि महज्जन्याहङ्कारतत्त्वस्याप्येकतया तु जीवान्तरेऽप्यहमिति बुद्धिः स्यात् ; जीवभेद एव न सिद्ध्येत् ; आत्मनः, तदुपाधेरहङ्कारस्य चैकत्वादि-ति विभाव्यम् ।

अथान्तःकरणमहङ्कार इति चेत्—अविद्यापरिणामभूतभूतपञ्चकजन्यं तदिष्टं परिभाषायाम् । तच्च न मनोऽपेक्ष्यान्यत् भवितुमर्हति । अस्तु तथैव ; पैङ्गिरहस्यब्राह्मणे, "तयोरन्यः पिप्पलं स्वाद्वत्ति इति सत्त्वम्, अनश्नन् अन्यो अभिचाकशीतीति ज्ञः" इति मनःपर्यायसत्त्वशब्दप्रयोगादिति चेन्न— पैङ्गिरहस्ये सत्त्वशब्देन जन्तुपर्यायेण जीव उच्यते, "ज्ञ" इति च, "ज्ञाज्ञौ द्वावजौ ईशनीशौ" इति श्रुतिप्रसिद्धः परमात्मेति अत्त्रधिकरणव्याख्यासु प्रपञ्चितत्वेन तस्य साक्षित्वायोगात् । इन्द्रियैरन्यैः सह सात्त्विकाहंकारजन्यतया श्रीविष्णुपुराणादिषु प्रसिद्धस्य मनसः पञ्चभूतोपादानकत्वायोगात् । मरणादि-ष्वप्यनुवर्तमानस्य मनसः सुषुप्तावपि प्रलीनस्याहङ्कारस्य चैक्यायोगात् । नूनमेव प्रलीनत्व—प्रतिजीवभिन्नत्वनिर्वाहार्थमेव भूतपञ्चकजन्यमन्तःकरणमहङ्कारापर-पर्यायमिष्यत इव परिभाषादौ ।

महत्तत्त्वमेव वा तज्जन्यमेव वा भवन्मतेऽहङ्कार इति च तत्रतत्रावगम्यते। देहात्मवादिभिः आमरणानुवर्तिनि देहे अहन्त्वमभिमन्यते; भवद्भिस्तु प्रतिसुषुप्ति-लीनमेकं भूतपञ्चकजन्यमप्रामाणिकं परिकल्प्य तत्राहंत्वकल्पनया दिनतद्देशभेदेनाप्यहमर्थे भेद इष्यत इति चित्रमेतत्। एवंस्थिते आमोक्षस्थायी जीव एक इति पक्षोऽपि कथं स्थास्यति? अविद्यापरिणामस्याहङ्कारस्य सुषुप्तौ लयेऽपि कारणात्मना सोऽस्तीति चेत्— किं तत् कारणम्? अविद्येति चेत्—ननु पञ्चभूतजन्यत्वं खल्वन्तःकरणस्याभिहितम्। तेषु चाप्रलीनेषु सत्सु किमित्यविद्यापर्यन्तधावनम्? नूनं भूतजीववाद एव भङ्ग्यन्तरेणोपन्यस्तं भवति। अहङ्कारगतानां वासनादीनामविद्यायां सद्भावे, अविद्याया अंशभेदस्वीकारेण एकजीवीयानां जीवान्तरेष्वसंकरवर्णने चाविद्यांशा एवाहङ्कारपदाभिधेया भवन्तु; कृतं परिणामान्तरकल्पनया, प्रतिसुषुप्ति तद्विलयकल्पनया च। सुषुप्तौ तल्लये प्रमाणमस्तीति चेत्—मातापित्रादिसर्ववस्त्वभावोऽपि सुषुप्तं प्रति श्रुतौ श्राव्यत एव। तेषां स्थितानामपि तदा स्वकीयत्वानुसन्धानविरहमात्रेण तथा व्यवहार इति चेत्—सोऽयमहङ्कारविषयेऽपि समः समाधिः—सुषुप्तिकाले जीवस्य, नरोऽहं देवदत्तोऽहमिति जागरस्वप्नदशासमानयोगक्षेमाहङ्काराधीनाहंबुद्धितत्कार्याभावात् अहंकारो लीन इति वाचोयुक्तिरिति। अपिचाविद्यांशानां देशभेदेन विभिन्नत्वात् सञ्चरतां जीवानामहंबुद्धिर्न कश्चिदविद्यांशं विशिष्य विषयीकुर्यादिति प्रतिक्षणजीवभेदोऽपि प्राप्नोति। वस्तुतः उत्क्रान्त्यधिकरणभाष्ये तद्गुणसूत्रे अणुपरिमाणा बुद्धिरिति, यावदात्मसूत्रे अनादिबुद्धिसंबन्धः यावन्मोक्षभावीति, पुंस्त्वसूत्रे सुषुप्तिप्रलययोरपि शक्त्यात्मना बुद्धिरवतिष्ठत इति, नित्योपलब्धिसूत्रे आत्मनः उपाधिभूतमन्तःकरणं मनोबुद्धिर्विज्ञानं चित्तमिति चानेकधा व्यपदिश्यत इति च भाषितमिति सुषुप्तिप्रलयानुस्यूतस्यैवोपाधित्वोक्त्या स उपाधिरेवाहंबुद्धिविषयत्वेन भवद्भिरभिमन्तुमर्ह इति युक्तं तस्याविद्यानतिरेकमेवाभिमत्याविद्यैवाहमर्थ इति सैवाहङ्कारशब्दवाच्याऽपीति। एवञ्च सुषुप्तौ लयवर्णनं तद्व्यापारलयाभिप्रायं गौणमेव। जागरावस्थाभावि-

भुक्तपीताप्यायनभावितसंकल्पादिव्यापाराश्रयत्वस्य तदानीमभावात् । अस्तु काममविद्यातिरेकः, अथापीमा अपि बुद्धयः प्रतिजीवं भिन्ना अनादयः । अहमज्ञ इत्यहमर्थस्य तद्विशेषणस्याज्ञानस्य चाविद्यापरपर्यायस्य भेदप्रतीतेश्च । बुद्धिरियमपि मिथ्यात्वात् तत्त्वज्ञानबाध्या भवतीत्येवं भवन्मतं यदि परिष्क्रियते, तर्हि प्रमाणशतविरोधेऽपि युक्तिविरोधो नातीव भवेत् । सुषुप्त्यादौ लयवर्णनम्, सुखमहमस्वाप्समिति सुषुप्तिकालस्थितत्वेनानुसंहितस्याहमर्थस्य तदानीमभाववचनम्, एवमाद्यन्यच्च चार्वाकमतमपेक्ष्याप्यतिफल्गुत्वं भवन्मतस्यापादयतीत्यलमनेन ॥

यत्तु—सुखमहमस्वाप्समिति सुप्तोत्थितस्य परामर्शः तदा सुखभानमज्ञानभानञ्च विना नोपपद्यत इति—तन्न—अस्वाप्समिति प्रतीतस्यातीतकालस्य तदानीमभातस्याप्यनुमानवत् स्वापस्याप्यनुमानसंभवात् । पश्चात् चत्वरस्थतया गजप्रतिसन्धानाभावेन हेतुना प्रातश्चत्वरे गजाभावानुमानवत् । यत्तु—अव्यभिचरितप्रकाशसत्ताकत्वात् सुखदुःखाहङ्कारादीनाम्, सुषुप्तौ अहंकाराभानं तदभावादेवेत्यवसीयत इति—तदपि न—प्रलयेऽपि सूक्ष्मरूपेणाभ्युपगतस्याहमर्थस्य अव्यभिचरितप्रकाशसत्ताकत्वे प्रमाणाभावात् बाह्यान्तरेन्द्रियाधीनवृत्तिकालमात्र एवाहंभानमिति स्वीकारे भवन्मते दोषाभावात । सुषुप्तिप्राक्कालस्थिताहंव्यक्तेः ऊर्ध्वकालिकव्यक्तेश्च भिन्नत्वे, पूर्वस्मिन् दिने इदमहमकरवमिति उत्तरदिनवर्तिना पूर्वदिनातीतव्यक्तेः स्वभिन्नायाः अहंत्वेन ग्रहणायोगाच्च । तद्व्यक्तेरपि प्रतिसंधातृगताहंत्वाश्रयत्वे सुषुप्तिकालिकसूक्ष्मांशस्यापि अहंत्वाश्रयत्वसंभवेनाहमर्थाभावकथनस्यायुक्तत्वाच्च । क्षणिकविज्ञानसन्ततिरहमर्थ इति बौद्धमतवासनामूलश्चायं सुषुप्तिजागरभेदभिन्नस्थिरबुद्धिसन्ततिरहमर्थ इत्यद्वैतिवादः । अहमर्थस्य स्वयम्प्रकाशत्वसिद्धौ सुषुप्तौ भानमपरिहार्यम् । अन्यथा पुनस्तार्किकमीमांसकादिसरण्या, स्थितस्यैव तस्याऽऽनुमानिकी सिद्धिरिति च व्यक्तं शतदूषण्याम् ।

यत्तु—नाहंकारमात्रमहमर्थः; किन्तु चिदचिद्ग्रन्थिरूप इति—तत्र किं प्रमाणम्? अहंकारमात्रग्रहणेऽपि तत्राध्यासवशात् चैतन्यस्य कर्तृत्वभोक्तृत्वादेश्च प्रतीयमानस्योपपन्नत्वात्। अहमिति बुद्ध्यवच्छिन्नचैतन्यपर्यन्तग्रहणेऽपि चैतन्ये, अहंकरोमीति चैतन्याश्रयत्वस्य दुर्वचत्वात्; स्वाश्रयत्वायोगात्। कर्तृत्वादिकं तु तदा क्लिष्टमारोपयितव्यम्; अहङ्कारे तु साक्षादन्वितमिति सौकर्याच्च। तर्हि अहं ब्रह्मास्मीत्यस्य कथं निर्वाह इति चेत्—सर्वं खल्विदं ब्रह्मेति सर्वतादात्म्यस्य कथं निर्वाहः। बाधायां सामानाधिकरण्यमिति चेत्—तुल्यम्। वर्णितं चेदं प्रागेव तत्त्वमसीत्यत्र। एवञ्च चैतन्यरूपात्मप्रतिफलनाभावेऽहंकारस्य कर्तृत्वादि सर्वं नोपपद्यत इति तदर्थं चैतन्यरूपात्मस्वीकारेऽपि स सर्वदा निर्लेप एव। न बध्यते; न च मुच्यते। अस्तु वा तत्र बुद्धितत्प्रतिफलनमेव बन्धः, तदभावश्च मोक्ष इति। सर्वथा अहंशब्दस्य चिदचिद्ग्रन्थ्यर्थकत्वं न कल्पनीयम्॥

तर्हि 'तत्त्वज्ञानेनाहं मुक्तो भविष्यामि' इत्यभिसन्धिः कथम्? अहमर्थस्य मुक्तौ नङ्क्ष्यत्तया मुक्तिवर्णनायोगादिति चेत्—अत एवाहंशब्दोऽहंकारविलक्षणस्यात्मनो वाचक इति ब्रूमः। एवमपि चिदचिद्ग्रन्थिरूपत्वमहमर्थस्य नापेक्षितम्। क्वचित् अचिद्रूपविशेषणप्रतीतिश्चार्थात् सिद्ध्यति, "आत्मा वा इद मेक एवाग्र आसीत्" इत्यादौ कार्यान्यथानुपपत्त्या अविद्याशबलत्वादिवत्। अहंकारविशिष्टचिदर्थकत्वेऽपि, "अहं गौरो ब्राह्मणो गच्छामि" इत्यादौ अर्थादेव देहरूपविशेषणलाभस्य वक्तव्यत्वात्। एकतरार्थस्वीकारेण निर्वाहे सम्भवति गौरवादप्युभयग्रन्थेरर्थत्वं न युक्तम्। अवश्यञ्चात्ममात्रपरत्वमेषितव्यम्। "आत्मानं चेत् विजानीयात् अयमस्मीति पूरुषः" इत्यत्र, अस्मीत्यस्य कर्ता अहमर्थः खल्वात्मैव; न विशिष्टः; अतत्त्वज्ञानत्वापत्तेः। अत्र अयमस्मीत्येव पाठः; न तु भवदुक्तरीत्या अहमस्मीत्यन्यदेतत्। एवञ्च सुषुप्तौ, अहमज्ञः, मामन्यञ्च न जानामीत्यत्रापि बुद्धिविशिष्टस्याहमर्थत्वे विशेषणांशे बुद्धावज्ञानाश्रयत्वासंभवेन शुद्धपरत्वं स्वरसम्। अहंशब्दस्याहं-

कारपरत्वमिष्टा तदा कारणात्मना तत्सत्त्ववर्णनमयुक्तम् । कारणात्मनेत्येतद्बोधकपदाभावे तथा प्रयोगस्यासाधुत्वात् । अन्यथा प्रलयेऽपि घटादयः आसन्निति व्यवहारः स्यात् । पदार्थानां पूर्वोत्तरकालयोर्यादृशी अवस्था, मध्येऽपि तादृश्येवावस्थेति नियमस्याभावेऽपि प्रागूर्ध्वञ्च स्थूले देवदत्ते कार्श्यदशायामपि देवदत्तशब्दवाच्यत्ववत् अहंकारतत्त्वस्य सुषुप्तौ स्थौल्याभावेऽप्यहंशब्दवाच्यत्वस्य संभवात् स्थूलस्यैवाहंत्वमिति कल्पनं निर्मूलमेव । अहमर्थभानं तदाऽप्यस्ति न वेत्यन्यदेतत् । अहमर्थस्यास्वप्रकाशत्वपक्षे सामग्रीसद्भावासद्भावनिबन्धनत्वात् प्रकाशाप्रकाशयोः । कटकमुकुटादिषु सर्वत्र हिरण्यव्यवहारवत् कार्यकारणभावापन्नसन्ततौ अहमिति व्यवहारस्य युक्तत्वात् । कारणात्मना विद्यमानस्याप्यहंकारस्य संस्काराद्याश्रयत्वाङ्गीकारे तस्य कारणस्याविद्यात्मकस्य सर्वसाधारण्यात् तदविद्यापरिणामभूताहंकारान्तरेऽपि तद्वासनासंक्रमः स्यादिति चैत्रीयवासनाकार्यप्राप्तिः मैत्रेऽपि स्यात् । अविद्याया-मंशभेदकल्पनया कथञ्चित् परिहारान्वेषणे तु तस्यांशस्यैव सर्वकालानुस्यूतस्याहमर्थत्वमिति स्थूलाहंकारतत्त्वकल्पनं निर्मूलमेव स्यादिति च भाव्यम् ॥

यत्तु — विवर्तोपादानोपादेययोरैक्यं न प्रातिभासिकमिति — तन्न — चैतन्यस्य ब्रह्मण एव विवर्तोपादानत्वात् उपादेयानां जडत्वाभिमतानां तदैक्यस्य परीक्षणदशायामेव बाधिततया प्रातिभासिकत्वावश्यंभावात् । विवर्तस्य ब्रह्मतादात्म्ये तादात्म्यघटकमैक्यं न प्रातिभासिकम्; भेदस्तु प्रातिभासिक इति च विपरीतम् । जडाजडयोर्भेदस्यैवाप्रातिभासिकत्वात्, ऐक्यस्यैव प्रातिभासिकत्वात् ॥ यच्च—सुखाविद्याचैतन्यानां सुषुप्तौ प्रकाशे न विप्रतिपत्तिः—किन्तु अहङ्कारप्रकाश एव सेति—तन्न; सुखप्रकाशेऽपि हि विप्रतिपत्तिः तार्किकादिभिः सह विवादेऽस्त्येव । आवयोस्तत्र विप्रतिपत्त्यभावेऽपि अविद्याचैतन्ययोः तदतिरिक्तयोः प्रकाशेऽस्त्येव विप्रतिपत्तिः । भावरूपाज्ञानानङ्गीकारात् अज्ञानप्रकाशो न तदा । सुखातिरिक्ते चैतन्ये तत्प्रकाशे च तदा न प्रमाणम् । सुखचैतन्ययोरैक्यस्वीकारात् न विप्रतिपत्तिरिति चेत्—तर्हि सुखाविद्याचैतन्याना-

मिति पृथक्कृत्य लेखनमयुक्तम्। न हि सुखत्वेनेव चैतन्यत्वेन रूपेणान्येनापि तदा प्रकाशत इतीष्यते, येन तथा लेखनस्य कथञ्चित् सार्थक्यं स्यात्। अहंकारप्रकाशे विप्रतिपत्तिरित्यपि शोधने सुखस्याहमर्थत्वे विप्रतिपत्तिरित्यर्थ एव पर्यवसानम्। प्रकृतिपरिणामस्याहंकारतत्त्वस्य जागरादिदशायामप्यप्रकाशस्याविशिष्टत्वात् आत्मप्रकाशस्यैव स्वीकारात्। अतो जागरदशायां योऽहंशब्दार्थो भासते, सुषुप्तावपि स भासत एवेत्यस्माभिरुक्तया जागरदशाभानमेव कस्येत्येव विचार्यम्। तत्रात्मनो भानमुभयोर्न विप्रतिपन्नमिति तदधिकस्याचिदंशस्याप्यहमर्थकोटिप्रवेशे न प्रमाणम्। तादृशाचिदंशराहित्येऽपि मुक्तेश्वरादिव्यवहारेऽहंपदप्रयोगस्य श्रुतिस्मृतिसिद्धत्वात् चिदंशमात्रे शक्तिसंभवे विशेषणान्तरविशिष्टे शक्तिकल्पनायां गौरवाच्चेति वयं ब्रूमः। भवन्मते आत्मन एकत्वात् अहंशब्दस्य तन्मात्रार्थकत्वे चैत्रेण मैत्रोऽप्यहमिति व्यवह्रियतामित्यापत्तिवारणार्थं विशेषणं प्रवेशनीयमापतति। तदापि सुषुप्तिसाधारण्याय स्थूलसूक्ष्मसाधारणाहंकारांशस्याहमर्थकोटिप्रवेशसंभवे स्थूलमात्रे नियन्त्रणमयुक्तमिति च ब्रूमः। एवमपि सांऽशः सुषुप्तौ न प्रकाशत इति चेत्—जागरेऽपि न प्रकाशत एव। देहात्मनोः प्रकाशस्यैवानुभवात्। कर्तृत्वभोक्तृत्वाद्याश्रयतया तत्प्रकाश एष्टव्यो जागर इति चेत्—सुषुप्तौ अज्ञानभानाङ्गीकारे परव्यावर्तनेन स्वस्यैव तदज्ञानभानं तदेति नियमार्थं अहमस्वाप्समिति चैत्रप्रयोगस्य मैत्रविषयकत्ववारणार्थं सुषुप्त्याश्रयचैतन्यावच्छेदकतया तद्भानमपि स्वीकार्यं भवेत्। अज्ञानं ज्ञानाभावः तदा न प्रकाशत इति स्वीकारेऽहंकारतत्त्वस्य प्रकाशानावश्यकत्वेऽपि तद्विलीनत्वं न कल्प्यम्। ज्ञानाभावावच्छेदकतयापि तदा तदावश्यकत्वात्। तत्र भातं च सुखं न वैषयिकसुखम्। सुषुप्तौ तदप्रसक्तेः। अतः तदाधारतया अहमर्थप्रकाशो यद्यपि नादर्तव्यः—अथापि आत्मरूपसुखमात्रप्रकाशे सुखं चैत्रोऽस्वाप्सीत् इत्यप्रयुज्य सुखमहमस्वाप्समिति प्रयोगः सुखस्येवाहन्त्वस्यापि तथा प्रकाशमावेदयति। तत् यद्यहंत्वमात्मनिष्ठमेव; सिद्धस्तर्हि वादार्थः। यद्यहंकारनिष्ठम्, तर्ह्यहंकार-

प्रकाशः सुषुप्तावेषितव्य इति । यदा तु सुषुप्तिर्निद्राऽपि वृत्तिविशेष इतीष्यते, तदा आविद्यकवृत्तित्वेन स्वीकृता सा अन्तःकरणसूक्ष्मांशवृत्तिरेवेति स्थूलसूक्ष्मसाधारण्यमेवाहन्त्वस्यावश्यकमिति प्रागुक्ततया तादृशवृत्त्याश्रयाहमर्थभानं प्राप्तमिति न तदपलापो युज्यते । किञ्चाविद्यावृत्तिविषयत्वं किं सुखरूपस्यात्मनः परम्, उताहंत्वाद्यनुबन्धेन । आद्ये, तत्त्वमसिवाक्याधीनाखण्डाकारवृत्तिसाम्यात् तयैव वृत्त्या सर्वप्रपञ्चनिवृत्तिरिति सुषुप्तो मुक्त एव स्यात् । अन्त्ये सिद्धमहङ्कारभानम् ॥

यत्तूक्तम्—प्रतिसन्धानान्यथानुपपत्त्या सुषुप्तावहमर्थप्रकाशकल्पनमितीदं न संभवदुक्तिकम् । सुखमहमस्वाप्समिति ज्ञानं हि नात्मांशे प्रतिसन्धानम् । असन्निकृष्टस्यानुभूतस्य च खलु स्मरणं नाम । मतद्वयेऽपि अवस्थात्रयेऽप्यात्मनः प्रकाशमानत्वान्न प्रतिसन्धीयमानतेति—सत्यमिदं शोधनीयम् । सुषुप्तौ वृत्तिराविद्यकी भवतीतिपक्षे तद्विशिष्टतया प्रतीतस्य पाश्चात्यं प्रतिसन्धानं नायुक्तम् । सिद्धान्तलेशसंग्रहेऽपि साक्षिनिरूपणावसरे उपपादितमिदं प्रतिसंधानम् । अनन्तरवादे च तादात्विकवृत्तिपक्षो दर्शयिष्यते । एवं धर्मभूतज्ञानमेव सुखरूपात्मग्राहि तदेत्येकदेशिमते आचार्यप्रदर्शितेऽपि तादृशधर्मभूतज्ञानविशिष्टात्मप्रतिसन्धानं नायुक्तम् । यदा सुखरूपात्ममात्रस्वयंप्रकाशस्तदेति उभयसंमतः पक्षः, तदा सुखमहमस्वाप्समित्यस्य कथं प्रतिसन्धानतेति तु परिशीलनीयम् ।

तत्रान्ततो निष्कृष्टं संगृह्य ब्रूमः । स्वापकाले स्वापस्य कालस्य चाननुभूतत्वान्न तदंशे प्रतिसन्धानता । स्वापस्यैवाननुभूतत्वे स्वापगतं सुखत्वमित्यनुभवाभावात् न स्वापगतसुखत्वांशेऽपि प्रतिसन्धानता । अतः सुखरूपात्मांशे प्रतिसन्धानत्वं वक्तव्यम् । तच्च न भवति । अननुभूयमानस्य हि प्रतिसन्धानम् । आत्मा चानुभूयत एव सर्वदा स्वयंप्रकाशत्वात् । न च कालाद्यविषयकः प्रकाशः स्मरणवहो दृष्टः । आत्मनः स्वयंप्रकाशश्च न कालगोचर

इति न तस्य स्मरणाधायकता। यदि जानामीति धर्मभूतज्ञानस्य कालपरिच्छिन्नतया प्रतीतिवत् आत्मनोऽपि कालावच्छिन्नतया भानं स्यात्—तर्हि सुषुप्तिकालविशिष्टस्य प्राग्भातस्यात्मनः पश्चात् प्रतिसंधानमिति कल्प्येत। तत्तु न; आत्मतत्त्वस्य निर्विषयकतया कालभासकत्वायोगाच्च। शुद्धात्मांशस्तु सर्वदैव प्रकाशमानो न स्मर्यमाणदशामापद्यत इति। एवमपि सुखमहमस्वाप्समित्यस्य प्रत्यवमर्शरूपतायां भवन्मते विवादाभावात् अस्मद्भाष्ये तदंश सूचनपूर्वकम्, "एवं हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति। अनेन प्रत्यवमर्शेन" इत्यादिकं भाषितम्। अत्रायमाशयः—स्वापकाले अहंत्वसुखत्वविशिष्टं किञ्चिदासीदिति एतत्प्रत्यवमर्शात् ज्ञायते। स्वापे सुखत्वस्यात्रावगमेऽपि स्वापस्य ज्ञानाभावस्य सुखत्वबाधात्, इदानीं यथा सुखं भवति, तथा अस्वाप्समिति स्वापे सुखकरत्वरूपमुखत्वाङ्गीकारे तादात्विकसुखप्रतीतिस्वारस्यभङ्गापत्तेः सुखमस्वाप्समित्यस्य सुखसमकालिकस्वापवानहमासमित्येवार्थ इति स्वापकाले सुखस्थितिप्रतीतौ वैषयिकसुखस्य तदा प्रसक्त्यभावात् आत्मरूपसुखमेव परिशेषसिद्धमिति तदा सुखत्वाहंत्वविशिष्टवस्तुसिद्धिः। अस्य प्रत्यवमर्शता त्वेवम्—

स्वापपूर्वकालभवानुभवप्रत्यभिज्ञयाऽऽत्मनः पूर्वकालस्थत्वेऽनुमिते, मध्यकालविषयानुभवप्रतिसन्धानाभावेन स्वापे चानुमिते, तदुभयं क्रोडीकृत्य अहमस्वाप्समिति पुनरनुसंधत्ते। स्वस्मिन् स्वानुकूल्यस्य च निर्विवादतया जागरे स्वयंप्रकाशमालक्ष्य च सुषुप्तावपि सुखांशस्वप्रकाशस्थितिमनुमिनोति। एवमनुमितस्य चानुकूल्यप्रकाशस्य स्वापस्य च समकालिकतया स्वापविशेषणतया सुखमहमस्वाप्समिति परामृशति। तथा च सर्वमिदमनुमितप्रतिसन्धानमिति सुवचम्। अत्र च प्रतिसन्धाने अनुभूतित्वविशिष्टतयाऽऽत्मनो भानाभावात् अहन्त्वविशिष्टतयैव भानात् अनुभूतित्वविशिष्टं नानुमितम्, किन्तु अहन्त्वविशिष्टमेवेति च स्वापे अहंभानसाधकमिदम्। सुषुप्तावहमर्थसत्त्वमेव प्रत्यवमर्शमुख्यावगम्यम्। भानाभानादिकं तु वस्तुस्वभावप्रमाणायत्तमित्यादि भाव्यम्। सन्निकृष्टस्यानुभूयमानस्य च वस्तुनः तावन्मात्रविषयकप्रत्यवमर्शायोगेऽपि तदधिकगृहीतचरयत्कि-

श्चिदाकारविशिष्टतया प्रत्यवमर्शो नानुपपन्नः। प्रथम ग्रहणश्चानुमानादिनेत्युक्तम्। अतो न किञ्चिदनुपपन्नमित्युत्पश्यामः। भवदीयग्रन्थप्रतिपादितस्य प्रत्यवमर्शपक्षस्य तार्किकादिभिरिव मा निरासो नाम भूत् आत्मस्वयंप्रकाशतायाः अस्माकमपीष्टत्वादि त्याशयेन श्रीभाष्ये सुखमहमस्वाप्समिति प्रत्यवमर्शाप्रतिषेध इति शोधनमिदमु-भयैरप्यादर्तव्यमेव यावत् वृत्तिर्धर्मभूतज्ञानविकासो वा तदा नेष्यत इति।

यदि च स्थूलोऽहङ्कार एवाहमर्थः स्यात्, तर्हि स्वापकाले न किञ्चि-दज्ञासिषमिति ज्ञानाभावमिव, नाहमभूवमिति स्वाभावमपि गृह्णीयात्। अवि-द्याविशिष्टात्मनः स्थितत्वेऽपि स्थूलाहमर्थविशिष्टात्माभावात्। तस्मात् तादा-त्विकाविद्यांशस्यापि भवद्भिरहमर्थत्वमेष्टव्यम्। अस्तु तावदिदम्। श्रीभाष्यादौ अहमिति आत्मप्रकाशस्येष्टत्वात् मामन्यच्च नाज्ञासिषमिति कथं प्रबुद्धः प्रति-पद्यत इति चेत्—जागरे यथारूपं मां जानामि, चैत्रं गौरं ब्राह्मणमन्यानेका-रविशिष्टश्च, न तथा तदाऽहमज्ञासिषमिति तदर्थस्यानुभवसिद्धतया अनुपप-त्यभावात्॥

अन्तःकरणस्यैवाहमर्थत्वे च मोक्षार्थप्रयत्नो दुर्घटः। न हि अहं नष्टः स्यामिति प्रयतते। किन्तु अहं मुक्तः स्यामित्युक्तोपरि यदुच्यते—अहंपदं शुद्धान्तःकरणपरं नेष्यते; किन्तु तदवच्छिन्नचैतन्यपरम्। तत्र विशेषणांश-नाशेऽपि विशेष्यांशस्य मुक्तिकाले स्थास्यत्तया मुक्तः स्यामित्युपपन्नमिति—तत्र ब्रूमः। बद्धोऽहं मुक्तो भविष्यामीति प्रयत्नाश्रयत्वं कस्य? अन्तःकरणस्य वा चैतन्यस्य वा? आद्ये यः प्रयतते, न स मुक्तो भविष्यति। किन्तु नङ्क्ष्यत्येव। नान्त्यः; चैतन्ये प्रयत्नाश्रयत्वायोगात्। अन्तःकरणतादात्म्या-ध्यासात् प्रयत्नाश्रयत्वाध्यास इति चेत्—नन्वध्यासोऽपि काचिद्वृत्तिरेव। तदाश्रयत्वमपि चैतन्ये बाधितमेव। अहङ्कारः स्वयं चैतन्यं तादात्म्यारोपात् प्रयत्नाश्रयतया मन्यत इति चेत्—ईदृशमतिरूपबन्धाश्रयत्वं तर्हि अन्तः-करणस्यैव, न चैतन्यस्य। तादृशविपरीतमतिविषयत्वं चैतन्ये स्थितं तस्य बन्धः इति चेत्—नैतत्। न हि राजानमृजुं कश्चित् कुटिलत्वेन गृह्णातीति

तद्विषयत्वमात्रेण तस्य दुष्टत्वम्, नास्तिका ईश्वरमनीश्वरं मन्यन्त इत्येतावता न हीश्वरस्य किञ्चिद्धीयते। अतस्तन्निवृत्तिरूपमुक्त्यर्थः प्रयत्नो व्यर्थः। अहङ्कारः स्वस्मिन् चैतन्यतादात्म्याध्यासाधीनसर्वविकारपरिहारार्थमेव प्रयतत इति चेत्—तथा प्रयतमानोऽयमन्ततः स्वनाशमेव किलापादयति; न स्वस्य मुक्तिम्। मोक्षो हि नाम, किञ्चिद्विशिष्टस्य तद्विशेषणराहित्येन स्थितिः। चैतन्यं विपरीताध्यासविषयत्वात् मोक्तुमहंकारः प्रयतत इति चेत्—तर्हि चैतन्यस्य स्वविषये प्रयत्नाभावात कथम, "राज्यकामस्य निर्मलीकरणेन सर्वाङ्गालङ्करणमेवेदम्; न शिरश्छेद" इत्युच्यते। न हि राजस्थानापन्नस्य चैतन्यस्य स्वालङ्करणार्थः प्रयत्नः कश्चित्। प्रयतमानस्याहङ्कारस्य स्वरूपनाश एव भवतीति तत् शिरच्छेदादधिकमेवेति। वरं तु सांख्यमतम्, यत्र पुरुषस्य बन्धमोक्षयोरुपपादनायोगेऽपि बुद्धेः स्वरूपेण कारणात्मना च पश्चादवस्थानात् "बध्यते मुच्यते च नानाश्रया प्रकृतिः" इति वक्तुं शक्यते। परं तु एकस्मात् चैतन्यात् प्राप्तविवेकायां बुद्धौ सकृदेव सर्वमुक्तिः स्यादिति शंका शिष्यते। तदेव मतम्, "विप्रतिषेधाच्चासमञ्जसम्" इति प्रतिक्षिप्तं भगवता बादरायणेनेति स्थिते का कथा भवन्मतस्य? अतो निर्विशेषे चैतन्ये कस्यापि व्यापारस्य दुर्वचतया अहंपदस्य चैतन्यपर्यन्तार्थपरत्वेऽपि न तस्य मुमुक्षा उपपादिता भविष्यति॥

एतेन, "ज्ञातृत्वकर्तृत्वाध्यासस्य युष्मत्प्रत्ययगोचराहङ्कारादि धर्माध्यासस्य च निवर्तनार्थं........मोक्षशास्त्राणि प्रवृत्तानि" इत्युक्तमपि निरस्तम्। अहंकारनिष्ठज्ञातृत्वादेर्धर्मस्य चैतन्यरूपे आत्मन्यध्यासः किंनिष्ठः। न तावत् चैतन्ये, ज्ञातृत्वघटकज्ञानस्येवाध्यासस्यापि वृत्तिविशेषतया अहंकारनिष्ठत्वात्। अध्यासस्याहंकारनिष्ठत्वे तु, तत्सत्त्वे चैतन्यस्य किमनिष्टमायातम्. येन तन्निवर्तने प्रयत्नः क्रियते। अहंकारः स्वयमध्यासं स्वगतं निवर्तयितुं यतत इति चेत—अध्यासनिवृत्त्यर्थो यत्नः स्वनाशपर्यवसायी किल भवति। तत्कथं स मुमुक्षुरित्युच्यते। युष्मत्प्रत्ययगोचराहङ्कारेत्यपि न सत्। अहंशब्द

मुख्यार्थो यद्यहंकारः, कथं स युष्मदर्थः। चिदचिद्ग्रन्थिरेवाहमर्थः, न केवलोऽहंकार इति चेत्—ग्रन्थिरिति किं तदुभयं विवक्षितम्, उत एकविशिष्टापरम्? आद्ये किं तत्र प्रवृत्तिनिमित्तम्। यद्यहङ्कारत्वं चैतन्यत्वं च, तदनुभवातीतम्, एवमुभयत्वस्य प्रवृत्तिनिमित्तत्वेऽपि भेदग्रहस्य सिद्धत्वात् चैतन्याहङ्कारभेदाग्रहमूलकस्याध्यासस्य का प्रसक्तिः? अन्त्येऽपि विनिगमनाविरहादर्थद्वयापत्तिः। विशेष्यविशेषणभावश्च केन संबन्धेन? येन केनचित् भेदसंबन्धेन चेत्—तर्हि भेदग्रहसत्त्वान्नाध्यासप्रसक्तिः। अभेदसंबन्धेन चेत्—तर्हि अहंकारवृत्तिधर्मेण चैतन्यभानं वा, चैतन्यधर्मविशिष्टतया अहङ्कारभानं वा विवक्षितं स्यात्। नान्त्यः, चैतन्यवृत्तिधर्माप्रसक्तेः। चैतन्यविशिष्टतयैवाहङ्कारभानमिति चेत्—तर्हि चैतन्याहङ्कारयोर्भेदग्रह एव स्यात्। आद्ये कोऽसौ धर्मः? अहंत्वमेवेति चेत्—यद्यहंशब्दप्रवृत्तिनिमित्तमहंत्वमहंकारे वस्तुतोऽस्ति, स कथं युष्मदर्थः। युष्मदर्थत्वं नाम परार्थत्वम्। परं च चैतन्यमेवाभिमतम्। तदर्थत्वं तदपेक्षितप्रयोजननिवर्तकत्वं तद्गतातिशयहेतुत्वं वा। कर्तृत्वभोक्तृत्वादेः सर्वस्याहंकार एवेष्टत्वात् निर्विशेषे चैतन्ये अतिशयाधानायोगात् अहंकारगतसुखाद्यतिशयार्थमेवान्यत् सर्वमिति अहंकारार्थमेव सर्वमिति नाहंकारस्य परस्मै भासमानत्वम्॥ एवमहङ्काररूपधर्म्यध्यासोऽपि चैतन्ये नास्ति। चेतनोऽहं करोमीति चैतन्याश्रयतयैवाहंकारप्रतीतेः। अत एव तयोर्भेदाग्रहायोगः। अहंकारनिष्ठस्याहंत्वस्य चैतन्यस्य च आश्रयाश्रयितया भाने च वक्ष्यमाणाहमर्थपक्षकानुमाने पक्षेऽहमर्थेऽहंकारेऽहम्प्रत्ययविषयत्वरूपहेत्वसिद्धिः। अहमिति चैतन्याहंकारयोरुभयोरेव भानम्। परं त्वनया प्रतीत्या तद्भेदाग्रह इति चेत्—एवमपि अहंप्रत्ययविषयत्वरूपहेतोश्चैतन्येऽपि सत्त्वात् वक्ष्यमाणानुमानेऽनैकान्त्यम्। चैतन्यं स्वयं भासते, अहंकारं च भासयति। चैतन्यविषयीणी चाहंकारे वृत्तिः जायमाना दोषवशात् चैतन्याश्रयतयाऽहंकारविषयिणी चेतनोऽहमितीति चेत्—तर्हि "चैतन्यरूपोऽहं करोमि" इति प्रतीत्यभावात् चेतनोऽहं करोमीत्येव प्रत्ययात् अहंकारे कर्तृत्वं स्थितमेव गृहीतमिति कथं चैतन्ये कर्तृत्वाध्यासः। अहमित्युभयोरेकत्वेन ग्रहणमिति चेत्—तर्हि

चेतनोऽहमिति चैतन्याश्रयत्वेन ग्रहणं न स्यात् । अथ चैतन्यस्वरूपस्याहंकारस्य चैक्यग्रहणमप्यस्ति । चैतन्यस्वरूपञ्च तदा भासमानं चैतन्यत्वेन न भासते । तत्र स्वरूपेण भासमाने चैतन्याहंकारद्वये चैतन्यत्वेन चैतन्यं धर्मतयाऽपि भासत इति चेत् — नूनं भ्रान्तिरेव चैतन्यत्वेन भाता अहमर्थविशेषणीभवतीति । भ्रमनिवहकल्पनभ्रमणेऽपि न चैतन्यमुमुक्षोपयोगिबन्धोपपादनं संभवतीत्यलम् ।

"ब्रह्म वेद ब्रह्मैव भवती"ति श्रुतिरप्यद्वैतिमत एव स्वरसेत्युक्तमप्ययुक्तम् । अत्र सा श्रुतिरेवाद्वैतिमते स्वरसा स्यात्, न त्वन्येति समाधिं केचिन्मन्येरन् । तत्त्वं तु सा श्रुतिरपि साधर्म्यपरमसाम्यादिप्रतिपादकश्रुतिवत् अद्वैतिमते अस्वरसेत्येव । तन्मते; ब्रह्मैकं सत्यम्—अन्यदसत्यम् । अतः सर्वदा ब्रह्मैकमेव भवति, न त्वन्यदिति स्थिते, ब्रह्मवेदनानन्तरमेव ब्रह्ममात्रसद्भावकथनं ह्ययुक्तम् । तथा—यो ब्रह्म वेद, स ब्रह्मैव भवतीति वाक्यार्थे य इति कस्य ग्रहणम्? नाहंकारस्य, तस्य मुक्तौ बाधेन ब्रह्मभावायोगात् । नाहंकारग्रथितचैतन्यस्य । तस्य वेदनरूपवृत्त्याश्रयत्वाभावात् । एवं ब्रह्मैव भवतीत्यस्य ब्रह्मातिरिक्तं न भवति, जगद्रूपेण विवर्तनं न भवतीत्यर्थे- अन्तःकरणावच्छिन्नचैतन्यस्य वेदितृत्वाभिमतस्य जगद्रूपेण विवर्तनस्य कदापि प्रसक्त्यभावात् अप्रसक्तप्रतिषेधः । एकस्य वेदने सत्यप्यन्येषाममुक्तिस्वीकारात् ब्रह्मातिरिक्ताभवनायोगश्च । अस्मन्मते तु, "विष्णुरेव भूत्वेमान् लोकानभिजयति" इत्यादाविव एवकारस्य यथाकोशं सादृश्यार्थकत्वात् प्रमाणान्तराविशिष्टमिदमपि वचनं ब्रह्मसाक्षात्कारिणः ब्रह्मसाम्यप्राप्तिमेव वदतीति स्वरसम्; अन्यथा एवकारवैयर्थ्यात् । तदेतदवसरे विवेचयिष्यते ॥

अनात्मनि देहे आत्मभ्रमो नाम, देहेऽहंबुद्धिरेवेति संप्रतिपन्नम् । कथं तत् भवन्मते अहंशब्दस्यात्मार्थकत्वाभावात् । अहंकारग्रथितात्मरूपविशिष्टार्थकत्वादहंशब्दस्य तदुपपत्तिरिति चेत्—न—अहंकारमात्रमहमर्थ इत्येव भवदीयग्रन्थेषु दर्शनात् । किञ्च अहमर्थो नात्मा, अहंप्रत्ययविषयत्वात् शरीरवदित्यनुमाने

अहमर्थपदेन कस्य ग्रहणम्? विशिष्टस्येति चेत्—तत्र विशेष्ये आत्मत्वे वर्तमाने, विशिष्टे तदभावः कथम्? विशेष्यवृत्तिप्रतियोगिकविशिष्टानुयोगिकाभावानङ्गीकारात्। विशिष्टं विशेष्यादन्यदिति चेत्—तदा अहमिति भ्रमस्य आत्मभ्रमरूपता प्रागुक्ता परित्यक्ता स्यात्। अहमर्थ इत्यहंकारमात्रग्रहणे तु तत्रात्मत्वनिषेधे सिद्धसाधनम्। न च पारिभाषिकभेदः इह साध्यते। अतः आत्मभिन्नत्वमात्मत्वविशिष्टाविषयकप्रतीतिविषयत्वम्। तच्चात्मत्वरूपधर्माग्रहणादहङ्कारविशिष्टचैतन्यरूपे पक्षे सुस्थमिति वाच्यम्—पारिभाषिकभेदस्यात्मत्वे सत्यपि सम्भवेन ततो विवादशमनायोगात् सिद्धसाधनादर्थान्तराच्च। एवमहंप्रत्ययविषयत्वरूपहेतोः चैतन्येऽपि भवदिष्टत्वाद्व्यभिचारश्च। तथा लोकानुभवोऽपि अहमिति किञ्चिद्धर्मविशिष्टैकधर्मिविषयक एव। न त्वहंकारावच्छिन्नात्मारोपेण देहग्रहपर्यन्तानुभवोऽस्ति। तथा सति अहंकारतदवच्छिन्नत्वादिषु विवादस्यैवाभावप्रसङ्गात्। अहंकारात्मनोः भेदाग्रहस्यैव भवदिष्टतया अहङ्कारावच्छिन्नतया भानाद्ययोगश्च। अस्तु तर्हि अहं गौर इत्यत्र देहस्याहंत्वस्य चैव भानमिति चेत्—यदि इदमहंत्वमहंकारनिष्ठम्, तदा अहमर्थ आत्मेति सिद्धम्; अन्यथाऽस्यात्मभ्रमत्वाभावप्रसंगात्।

यत्तु—अहमिति आत्मप्रकाशस्य सुषुप्तौ स्वीकारे जागर इव विशदप्रकाशापत्तिरिति—तत्रेदमवधेयम्। अस्त्येव वैशद्यम्। आत्मस्वरूपं हि सर्वदैकरूपमेव प्रकाशते। ज्ञानेच्छादिगुणाद्विशिष्टप्रकाशनिबन्धनश्चेत् वैशद्यम्—तत् ज्ञानाद्युत्पादकसामग्रीसमवधानायत्तमिति न तस्य सुषुप्तौ प्रसङ्गः। किञ्चाद्वैतमते देहात्मभ्रमो दुरुपपादः। यत्र यद्भ्रमः, तयोर्मिथो विरुद्धधर्माग्रहणे अभेदेनैकत्रान्यतरस्यारोपो वा एकतरधर्मस्यान्यत्रारोपो वा भ्रम इति वक्तव्यम्। न च निर्धर्मके आत्मनि विरुद्धधर्मः कश्चिदस्ति, यद्ग्रहणस्य भ्रमनिवर्तकता स्यात्। अतो विरुद्धधर्माभावात् सर्वदा भ्रम एव स्यात्। चैतन्यं निर्विशेषस्वरूपतो गृह्यमाणमपि भ्रमनिवृत्तिहेतुरिति वा वक्तव्यम्। तदा च न देहात्मभ्रमप्रसक्तिः। एवमेव चैतन्यस्याहङ्काराभेदाध्यासोऽप्यसंभवी। एतेन विरुद्ध-

स्वभावत्वं स्वरूपसत् न भ्रमप्रतिबन्धकम् किन्तु विरुद्धस्वभावत्वज्ञानम् । तदभावात् देहात्मभ्रम इत्यप्यपास्तम् । निर्धर्मणि चैतन्ये विरुद्धधर्मस्य कदाऽप्यसंभावितत्वात् । स्वरूपस्यैव विरोधित्वे च तत्प्रकाशोऽस्त्येवेति न भ्रमप्रसक्तिः । वृत्त्या ग्रहणमपेक्षितमिति न च वाच्यम् । अहंशब्दस्य चिदचिद्ग्रन्थिपरत्वस्योक्ततया शाब्दवृत्त्या चितो गृह्यमाणत्वात् । वस्तुतः स्वरूपस्य स्वप्रकाशेन वा वृत्तिद्वारा वा विरोधित्वमेव नास्ति ; अन्यथा अहंकारचैतन्यतादात्म्याध्यासरूपभ्रमस्यैवानुदयापत्तेः । तद्भ्रमो हि नाम अभेदेन तस्य वा, तद्धर्मस्य वा भेदसंबन्धेन तत्रारोपः । अत्र च तद्धर्माभावात् तस्यैवारोप इति वक्तव्यम् । तस्मिन् भ्रमेण गृह्यमाणे सहाहंकारग्रहणमेव न भवितुमर्हति । मिथो विरुद्धयोरेकज्ञानेन ग्रहणायोगात् ।

यत्तु— शरीरस्य चेतनत्वं स्वातिरिक्तचैतन्याध्यस्तस्य स्वाधिष्ठानतादात्म्यनिबन्धनमिति तन्न—तथा सति प्रपञ्चसामान्ये चेतनत्वग्रहापत्तेः सर्वस्य चैतन्ये आत्मन्यध्यस्तत्वात् । तादात्म्यस्य तत्रापि संमतत्वात् ॥ यत्तु परिभ्रमणम्—देहेऽहंप्रत्ययः श्रीभाष्यमतेऽपि न भवति । तादात्म्यावगाहित्वाभावात्, नित्यानित्ययोरपृथक्सिद्ध्ययोगेनापृथक्सिद्ध्यवगाहित्वाभावाच्चेत्यादि—सर्वमिदमस्मत्सिद्धान्तापरिज्ञानमूलमिति किमत्राभिनिविष्टात्यन्तानवहितप्रतिबोधनविस्तरेण ॥

यत्तु—प्रत्यक्त्वं स्वप्रकाशसाक्षिस्वरूपत्वम् । तच्चाहङ्कारोपहिते सुषुप्तावविद्योपहिते ; न तु शुद्धे । तत एव न मुक्तौ प्रत्यक्त्वम् । अतः उपहितधर्मत्वात् प्रत्यक्त्वस्य नात्मत्वप्रयोजकत्वमिति— तत्रोच्यते । निरुक्तमिदं प्रत्यक्त्वमहंकारनिष्ठं वा चैतन्यनिष्ठं वा ? नाद्यः, साक्षिस्वरूपत्वस्य तत्रासंभवात् । अन्त्ये, उपहितमनुपहितं वा चैतन्यमेव हि प्रत्यक् । न च चैतन्यातिरिक्तम् । एवञ्च प्रतीचोऽहमिति प्रत्ययविषयत्वेऽहमर्थत्वं प्रत्यग्भूतसाक्षिनिष्ठमेवेति कथमहङ्कारस्याहंशब्दमुख्यार्थता ? अस्तु कामम् । अथापि न तत् आत्मत्वप्रयोजकम् । आत्म-

त्वस्य शुद्धनिष्ठत्वादिति चेत्--तदयुक्तम्। शुद्धे आत्मत्वरूपधर्मस्याप्ययोगात्। अत सातत्यगमने, आप्लु व्याप्तवित्याद्यात्मशब्दनिरुक्तीनां परं शुद्धे कथं संभवः? शुद्धे आत्मशब्दविवक्षिततत्तदंशोपलक्षितत्वादात्मशब्दप्रयोग इति चेत्—एवं प्रत्यक्त्वमहंप्रत्ययविषयत्वञ्चोपलक्षणतया स्वीकृत्य तत्रात्मत्वकथनमपि नायुक्तम्। यस्त्वेवं प्रत्यक्त्वस्य कदाऽप्यनर्हः, स आत्मा न भवतीति विवक्षितलाभात्। अपि च विचार्यते—स्वप्रकाशसाक्षिस्वरूपत्वमित्यत्र स्वप्रकाशेति व्यर्थम्। अस्वप्रकाशस्य साक्षिणः कस्यचिदभावेनाव्यावर्तकत्वात्। साक्षिपदञ्च किं चैतन्यपरम् उत अहङ्काराद्युपहित चैतन्यपरम्, आहो, "साक्षाद्द्रष्टरि संज्ञायाम्" इत्यनुशासनानुरोधेन द्रष्टृपरम्। आद्ये मुक्तौ साक्षित्वं नास्तीत्युक्तं न घटते। तदापि हि तत् चैतन्यमेव। द्वितीये साक्षिपदेनैवाहंकाराद्युपहितत्वेन ग्रहणात्। उपरि, "तच्चाहंकारोपधानेन" इत्यादिवाक्यानन्वयः। किञ्च प्रत्यक्पदं सर्वेऽपि तान्त्रिकाः प्रयुञ्जते। न च स्वप्रकाशमहंकारोपहितमथवा अविद्योपहितचैतन्यरूपमर्थं लोकः प्रतिपद्यत इति नैवं निर्वचनं युक्तम्। तृतीये स्वविषयकप्रकाशवान् द्रष्टा प्रत्यगित्येवम्, "प्रत्येतुः प्रत्येतव्यादनतिरेकः प्रत्यक्त्वम्" इति द्रष्टृदृश्यैक्यम् विषयत्वाश्रयत्वोभयसंबन्धेन ज्ञानविशिष्टत्वमित्येवं रूपमेव तार्किकादिप्रसिद्धं प्रत्यक्त्वमुक्तं भवतीति नेदं भवदभिमते साक्षिणि संभाव्यते। अथ स्वाश्रयविषयकवृत्तिभासकत्वं प्रत्यक्त्वमिति चेत्—इदमपि सर्वतान्त्रिकसाधारणं न भवति। अस्तु तावत्। तत्र किं नाम भासकत्वम्। व्यवहारप्रयोजकत्वमिति चेत्—वृत्तिपदेन अहमिति शब्दप्रयोगोपयोगिनी प्रयोक्तृगता वृत्तिर्गृह्यते, उत श्रोतृगता? आद्ये अहंकारस्य साक्षिभास्यतया तद्विषयकवृत्तिसद्भावे मानाभावः। अन्त्ये वृत्तेः श्रोतृ निष्ठतया वक्तुश्च वृत्तिविषयतया तद्विषयकवृत्तिसद्भावे स्वाश्रयविषयकेति निवेशायोगः। न च व्यवहारातिरिक्तः अहंकारस्य वृत्तेर्वा साक्ष्यधीनः प्रकाशो नाम कश्चिदस्ति। अथ तद्व्यवहारकर्तृविषयकव्यवहारप्रयोजकत्वं प्रत्यक्त्वमिति विवक्षितमिति चेत्—तदिदं अहमिति धर्मभूतज्ञाने तार्किकाद्यभिमते प्रत्यक्त्वरहितेऽप्यस्ति। स्वविषय

कव्यवहारकर्तृत्वरूपं तु प्रत्यक्त्वं भवत्साक्षिणि न भवितुमर्हति। साक्षिणोऽकर्तृत्वात्।

सर्वथा केवलस्यात्मनः अहं प्रत्ययविषयत्वाभावेऽपि अहङ्कारच्छुरितया तस्य तद्विषयत्वस्याव्याहततया अहमर्थो नात्मेति न वक्तुं शक्यम्। यथा जीव आत्मा, ईश्वर आत्मेति वादो न बाधितार्थः, तथा अहमर्थ आत्मेत्यपि। शोधनेऽहंकारस्येदंप्रत्ययगोचरत्वस्यापीष्टत्वात् विशिष्टार्थवाचिनोऽप्यहंशब्दस्यात्मैव प्राधान्येन विषय इति नात्मनोऽहमर्थत्वाभावः। एवं प्रत्यक्त्वमप्यात्मन एवेति, "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्" इति श्रुत्या, "अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः" इति भाष्यतद्व्याख्यानभामत्यादिना च सिद्धम्। तत्र हि श्रुतौ, "पराञ्चि खानि व्यतृणत् स्वयंभूः" इतीन्द्रियाणां पराग्रूपपरपदार्थग्राहित्वं स्वाभाव्यं प्रतिपाद्य प्रत्यग्रूपस्वात्मदर्शनादमृतत्वमुच्यते। न चाहंकारच्छुरितात्मदर्शनममृतत्वसाधनम्। अतो मोक्षसाधनप्रत्यक्षविषयतत्त्वमेव प्रत्यक्त्वमिति ज्ञायते। इदञ्च प्रत्यक्त्वविशेषणं परात्मव्यावृत्तये। स्वात्मसाक्षात्कारं विना कस्यापि मोक्षाभावात्। अस्तु वा प्रत्यग्भूतस्य स्वात्मनः य आत्मा परमात्मा तं प्रत्यगात्मानमिति श्रुत्यर्थः। सर्वथा प्रत्यक्पदं स्वात्मवाचि। भवन्मते चात्मन एकत्वात् आत्मज्ञानस्य मोक्षसाधनत्वात् आत्मानमित्येवालमिति प्रत्यक्पदं व्यर्थम्। "अहमिति प्रत्यगात्मनि भावात् परत्राभावात्" इति कणादसूत्रमपि प्रागुदाहारि। अत एवाहं ब्रह्मास्मीति ज्ञानं मोक्षहेतुरिति भवतां दुर्वचम्। अद्वितीयं ब्रह्मेति ज्ञानस्यैव सर्वबाधकत्वेन मोक्षहेतुत्वसंभवात्। चैत्रो ब्रह्मेति ज्ञानस्येव अहं ब्रह्मास्मीति ज्ञानस्यापि मैत्रमोक्षसाधनत्वायोगात्। अन्यथा इदं रजतं, अयं घट इति ज्ञानेषु इदमंशावच्छिन्नचैतन्यभानस्येष्टतया अहंकारावच्छिन्नचैतन्यग्रहणवत् तदपि मोक्षसाधनं भवतु। प्रत्यक्षे विषयावच्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य चाभेदस्याङ्गीकृतत्वात् प्रमातृचैतन्यस्य प्रत्यगात्मत्वे घटादीदमवच्छिन्नचैतन्यमपि प्रत्यगात्मेति अहंकारोपलक्षितस्येव घटाद्युपलक्षितस्याप्यात्मनो ज्ञानं मोक्षाय स्यात्। शतदूष-

ण्याम्, "इदं रजतमित्यत्र इदम्येव प्रत्यगंशोऽपि सिद्धः" इत्युक्तमिति तु अयथानुवाद इत्यन्यदेतत्। अतः प्रत्यक्त्वस्यात्मनिष्ठतायाः शाङ्करभाष्यादिसिद्धत्वात् अहंत्वस्यापि तत्समानयोगक्षेमत्वात् यथा कथञ्चित् अहम्पदजन्योपस्थितिविशेष्यत्वस्य आत्मन्यक्षतत्वे अहमर्थात्मत्वसमर्थनं न प्रतिषेध्यम्। सत्यमेतत्। अहंकारस्यात्मत्वमेव वारयाम इति चेत्—न वयं तत् साधयामः। अथ ज्ञातुरात्मत्वं वार्येत इति चेत्—अहंकारस्यान्तःकरणतया ज्ञातृत्वस्यानन्तरवादे निराकरणात् अन्यस्य ज्ञातृत्वे सिद्धे तस्यात्मत्वं न शक्यं वारयितुमिति प्रतिबोध्यते ॥

यत्तु—भाष्योपक्रमे, "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यात्मनः अस्मत्प्रत्ययगोचरत्ववर्णनं भ्रान्तिकालीनविषयत्वमादाय; शब्दान्तरेण व्यवहर्तुमशक्यत्वात् अहमर्थ आत्मेति पूर्वपक्षिदृष्ट्या वेति—तत्र पूर्वपक्षिदृष्ट्येत्ययुक्तम्; पूर्वपक्षिणा सिद्धान्तिसंमतप्रमेयपरिस्थितिमनुरुद्ध्यैवाध्यासदौःस्थ्यस्य शङ्क्यमानत्वात्। सिद्धान्तेऽपि, 'न चायमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्' इति भाषणाच्च। भ्रान्तिकालीनविषयत्वमादायेति च तदोपपद्यते, यद्यभ्रान्तिकालीनः अहमिति व्यवहारः कदापि क्वाप्यन्यत्र प्रदर्श्येत। अहंकारस्य विषयत्वमस्ति न वेति तु विप्रतिपन्नम्। आत्मनोऽहमित्यत्र विषयत्वं पुनरन्तःकरणे तत्र विशेषणे स्वीकृतेऽपि संप्रतिपन्नम्। तस्मात् तत्राहंशब्दस्यौपचारिकत्वं न भविष्यति। शुद्धात्मनः कथं वाच्यत्वमिति चेत्—तदेतत् ब्रह्मशब्दात्मशब्दानुभूतिशब्दावपि तुल्यम्।

अन्यथा ह्येवं वदता उपक्रमप्रभृति भाष्यमयथाभूतमिति दूषितं स्यात्। युष्मत्प्रत्ययगोचरत्वं तत्र--विषयेषु कथितमनुपपन्नम्। अभिमुखचेतनवाचित्वात् युष्मत्पदस्य। अहंप्रत्ययविषय इदं प्रत्ययविषयश्च भिन्न इत्यभिप्रयतैव अहमिदं ममेदमित्युपर्युच्यमानमप्यनुपपन्नम् विषयविषयिणोरिति अहंप्रत्ययविषयस्य विषयित्वकथनमप्यनुपपन्नम्; अहं जानामीत्यादावहमर्थनिष्ठज्ञानादेरेव विषयित्वानुभवात अहमिति गृहीतस्य विषयितया प्रथाविरहात्। एवमन्यपुरुषीययुष्मत्प्रत्य-

यगोचरस्य स्वकीयास्मत्प्रत्ययगोचरत्वस्याप्यानुभविकत्वात् तमः प्रकाशवद्विरोधो नास्ति'इत्येवमाद्यनुपपत्तिवत् आत्मनि अहं प्रत्ययविषयत्वकथनानुपपत्तेरपि भवता दर्शितत्वात्। विषयित्वानुपपत्तिः स्वप्रकाशत्वतात्पर्येण परिह्रियते यदि, अहम्प्रत्यय-विषयत्वमपि वृत्तिविषयत्वाशयेन परिह्रियताम्। आत्मनो वृत्तिव्याप्यताया भवदिष्टत्वात्। शक्यते हि—आत्मस्वरूपमात्रं स्वयंप्रकाशम् अहंकारमात्रं च साक्षिभास्यम्; घटपटादिवृत्तौ जातायां वृत्तिमत्त्वेन चाहंकारे भाते तादृशीहंत्वविशिष्टतया आत्मस्वरूपविषयिणी वृत्तिः काचिदुदेति। तद्विषयत्वमहंप्रत्ययविषयत्वमिति वक्तुम्। न च ईदृशामहंप्रत्ययविषयत्वातिरिक्तं विषयत्वं क्वचिद्दृष्टमस्ति। सर्वमिदं भवन्मतपरिष्करणमात्रमस्मत्कृतम्। वस्तुतोऽहंत्वस्यात्मनि आरोपितत्वे प्रमाणाभावात् परःशतबाधकश्रुतिसत्त्वाच्च प्रमारूपास्मत्प्रत्ययविषयत्वमप्यात्मन्यस्त्येव। न हीश्वरीयोऽहंव्यवहारः प्रमां विना निर्वोढुं शक्यः। तस्याहंकारविरहात् सर्वज्ञतया भ्रमासंभवाच्च। "ईश्वरस्याविद्याऽस्तीति" चेत्—नासावहंकारः। ईश्वरः स्वाविद्यामेवाहन्त्वेन गृह्णाति, न तु स्वात्मानमिति चेन्न—"मत्तः परतरं नान्यत्", "अहमात्मा गुडाकेश" इत्यादिव्यवहारविरोधादिति॥

यत्तु-धर्मभूतज्ञानमचित्पदार्थेऽन्तर्भूतं न भवति, अजडत्वात्। चिति अन्तर्भूतं चेत्, प्रत्यक् भवेत्। ततः सिद्धमनहमर्थेऽपि प्रत्यक्त्वम्। चिद्बहिर्भूतश्चेत्, चिदचिदीश्वरतत्त्वत्रयमात्रगणनानुपपत्तिरित्यादि—तदिदमपि संरम्भवचनम्। अजडत्वेऽप्यचित्त्वसंभवत्। अचित्त्वं हि चैतन्यराहित्यम्। धर्मतया चिदन्तर्भावेऽपि न दोषः तावता प्रत्यक्त्वप्रसक्त्यभावात्। त्रैविध्यविभागनियामकस्य चास्मद्ग्रन्थेषु विशदत्वात्। षोढात्रगुणानेहोजीवेश्वरभोगभूतिमति भेदात् इत्यपिपरिगणनादित्यलम्॥

यत्तु—**विशिष्टाद्वैतकोश**रीत्या प्रत्यक्पदं जीवात्ममात्रपरमिति—तत् यथावत् कोशापरामर्शमूलम्। **परामार्थप्रकाशिकादौ चास्माभिः** प्रत्यगहमर्थतत्त्वं शोधितं द्रष्टव्यम्। यत्त—स्वप्रकाशत्वं प्रत्यक्त्वमित्येव

अस्माभिः निर्वक्तव्यमिति—तन्न—अस्मन्निरुक्ते प्रत्यक्त्वे दोषाभावेन धर्मभूतज्ञानातिप्रसक्तस्यास्य निर्वचनस्यास्मदस्वीकृतत्वात । "इदंप्रत्ययगोचरत्वं पराक्त्वं साक्षित्वं प्रत्यक्त्वमित्यद्वैतिमत एव निर्वहती" त्यपि न ; अस्मन्मतेऽपि तन्निर्वाहात् । साक्षिशब्दार्थ एव तु यथार्हं कथनीयः । प्रकाशमानत्वघटितं प्रत्यक्त्वं वर्णनीयं चेत्—तर्हि वर्ण्यतां कामम् , स्वस्मै भासमानत्वं प्रत्यक्त्वमिति । अहंकारषब्दस्य कत्यर्थाः, "अथातोऽहंकारादेश' इत्यत्र च कतमस्य ग्रहणम् इत्यादिकं श्रीभाष्यादिष्वेव व्यक्तम् । न तत्र भवता किमप्युक्तमित्यनावश्यकविस्तरविचारात् विरम्यते । तत् सिद्धं मूढैरिव प्रतिबुद्धैर्योगिभिः ईश्वरेण चाहमिति गृह्यमाणो नाहंकारादिरिति सर्वानुगुण्यायाहमर्थ एवात्मा स्वींकार्य इति ।

अहंकारतत्त्वाहितानात्मदेहाद्यहंकारजभ्रान्त्यहंकारहीनैः ।
अहंशब्दकाष्ठार्थनारायणग्राह्यहंकारमान्यैरहं साधु दृश्यः ॥

---

श्रीः

## ज्ञातृत्वाध्यासभङ्ग प्रसाधनम्

नित्याविर्भूतभव्यानुपधिकनिखिलग्राहिविज्ञानधर्मा
नित्येड्यकूसूरिबृन्दस्तुतनिजमहिमानन्तसच्चेतनात्मा ।
कर्माविद्यादिचक्रभ्रमणजनसमुद्धारणैकान्तकर्मा
शर्मायं सर्वकर्मा दिशतु मम नतेः कर्मभूमा त्रिधामा ॥

स्वमतं सिद्धवत्कृत्य स्वगृहीतार्थवर्णनम् ।
क्रियासमभिहारेण कृतं न स्वेष्टसाधकम् ।
दूषणानां परीहारे यत्यते चेन्मनागपि ।
फलेग्रहित्वं यत्नस्य विभ्रष्टव्यं भवेदिह ॥
लोकानुभवसत्तर्कलाघवात्यन्तदूरगः ।
आम्नायबाधितश्चांशः कथं सिद्धवदुच्यते ॥

अहं चिदचितोर्ग्रन्थिः चेतने नास्ति चेतना ।
अन्योन्याध्यास इत्यादौ प्रमाणं प्राक् प्रदर्शितम् ॥
आत्मनां ज्ञत्वकर्तृत्वतत्परायत्तताः वदन् ।
कथं व्यासस्तन्निषेधचिन्मात्रैकात्मतामतिः ?

यत्तु, 'ज्ञोऽतएवे'ति सूत्रं भावे कप्रत्ययान्तज्ञपदघटितं चिद्रूपत्वमेवात्मन उपपादयतीति—तदिदं व्यामोहनमात्रम् । "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययो हि, "कर्तरि कृत्" इति कर्तर्यनुशिष्टः । सर्वत्रैवं श्रुतिस्मृतिसूत्रेषु क्लिष्टार्थवर्णनमात्रेण स्वमतं स्थापितं भवतीति न विस्रब्धव्यम् । सहृदयानामनभिनिवेशिनां पुरस्तात् इदमुपपादनं नूनं मतमौर्बल्यस्थापनपरमेव स्यात् । भाष्यादिविरुद्धश्चायं निर्वाहः । भाष्यकारो हि चैतन्यस्वरूपत्वमेवान्ततः स्वयमाशयानोऽपि तदभिप्रायेण, सांख्यानामिवेति लिखन्नपि ज्ञशब्दयथावस्थितार्थमन्यथयितुमपारयन्, "ज्ञः—नित्यचैतन्यः" इत्येव व्याख्याति । नित्यचैतन्यपदं बहुव्रीहिवृत्तं पुलिङ्गत्वात् चेतनस्य चैतन्यं नित्यगुणः ; न तु वैशेषिकादीनामिवाऽऽगन्तुकमितीममेवार्थं वक्तुं प्रभवति । पूर्ववत् , "नित्यचैतन्यस्वरूप" इति विलिख्य ज्ञशब्दं व्याख्यातुमपि नेच्छति भाष्यकारः आर्जवनिधिरिति स्थिते भावेकप्रत्यय इति शब्दमिमं विशेष्यनिघ्नं स स्वप्नेऽपि नहि व्युत्पादयेत् । इतो वरं तु भवतैवं चिन्तनम्—ज्ञानमिति प्रकाशमात्रविवक्षा । 'तथाच ज्ञइति प्रकाशवानित्यर्थः ; न तु ज्ञानवानिति । एवमुक्तौ अर्थसौष्ठवमात्रहानिः । भवता तु शब्दसौष्ठवहानिरपि सहाऽऽद्रियते । एवं ज्ञइत्यस्य भावार्थविवक्षया ज्ञानस्वरूप इत्यर्थमुक्त्वा, "एवं कर्तृत्वादिकमपि" इत्युक्तमप्यसंगतम् । आत्मा न ज्ञाता, किंतु ज्ञानस्वरूप इतिवत् आत्मा न कर्ता, किंतु कृतिस्वरूप इति खलूक्तं भवति । न चैतत् संगच्छते । "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यस्य ज्ञातृगतस्य ज्ञानस्य लोपो नास्तीत्यर्थं सर्वोऽपि व्युत्पन्नः सरसं गृह्णीयात् । इत्थंत्वेच आत्मा ज्ञानस्वरूपो न लुप्यत इति भावत्कोऽर्थः कथं स्वरसस्स्यात् । "न प्रेत्य संज्ञाऽस्ति 'इत्यस्य ज्ञानस्वरूपत्वपरत्वं दुर्भणम् । बृहदारः

प्रश्के च, 'कथं विरुद्धमुच्यते—विज्ञातैवात्मा, मरणानन्तरं ज्ञानं नास्त्येवेति' इति मैत्रेयीप्रश्नम् 'अलं वा अरे अयं विज्ञानाय' इति, ज्ञातुमयं समर्थ इति प्रतिब्रुवता परेण ज्ञातृत्वरूपधर्माश्रयत्वमेव निगमितम्। अत्र शाङ्करोपनिषद्भाष्ये, "विद्यया नाशिते त्वविद्याप्रत्युपस्थापितांशे अन्यत्वदर्शनलक्षणा संज्ञा नश्यती" त्यर्थो वर्णितः। अत्र संज्ञापदस्यान्यत्वदर्शनमित्यर्थो न स्वरसः। एतदपेक्षया स्वसिद्धान्तानुरोधेनैव, 'अविद्याविनाशे सति अहंकारेणैकीकृत्य ज्ञानमात्मनो न भवतीत्यर्थवर्णनं ज्यायः। समित्येकीकार इति हि प्रसिद्धम्। वस्तुतो भवत्सिद्धान्तसंमतौ मैत्रेयीकृतं मोहापादनापादनं न युज्यते। विज्ञानघन एवायं मुक्तौ ज्ञानमात्रपरिशेषात् ज्ञानाश्रयो न भवतीति, 'न प्रेत्य संज्ञाऽस्ती'ति धर्मभूतज्ञानाभावकथनं हि संगतमेव। एवञ्च प्रश्नस्यायमाशयः—किं ज्ञानस्वरूपत्वात् ज्ञानगुणकत्वं न भवतीति भवदभिमतोऽर्थः, उतान्यादृश इति। तत्र प्रत्युच्यते, अलं वा अरे अयं विज्ञानाय। ज्ञातृत्वं तस्य कदाऽपि नापैति। एकीकृत्य ज्ञानरूपो भ्रमस्तु नास्तीति। तस्मात् ज्ञानमात्रमसाविति न मन्तव्यम्? ज्ञानाश्रयत्वमस्त्येवेति भवन्मतविपरीतवर्णनमेवेह सुसंगतमिति वाक्यमिदं भवन्मतनिरासकमेव। ज्ञानाश्रयत्वानङ्गीकारे, 'अविनाशी वा अरे अयमनुच्छित्तिधर्मा' इत्यत्रानुच्छित्तिधर्मपदं ज्ञातृस्वरूपस्येव ज्ञानस्याप्यविनाशित्वपरत्वाभावे व्यर्थमेव भवेदिति प्रागेवा वोचाम। 'विज्ञातारमरे' इति श्रुतिव्याख्यानं वाक्यान्वयाधिकरणभाष्ये, 'विज्ञानधातुरेव केवलः सन् भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्टः' इति कृतं व्याख्यानं तत्रश्रद्धालुभ्यो जातु रोचेत; न शब्दस्वारस्यमनुसृत्यार्थनिष्कर्षपरेभ्यः श्रुतिपरतन्त्रेभ्यः।

धर्मभूतज्ञानस्यात्मनश्चापृथक्सिद्धिर्न भवति, उपादानोपादेयभावाभावात्। शरीरशरीरिभावस्तु नास्त्येवेत्युक्तमप्यापाततः। अपृथक्सिद्धिं प्रति तस्यतस्य नियामकत्वाभावस्य आकर एव व्यक्तत्वात्। 'कर्ता शास्त्रार्थवत्त्वात्' इति कर्तृत्वमहंकारे तत्समसत्ताकमस्तीत्युच्यत इत्यपि हेयम्—'नात्मा श्रुतेः' इति यस्यात्मनः प्रागनुत्पत्तिरुक्ता, 'ज्ञोत एव' इति च यस्य ज्ञानस्वरूपत्वमुक्तम्,

उत्क्रान्त्यधिकरणे च यस्याणुत्वं प्रतिषिध्य विभुत्वमुक्तम् , तस्यैव हि कर्तृत्वं प्रकृतम् । तत् कथमहङ्कारे तदुच्यत इति कथ्यते । शास्त्रस्याविद्यावद्विषयत्वादेवमेव हि वक्तव्यमिति चेत्—एवं सिद्धं कृत्वा सर्वान्यथनमेव माभूदिति प्रतिबोध्यते । बुद्धेस्तत्राप्रकृतत्वात् तद्गतं कर्तृत्वमप्रकृतञ्च । "यावदात्मभावित्वात्—" इति सूत्रे बुद्धिसंयोगस्य यावदात्मभावित्वभाषणमपि बाधितम् , मुक्तौ तद-भावात् । आत्मपदेन संसारदशापन्नात्मग्रहणमिति चानृजु । तथैवेह कर्तृपदेन बुद्धिग्रहणमपि । आरोपितकर्तृताक इत्यर्थः कर्तृत्वस्येति चेत्—एवं प्रत्यधिकरणं साध्यस्यार्थस्यारोपितत्वमेव बादरायणप्रतिपिपादयिषितमिति भाष्यताम् ; साधु शारीरकं व्याख्यातं भविष्यति । किमेतावन्मात्रम् , उपरि' "व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः," "उपलब्धिवदनियमः' शक्तिविपर्ययात" "समाध्यभावाच्च" इति सूत्रैर्बुद्ध्यहंकारविज्ञानादिशब्दवाच्याद‌न्यस्मिन् आत्मन्येव कर्तृत्वे स्थाप्यमाने कथं घटताम् ? भाष्यमपि स्वसिद्धान्तविरोधेनैव सर्वाणि सूत्राणि व्याख्याति ।

वस्तुतो भवन्मते विज्ञानस्यैव बुद्धेः कर्तृत्वे स्थिते, बुद्धेः करणत्वात् निर्देशविपर्ययः स्यात् । तदभावात् आत्मैव कर्ताऽत्रोक्त इति भाषणमयुक्तम् । 'समाध्यभावाच्च' इति सूत्रे, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति समाधिरुपदिष्टो वेदान्तेषु औपनिषदात्मप्रतिपत्तिप्रयोजन इति भाषणे चान्योऽपि कश्चित् स्वमतविरोधः । अस्य वाक्यस्य किञ्चिद्विधिपरत्वाभावस्य समन्वयाधिकरणे स्वोक्तत्वात् । भामती तु एतादृशं शोधनीयमर्थमविशोध्य भ्रान्त्यन्तरमपि भाष्ये आरोपयति । 'श्रोतव्यो मन्तव्य' इति धारणोपदेशः ; 'निदिध्यासितव्य' इति ध्यानोपदेशः इति । न हि श्रवणमननयोर्धारणात्वं योगानुशासने विवक्षितम् । न च दर्शनस्य क्रियासाध्यत्वं विधेयत्वं भवतां शक्यशङ्कम्, येन कर्त्रधिकरणे तदुपदेशो युज्यते । अत एवावसीयते, समाधिं विधेयं निर्दिशता सूत्रकारेणेह दर्शनसमानाकारध्यानविधावेव वाक्यनैर्भर्यं ज्ञाप्यत इत्यन्यदेतत् । अथ च, 'यथा च तक्षोभयथा' इत्यधिकरणा-

न्तरेण कर्तृत्वमारोपितमुच्यत इत्यपि हेयम् । अरोपितत्वस्याभिप्रेतत्वे पूर्वं स्थापनस्यानावश्यकत्वात् । 'उभयथे'ति पदं हि कदाचित् कर्तृत्वम् अन्यदा तदभावञ्च बोधयेत् ; न पुनः यदा कर्तृत्वम् , तदा तस्यारोपितत्वमपि । वस्तुत एवं भाष्यमारचयद्भिर्यैर्हि, "कर्ता शास्त्रार्थत्त्वात्" इति सूत्रमारभ्य, "समाध्य-भावाच्च" इति सूत्रं यावत् पूर्वपक्ष इत्युपन्यस्य, "यथा च तक्षोभयथा" इति सिद्धान्तसूत्रमित्युपादेक्ष्यत, कतिपयदोषतोऽमोक्ष्यत । भाष्ये च, "यत्तूक्तं शास्त्रार्थवत्त्वादिभिः—" इत्यादिभाषणं पूर्वसिद्धान्तितार्थस्यापि स्वयं खण्डनी-यत्वमेवाभिमन्यते आनन्दमयाधिकरणइवेति साधीयः सूत्रव्याख्यानम् ।

उपरि श्रुतप्रकाशिकावाक्योद्धरणे, "कर्ता शास्त्रेत्यत्र कर्तृत्वस्य स्वभाविस्वा-कतया पारमार्थ्यं किं प्रतिपिपादयिषितम्" इति उद्धार्ये, "कर्तृत्वस्यास्वाभाविकत-या अपारमार्थ्यमित्यन्यथानुवादोऽप्युत्तरवाक्यार्थानालोचननिबन्धनः । एवम् , "देवस्य वा तदतिरिक्तस्य वा कस्यचिदात्मतयाऽभिमतस्याकर्तृत्वं हि सर्वजनसंम-तम्" इत्यप्यन्यथानुवादः । नानुवादस्य परमन्यथाभावः; "न कर्त्रधिकरणेनाहमर्थ-कर्तृत्वादेरस्वाभाविकत्वम् ", इत्यादिपरीक्षणवाक्यमपि प्रमादमयम् । यत्तु— धर्मिसमसत्ताकधर्मत्वं कर्तृत्वे कर्त्रधिकरणेन साध्यते इति—तन्न—असमस-त्ताकं कर्तृत्वमस्तीति लोके केनाप्यगृहीततया तत्साधनस्यानावश्यकत्वात् । धर्मिपदेनात्मग्रहणे समसत्ताकत्वं कर्तृत्वस्य बाधितम् ; अहंकारग्रहणे कर्त्रधि-करणे तदप्रसक्तम् ।• प्रत्युत विज्ञानरूपाहंकारव्यतिरिक्तस्यैव कर्तृत्वं तत्र स्थाप्यते भाष्यरीत्यापीति प्रागेव प्रादर्शि । कर्त्रधिकरणारम्भश्च भवतां व्यर्थः । पूर्वपक्षस्याभावात् । अत एव भाष्ये पूर्वपक्षो नादर्शि । भामतीकारस्तु आत्मा न कर्ता, किन्तु भोक्तैवेति वदतः सांख्यस्य पूर्वपक्षित्वं मन्यते—तन्न युक्तम् । कर्तृत्वविषये सांख्यसाम्यस्यैव भवन्मते स्थितेः । अतो भवन्मतनि-राकरणार्थमेवेदमधिकरणम् ॥ अद्वैतसिद्धौ यदुक्तम्—सांख्येन कर्तृत्वमनिष्ट्वा भोक्तृत्वमुच्यते जीवे, तन्निरस्य भोक्तृत्ववत् कर्तृत्वमप्यस्तीति प्रकृताधिकरणे प्रतिपाद्यत इति— तदपि न— भोक्तृत्वनिषेधार्थमेव हि तद्ध्यधिकरणमारचयित-

व्यम्; न तु कर्तृत्वस्थापनार्थम्। उभयस्याप्यात्मनि भवन्मतेऽनिष्टत्वात्। वस्तुतः सांख्योऽपि, "पुरुषोऽस्ति भोक्तृभावात्" इति वदन्नपि शोधने भोक्तृत्वं न मन्यते। सुखदुःखयोरन्तःकरणधर्मत्वस्यैव तदिष्टत्वात्। सुखदुःखवृत्तिरूपभोगस्यापि तत्रैव स्थितेश्च। भोगो नाम सुखदुःखप्रकाशः चैतन्याधीन इति तदाश्रयत्वं चैतन्यरूपस्य पुरुषस्येति चेत्——भवन्मते साक्षिभास्यत्वात् सुखदुःखयोः साक्षिणि तत्प्रकाशवत्त्वमविशिष्टम्। भोगो नाम सुखदुःखप्रकाशकचैतन्यमेवेति चेत्——तर्हि तदाश्रयत्वं चैतन्यस्यात्मनो न भवतीत्यप्युभयाविशिष्टम्। अतः वास्तवकर्तृत्वस्थापन एवाधिकरणं सङ्गतं स्यात्॥

तत्र कर्तृत्वे आत्मनि स्थापिते पूर्वं ज्ञस्वाभाव्यस्योक्ततया तद्वत् कर्तृत्वं स्वाभाविकं सार्वकालिकं स्यादिति शंकापरिहारार्थम्, अचेतनस्य कर्तृत्वे यन्त्रादिवत् नियन्त्रयितुश्चेतनस्याभावात सर्वदैव कर्तृत्वापत्तिरिति प्रकृतिकर्तृत्वपरिहारार्थश्च, "यथा च तक्षोभयथा" इति सूत्रम्। ज्ञत्वं शरीराद्युपकरणे सत्यपि भवति, असत्यपि, मुक्तौ शरीरं विनैवानुभवस्यापीष्टत्वात्; कर्तृत्वं पुनरुपकरणोपयोजनप्रसक्तौ भवति, अन्यदा न भवतीति वैलक्षण्यं वर्णितं भवति। अत एव कर्तृत्वाधिकरणेऽधिकरणभेदकल्पनाऽपि न युक्तेत्यलं परमते सूत्रस्वारस्यभङ्गनिरूपणीयस्यात्र विस्तरेण॥

एवं कर्तृत्वस्य सूत्रकृत्साधितत्वादेव, 'ज्ञातृत्वकर्तृत्वादिकं नात्मधर्मः, विक्रियात्मकत्वात्' इत्यनुमानमाभासभूतम्। कर्तृत्वस्यानित्यत्वेऽऽत्मनोऽप्यनित्यत्वमिति न हि नियन्तुं शक्यम्। स्थिरेऽपि धर्मिणि घटादौ पाकवशात् रूपादिनाशात्। चैत्रादेरिच्छायां गन्तृत्वस्य, अन्यदा तदभावस्य च दृष्टेः। सूत्रे तक्षदृष्टान्तस्य दर्शितत्वाच्च। सन्ततसञ्चारित्रसरेण्वादिसंयोगसंतानरूपविक्रियात्मत्वस्यात्मनि स्थितेश्च। पारमार्थिकत्वं त्वन्यत्। अतो धर्मधर्मिणोर्भेदात् धर्मसमानायुष्कत्वस्य धर्मिण्यनियमात् धर्मनाशवत् धर्मिनाशस्य पृथक् तत्सामग्र्यायत्तत्वात् नाशकरहिते आत्मनि धर्मनाशेन नाशप्रसक्त्यभावात् कर्तृत्वादे-

रात्मधर्मत्वं न दोषावहम्। आत्मनोऽहंकारावच्छिन्नत्वमपि विक्रियात्मकमेव। न चायमानात्मधर्मः। एवं घटावच्छिन्नचैतन्यमित्यादौ चैतन्ये घटावच्छिन्नत्वादिकमपि द्रष्टव्यम्। अतस्तैरनैकान्त्यम्। दृश्यत्वादिति हेतोरसिद्धिस्तु नास्माभिरुक्ता। आत्मनोऽपि दृश्यत्वस्य प्रागुपपादितत्वात् पुनरसाधकत्वं भाव्यमित्युक्तम्॥

यत्तु—धर्मभूतज्ञानस्य आत्मापृथक्सिद्धत्वे, आत्मा ज्ञानमिति प्रयोगः स्यादिति—तत्रोच्यते। यदि ज्ञानशब्देन ज्ञानमात्रविवक्षा, तदा ऐक्यस्य बाधान्न प्रयोगः। विशिष्टविवक्षया तु प्रयुज्यत एव, "विज्ञानं यज्ञं तनुते", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्येवम्। अहं जानामीति न स्यादिति त्वयुक्तम्। ज्ञाधातोर्धर्ममात्रार्थकतया आश्रयसमर्पकपदस्यावश्यकत्वात्। अहमर्थस्यात्मत्वे सशरीरस्यैवात्मत्वापत्तिरिति चायुक्तम्। शरीरं विनाऽप्यहमर्थसत्त्वात्, अहमर्थविलयेऽपि सुषुप्त्यादौ शरीरस्य स्थितेश्च। तथाऽहमर्थपदेन अहंकारविवक्षणे तस्यात्मताया अस्माभिरकथनात्। अन्यस्तु शरीराभावेऽपि अहमित्यनुभूयमान एव प्रमाणसिद्ध इति न सशरीरत्वनियमापादनप्रसक्तिः। अतः शतदूषणीदूषितानुमानपुनर्गणनं व्यर्थम्। 'अहं जानामीति समानाधिकरणप्रतीतिर्धर्मतादात्म्याध्यासात्' इति चायुक्तम्। को हि तिङन्तप्रयोगे धात्वर्थस्य कर्तुश्च तादात्म्यमानुभविकमिति ब्रूयात्। न हि चैत्रः पचतीत्युक्तौ चैत्रपाकैक्यप्रतीतिः। पच्यर्थस्य पाकस्य आख्यातार्थकर्त्रन्वयात् पाककर्त्रभेदस्यैवानुभवात्। अतोऽहं जानामीति ज्ञानाश्रयाभेद एव प्रतीयते; न तु ज्ञानाभेदः। अत एवाहं ज्ञानमिति भवन्मते भाव्यमित्यापाद्यते, एतद्विवेकश्चोपरिष्टात्॥

धर्मभूतज्ञानस्वरूपशोधनं तु पौनःपुन्येन कृतमेव। **शौनकेन**, "अवबोधादीनां गुणत्वे, "अवबोधादयो गुणाः प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इति स्पष्टमुपदिश्यमाने तस्य वाक्यस्य न धर्मभूतज्ञानपरत्वम्, किन्तु चिद्रूपस्य स्वयंप्रकाशत्वपरत्वमिति लेखनं न व्युत्पन्नहृद्यम्। सूत्रभाष्ये मणिप्रदीपाद्यपेक्षया प्रभायाः द्रव्यान्तरत्वं साधितमस्तीति, "यथा न क्रियते

ज्योत्स्ना मलप्रक्षालान्मणेः ।" इति शौनकदर्शितदृष्टान्तो हि भवद्भाष्यानुसारेऽपि धर्मभूतज्ञानपक्षमेव स्वीकारयति । मीमांसकमतेऽपि आत्मैव ज्ञानरूपेण परिणमतीत्यत्र च न किञ्चित् प्रमाणम् । अस्मन्मते आत्मनि स्वरूपपरिणामानङ्गीकारात् धर्मभूतज्ञानस्य संकोचविकासशालितया परिणामित्वेऽपि धर्मधर्मिणोर्भेदादात्मनि निर्विकारत्वस्याक्षतत्वात न निर्विकारत्वश्रुतिविरोधः । ज्ञातृत्वमपि कश्चिद्विकार इति चेन्न—तस्यात्मपरिणामत्वाभावस्योक्तत्वात् । निर्विकारमित्यस्य परिणामशून्यमित्येवार्थात् । सर्वकादाचित्कधर्मानाश्रयत्वमेव निर्विकारत्वश्रुत्यर्थः, अविशेषादिति चेन्न—तथा सति संयोगविभागादिरपि विकारो नात्मनो भवेत्; तथा च संसारित्वमुक्तत्वरूपकादाचित्कधर्मसंबन्धोऽपि न स्यात्; श्रोतृत्वमन्तृत्वादिरूपो वृत्तिसंबन्धोऽपि न भवेदिति । परमार्थतो नास्त्येवेति चेत्—व्यावहारिकविकारेषु वर्तमानेषु निर्विकारत्वं कथम्? न च पारमार्थिको विकारः कश्चिदस्ति, येन विकारपदस्य पारमार्थिकविकारविशेषे संकोचः स्यात् । सर्वप्रकारेण विकाराभावे निर्विकारश्रुतिस्वरसप्रतीते पारमार्थिकविकारशून्यमिति वा पारमार्थिकत्वेन विकारशून्यमिति वा पारमार्थिकसंबन्धविशेषेण विकारशून्यमिति वा संकुचितार्थकल्पनं परं कथं घटताम् । मानान्तराविरोधाय, "न हिंस्यात्" इत्यादौ विशेषस्य विशेषविषयत्वं दृष्टमिष्टञ्चेत्यद्वैतसिद्धावप्युक्तमिति चेत्—तर्ह्यस्मदुक्तरीत्या स्वरूपपरिणामराहित्यं निर्विकारपदार्थ इति विशेषपर्यवसानं संभवत् परित्यज्य किमिति सर्वमिथ्यात्वकल्पनादिप्रयासपरिग्रहः ॥

ज्ञातृत्वादिकं नात्मधर्मः, विक्रियात्मकत्वादित्यत्र विक्रियापदेन क्रियायोगमात्रादिविवक्षायामस्तिक्रियायोगमादायानैकान्त्यमुक्तं शतदूषण्याम्—तत्रोत्पत्तिविनाशरूपक्रियायोगस्यैव विक्रियात्मत्वादिति न समाधानम् । अस्तिक्रियासाधारणविक्रियार्थत्वपक्षेऽनैकान्त्यावारणात् । भवदुक्तविक्रिया तु आदिपदग्राह्या गमनसंयोगविभागादिषु आत्मधर्मेषु हेतुसत्त्वात् । ते अपरमार्थिका इति चेत्—किमन्यत्र स्थितानां तेषां आत्मन्यारोपः उत

ब्रह्मणि जगत इवापूर्वाणामेव। नाद्यः, पारमार्थिकस्य तत्संयोगविभागाद्याधारस्यादृष्टेः। नान्त्यः, तथा सति प्रकृते—विज्ञानत्वादिकमात्मनिष्ठमेव, परं तु मिथ्येत्येतावत एव वक्तव्यतया अहमर्थे ज्ञातृत्वादिकमस्ति, आत्मनि त्वारोप इति वर्णनप्रयासस्यानवसरत्वात्। तथा चास्तित्वादेरपि ज्ञातृत्वादेरप्यात्मधर्मत्वमेवेति बाध एव। सर्वधर्मविरहिण आत्मनः पक्षसाध्यहेतुकोटिप्रवेशादिकमपि सर्वथा न भवतीति मूकीभवितव्यम्। अतः तूष्णीमास्वेति शतदूषणीनिदेशः शिरसा वोढव्यः। आत्मत्वतुल्ययोगक्षेमताया विज्ञातृत्वेऽप्युक्तिसंभवात्। "चिन्मात्रस्य ब्रह्माभिन्नस्याविद्यानिवर्तकज्ञानविषयस्य त्रिकालाबाध्यस्यैव विज्ञातृस्वरूपस्य सत्त्वाङ्गीकारायोगात्" इति भवदुक्तमयुक्तम्। चिन्मात्रत्वब्रह्माभिन्नत्वाविद्यानिवर्तकज्ञानविषयत्वत्रिकालाबाध्यत्वरूपधर्मचतुष्टयस्य भवदिष्टस्य विज्ञातृत्वस्य च तत्राभावे तुल्ये चिन्मात्रस्येत्यादिपदानामिव विज्ञातुरिति पदस्यापि समानाधिकरणतया प्रयोगे विशेषबाधकाभावात्। तत्तद्धर्मवत् ज्ञातृत्वस्यापि साक्षादेव तत्र कल्पनसंभवात्। परिणामात्मकवृत्तिरूपज्ञानस्यात्मनीष्टौ आत्मनः सविकारत्वापत्तिरिति चेत्—अपारमार्थिकापरिमितविकारशालित्वेऽप्यभिमतनिर्विकारत्वानपायात्। धर्मभूतज्ञानान्तरग्रहणेन निर्विकारत्वस्य सूपपादत्वाच्च। तस्मात् ज्ञात्रन्तरपरिकल्पनमयुक्तम्॥

अहंप्रत्ययो नात्मगोचरः अहंप्रत्ययत्वादिति प्रयोगस्तु—घटप्रत्ययो न कम्बुग्रीवादिमद्विषयः, घटप्रत्ययत्वात्, घटभ्रमवत् इति प्रयोगतुल्यः। अस्मत्प्रत्ययस्य चेदम्प्रययविलक्षणत्वात् इदंप्रत्ययविषयाहंकारव्यतिरिक्तमात्रविषयकत्वेनैव मुख्यत्वमेष्टव्यम्। तथा क्वापि प्रयोगो नास्तीति भवदुक्तिस्त्वपलाप एव। ईश्वरमुक्तयोगिप्रभृतिप्रयोगाणां परश्शतानां प्रदर्शितत्वात्। विवेकिप्रयोगस्य भ्रान्तत्वायोगात्। अहं ब्रह्मास्मि, अहमात्मेत्यादिप्रत्ययानां तावन्मात्रविषयकत्वाच्च। किञ्च सर्वत्राप्यहंप्रत्यये आत्मनोऽपि भानात् आत्मगोचरत्वाभावरूपसाध्यवैकल्यमेव। अहंप्रत्ययस्य देहादिविषयकस्याप्यात्मभ्रमरूपत्वस्येष्टतया आत्मविषयकत्वस्याप्यावश्यकत्वात्। आत्ममात्रगोचरत्वाभावः साध्यत

इति चेत्---मुख्यात्मप्रत्ययेऽपि एकत्वानुकूलत्वादिधर्मभानात् आत्ममात्रगोचरत्वस्यास्मदिष्टतया सिद्धसाधनम् । आत्मेतरविशेष्यकत्वं साध्यमिति चेन्न---अहं जानामीत्यादावपि अहमर्थच्छुरितचैतन्यभाने आत्मेतरविशेष्यकत्वस्यासंप्रतिपत्तेः । अहमेव सर्वम्, अहं ब्रह्मास्मि, अहं निर्विकार इत्यादौ आत्मन एव विशेष्यत्वाच्च । आत्मेतरविषयकत्वमात्रसाधने च सिद्धसाधनम् । एवमात्मत्वविशिष्टाविषयकत्वसाधनेऽपि ॥

• आत्मा ज्ञातृत्वादिरहितः अन्तःकरणव्यतिरिक्तत्वादिति प्रयोगे, आत्मा न ज्ञानरूपः अन्तःकरणव्यतिरिक्तत्वादित्यपि स्यादित्यत्र ईश्वरे धर्मभूतज्ञाने वृत्तिज्ञाने वा व्यभिचार इत्यप्ययुक्तम् । ईश्वरस्यापि पक्षनिविष्टत्वात् । धर्मभूतज्ञानस्य भवदसंमतत्वात् । वृत्तेश्चास्माभिरनभ्युपगमात् । "अत्र, व्याप्तेर्व्यभिचारादप्रयोजकत्वात्" इत्यादिलेखनमप्यपष्टु इत्यन्यदेतत् । किञ्च, "प्रसञ्जकत्वादप्रयोजकत्वाच्च" इति सूक्तिमनाकलय्य व्यभिचारवर्णनमप्ययुक्तम् । अयं ह्यत्राशयः---अन्तःकरणमेव ज्ञातृ इति यदि प्रमाणप्रतिपन्नम्, तर्हि अन्तःकरणव्यतिरिक्तत्वं ज्ञातृत्वाभावं साधयेत् । अन्यथा करणव्यतिरिक्तत्वात् कर्तृत्वं नास्तीति साधनमत्यन्तहेयम् । करणव्यतिरिक्तस्यैव कर्तृत्वस्यानुभवसिद्धत्वात् । यदि नियामकमन्तरेणापि ततो ज्ञातृत्वराहित्यं सिद्ध्येत्, ज्ञानरूपत्वराहित्यं वा किं न सिद्ध्येत् । यदि तत्राप्रयोजकत्वम् । तदिहापि तुल्यमिति । आत्मा न ज्ञाता अजडत्वादित्यत्र नाप्रयोजकशंका ; ज्ञातृत्वेऽजत्वानापत्तिरिति विपक्षे बाधकतर्कसत्त्वादिति चायुक्तम् । न हि साध्याभावे हेत्वभाव इति कथनमात्रेण विपक्षे बाधकं प्रदर्शितं भवति । साध्यभावोऽस्तु, हेत्वभावो मास्त्विति पुनः शङ्कायां तर्कस्यासिद्धेः । प्रभारूपतेजोविशिष्टस्य प्रदीपस्य तेजस्त्ववत् ज्ञानविशिष्टत्वरूपज्ञातृत्वविशिष्टे ज्ञानत्वरूपाजडत्वस्य स्वीकारे बाधकाभावत् । अन्यत् सर्वमात्मोत्प्रेक्षामात्रम् ।

एवमहङ्कारस्य ज्ञातृत्वे दृश्यत्वप्रकृतिपरिणामत्वादिकं प्रयोजकमिति भवन्मतानुवादस्य शतदूषण्यामकृतत्वात् देहस्याचेतनत्वे तस्य तस्य प्रयोजकत्वं

भवदीयोक्तमयुक्तमित्येवोक्तेः अन्यथा गृहीत्वा तत्परीक्षणमसङ्गतम् । लोके दृक्पदस्य ज्ञानसामान्यवाचित्वस्य वा ज्ञानविशेषवाचित्वस्य चैव संमतत्वात् अन्तःकरणपरिणामस्य ज्ञानत्वे दृक्त्वस्यापि संभवात् अन्तःकरणं द्रष्टृ भवतीति देहस्थाने अन्तःकरणस्याविद्यापरिणामस्य ज्ञातृत्ववादिनां भवतां चार्वाकसौहार्दमित्युक्तं हि समञ्जसमेव । एवमपि दृशिरूपत्वमन्तःकरणपरिणामस्य नास्तीति चेत्---तत्परिणामस्य ज्ञानत्वे वस्त्वन्तरपरिणामवैलक्षण्येन स्वीकृते तस्य दृशित्वं स्वयंप्रकाशत्वमपि तद्वीत्यैवेष्यताम् । सत्त्वाधिक्यप्रयुक्तस्वच्छतातिशये स्वयंप्रकाशत्वमपि क्वचिदिति स्वीकृत्य विलक्षणात्मनिषेधसंभवात् । श्रुतिबलाद्विलक्षण आत्मेष्यत इति चेत्---तर्हि तस्याः कुयुक्तिभिर्यथाश्रुतादन्यथार्थकरणं विहाय ज्ञातृत्वादिकमपीष्यताम् । तत्सर्वं पारमार्थिकमपारमार्थिकं वेत्ययं विचारोऽन्यः ॥

ज्ञातृत्वादिप्रकाशो भ्रान्तिरूपः देहात्माभिमानवत एव जायमानत्वादित्यनुमानमपि हेयम्---देहात्माभिमानरहितानामपि विवेकिनां ज्ञातृत्वप्रकाशसत्त्वादसिद्धेः । न च देहात्माभिमानो नाम देहात्मप्रत्ययः । स च क्वचित् देहे आत्मभ्रान्तिरूपः, अन्यत्रात्मनि देहवत्त्वप्रत्ययरूपः । ईश्वरस्यापि सर्वशरीरत्वात् देहात्मप्रत्ययोऽस्त्येवेति वाच्यम्---अभिमानमात्रवत्पुरुषसमवेतप्रकाशत्वस्यैव भ्रान्तित्वरूपसाध्यप्रयोजकत्वात अभिमानानभिमानसाधारणप्रत्ययत्वनिवेशे तादृशप्रत्ययवत्समवेतप्रकाशत्वस्य प्रयोजकत्वायोगात् । अन्यथा प्रकाशत्वमात्रस्य जायमानप्रकाशत्वमात्रस्य वा हेतुत्वसंभवेन देहात्माभिमानवत एवेति दलस्यैव व्यर्थत्वात् । भ्रान्तित्वं च साध्यं ब्रह्मसाक्षात्कारमात्रनिवर्त्यविषयकज्ञानत्वमित्युक्तमपि न सम्यक् ; ब्रह्मसाक्षात्कारेण घटपटादिप्रपञ्चो निवर्तत इत्यस्यासिद्धत्वेन घटादिज्ञाने साध्यवैकल्यात् । शुक्तिरजतादौ हेतुमति साध्याभावादनैकान्त्याच्च । तस्य ब्रह्मसाक्षात्कारेतरनिवर्त्यत्वस्यापि सत्त्वात् । साध्यकोटौ मात्रपदवैयर्थ्याच्च । ईश्वरीयज्ञातृत्वादिप्रकाशस्य भ्रान्तिरूपत्वे ईश्वरस्य भ्रान्तत्वप्रसङ्गाच्च । ननु व्यावहारिकप्रमाश्रयत्वमेवेश्वरस्यापि;

शुक्तिरजतादिप्रातिभासिकभ्रमानाश्रयस्यापि तस्य ब्रह्मसाक्षात्कारबाध्यार्थविषयकत्वरूपभ्रान्तित्वशालिज्ञानत्वमिष्यत एवेति चेत्—"तान्यहं वेद सर्वाणि" इतीश्वरज्ञानं किमहंकारे ज्ञातृत्वविषयकम्, उताविद्यायाम्, आहो आत्मनि? नाद्यः, तस्यान्तःकरणस्य तथाऽनिष्टेः। न द्वितीयः, अविद्यामात्रस्याहंप्रत्ययविषयत्वे लोकेऽप्यन्तःकरणमात्रस्य तद्विषयत्वसंभवेन सर्वत्राहंप्रत्ययविषयत्वस्यात्मन्यपलापप्रसङ्गात्। न तृतीयः, सर्वज्ञेन तेन शुद्धात्मनि ज्ञातृत्वं नास्तीत्यस्यापि ज्ञेयतया तद्विरुद्धविपरीतज्ञानायोगात्। अथ अहं सर्वं वेदेत्यस्य अविद्यावच्छिन्न आत्मा सर्वविषयकज्ञानरूपपरिणामशाल्यविद्यावच्छिन्न इत्यर्थः। एवमेव स जानातीति चेत्—स एवं जानातीत्युक्तज्ञानाश्रयत्वमपीश्वरात्मनि कथम्? ज्ञानस्याविद्यान्तर्गतत्वात्। किञ्च ज्ञानरूपपरिणामशाल्यविद्यावच्छिन्नत्वं चेत् ज्ञातृत्वम्, तथा लोकेऽपि विवेकिव्यवहारे ज्ञातृत्वं नाम ज्ञानरूपपरिणामशाल्यन्तःकरणावच्छिन्नत्वमेव भवितुमर्हतीति तादृशज्ञातृत्वप्रकाशस्य न लौकिकभ्रान्तिरूपता। ब्रह्मज्ञानबाध्यविषयकत्वरूपभ्रान्तित्वमेव साध्यमिति चेत्—प्रथमतः आत्मनि ज्ञातृत्वप्रकाशस्य लोके सर्वगतस्य तत्परिशीलने व्यवहारबाध्यतया लौकिकभ्रान्तित्वमेव वक्तुमुपक्रम्य ब्रह्मज्ञानबाध्यत्वरूपाप्रकृतांशग्रहणेनानुमानस्यानाभासत्वसंपादनप्रयासे उद्देश्यासिद्ध्या प्रथमप्रयत्नवैफल्यात्। इतरस्य सर्वस्य ब्रह्मज्ञानबाध्यत्वनिश्चये ज्ञातृत्वप्रकाशोऽपि तत् तुल्यप्रमाणसिद्धमिति तत्साधनस्यानपेक्षितत्वाच्च॥

अथ च ज्ञातृत्वाध्यासः संविदि चेत्, ज्ञातृत्वं संविदिति स्यात्। ज्ञातृत्वस्य तदाश्रयद्वारा अध्यास इति चेत्—तदापि ज्ञाता ज्ञानमिति स्यात्। आत्मा ज्ञानत्वेन न प्रकाशत इति न तथा प्रतीत्यापत्तिरिति चेत्—यथा प्रकाशते, तदुच्यताम्। न चाहंत्वेन प्रकाशते, अहंत्वस्यान्तःकरणनिष्ठत्वात्। 'अस्मच्छब्दार्थ आत्मा। अहंकारस्त्वन्तःकरणम्। न त्वस्मदर्थः। क्वचिदहंशब्दप्रयोगोऽपि मकारान्ताव्ययपदाभिप्रायेणे'ति पक्षस्तावन्नेष्यते। मान्तत्वदान्तत्वरूपविशेषं विना अस्मदर्थोऽपिहि अहंकार एवेत्युच्यते। एवञ्चाहंत्वं न

चैतन्यनिष्ठमिति। न चैवं वदताऽपि सिद्धिकारेण अहं स्फुरामीति स्फुरणरूपेणात्मप्रतीतिर्दर्शितेति तत्राहंत्वभ्रम इति वाच्यम्—ज्ञानत्ववत् स्फुरणत्वस्याप्यात्मगततायाः असंप्रतिपन्नत्वात्। ज्ञानं ज्ञातृ इति प्रतीत्यभावेऽपि स्फुरणं ज्ञातृ इति प्रतीत्यापत्तेश्च। अत एव आत्मभानस्य पृथगदर्शनात् अहमर्थे आत्मभ्रमो दुरुपपदः। "अनात्मन्यात्मबुद्धिर्या" इति आत्मभ्रमस्तावत् प्रामाणिक एष्टव्यः। भ्रान्तौ च आरोपवाचकशब्देनैवाभिलापो भवति, यथा इदं रजतमिति। तथा च यद्यहंत्वमात्मनिष्ठं न स्यात्, अन्तःकरणगतमेव स्यात्, कथमात्मभ्रमस्याहमित्युल्लेखः स्यात्? एवमेवात्मन्यहमर्थभ्रमोऽपि दुरुपपादः। इदं रजतमितिवत् अधिष्ठानारोप्ययोः पृथग्भानस्यापेक्षितत्वात्। अधिष्ठानगतविशेषधर्माग्रहेऽपि सामान्यतोऽधिष्ठानस्य, विशेषत आरोप्यस्य च भानावश्यंभावात्। अत्र च किमहङ्कारे आत्माध्यासः उतात्मनि अहंकाराध्यासः? आद्ये, रजतवत् आत्मनः किञ्चिद्रूपेण भानं स्वीकर्तव्यम्। आत्मन आरोपे तस्य शुक्तिरजतवत् मिथ्यात्वापत्तिस्तु भवता, नात्र रजतवत् वस्त्वध्यासः, किन्तु संसर्गाध्यास इति कामं वार्यताम्—तथापि लोहितः स्फटिक इत्यत्र लौहित्यस्येवात्मनः पृथग्भानमपेक्षितम्। अथाहंकारस्यैवात्मन्यध्यासः अहमिति अहंत्वेनात्मभानम्। शुक्तिरजतस्थले रजतमद्राक्षमित्यत्र रजतत्वेन शुक्तिभानवत्। इयान् विशेषः—तत्र इदं रजतमिति पृथक् द्वयोर्भानमस्ति, अत्र तु न। अस्तु वा अहमस्मीति प्रतीतौ सद्रूपेणात्मनि अहमारोप इति चेत्—एवं तर्हि अहंत्वमन्तःकरणनिष्ठम्, ज्ञातृत्वादिकमपि तन्निष्ठमेव। अहंत्वेन आत्मनो भातत्वात्तु जानामीति ज्ञातृत्वं तत्रारोपितं प्रतीयत इति वक्तव्यम्। इदञ्च तदा स्यात्—यदाऽऽत्ममात्रान्वयी धर्मः कश्चित् सह भातः स्यात्। न च स कश्चित् भासते। अतोऽत्र नात्मभाने किञ्चित् प्रमाणम्। अहंशब्देनात्मग्रहणाभावे आत्मनि बन्धमोक्षोपपादनमशक्यमिति चेत्—तर्हि त्यज्यतामयमुपन्यासः। यदि चाहं जानामीत्यादौ अहमिति अहंकारमात्रग्रहणं न भवति, आत्मनोऽपि नियमेन सहैव भानमितीष्यते, तर्हि अहं स्फुरामीति स्फुरणरूपे आत्मनि

अहंकाराध्यास इत्यद्वैतसिद्ध्युक्तं कथं घटताम्। पृथग्भानंसभवे सर्वत्र तथैवेति नात्मभानप्रसक्तिरस्ति ॥

ज्ञानरूपे आत्मन्यहमर्थारोपेण जानाम्यहमिति भ्रमो भवतीति कश्चित् पक्षोऽपि ग्रन्थेषु सूच्यते; खण्ड्यते च—तथा सति ज्ञानमहमिति प्रतीतिः स्यात्, न तु जानाम्यहमिति। तत्राद्वैतिपक्ष एवं न भवति। अहमित्यस्य द्व्यंशत्वं तत्रैवाहमर्थस्यात्मनश्च भानमेष्टव्यम्; जानामीति तु वृत्तिज्ञानं, नात्मेति काचिदाशंका यद्यप्युन्मिषति। अथाप्यत्रेदं वक्तव्यम्—गत्यन्तराभावे काशकुशावलम्बनेनोत्तरणे प्रयत्नः क्रियत इति तावदेकमुत्तरम्। संभावितान् विकल्प्य खण्डयन्तः पक्षमिममुपेक्षितुं नार्हन्तीति नैतद्दूषणमस्थाने इति चोत्तरान्तरम्। उक्तं तावत् अहमर्थे आत्मभ्रमो वा आत्मन्यहमर्थभ्रमो वा दुरुपपाद इति। तत्र कश्चिदद्वैतमतावलम्बी एवमाह—अस्ति भाति प्रियमित्यात्मा सर्वत्रानुस्यूतो भासत इत्यस्मन्मतम्। अत आत्मनोऽस्तित्वेन ज्ञानत्वेन आनन्दत्वेन च भानं भवति। अत एव घटः सन्, घटोऽनुभूयते पटोऽनुभूयते इति अनुस्यूतभातसदनुभूतिरूपात्मसत्यत्वनिरूपणं प्राचैरकारि। यदि घटोऽनुभूयत इत्यत्र धातुना अनुभवरूपात्मग्रहणम्, अहं जानामीत्यत्र परं ज्ञाधातुना किमपराद्धम्, येन तत्रात्मग्रहणं न भवेत्। निर्विषयज्ञानरूपस्यात्मनः सविषयवृत्तिज्ञानवाचिपदग्राह्यत्वं कथम्, उभयोर्भेदादिति तु न सम्यक्। अतश्चैतन्यस्यात्मन एव तत्तद्विषयावच्छिन्नत्वमद्वैतिनामभिमतम्। तथा हि कर्त्रधिकरणे, "उपलब्धिवदनियमः" इति सूत्रे भाष्यम्, "विषयकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम्, उपलब्धौ त्वनन्यापेक्षत्वम् आत्मनश्चैतन्ययोगात्" इति। भामती, "नित्यचैतन्यस्वभावस्य खल्वात्मन इन्द्रियादीनि करणानि स्वविषयमुपनयन्ति। तेन विषयावच्छिन्नमेव चैतन्यं वृत्तिरिति विज्ञानमिति चाख्यायते" इति। परिमले, "नित्यचैतन्यस्वरूपायां विषयोपलब्धौ तावन्नेन्द्रियापेक्षा, नापि तदपेक्षितजन्योपलब्ध्यन्तरे, उपलब्धेरुपलब्ध्यन्तरानपेक्षित्वात्। किन्तु नित्योपलब्धावेव विषयोपरक्तरूपायाम्" इति आत्मभूतस्य चैतन्यस्य

विषयोपलब्धेश्चैक्यमादृतम् । एवञ्च अहं जानामीत्यत्र ज्ञाधातुना ज्ञानरूपात्मग्रहणेन तत्राहमर्थभ्रम इति किं न स्यादिति । प्रत्यवस्थानमिदं प्रतिषिध्यतेऽस्माभिः—तथा सति जानाम्यहमिति न स्यात्; किन्तु ज्ञानमहमितीति । दूषणान्तरमप्यत्र भाव्यम् । घटं जानाम्यहमिति घटादिविषयोपरक्तचैतन्यरूपज्ञानेऽहंकारभ्रमः किलायम्, नात्मनि शुद्धे इति । परन्तु तत्तद्विषयोपरक्तत्वादिकं कथञ्चिद्द्व्यावर्तमानत्वादिना भङ्क्त्वा ज्ञानं परिशेष्यात्मन्येवायमहमर्थभ्रम इति किमपि ब्रूयादिति तदुपेक्षणेन धर्मधर्मिभावेन भ्रमोल्लेखो न युज्यत इत्येतावदुक्तम् । ज्ञानस्यात्रारोपाधिष्ठनत्वात् आरोप्यत्वाभावात्, "आरोप्यं धर्मिद्वाराऽध्यस्यते; अतो विशेषणतया प्रतीतिः" इति न शक्यं वक्तुम् । अथ ज्ञानरूपस्यात्मन एवाहमर्थे भ्रम इति ज्ञानस्यैवारोप्यत्वमिति चेत्—न—तस्याहमर्थस्य चैकतयाऽध्यासप्रसक्त्यभावेन धर्मिद्वाराऽध्यस्यत इत्यस्य दुर्वचत्वात् । ज्ञानरूपात्मधर्मित्वस्यान्तःकरण एतावदसिद्धेश्च । ज्ञानमिति वृत्तिमात्रग्रहणे आत्माध्यासोपपादनासंभवाच्च । तस्मात् अहमित्यनेनाहमर्थस्यात्मनश्च मिलितरूपेण ग्रहणमिति पक्षे, जानामीति धातुनाऽऽत्मग्रहणमिति पक्षेऽपि नाध्यासोपपादनसंभवः । अहं जानामीत्यत्र ज्ञाधातुनाऽऽत्मग्रहणे, अहं करोमि, अहं सुखीत्यादावात्मभाननिर्वाहः कथमिति दोषोऽपि भाव्यः ॥

अत्रेदमवधेयम्—अहंकारात्मनोरभेदारोप इत्येतत् कथमुपपाद्यम्? किं साक्षिणा चैतन्येनाहमर्थे भास्यमाने स्वस्मिन् तदभेदोऽपि भास्यत इति, किं वा अहमर्थनिष्ठा काचित् वृत्तिश्चैतन्याभेदमहमर्थे ग्राहयतीति । नाद्यः, साक्षिणो भ्रमरूपत्वायोगात् । अङ्गुल्यग्रेण स्वात्मस्पर्शवत् साक्षिणा स्वस्य ग्रहणासंभवेन स्वकर्मत्वरहिते स्वस्मिन् अहमर्थाभेदस्य स्वेन ग्रहणायोगाच्च । नान्त्यः, अहंकारस्य साक्षिभास्यतया स्वनिष्ठवृत्त्या स्वस्य ग्रहणाभावेन चैतन्यविषयिण्या वृत्त्या चैतन्येऽहमर्थाभेदग्रह इत्यस्य वक्तुमशक्यत्वात् । तस्मादेवं वक्तव्यम्— बाह्यपदार्थविषय इवाहमर्थतद्गतसुखादिविषयेऽपि वृत्तिरवश्यमिष्यते । बाह्यविषये तु इन्द्रियसापेक्षा, अन्यत्र निरपेक्षा । तस्या अहमर्थवृत्तेरभावादेव

सुषुप्तावहंकारलय इत्युच्यते । तत्र सुखादिवृत्तिर्जायमाना सुखादेरहमर्थस्य च सुखादेरात्मनश्च भेदमपि नियमेन गृह्णाति अहं सुखीतिधर्मधर्मिभावेन प्रतीतेः । केवलाहमर्थविषयिणी तु वृत्तिरहमर्थं चैतन्यरूपात्मानञ्च गृह्णाना न तयोर्भेदमवगाहते । चैतन्यस्य चात्मनो वस्तुतो निर्धर्मकत्वात् किञ्चिद्रूपेण प्रकाशप्रसत्त्यभावात् । अत एव तस्य पृथगभिलापानर्हत्वात् अहमर्थवृत्तिर्जायमाना अहन्त्वेनाहमर्थं चैतन्यात्मानञ्च भेदं विना गृह्णती अहमित्येवाकारं लभते । इयमेव वृत्तिरहमर्थात्मभ्रम इत्युच्यते इति—इदमयुक्तम्—अहमर्थस्य सुखादेश्च वृत्तिं विना स्वरूपत एव साक्षिभास्यत्वे संभवति वृत्तिकल्पने मानाभावात् । साक्ष्यधीनस्तत्प्रकाशश्च तद्विषयकव्यवहार एव ; न तु कश्चिदतिरिक्तः । एवञ्च चैतन्यमहङ्कारं सुखादिकञ्च व्यवहारयत् वस्तुतस्तेषां स्वस्य च मिथोभिन्नत्वात् भेदघटितव्यवहार एव कारणं स्यात् । अतो नाभेदभ्रमस्य प्रसक्तिः । यत एवं सति न कदाप्यात्मनोऽहमर्थस्य च भेदो लोकेऽनुभवगोचरो भवति, अतो ज्ञायते आत्मनोऽहमर्थस्य च भेदाभावादेवात्मरूपं चैतन्यमहमर्थाभेदव्यवहारमेव सर्वत्र निष्पादयतीति । अत एवाहन्त्वमपि तस्य स्वाभाविकमेव । अन्तःकरणवृत्तेश्चैतन्यविषयत्ववर्णनञ्चासंभवि ; चैतन्यस्य स्वतो भातस्यान्याधीनप्रकाशाभावात् वृत्त्या तद्विषयीकरणायोगात् ।

अत एव वृत्तेरन्तःकरणस्य वा चैतन्यव्यञ्जकत्वस्य नैव प्रसक्तिः । चैतन्यव्यञ्जकत्वं हि चैतन्यविषयकचैतन्यजनकत्वं वा चैतन्यविषयकव्यवहारजनकत्वं वा । नाद्यः, चैतन्यद्वयस्याभावात् । नान्त्यः, व्यवहारे चैतन्यविषयीभावार्थमन्यानपेक्षणात् । अन्यथा स्वयम्प्रकाशत्वभङ्गप्रसंगात् । अभिलापकशब्दस्मरणवचनाद्यर्थं तु अहमर्थापेक्षा स्यात् । नन्वविद्यावृतं चैतन्यमहङ्कारेणाऽऽभिव्यक्तं प्रकाशते ; अहङ्कारश्च स्वोपहितं चैतन्यांशमावरणनिवर्तनेन प्रकाशयतीति चेत्—न—अविद्ययाऽऽवृतमहङ्कारेण व्यज्यत इत्यस्यायोगात् । आवृतमन्यस्मै न प्रकाशत इतीष्टमेव ; कुड्यान्तरितस्य वस्तुनः प्रकाशादर्शनात् । इह तु तदुक्तिर्न घटते । न हि स्वस्य स्वप्रकाशे

किञ्चित् तिरोधायकं भवति । मातुर्निलीयते कृष्ण इतिवत् स्वस्मात् स्वयं निलीयत इत्यस्य दुर्वचत्वात् । अत आवरकद्रव्यव्याप्तेन पुरुषेणाऽऽवरकतिरोहितं न गृह्यत इत्येवानुभवसिद्धम् । न च शैशवे भ्रष्टेन राजपुत्रेण स्वात्मानमजानतैव स्थितेन पश्चात् स्वस्य ग्रहणात् स्वविषयेऽप्यावरणं भवितुमर्हतीति वाच्यम्—वैषम्यात् । न हि राजकुमारस्य स्वात्मा वा स्वगतं सुखादि वा स्वशरीरं वा न प्रकाशते ; किंतु स्वस्य क्षत्रियत्वं न प्रकाशते । तदपि क्षत्रमातापितृजन्यत्वस्य क्षत्रियत्वव्यञ्जकस्यादर्शनात् ; अन्यस्य च लिङ्गस्याभावात् ; आप्तेनानुपदिष्टत्वाच्च । अतः स्वात्मरूपधर्मिग्रहणस्य तत्रापि सार्वदिकत्वेन स्वयम्प्रकाशं वस्तु केन चिदावृतत्वात् स्वस्मै न प्रकाशत इति दुर्वचमेव । अतो नाहङ्कारस्य जडस्य स्वप्रकाशात्मव्यञ्जकत्वसंभवः । यदाहुः श्रीभगवद्यामुनपादाः, "शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः । स्वयञ्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥" इति । विस्तरस्तिरोधनानुपपत्तिप्रसाधने द्रष्टव्यः ।

तस्मात् साक्षिणा स्वयम्प्रकाशेनाहङ्कारादिभासकेन मिथो भेदोऽपि स्थितो भास्यतैवेति, तथा अहमर्थस्यात्मनश्च पृथग्वस्तुतया कदापि केनाप्यग्रहणात् नाहमर्थव्यतिरिक्त आत्मेति जानातीत्यादेर्धर्मभूतज्ञानपरतया तदाश्रयतया चाहमर्थस्य प्रकाशमानतया तदंशस्य चाबाधितत्वादात्मनो ज्ञातृत्वं वास्तवमेव ; न त्वध्यस्तमिति ॥

रसघनलवणनिदर्शनदर्शितविज्ञानगुणनिसर्गाणाम् ।
आत्मानमात्मनां श्रुतिराह स्वाभाविकज्ञानम् ॥

शुभमस्तु

---

श्रीः

# साक्षित्वभङ्गप्रसाधनम्

नमस्तस्मै विचित्राय साक्षिणे सर्वकर्मणे ।
विचारनिरपेक्षायादृश्याय फलदायिने ॥
अहंताज्ञातृते आत्मन्यनिच्छद्भिरुदीर्यताम् ।
कुतोऽत्र साक्षितामात्रमिति संप्रति वर्ण्यते ॥
अज्ञाता स्यात् कथं साक्षी निष्क्रियत्वांशमात्रतः ।
साक्षात् द्रष्टरि संज्ञायामिति द्रष्टरिशासनात् ॥

जीवब्रह्मैक्यवादिनः आत्मान्तरमसहमानाः सर्वदेवतैक्यं त्रिमूर्त्यैक्यमित्याद्यप्याद्रियमाणाः ब्रह्म, ईश्वरः, ईश्वरसाक्षी, जीवसाक्षी, इत्येवमनुपपन्नं भेदं बहुविधं कल्पयन्ति । शब्दप्रवृत्तिनिमित्तभेदेऽपि वस्तुस्वरूपभेदस्तावदत्र न शक्यते वक्तुम् । स्वप्रकाशरूपं चैतन्यं किञ्चिदस्ति, तत् वृत्तिसापेक्षं जागरादौ सर्वार्थप्रकाशरूपं भवति, वृत्तिनिरपेक्षमपि कतिपयप्रकाशरूपमिति तन्मतस्थितिः । एवं प्रकाशरूपतया चेत् साक्षित्वम्, तत् सर्वदा सर्वत्र सुवचमिति सुषुप्त्यादिसमयपरिग्रहेण तदुपपादनमनपेक्षितम् । उपपादनेऽपि तस्यार्थस्य साक्षिशब्देनोपपादनमयुक्तम् । यावता ज्ञातृत्वकर्तृत्वाहंत्वादिकं चिन्मात्रे न संभवतीति जड एव क्वचित् अहङ्कारे अविद्यायां वा तत् सर्वमवस्थाप्यते, तावता साक्षित्वमपि ज्ञातृत्वविशेषस्तत्रैवेति तदेव वस्तु साक्षिपदव्यपदेश्यं भवेत् । ज्ञात्रादिपदानि ज्ञाधात्वादितः तृजाद्यन्ततया सामान्यानुशासनतो यथायथं निष्पाद्यमानानि लाक्षणिकेऽर्थेऽपि नीयेरन्; नीयन्ते च, 'ज्ञोऽतएव' इत्यादौ भवद्भिः । एव कुर्वद्भिर्यस्य शब्दस्य विशिष्यानुशासनं बाधकं जागर्ति, तत् साक्षिपदं स्वापेक्षितार्थसाधने मुख्यमिव सादरं प्रयुज्यते इत्युपेक्ष्यतरमेतत् । यद्यपि साक्षिपदं न द्रष्टृसामान्ये प्रयुज्यते दातृप्रतिग्रहीतृुपद्रष्टॄणां मध्ये उपद्रष्टरि प्रयोग एवाद्रियत इति हि वैयाकरणाः । वादिनोर्विवदमानयोर्मध्यस्थस्येव वादप्रतिवादादि-

द्रष्टृत्वाविशेषेऽपि न तौ साक्षिणावित्युच्येते ; किंतु विवादक्रियारहित एव । तदिदम् , "साक्षाद्द्रष्टरि संज्ञायाम्" इति संज्ञापदनिर्देशेन योगरूढिसूचकेन दर्शयति सूत्रकारः—तथापि तावता निष्क्रियत्वमात्रेण मा स शब्दः प्रयोजीति साक्षाद्द्रष्टरीति विवक्षणीयमर्थमपि स्पष्टमाह । तेन साक्षिपदं द्रष्टृवाचकं सत् अवधारणविवक्षया प्रकृतकार्यकर्तृत्वराहित्येऽपि प्रवृत्तिनिमित्तकोटौ प्रवेशिते सति व्यक्तिविशेषे पर्यवस्यतीति ज्ञायते । द्रष्टृत्वरहितस्तु निष्क्रियोऽपि न साक्षिपदव्यपदेश्य इति तत्सूत्रदर्शितोऽर्थः । यदि साक्षाच्छब्दात् इनिप्रत्ययं द्रष्टर्थे अननुशास्य प्रकाशकरूपार्थेऽनुशिष्टवान् स्यात् , तदा कामं तद्व्यवहारकारणस्वरूपप्रकाशकत्वमादाय चिन्मात्रेऽपि साक्षिशब्दः प्रयुज्येत । ज्ञातृत्वावान्तरभेदरूपद्रष्टृत्वरूपमर्थं प्रधानीकृत्य निष्क्रियत्वमर्थलभ्यं तदुपसर्जनमभिप्रेत्य साक्षिशब्दमनुशासत् पाणिनिर्भवन्मते साक्षिशब्दस्य स्वेच्छया क्वचिन्नयनं निवारयत्येव । तदिदमेव व्यञ्जयितुं श्रीभाष्ये, "स्मरति च भगवान् पाणिनिः साक्षाद्द्रष्टरि संज्ञायामिति साक्षाद्द्रष्टर्येव साक्षिशब्दम्" इति गभीरमभाषि । न च भवदभिमतार्थे साक्षिशब्दस्य स्वरसप्रयोगः संलक्ष्यते । या तु श्रुतिः, "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति, सा साक्षिपदघटिताऽपि न भवदभिमतसाक्षिसाधिका । प्रतिजीवं साक्षिभेदात् ईश्वरसाक्षिणश्चान्यस्य सत्त्वात् बहवः किल साक्षिणः । तत्र एक इति उपक्रमेऽपि विरोधः । यदुक्तम्—अत्र श्रुतं साक्ष्येकत्वं न साक्षिबहुत्ववारकम् , ईश्वरसाक्षी एक इत्येतत्परत्वादिति—तत्रोच्यते, रीतिरियम् , 'एकस्तथा सर्वभूतान्तरात्मा' इत्यादिष्वप्यनुस्रियताम् । तेन सर्वान्तर्वर्तिनः परमात्मन एकत्वे ततो निश्चितेऽपि न जीवभूतनानात्मनिषेधः प्रसज्यत इति । वस्तुत इह, 'एको देव' इति देवैक्यमेवावगम्यते ; न साक्ष्यैक्यम् । तच्च, 'दिव्यो देव एको नारायणः' इति श्रुत्यन्तरानुगुणम् । तस्य च देवदेवस्य सर्वभूतगूढत्वकर्माध्यक्षत्वादिवत् साक्षित्वमप्युच्यत इति नात्रेश्वरातिरिक्त ईश्वरसाक्षी कश्चित् स्वीकर्तुं शक्यः ।

'चेता केवल' इति साक्षिलक्षणप्रतिपादकमिति च भवदीयाः। तत्तु सर्वेषामपि प्रथमान्तानाम्, 'गुणानाञ्च परार्थत्वात्' इतिन्यायेन देवविशेषणत्वेनान्वयस्यैवात्र प्रतीतेर्न स्वरसम्। तथा सत्यपि चेता ज्ञातैव केवलशब्दवाच्योदासीनत्वविशिष्टः साक्षी स्यात्। ज्ञातृत्वञ्चाहङ्कारादावेव, न चैतन्य इति न चिन्मात्रसाक्षित्वमितोऽवगम्यम्। एवञ्चाविद्याप्रतिबिम्बस्याविद्याविशिष्टस्य वा जगद्व्यापारपूर्णस्येश्वरस्य जैवव्यापारेषु यादृशमौदासीन्यविशिष्टज्ञातृत्वरूपम्, तादृशमेव साक्षित्वमियं श्रुतिराहेति मन्तव्यम्। एवमीश्वरस्यैव साक्षित्वश्रवणमवलम्ब्य भवन्मते कौमुदीकारेणेश्वरसाक्ष्यतिरिक्तसाक्ष्यभाव उपपादित इति स्पष्टं सिद्धान्तलेशसंग्रहे। परंत्वीश्वरस्य रूपभेदमभिमत्य कारणत्वादिधर्मास्पदं रूपमीश्वरः, तदनास्पदमुदासीनं रूपं साक्षीत्युक्तम्। तत्तु रूपं दुर्निरूपम्। अविद्याशबलं यद्रूपम्, तदतिरिक्तं सर्वजीवप्रवृत्तिनिवृत्त्यनुमन्तृ सुषुप्त्युत्क्रान्त्योः प्राज्ञशब्दाभिधेयञ्च किं तद्रूपम्। तस्यैव तु, 'तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्' इति रीत्या किञ्चिद्रूपेणाकर्तृत्वस्यापि सत्त्वात् तादृशमेव साक्षिपदविवक्षितमिति। यत्तु, 'अनश्नन्नन्योऽभिचाकशीति' इति श्रुत्या कश्चिदुदासीनोऽवगम्यत इति—तन्न—अन्तर्यामिब्राह्मणादिप्रतिपादितस्यान्तर्यामिण एव अशनं विनैव प्रकाशमानत्वस्यात्र वर्णनमिति, 'द्वा सुपर्णा' इति पूर्वार्धावगततया रूपभेदे मानाभावात्। एकैकविशेषणभेदप्रयुक्तविशेष्यभेदश्रद्धायां तु, 'एको देव' इत्यादिश्रुत्यादिभिरनन्तानीश्वररूपाणि फणितानि स्युरिति न द्वैविध्यमात्रप्रसक्तिः।

किञ्च जीवसाक्षिवत् ईश्वरसाक्षिणा भास्यमानं किमिति विचार्यम्—अविद्यावच्छिन्नचैतन्यरूपेणेश्वरेण अविद्यापरिणामरूपानन्तवृत्तिच्छुरितेन सर्वं प्रकाश्यत इति तस्य तत एव सर्वज्ञत्वं सिद्धमिति ईश्वरसाक्षिणे विभजनीयं किमस्ति? न चाविद्यैव साक्षिणा भास्यते, यथा सुषुप्तौ जीवसाक्षिणा तदज्ञानमिति वाच्यम्—तथा सति अहमज्ञः, अहं न जानामीतीश्वरेण प्रतिसंधानप्रसङ्गात्। अत एव भावरूपमज्ञानमविद्यादिशब्दवाच्यम् अहमज्ञ इत्यादौ विषय

इत्यद्वैत्युपपादनमुदस्तं भवति। एतेन जीवस्य सुखादिकमिवेश्वरस्य सुखं तत्साक्षिणैव भास्यत इत्यपि निरस्तम्—सुखादिविषयेऽप्यविद्यावृत्तिस्वीकारे घटादिवृत्तितौल्यात् तदर्थे साक्षिकल्पनस्यानावश्यकत्वात्। अविशेषेणाविद्याया अपि भास्यत्वापत्तेश्च। ईश्वरेण स्वाविद्या न ज्ञायते चेत्—असर्वज्ञत्वापत्तिः। नन्वीश्वरस्यापि शुद्धचिदानन्दरूपात्माज्ञानम् अहं न जानामीत्यनुभूयमानमस्त्विति चेन्न—तस्य तज्ज्ञानाभावे तदुपदेशभूतवेदादिप्रवक्तृत्वाभावप्रसङ्गात्। तज्ज्ञानमस्ति, न तु तत्साक्षात्कार इति चेत्—हन्त, "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इत्युक्ततत्त्वदर्शित्वदशाऽपि तस्य नास्तीति शान्तं पापम्। एवञ्चादर्शनमित्येवाविद्याया नाम स्यात्; न त्वज्ञानमिति। अहं न साक्षात्करोमीति च तदवभासः स्यात्; न त्वहं न जानामीति, अज्ञ इति। दोषोऽयं पृथक्साक्षिस्वीकारे चास्वीकारे च समानः। सुषुप्तिकाले जीवसाक्षिणा सुखादिप्रकाशनवत् ईश्वरस्य प्रलयरूपायां सुषुप्तौ तत्साक्षिणा तत्सुखस्वरूपभानादिकं व्यवस्थाप्यत इति चेत्, तदा यदीश्वरो भूतभविष्यद्विषयविज्ञानरहितः, तदा सर्वदा सर्वदर्शित्वं तस्य सर्वसंमतं भज्येत। तदा जीवादृष्टाद्यधिष्ठानाद्यभावप्रसङ्गेन, 'कर्माध्यक्ष' इतिसाक्षिवाक्यश्रुतार्थभङ्गः सृष्ट्यारम्भासंभवश्च स्यात्। अतः सार्वकालिकाविद्यावृत्तिनिकुरुम्बकरम्बितमीश्वरचैतन्यं न कदापि केवलसाक्षि भवितुमर्हति।

अथ जीवसाक्षि विवेचनीयम्—तत्रोक्तं शतदूषण्याम्, न किञ्चिदनेन साक्षिणा भासनीयमिति। स्वरूपप्रकाशस्य सार्वकालिकतया स्वरूपायत्तत्वमेवेति न साक्ष्यधीनत्वम्। अन्यत्तु अहङ्कारवृत्त्यधीनप्रकाशम्। सुखमहमस्वाप्समितीदं साक्ष्यधीनमिति चेत्—तत्र सुखांशः, अहमंशः, स्वापांशः, कालांशो वा; कतमस्य साक्षिभास्यता? नाद्यस्य; स्वरूपसुखस्य स्वरूपत एव सर्वदा प्रकाशात्। न द्वितीयस्य, तस्य सुषुप्तावभावात्; जागरेऽप्यहमर्थसत्त्वादेतत्प्रतिसंधानस्य तदर्थमनुदाहरणीयत्वाच्च। न तृतीयस्य; स्वापो नाम यदि वृत्तिविशेषः, तर्हि वृत्त्यन्तराणामिव तस्यापि वृत्तिच्छुरितचैतन्याधीनभानतया

किं पृथग्भूतसाक्षिकार्यमस्तीति। अत एव न चतुर्थस्य। यत्तूच्यते—सुखस्य स्वरूपत्वेऽपि जागरदशायामपि तद्भाने सुखमहमस्वाप्समिति सुषुप्तौ विशेषाभावप्रसंगात् आवृतस्यापि सुखांशस्यानावृतरूपेण भानं तदा साक्षिणा। अन्यस्य सुखमिति तदा परामर्शनीयस्याभावात्; सुषुप्तौ वैषयिकसुखाप्रसक्तेरिति—तत्र विचार्यम्—जागरद्शायामावृतस्य सुखांशस्य तदानीमावरणभङ्गः किमधीनः, येन स साक्षिभास्यः स्यात्। मुक्तिप्राक्कालावच्छिन्नतत्त्वमसिवाक्यार्थवृत्तिवत् तत्र कस्यचिदभावे चावृत एव स इति तत्प्रकाशासंभव एव। तथा तस्य सुखस्य साक्ष्यनतिरेकात् अन्येन स्वस्य ग्रहणे आवरणस्य बाधकत्वेऽपि स्वेन स्वग्रहणे आवरणस्य बाधकता न संभवदुक्तिकेति प्रागेवोपपादितत्वेन चावरणमेव सुखांशे दुर्वचम्। एवं सुषुप्तावानन्दावरणनिवृत्तौ सुषुप्तिकाल एव मुक्तिप्रसंगः। आनन्दाज्ञानादेव हि संसारः। अद्वैतविद्याचार्योक्तविधया आनन्दाभिव्यक्तितारतम्यमस्ति; पूर्णाभिव्यक्तिरेव मुक्तिरिति चेत्—न—आनन्दस्य स्वयम्प्रकाशतया तस्य व्यञ्जकानपेक्षितया जडस्य तद्व्यञ्जकत्वायोगाच्च आनन्दगतापरिच्छिन्नत्वस्यापि स्वरूपानतिरेकाच्च स्वरूपे प्रकाशमाने प्रकाश्यस्यान्यस्याभावात् तदयोगात्।

यच्चोक्तम्—सुषुप्तावन्तःकरणलयेऽपि सूक्ष्मावस्थं तदस्ति। तदविद्याविषयिणी वृत्तिः सुखादिविषयिणी च वृत्तिर्भवति। प्रमाणजन्यवृत्तिविलक्षणतद्वृत्त्युपहितचैतन्यसंबन्धादविद्यासुखादीनां भानमिति—तत्र जागरदशावस्थितमन्तःकरणमहमर्थ इति नियन्त्रणमयुक्तम्। सुषुप्तिकालिकसूक्ष्मांशस्यापि अहमस्वाप्समित्यहमुल्लेखविषयत्वात् सुषुप्तिजागरसाधारणान्तःकरणस्वरूपमेवाहम्पदविवक्ष्यमित्युक्तमेव। तथा शास्त्रविदां सृष्टिप्रलयप्रवाहविज्ञानानुरोधेन अहं भूतपूर्वेषु प्रलयेषु सर्वेषु सर्गेष्विवासमिति प्रलयावच्छेदेनाप्यहमर्थस्थितिप्रतीत्या अविद्यांश एवाहमर्थत्वेन भवद्भिरेष्टव्यः। तत्रान्तःकरणस्य घटाद्याकारा वृत्तिरित्युक्तौ तुल्यपरिमाणतापत्तिरिति स्यान्नाम। अन्यत्र गुणादिविषये वृत्तेस्तदाकारत्वं वृत्त्यच्छिन्नचैतन्यभास्यत्वातिरिक्तं न किञ्चित् सुवचम्। एव-

मिहाविद्यैवाविद्याकारवृत्तिरूपेण परिणमत इत्युक्तावपि अविद्याऽवतिष्ठत इत्येतदतिरेकेण किञ्चिद्रूपं नोक्तं भवति ; स्वस्य स्वं प्रति विषयत्वञ्चायुक्तम् । एवमविद्यायाः ब्रह्मरूपसुखाकारा वृत्तिरित्यप्यसंभाव्यम् । यथा हि नीलाकारं ज्ञानमिति बौद्धमतम्, "अर्थेनैव विशेषो हि निराकारतया धियाम्" इति विषयत्वातिरिक्तस्याकारस्याभावान्निरस्यते, तथाऽत्रापि भाव्यताम् । चैतन्यवत् वृत्तेर्जडायाःप्रकाशकत्वाभावात्तु विषयत्वमपीह दुर्वचमिति विशेषः । तस्मात् तत्तदाकारा वृत्तिरुदेति, तदुपहितं चैतन्यं तत्तद्भासकं भवतीत्युपपादनमसंभवि । अत एवाविद्यकनिवृत्त्याऽऽवरणनिवृत्तिः, तत आनन्दस्य, अविद्यायाः, तद्रूपकालस्य च प्रकाश इत्युक्तमप्यपास्तम्—वृत्तेरेव दुर्वचत्वात् । कालविषयीणी वृत्तिर्भवतीत्यपि दुर्वचम् । सामान्यतः कालस्य विषयत्वे व्यावर्तनाभावात् कालोपाधिविशिष्टस्यैव तस्य भानं वाच्यम्—तत्र एतावन्तं कालं न किञ्चिदहमज्ञासिषमिति बाह्यसूर्यपरिस्पन्दादिरूपानुभवसिद्धोपाधिविशेषावच्छिन्नकालस्यैव स्फुरणात् तद्विषय वृत्तिरेव तदा वक्तव्येति जगरादविशेष एव सुषुप्तेः स्यादित्यपि शतदूषण्यामुक्तमेव । एवमज्ञानं भावरूपमिति पक्षे सिद्धेऽपि तदाकारा वृत्तिर्न भवतीत्युक्तम् ; तत्रैव न प्रमाणमिति च स्थास्यति । ज्ञानाभावरूपमज्ञानञ्च ज्ञानरूपप्रतियोगिग्रहणाधीनग्रहणत्वात् ज्ञानस्य च विषयैकनिरूप्यत्वात् न ग्रहीतुं शक्यमिति भवतामपीष्टमिति सुषुप्तौ तद्वृत्त्युदयप्रसक्तिरेव नास्ति । तथा च सुखमहमस्वाप्समित्यत्र कालस्याज्ञानरूपस्य स्वापस्य अविद्यमानस्याहमर्थस्य च ग्रहणासंभवे स्थिते सुखभानमेव शिष्यते । तदाकारत्वमपि वृत्ते दुर्वचमित्युक्तम् ।

कारणञ्च किं वृत्तेः ? यद्यकस्मादेव वृत्तिः, तर्हि जागरेऽपि स्यात् । अथ बाह्यवृत्तौ चक्षुरादि प्रमाणमिव सुषुप्तिकालभाविवैलक्षण्यं देहादावन्तःकरणे वा स्थितं तादृशवृत्तिप्रयोजकमिति चेत्—तर्हि भंग्यन्तरेण प्रमाणमेवापूर्वं किञ्चिदुपन्यस्तं भवतीति जागर इव तत्रापि प्रमाणाधीने जीव एव तत्प्रकाशकारणं भवेदिति किं साक्षिरूपविशेषव्ययदेशेन ? सुखस्यात्मस्वरूपत्वाच्च स्वप्रकाशतया न तत्र वृत्त्यपेक्षा

एवं तर्हि सुखमहमस्वाप्समित्यस्य प्रत्यवमर्शरूपत्वं कथं निर्वाह्यमिति चेत्—भवन्मते क्लेश एव। अस्माकं तु धर्मभूतज्ञानस्य कस्य चित् सद्भावात् प्रत्यवमर्शत्वं सुनिर्वचमिति पक्षोऽप्याचार्यैः निर्विषयस्वयम्प्रकाशविचारवादे न्यरूपि, यथा, "अतः सुषुप्तावपि सा साश्रयैव संकोचादिधर्मवती च। एकदेशिमतेनात्मविषयतया सविषया च। ततश्च सुखमहस्वाप्समिति परामर्शोऽप्युपपन्नः" इति। यादृशसामग्रीबलात् सुषुप्तावविद्यावृत्तिः काचिज्जायत इति भवतोच्यते, तादृशसामग्रीबलादेव धर्मभूतज्ञानं सुखरूपात्मविषयकं परिणामविशेषं लभते। ज्ञानानां जायमानानां कालपरिच्छिन्नतया ग्रहणस्वाभाव्यात् अस्मन्मते च कालस्यातिरिक्तपदार्थतया सर्वत्र ज्ञाने तत्कलानां भानस्येष्टतया च सुखस्वरूपस्यात्मनः कालस्य च तदा भानं सुवचमिति सिद्धं प्रत्यवमर्शत्वम्। वस्तुतः तार्किकमीमांसकादयः सुखभानं तदा नेच्छन्ति। दुःखमहमस्वाप्सम्, गाढं मूढश्चाहं सुप्त इत्यप्यनुभवस्य कदाचित्कस्य पातञ्जलादौ दर्शितत्वात् दुःखमोहयोरपि सुषुप्तौ प्रसङ्ग इत्यापादयन्ति च। अस्माभिस्तु आत्मनः सुखरूपस्य स्वयम्प्रकाशतया स्वरूपात्मकसुखप्रकाशमात्रं तदा स्वीकृत्य सुखमहमस्वाप्समित्यस्य प्रत्यवमर्शत्वं प्रकारान्तरेणाहमर्थात्मत्वप्रसाधनावसर एव प्रपञ्चितमित्यलमधिकेन।

आस्तामेतत्। इदं नः प्रकृतम्। यावत् ज्ञातृत्वं न स्वीक्रियते, तावत् साक्षित्वमपि न सुवचम्। उक्तञ्च श्रीभाष्ये, "ज्ञातैव हि लोकवेदयोः साक्षीति व्यपदिश्यते" इति। यावत् ज्ञातृत्वमात्मनि निषिध्यते, तावत् साक्षित्वमपि निषेध्यमेव। 'एको देव' इति श्लोके उपक्रान्तदेवत्वादीनां पाश्चात्यस्य च चेतृत्वस्यान्तराले निविष्टं हि साक्षित्वं तद्वदेव भवन्मते अनात्मनिष्ठं भवितुमर्हति।

शोधने च तत्तत्पुरुषसाक्षिणा बाह्यप्रमाणग्राह्याणां तत्तत्पुरुषीयदेहादीनामपि सर्वदाभास्यत्वमस्तीत्यादेरुपेक्ष्यत्वेऽपि एतावत्तु वक्तव्यमस्ति—यत्—चैतन्यं स्वरूपतः स्वप्रकाशं भवति। अन्तःकरणावच्छिन्नचैतन्यं वृत्ति-

च्छुरितं सत् बाह्यं सर्वं प्रकाशयति । अन्तःकरणरूपाहमर्थ-तद्गतरागद्वेष-सुखदुःखादिवृत्त्यादिकं तु चैतन्यमात्रभास्यमिति तदात्वे तत साक्षीति व्यपदिश्यत इति । तदेतत्प्रमेयदौःस्थ्यं वादान्तरत एव सुग्रहमिति इह वादे एतत्प्रकाशकत्वेन स्वीकृतेऽत्र चैतन्ये साक्षिपदव्यपदेशः सादरं क्रियमाणो न युक्त इत्येतावत् ब्रूमः । यदा तु मुक्तिकारणाखण्डाकारवृत्तिरिव सुषुप्तौ सुखविषयेऽन्तःकरणसूक्ष्मांशविषये स्वापादिविषये च वृत्तिरपीष्यते, तदा तादृशवृत्तिज्ञानाश्रयत्वं ज्ञातृत्वविशेष एव साक्षित्वमिति न तस्यात्मनिष्ठत्वम् ; किंतूपाधिनिष्ठत्वमेवेति उपहिते साक्षिशब्दनिर्देशोऽनुपपन्न एवेति ।

भवता तु—विषयचैतन्याभिन्नप्रमातृचैतन्यं साक्षीत्युक्तौ द्रष्टृरूपं साक्षि ; तदभिन्नवृत्त्यवच्छिन्नचैतन्यं साक्षीत्युक्तौ साक्षात्काररूपं साक्षीति विवेक इत्युक्तम् । पदद्वयेऽपि साक्षिशब्दमुख्यार्थासंभव एव । चैतन्याश्रयस्यैव साक्षिपदार्थताया लोकप्रसिद्धत्वात् । यत्तु सुषुप्तावप्यन्तःकरणसूक्ष्मावस्था-रूपाविद्योपहितचैतन्यस्य प्रमातृत्वमनपायमिति साक्षिणि प्रमातृत्ववचनम्, तत् अद्वैतिष्वेव जीवातिरिक्तसाक्ष्यभावपक्षोऽपि कश्चिदस्तीति प्रागुपन्यस्य कथञ्चित् तत्राविशेषव्युत्पादने प्रकृत्य, अन्तःकरणविशिष्टः प्रमाता, तदुपहितः साक्षीति प्रमातृसाक्षिणोर्भेदप्रतिपादकसिद्धान्तलेशसंग्रहग्रन्थविरुद्धम् । ज्ञान-चैतन्यप्रमितिप्रत्यक्षादिपदानि वृत्तिप्रतिफलितचैतन्यपर्यन्तबोधकानीति परिभाषा-दावप्युक्तमिति तदाश्रय एव हि ज्ञातृसाक्ष्यादिपदनिर्देश्यो भवेत् । न च भवदभिमतसाक्षिणस्तथात्वं भवितुमर्हति । तस्मादुल्लोकमुच्छास्त्रञ्च प्रमेय-जातं स्वयं शिक्षित्वा सर्वस्यापि व्यवहारस्य क्लेशेन निर्वाहं विदधतां ज्ञात्रादि-शब्दप्रयोगे संमतिविरहः साक्ष्यादिपदप्रयोगे समादरश्च न स्थाने ।

ब्रह्मैव विकृतं किञ्चित् ब्रह्मा नाम यथा, तथा ।
यत् साक्षादपरोक्षात् तत् साक्षीति स्यान्नु कल्पना ॥
जीवस्य साक्षिणश्चेष्टो यदि भेदः, कथं तदा ।
अस्वाप्सं सुखमेतावदहं नाज्ञासिषं मनाक् ॥

इति जीवः साक्षिभातप्रतिसंधानकृत् भवेत् ।
ऐक्याध्यासादिति तु यत् तन्न, अध्यासेऽप्यनैक्यतः ॥

जीवस्य नानाव्यवहारकर्तुः साक्षित्वमिष्येत न हीति चेन्न ।
लोकेऽपि नो तर्हि भवेत्तु साक्षी सर्वो ह्यनेकव्यवहारकारी ॥

कार्यान्तरेऽसौ कृतिमानपि स्यात् साक्षी क्वचिच्चेत् तदकर्तृभावात् ।
जैवेषु कार्येषु तु साक्षिभावादीशोऽपि साक्ष्यस्तु किमन्यथोक्तया ॥

• परन्तु साक्षित्वमिहेरयद्भिः ज्ञातृत्वमप्यप्रतिषेधनीयम् ।
असंभवस्तस्य यदीह जीवे परे च, तुल्यस्तु स साक्षितायाम् ॥

अद्वैतसिद्धच्युक्तमपीह चिन्त्यम्——अज्ञानमज्ञानतयाऽन्यथा वा ।
स्यात् साक्षिभास्यं सततम् ; न पूर्वः न जागरेऽज्ञानधियोऽनुवृत्तिः ॥

स्वरूपतः सार्वदिके तु भाने मानं हि नो किञ्चिदतश्च नान्त्यः ।
किञ्चेह नाज्ञासिषमित्युपात्तः किमन्वयी स्यात् वद भूतकालः ॥

ज्ञाधातुवाच्ये तु न, यद् ब्रवीषि भावात्मकाज्ञानपरं समस्तम् ।
अज्ञान एतर्हि न भूतकालः ; नाज्ञानवृत्तौ, न हि सा पदोक्ता ॥

भावात्मकाज्ञानमतो न सिद्ध्येत् जीवोऽथ साक्षी यदुपाधिकः स्यात् ।
एका तमोवृत्तिरपीह चिन्त्या कथं सुषुप्तौ विविधाऽस्तु वृत्तिः ॥

साक्षीति कूटस्थचिति यदाहुः स्यात् कूटसाक्ष्येकनिरूप्यमेतत् ।
अत्ताऽहमर्थोऽस्त्वभिचाकशीतीत्युक्तस्तु जीवोऽस्त्विति शाङ्करोक्तिः ॥

जीवोऽयमत्ता स परः परःस्यादित्यात्मयुग्मं खलु सूत्रसिद्धम् ।
जीवात्मसाक्ष्यात्मयुगं तदर्थं इतीयमर्वाग्जनकल्पनैव ॥

जीवोऽथ साक्षीति विभागक्लृप्तिः तं कल्पितं भेदमथो निदर्श्य ।
परस्य जीवस्य च भेदमेवमवास्तवं वर्णयितुं कृता स्यात् ॥

सुखात्मना संततभासमानैः
मुक्तौ लसत्तीव्रसुखत्वबोधैः ।
सार्वज्ञ्यतः साक्षिभिरीड्यमानो
देवोऽहमर्थैर्हृदि मे स दीव्यात् ॥

शुभमस्तु ।

श्रीः

# शास्त्रविरोधभङ्गप्रसाधनम्

प्रत्यक्षयुक्तिसगुणश्रुतिसिद्धधर्म-
सत्त्वाविरोधिसरसाखिलवाक्यमेयम् ।
व्युत्पादयन्त इह विश्रुतनीतिमार्गाः
सन्तो लसन्तु हृदि संमतसर्वमानाः ॥

प्रत्यक्षस्य ज्ञानान्तरापेक्षया वैशद्यातिशयवत्तया, उपजीव्यतया, "सा चेयं प्रमितिः प्रत्यक्षपरा" इति न्यायभाष्योक्तदिशा परोक्षज्ञाने जातेऽपि प्रत्यक्षज्ञानप्रतिलम्भाय पुरुषप्रयत्नस्यौत्सर्गिकतया च प्राबल्यसद्भावेऽपि, प्रत्यक्षं सर्वं प्रबलम्, अनुमितिशाब्दबोधादि दुर्बलमिति न नियमः; ज्वालैक्य-प्रत्यक्ष-द्विचन्द्रप्रत्यक्षादीनां दौर्बल्यदर्शनादिति संभाव्यमानान्यथासिद्धिकं दुर्बलम्, अनन्यथासिद्धं प्रबलमिति तावत् अद्वैतिभिरेव निष्कृष्टमस्ति । इयं प्राबल्यदौर्बल्यचिन्ता च द्वयोर्मिथो विरोधे सत्येव । अविरोधश्च मिथोऽत्यन्त-भिन्नविषयकत्वस्य स्पष्टत्वाद्वा, उत्सर्गापवादादिविषये अपवादविषयव्यतिरिक्तविषयकतयोत्सर्गशास्त्रस्य संकोचादिना भिन्नविषयकत्वविमर्शाद्वा भवति । तत्राद्वैतशास्त्रं प्रबलम्, भेदग्राहिप्रत्यक्षादिकं दुर्बलमिति विरोधमङ्गीकृत्यैव बलाबलचिन्तने स्थिते तद्विरोधमविगणय्य, "श्रुतिप्रत्यक्षयोर्भिन्नविषयक-त्वात न प्रत्यक्षेण श्रुतेर्बाधः विरुद्धविषयकत्वाभावात्" इत्यविरोधवचनं न संगच्छते । अत्र हि शास्त्रविरोधो भवदीयोक्तो भवता परिह्रियते । स्थाप-नीयस्तु भवता विरोधः, तत्परिहारप्रकारासामञ्जस्यञ्च प्रदर्श्यम् । अतो विप-रीतवर्णनमयुक्तम् । एवमविरोधमुक्त्वा पश्चात्, "असंभाव्यमानपुरुषदोषानाप्त-प्रणीत-निश्चितप्रामाण्यकश्रुत्यपेक्षया तद्विपरीतं प्रत्यक्षादि दुर्बलमेव" इति बलाबलवर्णनं विरोधस्वीकारमूलकं व्याहतम् ।

अविरोधवर्णनञ्च भवत्कृतम्, अस्माभिरविरोधस्यास्मन्मते प्रदर्शित-त्वात् तद्वैपरीत्यदिदर्शयिषया भवन्मते तदविरोधः अस्मन्मते विरोधश्चेति कथमै

प्रवृत्य । कथमविरोधः ? जीवत्वेश्वरत्वविशिष्टयोर्भेदः प्रत्यक्षस्य विषयः, श्रुतेस्तु जीवत्वेश्वरत्वोपलक्षितयोरभेद इति चेत्—पदार्थानां किञ्चिद्विशेषणविशिष्टतामात्रेण भेदो न प्रत्यक्षगम्यः । न हि कुण्डली देवदत्तः वासस्विदेवदत्ताद्वा अकुण्डलदेवदत्ताद्वाऽन्यो भवति । विशेषणभेदमात्रेण विशिष्टवस्तुनो भिन्नत्वस्वीकारे तत्तत्क्षणवृत्तित्वविशिष्टवस्तुनो विभिन्नत्वापत्त्या सौगतसंमतः क्षणिकत्वपक्षः परिगृहीतः स्यात् । एकस्यैव कायव्यूहे च स एवायमिति प्रत्यभिज्ञामूलको व्यवहारः प्रामाणिकः । अत एव द्विजजन्मन्यपि आदिभरत इति व्यवहारः । अतो जीवेश्वरभेदबोधकं प्रमाणं प्रत्यक्षमन्यद्वा भवतु, तत् व्यक्तिभेदपर्यन्तमेवासति बाधके विषयीकरोतीति शास्त्रेण व्यक्त्यैक्यप्रतिपादकत्वाभिमतेन तस्य विरोधः प्राप्त एव । शास्त्रावैयर्थ्याय विशेषणभेदमात्रे पर्यवसानं विधातुमितः प्रयतनीयम् । न तु प्राथमिकी प्रतिपत्तिरेव विशेषणमात्रभेदविषयिणी । किञ्च जीवत्वं दुःखार्हत्वम्, ईश्वरत्वञ्च हेयानर्हत्वम्; अवतारादिष्वपि दुःखाभिनयमात्रमित्यस्य सर्वसंमतत्वात् । अर्हत्वानर्हत्वे च न कादाचित्के इति व्यक्तौ तदभावदशैव दुर्वचा । अतो जीवत्वेश्वरत्वे व्यक्ती भिन्त एव । ईश्वरः सर्वदैवेश्वर इत्येव लोकप्रतिपत्तिः । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति अस्येश्वरत्वमनागन्तुकमविनाशि च प्रतिपन्नमिति ईश्वरत्वोपलक्षितत्वं व्यक्तौ कथ्यमानमपि बाधितम् । अपि च तत्त्वमसीतिवाक्यं तत्पदेन प्रक्रान्तं कारणवस्तु सर्वज्ञं सर्वशक्ति निर्दिश्य त्वम्पदेन व्युत्पाद्यं तदधीनजन्मस्थितिलयं श्वेतकेतुञ्च निर्दिशति । तत्र प्रतीतधर्मसद्भावकाल एवैक्यमपि प्रतिपाद्यते; न तु धर्माणामभावं प्रदर्श्य तदुपलक्षिततया व्यक्त्यैक्यं दर्श्यते । धर्माणां मिथोविरुद्धतया सिंहो देवदत्त इत्यादाविव कथमैक्यं स्यादिति प्रत्यक्षादिविरोधमाकलय्य भवद्भिरुपलक्षितविषयतया वाक्यं नीयते । एवञ्च विशिष्टपरतया प्रतिपन्नस्य वाक्यस्यान्यथाकरणं विना भवद्भिर्वाक्यं न निरुह्यत इति प्रत्यक्षस्याप्यन्यथानयनं व्यक्तिभेदस्य प्रतीतस्य भङ्गविधानात्, वाक्यस्याप्यन्यथानयनम् विशिष्टप्रत्यायकस्योपलक्षितप्रत्यायकत्वाश्रयणादिति

उभयभञ्जनमेव समापद्यते । अतो जीवानामीदृशसुखदुःखरूपसंसारित्वमीश्वरस्य तादृशमीश्वरत्वमपि कदाचिदपैष्यति : सोऽप्यस्मादृशः केवल एव भविष्यत्याद्युपदेशेन लोकक्षोभं प्रत्यक्षादिप्रतीतिक्षोभं वाक्यक्षोभञ्च क्रियमाणमपेक्ष्य वाक्यतात्पर्यमात्रपरिशीलनं युक्तम् । तत्र पूर्वापरसंदर्भ एव तत्त्वमसीत्यैक्यस्य बुबोधयिषितस्य यादृशैक्यविषयकत्वं स्वयं दर्शयति, तत्त्यागेनान्यादृशैक्यनिरूपणप्रयासः सर्वभङ्गकरो न वोढव्य इति वयं निरूपयाम इत्यलम् ।

यत्तु जीवानां साम्यं जीवेश्वरयोः शरीरशरीरिभावश्च श्रुतिप्राबल्यत एव प्रतिपाद्यत इति—तन्न—देहातिरिक्तस्य जीवस्यापि शास्त्रविवक्षितं यत् साम्यम् तदभावस्य, तथा शरीरशरीरिभावाभावस्य च लोकतः प्रतीत्यभावादविरोधात् । न हि जीवानां ज्ञानानन्दस्वरूपत्वं नित्यधर्मभूतज्ञानैकाकारत्वं सर्वान्तर्यामीश्वरशरीरत्वञ्च नास्तीति कश्चिदनुभवति ॥ देहात्मैक्यज्ञानं हि लोकानाम् । तत्र देहभेदस्य जीवे ज्ञापनमपि प्रत्यक्षविरुद्धमिति चेत्—अत्रोक्तं शतदूषण्याम्, देहभेदोऽपि जीवस्य प्रत्यक्षसिद्ध इति । तदपलापश्च भवता क्रियमाणोऽनुभवहतः । आह च पराशरः, " पिण्डः पृथक् यतः पुंसः शिरःपाण्यादिलक्षणः । ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहम् " इत्यादि । मम शरीरमित्येव च सर्वो लोकः प्रत्येति, न तु अहं शरीरमिति । तत्र देहात्मैक्यमेव प्रतिपन्नमिति कथमुच्येत । मनुष्योऽहमिति प्रतीयत इति चेत्—यतो मनुष्योऽहमिति प्रतीयते, मनुष्यशरीरमहमिति न प्रतीयते, यतश्च मनुष्यस्य शरीरमिति षष्ठी प्रयुज्यते, अतो मनुष्यशब्दस्य शरीरमात्रं नार्थ इति निरूप्यताम् । अतः प्रतीतिद्वैधपरिक्षुभितमनसामेकतरनिर्धारणं देहात्मभेदप्रतिपादकेन शास्त्रेण क्रियत इति वेदितव्यम् । अतो जीवभेदोऽपि प्रत्यक्षसिद्ध एव ।

यत्तु — जीवेश्वरभेदप्रत्यक्षमप्रामाण्यज्ञानास्कन्दितमतादृशश्रुत्यपेक्षया दुर्बलमिति—तत्रोच्यते । देहात्मभ्रान्तिमतां यदीदं जीवेश्वरभेदप्रत्यक्षम्,

तर्हि देहेश्वरयोरैक्यासंभवात् अप्रामाण्यज्ञानानास्कन्दितमेव (एवञ्चानास्कन्दितमित्यशुद्धमुद्रणं रक्षितं भविष्यति)। अन्यादृशस्य जीवस्येश्वरस्य च भेदस्तावत् असंभाव्यमानपुरुषदोष—अनाप्तप्रणीतत्वाभ्यां भवदुक्ताभ्यामेव निश्चितप्रामाण्यकभेदश्रुतिशतसमधिगत इति तद्दौर्बल्यं दुर्वचनम्।

यत्तु वेदस्य परिणामिविधया अविद्यावत्त्वेपि अविद्यायां न प्रमाणभूतवेदसहकारित्वं दोषविधयेति न वैदिकस्य ज्ञानस्य दुष्टकारणजन्यत्वमिति—तत्र ब्रूम -एवं दोषनिरपेक्षभेदश्रुत्यवगमितस्य भेदस्य मिथ्यात्वं न सेत्स्यतीति। यदि भेदश्रुतिजन्यं ज्ञानं भ्रमः, तर्हि दोषजन्यत्वमवश्यं स्वीकर्तव्यम्। दोषस्य भ्रमकारणतायाः क्लृप्तत्वात्। सा चेत् अविद्या, साऽत्राप्यस्तीति तस्याः क्वचित् दोषविधया कारणत्वम्, क्वचिच्च नेति स्वेच्छया किञ्चिदुक्त्वा तत्त्वमसिजन्यज्ञानस्य निर्दोषत्वनियन्त्रणमभिमानमूलमेव; विपरिवर्तस्यापि संभवात। दोषकारणकत्वविचारश्च वेदप्रामाण्यपरिग्रहविचारावसर एव व्यधायि। अस्तु वा दुष्टत्वम्; तथापि व्यावहारिकप्रामाण्यं दुरपह्नवमिति चेत्—दोषजत्वप्रमाणत्वयोर्मिथोविरोधात्। ब्रह्मज्ञानबाध्यत्वज्ञापनार्थमेव व्यावहारिकपदप्रयोगः। प्रामाण्यमित्यस्य चाबाध्यार्थविषयकत्वमित्यर्थः। न च बाध्यत्वाबाध्यत्वयोर्द्वयोरेकत्र व्यवहारो युज्यते। यत्तु ब्रह्मणः सूक्ष्मचिदचिच्छरीरकत्वं न कुत्रापि प्रतिपाद्यत इति—तन्न—"योऽव्यक्तमन्तरे संचरन् योऽक्षरमन्तरे संचरन्, यो मृत्युमन्तरे सञ्चरन्", "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः'। "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्" इति श्रुतिस्मृतिशतप्रतिपादितत्वात्। यत् पुनरुच्यते—अन्यथा अद्वैतशास्त्रप्रामाण्योच्छेदप्रसंगात्; प्रकारान्तरेणाद्वैतवाक्यानां योजनाऽसंभवादिति। इदमेव त्ववश्यं विचार्यम्—अद्वैतश्रुतिप्रामाण्यरक्षणाय प्रत्यक्षानुमान-भेदश्रुतिनिकरभञ्जनं नूनमङ्गुलिसंरक्षणाय शिरश्छेदनमेव। 'भूयसां स्यात् सधर्मत्वम्' इतिन्यायाच्च कतिपयाद्वैतवाक्याप्रामाण्यकल्पनमेव ज्यायः, यद्यर्थान्तरं सर्वथा नेति निरूपयितुं पार्यते।

यदा च भेदश्रुतिरक्षणे सत्येवाभेदश्रुत्याः परमार्थो गृहीतो भवतीति साधु विमृश्यते, तदा सुतरामिदमद्वैतमुपेक्ष्यम् । स च परमार्थो व्युत्पादयिष्यते ।

देहात्मभेदप्रत्यक्षं नास्तीति पुनः पुनर्वचनं प्रागेव परीक्षितत्वादुपेक्ष्यम् । प्रत्यक्षस्य परोक्षेण बाधो नास्तीत्यपि न ; अनन्यथासिद्धत्वे असंभाव्यमानदोषत्वे च निश्चिते अन्यादृशप्रत्यक्षस्यैव परोक्षेण बाधस्यानुभविकत्वात् । चन्द्रैक्यनिश्चयवतोऽपि द्वौ चन्द्रौ इति प्रत्यक्षं तु दोषरूपकारणसद्भावायत्तम् । तथाप्यप्रामाण्यज्ञानं तत्र संपन्नमेव । ज्वालैक्यप्रत्यक्षं तु ज्वालाभेदमनुमितवतो न भवत्येव । अचिरनिर्वापितारोपितज्वालाभेदप्रत्यक्षं यस्यास्ति, तस्य तत्र ज्वालैक्यप्रत्यक्षं न भवत्येव । तत्रापि निर्वाणादर्शिनः सैवेयमिति दृढप्रत्यभिज्ञानमुदेत्येवेति शतदूषण्युक्तमनुसंधाय 'तद्भावोऽपि यथावद्भावनीयः । कश्चित् दीपनिर्वाणादर्शी सेयं दीपज्वालेति प्रत्यभिजानाति । अथासौ निर्वाणदर्शी प्रत्याह—प्रत्यक्षदृष्टमेतन्निर्वाणं मया ; तस्मान्नैक्यमिति । अथ श्रोता तत्र भेदं निश्चिन्वानः यथाऽत्र ज्वालैक्यप्रत्यभिज्ञानं जातम्, तथैवानिर्वापितप्रदीपज्वालाविषयेऽपि युक्तमिति युज्यते सर्वत्र ज्वालाभेद इत्यध्यवस्यतीति । तथा च सर्वत्रानुमानत एव ज्वालैक्यप्रत्यक्षोपमर्दः, न प्रत्यक्षेणेति । शिष्टमुपरिष्टात् ।

आदित्यो यूप इति वाक्यं किमिति शास्त्रप्राबल्यवादिना प्राशस्त्यपरं नीयते । अद्वैतशास्त्रमपि तथा जीवप्रशंसार्थं प्रवृत्तमिति नेतुमुचितमर्थान्तरग्राहिणाऽपि । यत्तु—सामान्यशास्त्रस्य विशेषशास्त्रेण संकोचो युक्तः उभयोरपि निश्चितप्रामाण्यकत्वात् विधिरूपत्वाच्च ; न तु प्रत्यक्षागमयोरिति—तन्न—यूपादित्यैक्यशास्त्रेण भेदग्राहिप्रत्यक्षभङ्गप्रसंगात् । प्रत्यक्षे वा न कथं प्रामाण्यनिश्चयः; प्रामाण्यं स्वतोग्राह्यमिति भवतैवानुपदमुक्तत्वात् । न च प्रत्यक्षान्तरेण तद्बाधो लोके दृश्यते । अथ निश्चितमपि प्रामाण्यमद्वैतश्रुतिश्रवणेनापोह्यत इति चेत्—अद्वैतश्रुतिप्रामाण्यमेव प्रत्यक्षेणापोह्यताम् । अपौरुषेयी श्रुतिर्नाप्रमाणं

भवितुमर्हतीति चेत्—सत्यम् ; श्रुतिस्तावत् न स्वरूपतः प्रत्यक्षप्रामाण्यप्रतिक्षेपिका, शब्दस्वरूपस्याविरुद्धत्वात् । अतोऽर्थद्वारैव । तत्राद्वैतरूपार्थपरत्वे प्रत्यक्षविरोधः प्रथमत एव गृहीतः अर्थान्तरपरतया प्रामाण्यं श्रुतेराकलयति । न हि प्रत्यक्षस्येव श्रुतेः सर्वत्र विषयनियमोऽस्ति । तात्पर्याद्यनुरोधेन श्रुतेः नानार्थदर्शनात् । अन्यथा ‘यजेत स्वर्गकाम’ इति परस्त्रीकामः प्रायश्चित्तं कुर्यादितिवत् स्वर्गकामनायामापतितायां तज्जनितप्रत्यवायनिवृत्तये यागः कर्तव्य इत्यर्थेऽपि प्रमाणं स्यात् । अतो योग्यताप्रकरणाद्यनुगुणमर्थोऽवधारणीयो भवति । अन्यथा ‘पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम्’ इति विपर्ययः स्यात् । अत एव हि मीमांसावतारः । अपरथा योयोऽर्थः प्रतीतः, स सर्वः प्रमाणिक इति पूर्वपक्षत्वेन न कोऽप्यर्थः परिहरणीयो भवेत् । तत्राबाधेनोपपत्तौ बाधायोगादविरुद्धार्थपरत्वं ग्राह्यमिति सार्वभौमो न्यायः । श्रुतिलिङ्गयोः श्रुतिस्मृत्योर्वा मध्ये श्रुतेः सामान्यविषयत्वे, लिङ्गस्य स्मृतेर्वा विशेषविषयत्वे दुर्बलप्रमाणाविरोधेन लिङ्गस्मृत्यवगमितमर्थमप्यादृत्य श्रुतिरेव विशेषे संकोच्यते इत्यपि मीमांसकैर्निरणायि । समानाधिकरणप्रयोगेषु चैक्यं बहुप्रकारं लोके दृष्टम् । तत्र यस्य प्रकारस्य परिग्रहे प्रमाणान्तराविरोधः स्यात् ; अविरुद्धेष्वप्यनेकेषु प्रकारेषु यतमस्य ग्रहणे मुख्यत्वातिशयो निराबाधः, ततम एवार्थो ग्राह्य इति च स्थितिरिति तत्त्वमस्यादीनामस्मत्सिद्धान्तसिद्ध एवार्थः समुचित इति स्थास्यति । तथा भवद्ग्रह्यमानस्य प्रकारस्यात्यन्तजघन्यता च । तथा च किमिति प्रत्यक्षादिबाधः ।

यत् खलु पदाहवनीयोदाहरणम्, तत्रापि विमृश्यम्—‘यदाहवनीये जुहोती’ति, ‘पदे जुहोती’ति च सामान्यतो हुधातुश्रवणे सर्वस्यापि पदमावनीयश्चाधार इति अविशेषेण प्रतीतौ पदहोमव्यतिरिक्तहोमविषये आहवनीयोऽधिकरणमिति कथं निर्णीयत इति । आहवनीयवाक्यं पदवाक्यञ्च होमस्वरूपे आनर्थक्यादपूर्वसाधनत्वेनैव होममुद्दिशतीत्युभयत्रादृष्टापेक्षा समाना । तत्राव्यभिचरितक्रतुसंबन्धित्वात् होमस्य प्रकरणादिनिरपेक्षमेवापूर्वे पर्यवसान

मित्येतदप्युभयत्र तुल्यम् । तत्राहवनीयवाक्यस्यानारभ्याधीतत्वात् सर्वो होमस्तत्र गृह्यते । पदवाक्यस्याश्वमेधप्रकरणनियन्त्रिततया होमविशेषपरत्वमिति वक्तव्यम् । एवञ्च दुर्बलमपि प्रकरणं प्रबलामपि श्रुतिं संकोचयति, स्वविषयमात्रे पर्यवस्थापयतीति ज्ञायते । एवं विशेषविषयत्वे पदवाक्यस्य स्थिते आहवनीयवाक्यं सामान्यं तद्व्यतिरिक्तविषये संकोच्यते । एवमेव, 'नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते' इत्यनन्तगुणवत्त्वे अवगम्यमाने, "त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययम्" इति वाक्येन गुणातीतत्वे च प्रतीयमाने, सत्त्वरजस्तमोरूपगुणातीतत्वप्रतीत्यविरोधेन तद्व्यतिरिक्तानन्तगुणवत्त्वपरं पूर्ववाक्यमिति निर्णयो भवति । एवं गुणविशेषनिषेधपरं वाक्यमनुरुध्य च निर्गुणमित्यादिवाक्यमपि गुणविशेषनिषेधपरं ग्राह्यम् । यत्तु विधिरूपस्थ एव सामान्यविशेषनय इति—तन्न—निषेधेऽपि तस्य मीमांसकेष्टत्वात् । अत एव 'वार्ताकं न भक्षयेत्' इति सामान्यवाक्यम्, "श्वेतवार्ताकं न भक्षयेत्" इति वाक्यानुरोधाद्विशेषविषयकमित्यध्वरमीमांसाकुतूहलवृत्तिः । पलाशपत्रे भोजननिषेधो वल्लीपलाशविषय इति च धर्मशास्त्रनिबन्धनकृत इत्यलं प्रकृते ।

यदि प्रत्यक्षं संभाव्यमानदोषत्वात् संदिग्धप्रामाण्यकम्, तर्हि शास्त्रमपि 'नानार्थपरत्वात् अर्थविशेषे संदिग्धप्रमाण्यकमेव । 'नेह नानास्ती'ति वाक्यं न भेदसामान्यनिषेधपरं भवितुमर्हति । इहेति सप्तम्यर्थे प्रकृत्यर्थस्य भेदसंबन्धेनान्वयात्, भेदस्य नानापदार्थस्य नञर्थस्याभावस्य च प्रतियोगानुयोगिभावेन भेदस्य, तादृशभेदाभावस्याधिकरणे भेदसंबन्धस्य च ग्राहकत्वाच्च तन्निषेधायोगात् । यथा, न हिंस्यादिति वाक्यमग्नीषोमीयादिहिंसाव्यतिरिक्तविषयकम्, तथा मानान्तरावगतभेदव्यतिरिक्तभेदविषयकमिति शतदूषण्यामुक्तत्वाच्च । किञ्च शुद्धब्रह्मजीवेश्वरतत्साक्षिणामन्योन्यभेदस्य भवदिष्टतया भेदसामान्याभावः कथम्? पारमार्थिकभेदस्य निषेध इत्यपि न; तस्याप्रसिद्धत्वात् । प्रसक्तस्यैव प्रतिषेधः कर्तव्यः, नाप्रसिद्धस्य । तथा भेदव्यावहारिकसत्तायाः सद्भावात्

सामान्यतः सत्त्वाभावो दुर्वचः । विशेषनिषेधस्तु न भवत्संमतः, निषेधवाक्ये संकोचायोगस्य कथितत्वात् । अपि च नेहनानेत्यस्य इह भेदो नास्तीत्यर्थे अभेद एवास्तीत्युक्तं भवति । तेन सर्ववस्त्वभेद एव ब्रह्मणि बोधितः स्यात्, न सर्ववस्त्वभावः सर्वस्य वस्तुनो ब्रह्मणश्च वास्तवत्वं तत्र भेदग्रहस्य परं भ्रमत्वञ्च ततः सेत्स्यतीति न प्रपञ्चापलापः । एवं तर्हि भास्करमतप्रवेश इति ब्रह्मणो जडत्वसविकारत्वाद्यपत्तिरिति चेत्--श्रुतिप्रतिपन्नं ग्राह्यम्, न तु, परोक्त-मिति हेतुना तदुपेक्ष्यम् । परं परस्तात् ।

यत्तु ब्रह्मणः प्रपञ्चस्य भेद इह प्रतिषिध्यमानः प्रत्यक्षसिद्धश्चेत्—तर्हि शास्त्रप्राबल्यं स्वीकृतमेव भवति । शास्त्रसिद्धश्चेत्—तदा शास्त्रप्राप्तस्य शास्त्रतो निषेधे विकल्पापत्तौ वस्तुनि विकल्पायोगादन्यतराप्रमाण्यमवर्ज-नीयमिति निषेधशास्त्रं परत्वात् प्रमाणमिति । तत्रोच्यते—शब्दैकसमधिग-म्यस्य ब्रह्मणः प्रपञ्चस्य च भेदोऽपि न शास्त्रानपेक्षप्रत्यक्षसिद्धः । न च ताव-ताऽन्यतराप्रामाण्यं युक्तम् । विकल्पस्थले हि कादाचित्कमप्रामाण्यमुभयो-रप्यापततीति तुल्यबलत्वमेव स्यात् । प्रकृते वस्तुनि विकल्पायोग इति तु सत्यम् । अत एव भेदाभेदौ द्वावपि स्वीकार्याविति भास्करादयः, तयोर्वि-रोध इति चेत्—यादृशयोर्भेदाभेदयोरविरोध, तयोरेव स्वीकारोऽस्तु । अबा-धेनोपपत्तौ बाधायोगात् अन्यतरशास्त्राप्रामाण्यस्य चायुक्तत्वात् अविरुद्धविषयत-यैवोभयोरपि प्रामाण्यादिति वयम् ।

यत्तु प्रत्यक्षाच्छास्त्रं बलीयो न वेत्येव प्रकृते विचार्यत्वात् शास्त्रयोर्मध्ये बलाबलविचारो न प्रकृत इति—सत्यं स विचारः पश्चादेव करिष्यते । प्रत्यक्षापेक्षया शास्त्रबलीयस्त्वसिद्धावपि न भवदभिमतसिद्धिरिति ज्ञापनार्थं तु तदप्यत्र स्मार्यत इति न दोषः । यदि च प्रत्यक्षसिद्धपदार्थनिषेधमात्रं नेह-नानेत्यस्यार्थः स्यात्, तर्हि इहेति व्यर्थम् । न नानास्ति, द्वैतं नास्तीत्येतावत एव वक्तव्यत्वात् । इहेति क्वचिदधिकरणे नानानिषेधस्तु अधिकरणान्तरे वा

स्वातन्त्र्येण वा नानासत्त्वमेव दर्शयेत् । न च ब्रह्मनिष्ठत्वेन जगत् प्रत्यक्षतः प्रतीतमस्ति । अतोऽपि प्रसक्त्यभावात् तन्निषेधः कर्तुं न शक्यते ।

यत्तु — सर्वं खल्विदं ब्रह्मेति तादात्म्यमुक्तम्; नेह नानेति भेदनिषेधः । तादात्म्यस्य भेदघटितत्वात् भेदः स्वीकार्यः । स च कार्योपाधिकत्वादौपाधिकः परिणामपरिणामिनोरिति वक्तव्यं श्रीभाष्यमते । न च तन्मते ब्रह्मजगतोः परिणामिपरिणामभावोऽस्तीति तदसिद्धिरिति — तन्न — तादात्म्यं धर्मिभेदघटितमित्यनङ्गीकारात् । प्रवृत्तिनिमित्तभेदस्य धर्म्यभेदस्य चाविरुद्धत्वात् । अस्मन्मते जगद्ब्रह्मणोः शरीरशरीरिभावात् देहात्मनोरिव भेदस्य मुख्यस्य सत्त्वेन औपाधिकत्वप्रसक्त्यभावेन परिणामिपरिणामभावाभावप्रयुक्तदोषस्यानवकाशात् । विशिष्टवेषेण परिणामभावश्च वक्ष्यते । न चात्रोपात्तयोः श्रुत्योर्विरोधोऽस्ति । सर्वं खल्विदं ब्रह्मेति जगत्तादात्म्यं ब्रह्मण्युक्तम् । तदेव बोध्यते नेह नानेति श्रुत्या तयोर्भेदनिषेधेन । अद्वैतमते तु नेह नानेति प्रपञ्चनिषेधस्वीकारात् तदा प्रपञ्चतादात्म्यायोगात् नेहेति वाक्ये इहेति पदं व्यर्थम्, सर्वं खल्विति वाक्यं बाधितार्थकञ्चेति दोषः । यथा आपणे रजतसद्भावात् स्थलविशेषे परं रजतनिषेधाय, नेह रजतम्, नेदं रजतमिति प्रयोगः, न तथा नेह नानेत्यत्र इहशब्दस्य प्रयोजनं भवन्मते सुवचम्; प्रपञ्चस्य क्वचिदप्यनङ्गीकारात् । सर्वं खल्विति वाक्येन च तादात्म्यमुच्यते । तादात्म्यं भेदाभेदोभयघटितमिति भवन्मतम् । तत्र विवर्तोपादानवादे शुक्तिरजतयोरिव ब्रह्मप्रपञ्चयोर्भेदस्तावदास्ताम्, अभेदः कथं मिथ्यासत्ययोः । भेदस्तावदौपचारिकोऽपि युज्यते, न त्वभेदः । अभेदप्रधानञ्च समानाधिकरणवाक्यमभेदमौपचारिकमभिप्रैतीत्यसमञ्जसमेतत् । बाधायां सामनाधिकरण्यं सुवचमिति वादश्च माता वन्ध्येतिवत् व्याहत एव । सामानाधिकरण्यं नाम ऐक्यप्रतिपादकत्वम् । बाधायामिति च मिथो भेदादेकतरापलाप इति कथमुभयमेकत्र । चोरः स्थाणुरितिवत् सर्वं खल्विदं ब्रह्मेति वाक्यस्यार्थनिर्वाह इति वदता चोरशब्दार्थः क दृष्टः । न चोर इतीति चेत्—किमिदं मुख्यं सामानाधिकरण्यम् ?

घट इत्यस्याघट इत्यर्थः; अतश्च घटः पट इति सूपपन्नमिति को नु ब्रूयात्। शास्त्रेण सर्वं स्वीकृत्य तदैक्ये ब्रह्मणि बोध्यमाने भवद्भिः सर्वमिदं नास्तीति सर्वं खल्विति वाक्यार्थवर्णनम्, अयमेव मुख्योऽर्थ इति लेखनञ्च परमं धार्ष्ट्यं प्रदर्शयति।

शतदूषण्यां ब्रह्मणि जगतः रजतस्येव शुक्तौ अध्यस्तत्वकथनमयुक्तमिति भवल्लेखनमपि प्रामादिकम्। जीवानां स्वरूपस्वभावप्रतिपादकवाक्येषु देहात्मभ्रम-प्रतिक्षेपाय देहस्य तस्मिन्नध्यस्तत्वमुच्यते इत्येतावत एव शतदूषण्यामुक्तत्वात्। यथा, "पुमान्न देवो न नरो न पशुर्न च पादपः। शरीराकृतिभेदास्तु भूपैते कर्मयोनयः", "नायं देवो न मर्त्यो वा न तिर्यक् स्थावरोऽपि वा। ज्ञानान-न्दमयस्त्वात्मा", ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे" इत्यादौ। ब्रह्मणि जगदध्यासस्तु न लौकिकः; न वा वैदिकः। क्वचित्तु दृष्टिविधिः स्यात्। स चाहार्यारोपेणेत्यन्यदेतत्। भवन्मते देहात्मभ्रमः प्रसिद्धोऽपि दुरुपपादः। स्थूलोऽहं जानामीच्छामि करोमीत्या-देस्तादृशाहमर्थरूपाहङ्कारभ्रमो देह इत्येतावदापादकत्वात् आत्मभ्रमस्यानपेक्षित-त्वादित्युक्तं पुरस्तादेव।

"अत्रायं पुरुषः स्वयञ्ज्योतिर्भवति" इति स्वयञ्ज्योतिस्स्वरूपत्वाम्नानमपि जीवब्रह्मैक्योपपादकमित्येतत् मूषिकबिले मतङ्गजान्वेषणमेव। वाक्यमिदम् आदित्यचन्द्रमःप्रभृतिकृतप्रकाशाधीनव्यापारविरहिणः स्वप्नावस्थावस्थितस्य पुंसः स्वप्नानुभूयमानपदार्थविषये बाह्योपकरणनिरपेक्षत्ववत्—तदनुभवे बाह्यादिनिरपेक्षत्वमेव दर्शयति। स्वयञ्ज्योतिर्भवति—स्वाधीन इतरनिरपेक्षो यः प्रकाशस्तद्वान् भवतीति तदर्थः; न तु जीवः स्वयं परमात्मा भवतीति तदर्थ इति हि प्रकरणानुसारेण सर्वस्वीकृतम्। 'क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत' इति वाक्यं क्षेत्रक्षेत्रज्ञाध्यायगतं भगवतः क्षेत्ररूपत्वं क्षेत्रज्ञरूपत्वञ्च बोधयत् क्षेत्रतादात्म्यं यादृशम्, तादृशमेव क्षेत्रज्ञतादात्म्यमपि दर्शयितु-मर्हतीति न जीवब्रह्मैक्यप्रसक्तिः। न हि जडब्रह्मणोरैक्यं कथमपि संभाव्यते।

' क्षेत्रज्ञस्तु प्रतिक्षेत्रं भिन्नः । मां तु क्षेत्रज्ञरूपं सर्वक्षेत्रेषु विद्धि, नैकैकमात्रे इति क्षेत्रज्ञस्य स्वस्य च भेदमप्यनेन वाक्येन भगवान् व्यनक्त्येव । "सर्वभूतस्थमात्मानं भजत्येकत्वमास्थितः" इति वाक्येपि भूतपदस्य देहिपर्यायतया जीवस्थत्वं परमात्मन उक्तमिति तदनुरोधेन एकपदार्थो वर्णनीयः । सर्वमिदं प्रासङ्गिकमिति नात्र विशेषतो विचार्यते ।

उपरि शरीरस्य जीवनियम्यत्वं न भवतीत्याद्यनेकबाधितार्थवाक्यप्रबन्धश्च परमाभिनिवेशपरिवाहः । न हि जीवात्मनः परमात्मनियम्यत्वेऽन्यनियन्तृत्वं न भवति । न खलु राजनियम्यस्य भृत्यस्य स्वपुत्रकलत्रादिनियन्तृत्वं न दृष्टम् । न च मुक्तपरमात्मनोः परमसाम्यं स्वरूपैक्यं विना न भवतीति वक्तुं शक्यम् । साम्ये हि पारम्यं न साम्यभञ्जकं स्यात्, ऐक्यं साम्यभञ्जकमिति कथमुभयोरैक्यम् । एवं परमसाम्यं तावत् ऐक्यमेवेति वदतैव, साम्यप्रतिपादनं गौणमुक्तविषयमिति कथं व्याहृतमुच्यते । अद्वैत्यभिमना मुक्तिर्गगनकुसुमायत इति वाक्यं शापमात्रमित्यपि न साधीयः । न हि सा गगनकुसुमायतामित्युच्यते । लटा निर्देशे स कथं शापः । निर्विशेषब्रह्मपरिशेषनिषेधस्यास्माभिः क्रियमाणस्य, किं शिवद्रोहे तात्पर्यमिति विकल्पनं तु स्वस्याद्वैताभिमानत्यागितां शैवतां शैवसबहुमानवलोकनसापेक्षताञ्चाविष्करोति । कथमद्वैतनिषेधः शिवद्रोहाय स्यात्? शैवैरप्यद्वैतनिषेधात् । अत एव हि शिवार्कमणिदीपिकारम्भे दीक्षितोक्तिः, "यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानाञ्च निष्ठा" इत्यद्वैतस्य शैवभाष्यासंमतत्वमावेदयति । अथ, "प्रपञ्चोपशमं शान्तं शिवमद्वैतम्" इति माण्डूक्योपनिषदि अद्वैते शिवपदप्रयोगात् 'शिवद्रोहे' इति प्रयुक्तमिति चेत्—तत् किं भवत्संमताद्वैतद्रोहे तात्पर्यं विशिष्टाद्वैतिनामस्ति न वेति विवादस्यावसरोऽस्ति । वस्तुतो माण्डूक्यं न भवदीयाद्वैतपरम् । शिवमद्वैतमिति हि द्वितीयान्तम्, उपरि च, "प्रपञ्चोपशमः शिवोऽद्वैतः" इति पुल्लिङ्गाद्वैतपदनिर्देशात् तदेकार्थम् । तत्र परवासुदेव एव, "शाश्वतं

शिवमच्युतम्" इति श्रुत्यन्तरवर्णितः शाश्वतशिव उच्यते इत्युपनिषद्भाष्य परिष्कारेऽस्मदीये द्रष्टव्यम् ।

"त्रय आवसथाः त्रयः स्वप्नाः" इति वाक्ये जागरस्य स्वप्नत्वकथनमात्रेण मिथ्यात्वं दुर्वचमिति अतद्दूषणीसमाधानाय संध्याधिकरणप्रपञ्चनमस्थाने । प्रथमत एव संध्याधिकरणार्थस्य भवत्संमतस्य सर्वथैवानुपपन्नत्वं प्रसाधितमिति किं पिष्टपेषेण । यदि भवद्भिः त्रयः स्वप्ना इति वाक्य इव, 'संध्ये सृष्टिराह हि' इति सूत्रे संध्यपदमपि जागरादिसर्वप्रपञ्चपरमभिप्रेत्य सर्वमिथ्यात्वसाधकतयाऽधिकरणं वर्ण्येत, तदा सत्यपि पौनरुक्त्ये किञ्चिदिव सामञ्जस्यं स्यात् । स्वप्नमात्रविषयकत्ववर्णनात्तु व्यर्थमेवाधिकरणस्य; स्वाप्नमिथ्यात्वस्य लोकप्रसिद्धत्वात् । सृजत इत्येवं सृष्ट्याः श्रावणात् संशय इति तद्विचार इति चेत्—जागरविषयकसृष्टिप्रलयप्रपञ्चकवाक्यसमुदायात्मत्वादुपनिषदां तदनुरोधेन जागरे संभवन् सत्यत्वे महान् संदेहः कथं केनचिदधिकरणेन नापनुदितः । प्रत्युत द्वितीयतृतीयादिपादतः सृष्टिं विस्पष्टं वर्णयन् बादरायणो जागरस्य सत्यत्वमेव स्थापयतीति वक्तव्यम् । एवं कथनेऽपि यदि तत्र मिथ्यात्वं निर्धारयितुं कश्चित् प्रगल्भते, तस्य स्वाप्नसृष्टिवाक्यं कियन्मात्रमिति वृथैव संध्याधिकरणम् । भवता च स्वाप्नपदार्थाः पल्लवाज्ञानकार्याः कालान्तराननुवर्तिनः जागरे बाध्यमानाः, जागरपदार्थाश्च मूलाविद्याकार्याः जागरात् जागरान्तरानुवर्तिनः अबाध्याश्चेति वैधर्म्यं प्रदर्शयता, त्रयः स्वप्नाः इति वाक्यं साक्षात् स्वप्नत्वबोधनाक्षमम् , कथमपि संभवत् स्वप्नसादृश्यमेव किञ्चित् विवक्षतीत्येवास्थीयत इति स्थिते मिथ्यात्वाकारेणैव साम्यं विवक्षितमिति कथं निर्णीयते; मिथ्यात्वस्य लोकप्रसिद्धत्वाभावात् । अतः स्वप्नवज्जागरस्यापि फल्गुत्वम् अनुभवितुरस्वतन्त्रत्वमित्यादिकमेव लोकसंदृष्टं साम्यं युक्तं ग्रहीतुम् । स्वप्नस्येश्वरसृष्टत्वे आपाद्यमानानि दूषणानि तु ग्रन्थपूरणार्थमारोपितानीति वाचयितारः स्वयमेव व्यक्तं ग्रहीष्यन्ति । भवन्मतेऽपि सूचकसूत्रं संध्ये सृष्टेरीश्वराधीनत्वमपि स्वीकृतमेवेति प्रागेवोक्तम् ।

स्वप्नस्य वास्तवत्वे, "वैधर्म्याच्च न स्वप्नादिवत्" इति स्वप्नजागरवैधर्म्यं कथं सूत्रकृतोच्यते इति पौनःपुन्येन पृच्छ्यते। कथं वा सूत्रकारः, त्रय आवसथाः त्रयः स्वप्ना इति स्वप्नसाधर्म्ये एव जागरे श्रूयमाणे, वैधर्म्यं वर्णयतीत्यपि भवता चिन्त्यताम्। जागरः सत्यो मिथ्या वा भवतु। बौद्धेन स्वप्नदृष्टान्तेन युक्त्या प्रपञ्चमिथ्यात्वं साधयितुं न शक्यमित्येतावदेवात्र सूत्रनिगूढमिति चेत्—तुल्यमेतत्। शास्त्रतः स्वाप्नसत्यत्वं कामं सिद्ध्यतु। अगृहीत-शास्त्रेण स्वप्नमिथ्यात्ववादिनाऽपि न तद्दृष्टान्तेन प्रपञ्चाभावोऽनुमातुं शक्य इत्याभिप्रायात्। वस्तुतः स्वप्नादिवदिति आदिपदं प्रयुञ्जानः साध्यवैकल्यात् स्वप्नो न दृष्टान्तः, अन्यदेवान्वेष्टव्यमिति व्यनक्ति। इदमेव दर्शयितुमनन्तर-सूत्रम्, "न भावोऽनुपलब्धेः" इति। तेन हि सूत्रेण निर्विषयस्य प्रत्यय-स्यानुपलम्भात् प्रत्ययं स्वीकृत्य विषयापलापो न शक्य इति वदन् स्वप्नेऽपि विषयसत्यत्वमाह। अन्यथा हि तत् सूत्रमनावश्यकमेव। निर्विषयानुभू-तिवादिभवत्पक्षनिरासोऽपि तत्र।

अपि च त्रयः आवसथाः त्रयः स्वप्ना इति वाक्यं जागरस्वप्नसुषु-प्तिरूपावस्थात्रये स्वप्नत्वं विदधत् किमभिप्रैतीति विचार्यम्। मिथ्यात्वमिति चेत्—कोऽयं स्वप्नः? रथरथयोगरथपथादिरिति चेन्न—तस्य स्वाप्नत्वेऽपि स्वप्नत्वाभावात्। तद्विषयकानुभव एव स्वप्न इति चेत्—स न मिथ्या। तद्विषयस्य जागरे बाध्यत्वेऽपि अनुभवस्य बाधाभावात्। अतो न मिथ्यात्वं स्वप्नसादृश्यम्। मिथ्याविषयकं स्वप्नसादृश्यमस्त्विति चेत्—सुषुप्तौ कथ-मेतत्। तत्र स्वरूपप्रकाशमात्रसद्भावात्। तत्र वृत्तिविशेषसद्भावे अद्वैति-मतेऽपि विवादसत्त्वात्। स्वरूपप्रकाशे च स्वरूपात्मकविषयमिथ्यात्वस्य दुर्वचत्वात्। तार्किकादिभिर्ज्ञानाभाव एव सुषुप्तिरिति, 'अचेतयन्नेव सुषुप्त इत्युच्यते' इति लोकानुभवप्रदर्शनपूर्वं निर्धारितत्वेन तत्र मिथ्याविष-यकज्ञानसद्भावस्य संमतत्वाभावेन तादृशसाजात्यस्य वक्तुमशक्यत्वाच्च। अतो-ऽन्यदेव साजात्यं वक्तव्यम्। तत्र जागरकालस्य सुषुप्तिकालस्य च यथा

दैर्घ्यम्, तथा स्वप्नकालस्य नेति अवस्थात्रयात्मनि कर्मफले स्वप्नस्य यथा भङ्गुरत्वम्, तथैव जागरसुष्वापयोरपि। अतः सुष्वापो दुःखरहितोऽपि न पुरुषार्थतया भावनीयः कर्मेश्वरपरतन्त्रेण निर्दुःखं सर्वदा स्थातुं न शक्यं प्रलयरूपमहासुषुप्त्यामपि। तस्मात् एवं स्वप्नवदत्यन्तभङ्गुराः इमा अवस्था विहाय मुक्तत्वं संपाद्यमिति त्रय आवसथा इति वाक्यस्यार्थ इति। भवता तु कारणात्मतया स्थितिः तिसृणामवस्थानां स्वप्नसाम्यमित्युच्यते। स्वप्ने कारणात्मतयैवावस्थानं यदि लोकप्रसिद्धं स्यात्, तदैतत् युज्येत। तत्तु न; प्रत्युत सुषुप्तावेव कारणात्मनाऽहमर्थादेः सत्त्वात्, त्रयः स्वप्ना इति नाश्रोष्यत, किंतु त्रयः सुष्वापा इति। कारणात्मताया अपि वस्तुतो मिथ्यात्वात् कारणरूपेण स्थितिरित्यर्थवर्णनमप्यसंभवि। तस्मादुक्त एव यथावस्थितोऽर्थः। अद्वैतवाक्यपक्षपातिनाऽप्यद्वैतवाक्यमपि अयथावस्थितार्थं प्रकल्प्य तद्वाक्यमपि विनाश्य तन्मुखेन संपूर्णमेव शास्त्रं विनाशयता, सर्वं वाक्यं सम्यगुज्जीवयतोऽस्मान् प्रति यद्दूषणम्, "वाक्यानां स्वार्थात्प्रच्यावनेन मृतप्रायतापादनमेव क्रियत" इत्यादि उच्चावचम्, यच्चोपसंहरणम्, 'ब्रह्मैव सत्यम्, जगत्तु मिथ्येति वेदान्तडिण्डिम एव प्रमाणमूर्धन्य' इत्यादि—तत् सर्वं "डिण्डिमकविगण्डडिण्डिमो जयति" इति डिण्डिमकृतामाचार्यचरणारविन्दशरणागतिमाकर्ण्यासूयाविलसितमिति।

किञ्च प्रत्यक्षस्य भेदग्राहिणस्तन्निषेधकेन शास्त्रज्ञानेन बाधितत्वादप्रामाण्ये एकमेवाद्वितीयमिति शास्त्रज्ञानस्य शून्यमेव तत्त्वमिति बुद्धोक्तनिषेधवाक्यजनितज्ञानेन बाधादप्रामाण्यं स्यात्। दोषमूलकत्वं तु सर्वत्राविशिष्टम्। यत्त्विहोच्यते—अविद्यारूपदोषाधीनत्वं सर्वप्रपञ्चगतमिति प्रत्यक्षादिप्रमाणे वेद बौद्धवाक्यादौ च सर्वत्र यद्यप्यविशिष्टम्—अथापि वाक्यस्यायथावस्थितार्थप्रतीतिजनकत्वे वक्तृगतो भ्रमविप्रलिप्साप्रमादादिर्दोषो मूलम्। तत्र बुद्धवाक्यं विप्रलिप्सया प्रवर्तितमिति सर्ववैदिकसंप्रतिपन्नम्। अतः शून्यं तत्त्वमिति ज्ञानमप्रमा। वेदवाक्यं पुनरपौरुषेयत्वादनाप्तप्रणीतमिति तादृशदोष

वैदेशिकम् । अतो न निर्विशेषैकवस्तुज्ञानमप्रमेति वैलक्षण्यमिति—तन्न—यद्यपौरुषेयस्य वेदस्याप्रमाजनकत्वं न भवितुमर्हति, तर्हि कर्मकाण्डादिजनितमपि ज्ञानमप्रमाणं न भवितुमर्हतीति भेदबाधस्यासंभवात् । सत्यम्; अथापि परेण भेदनिषेधकशास्त्रेण पूर्वं बाध्यत इति चेत्—तर्हि शब्दगतापौरुषेयत्वादिकमबाध्यतायामप्रयोजकमापतितम् । परत्वमेव तु ज्ञानस्य बाधकत्वे प्रयोजकमाकालितं भवति । एवञ्च बुद्धवाक्यं कथं न बाधकं स्यात् ? निर्विशेषज्ञानबाध्यत्वादेव च कर्मकाण्डाद्यर्थज्ञानस्य दोषमूलकत्वमावश्यकम् । दोषाजन्यज्ञानस्य भ्रान्तित्वादर्शनात् । तत्र को दोष इति विमर्शे—यद्यविद्यैव दोषः, स निर्विशेषशास्त्रस्याप्यविशिष्ट इति कथं तज्जन्यज्ञानमबाध्यम् । यदि च भेदवासना दोषः, स किमनाप्तवाक्यानामुत्पत्तौ भ्रमविप्रलम्भादेरिव वेदस्योत्पत्तौ कारणम्, उत वेदाधीनवाक्यार्थज्ञप्तौ । अपौरुषेयत्वेनाभिमते वेदे वाक्यार्थभूतभेदविषयकवासनायाः मूलत्वायोगात् । नान्त्यः, तर्हि तेन भेदबोधिनाऽपि वेदेन भेदवासनारूपदोषविरहितेषु अर्थान्तरमबाध्यं प्रत्यायचितव्यम् । अन्यथा पुनर्जरद्गवादिवाक्यवदप्रामाण्यापत्तिः । तथा च तस्यैव प्रत्याययितव्यस्य परमार्थत्वादापातप्रतीतार्थानामुपेक्ष्यत्वात् नित्यनैमित्तिककाम्यरूपकर्म-तदनुष्ठातृवर्णाश्रमतत्फलस्वर्गवैकुण्ठादिपरत्वं विधिशास्त्राणां नरकाद्यावहनिषेधविषयत्वञ्च निषेधशास्त्राणामुपेक्ष्यमिति पुनर्वेदबाह्याविशेष एव । यदि तु—अपौरुषेयस्याप्यप्रामाण्यं भवतु । यथा शब्दप्रामाण्यनियामकस्य वक्तृयथार्थज्ञानादिरूपाप्तत्वस्याभावेऽप्यपौरुषेये प्रामाण्यम्; तथा भ्रमविप्रलम्भादेरप्रामाण्यप्रयोजकस्यानाप्तत्वस्याभावेऽप्यप्रामाण्यमपि किं न स्यात्—इति तार्किकवाद उत्थाप्यते, तर्हि स निर्विशेषवाक्येऽपि तुल्यः । स्वतः प्रामाण्यसिद्धिरपि सर्वज्ञानसाधारणी । तथा च परेण बौद्धवाक्येन पूर्वमद्वैतवाक्यं बाध्यमिति ।

अपिच अविद्यारूपदोषमूलकत्वं वेदस्येति पक्षेऽपि कथमपौरुषेयत्वसिद्धिरिति विचार्यम्—दोषमूलकत्वं हि दोषकल्पितत्वम् । कल्पना च

कल्पकपुरुषसापेक्षा। तेन च शब्द उच्चार्यमाणः कथं तत्कर्तृको भवतीति। न खलु पुरुषोऽपि यन्त्रवत् अविवेकेन शब्दान् व्याहरति। अनेन क्रमेणेमे शब्दा ईदृशार्थप्रतिपादनाय प्रयोक्तव्या इत्यभिसंधिपूर्वकमेवोच्चार्यमाणत्वात्। अनभिसंधिकमुच्चारिताश्चेत्, शब्दाः ध्वनिवत् घुणाक्षरवच्च न प्रमाणं स्युः। अधुनातनानां वेदवाक्योच्चारणं तु पूर्वपूर्वाध्यापनसापेक्षत्वादर्थप्रतिपादनदृष्टिकृतं न भवेत्। नैवं प्रथमं कल्पकपुरुषकल्पितवेदव्यक्तेः। ननु • सर्गारम्भकालिकवेदकल्पनाऽपि पूर्वानुभूतवेदवाक्यवासनामूला। एवं सर्गप्रलययोरनादितया सर्वदा एवमेव वेदकल्पना भवतीति चेत्—भवतु। तथापि स पुरुषोऽध्यापकवत् परोक्तगृहीतानुवादी उत स्वप्रोक्तचरानुवादी। नाद्यः, आदिप्रवर्तकस्येश्वरस्याध्यापकाभावात्। नान्त्यः, पूर्वं तत्प्रोक्तत्वे तां पूर्वकालिकोक्तिमेवादाय कर्तृत्वौचित्यात्। पूर्वमपि पूर्वतरप्रोक्तानुवाद्येव स ईश्वरोऽपीति चेत्—अथापि अयं शब्दः एवमर्थबोधको भवत्वितीच्छापूर्वं सर्वदा समानजातीयं शब्दराशिमयमाविष्करोतीत्येतावदेवोक्तं भवति, तावता कथं तस्य कर्तृत्वाभावः; लोके कर्तुः पुरुषस्य पेक्षितेश्वरकारेषु कस्याप्यत्राभङ्गात्। लौकिकः पुरुष ईश्वरप्रेरितो वक्ति; ईश्वरस्तु प्रेरकान्तरनिरपेक्षमेव वक्तीति प्रत्युत वक्तृत्वं पुष्कलमेव। अत एव शास्त्रयोनित्वाधिकरणे वेदस्य सर्वार्थावबोधिनः ईश्वरप्रोक्तत्वात्, लोके ग्रन्थकर्तुर्ग्रन्थप्रतिपाद्यार्थाधिकार्थज्ञानशालित्वस्यानुभविकत्वात् वेदप्रणेतुरीश्वरस्यापि वेदाधिकविज्ञानशालित्वानुमानं प्रथमवर्णके भाषितं व्याकरणादिप्रणेतृपाणिन्याद्युदाहरणेन। अत एव, "श्रुतिस्मृती ममैवाज्ञा" इतीश्वरशासनरूपत्वं वेदस्य। अत एव च आप्ताभिप्रायो विध्यर्थ इति पक्षे ईश्वराभिप्रायस्य लिङाद्यर्थता। प्रणेतृपुरुषाभिप्रायस्य लिङाद्यर्थता लोकसिद्धेति। एवमपि यद्यस्यापौरुषेयत्वम्। प्रपञ्चोऽपि तर्हि भवत्वपुरुषसृष्ट इति; "धाता यथापूर्वमकल्पयत्" इति सर्वस्यापि पूर्वजातीयत्वात्। अपूर्वोत्पादनमात्र एव स्रष्टृत्वव्यपदेशस्येष्टत्वात्। न चैतावता वेदनित्यत्वहानिः; पूर्वपूर्वकालस्थितक्रमस्मरणपूर्वकं तथैवोच्चारणात् प्रवाहनित्यताया अभङ्गात्। वर्णनित्यत्वादेर्वेदान्तिभिरस्वीकृतत्वादिति।

यद्यप्येवम्—अथापि घटं पूर्वकृतमनुसंधाय पुनर्घटनिर्माणे, घटं निर्मातीतिवत् पूर्वं ग्रन्थं कृत्वा पुनस्तस्य तेनैवानुवचने क्रियमाणे अयमिमं ग्रन्थं निर्मातीति लट्प्रयोगाभावात् यत्र पूर्वानुपूर्वीत्वस्मरणपूर्वकशब्दप्रयोगः तदा तदातनशब्दमादाय प्रणेतृत्वव्यवहारायोगात् सर्वदा पूर्वानुपूर्वीत्वस्मरणपूर्वकमेव सर्गादावपीश्वरेण वेदोपदेशात् वेदप्रणेतृत्वेनेश्वरो न निर्दिश्यते, नापि वेदः पौरुषेय इतीत्येतावत्तु निष्कर्षणीयम्। न तावता तस्य बुद्धिपूर्वत्वादेः सर्वथा भङ्गः। तस्मात् पुरुषाप्रणीतत्वेऽपि ईश्वरबुद्ध्यधीनात्मलाभत्वस्याक्षततया ईश्वरे भ्रमविप्रलम्भाद्यभावादेव वेदवाक्यं नाप्रमाणमिति वक्तव्यम्। इदञ्च तदा स्यात्, यदीश्वरो न भ्रान्त इति स्यात्। भवन्मते चाद्वैतस्यैव परमार्थत्वात् प्रपञ्चतदीश्वरत्वादिविषयकमीश्वरज्ञानं सर्वं भ्रम एवेत्यस्मदपेक्षयाऽतिशयितानन्तभेदभ्रान्तिजलधिजडधीरेव स स्थाप्यते बत भवद्भिरिति भ्रान्तिमूलकत्वमेव वेदस्य स्यात्। तस्मात् भ्रान्तिमत्पुरुषाप्रणीतत्वेन तत्त्वमस्यादिवाक्यस्य प्रामाण्यात् तदर्थस्याबाध्यत्वमातिष्ठमानैः तत्त्वमस्यर्थस्तादृशो वक्तव्यः, यादृशो वेदप्रवर्तकस्य महापुरुषस्य भ्रान्तिमत्त्वं नापादयेत्। अतः प्रपञ्चमिथ्यात्वपर्यवसायित्वाक्यार्थवर्णनं वा त्याज्यम्; भ्रान्तपुरुषाप्रणीतत्वाद्वेदवाक्यं प्रमाणमित्युपपादनं वा परित्याज्यम्। सर्वथा नाद्वैतसिद्धिः। अतो ज्ञानानां स्वतः प्रामाण्यस्वीकारिणां मते परेण शून्यवादेन पूर्वस्याद्वैतवयस्यापि बाधः स्यादिति।

अन्यदपि विचार्यम्—बौद्धवाक्यं विप्रलिप्सामूलकमिति कुतोऽवधार्यते। अद्यतना हि बौद्धाः वैदिका इव परया श्रद्धयैव स्वमतं प्रचारयन्ति। आदिमस्तत्र विप्रलिप्सुरासीत्; तेन विप्रलब्धा इमे वास्तवत्वभ्रान्त्या विप्रलिप्सां विनैव प्रवर्तन्त इति चेत्—स बुद्ध एव विप्रलिप्सुरिति कुतोऽवगम्यते। वेदविरुद्धार्थप्रचारणादिति चेत्—विरुद्धार्थप्रचारणमविप्रलिप्सुभिरपि स्वगृहीते विपरीतार्थे वास्तवत्वभ्रान्त्याऽपि भवितुमर्हति। अन्यथा वैदिकानामेव मिथो-

विरुद्धानामनेकेषां मतानामुत्थानस्यैवासंभवप्रसङ्गात्। अत एवं वक्तव्यम्— बुद्धस्य भगवदवतारत्वात् भगवतश्चाभ्रान्तत्वात् बौद्धप्रचारस्य प्रथमं भ्रान्तिमूलकत्वायोगात् वेदविरुद्धतया प्रामाणिकत्वस्याप्यभावे विप्रलिप्सामूलकत्वं कल्प्यते। विष्णुपुराणेऽपि बौद्धार्हतमतयोः विप्रलिप्सया भगवत्प्रेरितपुरुषोपज्ञत्वमुपवर्णितमस्तीति। एवं तर्हि भगवतोऽपि विप्रलिप्सा भवतीति सिद्धम्। एवञ्च किं विप्रलिप्सामूलकम्, किं न तथेति विचार्य निर्णेयम्। तत्र "अनादौ चैवम्भूते प्रतायमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेणापि प्रतारणा स्यात्" इति न्यायकुसुमाञ्जल्युक्तानुसारात्, प्रतारणाजन्यसुखस्य तदर्थकायक्लेशादितो गरीयस्त्वाभावाच्च ईश्वरस्य कारुणिकत्वभङ्गप्रसङ्गाच्च आदावविप्रलिप्सयैव तेन सर्वोपदेशः कृत इति पर्यालोचने वेदोपदेशे कुत्रापि विप्रलिप्सामूलकमप्रामाण्यमनुत्प्रेक्ष्यम्। भेदाभेदश्रुतीनां परस्परविरोधाच्चैकतरस्य राशेरप्रामाण्यं यदि स्वीकर्तव्यम्, तर्हि भ्रान्तिमूलकत्वमेव तत्र कल्प्यं भवति। सा च भ्रान्तिः पूर्वोक्तरीत्या ईश्वरस्य कर्तृप्रायत्वे वा उपदेष्टृत्वे वा स्वीकृतेऽपि सर्वदैवाभ्युपगन्तव्या। यद्येवमीश्वरस्य भ्रान्तत्वं न युक्तमिति विभाव्यते, तदा तत्र कस्यचिद्वेदवाक्यराशेरन्यतरराश्यविरुद्धार्थवर्णने यतितव्यम्, यथा द्वैतिविशिष्टाद्वैतिभिः। अन्यथा पुनरद्वैतिवत् ईश्वरस्यापि भ्रान्तत्वमेषितव्यम्। तत्रापि द्वैतशब्दराशेर्भ्रान्तिगृहीतार्थपरत्वम् उताद्वैतशब्दराशेरिति विमर्शे प्रत्यक्षानुमानद्वैतशब्दसर्वाप्रामाण्यकल्पनामपेक्ष्य, द्वैतशब्दराशेरेव भूयस्तया च भूयसांन्यायानुरोधेनाद्वैतश्रुतीनामल्पीयसीनां भ्रान्तिमूलकत्वकल्पनमेव ज्यायः। नन्वीश्वरस्य भ्रान्तिकल्पनापेक्षया विप्रलिप्साकल्पनं साधीयः। बुद्धाद्यवतारे क्लृप्ता च विप्रलिप्सा। विप्रलिप्सा हीश्वरस्याकारुणिकत्वं दर्शयति। तावता कारुणिकेनापीश्वरेण करुणाप्रसरणप्रतिबन्धकप्रकृष्टोत्कटपापनिबिडत्वं प्राणिनामवगम्यत इति विप्रलिप्सा जीवदोषपर्यवसायिनी स्यात्। न त्ववश्यमीश्वरदोषावहा। भ्रान्तिस्तु तमेव दूषयतीति वैषम्यमिति चेत्—यद्येवम्, नूनमद्वैतश्रुतीनां

कर्मालसान् प्रति विप्रलिप्सया प्रवृत्तिरिति विवक्षसि। काममस्तु। सर्वथा प्रत्यक्षाद्यनुरूपासंख्याकद्वैतश्रुत्यप्रामाण्यकल्पनमयुक्तम्।

ननु द्वैताद्वैतश्रुत्योर्मध्ये परत्वादद्वैतश्रुतेर्बाधकत्वमेव; न तु बाध्यत्वमिति चेत्—अत्रापच्छेदन्याय.दर्शनं सगुणनिर्गुणश्रुतिनिरूपणे निपुणं निराकरिष्यामः। परत्वाद् बाधकल्पने च शून्यवाक्यमेव बाधकमिति प्रागेवावोचाम। ननु भावज्ञानबाधकमभावज्ञानमिति सत्यम्। तत्र न किञ्चिदित्यभावं प्रति एकमस्तीति प्रतीतस्य भावस्याप्यभावाभावरूपतया बाधकत्वमस्तीति चेत्—तर्हि द्वैताभावं प्रति भेदश्रुतिप्रमितं द्वैतमप्यभावाभावरूपतया बाधकमिति अद्वैतश्रुतीनां पराभिः द्वैतश्रुतिभिर्बाध्यता स्यादिति **श्रुतप्रकाशिकाया**मुक्तमनुसंधेयम्।

अनन्यथासिद्धं बाधकम्, अन्यथासिद्धिसंभावनास्पदं बाध्यमिति मन्यमानैर्भेदश्रुतीनां कथमन्यथासिद्धिः संभाव्यते? दोषमूलकत्वसंभवादिति चेत्—कोऽसौ दोषः। अविद्यारूपदोष उभयश्रुतिसाधारणः। भेदवासनैव दोष इति चेत्—अपौरुषेयश्रुतीनामनादीनां भेदवासनामूलकत्वं कथम्? भेदवासनाया दोषत्वञ्च कथम्? अभेदवासनाया एव कथं न दोषत्वम्। द्विचन्द्रवासनाया दोषत्वं दृष्टमिति चेत्—ज्वालैक्यवासनायाः देहात्मैक्यवासनायाश्चापि दोषत्वं दृष्टमेव। ऐक्यवासनाया दोषत्वनिश्चयो भेदज्ञानप्रामाण्यनिश्चयानन्तरभावीति चेत्—भेदवासनाया दोषत्वनिश्चयोऽपि अद्वैतज्ञानप्रामाण्यनिश्चयायत्त एव। तथाच द्वयोर्मध्ये कतरस्य प्रामाण्यमिति विमर्शकाले दोषत्वस्य क्वचिदनिश्चितत्वात् नान्यथासिद्धिसंभावनाऽस्ति।

तर्हि विरुद्धज्ञानद्वयस्य कथं सामानाधिकरण्यमिति चेत्-यूपादित्यभेदज्ञानस्य, आदित्यो यूप इत्यैक्यज्ञानस्य च कथं सामानाधिकरण्यम्। तत्र भेदज्ञानेन प्राग्भाविना, अग्निना सिञ्चतीत्यत्रेव विरुद्धत्वादैक्यज्ञानमेव नोदेतीति चेत्—तुल्यमिहापि। तर्ह्यद्वैतश्रुतेः का गतिरिति चेत्—या यूपादित्यैक्यश्रुतेः।

श्रुतिः सा प्राशस्त्यपरा अर्थवादत्वादिति यदि, अर्थवादोऽप्यविरुद्धमर्थं प्रत्याय्यैव किल प्राशस्त्यं गमयिष्यति। तत् सिद्धं तत्सिद्धिपेटिकायां प्रथमलक्षणे। तस्मात द्वैतश्रुतिप्रामाण्यस्य प्रागेव प्रमितत्वात् स्वयञ्च प्रमाणत्वादद्वैतश्रुतिर्द्वैतनिषेधं कर्तुमपारयन्ती, अग्निना सिञ्चतीत्यापा... ...ग्नितप्तेन वारिणा सिञ्चतीत्यर्थमिव, आदित्यो यूप इति श्रुतिरादित्यवदुज्ज्वलो यूप इत्यर्थमिव संभावितमर्थान्तरमेव प्रथममपि प्रतिपादयतीति।

सर्वमिदं तत्त्वमस्यादेर्भवदभिमतार्थस्वरसत्वेऽप्यतत्परत्वं दर्शयितुमुक्तम्। यदा तु भवदभिमतस्यार्थस्यातिक्लेशलभ्यता, तदा नतरामद्वैतसिद्धिः। भवद्भिर्हि तत्त्वम्पदयोः स्वरूपे ...क्षणामङ्गीकृत्य सामानाधि...ण्यं वर्ण्यते; नञोऽश्रवणेऽपि निषेधपर्यन्ततात्पर्यकल्पनया बाधार्थसामानाधि...यं वेष्यते। सर्वमिदं प्रतीतार्थानन्वयपर्यालोचनपूर्वकमेव। प्रतीतिश्च प्रागर्थस्य भेदश्रुत्यादित इति तदविरोधाय यथाश्रुतार्थत्यागेनार्थान्तरपरत्व...नैः कथं भेदश्रुतिबाधपर्यवसाय्यर्थकल्पनं क्रियते। तत्रापि चोरः स्थाणुरित्यत्र स्थाणौ चोरभ्रान्तिमतः पुंसस्तत्र चोरत्वनिषेधे तात्पर्यम्। तद्वदत्र तत्त्वमसीत्यत्र किं त्वमर्थे तत्त्वनिषेधः। किं वा तत्पदार्थे त्वमर्थत्वनिषेधः। उभयमपि न संभवति। पूर्वं स्थाणौ अयं चोर इति भ्रमवत् इह जीवे ईश्वरत्वबुद्धेर्वा ईश्वरे जीवत्वबुद्धेर्वा प्रसक्तौ किल तन्निषेधः कर्तव्यः। न च तत्प्रसक्तिः, जीवपरभेदस्यैव सर्वतः प्रतिपन्नत्वात्। प्रतिपन्नस्य जीवेश्वरभेदस्यानुवाद एवात्रेति चेत्—एवं तर्हि तत्त्वमसिवाक्यात् जीवेश्वरैक्यसिद्धिरिति कथम्-द्वैतपक्षस्यैव साधनात्। स्वतन्त्रात्मभ्रान्त्याः स्वातिरिक्तेश्वराङ्गीकारिपुरुष? निष्ठाया वारणाय सर्वासां प्रजानां सच्छब्दवाच्यस्वतन्त्रपुरुषाधीनत्वं प्रागुपपाद्य, तत् त्वमसि, त्वं तादृशस्वतन्त्रवस्तु न भवसीति बोध्यत इति चेत्—तच्छब्दस्य स्वतन्त्रपरत्वमिह क्लिष्टम्। अस्तु तावत्। एवञ्चेयमपि द्वैतश्रुतिरेव; न त्वद्वैतश्रुतिः। एवमेव, 'नेह नानाऽस्ति किञ्चने'त्यादावपि भेदश्रुत्यगतार्थ-

विरुद्धार्थवर्णनायोगात् विरुद्धार्थवर्णनेन पूर्वश्रुतीनामप्रामाण्यस्य, तच्छ्रुतिप्रवर्तकस्य परस्य पुंसः सर्वविषयभ्रान्तिमत्त्वस्य, प्रत्यक्षविरुद्धजगन्मिथ्यात्वादेश्च कल्पनामपेक्ष्याविरोधिस्वरसार्थवर्णनमेव युक्तम् । विस्तरोऽवसरे ।

भेदवासनाया दोषत्वसिद्धौ शास्त्राद्विशेषाद्वैतसिद्धिः, तत्सिद्धौ भेदवासनादोषत्वसिद्धिरितीतरेतराश्रयो दोष उक्तः परिजिहीर्ष्यते—शास्त्रस्य स्वतः प्रामाण्यात् न भेदवासनादोषत्वसिद्ध्यधीनं शास्त्रप्राबल्यम्; किंतु स्वतः प्रमाणेन शास्त्रेणार्थे बोधिते जातस्याभेदज्ञानत्वात् एतद्बाध्यस्य च प्रत्यक्षादेर्भेदविषयकत्वात् बाध्यज्ञानस्य दोषाधीनत्वस्यावश्यकत्वात् दोषः क इत्याकांक्षायां भेदवासनैव दोष इति कल्प्यते इति, एवं ज्वालैक्यादिज्ञाने बाधकस्य ज्वालाभेदानुमानस्य भेदविषयतया अभेदवासनाऽपि दोषायते इति च । नैतत् युक्तम्—स्वतःप्रामाण्यवादिनां हि प्रत्यक्षमपि स्वतः प्रमाणम्; शास्त्रमपि । भेदवासनाऽपि भेदज्ञानरूपस्वतःप्रमाणभूतकिञ्चिज्जन्यतया स्वतः प्रमाणमेव । शास्त्रमपि तथैव प्रमाणम् । परंतु शास्त्रं किमीदृशप्रमाभूतज्ञानजनकम् , उतान्यादृशप्रमाजनकमिति विवादे, सर्वप्रतिपन्नभेदप्रमाणविरोधशङ्कया प्रसक्ते तर्कसाचिव्यमन्तरा शास्त्रस्यार्थनिश्चायकत्वाभावात् तर्कान्वेषणे शास्त्रस्याद्वैतविषयकज्ञानजनकतया प्रामाण्यसिद्धेर्भेदवासनादोषत्वनिश्चयमन्तरेणायोगात् तद्दोषतानिश्चयस्य चाद्वैतज्ञानप्रमात्वसिद्ध्यधीनत्वात् अद्वैतज्ञानस्य चोत्पत्तिकाल एव, पूर्वप्रमाणबलेनाप्रामाण्यास्कन्दनात् उत्पत्तुमेवानर्हत्वाच्च शास्त्रप्रामाण्यमर्थान्तरप्रमितिजनननिर्वाह्यमिति तर्क्यते । न खलु वेदान्तशास्त्रमेवान्यनिरपेक्षप्रमाणम् , न तु पूर्वभागात्मकं शास्त्रमिति शासितुं शक्यम् । वाक्यमहिम्नैवाकाङ्क्षादिसहकारेणार्थबोधनस्य तत्राप्यविशिष्टत्वात् । कर्मभागमेव हि मुख्यतया जैमिनिराह, यद् भवतैवेहोदाहियत, "तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" इति ।

अतस्तदनुरोधेन वेदान्तार्थवर्णनात् शास्त्रप्रामाण्यस्य सर्वथा हान्यभावात् भेदनिषेधपरत्वे नायमन्योन्याश्रयो वारयितुं शक्यते । अत एव

प्रत्यक्षस्य भ्रान्तत्वसिद्धौ निर्विशेषप्रतिपत्तिः, तत्प्रतिपत्तौ भेदवासनादोषत्वनिश्चयः, तन्निश्चये सति प्रत्यक्षभ्रान्तित्वसिद्धिरिति चक्रकमपि चरत्येव। अतो निर्विशेषप्रतिपत्तेरेवासिद्धौ कथं भेदवासनाया दोषत्वसिद्धिः। अत्रैव, भेदवासनादोषत्वविषये, 'आषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठे'ति भवदुक्तमनुसंधेयम्।

यत् पुनः—अभेदवासनाया अद्वैतशास्त्रजन्यज्ञाने मूलत्वं न भवतीति—तदिदम् अभेदवासनाया दृष्टरूपेणादृष्टरूपेण वा तत्त्वमस्यादिवाक्यार्थज्ञानोपकारकत्वासंभवप्रदर्शिशतदूषण्युक्तांशोद्गिरणमात्रम्। एवं रीत्या भेदवासनाऽपि भेदश्रुतिजन्यज्ञानोपकारिका न भवतीत्येतत्तु प्रकृते भवद्भिरवधातव्यम्। यत् पुनरभेदस्याखण्डत्वान्नाभेदज्ञानं भेदज्ञानसापेक्षमिति—तन्न—तथासति हि अद्वैतस्याभेदस्य भेदसापेक्षत्वाभावात् द्वैतश्रुत्यपेक्षया परत्वमद्वैतश्रुतेः कथ्यमानं न घटेत। अत्र, "नाभेदोपादाना भेदकल्पना" इति भामत्यामुक्तमित्येतदप्यसंगतम्। उपात्तमपि वाक्यम्, "अभेदग्रहोपादानैव भेदकल्पना" इति तदनन्यत्वाधिकरणभामतीवाक्यव्याहतम्। अभेदस्याखण्डत्वेपि, अनयोरभेद इति द्वन्द्वमुखेन, अस्यानेनाभेद इति षष्ठीतृतीयान्तमुखेन च भेदस्य ज्ञेयतयया भेदज्ञानापेक्षा न निवारयितुं पार्यते। अत्र, "स्वयमेव प्रतियोगि" इत्यादिशतदूषणीवाक्यत्रयार्थः सम्यगनुसंधातव्यः।

भेदप्रत्यक्षस्य भेदवासनादोषजन्यत्वोक्तिरप्ययुक्ता; वाक्यादभेदज्ञाने यथा नाभेदवासनोपकरोति, तथा चक्षुषा भेददर्शने भेदवासनाऽपि नोपकरोत्येव। वस्तुप्रत्यक्षे वस्तुसंनिकर्षस्यैव कारणत्वात्। अपूर्ववस्तुदर्शनस्यापि तत्र तत्र भावेन, यद्भेदप्रत्यक्षं भवति तद्भेदवासना पूर्वमपेक्षितेति दुर्वचत्वाच्च। नूनमयं पूर्वपूर्ववासनाधीन उत्तरोत्तरप्रत्यय इति सौगतमतवासनाविलसितं न वैदिकसंमन्यमानमिति।

किञ्च भेदवासनारूपाया अभेदवासनारूपायाश्च विपरीतवासनाया दोषत्वं तत्रैव हि क्लृप्तम्, यत्र बाधकज्ञाने सत्यपि भेदस्याभेदस्य वा ज्ञानानुवृत्तिः। तथा भेदवासनाया दोषत्वावधारणं वासनाहेतुभूतभेदानुभवस्याप्रमात्वनिश्चयायत्तम्। तथा च दोषान्तराधीनाप्रमात्वाक्रान्तानुभवाधीना वासनाऽपि दोषविधयोत्तरानुभवहेतुर्दृष्टेत्येतावता सर्वत्र भेदज्ञाने वासनाया मूलदोषान्तरं विना दोषत्वकथनं न युज्यते। अपि च वासनानां स्वसमानविषयकज्ञानोत्पत्तिमात्रप्रयोजकत्वम्, न पुनर्भ्रमत्वांशेऽपि हेतुत्वम्; सत्यभूतपदार्थवासनायां तदभावात्। तथा दोषाभावात् भेदज्ञानस्य मिथ्याविषयकत्वं दुरुपपादमिति भेदवासना दोष इति समाधिर्न युज्यते; तद्दोषतायाः तद्विषयभूतभेदमिथ्यात्वसिद्धिमन्तरेण दुर्निश्चयत्वात्। एतदुक्तं भवति—यथा स्मृतिगतयाथार्थ्यायाथार्थ्ययोरनुभवगतयाथार्थ्यायाथार्थ्यानुविधायित्वान्न स्वातन्त्र्येण स्मृतेर्भ्रमत्वप्रमात्वे, तथा भेदवासनाया अपि भेदविषयकसंस्काररूपायाः न स्वातन्त्र्येण याथार्थ्यायाथार्थ्ये इति वासनामूलभूतज्ञानस्य प्रमात्वे वासना न दोषः, तस्य भ्रमत्वे च सा दोष इति वक्तव्यम्। द्विचन्द्रज्ञानञ्चाङ्गुल्यवष्टम्भरूपदोषमूलकमिति तदधीनसंस्कारस्मरणादेः सर्वस्य परम्परया अङ्गुल्यवष्टम्भप्रयोज्यत्वादयथार्थत्वम्। एवञ्च तत्र वासनायां दोषत्वव्यवहारोप्यौपचारिको मूलभूताङ्गुल्यवष्टम्भकृतदोषत्वारोपेणेति यत्रेदृशदोषान्तरलाभः तत्रैव वासनाया दोषत्ववाचोयुक्तिः कल्पते। प्रकृते तु प्रत्यक्षादिज्ञाने साम्प्रतिके प्राक्तने च भेदवासनामूलभूते तद्वत् दोषः कश्चिद्दुर्वच इति न भेदवासनायां दोषत्वारोपे प्रमाणमस्ति। अतो निर्दोषं प्रत्यक्षादिज्ञानम्।

अन्यच्च—भेदवासना नाम भेदविषयकः संस्कारः। संस्कारश्च स्मृतिप्रत्यभिज्ञयोरेव कारणत्वेन क्लृप्तः। अतः सर्वप्रत्यक्षानुमितिशाब्दबोधानां संस्कारजन्यत्वाभावात् भेदवासनामूलकत्वं दुर्वचम्। अन्यथा सर्वेषामपि ज्ञानानां गृहीतग्राहित्वमेवेति अगृहीतग्राहित्वमेव न सिद्ध्येत्। न हि यादृच्छिकेषु घटपटगिरिवनपशुपक्षिमनुष्यराक्षसादिविचित्रवस्तुदर्शनेषु,

कविप्रतिभाकल्पितासु अद्भुतव्यवहारसरणिषु, अत्यन्ताप्राप्तार्थपरशास्त्रस्तोमभावितेषु बोधेषु च कथमपि भेदवासनायाः प्रसक्तिगन्धोऽपि। अतो भेदवासनायाः कारणत्वस्यैवाभावात् दोषविधया कारणत्वं सुदूरनिरस्तम्।

अपरञ्च---भेदप्रत्यक्षस्य सर्वस्य भ्रमत्ववादिना सर्वज्ञेश्वरप्रत्यक्षमपि भ्रम इति स्वीकर्तव्यम्। न च तत् भेदवासनामूलकम्। त्रिकालविषयिणि अनादिप्रत्यक्षे तत्र तन्मूलकत्वायोगात्। तथाचाद्वैतज्ञानेन तद्बाधनायोगात् तद्विषयसत्यत्वसिद्धौ कथं सर्वजगद्बाधः। नन्वीश्वरः सर्वज्ञः सर्वशक्तिः कश्चिदस्तीत्यप्यस्मत्कल्पनामात्रम्; न पुनर्वस्तुतः सोऽस्ति। तथा चास्मदीयमीश्वरादिसद्भावज्ञानमद्वैतज्ञानेन बाध्यत इति नानुपपत्तिरिति चेत्--हन्तैवमीश्वरोऽपि नास्ति, वेदोऽपि नास्तीति केन प्रतिपाद्यते; ईश्वरेणैव युगेयुगे समाविर्भूतेन, अथ चापौरुषेयेण वेदेनैवेति चेत्---शोभनमेतत्, यत् स एव स्वस्य सार्वकालिकं नास्तित्वं निरूपयतीति। एवं भेदवासनापदेन भेदज्ञानोपयोगिकर्मवासना पुण्यपापात्मिका गृह्यते; तन्मूलकं प्रत्यक्षादिज्ञानमिति वितर्कस्यापि नावकाशः। अद्वैतवाक्यार्थश्राविणा हि स्वात्मसमवेतप्रत्यक्षादिकमिवेश्वरप्रत्यक्षमपि व्यावहारिकसत्यत्वेन स्वीकृतमस्ति। तत्रास्य तत्त्ववित्तया तत्प्रत्यक्षमपि भ्रमात्मकमेव संमन्तव्यम्। भ्रमसामान्यञ्च दोषमूलकमिति तत्र कश्चित् दोषोऽस्तीत्यप्यनेनोपपाद्यम्। न चेश्वरे पुण्यपापरूपं दोषं साधयितुं कश्चित् पारयेदिति।

एवं ब्रह्मज्ञानेन प्रपञ्चनिवृत्तेः कर्तुमशक्यत्वादपि न प्रपञ्चाभावविषयकं ज्ञानं प्रमा। अनिर्वचनीयपदार्थासिद्धेर्विस्तरेण वक्ष्यमाणतया भ्रमविषयपदार्थस्य यत्र क्वचित् प्रसिद्धेः सत्यतायाश्चावश्यकत्वेन सार्वकालिकसर्वनिवृत्त्यसंभवात्। अतः सर्वदा सर्वाभावपरत्वं नाद्वैतवाक्यस्य। किञ्च यथावस्थितज्ञानसामग्री या भवति, सा दोषसहकृता चेत् भ्रमं जनयतीति संप्रतिपन्नम्। यथा चक्षुः, श्वेतः शङ्ख इति प्रमाजनकं पित्ते सति पीतः शङ्ख

इति भ्रमम् । प्रकृते च भेदवासनारूपदोषाभावे चक्षुरादिघटितसामग्री कीदृशयथावस्थितप्रत्यक्षहेतुः, यस्यां भेदवासनारूपो दोषः समापतन् भ्रमं प्रपञ्चविषयं विदध्यात् । अतः स्वविरहप्रयुक्तप्रमाजनकताकसामग्रीमात्रेण स्वसमवधाने भ्रमजनकत्वाभावे स्वयं दोषत्वेन भेदवासना नावधार्येत । ब्रह्मविषयकवृत्तिज्ञानजनकमन्तःकरणं भेदवासनादूषितं प्रत्यक्षादिभ्रमं जनयतीति चेत् , न तर्हि चक्षुरादिकमपेक्ष्यम् । क्लृप्तसामग्री च दोषश्चेत्येतदुभयाधिकस्य कुत्रापि भ्रमजननेऽनपेक्षितत्वात् । तथाचान्धोऽप्यन्तःकरणवान् नीलादिकं निरीक्षेत । अपि च यस्य प्रमाणस्य यद्विषयग्रहणसामर्थ्यम् , तत् प्रमाणं दोषवशादपि तमेव विषयमविद्यमानसंसर्गमपि संसर्गितया ग्राहयेत । यथा पीतरूपस्य शङ्खस्य च पृथक्पृथग्ग्रहणक्षमं चक्षुः संसृष्टतया । न पुनर्दोषवशात् चक्षुः माधुर्यादिकं रसं दर्शयतीत्यस्ति । तथा च भेदवासना दोषरूपा कीदृशकरणसहाया केषां दोषं विनापि तत्करणग्राह्यतया व्यवस्थितामसंसर्गं ग्राहयतीति वक्तव्यम् । स्वभावतो ब्रह्ममात्रग्राहित्वे चान्तःकरणस्य विषयग्रहणासमर्थेन तेन दोषवशादपि न विचित्रप्रपञ्चग्रहणं शक्योपपादनमिति । किञ्च भेदवासनाबलात् घटपटादिकं किं बहिरवर्तमानं प्रत्यक्षेण गृह्यते, उत वर्तमानमेव । नाद्यः ; तथासति बाह्यापलापिवासनाधीनज्ञानसंततिमात्रवादिनो बौद्धस्य पक्षे प्रवेशप्रसंगात् । नान्त्यः ; वर्तमानत्वे तस्य बाध्यत्वाभावेन तज्ज्ञानस्य भ्रमत्वप्रसक्त्यभावेन दोषविचारस्यानवसरत्वात् । न च अनिर्वचनीयरूपं वर्तमानं तत् गृह्यते ; बाधस्तु परमार्थत इति वाच्यम्—अनिर्वचनीयमवचनीयमेवेति स्थितत्वात् । यदि चानिर्वचनीयरूपेणास्ति, कथं तर्हि कालत्रये तन्निषेधः? परमार्थतया निषेध इति चेत्—तर्हि सार्वकालिकसर्वप्रकारनिषेधाभावात् निषेधश्रुतिसंकोचः स्यात् । इष्टोऽयं संकोच इति चेत्—इष्यतां तर्हि भ्रमत्वस्यासंभावितस्य प्रत्यक्षादौ कल्पनां विनैवास्मदभिमतस्वरसरीत्यैव संकोचः । कश्चायं परमार्थतया निषेधो नाम । ब्रह्मात्मना निषेध इति चेत्—तर्हि ब्रह्मभिन्नतया जगदस्तीत्येव स्यात् ।

एवमविद्यादोषत्वपक्षेऽपि भाव्यम् । किमविद्या साक्षात् प्रत्यक्षादिज्ञानं प्रति पृथग्घेतुः, किं वा चक्षुरादितत्सामग्रीद्वारा । नाद्यः, क्लृप्तयैव सामग्र्या कार्योत्पत्तौ पृथगविद्याकारणत्वकल्पने मानाभावात् । नान्त्यः, परम्परया अविद्याकार्यत्वस्याद्वैतवाक्यजन्यबोधेऽपि सद्भावात् । अपिचाद्वैत वाक्यजज्ञानमेव कुतो न दोषमूलकम् । यथाद्वैतशास्त्रप्रामाण्यायान्यादृशस्यान्यत्राक्लृप्तस्य कस्यचित् दोषस्यान्यत्र कल्पनम्, प्रत्यक्षानुमानद्वैतश्रुतिप्रामाण्यायाद्वैतवाक्यजबोध एव कश्चिदन्यादृशो दोषो मूलं कल्प्यताम् । अतः सर्वस्यापि समं प्रमाणत्वात् प्रमाणान्तराविरुद्धार्थपरत्वेनैव वेदान्ते अद्वैतवाक्यानामर्थावधारणं कार्यम्ः यूपादित्यादिवाक्यवत् । समन्वयाधिकारणे चोपनिषदां विध्यन्तरशेषत्वमेव निराकारि; न पुनर्बाधितोऽपि यथाश्रुतार्थ एव स्वीकर्तव्य इति । अन्यथोत्तरमीमांसारम्भ एव व्यर्थः स्यात्, ईक्षत्यधिकरणमारम्भ्य वा । आकाशप्राणज्योतिर्गायत्र्यादिशब्दानां प्रसिद्धार्थत्यागेन वृत्त्यन्तराश्रयणञ्च न संगच्छेत । विशिष्य च तत्त्वमस्यादिवाक्यस्य भवद्भिर्लक्षणया शुद्धब्रह्मपरत्वकल्पनं सर्वथाऽनुपपन्नमप्रसक्तञ्च स्यात् । अतोऽनन्यपरत्वेऽप्युपनिषदां प्रत्यक्षबाधितसर्वप्रपञ्चनिषेधबोधकत्वं न संभवति । यथा हि प्रत्यक्षाबाधितत्वात् आदित्यो यूप इत्यत्र यूपादित्यैक्यबोधो न जायते, तद्वत् ।

ननु सत्यं तत्रैक्यबोधो न जायत एव । जातोऽपि अपरीक्षकस्य जातु वाक्यान्तरसंवाद-अर्थक्रियादिपरीक्षापरीक्षितेन प्रत्यक्षेणाप्रमाणीक्रियते । तथाहि—'दीक्षासु यूपं छिनति', 'यूपे पशुं नियुञ्जीते'ति दीक्षाकालिकयूपोत्पादन-यूपाधिकरणकपशुबन्धनादिविधयो हि न यूपस्यादित्यैक्ये संगच्छन्ते । किञ्च प्रतीतस्य यूपादित्यैक्यस्य तात्त्विकत्वे यूपादित्यभेदप्रत्यक्षस्य तेन बाधितत्वात् सुतरामप्रामाण्यमिति प्रतीतप्रामाण्यनिर्वाह एव न भवति । न हि तात्त्विकमैक्यं वाक्यबोध्यम्, व्यावहारिकस्तु भेदः प्रत्यक्षगृहीत इति निर्वाहस्यावकाशोऽस्ति । व्यवहारदशातिक्रमे यूपादित्ययोरेवाभावेन तदैक्यप्रति-

पादनासंभवात् । अद्वैत्यभिमततत्त्विकदशायां यूपादित्यभेदस्येव यूपघटभेदादेरप्यभावेन तादृशभेदाभावबोधनेन स्तुत्यसिद्धेश्च । व्यवहारदशायाञ्च भेदस्यैव सत्त्वेन व्यावहारिकस्यैक्यस्यासंभावितत्वात् । अतः प्रत्यक्षस्यानन्यथासिद्धत्वात् तत्र वाक्यस्य ···परत्वं त्याज्यमिति चेत्—तदिदं द्वैतनिषेधवचनेष्वपि तुल्यम्— ।

तथाहि — सर्वदेशकालवर्तिपदार्थप्रत्यक्षबलेनायोग्यतानिश्चयप्रतिबद्धशक्तिकाः द्वैतनिषेधश्रुतयो नाद्वैतं बोधयेयुः । अपरीक्षकेणाद्वैतबोधकत्वेनापाततो गृह्यमाणा अपि वाक्यान्तरसंवादादिपरीक्षया तदर्थाप्रत्यायकत्वेन स्थापनीयाः । यदि ह्येषां निर्विशेषब्रह्ममात्रतात्त्विकत्वतात्पर्यकत्वं स्यात्, तदा तद्विषयकश्रवणमनननिदिध्यासनादिविधयो ह्यसंगतार्था भवन्ति । बन्धनिवृत्त्युपायभूततत्त्वज्ञानसंपत्तये तावत् ते विधय इति संप्रतिपन्नम् । यदि बन्धो मिथ्या, तदा तदभावस्य स्वत एव सत्त्वेन किमर्थं किं संपाद्यमस्ति । न च वस्तुतो बन्धाभावेऽपि बद्धत्वेन स्वात्मनो ग्रहणात् कण्ठस्थितकनकनयेन मुक्तत्वाभावबुद्धिनिवर्तनार्थं वाक्यं सफलमिति वाच्यम्—बन्धस्येव स्वात्मनो बद्धत्वेन ग्रहणस्यापि मिथ्यात्वेन स्वतस्तदभावसत्त्वेन तन्निवृत्तेरितः संपादनीयत्वाभावात् । न च प्रपञ्चतथ्यत्वबुद्ध्या केचित् ' इतः संपाद्यो मोक्षः ; न त्विदानीमस्ती'ति भ्राम्यन्तः तदुपायान्वेषणप्रयासेनात्मानं क्लेशयन्ति । ततस्तथा मा भवितव्यमिति ज्ञापनमुपनिषदां कृत्यमिति वाच्यम्—ईदृशभ्रान्तेः, तद्वतां पुंसाम्, तदधीनक्लेशादेः सर्वस्याप्यपारमार्थिकत्वेन वस्तुतोऽभावेन ज्ञापनीयांशाभावेन सर्ववैयर्थ्यात् । न चैवंरीत्या परिशीलने वस्तुत उपनिषदामप्यभावेन कासां वैयर्थ्यमापाद्यत इति शङ्क्यम्—एवं सति उपनिषदामसत्कृतसगुणप्रपञ्चब्रह्मतत्परत्ववर्णनस्य, तथा युष्मन्मते तद्वैयर्थ्यापादनादेः सर्वस्यापि यौष्माकदृष्ट्या मिथ्यात्वेन यौष्माकस्य उपनिषदां मीमांसकाद्यभिमतसविशेषत्वनिराकरणप्रयासस्य विशिष्याद्वैतस्थापनसंरम्भस्य तदर्थप्रकृताक्षेपादेश्च सर्वथैवाकर्तव्यत्वप्रसंगात् । तस्मात् विचारदशायां श्रुतयः सन्तीति कृत्वैव

विचारस्य क्रियमाणतया तदा तासां वैयर्थ्यं यथा नापद्येत, तथा किञ्चिदर्थपरत्वमेव तत्र संमन्तव्यम्। सर्वद्वैतमिथ्यात्वे च सर्वश्रुतिवैयर्थ्यं दुरुद्धरमिति।

किञ्चाद्वितीयब्रह्मश्रवणे तत एव बन्धनिवृत्तेरावश्यकत्वान्मनननिध्यानादिविधिवैयर्थ्यमेव; न च निष्प्रकारकं ब्रह्मज्ञानमेवाविद्यानिवर्तकम्। द्वितीयाभाववद् ब्रह्मेतिश्रवणञ्च सप्रकारकम्। वस्तुतो द्वितीयाभावस्य ब्रह्मातिरिक्तत्वाभावेऽपि तत्रैव प्रकारविशेष्यभावकल्पनया तादृशज्ञानस्य जातत्वात्। अतो निवर्तकयथावस्थितज्ञानसंपत्तये मननादि विधीयते। न च ज्ञानमखण्डब्रह्मसाक्षात्काररूपा वृत्तिरिति वाच्यम्—लोके इदं रजतमिति भ्रमस्य इयं शुक्तिरिति स्वरूपज्ञानादिव नेदं रजतमिति निषेधज्ञानादपि निवृत्त्यनुभवात् शुद्धब्रह्ममात्रज्ञानादिव, नैष प्रपञ्च इति श्रवणादपि प्रपञ्चबुद्ध्यादिनिवृत्तेरावश्यकत्वात्, ब्रह्मातिरिक्तं किमपि नास्ति, ब्रह्मणि प्रपञ्चाभावोऽपि न वस्तुतो धर्म इत्येवंरूपज्ञाने सति प्रपञ्चभ्रमो न निवर्तत इत्युक्तेरयोगात्। न च परोक्षबुद्ध्या अपरोक्षभ्रमबाधायोगः। अनुमानागमादिभिरपि प्रत्यक्षबाधो भवतीत्यद्वैतसिद्धावेव स्थापितत्वात्। आगमेन चन्द्रपरिमाणेऽन्यस्मिन्निश्चितेऽपि चन्द्रप्रादेशिकत्वबुद्ध्यनुवृत्तिः तत्कारणस्य दूरत्वादेर्दोषस्य तदानीमपि सत्त्वात्। प्रकृते दोषस्यापि मिथ्याभूततया तत्त्वज्ञाननिवर्त्यत्वेन प्रपञ्चतद्बुद्ध्यनुवृत्तिप्रसक्त्यभावात्। नेदं रजतमित्याप्तोपदेशेन शुक्तिरजतबुद्धिनिवृत्तिश्च सर्वसंमता। अत एवाद्वैतसिद्धावेव, "न च न शब्दमात्रं रज्जुसर्पादिभ्रमनिवर्तकम्। किंतु प्रत्यक्षमेवेति वाच्यम्— भ्रमप्रमादादिशङ्काक्रान्तत्वेन नायं सर्प इत्यादेर्दुर्बलतया न भ्रमनिवर्तकत्वम्। यत्र तु तादृक्छङ्कानाक्रान्तत्वम्, तत्र भ्रमनिवर्तकतैव" इत्युक्तम्। प्रकृतेऽपि प्रापञ्चिकज्ञानेषु सर्वत्राप्रमाणत्वबुद्धेरद्वितीयब्रह्मश्रवणेन जनिततया तेषां कार्यक्षमत्वाभावात् तादृशब्रह्मश्रवणानन्तरं क्षुच्छान्तितत्त्वज्ञानाद्यर्थभोजनतत्त्वोपदेशादेरपि विलयप्रसङ्ग एव। अतश्च मनननिध्यानयोरपि न प्रसक्तिः। ननु प्रपञ्चभ्रमस्यापि ज्ञानरूपब्रह्म-

स्वरूपतया सत्यत्वमिति चेत्—किं वृत्त्यवच्छिन्नचैतन्यात्मकप्रमान्तर्गत-चैतन्यांशस्य सत्यत्वमुच्यते, उत वृत्तेरपि । नाद्यः, तस्यानिवर्तनीयत्वात् । तस्य स्वयम्प्रकाशतया तत्प्रकाशहेतोर्दोषस्य कस्यचिदभावाच्च तन्निवर्तनार्थं मननादीति वक्तुमशक्यत्वात् । नान्त्यः ; तस्या असत्त्वेनाभावात् तद्धेतुदोषस्याप्यसत्यत्वेनाभावात् तद्विधिवैयर्थ्यस्य दुर्वारत्वात् । अत उपनिषद्वैयर्थ्यप्रसङ्गात्, विशिष्य मनननिध्यानविधिवैयर्थ्यात् श्रुतोपनिषत्कानां भोजनप्रवचनाद्यर्थक्रिया-निष्पत्त्ययोगप्रसङ्गाच्च ब्रह्मातिरिक्तसर्वनिषेधपरत्वमप्रामाणिकमिति प्रत्यक्षबाधितार्थकत्वं यूपादित्यवाक्यस्येवाद्वैतवाक्यस्यापि सिद्धम् ।

किञ्च शास्त्रप्रत्यक्षविरोधे शास्त्रं बलीय इति किमन्यत्र तथा व्यवस्था-दर्शनादुच्यते, उतान्यथा शास्त्रप्रामाण्योच्छेदात् । नाद्यः, अदर्शनात् । देहात्मैक्यप्रत्यक्षस्थले मम शरीरमिति भेदप्रत्यक्षस्यापि सत्त्वेन देहात्मभेदशास्त्रस्य तदुपष्टम्भकमात्रत्वस्योक्तत्वात् । चन्द्रप्रादेशिकत्वप्रत्यक्षात् चन्द्रपरिमाणान्तर-बोधकं शास्त्रं बलीय इति चेत्—तत्रापि गिरिगतवृक्षपरिमाणादिविषय-परिक्लृप्तस्य दूरत्वदोषस्य सद्भावेन प्रादेशिकत्वप्रत्यक्षस्याप्रामाण्ये प्रागेव सिद्धे वास्तवपरिमाणबुभुत्सायां शास्त्रावतारेण शास्त्रेण प्रत्यक्षबाधाभावात् । यत्तु सिद्ध्युक्तम्, "न चन्द्रप्रादेशिकत्वप्रत्यक्षेऽपि प्रागेव दुष्टकारणत्व-निश्चयः ; नैकट्यस्यापि क्वचिद्दोषत्वेन सर्वत्र परिमाणाविश्वासप्रसङ्गादिति—तन्न—"अतिदूरात् सामीप्यादिन्द्रियघातान्मनोनवस्थानात्" इति सांख्योक्तरीत्या नेत्रवृत्त्यञ्जनादेर्नेत्रेणाग्रहणादतिसामीप्यस्यापि क्वचिद्दोषत्वेऽपि सत्यपि दूरत्वादिदोषे यथावस्थितपरिमाणदर्शनस्य क्वाप्यभावेन चन्द्रप्रादेशिकत्वप्रत्यक्षे दुष्टकारणजन्यत्वनिश्चयसंभवात् । चक्षुषा दूरत्वसामीप्यतारतम्येनानेकपरिमाण-प्रदर्शनेऽपि त्वाचप्रत्यक्षसहकारेण परिमाणविषयकचाक्षुषप्रत्यक्षविशेषस्य प्रामा-ण्यनिश्चयसंभवात् तदनुसारेण चक्षुरेतावति सामीप्ये यथावस्थितपरिमाणदर्शक-मिति निर्धारणसंभवात् । न हि यावति विप्रकर्षे चन्द्रपरिमाणस्यायथावद्ग्रहः,

तावति कस्यचिदन्यस्य परिमाणं यथावद्गृह्यते । न वा सामीप्यं क्वचिद्दोष इति गिरिशिखरविपिनादिपरिमाणस्य समीपदर्शनेऽप्ययथार्थत्वमानुभविकमिति ।

यत्तु वेदान्तरक्षामणौ, 'बाधज्ञानेन हि दोषमूलकत्वावधारणम्; न तु दोषमूलकत्वेन बाधावधारणम् । व्यक्तश्चैतत शाबरे भाष्ये' इति—तदतीव स्थवीयः । यथा नेदं रजतमिति पश्चात्तनबाधज्ञानेन पूर्वजाते इदंरजतमिति ज्ञाने दोषमूलकत्वावधारणम्, तथा मानान्तरेण दोषमूलकत्वेऽवधृते तद्दोषाधीनस्य ज्ञानस्य बाधितार्थकत्वानुमानस्यापि स्वरसप्राप्तत्वात् । भ्रमं प्रति हि दोषः कारणम् । यदि च दोषजन्यत्वं निश्चितम् । तर्हि भ्रमत्वं कथं वार्येत । भ्रमत्वञ्च बाधितार्थकत्वमेवेति । अत्र शाबरभाष्यग्रहणञ्च स्वाभिमतविपरीतस्थापनायैव संपद्यते । इत्थं हि भाष्यम् (१-१-५) 'कथं पुनरिदमवगम्यते इदं तत्संप्रयोगे, इदमन्यसंप्रयोगे इति । यच्चान्य-, संप्रयोगे, तत् तत्संप्रयोगे; एतद्विपरीतमन्यसंप्रयोग इति कथं ज्ञेयम् । यत् शुक्तिकायामपि रजतं मन्यमानो रजतसंनिकृष्टं मे चक्षुरिति मन्यते । बाधकं हि यत्न ज्ञानमुत्पद्यते, नैतदेवम्, मिथ्याज्ञानमिति, तत् अन्यसंप्रयोगे, विपरीतं तत्संप्रयोग इति । प्राक् बाधज्ञानोत्पत्तेः कथमवगम्यते; यदा न तत्काले सम्यग्ज्ञानस्य मिथाज्ञानस्य वा न कश्चिद्विशेषः । यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्बाह्यो वा विषयः, ततो मिथ्याज्ञानम् । अनुपहतेषु हि सम्यग्ज्ञानम् । इन्द्रियमनोर्थसंनिकर्षो हि सम्यग्ज्ञानहेतुः । असति तस्मिन् मिथ्याज्ञानम् । तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः । दुष्टेषु हि ज्ञानं मिथ्या भवति । कथमवगम्यते? दोषापगमे संप्रतिपत्तिदर्शनात् । कथं दुष्टादुष्टावगम इति चेत्—प्रयत्नेनान्विच्छन्तो न चेद् दोषमवगच्छेम, प्रमाणाभावाददुष्टमिति मन्येमहि । तस्मात् यस्य च दुष्टं करणम्, यत्र च मिथ्येतिप्रत्ययः, स एवासमीचीनः प्रत्ययः, नान्यः" इति ।

अत्र च यदर्थविषयकं यत् प्रत्यक्षम् , तस्य तदर्थेन्द्रियसंनिकर्षजन्यत्वे सत्प्रत्यक्षत्वम् , अन्येन सहेन्द्रियसंनिकर्षे सति जन्यत्वे चासत्प्रत्यक्षत्वमित्युक्त्वा—इदं तदर्थेन्द्रियसंनिकर्षजन्यम् , इदं त्वन्यादृशमिति विवेक एव दुष्कर इत्याशङ्क्य, यत्र नैतदेवमित्याकारकं बाधज्ञानं पश्चाज्जायते, ततश्च पूर्वज्ञानं मिथ्येति बुध्यते, तत् अन्यसंप्रयोगजम् , तदभावे च तत्संप्रयोगजमिति समाधाय—तर्हि यदा बाधज्ञानं न जायते, तदा कथं तद्विवेक इति पुनराशङ्क्य, प्रत्यक्षकारणभूते इन्द्रिये विषये वा यदि कश्चित् दोषो भवेत् , तर्हि मिथ्याज्ञानमुदेतीति भाषित्वा दोषमिथ्याज्ञानयोः कार्यकारणभावं दुष्टेषु हीत्यादिना संप्रतिपत्तिदर्शनादित्यन्तेनान्वयव्यतिरेकाभ्यामुपपाद्य, क्वचिद्दुष्टकारणजन्यत्वज्ञानात् क्वचिद्बाधज्ञानाच्च प्रत्यक्षाभासत्वनिश्चय इति निगमितम् । श्लोकवार्तिकेऽपि—

" निमित्तदोषबोधेन पश्चात यत्राप्यबाधनम् ।
भवत्येव हि तत्रापि नरान्तरविपर्ययः "

इत्युक्तम् । व्याख्यातश्च न्यायरत्नाकरे, " पश्चात् यत्राप्यबाधनम् , तत्रापि निमित्तदोषबोधेन मिथ्यात्वं गम्यते इति । यदि त्ववश्यं विपर्ययेण प्रयोजनम् , सोऽप्यस्त्येव दिङ्मोहादौ नरान्तराणामित्याह—भवत्येवेति । एतच्चाभ्युच्चयमात्रम् ; न त्वेतदवश्यमादर्तव्यम् । विना विपर्ययेण कारणदोषज्ञानमात्रेणैव शक्यं मिथ्यात्वमवगन्तुम्............एवञ्च शाक्याद्यागमानां कारणदोषादेवाप्रामाण्यसिद्धिः " इति । अत्र बाधज्ञानाभावेऽपि दुष्टकारणजन्यत्वबोधमात्रेण भ्रमत्वानङ्गीकारे कर्मविशेषफलविशेषसाध्यसाधनभावादिबोधकानां शाक्याद्यागमानामप्रामाण्यं साधयितुं न शक्यत इत्यन्तिमवाक्यार्थः ।

एवं चोदनासूत्रेऽपि (१-१-२)

" तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्व-हेतूत्थदोषज्ञानादपोद्यते ॥ (५३) "

इति । अर्थेत्यादि । अर्थान्यथात्वज्ञान-कारणगतदोषज्ञानाभ्यामित्यर्थः ।
उपरि च, " साक्षात् विपर्ययज्ञानात् लब्ध्येव त्वप्रमाणता ।
पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिद्ध्यति ॥
दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे ।
अर्थात् तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥ (५८) "

इत्युक्तम् । व्याख्यानञ्च, " यद्यप्यत्र साक्षाद्विपर्ययज्ञानाभावात् न पूर्ववत् अप्रमाणता लब्धी भवति, तथापि कारणदोषावगमप्रणाड्या अर्थात् तुल्यार्थतां प्राप्य कियता विलम्बेनास्त्येव बाधः । यथा, " गोदोहनेन पशुकामस्य प्रणयेत् " इति पुरुषार्थेनापि गोदोहनेन (पात्रेण) चमसस्य क्रत्वर्थस्याप्यार्थिकतुल्यविषयतया भवति बाधः............एवमत्राप्यस्त्येवार्थतस्तुल्यविषयत्वम् । पीतज्ञानं हि पित्तं गृह्णाति । तच्च श्वेते पीतभ्रमस्य कारणे चक्षुषि विद्यमानं स्वकार्यस्य पीतज्ञानस्य भ्रमत्वमवगमयति । तद्भ्रान्तत्वेन चार्थान्यथात्वमिति बाधसिद्धिः " इति । अयमर्थः---यथा पश्वर्थं विहितत्वादक्रत्वर्थेनापि गोदोहनपात्रेण प्रणयनाश्रितत्वात् प्रणयनक्रियानिर्वर्तकत्वात् क्रत्वपेक्षितचमसकार्यप्रणयनकारितां प्राप्य चमसो बाध्यते---तथा कारणमिदं दुष्टमिति दोषज्ञानेनापि, बाधज्ञानवत् साक्षाद्विरोध्यविषयकतया केवलं दोषरूपविषयान्तरविषयकतया स्थितेनापि, दोषजन्यज्ञाने अयं भ्रम इति भ्रमत्वज्ञानसंपादकतया बाधज्ञानकार्यकारितां प्राप्य बाधज्ञानेनेवार्थतथात्वं बाध्यत इति । बाधज्ञानस्यार्थान्यथात्वविषयकतया तेनार्थतथात्वबाधः साक्षात्, दोषज्ञानेन तु ज्ञानभ्रमत्वज्ञापनमुखेनार्थतथात्वबाध इति विशेष इति । अत्र कारिकायां बाध इत्यस्य बाधज्ञानबाधः चमसस्येव बाधज्ञानस्यानपेक्ष्यत्वकरणमित्यप्यर्थः संभवति । सर्वथा बाधज्ञानाभावेऽपि कारणदोषजन्यत्वज्ञानात् ज्ञानस्य भ्रमत्वम्, अर्थस्यान्यथात्वञ्च स्वामिभट्टमिश्रैः सुप्रतिष्ठापितमिति सिद्धं वेदान्तरक्षामणिरचनं तद्विपरीतमेवेति । तस्मात् ब्रह्मात्मैक्यज्ञानं पश्चात्तनबाधाभावेऽपि दोषमूलकत्वेनावधृतत्वादेव भ्रमात्मकमपारमार्थिकविषयकमिति निश्चीयते । अन्यथा शून्यवादिपक्षनिरासो न संभवति । अतो

भ्रान्तित्वाविशेषात् नानेन प्रत्यक्षादिबाध इति। तथाच प्रथमतो दोषजन्यत्वज्ञानात् प्रत्यक्षादिभेदज्ञाननिरुद्धं शास्त्रं प्रतिबन्धकसद्भावात् नाद्वैतज्ञानमुत्पादयति, उत्पादनेऽपि दोषजत्वस्य पश्चात्परिशीलने अद्वैतरूपस्यार्थस्य त्याग एवेति।

ननु यद्यनुमानेन प्रत्यक्षबाधः, आगमेन परं कथं न बाधः। अनुमानबाध्यत्वञ्च दर्शितस्थल एव स्पष्टम्—चन्द्रप्रादेशिकत्वपरिमाणप्रत्यक्षं भ्रमः दूरवर्तिपरिमाणप्रत्यक्षत्वात् गिरिवृक्षपरिमाणप्रत्यक्षवदिति। न। तत्रापि प्रत्यक्षेणैव प्रत्यक्षबाधात्। गिरिवृक्षपरिमाणस्य दूरतो दर्शनं समीपे तद्दर्शनेन औचित्यविमर्शसङ्कुनेन बाध्यत इति सर्वसंप्रतिपन्नम्। तत एवमनुमीयते—चन्द्रप्रादेशिकत्वप्रत्यक्षं चन्द्रसमीपदेशस्थितिदशाभाविपरिमाणदर्शनबाध्यम् दूरवर्तिपरिमाणदर्शनत्वात् गिरिशिखरवृक्षपरिमाणप्रत्यक्षवदिति। एवं प्रत्यक्षबाधार्हत्वे निश्चिते तत्प्रत्यक्षविषयभूतं परिमाणं किं स्यादिति विचारणायामागमः प्रवर्तमानो यथार्थं बोधयतीति। ननु ज्वालैक्यप्रत्यक्षं ज्वालाभेदानुमानेन बाध्यत इति चेन्न—तत्रापि प्रत्यक्षेण प्रत्यक्षबाधस्य सिद्धेः। प्रतिवर्तिप्रदेशं ज्वालोत्पत्तिस्तावत् प्रत्यक्षसिद्धा। पूर्वोत्पन्नज्वालायाश्चोत्तरस्मिन्नवसरे जलवेणिकाया निम्नदेशे स्यन्दनवत् अग्नेरूर्ध्वज्वलनस्वभावतया पश्चादुत्पन्नज्वालोपरि वेणीरूपेण निःसरणमपि प्रत्यक्षसिद्धम्। तथा च पूर्वज्वालायामुत्तरज्वालाभेदस्य प्रत्यक्षसिद्धत्वात् तेनैक्यप्रत्यक्षमनवधानकालिकं बाध्यते। अतश्चात्रापि ज्वालैक्यबुद्धिरियं ज्वालाभेदप्रत्यक्षबाध्या विभिन्नकालावच्छिन्नज्वालैक्यप्रत्यक्षत्वात् संप्रतिपन्नवदिति प्रत्यक्षबाधनार्हत्वमेवानुमीयते। ततस्तस्या अप्रमाणत्वम्। एवमचिरनिर्वापितारोपितज्वालाविषयभेदप्रत्यक्षे सति ज्वालैक्यबुद्धेरनुदयादपि तदैक्यबुद्धेर्भेदप्रत्यक्षबाध्यत्वं सुकरमनुमातुम्। न च—विप्रतिपन्नस्थले साध्यघटके भेदप्रत्यक्षे पूर्वसिद्धे तद्बाध्यत्वमनुमातुं शक्यम्; तत्सिद्धौ च न प्रमाणमिति वाच्यम्—विधेयकोटिप्रविष्टस्यापि विधेयत्वसंभवेन अनेनैव हेतुना विशिष्टस्य भेदप्रत्यक्षबाध्यत्वस्यानुमानात्।

योगिनामन्येषाञ्चावद्धानानामपि तत्प्रत्यक्षं संभवति। एवञ्च विवेचकानां ज्वालैक्यप्रत्यक्षं नैवानुवर्तते, चन्द्रप्रादेशिकत्वप्रत्यक्षवत्। केवलं पूर्वोत्पन्नज्वालासंततिरियमित्येव प्रत्यक्षम्। सेयं दीपज्वालेति संतत्यभिप्रायकवाक्यश्राविणां तु वाक्यस्य साधारणत्वादैक्यभ्रमात्मको बोधः कदाचिदित्येव तत्त्वम्। एवं शङ्खः पीतः, नभो नीलमित्यादिप्रत्यक्षाणामपि दोषाभावदशाभवेन शङ्खो न पीत इति प्रत्यक्षेण समीपदेशावच्छेदोत्पन्ननभोनीरूपत्वप्रत्यक्षादिना च बाधोऽवसेयः। यत्र च नेदं रजतमित्याप्तोपदेशेन इदं रजतमिति प्रत्यक्षबाधः, तत्रापि वक्तुरिव स्वस्यापि रजतभेदप्रत्यक्षसंभवपरामर्शेनैवोपदेशबाध्यत्वमिष्यताम्। अपरोक्षस्य परोक्षेण बाधमनिच्छतां भवतां गमनिकेयं खल्वादरणीयैव भवति। सर्वथा प्रत्यक्षान्तराश्रितस्तर्कः प्रत्यक्षबाधाय प्रभवतीति आगमोऽप्येवं न केवलः प्रत्यक्षबाधक इति।

नन्वत्रापि तर्हि आगमश्रवणानन्तरभाविप्रपञ्चाभावप्रत्यक्षबाध्यत्वमेव प्रपञ्चस्य स्यादिति न मन्तव्यम्—प्रपञ्चस्य रूपरसादिविभिन्नेन्द्रियग्राह्यात्यन्तातीन्द्रियानेकपदार्थसमुदायरूपतया तदभावप्रत्यक्षस्य केनापीन्द्रियेण जनयितुमशक्यत्वात्। तथाऽनभ्युपगमाच्च। न च कश्चित् स्वात्मानं प्रमातारं प्रमाणभूतमिन्द्रियादिकञ्च प्रमेयेण सहाविद्यमानत्वेन प्रत्यक्षेण गृह्णीयात्। ननु तदाभावप्रत्यक्षेणेव तद्विरोधिप्रत्यक्षेणापि तत्प्रत्यक्षबाध इष्टः; यथा शुक्तित्वप्रत्यक्षेण रजतधीबाधः। तथाच ब्रह्मणः प्रपञ्चविरोधित्वात् तत्प्रत्यक्षेण प्रपञ्चबाध इति चेन्न—ब्रह्मव्यक्तेः प्रपञ्चविरोधित्वासंभवस्य प्रागुक्तत्वात्। एवं नेह नानास्तीत्यनेन ब्रह्मणि प्रपञ्चाभावबोधनस्वीकारेऽपि तत्र प्रपञ्चविरोधित्वं न बोध्यते। न च प्रपञ्चाभावस्याधिकरणात्मकत्वात् ब्रह्मात्मकतया तस्य विरोधित्वमिति वाच्यम्—वायोः रूपाभावस्वरूपत्वेऽपि वायोः रूपस्य च पृथक्सद्भाववत् प्रपञ्चस्य ब्रह्मणश्च सद्भावसंभवेन तावता प्रपञ्चापलापायोगात्। अथ शास्त्रेण प्रपञ्चाश्रयत्वस्य प्रपञ्चात्मकत्वस्य च ब्रह्मणि बोधनात् अद्वैतशास्त्रेण तत्र

तदभावे बोधिते प्रपञ्चस्वरूपमेव नास्तीति ज्ञायत इति चेन्न—ब्रह्मणि तदुभयस्य शास्त्रबोध्यत्वे तद्विरोधेन तन्निषेधस्य तेन कर्तुमशक्यत्वात्। किञ्च प्रपञ्चाभावः प्रपञ्चप्रतिषेधो वा तद्भेदो वा ; उभयथाऽपि पूर्वोत्तरशास्त्रयोर्मिथो विरोध एव। तथाच तदेकतराप्रामाण्येऽपि प्रत्यक्षेण ब्रह्मणो दुर्ज्ञानतया केवलप्रपञ्चमात्रं सत्यत्वेन गृह्यमाणं कथं बाध्येत ? ननु विज्ञानातिरिक्तं न किञ्चिदस्तीति शास्त्रेणोपदेशात् कथं प्रपञ्चस्वीकार इति चेत्—तर्हि प्रपञ्चः सत्य एव सन् विज्ञानरूपब्रह्मात्मक इति मतमवलम्ब्यताम्, न प्रपञ्चापलापेन निर्विशेषपरिशेषः। वस्तुतो विज्ञानातिरिक्तो न कोऽपि निरुपाधिकसत्ताश्रयः; आत्मातिरिक्तस्य सर्वस्य स्वरूपविकारशालितया षडपि भावविकाराः सन्तीति, यः सदाऽस्तीति केवलं वक्तुमर्हः तद्विलक्षण इत्येव, विज्ञानातिरिक्तं न किञ्चिदस्तीत्यस्यार्थ इति विशदमुदितं विष्णुपुराणे इत्यलं विस्तरेण। तत् सिद्धं प्रत्यक्षविरोधे शास्त्रबलीयस्त्वस्य कुत्राप्यदर्शनात् नायं पक्षः संभवतीति।

अस्तु तर्हि अन्यथा अद्वैतशास्त्रप्रामाण्योच्छेदादिति द्वितीयः पक्ष इति चेत्—निरस्तमेतत्। अपि च न युक्तमिदम्—एतत्प्रामाण्यश्रद्धायां प्रत्यक्षादिभूयःप्रमाणप्रामाण्योच्छेदप्रसङ्गात्। ननु व्यावहारिकप्रामाण्यस्वीकारान्न प्रत्यक्षादेरात्यन्तिकमप्रामाण्यमिति चेत्—एवंविधं प्रामाण्यमद्वैतश्रुतावपि सुवचम्। अद्वैतश्रवणानन्तरसाक्षात्कारो हि भावनाजन्यः साक्षात्कारः। स च सन्निकर्षजन्यसाक्षात्कारापेक्षया दुर्बलः। अविद्यमानकामिनीसाक्षात्कारादेर्भावनाबलजत्वात्। अतो वस्तुतो ब्रह्मात्मैक्याभावेऽपि तथासाक्षात्कारोपयोगिभावनासंपत्त्यर्थमद्वैतोपदेशः किं न स्यात्। तस्य क उपयोग इति चेत्—सांख्ये प्रकृतिब्रह्मचिन्तकानां प्रकृतिलयादिवत् तथासाक्षात्कारिणां चिरं संसारक्लेशविरहेण तदेकमग्नत्वं फलम्। अयमेवाधिकारी आत्माराम आत्मक्रीड आत्ममिथुनः; यस्य सर्वं गृहक्षेत्रारामादिकमनुभाव्यमात्मैवाभूत् तत् केन कं पश्येत् केन कं विजानीयादिति। एवं फलविशेषार्थमैक्यप्रतिपादनेऽपि न तस्य वास्तवत्वमिति तत्फलानुभवपर्यन्त-

व्यावहारिकप्रामाण्यं तस्योपपन्नम् । ननु षड्विधतात्पर्यलिङ्गादिना वाक्यस्यैक्ये तात्पर्यमवगम्यत इति चेत्—अस्तु । तावता तदैक्यं वास्तवमिति नावगम्यते । न चैवम्भूतस्यापुनरावृत्तिश्रवणात् नेदं मोक्षातिरिक्तं फलमिति तदैक्यं वास्तवमिति वाच्यम्—अर्चिरादिमार्गेण गच्छतो ह्यपुनरावृत्तिः श्रूयते । न चासौ गन्ता ऐक्योपासक इति भवन्मतम् । अतोऽयमन्य एव चिरस्थायिकिञ्चित्फलभाक् । किञ्च योगिनामुपासनोपयोगिशान्तिगुणसंपत्त्यर्थमभेदभावनमुपदिश्यते, वैराग्यसंपत्तये सुखे दुःखत्वभावनवत् । न च तावता वास्तवभेदापलापः । अत एव, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यत्र शान्तिकामेनैक्यानुसंधानं कार्यमित्युच्यते । चमत्कारहेतोर्मुखे चन्द्ररूपणवत् ब्रह्मणीव सर्वत्र तद्भिन्ने बहुमत्यर्थे ब्रह्मरूपणं न युक्तम् । अतो द्वैतनिषेधस्याभेदभावनामात्रार्थत्वात् तन्निष्पादितशान्तिगुणसमृद्धः यथावत् स्वभिन्नं परमात्मानं भक्त्या समाराध्य सर्वभूतविस्तारं तमनुभवतीति संगच्छन्त एवाद्वैतवाक्यानि भवदभिमतार्थपरतयाऽपि, देवो भूत्वा देवं यजेते'तिवाक्यमिव प्रपञ्चाबाधेन । तस्मात् न प्रत्यक्षप्रामाण्यं प्रतिषेध्यम् ।

अपि च प्रत्यक्षादीनां प्रामाण्यं स्वतःप्रमाणन्यायेन प्रागेव गृहीतम् । एवमद्वैतश्रुतीनामपि । तत्र प्रत्यक्षादौ वास्तवप्रामाण्याभावकल्पनात् उभयोः प्रामाण्यवर्णनप्रकारान्वेषणमेव ज्यायः । तत्र दोषमूलकत्वादिना प्रत्यक्षादेरन्यथासिद्धिर्नास्तीति च न्यरूपि । अद्वैतश्रुतिस्त्वन्यथासिद्धा । चक्षुरादिकं ह्येकप्रकारेणैव पदार्थमवगमयेत् । न तदन्यथयितुं शक्यते । वाक्यं तु शक्तिलक्षणागौणीभिर्यथायोगमन्वयबोधनक्षमत्वात् सावकाशमविरोध्यर्थग्रहणेन शक्यनिर्वाहम् । अत एव यूपादित्यवाक्येऽर्थान्तरस्वीकारः । अतः सावकाशनिरवकाशयोर्निरवकाशं बलीय इति न्यायेनोपजीव्यत्वादिहेतुनेव निरवकाशत्वहेतुनाऽपि प्रत्यक्षमेव बलीयः ।

एवं तावत् अद्वैतश्रुतीनामद्वैत्यभिमतार्थे स्वारस्यमस्तीति कृत्वाचिन्तया सर्वमिदं प्रवर्तितम् । अद्वैतश्रुतीनामर्थान्तरपरत्व एव स्वारस्यमिति च स्थापयिष्यते ।

अद्वैतं केवलं श्रुत्यभिमतमिति संकल्प्य तद्बाधदक्षं
धिक्कृत्याध्यक्षभेदश्रुतिशतमवदन् श्रेष्ठमद्वैतशास्त्रम् ।
श्रुत्यन्तोष्णीषकॢप्त्यै प्रबलमपि तथाऽध्यक्षशीर्षं न्यकृन्तन्
किं तै र्निर्बाधसर्वस्वरसगतिविदां परिभाति भव्या ॥

शुभमस्तु ।

---

# असत्यात् सिद्धिभङ्गप्रसाधनम्

श्रीः

सदेवेदमासीत् असतः सदेतत् कथं जायतामित्यथाम्नायघुष्टम् ।
उपेक्ष्य त्वसत्यात् सतः सिद्धिमुक्तां स देवोऽर्थिसत्यः स्यतु श्रीनिवासः ॥

भगवन्नाथमुनिनिबद्धन्यायतत्त्वाख्यशास्त्रप्रकरणभूते भगवद्यामुनमुनिविरचिते सिद्धित्रये तदनुसारिणि श्रीभाष्ये चासत्यात् सत्यसिद्धिप्रकारो ब्रह्मसिद्ध्युपक्षिप्तः सामग्र्येण सर्वोदाहरणपरिशीलनपूर्वकं प्रतिक्षिप्त एव । अतो ब्रह्मसिद्ध्यनुवादमात्रेण शतभूषणी नासत्यात् सत्यं साधयितुं प्रभवति । असतः कारणत्वञ्च खण्डनग्रन्थोपक्षिप्तमधस्तादेव विस्तरेण क्षिप्तम् । तदत्र संग्रहेण प्रतिब्रूमः—

माया चित्रं लिपिश्छाया स्वरः शङ्काविषं तथा ।
नैतानि कारणान्येतज्ज्ञानं हेतुर्यथायथम् ॥
स्वज्ञाने स्वस्य हेतुत्वमित्यप्यत्र न युज्यते ।
विषयः कारणं ज्ञान इत्येतस्याप्यभावतः ॥
भूतभाव्यर्थखाब्जादिविकल्पाः कथमन्यथा ।
प्रत्यक्षमात्रे विषयो हेतुरित्यपि नार्थ्यते ॥
संनिकर्षस्य हेतुत्वं प्रत्यक्षे कॢप्तमस्ति हि ।
विषयस्य त्वसद्भावे संनिकर्षः कथं भवेत् ॥

अतो विषयसद्भावः प्रत्यक्षेऽपेक्ष्यते ध्रुवम् ।
अथापि नान्यथासिद्धेर्विषयोऽध्यक्षकारणम् ॥
अतो मायादिविज्ञानात् भयादि यदि जायते ।
सत्यादेव तु सत्यस्य तत्रोत्पत्तिः प्रसिद्ध्यति ॥

अथासत्यात् सत्यसिद्धिरित्यस्यासत्यविषयकज्ञानात् सत्यविषयकज्ञानोत्पत्तिरित्यर्थः । असत्यशास्त्रविषयकज्ञानात् सत्यब्रह्मविषयकज्ञानस्योपजायमानत्वादिति चेत्—असत्यविषयकज्ञानस्य सत्यविषयकज्ञानजनकत्वमपि न नियतम् । मिथ्यासर्पविषयकज्ञानाधीनस्य भयस्य दंशरूपागामिदुःखविषयकज्ञानरूपस्याप्यसत्यविषयकत्वात् । भयान्मरणे च भयरूपादसत्यविषयकात् असत्यविषयकज्ञानानुत्पत्तेश्च । अथासत्यविषयकज्ञानात् सत्यविषयकं ज्ञानं न भवतीति नेत्येव ब्रूमः ; न तु नियमेन सत्यविषयकज्ञानोत्पत्तिम् ; लोके सर्वस्यापि प्रमाणभूतस्य ज्ञानस्य तत्फलभूतस्य ज्ञानस्य च परमार्थतोऽसत्यविषयकत्वात् असत्यज्ञानात् सत्यज्ञानमेव भवतीति वक्तुमशक्यत्वादिति चेत्—एवं तर्ह्यसतोपि कारणत्वस्थापनप्रयासः खण्डनकारस्याकाण्डताण्डवमेव । किञ्चासत्यविषयकात् सत्यविषयकज्ञानोत्पत्तिरस्तीत्येतावता कार्यभूतज्ञानविषयगतसत्यतायां न कारणभूतमसत्यविषयकं ज्ञानं प्रयोजकं भवितुमर्हति । एवं सति कार्यं ज्ञानमिदं सत्यविषयकमेव, नासत्यविषयकमिति कुतोऽवसीयते । बाष्पधूमज्ञानाधीनज्ञानविषयस्याग्नेर्वास्तवत्वं यथा सत्यार्थविषयकप्रमाणान्तरेणावसीयते, तथा तत्त्वमस्याद्यसत्यशास्त्र ज्ञानाधीनज्ञानविषयस्यार्थस्यापि वास्तवत्वं केनचित् प्रमाणेनावधारणीयम् । न च तदस्ति । तत्राग्निविषयकप्रत्यक्षस्य, अग्निव्याप्यभस्मालोकादिहेतोः, आप्तोपदेशस्य चाप्रातिभासिकविषयकस्याप्रातिभासिकाग्निसाधकत्ववत् पारमार्थिकब्रह्मसाधकस्य प्रमाणन्तरस्याव्यावहारिकविषयकत्वस्य दुर्वचत्वात् । प्रमाणान्तरत्वेनाभिमन्यमानस्य च किं ब्रह्मविषयकत्वेनाव्यावहारिकार्थविषयकत्वम्, उतान्यविषयत्वेन । आद्ये तदेवालमिति तत्त्वमस्यादिवाक्यं व्यर्थम् ।

तस्य वास्तवार्थविषयकत्वे च प्रमाणान्तरमपेक्षितं दुर्लभमिति च दोषः । अन्त्ये, ब्रह्मान्यपरमार्थदृष्ट्या द्वैतापत्तिः । एतेन स्वप्रकाशत्वात् प्रमाणनिरपेक्षमित्यप्यपास्तम्—तदापि तत्त्वमस्यादिवैयर्थ्यात् । अद्वितीयत्वापरिच्छिन्नानन्दत्वादिरूपेणास्वप्रकाशत्वात् वेदरूपप्रमाणापेक्षेति चेत्—असत्यविषयकतादृशाकारविशिष्टतद्वस्तुग्राहकप्रमाणाभावे तदवधारणं दुष्करमेवेति ।

यत्तु भामत्युक्तम्—'सांव्यवहारिकप्रमाणेभ्योऽपि तत्त्वज्ञानमुत्पद्यते । ह्रस्वत्वदीर्घत्वरूपावर्णधर्मविशिष्टतया वर्णप्रतीतिरूपनगनागशब्दज्ञानतः तरुकुञ्जरज्ञानोत्पत्तिदर्शनात् ' इति—तन्न—नगनागशब्दयोः ह्रस्वत्वदीर्घत्वे वर्णगते इत्येव हि सिद्धान्तः । यदा तु ते नादगते, तदा वैयाकरणपक्षः । तदा तादृशनगनागज्ञानस्य वैयाकरणनिष्कर्षबाध्यमानस्य ब्रह्मज्ञाननिरपेक्षबाधविषयार्थकतया प्रातिभासिकविषयकस्य व्यावहारिकविषयकत्वमेव कथमिति । एवं व्यावहारिकप्रमाणादेव तत्त्वज्ञानमित्यपि न; तत्त्वमसिवाक्यत्वेन भ्रान्त्या गृहीतात् वाक्यान्तरादपि तत्त्वज्ञानस्योत्पत्तिसंभवात् प्रतिभासिकस्यापि हेतुत्वात । यदि तु नगनागशब्दह्रस्वत्वदीर्घत्वविषयकं प्रातिभासिकविषयकमेव व्यावहारिकरूपमित्युक्तम्, तर्हि प्रातिभासिकव्यावहारिकपदपरिभाषणं भवतां त्यक्तमिति ।

यत्तु व्यावहारिकसतः तत्त्वमस्यादिवाक्यज्ञानस्य फलं व्यावहारिकसत् ब्रह्मात्मैक्यज्ञानम्, तद्विषयस्य पारमार्थिकत्वे काऽनुपपत्तिरिति—तत्रोच्यते—तयोःसमसत्ताकत्वनिरासमात्रेण प्रकृते विषयस्य पारमार्थिकत्वमेवेति कथं नियम्येत, स्थलान्तर इवासद्विषयकत्वस्य व्यावहारिकसद्विषयकत्वस्य वा ज्ञाने संभवात् । अस्य ज्ञानस्याबाधितार्थविषयकत्वं हेत्वन्तरेणानुमीयत इति चेत्—तस्यापि हेत्वन्तरस्य व्यावहारिकसत्त्वाविशेषात् वस्तुतोऽप्रमाणत्वात् । अप्रमाणजन्यज्ञाने प्रमात्वस्य प्रमाणान्तराधीनवस्तुसत्तानिश्चयाधीननिश्चयत्वात् ।

यत्तु स्वप्नादिस्थलेऽपि स्वाप्नाद्याकाराविद्यावृत्त्यवच्छिन्नज्ञानमपि विषयवत् पल्लवाविद्याकार्यतया ज्ञाननिवर्त्यतया भ्रमः मिथ्या वेति तदधीनोत्पत्तिकत्वेऽपि असत्यादेव सत्योत्पत्तिरिति—तन्न—स्वाप्नवत् स्वप्नज्ञानस्यापि बाधादर्शनात् । स्वप्ने रथगजादिकं नासीदितिवत् रथगजादिसाक्षात्कारो मे नासीदिति हि न कश्चित् प्रबुद्धः प्रत्येति । एवमबाध्यस्याप्यसत्यत्वे ब्रह्मणोऽप्यसत्यत्वं स्यात् ! ब्रह्मज्ञानबाध्यत्वमात्रेणासत्यत्वमुच्यत इति चेत्—तत् उत्पद्यमाने भयादावपि तुल्यमिति कथं सत्योत्पत्तिरिति ।

यत् तावत् विषयाधीनमेव ज्ञानस्य वैलक्षण्यम्; ज्ञानवैलक्षण्यप्रयुक्तमेव च कार्यवैलक्षण्यमिति—तत्र तदधीनवैलक्षण्यं न प्रतिषिद्धयते । प्रकारान्तरेणापि वैलक्षण्यं संभाव्यते । एकविषयकत्वेऽपि ज्ञानानां प्रत्यक्षत्वानुमितित्वशाब्दबोधत्वादिरूपस्य वैलक्षण्यस्यानुभवसिद्धत्वात् सामग्र्यधीनस्यापि वैलक्षण्यस्य सद्भावात् । वृत्त्यवच्छिन्नचैतन्यस्य ज्ञप्तेश्च सविषयकत्वनियमोऽस्ति न वेति विकल्पस्तु न कल्पते । तादृशद्वयोत्पत्तेरसंमतत्वात् । वृत्त्यवच्छिन्न चैतन्येत्येतदपि न प्रामाणिकम् । यत्तु सामग्रीविशेषजन्यत्वेन व्यवस्था शीतोष्णादिसामग्र्याः सुखदुःखादिहेतुत्वानियमादयुक्तेति—तदापाततः । शीतस्य क्वचित् सुखहेतुत्वस्य अन्यदा दुःखहेतुत्वस्य च सत्त्वेऽपि तन्तुमृत्पिण्डादिसामग्र्याः पटघटादिकार्यजनननियमस्य भङ्गायोगात् । न च सुखे दुःखे वा शीतमात्रं सामग्री । कारणकलापो हि सामग्री नाम, न तन्मात्रम् । तत्र देशकालदेहावस्थादिकारणान्तरसमाश्लिष्टं शीतं सहकारिवैचित्र्यादनुकूलवेदनरूपसुखदुःखात्मकविचित्रकार्यक्षममिति भवत्येव तत्र सामग्रीभेद इति ।

ज्ञानस्य तत्तद्विषयकत्वरूपं वैलक्षण्यं नास्तीति चानुक्तोपालम्भः । निर्विषयमनुभूत्यादिशब्दमुख्यार्थभूतं नास्तीति निरूपणेन भवन्मतनिरासिनामस्माकं सविषयकत्वस्यैव तादृशे ज्ञाने संमतत्वात् । एवं स्वप्नज्ञानं ज्ञप्तिमात्ररूपेण कारणमित्यप्यनुक्तोपालम्भः; "तद्भ्रमस्यैव हेतुत्वात् तस्य च सत्यत्वात्"

इति तद्विषयकत्वोपलक्षितस्यैव ज्ञानस्य हेतुत्ववर्णनात् । तत एव शुभाशुभफलभेदसूचनादिसर्वसिद्धया भवदुक्तदोषाणामनवकाशात् । भ्रमस्य यादृशमसत्यत्वं ब्रह्मज्ञानबाध्यत्वरूपम्; तादृशं कार्ये भयादावप्यस्तीति कथमसत्यात् सत्यस्योत्पत्तिः? "कार्यं वा कारणं वा त्रिकालाबाध्यं सत्त्वं नापेक्षते" इति यद्वचनम्, तस्य कोऽर्थः? कार्यं वा कारणं वा कालत्रयवर्त्येव भवतीति नेत्यर्थो वा, तत्तत् कदाचिद्वर्तमानमेव भवतीति वा, कदाचिद्बाधेऽपि न दोष इति वा। आद्यमिष्टम्। कार्यस्य कालत्रयवर्तित्वं व्याहतमपि। कार्यत्वं हि पूर्वकालासत्त्वविशिष्टकालान्तरसत्त्वम्। कथं तेन सह कालत्रयसत्त्वसमावेशः। कारणं तु सार्वकालिकमपि स्यात्, कादाचित्कमपि। अत एव द्वितीयमपि कात्स्न्येन नेष्टम्। सार्वदिकस्य कारणस्य कदाचिद्वर्तमानत्वाभावस्येष्टत्वात्। तृतीयेऽपि कोऽयं कदाचिद्बाधः। पूर्वं स्थित इदानीं नास्तीति कालविशेषावच्छिन्नतया तदभावस्य ग्रहणम्, अथवा कदापि नास्तीति ज्ञानस्य बाधरूपस्य कदाचिदुत्पत्तिरिति। आद्ये तु न भवत्सिद्धान्तसंमतोऽसौ बाधः। त्रैकालिकाभावप्रतियोगित्वस्य बाधितत्वरूपतया भवद्भिरुक्तेः। अयञ्च बाधः कदाचिद्वर्तमानस्यान्यदा अभावरूपः। तादृशबाधप्रतियोगिनश्च कारणत्वं कार्यत्वञ्चेष्टमेव। अन्त्ये सर्वदैव नास्तीति ज्ञानं बाधरूपं कदाचिज्जायमानं वस्तुनः सर्वदैवाभावमावेदयतीति तादृशमसत्यं नैव कारणं भवितुमर्हति। यदि तद् व्यावहारिकसत्, तस्य कारणत्वमपि व्यावहारिकसदेवेति कथमसत्यात् सत्योत्पत्तिः। अत एव, "असत्यस्य स्वन्यूनसत्ताककार्यहेतुत्वनिरासे तु न विप्रतिपत्तिः" इत्युक्तमपि निरस्तम्। असत्यस्यैव हेतुत्वस्य सामान्यतोऽप्यभावात्। स्वन्यूनसत्ताककार्याप्रसिद्धेश्च। स्वाप्नानां स्वाधिकसत्ताककार्यहेतुत्वेऽपि स्वाधिकसत्ताकतत्त्वावबोधकत्वे न कोऽपि विरोध इत्यपि न युक्तम्। स्वाधिकसत्ताककार्यहेतुत्ववचनं हि स्वानधिकसत्ताककार्यहेतुत्वे सति समञ्जसं स्यात्। सर्वविधकार्यहेतौ च तत्र विशेषनिषेधो व्यर्थः। स्वाधिकसत्ताककार्यावबोधकत्वे च तादृशावबोधरूपकार्ये

हेतौ तत्र तादृशकार्याहेतुत्वमेव कथम्? का चेयं स्वाधिकसत्ता। पारमार्थिकी व्यावहारिकी प्रातिभासिकीति सत्तात्रैविध्यं नास्माभिः स्वीकृतम्; भवदीयैश्च कैश्चित्। अधिककालसत्ता स्वाधिकसत्तेति चेत्—तत्र को दोषः? न हि कारणस्य यावदायुष्कत्वम्; तावदायुष्कमेव कार्यमिति नियमः; पितुरल्पायुष्ट्वेऽपि पुत्रचिरजीवनदृष्टेः।

यत्तु स्वाप्नानामुत्पत्त्यहेतुत्वेऽपि ज्ञप्तिहेतुत्वमस्तीति— तन्न—सूचकत्वेन श्रुतानां स्वाप्नानां शुभाशुभोत्पत्तिहेतुत्वप्रसक्तेरेवाभावात्। न हि त्रिजटास्वाप्नश्वेतपर्वतस्थानमहागजारोहणचन्द्रसूर्यमण्डलस्पर्शादीनां सीतारामसंश्लेषोत्पत्तिहेतुत्वम्। अतो ज्ञप्तिहेतुत्वमेवास्ति न वेति विविच्यते। ज्ञप्तिहेतुत्वस्य साक्षात्स्वीकारः उत्पत्तिहेतुत्वस्वीकारतुल्ययोगक्षेमः॥ अतो ज्ञप्तिहेतुत्वमपि स्वाप्नज्ञानस्यैव। स्वप्ने सूचकत्वव्यवहारस्तु सूचनरूपज्ञापनकरज्ञानविषयत्वरूपप्रयोजकत्वविवक्षयौपचारिकः। सर्वमिदमसत्यस्य सत्यसूचकत्वस्थले कार्यो निर्वाहः। स्वाप्नविषये तु न किञ्चिदवद्यमस्माकम्; तदा वस्तुसृष्टेरीश्वरकर्तृकाया इष्टत्वात्। अत एव, सूचकश्चेति सूत्रमपि सम्यगुपपन्नम्। "असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इति हरिवचनमपि नासत्यात् सत्यस्योत्पत्तिमाह। न च पचेर्ण्वुलश्च मेलनं पाकशब्दनिष्पादकम्। न च पचिर्वा ण्वुल् इति वर्णसंघो वा तन्मेलनं वा स्वरूपतोऽसत्। वस्तुतोऽनिष्पादकस्य निष्पादकत्वं कल्पितमित्येव कारिकार्थ इति कथमियमुत्पत्तिसाधिका। स्थूलारुन्धतीन्यायेनाविद्यमानप्रतिपादनमप्यादौ कामं भवति। तावता तत्र सर्वत्र ज्ञानमेव कारणम्। न त्वसत्यं किञ्चिद्वस्तु। लिप्यक्षराणामारोपितवर्णत्वेन कारणत्वमित्युक्तिः लिप्यक्षरेषु वर्णत्वारोपः कारणमित्युक्त्यविशिष्टैव। तथा च ज्ञानमेव कारणम्। भगवदर्चावतारेषु भगवदभिन्नत्वारोपः फलहेतुरित्येतदपि वार्तम्। अर्चारूपाणां भगवद्विग्रहतायाः प्रामाणिकत्वात्। यथा सालग्रामे हरिरिति शाङ्करभाष्य तदनुयायिभामत्यादिग्रन्थाः यथावस्थितार्चारूपव्युत्पत्तिविरहेण प्रवृत्ता वा तात्पर्यतः प्रामाणिकार्थैकपरा वा

भवन्तु । सर्वथा तत्राऽऽरोपस्य वा आरोपितासत्याकारस्य वा न कारणत्वम् । न च रामकृष्णादिविग्रहाणामपि भगवदभिन्नत्वारोप इति वाच्यम्—देहात्मविवेकिनां परमात्मतद्विग्रहविवेकस्यापि सुलभतया मूर्तामूर्तरूपेण द्वैविध्यस्य परमात्मनि प्रतिपन्नतया च परमात्मनस्तादृशविग्रहवत्त्वेन ग्रहणस्यैव कार्यकरत्वसंभवे अभेदारोपस्य कारणत्वस्यानपेक्षितत्वात् । अविवेकिनामभेदज्ञानमपि कार्यकरं कथञ्चिदप्यस्तु । कथमसत्यस्य हेतुता । ज्ञानस्य सत्यत्वात । एवमन्यत्रापि द्रष्टव्यम् । स्फोटवादनिरास आवयोरविशिष्ट इति भवताप्युक्तत्वात् ह्रस्वत्वदीर्घत्वादीनां नादगतानां वर्णे आरोप इति नियन्त्रणे प्रमाणाभावात् ककारगकारादिभेदेनेव ह्रस्वदीर्घादिभेदेनापि वर्णभेदस्यापि सुखीकरत्वात् तत्रतत्र यथायथं ह्रस्वो दीर्घोऽन्यो वा वर्णः कार्यकर इत्येवमेवोपपत्तेर्भामत्यां नगनागपदप्रयोगे आरोपितह्रस्वत्वादिकमादायार्थभेदावधारणवर्णनमुपेक्ष्यम् । देवताधिकरणे च भाष्ये, "उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च निरनुनासिकश्च" इत्युक्त्वा, "अथवा ध्वनिकृतोऽयं प्रत्ययभेदः, न वर्णकृतः" इति स्वरादिविषय एव ध्वनिगतत्वं वर्णितम्; न तु ह्रस्वादिमात्राविषयेऽपि । अस्तु तावदिदं कथमपि । सर्वथा सर्वत्राविवेकिनां भ्रमात्मकं विवेकिनां प्रमात्मकञ्च ज्ञानमेव कारणम्, न त्वसत्यं किञ्चिदिति स्थितम् ।

अथाप्यसत्यार्थोपलक्षितस्य ज्ञानस्य हेतुत्वेपि असत्यस्योपलक्षणत्वं निर्विवादमिति तस्यापि हेतुत्वसिद्धिः, उपलक्षणत्वं हि नाम ज्ञाप्यबहिर्भूतत्वे सति ज्ञाप्यार्थज्ञानहेतुत्वमिति चेत्—अत्रोत्तरमपि शतदूषण्युक्तमेव, उपलक्षणीभूतार्थविषयकज्ञानस्यैव मुख्यहेतुत्वम् , उपलक्षणे तु हेतुभूतज्ञानविषयत्वरूपमौपचारिकं तदिति । यत्तु उपलक्षणविषयकज्ञाने उपलक्षणस्य विशेषणत्वात् हेतुत्वमिति—तत्रोच्यते । किमिदं विशेषणत्वम् ? यदि स्वज्ञाने स्वस्य विषयत्वमितीदमेव, तदा न हेतुत्वसिद्धिः । विषयत्वस्य हेतुत्वानपेक्षायाः प्रागेवोक्तेः । यदि स्वविषयकज्ञाने गृह्यमाणे तत्र ग्रहणे ज्ञानांशे

स्वं विशेषणीभवतीति, तत् स्वज्ञानज्ञानात् पूर्वं स्वज्ञानस्य जातत्वादेवेति स्वस्य ज्ञानमुखेनैव विशेषणत्वरूपव्यावर्तकता ; न स्वरूपेण । यत्तु पूर्वं विशेषणस्यैव पश्चादुपलक्षणत्वमिति—तन्न—काकवद्गृहमित्यत्र तथात्वेऽपि शाखाग्रस्य चन्द्रं प्रति अविशेषणस्यैव तदुपलक्षणत्वदर्शनात् । 'कि[illegible]र्थविषयकज्ञानस्येव विषयस्यापि हेतुत्वे आगामिघटस्यापि घटहेतुत्वापादनं कथम् , आगामिघटस्यामिथ्यात्वात्' इति तु न—अनवबोधात् । 'अन्यथा कुलाले'ति वाक्ये अन्यथेत्यस्य हि, अर्थो मिथ्या वा स्यादमिथ्या वा, यद्विषयकज्ञानस्य यत्र हेतुता, तत्र विषयस्यापि हेतुतैवेतिस्वीकारे इत्यर्थः । एवञ्च कदाचित् सतोऽपि यदि पूर्ववर्तित्वाभावान्न हेतुत्वम् , नतरां मिथ्यार्थस्येति तदाशयः । अत आगामिनो मिथ्यार्थत्वमत्र न विवक्षितम् ।

यत्तु मिथ्यार्थस्य सत्यज्ञापकत्वमेव, न जनकत्वमिति—तन्न—सत्यज्ञापकत्वस्य सत्यविषयकज्ञानजनकत्वरूपत्वात् ज्ञानस्य सत्यतया सत्यजनकत्वस्याक्षतेः । इदं तु निगूढं भवतः, यत्—असत्यात् सत्यसिद्धिरित्यस्य असत्यं ज्ञापकम्, ज्ञाप्यं तु सत्यमित्यर्थस्तावदेषितव्यः । अत एवासत्यादपि वेदात् सत्यं ब्रह्म सिद्ध्यतीत्येतन्निर्वहति । एवञ्चासत्यात् सत्योत्पत्तिरपि तदर्थ इति मा भूत् , येन मतस्याधिकदोषास्पदत्वमापद्यत इति । अथापि भवदीयैः सिद्धिशब्दस्योत्पत्तिपरत्वमप्याशय्य असत्यात् सत्योत्पत्तेरप्युक्तत्वात्तु वादेऽस्मिन् उभयमपि निरस्यते । दर्शितश्चादावेव भवन्मतम्, "आरोपितैरेव शुक्तिरजतरज्जुसर्पशङ्काविषभावितगरुडादिभिः सत्यस्य हर्षभयमरणगरलहरणादेर्दर्शनात्" इति । किं बहुना, भवदुदाहृते ब्रह्मसिद्धिवाक्ययराशावेवोत्पत्तिः प्रतिपत्तिश्च यथायथं निर्दिष्टा । यथा "शब्दाच्च नित्यादसत्यदीर्घादिविभागभाजोऽर्थभेदप्रतिपत्तिर्न मिथ्या । तथा मिथ्याहिदंशो मरणहेतुः" इत्येवम् । अतः, 'मिथ्यार्थस्य सत्यजनकत्वास्वीकारात्'इति भवद्वचनमपसिद्धान्तः । एतेन, 'कथमसतः सज्जायत' इति श्रुतिविरोधो भवतां शतदूषणीदर्शितोऽपि सुस्थः । 'सद्विद्या प्रपञ्चविवर्तोपादानस्य सद्रूपत्वमुपदिशति, न तु कारणस्य सत्त्वम्'

इति वचनमनन्वितम्। उपादानस्यापि कारणविशेषत्वात्। कारणवाक्यं कारणसत्त्वं न ब्रवीतीति को नु ब्रूयात्। 'असत्यात् सत्यं न सिद्ध्यतीत्यस्य अर्थक्रियाकारित्वरहितात् सत्यं न जायत इत्यर्थे इष्टापत्तिः। तावता मिथ्याभूतात् सत्यं न जायत इत्येतत्तु ने'ति यदुक्तम्, तन्न—मिथ्यार्थस्यैव जनकत्वासंभवात्। अभावप्रतियोगित्वं हि मिथ्यात्वम्। कार्यकारणयोश्च सामानाधिकरण्यमावश्यकम्। अन्यथा देशान्तरकालान्तरसंबन्धिनोऽपि कुलालात् घटोत्पत्त्यापत्तेः। शुक्तिरजतादिश्च शुक्त्याद्यावर्तमानः कथं तत्र जनयेत्। शुक्तिरजतग्राहिणि पुरुषे जनयतीति चेत्—तर्हि तज्ज्ञानं कारणम्, न तु तत् कारणमिति सिद्धम्। मिथ्यार्थस्य शुभाशुभसूचकत्वाभाववादः श्रीभाष्यविरुद्ध इति मुधैव मिथ्योच्यते। स्वाप्नज्ञानस्यैव साक्षात् सूचकत्वस्य संध्याधिकरणसर्वग्रन्थसंमतत्वस्य प्रागेव दर्शितत्वात्। भ्रमविषयस्त्वनिर्वचनीय इत्यपि न युक्तम्; संनिकर्षस्थले इदं रजतमित्यादावपि लोहितः स्फटिक इत्यादौ संनिकर्षस्थल इव रङ्गरजतयोरुभयोः संनिकृष्टयोर्वैपरीत्येन इमे रङ्गरजते इतीव चानिर्वचनीयकल्पनां विनैव निर्वाहे अत्यन्तापरिदृष्टवस्तुतत्कारणादिकल्पनाशतस्यात्यन्तानुचितत्वात्। वस्त्वभावे इदं रजतमिति कथं विशदलौकिकप्रत्यक्षमिति चेत्—अनिर्वचनीयरजतसत्त्वेऽपि कथं तत्र चाक्षुषलौकिकम्; तस्य चक्षुरजन्यत्वस्वीकारात्। परमार्थप्रकाशिकायामेतद्विस्तरः।

वस्त्वभावेऽपि वैशद्यं स्वप्ने प्रावाचि तार्किकैः।
सर्वैश्च भावनमूले; तन्न दोषोऽत्र दोषजे॥

इदं रजतमिति आपणस्थरजतग्रहणे नेदं रजतमिति कस्य निषेध इति चेत्—इदं रजतमिति अनिर्वचनीयरजते गृहीते तत्र स्थिते नेदं रजतमिति कथं निषेधः; निषेधस्य सामान्यविषयकताया एव भवदिष्टत्वात्। न हि कस्मिंश्चित् रजते सति, न रजतमितिसामान्यनिषेधो घटते इत्यन्यत्र विस्तरः। अन्यथाख्यात्यैव सर्वनिर्वाहः शतदूषणीसंमत इति च न। अनिर्वचनीयं विना सर्वनिर्वाहस्यैव तदिष्टत्वात्।

अस्तु तावदसत्यात् सत्यसिद्धिः । अथापि असत्यं सत्यमेव साधयतीति वा सत्यं साधयत्येवेति वा नियमाभावान्नासत्यवेदसिद्धं ब्रह्म सत्यमिति निर्धारणं शक्यमिति शंकायां यदुक्तम्—अन्वयव्यतिरेकवशादपि यदि असत्यात् सत्यम्, तर्हि किमसत्याद्धं वेदेन निरपेक्षप्रमाणेन ब्रह्मणा च नित्य शुद्धेनेति—तन्न—आशङ्कापरिहारयोरसिद्धेः । न हि वेदस्य स्वयम्प्रकाशाविषयब्रह्मगोचरत्वं संभवति । न च निर्गुणब्रह्मैव बोध्यमिति निश्चितमस्ति । अतो वेदोऽसमर्थस्तत्र, ब्रह्म च तत् अलीकमिति सिद्ध एवापराधः । भ्रमस्थले विषयतदाकारवृत्त्योरुभयोरपि मिथ्यात्वमित्यद्वैतिनां मर्यादाऽपि न युक्ता ; तूलाविद्यापरिणामत्वेऽपि वृत्तेर्मिथ्यात्वायोगात् । तत्त्वज्ञानबाध्यं हि मिथ्या । विषयस्य बाध्यत्वान्मिथ्यात्वं युज्यते ; न तु वृत्तेः । रजतमिति वृत्तिर्यद्यपि नेदं रजतमिति ज्ञाने सति न जायते । तावता प्राग्जातवृत्तिबाधः कथम् । सा हि यावत् स्थातुमलम्, तावत् स्थित्वा स्वयं नष्टा । नात्र रजतमासीदितिवत्, न मे वृत्तिरासीदिति हि न कस्यापि बाधज्ञानम् । "देहात्मप्रत्ययो यद्वत्" इति कारिकाऽपि प्राक् ब्रह्मशब्दवृत्त्यनुपपत्तिप्रसाधनावसर एव निराकृता । व्यावहारिकं प्रामाण्यमिति चाप्रामाण्यपरिभाषेति वेदप्रामाण्यपरिग्रहानुपपत्तिप्रसाधने प्रदर्शितमेव ।

अत्र वस्तुव्यावहारिकत्वमपि निरुच्यमानं विचार्यम् । ब्रह्मप्रमातिरिक्ताबाध्यत्वं व्यावहारिकत्वमिति तावन्न यौगिकोऽर्थः । ब्रह्मसाक्षात्कारपर्यन्तव्यवहारविषयत्वं ब्रह्मप्रमातिरिक्ताबाध्यत्वे पर्यवस्यतीति चेत्—ब्रह्मप्रमाबाध्यत्वमात्रमस्तु ; किमधिकेन ? अथ ब्रह्मप्रमापूर्वक्षणकल्पितानां शुक्तिरजतादीनां सर्गमध्यनिविष्टशुक्तिरजतादीनामिव शुक्तिज्ञानादि विना ब्रह्मप्रमयैव बाध्यमानत्वात् प्रातिभासिकेषु तेष्वतिव्याप्तिरिति ब्रह्मप्रमातिरिक्ताबाध्यत्वनिवेशः । तेषामतिरिक्ताबाध्यमानत्वेऽपि अतिरिक्ताधीन बाधयोग्यताऽस्तीति नातिव्याप्तिरिति चेत्—अतीतानां भविष्यद्ब्रह्मप्रमया बाधायोगात् पूर्वमेव नास्तीति प्रतीतिविषयीभूतानामतिरिक्ताबाध्यत्वमसंभवि ।

अतीतानां नष्टत्वेऽपि बाधो न जात इति चेत्---कदा बाधः । न कदापीति चेत्—सत्यत्वापत्तिः । ब्रह्मप्रमाकाल एव बाध इति चेत्—नष्टानि वस्तूनि ; अथापि तन्निवृत्तिः ब्रह्मप्रमाकाल एवेत्यनन्वितं वचनम् । तर्हि किं कार्यमिति चेत्---अनिर्वचनीयोपन्यास उपेक्षणीयः । किञ्च केयं ब्रह्मप्रमातिरिक्ताबाध्यत्वनिविष्टा बाधयोग्यता ? मिथ्यात्वमिति चेत्---तत् प्रातिभासिकसाधारणम् । अपिचेदृशाबाध्यत्वं ब्रह्मण्यप्यस्तीत्यतिव्याप्तिः । तदर्थं चिद्भिन्नत्वं निवेश्यम् । अपि च ब्रह्मप्रमया बाध्यत्वेन गृहीते त्रैकालिकाभावप्रतियोगित्वस्यावसितत्वात् तत्र व्यावहारिकसत्तावचनं व्याहतम् । तथा सत्तावैविध्ये च न प्रमाणम् । एवं ब्रह्मप्रमातिरिक्तशून्यज्ञानबाध्यत्वादबाध्यत्वमपि दुर्भणम् । शून्यज्ञानस्य दोषमूलकत्वात् ततो बाधो न जायत इति चेत्---ब्रह्मज्ञानेऽपि दोषमूलकत्वग्रहणादितो बाधो न सिद्ध्येदेव । वस्तुतो ब्रह्मप्रमायाश्चिदचिद्रूपविशेषणवैशिष्ट्यविषयकत्वस्यैवास्माभिरुपपादनात् प्रपञ्चस्य ततो बाधप्रसक्तिरेव नेत्यपि ध्येयम् ।

एवं पल्लवाज्ञानतत्कार्यान्यतरभिन्नत्वे सति सत्तादात्म्यमिति लक्षणान्तरमप्युपेक्ष्यम् —भावरूपाज्ञान --तत्पल्लवाङ्कुरतूलादावेव प्रमाणाभावात् । सत्पदेन ब्रह्मग्रहणे तद्भिन्ने प्रपञ्चे तत्तादात्म्याभावात् । प्रागेव तादात्म्यस्य विचार्य निरस्तत्वात् । सत्पदेन प्रपञ्चग्रहणे सत्त्वस्यैव पर्याप्ततया सत्तादात्म्यमित्युक्तेरयोगात् । बाध्यस्य कथं सत्त्वमित्याशङ्कायां पारमार्थिकसत्त्वाभावेऽपि व्यावहारिकमस्तीत्युक्त्या किमिदं व्यावहारिकत्वमिति प्रश्ने इतराबाध्यत्वं सत्तादात्म्यमित्यादिकं हि न सत्त्वस्थापकं भवितुमर्हतीत्यलं पिष्टपेषेण ।

संवादकान्तराभावसहकृतकारणदोषनिश्चयस्य तु न बाधाव्यभिचारित्वमितीदं प्रतिज्ञामात्रम् । दुष्टकारणजन्यत्वबोधे सति अर्थात् बाधसिद्धेः मीमांसावर्तिकसिद्धत्वात्—कारणदोषे सति बाध्यत्वमुत्सर्गः । अपवादस्तु संवादकान्तरम् । साधकान्तराभावे बाधकत्वं कारणदोषस्याव्यभिचारितमिति । स्वतःप्रमाणभूतवेदजनितब्रह्मप्रतिपत्तावपि विषयबाध-

शङ्कायां मननेन तन्निरासः---ब्रह्म अबाधितम् अनारोपितत्वात् व्यतिरेकेण घटवदित्युक्तमपि न युक्तम्---बाधितत्वं शङ्कमानस्य तदारोपितत्वेपि शङ्कासत्त्वेन हेत्वसिद्धेः। सौगतपक्षमुपेक्ष्य वैदिकपक्षपरिग्रहे तु घटेपि अनारोपितत्वाबाधितत्वसत्त्वेन व्यतिरेक व्याप्तिव्र्गनानपेक्षणात्। शून्यं तत्त्वमिति वाक्यस्याप्रमाण्यमावयोः संप्रतिपन्नमिति कथं ततो बाधशङ्केति चेत्—वेदप्रामाण्यस्य वस्तुतो भवन्मतेऽभावात् कथं ततो ब्रह्मसिद्धिः। अप्रमाणं चेत् साधकम्, शून्यवादोऽपि स्थापकः स्यादिति प्रतितर्कप्रयोगश्चास्माकं सुकर एव। अप्रामाणिकवद्वभसमानत्वम्, अनुपपन्नत्वेऽप्युपपन्नवद् भासमानत्वमिति शतदूषणीनिर्वचने यथाश्रुतार्थमुपेक्ष्य पूर्वस्वनिरुक्त ब्रह्मप्रमातिरिक्ताबाध्यत्वादिनिर्वचनपर्यवसानं तद्दूषणस्य दर्शितत्वादेवोपेक्ष्यम्। केवलं शुक्तिरजतादावनिर्वनीयव्यावहारिकत्वापत्तिपरिहाराय स प्रयासः। स तु तद्भिन्नत्वं विशेषणमित्यत्रैव पर्यवस्यति। तावता सत्ता न स्थापिता भवेत्।

किमनेन वादान्तरव्युदस्तेन विचारेण बहुदूरमानीतेन। असत्यात् सत्यसिद्धिरित्यस्य असत्यात् सत्योत्पत्तिरित्यर्थो भवत्प्राच्यवर्णितोऽपि भवता परित्यक्तः। असत्यात् सत्यज्ञप्तिर्भवतीत्यर्थेऽपि असत्यस्याज्ञायमानतया ज्ञापकत्वं कुत्रापि नादर्शि। ज्ञायमानतया ज्ञापकत्वे च ज्ञानस्यैव ज्ञापकत्वमिति न विषयस्यासत्यस्य तज्ज्ञानकारणता। खण्डनकारश्च प्रागेव खण्डितः। असत्यविषयकज्ञानाधीनज्ञप्तिविषयस्य सत्यत्वमेवेति स्थापकाभावात् ब्रह्मणः सत्यत्वं न सिद्ध्यतीति च न्यरूपि। अतो नासत्यात् सत्यसिद्धिरिति।

सत्यं सिद्ध्यत्यसत्यादिति गदितुमुदाहारि यद् बह्वनेकैः
मिथ्यासिद्धान्तनिष्ठैस्तदखिलमसदित्यप्रकम्प्यं न्यरूपि।
तत्रासंभावनांशक्षपणचणतयोदाहृतेरादृताव-
प्यर्थस्थित्यै न हेतुर्न्यगदि तत इदं निष्फलं विस्तृतं यत्॥

शुभमस्तु

श्रीः

# जीवन्मुक्तिभङ्गप्रसाधनम्

अलभ्यां जीवद्भिर्निजपरपदोदञ्चनमयीम्
असौ मुख्यां मुक्तिं व्यपगतशरीरेषु वितरन् ।
अनुग्राह्यं लोकं प्रकृतिविवशं रक्षितुमनाः
विमुक्तं जीवन्तं कुरुत इह योऽस्त्वेष हृदि मे ॥

असत्यात् सत्यसिद्धेः प्रागसत्यत्वमुदीरितम् ।
अत्रैव मुक्तेस्तज्ज्ञाया असत्यत्वमथोच्यते ॥

शतभूषण्यामेव बाधितानुवृत्तिपरीक्षावसरे, "बाधितानुवृत्तिमनङ्गीकृत्य जीवन्मुक्त्यनङ्गीकारेण वोपदेशानुपपत्तिः पूर्वप्रकरणापादिता अद्वैतिभिर्यद्यपि परिहर्तुं शक्यते" इति जीवन्मुक्त्यभावपक्षोऽप्यद्वैतिनामदर्शि । औपचारिकी जीवन्मुक्तिस्तु अनद्वैतिभिरपि सुवचा । अतोऽद्वैतिसंमतेयं मुक्तिः कीदृशीति विचार्यम् । एवं मुक्तत्वव्यपदेशस्य फलं किमिति च । अद्वैतसिद्धौ मुक्तस्यापि जीवत्त्वोपपादनाय अविद्यानाशेऽपि तत्कार्यसंस्कारस्य कियन्तमपि कालमनुवृत्तिरिति, अविद्यालेशस्य वाऽनुवृत्तिरिति पक्षद्वयमुपन्यस्य, कोऽसौ लेश इति पृष्ट्वा अविद्याया अनेकशक्तिमय्याः शक्तिविशेषो लेशः, यद्वा अज्ञानस्य सूक्ष्मावस्थेति पक्षद्वयमुपक्षिप्तम् । शक्तिरियं विक्षेपशक्त्येकदेश इति विवरणमतम् । भामत्या तु विक्षेपशक्तेरस्वीकारात् अविद्याया अनुपादानत्वात् निमित्तमात्रत्वात् आवरणशक्तिमात्रमेवेति तदेकदेश एवावतिष्ठत इतीष्यते ।

तत्र जीवनशब्दस्य मुक्तिशब्दस्य च मुख्यार्थग्रहणे किमविरोधोऽस्ति उत विरोध एवेति विमर्शे विरोध एवाद्वैतिभिरपि संमन्तव्यः । "सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते" (3.2.27)

इति न्यायभाष्यम् । "जीवनशब्दस्य स्वकर्मोपार्जितशरीरावच्छिन्नात्ममनस्संयोगो मुख्योऽर्थः" इति किरणावली । प्राणापानिमेषोन्मेषजीवनेति कणादसूत्रे जीवनपदेन वृद्धिभग्नक्षतसंरोहणादि विवक्षन्ति । श्वासानुवृत्तिर्जीवनमिति च लौकिकाः । मुक्तिर्नाम बन्धान्निःसरणम् । बन्धश्चाविद्यातत्कार्यसंबन्ध इति तन्निवृत्तिर्मुक्तिः । तत्र अशरीरमिति श्रुतिस्मृत्यनुसारादशरीरत्वमेव मोक्ष इत्यद्वैतिवादमुपन्यस्य जीवन्मुक्तिस्वरूपचिन्तनं श्रीभाष्ये समन्वयाधिकरणे व्यधायि । अन्ये आहुः, अविद्यानिवृत्तिरेव मोक्ष इति । तत्रैकस्मिन् घटे सति घटो नास्तीति यथा न प्रतीतिः, तथा अविद्यायामंशतो विद्यमानायामविद्या निवृत्तेति, नास्तीति च व्यवहारो न स्वरसः । अतः कात्स्न्येनाविद्यानिवृत्तिर्मोक्षशब्दमुख्यार्थः । अन्यथा प्रतिक्षणमंशतोऽविद्यानिवृत्तेः सुवचतया बन्ध एव मुक्तिः स्यात् । एवञ्च जीवन्मुक्त इति विशिष्य कस्य चिन्निर्देशो नियामकरहितः स्यात् । अथोच्येत—उत्सर्गतो जीवत्त्वसहचरिततयैव यल्लोकसिद्धम्, जीवन्नेव तस्मान्मुक्त इति जीवन्मुक्त इति—सत्यमेतत् । किं तत् जीवत्त्वप्रतिनियतं लोकसिद्धम् । दुःखमिति चेत्—न, "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति निर्गुणविद्यानिष्ठानामपि वसिष्ठापान्तरतमःप्रभृतीनामाधिकारसमाप्ति नैकविधसुखदुःखभोगस्योक्तत्वात् जीवन्मुक्तत्वाभिमतेषु अर्वाक्ष्वपि पुरुषेषु क्षुत्तृष्णादुःखस्य दृष्टत्वाच्च मुक्त्ययोगप्रसङ्गात् । अत एव रागद्वेषादिकं बाधितानुवृत्तिनिबन्धनमिति चेत्---निबन्धनं किमप्यस्तु । प्राप्तं तु रागद्वेषादीति न सामान्यतस्ततो मुक्तिः । एवञ्च का कथा सशरीरत्वप्रतिभासराहित्यमशरीरत्वं वा मुक्तत्वमित्यस्य जीवति विदुषि ।

अस्तु तावदमुख्यैव जीवन्मुक्तिरिति चेत्—तदिदममुख्यत्वं किं जीवत्त्वांशे उत मुक्त्यंशे । अस्मन्मतरीत्या जीवत्त्वांशेऽप्यमुख्यतया जीवन्मुक्तिः सूपपादा । पुण्यपापरूपस्वकर्मार्जितशरीरेन्द्रियादिसंबन्धात्मकस्य जीवनस्याभावेऽपि, "संकल्पादेव तच्छ्रुतेः" इत्यादिसूत्रदर्शितदिशा, 'स यदि पितृ-

लोककामो भवति, संकल्पादेवास्य पितरः समुत्तिष्ठन्त' इत्यादिश्रुतिप्रामाण्यात् मुक्ता एव प्राकृतलोकेऽपि देहपरिग्रहेण यथाभगवदभिमति विहरन्तीति, तदिदममुख्यं जीवनम्; पुष्कलं तु मुक्तत्व तेषामिति जीवन्मुक्तिरमुख्येयम्। व्यञ्जितमिदं शतदूषण्यामेव. "न च मुक्तस्य लीलाप्रसङ्गमप्यनुमन्यसे जक्षदादिवाचामेव भक्षणात्" इति परमते ईदृशमुक्त्यसंभवप्रदर्शनेन। अनेन, 'जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा नोपजनं स्मरन्निदं शरीरम्" इति वाक्यस्य पितृलोककामादिवाक्यतौल्यमप्युदर्शि। अद्वैतिनस्तु सर्वस्यास्य सगुणब्रह्मप्राप्तौ संभवेऽपि निर्गुणवाक्येनानन्वयात् प्रकरणात् भ्रंशनं मन्यन्त इति भक्षणादित्युक्तम्। सगुणप्राप्तिश्च भामतीकारः, 'न बन्धो न मुक्तिः' इति उभयविलक्षणामध्यवस्यति, दुःखाभावान्न बन्धः भेदगर्भत्वाच्च न मुक्तिरिति। तदिदम्, 'ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रे द्रष्टव्यम्।

इयमेका विधा। अन्या तु अमुख्या जीवन्मुक्तिः मुख्ये जीवत्त्वे सत्येव मुक्तेरमुख्यतया। तदिदम्, "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इत्यादिश्रुतिसिद्धं रागद्वेषादिराहित्य---उत्तरपूर्वाघाश्लेष संवलितैहिकपरब्रह्मानुभवनम्। "विमुक्तश्च विमुच्यत" इत्यत्र प्रथमान्तपदोपात्ता मुक्तिश्चेयमेव। मुख्या मुक्तिस्तु शरीरावसानानन्तरभाविनी धातूपात्ता। तदिदममृतत्वम्, "समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य" इति भगवता बादरायणेनापि व्युदपादि। अर्चिरादिमार्गेण गतानाममृतत्वप्राप्तेः, "तयोर्ध्वमायन्नमृतत्वमेति' इति कण्ठोक्ततया तत्र विवादप्रसक्त्यभावात्, "तमेवं विद्वानमृत इह भवति", "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति इहैव जन्मन्यमृतत्वश्रवणात् सशरीरस्यैव सिद्धेऽस्मिन्नमृतत्वे गतिः किमर्थेत्याशङ्कायाम् अनुपोष्य शरीरसबन्धमदग्ध्वा यत् प्राप्यममृतत्वम्, तावदेवात्र विवक्षितम्, मुख्यममृतत्वं तु गत्येकसाध्यमिति समाधिरत्र सूत्रे विवक्षित इति निश्चीयते। सेयं जीवन्मुक्तिः श्रुतिसूत्रारूढा नाद्वैतिभिर्जीवन्मुक्तिशब्देनेष्यते।

अद्वितीयब्रह्मज्ञाने सति अज्ञानस्य स्थातुमशक्तया तन्निवृत्तिर्भवती त्याहुः । तदधिगमाधिकरणस्य सगुणब्रह्मविद्या विषयगौरवभावितप्राभवा अदृष्टद्वारा उत्तरपूर्वाघपुण्याश्लेषविनाशहेतुरित्येवमर्थमनुक्त्वा निर्विशेषब्रह्मतत्त्वज्ञानं दृष्टविधया मिथ्याभूताविद्यामुच्छिन्दत् मूलोच्छेदात् दुरितक्षयमावहतीति वर्णयन्ति । अतो मुक्तिपदमुत्तरपूर्वाघाद्यश्लेषोपयोग्यविद्यानिवृत्तिपरं सिद्धम् । एवञ्च जीवन्मुक्तिर्दुरुपपादा । अद्वैतिमत एव जीवन्मुक्तितत्त्वम्, न मतान्तर इति प्रवादमात्रम् । शोधने तु विधीयमाने तन्मतेऽपि केचित् जीवन्मुक्तिं नेच्छन्तीति यथा, तथा मतान्तर एव जीवन्मुक्तिरुपपादनार्हा, नाद्वैतमत इत्यपि सिद्ध्यति । भगवत्संकल्पायत्तकर्माश्लेषविनाशवादिनां हि यथार्हं मुक्तिस्तदातदा सुवचा । दृष्टविधया तत्त्वज्ञानेनाविद्यानिवृत्ताविष्यमाणायां तत्र निवृत्तानिवृत्तभागद्वयकल्पना न कल्पते । अद्वितीयब्रह्मज्ञानं हि अविशेषेण ब्रह्मातिरिक्तसर्वभावगोचरम् । तेनैको भागो निवर्त्यते, नान्य इत्यत्र न किञ्चिदस्तु गमकम् । आरब्धकार्यपुण्यापुण्यमात्रनिवृत्तेः प्रामाणिकत्वाय तथा वाच्यमिति चेत्---यथा तत्प्रामाणिकत्वमुपपद्यते तथा मतं विमृश्यताम् । तत्त्वज्ञानान्मिथ्यार्थनिवृत्तिरिति प्रणाडी तु तदप्रामाणिकत्वमेवाऽऽपादयेत् । एतेन प्रतिबन्धकाभावसहकृतस्यैव तत्त्वज्ञानस्य कार्यहेतुत्वात् न सर्वनिवृत्तिर्युगपदिति विमर्शोऽपि व्युदस्तः । प्रतिबन्धकसहस्रस्यापि मिथ्यार्थवृन्दनिविष्टतया सर्वस्याप्येकहेलयैव निवृत्त्यवश्यम्भावात् । अतः सुष्ठूक्तम्, "तथासति जीवनादेरपि निवृत्तिप्रसङ्गेन जीवन्मुक्तिवाचोयुक्तेरयुक्तेः" इति । ननु नास्त्येव जीवनमपि ; किं तु 'जीवत्त्वेन भानमात्रमिति चेत्, किं मुक्तः स्वं जीवत्त्वेन मन्यत इति कथ्यते उत परस्तम् । नाद्यः, तथा सति सर्वस्यापि मुक्तस्यैवं मतिसंभावना स्यादिति सर्वदैव जीवन्मुक्तत्वापत्त्या परममुक्तेरन्यस्या अभावप्रसङ्गात् । नान्त्यः, तत्त्वज्ञानिदृष्ट्या सर्वस्यापि मिथ्यात्वेन भवजलधिकुहरमज्जने सत्यपि जीवन्मुक्त इति व्यवहारापत्तेः । वस्तुतो जीवत्त्वे सति मुक्ततया मन्यमानत्वं जीवन्मुक्तत्वमिति चेत्---वस्तुतो जीवनमेव

कथम्। जीवन्मुक्तम्मन्ये भ्रान्ताद्वैतिन्यतिप्रसङ्गाच्च। मुक्तत्वाध्यवसायोपि वस्तुतो मुक्ते दुर्वचः। अध्यवसायस्यापि मिथ्यात्वात्। अतो बद्धत्वं मुक्तत्वमित्यवस्थाद्वयव्यतिरेकेण जीवन्मुक्तत्वमद्वैतिनामसंभवि।

एवं स्थिते तत्त्वे ब्रह्मसिद्धीष्टसिद्ध्यद्वैतसिद्ध्याद्यनेकग्रन्थानुवादविस्तरेण किं सेत्स्यति। 'आरब्धविपाकसंस्कारात् शरीरिणं भोक्तारमिव चायमात्मानं प्रत्येति' इति ब्रह्मसिद्धिरनुपपन्ना। संस्कारस्यापि मिथ्यात्वेन स्थित्ययोगात्। जीवन्मुक्त--स्थितप्रज्ञ-गुणातीतपदार्थशोधनमद्वैतसिद्ध्यादिक्रियमाणमप्यत एव हेयम्। "तद्यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत, एवमेवेदं शरीरं शेते अथायमशरीरोऽमृतः" इति वाक्यं स्वरसतः सर्पनिर्मुक्ता सर्पत्वगिव विद्वद्विसृष्टं शरीरं पृथगवतिष्ठत इत्यर्थं दर्शयत् मुक्त्यनन्तरमपि निरात्मदेहानुवृत्तिमवगमयति, न तु मुक्तेः प्राक् जीवन्मुक्तायामपि शरीरस्याभावम्। अत इदं मिथ्यात्वप्रतिकूलम्। (अहिनिर्ल्वयनीति पाठः। न तु 'निर्ल्वनी' इति। इदं शरीरं शेत इति पाठः; न तु अयं शरीरे शेते इति) "अन्तःकीटदष्टमुपहतभाव्यङ्कुरजननशक्तिकं वीजमिवाविद्या यावच्छरीरपातमनुवर्तत" इत्युपन्यासोऽपि दृष्टान्तमात्रतृप्तान् तर्पयेत्। वस्तुसत्यत्वे खल्वयं दृष्टान्तो घटेत। "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ", "यावदधिकारवमस्थितिः" इति सूत्रद्वये भाष्यद्वयेऽपि स्थितप्रज्ञस्वरूपमेव विविच्यत इत्येतदयुक्तम्---अस्मन्मते भक्तियोगनिष्ठविषयत्वात् सूत्रस्य; स्थितप्रज्ञस्य च तदन्यत्वात्। अद्वैतमते अविद्यायां निवृत्तायामप्यवश्यभोक्तव्यसर्वकर्मफलानां भोगमात्रेण नाश इत्येतदप्यनुपपन्नम्। तत्त्वज्ञाने जाते कस्यापि परिशेषणायोगात्। निवर्तनसामर्थ्यसंपत्त्यभावे कतिपयाविद्यांशनिवर्तनस्याप्यशक्यत्वात्। विदुषामपि शुकादीनां शरीरादिश्रवणात् तदुपपन्नत्वाय आंशिकनिवृत्तिरेष्टव्येति चेत्---मिथ्यात्वपक्षे तदनिर्वाहात् सत्यत्वपक्षः समाद्रियताम्। ब्रह्मातिरिक्तं सर्वं मिथ्येति ज्ञाने सति अविद्यायाः कार्त्स्न्येन निवृत्तेरावश्यकतया सिद्धान्तलेशसंग्रहाद्युक्तस्यानुपपन्नतया अनेका-

विद्यांशाधीनानेकजीववादेऽपि एकजीवसंबन्धितत्त्वज्ञानेन सर्वमोक्षप्रसंगे परिहर्तुमशक्ये स्थिते का कथा तत्तज्जीवीयाविद्यांशोऽप्यंशः शिष्यमाणोऽस्तीत्युपपादनस्य। एकजीववादे तु शुकादिपरममुक्तिवचनमेव मिथ्येति स्थितमिति जीवन्मुक्तिवचनानां कियती तथ्यता।

यत्तु अद्वैत्येकदेशिमते तत्त्वज्ञानेनावरणशक्तिमात्रनाशः। विक्षेपशक्तिस्तु वर्तत एव। एतन्मते अविद्यानुमानेनावरणशक्तिमात्रानुमानम्, नाज्ञानस्य; श्रीभाष्यदावपि प्रकृत्यादिपदवाच्यस्य तस्य सिद्धेरिति—तन्न—मिथ्याभूताविद्यांशस्य विक्षेपशक्तेस्तत्त्वज्ञानान्यत्वावश्यम्भावात्। तस्याः सर्वदा स्थितौ वा कारणान्तरेण तन्नाशस्य कदाचिदभ्युपगमे वा तत्त्वज्ञानतस्तन्निवृत्त्यनङ्गीकारे तत्सत्यत्वापत्तेः। अविद्यायाःसिद्धत्वादावरणशक्तिमात्रानुमानमित्यप्ययुक्तम्; श्रुतिप्रसिद्धप्रकृत्यादिपदवाच्यविलक्षणत्वात् भवदीयमिथ्याभूताज्ञानस्य। अन्यथा, "यवनिका माया जगन्मोहिनी", "गुरु वरणकमेव तमः", "त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्। मोहितं नाभिजानाति मामेभ्यः परम्" इति परब्रह्मावारकत्वस्यापि प्रकृतौ निर्विवादतया तदर्थमप्यनुमानमनपेक्षितं स्यात्। तस्मात् तत्त्वज्ञानरूपेण प्रथमसाक्षात्कारेणाज्ञानस्यांशतः सर्वात्मना वा मिथ्यात्वप्रयुक्तो नाशो न संभवति।

यत्तु भवदीयोक्तम्, 'शास्त्रेण नश्येत् परमार्थरूपं कार्यक्षमं नश्यति चापरोक्ष्यात्। प्रारब्धनाशात् प्रतिभासनाशः एवं त्रिधा नश्यति चात्ममाया' इति विवेचनम्, तदप्यनेनापास्तम्—शास्त्रजन्यात् परोक्षतत्त्वज्ञानात् जगत्पारमार्थ्यभ्रमप्रयोजकाविद्यांशनाशः, तदपरोक्षज्ञानात् सृष्ट्युपयोग्यविद्यांशनाशश्च भवत इत्येतदभावेऽपि अपरोक्षादेवाविद्यानिवृत्तिरितीष्टावपि परोक्षज्ञानेन जगत्पारमार्थ्यज्ञानं प्रतिरुद्ध्यते, जातमपि अप्रामाण्यज्ञानास्कन्दितं क्रियत इत्येव सुवचत्वात्। एवमपरोक्षज्ञानादविद्यानिवृत्तौ प्रारब्धपरिशेषो दुर्वच इति तन्नाशात् प्रतिभासनाश इत्ययुक्तम्। प्रतिभासप्रयोजकाविद्यांशस्य प्रारब्धनाश-

नाश्यत्वे तत्त्वज्ञाननाश्यत्वाभावे ज्ञानानिवर्त्यतया मिथ्यात्वासिद्धिश्च । अत एव तत्त्वज्ञानादविद्यामात्रनिवृत्तिः अविद्याकार्याणां स्वस्वकारणनिवृत्त्यधीना निवृत्तिः । एवञ्च विनश्यदवस्थगुणादेः समवायिकारणस्याभावेऽपि क्षणमवस्थानस्य तार्किकैः स्वीकारवत् संस्कारादीनामनुभवानुसारेणानेकक्षणावस्थानस्य स्वीकारे न दोष इत्यपि वार्तम्---द्रव्यनाशस्य सिद्धान्तेऽनिष्टत्वात् । अविनश्यदवस्थस्याऽऽधारं विना स्थितेरदृष्टत्वात् । अविद्यावत् तत्कार्यपरम्पराया अपि मिथ्यात्वाविशेषात् अद्वितीये ब्रह्मण्येव सर्वस्यापि कल्पितत्वाच्चाधिष्ठानज्ञाने युगपत्सर्वनिवृत्तेरेव युक्तत्वाच्च । अन्यथा तत्त्वज्ञानेतरनाश्यतया सत्यत्वापातात् ।

'तत्त्वज्ञाने जाते मोक्षफलविलम्बे कारणं नास्ति समर्थस्य क्षेपायोगात्' इत्युक्त्वा समनन्तरमेव, 'तत्त्वज्ञानमात्रेण विदेहकैवल्याप्राप्तौ निदानं तु, 'तस्य तावदेव' इत्यादिश्रुतिस्मृतिबलमेव' इत्युक्तमयुक्तम् । कारणाभावे श्रुत्यादिबलेनापि मोक्षफलवारणायोगात् । तत्त्वज्ञानातिरिक्तकारणस्वीकारे मोक्षस्य मिथ्यापदार्थनिवृत्तिरूपत्वानापत्तेः । एवम्, 'सत्यपि शरीरे प्रतिभासमात्रेण ममताद्यभावात् वस्तुगत्या अशरीरत्वात् मुक्तिः' इति प्रागुपन्यस्य, "अन्यदृष्ट्यैव तस्य शरीरादिप्रतिभासो जीवन्मुक्तिदशायाम्' इति लेखनमपि नूनं व्याहतमेव । बाधितानुवृत्तिवादिभिः शरीरं नास्ति, परस्य तत्प्रतिभासमात्रमिति हि न सुवचम् । 'अत्र ब्रह्म समश्नुते' इति श्रुतिर्न समाधिदशाभाविब्रह्मानुभवपरा, मुक्तावस्थाप्रकरणत्वात्' इति यदुक्तम्---तन्न---किमियं श्रुतिर्भवता जीवन्मुक्तिपरा वर्ण्यते उताजीवन्मुक्तिपरा । आद्ये मुख्यमुक्तिप्रकरणविरोधस्तुल्यः । अन्त्यस्तु न ; 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि' इति काममात्रविमोकस्य हृदयशरीरादिसद्भावस्य ज्ञापनात् अत्रेतिपदेन सशरीरत्वाविष्करणाच्च तद्विरोधात् । यदि, अथ मर्त्योऽमृतो भवतीत्यन्तमनुपोष्यलभ्यामृतत्वपरम्, 'अत्र ब्रह्म समश्नुत' इत्यस्य जन्मान्तरं विना मोक्षं मुख्यमश्नुत इत्यर्थ इति मन्यते ---काममस्तु । वस्तुतः समन्वयाधिकरणकल्पतरौ अत्र ब्रह्मेति वाक्यं तदुपरि, यथाहिनिर्ल्वयनीत्यादि च वाक्यं सर्वं जीवन्मुक्तिपरमेव भाष्यानुसारेण

व्याख्यातम्। सचक्षुरचक्षुरिवेत्यादि च अचक्षुरपि सचक्षुरिवेति विपरीतं योजितम्। अतो न मुख्यमुक्तिमात्रपरम्। अथवा, 'यदा सर्वे प्रमुच्यन्ते कामा' इति श्लोकः अथाकामयमान इत्येतन्मात्रविवरणमस्तु। यत्तु समाधिदशाभावि ब्रह्मानुभव एव वस्तुतो जीवन्मुक्तिरिति—तन्न—व्युत्थानदशायामपि जीवन्मुक्तत्वस्य सिद्धान्तसिद्धत्वात्। ब्रह्मानुभवविरोधिवृत्तिरेव तस्यासिद्धेति यदुक्तम्—तत्रेदं वक्तव्यम्—यद्येवम्, अविच्छिन्नब्रह्मानुभवो वृत्तिरूपो जीवन्मुक्तिः, अविद्यान्तनिवृत्तिर्मुख्यमुक्तिरिति सुवचे समाधिदशाभाव्यनुभवो जीवन्मुक्तिरिति किमित्युच्यते। स्वरूपमात्रप्रकाशो मुक्तिरिति चायुक्तम्। तस्य प्रलयादिसाधारण्यात्।

देहादिसत्यताबुद्धिनिवृत्तिर्जीवन्मुक्तिरिति स्वीकारश्चायुक्तः, तथा सति वाक्यार्थश्रवणप्रभृति मुक्तत्वप्रसंगात्। एवञ्च तदाप्रभृति पुण्यपापाधिकारनिवृत्तिप्रसङ्गः, मुक्ते तन्निवृत्तेर्भवदुक्तत्वात्। परोक्षज्ञानमात्रेण न मुक्तत्वमित्यस्य आपस्तम्बवचनार्थवर्णने भवदभिमतत्वाच्च। बाह्यसुखबुभुक्षमानस्य तत्त्वश्रवणे निष्पन्नेऽपि मुक्तत्ववर्णनायोगाच्च। जीवन्मुक्तानां वर्णाश्रमधर्मेषु प्रवृत्तिः पूर्ववासनया लोकसंग्रहार्थमिति यदुक्तम्—तत्रोच्यते। यदि पूर्ववासनाविवशः कुर्यात्, तर्हि पूर्ववत् स्वस्मिन् वर्णाश्रमवासनामपि स वहतीति, तस्य स्वस्मिन् अनधिकारित्वबुद्ध्यभावेन, लोकसंग्रहार्थमिदं क्रियते, न तु स्वार्थमिति कथं बुद्धिः। यदि स्वात्मानमनधिकारिणं मन्वानेनापि लोकसंग्रहार्थं लोकाधिकृतकर्मानुष्ठानम्, तर्हि संन्यासिनोऽपि तदर्थं गृहस्थधर्मानुष्ठानप्रसङ्गः। तर्हि कथमीश्वरोऽनुतिष्ठति। गीतं हि तेन, "उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्" इतीति चेत्—तर्हि स भगवान् अव्यवस्थया विप्रक्षत्रवैश्य-वटुगृहस्थवानप्रस्थवर्णान्तरादिसर्वलोकसंग्रहाय सर्वविधं कर्माचरन् सर्वत्र सर्वेषामधिकारसूचनमुखेन पुनरुत्सादनमेव कृतवान् स्यात्। अतः स्वस्मिन् एकरूपवर्णाश्रमवत्त्वमभिनीय तदनुगुणधर्माचरणेन तद्वर्णाश्रमधर्मानुष्ठापनमेव लोकसंग्रह इति वक्तव्यम्। एवञ्चेश्वरवत् जीवन्मुक्तो-

पिऽ स्वस्य किञ्चिद्वर्णाश्रमशालित्वाभिनयपुरस्सरमेव लोकं संगृह्णीयात् । तथा च तदभिमानस्य वस्तुतोऽभावान्न पूर्ववासनाधीना प्रवृत्तिः । सर्वमिथ्यात्वाध्यवसायिनः संग्राह्यो लोकोऽपि नास्तीति च किमर्थमाचरणम् ।

वासिष्ठं प्रमाणीकृत्य ब्रह्मविद्विषये सप्त भूमीः परिगणय्य---शुभेच्छा, विचारणा, तनुमानसी, सत्त्वापत्तिः, असंसक्तिः, पदार्थाभावनी, तुर्यगा इत्युक्तासु तासु भूमिषु, आद्यभूमिकात्रयं जाग्रदवस्था, चतुर्थी स्वप्नावस्था, पञ्चमी सुषुप्तिः, षष्ठी गाढसुषुप्तिरिति विवेचनं विधाय, मोक्षेच्छा प्रथमा भूमिः, श्रवणमननरूपो विचारो द्वितीया, ध्यानं तृतीया एवं साधनदशेयं सर्वा जाग्रद्दशा, भेदबुद्ध्या जगतो दृश्यमानत्वात् । तुरीया सत्त्वापत्तिर्नाम वाक्यजन्यनिर्विकल्पकसाक्षात्कारः । इयं स्वप्नावस्था, स्वप्नतुल्यतया जगद्ग्राहकत्वात् । पञ्चमीप्रभृतिभूमिकात्रयं जीवन्मुक्तिः । पञ्चम्याः सुषुप्तिरिति नाम; सुषुप्तस्येव असंसक्तिनामकैतद्भूमिभाजोऽपि स्वयं व्युत्थानात् । अयं ब्रह्मविद्वरः । षष्ठभूमिस्थो वरीयान् । परप्रयत्नेन व्युत्थानं तस्य । समाधिनिष्ठः स्वतःपरतोऽप्यव्युत्थितः ईश्वरनिरुह्यमाणप्राणादिपरवशदेहधारणः सर्वदा परमानन्दघनः तुर्यगाख्यसप्तमभूमिस्थः -- इति निरूपयता च भवता विपरीतवासनावैधुर्यावस्थ एव जीवन्मुक्तो वर्णित इति का तस्य पूर्ववासनाधीना लोकसंग्रहार्था प्रवृत्तिः । एतेन स्वाधिकारकाले लोकसंग्रहार्थकर्मानुष्ठानाभ्यासाधीनवासनावशात् अनधिकारेऽपि करोतीति, निरस्तम्---अपूर्वपुरुषदर्शनतत्प्रार्थनाश्रवणतत्प्रश्नानुगुणप्रतिवचनादीनां वासनाधीनत्वासंभवाच्च । तादृशामपि जीवन्मुक्तत्वाभिमन्तृसिद्धान्तविरोधप्रसंगाच्च ।

यत्तु सर्वथा जीवन्मुक्तिर्नाप्रामाणिकी श्रुतिस्मृत्यादिसंमतत्वादिति---तत्रेदमवधेयम्---न वयं जीवन्मुक्तिरिति शब्दप्रयोगं तदर्थविशेषञ्च कञ्चिद्वारयामः । शतदूषण्यामेतद्वादारम्भश्लोक एव जीवन्मुक्तिविशेषस्य प्रदर्शितत्वात् । जीवन्मुक्तिशब्दप्रयोगोऽपि प्रमाणगत इत्युक्तत्वाच्च । भवद्भिरपीदृशी जीवन्मुक्तिरभिप्रेयते चेत्---तद्दूषणेऽपि न प्रवर्तामहे । असंभावितान्यादृ-

शजीवन्मुक्तिशब्दार्थवर्णनमेव व्यासेधामः। तथाहि – जीवतो विदुषोऽविद्यानिवृत्तिः संस्कारांशमात्रानुवृत्तिश्च जीवन्मुक्तिः, अविद्याया एवांशिकी निवृत्तिः सेत्येवमर्वाचीनैरुपपादितम्। समन्वयाधिकरणशाङ्करभाष्ये च, सशरीरत्वं बन्धः, अशरीरत्वं मुक्तिरिति, "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति श्रुतिं प्रदर्श्योक्त्वा जीवतोऽपि विदुषोऽशरीरत्वरूपमुक्तिरस्तीत्यभाषि। तत्र जीवत्त्वं सशरीरत्वम्, मुक्तिरशरीरत्वमित्युक्तौ कथं मिथोविरुद्धसमावेश इति शङ्का लभत एवावकाशम्। यदि जीवत्त्वं शरीरप्रतिभासवत्त्वम्, मुक्तिश्चाशरीरत्वमित्युच्यते, तदा शरीरादेर्मिथ्यात्वात् अशरीरत्वस्यात्मस्वभावत्वात् संसारिणि जीवे सर्वस्मिन् जीवत्त्वमशरीरत्वञ्चास्तीति सर्वो जीवन्मुक्तः स्यात्। अथाशरीरत्वं शरीरप्रतिभासराहित्यम्; तत् संसारिषु नास्तीति न दोष इति चेत् – श्रुतौ 'सशरीरस्य', 'अशरीर'मित्यनयोःपदयोः प्रतिभासघटितार्थवर्णनं क्लिष्टम्। यथा हि शरीरस्य मिथ्यात्वादशरीरत्वं स्वभावः, तथा शरीरप्रतिभासस्यापि मिथ्यात्वात् तद्राहित्यमपि भाविकमिति मुक्तामुक्तसाधारण्यं तदवस्थमेव। शाङ्करभाष्ये, 'शरीरात्माभिमानलक्षणमिथ्याज्ञाननिमित्तत्वात् सशरीरत्वस्य जीवतोऽप्यशरीरत्वमक्षतम्' इत्युक्तमपि न युक्तम्। यदि मिथ्याभूताज्ञाननिमित्तकत्वयुक्त्या सशरीरेप्यशरीरत्वं समर्थ्येत, स्यादपि। भ्रान्तिरूपाज्ञाननिमित्तकस्य सशरीरत्वस्यापलापस्तु कथम्। न हि भ्रान्तिजन्यं सर्वं मिथ्या। सर्पभ्रान्त्यधीनभयपलायनादेः सत्यत्वात्। शरीरात्माभिमाननिवृत्तौ दुःखभयादिमत्त्वं न भवतीति भाषितमपि न युक्तम्; शरीरातिरिक्तजीवात्मस्वरूपज्ञानवतामेवाऽऽमुष्मिकेष्वधिकारात् तेषां नानाविधदुःखभयादिमत्त्वस्य सर्वत्रानुभवसिद्धत्वात्। परंतु आत्मानात्मविवेकिनां पण्डितानामप्यजाविपालानामिव शरीरात्माभिमानानुवृत्तिर्भवतीति भाषणात् आत्मसाक्षात्कारशालिन एवाशरीरत्वरूपा मुक्तिरिष्टेति नेदमशरीरत्वं वस्तुतः शरीराभावरूपम्; किंतु व्यावहारिकेणापि शरीरप्रतिभासेन वा शरीरेण वा

रहितत्वमेवाशरीरत्वं वक्तव्यम् ; निवृत्तशरीरत्वमिति यावत्। न च जीवतो निवृत्तशरीरत्वं संभवति। यदि तत्त्वज्ञानस्य मिथ्यार्थनिवर्तकतया अविद्यातत्कार्यसर्वनिवर्तकत्वं युगपदिति निवृत्तशरीरत्वमपीष्यते, न तर्हि जीवनं शक्यमुपपादयितुम्। अथ वस्तुतो न जीवति विद्वान्। अविद्वांसस्तु संसारिणस्तमजीवन्तमेव जीवन्तं मन्वत इत्युच्येत, तर्हि जीवन्मुक्तिरप्यजीवन्मुक्तिरेवेति बाधितानुवृत्त्याद्युपपादनं भवतामस्थाने। "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति मुक्तिविलम्बप्रतिपादकश्रुतिविरोधश्च। 'अनारब्धकार्ययोरेवं पुण्यपापयोः क्षयः। अविद्यांशोऽपि तदनुगुण एव निवर्तते। प्रारब्धस्य तु भोगेनैव क्षय' इति कथयन्त एव भवन्तो जीवन्मुक्तस्याशरीरत्वं शरीरनिवृत्तिमपि यदि ब्रूयुः, तर्हि व्याघातश्च। एवं साक्षात् शाङ्करभाष्योक्ताशरीरत्वाद्यसंभवं मुक्तकण्ठमुपपादयद्भिः श्रीभाष्यशतदूषण्यादिभिः जीवन्मुक्तिनिरुक्तिः भवन्मतस्थकृता सर्वापि न घटत इति निरूपितप्रायम्। "ब्रह्मव्यतिरिक्तसकलवस्तुविषयकत्वाद् बाधकज्ञानस्य कारणभूताविद्याकर्मादिदोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधितः" इति समन्वयाधिकरणश्रीभाष्यं जीवन्मुक्ति-बाधितानुवृत्तिसर्वासंभवं सम्यगेव दर्शयति। अविद्यामहिम्ना सर्वं सेत्स्यतीति चेत्——नन्वयं महिमाऽपि मिथ्यैव। तस्मिन् निवृत्ते कथं सर्वसिद्धिः। नूनमाक्षेपस्योत्तरमद्वैतमते वक्तुं न शक्यमिति वक्तव्यस्य पर्यायोऽयम्, अविद्यामहिमेति।

एतेन — बद्धः स्वशरीरं छायाञ्च पृथक् पश्यति। जीवन्मुक्तः स्वशरीरं छायामिव पश्यति। स्थूलदेहादिभेदेन ममकारगोचरेण बन्धः, छायात्ममायाशरीरेणाभिमानाविषयेणाशरीरत्वम्। श्रीभाष्यमते मुक्तानां सशरीराणामेव भौतिकशरीराभावेनाशरीरत्ववत् जीवन्मुक्तानां छायामयशरीरवत्त्वेऽप्यशरीरत्वमित्यादिकल्पनाऽपि निरस्या। तत्त्वसाक्षात्कारे जाते कतिपयांशबाध-कतिपयांशपरिशेषयोर्दुर्वचत्वात्। अस्मन्मते सर्वस्याप्यबाधात् अप्राकृतविग्रहसंपादकसामग्रीसंपत्त्या मुक्तानां दिव्यविग्रहः संभवति। सर्वबाधकतत्त्वज्ञानसंपन्नस्य

जीवन्मुक्तस्य तु छायामयदेहाद्युत्पत्तिर्भवद्भिर्न कथमपि सुवचा। जीवन्मुक्तस्य पूर्वशरीरातिरिक्तशरीरोत्पत्तौ च न किञ्चित् प्रमाणम्। योगमहिम्ना स्थितस्यैव देहस्य कतिपयोऽतिशयः परं प्रामाणिकः स्यात्; न त्वन्यत्। एवञ्च, "मायामयवपुषा तत्त्वोपदेशादिरूपे दैवप्रेरितप्रवृत्तिनिवृत्ती जीवन्मुक्तस्य न वार्येते' इति दीपावल्युपादानेऽपि दक्षिणेषु अन्धतमसमध्यस्थितिरेव। उपदेशानुपपत्तावुद्भाव्यमानायाम् अनुपपत्तिपरिहारप्रकारालाभेन, प्रतिबन्धाऽस्मन्मते तदसंभवप्रतिज्ञामात्रं विधाय, "अद्वैतमते हि भगवत्पादादयः स्वीय (?) भाष्यादिनिबन्धशतानि विरचय्य शिष्यान् उपदिशन्ति स्म" इति कथामात्रस्य न किञ्चित् प्रयोजनम्।

देहादिभेदावभासप्रयुक्तवर्णाश्रमधर्मप्रवृत्तिनिवृत्तिरपि जीवन्मुक्तिर्भवितुमर्हतीति विलिख्य तत्स्थापनायोदाहृतं भामतीवाक्यजातमपि विचार्यदशां नातिवर्तते।

तद्धि प्रथमसूत्रनिर्दिष्टं वाक्यजातं यदर्थं प्रवृत्तम्, तत् शमदमादिसूत्रे व्यक्तम्। "भ्रान्त्या चेल्लौकिकं कर्म वैदिकञ्च तथाऽस्तु ते" इति भास्कराचार्यकृतं खण्डनमुद्धर्तुकामेन ह्येवमुक्तम्। अशक्योऽयमुद्धारः। मनुष्याद्यभिमानाभावात् सर्वत्र कर्मस्वनधिकारेऽस्याविशिष्टेऽपि दृष्टार्थानि भिक्षाटनादीनि करोति, विहितानि तु त्यजतीति कथमित्याक्षेपो ह्येवं परिह्रियते—दृष्टार्थेष्वसक्तस्यापि स्वारसिकी प्रवृत्तिः। फलञ्चान्वयव्यतिरेकसिद्धत्वात् कार्यकारणभावस्य भवति। शास्त्रीये तु श्राद्धोऽधिकारी। तथा च स्मृतिः, 'अश्रद्धया हुतं दत्तम्' इतीति---इदमयुक्तम्। केयं श्रद्धा नाम। भक्तिरूपा श्रद्धा, "यदेव विद्यया करोति श्रद्धयोपनिषदा" इति वाक्यविवक्षिता; इह तु प्रमाणद्वारा विश्वासात्मिकेति कल्पतरावुक्तम्। विश्वासो नाम अप्रामाण्यज्ञानानास्कन्दितः फलजनकत्वनिश्चयः। यदि ब्रह्मसाक्षात्कारभाविष्यमाणबाधपर्यालोचनया वेदे तस्याप्रामाण्यनिश्चयः, वेदविहितकर्मतत्फलादौ च मिथ्यात्वनिश्चयः, स सर्वः प्रत्यक्षादिप्रमाणप्रमेयवर्गेऽपि समानः। एवञ्च

लौकिककर्मणां फलजनकत्वादावपि मिथ्यात्वाध्यवसायस्याविशिष्टत्वात् कथं भिक्षाटनादौ कर्तव्यताबुद्धि; वैदिकेष्वकर्तव्यताबुद्धिश्च। न च फलापेक्षां विना वासनावशादेव भिक्षाटनापूपभक्षणवेदान्तोपदेशपरमतखण्डनसंमानस्वीकारादिकं तदातदा प्रत्युपस्थापितं करोतीत्यपि वक्तुं शक्यम्। भिक्षाटनादिप्रवृत्तानामपि भगवदर्चन पञ्चमहायज्ञाद्यनुष्ठानशालि पुरुषोपसर्पणपूर्वं तत्करण एव रुचिरित्यादिकमपि वैदिकविधिवशत्वमापदयति। अपि चायं भामतीग्रन्थो न जीवन्मुक्तान् प्रत्येव प्रवृत्तः; किं तु उत्पन्नविविदिषाणां कर्मानधिकारप्रतिपादनार्थः कैमुत्येन जीवन्मुक्तेषु योजनीयो भवेत। उत्पन्नविविदिषाणां सर्वं मिथ्येत्यध्यवसायशालिनां किमित्यद्वैताचार्योपसदनप्रबन्धपठननिर्माणादिषु प्रवृत्तिः; तेषां फलपर्यन्तानां मिथ्यात्वात्। तद्वदेव वैदिककर्मस्वपि पापक्षयार्थेषु प्रवृत्तिर्युज्यते। निषिद्धेषु प्रवृत्तिरनर्थायेति निषिद्धनिवृत्त्यावश्यकताया अत्रैव भामत्यां कथिततया पापारम्भकपापक्षयकामनया वैदिककर्मकरणस्य प्राप्तत्वात्। यत्त्वन्वयव्यतिरेकावगतत्वात् लोके कार्यकारणभावस्य, तत्र प्रवृत्तिरिति—तन्न प्रवृत्तिं प्रति कार्यकारणभावग्रह एव कारणम्; न त्वन्वयव्यतिरेकाधीनतद्ग्रहः; लोके स्वयमन्वयव्यतिरेकादर्शनेऽपि आप्तवाक्यात् कार्यकारणभावग्रहेऽपि प्रवृत्तेर्बहुलं दर्शनात्, भेषजार्थं भिषज उपसर्पन्तो ह्यद्वैतिनः प्रतिभेषजमन्वयव्यतिरेकाववधार्यैव स्वारोग्यौषधिकेषु घटन्त इति, न ह्यस्ति। तथा च यथा लौकिकाप्तवाक्यम्, तथा वैदिको विधिरपि मुखान्तरेण कार्यकारणभावमेव प्रतिबोध्य प्रवर्तयतीति न कश्चिद् विशेषः। अश्राद्धोऽनधिकारी, "अश्रद्धया हुतं दत्तम्' इति स्मृतेः अश्रद्धाकृतस्यैहिकामुष्मिकफलसाधनत्वाभावादिति—तन्न—न हि—अयं तत्त्वज्ञानी वेदबाह्यबौद्धार्हतादिवत् वेदविहितस्याप्रामाणिकत्वमाशेते इति भवन्तो भावयन्ते। किं तर्हि? यदा तत्त्वज्ञानाद् बाधः संपत्स्यते, तदैव वेदतद्गम्यकर्मतज्जन्यफलाद्यभावः; यावद्व्यवहारं तु सर्वमस्ति। अतो यदि कर्मेदमस्ति, तत् यदर्थं चोदितम्, तदप्यस्त्येवेत्येव। एवं भावयतां कथं कर्मस्व-

श्रद्धा स्यात्। निषिद्धं तु कर्म तं बध्नातीत्यपि न; विधिगम्ये विहितस्य च फलस्य च कार्यकारणभावे इव निषेधगम्ये नरकाद्यनिष्टसाधनत्वेऽपि मिथ्यात्वाध्यवसायस्य स्थितत्वात्, नेदं नरकहेतुरिति निश्चित्य अन्वयव्यतिरेकावगतकार्यकारणभावस्याविचाल्यतया भवदुक्ततया तृप्तिकलञ्जभक्षणयोर्हेतुहेतुमद्भावं परमुपगम्य निषिद्धाचरणे प्रवर्तमानस्य नरकाद्ययोगात्। श्राद्धाश्राद्धसर्वपुरुषसाधारणं निषेधशास्त्रमिति चेत्— अविशेषात् जीवन्मुक्तामुक्तसर्वसाधारणमपि स्यात्। किमतो यद्येवम्? एतदतो भवति। यथा वस्तुतः, 'ब्राह्मणो न सुरां पिबेत्' इति निषेधः तं न त्यजति, तथा जीवन्मुक्तमपि न त्यजेत्। एवञ्च जीवन्मुक्तेनापि यदि निषेध उलङ्घ्यते, तर्हि पूर्णसंसारबाधस्य तदानीमनिष्पन्नतया भवत्येव निषेधफलम्। यदि निषेधभिया स्वात्मानं जागरूको यथावदवस्थापयितुं यतते, निषेधतदर्थाद्यनेकभेदज्ञानपरीततया न यथावस्थिततत्त्वज्ञानसंपन्न इत्युभयतःस्पाशा रज्जुरिति। शेषं प्रागेवोक्तम्। अतः क्वचित् वर्णाश्रमाद्यभिमाने मिथ्यात्वाध्यवसायात् अप्रवृत्तिः, लौकिके तु मिथ्यात्वाध्यवसायेऽपि प्रवृत्तिरित्यर्धजरतीयमयुक्तम्।

निषिद्धे रागतो जातु जीवन्मुक्तो यतेत चेत्।
विहिते किं न, सोऽजीवन्मुक्तश्चेत् प्रथमो न किम्॥

अतो वेदशिरसि वर्तमाना विधिनिषेधोल्लङ्घिनो न वेदकिङ्करा इत्यास्थाय स्वैरितैव स्वीकार्या स्यात्। जीवन्मुक्तानां लोकसंग्रहार्था प्रवृत्तिरिति प्रागुक्त्वा, पश्चात् आधिकारिकाणामेव तादृशी प्रवृत्तिः, न तु जीवन्मुक्तानां साऽपीत्युच्यते। किमीश्वरादपि जीवन्मुक्तेषु तत्त्वज्ञानमतिशयितमस्ति, येन तस्मिन् लोकसंग्रहार्थं घटमानेऽपि न जीवन्मुक्तो घटतेत्युक्तिर्घटेत। सुखदुःखादिनिवृत्तिर्जीवन्मुक्तिरित्यपि न— क्षुत्तृष्णयोरपि दुःखविशेषरूपत्वात् तन्निवृत्त्यर्थलोकयात्राव्यासक्तानां तेषां तदभावस्य दुर्वचत्वात्।

सिद्धान्तलेशसंग्रहे तु तत्त्वज्ञानादविद्यानिवृत्तिसमय एवाविशेषात् सर्वप्रपञ्चनिवृत्तेरावश्यकतया प्रारब्धशेषस्य बाधितानुवृत्त्यादेश्च दुरुपपादत्वात्

कथं जीवन्मुक्तिरिति विभाव्य, तत्त्वज्ञानादज्ञानमात्रस्य साक्षान्निवृत्तिः, तत्कार्याणां तु स्वस्वकारणनिवृत्त्यनन्तरं निवृत्तिरिति कथञ्चित् प्रारब्धशेष उपपद्यत इति पक्षमुपन्यस्य शिष्यमाणमिदमविद्यांशो वा संस्कारो वा किमपीत्यभिधायानन्तरं सर्वात्मगुरुपक्षो निरटङ्कि—सविलासवासनाविद्यानिवृत्तिस्तत्त्वज्ञानाधीनेति शेषायोगात जीवन्मुक्तिरेव न भवति। जीवन्मुक्तिशास्त्रं तु ध्यानप्रशंसामात्रमर्थवादः। अतोऽन्त एव साक्षात्कारान्मुक्तिरिति। एवं स्वकीयैरेव निरस्तायाः जीवन्मुक्तेः समर्थनार्थोऽयं प्रयासो व्यर्थ इत्युपपादितम्।

सायुज्ये मुख्यमुक्तौ श्रुतिसमधिगते ब्रह्मसाधर्म्यरूपे
सारूप्याद्यं तथा चिद्विषयमनुभवं यद्वदाहुर्विमुक्तिम्।
तद्वत् जीवत्त्वएव क्षपितदुरितताद्यंशमात्रेण भाव्या
जीवन्मुक्तिस्तु भक्तेष्वधिगतपरमब्रह्मसाक्षात्क्रियेषु॥

शुभमस्तु।

---

श्रीः

# बाधार्थत्वभङ्गप्रसाधनम्

अभिन्नधर्म्यर्थपदात्मवाक्यैरबोधि यस्यातिशयो ह्यनन्तः।
जयत्यसौ वैजगुणाविशेषमशेषवस्तुस्थिरभूरनन्तः॥

समानाधिकरणवाक्यान्यपि व्यधिकरणवाक्यानीव ब्रह्मविषयाणि ब्रह्मणो धर्मभूमानं बोधयितुं प्रवृत्तानीति स्वरसतः प्रतीयमाने स्वाभिमतनिर्विशेषवस्तुस्थापनाभिनिवेशेन बाधार्थप्रवृत्ततां समानाधिकरणवाक्येषु क्वचिदद्वैतिन उपन्यस्यन्ति। समानाधिकरणवाक्यं त्रिविधम्—मुख्यार्थपदसंघातः मुख्यामुख्यार्थपदसंघातः अमुख्यार्थपदसंघातश्चेति। तत्रोत्तरोत्तरं दुर्बलमित्यनुक्तिसिद्धम्। "व्याप्तेश्च समञ्जसम्" इति सूत्रशाङ्करभाष्ये सामानाधिकरण्ये अध्यासापवादैकत्वविशेषणपक्षाश्चत्वारः संभाविताः प्रादर्शिषतेति प्रागेवावोचाम। तत्त्वम-

सीत्यत्र बाधार्थत्वमेक्यपरत्वञ्चेति पक्षद्वयमद्वैतिसंमतम् । नैष्कर्म्यसिद्धौ बाधार्थत्वपक्षो विशदमुपपादितः । सर्वं खल्विदं ब्रह्म, ज्योतींषि विष्णुरित्यादौ जडपदार्थैक्यस्य ब्रह्मण्यसंभावितत्वात् बाधार्थसामानाधिकरण्यमितीदमद्वैतिष्वविप्रतिपन्नम् । समानाधिकरणवाक्यमित्यस्य समानमेकम् अधिकरणमर्थः यत्र पदजातस्य तत् तथेत्यर्थस्य वाच्यत्वात् सर्वत्र समानाधिकरणवाक्ये प्रतिपाद्यार्थैक्यं तावत् अनुयायि स्वीकर्तव्यम् । अत एव तत्र पदयोः समानविभक्तिनिर्देशः । व्यधिकरणवाक्ये तत्तत्पदोक्तोऽर्थो विभिन्नः, भेदसंबन्धेन मिथोऽन्वयस्तत्तदर्थानामिति च निष्कृष्टमेतत् । अद्वैतमते निर्विशेषस्यैकस्यैव सत्यत्वात् सर्वस्य विशिष्टवस्तुनस्तत्र कल्पितत्वात् लोकरीत्या यस्ययस्य विशिष्टवस्तुनो मिथो भेदो व्यवहारसिद्धः, तस्यतस्य समानाधिकरणपदार्थत्वे ऐक्यायोगात् संभवदैक्यविशिष्टवस्तुपरत्वं वा निर्विशेषपरत्वं वा स्वीकृत्यैक्यानुभवः समर्थनीयः । नीलमुत्पलम्, उद्गीथमक्षरमुपासीत, सा वैश्वदेव्यामिक्षेत्यादौ विशिष्टवस्तु तत्तत्पदोपस्थाप्यमेकमित्यनुभवसिद्धम् । जीवेश्वरयोर्भेदस्यैव लोकसिद्धत्वात् तयोर्विशिष्टवस्तुनोरैक्यं तत्त्वमसिवाक्यं न बोधयितुं क्षमत इति निर्विशेषलक्षणया ऐक्यप्रत्यायनमिष्यते । सर्वं खल्विदं ब्रह्मेत्यत्र ब्रह्मैवास्ति, अन्यन्नास्तीति बाधार्थसामानाधिकरण्यम् । अत्र ब्रह्मण्यन्यत् कल्पितमासीत्; अतस्तदेकमेवास्तीति ऐक्यप्रतिपादनात् समानाधिकरणवाक्यफलमक्षततिमिति मन्यते। एवञ्चाधिष्ठानारोप्यवाचकपदसमभिव्याहारे सत्येव बाधार्थसामानाधिकरण्यम्, यथा चोरः स्थाणुरित्यत्रेति सिद्ध्यति। तेन तत्त्वमसीत्यत्र जीवेश्वरपरयोस्तत्त्वंपदयोः सामानाधिकरण्यं बाधार्थमिति दुर्वचमित्युक्तं भवति । यदि तु जीव ईश्वरस्यांश एव, ईश्वरैक्यमेव मोक्ष इति कश्चिदद्वैतिपक्ष आद्रियते, तदाप्यंशांशिभावात् न बाधः । एवं ज्योतींषि विष्णुरित्यादावपि जडस्येश्वरस्य चैक्यायोगात् ईश्वरे जडस्याकल्पिततया अध्यस्ताधिष्ठानवचनाभावाच्च कथं सामानाधिकरण्यमित्यपि विमृश्यम् । किं बहुना । सर्वं खल्विदं ब्रह्मेत्यत्रापि बाधार्थत्वं दुर्वचम्; ब्रह्मशब्दस्य, "बृहति, बृंहयति तस्मादुच्यते परं ब्रह्म" इति बृहत्त्वादिविशिष्टपरत्वात् विशिष्टस्य मिथ्याभूतस्याधिष्ठानत्वायोगात् निर्विशेष एव सर्वस्य

कल्पिततया अध्यस्ताधिष्ठानवाचिपदसमभिव्याहारस्य चोरः स्थाणुरित्यत्रैवाभावात्। लक्षणया निर्विशेषपरत्वमिति चेत्—बाधार्थसामानाधिकरण्यस्थलसंभावितलक्षणान्तरवत् इयमपि काचिल्लक्षणेति दोषाधिक्यमेव। बाधार्थसामानाधिकरण्यस्वीकारे कथं लक्षणेति चेत्—चोरः स्थाणुरित्यत्र चोरशब्दस्थाणुशब्दयोर्मुख्यार्थत्वे हि आदित्यो यूप इतिवदनन्वय एव। अतश्चोरत्वेन गृहीतो यो धर्मी स चोरत्वाभाववान् इति तदर्थस्वीकारे पदद्वयेऽपि लक्षणा। तदभाषि श्रीभाष्ये, "अधिष्ठानलक्षणा निवृत्तिलक्षणा च" इति। विशदमिदं शतदूषण्याम्। स्थाणुत्वज्ञानमेव चोरत्वबुद्धिनिवर्तकमिति स्थाणुपदे लक्षणाभावेऽपि चोरपदस्य चोरत्वेन गृहीत इत्यर्थस्तावत् लक्षणया वक्तव्य एव। सर्वं ब्रह्मेत्यत्र तु सर्वपदवत् ब्रह्मपदेऽपि लक्षणाऽवश्यम्भाविनी, तस्य सविशेषवाचित्वात्। निर्विशेषं सर्वत्र लक्ष्यमेवेति भवत्सिद्धान्ताच्च। इदमप्यधिष्ठानलक्षणा निवृत्तिलक्षणा चेति भाष्यविवक्षितम्। ब्रह्मशब्दस्याधिष्ठाने पर्यवसानं विधाय सर्वमित्यस्यापि न सर्वमिति सर्वनिवृत्तौ पर्यवसानविधानात्।

एवञ्च बाधार्थसामानाधिकरण्यमतिजघन्यम्। समानाधिकरणवाक्यतात्पर्यविषयस्यैक्यस्य भङ्गे कथञ्चित् सादृश्यस्याश्रयणमनन्तरपर्वं। यथा सिंहो देवदत्त इति। इह तु तदैक्यप्रतिद्वंद्वितया तद्भेद एव तात्पर्यमिष्यते। एवञ्च न चोर इत्यस्यार्थस्य चोरइत्यनेन विवक्षणाज्जघन्यतमत्वं सिद्धम्। तत् सिद्धम् 'सर्वं खल्विदं ब्रह्म', 'ज्योतींषि विष्णुः', 'तत् त्वमसी'त्यादिषु बाधार्थसामानाधिकरण्यस्वीकारे पदद्वयमुख्यत्वान्यतरपदमुख्यत्वयोरभावेन पदद्वयामुख्यत्वस्यैवापत्त्या नायं श्रुत्यर्थ इति।

शतभूषणी तु, "व्याप्तेश्च समञ्जसम्" इति सूत्रभाष्ये सामानाधिकरण्ये चतुर्विधे प्रदर्शिते सत्यपि स्वयं त्रैविध्यमेव दर्शयति। तत्र नीलमुत्पलम् इत्यत्र विशेष्यविशेषणभावः नीलत्वोत्पलत्वयोः प्रत्येकमतिप्रसक्तत्वादित्यस्तु। उद्भिदा यजेतेत्यत्रापि आपाततो दर्शने स भवितुमर्हति। उद्भिद् यागः इत्युक्तौ यागपदस्यानेकयागाभिधायकतया उद्भित्पदेन तद्व्यावर्तनात्। उद्भि-

त्पदेन तरुगुल्माद्यग्रहणमपि यागपदबलादेव । परं तु उद्भिदा यजेतेति वाक्ये यागसामान्यस्याविधेयत्वात् विशेषस्यैव विधेयत्वात्' विधिसमभिव्याहृतो यजिरपूर्वयागसमर्पकः, उद्भित्पदञ्च तदेकार्थमिति तत्रातिप्रसक्त्यप्रसक्त्या विशेष्यविशेषणभावं विना केवलमभेद इति वक्तव्यम् । अथापि अत्र, "प्रवृत्तिनिमित्तयोरेकाश्रयत्वस्य बाधेन प्रवृत्तिनिमित्ताविवक्षया धर्मिणोरैक्यम्" इत्युक्तं कथम् । न च विधेयतावच्छेदको धर्मस्तत्र मीमांसकैर्नेष्टः । न च उद्भिच्छब्दस्य संज्ञाशब्दत्वात् स्वरूपतः प्रवृत्तिनिमित्तत्वमिति प्राचीनपक्षे वा फलोद्भेदनकारित्वविशेषरूपोद्भित्त्वं निमित्तमिति खण्डदेवपक्षे वा प्रवृत्तिनिमित्तपरित्यागोऽस्ति । यदि एकधर्मविशिष्टस्यापरधर्मविशिष्टस्य च विशेषणभेदाद् भेद इत्यैक्यायोगात् प्रवृत्तिनिमित्तमुपेक्ष्यमित्याशयः, एवं तर्हि नीलो घट इत्यादावपि ऐक्यबाधः स्यादिति तत्रापि धर्मयोस्त्यागेनैवैक्यं रक्षणीयमिति तृतीयविधायां परं तदुपपादनं न संगच्छते । बाधायां सामानाधिकरण्यमित्यस्यार्थत्रयं संभाव्यते---वस्तुतो वस्तुनोर्भेदे सति सामानाधिकरण्यम्, बाधज्ञाने सति सामानाधिकरण्यम्, बाधार्थे सामानाधिकरण्यञ्चेति । इदं रजतम्, मनो ब्रह्म, चोरः स्थाणुरिति यथासंख्यमुदाहर्तव्यम् । तत्रेदंरजतमित्येकं प्रथमत उदाहृत्य अन्यथाख्यातिमते धर्मिधर्म्यन्तरसंसर्गयोर्वैषमसत्ताकत्वेनेत्युपपादनं न सम्यक्; अन्यथाख्यातिवादितार्किकादिमते अनिर्वचनीयख्यातिपक्ष इव सत्तात्रैविध्याभावेन विषमसत्ताकत्ववर्णनायोगात् । प्रतीकोपासनेऽप्यनिर्वचनीयख्यातिकथनमशक्यम्; बाधसत्त्वात्; अज्ञानकार्यत्वादनिर्वचनीयस्य मनो ब्रह्मेत्युपासीतेत्यादौ ब्रह्मादिकमप्यनिर्वचनीयं किञ्चिदुत्पद्यत इत्यस्यासमञ्जसत्वाच्च ।

यत्तु तत्त्वमसीत्यस्य बाधार्थसामानाधिकरण्योदाहरणत्वमद्वैतिसंमतं न भवतीत्यभिप्रेत्य किञ्चिद्वचनम्---तन्न---धर्मिणोर्भिन्नत्वे बाधार्थसामानाधिकरण्याभावेऽपि बाधायां सामानाधिकरण्यस्य भवदुक्तस्याक्षतत्वात् । बाधार्थसामानाधिकरण्योदाहरणतया तत्त्वमसीत्यस्य नैष्कर्म्यसिद्धावुक्तत्वाच्च । प्रति-

बिम्बजीववादे बाधार्थसामानाधिकरण्यस्यावश्यकत्वाच्च । तदिदं ब्रह्मशब्द-वृत्त्यनुपपत्तिप्रसाधनावसर एव प्रपञ्चितं द्रष्टव्यम् । अस्मन्मते विशेषणभावेन सामानाधिकरण्यमपृथक्सिद्धिविषयत्वेनेत्युक्तं न सार्वत्रिकम्, कुण्डली गुरुरित्यादौ तदभावात् । अपृथक्सिद्धिः कार्यकारणभावशरीरशरीरिभावान्यतर-निबन्धनेत्यपि न ; नित्यद्रव्य-नित्यगुणयोरपृथक्सिद्धेरतादृशत्वात् ।

यत्तु प्रपञ्चस्य मिथ्यात्वमभ्युपगम्य विचारे क्रियमाणे सर्वं खल्विदं ब्रह्मेत्यत्र बाधायां सामानाधिकरण्यं विना न गतिरिति--- तन्न -- अभ्युपगम्य विचारोऽयमभ्युपगमस्याप्रामाणिकतया कृत्वाचिन्तारूप इति तद्विषयस्य तत्त्वभावासंभवात् । यदपि--- सर्वं खल्विदं ब्रह्मेत्यत्रैव सर्वात्मतया ब्रह्मोपासनविधानमिति नाद्वैतभाष्यसंमतं विवरणमिति दूषणम्----सोयमनुक्तोपालम्भः । सर्वात्मतया ब्रह्मोपासनं प्रथमवाक्ये विधीयत इति शतदूषण्यामनुवादाभावात् । "शान्त्यर्थं ब्रह्मात्मकसर्वानुसंधानविधानस्य भवद्भिर्व्याख्यातत्वात्" इत्येव खलूक्तम् । तस्य चायमर्थः---सर्वं खल्विदं ब्रह्मेत्यनुसंधानाधीनशान्तिविशिष्ट उपासीतेति । अत्र, स क्रतुं कुर्वीतेति वक्ष्यमाणमुपासनमनूद्य शान्तिविधिरिति । शान्त्यर्थं ब्रह्मात्मकसर्वानुसंधानविधानं नाम सर्वं खल्विदं ब्रह्मेत्यनुसंधानाधीनशमवैशिष्ट्यबोधनमेव । सर्वानुसंधानेतिपदं शमविधिपक्षे स्थित्वा प्रवृत्तं, 'तन्नानात्वानुसंधानविधानस्य शान्तिहेतुत्वोपदेशात्' इति श्रीभाष्यं स्मारयति । एवं ब्रह्मात्मकसर्वानुसन्धानेतिपदे प्रयुक्ते स्थिते तथैवानूद्य ततः सर्वात्मतया ब्रह्मोपसानविधानमिति नाद्वैतभाष्यसंमतमिति दूषणं प्रामादिकमेव । 'इति शान्त' इत्यत्र इतिशब्देनानुसंधानप्रदर्शनमिति कृत्वा अनुसंधानपदप्रयोगः, न तु उपासीतेति पदस्यानुसंधानमर्थ इति । तस्य तु क्रतुं कुर्वीतेति वक्ष्यमाणोपसानानुवादत्वमेव यथाभामतीविवृतमस्तु । किञ्च क्रतुशब्द उपासनपर इति निर्विवादम् । एवमुपासीतेति उपासनशब्दोऽनुसंधानरूपज्ञानपरोऽभिप्रेयते चेत्, तावतापि न किञ्चित् । तदा तु शान्त इत्यस्य आशंसायां क्तप्रत्ययाश्रयणेन शान्तिकाम इत्यर्थो वर्णनीयो भविष्यति । सर्वथा श्रीभाष्या-

भिमतयोजनाया अद्वैतभाष्यस्थतां न शतदूषणी दर्शयति । अपि च श्रीभाष्ये वृत्तिकारसंमतत्वेन अथवेति दर्शिते योजनान्तरे, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'ति सर्वात्मतया ब्रह्मोपासनं विधीयते, तदपेक्षितगुणविधानं स क्रतुं कुर्वीतेत्यादिनेति यद् वर्णनम्, न तत् अद्वैतभा[illegible]नतम् । सूत्रभाष्ये तदनुक्तावपि छान्दोग्योपनिषद्भाष्ये वाक्यग्रन्थादिकमनुरुध्येव श्रीभाष्यरीत्यैव व्याख्यानात् । यथा—"अतः शान्तः—सन् यत् तत् सर्वं ब्रह्म तत् वक्ष्यमाणैर्गुणैरुपासीत । कथमुमासीत··········कथं वा क्रतुः कर्तव्यः मनोमयः प्राणशरीरः" इत्यादि तत्र स्पष्टम् । अत्र सर्वं ब्रह्मोपासीतेति वचनभङ्गी सर्वात्मतया ब्रह्मोपसनविधानमाविष्करोति । 'सर्वस्य ब्रह्मव्यतिरेकेणाभावादेव सर्वात्मकत्वं स्वरूपसत् शमोपयोगितया प्रस्तूयत' इति वच एव रिक्तम् । ब्रह्मव्यतिरेकेणाभावे सर्वात्मकत्वं कथम् । सर्वबाधार्थं सामानाधिकरण्यमिति वदन्त एव सर्वात्मकत्वमत्रोक्तमित्यनन्वितमेव वदन्ति । स्वरूपसच्च कथं तत् शमोपयोगि । सर्वस्य मिथ्यात्वेन सर्वात्मकत्वस्यापि मिथ्यात्वात् स्वरूपतः सत्त्वाभावात् स्वरूपसत्त्वेन अज्ञायमानत्वेन शमोपयोगित्वाभावात् अनुसंधानविषयतयैव शमोपयोगित्वात् । भवन्मते जगदभिन्ननिमित्तोपादानत्वं ब्रह्मण उपपद्यत इत्यप्यनुपपन्नम्, जगत एवाभावे किमभिन्नकारणता ब्रह्मणि । श्रीभाष्यमते अनौपचारिकमुपादानत्वमौपचारिकमिति स्वयं कल्पयित्वा दूष्यते ; औपचारिकानौपचारिकसर्वविधकारणत्वसंभावनानास्पदे स्वमतब्रह्मणि सर्वमुपपन्नमित्युत्प्रेक्ष्यत इति विचित्रमेतत् । यत्तु नियम्यनियामकभावशरीरशरीरिभावोपादानोपादेयभावान्यतमनिबन्धने सामानाधिकरण्ये सति कथमेकरूपसामानाधिकरण्यं श्रीभाष्यमतमिति—तन्न—एकार्थवृत्तित्वरूपं सामानाधिकरण्यमित्येतत् सर्वत्रानुस्यूतमित्यैकरूप्याक्षतेः । अन्यतमेत्यप्ययुक्तम् ।

यत्रेदमैक्यं न भवति, तत्र सामानाधिकरण्यं लक्षणयैव निर्वाह्यम्—तर्हि शरीरवाचकशब्दस्थलेऽपि लक्षणैवेति तु गृहीततत्त्वस्यैव प्रतिबन्दीप्रयुयुंक्षया साग्रहं व्याहरणम् । जातिशक्तिवादिनः केचित् । जातिविशिष्ट-

व्यक्तिपर्यन्तवाचित्वमेव तत्रान्ये आतिष्ठन्ते। तमेव पक्षमादृत्य तद्रीत्यैव शरीरिपर्यन्तत्वमपि वयं श्रुतियुक्तिपुरस्कारेण व्युत्पादयामः। तत्र क्वचित् शरीरमात्रे प्रयोगस्तु अर्थप्रकरणादिना जातिमात्रे प्रयोगवन्निर्वाह्यः। एतदसहमानेन चोरः स्थाणुरिति वाक्ये चोर इत्यस्य न चोर इत्यर्थोपि लक्षणां विनैवेत्युक्तिं पण्डितलोके को न्वाद्रियेत। यत्तु स्वीकृत्य लक्षणामुच्यते,---"न विधौ परः शब्दार्थः" इति न्यायात् विधावेव लक्षणा दोषाय, न त्वन्यत्र। सर्वं खल्विदं ब्रह्मेति त्वथवाद इति लक्षणा भूषणमेवेति—तदप्यापाततः। संभवति मुख्यार्थेन निर्वाहे लक्षणा न युक्तेत्येतत् सर्वत्रैव। लक्षणा तावत् दोष एव। अथापि सह्यते गत्यभावे। विध्यर्थवादयोर्मध्ये अर्थवादस्य विध्यन्वयं विना समासत्त्यभावात् तद्योग्यं प्राशस्त्यं लक्ष्यतयाऽवश्यं स्वीकर्तव्यम्; न तथा विधिवाक्येऽपि अर्थान्तरस्य स्वीकार्यत्वमस्ति। अतो न विधौ परः शब्दार्थ इत्येव मीमांसकैरुच्यते। अवश्यस्वीकार्या लक्षणां विधावपि न विजहति। 'यदाग्नेयोष्टाकपालो भवती'त्यस्य आग्नेयेनाष्टाकपालेन यजेतेति, अग्नीषोमीयं पशुमालभेतेत्यस्य अग्नीषोमीयेन पशुना यजेतेति, सोमेन यजेतेत्यस्य सोमवता यागेन भावयेदित्येवं विधिष्वपि लक्षणाया इष्टत्वात्। एवं तत्प्रख्यतद्व्यपदेशनामधेयादीत्यपि भाव्यम्। सक्तून् जुहोतीत्यत्र सक्तुभिरित्यर्थ आश्रीयते। एवं व्रीहीन् प्रोक्षतीत्यत्र व्रीहिभिरिति तु न स्वीक्रियते। तत्र परम्, 'न विधौ परः शब्दार्थ' इत्युच्यते। अतो विध्युक्तं स्वीकृत्य प्रयोजनमन्वेषणीयम्। न तु प्रयोजनमभिमतमनुरुध्य विधेरन्यथाकरणम्। न हि प्रयोजनानुगुणा प्रमाणवृत्तिः। तथा हि सति लोष्टदर्शनं काञ्चनदर्शनं क्रियेतेति। अर्थवादस्य प्राप्तार्थानुवादत्वात् प्रसिद्धार्थे नयनं स्यादपि; न त्वप्राप्तार्थपरो विधिरेवं नीयते। न हि स्वर्गकामो गां दद्यादित्युक्तौ लोकप्रसिद्धं दानफलं स्वर्गशब्दार्थ इष्यते। यथा चार्थवादस्य स्वार्थे तात्पर्यं नास्तीति प्राशस्त्यादौ पर्यवसानम्, न तथा विधेः शक्ये लक्ष्ये वा स्वार्थे पर्यवसानं विना अर्थान्तरे तात्पर्यकल्पनेत्येतदपि, 'न विधौ परः शब्दार्थः इत्येतदाशयितमूः। विधिरिति किम्, मन्त्रेऽपि

मुख्यार्थ एव लिङ्गाद् विनियोगः, न गौणार्थे इत्युक्तमेव। नूनमुपनिषत्सु, 'तत्-त्वमसि', 'अयमात्मा ब्रह्मे'त्यादीनां प्रायो वाक्यानां विधित्वाभावात् यथेच्छमर्थमभिमत्याद्वैतं स्थापयितुमिष्यत इव। एवं हि सति अविधित्वात् बौद्धादयोऽपि लक्षणां यथारुचि प्रकल्प्य स्वाभिमतेऽर्थे उपनिषदोऽपि प्रमाणयितुं प्रभवेयुः। तस्माल्लक्षणा जघन्यवृत्तिरेव सर्वत्र। क्वचित्तु सह्यत इत्येतावदेव। विध्यर्थवादयोर्मध्ये कुत्र लक्षणा ग्राह्येति विचारे, न विधौ परः शब्दार्थो युक्तः, किंतु गुणभूतेऽर्थवादे इतीष्यते। एतदपि प्रायिकम्, 'उच्चैः ऋचा क्रियत' इत्यादिविधिष्वपि ऋगादिपदानां ऋग्वेदादिविहितकर्माङ्गमन्त्रेति लक्ष्यार्थस्वीकारेण, 'अग्नेः ऋग्वेद' इत्याद्यर्थवादेष्वेव उपक्रमप्राबल्यात् शक्यार्थरक्षणात्। विधावपि गुणप्रधानशब्दविवेचनेन शक्तिलक्षणाभ्युपगमस्तत्रतत्र तन्त्रे क्रियते च। अतो यत्किञ्चिदेतत्।

इदं रजतमिति भ्रमाभिलापकशब्दं बाधार्थसामानाधिकरण्योदाहरणत्वेन शतदूषण्यभिमतमित्यबद्धं कृत्वा, तत्र नाधिष्ठानलक्षणा, निवृत्तिलक्षणा वेति दोषोन्मोचनोद्योगो मुधा। तत्त्वमसीत्यत्र भागत्यागलक्षणा परमस्तीत्येतत्तु न प्रकृतम्; तस्योपलक्षणसामानाधिकरण्यपक्षविषयत्वात्। नैष्कर्म्यसिद्ध्यादिप्रसिद्धबाधार्थसामानाधिकरण्यप्रस्तावः किल प्रकृते। अतस्तदविवेचनेन निवृत्तिलक्षणादिकं नास्तीत्युक्तमयुक्तम्। यद्यपि निवृत्तिर्मिथ्याभूतपदार्थाभावः, यद्यपि च सा तत्त्वसाक्षात्कारानन्तराभाविनी, तथापि तद्बोधनं ततः प्राक् शब्देन नानुपपन्नम्, स्वसजातीयविजातीयस्वगतभेदराहित्यबोधनवत्; नेहनानेत्यादिवच्च। नायं चोरः किंतु स्थाणुरयमिति वाक्ये नायं चोर इति भागोऽनुवादमात्रमित्येतदपि न प्रकृतोपयोगि; चोरः स्थाणुरितिवाक्ये चोरशब्दस्य न चोर इत्यर्थे लक्षणेति कथनावसरे तद् विहाय वाक्यान्तरविचारस्यानावश्यकत्वात्।

यत्तु बाधायां सामानाधिकरण्ये पदेषु न लक्षणागन्धोऽपीति, तदनुपन्नमेवोपपादितमिति च — तदपि मिथ्या। प्रवृत्तिनिमित्तयोरेकाश्रयत्वानुपपत्तेर्भे-

र्तेवोक्तत्वेन सामानाधिकरण्यस्यैक्यतात्पर्यकत्वस्यापीष्टत्वेन लक्षणामन्तरेणानिर्वाहात् । इदं तु स्यात्—सर्वं ब्रह्मेत्यत्र सर्वशब्देन प्रपञ्च एवोच्यते, तदभेदनिर्देशो ब्रह्मणि सिंहो देवदत्त इतिवदारोपनिबन्धनः । तत्र यदि लोक इव वेदेपि ब्रह्मणि सर्वाभेदारोपात्मकबोधजनकत्वमिष्यते, तदा वाक्यं वैदिकमप्रमारूपज्ञानजनकत्वादप्रमाणमापद्यते । तदर्थं सर्वत्वारोपविषयो ब्रह्मेत्यर्थस्वीकारे तु लक्षणा प्राप्तैव । एतेन अयं चोर इत्युदाहृत्य लक्षणाविरहवर्णनं प्रकृतासाधकम् । योऽयं चोरः स स्थाणुरिति वाक्ये चोरपदस्य चोरत्वारोपविषय इति लक्षणयैवार्थस्य बोध्यत्वात् तदभावकथनं ह्यविमर्शकृतम् ।

अभिन्ननिमित्तोपादानत्वान्यथानुपपत्त्या मिथ्यात्वावगतिरित्यप्ययुक्तम् । निमित्तत्वं स्रष्टृत्वम्; तत्सहचरितमुपादानत्वं कार्यमिथ्यात्वं विना न भवतीति कुत्र दृष्टम् । श्रुतिदर्शितमृदादिदृष्टान्तेषु वा भवदीयकल्पितशुक्त्यादिदृष्टान्तेषु वा तादृशनिमित्तत्वसहचरितोपादानत्वस्याग्रहणात् । अथाभिन्ननिमित्तेति त्याज्यम्; उपादानत्वान्यथानुपपत्तिरेव विवक्षितेति चेत्—तदपि न—मृत्कार्यघटशरावादेर्मृद्गतोपादानत्वबलान्मिथ्यात्वस्य संप्रतिपन्नत्वाभावात् । विवर्तोपादानत्वान्यथानुपपत्त्या विवक्षितमिति चेत्—गोमयादिगतवृश्चिकाद्युपादानत्वबलात् वृश्चिकादेर्मिथ्यात्वमपि न लोको मन्यते । शुक्तिगतरजतनिरूपितविवर्तोपादानत्वं गृह्यतामिति चेत्—तज्जलानितिवाक्ये ईदृशमेवोपादानत्वमिति कथं भवन्तो निश्चिन्वन्ति । शुक्तिरजतस्थले उपादानोपादेयभावस्य सर्वथैव लोके संप्रतिपन्नत्वाभावात् शशशृङ्गायमाणे तत्र तद्वाक्यार्थपर्यवसानस्य प्रसक्तिरपि नास्ति । एतेन जगच्च स इति विष्णुपुराणवाक्यमुपादानोपादेयभावनिबन्धनसामानाधिकरण्यरूपत्वात् बाधायामेव भवतीत्यप्यपास्तं वेदितव्यम् । एवमसंभावितस्यास्यान्यापेक्षया मुख्यत्वकथनं त्वतिविचित्रम् । रामभूतं जगदभूदिति सामानाधिकरण्यं पुनरुपचरितमिति न तथा प्रकृत इति यदुच्यते; तत्रापि बाधार्थसामानाधिकरण्यमेव मुख्यत्वात् भवान् विवक्षितुमर्हति—रामराज्यकाले जगत् सर्वं बाधितम्, राम एवासीदिति । ननु, "रामो रामो राम इति प्रजानामभवन् कथाः" इति प्रजाकर्तृक-रामविषयककथास्थितेरुक्त-

त्वात् कथं तद्विरोधेन सर्वबाधवर्णनमिति चेत्—अद्वैतवाक्येष्वपि द्वैतश्रुतिविरोधात् बाधवर्णनं कथमिति तुल्यम् । अपच्छेदनयस्तु रामभूतमिति वाक्येऽप्यवतरेत् । यथा च तत्र, तथा प्रकृतेऽसि सर्वं खल्विति वाक्ये बाधपरत्ववर्णनमशक्यम् । सर्वं मिथ्येति ज्ञानस्य रागद्वेषानुदयहेतुत्वे उपासनानुदयहेतुत्वमपि स्यात् ; उपासक-उपासनादिरूपाणां भेदानामपि मिथ्यात्वावधारणात । किञ्च वाक्यमिदं शाण्डिल्यविद्योपक्रमस्थम् । सा च मनोमयत्वप्राणशरीरत्वाद्यनेकगुणविशिष्टपरमात्मविषयिणी सगुणविद्या । तदङ्गतया च शमो विधीयमानः सगुणोपासन तत्फलादि सर्वमिथ्यात्वमूलश्चेत् शाण्डिल्ये विद्याप्रवृत्तिमपि प्रतिरुन्ध्यात् । अतस्तदुपयोगिशमसाधकं यादृशं ज्ञानम् ; तद्धेतुरिदम्, 'सर्वं खलु' इति वाक्यं स्ववाक्यविरोधादपि न बाधार्थं भवितुमर्हतीति ।

'इदं सर्वं यदयमात्मा' इत्यत्र सर्वशब्देन जीवात्मग्रहणाभावे अर्थसंकोचो दोषः । ग्रहणे ते जीवात्मानः किं किञ्चिदवच्छिन्नब्रह्मस्वरूपाः किं वा प्रतिबिम्बादिरूपेण ततो भिन्नाः । आद्ये जीवात्मनां परमात्मना सह स्वरूपैक्यनिबन्धनं सामानाधिकरयम्, जडप्रपञ्चस्य तु सर्वशब्दार्थनिविष्टस्य बाधायां सामानाधिकरण्यमिति वैरूप्यं दुस्त्यजम् । अन्त्ये पुटद्वयात् प्राक् तत्त्वमसीत्यत्र भागत्यागेन स्वरूपैक्यविवक्षेत्युक्तं व्याहतम् । अवच्छेदवाददूषणावसरे प्रतिबिम्ववादप्रस्तावेनात्मगोपनोद्यमः, एतद्दूषणावसरे च तत्प्रस्तावेन, चिकीर्षितो न फलेग्रहिर्भवितुमर्हति । एतेन पुटद्वयात् प्राक् स्वयं प्रस्तुतविपरीतमेव अहं ब्रह्मास्मि, तत् त्वमसीत्यादौ बाधार्थसामानाधिकरण्यवर्णनमपि व्याहतं वेदितव्यम् । शरीरशरीरिभावेऽपि लक्षणैवेति प्रतिज्ञामत्रम् । लक्षणालेशस्याप्यभावेऽपि लक्षणामभिमन्यमानैरपि सर्वप्रपञ्चापलापपर्यवसायिलक्षणापेक्षया गुणविभूत्यादिभिर्भगवन्महिमसंरक्षणानुकूलसर्वास्तिकलोकहृद्यलक्षणास्वीकारो ज्यायान् । अत एव द्वैतिभिर्विज्ञानभिक्ष्वादिमिश्च विवर्तोपादानत्वस्यान्यादृशस्याप्रसिद्धस्य कल्पनेनाशेषवेदान्तवाक्यान्यथाकारणात् वरं मुख्यवृत्तिविरहेऽपि अद्वैतश्रुतेरर्थान्तरवर्णनमित्याकलय्य शरीरशरीरिभावादिविवेचनपर्यन्तमगत्वैव

वेदान्तव्याख्याने व्यापारि । मृषात्ववाद्यद्वैतकल्पितश्रुत्यर्थात् द्वैत्यादिवर्णितोर्थः श्रेयानिति विमृश्यैव अक्षोभ्यमुनेरानन्दतीर्थीयस्य, अद्वैताचार्यस्य विद्यारण्यमुनेश्च वादे मध्यस्थपदमलंकृतवद्भिरस्मदाचार्यैः शतदूषणीकृद्भिरित्थं निर्णयः प्राकाशि—"असिना तत्त्वमसिना परजीवप्रभेदिना । विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत् ॥" इति । अतो विशिष्टाद्वैतिव्युत्पादितशरीरशरीरिभावपर्यन्तज्ञानविरहेऽपि अद्वैतमतमवलीलयैवापास्यमित्येतावदंशज्ञापन एव द्वैतादेर्नैर्भर्थमिति न ततोऽस्मन्मतक्षतिः । यत्त्वत्र अनुपादानस्यापि नियामकत्वमशरीरशरीरिभावेऽप्याधारतामात्रेण संभवतीति द्वैतिप्रभृतीनामाशयवर्णनम्—तेन किं सिद्ध्यति—शरीरशरीरिभावाभावेऽपीत्यपिना शरीरशरीरिभावे सति सुतरां नियामकत्वमित्येव । आधारतामात्रेण नियामकत्वमिति तु न सत्, आधारतां विनाऽपि नियामकत्वस्य राजभृत्यादिविषये दर्शनात् । शरीरशरीरिभावनिबन्धनमेव सामानाधिकरण्यं सर्वत्रेत्यस्माभिरनुक्तेश्चायमनुक्तोपालम्भः । सूक्ष्मचिदचितोर्ब्रह्मणश्च शरीरशरीरिभावो नास्तीति कृत्वा दूषणं त्वस्मन्मताज्ञाननिबन्धनम् । न च सर्वत्र शरीरशरीरिभावप्रयुक्तमेव सामानाधिकरण्यमित्यस्मदीयैः क्वचिदुक्तमस्ति । किंतु चेतनाचेतनात्मप्रपञ्चमादाय सामानाधिकरण्ये अचेतनप्रपञ्चविषये यादृशम्, तादृशमेव चेतनविषयेऽपि युक्तम्, वैरूप्यायोगादिति । अतः सर्वत्रैकरूपमेव सामानाधिकरण्यमित्यस्य दर्शितरीत्या वैरूप्यं न युक्तमित्यत्रैव तात्पर्यात्, शक्त्या वा सहचरणस्थानेतिन्यायसूत्रदर्शितनानाप्रकारलक्षणया वा मीमांसातत्त्वसिद्धिपेटिकादर्शितप्रकारया गौण्या वा विवक्षितयोरैक्यबोधनं सामानाधिकरण्यकृत्यमित्येतत्तु न कुत्रापि भज्यते । वृत्तितारतम्यमेव तु विवेचनीयम् ।

यथा लक्षणादिदोषदुष्टतया बाधार्थसामानाधिकरण्यमुपेक्ष्यम्, तथोपपादकश्रुतिविरोधादपि; ब्रह्मणस्तत्तत्पदार्थावेशनिबन्धनं तत्तत्सामानाधिकरण्यमिति तत्रतत्र वाक्यत एव सिद्धेरिति शतदूषण्युक्तोपरि यदुच्यते—अध्यासाधिष्ठानभावेन बाधार्थत्वव्यञ्जकमेव तादृशं वाक्यमिति—तच्चिन्त्यम् ।

'तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्' इति ब्रह्मणश्चेतनाचेतनस्रष्टृत्वं चेतनाचेतनयोरनुप्रवेशं तन्मूलकं चेतनाचेतनभावापत्तिञ्च दर्शयति। अत्र वस्तुसृष्टिः, तत्र ब्रह्मणः प्रवेशः, ततस्तत्तद्वस्तुत्वाश्रयत्वञ्च तस्य स्पष्टमुच्यते। भवन्मते जीवकर्तृकभ्रमकल्पितत्वात् सर्वस्य सृष्टिरेव नास्ति। कल्पितस्यानिर्वचनीयवस्तुनः परमार्थसंबन्धायोगादनुप्रवेशः सुतरां न सिद्ध्यति। कल्पितपदार्थगतधर्माधारत्वञ्चाधिष्ठानस्य न संभवति। अधिष्ठानत्वमेव प्रवेशपदविवक्षितमिति भवद्भिरगत्या स्वसिद्धान्तनिर्धारणमूलं कल्प्यते; न तु लोके भ्रमाधिष्ठानत्वं प्रवेशपदार्थतया प्रसिद्धम्। शुक्तिः रजतमनुप्रविशति, रज्जुः सर्पमनुप्रविशतीति व्यवहाराभावात्। एवमधिष्ठानत्वमपि आधारत्वरूपं परमार्थस्यानिर्वचनीयं प्रति न भवति। अतोऽनिर्वचनीयज्ञाने विशेष्यतया भासमानत्वमेवैतदिति नैषोऽनुप्रवेशः।

यद्यपि गृहे देवदत्तस्येव ब्रह्मणः प्रपञ्चे प्रवेशो दुर्वचः, सर्वदा सर्वव्याप्तत्वात्—अथापि पूर्वकालासंबन्धित्वविशिष्टान्तःप्रदेशावच्छिन्नसंबन्धवत्त्वरूपप्रवेशे संबन्धांशस्य न कथमपि क्षतिः। अस्तु स प्रवेशः; स कथं सृष्ट्युत्तरकालिकः, प्रागेव सर्वसंबन्धादिति चेत्—सर्वथा संबन्धरहिते अनुप्रवेशशब्दप्रयोगायोगात् संबन्धांशस्तावदत्याज्य एव तत्र। सृष्ट्वेति निमित्तकारणत्वं प्राविशदिति चोपादानत्वं लभ्यते। कार्यात्मकपरिणामावच्छिन्नस्तु संबन्धः सृष्ट्युत्तरकालमिति क्त्वाप्रत्ययोपपत्तिः। अनुशब्दश्च प्रागपि तत्संबन्धं सूचयन् प्रवेशशब्दस्यान्यादृशोऽर्थ इति ज्ञापयति। वस्तुतोऽनुप्रवेशो धर्मभूतज्ञानीयामवस्थामादाय सुवच इति, "अनेन जीवेनात्मनाऽनुप्रविश्य" इत्येतद्विवरणावसरे छान्दोग्योपनिषद्भाष्यपरिष्कारे उपपादितमस्माभिः। कृत्स्नप्रसक्त्यधिकरणे ब्रह्मणोऽनवयवस्य सर्वत्रानुवृत्त्या परिसमाप्यवर्तमानत्वे जातिदृष्टान्तः प्रदर्शितः। तावता जातिव्यक्त्योरिव ब्रह्मप्रपञ्चयोः शरीरशरीरिभावोऽपि नेष्ट इति कथं कल्प्यताम्। न हि यदंशे दृष्टान्तस्य निदर्शनम्, तमंशं विहायांशान्तरग्रहणेन क्षोभणमुचितम्। क्षीरं

बलाकोपममिति वाक्यमाकर्ण्य कश्चित् कथं बालको बलाकाकारं बृहन्तं प्रसेदिति पप्रच्छ ! तादृगेतत् । वृद्धिह्राससूत्रे च दर्शनाच्चेति खण्डेन दृष्टान्तस्य विवक्षितांशमात्रपर्यवसानमदर्शि । अन्यथा जातिव्यक्त्योरिव ब्रह्म-प्रपञ्चयोः कार्यकारणभावोऽपि न स्यात् । किं बहुना । श्रीभाष्य एव कृत्स्नप्रसक्त्यधिकरणपूर्वपक्षेऽपि ब्रह्मप्रपञ्चयोः शरीरात्मभावस्य कण्ठोक्तत्वात् उत्प्रेक्षणमिदमुपेक्ष्यतमम् । 'जातेर्व्यक्ताविव तत्तदुपाध्यवच्छेदेन तत्तदुपाध्य-वच्छिन्नस्य चैतन्यस्यानुवर्तमानतया सामानाधिकरण्योपपत्ति'रित्युल्लेखोऽप्येवमु-पेक्ष्यः; उपाध्यवच्छेदेनानुवृत्तिश्चैतन्यस्य स्यात् ; न तूपाध्यवच्छिन्नचैतन्यस्येति च भाव्यताम् । चैतन्यस्योपाध्यच्छिन्नत्वमात्रेणोपाधिवाचिपदस्य चैतन्यपर्यन्तत्वं कथं मुख्यम् ? न हि घटपदस्य घटावच्छिन्नाकाशपरत्वं शक्त्या । एवं तर्हि विभूनां सर्वेषां घटावच्छिन्नत्वात् तेषां सर्वेषां घटपदार्थता स्यात् । भवदु-क्तविषयेऽपि दृष्टान्ताङ्गस्यं दुर्घटं भवति । न हि व्यक्तिष्वनुवर्तमानायाः जातेर्व्य-क्तिवाचिना पदेन विशेष्यतया विवक्षा लक्ष्यते, घटपदस्य घटव्यक्त्यवच्छिन्नं घटत्वमर्थ इति । एवं सति वैषम्ये कथमेवं दृष्टान्तोपन्यासः । "सर्वं समा-प्नोषि ततोऽसि सर्वः" इत्यत्र समित्युपसर्गेणार्थद्वयं प्रदर्श्यते । एकं तावत्—द्वित्वादिवत् ब्रह्मणो वस्तुना साकं व्यासज्यसंबन्धाभावात् अव्यासज्यसंबन्ध-रूपपरिसमाप्तत्वबलात् इदं ब्रह्म, तत् ब्रह्मेति प्रत्येकव्यवहार उपपद्यते ; न तु इदं द्वे इत्यत्रेवात्रानुपपत्तिरिति । अन्यत्तु—आप्तौ व्याप्तौ नियमनवैशिष्ट्यं समिति प्रदर्श्यते । तेन "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्युक्त-नृपनभो-व्यावृत्त-नियन्तृत्वविशिष्टव्यापकत्वरूपात्मत्वबोधनात् शरीरवाचिनां शरीरिपर्य-न्तत्वरूपनियमसूचनेन 'ततोऽसि सर्वः' इत्यभेदनिर्देशः समर्थ्यते । बाधार्थत्वे तु अस्य वाक्यस्य, 'सर्वं समाप्नोषि ततो न किञ्चित्' इत्येव वाक्येन भाव्यम् । किं शुद्धचैतन्यं प्रति इदं वचनम्? किं वा मायाशबलेश्वरव्यक्तिं प्रति । आद्ये तस्यासंबोध्यत्वान्न वचनप्रसक्तिः। अन्त्ये विशिष्टचैतन्यस्यातत्त्व-तया तत्र जगत्कल्पनाभावात् तस्य सर्वत्रानुस्यूतत्ववचनं तज्ज्ञानेन सर्व-

बाधवर्णनञ्च नैव संभवतीत्यपि भाव्यम् । अनुपदमेव भवतैव—शुक्तिरजतादिषु शुक्तिधर्मशुक्तित्वाद्यज्ञानस्य कारणत्वम्, तद्धर्मज्ञानस्य च बाधकत्वमित्येव सत्यपि, प्रपञ्चकारणमज्ञानमखण्डब्रह्मविषयकम्, तद्विषयकज्ञानस्यैव च बाधकत्वमित्येवं कथनाच्च । एवं सति स्वयम्प्रकाशस्य ब्रह्मणः स्वरूपस्फुरणस्य निर्विवादत्वात् अपरिच्छिन्नानन्दत्वाद्यंश एवाज्ञानमिति भवदीयोक्तत्वाच्च व्याहतमिदमित्यादि प्रागप्युक्तम्; वक्ष्यते च । अपरिचिन्नानन्दत्वादिकमपि वस्तुतः स्वरूपमेव; तस्यांशत्वं कल्पितमिति चेत्—तर्हि स्वरूपस्फुरणे तादृशानन्दत्वस्फुरणमप्यस्त्येवेति नाज्ञानम् । तस्यांशत्वं न ज्ञातमिति चेत्-तर्हि अंशत्वज्ञानं बाधकमिति स्यात् । तच्च तर्हि तत्त्वज्ञानम् । नन्वनंशत्वं तत्त्वम्; तदज्ञानं प्रपञ्चकारणमिति चेत्—अनंशत्वमानन्दत्वस्वरूपम्; आनन्दत्वं ब्रह्मस्वरूपम्; तथाचानंशत्वस्फुरणमेतत्स्वरूपस्फुरणमिति नाज्ञानप्रसक्तिः । दुर्घटत्वमविद्याया भूषणमिति चेत्, तर्हि मुक्तमप्यास्कन्देत् । शेषं तिरोधानानुपपत्त्यादौ भाव्यम् ।

अपृथक्सिद्धविशेषणवाचिनां विशिष्टवाचित्वव्युत्पत्तिमनुसृत्य शक्यार्थैक्यमिति, सर्वत्रैकयैव रीत्या तात्त्विकसामानाधिकरण्यं सर्वं निरुह्यतेऽस्माभिः । 'अहं मनुरभवम्' इत्यादावपि सैव सरणिः । एवञ्चेदृशीं विहाय सरणिं बाधार्थसामानाधिकरण्यस्य क्वचिद्वर्णनं केवलं प्रपञ्चमिथ्यात्वस्थापनश्रद्धाविलसितमिति ।

मिथ्यात्वं जगतामसिद्धमपि यत् कृत्वा स्वयं सिद्धवत्
सामानाधिकरण्यनिर्वहणमप्यास्थाय बाधार्थताम् ।
संपन्नं कलयन्ति तत्र सुधिया मन्तव्यमेवं भवेत्
वैरूप्यञ्च जघन्यता च निगमै रोधश्च बाधस्तथा ॥

शुभमस्तु ॥

———

श्रीः

# संविदद्वैतभङ्गप्रसाधनम्

द्वितीया यस्य श्रीः सवितुरिव भा भाति नियता
तथा संवित् सर्वग्रहणमहिता शक्तिसहिता ।
अनन्तेदृग्जीवव्रजतदितरेशो जयति सोऽ
द्वितीयोऽनन्तो नः कुलपतिरनन्ताद्रिवसतिः ॥

'सर्वं खल्विदं ब्रह्म' इत्यादौ बाधार्थसामानाधिकरण्यनिरूपणं निरासि। तच्च विलक्षणविवर्तोपादानत्वस्वीकारेण तैर्न्यरूपि । किं तद् विवर्तोपादानमित्यत्र संविदिति तेषां समाधिः; संविदेव ज्ञेयज्ञातृतदवच्छिन्नज्ञप्तिरूपेण विवर्तत इति सिद्धान्तात् । तदिदं संविदद्वैतं संप्रति निरस्यते । संविन्नानात्वनिषेधकानुमानभङ्गवादे च संविन्न नानेत्यनुमानं दूषितम् । अत्र संविदनानात्वरूपं प्रमेयं दूष्यते । एवं संविदामनेकत्वमस्तीति प्रागुक्तम् ; संविद्रूपैकवस्त्वतिरिक्ताभावरूपं संविदद्वैतं संप्रति क्षिप्यते । अत्रायमेतदद्वैतवादिनामाशयः—नानारूपे प्रपञ्चे उपलभ्यमाने तदविरोधेनाद्वैतस्थापनं सर्वेषामेकोपादानकत्वस्वीकारेणैव कार्यं स्यात् । लोके च चतुर्धा पदार्थविभागः—प्रमाणं प्रमेयं प्रमाता प्रमितिरिति । तत्र प्रमाणस्य प्रमेयेऽन्तर्भावः, "प्रमेयता च तुलाप्रामाण्यवत्" इति न्यायसूत्रसिद्धः । प्रमातुः प्रमितेश्च तदन्तर्भावोऽपि तत्रैव द्वादशविधप्रमेयनिरूपकसूत्रसिद्धः । एवमपि सर्वमिदमेकोपादानकं भवितुमर्हं न वेति विमर्शे किं तदुपादानमिति जिज्ञासायां ज्ञानातिरिक्तस्योपादानत्वे तत्साधकस्य ज्ञानस्यापि कस्यचित् स्वीकार्यतापत्त्या नाद्वैतसिद्धिरिति ज्ञानरूपमेव किञ्चिदुपादानमिष्यते । न च कथं तस्य जडं प्रत्युपादानत्वमिति वाच्यम्-विलक्षणत्वेऽपि विवर्तोपादानत्वसंभवात् । एवञ्च ज्ञातृज्ञेयतदवच्छिन्नज्ञानरूपसर्वप्रपञ्चोपादानं संविदिति संविदद्वैतसिद्धिरिति । एतन्निरासश्चैवम्—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विद-

धाति कामान्'' इति श्रुत्या, कर्मानादित्वमुक्तामुक्तत्वोपपत्तिरूपयुक्तितश्च ज्ञातॄणां बहुत्वान्नित्यत्वाच्च तेषां न किञ्चिदुपादानं भवितुमर्हति। ज्ञेयेषु केचित् सन्त्येव नित्या इति न तेषामप्युपादानं किञ्चित् सुवचम्। ज्ञानानाञ्च ज्ञातृभेदप्रयुक्तात्यन्तभेदप्रयोजकविप्रकर्षशालिनां नैकोपादानकत्वसंभवः। एवं संविदुपादानकत्वमपि दुर्निश्चयम्; स्वयम्प्रकाशस्यास्वयम्प्रकाशवस्तूपादानत्वायोगात्। "दृश्यते तु" इति सूत्रोक्तरीत्या विलक्षणयोः कार्यकारणभावसंमतावपि मृत्पिण्डात् सुवर्णघटानुत्पत्त्या अत्यन्तवैजात्यस्यासंमततया जडाजडद्रव्ययोरुपादानोपादेयभावासंभवात्। यत्किञ्चिद्विशेषधर्मतोऽपि साजात्याभावात्। अन्यथा जडमेव किञ्चिदुपादानमस्तु। तत्साधकत्वेन स्वीकर्तव्या संविदपि तदुपादानिकैव सती तत्साधिका भवतु। अतो नेदृशाद्वैतसिद्धिसंभव इति।

अत्र पुनः प्रत्यवस्थानम्—वस्तुसिद्धेर्ज्ञानाधीनत्वात् ज्ञानं तावदवश्याभ्युपेयम्। स्वीकृते तस्मिन् तत्कल्पितत्वेनैव सर्वनिर्वाहे किमिति ज्ञातृज्ञेयस्वीकारः। एवमपि ज्ञानानामाश्रयविषयभेदभिन्नानामनन्तानां स्वीकार्यतया नाद्वैतसिद्धिरिति न वाच्यम्—आश्रयादिभेदेन ज्ञानभेदस्यापि काल्पनिकत्वात्। एवञ्च सर्वं मिथ्येति संविदद्वैतसिद्धिरिति—तत्रोच्यते—लोकानुभवसिद्धानां देवदत्तादिपुरुषनिष्ठानां घटादिविषयाणां ज्ञानानां मध्ये कस्यचिज्ज्ञानस्य सकलज्ञानज्ञेयकल्पकत्वेष्टौ यतमस्य तत्कल्पकता, ततमस्मात् प्राक् प्रपञ्च एव न स्यात्। प्रपञ्चाभावे च ततमस्याप्युत्पत्त्ययोगात् ततः सर्वकल्पनानुपपत्तिश्च। प्रसिद्धज्ञानविलक्षणनिर्विषयनिराश्रयसंवित्कल्पितं सर्वमिति चेत्—अविशेषात् सर्वं युगपदेव कल्पितं स्यादिति क्रमोपलम्भो न स्यात्। क्रमोऽपि कल्पित एवेति चेत्—संविदः सहकारिनिरपेक्षं सर्वकल्पकत्वे सर्वं सर्वदैव कल्प्यमानं स्यादिति सर्वं सर्वदा भासमानमेव स्यात्। सहकारिसापेक्षत्वे च द्वैतापत्तिः। मिथ्याभूतस्यापि सहकारित्वसंभवे संविदपि मिथ्याभूतैव कल्पिका भवत्विति शून्यवाद एव। तत्त्वज्ञानादेव मिथ्याभूतानां निवृत्तिदर्शनात् तत्त्वं किञ्चिदेष्टव्यमिति चेत्—तत् तत्त्वं स्वयम्प्रकाशमस्वयम्प्र-

काशं वा। नाद्यः। तथासति हि यथा स्वयम्प्रकाशे ज्ञाने जाते, अहं जानामि न वेति संदेहस्य वा, न जानामीति मिथ्याज्ञानस्य वा न प्रसक्तिः, तथा तस्मिन् तत्त्वे स्वयम्प्रकाशे सति मिथ्याप्रतीत्यादेरेवानवकाश इत्यसंसार एव। नान्त्यः; अपसिद्धान्तात्। स्वयम्प्रकाशेऽपि यावत् अस्वयम्प्रकाशोऽप्यंशविशेषोऽपूर्वतया ज्ञायमानो नेष्यते, तर्हि प्राक् संसारो मिथ्याज्ञाननिबन्धनः, पश्चाच्च मुक्तिस्तन्निवृत्त्यधीनेत्येतन्न शक्योपपादनम्।

स्वयम्प्रकाशमपि यत्त्वज्ञानक्षपणाक्षमम्।
तस्य वृत्तिर्जडा तत्र क्षमेत्येतत्तु साहसम्॥

अतो ज्ञानवत् ज्ञेयस्यापि तत्त्वांशस्य स्वीकारे द्वैतमेवेति। आस्तामेतत्। अथात्र संविदद्वैतभङ्गपरीक्षायां शतभूषण्युक्तं विमृशेम—दृगेकमेव तत्त्वमिति विलिख्य 'दृश्याः यावद्ब्रह्मज्ञानं तत्त्वम्; तदनन्तरमतत्त्वमिति लेखनं व्याहतम्। न च तत्त्वं कालभेदेनातत्त्वं भवति। शुक्तिरजतं यावद्बाधं प्रतीयमानमपि कथं तत्त्वमिति व्यवह्रियेत। अबाध्यं हि तत्त्वम। चैतन्यं स्वरूपत एकमपि चतुर्विधमुपाधिभेदात्, विषयचैतन्यम्, प्रमाणचैतन्यम्, प्रमातृचैतन्यम्, साक्षिचैतन्यञ्चेत्येतदप्ययुक्तम्—विषयाद्युपाधीनामपरमार्थत्वात् परमार्थापरमार्थयोरसंबन्धादुपाधित्वायोगात्। वृत्तिनिर्गमादेरप्रामाणिकत्वं तन्निबन्धनपरोक्षापरोक्षविभागाद्यसंभवश्च परमार्थप्रकाशिकायां न्यरूपि। अधस्ताच्च। एवमज्ञानत्रैविध्यमपि निरस्तमेव। भावरूपमज्ञानं तु पृथङ् निरसिष्यते। भामतीमते अज्ञानस्य निमित्तकारणमात्रत्वात् ब्रह्मण एवोपादानत्वात्, अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकवत्त्वं विषयाणामविद्याब्रह्मोभयोपादानकत्वप्रयुक्तमिति दुर्वचम्। अस्तित्वभासमानत्वप्रियत्वानामविद्यायामभावेऽपि न किञ्चित् प्रमाणम्। घटविषयकपरोक्षज्ञाने क्षणभेदेन विषयत्वभेदकल्पनमप्ययुक्तम्। प्रत्यक्षस्य हि अयं घट इति तत्तत्क्षणावच्छिन्नघटविषयकत्वम्। तत् तत्र तत्तत्क्षणविषयताभेदात् तन्निरूपिता घटविषयताऽपि भिद्यत इति

कथञ्चित् स्यात्। परोक्षे तु तथा क्षणानवगाहनान्न विषयताभेदः। यदा तु प्रत्यक्षेऽपि स्थूल एव कालो गोचर इति पक्षः, तदा क्षणभेदेन तद्भेदोपि नास्त्येव। अत एव धारावाहिकं प्रत्यक्षज्ञानमप्येकमिति परैरपीष्टम्। विदिताविदितविभागसंरक्षणप्रयासोऽपि वितथः। संविदः प्रकाशमानत्वपरप्रकाशकत्वस्वाभाव्यशालितया विषयप्रमात्राद्युपाधिभिः साकं संवित्संबन्धस्य संविद्भास्यत्वात् संविदि कल्पितादन्यस्याभावेन सर्वस्यैव सर्वदा भानस्यावश्यकत्वात्। अस्मन्मते धर्मभूतज्ञानाद्वैतं नोपपद्यत इत्यप्ययुक्तम्-आत्मभेदेन धर्मभूतज्ञानभेदात् तदद्वैताभावात्। "घटादिविषयं यदा सकृदुत्पद्यते, तदा सर्वदा घटस्य ज्ञातत्वात्" इति लेखनमपि व्याहतम्; यदोत्पद्यते, ततः प्राक् तस्य ज्ञातत्वाभावात्, यदा नश्यति तदूर्ध्वमपि ज्ञास्यमानत्वाभावात् सर्वदेत्यस्यायुक्तत्वात्। न च धर्मभूतज्ञानं सर्वदा सर्वविषयकमात्मनिष्ठं ब्रूमः। सामग्रीभेदनिबन्धनप्रसरणभेदेन विभिन्नविषयसंपर्कात् तत्तदवस्थापन्नज्ञानानामेव सविषयकत्वम्, संविदनुभवादिशब्दाश्च साश्रयसविषयककिञ्चिद्वाचितयैव व्युत्पन्ना इति कथमपरिणामदशायां धर्मभूतज्ञाने किञ्चिद्विषयकत्वम्; कथंतरां सर्वविषयकत्वम्। परिणामस्तु प्रतिनियतविषयक इति न तत्र सर्वगोचरत्वप्रसक्तिः। एवं तर्हि आत्मधर्मे नित्येऽनादौ तत्र ज्ञानमिति कथं व्यपदेश इति चेत्—तत्परिणामानां ज्ञानेच्छाकृतिसुखदुःखाद्यनेकविधानां मध्ये ज्ञानपरिणामभूम्ना ज्ञानपरिणामस्य परिणामान्तरहेतुतया चेति गृहाण। यथा प्राणापानव्यानाद्यनेकपरिणामशालिनि वायौ प्राण इति सामान्यतो निर्देशः, यथा च वादजल्पवितण्डारूपकथात्रयेऽपि प्राधान्यात् वादव्यपदेशः, तद्वत्। संकल्प इच्छा चैकं तत्त्वमिति बहवः। श्रुतिश्च संकल्पम्, तदैक्षतेति ज्ञानपर्यायेक्षणशब्देन व्यवहरति। एवञ्च निर्विषयज्ञानाङ्गीकारप्रसक्तिरेव नास्ति। न हि वयं घटोऽनुभूयत इत्यादिधातूपात्तज्ञाने घटादिविषयकत्वमात्माश्रयत्वञ्च मिथ्याकृत्य निर्विषयां संविदं भवन्त इव रोचयामहे। किंतु ज्ञानसंविदादिशब्दमुख्यार्थस्य सविषयकत्वं साश्रयत्वञ्च सर्वत्रावर्जनीयमित्येव। 'संको-

चाद्विषयाभानं तु ज्ञानस्वप्रकाशताविरोधि ' इत्यपि न; विषयभानौपयिकप्रसरणवेलायामेव तत्प्रकाशाङ्गीकारात् । ज्ञानं स्वप्रकाशमित्यस्य च ज्ञाधात्वादिनिर्देश्यत्वं यादृग्रूपस्य, तादृग्रूपस्य स्वप्रकाशत्वमित्यर्थ इति न दोषगन्धोऽपि ।

अहमर्थस्य ज्ञातुः स्थिरस्य मतद्वयसंप्रतिपन्नत्ववचनमपि विमर्शनीयम्; भवन्मते अहङ्कारस्यैवाहमर्थत्वात् तस्य च सुषुप्तावपि लयस्वीकारेण पूर्वदिनप्रत्यभिज्ञादेरपि दौर्घट्यात् । स्वप्रकाशस्य ज्ञातुर्ज्ञानस्य च ज्ञानान्तरवेद्यत्वस्वीकारे च कथं स्वप्रकाशताविघातः । न हि स्वप्रकाशत्वं पराप्रकाश्यत्वरूपम्; तस्यानुभवविरुद्धत्वात् । ज्ञाता, ज्ञानञ्चेति स्वप्रकाशद्वयमनुपपन्नमित्यप्यसत् — भानुभानुमद्रूपस्वप्रकाशद्वयवदुपपत्तेः । स्वप्रकाशसहस्रमपि प्रामाणिकमेष्टव्यमेव । सर्वमेव वस्तु ज्ञाततया अज्ञाततया वा साक्षिभास्यमिति विवरणोक्तमप्यनुपपन्नम् । घटमहं जानामीति ज्ञानावच्छेदकतयेव घटमहं न जानामीति अज्ञानावच्छेदकतयाऽपि घटादेः साक्षिभास्यत्वस्वीकारे घटे ज्ञातत्वस्यैव सिद्ध्या अज्ञानावच्छेदकत्वायोगात् । अज्ञातानां व्यवहितविप्रकृष्टापूर्वार्थानां सर्वेषाम् इदमिदं न जानामीति विशिष्याज्ञानविशेषणतया साक्षिणा भानप्रसंगाच्च । साक्षितादात्म्यानापन्नतादशायामधिष्ठानेनाऽऽवृतेन घटादिभानायोगस्य भवतैवोक्ततया घटादिरूपविशेषणाभाने तद्विशिष्टस्याज्ञानस्यापि साक्ष्यभास्यत्वस्यावश्यकत्वाच्च । ज्ञानाभावरूपाज्ञानविषयचोद्यं भावरूपाज्ञानवादेऽपि तुल्यमित्यादि चोपपादयिष्यते । यत्तु सर्वप्रमाणानाघ्राताऽपि संवित् न शशशृङ्गायते स्वप्रकाशत्वादिति-तन्न-यस्याः सर्वप्रमाणानाघ्रातत्वमुदितं निर्विषयायाः निराश्रयायाः, तस्याः स्वयम्प्रकाशत्वं नास्त्येव । विषयाश्रयवैशिष्ट्येनैव संविदः प्रकाशमानत्वात् । उपहितचैतन्ये उपहितपर्यन्त एव शास्त्रप्रवृत्तिः; न तु चैतन्यांशे इति न स्वप्रकाशत्वक्षतिरित्यपि न सम्यक्—चैतन्यस्य शास्त्राविषयत्वे उपहितपर्यन्ते तत्प्रवृत्तेरयोगात् । उपाधिमात्रे इति हि वक्तव्यम् । न च तदपि युक्तम्; वैशिष्ट्यस्य मानं विना भानायोगात् । अस्तु उपाधिवै-

शिष्ट्यपर्यन्त इति चेत्—संबन्धिद्वयाग्राहिणः संबन्धरूपवैशिष्ट्यग्राहकत्वायोगात्। तर्हि उपहितं चैतन्यं शास्त्रविषय एव सत् शुद्धादन्यद् भवत्विति चेत्—तर्हि 'उपहितस्य वृत्त्या नाशो नाम उपाधिनाश एव, नोपहितनाशः' इति भवदुक्तमयुक्तम्। तत्र चोपहितस्य मिथ्यात्वमद्वैतसिद्ध्याद्युक्तमित्यपसिद्धान्तोऽपि। तथाचोपहितानुपहितसंविद्भेदान्न संविदैक्यसंभवः। स्वप्रकाशस्य सर्वप्रमाणानाघ्रातत्वं भूषणमेवेत्यपि न; सर्वप्रमाणानाघ्राते स्वप्रकाशत्वस्यापि दुर्ग्रहत्वात्। वस्तुन एवासिद्धौ का तस्य स्वप्रकाशता। न च स्वप्रकाशत्वमपि तस्य स्वप्रकाशम्। न च प्रमाणेन तद्ग्रहणे तदीयतया स्वप्रकाशत्वं ग्रहीतुं शक्यम्। अतः सर्वप्रमाणानाघ्रातत्वं तस्य दूषणमेव; निरासकमेवेति भाव्यम्।

शुद्धचैतन्यस्य प्रमाणाघ्रातत्वपक्षे मिथ्यात्वापत्तिरूपे दोषे उपक्षिप्यमाणे सति उपहिते मिथ्यात्वे इष्टापत्तिरिति भवत्समाधानमनवसरम्। उपहितचैतन्यं मिथ्या वृत्त्यधीनप्रकाशमित्यङ्गीकारे कल्पितस्योपहितचैतन्यस्य कल्पनाधिष्ठानस्य चैतन्यस्य च द्वयोर्भानमावश्यकम्। विषयावच्छिन्नचैतन्यस्यान्तःकरणावच्छिन्नचैतन्यस्य चाभेदे अहमिति अन्तःकरणमात्रभानस्यानिष्टतया तदवच्छिन्नात्मभानस्यैवेष्टतया तस्मिन् अहंशब्दवाच्ये विषयावच्छिन्नात्मनि विषयसंबन्धस्यैव साक्षात्संभवेन अहं घटावच्छिन्न इत्येवानुभवः स्यात्। न तु अहं घटावच्छिन्नज्ञानवानिति। प्रत्यक्षपरोक्षविभागव्यवस्थार्थं अवच्छिन्नचैतन्ययोरभेदादिकल्पनमित्यप्ययुक्तम्—सर्वदर्शनप्रसिद्धेन्द्रियार्थसंनिकर्षतदभावरूपनियामकबलादेव तद्विभागोपपत्तौ अप्रामाणिकवृत्तिनिर्गमादिसांख्यकल्पनाया अनादरणीयत्वात्। तर्हि सुखादेः कथं प्रत्यक्षता, मनसोऽनिन्द्रियत्वादिति चेन्न—'इन्द्रियाणि दशैकञ्च' इत्यादिप्रमाणविरुद्धस्यानिन्द्रियत्वपक्षस्योपेक्ष्यत्वात्। तदनिन्द्रियत्वेऽपि सुखादि प्रत्यक्षमेव; ज्ञानवत् स्वप्रकाशत्वात्। ज्ञानाकरणकं ज्ञानं प्रत्यक्षमित्युक्तरीत्या ज्ञानरूपकरणानधीनप्रकाशतया सुखादेः प्रत्यक्षत्वोपपत्तेः। असंनिकृष्टत्वादग्रहणमित्येवोपपत्तौ

अज्ञानरूपावरणकल्पनस्य तन्निवृत्त्यर्थवृत्तिकल्पनस्य चानावश्यकत्वात् । अत्र विषये, "तदव्यवहारोपपत्तौ" इति चण्डमारुतस्यान्यथानुवादोऽपि कश्चिदिह दोष इति ध्येम् । परोक्षे प्रत्यक्षत्वव्यवहारस्तु न प्रसजति, संनिकर्षाभावात् । प्रागेवाज्ञानत्रैविध्यं दूषितमित्यलमत्राधिकेन ।

विषयावच्छिन्नचैतन्यमन्यत्, संवित् अन्येति वदतैव संविदो विषयोल्लेखित्वमस्तीति कृत्वा तदुल्लेखित्वं च संवित्सत्तातिरिक्तसत्ताकत्वाभावो विषयस्येति कथ्यते । विषयानवच्छिन्ना चेत् संवित्, कथं तस्या विषयोल्लेखिता ? संविदि विषयः किं तद्भिन्नतया भासते, उतान्यथा । आद्यमेवानुभविकम् । एवञ्च कथं संविद्विषयसत्तयोरैक्यम् । ऐक्यस्वीकारे यावद्विषयसत्तं तद्भानमप्येष्टव्यम् । न च तत् प्रामाणिकम् । अत एव संविद्विषययोस्तादात्म्यमेवोल्लेख इत्यप्युल्लेखमात्रम् ।

नित्यैकसाक्षिसंविदभ्युपगमे सार्वज्ञ्यापादनं क्रियमाणं परिहर्तुं यदुक्तम्—किमिदमापादनं संविन्मात्रेण प्रकाशदशायाम्, उत विषयोल्लेखदशायम् । नाद्यः, विषयाणामाभावात् । नान्त्यः, तत्तद्विषयग्राहिण्याः संविदो विभिन्नत्वादिति । तत्र पृच्छ्यते । केयं संविन्मात्रेण प्रकाशदशा । न तावत् सुषुप्तिः ; तदा विषयाभावकथनस्यासंगतत्वात् । न मुक्तिः ; तदा संवित् स्वमात्रेण प्रकाशमानाऽस्तीत्यत्र प्रमाणाभावात् । स्वयम्प्रकाशत्वं नाम स्वाधीनप्रकाशाश्रयत्वमित्युक्तौ प्रकाशरूपधर्मापत्तिरितिभिया पराधीनप्रकाशानाश्रयत्वमेव तदिति वदतां पक्षे कथं संविन्मात्रेण प्रकाश इति वादः । वस्तुतो विषयसद्भावदशायामेव सार्वज्ञ्यापादनम् । साक्षित्वादेकत्वाच्च । अनेकसंविदिष्टौ च संविदद्वैतभङ्गो न परीक्षणीयः । निर्विषयसंविदेकत्वपक्षे च संविदः साक्षित्वं त्यक्तं स्यात् । एवञ्च नित्यैकसाक्षिसंवित्स्वीकारो नास्माकमित्येवोच्यताम् । आगमाश्च नित्यान् बहून् धर्मभूतज्ञानाश्रयतया साक्षिभूतान् स्वयम्प्रकाशतया संविद्रूपान् आत्मनः, तथा तदपेक्षितपुरुषार्थप्रदं नित्यैकसाक्षिसंविद्रूपं सर्वज्ञञ्च प्रतिपादयन्ति । तद्विरोधेन संविदद्वैते भवद्भिरिष्यमाणे, सा संवित् शुद्धा

वा भवत्वशुद्धा वा; तस्या: सर्वविषयसंबन्धोऽवश्यमेषितव्य:। अन्यथा संविदन्तराभावेन अप्रकाशिततया विषयाभावप्रसंगादिति सर्वगोचरत्वमूलकसार्वज्ञ्यापादनं युक्तमेव, यावत् नित्यैका सर्वसाक्षिणी संविदिति भवद्भिरुच्यते।

यद्युच्यते-साश्रयाणां सविषयाणां संविदां नानात्वमिष्टम्। शुद्धा त्वन्या संविदेकैवेति, तर्हि न तस्या: साक्षित्वम्, न वा संयोगादिवैलक्षण्यम्। यथा संयोगा: घटपटादिरूपस्वानुयोगिप्रतियोगिभूतद्विकभेदेन भिन्ना: नौपाधिकभेदवन्त:, किंतु स्वतो व्यक्तितोऽपि भिन्ना एव, तथोत्पत्तिविनाशयोरुपलम्भात्—तथैव तत्तद्विषयतत्तत्प्रमातृभेदेनेव स्वतोऽपि संविदामुत्पादविनाशशालिनीनां भेद एवानुभविक इति का तावदासावेका संवित् अन्या, केन प्रमाणेन वेद्यते। सुषुप्त्यादिदशायां तत्प्रकाश इतीदमपि तस्यास्तथा मानान्तरव्याप्यत्वे खलु सिद्ध्येत्; न तु मानान्तरानाघ्रातत्वे। आघ्रातत्वं सुखमहमस्वाप्समित्येतदादाय निर्विशेषस्य न शक्यमुपपादयितुमिति प्रागेव प्रपञ्चितम्। समाधिस्तु भ्रमप्रमासाधारणभावनाप्रभवसाक्षात्कारात्मा न वस्तुसद्भावे नियमत: प्रमाणमित्यतोऽप्युपेक्ष्य:। एवमाघ्रातत्वे मिथ्यात्वमपि। वृत्तिव्याप्यत्वमेव तस्या:, न तु फलव्याप्यत्वमिति चेत्—वृत्तिफलरूपांशद्वयसद्भाव एवासिद्ध इत्युक्तमेव। मितिप्रत्यक्षानुमित्यादिशब्दानां चैतन्यपर्यन्तार्थकत्वस्य परिभाषाद्युक्ततया संविदि चैतन्यविषयत्वानिष्टौ प्रमाणाघ्रातत्वासिद्धिरेव स्यादिति न भामतीमताद्विशेष:। सर्वत्र वृत्त्यवच्छिन्नचैतन्यभास्यत्वे तत्त्वस्य विद्यमान एवावरणनिवृत्ते: शुक्त्यज्ञानादौ दर्शनात् ब्रह्मावारकस्याप्यज्ञानस्य ब्रह्मण: स्वगोचरवृत्त्यवच्छिन्नचैतन्यभास्यत्वे सत्येव निवृत्ति: स्यात्। ब्रह्मण: स्वप्रकाशत्वात् चैतन्यभास्यत्वं नापेक्षितमिति चेत्—तर्हि वृत्तिरपि तुल्यन्यायेन नापेक्ष्या; ब्रह्मण: स्वत एव भानादिति नावरणस्य तद्भञ्जकस्य च कल्पनप्रसक्तिरिति सर्वदा संविदद्वैतमेव स्यात्; न प्रपञ्चोपलम्भ:। उपलभ्यमानत्वात्तु प्रपञ्चस्य संविदद्वैतं सर्वथैव न संभवति। शेषं तिरोधानानुपपत्त्यादिवादेषु॥

अज्ञानावरणे तु तार्किकनयात् संविज्जडाऽऽपद्यते
वृत्त्यन्या च ततोऽपराऽऽपतति तद्भानाय संवित्; तत:।
ज्ञानाज्ञानपरम्परा प्रसजतीत्येवं स्थिते सा कथं
संवित् किञ्च कथंतरां कथय तद्भेदापलापोद्यम:॥

शुभमस्तु

श्रीः

# उपदेशानुपपत्तिप्रसाधनम्

स्वतःसर्वद्रष्टा निरुपधिदयोऽनन्तविभवो
हयास्याद्याचार्यावधिविविधदिव्यावतरणः ।
परान् नित्यान् सत्यान् प्रकृतिविवशान् प्रेक्ष्य भविनः
स्वमायासंतारेऽप्युपदिशति देवः स सरणिम् ॥

अद्वैतमते मुक्त्यर्थोपदेशानुपपत्तिमशेषत एवाचार्यैरुपपादितवत्सु तदुद्भावितदोषपरिहारपथादर्शनात् सरभसं सुबहु किमपि विस्तरेण लिखता शतभूषणीकृताव्यर्थशब्दजालसंदर्भेणैव सर्वं साधितं मन्यते। शतदूषणीविकल्पितेषु कल्पेषु कश्चिदाद्रियमाणस्य तत्रोद्भावितात् दोषादनिर्मोक्षो वादान्तरेष्विवात्राप्यविशिष्टः। बहुव्याहारप्रियत्वात् स्वस्य उपदेशानुपपत्तिरुद्भाव्यमाना हन्त सर्वोच्छेदाय समापद्यत इति क्लेशस्तावदिहाधिकमाक्रोशमस्य कारयति। इदं तावदत्र पृच्छामः—योऽयं तत्त्वोपदेष्टा, स किं शुद्धचिन्मात्रम्, उत तदुपाधिविशेषः, अहो उपाध्यवच्छिन्नचैतन्यम्। एवमुपदेश्योऽपि त्रिषु कतम इति। आद्ये स्वस्मै स्वयमुपदेशः क्रियत इति वक्तव्यम्। अतोऽनुपपन्नमेतत्। वृथाचेष्टितञ्च। द्वितीये, अहं ब्रह्मास्मि, त्वं ब्रह्मासीति नोपदेष्टुं शक्यम्; किंतु ब्रह्मव्यतिरिक्तं त्वमहमादि सर्वं मिथ्येति। एवमुपदेश्यस्य मिथ्यात्वे निश्चिते कथं तं प्रत्युपदेशः। तृतीये तत् अवच्छिन्नचैतन्यं पूर्वस्मादन्यत् अनन्यद्वा। आद्ये आद्य एव दोषः। अन्त्ये मिथ्येति द्वितीयो दोष इति। सर्वमिदं शतभूषणीदूषणक्रमेण विवृतं भविष्यतीति मन्तव्यम्।

यत्तु शतदूषण्यां स्वलीलारसोचिततत्तत्संव्यवहार ईश्वरस्योपपद्यत इति वचनात् ईश्वरस्य लीलारसोचितोपदेशादिव्यवहारस्यास्माकमपि संप्रतिपन्नत्वात् गीताभाष्ये, 'न त्वेवाहम्' इत्यत्र श्रीभाष्यकृद्दर्शिता अद्वैतमते उपदेशानुपपत्तिः शतदूषण्यैव खण्डितेति विप्रलम्भनम्, तदिदं विना तात्पर्यचन्द्रिकां गीताभा-

प्यमत्र घट्टे स्वदृष्टमिति ज्ञापनमात्रफलम् , "स्वव्यतिरिक्तानन्तसंसारिचेतनसद्भावेन" इति शतदूषणीवाक्यस्थपदानवधानमूलकञ्च । विवक्षितलीलारसार्थव्याहार: स्वव्यतिरिक्तचेतनानङ्गीकारे न भवतीति ह्यत्र भवन्मतदूषणमेव क्रियते । तस्मादद्वैततत्त्वोपदेष्टृत्वं भूषयति शतदूषणी दूषणप्रवृत्तिं विस्मृत्येत्यादिवृथाडम्बरवचनानि वादेऽस्मिन्नधिकानि मुधैव शतभूषण्याद्रियत इति वेदितव्यम् ।

अद्वैततत्त्वविज्ञश्चेत् नोपदेष्टा भवेदसौ ।
उपदेष्टुं प्रवृत्तश्चेत् भ्रान्त एव भवेदसौ ॥

उपदेश्यं जीवं यदि स्वात्मत्वेन गृह्णाति, तदनुभाव्यं सुखदु:खं स्वयमनुभवतीति कोऽयं दु:खिनो लीलारस: ? यदि न गृह्णाति, कथमसावद्वैतदर्शी। स्वयं जीवस्य स्वभिन्नत्वेन भ्रान्त्या ग्रहणेऽपि वस्तुत ऐक्यात् जीवगतदु:खादिसंवेदिनैव स्वेन भाव्यम् । स्वप्रयोजनाभावेऽपि लीलारसोऽस्तीत्यप्यनुपपन्नम् ; आत्मैक्ये सति जीवप्रयोजनस्य स्वप्रयोजनतया तदभावाभावात्, उपदेश्यकर्मकोपदेशतज्जन्यज्ञानादीनां मिथ्यात्वाध्यवसाये सति कथं लीलारस: ? कथञ्च तदर्थे प्रवृत्ति: ? लीलारसोऽपि मिथ्येति मन्यमानो लीलारसं कथमुद्दिशेत् । न च मिथ्यापुरुषत्वेन गृहीतं स्थाण्वादिकं प्रति कश्चिदुपदिशन् दृश्यते । एतेन साक्षाच्छङ्करावतारभूतश्रीशङ्कराचार्यादीनामपि लीलारसोचितमद्वैततत्त्वोपदेष्टृत्वमित्यपि निरस्तम्—कस्मै प्रयोजनायोपदिशतीति प्रश्नस्य लीलारस: प्रयोजनमिति समाधानाभिमानेऽपि ऐक्यज्ञाने सति मिथ्यात्वज्ञाने सति वा प्रतिबोध्यत्वासंभवादुपदेशानुपपत्ते: । तत्त्वज्ञानसिद्धि: फलमित्यनङ्गीकारे तदर्थतयोपदेशनिबन्धनाद्यनुष्ठानसंप्रदायविरोधापत्तेश्च । 'अस्त्वीश्वरावतारेषु यथातथा वा व्यवस्था । ज्ञानिनामुपदेष्टृत्वं भगवद्गीताऽप्याम्नाती'त्येतदप्ययुक्तम् । 'तमुवाच हृषीकेश: प्रहसन्निव भारत' इति भगवतोऽप्युपदेष्टृत्वस्य तत्राम्नानात् । भगवत: स्वभिन्नवस्तुसत्यत्वभ्रान्तेस्तुषमात्रेणापि वर्णनासंभवे अद्वैतस्यावश्योपेक्ष्यत्वात् । एवमीश्वरे नित्यतत्त्वज्ञानशालिनि बाधितानुवृत्तेर्दुर्वचत्वादपि बाधितानुवृत्त्योपदेशनिर्वाहासंभव: । सोऽपि शतदूषण्यां दर्शित

एव। एवं तत्त्वज्ञानिनोऽपि साक्षात्कृतजीवा वा श्रवणमननाधीनपरोक्षज्ञाना वाऽपि नोपदेष्टुमर्हन्ति, तैरप्युपदेश्यानां मिथ्यात्वेन गृहीतत्वादुपदेश्यत्वायोगात्। 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति वचनमनुरुध्य तत्त्वापरोक्षज्ञानशालिनामेवोपदेष्टृत्वं ब्रह्मसिद्धिकारादयो मन्यन्ताम्। असितो देवलो व्यास इत्येवम्भूतानां वस्तुतस्तत्त्वदर्शित्वात् तत्प्रशंसापरस्य तस्य वचनस्य प्रतिष्ठितपरोक्षज्ञानपुरुषकर्तृकोपदेशप्रतिषेधकत्वं नास्तीति वा स्वीकृत्य अयोगिनोऽपि काममनुमन्यन्ताम्। सर्वथा तत्त्वापरोक्ष्ये सत्युपदेष्टृत्वस्य सर्वसंप्रतिपन्नत्वात् आपरोक्ष्ये सति सर्वस्य बाधितत्वेनोपदेश्यव्यक्तीनामेवाभावादुपदेशानुपपत्तिरेवः। परोक्षं जानद्भिरपि मिथ्यात्वेन गृहीता नोपदेश्या एव।

ननु मिथ्यात्वेन स्वयं गृहीतत्वेऽपि बाधस्यापरोक्षज्ञानानन्तरमेव भावित्वात् तावत्पर्यन्तमवस्थितान् तान् प्रति संभवत्येवोपदेश इति चेन्न— उपदेशफलाभावादुपदेशानुपपत्तेः। न चोपदेष्टुरज्ञानस्य तन्निष्ठतत्त्वज्ञानेनैव उपदेश्यगतस्य तदीयतत्त्वज्ञाननिवर्त्यतया तदुत्पादनाय तेनोपदिश्यत इति वाच्यम्—उपदेष्टुरुपदेश्यस्य चैकत्वेऽवधृते स्वगततत्त्वज्ञानानिवर्त्यस्याज्ञानान्तरस्याभावात् तदयोगात्। उपदेष्टृज्ञानकल्पितानामुपदेश्यजीवतदितरजीवतद्भोग्यरूपपदार्थानामुपदेष्टृज्ञाननिवृत्तिसमकालनिवृत्तिकतया स्वकीयतत्त्वज्ञानानिवर्त्यप्रकारान्तरनिवर्त्यपुरुषान्तराज्ञानोत्प्रेक्षणस्य स्वयं कर्तुमशक्यतयोपदेशप्रवृत्तिवैयर्थ्यात्। एतेन एकजीववाद इव भामतीपरिकल्पितानेकजीववादेऽप्युदेपशानुपपत्तिरुपपादिता भवति।

अविद्यांशा अविद्या वा नाना स्युर्जीवभेदिकाः।
प्रपञ्चा अपि नाना स्युस्तत्तज्जीवप्रकल्पिताः॥
तत्तत्प्रपञ्चस्तद्धेतुरज्ञानञ्च तदीयया।
सहोपदेश्यैर्लीयेत वृत्त्याऽतो देशना वृथा॥

बाधितानुवृत्तिपक्षस्तु पूर्वमेव बाधित इत्युक्तमेव शतदूषण्याम्। बाधितानुवृत्तिर्नाम यद्विशेष्यकयत्प्रकारकानुभवसंतानः प्राक् स्थितः, तद्विशेष्यकतत्प्र-

कारकज्ञानस्य तदधीनक्रियायाश्चाभ्यस्तसजातीयाया अनुवृत्तिः । तत्र नारायणस्य पद्मभूविषय उपदेशो भवेत् कामं बाधितानुवृत्त्या, पूर्वपूर्वसर्गेषु अनेकचतुर्मुखाचार्यकस्य तस्मिन् प्रामाणिकत्वात् । वस्तुतो नारायणस्य प्रथमतो भ्रमात्मकज्ञानधारा, पश्चात् बाधज्ञानोत्पत्तिरित्येवं वर्णनासंभवात् नित्यमेव तस्य तत्त्वज्ञत्वात् भ्रमज्ञानोदयप्रसक्तिरेव नेति बाधितानुवृत्तिवचनं तत्राप्यशक्यम् । अस्त्वेतत् यथातथा । पद्मभुवा वसिष्ठं प्रत्युपदेशः कथं बाधितानुवृत्त्या । न ह्ययं पद्मभूरिमं वसिष्ठं प्रति प्रागप्येवमुपदिष्टवानासीत् । एवमेव शक्तिपराशरव्यासशुकगौडाचार्यगोविन्दार्यशङ्कराचार्यादिविषयेष्वप्यनुपपत्तिर्भाव्या । गुरुपरम्परानुसंधानश्लोके च भवदादृते, "नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च । व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् । श्रीशङ्कराचार्यम्---" इत्येवंरूपे नारायणमारभ्य शुकपर्यन्तं पितापुत्रभावस्य प्रसिद्धत्वात् विशिष्य पराशरविषये तत्पुत्रपराशरेति वचनम्, शुकस्य गौडाचार्यस्य च संबन्धलेशस्याप्यभावात् संप्रदायविच्छेदेन गौडाचार्यस्वच्छन्दकल्पनामात्रत्वमद्वैतस्येति सर्वैः कथ्यमानं परिहर्तुमवश्यवक्तव्यस्य संप्रदायानुस्यूतिक्रमस्यावचनञ्चाश्रद्धेयत्वमद्वैतोपदेशस्य व्यक्तमेव दर्शयतीत्यन्यदेतत् । अत्र परम्परायाम्, प्राक् वैष्णवाभिमानमवधूय शैवाभिमानपौष्कल्यशालिभिर्भवद्भिर्वृथैव वैष्णवान् देवतातारतम्यवेदनेन तदुचितनिष्ठागरिष्ठान् शिवद्रोहित्वारोपेण दूषयद्भिर्नूनं कालक्रमेण नारायणमित्येतत्स्थाने पिनाकिनमितिप्रक्षेपोऽपि क्रियेतेति प्राचीनसंप्रदायानुसरणभङ्गं भवन्मतानुयायिषु साम्प्रतमवेक्षमाणानामूहितुमवसरोऽप्यस्तीति ध्येयम् । सर्वदा विष्णुचिह्नधारणमन्तरेण विष्णुप्रमुखगुरुपरम्परानुसंधानमात्रं शिवचिह्नधारणपुरस्सरमेव भवद्भिराद्रियमाणं हि आस्तिकेष्वेवमाशङ्कामङ्कुरयतीत्यलम् ।

त्रिपुण्ड्रधारणे श्रद्धा भवत्स्वद्य प्रदृश्यते ।
मृदूर्ध्वपुण्ड्रधृत्यर्थे सकृदल्पाऽपि नेक्ष्यते ॥
शङ्करस्यावताराश्च शङ्कराचार्यसत्तमाः ।

न मतं शक्तुमर्हन्ति प्रथमस्य गुरोर्हरेः ॥
वैष्णवाचाररक्षा चेत् विष्णुमुख्यगुरुश्रितैः ।
अद्वैतिभिः क्रियेत स्यात् विप्रेष्वैक्यं समृद्धिभाक् ॥
माध्वभाष्यप्रक्रियातः प्रायः शारीरके गतिः: ।
अद्वैतास्माकभाष्यीया ह्यैकरस्यं समश्नुते ॥
पाञ्चरात्राधिकरणे शाङ्करेऽप्यनुमोदिते ।
वेषाचारप्रकारेऽस्मिन् वैमत्यं वो न साम्प्रतम् ॥
विभूतेर्धारणं जातु विभूतेर्वाञ्छयाऽस्तु वः ।
धृत्वैव वैष्णवं चिह्नं युक्तं वेदान्तचिन्तनम् ॥

यत्तु ब्रह्मसाक्षात्कारबाधितत्वेऽपि शरीरादिभिर्भोजनादिव्यवहारवत् शिष्येण व्यवहारो न विरुध्यते इति—तन्न—भोजनादिव्यवहारासंभवस्याप्यस्माभिरापादनात्; मिथ्यार्थैकदेशपरिशेषायोगेन प्रारब्धभोगार्थत्ववर्णनासंभवात्। यथा भगवदवताराणां वासुदेवादीनामर्जुनादीन् प्रति व्यावहारिकत्वधियोपदेश इति दृष्टान्तवर्णनमपि वार्तम्—तदसंभवस्याप्यापादनात्। उपलभ्येते किलेति चेत् आपाद्यकोटिविपर्ययो ह्यापादनेऽनुकूल एव। एवं सति, 'तत् व्यवहारादिकं लीलामात्रञ्चेत्—जीवन्मुक्तैरपि किमपराद्धम्' इति क्षेपो न क्षोदक्षमः। किञ्चेश्वरस्य सर्वज्ञत्वात् अर्जुनदर्शनाभ्यास—शरणागतत्वाभिमतपुरुषोद्दश्यकोपदेशाभ्यासादीनां पृथक्पृथगवस्थितानां कदाचित् संस्कारोन्मेषवशादुन्मत्तव्यवहारेष्विव पूर्वोत्तरीभाव इति कल्पना कथञ्चित् स्यात्। जीवन्मुक्तादिषु त्वपूर्वशिष्यदर्शनाभ्यासाधीनसंस्कारानुवृत्तिवर्णनायोगात् अननुभूतपूर्वानेकसंघटनावैचित्र्यमुपदेशविलेखनलौकिकव्यवहारादिषु प्रत्यक्ष्यमाणं नोपपद्येत। जीवन्मुक्तान् राजाधिराजानिवाभिमत्य सर्वेश्वरस्येव तेषां लीलारसार्थप्रवृत्तिरियमिति समाधानमपि लीलामात्रम्। नाटकादिष्वाहार्यभावनामूलाभिनयादिकं भावुकचित्तरञ्जनरूपपरमप्रयोजनमधिकृत्य घटते। न तत्र भावुकादिषु मिथ्यात्व ज्ञानमस्ति, इह तु सर्वमिथ्यात्वाध्यवसायात् न कथञ्चिदपीदं शक्योपपादनम्।

यत्तु प्रतिबिम्बं प्रत्युपदेशोऽपि संभवतीत्यत्र दृष्टान्तवर्णनम्—तत्रार्जुनस्य वासुदेवप्रतिबिम्बत्वे तं प्रति तेनोपदेशो न घटेतेत्याक्षेपोऽस्तीति भवद्विदितमेव। अन्यस्तु दृष्टान्तश्छाया। सूर्यस्य पत्नी खलु संज्ञानाम्नी तत्तेजोसहमाना स्वस्थाने छायां नियोज्य स्वयं तपसे ययौ। तत्र संज्ञाया अपत्यानि वैवस्वतमनुत्वेन प्रसिद्धः श्राद्धदेवनामा, यमः, यमी च। छायायास्तु सुतः सावर्णिर्भाविमनुः। तत्र प्रतिबिम्बस्य कार्यानुपयोगे वैवस्वतमनुजन्मवृत्तान्तकथा दत्तजलाञ्जलिरिति, तस्याश्चानेकसंतानेषु वैवस्वतमनुरपि संतानमिति कथा" इति च लेखनं बहुधैवाशुद्धम्। न च प्रतिबिम्बस्य तत्र निर्देशोऽस्ति। छायाशब्दस्तु वस्तुप्रतिघातनिबन्धनतेजःप्रसराभावमपि वस्तुसमानाकारं लक्ष्यमाणमाह। यथा 'छायेव तां भूपतिरन्वगच्छत्' इति। कामधेनुं तच्छायाऽन्वगच्छत् सेव राजाऽप्यन्वगच्छदिति ह्यर्थः। तस्याः वस्तु विहाय पृथक्स्थातुमशक्यत्वादिह प्रतिबिम्बश्छायाशब्दार्थ इति चेत्—तत्रापि स दोषः समानः। तर्हि समानाकारप्रतिमादिकं छायापदविवक्षितमस्त्विति चेत्—तथाविधच्छायायाः सूर्यविहाराद्ययोग्यत्वादविवक्ष्यत्वं तुल्यम्। का तर्हि छायेति चेत्—उक्तमेव श्रीधरीये, छायां प्रतिबिम्बतुल्यां स्वसदृशीमन्यां स्त्रियं कृत्वेति। प्रतिबिम्बत्वायोगात् चेतनभूता स्त्री काचिदेव छायाशब्देन सादृश्याल्लक्ष्यत इत्युक्तं भवति। तथा श्रीविष्णुचित्तीयेऽपि, "छायावदत्यन्तसदृशीं काञ्चित् स्त्रियं कृत्वा" इति। अतः सूर्यशुश्रूषासावर्णिप्रसवाद्यर्हायां स्त्रियां छायाशब्दः संज्ञात्यन्तसादृश्यमूल इति न प्रकृते स दृष्टान्तः कार्यकरः। कुशलवौ श्रीरामपुत्रौ बिम्बादिबोद्भूतौ बिम्बाविति वर्ण्येते। श्रीरामोऽपि दशरथप्रतिबिम्बत्वेन प्रशस्यते। तावता तेषां चेतनानां न वास्तवं प्रतिबिम्बत्वम्। अत्र पुनरीश्वरप्रतिबिम्बत्वं जीवेषु मुख्यमेव चेत् विवक्ष्यते— तर्हि तत्पक्षोक्तदोषा दुष्परिहरा एव। तदधीनस्थितिकत्वतत्सादृश्याभ्याममुख्यत्वे संज्ञातोऽन्या छायेव ईश्वरादन्य एव जीवाः स्युरिति अद्वैतहानिरेव। अतो दृष्टान्तहान्या, 'ईश्वरस्य स्वप्रतिबिम्बेन जीवेन प्रतिबिम्बानां जीवानां मिथश्च

व्यवहारो नोन्मत्तव्यवहारः ; किंतु शतदूषण्याःश्रीभाष्यस्य चैव' इति निरस्तम् । अयञ्च रूक्षव्यहारः जीवस्य प्रतिबिम्बत्वपक्षदूषणेनावच्छेदवादावलम्बिनः अद्वैत-ग्रन्थव्यवहारानेवोन्मत्तीकरोति । एवमद्वैतग्रन्थान्तरव्यवहारो वा शतभूषणी-व्यवहारो वा स्यादुन्मत्तव्यवहार इति भाव्यम् । प्रतिबिम्बसौसादृश्योल्लङ्घने तत्रतत्र प्रतिबिम्बव्यवहार एव गौण इति ग्राह्यम् ।

'यदस्ति, तन्नास्तीति वदन्तो नास्तिका' इति वाक्यमप्युपस्कार्यम् । सति घटे भूतले घटो नास्तीतिवादमात्रेण नास्तिकत्वाभावात् । विप्रलम्भकत्वा-पत्तिरूपं दूषणं तु स्वभिन्नतया सत्यत्वेन च स्वगृहीतस्य शिष्यं प्रति स्वात्माभि-न्नत्वादिनोपदेशपक्षे उद्भावितमिति तस्यान्यदा परीक्षणमप्यस्थाने । "न हि निश्शेषितातत्त्वप्रतिभासःशिष्यो भवति" इति भवल्लेखनं भवदभिप्रायविरुद्धम् । लीलारसोद्देशेन जीवन्मुक्तेषु केषाञ्चिदाचार्यत्वस्येवान्येषां शिष्यत्वस्यापि संभ-वात् । बाधितानुवृत्त्या किं किं न कुर्यात् जीवन्मुक्तः । "कथञ्चासावद्वैतश्रवण-महिमनिःशेषितातत्त्वप्रतिभासे मृषाभूते शिष्ये सत्यतां प्रत्येष्यति" इति शत-दूषणीवाक्ये वस्तुतः निःशेषितातत्त्वप्रतिभास इति प्रथमान्तपाठो भाव्यः । सप्तम्यन्तपाठे तु निःशेषितः अतत्त्वप्रतिभासः आचार्यनिष्ठः यच्छिष्यविशेष्यकः तस्मिन् शिष्ये इत्यर्थवर्णनं कार्यम् । अस्तु चान्यथापि । किं तेन? पदेपदेऽन-न्वितप्रयोगेण ग्रन्थपूरणं शतभूषण्यामेवेत्यत्र प्रकृतसंदर्भवाक्यमपि निदर्शनम् । यथा—"शास्त्राभ्यासपाटवेन पूर्वोत्तरमीमांसान्यायकलापैः शास्त्रार्थं परीक्ष्य प्राप्तनिर्विचिकित्सापरोक्षज्ञानवन्तः श्रवणमनननिदिध्यासनादौ यतमानाः तत्त्वद-र्शिनो ज्ञानिनः" इति । मीमांसान्यायकलापाधीनशास्त्रार्थपरीक्षणव्यतिरिक्तं किं मननमस्ति । तद्वा अन्यद्वा मननं निर्विचिकित्सापरोक्षज्ञानानन्तरं कथम् । परोक्षज्ञानेति शोधनीयम्: मुद्रणाशुद्धिरियमिति चेत्—एवं मुद्रणाशुद्धिः सर्वत्र भाव्या । एवमपि श्रवणमननयोस्तदानन्तर्यं कथम् । तस्मादनन्वितवाग्जालवैखरी चिराभ्यस्ता पदेपदे एवं प्रयोजयतीति स्थितिः ।

"जीवन्मुक्तानामपि स्वात्मसाक्षात्कारपाटवार्थं परस्परं गुरुशिष्यभावाभिनयः छान्दोग्यबृहदारण्यकादिश्रुतिषु बहुलमुपलभ्यते" इत्युक्तिश्च नूनमनधिगतोपनिषदां प्रलोभनमात्रम्। तत्रापि परस्परं गुरुशिष्यभाव इति व्याहतम्। ईश्वरादेरभिनेतृत्वं तु वयं न प्रतिषेधामः। तावता वासुदेवार्जुनयोर्गुरुशिष्यभावाभिनयमात्रमिति श्रीभगवद्यामुनमुनिश्लोकः, "अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलम्। पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्" इत्ययं दर्शयतीत्येतत्तु प्रामादिकम्। पूर्वार्धे अस्थानस्नेहस्य धर्मधर्माज्ञानस्य तदधीनवैयाकुल्याश्चार्जुननिष्ठताकथनेन अभिनयप्रतिषेधस्यैव सिद्धेः। उद्दिश्येतिपदमपि आकुलत्वबन्धुत्वप्रपन्नत्वरूपधर्मदर्शननिबन्धनं भगवतो वात्सल्यातिशयमेव दर्शयेत्। एवं सत्यपि व्याजीकृत्येत्यर्थवर्णनं श्रीगीतार्थानुष्ठानस्य प्रबलप्रतिबन्धकवशादर्जुनविषये निष्पत्त्यसंभवेऽपि तद्व्याजेनोपदिश्यमानमन्येषां बहूनां हितं भविष्यतीति भगवदभिसंधिं ज्ञापयितुम्। यदि तु वासुदेवार्जुनयोर्नरनारायणावतारत्वादभिनय एवेति विमृश्य तदनुसारेण श्लोकाभिप्रायोऽन्य उत्प्रेक्ष्यते, अर्जुनेन स्वविषये उपदेशनैष्फल्यप्रकटनमप्यभिनयमात्रमिति च विमृश्यते— तर्हि तयोरवताररूपत्वमेव हेतूकर्तव्यम्; न तु तद्विहायैतच्छ्लोकमात्रग्रहणं वाचकानामभिनयाभिप्रयं दर्शयिष्यति; अनन्यथासिद्धपदाभावात्। भाष्यादिषु अर्जुनस्य व्याकुलत्वादेःस्पष्टं सर्वत्र वर्णनाच्च। नरांशोऽप्यर्जुनो जीव एवेति स्पष्टमेव तच्चरित्रावसाने। अभिनयोऽपि लोकोपकारायैव कार्यः, न च स्वातिरिक्तः कश्चित् वस्तुतोऽस्ति; यमुद्दिश्यैतावान् अभिनय आदृतः स्यात्। शतदूषण्यामेव, "मायावत् समयादयः" इत्युदयनाचार्यवाक्यमपि गृहीत्वाऽभिनय उपपादितः। सर्वमिदमनुग्राह्यस्य कस्यचिदन्यस्याभावात् न भवन्मते घटत इति स्थिते किमिति, "शिष्यानुजिघृक्षया लीलारसिक आचार्यः" इत्याद्यसंभावितलेखनम्।

जीवन्मुक्तवत् अनिवृत्ताविद्यो निर्विचिकित्सपरोक्षज्ञानोऽपि नोपदेशग्रन्थनिर्माणादिकं कर्तुमर्हति; स्वकल्पित चेतनाचेतनप्रपञ्चस्य स्वकीयसाक्षात्कारैक-

निवर्त्यत्वात् । स्वाकल्पितजीवादेः स्वयमगृहीतत्वेन तदनुजिघृक्षापूर्वकव्यापारादेरयोगाच्च । स्वकल्पितजीवानां स्वोपदेशाधीनज्ञानपरिपाकवशादेव मुक्तिरिति भ्रान्त्यातु स्वयमुपदेशग्रन्थनिर्माणादि । विवेचने कृते कल्पितत्वज्ञाने सति तन्न युक्तमित्येव साम्प्रतं ब्रूमः ।

यत्तु, "अद्वैतोपदेशः अविद्यानिवृत्त्यर्थत्वेनेष्यमाणः किमुपदेष्टुः, उत श्रोतुः, उतोभयोः, अथोभयव्यतिरिक्तस्य" इति शतदूषणीविकल्पे सर्वेऽपि कल्पाः संभवन्तीत्यभिप्रेत्य लेखनम्—तत्र—

जीवन्मुक्तेनात्मतत्त्वोपदेशः साक्षात्कारपाटवार्थम् । आत्मतत्त्वसाक्षात्काराभ्यासश्चाविद्यानिवृत्तेर्जातायाः स्थिरीकरणार्थमपेक्ष्यते । अत उपदेष्टृविषयेऽप्युपदेशोऽपेक्ष्यत इति यत् प्रथमम्—तन्न—भावरूपाज्ञानवादिनां मते तस्याविद्याख्यस्याज्ञानस्य तत्त्वज्ञानतो निवृत्तौ सकृज्जातायां ध्वंसतुल्यायास्तस्या निवृत्तिप्रसक्त्यभावेनाविद्यान्तरस्य तज्जीवीयस्याभावेन चाविद्यानिवृत्तिस्थिरीकरणार्थतायाः साक्षात्कारे दुर्वचतया तदर्थोपदेशायोगात् । यस्य त्वंशतःश्रवणम्, अंशतो ज्ञानविरहः, तस्योपदेशः प्रवचनात्मा वैशद्यमर्पयतीति स्यान्नाम । निर्विशेषनिःशेषसाक्षात्कारे निष्पन्ने किमस्त्युपदेशलभ्यमांशिकविज्ञानम् । अतो नोपदेशस्य तादृश्युपदेष्टरि साफल्यम् । अथ लीलारस एव फलमुपदेष्टुरस्तु इति चेन्न—सर्वमिथ्यात्वज्ञाने सति लीलारसानुत्पत्तेः । आत्मानुभवतृप्तस्यान्यैत् सर्वं मिथ्येत्यध्यवसितवतः कार्यान्तरजन्यरसविशेषश्रद्धाप्रसक्त्यभावात् । श्रोतुर्विज्ञानोत्पत्त्यादिफलदर्शनजनितलीलारसस्य श्रोतृतद्विज्ञानादिषु मिथ्यात्वेनावधृतेषु निष्पत्त्यसंभवात् ।

एतेन श्रोतुः फलमित्यपि निरस्तम् । यत्त्वत्र श्रोता य उद्दिष्टः तदन्यस्याप्यनुद्देशेपि तत्त्वसाक्षात्कारो भवति । द्वयोः रज्जुसर्पभ्रान्तिमतोर्मध्ये एकमुद्दिश्य नायं सर्प इत्युक्तेऽपि अन्यस्यापि भ्रान्त्यादिनिवृत्तिदर्शनात् । अतस्तृतीयस्यापि फलसंभव इति—तन्न वैषम्यात् । अनुद्दिष्टस्यापि तत्त्वसाक्षात्कारेष्टौ

गुरूपसदनस्य तत्पूर्वकश्रवणस्य चानावश्यकत्वप्रसङ्गात् संप्रदायविलोपापत्तेः । अन्येषामपि कथञ्चित् तत्त्वज्ञानतो मुक्तिप्रसंगे अपशूद्राधिकरणविरोधापत्तेश्च । वस्तुतोऽयं तृतीयोऽपि यथाकथञ्चित् तद्वाक्यज्ञानादेव तत्त्वं बुध्यत इति श्रोतृकोटिनिविष्ट एव। यो हि साक्षान्न शृणोति, किंतु परकृतं ग्रन्थमवलोकयते, सोऽपि रेखादर्शनाधीनशब्दज्ञानवत्त्वात् श्रोतैव । यथा परीक्ष्यमाणान् बालान् प्रति प्रश्नं प्रतिब्रूतेति प्रेरणे तैर्लेखने क्रियमाणे तत् वचनमेव, तथा लिखितदर्शनमपि श्रवणमेव । एवं स्थिते यःखल्वनुद्दिष्टोऽपि दृष्टोऽदृष्टो वा शृणोति क्रियमाणमुपदेशम्, तस्य श्रोतृत्वे कः संदेहः । शतदूषण्याञ्च उपदेष्टुः उत श्रोतुरिति श्रोतृपदेनैव विकल्पः कृतोऽस्ति, नोद्दिष्टानुद्दिष्टपदत इति तादृशप्रस्तावो विस्तरमात्रम् । "न हि देवदत्ताय सर्पाभावोपदेशेन यज्ञदत्तस्य सर्पभ्रमो निवर्तत" इति सूक्तिरपि अश्रोतारमेव यज्ञदत्तं गृह्णातीति संदर्भबलात् स्पष्टम् । 'उभयव्यतिरिक्तस्ये'ति कल्पे किल दोष उच्यते । तेन श्रोतृव्यतिरिक्त एव किल यज्ञदत्तादिर्गृहीतो भवति ।

नित्यनिवृत्ताविद्यं ब्रह्मेति भाषणाच्चोपदेशवैयर्थ्यमित्येतत् परिहर्तुं प्रयस्यता यदुच्यते—वस्तुगत्या अविद्याविरहेऽपि काल्पनिकसंबन्धतत्प्रतियोग्यविद्योभयनिर्मूलनेन तत्त्वोपदेशः सफल इति – कथमिदं घटते? अविद्यातत्संबन्धयोः काल्पनिकत्वे बुद्धे तदभावस्य निश्चितत्वात् तन्निर्मूलनमिति किमस्ति साध्यम्? निर्मूलनीयस्याभावे कस्य निर्मूलनार्थमुपदेशः । एतदपेक्षया भवद्भिरेवमुत्तरं युक्तं वक्तुम्—उपदेशोऽपि नास्माभिः क्रियते ; अविद्यादिवत् उपदेशस्यापि मिथ्यात्वादिति । एवमुपदेशं कुर्वाणैरेव कथं तथा वक्तुं शक्यमिति चेत्—वस्तुस्थितिपर्यालोचने कथं न शक्यम् । तर्हि इदं शृण्वन्तः श्रवणाश्रवणयोरविशेषात् क्लेशसाध्ये विविधवेदान्तग्रन्थश्रवणे न प्रवर्तेरन् इति चेत्, मा ते प्रवर्तिषत ; का नाम हानिः? एवं विमृशद्भिश्चोपर्युपरि अद्वैतमताभिवर्धनप्रकारपरिशीलनविषयविविधप्रयासवहनं व्यर्थमिति, परमतग्रन्थाः सर्वेऽपि मिथ्येति च मन्यमानैर्भाव्यमिति जोषम्भावे जुष्यमाणे शान्तः क्षोभः । अन्यथा

नोपदिशाम इति वदन्त एव यद्युपदिशेयुः, मिथ्यावाद एव प्रतिष्ठापितो भवति। एवं परोक्षनिश्चयवद्भिरपि तूष्णीकैर्भाव्यमिति स्थिते का कथा जीवन्मुक्तानाम्। यावच्च भवतामुपदेशस्यास्ति प्रयोजनमिति भ्रान्तिरस्ति, तावत् न तत्त्ववित्त्वम्। तत्त्ववेदनं विनैवोपदेशे जिनसुगतादिसाम्यमापादितं शतदूषण्याम्। तत्र वेदविरुद्धत्वादप्रमाणमिति समाधानमयुक्तम्--वेदोपदेशोऽप्यतत्त्वविक्रियमाणो जिनाद्युपदेशतुल्य एव। तर्हि तत्त्वविदा कर्तुमशक्यत्वात् किं कर्तव्यमिति चेत्—यादृशे तत्त्वे स्वीक्रियमाणे सर्वमनुपपद्यमानं लक्ष्यते, तादृशस्य तत्त्वत्वाभाव एव संमन्तव्यः। खण्डनग्रन्थस्य खण्डनखण्डकैः खाद्यत्वात् खण्डनखण्डखाद्यमित्यन्वर्थं नामेति च प्रागेव प्रादर्शि।

यत्तु आत्मैक्यं मुक्त्यवस्थामभिप्रेत्याद्वैतमत इति—तत् नित्यमुक्तत्वात् ब्रह्मणो मुक्त्यवस्थेति काचिद् भविष्यन्ती न; सर्वस्य मिथ्यात्वादिति स्वसिद्धान्तविस्मरणविधायिजगत्सत्यत्ववासनादार्ढ्यमूलकम्। एवञ्च सति, "उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः" इत्यौडुलोमिपक्ष एव गृहीतः स्यात्, न तु सूत्रभाष्यसंमतं काशकृत्स्नमतम्। परमात्मन एव विज्ञानात्मभावेनाप्यवस्थानेन सर्वदैवात्मैक्यं हि तन्मतम्। अतो मुक्त्यवस्थायामेवात्मैक्यमित्ययमपसिद्धान्तः, भेदस्य काल्पनिकतया आत्मैक्यस्यैव पारमार्थिकत्वात्। भास्करयादवप्रकाशाचार्यमतयोः शतदूषण्यापादितमज्ञत्वसर्वज्ञत्वसांकर्यं स्वमतेऽपि सिद्धं कृत्वा तत् परिजिहीर्षति शतभूषणी। तत् त्वमसीत्यत्र सर्वज्ञत्वविशिष्टार्थके तत्पदे अज्ञत्वविशिष्टार्थके च त्वम्पदे अज्ञत्वसर्वज्ञत्वरूपविशेषणत्यागेन स्वरूपमात्रमुपलक्ष्य भवद्भिरैक्यवर्णनात् तयोर्धर्मयोः सांकर्यमेकव्यक्तिगतत्वरूपं हि स्वीकृतं भवति। न हि रूपं रसश्चैक इत्यत्रैक्यरक्षणाय रूपत्वरसत्वरूपधर्मत्यागेनोपलक्षितैक्यं ब्रूताम्। अत आत्मव्यत्तयैक्यप्रयुक्तमेव तत्। इयान् विशेषः—भास्करमते औपाधिको भेदः पारमार्थिकः, भवतामपारमार्थिक इति। अत एव परिभाषायाम् रक्तो घटो न श्याम इतिवत् धर्मभेदे पर्यवसानमित्युक्तम्। वस्तुतस्तत्र शब्दमर्यादायाः प्रत्यक्षे आरोपणं तत्कृतमयुक्तमित्यन्यदे-

तत। अन्यदहमर्थात्मत्वसमर्थने सिद्धम्। 'निर्ममो निरहङ्कार' इति वाक्यं नाहमर्थस्य अहङ्कारतत्त्वस्य वा विलयं ब्रूयात्; सशरीरत्वाधस्थायामपि संपाद्यानामेव विशेषणानामत्र प्रतिबोधनात्। अहङ्कारो ह्यहंमतिर्देहात्मभ्रमः, तदधीनगर्वो वा निवर्त्यत्वेनात्र कीर्त्यते। बृहदारण्यकोक्तस्य कबन्धाख्यगन्धर्वस्य दृष्टान्तीकरणं तु चण्डमारुतेनैव सुदूरं क्षिप्तमिति तदुपन्यासोऽकिञ्चित्करः। 'अपरोक्षज्ञानिभिरेव तत्त्वोपदेशस्य कर्तव्यत्वेऽपि परोक्षज्ञान्यन्तःप्रवेशेन अपरोक्षज्ञानी परमात्मोपदिशत्विति किलोच्यते। सर्वमिथ्यात्वाध्यवसायरूपप्रतिबन्धकवशान्न भवतीति परोक्षज्ञानिनैवोपदेशस्य कर्तुमशक्यत्वे स्थिते परमात्मनस्तत्त्वसाक्षात्कारिणः अविद्यानिवृत्तेरपि निष्पन्नत्वावश्यकत्वेन उपदेशोद्योगो हि सर्वथैव न भवति। कबन्धेन तु अन्तर्यामिज्ञानवता काप्यभार्यायां तज्ज्ञानरहितायां प्रविष्टेन स्वज्ञातमाविष्क्रियते। तद्वत् जीवात्माज्ञातं यत्र किञ्चित् जीवेनोच्येत, तत्र नूनं परमात्मन आवेशः कामं स्वीकर्तव्यः। आथर्वणः कबन्धो गन्धर्व आसीत्; न तु गन्धर्वशरीरप्राप्त्यनन्तरमेव स कबन्धः। एवं पतञ्चलस्य काप्यस्य भार्येति श्रुतौ जाग्रत्यां पाञ्चालस्य काप्यस्य भार्येति लेखनमप्यशुद्धम्। (पाञ्चालेति चकारस्थाने जकारप्रयोगः पाञ्जालीति द्रमिडभाषावासनामूल इव।) आहार्यभेदारोपनिबन्धनः शिष्याचार्योपदेशसंप्रदायो नारायणसमारम्भ आधुनिकाचार्यान्त इति च न निष्प्रयोजनत्वशङ्कां समाधातुं प्रभवति। तस्य सम्प्रदायस्य आधुनिकमतान्तरसंप्रदायेन न बाधप्रसक्तिरिति तु वाङ्मात्रम्। 'मुक्त्यवस्था ज्ञानचक्षुरेकगम्या उपदेशानुपपत्त्याद्युद्भावनेन नान्यथयितुं शक्यत' इति च न घटते। मुक्त्यवस्था हि निर्विशेषब्रह्मस्वरूपमात्रम्। तत्तु अगोचरम्। तत्र किं तत् ज्ञानम्, यत् चक्षुर्भूत्वा गमयिष्यति। को वा तेन चक्षुषा द्रक्ष्यति। सर्वमाहार्यमेव। प्रश्नोपनिषदि मौनेनाद्वैतं प्रतिपादितमित्यपि विप्रलम्भनं प्रमादो वा। प्रश्ने मौनास्पर्शात्। अस्ति तु क्वचित् मौनेन व्याख्यानम्। तदाशयस्तु यस्यामतं तस्य मतमित्यादिश्रुत्यर्थप्रतिपादन एव। तदर्थश्च स्थलान्तरे स्पष्टः। अपरिच्छिन्ने ब्रह्मणि परिच्छिन्न-

त्वज्ञानमज्ञानम्। परिच्छिन्नत्वेन यो न मन्यते स एव मन्यते इत्यादि परमार्थप्रकाशिकायां प्रकरणशोधनेन सर्वं विशदीकृतमेव। अत्रापि वक्ष्यते। 'यतो वाचो निवर्तन्त' इति वाक्यं यदि वाग्विषयत्वाभावं दर्शयतीति, भवन्मते संकोचे प्रमाणाभावात् सर्वविधवाग्विषयत्वाभावमेव बोधयेदिति न लक्षणयाऽपि ब्रह्मणो बोध्यत्वसंभवः। एवम्, 'अप्राप्य मनसा सहे'त्यपि मानससर्ववृत्तिविषयत्वाभावम्। एवं वेदोपदेश्यत्वस्यैव ब्रह्मण्यभावे तदनुवादरूपनारायणचतुर्मुखाद्युपदेशस्य कथं संभवः। तथा च भवदुत्प्रेक्षितेयमपि काचिदुपदेशानुपपत्तिरेव। उपदेशानुपपत्तिरित्यस्य वेदानुपपत्तिरित्यर्थकल्पनेन वेदस्याद्वैत एवोपपन्नत्वादिप्रतिज्ञासन्तान इहाप्रसक्तविस्तरमात्रम्। श्रुतितात्पर्यविषये पुरुषोत्तमस्वरूप-वैकुण्ठलोक-नित्यसूरि-तज्ज्ञानादिके तद्विरुद्धं प्रत्यक्षमकिञ्चित्करमिति लेखनमप्ययुक्तम्; विरुद्धप्रत्यक्षस्य क्वाप्यभावात्। तदप्रत्यक्षं तु स्यात्; न तु तद्विरुद्धप्रत्यक्षम्। एवं प्रत्यक्षस्य बलीयस्त्वे प्रत्यक्षमुपदेश इति लेखनमप्यनन्वितम्। "सन्ति हि सहस्रशः स्थितप्रज्ञाः निवृत्ताविद्याः गुणातीताश्चाद्वितीयब्रह्मस्वरूपमनवरतमावर्तयन्त उपदेशकाः" इति च प्रत्यक्षबाधितम्। अथवा प्रत्यक्षापेक्षया स्वोपदेशस्य शतभूषणीकृत् प्राबल्यं मन्यत इव। अथवा सर्वानेवा द्वैतमतनिविष्टान् स्थितप्रज्ञान् निवृत्ताविद्यान् मन्यते। नूनमियमज्ञानिषु स्थितप्रज्ञत्वनिवृत्ताविद्यत्वाद्यविद्या न कदापि निवर्त्स्यति। तदेवं शतदूषण्युद्भावितदूषणापरिहरणेन, उपदेशोपपत्तिरस्त्येवेति प्रतिज्ञानिगमने परं न विवक्षितसाधिके इति।

मृषेत्येवं स्वस्मादितरदखिलं साधु विदुषा
निवृत्ताविद्येन प्रवचनफलञ्चाप्यविदता।
कथं स्वान्यो दृश्यः सरसमुदेशोऽपि च कथम्
न चोन्मेषं गच्छेत् किमपि निखिले बाधविषये॥

एकाज्ञानभवं हि शुक्तिरजतं नान्योऽलमालोकितुम्
तद्वन्नो चतुरोऽत्र कोऽपि पुरुषं स्वाकल्पितं वीक्षितुम्।
यत् स्वाज्ञानविकल्पितं तदखिलं स्वज्ञानबाध्यं स्थितम्
सत्येवं घटतां कथं स्वकलिताद्वैतोपदेशो जनः॥

स्वभिन्ननानाविधजीवसंभवे त्वकृत्रिमज्ञानबलादिरच्युतः।
स्वयं परैरप्युपगम्य शिष्यतामपीरयेत् पथ्यमिति प्रकल्पते॥

शुभमस्तु

श्रीः

# तिरोधानानुपपत्तिप्रसाधनम्

स्वयं सर्वं पूर्णं स्फुटमनुभवद् ब्रह्म परमं
स्वमायासंबन्धस्थगितनिजबुद्धिप्रसरणान् ।
अवेक्ष्यैतान् जीवान् विविधसुकृतव्याजघटनात्
स्वरूपाविर्भावप्रभृति वितरत् स्वं विवृणुते ॥

भगवता बादरायणेन, "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति सूत्रे तिरोधानं यन्निर्दिष्टमस्ति, तदतिरिक्तस्य तिरोधानस्य संसारप्रयोजकस्य कल्पनायां न किञ्चित् प्रमाणमस्ति । तच्च तिरोधानं पराभिध्यानात् परमपुरुषसंकल्पविशेषाद्भवतीत्युक्त्या स्वभिन्नचेतनगतगुणदोषादिपरिशीलनौपयिकसार्वज्ञ्यशालिपुरुषधौरेय-तत्संकल्पविशेषयोस्तिरोधनानन्तरभावित्वं दुर्वचमिति सिद्धम् । एवञ्चावरणानन्तरमेव जीवेश्वरभेदकल्पनमद्वैतिसंमतं सूत्रकृतो नेष्टमिति सिद्ध्यति । इदञ्च तिरोधानं कर्माख्याविद्यावेष्टितत्वमेवेति, "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृपसर्वगा । संसारतापान् अखिलान् अवाप्नोत्यतिसंततान्" इति स्मृतमेव । एवं परमपुरुषाभिध्यानप्रयोज्यत्वे जीवनमोक्षयोः सूत्रस्पष्टप्रतिपादितत्वे सत्यपि—परमपुरुषादिरूपस्य ब्रह्मण एवाज्ञानरूपाविद्यया आवरणं बन्धः, परमपुरुषसंकल्पातिरिक्तया तन्निरपेक्षया जैवान्तःकरणवृत्त्या कयाचिन्मोक्ष इति वर्णनं सर्वमेतत्सूत्रनिरस्तम् । एवं सति कर्मरूपाविद्याधीनतिरोधानादिकं दुर्वचमिति शतभूषणीसंरम्भः कर्मानादित्वादेरपि स्वसंमतत्वात् स्वमतदूषण एव पर्यवस्यतीत्यनालोच्य क्रियमाणः यथावत्स्वरूपविवेचनविघातकाभिनिवेशोद्रेकमेव ग्रन्थकर्तुः प्रकटयेत्, नाप्रामाणिकासाम्प्रदायिकान्यादृशतिरोधानाद्युपपत्तिम् ।

अस्त्वेतत् । अद्वैतसिद्ध्युपगतं तिरोधानस्वरूपमादृत्य मुमुक्षते शतभूषणी । तदेव तु शोधनीयम्—आवरणतिरोधानादिशब्दार्थस्यानेकधा

विकल्प्यत्वेऽपि अप्रकाशपर्यवसानमन्तत आवश्यकम् । सोऽयमप्रकाशः नित्यप्रकाशरूपे चैतन्ये वक्तुमशक्य एव । जडस्य वस्तुनः प्रकाशो नाम ज्ञानसंबन्ध इति तदभावेऽप्रकाशः स्यात् । ज्ञानान्तरनिरपेक्षप्रकाशरूपे तु वस्तुनि, अस्ति वस्तु, न तु प्रकाशत इति न हि शक्यं वक्तुम्। अत एव श्रीभाष्ये प्रकाशाभावस्तिरोधानम् , तत्र सिद्धस्याभावश्च तदुच्छेद एवेति वस्त्वभावे पर्यवसानमापादितम् । व्यवहाराभावमात्रेणाप्रकाशो न युक्तोऽध्यवसातुम् । ज्ञातस्यापि लोके व्यवह्रियमाणत्वं नास्तीत्यस्य बहुलमुपलम्भात् । अतः सत्यामिच्छादिघटितसामग्र्यां व्यवहारविषयत्वार्हत्वादिरेव प्रकाश इति वक्तव्यम् । अर्हत्वञ्च जडे वस्तुनि ज्ञानविषयत्वरूपम् , अन्यत्र च तदसाधारणधर्म एव । ब्रह्मणि स्वयम्प्रकाशत्वञ्च कदाचिदेवं व्यवहारं जायमानमुपलक्ष्यैव संमन्तव्यम् । तत्र जीवब्रह्मैक्ये सति करणनिरपेक्षमहमिति भानं दृष्टमेव ब्रह्मस्वयम्प्रकाशत्वस्थापकं भविष्यति। न जातु कश्चित् नाहमिति विपर्येति, न वा अहमस्मि न वेति संदेग्धीति तत्स्वयम्प्रकाशता सूत्रभाष्येऽप्याहृतैव ।

एवं स्थिते अद्वैतसिद्धौ, नास्ति, न प्रकाशत इति वा व्यवहारः, अस्ति, प्रकाशत इति वा व्यवहारप्रतिबन्धश्चावरणकृत्यमिति कथमुच्यताम् । अहमस्मीति प्रकाशस्यैव सत्त्वात् । ननु परिपूर्णं ब्रह्म नास्तीति व्यवहारः, तादृशं ब्रह्मास्तीति व्यवहारप्रतिबन्धश्च ह्युच्यते, न तु अहंघटित इति चेत्—ब्रह्मेति बृहत्त्वबृंहणत्वविशिष्टं विवक्ष्यते, उत व्यक्तिमात्रम् । व्यक्तिमात्रस्याभावो नानुभविकः, न च सुवचः । विशिष्टस्य जीवं प्रति स्वयम्प्रकाशता तु न मतद्वयेऽपीष्टा । विशिष्टविवक्षापि दुष्करा, निर्विभागब्रह्मेति पूर्ववाक्यविरोधात् । एवं परिपूर्णं ब्रह्मेति परिपूर्णपदमपि व्यर्थम् । निर्विभागे पूर्णत्वापूर्णत्वरूपदशाद्वयाभावात्। कदा च परिपूर्णब्रह्मप्रकाशः ? मुक्ताविति चेत्—स्वयम्प्रकाशे ब्रह्मणीदानीं प्रकाशमानादन्यः क आकारस्तदा प्रकाशिष्यते, येनेदानीमपूर्णता स्यात् । सिद्धौ स्वयमेव, "निर्विभागचितः कथमेवं घटत" इति पूर्वपक्षमनूद्य, "आवरणमहिम्नैव" इति समाधानं समाधानदुर्वचत्वपर्याय एव । परिपूर्णाकारस्य मोक्षदशानुवृत्तत्वात् तदा

द्वैताभावेन तस्य ब्रह्मव्यक्त्यनतिरेकात् ब्रह्मव्यक्तेश्च संप्रत्यपि प्रकाशात् परिपूर्णा- कारस्य प्रकाश एवेदानीमुक्तो भवतीति कथं प्रकाशाप्रकाशौ मिथोविरुद्धौ युगप- दिति प्रश्ने किमिदं समाधानम्। अप्रकाशासंभवात् अप्रकाशहेतुत्वरूपमावरणत्वं न कस्यापीत्याक्षिपन्तं प्रति आवरणमहिम्नोपपद्यते इति कथं वक्तुं शक्यम्। चन्द्रिकाकारस्तु अध्यासभाष्यदर्शितपरिहाराभासवासनयेव महिम्नेत्यनेन; अनुभवबलेन स्वीकर्तव्यमिति विवक्षितं मन्यते। भावाभावयोर्विरुद्धयोरपि यदि स्वीकारः, किमपराद्धं जैनैस्तदनुयायिभिश्च भास्कराचार्यादिभिः।

एतेन नानन्दप्रकाश इदानीमित्यपि निरस्तम्। आनन्दस्यापि प्रकाश- मानत्वात्। न हि स्वस्यानानुकूल्यं स्वं प्रति कश्चित कदाचिदाकलयति। पूर्णानन्दाप्रकाश इति चेत्—पूर्णानन्दो वा पूर्णता वा चिदपेक्षया न भिद्यत इति चित्प्रकाशे कथं तदप्रकाशः। वस्तुतो भेदाभावेऽपि भेदोऽनादिः स्वीक्रियत इति चन्द्रिकाकारः। अभावे कथं स्वीकारः। आविद्यको भेदः काल्पनिक इति चेत—आविद्यकत्वे अनादित्वमसंभवि। भेदवत् अनादित्व- मपि कल्पितमिति चेत् – आविद्यकत्वमनादित्वञ्च मिथोविरोधात् कल्पयितुम- शक्यम्। मा भूदाविद्यकत्वमिति चेत् – दोषं विना कथं कल्पना? अकल्पित- मेवास्त्विति चेत् – भेदः कल्पितः, तस्यानादित्वं तु सत्यमित्यसंभवि। भेदस्य वा अस्य वा सत्यत्वे तु द्वैतप्रसङ्गः। एवं कल्पितस्य भेदस्य सद्भावेऽपि वस्तुतः पूर्णा- नन्दस्य चिन्मात्रस्य चैकतया वस्तुप्रकाशे सति आनन्दादि प्रकाश एव युक्तो ग्रही- तुम्। न च पूर्णत्वग्रहणमानुभविकम्। अतो भेदो वास्तव एव स्यात्। तथा च नाद्वैतसिद्धिः। प्रवाहानादिता पुनर्जन्यवस्तुन्येव संभाव्यते। अविद्याजीवयो- स्तथात्वे च आमोक्षाज्जीवैक्यासिद्ध्याऽकृताभ्यागमादि स्यात्। किञ्च अविद्यातो जीवभावः जीवभावे चाविद्येति प्रवाहानादित्वस्वीकारे, कर्मानादितां सर्वसंमतां शतभूषणी किमिति दूषयति? सूत्रभाष्यमपि हि तत्र प्रमाणयति, "शरीरसंबन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसंगादन्धपरम्परैषाऽनादित्वकल्पना" इति। अन्धपरम्परा चाविद्यापक्षेऽपि तुल्या। उत्तरभाष्यावतारणव्याजेन भामत्यां

भाष्यमिदं खण्डितमेव सम्यगिति किमनेन भाष्येण। 'नकर्मानादित्वात्' इति सूत्रविरुद्धश्चेदमितिवक्ष्यते।

एवं प्रतीतिमात्रशरीरकत्वान्मिथ्यावस्तुनः प्रतीत्यनुवृत्तौ निवृत्त्ययोगात् अज्ञानस्य केवलचिद्भास्यत्वस्वीकारे मोक्षे चित्सत्त्वेनाज्ञानानिवृत्तिप्रसङ्गात् कादाचित्काविद्यावृत्तिप्रतिबिम्बभूतसाक्षिभास्यत्वं सिद्धौ समर्थितम्। एवञ्च प्रतीतिमात्रशरीरस्य प्रतीत्यनुवृत्तौ निवृत्तेरिव प्रतीत्यभावे सद्भावस्याप्ययोगात् कादाचित्काविद्यावृत्तेः प्राक् तत्सद्भावायोगात् कथमनादित्वं घटते। एतेन, "न कदाचिदविद्याया अप्रतीत्यापत्तिः इष्टत्वात्" इति सिद्धिवाक्यमपि निरस्तम्।

एवं स्वयम्प्रकाशे वस्तुन्यावरणकृत्यस्याप्रकाशस्याभावोपपादनादेव आवरणसद्भावोऽपि निरस्तः। न प्रकाशत इति व्यवहारयोग्यता अज्ञानसंबन्धरूपा ह्यावरणमित्युच्यते। सति प्रकाशे कथमज्ञानसंबन्धः अनावरणभूताज्ञानसंबन्धस्तु स्यात्। तत्रापि तस्याज्ञानमिति कथं नामेति विचार्यम्। जीवाज्ञानहेतुप्रकृतिनियन्तृत्वरूपो भगवतः अविद्यासंबन्धः काममुच्यताम्। सर्वथा प्रकाशमानस्याप्रकाशौपयिकः किञ्चित्संबन्धः प्रकाशवेलायामेव कथ्यमानो न कथमपि कल्पते।

सविशेषस्वप्रकाशे विशेषांशावृतिर्भवेत्।
निर्विशेषजडत्वेऽपि स्यात् कदाचित् तदावृतिः॥
प्रकाशस्यानित्यतायामपि जात्वावृतिर्भवेत्।
निर्भेदनित्यप्राकाश्ये नैवावरणसंभवः॥
ज्ञानान्तराग्राह्यतया स्वप्रकाशावृतिर्यदि।
मुक्तावपि स्यात् सा किञ्च नान्यत् ज्ञानं प्रसिद्ध्यति॥
स्वप्रकाशमपि स्वस्माद् भिन्नं प्रत्यावृतं भवेत्।
न च वः सोऽस्ति जीवा हि कल्प्या आवरणे सति॥
सर्वश्च जीवः स्वस्मै हि सदाऽहमिति भासते।
अभास्यं किं परम्; सर्वं प्राहेदं शतदूषणी॥

तथा च, "पूर्णानन्दात्मना अप्रकाशः", "केन चन रूपेणाप्रकाशमानस्याप्यपरेण रूपेणाप्रकाशमानता", "सच्चिदानन्दरूपाणां प्रकाशमानानामप्यपरिच्छिन्नाकारेण अभिन्नरूपेण वा अज्ञानम्" इत्यादिशतभूषणीलिखितं निरस्तम् ।

अभातस्य प्रकाश्यस्य रूपस्य ब्रह्मणैक्यतः ।
तत्प्रकाशेन नियतः प्रकाशः स्यात्, न चेत्, द्विता ॥

अत एव कपिसंयोगतदभावयोरवच्छेदकभेदेन विरोधपरिहारवत् प्रकाशाज्ञानयोः स्वरूपपूर्णत्वाद्यंशभेदेनोपपत्तिरित्यपि निरस्तम् । अंशभेदस्यैवाभावात् । कल्पितो भेद इति चेत्—कल्पनानियामकस्यैव पृच्छ्यमानत्वात् । वस्तुतः शतभूषण्येव पक्षमिममुपेक्षत इत्यलम् ।

यत्तु कल्पितानन्दांशाभ्युपगमे न किञ्चिद्बाधकमिति — तन्न —

मुक्तिश्चेत् कल्पितज्ञानात् न तत्त्वज्ञानजा भवेत् ।
कल्पितांशाप्रकाशेष्टचा स्यान्मुक्तावावृतिः पुनः ।
पूर्णतायाः कल्पितत्वे तात्त्विकी स्यादपूर्णता ।
पूर्णत्वं धर्मिणैक्यं चेत् पूर्णताराहिती ध्रुवा ॥

समालोचने अधिष्ठानयाथात्म्याप्रकाशात् सत्त्वचित्त्वानन्दत्वरूपधर्माध्यासो ब्रह्मणि भवतीत्युक्तम् । तत्रायमध्यासो न तिरोधानम्; तस्य तिरोधानकार्यत्वात् । अतो याथात्म्याप्रकाशस्तिरोधानम् । न चाधिष्ठानापेक्षया तद्याथात्म्यमिति कश्चिद् धर्मो निर्विशेषेऽस्ति । तथाचाधिष्ठाने ब्रह्मणि स्वयम्प्रकाशमाने अप्रकाशाभावात् कुतस्तिरोधानम्? कुतस्तराञ्च सत्त्वादिधर्माध्यासः । यत् पुनरुपरि—असत्त्वाद्यापादकत्वमेव तिरोधानं नाम । सद्रूपेण ज्ञाने अभानापादकत्वमनानन्दतापादकत्वञ्च; सच्चिद्रूपेण भाने अनानन्दतापादकत्वमिति । तत्र किमिदमभानापादकत्वम्? भानरूपे ब्रह्मणि अभानतोत्पादकत्वासंभवात् न तावदुत्पादकत्वम् । नाप्यभानरूपताज्ञानजनकत्वम्; सद्रूपेण प्रकाशकाले इदं प्रकाशरूपमानन्दरूपञ्च न भवतीति ज्ञानस्यादर्शनात्—तस्य

मोक्षदशायां सत्त्वेन तदापि तिरोधानापत्तिः । अज्ञानसंबन्ध एवावरणम्; तत्कृत्यञ्च नास्तीत्यादिव्यवहार इत्यद्वैतसिद्धिं व्याकुर्वता चन्द्रिकाकारेण अन्ततः असत्त्वाद्यापादकत्वमेवावरणकृत्यमित्यभिमतं लक्ष्यते । तदेवं निरस्तम् । न चासत्त्वापादकत्वमात्रं नावरणकृत्यम्; किंतु असत्त्वापादकाज्ञानावच्छिन्नत्वम् । तच्च मोक्षे नास्तीति वाच्यम्—अज्ञानावच्छिन्नत्वस्याज्ञानसबन्धरूपस्यावरणपदार्थत्वेन सिद्ध्युक्ततया तत्कृत्यं किमितिविचारे असत्त्वापादनं तत्कृत्यमित्येव वक्तव्यत्वात्, तस्य च विकल्प्य दूषितत्वात् । न च मोक्षदशायामपि वर्तमानायामसत्त्वापत्तौ अज्ञानस्य हेतुत्वं संभवति । अपिच यदा किञ्चिद्वस्तु, अस्ति भाति प्रियमिति गृह्यते, तदा कथमसत्त्वाभानानानन्दतापादकत्वम् । ब्रह्मणः परिपूर्णाकारेणाग्रहणादिदमिति चेत्—निर्विशेषे को नाम परिपूर्णाकारः । त्रैकालिकसत्त्वादिकं परिपूर्णाकार इति पक्षे तादृशाज्ञानस्य कालादिमिथ्यावस्तुविषयकतया तत्त्वज्ञानत्वासंभवोऽपि । परिपूर्णाकारस्य मोक्षदशायामपीष्टत्वेन शुद्धचिन्मात्ररूपत्वस्यैव सिद्ध्युक्तत्वेनान्ततो धर्मिप्रकाश एव परिपूर्णाकारप्रकाश इति स इदानीमप्यविशिष्ट एव । अतएवाद्वैतसिद्ध्युक्तम्, "न च निर्विभागचितः" इत्याशङ्कापूर्वकम्, "आवरणमहिम्नैव....अस्ति प्रकाशत इतिव्यवहारप्रतिबन्धश्च । अध्यासाधिष्ठानत्वादिना प्रकाशमानता चाविरुद्धा" इति परिहारमनाद्रियमाणेन चन्द्रिकाकारेण, "इदञ्च परलालनम् । वस्तुतः प्रकाशमानेऽप्यात्मनि उक्तरीत्या अज्ञानतदभावविषययोर्व्यपहारयोर्भावाभावौ न विरुद्धौ । अखण्डाकारचरमवृत्तेरेव विरोधित्वादित्यसकृदुक्तम्" इत्युक्तम् । स्वयम्प्रकाशस्यापि वृत्तिसापेक्षत्वे स्वयम्प्रकाशत्वमेव न सिध्यतीति एतत्खण्डनमपि प्रपञ्चितमेवेत्यलं पिष्टपेषेण ।

यदपि—यथा विशिष्टाद्वैतिमते जीवात्मस्वरूपस्य नित्यस्फुरणेऽपि देहात्मभ्रमः, तथा ब्रह्मस्फुरणेऽपि प्रपञ्चभ्रम इति—तदपि न—जीवात्मगताणुत्वज्ञानानन्दत्वादिधर्मविषयकज्ञानस्यैव तद्भ्रमनिवर्तकत्वात् । ननु नित्यत्वाणुत्वादिधर्मविषयकज्ञानप्रसरशालिनामपि परमात्मसाक्षात्कारपर्यन्तं देहात्म-

भ्रमः कथमनुवर्तत इति चेत्—परमात्मसाक्षात्काराभावेऽपि केवलनिष्ठानां देहात्मभ्रमनिवृत्तिरस्त्येव। अन्येषां ज्ञानप्रसरस्य क्षणिकतया तदातदा विवेकसमयसमुत्पन्नस्याप्यनुवृत्त्यभावे देहात्मभ्रमोत्मेष उपपद्यत एव। न हि शास्त्राधीनं तत्त्वज्ञानमेकमेव आमोक्षमनुवर्तत इति स्वीकृतमस्ति। अतो विवेकविरहदशायां भ्रमस्य, अन्यदा तदभावस्य चोपपत्तिः। भोजन-शयनादिप्रवृत्तिस्तु आत्मक्षेममुख्यसाधनभूतदेहसंरक्षणद्वारा देहविलक्षणजीवा-भीष्टपुरुषार्थप्राप्त्यर्थमेव परमास्तिकानामुपपद्यते।

ननु ब्रह्मतिरोधानं नाम ब्रह्मविषयकवृत्तिज्ञानप्रतिबन्ध इति चेन्न—अज्ञानस्य वृत्तिज्ञानकारणस्य तत्प्रतिबन्धकत्वायोगात्। अन्यथा यावदज्ञान-सत्तं वृत्त्यनुत्पत्त्या तन्निवृत्तिरेव न स्यात्। न च वेदान्तवाक्यश्रवणपर्यन्त-मेव तस्य तिरोधायकत्वमिति वाच्यम्—तथासति तच्छ्रवणादिरूपकारणाभावा-देव वृत्त्यनुत्पादोपपत्तौ अज्ञानस्य वृत्तिप्रतिबन्धकत्वे प्रमाणाभावात्। न च शास्त्रश्रवणविरोधिविविधतृष्णाविधायिविषयव्रातोपादानत्वमेवाज्ञानगतं तिरोधा-यकत्वमिति वाच्यम्—तदापि प्रतिबन्धकसत्त्वेन कदापि शास्त्रश्रवणे प्रवृत्त्ययो-गात्। तस्मात् तिरोधायकत्वं कर्मविशेषाणामेव स्वीकर्तुमुचितम्; न तु भोगवत् अपवर्गं प्रत्यपि प्रयोजकस्याज्ञानस्य तत् साक्षात्। ज्ञानसामग्रीविघट-कत्वमेव च लोकदृष्टं तिरोधायकत्वम्। अनाद्यविद्यासंबन्धविशिष्टस्य ब्रह्मणोऽन्तःकरणाद्युत्पत्तेः प्राक् ज्ञानसामग्र्यभावादेव तन्नोपपद्यते। यदि पुनरविद्यावत् अविद्यावृत्तिरप्यनादिरिति मन्यते, तर्हि 'जीव ईश' इत्यादिना षट्कमात्रपरिगणनं विरुद्ध्यते; सप्तम्या अस्याः वृत्तेरपि गणयितव्यत्वात्। एवमपसिद्धान्तश्च।

एवं कल्पकदोषान्तरापत्त्याऽप्यज्ञानासिद्धिः। स्वस्यैव स्वकल्प-कत्वमसंभवि। तत्स्वीकारे घटादिरपि स्वयमेव स्वकल्पक इति तत्राविद्या-रूपदोषापेक्षा न स्यात्। प्रातिभासिकपदार्थप्रतीतिरपि दोषनिरपेक्षं प्रतिभा-सिकपदार्थबलादेव स्यात्। किञ्च शुक्तिरूप्यादिस्थले भ्रमविषयशुक्तिरू-

प्यहेतुर्दोष एव भ्रमहेतुत्वेन स्वीकृत इति शुक्तिरूप्यदृष्टान्तेनानिर्वचनीयं जगदातिष्ठमानैः प्रपञ्चरूपविषयहेतोर्दोषस्यैव प्रपञ्चभ्रमहेतुत्वं वक्तव्यम् । तद्वदेव दोषस्य मिथ्यात्वेपि दोषरूपविषयहेतोरेव दोषभ्रमहेतुत्वं वक्तव्यम् । न च स्वात्मकविषयहेतुत्वं स्वस्यैव भवितुमर्हति ; अत्यन्ताभेदे कार्यकारणभावस्यायोगात् । अतो दोषमिथ्यात्वे दोषहेतुदोषान्तरस्वीकारादनादित्वं दुर्घटमिति । ननु दुर्घटत्वमविद्याया भूषणमिति चेत्—कस्य वा तन्न भूषणम् ; जगतोऽप्यविद्याकार्यतया अविद्यावदेव दुर्घटत्वं भूषणं स्यात् । एवञ्च यत्रयत्र यद्यत् अनुपपन्नमिव लक्ष्यते, तत्र तत्र दुर्घटत्वं भूषणमेवेति यथादृष्टं सर्वं सर्वत्र स्वीकार्यमिति क्वचिदपि पूर्वपक्षसिद्धान्तप्रवर्तनमेव न स्यात् । दुर्घटत्वं भूषणमिति वादश्च सिद्धावेव निरस्तः, "न चाविद्यायामनुपपत्तिरलङ्कारः । अनुपपत्तिमात्रं नालङ्कारः ; किंतु सत्त्वादिप्रापकयुक्तावनुपपत्तिः । अन्यथा वादिवचसोऽनवकाशापत्तेः" इति । तथाच तस्यतस्य पदार्थस्य तदितरपदार्थत्वानुपपत्तिरलङ्कार एवेति कोऽत्र विशेषः । अतो नाभ्युपगतांशासंभवोद्भावने इष्टापत्तिमुखेन परिहारः साधुरिति । एतेन प्रपञ्चस्याविद्यामूलकत्व इवाविद्याया अविद्यान्तरमूलकत्वे प्रमाणाभावान्न दोषान्तरकल्पनमिति समालोचनोक्तमपि शमितम् । दोषगतमिथ्यात्वस्यैव दोषसद्भावे प्रमाणत्वादिति ।

चण्डमारुतोक्तदूषणजालोन्मोचनाय लघु प्रयस्यता च यदुक्तम्—अनादिपदार्थानामज्ञानसंबन्धरूपावरणोप्रयुक्तोत्पत्तिकत्वाभावेऽपि साद्यनादिसाधारणविवर्तमात्रस्याज्ञानाभावव्यापकाभावप्रतियोगित्वरूपमज्ञानप्रयुक्तत्वमस्तीति—तदपि न—जीवादृष्टेश्वरकालानां भवत्संमताज्ञानस्य च कल्पनासामान्यकारणताया आनुभविकत्वात् जीवेश्वराज्ञानादीनां कल्पितत्वे तदुपपादनायोगात् । नहि अज्ञानं यदि न स्यात् अज्ञानं न स्यात्, ईशो यदि न स्यात् ईशो न स्यात्, जीवो यदि न स्यात् जीवो न स्यादिति तस्यतस्यतत्तत्प्रयुक्तत्वं सुवचम् । अनादिषु विवर्तवाचोयुक्तिरप्येवमुपेक्ष्या ।

अज्ञानसंबन्धरूपावरणान्तर्गतः संबन्धश्च न संयोगादिः ; परमार्थापरमार्थयोस्तदयोगात् । विषयविषयिभावरूप एव चेष्टः । तत्र विषयत्वं ब्रह्मस्वरूपस्य वा तदन्यस्य वा । नाद्यः, तस्य प्रकाशमानत्वात् । प्रकाशमानस्याप्यज्ञानविषयत्वस्वीकारे साक्षिभास्यं सुखाद्यप्यज्ञानविषयः स्यात्, नाहमस्मीति विपर्ययो वा अहमस्मि न वेति संशयो वा स्यात् । पूर्णापरिच्छिन्नानन्दांशविषयकत्वमुपेक्ष्य केवलचिदानन्दविषयेऽप्यप्रकाशव्यवहारश्च स्यात् । नान्त्यः, ब्रह्मस्वरूपातिरिक्ते घटपटादौ जडे साक्षादज्ञानविषयत्वासंभवरूपसिद्धान्तभङ्गापत्तेः । किञ्च लोके आवृतत्वादिदं न ज्ञायत इति अज्ञानसंबन्धं प्रति कारणतयैवावरणस्य निर्देशः । न तु द्वयोरप्यैक्यमिति अज्ञानातिरिक्तमेव किञ्चिदावारकं कल्पनीयम् । तत्र न ज्ञायत इत्यस्य ज्ञानाभावार्थकत्वे तु सर्वत्राविशेष इति किं भावरूपाज्ञानेन ।

किञ्च न ज्ञायते, न जानामीत्यादौ भावरूपाज्ञानभानमयुक्तम्—ज्ञानसामान्यविरोध्यर्थकत्वे सत्येव न जानामीत्येवं प्रयोगौचित्यात् । भावरूपाज्ञानञ्च न ज्ञानसामान्यविरोधि । ब्रह्मरूपे ज्ञाने सत्येव सह सत्त्वात् । ब्रह्मविषयकवृत्तिज्ञानमात्रविरोधित्वस्यैवाज्ञाने संमतत्वात् । यत्पुनरद्वैतसिद्धावुक्तम्—घटमात्रविरोधिनो घटाभावस्य भावसामान्यविरोधित्वेनाभावत्वेन प्रतीतिवत् वृत्तिज्ञानरूपविशेषविरोधिन एवाज्ञानस्य ज्ञानसामान्यविरोधित्वेनाज्ञानत्वेन प्रतीतिसंभव इति—तन्न; घटाभावस्य घटमात्रविरोधिनो भावसामान्यविरोधित्वायोगात् । घटाभावस्यात्यन्ताभावरूपस्य घटमात्रेण विरोधो हि तदसामानाधिकरण्यम् । न तस्य भावसामान्यविरोधित्वं तादृशं भवितुमर्हति; घटाभावस्य पटादिरूपभावसामानाधिकरण्यसत्त्वात् । अभावस्य च भावसामान्यविरोधित्वं भावसामान्यतादात्म्याभावः । इदञ्च तादात्म्याभावरूपविरोधित्वं घटाभावस्यापि भावसामान्येन सहास्तीति अभाव इति तस्य प्रतीतिर्युज्यते । इह तु वृत्तिज्ञानविरोधिनोऽज्ञानस्य यादृशं तद् विरोधित्वम् । तादृशं न ज्ञानसामान्यं प्रत्यस्ति । ज्ञानभिन्नत्वरूपमज्ञानत्वं तु 'न जाना-

भी'त्यादावविवक्षितम्—तस्य ज्ञानसत्ताप्रतिबन्धकत्वासंभवात् । अतो वैषम्यात् अज्ञानपदेन *तत्प्रतीत्ययोग एव । घटो नास्तीत्यादौ च नञा भावभिन्नत्वरूपाभावत्वाश्रय उच्यते । तस्य घटप्रतियोगिकत्वं वा घटसत्ताश्रयत्वप्रतियोगिकत्वं वा समभिव्याहरवेद्यम् । तद्वत् घटं न जानामीत्यत्र कथं बोधः । अभावपदस्य भावभिन्नार्थकत्ववत् अज्ञानपदस्य ज्ञानभिन्नार्थकत्वे अज्ञानमस्तीत्येतावता ज्ञानस्याभावो न सिद्ध्येदित्युक्तम् । घटस्याज्ञानमित्युक्तौ यः कश्चिदर्थोऽस्तु; न जानामीत्यत्र कथम्? घटमितिद्वितीयायाः क्रिययैवान्वयात् अज्ञाने तदनन्वयात् । तत्र नञः न पचतीत्यादाविवात्यन्ताभाव एव व्युत्पन्नतया न जानामीत्यनेन ज्ञानभिन्नेति वा ज्ञानविरोधीति वाऽर्थस्य प्रतीत्यसंभवात् । नञर्थे घटमित्यस्यानन्वयाच्च । अत एव—नञ्पदमज्ञानपरम्; तत्र घटविषयकत्वं घटमितिपदोक्तम् । जानामीत्यनेन च ज्ञानविरोधित्वं वा भिन्नत्वं वा प्रत्याय्यते—इति न शङ्क्यम् । नञः अज्ञानार्थकत्वस्य लक्षणामन्तरेणासिद्धेः । असिद्धत्वाच्चाज्ञानस्य लक्षणया तद्ग्रहणमशक्यम् । ज्ञाधात्वर्थस्य अज्ञानस्य च प्रतियोग्यनुयोगिभावरूपः संबन्धोऽपि न लोकक्लृप्त इति तत्र नानुयोगितासंबन्धेन ज्ञाधात्वर्थान्वयो भवितुमर्हति । अथ नञा भिन्नत्वविशिष्टाज्ञानं लक्ष्यते; भेदांशे ज्ञानान्वय इत्युक्तावप्युक्तानुपपत्तिपौकल्यमेव । क्वचित् भावात्मकाभावविषयकत्वे तु अभावत्वमनुयोगिताविशेष इत्यन्यत् । अतो ज्ञानसामान्यप्रतियोगिकत्वाभावे अज्ञानमिति, न जानामीति च प्रयोक्तुमशक्यत्वात् ज्ञानपदस्य वृत्तिज्ञान एव रूढिरित्युक्तावपि घटो नास्तीत्यत्रेव बोधनिर्वाहायोगस्योक्तत्वात विलक्षणमज्ञानमज्ञानपदादिना दुर्वचमेव । वृत्तिज्ञानभिन्नत्वस्य ब्रह्मघटपटादावप्यतिप्रसक्तत्वात् । एवमपि नञर्थस्याज्ञानस्य घटादिकर्मकत्वपुरुषकर्तृकत्वाद्यन्वये व्युत्पत्तेरक्लृप्तत्वात् । अज्ञानकल्पनावत्, अन्यस्य सर्वस्याप्यपूर्वतया कल्पनस्य चात्यन्तजघन्यत्वात् । एवं वृत्तिज्ञानविरोधित्वमज्ञानत्वमित्युक्तावपि जडविषये अज्ञानस्यानङ्गीकारात् घटादिवृत्तिज्ञानसाधारणज्ञानसामान्यविरोध्यप्रसिद्धिः; भावरूपाज्ञानस्य ब्रह्मसाक्षात्काररूपवृत्तिमात्रनिवर्त्यतया घटादि-

वृत्तिविरोधित्वस्य घटादिसंशयविपर्ययसाधारणतया च वृत्तिज्ञानसामान्यविरोधित्वं दुर्वचम्। अज्ञाने घटकर्मकत्वाद्यसिद्ध्या व्युत्पत्त्यन्तरकल्पनादिप्रयुक्तगौरवबाहुल्यमपि प्रागुक्तमविशिष्टम्। अपि च वृत्तेरेवाज्ञानविरोधित्वे आत्मनः स्वप्रकाशत्वे प्रमाणं न भवेत्। अखण्डात्मनः अखण्डाकारवृत्त्यैव भानम्, जीवभानश्च अहमाकाराविद्यावृत्तिवशात्, एवमात्मगतसुखत्वादेरपीति स्थिते वृत्तिरेव सर्ववस्तुप्रकाशिकेति वृत्त्यतिरिक्तप्रकाशे प्रमाणाभावात् घटादिवत् ब्रह्मणोऽपि जडत्वमेवेति।

यत्तु विषयनिरूप्यं हि ज्ञानमित्यस्य सर्वप्रसिद्धस्य चिन्तामणिग्रन्थप्रामाण्यवादपञ्चमविप्रतिपत्तिपर्यन्तगमनेन महता प्रयासेन संवादप्रदर्शनेन अज्ञानस्यापि तत्समानयोगक्षेमत्वोपपादनम्—तेन किं सेत्स्यति। सामान्यनिश्चयेन विशेषांशे अज्ञानमिति वादखण्डनमिति चेत्—तत् किं यदंशे निश्चयः, तदंशेऽप्यज्ञानं स्यादिति खण्डयितुर्भावः, उत विशेषस्यापि गृहीतत्वादज्ञानं न भवतीति। नाद्यः, तथासति अखण्डाकारवृत्त्यापि ब्रह्माज्ञानानिवृत्तिप्रसङ्गात्। नान्त्यः, विशेषप्रकाशे सति असति च कथं तद्विशिष्टाज्ञानभानमित्यस्य प्रश्नस्य भावरूपाज्ञानवादिपक्षेऽपि तुल्यत्वात्। यथा चेदं तुल्यत्वम्, यथा च ज्ञानाभावरूपाज्ञानपक्ष एव घटमहं न जानामीत्यस्यात्यन्तश्लिष्टत्वम्, तत् सर्वं भावरूपाज्ञानखण्डने विस्तरेण व्युत्पादयिष्यामः।

•

स्वयम्प्रकाशत्वतिरोहितत्वनिर्भेदतात्मैक्यचतुष्टयस्य।
अशक्यता संघटनस्य नूनमद्वैतिनां हन्त तिरोहितैव॥

शुभमस्तु

——

श्रीः

# आत्माद्वैतभङ्गप्रसाधनम्

योऽसौ वर्गश एव शक्यगणनान् संख्यातिगान् आत्मनः
संरक्षन् उचितैर्विभूतियुगले भुङ्क्ते यथार्हं रसम् ।
सोऽयं नः परिपातु सर्वचिदचिच्छेषित्वमुख्यैर्गुणैः
साम्यं संश्रितया श्रिया परमया वक्षःस्थया लक्षितः ॥

आत्माद्वैतमातिष्ठमानैः प्रत्यक्षं प्रमाणं तत्र दुर्वचमिति स्थितमेव; आत्मन एवाप्रत्यक्षत्वात् । देहात्मवादे ह्यात्मप्रत्यक्षं निर्विचिकित्सम् । तत्राद्वैतप्रसक्तिरेव न । देहातिरिक्तस्त्वात्मा अहम्प्रत्ययगोचरत्वात् प्रत्यक्ष इति वक्तव्यम् । तत्रापि अहम्प्रत्ययस्य पूतिकूश्माण्डायिततत्वं भामत्यां वर्णितमिति नाद्वैतिन आत्मप्रत्यक्षं स्वरसतो वक्तुमर्हन्ति । अस्तु कामं मतान्तरेण आत्मा प्रत्यक्ष इति—अथाप्यात्माद्वैतं न प्रत्यक्ष्यम्; नीलघटयोरैक्यमितिवत् अनयोरद्वैतमित्यनेकग्रहणेनाद्वैतस्योपपाद्यतया स्वस्येव परस्य स्वेनाप्रत्यक्षिततया तदद्वैतग्रहणायोगात् । अतोऽनुमानमेव, "प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्" इति कणाददर्शितेन पथा स्वीकृत्य पर आत्मा स्थाप्यः । तदा च स्वयंप्रत्यक्षविषयात् प्रत्यक्षज्ञानादिगुणात् अन्यत्वेन स्वाप्रत्यक्षः स्वाप्रत्यक्षैः परशरीरचेष्टादर्शनानुमितैर्ज्ञानादिभिरनुमीयमान आत्मा धर्मिग्राहकप्रमाणेन भिन्नत्वेनैवावधार्यते; एवं तत्तद्देहभेदेन व्यवस्थितविचित्रगुणमूलमनुमीयमाना आत्मानो मिथो भिन्नत्वेनावधार्यन्त इति तद्विरोधादात्माद्वैतमनुमातुमेव न शक्यम् । कल्पनालाघवादात्मैक्यमिति वादश्च आत्ममात्रे सिद्धे भेदे चासिद्धे अनुमातव्ये सति प्रसरेत् । तथा प्रसरन्नपि प्रमाणान्तररुद्धश्चेत्, न प्राणिष्यति । इह पुनरात्मानोऽनुमानकाल एव विभिन्नत्वेनैवावधार्यन्त इति नाद्वैतप्रसक्तिः । लाघवमात्रस्य गमकत्वे एकात्मनोऽप्यभावः स्यात् ।

एवञ्च विगीतानि शरीराणि मयैवात्मवन्ति शरीरत्वात् संप्रतिपन्नमच्छरीरवत् इत्यादीन्यनुमानानि कालात्ययापदिष्टानि। अन्यथा विगीतं धनं मदीयमित्याद्यनुमानप्रसरेण लोकक्षोभोऽपि स्यात्। एवम्—इमे पदार्थाः घटाः प्रमेयत्वात् संप्रतिपन्नघटवत् इत्याद्यप्यनुमीयेत। एवमत्रानुमाने मयैवेति किं विवक्षितमिति विचारे अहंकाररूपाहमर्थग्रहणायोगात् तावता आत्मैक्यस्थापनासिद्ध्यभावात् संविन्मात्रग्रहणं शतभूषणी मन्यते। तच्चाप्रसिद्धमित्यादिना दूषितमेव शतदूषण्याम्। अन्यच्च विचार्यम्—अत्र आत्मवन्तीत्यस्य कोऽर्थः? किं चेष्टेन्द्रियार्थाश्रयः शरीरमित्याक्षपादलक्षणमभिमत्य मदधीनचेष्टानि मदीयेन्द्रियाश्रयभूतानि मत्सुखदुःखहेतुभूतानीत्यर्थ इष्टः, उत मन्नियम्यानि मत्स्वामिकानि मद्धार्याणीत्येवम्, अथवा मयि कल्पितानीति। प्रथमद्वितीययोः चेष्टायाः प्रयत्नसाध्यत्वादिचिन्तायां विशिष्टरूप एव कश्चित् मयेति विवक्षित इति विज्ञायते, न तु संविन्मात्रमिति तथा विवक्षणमनुपपन्नम्। तृतीयस्तु न; संप्रतिपन्नशरीरस्यावास्तवतायाः संविन्मात्रे कल्पिततायाः असिद्धत्वाद् बाधितत्वाच्च तन्निदर्शनेनान्यत्र कल्पितत्वानुमानायोगात्। विशिष्टस्य संविन्मात्रविलक्षणस्य मयेति ग्रहणे तु व्यवहारदशायां भेदस्य स्थित्या सर्वशरीरानुवृत्तैकविशिष्टास्मदर्थाभावेन बाध एव। विस्तरेण चोपक्रमे व्यावहारिको भेदः सूत्रकारादिसर्वसंमत इति भवतैवात्रोपपादितमधिकप्रसंगादिति तद्विरोधः स्यादेव।

तत्र, "अंशो नानाव्यपदेशात्—" इति सूत्रार्थवर्णनमपि विचार्यम्। अत्रोपात्तेषु सर्वेष्वधिकरणेषु विचार्यस्य बहोः सद्भावेऽपि प्रथमोपात्तमंशसूत्रमेवांशतो विचार्य स्थालीपुलाकनयं दर्शयामः। अंशाधिकरणे भाष्यगतिरन्या, भामतीगतिरपरा। परिमलेऽपि टीकानुसारेण भाष्यानुसारेण चार्थभेद एवादर्शि। जीवेश्वरयोरुपकार्योपकारकभावस्य प्रागुक्तत्वात् तस्य च संबन्धाधीनत्वात् संबन्धो विचार्यत इति भाष्यगतिः। भामतीगतिस्तु—'तस्माज्जीवा एव परमार्थसन्तः न ब्रह्माद्वयम्' इति ब्रह्मैवाक्षिप्य स्थाप्यत इति। तत्र प्रथमे

जीवेश्वरयोः संबन्धे विचार्यमाणे जीवब्रह्मणोर्भेदाभेदवचनमूलांशांशिभाववर्णनमात्रप्रश्ने कोविदाराख्यानम्। गुरुशिष्ययोः राजभृत्ययोश्च लोक इव जीवेश्वरयोरपि स्वामिभृत्यभावनियन्तृनियम्यभावादेः संभवात् प्रामाणिकत्वाच्च तदनङ्गीकारेणाग्निविष्फुलिङ्गसाम्यमात्रवर्णनं भाष्ये कृतमप्ययुक्तम्; अंशांशिभावस्येव तस्य सर्वस्य काल्पनिकस्य संभवात्। तस्मात् स्वामिभृत्यभावाद्यपलापो न भाष्यचिकीर्षितः; किंतु पूर्वोक्तनियन्तृनियम्यभावादिदर्शिना जीवेश्वरयोरत्यन्तभेदे शङ्किते, तत्त्वमस्यादिवाक्यदर्शिना च पूर्वोक्तनियन्तृनियम्यभावाद्यसंभवे शङ्किते उभयपरिहाराय जीवेश्वरयोरुभयोरपि ब्रह्मांशत्वं भेदाभेदश्रुतिबलादत्राधिकरणे स्थाप्यत इति वक्तव्यम्। भाष्ये तु भेदश्रुतिं जीवेश्वरविषयाम्, अभेदश्रुतिं जीवब्रह्मविषयाञ्चोदाहृत्य क्षोभ एवापादितः, भवन्मते ब्रह्मेश्वरयोरस्मन्मत इवात्यन्ताभेदाभावात्। जीवब्रह्मणी स्वीकृत्य तत्र जीवे ब्रह्मांशत्वस्थापने सूत्रे स्पष्टं प्रतीयमाने तद्विहाय ब्रह्मसद्भावपरत्ववर्णनं भामतीकृतमुदक्षरम्। मूलपक्षे व्याख्यापक्षे च सूत्रोक्तमंशत्वं त्यक्तमेव। अंश इवांश इति गौणार्थवर्णनं तु मतदौर्बल्यमेवावेदयति। निरवयवत्वात् ब्रह्मणः अग्नेर्विष्फुलिङ्गवद् वास्तवांशभावाभावादंशपदं गौणमिति भाष्यकारः। भवता तु भेदस्य काल्पनिकत्वात् अंशत्वमौपचारिकमित्युच्यते। सूत्रकृता नानात्वव्यपदेशस्य अन्यथेत्युक्तानानात्वव्यपदेशस्येव मुख्यार्थताया आवश्यकत्वे सूच्यमाने तद्विरोधेन भेदश्रुतीनामनुवादरूपतामसत्यार्थपरताञ्चाश्रित्या भेदश्रुतिमात्ररक्षणमप्ययुक्तम्। जीवेश्वरयोरौपचारिके भेदे सत्यपि सर्वज्ञेनेश्वरेण जीवाभिन्नब्रह्माभिन्ने स्वस्मिन् जीवाभेदमपि विदुषा स्वगततयैव जीवदुःखानां साक्षात्करणमवर्जनीयमिति जीवादधिकदुःख एव स्यादीश्वरः। 'प्रकाशादिवन्नैवं परः' इति सूत्रविवक्षितस्तत्परिहारश्च न घटते। सौरप्रकाशस्य सर्वव्यापिनोऽङ्गुल्याद्युपाधिवशाद्वक्रादिभावो यथा न परमार्थः, तथेति खल्वभिहितम्। यद्ययं वक्रभावोऽङ्गुलिमात्रगतः, तर्ह्यत्र तथा जीवेऽपि दुःखाभाव एव। यदि सौरप्रकाशगतः, तर्हीश्वरेऽपि तथा दुःखं प्राप्तमेवेति कथं जीवेश्वरवैलक्षण्यम्। एतेन—

घटादिषु गच्छत्सु यथा नाकाशो गच्छतीति निदर्शनमपि निरस्तम् । बिम्बप्रतिबिम्बभावस्तु न सूत्रारूढः । न वा प्रतिबिम्बमिति किञ्चिदुपाधिबिम्बोभयातिरिक्तमस्ति । अथोपाधिगतमेव सुखदुःखादिकमिति चेत्—तर्हि कर्तृत्वभोक्तृत्वाश्रयाणां जीवरूपोपाधीनां कारयितृत्वभोजयितृत्वाश्रयस्येश्वररूपोपाधेश्च भेदस्य निर्विवादतया किमर्थमिदमधिकरणम् । उपाधिगतत्वव्युत्पादनमेव चेच्चिकीर्षितम्, आत्मनि निर्विकारे कस्याप्यंशस्य निरूपणासंभवात् आत्मनो बन्धमोक्षौ नोपपद्येयाताम् । भेदश्रुतीनामुपाधिमात्रविषयत्वात् अभेदश्रुतीनामात्मस्वरूपमात्रविषयत्वात् उभयस्यैकत्रासमन्वयात् जीवे अंशत्ववर्णनस्यानपेक्षितत्वाच्चेदमनुपपन्नमेव । यदि दुःखाभिमानादिकं कथञ्चिज्जीवे आत्मन्यानीयेत बन्धोपपत्तये, तर्हि निरवयवे आत्मनि समानीतं तत् ईश्वरं वा ब्रह्म वा न स्पृशतीति न शक्यं वक्तुमिति ध्रुवमीश्वरः समस्तजीवगतवेदनानुभावी स्यात्, एवं जीवोऽपि स्वस्मिन् सर्वं प्रतिसंदध्यादिति प्राप्नोत्येवेत्यलंप्रासङ्गिक विचारेण ।

यत्तु सुषुप्तादेरनुज्ञापरिहाराधिकारो नास्ति, किंतु जाग्रत एवेति—तत्र कोऽयमधिकारः । यदि कर्तृत्वम्, तत् सुषुप्ते अप्रसक्तं नैव प्रतिषेध्यम् । यदि अनुज्ञापरिहारविषयत्वं तत्, तर्हि सुषुप्तेऽप्यस्त्येव । सुषुप्तेपि जाग्रतीव तस्मिन् अन्यैरनुज्ञापरिहारयोः क्रियमाणत्वात् । यच्च मुक्तात्मनां स्वतोऽणुत्वेऽपि धर्मभूतज्ञानाकारेण सर्वगतत्वात् सर्वभोगादिसांकर्यापत्तिरिति—तत्र केयमापत्तिः । किं सर्वविषयकभोगापत्तिः । सा केनचित्प्रकारेणास्त्येव; भोगमात्रसाम्यलिङ्गाच्चेति सूत्रितत्वात् । यद्यन्यनिष्ठो यो भोगः, तद्व्यक्तेरपि जीवान्तरे आपत्तिरिति—तन्न भवति, धर्मभूतज्ञानसर्वगतत्वेन तदापादनासंभवात्, ज्ञानव्यक्तिभेदात् । न हि नैयायिकमते व्योमदिक्कालात्मनां विभुत्वमिति एकगतस्यान्यत्रापत्तिर्भवति । जीवापृथक्सिद्धानां भौतिकशरीराणां परमात्मापृथक्सिद्धत्वं न संभवतीत्यपि न सत्—प्रकृतिद्रव्यस्य परमात्मशरीरत्वे तत्परिणामभूतानां भूतानामिव भौतिकस्यापि तदपृथक्सिद्धिवारणायोगात् । अपृथक्सिद्धं हि न पृथक्सिद्धं भवितुमर्हति । श्रुतिश्च, 'तस्माद्वा एतस्मादात्मन आकाशः

संभूत' इत्यारभ्य, 'अन्नात् पुरुष' इत्यन्नरसमयं शरीरमात्मजन्यं प्रदर्श्य तत एव शरीरं प्रति ब्रह्मण आत्मत्वं सिद्धं कृत्वा; 'तस्यैष एव शारीर आत्मा यः पूर्वस्येति अन्नमयं प्रति आत्मत्वमनुवदति। स्वमते जीवात्मपरमात्मनोरैक्यात् जीवात्माधिष्ठितानां शरीराणां परमात्माधिष्ठितत्वोक्तिर्न विरोधिनीति लिखता तत एवैक्यात् जीवात्मनो दुःखित्वे परमात्मनोपि दुखित्वमायातीत्युच्यमानं परं कथं न मृष्यते। ईश्वरत्वावस्थया परमात्मानं गृहीत्वा दुःखित्ववर्णनमयुक्तमिति चेत्, तर्हि तयाऽवस्थया तच्छरीरत्वं जीवशरीरेषु वर्ण्यमानं भवन्मतेऽप्ययुक्तमेव स्यात्। एकं प्रति शरीरस्यापि तन्नियन्तृभूतान्यशरीरत्वे प्रमाणसिद्धे किं बाधकमिति चेत्—तुल्यम्। शरीरत्वं कल्पनामात्रमिति चेत्—वास्तवः क आकारोऽस्ति भवताम्।

ऐकात्म्याभ्युपगमे च कर्मव्यतिकरः फलव्यतिकरश्च स्याताम्। एकेन जीवेन कृतमन्येन जीवेन कृतमेवेति अन्योऽपि फलभाक् भवेत्। यत्तु "असंततेश्चाव्यतिकरः" इति सूत्रेण शङ्केयं परिहृतेति—सत्यं परिहृता। परिहारश्चायं स्वाभाविकेऽणुत्वे संमन्यमाने संगच्छते। औपाधिके त्वणुत्वे विभोर्निरवयवस्यात्मनः सर्वोपाधिसंबन्धात् सर्वोपाधिमूलकं कर्तृत्वं भोक्तृत्वञ्चात्मन्यक्षतम्। तत्र यथा भौमशरीरेणात्मना कृतं दिव्यशरीरःसन् भुङ्क्ते, तथैवैकजीवोपाध्यवच्छिन्ननिष्पादितस्य कर्मणः फलमन्यजीवोपाध्यवच्छिन्नः स एव निर्विघातमनुभवेत्। अथ कर्तृत्वं भोक्तृत्वञ्चान्तकरणस्यैवेति—आत्मनस्तर्हि न किञ्चिदिति व्यर्थं मोक्षशास्त्रम्। कर्तृत्वाद्यभावेऽपि तथाऽभिमानोऽस्तीति चेत्—स एवैकनिष्ठोऽन्येन स्वनिष्ठत्वेन गृह्यतामित्यापाद्यते, सौभर्यादिभिस्तथाऽनुसंधानात्। वस्तुतोऽहन्त्वमामनिष्ठमेव, न त्वन्तःकरणादिगतमिति प्रागेव प्रत्यपादि। तस्माददद्वैतमते बद्धानां भोगसाङ्कर्यापादनमपरिहार्यम्। "नानात्मानो व्यवस्थात" इति तार्किकसूत्रस्य, जन्मजरामरणानामिति सांख्यकारिकायाश्च स्वमतवासनामनुरुध्य अहमर्थोपहितजीवविषयतया निर्वहणं वक्तृतात्पर्यविरोधादुपेक्ष्यम्। न हि तत्तद्दर्शनमद्वैतप्रक्रियानुरोधि। अद्वैतिना

तु तस्यतस्याप्रमाणत्वम्, तदर्थस्याप्रामाणिकत्वञ्चैव वक्तव्यम्; न तु श्रुतिवन्निर्वाहे प्रयतनीयम्।

यत्तु शरीरशरीरिभावोऽद्वैतिमते शरीरस्यात्मन्यध्यासात्, न त्वपृथक्सिद्धचेति—तन्न—यदि यत् यत्राध्यस्तम्, तत् तस्य शरीरमितीष्टम्, तर्हि घटपटादीनामपि चैतन्यं प्रति शरीरत्वापत्तिः, शरीरवत् अन्तःकरणेन्द्रियप्राणादीनामपि शरीरत्वापत्तिः; ममेदं शरीरमिति प्रयोगे मय्यध्यस्तमिदमिति बोधापत्तिश्च। मम शरीरमित्येवं बहुलमध्यासं विनापि व्यवहारात् अन्यदेव शरीरित्वं शरीरशब्दार्थशोधनेन ग्राह्यम्। किञ्च अपृथक्सिद्धिर्निबन्धनं चेत् का नामानुपपत्तिः। न चापृथक्सिद्धिरेव तत्र नास्ति। अप्रामाणिकस्याननुभविकस्याध्यासस्यैव निबन्धनत्वमयुक्तम्। न च वयं सर्वामपृथक्सिद्धिं शरीरत्वनिबन्धनं निबध्नीमः, किन्त्वपृथक्सिद्धिविशेषम्। जीवचैतन्यस्यापि जीवं प्रति शरीरत्वापादनं तु अस्मदभिमतशरीरलक्षणाज्ञानमूलकम्। प्रपञ्चितश्चास्माभिः शरीरलक्षणनिष्कर्षप्रकारो नयद्युमणिभूमिकायाम्। यत्तु सुषुप्तशरीरस्य सुषुप्तं प्रति न मुख्यशरीरत्वम्; अन्यथा बृहत्पाण्डरवासस्त्वादिना संबोधने तदनुत्थानं बालाक्यजातशत्रुसंवाददर्शितमनुपपन्नं स्यादिति—तदपि न—तत्र हि यदि प्राणादिरेवात्मा भवेत्, प्राणादिर्जाग्रत् बृहत्पाण्डरवासस्त्वादिश्रवणेन स्वसंबोधनमिति उत्थितः स्यात्। तदभावात् प्राणाद्यतिरिक्तः संबोधनश्रवणानर्हदशापन्नः कश्चिदेवात्मेति ततोऽवसीयेत। न तु आत्मानं प्रति शरीरस्य मुख्यं शरीरत्वं नास्तीत्यपि ततोऽवगम्येत। प्राणनामभिरामन्त्रणेऽपि प्राणानुत्थानात् प्राणातिरिक्तोऽयमिति ज्ञाप्यत इति जगद्वाचित्वाधिकरणकल्पतरुवाक्यादप्यवगम्यते। तदनुरोधेऽपि नात्र शरीरत्वस्य सुषुप्तं प्रति मुख्यामुख्यत्वनिर्णयोपयोगः संबोधनस्यास्ति। शरीराधीनं भोगं नानुभवति सुषुप्तिकाल इत्येतत्तु युक्तम्। तावता फलोपधानाभावेऽपि तार्किकादिभिरपि संमता स्वरूपयोग्यता नापैति। वास्तवशरीरलक्षणं त्वन्यत्।

जाग्रच्छरीरं सर्वं मदविद्याकल्पितं शरीरत्वात् संप्रतिपन्नवत् इत्यनुमानस्यापि बाधितत्वादिर्दोषः प्रागेव दर्शितः। तत्र कल्पितत्वघटनमपि

न युज्यते; जगन्मिथ्यात्वस्यापि बाधितत्वात्। न केवलं प्रत्यक्षेण; "याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्य" इत्यादिश्रुत्याऽपि। सर्वत्र स्वरसार्थत्यागेनार्थान्तरकल्पनया निर्वहणप्रयासमात्रेण न तत्त्वस्थापनं भवितुमर्हति; मुख्यार्थस्यैवानुरोद्धव्यत्वात्। एवं सर्वोऽप्यात्मा अहमेव चेतनत्वादित्यत्रापि अहमिति स्वान्तःकरणत्वसाधने बाधः। संविन्मात्रत्वसाधने साध्यहेत्वोरैक्यम्। अहन्त्वोपलक्षितसंवित्त्वसाधनेऽपि बाध एव। अन्यथा सर्वाण्यन्तःकरणानि एतदन्तःकरणाभिन्नानि अन्तःकरणत्वात्, सर्वं सुखदुःखमेतत्सुखदुःखाभिन्नं सुखदुःखत्वादित्याद्यपीष्येत। व्यावहारिकदशायामेवान्तःकरणसुखदुःखादीनां सद्भावात् तेषां नैक्यम्; आत्मनस्तु परमार्थदशायामपि सत्त्वादैक्यमिति वैषम्यमिति चेत्—एवं व्यावहारिकदशायां भेद इष्टः, परमार्थदशायामेवाभेद इति वदद्भिः व्यवहारिकदशापन्ना आत्मानः परमार्थिकापेक्षया भिन्ना इष्यन्ते, उताभिन्नाः। आद्ये, आत्माद्वैतमसिद्धम्। उपलभ्यमानानामात्मनां द्वैतिभिरिव भेदस्येष्टत्वात्। प्रत्युत एतावदतिरिक्तः पारमार्थिकोपि कश्चिदात्मा स्वीकृत इति अद्वैतहानिरेव। एवञ्च शरीराणां व्यावहारिकदशामात्रभावित्वात् तद्भेदेनात्मभेदे व्यावहारिके संमते सति सर्वं शरीरं ममैवेत्यनुमानस्य नैव प्रसक्तिः। अन्त्ये, विरोधे सत्यपि अभेदेष्टौ सत्यमिथ्यार्थयोरप्यैक्यापत्तिरिति कुत्रापि विरोधो न स्यादिति दूषणं दुरुत्तरम्।

यत् पुनरन्तःकरणभेदादप्रतिसंधानमात्मैक्येऽपि घटत इति-तन्न-अन्तःकरणभेदेऽपि सौभर्यादिभिः प्रतिसंधानात्। सौभर्यादेः शरीरभेदेऽप्यन्तःकरणैक्ये प्रमाणाभावात्। तद्गुणसारत्वादिति सूत्रे बुद्धेरणुपरिमाणत्वस्योक्तत्वेनान्तःकरणस्य सर्वशरीरव्यापित्वानुपपत्तेः। कल्पभेदेनान्तःकरणभेदे सत्यपि जातिस्मराणां प्रतिसंधानसद्भावाच्च। महाप्रलयानन्तरं पुनस्सृष्टावपि तदेवान्तःकरणमिति कथं स्यात्। जातिस्मराश्च महाप्रलयात् पूर्वजन्मवृत्तमपि स्मरन्त्येव। अत आत्मैक्ये सति अप्रतिसंधानमनुपपन्नम्। न चानुभूतं सर्वं प्रतिसंधातव्यमित्यस्माभिरुच्यते, "पटुतरप्रत्ययाभ्यासादराहितातिशयतादात्विकसंस्कारव-

शेन" इत्येवोक्तत्वात्। यस्य चैत्रेणानुभूतस्य तेन प्रतिसंधानं क्रियते, तस्य तेनेव मैत्रेणापि प्रतिसंधानं क्रियेतेत्येतावदेवापाद्यते। जातिस्मराणामन्तःकरणैक्यमस्तीत्यस्य साधकत्वेन, "अमृतत्वञ्चानुपोष्य" इति सूत्रखण्डोदाहरणमपि न संगच्छते। बाह्यकरणभेदवत् अन्तःकरणभेदोऽपि न प्रतिसंधानव्यवस्थापक इति विवक्षया बाह्यकरणभेदे प्रतिबन्द्या प्रदर्श्यमाने सति तदर्थमनवधाय किमित्यन्तःकरणभेदस्य व्यवस्थापकत्वं शतदूषणी अनुमन्यत इति कथनम्; प्रलोभनमात्रं वा। तत्त्वविदः प्रह्लादादयः प्रतिसंदधत एवेति चेत्—किं प्रतिसंदधते। न हि प्रह्लादो हिरण्यकशिपुना कृतं सर्वं किल्बिषं स्वकृतत्वेन प्रतिसंधत्ते, न च तत्फलं नरकादिकं स्वस्य भवेदिति बिभेति। न वा वामदेवो मन्वादिकृतराज्यपरिपालनाद्यधीनयशस्सुखादिकं तद्गतं स्वात्मन्यनुसंधाय तृप्यति; किंतु परमात्मात्मकत्वं सर्वस्य शास्त्रदृष्ट्या निश्चित्य परमात्मन्यनुसंधेयमंशं स्वविशिष्टपरमात्मवाच्यहंशब्दप्रतिपाद्ये प्रतिसंधत्त इति यत्किञ्चिदेतत्। दर्शितश्चेदं शतदूषण्याम्, 'सर्वगत्वादनन्तस्ये'ति हेत्वंशेऽवधानविधानेन। भवन्मते 'मत्तः सर्व' मित्यस्यार्थो दुर्वचः; मत्त इति प्रह्लादरूपजीवाकारपरामर्शे सर्वोत्पादकत्वायोगात्; शुद्धसंविदोऽपि तदयोगात्। अविद्याशबलितेश्वरांशस्य तु अहमर्थाघटिततया मत्त इति प्रह्लादप्रयुक्तशब्देन सर्वथा ग्रहणासंभवात्। स्वस्वरूपस्येश्वरस्वरूपस्य चैकत्वमात्रं मनसिकृत्य ईश्वरस्येश्वरत्वाकारेण सर्वव्याप्तिमनभिप्रेत्य यदि 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्युच्यते, तदा किमितीश्वर एवैवं स्तोतव्यः, स्वस्तुतेरेव, सर्वं समाप्नोमि ततोऽस्मि सर्व इति वक्तुं शक्यत्वात्। न चास्य चेश्वरस्य च कश्चिदत्राविशेषोस्ति। यदि चेश्वरत्वावस्थाविशिष्टस्यैव सर्वाध्यासाधिष्ठानत्वम्, तदा मिथ्याभूतस्यैवाधिष्ठानत्वमुक्तं भवेत्।

यत्तूच्यते, अहं मनुरभवमिति मन्वादितादात्म्यमेवोक्तम्, न त्वहं वासुदेव इति वासुदेवतादात्म्यमिति—किं तेन? वासुदेवत्वविशिष्टाकारेणेव मनुत्वविशिष्टाकारेणाप्यैक्यासंभवस्तुल्यः। स्वरूपमात्रोपलक्षणेनैक्यवर्णनसंभवश्चोभयत्राविशिष्टः। अस्मन्मते वासुदेवैक्यमेव संभावितम्, न तु मन्वैक्यमिति न मन्तव्यम्;

वासुदेवैक्यस्यापि वामदेवजीवस्वरूपेऽनुपपत्तेः । यद्यहम्पदं विशिष्टपरं कृत्वा दूषणाभावो गृह्यते, मनुपदमपि तद्वत् विशिष्टपरमात्मपरं कृत्वा तत्रापि दूषणाप्रसक्तिरनुचिन्त्यताम् । वासुदेवपदसामानाधिकरण्याभावोऽपि न; "एकः समस्तं यदिहास्ति किञ्चित् तदच्युतः", "ज्योतींषि विष्णुर्भुवनानि विष्णुः", 'अहं हरिः सर्वमिदं जनार्दनः", 'स वासुदेवो न यतोऽन्यदस्ति" इति वासुदेवसामानाधिकरण्यस्य निर्विवादत्वात् । तस्माद्विशिष्टस्यान्तर्यामिणः सर्वशब्दवाच्यत्वमन्तरा स्वरूपमात्रसामानाधिकरण्यं न श्रुत्याद्यभिमतम् । तथा सतीश्वरप्रशंसार्थत्वाभावेन सर्वैक्यमुखेनेश्वरस्य स्वाविशेषप्रतिपादनपर्यवसानेन च शास्त्रतात्पर्यभङ्ग एव स्यात् । यदि च अहं मनुरभवमित्यादौ स्वरूपमात्रविवक्षा, तदा मनूपलक्षितस्वरूपात्मको भवामीति वर्तमानकालनिर्देश एव युक्तः । एवम् अहम्पदस्य अहमर्थरूपविशेषणं विना स्वरूपमात्रलक्षकत्वे च अभवमित्युत्तमपुरुषार्थस्याप्यनन्वयः स्यात् । एवं स्थिते तत्त्वे भूतकालप्रत्ययोत्तमपुरुषयोः स्वपक्ष एवाऽऽञ्जस्यमिति शतभूषणी चक्षुर्निमील्यैव ब्रवीति । अत्र वक्तव्यं सर्वम्, "योऽसावसौ पुरुषः सोऽहमस्मि" इतीशोपनिषदाचार्यभाष्ये द्रष्टव्यम् ।

किञ्चेदमात्माद्वैतं नाम । किं नानाजीवेश्वरानुस्यूतात्मस्वरूपैक्यम्, उत जीवैक्यम्, किं वेश्वरैक्यम्, आद्ये सर्वेण सर्वप्रतिसंधानापत्तिरिति दोष उक्त एव । द्वितीयेऽपि सर्वशरीरवर्त्येकजीववादे एष एव दोषः । प्रत्यक्षानुमानविरोधवत् श्रुतिशतविरोधोऽपि, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः' इत्यादिभिर्जीवानन्त्यस्यैव प्रतिपन्नत्वात् । एवं बद्धमुक्तव्यवस्थादिभङ्गोऽपि । उपलभ्यमानानां जीवानां स्वप्नद्रष्टृकल्पितजीववत् कल्पितत्वेनैकस्यैव जीवस्य स्वीकारे सोऽकल्पितः कतम एषु जीवेष्वित्यत्र विनिगमकाभावश्च । प्रथमोपदेष्टुरकल्पितत्वे अन्येषु कल्पितत्वाध्यवसायात् शास्त्रोपदेशादिवैयर्थ्यञ्चेत्येवं सुबहु चिन्त्यम् । तृतीयं तु पक्षं स्वीकुर्मः;

कालत्रयवर्तिसर्वप्रपञ्चनिरूपितैश्वर्यस्यैकस्मिन्नेव विश्रमात् । ईश्वरैक्यस्य जीवानेकत्वबाधकत्वाभावात् ।

यदुक्तमनेकजीववादे ईश्वरभाव एव मुक्तिरिति—तत्रोच्यते—ईश्वरभावः ईश्वरसाम्यमितिवत्, 'अत्र ब्रह्म समश्नुते', 'न तस्य प्राणा उत्क्रामन्ति' इत्यादिबलात् शुद्धचैतन्याभेदरूपा मुक्तिरपि भवत्संमतैव । ईश्वरभावपक्षः प्रागस्माभिरप्युपपादितश्च । परंतु तदा तत्त्वमसिवाक्यार्थदौर्घट्यं लक्ष्यते । विशिष्टयोरैक्यमसंभावितमिति खलु स्वीकृतम् । अतो न सर्वज्ञत्वकिञ्चिद्ज्ञत्वविशिष्टाभेदकथा । शुद्धस्वरूपैक्ये तु विवक्षिते अहं ब्रह्मास्मीति शुद्धस्वरूपानुसंधाने सति तत्क्रतुनयविरोधेन सगुणब्रह्मरूपेश्वरभावः कथं स्यात् । अथेश्वरत्वविशिष्टज्ञानं मुक्तिहेतुः, एवं तर्हि अतत्त्वज्ञानान्मुक्तिरिति स्यादित्यलम् । यदप्युक्तम्, तत्त्वविदामपि परदुःखादिप्रतिसंधानप्रसक्तिर्न भवति, तद्दृष्ट्या परस्यैवाभावात् तद्दुःखादिसद्भावाप्रसक्तेरिति—तन्न—एवं खलु सति तत्त्वोपदेशादिकमपि भज्येत । न च परस्य स्वस्य चैकत्वात् परेण क्रियमाणमनुसंधानमेव स्वकीयानुसंधानरूपं भाव्यतामिति वाच्यम्—यदा परः सुषुप्त्यादिवशात् तन्न प्रतिसंधातुं पारयेत्, तदा अन्येन परानुभूतमनुसंधीयताम् । यदा परशरीरमुखेन व्यवहर्तुं न शक्नुयात्, तदा शरीरान्तरेण व्यवहरतादित्यापादानात् । यत्तु—स्वस्मिन् परान्यत्वस्य प्रत्यक्षं न भवितुमर्हति, प्रतियोगिभूतस्य परस्याप्रत्यक्षत्वादिति—तन्न—अत्यन्ताभावप्रत्यक्ष एव प्रतियोगियोग्यतायास्तन्त्रत्वात् । भेदप्रत्यक्षे अनुयोगियोग्यतैवापेक्षिता । अत एव स्तम्भे पिशाचभेदप्रत्यक्षमिष्टम् ।

एकजीववादे अनेकजीववादे चाद्वैते दोषे उद्भाव्यमाने उभयसमर्थनार्थमेव सर्वेऽप्यद्वैतिनः प्रयस्यन्ति । तदेतत् स्वपाण्डित्यचिख्यापयिषामात्रं स्यात् । न तत्त्वव्युत्पादनम्; तत्त्वे विकल्पायोगात् । अतोऽन्यतरपक्ष एवाद्वैतिभिः परिषद्भटनेन निष्कृष्टव्यः । अन्यथा त्वनिर्णयादपाण्डित्यमेव

दर्शितं भवति । "वार्तिककाराभिमतैकजीववादे सर्वे जीवा आविद्यकाः बद्धा एव; न मुक्तः कोऽपीति न बद्धमुक्तव्यवस्थानुपपत्तिः" इति वाक्ये शोध्यमाने कियत्यो व्याहतय इति भवतैव समीक्ष्यम् । एकजीववादे एकमेव शरीरं वस्तुतो जीवाधिष्ठितम्; अन्यत् सर्वमजीवं जीववत्त्वेन कल्पितमित्युक्तौ स्वातिरिक्तानां जीवानां प्रातिभासिकत्वमुक्तं भवति । एवञ्च तानि शरीराण्यपि किं प्रातिभासिकानि उत व्यावहारिकाणि, लोके शरीरस्य जैवकर्मायत्ततया एव संप्रतिपन्नत्वेन जीवाभावे कर्माभावात् तदधीनानि शरीराणि तदधीनाः शारीरव्यापाराश्च दुरुपपादा इति सर्वमेव प्रातिभासिकं स्यात् । एवञ्च स्वबुद्धिकल्पितत्वादीश्वरोऽपि प्रातिभासिक इति एकजीवरूपव्यावहारिकतत्त्वज्ञानेन तत्सर्वबाध आवश्यकः । एवञ्चेश्वराधीनाः स्वशरीरसंबन्धिनो हिताहितप्रवृत्तिनिवृत्तिव्यापारा अपि न स्युः । एवमवशेषितैकजीवांश एव ब्रह्मातिरिक्ताभावरूपाद्वैतज्ञानेन बाधनीयो भवेत् । को हि नामैवं सर्वलोकवेदवेदान्तविप्लवपर्यवसायिनं पक्षमाद्रियेत । उपलभ्यमानेष्वसंख्येषु शरीरेषु इदमेव वस्तुतो जीवाधिष्ठितम्, न त्वन्यदिति निर्धारणं वा कथं भवितुमर्हति । तस्मात् स्वहृदयविरोधेनैव विधीयमानोऽयं शठवाद एव । अत एवाद्वैतसिद्धावपि जागरे स्वप्नवैलक्षण्यात् शरीरान्तराणां निर्जीवत्वं नाश्रितम् । स्वप्ने हि अयं सुखी अयं दुःखीत्येवान्यत्र प्रतीतिः, न तु अहं सुखीत्येवम् । जागरे तु सर्वशरीरेष्वप्येवमिति । आस्तामेतत् । अतो वस्तुतो जीवाधिष्ठितत्वं सर्वत्रैवैष्टव्यम् ।

एवं सर्वेषां शरीराणामेकजीवाधिष्ठितत्वे इष्यमाणेऽपि तु भोगप्रतिसंधानादिसंकरः, आचार्यज्ञानेनैव निर्वाहादुपदेशाद्ययोग इत्यादि दूषणमपरिहार्यमेव । जीवैक्येऽप्यप्रतिसंधानमविद्यामहिम्ना, उपदेशादिप्रवृत्तिश्च तदधीनजीवभेदभ्रमादिनेति चेत्—तत्त्वविदो भ्रान्त्यसंभवादुपदेशोऽनुपपन्न एव । किमित्येवमेकजीववादं हठात् कृत्वा अनुपपत्तीनां परिहाराय बहुमुखं प्रयस्यते । तेनैवाविद्यामहिम्ना जीवभेदस्यैव सुखीकरत्वात् । ब्रह्माज्ञानवादे एकजीवपक्षे उद्भाव्यमानदूषणपरिहारप्रयासिना, तदुक्तार्थापरामर्शेनायथायथं कृतोऽनुवाद-

इति स्थिते कथं तत्परिहरणस्य यथार्थता, न हि, "न कदाचिदपि बन्धो वा मोक्षो वाऽत्र मते जीवानामिति स्वीकारे नित्यबन्धप्रसंगो वा शास्त्रोपदेशवैयर्थ्यप्रसंगो वा" इत्यानुपूर्वी शतदूषण्यामस्ति । अत्र बन्धस्य मोक्षात् प्राङ्निबन्धः, जीवानामिति बहुवचनमित्यादि बह्वनुपपन्नम् । कस्य नित्यबन्धप्रसंगः कियत इति चेत्—यस्य बन्धो भवदिष्टः विकृतस्याविकृतस्य वा, तस्यैव स बन्धो नित्यः स्यादित्युच्यते । आपाद्यमानं खल्वत्र नित्यत्वम् । तदपरामृश्य बन्धमोक्षशब्दार्थकथनं जीवबहुत्वोल्लेखश्च न प्रकृतोपयोगि ।

अद्वैतसिद्धौ तु, 'ब्रह्मैकमेव संसरति । स एव जीवः । तस्यैव प्रतिशरीरम् अहमित्यादिबुद्धिः' इति विलिख्य, एकस्मिन् जीवे सुप्ते सर्वजगदप्रतीत्यापत्तिरित्याशङ्क्य अन्तःकरणावच्छिन्नजीवानां जीवाभासत्वात् तत्स्वापे तं प्रत्येवाप्रतीतिः । समष्ट्यभिमानिन एव मुख्यजीवत्वात् तस्मिन् सुप्त एव सर्वाप्रतीतिः यथा प्रलये इत्युक्तम् । तदपि विमृश्यम्—प्रतिशरीरमहमित्यादिबुद्धिः कस्य जीवस्य ? किं जीवाभासस्य, उत मुख्यजीवस्य । नाद्यः, जीवाभासानामन्तःकरणभेदेन भिन्नत्वात् एकस्य सर्वत्राहम्प्रतीत्यसंभवात् । नान्त्यः; अस्मच्छरीरावच्छेदेन हिरण्यगर्भस्य अहं जानामि करोमि सुख्यामीत्यनुभवोत्पत्तेः शपथैकनिर्णेयत्वात् । एवञ्चास्मदादिकर्मणां स एव फलभोक्ता स्यात् । यदि च हिरण्यगर्भस्य सर्वत्र स्वप्रतिसंधानं नास्ति, तर्हि कथं स मुख्यः समष्टिजीव एकः । एवं तर्हि सर्वेषां शरीराणां वस्तुतो निर्जीवत्वमेव भङ्ग्यन्तरेणोक्तं स्यात् । जीवाभास इत्यस्य च कोऽर्थः । किं प्रतिबिम्ब इति, उत जीवत्वभ्रान्तिविषय इति, आहो मुख्यजीवैकदेश इति । नाद्यः, यतः प्रतिबिम्बस्यान्तःकरणे उत्पत्तेः, प्राक् तदभावात् जीवानादित्वभङ्गः अकृताभ्यागमकृतविप्रणाशादि च स्यात् । द्वितीये सर्वेषामजीवत्वात् कर्तृत्वभोक्तृत्वोपदेश्यत्वाद्यसंभवः । तृतीये छिन्नावयवत्वे ब्रह्मणश्छेद्यत्वादिप्रसंगः । अनवयवत्वादच्छिन्नावयवत्वे हिरण्यगर्भस्य सौभरिवत् सर्वावच्छेदेन कर्तृत्वमिति तत्र सर्वभोगसंकरः स्यात् । अतिरिक्ता एव जीवाः मुख्यजीवपरतन्त्रत्वात् जीवाभासा

इत्युच्यन्त इति चेत्—तर्हि गतमेकजीववादेन। समष्टिजीवस्वापे सर्वजगद-भाव इत्यपि वार्तम्—ब्रह्मणश्चतुर्युगसहस्ररूपदिनावसानेषु रात्रिषु तत्स्वापेऽपि कतिपयलोकमहर्ष्यादिसद्भावस्य प्रमाणप्रतिपन्नत्वात्। अत एव लोकेषु कृत-काकृतकादिविभागः। किञ्च समष्टिजीवस्य हिरण्यगर्भस्य मुक्तौ पुनः सृष्टिर्न स्यात्; कल्पकजीवाभावात्। प्राकृतप्रलयरूपतन्मुक्तिकालानन्तरमपि सृष्टिः प्रामाणिकी; एवं तस्य तदा मुक्तिरपि; 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसं-चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति ततः प्रागेव तस्य तत्त्वदर्शित्वस्य तदा प्रारब्धावसानस्य चावगमात्। तस्य सगुणब्रह्मप्राप्तिरेव तदा भवतीति चेत्—तत् सगुणं ब्रह्म यदि जीवातिरिक्तमस्ति, तत् यदि जग-त्कल्पकमपि भवति, तर्हि जीवेश्वरद्वयं वा जीवद्वयं वा समष्टिजीवस्यापि जीवाभासत्वं वा स्वीकर्तव्यम्। सर्वमिदमेतत्पक्षेऽनिष्टमेव। एवं समष्टिजीव-कल्पितस्य जीवाभासेन ग्रहणमपि न शक्यं कर्तुम्। पृथगनेन सर्वकल्पने च नानाजीववादो नानाप्रपञ्चवादश्च भवेदित्यलम्।

यत्तु विशिष्टजीवानां विशिष्टजीवेश्वरयोश्च न सामानाधिकरण्यं कुत्रापि दृश्यत इति—तदिदं विस्पष्टापह्नवमात्रम्। भवन्मतेऽभिप्रायान्तरकल्पनेऽपि, क्वचिद् बाधार्थम्, क्वचित् स्वरूपलक्षणयेत्येवं वैरूप्याश्रयणेऽपि, वस्तुतो विशिष्टवाचिपदसामानाधिकरण्यस्यैव सर्वत्र दर्शनात्। सामानाधिकरण्यलक्षण-स्यैव विशिष्टपरत्वाभावे भङ्गप्रसङ्गात्। अहं मनुरभवम्, बालो युवा स्थविरो जायते इत्येवं जीववाचिपदसामानाधिकरण्यस्य, तत् त्वमसि, ब्रह्म दाशाः ब्रह्म दासाः इति जीवेश्वरसामानाधिकरण्यस्य च स्वरसावगतत्वात्। "बहूनां पुरुषाणां हि यथैका योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधि-कम्" इति भारतवाक्यस्य पुरुषाकारेषु देहेषु सर्वत्रैक आत्मेत्यर्थवर्णनमपि साहसम्। "बहवः पुरुषा राजन् सांख्ययोगविचारिणाम्" इति सांख्यादि-मते जीवानेकत्वमुपक्षिप्य तत्संमतप्रकाराद्वैलक्षण्यस्य स्वाभिमतस्य प्रदर्शनाय समनन्तरप्रयुक्तेऽत्र श्लोके बहूनां पुरुषाणामित्यस्य पूर्ववज्जीवपरत्वस्यैव युक्तत्वात् देहमात्रग्रहणायोगात्। तर्हि पुरुषैक्यासिद्धिरिति चेत्—न हि स्वकल्पित-

पुरुषवयप्रकारारोपाय समञ्जसार्थत्यागेन प्रमाणहिंसनं साम्प्रतम् । अतो जीवानां कारणभूतः पुरुषः कश्चिदस्तीत्येव व्यासाभिप्रायः, न तु जीवैक्यम् । सांख्यास्तावत् निरीश्वरवादिनः स्वतन्त्रानेकात्मनिर्णयमेव चक्रुः । व्यासस्तु तेषां पुरुषाणां परमात्माधीनत्वमेवाविश्चकार, यथा, 'तदधीनत्वादर्थवत्' इति सूत्रे प्रकृतेस्तदात्मकत्वम्; न जीवैक्यम् । "समासनस्तु तद्व्यासः पुरुषैकात्म्यमुक्तवान्" इति वचनमपीदमेव दर्शयति । पुरुषाणां जीवानामैकात्म्यम् परमात्मरूपैकात्माधिष्ठितत्वमुक्तवानिति तदर्थात् । इदं विशदं भवत्यनन्तरभवदुदाहृतश्लोकतोऽपि । 'ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥" इत्यत्र हि देहसंस्थिता इति पदेन देहातिरिक्तान् देहस्थान् पुरुषान् निर्दिश्य तदन्तरात्मत्वस्य कथनात् जीवानेकत्वमीश्वरैकत्वञ्च व्यक्तम् । 'न ग्राह्यः केन चित्' इति च—चेतनाः सन्ति बहवः तं तु न गृह्णन्ति इति, 'यमात्मा न वेद, यस्यात्मा शरीरम्' इति श्रुत्यर्थदर्शकं भवदभिमतजीवैक्यबाधकम् । 'एकश्चरति भूतेषु' इति भूतपदमपि देहिवाचि; यतो वा इमानि भूतानि जायन्ते, "भूतानां प्राणिनः श्रेष्ठाः" इत्यादौ तथैव प्रसिद्धेः । एवञ्च जीवातिरिक्तस्येश्वरस्यैकत्वमेव तत्राप्युक्तम् । एषां वाक्यानां जीवाभिन्नपरमात्मपरत्वं वा जीवैक्यपरत्वं वा वर्ण्यमानं शब्दार्थविज्ञ नोऽनुमन्यात् । अभिनिवेशे सति किमपि वक्तव्यं भवति । अत एव खल्वद्वैतसिद्धौ जीवानेकत्वपराणि श्रुतिवचनानि गृहीत्वा, 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इति श्रुतावेक वचनश्रवणात् वचनान्तरणामनेकत्वे तात्पर्यं नास्तीत्युक्तम् । एकवचनस्य परमेकत्वे तात्पर्यमिति कुतोऽवगम्यते । यदेति श्रवणादनुवादत्वावगमात् बहुत्वस्य प्रसिद्धतया एकत्वाविवक्षायाः प्रतिव्यक्तिविश्रान्तैकत्वसंख्यापरताया वा सुवचत्वात् । अनादिमाययेति गौडपादकारिकायाः श्रुतित्वेन प्रदर्शनमपि प्रामादिकम् । अत एव चन्द्रिकायाम्, गौडपादीये अनादिमाययेत्यादिवाक्ये इत्युक्तम् । अस्याः अश्रुतित्वे श्रुतित्वे वा एकत्वसाधकत्वाभावमनुचिन्त्यैव चन्द्रिकायाम्, 'इदमुपलक्षणम्—एको देवः सर्वभूतेषु गूढ

इति श्रुतौ एक इति पदस्य इत्युक्तम् । तत्रापि देवस्येश्वरस्यैव एकत्वमनेकत्वाभावोऽवगम्यते; न तु जीवस्यैकत्वम् । सर्वभूतेषु इति भूतपदेन बहुवचनान्तेन सर्वपदघटितेन विविधविचित्रजीवसद्भावज्ञापनाच्च न सा श्रुतिर्जीवैकत्वपरा । "देही कर्मानुगोऽवशः" इत्येकवचनमपि एकैकस्याप्यनेकजन्मप्राप्तिमेव दर्शयेत्; न पुनर्जीवस्यैकत्वम् । जात्याख्यायामेकवचनस्यानुशासनिकत्वाच्च नैकवचनेन प्रमाणान्तरप्रतिपन्नबहुत्वबाधः । अक्षरब्राह्मणे, 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिना परमात्माधीनप्रवृत्तिकान् सूर्यचन्द्रादिदेवपितृमनुष्यादीन् निर्दिश्य, 'नान्यदतोऽस्ति द्रष्टृ' इति परमात्मापेक्षया द्रष्ट्रन्तराभावप्रतिपादकं वाक्यं प्रथमप्रतीतसूर्यचन्द्रादिनानाविधचेतनसद्भावाविरोधेन तत्पोषणौपयिकतया च परमात्मसदृशद्रष्ट्रन्तराभावम्, सर्वेषामन्येषां द्रष्टॄणां परमात्मनियम्यतया ईदृशनियन्तृत्वशक्तिसंपन्नं द्रष्ट्रन्तरं नास्तीत्येवमर्थं ब्रवीतीति वाक्यव्युत्पत्तिमतां सुगमम् । 'अग्निर्यथैकः', 'एक एव हि भूतात्मा' इत्यादीनि च परमात्मन एवैकत्वपराणि । 'स एकधा भवति त्रिधा भवती'ति च भूमविद्यायां मुक्तस्यैकैकस्यानेकशरीरपरिग्रह उच्यते । 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' इति पूर्वश्लोके मुक्तप्रस्तावात् । भवन्मते तु निर्गुणब्रह्मविदि एकधाभावत्रिधाभावादीनामसंभवात् वाक्यमनन्वितं भवतीति, 'सगुणविद्याफलमपि निर्गुणब्रह्मविदाप्नोतीति विद्यास्तुतिपरोऽर्थवादः, अस्य प्रशंसामात्रम्; न तु तथैव तत्त्व'मिति वाक्यमन्यथा नीयते । तदापि मुक्तस्य विदुषो वैकत्वावगमेऽपि लोके जीव एक एवेति नावधार्यते । अनेकजीववादिनामतीमते चेमानि सर्वाणि वाक्यानि जीवैकत्वाप्रतिपादकतयैव भवद्भिरपि वर्णनीयानीति किं तादृशान्यथासिद्धार्थान्तरस्वरसवाक्यग्रहणेनाद्वैत्येकदेश्यभिमतजीवैकत्वस्थापनसनेन । 'तस्यात्मपरदेहेषु' इति वचनेऽपि आत्मनो देहः कश्चित् अतमतः परेषां देहा अन्ये इति जीवभेदमेव प्रदर्श्य---ये देहवैलक्षण्यानुरोधेन जीवस्वरूपेऽपि वैलक्षण्यं मन्यन्ते, सर्वेऽपि विज्ञानस्वरूपतया एकाकारा इति न मन्यन्ते ते ईदृशवैलक्षण्यमन्तृत्वात् द्वैतिनः यथावस्थितात्मस्वरूपज्ञानरहिता इत्येवार्थ,

संभवात् न जीवव्यक्तिभेदप्रतिषेधसिद्धिः। अतो न श्रुत्यादिकं जीवैक्ये प्रमाणम्।

अनुमानं तु प्रत्यक्षानुमानश्रुत्यादिविरुद्धमैक्यसाधनाय नालमित्युपक्रम एवावेदि। अहमिति गृहीते विशेष्ये अहं तेभ्यो भिन्न इति जीवभेदे प्रत्यक्षेण गृह्यमाणे, प्रत्यक्षस्य विशेषणभेदे तात्पर्यम्, न तु विशेष्यभेदे इति केयं परिभाषाकुसृष्टिः। तात्पर्यविचारश्च शब्दे। न तु ज्ञाने; नतरां प्रत्यक्षे। यत्तु चैत्रो मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान् मैत्रानुसंहितदुःखाननुसंधातृत्वादित्यनुमाने जीवभेदसाधके दूषणमुपन्यस्यते, सिद्धसाधनमिति—तन्न—अद्वैतिसंमतो हि चैत्रमैत्रभेदः कदाचिद्बाध्यः। अबाध्य एव तु भेदोऽत्र साध्यते। अतो नार्थान्तरमपि। न च ब्रह्मातिरिक्तस्याबाध्यत्वमसिद्धमिति मन्तव्यम्; बाध्यत्वस्यैवासिद्धत्वात्। मैत्रानुसंहितेति हेतुघटकविशेषणस्याखण्डाभावघटकतया सार्थक्येऽपि व्यभिचारादिवारणं प्रयोजनं नास्तीत्यपि न सत्; चैत्रस्य स्वदुःखानुसंधातृत्वस्य निर्विवादतया अननुसंधातृत्वस्य दुःखाननुसंधातृत्वस्य चासिद्धत्वेन तद्वारणायैव दुःखे चैत्रानुसंहितत्वविशेषणात। अतो व्यभिचारादीत्यादिपदग्राह्यासिद्धिवारकत्वमस्ति। एकामसिद्धिं परिहरतो द्वितीयापत्तिरिति शङ्कावारणार्थं तु अखण्डाभावसंपादकत्वात् हेतोरन्यत्वान्न दोष इत्युच्यते। तत्र दलकृत्यप्रश्न एव नोदेति। एकदलत्यागेऽपि हेतोरन्यत्वात्। एकहेतुप्रयोगे हेत्वन्तरं किं नोपन्यस्यत इत्येव हि तदा पृष्टं भवति। तदाचासिद्धिदोषात् तत्त्याग इत्युत्तरम्; निरनुयोज्यानुयोग इति वा। हेतोरन्यत्वे च न व्याप्यत्वासिद्धिप्रसक्तिः। स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्वे हि स दोषः। अभावस्य तद्व्यक्तित्वेन हेतुत्वे तु नतरां शङ्कावकाशः। एवं तदभावे हेतोरप्रयोजकत्वादप्ययमेवाभावो हेतुर्वक्तव्यः। एवं मैत्राननुसंधेयदुःखानुसंधातृत्वादित्यपि निर्दुष्टहेतुरिह ग्राह्यः। अतः शतदूषण्यनुक्तं भवदनूदितमप्यनुमानं सुस्थम्॥

अध्यक्षलिङ्गनिगमस्मृतिमुख्यसर्व-
मानोपरोधमवयद्भिरपि प्रसह्य ।
बौद्धैरसच्छ्रुतिरिवात्मगृहीतसत्तया
त्वद्वैतवाक्यमुपदर्श्यत एवमेभिः ॥

शुभमस्तु ॥

---

श्रीः

## जीवेश्वरैक्यभङ्गप्रसाधनम्

यस्मिन् भव्यगुणास्पदत्वमनिशं यस्माच्चितां भिन्नता
यत्साम्यं क्वचिदंश एव परमं श्रुत्यादिभिर्घुष्यते ।
सोऽयं सर्वजगज्जनिस्थितिलयाद्यश्रान्तलीलोत्सुकः
सेव्यः संततमस्तु मुक्तिफलदः श्रीवल्लभः श्रेयसे ॥

अद्वैतिभिर्व्यवहारदशायां जीवेश्वरभेदस्याभ्युपगतत्वात् जीवत्वेश्वरत्वोपलक्षितशुद्धस्वरूपैक्यस्यैव मोक्षे स्वीकृतत्वात् जीवत्वेश्वरत्वविशिष्टयोरैक्यभङ्गसमर्थनं नाद्वैतिदूषणायालम्; तथा मुक्तौ पारतन्त्र्यस्य दुःखवहत्वतदभावविमर्शोऽपीति शतभूषणी मन्यते। तत्र पारतन्त्र्यस्य दुःखवहत्वं भवद्भिः स्वीकृतं न वा। आद्ये तदभावनिरूपणविस्तरः शतदूषणीकृतां प्राप्तावसर एव। अन्त्ये, दुःखवहत्वस्याद्वैत्यसंमतत्वे भवता तत्सद्भावप्रपञ्चनमपसिद्धान्तः।

एवमीश्वरैक्यविषयेऽपि विवेचनीयम्। किं जीवत्वविशिष्टस्येश्वरत्वविशिष्टेनैक्यम्, किं वा ईश्वरत्वोपलक्षितस्य जीवत्वविशिष्टैक्यम्, उत जीवत्वेश्वरत्वोपलक्षितव्यक्त्यैक्यम्, आहो जीवत्वोपलक्षितस्येश्वरत्वविशिष्टेनैक्यम। प्रथमेऽपि द्वैधं संभाव्यते—जीवत्वप्रयोजकशरीरस्यैवेश्वरत्वप्रयोजकत्वाभिमानात्, तत्तत्प्रयोजकशरीरद्वयेऽप्यात्मैक्याद्वेति। तत्राद्यं हिरण्यकशिपुप्रभृतिगृहीतम्। अद्वैतवासनावैवश्यक्षुब्धमनसां केषाञ्चिदेषाऽपि रीतिः समापतति, यदुपश्रवणेन

पामरा अपि तथैव भ्राम्यन्ति क्वचित् । अन्त्यं तु जीवत्वदशायामेव शरीरान्तरेणेश्वरत्वाविष्करणात् । तदा च सौभरिणेव नानाशरीरपरिग्रह इत्युक्तं भवति । एकदैव सुरनरखरादिनानादेहग्रहणं योगिष्वनुमतं सर्वेषाम् । एवञ्च तद्वदेव परस्परशरीरावच्छेदेन प्रतिसंधानप्रसङ्गापादनमपरिहार्यम् । अथ द्वितीयपक्षपरिग्रहे ईश्वर एवेश्वरत्वं विहाय कर्मपारवश्येन जीवत्वं लभत इति स्वीकृतं भवतीति नित्यनिरुपाधिकैश्वर्यवादत्यागः स्यात् । न हि व्यवहारदशायामादिमध्यावसानेषु स ऐश्वर्यदरिद्रो दुःखपरीतश्च कदाचित् भवतीत्यद्वैतिभिरपीष्यते । सिद्धान्तलेशसंग्रहे श्रीरघुनाथादेर्दुःखाभिनयमात्रम्, न तु व्यावहारिकसत्यमपीत्यभिधानात् । सहस्रनामशाङ्करभाष्ये च संभवनामव्याख्याने तथा भगवद्वचनोपादानात् ।

अतोऽस्यापि हेयत्वात् तृतीयं पक्षमेव शतभूषण्यादरणीयम्—अद्वैतसाक्षात्कारे जीवत्वेश्वरत्वनिवृत्तौ तदेकव्यक्तिपरिशेष इति । अस्मिन्नपि पक्षे सर्वैः सर्वप्रतिसंधानं कर्तव्यं भवेत्, विशिष्य च सर्वज्ञेनेश्वरेण जैवक्लेशानां स्वकीयत्वानुसंधानमवर्ज्यमिति आत्मैक्यभङ्गवाद एवोपपादितम् । जीवेश्वरभेदे प्रत्यक्षानुमानागमसिद्धे, स्वारस्यात् अप्रतिसंधानादितर्कबलात् ईश्वरनित्यनिर्दुःखत्वादिवचनबलाच्च तेषां प्रमाणानां व्यक्तिभेदविषयकत्वे स्पष्टे जीवैश्वरैक्यप्रतिपादकं प्रमाणशकलं जडेश्वरैक्यप्रतिपादकवचनतुल्ययोगक्षेममिति च विस्तृतं शतदूषण्याम् । आह च भगवान् बादरायणः, "अश्मादिवच्च तदनुपपत्तिः" इति । चतुर्थस्तु पक्षः शतभूषण्यामत्रानादृतोऽपि अद्वैतिसंमत एव । सिद्धान्तलेशसंग्रहे च जीवस्य पश्चादीश्वरैक्यमेव मोक्ष इति पक्ष एव बहुतरभाष्यादिग्रन्थसंवादप्रदर्शनेन परम आदरो मुक्तकण्ठमबोधि । सगुणब्रह्मोपासिनामविद्यानिवृत्तिं विना तत्सायुज्यमात्रम्, तदा संकल्पमात्राधीनकतिपयव्यापारशालिनोऽपि न जगद्व्यापारादिकमस्ति । यदा पुनरद्वैततत्त्वसाक्षात्कारादविद्यानिवृत्तिः, तदा जीवस्य साक्षादीश्वरभाव एवेति तन्मतम् । नूनम्, 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः' इति सूत्रमेवमभिप्रायम-

मपि नीयेत, यदि काशकृत्स्ननिर्देश्युपरितनसूत्राभिनिविष्टसूत्रभाष्यं नानुरुध्येत। एवं शतभूषणीकण्ठोक्तस्य च सिद्धान्तलेशसंग्रहाद्युक्तस्य चान्यादृशस्य च जीवेश्वरैक्यस्य भूषणीयस्य दूषणार्थं शतदूषण्यां विस्तर आदृत इति नैतत् प्रकृतानुपयोगि। ईश्वरपारतन्त्र्ये दुःखमपि स्यादेवेति भवता किञ्चिदपूर्वमुक्तमिति भवादृशाशयनिरासि सूक्तिजातमपि संपन्नावसरमेव।

तत्राप्पय्यदीक्षिताद्यादृतचतुर्थपक्षनिरसने नूनमवधातव्यम्; अन्यस्यात्मैक्यभङ्गवादेनैव समाहितप्रायत्वात्। अयञ्च जीवस्येश्वरभावः किंप्रमाणकः किमुपायसाध्य इति च विमृष्टव्यम्। सगुणोपासनफलं श्रुतिदर्शितं सगुणब्रह्मसायुज्यमात्रम्। निर्गुणसाक्षात्कारफलञ्चेहैव शुद्धब्रह्मभावः शास्त्रार्थत्वेनाभिमतः। तदुभयविलक्षणेदृशफलबोधिवाक्यं कीदृशप्रकरणनिविष्टमस्ति। निर्गुणविद्याप्रकरणे यदि किञ्चित् सविशेष एव संमन्तव्यं फलं श्रूयेत, तत् सर्वं केवलप्रशंसारूपं वा ग्राह्यम्; उत्कर्षो वा तादृशवाक्यानां प्रकरणादिति भवदीयैर्निष्कृष्टतयाऽपि निर्गुणविद्याफलं नेश्वरभाव इति ज्ञायते। कार्याधिकरणे गत्या कार्यब्रह्मप्राप्तिः, गतिं विना परब्रह्मभाव इत्येतावदेवोक्तम्। ईश्वरभावस्यापि चाविद्याधीनत्वात् तत्त्वज्ञानेनाविद्यानिवृत्तौ नेश्वरभावपरिशेषप्रसक्तिः। न च—ईश्वरस्येश्वरत्वं न स्वाविद्याकृतम्; तस्य निरञ्जनत्वात्। किं तु जीवाविद्याकृतमेव। तत्र एवजीवाविद्यानिवृत्तावपि जीवान्तराविद्यासत्त्वात् तदधीनैश्वर्यस्यानिवृत्तत्वान्न दोष इति—युक्तम्; जीवाविद्यानां जीवेष्वेव भ्रमादिहेतुतया ईश्वरे ब्रह्मज्ञानबाध्यप्रपञ्चसद्भावतदधीनैश्वर्याद्यनेकभ्रमजनकत्वायोगात्। सर्वजीवाविद्याकल्पितश्चेदीश्वरभावः, ईश्वरतद्गतसार्वज्ञ्यसर्वशक्त्यादिधर्मादीनां कल्पितानां सर्वजीवज्ञातत्वमेव स्यादिति न कश्चिज्जीवोऽनीश्वरवादी वा असर्वज्ञो वा स्यात्। येषामविद्यया न कल्पित ईश्वरः, तेषां तदज्ञाने प्रशंसैव स्यात् भ्रमसंख्याह्रासात्। ईश्वराज्ञानादसत्कल्पत्वमत एव न युक्तम्। सर्वेषां जीवानामप्युक्तरीत्या निर्गुणब्रह्मसाक्षात्कारस्येश्वरभावरूप-

फलं प्रत्येवाविशेषात् कारणत्वमिति अविद्यानामनन्ततया अन्तिमा काचिद-विद्या भवतीत्यत्रापि विवादात् कदापि ब्रह्मपरिशेषस्वरूपमोक्षस्यानापत्तिरपि। अन्तिमाविद्यायाः सूपपादत्वपक्षे चेश्वरस्येश्वरत्वं क्रमेण ह्रसतीत्यङ्गीकर्तव्यं भवति। कथञ्च तत्त्वज्ञस्य जीवस्य स्वाविद्यानाशे परकीयाविद्याकल्पितेश्वर-भावस्य प्रसक्तिः। तथासति तत्कल्पितजीवभावस्य तुल्यनयादापत्त्या पुनरनिर्मोक्ष एवेति न कश्चिन्मुक्तः स्यात्। अन्तःकरणसञ्चारे तत्तद्देशभेदेन जीवभेदश्च स्यात्। एकान्तःकरणस्थाने अन्यान्तःकरणप्राप्तौ तदुभयाव-च्छिन्नजीवैक्यमपि स्यात्। भुवि कर्तुः दिवि भोक्तुश्चैकताऽपि न स्यात्। अविद्याविभुत्वपक्षे च सर्वाविद्यावच्छिन्नोऽपि चैतन्यप्रदेश एक एवेति सर्वजी-वसमाहारात् जीवानेकत्वमेव नोपपाद्येत। अत एवैकजीववादमिव अवच्छेद-वादमप्युपेक्ष्य प्रतिबिम्बवादं रोचयामह इति चेत्—चैतन्यस्य प्रतिबिम्बासं-भवो भवदीयैरेवोपपादितः। किञ्च प्रतिबिम्बं बिम्बादीश्वरादन्यत् अनन्यद्वा। अन्यत्वे स्वस्मिन् अहं ब्रह्मास्मीत्यैक्यानुसंधानमशक्यम्। मिथ्याभूतस्य प्रति-बिम्बस्य तत्त्वज्ञानान्निवृत्तिरिति जीवनाश एव मोक्षः स्यात्। अत एव बिम्बप्रति-बिम्बभेदात्, निवृत्तस्य तस्येश्वरभाव एव दुर्वचः। अनन्यत्वे प्रागेवेश्वर इति किमविद्यानिवृत्त्या साध्यमस्ति। एवञ्चैकैकाऽप्यविद्या चैतन्यस्य जीवभाव-मीश्वरभावञ्चाऽऽधाय संसारसागरान्तर्निमज्जयति सकलकल्याणगुणगणार्णवञ्च करोति युगपदिति जीवत्वविशिष्टस्य चेश्वरत्वविशिष्टस्य चैकत्वमिति प्राच्यः पक्ष एव पुनरादृतः स्यात्। एवं तु सति निरञ्जनेश्वरभावस्यापि निवृत्त्या सुखातिशयानुभवोच्छेदो मा भूदिति प्रथमत एव पुरुषेण जागरूकेण अविद्या-मिथ्यात्वमस्वीकृत्य तद्गतसंसारक्लेशौपयिकशक्तिमात्रमिथ्यात्वनिर्णयरूपतत्त्व-ज्ञानेन तावन्मात्रबाधेन ईश्वरभावलभ्यमानन्दमविलोपयता भूयेत। नानामि-थ्यामध्ये यदंशे मिथ्यात्वज्ञानम्, तदंशनिवृत्तेरावश्यकत्वात्। ईश्वरो वा स्वैश्वर्यविघातापादिकामविद्यानिवृत्तिं प्रतिबध्नन् जीवस्य तत्त्वज्ञानमेव नोत्पाद-येत्। तथाच, 'ददामि बुद्धियोगं तम्' इत्येतद् विहाय, प्रतिबध्नामीत्ये-वमेव तेन भावनीयम्, न च तेन निरञ्जनस्येश्वरस्य कापि हानिः। प्रति-

बिम्बभूताः जीवाः यावत् पृथक् सन्ति, तावत् प्रत्युत तस्यैश्वर्याभिवृद्धिरेव। कथं हि नाम करस्थमदुःखलेशमनवधिकानन्दानुभवं विच्छिद्य तिष्ठासेत्। संक्षेपशारीरके च प्रागेवायं प्रतिक्षिप्तः पक्षः, यदाह—"ऐश्वर्यमज्ञानतिरोहितं सत् ध्यानादभिव्यज्यत इत्यवोचत्। शरीरिणः सूत्रकृदस्य यत्तु तदभ्युपेत्योदितमुक्तहेतोः॥" इति। किं बहुना—बहुश्रुताप्पय्यदीक्षितपक्षोऽयं तत्र व्याख्यात्रापि निराकृत इति प्रागेवावोचाम।

किञ्च यावदीश्वरोऽस्ति, तावत् जीवादन्यत्वेनैव सोऽवतिष्ठत इति शास्त्रदर्शिनां सुगमम्। जागरदशायां तदाराधनादिव्यापारपरतया जीवानां ततोऽन्यत्वं स्पष्टम्। एवं स्वप्नेऽपि। सुषुप्तौ, 'प्राज्ञेनात्मना संपरिष्वक्तः' इति जीवात् पृथङ् निरदेशि। मरणेऽपि, 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन् याति इति भेद उक्तः। मुक्तौ च, 'तथा विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्; 'ब्रह्मविदाप्नोति परम्', 'निरञ्जनः परमं साम्यमुपैति' इत्येवं भेदप्रतिपादकानि बहूनि वाक्यानि। सूत्रकारश्च, 'सुषुप्त्युत्क्रान्त्योर्भेदेन', 'मुक्तोपसृप्यव्यपदेशाच्च', 'भोगमात्रसाम्यलिङ्गाच्च' इत्येवं जीवेश्वरभेदं सार्वदिकमाह। 'स सामभिर्यत् तत् कवयो वेदयन्ते', 'तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्यादिश्रुतिप्रसिद्धसदापश्यन्नित्यसूरिनिवहस्यापीश्वराभिन्नत्वासंभवे स्थिते का कथा कथञ्चिन्निवृत्तक्लेशानां मोक्षपदमुपसन्नानाम्। न चेदृशनित्यसूरिपरिषदुपगीयमानपुण्यश्लोकात् परमपुरुषादन्यः कश्चिदीश्वरो नाम। अपिचास्याद्वैतसाक्षात्कारे जाते अविद्यानिवृत्त्या, अहमीश्वरः:, ममायं प्रपञ्चः, सृष्ट्यादि चाहं करोमीतीदृशाः भ्रमाः कथं भवेयुः। न चान्यस्याविद्या अन्यस्य भ्रमादिकं जनयेत्। एवमन्तःकरणसत्ताकाले अहमिति अन्तःकरणानुरक्तं चैतन्यं गृह्यते। ईश्वरस्य चान्तःकरणाभावात् अविद्यानुरक्तमेव ग्राह्यम्। तथाचोपाधिभेदे सति उपाध्यैक्यप्रयुक्तो जीवस्येश्वरभाव इति न शक्यं वक्तुम्। किंतु उपधेयस्वरूपैक्यम्। तत्तु सर्वेषां जीवानामपि मिथोऽस्ति। प्रतिबिम्बानां भेदात् तन्न भवतीति

चेत्—बिम्बप्रतिबिम्बयोर्भेदात् जीवेश्वरविषयेऽप्यैक्यस्य दौर्घट्यमेव । अभेदे तु सर्वजीवैक्यस्यापत्तिरेव । वस्तुतोऽनेकजीववादेऽपि अनेकाविद्यासत्त्वेऽपि वस्तुतः सर्वासामविद्यानां मिथात्वस्य केनचित् ग्रहणे सर्वाविद्यानिवृत्तिरप्येकपुरुषीयतत्त्वज्ञानात् प्रसज्यत इति प्रागेवोक्तत्वादपि न मुक्तस्येश्वरभावसंभवः । बिम्बभूत ईश्वर इति पक्षे यथा बिम्बभूते सूर्ये समुद्रादिगतविकाराणामारोपो नानुभविकः, तथा अविद्यावृत्तीनां तत्रारोपो न भवतीति तस्य सर्वज्ञत्वादिविकारास्पदत्वाभावादनीश्वरत्वं शुद्धब्रह्मवत्स्यात् । प्रतिबिम्ब एव सर्वसंक्रमात् जीवा एवेश्वराः स्युः । तथाचेश्वरानन्त्यमपि स्यात् । एवमपि जीवस्य तत्त्वसाक्षात्कारफलमीश्वरभाव इतीदमसिद्धमित्यलम् ।

अथ शतभूषण्युक्तं संग्रहेण निरस्यते—श्रीभाष्यमते मुक्तस्यैवापृथक्सिद्धिर्ब्रह्मणा, न बद्धस्येत्येतदसत् । सर्वस्यापि द्रव्यस्य सर्वदैव परमात्मापृथक्सिद्धत्वात् । अतः तत् त्वमसि इत्यत्र न वाक्यार्थवर्णनेऽनुपपत्तिः । नाहमीश्वर इति प्रत्यक्षमपि प्रमाणम् । तथा अहंब्रह्मास्मीति शास्त्रमपि । तत्र किञ्चिज्ज्ञत्वसर्वज्ञत्वरूपविरुद्धांशसमावेशायोगादेवाभेदबाध इति तदंशत्यागे कृते स्वरूपैक्यं घटते इति यदुक्तम्—तन्न—ब्रह्मशब्दस्यापि बृहत्त्वबृंहणत्वरूपविशेषणविशिष्टार्थकतया ईश्वरशब्दाविशेषे सति अहं ब्रह्मास्मीतिवत् अहमीश्वर इत्यपि शास्त्रसिद्धमेव वाच्यम् । तत्रेश्वरपदत्यागेन ब्रह्मपदस्यैव विशिष्य ग्रहणं ह्ययुक्तम् । स्मर्यते च, 'अहं हरिः सर्वमिदं जनार्दनः' इति । अस्तु काममिति चेत्—अस्तु । तत्र नाहमीश्वर इति प्रत्यक्षं विरुद्धधर्मसमावेशायोगात् व्यक्तिभेदमेव हि गृह्णाति । एवं गृहीते व्यक्तिभेदे विशेषणत्यागमात्रेण व्यक्त्यैक्यं कथं घटताम् । न हि घटः पटः, गन्धो रसः इत्यादौ घटत्वगन्धत्वादित्यागेन वस्त्वैक्यं निराबाधमिति लोकोऽनुमन्येत । धर्मविरोधस्य व्यक्तिभेदगर्भतया भिन्नयोरभेदायोगात् । 'अन्यद्द्रव्यं हि नैति तद्व्यताम्' इति च पराशरः । अतो यत्र व्यक्तिभेदः, तत्र सामानाधिकरण्यम् एकतरस्य पदस्य प्रतीततद्व्यक्तिमात्रविश्रान्तत्वत्यागेन

समभिव्याहृतपदार्थभूतव्यक्तिविश्रान्तार्थविवक्षणेन निर्वाह्यमिति स्थिते अर्थप्रकरणाद्विना सहचरणस्थानेति न्यायसूत्रोक्तदिशा श्रुत्याद्यभिमतप्रकारान्तरेण वा कश्चिदर्थ एष्टव्यो भवति। तत्रापि गुरुलघुमुख्यामुख्यतात्पर्यविषयाविषयभावचिन्तनयोपपन्नतमं ग्राह्यमिति च संप्रतिपत्तव्यमिति अहं ब्रह्मेति सामानाधिकरण्यं शरीरात्मभावे इति स्थापयामः। अधिष्ठानसंविदैक्यमेवाद्वैतिस्वीकृतम्; न तु जीवस्याध्यस्तस्य अध्यस्तान्तरेणेश्वरेण सर्पभूदलनयोरिवैक्यमित्येतत् प्रायः सम्यक्। परंतु सिद्धान्तलेशसंग्रहे ईश्वरैक्यस्य भावितया वर्णनात् तद्विरुद्धेयं सर्वाद्वैत्यसंमतत्वोक्तिः। स्वस्य स्वाधिष्ठानत्वायोगात् द्विचन्द्रे चन्द्रस्य नाध्यस्ततेति प्रकारान्तरेण तत् निर्वहणीयमिति, शतदूषण्युक्तं शतभूषणीस्वीकृतमेवासीत्। एवं स्थिते तत्र किमिति किञ्चिल्लेखनम्। तत्र, "अचेतनवर्गोऽपि स्वावच्छिन्नचैतन्यावच्छेदकतया शुक्तिवत् अधिष्ठानमिवान्यस्यारोप्यस्य" इति वाक्यं नूनम्, "हन्तैवमचेतनवर्गेऽपि किं न कल्प्यते" इति सूक्त्यर्थापरिशीलनप्राप्तमित्यवधेयम्। 'नेह नानास्ति' इति श्रुतिः ब्रह्म कस्मान्न निषेधति; इहेति तस्याधिष्ठानतया स्वीकृतत्वादिति चेत्- नानेत्यनेकनिषेधस्यैव ब्रह्मणि कृतत्वात् एकं ब्रह्मणि स्वीक्रियताम्। एवञ्च सधर्मणो ब्रह्मण एव सिद्धिः स्यात्। तद्वाक्यार्थविस्तरश्चान्यत्र। उत्तमः पुरुष इति गीतार्थविचारश्च प्रागेवाकारि। वासनाद्वासुदेवस्येति वाक्यं शुद्धब्रह्मपरिशेषकं चेत्—अन्ते, 'नमोऽस्तु ते' इत्युक्तमनुपपन्नं स्यात्; उच्चनीचद्वयमन्तरा नमःप्रसक्त्यभावात्। अन्नमयप्राणमयादिपर्यायेषु पूर्वस्मात् परस्य यथा साक्षाद् भेदः, तथैव विज्ञानमयादपि जीवात् आनन्दमयस्य परमात्मनोऽन्तरत्वे भेदे च कण्ठोक्ते कथं तस्यौपाधिकत्वेन नयनमिष्येत। यत्तु पञ्चकोशप्रक्रियानुरोधेनानन्दमयादप्यन्यत् ब्रह्मैव तत्त्वमिति शाङ्करभाष्योल्लिखितपक्षादरणेन वस्तुतस्त्विति लिखितम्, तत् सर्वं भगवद्बादरायणप्रभृतिसर्वाचार्यानभिमतमिति प्राच्यैरेव प्रपञ्चितम्, पराक्रान्तश्चासदाचार्यैः परपक्षनिराकृताविति न किञ्चिदवशिष्टमस्ति। पञ्चकोशोपनिषदिति कस्याश्चित्

प्रमाणीकरणञ्च न युक्तम्; तस्याः क्रमानन्तर्भावात्। शाङ्करभाष्येऽपि स्वाभिमतार्थे तस्याः प्रमाणतयाऽनुपादानात्। व्याख्यातृभिरप्यनुदाहरणाच्च। यत्तु आनन्दमयपर्यायेऽपि, 'तस्यैष एव शारीर आत्मा, यः पूर्वस्य' इति वाक्यश्रवणात् आन्दमयस्योपर्यपि किञ्चिदात्मतत्त्वमस्तीति ज्ञायत इति—तन्न—तस्य शाङ्करभाष्यारूढार्थस्वीकारे ईदृशशङ्काप्रसक्तेरेवाभावात्, पूर्वस्य तस्यैष एव शारीर आत्मेति तद्वाक्यार्थस्तदिष्टः। तावता च पूर्वस्य विज्ञानमयस्यैष आनन्दमय आत्मेत्येतावदेवोक्तं भवतीति कथमानन्दमयोपरि आत्मसद्भावे तत् प्रमाणम्। कश्चासावात्मा? न तावद् ब्रह्म, तस्यानन्दमयपुच्छतया तदवयवतया तदन्तर्भूतत्वात्। अस्मद्भाष्ये तु, 'यः पूर्वस्ये' त्यस्य पृथग्वाक्यत्वस्वारस्यमुपलक्ष्य अर्थान्तरं वर्णितम्। तदाऽप्यनन्यात्मकत्वप्रतिपादनार्थं तदिति तद्भावोऽपि दर्शितः। इदमपि सुवचम्—तस्यैष एवेति वाक्यं तत्तत्पर्यायगतं प्राणमयादेस्तस्यतस्यानन्यात्मकत्वारोपेण आरोपितात्मत्वदृढीकरणार्थमेव, ऐकरूप्यात्। तदुपरि, तस्माद्वा एतस्मादिति वाक्यारम्भः पूर्वं स्वारोपितस्य स्वदृढीकृतस्य प्राणमयाद्यात्मत्वस्य निरासार्थः। आनन्दमयोपरि तादृशवाक्याभावाच्च आनन्दमयस्यात्मत्वकथनं तद्दृढीकरणञ्च प्राक् कृतमनारोपितं प्रतिष्ठितं भवति। अतएवान्ते, 'एतमानन्दमयमात्मानमुपसंक्रामति' इत्यादावान्दमयेनैव परिसमापनमित्यलं पिष्टपेषेण।

सामानाधिकरण्यस्याभेदे तात्पर्यं वर्णनीयम्, गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति यदुक्तम्—तत् तथैव। न ह्यस्मन्मते मुख्यार्थत्याग ईषदपि। भवद्भिस्तु प्रातिपदिकोक्तविशेषणत्यागात् समानविभक्त्युपात्ताभेदस्य भाने अखण्डार्थत्वभङ्गापत्त्या तस्यापि बोधे भानानङ्गीकारात् सर्वमन्यथितम्। हन्तैवं मुख्यसामानाधिकरण्यरक्षणकामेनैव, सर्वं खल्विदं ब्रह्मेत्यत्र तु बाधायां सामानाधिकरण्यमिति समनन्तरमेवोच्यते। अस्माभिस्तु जडवाचिपदचिद्वाचिपदजडाजडोभयवाचिपदरूपसर्वसमभिव्याहारैकरूप्यमपि रक्ष्यते;

मुख्यत्वमपीति तत्त्वम् । 'यो विज्ञाने तिष्ठन्' इति वाक्ये विज्ञानपदमुपहितपरमिति वा केवलाहङ्कारपरमिति वा कः श्रद्दध्यात् । 'उभयेऽपि ही'ति सूत्रविरोधात् । एवं 'य आत्मनि तिष्ठन्' इत्यत्रापि । अत आत्मभेदस्य तयोः शरीरशरिरिभावस्य च कण्ठोक्ततया तत्र द्वेषो न स्थाने । परमात्मपारवश्यस्य स्वाभाविकत्वे मोक्षस्यापुरुषार्थता दुःखरूपत्वादिति, 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' इत्यादिश्रुतिविरुद्धम् । श्रुतिविरोधे चानुमानमाभासमात्रम् । दुःखप्रसक्त्यभावे सत्तर्काश्च सम्यगेव दर्शिताः सन्तीति किमाग्रहेण । अन्यथा, "न हवै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुत्या सशरीरत्वे दुःखित्वस्य स्पष्टमेव कथितत्वात् ईश्वरोऽपि सशरीरो दुःख्यत्येवेति स्वीकर्तव्यं भवेत् । न चेष्टापत्तिः । अवतारेष्वपि दुःखप्रसक्तिमभियुक्ताग्रगण्याः श्रीशङ्कराचार्याप्पय्यदीक्षितादयोऽपि न्यषेधन्निति साक्षादीश्वरभावे का प्रसक्तिर्दुःखस्य । भामतीकारः सगुणब्रह्मप्राप्तेरपि बन्धत्वं नेच्छति, तथासति कथमीश्वरस्य दुःखित्वम् । यदि श्रुतिविरोधमपि सोढ्वा पारतन्त्र्यं दुःखमिति भवता मन्यते, तर्हि स्वसमानपुरुषान्तरसद्भावोऽपि स्वदुःखायेति मुक्तावीश्वरं प्रत्यध्यक्षत्वमपि भवतीति स्वीक्रियताम्; अन्यथा भयशङ्कानिवारणानुपपत्तेः । तस्मात् जगद्व्यापारवर्जमिति यन्मुक्तिस्वरूपमुक्तम्, तदुपरि अन्यस्याकीर्तनात् स एव सर्वातिशायी मोक्षः । तदक्षयत्वञ्च अनावृत्तिः शब्दादित्यावेदितमेव । [ब्राह्मेण रूपेणेति सूत्रपाठोऽप्यशुद्धः ।]

•

एवमुपसंहारादेव ब्रह्मैव भवतीत्ययमपि मोक्षः स एवेति ज्ञायते । न चात्रार्थे क्लेशः । एवकारेण सादृश्यस्य कण्ठोक्तत्वात् । एवकारः सादृश्यार्थक इति निखण्डुप्रदर्शनविषये यदुक्तम्—तस्य सादृश्यमात्रार्थकत्वं वाऽनुशासनाभिप्रेतम्, अथार्थान्तरमपि । आद्यमसिद्धम् । अवधारणे प्रसिद्धेः । अन्त्यमयुक्तम् ; अनेकार्थकत्वस्यान्याय्यत्वात् अवधारणमात्रार्थकत्वादिति— तदनुपपन्नम् । अनेकार्थत्वस्यान्याय्यत्वं हि क्लृप्तकल्प्यार्थस्थले । यत्रानेकार्थत्वं कोशादिभिः क्लृप्तम्, तत्रैतन्न प्रसरति । अनन्यलभ्यः शब्दार्थ

इति न्यायाविरोधेनानेकत्र शक्तिस्वीकारादेव हर्यादिशब्दा अनेकार्थाः प्रसिद्धाः। नानार्थवर्गेणानेकार्थानुशासनमपि प्रायोऽस्ति। तस्मादेवकारस्य सादृश्यमप्यर्थः कोशप्रयोगोभयानुरोधेन स्वीकर्तव्यः। स्यान्नाम गोशब्दस्य वृषभादाविव एवकारस्यावधारणार्थत्वमतिप्रसिद्धम्। तावता 'गामाविश्य च भूतानि' 'गोदानव्रत'मित्यादाविव शक्यमर्थान्तरं गृह्यमाणं न दुष्यति। अवधारणार्थग्रहणेन परश्शतवचनबाधः किं युक्तः; किं वाऽनुशासनानुरोधि शक्यमेवार्थान्तरं विवक्षित्वा सर्वैकरस्यं न्याय्यमिति सहृदयं विचार्यताम्। अत एव, खण्डदेवेन, (3. 2. 5.) भाट्टदीपिकायाम्, "सूक्तवाक एव याज्या" इति यागलिङ्गं प्रस्तुत्य, 'नास्य मन्त्रत्वादिवत् अभियुक्तप्रसिद्धिविषयत्वाद्यं याज्यात्वं संभवति। एवकारोपबद्धत्वेनैतल्लिङ्गस्य याज्यात्वासाधकत्वात्' इत्युक्तम्। अत एवकारेण तत्सादृश्यमेव मेयम्। 'वैष्णवं वामनमालभेत विष्णुरेव भूत्वेमान् लोकानभिजयति' इत्यादौ स्वल्पक्रतुसाध्यं फलं न हि साक्षात् विष्णुभाव एव; किंतु सायुज्यलेशः। अतः सायुज्यरूपसाधर्म्यप्रकरणेष्वेषा शैली श्रुतेरिति भाव्यम्। अत एव 'वसूनामेवैको भूत्वा', इत्यत्रापि सायुज्यं स्वरसम्। स एवायं गौः, तदेवेदमौषधमित्यादिलोकप्रयोगोऽपि द्रष्टव्यः। 'स स्वराड् भवती'त्यत्र स्वराट्पदं स्वात्मकराजकत्वं पुरुषस्य ब्रुवत् स्वस्मिन् स्वं प्रति राजत्वस्यासंभवात् कमपि लाक्षणिकमर्थमाहेति स्थिते स्वेतरराजकत्वाभावं वा स्वेच्छाधीनप्रवृत्तिसामान्यकत्वं वा लक्षयतीति विमर्शे श्रुत्यन्तराविरोधाय द्वितीयमेवार्थं लक्षयेदित्युच्यते। भगवदिच्छाधीनस्वप्रवृत्तेरपि स्वेच्छाधीनत्वस्याक्षतत्वात् सुस्थमेतत्। एवं स्वराट्पदे स्वपदं स्वान्तर्यामिपरं सत् स्वान्तर्यामिराजकत्वमपि शक्त्या प्रतिपादयेत्। तथा स्वस्य यः स्वरूपप्राप्तो राजा स एव स्वकीय इति तादृग्राजकत्वं स्वराट्त्वम्। औपाधिकराजाधीनत्वे चान्यराजत्वम्। तच्चान्यत् कर्मप्रभृतिकम्। एवं साधिपतित्वादेव अनधिपतिरित्यनुक्त्वा सूत्रकारः अनन्याधिपतिरिति सूत्रयामास।

यत्तु भोगमात्रसाम्ये कथं परमं साम्यमिति—तत्रेदमवधेयम् । परमसाम्ये श्रूयमाणे तद्विरोधेनाभेद एष्टुं न शक्यते । न हि साम्ये पारम्यं साम्यविरोध्यभेदरूपं भवितुमर्हति । अत ईश्वरेण तदन्यस्य कस्यचित् यावत् साम्यं संभवति, तावत् साम्यं मुक्तस्य सर्वस्यापि भवति, न तत्र कश्चिद् विशेष इति परमशब्दार्थः । तथा यदंशे साम्यमिष्यते, तदंशे तत् सर्वथैवान्यूनमिति च । एवञ्च, 'सर्वं ह पश्यः पश्यति', 'श्रोत्रियस्य चाकामहतस्य', 'सर्वमाप्नोति सर्वशः' इत्युक्तज्ञानानन्दप्राप्त्यंशेऽन्यूनत्वे श्रुतितात्पर्यमिति निर्धार्यैव भगवान् बादरायणः, जगद्व्यापारवर्जमित्यवधारयामास । पत्न्यादीनां पत्यादिपारतन्त्र्यमिष्टसाधनत्वाभिमानादेव सुखहेतुरिति यदुक्तम्, तत् तथैव । तथापि सोऽयमभिमानः सर्वत्र भ्रमात्मक एवेति न नियन्तुं शक्यं लोकेऽपि । एवञ्चेश्वरपारतन्त्र्यमिष्टसाधनत्वप्रमयैव सुखहेतुरस्तु । का हानिः । पत्न्या अपि श्वश्रूभावो दुःखार्थैवेत्युक्तमप्ययुक्तम् । एवकारार्थानन्वयात् । श्वश्रूभावोऽपि किं पुरुषं प्रति स्त्रियं प्रति वेति विमृश्यम् । पतिं प्रति पत्नीभावमादाय सुखे प्रस्तूयमाने अन्यनिरूपितश्वश्रूभावेऽनुपपत्तिवर्णनं प्रकृतासंगतञ्च । "गौणमुक्तानां हिरण्यगर्भपारतन्त्र्यमुपाधिप्रयुक्तं कथं न दुःखाय" इति यत् पृष्टम्—तेन किमस्माकम् । न वयं हिरण्यगर्भपारतन्त्र्यं सुखावहं ब्रूमः, न वा तत् अनौपाधिकम् । भगवत्पारतन्त्र्यं सुखाय न भवतीति तच्चर्चा व्यर्थेत्यप्ययुक्तम् । तस्यैव सुखातिशयावहत्वस्यास्माभिः स्थापनात् । निर्विशेषब्रह्मभावस्तु निरालम्ब एव । जीवस्येश्वरभावश्च सर्वप्रमाणबाधितः । सर्वथा जीवेश्वरैक्यं यादृशमद्वैतिभिरिष्यमाणं विशिष्टवेषेण वा उपलक्षितस्वरूपांशत एव वा, सर्वप्रकारमपि तत् असंभावितमिति स्थितम् ॥

एतेन त्रिमूर्त्यैक्यमपि निरस्तम्; तिसृषु मूर्तिषु ब्रह्मरुद्रयोर्जीवत्वस्य बहुप्रमाणसिद्धतया विष्णोरेव सर्वेश्वरतया च तस्य तदुभयैक्यायोगात् । किञ्च किमिदं त्रिमूर्त्यैक्यम्? मूर्तिः शरीरम् । न हि त्रयाणां ब्रह्मविष्णुरुद्रशरीरा-

णामैक्यं संभवति। अथ तिस्रो मूर्तयो यस्य तस्यैक्यमिति चेत्—एकमेव ब्रह्म प्रपञ्चे सर्वा अपि मूर्तीर्गृह्णदस्तीति कस्तत्र तिसृषु मूर्तिषु विशेषः। न च मूर्तिभेदेऽपि तत्रान्तःकरणमेकमिति वाच्यम्—अन्तःकरणस्य जीवत्वप्रयोजकताया एव भवन्मते स्थितेः। तर्हि अहं बहु स्यामित्यादीश्वरव्यवहारविषयोऽहमर्थः क इति चेत्—तदपि भवद्भिरेव विमृश्यम्। अविद्यावच्छिन्नस्येश्वरत्वादेकैकाविद्याभागाधिष्ठातृतया भेदस्यावश्यकत्वमेव। अत एव ब्रह्मादिदृष्टस्य रुद्रादिना प्रतिसंधानाकरणम्। न हि तेषां मिथः सर्वप्रतिसंधातृत्वं सौभरेः स्वशरीरेष्विव प्रमाणसिद्धम्। प्रत्युत ब्रह्मरुद्रयोरीश्वरसृज्यत्वनियम्यत्वतदधीनशक्तित्वतत्कृतरक्षत्वतदेकशरणकत्वादि सुबहुप्रमाणसिद्धमिति ब्रह्मरुद्रयोर्जीवत्वमेव। ब्रह्मसृष्टत्वनामकरणार्थरोदनकर्तृत्वब्रह्मानुगृहीतत्व ब्रह्मशिरश्छेदतत्कपालधारण विष्णुकृतपापविमोचनादिकमप्यनुसंधेयम्। ब्रह्मरुद्रैक्ये च ब्रह्मशिरो हरः कथं छिन्द्यादित्यादि विमृश्यम्। अप्रतिसंधातृत्वतदधीनत्वादिकमभिनयमात्रमिति चेत्—विष्णुकार्ये सर्वमभिनयमात्रमित्यावयोः संप्रतिपन्नम्। ब्रह्मरुद्रयोस्तदधीनत्वं नारायणपारम्यश्चादिशङ्कराचार्यैरपि कण्ठोक्तमिति तत्रैक्यं वा साम्यं वा नैव शक्यशङ्कम्।

यत्तु नामसहस्रशाङ्करभाष्ये, 'पवित्राणां पवित्रं यो मङ्गलानाञ्च मङ्गलम्' इत्येतद्व्याख्यानावसरे ब्रह्मरुद्रादेरप्यतिशयितं परमं विष्णोः प्रभावमुपपाद्य अथ स्वसिद्धान्तस्य कथमपि तत्र प्रवेशनाय, 'ननु कथमेको देवः जीवपरयोर्भेदात्' इत्याशङ्कामुपक्षिप्य, ऐकात्म्यपराणि, जीवपरैक्यपराणि ब्रह्मरुद्रयोर्वासुदेवैक्यपराणि प्रपञ्चमिथ्यात्वपराणि च वचनान्युपन्यस्य समाधानम्—तदिदमस्थाने; नामसहस्रेण पुण्डरीकाक्षार्चनस्य प्रस्तुतस्य भेदग्रहाधीनत्वेनाभेदस्थापनस्यानपेक्षितत्वात्। प्रत्युत भगवदर्चनबाधकत्वात्। उक्तमपि न सम्यक्। तथाहि—प्रश्नवाक्यमेव तावदसमञ्जसम्—जीवपरयोर्भेदस्वीकारस्य, 'एको देव' इत्यस्य चाविरोधात्। देवैक्यं हि एको देव इत्यस्यार्थः। न हि एक एव जीव इति वा एक एवात्मेति वा वाक्यमुपात्तमस्ति।

प्रतिवचनार्थोपात्तवचनानि प्रायेण विशिष्टाद्वैतिनामनुकूलानीति नातीवात्र विस्तरोऽपेक्षितः। अतो दिक्प्रदर्शनमत्र क्रियते—तदेवानुप्राविशदित्यत्र विज्ञानाविज्ञानशब्दवाच्यचेतनाचेतनद्वयेऽप्यनुप्रवेशकथनाज्जीवेश्वरभेद एव। अत्र विज्ञानशब्देन जीवग्रहणमेव जीवे, तद्विज्ञाने च आपादमस्तकप्रचारिणि ब्रह्मानुप्रवेशं दर्शयतीति आनखाग्रेभ्य इति वाक्यमपि सुस्थम्। प्रविष्टानां बहूनां मिथः परमात्मना चैक्यम्, 'त्वमेकोऽसि बहूननुप्रविष्ट' इति वाक्यं कथं बोधयेत्। बहूनित्यस्य देहमात्रार्थकत्वे च न प्रमाणम्। तथात्वेऽपि जीवस्यैकस्य बहुषु प्रवेशो नास्तीति तद्वैलक्षण्यमेव ज्ञायेत। भूतशब्दश्च देहविशिष्टचेतनपरः सुप्रसिद्धः। 'एको लोकदुःखेन न लिप्यते' इत्युक्तौ दुःखिलोकरूपजीवसद्भावः तदन्यत्वञ्च परमात्मनः सिद्ध्येत्। आत्मस्थमिति पदं स्पष्टमेव जीवात्मनिष्ठत्वमाह। अनन्तरवाक्ये नित्यानेकचेतनसिद्धिरेवेत्येवं प्रतिवाक्यमनुसंधेयम्।

'ब्रह्मविष्णुशिवात्मिकाः संज्ञाः जनार्दनस्ये'त्यनेन सृष्ट्याद्यर्थगृहीतमूर्तिविषये संज्ञाभेदः पाश्चात्य इत्येतावत्, जनार्दनस्यैकस्य सृष्टिस्थितिसंहारकारणत्वञ्च सिद्ध्येत्। तिसृष्वपि मूर्तिषु जीवानुप्रवेशोऽस्ति न वेति मानान्तरावसेयम्। संज्ञामूर्तिक्लृप्त्यधिकरणे च चतुर्मुखपरमात्मनोर्भेदः प्रतिपादितः। उपात्तेषु श्लोकेषु जनार्दनवासुदेवाच्युतनारायणादिशब्दैरेव परमात्मा निर्दिश्यत इति श्रियःपतिरेव परं तत्त्वं परा देवतेति स्पष्टम्। 'अहं भवो भवन्तश्च सर्वं नारायणात्मकम्' इति ब्रह्मवाक्यं देवतान्तरतुल्यं भगवद्विभूतित्वं तन्नियम्यत्वरूपं ब्रह्मरुद्रयोर्दर्शयति। भवानहञ्चेति वाक्यं तु बलरामकृष्णोभयविषयम्। त्वया यदभयमिति वाक्यम्, रुद्रकृताभयप्रदानस्यापि संज्ञामूर्तिक्लृप्त्यधिकरणन्यायेन, ज्योतिराद्यधिकरणबलाच्च अन्तर्यामिभगवदधीनत्वात् समञ्जसमेव। 'विष्णोरन्यं तु' इति वाक्यमपि सूक्ष्ममीक्ष्यम्। न हि रुद्रादन्यं ब्रह्मतोऽन्यं विष्णुं न पश्येदित्यस्ति। तेन विष्णुतः पृथग्भावः स्वातन्त्र्यं ब्रह्मरुद्रयोर्नास्तीत्याह। नामानि तव गोविन्द यानि, तान्येव

मम नामानि " इति वाक्यं रुद्रनाम्नामन्तर्यामिपर्यन्ततया गोविन्दनामत्वमेव, न त्वेषां गोविन्दावाचकत्वमित्येवम्परम् । अत्र मम नामान्येव गोविन्द तव नामानीत्यनुक्त्वा मन्नामानि त्वन्नामान्येवेत्युक्तेः स्वारस्यमनुसंधेयम् । 'न ते विरहितं क्वचित्' इति वाक्यं रुद्रेऽपि भगवद्व्याप्तिं मुक्तकण्ठं गमयति । तथा', 'विना किञ्चित् त्वया न हि' इत्येतदपि । एवं ब्रह्मादेर्नारायणस्रष्ट्यत्वादिकमधस्तात् तद्भाष्योपात्तवचनादितोऽप्यवसेयम् ।

इदञ्च शाङ्करभाष्यं सर्वजीवाविशेषेण ब्रह्मरुद्रयोः परमात्मैक्यमेवाभिप्रैति । न तु विशिष्य त्रिमूर्त्यैक्यमन्यादृशमेवप्राचीनाद्वैतिसंमतमस्ति । जीवपरैक्यं प्रस्तुत्य नित्यशेषेण बलरामेण, ब्रह्मरुद्रादिदेवैः, योगिमुखैरन्यैश्च नारायणस्यैक्यस्यात्र स्थापनात् ब्रह्मरुद्रयोरपि जीवत्वस्यैव ददिष्टत्वादित्यप्यवधायानुसंधेयम् ।

एवं ब्रह्मरुद्रयोरेव परैक्ये सर्वथैवासंभाविते सर्वात्मैक्यस्य न कथमपि संभवः । शिष्टमुपबृंहणवैघट्यवादे ।

स्वमीश्वरममंस्त यो भुवि हिरण्यकः पौण्ड्रकोऽ
प्यहम्मतिसुराङ्गरीसततमत्तचित्ताकृतिः ।
निवर्त्य च धियैश्वरं विभवकं य आदृत्य वा
तदैक्यमभिवाञ्छति, द्वयमुपेक्ष्यमाहुर्बुधाः ॥

शुभमस्तु

---

श्रीः

# अखण्डार्थखण्डनप्रसाधनम्

वेदैकैकपदांशतोऽपि नियतं यद्वैभवं वेद्यते
यद्धर्मान् अपहाय वस्त्विव परं वक्तुं न वाक्यं क्षमम् ।
बाधे यद्गुणवैभवादिविषये मानं न किञ्चित् स्थितम्
तत्त्वं तत् परमं रमासहचरं तन्वीत नः संपदम् ॥

वाक्यस्याखण्डार्थत्वं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति ब्रह्मप्रतिपादकवाक्ये, 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति जीवस्वरूपबोधकवाक्ये च स्वीकृतमद्वैतसिद्धौ । पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वमखण्डार्थत्वमिति च निरुक्तम् । इदं 'योयं विज्ञानमय' इति वाक्येऽव्याप्तम् ; तत्र व्यधिकरणविभक्तिकपदश्रवणेन प्रकृत्यर्थस्य प्रत्ययार्थे तस्य च पदार्थान्तरे अन्वयध्रौव्येण संसर्गावगाहितया अतिरिक्तागोचरत्वाभावात् । अभेदः समानविभक्त्यर्थ एव सन् संसर्गतया भासत इति मते समानाधिकरणवाक्ये परमतेऽपीदृशाखण्डार्थत्वस्येष्टत्वेन सिद्धसाधनाच्च । एवं व्यधिकरणप्रयोगेऽपि प्रत्ययार्थानां कारकादीनां संसर्गतयैव भानमिति मते वाक्यसामान्य एवेदं लक्षणमस्तीति न कश्चिद् विशेषः । एवं लक्षणकथने विवक्षितासिद्धिश्च । सत्यं ज्ञानमित्यादौ किञ्चिदप्रकारकब्रह्मव्यक्तिमात्रविषयबोधो भवतीति हि विवक्षितम् । सत्यत्वज्ञानत्वादिविशिष्टबोधनेपि सर्वस्य पदस्मारिततयेदमक्षतमिति । अथैकप्रातिपदिकार्थमात्रपरत्वमखण्डार्थत्वमस्तु । तदपि न । किं वनमिति प्रश्नोत्तरे, एकप्रदेशस्थाः वृक्षाः वनमित्यत्राव्याप्तेः । तत्र प्रातिपदिकार्थस्यानेकत्वात् । प्रातिपदिकार्थतावच्छेदकैक्यं विवक्षितमित्यपि, तत्त्वमसीत्यादौ निर्विशेषपरे अवच्छेदकाप्रसिद्धेरव्याप्तेः । तावता निर्विशेषपरत्वरूपप्रकृतविवक्षितांशस्यासिद्धिप्रसंगाच्च ।

किञ्च समानाधिकरणवाक्यं सर्वमखण्डार्थमिति न भवदभिमतम्; नीलो घट इत्यादौ नीलतादात्म्यसंसर्गभानस्येष्टत्वात्। नापि द्रव्यमात्रविषयकसमानाधिकरणवाक्यत्वं प्रयोजकम् : मृद्घट इत्यादौ मृत्तादात्म्यभानस्येष्टत्वात्। कार्यकारणभावानापन्नद्रव्यमात्रविषयकसमानाधिकरणवाक्यत्वमिति सिद्धयुक्तम्। एवञ्च प्रकृष्टप्रकाशश्चन्द्र इत्यप्यखण्डार्थकं न स्यात्। प्रकर्षस्य गुणस्य विषयतया द्रव्यमात्रविषयकत्वाभावात्। प्रकाशस्य चन्द्रस्य च कार्यकारणभावस्यापि संभवाच्च। किञ्च ब्रह्मवत् चन्द्रस्य निर्विशेषत्वाभावात् अत्र तादात्म्यसंसर्गभानेऽनुपपत्त्यभावात् प्रातिपदिकार्थातिरिक्ताभानं किमिति स्वीकर्तव्यम्। देवताधिकरणे च भाष्ये, 'चिकीर्षितमर्थमनुतिष्ठन् तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात् तमर्थमनुतिष्ठती' त्येवमादिवाक्यैश्चन्द्रादिशब्दानामाकृतिविशेषवाचित्वं व्यवस्थापितम्। परिमले च, 'तदर्थशोधनावसरे, 'शिल्पी शिल्पशास्त्रेभ्य इव हिरण्यगर्भो वेदेभ्यो देवादीनां नामरूपाणि विज्ञाय देवादीन् सृजती' त्युक्तम्। एवञ्चेन्द्रचन्द्रादिपदानि असाधारणाकारविशिष्टार्थोपस्थापकानि। सृष्ट्युपयोगिसर्वतादृशाकारोपस्थितिस्ततो भवतीति ज्ञायते। भगवान् बादरायणो ब्रह्मोपासने 'आनन्दादयः प्रधानस्ये'ति बहुवचनं निर्दिशन् बहवो ब्रह्मण्यपि स्वरूपनिरूपकधर्माः सन्तीति प्रतिबोधयतीति स्थिते चन्द्रादावनेकाकारत्वे कः संदेहः। चन्द्र इति च चन्द्रमण्डलमेव सावयवं विवक्षितमित्यवयवसंनिवेशरूपेयमाकृतिरनेकांशघटितैव। अतश्चन्द्रपदस्य स्वरूपपरत्वेऽपि अनवयवव्यक्तिमात्रविषयत्वमिति न युक्तं वक्तुम्। यदा च चन्द्रं नक्षत्राणि च पश्यन्नेव बुभुत्समानः पृच्छति कश्चन्द्र इति, प्रकृष्टप्रकाशश्चन्द्र इति च कश्चित् प्रतिवक्ति, तदा श्रोता प्रकृष्टप्रकाशत्वमुखेन चन्द्रे दृष्टान् सर्वान् असाधारणाकारान् उपलक्ष्य तावद्विशिष्टव्यक्तिमेव गृह्णातीति न केवलधर्मिमात्रविषयकत्वं ज्ञानस्य। अत एव स्वरूपमात्रप्रश्नोत्तरत्वादिति हेतुरपि नाखण्डार्थत्वसाधकः। चन्द्रस्वरूपस्यैव सखण्डतया साध्यवैकल्यात्। स्वरूपं हि नाम स्वासाधारणधर्मविशिष्टं धर्मि।

निर्विशेषब्रह्मविषये नैवं स्वरूपलक्षणं निर्वहतीति चेत्, निर्विशेषतयाऽभिमत-ब्रह्मप्रकाशे सत्यपि तत्रेतरव्यावृत्तत्वसंशयानपायात् धर्मज्ञानमुखेनैव तत्संशय निवृत्तेरावश्यकतया निर्विशेषमेव तन्न भवतीत्युपपादितमेव शतदूषण्याम् । कश्चन्द्र इति प्रश्नवाक्ये चन्द्रशब्देन चन्द्रस्वरूपग्रहणं तावन्न भवति । बुभुत्सोः चन्द्रशब्दवाच्यस्वरूपविशेषस्यापरिज्ञातत्वात् । क इति पदमेव जिज्ञासितत्ववेषेण स्वरूपपरम् । अतश्चन्द्रशब्दवाच्यः जिज्ञासितस्वरूप इत्येव प्रश्नार्थः । अतः समाधिरपि चन्द्रशब्दवाच्यः प्रकृष्टप्रकाशत्वरूपस्व-रूपविशिष्ट इत्येवेति वाक्यार्थस्य नाखण्डत्वम् । चन्द्रशब्दवाच्यतावच्छेदकं प्रकृष्टप्रकाशत्वम्, अन्यद्वेत्यन्यदेतत् । एतेन—गन्धवती पृथिवीत्यादौ प्रकृते च तत्तत्स्वरूपमेव पृथिव्यादिपदार्थः पृथिवीशब्दवाच्यत्वादिकं न पृथि-व्यादिपदलक्ष्यम्, जहल्लक्षणापत्तेः । स्वरूपपरत्वे तु जहदजहल्लक्षणेति सिद्धयुक्तं निरस्तम्; पृथिवीपदवाच्येत्यर्थेऽपि तद्धर्मिण एव ग्रहणात् जहदजहल्लक्षणा-त्वानपायात् । पृथिवीत्वरूपजात्यवच्छिन्नं प्रकारान्तरेण इदमिति गृहीत्वा तत्र पृथिवीशब्दव्युत्पत्तिः तेन प्राग्लब्धा न वा । लब्धा चेत्—का पृथि-वीति न पृच्छेत् । न चेत्, पृथिवीशब्दात् स्वरूपं न गृह्णीयात् । अत एव गन्धवती पृथिवीत्यादौ लक्षणग्रहणस्य व्यवहारः प्रयोजनमिति वृद्धाः । पृथिवीत्ववती पृथिवीति प्रयोगेपि पृथिवीपदं पृथिवीशब्दव्यवहार्यार्थकमेव । पृथिवीशब्दवाच्यतावच्छेदकं गन्धवत्त्वं वाऽन्यद्वेति प्रश्नोत्तरं तत् । तेन जातिविशेषः वाच्यतावच्छेदक इत्युक्तं भवति । गन्धसमनियतत्वोपलक्षित जातिः प्रवृत्तिनिमित्तमित्यर्थे दोषलेशाभावात् ।

सर्वं ब्रह्म तज्जलानित्यत्र सर्वब्रह्मणोः कार्यकारणभावापन्नतया नाख-ण्डार्थत्वम् । तथा तत् त्वमसीत्यत्राप्यस्तु । त्वमित्युक्तस्य प्रजान्तर्गतत्वात् प्रजानाञ्च, 'सन्मूलाः सोम्येमाः प्रजाः' इति ब्रह्मजन्यत्वस्योक्ततया तदुपसं-हारवाक्येऽत्र तद्विवक्षाया आवश्यकत्वात् । त्वमहमादिपदोक्तं विशिष्ट-चैतन्यं शुद्धचैतन्यातिरिक्तं मिथ्याभूतमिति, प्रतिबिम्बभूतमिति च पक्षे

कल्पितत्वादुपादानोपादेयभावः सुतराम् । एवं तत्त्वमसीति महावाक्यस्यैवाखण्डार्थत्वाभावे प्रत्येकं तत्पदार्थस्य त्वंपदार्थस्य वा शोधकं यत्, 'सत्यं ज्ञानम्', योऽयं विज्ञानमयः' इत्यादिवाक्यम्, तस्याखण्डार्थत्वमनपेक्षितम् । न हि तत् स्वरसतोऽखण्डार्थकत्वेनावसितम्; सत्यत्वादिधर्मविशिष्टवस्तुप्रतीतेरेव स्वरसत्वात् । एवं तत्र ब्रह्मशब्दवाच्यत्वपरत्वे वा बृहत्त्वबृंहणत्वविशिष्टतापरत्वे वा धर्मवैशिष्ट्यं स्पष्टम् । वाच्यतावच्छेदकानामपि तेषां त्यागेन धर्मिमात्रे पर्यवसानविधानञ्च किं समानाधिकरणवाक्यत्वबलात् आहो ब्रह्मतत्त्वस्य तथा निश्चितत्वबलात् । नाद्यः, नीलो घटः, मृद्घटः इत्यादौ धर्मिमात्रविषयकत्वस्य भवद्भिरेवानिष्टत्वात् प्रकृष्टः प्रकाश इत्यादौ तदसंभवस्यावश्यादुपपादितत्वाच्चानैकान्त्यात् ।

एवं सोऽयं देवदत्त इत्यादावपि धर्मिमात्रभानं नास्त्येव; देवदत्तस्य पिण्डविशेषतया पिण्डान्तरव्यावृत्तकरचरणमुखनासिकादिसंनिवेशग्रहणात् । न च सोयं देवदत्त इति वाक्यप्रयोगाधीनज्ञानस्य न संनिवेशविशेषविषयकत्वं वक्तुं शक्यम्, यदृच्छाशब्दानां व्यक्तिमात्रे संकेतादिति वाच्यम्— आशैशवात् आ मरणात् देवदत्तव्यक्त्येकत्वे मानाभावात् देवताधिकरणभाष्योक्तरीत्या आकृतेरपि शब्दार्थत्वात् । शब्दजन्यापरोक्षज्ञानवादिभवन्मते सोऽयं देवदत्त इतिवाक्यात् अयम्पदानुरोधेन प्रत्यक्षस्यैव सुस्वीकरतया तत्र प्रत्यक्षे वर्णाकारादिसर्वविशेषभानस्यावश्यकत्वाच्च । अनेकेषां पुरुषाणां पृथक्संकेतेन देवदत्तशब्दवाच्यताया लोके दर्शनेन देवदत्तान्तरव्यावृत्ताकारमुखेनैव विवक्षितव्यक्तिविशेषनिर्धारणस्य कार्यत्वाच्च । यदृच्छाशब्देष्वपि सर्वत्र संभवति व्यावर्तकाकारे तद्विशिष्टस्यैव वाच्यत्वम् । तदभावे संज्ञा वा विशेषणमित्येव तान्त्रिकसंमतम् । संज्ञाभानपक्षे संज्ञाया अपि वाच्यकोटिप्रवेशोऽस्ति न वेत्येव तु विवादः । श्रवणगृहीतत्वात् पृथक् पदवृत्त्युपस्थाप्यत्वं नापेक्षितमिति तु वाच्यत्वं मा भूदिति संगिरन्ते । तस्मात् समानाधिकरणवाक्यत्वे धर्मिमात्रपरत्वमित्येतत् सर्वथैवासिद्धम् ।

नान्त्यः ; ब्रह्मतत्त्वं निर्विशेषमिति प्रागेव निश्चितत्वे किं ब्रह्मेति जिज्ञासाया एवाभावेन सत्यं ज्ञानमिति वाक्यस्यैवानुत्थानात्। यद्युच्येत-ब्रह्मविदाप्नोतिपरमिति वाक्यश्राविणा, बृहति बृंहयति तस्मादुच्यते परं ब्रह्मेति निरुक्तिमपिविदुषा शंक्यते, कथं बृंहणत्वविशिष्टतया सविकारस्य परत्वम्, निर्विकारस्य तत्त्वौचित्यादिति । तत्परिहाराय सत्यमिति वाक्यं प्रवृत्तमिति । अस्त्वेतत् । एवमपि सत्यपि बृंहणत्वे सविकारत्वं न प्रसज्यते । अत एव निरुक्तेपि बृंहयतीतिनिर्वचनेन परमिति शब्दप्रयोगोऽपीत्येव परिहारः पूर्वाविरोधेन कर्तव्यः ; न तु बृंहणत्वापलापेनेति न निर्विशेषसिद्धिः । अत एवोत्तरार्धे फलदशायामपि, सर्वान् कामान् सह ब्रह्मणा विपश्चितेति भोक्तुर्भोग्यस्य तद्विशेषस्य विपश्चित्त्वस्य सहानुभाव्यानामन्येषां कामानाञ्च निर्देशेनोभयविभूतिविशिष्टपरिपूर्णब्रह्मानुभव एवोच्यत इति नात्र निर्विशेषत्वनिर्वचनम् । ब्रह्मविदाप्नोति परमित्यत्र परपदं परवासुदेवे पारिभाषिकं रूढञ्चेत्यन्यत्रावोचाम ।

'योऽयं विज्ञानमय' इति वाक्यं तु प्राणेषु हृदीति 'व्यधिकरणानेकपदघटितं निर्विशेषपरतया नैवावसीयेत । यदि चाखण्डार्थज्ञानमीदृशादपि वाक्याद् भवेत्, यदि च तत्त्वमसीतिवाक्यार्थज्ञानस्य चास्य च न किञ्चिद् विषयवैलक्षण्यम्, तर्हि सत्यादिकिञ्चिद्वाक्यश्राविणोऽपि मुक्तिः स्यादिति, अहं ब्रह्मास्मीति ज्ञानानावश्यकतैव स्यात् । एवञ्च महत् सौकर्यमपि संपादितं भवति । जीवब्रह्मैक्यज्ञानस्यावश्यकत्वे हि विविधविप्रतिपत्तिप्रादुर्भावादर्थनिर्णये दौष्कर्यम् । प्रतिबिम्बं जीव इति केचित् । तत्र बिम्बात् प्रतिबिम्बं भिन्नमित्येकदेशिनः । अन्तःकरणावच्छिन्नं चैतन्यमित्यन्ये । तत्रान्तःकरणसञ्चारे चैतन्यप्रदेशभेदात् जीवस्य न स्थायिता स्यादिति ब्रह्मण एव दुःखित्वादिकं पर्यवसाने स्यादिति च परे आक्षिपन्ति । एवमनच्छिन्नचैतन्यमिदं शुद्धादन्यत् कल्पितमिति स्वीकारे मिथ्यात्वात् तस्य कथं ब्रह्मैक्यमित्यपि । अतो जीवब्रह्मैक्यमितीदं किं बाधविवक्षया, उत ब्रह्मणा सहाद्वैत-

विवक्षयेति नाद्वैतिभिर्निर्धार्येतेति। तस्मात् जीवब्रह्मैक्यज्ञानं मोक्षसाधनमिती-दमुपेक्ष्य, तत्त्वमसीति वाक्यस्य यः कश्चिदर्थोऽस्तु, किं तेनेति विमृश्य सत्यादिवाक्यमेवापेक्षितमखण्डं दर्शयतीति परिशीलयन् अवरोपितमहाभारत्वे-नात्मानं मत्वा त्वरेतेति। वस्तुतः सत्यादिवाक्यमपि नाद्वैतसाधकमिति तु प्रपञ्चितमेव।

यत्तु शतभूषण्यामत्र ब्रह्मसिद्ध्युदाहरणं ब्रह्मणो निर्विशेषत्वनिर्धारणाय —तदसाधकम्—सामान्यरूपं ब्रह्मेत्यस्य साधारणधर्मो ब्रह्मेत्यर्थो वा, साधारणधर्मविशिष्टं ब्रह्मेति वा, कटकमकुटादौ हिरण्यमिवानुगतमुपादानं ब्रह्मेति वा। नाद्यः; ब्रह्मणो घटत्वादेरिव धर्मत्वस्यानभिमतत्वात्। तथासति सर्ववस्तुनिष्ठत्वं तत्पारतन्त्र्यञ्च तस्येति ब्रह्म घट इत्यादिप्रयोगे ब्रह्म-शब्दस्य ब्रह्मविशिष्टधर्मिपर्यन्तार्थकत्वमिति, घटत्वादेरिव तस्य न जगत्कारणत्व-मिति चैवं बहुविप्लवः स्यात्। न द्वितीयः; साधारणधर्मविशिष्टं सर्वं विशेषधर्मविशिष्टमपीत्यस्यैवानुभविकत्वात्, नीलघटपीतघटादिसर्वविलक्षणस्य घटसामान्यस्य कस्य चिदभावात् ब्रह्म सविशेषं विशेषभूतञ्चेति कथं निर्विशेषम्। अत एव निर्विशेषं न सामान्यमित्युक्तम्। वस्तुतो निर्धर्मब्रह्मवादिनां भवतां साधारणधर्मविशिष्टं ब्रह्मेत्युक्तावपि तमेव धर्मं स्वभिन्नतया विशेषात्मक-मादाय सविशेषत्वापत्तिरेव। केन च साधारण्यं ब्रह्मगतस्य तस्य धर्मस्येति विचारे वस्त्वन्तरस्वीकारे सुतरां द्वैतमेवेत्यपसिद्धान्तश्च। न तृतीयः; हिरण्यस्य कटकमकुटाद्यनेकावस्थाभाक्त्वस्येव ब्रह्मणोऽनेकावस्थाभाक्त्वस्यापत्तेः। तेषां विकाराणां मिथ्यात्वे च कानाम सामान्यता। अत एव विवर्तो-पादानत्वेऽपि सामान्यरूपत्वस्यासंभव एव। औपचारिक एवासौ सामान्य-शब्द इति चेत्—किमिति तत्त्वनिरूपणावसरे भ्रामकशब्दप्रयोगेण व्या-मोहनम्। उपादानमनुपादानं वेति किं विचारेण। घटोस्ति, पटोऽ स्तीत्येवं प्रयोगेष्वनुगतं सत् ब्रह्मेति चेत्—तत्रैवोत्तरं प्रागुक्तम्; तेन सता

किञ्चिद्विशेषरूपेण घटपटादिनैव भाव्यमिति न सर्वविशेषाभावे सदिति किञ्चिदस्तीति। आस्तामेतत्। अखण्डार्थत्वं किमित्यत्र ब्रह्मसिद्धिरियं न किञ्चिद् वक्तीति किमनेन।

इष्टसिद्धिवाक्यं तूपात्तं ब्रह्मणो वाच्यत्वाभावेऽपि लक्ष्यत्वमस्तीति ज्ञापयति। तावता कथमखण्डार्थता। न हि गङ्गायां घोष इत्यत्र लक्षणाऽस्तीत्यखण्डार्थत्वम्। लक्षणया प्रतिपाद्यत्वस्वीकारेऽपि, 'यतो वाचो निवर्तन्ते' इति वाक्ये वृत्तिसंकोचस्वीकारो दोषः। एवम् उपनिषन्मुख्यार्थत्वं यस्य नास्ति, तदेवौपनिषदमिति कथनमपि न समञ्जसम्। एवमप्रमेयमित्यस्य लक्ष्यविधया प्रमेयत्वेऽपि शक्त्या प्रमेयत्वाभावमात्रेण निर्वाहेऽपि संकोच एव। तत्स्वीकारे च परिच्छिन्नतया मेयत्वाभाव एवार्थः कस्मान्नेष्यते। वस्तुतोऽप्रमेयमिति पदं मातुं परिच्छेत्तुमशक्यमित्यर्थं स्वरसतोऽपि ब्रवीति। अथ लक्ष्यत्वेऽपि स्मर्यमाणत्वमेवास्ति, स्मृतिश्च न प्रमेति अप्रमेयत्वं मुख्यमिति चेत्—अननुभूतस्य स्मरणायोगात् अप्रमेयस्य कथं स्मर्यमाणता। विशिष्टरूपेण प्रमेयभूतं पश्चात् विशकलितं स्मर्यत इति चेत्—ननु विशिष्टं मिथ्या; तत्र सत्यस्य कथं विशिष्टरूपेण प्रमेयता। विशिष्टं शुद्धश्चैकमिति चेत्—तर्हि तस्य तेन रूपेण प्रमितत्वादप्रमेयत्वाभावः। केवलरूपेण प्रमितत्वाभावोऽप्रमेयत्वमिति चेत्—तदाप्यप्रमेयपदार्थसंकोच एव। एवं स्मर्यमाणतावादे च वाक्यस्याखण्डार्थत्वं दूरापेतम्। प्रमाणं हि शब्दः। शब्दजन्यप्रमित्यविषये चाखण्डे कथं शब्दप्रमाणकत्वं प्रतिज्ञातं घटत इति। एतन्मते शब्दजन्यापरोक्षवादः सुदूरापास्तः। प्रत्यक्षस्यापि प्रमान्तर्भूतत्वात्।

न्यायरत्नदीपावल्युक्तं तु सोऽयं देवदत्त इत्यत्र विशेषणांशभानस्य प्राक्समर्थनादेव निरस्तम्। अपिचास्तु देवदत्तपदार्थो यः कश्चित्। सोऽयमित्युपात्तविशेषणत्यागे किं मानम्। तत्तेदन्तयोर्विरुद्धत्वात् त्याग इति चेत्—कथम्? तत्त्वं तद्देशतत्कालसंबन्धः, इदन्त्वमेतद्देशैतत्काल-

संबन्धः ; कथमुभयं घटत इति चेत्---किं वस्तुन्युभयं न घटते, उत प्रतीतौ । अद्ये तत्त्वमिदन्त्वञ्च भिन्ननिष्ठमेव स्वीकार्यमिति जितं क्षणिकवादिना बौद्धेन । अथोच्येत---परिच्छिन्नस्यापि वस्तुनः एकस्मिन्नेव देशे कालद्वयसबन्धे क्रमिके किं बाधकमिति---तर्हि एकस्मिन्नेव काले तादृशस्य देशद्वयसंबन्धेऽनुपपन्नेऽपि विभिन्नकाले देशद्वयसंबन्धेऽपि किं बाधकमित्यपि विमृश्यताम् । अतः प्रत्यभिज्ञैक्यं स्थापयद्भिस्तत्तेदन्तयोर्विवक्षाऽवश्यमेव कर्तव्येति प्रतीतिविषयत्वभङ्गोऽपि तयोरयुक्तः । वस्तुनि च द्वयोरवच्छेदककालभेदेन समावेशे उपपन्ने प्रतीतौ तद्भानं कुतो न भविष्यति । प्रतीतिमूलमेव हि वस्तुनि तत्स्थापनम् । अत एवं जहदजहल्लक्षणोदाहरणत्वेन तार्किकेणान्नम्भट्टेन तत्त्वमसीत्यस्योदाहरणम्, तर्कमते जीवपरयोर्भेदात् उदाहरणमिदमनुचितमिति सोयं देवदत्त इत्युदाहरणान्तरप्रदर्शनञ्चायुक्तं वेदितव्यम् । उभयस्याप्युदाहरणस्याद्वैत्युपपादनमूलवासनाधीनत्वात् । सोऽयं देवदत्त इत्यत्र धर्मभानमस्त्येवेति प्रकाशिकायामपि प्रतिपादितमित्यलम् ।

तत्त्वप्रदीपिका तु अद्वैतसिद्धिनिरासेनैव निरस्तप्राया । यत्तु सत्यादिवाक्यं पदार्थसंसर्गातिरिक्तेऽर्थे प्रमाणम् प्रमाणत्वात् चक्षुरादिवदिति---तन्न---किमत्र संसर्गांशे प्रामाण्याभाव इष्टः, उतातिरिक्तांशेऽपि प्रामाण्यम् । आद्ये चक्षुषि साध्यवैकल्यम्, घटघटत्व-घटभूतलादिसंसर्गांशेऽपि तस्य प्रमाणत्वात् । अन्त्ये संसर्गो नास्तीत्यस्यासिद्धया सिद्धसाधनमर्थान्तरञ्चेति । यदि च संसर्गं न बोधयेत्, पदजन्यपदार्थोपस्थितिविषयतोऽधिकाभावात् स्मृतिरेव पदार्थधीरिति न वाक्यस्यात्र प्रमाणता । किञ्च प्रतिपदं शुद्धधर्मिमात्रोपस्थापकत्वे सिद्धे तत्सिद्धिः । तत्रैव न किञ्चित् प्रमाणम् । लक्षणायां प्रमाणाभावात् । जातञ्च ज्ञानमपरिच्छिन्नज्ञानत्वानन्दत्वाद्यवगाहि, न वा । आद्ये कथं निर्विशेषबोधः, अन्त्ये कथं मुक्तिहेतुतेति च भाव्यम् ।

तत्त्वमस्यादिवाक्यं संसर्गविषयकज्ञानजनकमिति स्वीकारेऽपि नाखण्डार्थत्वसिद्धिः; नीलो घट इत्यत्र नैल्यघटत्वोभयविशिष्टव्यक्तिबोधवत् प्रातिपदिकद्वयार्थतावच्छेदकधर्मद्वयविशिष्टैकवस्तुबोधस्य संभवात्। तत्त्वम्पदार्थतावच्छेदकयोर्विरोधादुभयविशिष्टैकविषयकबोधो न भवतीति चेत्—कोऽसौ विरोधः। यदि असामानाधिकरण्यम्, तर्हि तत्तदाश्रययोर्भेद एवेष्ट इति कथं तत्र धर्मत्यागेन धर्मिमात्रग्रहणेऽप्यद्वैतसिद्धिः; सर्वज्ञत्वादिविशिष्टेश्वरस्य किञ्चिज्ज्ञत्वादिविशिष्टजीवस्य च कल्पितनया भिन्नयोः घटपटयोरिव धर्मत्यागेऽप्यैक्यायोगात्। यदि च धर्म्यैक्यसंभवः, तर्हि धर्मयोर्भिन्नकालावच्छेदेन भिन्नदेशावच्छेदेन वा समावेशात् धर्मयोः शब्दार्थत्वत्यागेन तदप्रतीतिवर्णनमनपेक्षितम्। एवमीश्वरस्यैव किञ्चिज्ज्ञत्वस्वीकारे बहुश्रुतिस्मृतिसूत्रविरोधो दुर्निरोध इति चेत्—त्यज्यतामद्वैतम्। प्रमाणान्तरतो निर्विशेषे सिद्धे खल्वखण्डार्थत्वप्रत्याशा। सिद्धिरेव नेति च व्यक्तम्।

यत्तु कटकादिविशेषत्यागेन स्वर्णस्येव सामान्यरूपस्य ब्रह्मणो भानमिति—तत्र निर्विशेषं न सामान्यमिति न्यायात् स्वर्णं यत्किञ्चिद्विशेषरहितं न स्थातुमर्हति यथा, तथैव ब्रह्मापि तद्विशेषग्रहणाभावेऽपि वस्तुतो निर्विशेषं न भवितुमर्हतीत्युक्तमनुसंधेयम्। 'निर्विशेषं न सामान्यम्' इत्युत्सर्गमात्रम्। विशेषं कमपि विनापि सामान्यं स्यादिति तु न युक्तम्। अपवादसद्भावे मानाभावात्। 'विशेषस्य निर्विशेषत्ववत्' इति ब्रह्मसिद्धिरप्युपेक्ष्या। किं तत्र विशेषपदेन तार्किकाभिमतविशेषपदार्थग्रहणम्, उत सर्वप्रसिद्धस्य। नाद्यः, तादृशविशेषाभावस्य घटादिष्वपि सत्त्वाद् ब्रह्मणोऽपि तदभावे इष्टापत्तेः। नान्त्यः, घटत्वादिरूपाणां विशेषाणां सकलघटसमवेतत्वपटादिव्यावृत्तत्वादिविशेषसद्भावात्। एकव्यक्तिमात्रवृत्तिधर्मस्यापि व्यक्तिरेव विशेषः, धर्मस्य धर्मिणाऽपि व्यावृत्तिसंभवस्यान्यत्र शतदूषण्यामेवोपपादितत्वात्। वस्तुतो ब्रह्मणि सामान्यशब्दप्रयोग औपचारिक एवेति ब्रह्मसिद्धावेव स्पष्टमिति नात्रोत्सर्गस्यापवादोऽन्वेषणीयः। अतो न निर्विशेषपरत्वमखण्डार्थत्वम्।

नापि विशेष्यमात्रपरत्वम् । मात्रपदेन प्रकारव्यावर्तने निष्प्रकारकज्ञानजनकत्वमेवोक्तं भवति । तत् प्रकृष्टप्रकाशश्चन्द्रः, सोयं देवदत्त इत्यादौ न भवतीति प्रागेवोक्तम् । निर्विशेषपदं निर्भेदपदं वा न विशेषाभावरूपस्य विशेषस्य भेदाभावरूपस्य भेदस्य वा निवर्तकं भवति, प्रतियोग्यभावयोः सामानाधिकरण्यायोगात् , अस्याभावस्य स्वप्रतियोगितया ज्ञानस्य कदाऽपि दुर्वचत्वाच्चेति निर्विशेषत्वानुमानभङ्गवादे निरूपितमेव । भावरूपविशेषणरहितपरत्वमखण्डार्थत्वमित्यपि न । तत् त्वमसीत्यनेन इदं भावरूपविशेषणरहितमित्यस्याबोधनात् । वस्तुतो भावविशेषणरहितं यत् तत्परत्वमिति चेत्-सोयं देवदत्तः, प्रकृष्टप्रकाशश्चन्द्र इत्यादावव्याप्तिः ; देवदत्तादेर्वस्तुतो भावविशिष्टत्वात् । भावरूपविशेषणाबोधकत्वमखण्डार्थकत्वमित्युक्तावपि स एव दोषः । भावातिरिक्ताभावानङ्गीकारिपक्षे भावपद वैयर्थ्यम् । प्रतिवादिनां भावातिरिक्ताभावानङ्गीकारितया तान् प्रत्येतत्साधने दृष्टान्तासिद्धिः । सर्वस्यापि वाक्यस्य विशिष्टपरत्वस्यैव तदिष्टत्वात् , विशेषणस्य च क्वचिदभावस्यापि वस्तुतो भावरूपत्वात् । वस्तुतोऽयं भावाद्वैतवादो भवद्भिरेवोपेक्षितः । एकविशेष्यपरत्वमित्येतत् , सास्नादिमन्तो गावः, शीतोष्णस्पर्शौ पयःपावकौ इत्यादिलक्षणवाक्येष्वव्याप्तम् । सर्वत्र व्यधिकरणवाक्येऽतिव्याप्तश्च ; मुख्यविशेष्यस्यैकत्वात् । एकप्रातिपदिकार्थमात्रपरत्वं तदिति चेत्—किमेकप्रातिपदिकमात्रप्रयोज्यविषयताकबोधजनकत्वं तत् , उतैकप्रातिपदिकार्थत्वं यस्य संभावितम् , तत्परत्वम् ? नाद्यः, सत्यं ज्ञानमित्यादावपि अनेकप्रातिपदिकप्रयोज्यविषयताकत्वसत्त्वादव्याप्तेः । तत् त्वमसि इत्यत्राख्यातप्रयोज्यविषयताया अपि सत्त्वेन प्रातिपदिकेतरप्रयोज्यविषयताकत्वाभावासंभवाच्च । चैत्रःपचतीत्यादेरप्यखण्डार्थत्वप्रसंगाच्च । वाक्यसामान्यस्य प्रातिपादिकतदितरोभयघटिततया एकप्रातिपदिकेतरप्रयोज्यविषयताकत्वाभावासंभवाच्च ; नान्त्यः । नीलो घट इत्यादेरप्यखण्डार्थत्वप्रसंगात् तस्य नीलघट इति समस्तप्रातिपदिकबोध्यत्वसंभवात् । एवं

व्यधिकरणवाक्यानि सर्वाण्यप्यखण्डार्थानि स्युः । अन्वितैकविशिष्टार्थपरतया तादृशसमस्तपदप्रयोगसंभवादेकप्रातिपदिकार्थत्वस्थितेः । उक्तं हि, "अर्थैकत्वादेकं वाक्यम्" इति । एकविशेष्यपरत्वमित्यत्र एकपदस्य संख्यापरत्वमुपेक्ष्य एकं समानमित्यर्थविवक्षया अनेकं विशेषणं प्रति यत् समानं विशेष्यं तत्परत्वमित्यर्थो भवतीतीदमस्मन्मतमेवेति शतदूषण्याशयमनवबुध्य, "यदि कल्पोऽयं श्रीभाष्यानुयायिनाम्, तर्हि तेऽप्यद्वैतिन एव" इति लेखनं कृतमिति भाव्यम् ।

वाक्यत्वादिति हेतोरनैकान्तिकत्वमिति स्वरूपमात्रप्रश्नोत्तरत्वादिति सिद्ध्युक्तहेत्वादरणमपि सिद्धेः प्राक् खण्डितत्वादेव हेयम् । स्वरूपपदं किं व्यक्तिपरम् उत तद्वृत्त्यसाधारणधर्मपरम् । नाद्यः ; का पृथिवी, को गवय इत्यादौ एकव्यक्तिप्रश्नासंभवात् । व्यक्तेरपि, "व्यक्तिर्गुणविशेषाश्रयो मूर्तिः" इत्युक्तरीत्या प्रायः सखण्डत्वाच्च । अन्त्यं तु एकव्यक्तिविषये नानाव्यक्तिकस्थले च संभावितमुपपन्नम् । तदा च सखण्डत्वमवश्यम्भावि । अथ तस्य तस्य धर्मस्य व्यावृत्तिरूपतया विशेष्यानतिरेकः स्वीक्रियत इति चेत्—अन्यदेतत् । निष्प्रकारकबोधजनकत्वं तु न कथमपि । अभावस्येव भावस्य सत्यत्वज्ञानत्वादेः शब्दोपस्थाप्यस्योपेक्षायामन्यादृशत्वकल्पनायाश्च गमकमपि न किञ्चित् । "वाक्यत्वादिति हेत्वनुवादस्तु दुरनुवाद एव" इत्युक्तमपि दुरुक्तम् । समानाधिकरणवाक्यत्वादिति पूर्वप्रयुक्तहेतुघटकवाक्यत्वांशानन्वयप्रदर्शनार्थत्वादनुवादस्य । अद्वैतसिद्धौ वाक्यत्वत्यागमात्रेण, ग्रन्थान्तरोक्तानुवादः कथं दुरनुवादः स्यात् । अस्तु वा वाक्यत्वदलम्, मा वा ; स्वरूपमात्रप्रश्नोत्तरत्वेनाभिमतस्य पदसमुदायस्याऽऽकांक्षादिमत्त्वमस्ति न वा । अस्ति चेत्, कथमविशिष्टधीः ? नास्ति चेत्— कथमेकार्थपर्यवसानम् ? अन्यथा, गौरश्वः पुरुषो हस्तीत्यादावपि तत्प्रसंगात् । अतः शतदूषण्युक्तदोषोऽद्वैतसिद्धिमप्यास्कन्दत्येव ।

यदुक्तमद्वैतसिद्धौ—अविशिष्टधियं प्रत्यप्याकांक्षादेः कारणत्वं भवितु-मर्हति । न च ययोः पदयोरसाहित्ये अन्वयाननुभावकत्वापत्तिः तयोराकांक्षा, अन्वयानुयोगिप्रतियोगिवाचकपदद्वयोपस्थितिः संनिधिः, अन्वयाबाधो योग्यतेति आकांक्षा - संनिधि योग्यतानिर्वचनादन्वयस्यावश्यकत्वमिति वाच्यम्—अन्वयघटनमन्तरैव निर्वचनात्। अन्यादृशान्वयौपयिकाकांक्षादिसत्त्वे अन्वयान्तरधीवारणाय तात्पर्यस्य घटनीयतया तात्पर्यविषयान्वयानुभावकत्वमित्येतत्स्थाने तात्पर्यविषयाननुभावकत्वमिति सामान्यतो निर्वचनमाकांक्षायाः। एवमेव तात्पर्यविषयबोधानुकूलार्थोपस्थितिरासत्तिः, तात्पर्यविषयस्याबाधो योग्यतेति नानुपपत्तिरिति—तन्न—सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र सत्यपदाभावे साकांक्षत्वं वाक्यस्य वक्तव्यम् । तन्न स्यात्; तदभावेऽपि तात्पर्यविषयाखण्डार्थबोधस्य जायमानत्वात्; यथा विज्ञानं ब्रह्मेत्यादौ । यदि सत्यत्वादेः तात्पर्यविषयत्वमिष्यते, तर्हि नाखण्डार्थता । न च— सत्यादिवाक्यं सत्यत्वादिविशिष्टब्रह्मबोधं जनयित्वा अनृतादिव्यावृत्तिं ज्ञापयित्वा तदुपलक्षितं ब्रह्म बोधयतु इति तात्पर्यमस्ति । तत्रैकपदाभावेऽपि तात्पर्यविषयद्वारभूतबोधासिद्ध्या तदधीनाखण्डज्ञानासिद्धिरिति मन्तव्यम्— द्वारभूतबोधमात्रे शब्दविश्रान्तिसंभवे अखण्डब्रह्मबोधस्य शब्दजन्यत्वे मानाभावात् । धूमोऽस्तीति वाक्यजन्याग्न्यनुमितिर्हि न वाक्यजन्या । वक्तुस्तु वह्निबोधनेच्छाऽप्यस्त्येव । तथैवात्र भविष्यति, यद्यखण्डे तात्पर्यग्राहकं प्रमाणं स्यादिति । एवञ्चाकांक्षादिमत्त्वं वाक्यत्वञ्चावान्तरबोधप्रयुक्तमित्येवोच्यताम् । अवान्तरबोधं विना गंगायां घोष इत्यत्रेव लक्षणया अखण्डबोध एव प्राथमिक इति पक्षे तु वाक्यत्वादिकं दुर्निरूपमेव ।

एकोपस्थित्यव्यवहिततत्प्रयोज्यबोधप्रयोजकार्थोपस्थितिमात्रमासत्तिरिति च न युक्तम्—घटेनोदकमाहृत्य फलं भुङ्क्ते इत्यादौ भुजिघटपदयोरप्यासत्त्यभावात् अन्वयप्रतियोग्यनुयोगिविषयकाव्यवहितोपस्थितिरूपत्वस्याऽऽसत्तावावश्यकत्वात् । अखण्डबोधस्य सत्यत्वादिविशिष्टरूपसखण्डविषयबोधानन्तर-

भावितया तत्रोपस्थितिरूपासत्तेः अन्यथासिद्धत्वाच्च। सत्यपदलक्षणावृत्त्यधीनाखण्डोपस्थितेरस्तु तत्र कारणत्वमिति चेत्—ज्ञानपदलक्ष्याखण्डोपस्थितेरपि तत्रैव कारणत्वमित्यत्र मानाभावात् प्रतिपदं पृथगेवाखण्डबोधकत्वसंभवादासत्तेरनपेक्षितत्वात्। लक्षणावृत्त्यधीनाखण्डोपस्थित्यपेक्षया बोधस्याधिकविषयकत्वाभावेनोपस्थितित एव कार्यनिर्वाहे बोधान्तरजनने मानाभावाच्च। अनेकपदजन्यानेकोपस्थित्यधीनबोधविषयाणामखण्डानामेकत्वे मानाभावेनानेकाखण्डविषयकत्वस्यापि बोधे आपत्तेश्च। न च सत्यत्वज्ञानत्वादिविशिष्टब्रह्मविषयकबोधजनकतया सर्वेषां पदानामेकविशेष्यपरत्वावसायात् एकमेवाखण्डमुपस्थाप्यमिति वाच्यम्—तर्हि सत्यादिनानापदविशेष्यकलक्षणाज्ञानादेकस्मादेकस्या एवाखण्डोपस्थितेः संभवेन कस्याः कया साकमासत्तिर्वक्तव्येति। यदि चोपस्थितेरेकत्वेऽपि विषयभेदः स्यात्, तर्हि एकविषयावच्छिन्नोपस्थितेर्विषयान्तरावच्छिन्नोपस्थित्यानन्तर्यं विशिष्टवेषेणेति कथञ्चिद् वक्तव्यं भवेत्। तदप्यत्रानपेक्षितम्।

एवं तात्पर्यविषयाबाधो योग्यतेत्यप्ययुक्तम्। बाधो हि तदभावः तदभावबुद्धिर्वा। न चैवं सुवचम्, स्वस्य स्वाश्रयत्वाभावेनाखण्डे अखण्डाभाववत्ताबुद्धेरेव प्रासत्वात्। न च तादात्म्यसंसर्गकाखण्डप्रतियोगिकाभावज्ञानाभाव इहाबाधः; न चायं ब्रह्मणि अखण्डे; तत्राखण्डतादात्म्यसंसर्गादिति वाच्यम्—तथासति तादात्म्यसंसर्गकाखण्डप्रतियोग्यनुयोगिकबोधस्यैव साक्षात् संभवात्। एवञ्च तादात्म्यसंसर्गकतत्प्रकारकतद्विशेष्यकबोधस्यैव सिद्ध्या कथमखण्डार्थत्वमिति। अत एवमनुपपत्तिपर्यालोचनयैव चन्द्रिकाकारेण वस्तुत आकांक्षादीनां प्राथमिकबोधहेतुत्वेऽपि अखण्डार्थबोधे कारणत्वं नास्तीत्येवोक्तम्। तस्मात् शक्यार्थविषयकविशिष्टबोधानङ्गीकारे सत्यादिपदसमुदायस्य वाक्यत्वं दुर्वचमेव। अङ्गीकारे चाखण्डविषयकबोधान्तरकल्पनमप्रामाणिकम्। अखण्डस्य प्रामाणिकत्वेऽप्यस्य वाक्यस्यापि तत्परत्वे प्रमाणाभावात्।

किञ्च वाक्यं सर्वमुद्देश्यविधेयभावापन्नार्थबोधकम्। अखण्डबोधे च तत् कथम्। यत्तु एकस्मिन्नेवाखण्डे उद्देश्यत्वविधेयत्वरूपविषयताद्वयं स्वीक्रियत

इति—तन्न—अयोगात् । अत एव विरुद्धत्रिकद्वयापत्तिर्मीमांसकैर्दोषत्वेनोपन्यस्यते। एकस्मिन्नेव पदे अंशभेदेन विभिन्नमुद्देश्यं विधेयश्चोपस्थाप्यते चेत्, एकप्रसरताभङ्गो दोषः । अत एव वषट्कर्तुः प्रथमभक्ष इत्यत्र भक्षणोद्देशेन प्राथम्यविधानं न संभवतीत्युक्तम् । एवं विभिन्नस्याप्येकपदविभिन्नांशबोध्यत्व एवोद्देश्यविधेयभावास्वीकारे एकस्यैवैकपदबोध्यस्यैवोद्देश्यत्वं विधेयत्वञ्च कथं स्वीक्रियेत। एकस्यैवोभयस्वीकारे च घटो घट इत्यादेरपि बोधकत्वापत्तिः । वाक्यसामान्ये शाब्दबोधे तार्किकतान्त्रिकवैयाकरणादिमतभेदेन मुख्यविशेष्यस्य विभिन्नत्वेऽपि सर्वविष्टिकाशेर्षप्रतिपादकत्वस्य सर्वसम्मतत्वात् तत्र प्राप्ताप्राप्तविवेकेन पश्चादुद्देश्यविधेयांशनिर्णयः क्रियते । परस्सहस्रपदसंघातेनापि यदि अखण्डमेकमेव बोध्यते; तत्र कथं प्राप्ताप्राप्तविवेकः । तदभावे च कथमुद्देश्यविधेयव्यवहारः । एवं स्थिते एकत्रैवोद्देश्यता विधेयता चेति विषयताद्वयमपीष्यते इति केयं वाचोयुक्तिः । तार्किकैरेकत्र विशेष्यत्वोद्देश्यत्वप्रकारत्वविशेष्यत्वाद्यनेकविषयतास्वीकारवासनया विधेयतोद्देश्यतयोरप्येकत्र स्वीकारस्यानुपपन्नत्वात् । आख्यातप्राधान्यञ्च वाक्ये विद्वांस आशेरते । 'अस्तिर्भवन्तीपरः प्रथमपुरुषे अप्रयुज्यमानोऽप्यस्ति' इत्याद्यनुशासनबलात् तिङन्ताध्याहारमप्यावश्यकमाहुः । भवद्भिस्तु सति तिङन्ते तदर्थभानबलादखण्डार्थत्वमपैष्यतीति तत्त्वमसीत्यादौ अस्यादिः स्थितोऽप्यपसारणीय इति विलक्षणेयं वाक्यार्थवर्णनभङ्गी । तस्मादखण्डस्य निर्विशेषस्य वाक्यार्थत्वायोगात् सत्यंज्ञानमित्यादौ प्रतिपदमखण्डलक्षणायामपि पदसमुदायस्याखण्डे लक्षणायामिव पदजन्यपदार्थोपस्थितिसंभवेऽपि तादृशोपस्थितिजन्यानुभवरूपाखण्डगोचरज्ञाने मानाभावात् स्मृतिरूपोपस्थितिरेव पुनःपुनरावर्तेत इति न वाक्यस्याखण्डे प्रामाण्यं भवितुमर्हति ।

एतदपेक्षया पुनरेवमभ्यूहो युक्तः—अखण्डार्थकत्वं नाखण्डार्थबोधजनकत्वम् । किं तु सत्यंज्ञानमित्यादितः सत्यत्वज्ञानत्वादिविशिष्टविषयके

बोधे जनिते तेषां सत्यत्वादीनामनृतादिव्यावृत्तिरूपतया व्यावृत्तेश्चाभावतया अभावस्याधिकरणरूपत्वस्वीकारे सत्यादिवाक्यबोध्यमन्ततो निर्विशेषब्रह्मतो नान्यदिति पर्यवस्यतीति तदनुरुध्य समानाधिकरणवाक्यानामखण्डार्थकत्वप्रवादः। प्रकृष्टप्रकाशश्चन्द्रः, सोयं देवदत्त इत्याद्युदाहरणप्रदर्शनादिकं प्रत्यर्थिजनहृदयावर्जनप्रयतनमात्रमिति नात्राधिकमभिनिवेष्टव्यमिति। अत्रेदमवधेयम्—भावातिरिक्ताभावानङ्गीकारात् व्यावृत्तीनामपि किञ्चिद्भावरूपत्वे सिद्धे व्यावृत्तीनां धर्मतया प्रतीयमानत्वात् धर्मात्मकभावरूपत्वं स्वरसम्। तादृशनियतधर्मोपपादनक्लेशे, अधिकरणात्मकत्वस्वीकारे दोषाभावे च स्यादधिकरणस्वरूपत्वम्। शुक्लवस्तुनि कृष्णव्यावृत्तिर्वर्तमाना शौक्ल्यगुणरूपा; शौक्ल्ये कार्ष्ण्यव्यावृत्तिरप्येवं शौक्ल्यरूपैवेति स्वीकारः संभाव्यते, शौक्ल्ये दृष्टे कार्ष्ण्यसंशयविपर्ययोरभावात्। एवं ब्रह्मणः अनृतजडपरिच्छिन्नविलक्षणस्य या अनृतजडपरिच्छिन्नव्यावृत्तयः, तासामधिकरणस्वरूपत्वे ब्रह्मप्रकाशे सति अनृतादिसंशयविपर्ययोरनुत्पादेन भाव्यम्। न चैतदस्ति। ब्रह्मस्वरूपे विवादाभावेऽपि तत्सत्यत्वज्ञानत्वादौ वादिनां विप्रतिपत्तिदर्शनात्। नन्वपरोक्षप्रकाशस्यैव व्यावृत्तिबुद्धिकार्यकरत्वमिति चेत्—अस्तु। ब्रह्मप्रकाशोऽप्ययमपरोक्ष एव। जीवब्रह्मणोर्भवन्मते ऐक्यात्, "अपरोक्षत्वात् प्रत्यगात्मप्रसिद्धेः" इति प्रत्यगात्मापरोक्ष्यस्य स्वीकृतत्वात्। प्रकाशोऽयं वृत्तिरूपो वा स्वप्रकाशो वेति चेत्—यः कश्चिदस्तु। संशयविपर्ययनिवर्तकत्वमस्त्येव। अत एव न जातु, नाहमित्यादिप्रतीतिः; न वा ज्ञाने जाते, अहं जानामि न वेति संदेहः। वस्तुस्वयम्प्रकाशत्वस्वीकारश्च निर्विचिकित्साविपरीतव्यवहारार्थः। यद्येवं प्रकाशे सत्यपि कतिपयसंशयविपर्ययानिवृत्तिः, तर्हि तन्निवर्तको यत्प्रकाशः, सोंशो न प्रकाशित इत्येवोरीकर्तव्यम्। अतो प्रत्यगात्मैक्यस्य ब्रह्मण्यभिमतत्वात् तत्प्रकाशे सत्यपि सत्यत्वादौ संदेहात् तन्निवर्तकं धर्मान्तरं भावरूपमेव तत्र स्वीकार्यं स्यादिति नाखण्डवस्तुप्रसक्तिः। अतो वाक्यानां पर्यवसानगत्याऽपि

तत्र तात्पर्यमसंभावितमेवेति । तत् सिद्धमखण्डतात्पर्यज्ञानमहिम्ना वाक्यमखण्डार्थबोधकं भवितुमर्हतीत्येतदयुक्तमिति ।

यत् पुनरिष्टसिद्धौ—अपर्यायाणामप्यभिन्नार्थताऽस्ति । यथा प्रकृष्टप्रकाशः सवितेत्यत्र; प्रकर्षप्रकाशयोरभिन्नत्वादिति—तन्न—प्रकृष्टप्रकाशः सविता, प्रकृष्टप्रकाशश्चन्द्र इत्येवम्प्रयोगो हि ज्योतिरन्तरप्रकाशवैलक्षण्यस्य सवितृचन्द्रमःप्रकाशयोर्बोधनाय । तत्र प्रकाशप्रकर्षयोरैक्ये ज्योतिरन्तरेष्वपि प्रकाशवत्सु तद्व्यवहारापत्तिः । एवं प्रकर्षप्रकाशयोरैक्ये प्रकर्षप्रकाशः सवितेति प्रयोगापत्तिः । तथा प्रकाशसवित्रोरप्यैक्यस्वीकारे प्रकाशः सवितेति, प्रकर्षप्रकाशः सवितेति विना बहुव्रीहिञ्च प्रयोगापत्तिः । अतो गुणगुणिनोरभेदवासनाविजृम्भितमिदं सर्वं व्यामुग्धव्यवहारापादकं न विवेकिहृद्यमिति ।

गन्धवती पृथिवीत्यादौ **पृथिवीस्वरूपं लक्ष्यत इति न वार्तम्** । का पृथिवीति प्रश्नवाक्ये पृथिवीशब्दस्य **योऽर्थः, स एव ह्युत्तरवाक्येऽप्यर्थः** ; पृथिवीशब्दस्य पृथिवीस्वरूपे व्युत्पत्तिश्च **लक्षणज्ञानानन्तरभाविनीति लक्षण**ज्ञानात् प्राक् स्वरूपपरतया **पृथिवीशब्दं कथं प्रष्टा व्यवहरेत्** । **अतः** स्वरूपं न लक्ष्यम् । स्वरूपलक्षणायामपि सर्वपृथिवीव्यक्त्यनुगतरूपेणैव लक्ष्यत्वात् घटाद्येकव्यक्तिमात्रग्रहणायोगात् अखण्डत्वमप्यसिद्धम् । यावत् पृथिवीत्वमेव न ज्ञातम्, तावत् पृथिवीतरव्यावृत्तिमुखेनोपलक्षणमप्यशक्यम् । अतः पृथिवीशब्दव्यवहार्येत्येव पृथिवीशब्दार्थः । का पृथिवीति किंशब्दः जिज्ञासितस्वरूपवाची । एवं स्वरूपजिज्ञासायां स्वरूपं साक्षाद्दर्शयितुमशक्नुवन् तदुपलक्षणं गन्धं लक्षणं निर्दिशति गन्धवती पृथिवीति । गोसदृशो गवय इतिवत् । विस्तरो न्यायकुसुमाञ्जलौ ।

लक्षणवाक्यत्वादित्यस्येतरव्यावृत्तिधीहेतुत्वादित्यर्थवर्णनमप्ययुक्तम् । तथा सति हि सत्यादिवाक्यं स्वरूपान्याविषयकप्रमाजनकम् इतरव्यावृत्तिधी-

हेतुत्वात् यत् यन्निष्ठेतरभेदधीहेतुत्ववत् तत् तत्स्वरूपान्याविषयकप्रमाजनकम् यथा गन्धवती पृथिवी इत्युक्तं भवति। तत्रेतरव्यावृत्तिधीहेतुत्वमितरव्यावृत्तित्वावच्छिन्नविषयकधीहेतुत्वं वा, वस्तुगत्या यत् इतरव्यावृत्तिभूतम् तद्विषयकधीहेतुत्वं वा। अन्त्ये पृथिवी जलजन्येत्यादावप्यनैकान्तः। नाद्यः, **गन्धवती पृथिवीत्यत्र गन्धादेरेव शब्दार्थत्वात् इतरव्यावृत्तित्वेन रूपेण कस्यचिदबोधनात् साध्यवैकल्यात्। गन्धवती** जलादिव्यावृत्तेति वाक्ये व्यभिचाराच्च। **तत्र हेतुसत्त्वात् स्वरूपान्याविषयक**प्रमाजनकत्वरूपसाध्याभावाच्च। समूहालम्बनविधया प्रकारान्तरेण वा पृथिवीस्वरूपान्यविषयकज्ञानजनकवाक्येऽपि हेतुसत्त्वादप्यनेकान्ताच्च। इतरव्यावृत्तिधियं प्रति स्वरूपविषयकत्वस्यैव प्रयोजकत्वेनेतराविषयकत्वस्याप्रयोजकत्वेन स्वरूपान्याविषयकत्वांशसाधकत्वस्य हेतावसंभवाच्च। न हि घटस्य निर्माता कुलाल इति ज्ञाने सति घटोपादानाद्यपरोक्षज्ञानमिव तदन्याज्ञानमपि कुलालस्य साधयितुं शक्यते। अथेतरव्यावृत्तिधीहेतुत्वं नाम तद्धीजनकस्वरूपज्ञानकत्वमिति चेत्—तत्र जनकत्वान्तं विशेषणं व्यर्थम् नियतत्वात्। एवञ्च स्वरूपज्ञानजनकत्वात् स्वरूपान्याविषयकज्ञानजनकमित्युक्तं भवति। तदाऽपि स्वरूपतदितरोभयगोचरवाक्ये ऽनेकान्तोऽपरिहृत एव। बाधश्च, स्वरूपान्यविषयकज्ञानजनकत्वस्यानुभविकत्वात्। सत्यत्वादेर्धर्म्यतिरिक्तत्वस्योपपादितत्वात्। तथाविधज्ञानजनकत्वेऽपि पश्चात् शुद्धस्वरूपज्ञानस्यापि जनकमिति चेत्—तस्य तज्जनकत्वे न प्रमाणम्। तस्य ज्ञानस्य धर्म्यंशमात्रविषयकस्य विशिष्टानुभवजन्यविशेष्यस्मृतिमात्रत्वेनैवोपपत्तौ शब्दजन्यत्वेऽनुभवत्वे च न किञ्चित् प्रमाणम्। एवं तस्य प्रमात्वमपि दुर्वचम् : तद्वति तत्प्रकारकत्वाभावात्। तदभाववति तत्प्रकारकत्वाभावात् प्रमात्वमिति चेत्—तद्वति तत्प्रकारकत्वाभावादप्रमात्वमेवास्तु। एवमेकांशविषयकत्वस्यापि स्मृतौ सत्त्वादेव स्मृतेः प्रमात्वं तार्किका नैच्छन्। एवं व्यक्तिमात्रज्ञानस्यासाधारणधर्मानवगाहिनः इतरव्यावृत्त्यनुपयोगित्वादप्येवं न साधयितुं

शक्यम् । नह्यश्वरूपं धर्मि दूरादश्वत्वं विना स्थूलं पश्यतो गवादिव्यावृत्तिधीरुदेतीत्यलम् ।

विगीतं वाक्यं विशिष्टपरं वाक्यत्वादित्यत्र उपक्रमावगतस्वरूपमात्रतात्पर्यकत्वाभाव उपाधिरित्ययुक्तम् । उपक्रमावगतेत्यस्य वैयर्थ्यात् । स्वरूपमात्रतात्पर्यासंभवस्य प्रागुपपादिततया पक्षेऽप्युपाधिसत्त्वाच्च । तत्त्वमसीत्यत्र विशेषणयोर्विरोधादन्वयानुपपत्त्या स्वरूपमात्रपरत्वमित्यपि न—सिंहो माणवक इत्यादावपि तथात्वापत्तेः । तत्र स्वरूपपरिशेषेऽपि व्यक्त्योर्भेदादन्वयानुपपत्तिरिति चेत्—तुल्यम् । आत्मैकत्वशास्त्रं तु परमात्मव्यक्त्यैक्यपरम् । वाक्यस्य विशिष्टपरत्वाभावे संशयाद्यनिवर्तकत्वापत्त्या अविरोध्यर्थलक्षणया विशिष्टपरत्वमावश्यकञ्च । भवतैव संक्षेपशारीरकवाक्यमुदाहृत्य "भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थबोधकत्वं मुख्यं सामानाधिकरण्यम्—अखण्डार्थधीरित्यभेदे गौणसामानाधिकरण्यम्" इत्युक्तत्वात् संभवति मुख्ये गौणग्रहणायोगात् प्रवृत्तिनिमित्तमनुपेक्ष्यम् । तत् वाच्यार्थप्रतीतिदशायां सत्यादिवाक्येऽप्यस्त्येव । लक्ष्यार्थविषये तु नास्तीति च तादृशलक्ष्यार्थबोधकत्वकल्पनावश्यकत्वाभावादेवापास्तम् । सा वैश्वदेव्यामिक्षेत्यत्र सैव नीतिरिति चेत्—का नीतिः ? किमखण्डपरत्वम्, उतात्यन्ताभेदेऽपि सामानाधिकरण्यम् । उभयमपि नास्ति । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्यत्र तच्छब्दतद्धितामिक्षापदानां समानार्थकत्वं तावदस्त्येव । तत्र सेति आनयनसंस्कृतं पय उच्यते । आमिक्षापदं घनीभूतपयोविशेषवाचि । विश्वे देवा अस्या इति वैश्वदेवीपदविग्रहे अस्या इत्येतदर्थपरतद्धितेनाप्यामिक्षैवोच्यते । एवं त्रयाणां पदानां समानार्थकत्वेऽपि, आनयनसंस्कृतत्वविशिष्टपयस्त्वामिक्षात्वरूपप्रवृत्तिनिमित्तत्यागाभावात नाखण्डार्थत्वम् । न चात्यन्ताभेदः ; तद्धितस्यामिक्षापरत्वेऽपि सर्वनाम्नो बुद्धिविषयत्वोपलक्षितपरत्वात् आमिक्षापदस्यातथात्वाच्च भेदसत्त्वात् । आमिक्षापदाभावे तद्धितस्यामिक्षारूपविशेषपरत्वावधारणायोगेन तदावश्यकत्वात् । परिपूर्णं पदं

पदान्तरेणान्वेतीति न्यायेन वैश्वदेवीतिपदेन विश्वदेवदेवत्यत्वविशिष्टद्रव्यविशेषे बोधिते तस्यामिक्षान्वये विश्वदेवदेवत्यत्वामिक्षात्वरूपप्रवृत्तिनिमित्तभेदसत्त्वाच्च । अयञ्च देवतायुक्तत्वाकारेण प्रवृत्तिनिमित्तभेदो वार्तिकेऽप्यदर्शि, "आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः । आमिक्षापदसांनिध्यात् तस्यैव विषयार्पणम्" इति । तद्धितस्य देवतात्वमप्यर्थ इति पक्षे च सुतराम् ।

श्रीभाष्यमते तत्त्वमसीत्यत्र प्रवृत्तिनिमित्तत्याग इत्यादिकं तु मताज्ञानं विप्रलम्भं वा दर्शयति । यत्तु भिन्नप्रवृत्तिनिमित्तकानामित्यस्य अपर्यायशब्दानामित्यर्थ इति तेन किमुक्तं भवति । पर्यायत्वं धर्मतो धर्मितश्च समानार्थकत्वम् । अपर्यायत्वं तदन्यत्वम् । तत्र सत्यज्ञानादिपदेषु धर्मितः समानार्थकत्वस्य भवदिष्टत्वात् धर्मतो भिन्नार्थकत्वमेव शिष्यत इति भिन्नप्रवृत्तिनिमित्तकत्वमेवोक्तं भवतीति । यत्तु विशेषणभेदेन विशिष्टताभेदात् विशेष्यभेद इत्यस्य विशेषणयोः परस्परान्वयबाधेन बाधितविशेषणसंबन्धभेदात् विशेष्यभेद इत्यर्थः । देवदत्तः श्यामो युवा लोहिताक्ष इत्यत्र न विशेषणमिथोन्वयबाध इति—तन्न—सत्यज्ञानवाक्ये विशेषणमिथोऽन्वयबाधः कथमवधारितः । श्यामत्वयुवत्वादेरिवैकनिष्ठत्वस्यैव लाघवात् युक्तत्वात् । ब्रह्मणो निर्विशेषत्वं सिद्धवत्कृत्य यदि सत्यत्वादेरेकनिष्ठत्वमसंभवीत्युच्यते, तर्हि सत्यत्वादिप्रत्येकधर्मोऽप्याश्रयाभावादसिद्धः स्यात् । ब्रह्मातिरिक्तस्यासत्यत्वात् । तथाच सत्यादिपदमर्थरहितं स्यात् । एवं सति सत्यत्वादिकं वाच्यम्, लक्ष्यं तु स्वरूपमिति भवदीयव्यवहारोऽप्यसंगतः । एवमनृतजडपरिच्छिन्नव्यावृत्तीनामेकनिष्ठत्वमस्ति न वा । तासां मिथोनियम्यनियामकभावोऽस्तीति वदतेष्टसिद्धिकारेण स्वीकृतमेवैकाधिकरण्यम् । यदि तत्र सत्यत्वानृतव्यावृत्त्योरसामानाधिकरण्यम्, तर्हि कथं सत्यपदेनानृतव्यावृत्तिरेव विवक्ष्यत इत्युक्तिः संभवति । अतो व्यावृत्तीनामिव सत्यत्वादीनामपि सामानाधिकरण्यमवर्जनीयमिति न देवदत्तो युवेति वाक्यवैलक्षण्यमत्र ।

सामानाधिकरण्यस्थले विशिष्टविषयकत्वं चेन्नियतम्, उद्भिदा यागेनेति सामानाधिकरण्यानुपपत्तिरित्यपि न ; उद्भिद्यागव्यक्तीनां देशकालपुरुषभेदेनानेकत्वात् देवताधिकरणभाष्यरीत्या आकृतिशक्तेरावश्यकत्वात् । उद्भिदा यजेतेत्यत्र यागसामान्यस्याविधेयत्वात् विशेष्यस्यैव विधेयत्वाद्विध्यन्वयौचित्याय यजेर्यागत्वव्याप्यकिञ्चिद्धर्मावच्छिन्नलक्षकत्वं वक्तव्यमिति तादृशधर्म एवोद्भित्त्वमिति न विशेषणाभावः । यदि खण्डदेवोक्तरीत्या फलोद्भेदकारित्वमेवोद्भित्पदप्रवृत्तिनिमित्तम्, प्रयोगातिप्रसङ्गस्तु प्राचीनप्रयोगाभावाद्वारणीय इत्युच्यते, तदापि सामान्यरूपं विशेषणं सिद्धम् । धर्माभावेऽपि संज्ञैव प्रवृत्तिनिमित्ततया भासत इति पक्षेऽप्यस्त्येव विशेषणमियं संज्ञा । उक्तञ्चाद्वैतसिद्धावेव, "चैत्रोयमित्यादौ लोके, उद्भिदा यजेत पशुकाम इत्यादौ च वेदे प्रत्यक्षोपस्थितानामेव चैत्रोद्भिदादिपदानां नामत्वेनान्वयः" इति । अतो न विशिष्टविषयकत्वनियमभङ्गः । "समानाधिकरणस्थले विशिष्टविषयकत्वे विशेषणयोः परस्परसमवायापत्तिः—उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः परस्परसमवायो हि नियतः" इति लेखनमनुभवविपरीतम्—परस्परासमवाय एव ह्यनुभूयते । नीलो घट इत्यादौ किं नीलत्वे घटत्वं घटत्वे नीलत्वञ्चानुभूयमानमस्ति । क्वचित्तु घटः प्रमेय इत्यादौ घटत्वे प्रमेयत्वमबाधितम् । तत्रापि न परस्परसमवायः ; प्रमेयत्वे घटत्वस्य बाधात् । वस्तु प्रमेयमिति प्रयोगे तु कथञ्चित् वस्तुत्वप्रमेयत्वयोः परस्परसमवायः संभाव्यते । तत्रापि प्रमाविषयत्वं भिन्नभिन्नमेदिष्यते, वस्तुनिष्ठप्रमेयतायां वस्तुत्वरूपसत्ता येन संबन्धेन, न तेन संबन्धेन वस्तुत्वनिष्ठप्रमेयतायां वस्तुत्वमित्यपि विवेचनीयम् । एवमुद्देश्यतावच्छेदकविधेयतावच्छेदकयोः यथाकथञ्चित्संभावितपरम्परासंबन्धेन चेत् समवाय इष्यते, कामं सर्वत्र । यदि च परस्परसमवायस्यानुभवदूरस्यापि स्वयमापत्तिमाशंक्य तत्त्वमसीत्यत्र प्रवृत्तिनिमित्तत्यागः, तथा प्राथमिकबोधदशायां त्वम्पदार्थमुद्दिश्य तत्पदार्थाभेदप्रतिपादनमस्त्येवेति कथमुच्यते ।

एवं वदंश्च भूतार्थवादे, पुराकल्पाद्यर्थवादेषु, काश्यां त्रिभुवनतिलको भूपतिरास्त इत्यादौ च वस्तुमात्रकथने तु नोद्देश्यविधेयभाव इति कथं ब्रवीषि लिङाद्यर्थरूपविधिविषयत्वं नास्तीति वा, ज्ञानविषये अज्ञातज्ञाप्यत्वरूपविधेयत्वं नास्तीति वा। आद्यं तत्त्वमसीति वाक्येपि लिङाद्यभावादस्तीति स्पष्टम्। एवमन्त्यमपि; ऐतदात्म्यमिदंसर्वमिति पूर्ववाक्यादेव, सदेवसौम्येदमग्र आसीदित्युपक्रमवाक्यादेव च तत्त्वमर्थैक्यस्यापि यादृशतादृशस्य ज्ञातत्वाद् अज्ञातज्ञापनाभावात् केवलं स्वात्मपरमात्मैक्योपासनप्रदिदर्शयिषयोपसंहारमात्रकरणात्। यदि चाज्ञातज्ञाप्यत्वस्य वस्तुतो विरहेऽपि उद्देश्यत्वविधेयत्वारोपेण वाक्यप्रयोगः, वाक्यसामान्यस्य तदभावेऽप्रयोगादिति विभाव्यते, तर्हि भूतार्थवादादिष्वपि तुल्यम्। यत्तु सोमेन यजेतेत्यादौ विशिष्टविधावपि यत् किञ्चिद् भाव्यमुद्देश्यं सामान्यरूपेण प्रतीयत एवेति — सत्यमेतत् — तत्तु भावनाया भाव्यापेक्षत्वस्वाभाव्यात् भाव्यस्य चाश्रवणात् अस्ति किञ्चिदिति कल्प्यमानं फलत्वात् अङ्गाङ्गिवत् विधिविषयत्वविशेषभाक् न भवतीति भाव्यमेव — तथापि अज्ञातज्ञाप्यत्वरूपं विधेयत्वं फलस्य सर्वथा न भवतीति न शक्यं वक्तुम्। अत एव, सोमेन यजतेति विहितस्य यागस्य फलसंबन्धो विधीयते, 'ज्योतिष्टोमेन यजेत स्वर्गकाम'इतिवाक्येनेति न्यायप्रकाशादावेवोक्तमस्ति। अत एव चाधिकारविधिरिति नाम। एवञ्च सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यादौ अज्ञातज्ञाप्यत्वांशे पर्यालोच्यमाने विशिष्टं विधीयते सर्वमज्ञातं ज्ञाप्यत इत्येव वक्तव्यमित्यलम्। त्वम्पदस्य जीवशरीरकपरमात्मवाचित्वे असीतिमध्यमपुरुषान्वयः कथमिति चेत् — भवन्मते तत्त्वम्पदयोः स्वरूपमात्रलक्षणायां स्वरूपमस्तीत्येव प्रयोक्तव्यत्वात् असीत्यस्यान्वयः कथमिति तुल्यम्। प्रत्युतास्मन्मते आभिमुख्यादेर्विशेष्ये परमात्मनि बाधेऽपि विशेषणतया प्रतीते जीवे समन्वयात् शिखी ध्वस्त इत्यत्र ध्वंसस्येव, दध्ना जुहोतीत्यादौ विधिविषयत्वस्येव च विशेषणसंक्रमः सुवचः, भवन्मते सर्वथैवानन्वयः। व्यक्तमिदमाचार्यविरचितेशोपनिषद्भाष्यादौ। वस्तुत ईश्वर-

स्यापि स्तुतिविषयस्याभिमुख्यादिकमबाधितमिति असीत्येतदन्वयायोग्यमित्यपि नास्ति। अथापि श्वेतकेतो इति पुत्रं संबोध्योपदेशः क्रियत इति प्रकरणौचित्याय विशेषणान्वयमाद्रियामहे। यच्च त्वत्पुत्रको देवदत्त इत्यादावपि असिपदप्रयोगापत्तिरिति, तत्र त्वत्स्वरूपमस्तीत्यत्रापि असिपदप्रयोगापत्तिमालोच्य तूष्णीं भवितव्यम्। "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इति खलु पाणिनिसूत्रम्। युष्मदो यःकश्चिदर्थोऽस्तु, तत्पद सामानाधिकरण्यमस्ति न वेत्येव विमृश्यमिति नैवमापत्तिरिति समाधिश्चोभयोरविशिष्टः।

यदपि भिन्नप्रवृत्तिनिमित्तकत्वे सति एकार्थपरत्वं सामानाधिकरण्यमित्यत्र विशेषणदलं घटःकलश इति प्रयोगवारणाय। तावता प्रवृत्तिनिमित्तमवश्यं विवक्षणीयमिति न निर्बन्ध इति। तन्न—प्रवृत्तिनिमित्ताविवक्षायां घटः कलश इत्यापत्तिवारणाभावात्। यदि स्वरूपमात्रलक्षणया सामानाधिकरण्यं क्वचित् संभाव्यते, तर्हि घटः कलश इत्यत्रापि तल्लक्षणया बोधः किं न स्यात्। यदि प्राथमिकबोधो भिन्नप्रवृत्तिनिमित्तविषयको यत्र, तत्रैव सामानाधिकरण्यमित्याशयः। सत्यंज्ञानमित्यत्र कथं प्राथमिकबोधः, विरोधादैक्यस्य भानानर्हत्वात्। यदि विशेष्यमात्रैक्यविवक्षया तद्भानसंभवः, तर्हि तदेवालमिति किं स्वरूपलक्षणयेत्यलं पिष्टपेषेण। यत्तु देवदत्तः श्यामो युवा लोहिताक्ष इत्यत्र श्यामादिविशेषणभेदात् वाक्यभेद एव। अतो विशेषणभेदे विशेष्यैक्येऽपि भिन्नार्थत्वमेवेति—तेन किमुक्तं भवति? यदि प्राप्तदेवदत्तोद्देशेन श्यामत्वयुवत्वादेरेकेन वाक्येन विधातुमशक्यत्वात् वाक्यभेद इति मीमांसकमतवर्णना, अस्तु तावत्। सत्यंज्ञानमनन्तं ब्रह्मेत्यत्राप्यनेकविशेषणप्रयोगादेवमेव भविष्यति। परन्तु सत्यादिपदानां द्वितीयान्तत्वात् यो वेदेति वेदनक्रियान्वयात् कृत्स्नस्य मन्त्रस्य विशेषणभेदेनाऽऽवर्तनेन वाक्यभेदकल्पने प्रमाणाभावात् यच्छब्दनिर्देशानुरोधेन सिद्धवदनुवादचिन्तनया एकवाक्यतया मन्त्रयोजनेऽपि पाष्ठिकब्रह्मोद्देश्यकसत्यत्वादि-

विधेयकबोधार्थनानावाक्यकल्पनं भावनीयमिति कथ्येत। एवमपि देवदत्त-वाक्ये श्यामत्वयुवत्वादेरेकत्र देवदत्ते समन्वयौचित्यं यथा परिशील्यते, तथा प्रकृतेऽपीति भाव्यम्। तत् कथमुच्यते विशेष्यैक्येपि भिन्नार्थत्वमिति। विशेष्यैक्ये सति भिन्नत्वायोगात्। विभिन्नवाक्यप्रतिपाद्यत्वरूपभिन्नार्थत्वस्य च वस्तुभेदानापादकत्वात्। वस्तुत एकविशेषणस्थलेऽप्यनौचित्यमेव भवताम्। देवदत्तः श्याम इत्येतावदुक्तावपि देवदत्तत्वश्यामत्वयोरन्योन्यसमवायप्रसंगेन विशेषणयोस्त्याज्यत्वात्। अन्यथा भिन्नार्थत्वप्रसंगात्। तत् त्वमसीति एकविशेषणस्थले तथैवोक्तेः। "व्यधिकरणवाक्यानामनेककारकविशिष्टैकार्थ-बोधकत्वं विभागे साकांक्षत्वादिष्यते, नैवमनेकविशेषणोपादाने, विभागे निराकांक्षत्वात्" इति च न; तर्हि सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्रैकवाक्यत्व-त्यागापत्तेः। सवत्सा गौः क्रीता, धूमवान् पर्वतो वह्निमानित्यनेकपद-सामानाधिकरण्येऽप्येकवाक्यतासद्भावाच्च।

समानाधिकरणवाक्यस्य स्वरूपमात्रलाक्षणिकत्वे एकमेव पदं पर्याप्त-मित्यत्र यदुक्तम्—पदान्तरमावश्यकम्, तथासत्येवान्वयानुपपत्त्या स्वरूप-लक्षणास्वीकारात्। तात्पर्यानुपपत्त्या लक्षणा स्यादिति चेन्न—तात्पर्यस्य वाक्यरूपप्रमाणसहकारित्वात्। पदस्य केवलं स्मारकत्वेनाप्रमाणत्वाच्चेति—तन्न—पदान्तरसमभिव्याहारः स्वार्थान्वयानुपपत्त्याऽर्थान्तरलक्षणाप्रयोजकश्चेत्—लक्षितेनार्थेनान्वितेन भाव्यम्। न च स्वरूपलक्षणायां तस्य पदान्तरार्थे-नान्वयोऽस्ति। अभेदेनान्वय इति चेत्—तर्हि संसर्गासंगिधीहेतुत्वं त्यक्तं स्यात्। पदद्वयं मिलितं स्वरूपलक्षकमित्यनङ्गीकारे अभेदस्य च संसर्ग-त्वानिष्टौ अनन्वयदोषस्तदवस्थः। मिलितञ्चेत् लक्षकम्, अनेकपदसमु-दायात्मकार्थवादलक्ष्यप्राशस्त्यस्येव स्वरूपस्य पदार्थविधयैवोपस्थितत्वादेक-पदाविशेष इति भवदुक्तरीत्यैवाप्रमाणत्वम्। तात्पर्यानुपपत्त्या स्वरूप-लक्षणायाश्च को दोषः? तात्पर्यं वाक्यप्रमाणैकसहकारीति तु न;

शाब्दबोधसामान्ये तात्पर्यज्ञानं कारणमिति ये न मन्यन्ते, तैर्नानार्थस्थले तात्पर्यज्ञानं कारणमिति वदद्भिः तत्रापि सैन्धवमानयेत्यादौ सैन्धवपदं लवणरूपार्थोपस्थापनेच्छया प्रयुक्तमिति तात्पर्यज्ञानमात्रेण लवणलक्षणया बोधोपपादनसंभवात् पदलक्षणामात्रेऽपि तात्पर्यस्योपक्षीणतायाः बहुलं वक्तुं शक्यत्वात्। ब्रह्म वेद ब्रह्मैव भवतीत्यादौ ब्रह्मभावसाधनतयोक्तस्य वेदनस्य विशिष्टविषयकत्वासंभवपर्यालोचनया शक्यार्थबृहत्त्वबृंहणत्वत्यागेन स्वरूपलक्षणायाः स्वीकारात् तद्वत् प्रकरणादितात्पर्यग्राहकवशादेकपदेनापि लक्षणासंभवेन तदर्थं पदान्तरानपेक्षणाच्च। "अहो विशेषणपदप्रयोगे विशेषणाभावतात्पर्यं निश्चीयते, तदप्रयोगे तु नेति सम्यक् परीक्षकत्वम्" इति शतदूषण्युक्तं सावधानं सहृदयं भाव्यम्। अनेकपदाभावे संशयविपर्ययाद्यनुपहि(ह ?)तस्वरूपैक्यं निर्णेतुमशक्यमिति चेन्न—यावदेव स्वरूपमेकपदोपात्तम्, तावदेवानेकैरपि पदैरिति संशयविपर्ययोपघाततदभावौ अविशिष्टावेव स्यातामिति। एकपदोपादाने इतरव्यावृत्तिसंशयादिकं नापैतीति चेत्—सत्यमिति पदबोध्यं सत्यत्वं किं ब्रह्मणि स्थित्वा अनृतव्यावृत्तिबुद्धिं जनयति, उतास्थित्वा। अन्त्ये सत्यो घट इति प्रयोगेऽपि ब्रह्मणि व्यावृत्तिधीः स्यात्। आद्ये कथं निर्विशेषता। सोयं देवदत्त इत्यत्रेव स्थितस्यापि विशेषणस्याविवक्षामात्रमिति चेत्—एवमपि निर्विशेषत्वस्य व्यावृत्तिधियश्चाभाव एव। सत्यशब्दप्रवृत्तिनिमित्तञ्च मुख्यं किन्निष्ठमिति च विचार्यम्। ज्ञानत्वमपि तन्निष्ठमन्यनिष्ठं वा। अन्यनिष्ठत्वे कथं सामानाधिकरण्यम्, सविशेषब्रह्मद्वयापत्तिश्च। तन्निष्ठत्वे चाविरोधात् कुतो विशेषणत्यागः। निर्विशेषसिद्ध्यर्थमिति चेत्—न हि स्वाभिमतसिद्ध्यर्थं प्रमाणगतिर्भञ्जनीयेति। 'यतो वाचो निवर्तन्त' इत्यस्य श्रवणसध्रीचीनान्तःकरणवृत्तिमात्रव्याप्यत्वेऽपि प्रकारान्तरेण वाङ्मनसातीतत्वमस्तीत्यर्थप्रतिपादकत्वमित्युक्तिश्चार्थशून्या। सर्वेषामपि पदार्थानां वाग्विषयत्वं नाम श्रवणविषयत्वम्, मनोविषयत्वं नामान्तःकरणवृत्तिविषयत्वमित्यतः किमन्यदस्ति। अतो घटादावपि, यतो वाचो निवर्तन्त इति

स्तुतिः स्यात्। यदि च वृत्तिव्याप्यत्वमेव, न तु फलव्याप्यत्वमिति विवक्षितम्, तर्हि 'अज्ञेयमित्येवं वक्तव्यम्; न तु यतो वाच इति; वृत्तिविषयत्वाभावस्यैवेतोऽवगतेः। इष्टसिद्धिरीत्या सविशेषवाक्याप्रतिपाद्यत्वं यतो वाच इत्यस्यार्थः स्यादिति चेत्—घटादेरपि पटादिवाक्याविषयत्वात् तत्राप्येतादृशव्यवहारापत्तिः। सर्वस्यापि पदस्य सविशेषवाचित्वात् सर्वं सविशेषवाक्यमेवेति सविशेषवाक्याप्रतिपाद्यत्वं नाम वाङ्मात्राप्रतिपाद्यत्वमेवेति न किञ्चिद् वाक्यं तत्र प्रमाणं स्यात्। अस्तु तथैव; स्वानुभवमात्रसिद्धत्वादिति चेत्—स्वानुभव इति किं भवदनुभवः, उत सर्वानुभवः, आहो जीवावस्थानापन्नब्रह्मानुभवः, आद्ये अन्यं प्रति तज्ज्ञापने किं प्रमाणमिति परिशील्यताम्। न किञ्चिदिति चेत्—व्यर्थमद्वैतग्रन्थरचनम्। अत एव न द्वितीयः; कस्यापि संशयप्रसक्त्यभावात् विवादासंभवप्रसंगाच्च। न तृतीयः, अद्वैतोपदेष्टॄणां कथं तज्ज्ञानमित्यस्य विचार्यत्वात्।

यस्त्वाक्रोशः बोधयनेन, श्रीभाष्यकारेण, तदनुयायिभिर्वा किमस्यामेव पृथिव्यां सविशेषा मुक्तिः, वैकुण्ठलोकादिः, किं बहुना, पुरुषोत्तमः, अन्ये च तदनुबन्धिनोऽनुभूयन्ते" इति, तत्रानुभूयन्त इत्येव तात्त्विकमुत्तरम्। अवतारपुरुषैर्योगबलसंपन्नैश्च सुखमेवानुभूयमानत्वात्। श्रीभाष्यकाराणां तथा तत्त्वसाक्षात्कारश्च गद्यादिषु विशदः। अन्येषां त्वर्वाचीनानां श्रुतिमहिम्ना तत्सिद्धिप्रकारः कथं दण्डेन वार्यत इति चेत्—न वयं दण्डेन वारयामः। निर्विशेषं तत् नानुभवसिद्धमिति भवतैव तर्हि स्वीकृतं भवतीत्यभिधाय, निर्विशेषवाक्यमेव न किञ्चिदुपलभ्यते, येन तत्सिद्धिः स्यादित्येव प्रतिबोधयामः। ब्रह्मणि स्थितान् विशेषान् अपलप्य वाक्यस्य स्थितं विशेषपरत्वमपि भञ्जयित्वा निर्विशेषसिद्धिं रोचयमानानां तु न संप्रति श्रुतितस्तत्सिद्धिः, न च पश्चादनुभवोऽपीति तत्त्वम्।

यत्तु विषं भुंक्ष्वेत्यादाविव तत्त्वमसीत्यत्रापि सर्वपदलक्षणा साम्प्रतम्; तत्र प्रत्ययस्य लाक्षणिकत्वं नास्ति चेत्—अत्रापि विभक्तेर्न लाक्षणिकत्वम्,

प्रातिपदिकार्थमात्रे प्रथमेति प्रथमायाः स्वरूपार्थकत्वादिति—तत्रोच्यते। द्विषदन्नादिकमनर्थकरं मा भुङ्क्ष्वेति विषं भुंक्ष्वेत्यस्यार्थः। 'तत्र विषप्रातिपदिकस्य तादृशभक्ष्ये, प्रवर्तनावाचिनो लोटो निवर्तनायाश्च लक्षणासत्त्वेऽपि द्वितीयायाः धातोश्च लाक्षणिकत्वं नापेक्षितम्। प्रकृते प्रातिपदिकार्थे प्रथमानुशासनात् शक्त एव प्रत्यय इति चेत्—सत्यं ज्ञानमनन्तमिति द्वितीयान्ते का गतिः। न हि द्वितीयाऽपि प्रातिपदिकार्थेऽनुशिष्टा। तथा च तत्र सर्वपदलक्षणा स्यात्। ऐक्यं विभक्त्यर्थः शक्य इति चेत्—तत्र किमनुशासनमस्ति। लोकनिरूढिस्तु प्रवृत्तिनिमित्तापरित्यागे सर्वप्रवृत्तिनिमित्तविशिष्टवस्तुबोधनसामर्थ्यात् रक्ष्यते। उपपादितञ्च तत् अरुणाधिकरणपरिष्करणेन श्रीभाष्ये। एवं समानाधिकरणपदानामेकविशिष्टार्थव्युत्पन्नत्वात् समास इव व्यासेपि तादृशविशिष्टस्य किञ्चिदुद्देशेन विधानेऽप्यवाक्यभेदः सत्यप्यनेकपदोपात्तत्वे। अग्नये पावकाय, अग्नये दात्रे इत्यादौ शास्त्रदीपिकोक्तमप्येवमेव निर्वाह्यम्। सर्वपदलाक्षणिकत्वे चान्विताभिधानवादो न भवति; लाक्षणिकं पदं नानुभावकमिति नियमात्। अयमाशयः—पदानामन्वितबोधे शक्तिं वृद्धव्यवहाराद् गृहीत्वा व्युत्पन्नो वाक्यान्तरश्रवणे तत्पदानामप्यन्विते शक्तिमाकलयति। तथाच लाक्षणिकस्य पदस्यान्वितशक्तिमत्त्वाभावात् लाक्षणिकं पदं नानुभावकमित्युच्यते। अतः सर्वपदलक्षणायां बोधो न स्यात्।

आस्तामयमेकपदसर्वपदलक्षणाविचारः। विना लक्षणां संभवति निर्वाहे सा न युक्तेत्येतत्तु न शक्यं प्रतिषेद्धुम्। वाच्यार्थप्रधानैकदेशत्वात् विशेष्यस्वरूपस्य न तत्र लक्षणादोष इत्याक्षेपोपि शतदूषण्यां पर्यहारि, 'तथापि स्वारस्यहानिरवर्जनीयैव' इति। शुद्धात् विशिष्टमतिरिक्तं मिथ्येति पक्षे तु शुद्धे लक्षणादोषः स्फुटः।

किञ्च स्वरूपमात्रस्य पदैर्लक्षणायां ज्ञानस्यासंसर्गानवगाहित्वे अभिहितान्वयो वा अन्विताभिधानं वा न संभवति, उभयस्याप्यन्वयघटितत्वात्।

अतो बोध एव कथम् । यत्तु तात्पर्यविषयसंसर्गबोधकत्वं न शब्दप्रामाण्यम्, किं तु तात्पर्यविषयबोधकत्वम्—तत् अखण्डार्थकत्वेऽप्यस्तीति । तन्न—गङ्गाशब्दात् लक्षणया तीरग्रहे तावता गङ्गाशब्दमात्रस्य प्रमाणत्वापत्तेः । प्रथमतः अस्यायमर्थः इति शब्दव्युत्पादनकाले शब्दादर्थबोधस्य जायमानतया पदस्यापि प्रमाणत्वापत्तेः । न च तीरादिग्रहः स्मृतिरेवेति वाच्यम्—सत्यज्ञानादिवाक्ये स्वरूपबोधस्यापि स्मृत्यविशिष्टत्वात् । विशिष्टार्थे शक्तिबलादुपस्थिते विशेषणं विहाय विशेष्यमात्रज्ञानं हि एकदेशस्मृतिरेव । न च स्मृतौ स घट इत्येवं तत्तोल्लेखदर्शनात् पदार्थज्ञानस्य स्मृतित्वं न भवतीति वाच्यम्—स्मृतिप्रमोषत्वस्वीकारात् । तदिदं तत्त्वबिन्दौ वाचस्पतिमिश्रैरेवोपपादितमिति, 'स्मृतिप्रमोषे न प्रमाण' मित्यद्वैतसिद्ध्युक्तमपास्यम् । स्मृत्यनुभवविलक्षणज्ञानकल्पनापेक्षया स्मृतित्वस्यैव युक्तत्वात् । अनुभूतैकदेशस्मृतेराचार्योपदिष्टार्थादिषु सर्वत्र चानुभवसिद्धत्वेन तथैव तत्तांशास्मरणोपपत्तेः । व्युत्पादयित्रा यदंशेऽवधानं संपाद्यते, व्युत्पित्सोस्तदंशमात्रस्मरणं भवतीत्यनुभवसिद्धम् । एवञ्च देशकालयोरवधानाभावे तत्तांशो न स्मर्यते । अतोऽभिहितान्वयवादे तार्किकमत इव पदशक्तिस्मरणाधीनपदार्थस्मृतिरेव पूर्वं भवति संस्कारसत्त्वात् स्मृत्यनधिकविषयकस्य ज्ञानस्य स्मृतिभिन्नत्वे मानाभावात्; अतो न स्मृत्यनुभवविलक्षणं ज्ञानमिति । अनुभवस्तु तदनन्तरमुपस्थितार्थगतसामर्थ्यवशादन्वयविषयक इत्येव वक्तव्यम् । यदा च समानाधिकरणस्थलेऽन्वयांशस्त्यज्यते, तदा पदार्थस्मृतिमात्रेणावस्थानमिति अनुभवोत्पत्तिरेव नास्ति; कुतोऽभिहितान्वयानुभवः; कुतस्तरामभिहितान्वयवादः । सिद्धिचन्द्रिकाकारादयः स्वच्छन्दतः सत्यादिवाक्यगतपदानां स्वरसार्थपरित्यागवत् अभिहितान्वयान्विताभिधानपदयोः परिभाषितार्थपरित्यागस्यापि कल्पनया आकांक्षादिबलात् यादृशबोधशक्तिर्यत्र, तत्र तादृश एव अभिहितन्वयान्विताभिधानपदविवक्षित इति कल्पयन्ति । एतदपेक्षया मीमांसककृतं नियमं न वयमाद्रियामहे इति कथनमेव युक्तम् । तस्मान्न केनापि मार्गेणाखण्डार्थबोधसिद्धिः ।

विप्रतिपन्नं वाक्यं विशिष्टपरं बोधकत्वादित्यत्र विशिष्टपरत्वं नाम विशिष्टतात्पर्यकत्वम् । तदस्ति न वेति विवादे तदनुमानं बोधकत्वहेतुना क्रियते । तत्र विप्रतिपन्नं वाक्यं निर्विशेषपरं निर्विशेषतात्पर्यकत्वादिति सत्प्रतिपक्षवर्णनमसंभवि, विशिष्टतात्पर्यकत्वसंशये सति निर्विशेषतात्पर्यकत्वरूपहेतुनिश्चयायोगात ; प्रतिपक्षहेतुतत्साध्ययोरविशिष्टत्वाच्च । अप्रसिद्धञ्च निर्विशेषम् । अतोऽसिद्धः प्रतिपक्षः । असत् शशशृङ्गमित्यत्र च न व्यभिचारः ; तस्य बोधकत्वानङ्गीकारात् । विकल्पाख्यवृत्तिस्वीकारे तु असत्त्वशशशृङ्गत्वयोः सामान्यविशेषभावस्यापि कल्पनया विशिष्टपरत्वस्यापि स्वीकारसंभवान्न व्यभिचारः ।

विशिष्टपरमित्यस्य सामान्यतोधर्मधर्मितद्वैशिष्ट्यपरमित्यर्थं स्वरसमुपेक्ष्य जीवपरमात्मशरीरशरीरिभावपरमित्यर्थो वा सामान्यतः शरीरशरीरिभावपरमित्यर्थो वेति विकल्प्य दूषणमनवसरविस्तरः । तत्त्वमस्यादिवाक्यं शरीरशरीरिभावपरं न भवति बोधकत्वात वाक्यान्तरवत् चक्षुरादिवच्चेत्यप्यनुपपन्नम्—चैत्रो ज्ञानीत्यादिवाक्यैरनेकान्तात् । वक्तृतात्पर्यानुसारेण क्वचिच्छरीरशरीरिभावस्यापि लौकिकवाक्ये विवक्षणीयतया तत्र व्यभिचाराच्च । अन्यथा घटवद्भूतलमिति वाक्यं घटविशिष्टभूतलविषयकबोधजनकं न भवति, पटवान् पुरुष इत्यादिवत् , वाक्यसामान्यं न शब्दबोधजनकं चक्षुरादिवत् , परामर्शो नानुमापकः प्रमाणान्तरवत्, चक्षुरादिकं न प्रत्यक्षजनकमनुमानादिवदित्याद्यपि प्रयुज्येत । तत्त्वमसिवाक्यस्य चिदचिदुभयशरीरकपरमात्मपरत्वं कथम् अचिद्वाचकपदाभावादिति चानुक्तोपालम्भः । चिदचिदुभयशरीरकपरमात्मपरं वेदान्तवाक्यं नास्तीति च विप्रलम्भः ; "सर्वं खल्विदं ब्रह्म" "सच्च त्यच्चाभवत्" इत्येवमनेकवाक्यदर्शनात । अधिकमन्यत्र ॥

सत्यत्वज्ञानताद्यान्यनृतजडपरिच्छिन्नतावत् यदि स्युः
ब्रह्मावर्तीनि, कस्मान्न गदति निगमोऽसत्यमज्ञानमेतत् ।
तत्सत्त्वे निर्गुणत्वं कथम् , अहह हठात्कृत्य सर्वापलापः
वादश्चेदक्षमीशः सहत इति महानेष भव्यो गुणोऽस्य ॥

शुभमस्तु

श्रीः

# भावरूपाज्ञानभङ्गप्रसाधनम्

यस्याभावात् संसृतिर्यस्य भावान्मुक्तिस्तादृग्ज्ञानगम्यं विशुद्धम् ।
वश्यानश्यत्सत्यमायोपरिस्थे धाम्नि श्रीमद्धाम दीव्यत् प्रपद्ये ॥

अभ्युपगतं तावदशेषैरपि ज्ञानाज्ञाने मिथो विरुद्धे इति । उपसर्पन्ति च ज्ञानिनमज्ञाः, न जानामि, तन्मे ज्ञापनीयमिति । तदिदमज्ञानं किमिति विचार्यम्—यद्यप्यद्वैतिभिरपि परैरिवाज्ञानमिदं ज्ञानाभाव एवेति वक्तुं युक्तम् । न चैवं सति तत्त्वज्ञानात् तस्यैव निवृत्त्या प्रपञ्चनिवृत्तिर्न स्यादिति मन्तव्यम्—अद्वितीयब्रह्मरूपतत्त्वज्ञाने सति सर्वमिथ्यानिवृत्त्यवश्यम्भावात् मिथ्याभूतमूलप्रकृत्याख्यमायासहितस्य प्रपञ्चस्य निवृत्तेरक्षतेः । एवं सत्यप्यद्वैतिनः श्रुतिमात्रप्रमाणपुरस्कारे परो विजयेतेति प्रत्यक्षानुमानोपष्टब्धश्रुतिगम्यत्वं वक्तुमनसः, तदेव भावरूपं वस्तु प्रत्यक्षेण, न जानामीत्येतादृशेन वेद्यत इति, तथाऽनुमानमप्यस्तीत्यातिष्ठमानाः तद्वस्तु अज्ञानाविद्यादिशब्दवाच्यं प्रत्यक्षादिगोचरमित्युपन्यस्यन्ति । एवमज्ञानस्य भावरूपत्वमुपन्यस्यमानं न घटत इति संप्रति निरूप्यते—

अत्र पृच्छ्यते—किमिति भावरूपत्वमज्ञानस्य प्रबन्धेन स्थाप्यत इति—प्रपञ्चस्य भावरूपस्य परिणाम्युपादानेनापि भावरूपेण भाव्यमित्यज्ञानं भावरूपमिति चेत्—अज्ञानस्य प्रपञ्चं प्रति निमित्तकारणत्वमात्रमिति परिणाम्युपादानानङ्गीकारिभामतीपक्षे इदमसंभवि । एवं घटाभावादेरभावप्रपञ्चस्यापि सत्त्वादभावरूपत्वमप्येष्टव्यं स्यात् । ननु भावातिरिक्ताभावानङ्गीकारात् घटाभावादिरपि यः कश्चिद्भाव एवेति चेत्—नेदमनृतजडपरिच्छिन्नव्यावृत्तिरूपभावातिरिक्तब्रह्मधर्मस्वीकारसक्तैः सुवचम् । अनादेरभावस्य भावस्येव नोपादानापेक्षा । व्यावृत्तिश्च भेदोऽनादिरिति चेत्—तथापि

साविद्यप्रपञ्चनिवृत्तिरूपस्य सादेरभावस्य किमुपादानम्, न च सा ब्रह्मैव। अद्यापि प्रपञ्चाभावप्रसङ्गात् निवृत्तिरूपत्वकथनस्यैवासंभवात्। किञ्चाभावस्यापि भावत्वेष्टौ भावरूपमज्ञानमपि ज्ञानाभावरूपमपि भवितुमर्हतीति किं तन्निरसनेन। एतेन भावाभावविलक्षणमज्ञानमित्यद्वैतसिद्ध्युक्तमपि निरस्तम्; 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इति न्यायात्। किमस्य प्रतियोगिनिरपेक्षमेव भानं स्वीक्रियते, उत सापेक्षम्, आद्ये भावत्वम्, अन्त्ये नास्तीतिभाने अभावत्वञ्च दुरपह्नवम्। एवमस्य ज्ञानाभावरूपत्वास्वीकारे च अहं मां न ज्ञातवानिति प्रत्यक्षेणाज्ञानसिद्धिर्दुर्वचा। तस्य ज्ञानाभावविषयकत्वात्। न गच्छामि, न कलञ्जं भक्षयेदित्यादौ नञः अभाववाचित्वस्यैव प्रतीतेः। भावरूपाज्ञानपक्षे हि, नाहं ज्ञातवानित्यादौ न ज्ञातवानिति पदयोस्तादृशाज्ञानलक्षणाकल्पनादिगौरवमिति प्रागेव तिरोधानानुपपत्ति प्रसाधने प्रपञ्चितम्। न च यथाश्रुतार्थस्वीकारे काचिदनुपपत्तिरस्ति।

नन्वभावज्ञाने प्रतियोगिज्ञानमनुयोगिज्ञानञ्च कारणम्। प्रतियोगी चेह ज्ञानपदार्थः न विषयमगृहीत्वा सुग्रहः। ततो विषयभूतवस्तु-तद्विषयकज्ञान—अनुयोगिभूतपदार्थत्रितयज्ञाने सति तदभावरूपज्ञानाभावस्य दुर्वचत्वात् कथं नाहं जानामीत्यभावानुभवसंभवः। अत एवमनुपपत्त्यैव भावत्वस्वीकार इति चेत्—तर्हि घटमहं जानामीति व्यवहारः किंविषयः। अद्वैतिसम्मतस्याज्ञानस्य भावरूपस्य शुद्धचैतन्यमात्रविषयकत्वेन घटादिविषयकत्वायोगात् ज्ञानाभावमादायैवास्योपपादनीयत्वात्। घटादेरपरमार्थतया तद्विषयकत्वस्याज्ञाने दुर्वचत्वात्। अन्यथा शुक्तिरूप्यादिविषयेऽप्यज्ञानकल्पनापत्तेः। जडस्य घटादेरप्रसक्तप्रकाशत्वेनाज्ञानावृतत्वानङ्गीकारेण भावरूपाज्ञानावच्छेदकत्वस्य घटादावद्वैतिभिर्दुरुपपादत्वाच्च। एवं नाहं शुक्तिरूप्यं जानामीत्यादौ कथं निर्वाह इत्यपि विम्रष्टव्यम्। न चापरमार्थविषयेऽप्यज्ञानं स्वीक्रियेत। तथासति मुक्तौ ब्रह्मणः प्रपञ्चविषयकज्ञानाभावेनापरमार्थगोचराज्ञानापत्तौ ब्रह्मपरिशेषानापत्तेः। न च ब्रह्मातिरिक्तं सर्वं मिथ्येतिज्ञानात् तदप्यज्ञानं

निवृत्तमिति वाच्यम्—तर्हि ज्ञानाज्ञानयोः परस्परविरोधात् प्रपञ्चगोचराज्ञाननिवृत्तौ प्रपञ्चज्ञानस्य तदानीमापत्तेः। तद्विषयकमज्ञानं हि तज्ज्ञानेनैव निवर्त्यते। अज्ञानस्य ज्ञाननिवर्त्यत्वाभावे च ब्रह्माज्ञानस्यापि ब्रह्मसाक्षात्कारानन्तरमनुवृत्तिप्रसङ्गः। अस्तु वा तदानीं ज्ञानाज्ञानोभयविलयः। एवमपि ब्रह्म तदा न किञ्चिज्जानातीति वाक्यस्य ज्ञानाभावविषयकतयैव निर्वाहः कार्यः। एवमेव घटमहं न जानामि, अहं मामन्यञ्च न जानामीत्यादीनामप्यभावविषयकतयैव निर्वाहे व्यर्थं भावरूपत्वकल्पनम्। किञ्च ब्रह्म तदा न किञ्चिज्जानातीत्युक्तो ज्ञानाभावः ब्रह्मान्यः, उत ब्रह्मैव। आद्ये द्वैतापत्तिः। अन्त्ये ब्रह्मणः प्रपञ्चकालेऽपि सत्त्वात् ज्ञानायोगः। एवं तदेत्युक्तकालादिकमादायापि द्वैतापत्तिरनुसंधेया।

ननु घटस्य ज्ञानाभावे घटविषयकत्वविशिष्टज्ञानरूपप्रतियोगिनो ग्रहणाभावात् कथं घटमहं न जानामीत्यभावबुद्धिः। घटस्य ज्ञातत्वे च कथं न जानामीति बुद्धिरिति चेत्—न—अतिरिक्ताज्ञानकल्पनेऽपि अहमिति धर्मिज्ञानसत्त्वे कथं तदज्ञानग्रहणम्, एवं घटस्याज्ञानांशे विशेषणत्वात् विशेषणस्याज्ञातत्वे कथं घटाज्ञानरूपविशिष्टपदार्थज्ञानम्, विशेषणस्य ज्ञातत्वे च कथं तदज्ञानसद्भावग्रहणमिति तुल्यत्वात्। न चाहमिति चैतन्यस्वरूपभानं नाज्ञानविरोधि, किंतु वस्तुयाथात्म्यावगाहिनी अखण्डाकारवृत्तिः। तथाच वृत्त्या आवरणनिवृत्तौ अनावृतचैतन्यस्यैवाज्ञानविरोधित्वेन अहमिति साक्षिचैतन्यभानेऽप्यज्ञानभानं युज्यत इति समालोचनोक्तं साम्प्रतम्—चैतन्यापेक्षया वस्तुयाथात्म्यस्यातिरिक्तस्य ग्राह्यस्याभावेन स्वयम्प्रकाशस्य चैतन्यस्याज्ञानाविरोधिताया अनुपपन्नत्वात्। ब्रह्मनिर्विशेषत्व-अज्ञानभावरूपत्वादेरिव वृत्त्येकनिवर्त्यत्वरूपनिर्युक्तिकनिर्बन्धस्याविचारितरमणीयत्वात्। किञ्च वृत्त्या आवरणनिवृत्तिः अनावृतचैतन्यमज्ञाननिरोध इति कुत इयं परम्परा। आवरणपदार्थासिद्धेः प्रागेव दर्शितत्वात्। अविद्यायां चैतन्यप्रतिबिम्ब आवरणमिति यत् तदुक्तम्, तस्य तावत् वृत्त्या निवृत्तिर्न भवति; ईदृशकार्यकारणभावस्य

कुत्राप्यदृष्टेः । कथञ्चाज्ञाने सति तत्र चैतन्यमप्रतिबिम्बितं भविष्यति । एवमनावृतचैतन्यमित्यत्र चैतन्यमात्रमज्ञानविरोधि, उतावरणाभावोऽपि । नाद्यः । इदानीमपि तत्सत्त्वेनाज्ञानस्यानुन्मेषापत्तेः । नान्त्यः, ज्ञानातिरिक्तनिवर्त्यत्वेनाज्ञानस्य परमार्थत्वापत्तेः । तथाच तज्जन्यं जगदपि सत्यम् । अपिचायमावरणाभावः किमावरणस्य पारमार्थिकत्वेनाभावः उत कल्पितस्यावरणस्य निवृत्तिः । नाद्यः, सत्यपि तत्सत्त्वात् तस्य वृत्तिकार्यत्वाभावात् । नान्त्यः, आवरणपदार्थस्य वक्तव्यत्वात् । ब्रह्मगोचरवृत्त्यभाव आवरणमिति चेत्—तर्हि वृत्त्या वृत्त्यभावनिवृत्तिरिति वक्तव्यम् । अतश्च वृत्तिविशिष्टचैतन्येनाज्ञाननिरोध इति वक्तव्ये ...र्येण परम्परा । ...मस्य सर्वदा सत्त्वात् प्राप्ताप्राप्तविवेके वृत्तिमात्रनिवर्त्यत्वमेव पर्यवस्यति। प्रपञ्चज्ञानमावरणमिति चेत्-अज्ञाननिवृत्तेः पश्चात् क्रमेण प्रपञ्चनिवृत्तिं वदद्भिरेवं प्रपञ्चनिवृत्त्यनन्तरमज्ञाननिवृत्तिरुच्यत इति विचित्रम् । तथाच स्वयम्प्रकाशविषयत्वेन वा ज्ञानविषयतया वा तस्मिन् प्रकाशमाने तदज्ञानं दुर्वचम् । एवं घटादेरज्ञानावच्छेदकस्य ज्ञानमन्तरा घटाद्यज्ञानमपि दुर्ग्रहमिति भावरूपाज्ञानपक्षेऽप्यनुपपत्तिरस्त्येव ।

ननु यथा स्वतो बहिःप्रत्यक्षममपि मनः प्रकारान्तरेण घटादिज्ञाने जाते आत्मसमवेतज्ञानग्रहणमुखेन बाह्यं घटादिकमपि गृह्णाति, तथा साक्षिचैतन्यमपि स्वतः सर्ववस्तुभासनासमर्थमपि वृत्तिरूपज्ञानद्वारा अज्ञानद्वारा वा सर्वं गृह्णात्येव । अत एव सर्वमेव वस्तुजातं ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषयीभवति इत्युच्यते । तत्र च ज्ञानद्वारा साक्षिणा ग्रहणकाले बाह्यज्ञानस्य पृथगपेक्षायामपि अज्ञानद्वारा साक्षिभास्यतायामवच्छेदकीभूतानां विषयाणां प्रमाणाधीनं ज्ञानं नापेक्षितम् । अतो ज्ञानाभावग्रहणे घटादिज्ञानस्यावश्यकत्वेऽपि भावरूपाज्ञानग्रहणे तदपेक्षा नास्तीति चेत्—अयं तत्त्वदीपनादिपक्षो न युक्तः । ज्ञानाभावरूपाज्ञानवादस्वीकारेणैव ज्ञानाभावावगाहनदशायां विषयाणां साक्षिभास्यतामात्रेण ज्ञानं प्रत्यवच्छेदकत्वस्य अनुभवनिर्वाहाय कल्पनसंभवादज्ञानरूपधर्म्यन्तरकल्पनं व्यर्थमिति शतदूषण्यामेवोक्तत्वात् । अन्यथा भावरूपाज्ञानकल्पनवत् सर्वस्य साक्षिभास्यत्वकल्पनमप्यप्रामाणिकमेव ।

अतोऽज्ञानावच्छेदकतयाऽपि यदि जडपदार्थानां भानम्, तत् प्रमाणाधीनज्ञानसापेक्षमेव। आत्मस्वरूपचैतन्यमेव तु स्वयम्प्रकाशत्वात् प्रमाणज्ञाननिरपेक्षमज्ञानावच्छेदकं भवेत् कथमपि। व्यक्तमिदं श्रीभाष्येऽपि। तस्माद् घटादिज्ञानाभावस्येव घटाद्यज्ञानस्य भावरूपस्यापि घटादिज्ञानसापेक्षत्वात् ज्ञानाज्ञानयोश्च मिथो विरोधात् ज्ञाने जाते अज्ञानस्थितिरेव कुतः, कुतस्तरां तस्य साक्षितो भानमिति। यत्तु घटज्ञानेऽपि घटाज्ञानं भावरूपं भवितुमर्हति; भावाभावयोरेव विरोधात्, अज्ञानस्य च भावरूपत्वादिति—तन्न—ब्रह्मज्ञाने सत्यपि मूलभूताज्ञानानिवृत्तिप्रसंगात्। शुक्तिज्ञाने सत्यपि तदज्ञानानिवृत्तिप्रसंगाच्च। तथाच ज्ञात्वाऽपि शुक्तिं न जानामीति ब्रूयादिति।

एवमत्र **परिमलोक्त**मपि परामृशामः। तत्र हि भावरूपमज्ञानमेवं स्थापितम्—अहं न जानामीत्यस्य ज्ञानाभावविषयकत्वे तत्तद्वस्तुज्ञानरूपप्रतियोगिज्ञानं पूर्वमावश्यकम्। न च सामान्याकारज्ञानसद्भावात् विशेषाकारज्ञानस्यैवाभावात् कथञ्चित् ज्ञानरूपप्रतियोगिज्ञानं भवतीति वाच्यम्—सामान्याकारज्ञानसत्त्वे तदभावस्य दुर्वचतया विशेषाकारज्ञानाभाव एव वाच्यः। तत्र च विशेषाकारज्ञानमेव प्रतियोगि। तथाच तज्ज्ञानाभावे प्रतियोगिज्ञानाभावादभावो दुर्ग्रहः। तज्ज्ञानसत्त्वे च विशेषाकारस्य गृहीतत्वादेव तदभावो दुरुपपादः। अभावज्ञाने चाभावाधिकरणवृत्त्यवृत्तिधर्मावच्छिन्नप्रतियोगिज्ञानं नियमेनापेक्षितम्। घटाभावाधिकरणभूतलवृत्ति यत् पटादि, तदवृत्तिघटत्वरूपधर्मावच्छिन्नघटरूपप्रतियोगिज्ञानाभावे घटाभावज्ञानानुदयात्। अत्र च भूतले पटादिद्रव्यसत्त्वे घटाभावमात्रेण, द्रव्यं नास्तीति प्रतीत्यभावात् धर्मे अभावाधिकरणवृत्त्यवृत्तित्वं विशेषणम्। द्रव्यत्वरूपप्रतियोगितावच्छेदकधर्मस्य भूतलवृत्तिपटादिवृत्तित्वात् न तादृशप्रतीत्यापत्तिरिति। भावरूपाज्ञानपक्षे च नायं दोषः। विषयिविषयकज्ञाने विषयतावच्छेदकावच्छिन्नविषयकज्ञानापेक्षानियमस्याभावात्। अत एव धर्मजिज्ञासा ब्रह्मजिज्ञासेत्यादिविचाराणामुपपत्तिः। तत्र हि पूर्वमेव शास्त्रार्थज्ञानसत्त्वे जिज्ञासाया एवानुदयात् सामान्यतो ज्ञाते विशेषतश्चा-

ज्ञाते विशेषाकारविषयिणी जिज्ञासा वाच्या। तत्र यद्यपि विशेषाकारविज्ञानमेवेष्यमाणम्—तथापि सामान्याकारेणैव तस्य जिज्ञासायां भानम्। अन्यथा विशेषाकारेण भाने तज्ज्ञानसत्त्वेन नैव जिज्ञासोदियात्। तथाच जिज्ञासायामिव भावरूपाज्ञानेऽपि विषयतावच्छेदकधर्ममपुरस्कृत्यापि विषयभानं घटते; न तु ज्ञानाभावरूपाज्ञानपक्ष इति—

अत्रोच्यते—जिज्ञासां यां निदर्श्यैवमज्ञानं भावमिच्छति।
तामेवात्र निदर्श्यैतदभावः प्रतिबोध्यते॥

जिज्ञासायां विषयभूतं ज्ञानं किं सामान्याकारेण वस्तुविषयकम्, उत विशेषाकारावच्छेदेन। आद्ये विशेषाकाराविषयकज्ञानोत्पत्त्यापि इच्छाया विषयसिद्ध्या शान्तिप्रसंगः। यथा द्रव्यमहं जानीयामितीच्छायां घटादिविषयकज्ञानोत्पत्यापि तत्पूर्तिः; न तु नियमेन पटविषयकज्ञानेनैव सा—तथेति। तथाच विशेषतः शास्त्रार्थनिर्णयो न कर्तव्यः स्यात्। अन्त्ये तु प्रागेव विशेषाकारस्य गृहीतत्वात् जिज्ञासैव नोदेतीति दोषोऽस्त्येव। एवमेकैकत्र बहूनां विशेषाणां सद्भावात् सामान्यजिज्ञासायां यत्किञ्चिदेकविशेषकथनसंभवात् तत्तद्विशेषकथननियामको जिज्ञासाविशेषोऽपि न दर्शितो भवेत्। अत एवमत्र निर्वाह्यम्। यद्यपि शास्त्रार्थो न विशेषाकारेण ज्ञातः, तथापि ज्ञातसामान्याकारातिरिक्तोऽप्यंशः शास्त्रार्थे समस्तीति ज्ञातमेव। एवञ्च शास्त्रार्थांशस्य ज्ञातातिरिक्तत्वेन रूपेणेदानीं ज्ञातत्वेऽपि तादृशातिरिक्तत्वाद्यनवगाहनेन स्वरूपतस्तद्विषयकं ज्ञानमिदानीं नास्ति। अतो योऽद्य गृहीतोऽतिरिक्तत्वादिः, तदनवच्छिन्नातिरिक्तांशावच्छिन्नशास्त्रार्थविषयकज्ञानं जायतामितीच्छाकारः। अस्याश्च स्वरूपतस्तदंशग्राहिज्ञानमन्तरा न शान्तिः। सुगममिदं पक्षतागादाधर्यादिगतिपरिशीलने। तथाच जिज्ञासास्थल एवं निर्वाहात् न तद्दृष्टान्तेन भावरूपाज्ञानेऽपेक्षित साधनसंभवः। प्रत्युत तद्वदेवात्रापि ज्ञानाभावग्रहणेऽपि निर्वाहसंभवात् भावरूपमज्ञानमप्रामाणिकमित्येव सिद्ध्यति—

तथाहि—शास्त्रार्थाज्ञानं नाम उक्तसामान्याकारातिरिक्तत्वाद्यनवच्छिन्न-तदंशावच्छिन्नशास्त्रार्थविषयकज्ञानाभावः ; ततश्च सामान्यतः शास्त्रार्थं जानामि ; सामान्याकारातिरिक्तांशवत्त्वेनापि जानामि ; परंतु सोंशः सामान्याकारातिरिक्तत्वादिनैव भासते ; न तु तदनवच्छिन्नतदतिरिक्तांश-विषयिणी व्यावृत्तप्रतीतिरस्तीति सर्वेषामनुभवः । अत्र च ज्ञानाभावप्रति-योगितावच्छेदकम् उक्तातिरिक्तत्वादिधर्मानवच्छिन्नतदंशनिष्ठावच्छेदकताक-वस्तुविषयतानिरूपकज्ञानत्वम् । स चाभावाधिकरणवृत्त्यवृत्तिधर्म एव। इदानीं विद्यमानं हि ज्ञानमतिरिक्तत्वादिधर्मपुरस्कारेण तदंशविषयकमेव । अतो ज्ञानाभावः सर्वसम्मत उपपादितो भवति। प्रतियोगिज्ञानञ्च घटते। जिज्ञासा-सम्भवश्च समीच्यैव गत्या सम्पादितो भवति। यदि च विशेषाज्ञाने भासमाने सामान्याकारावच्छेदेन वस्तु विशेषणम् , तर्हि सामान्याकार-ज्ञानेनापि तन्निवृत्तिप्रसंगः । कथञ्च ज्ञानादौ अभासमानो विषयनिष्ठधर्मो विषयतावच्छेदको भवितुमर्हति ।

तस्मादतिरिक्ताज्ञानकल्पने तस्य विशेषविषयकत्वे सामान्यविषयकत्वे चानुपपत्तेर्जागरूकत्वात् ज्ञानाभावरूपक्लृप्ताज्ञानग्रहणेनैव व्यवहारस्य निर्वा-ह्यत्वादुचितत्वाच्च ज्ञानाभावस्याज्ञानत्वेऽनुपपत्तिवर्णनं तदर्थं भावरूपत्वकल्पनं तत्र अहं न जानामीति प्रत्यक्षप्रमाणप्रदर्शनञ्चानुपपन्नमिति सिद्धम्। कथं तर्हि घटमहं न जानामीत्यस्य निर्वाहः, निषेधार्थमेव घटज्ञानस्यापेक्षितत्वात् तत्सत्त्वे तदभावासम्भवादिति चेन्न—जानामीत्यनेन प्रत्यक्षादिज्ञानविशेष-विवक्षणे स्मरणरूपप्रतियोगिज्ञानस्य सत्त्वेऽपि प्रत्यक्षाद्यभावस्य सुवचत्वात् । यदा तु जानामीति ज्ञानसामान्यमेव विवक्षितम् , तदा येन रूपेण घटो ज्ञातः, तदन्यरूपेण तज्ज्ञानाभाव एवात्र विवक्षितः । भवति चानेकांशविशिष्टघटादौ कतिपयांशग्रहणेप्यन्यांशाग्रहणम् । निर्विशेषब्रह्मवादे तु ब्रह्मणि स्वयंप्रकाशे अप्रकाशमानांशाभावात् ब्रह्म न जानामीति दुर्वचमेवेत्यलम् ।

एतेन अनुमानादिना भावरूपाज्ञानसिद्धिरपि निरस्ता भवति ; प्रत्यक्षेणाभावरूपत्वस्य सिद्धतया हेतोर्बाधितत्वात् । एतेन प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वादित्यनुमानेऽज्ञानसाधने तात्पर्यमस्वीकृत्य साक्षिसिद्धस्याज्ञानस्य भावरूपत्वानुमाने तात्पर्यमिति वर्णयतोऽद्वैतसिद्धिग्रन्थस्य तदनुयायिसमालोचनादिग्रन्थानाञ्च निरासो भाव्यः । साक्ष्यधीनभानस्य अहं न जानामीत्याकारकतया तस्य चाभावविषयकत्वेन तत्र भावरूपत्वविधानायोगात् । प्रत्यक्षस्य नञादिघटितशब्दरूपप्रमाणस्य चैवमभावविषयकत्व एव स्वारस्ये सति अभावत्वेनैवाज्ञानं ज्ञातमिति कथं तत्र भावरूपत्वसाधनसम्भवः । अतोऽपूर्वमेव भावरूपाज्ञानमनेनानुमानेन साध्यत इति स्वीकर्तव्यम् । तथाचाप्रकाशितार्थप्रकाशकत्वस्य प्रकृताज्ञानानुमानेऽपि सत्त्वात् तत्रानुमानविषयाज्ञानावारकाज्ञानान्तरस्वीकारे प्रथमाज्ञानस्याकिञ्चित्करत्वम् , स्वयमेवाऽऽच्छादितत्वात् । उपर्युपर्यज्ञानधाराङ्गीकारात् सर्वस्याज्ञानस्यावृततया, न जानामीतिप्रतीत्यनुपपत्तिश्च । अस्वीकारे चानैकान्त्यम् । साक्षिभास्यत्वञ्चाज्ञानस्य किं ज्ञानाभावत्वेन रूपेण, उत रूपान्तरेण । आद्ये तद्विरोधात् भावरूपत्वसाधनमसम्भवि । अन्त्ये न जानामीति तदभिलापायोगः । प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तेत्यादिविशेषणविशिष्टवस्तुपूर्वकमित्यनुमा अप्रकाशितार्थप्रकाशिका न वा । यद्यप्रकाशितार्थप्रकाशिका स्यात्, अज्ञानमज्ञानावृतं स्यादित्यनवस्थादिदोषः । न चेत्, प्रथमाज्ञानं न सिद्ध्येत् । यदि चेयमनुमा स्वविषयावरणाज्ञानाभावेऽप्यप्रकाशितार्थप्रकाशिका भवेत्, ब्रह्मज्ञानादिरूपप्रमान्तरमपि तथैव भवेत् । 'अप्रकाशितार्थप्रकाशकप्रमासामान्यं विषयावरणाज्ञानपूर्वकम्', 'अज्ञानसाधकज्ञानमप्रकाशितार्थप्रकाशकम्, प्रमा च, विषयावरणाज्ञानपूर्वकं न भवति' इति मिथो विरोधादपि विरुद्धता । ईदृशोऽपि विरोधः, साध्याभावसाधकत्ववत् हेतोर्विरुद्धतापादक इति व्यक्तं प्राचीनग्रन्थे न्यायभाष्यादौ । अन्यश्च विरोधः—अज्ञानं साक्षिभास्यमित्युक्त्वा

तस्याज्ञानस्यानुमानैकसाध्यत्वाङ्गीकारात् । न हि साक्षिभास्ये सुखे विवादोऽनुमानापेक्षा वाऽस्ति ।

किञ्चाभावस्य षष्ठप्रमाणगोचरतायाः अद्वैतिसम्मतत्वात् न साक्षिभास्यत्वम् । तथाचाज्ञानस्य साक्षिभास्यत्वनिश्चये अस्यानुमानस्य भावरूपत्वमात्रसाध्यकत्वनिश्चयः, अनुमानस्य तन्मात्रसाधकत्वनिश्चये सत्येव हेतोरज्ञानांशासाधकत्वेन निर्दुष्टत्वनिश्चयात् भावरूपत्वसिद्ध्या साक्षिभास्यत्वनिश्चय इति परस्पराश्रयः । अन्यथाऽनुपलब्धिगम्यत्वेऽभावत्वस्य सिद्धतया भावरूपत्वसाधनायोगश्च । अथ ज्ञानाभावोऽपि साक्षिभास्य इति चेत्—तर्हि प्रतियोगिज्ञानस्यावश्यकतया तदभावात् ज्ञानाभावभानासम्भवः । अत एव न केनापि प्रमाणेन ज्ञानाभावस्य वर्तमानस्य ग्रहणं स्यात् । अतः प्रत्यक्षसिद्धस्य ज्ञानाभावस्य प्रत्यक्षविषयत्वोपपत्तिकल्पनस्यावश्यकतया च व्यर्थमेव भावरूपाज्ञानकल्पनम् । अपिच वादिप्रतिवादिनोरुभयोरपि यत् प्रमाणम्, तेन वस्तुसिद्धिर्वक्तव्या । साक्षिचैतन्यञ्च परैर्न स्वीकृतमिति कुतस्तत्सिद्धत्वमज्ञानस्य सुवचम् । यत् पुनरात्मतत्त्वं स्वयम्प्रकाशं सर्वसम्मतम्, न तत् स्वरूपातिरिक्तमज्ञानं प्रकाशयितुं प्रभवति । तैस्तदसंमतेः । अतः प्रमाणप्रदर्शनमन्तरेण, केवलम्, अहं न जानामीति प्रतीतिरेवाज्ञानसिद्धौ शरणीकरणीया । सा च सर्वसम्मतं ज्ञानाभावमतिलङ्घ्य नान्यद् गोचरयितुमर्हतीति वादान्तरेऽपि व्युत्पादितम्, इहापीति, न तस्याभावस्य भावत्वमिदमनुमानं साधयेत ।

अपिच सिद्धत्वेऽज्ञानस्य तत्पक्षीकारेण भावत्वमात्रसाधनसंभवे प्रमाणज्ञानं स्वविषयावरणेत्येवं प्रयासबहुलः कोऽयं वक्रः पन्थाः । अस्मिंश्चानुमाने जडविषयकज्ञानमात्रेणानैकान्त्यमपि, जडस्याप्रसक्तप्रकाशतया परैरेवावरणानभ्युपगमादिति **भावप्रकाशिका**दर्शितं दूषणं दुरुद्धरम् । तथाच तस्य पक्षीकारे बाधः । अपक्षत्वे च जडप्रकाशस्य ततः प्रागजातत्वेनाप्रकाशितार्थ-

प्रकाशकत्वरूपहेतुसत्त्वाद् व्यभिचारः। यत् समालोचनवचनम्—अद्वैतिभिर्ब्रह्माविषयकस्य केवलजडज्ञानस्यानङ्गीकारात् न दोष' इत्यादि, तत् सर्वं भावप्रकाशिकायामेवोद्धाव्य निरस्तांशोद्गिरणम्। घटादिज्ञानस्य ब्रह्मविषयकत्वे तत एव मोक्षः स्यात्। 'न चक्षुषा गृह्यते'इति श्रुतिविरोधश्च। अखण्डात्मना ब्रह्मज्ञानाभावान्न दोष इति तु ब्रह्मातिरिक्तस्याखण्डांशस्य दुर्वचतायाः प्रागेव प्रपञ्चितत्वात् परिहृतम्। अपिच घटज्ञाने ब्रह्मणोऽपि विषयत्वे कथमनैकान्त्यपरिहारः। घटावच्छिन्नचैतन्यावारकमज्ञानं घटावच्छिन्नचैतन्यविषयकज्ञानान्निवर्तत इति हि वक्तव्यम्। तदज्ञानं किं घटविषयकम् उत घटावच्छिन्नचैतन्यविषयकम् आहो चैतन्यमात्रविषयकम्। नाद्यः, जडविषयकाज्ञानानभ्युपगमात्। न द्वितीयः, घटस्य घटावच्छिन्नत्वस्य च जडतया तद्विषये अज्ञानस्यासंमतेः। अतः परिशेषात् चैतन्यविषयमेव तत्। तथाच तस्य घटावच्छिन्नचैतन्यविषयकज्ञानेन निवृत्तौ मुक्तिप्रसंगः, अनिवृत्तौ चानैकान्त्यमिति। किञ्च घटावच्छिन्नचैतन्यविषयकत्वं ज्ञानस्य व्यर्थम्। घटोऽस्ति भातीत्येवं सत्ताभानादिरूपस्य ब्रह्मणः स्वयम्प्रकाशत्वादेव व्यवहारसंभवात् वृत्तिज्ञानस्य घटमात्रविषयकत्वस्यैव पर्याप्तत्वात्। एवञ्च वृत्तेर्घटैकविषयकत्वात् अज्ञानस्य च ब्रह्मविषयकत्वात् न वृत्तिज्ञानस्य तन्निवर्तकत्वसंभवः। अतः प्रमाणज्ञानमिति प्रपञ्चज्ञानपक्षीकारप्रसक्तिरेव न भवति। ननु प्रमाणज्ञानपदेन ब्रह्मसाक्षात्काररूपवृत्तिमात्रं पक्षीक्रियते। अप्रकाशितार्थप्रकाशकत्वञ्च अप्रकाशितपरमार्थवस्तुप्रकाशकत्वं हेतुः। अतो न व्यभिचार इति चेत्—उच्यते—ब्रह्मसाक्षात्कारे ब्रह्मश्रवणमननाधिकविषयकत्वाभावात् अप्रकाशितप्रकाशकत्वस्य हेतोरसिद्धिः। परमार्थवस्तुनः स्वेन सर्वदा प्रकाशितत्वादप्रकाशितत्वासिद्धिः। अप्रकाशितपदवैयर्थ्यञ्च। प्रदीपप्रकाशादेरपरमार्थघटादिमात्रप्रकाशकत्वात् साधनवैकल्यञ्च। ब्रह्मसाक्षात्कारः स्वनिवर्त्यवस्त्वनाच्छादितविषयकः वृत्तिज्ञानत्वात् घटादिज्ञानवदित्येवं सत्प्रतिपक्षश्चेत्यादिकमूहनीयम्। एवमप्रकाशितार्थप्रकाशकत्वादित्यस्य स्वविषयावरणनिरसनपूर्वकप्रकाशोपयोगि-

त्वादिति समालोचनकृतः परिष्कारोऽपि साध्याविशिष्टत्वान्निरसनीयः। अस्मिन् भावरूपाज्ञानानुमाने साध्यघटकदलकृत्यप्रदर्शनविषये अद्वैतिभिर्वृथैव परिभ्रम्यते। शतदूषण्यां तु हिंसैषितया, "स्वप्रागभाव-स्वोत्पादकादृष्ट-स्वोत्पत्तिप्रतिबन्धकादृष्ट-स्ववेद्यगतवित्त्यभिव्यक्तिप्रागभावाः साध्यविशेषणैर्व्यवच्छेद्याः" इति सरसं व्युत्पादितम्। एवं निष्कृष्य तत्खण्डनमपि व्यधायि।

एतदनुमानविषये श्रीभाष्यदर्शितान् प्रतितर्कान् समालोचयता यल्लिखितम्, तदप्यत्र चिन्त्यते—विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम् अज्ञानत्वात् शुक्तिकाद्यज्ञानवदित्यत्र पल्लवाज्ञानत्वमुपाधिरित्याह। न चैतत् युक्तम्; पल्लवाज्ञानं हि शुक्तिकाद्यज्ञानमेव। तथाच प्रकृताज्ञाने पक्षे यत् दृष्टान्तीकृतम्, तत्र दृष्टान्ततावच्छेदकमेवोपाधित्वेन वर्ण्यते। अतः पक्षेतरत्ववत् अप्रयोजकमेतत्। न हि प्रकृतसाध्यस्योपाधेश्च व्याप्यव्यापकभावे प्रमाणमस्ति। अनुकूलतर्काभावे व्याप्यव्यापकभावासिद्धावुपाधित्वायोगात्। एवं हि सति प्रपञ्चो ज्ञाननिवर्त्यः मिथ्यात्वात् शुक्तिरूप्यवदित्यत्र प्रातिभासिकत्वमुपाधिः स्यात्।

एवं प्रकृताज्ञानं न ज्ञानमात्रब्रह्मावरणमज्ञानत्वात् शुक्तिकाद्यज्ञानवत्; विषयावरणं हि तत्' इत्यत्र 'शुक्तिकाद्यवच्छिन्नचैतन्यावारकत्वात् शुक्तिकादिविषयावारकत्वानङ्गीकारादित्याह। अत्रोच्यते—विषयावारकत्वाभावे शुक्तिकाद्यज्ञानमेव न सेत्स्यति; इदं रजतमिति भ्रमे शुक्तिधर्मिणोऽपि भानात् शुक्त्यवच्छिन्नचैतन्यमावृतमिति न वक्तुं शक्यते। यत्तु शुक्तिनिष्ठं शुक्तित्वम्, तन्न वेद्यते। तत्र शुक्तित्वस्य शुक्तिधर्मतया शुक्त्यवच्छिन्नचैतन्यातिरिक्तं शुक्तित्वावच्छिन्नचैतन्यं नास्ति; धर्म्यवच्छिन्नचैतन्यातिरिक्तधर्मावच्छिन्नचैतन्याभावस्य परिभाषायामेवोक्तेः। तथाच शुक्तित्वविशिष्टशुक्तिचैतन्यरूपपदार्थघटकशुक्तित्वमात्रस्याविदितत्वात् तावन्मात्रावारकत्वमेवाज्ञानस्येति कथं तस्य विषयावारकत्वाभावः। यदि च तस्य जडत्वात् सामग्र्यभावादेवाप्रकाशः, न तु अज्ञानावृतत्वादित्युच्यते, तर्हि शुक्त्यज्ञान-

मेव न सिद्ध्येदिति । किञ्च तदज्ञानं किं शुद्धचैतन्यावारकम् उत शुक्त्यवच्छिन्नावारकम् । नाद्यः ; तस्य शुक्तिज्ञानेन निवृत्त्ययोगात् । अन्त्ये तु प्रकृतानुमाने प्रकृताज्ञानं शुद्धचैतन्यावारकत्वाभाववत् अज्ञानत्वादिति विवक्षिते शुक्त्यज्ञानस्य न दृष्टान्तत्वासंभवः ।

अथ प्रकृताज्ञानं न ज्ञाननिवर्त्यं ज्ञानविषयानावरणत्वात् व्यतिरेकेण शुक्त्यज्ञानवदित्यत्र यत् दूषणम्---शुक्त्यज्ञानेऽपि हेतुसद्भावात् व्यभिचारः । एवं ज्ञानपदेन चैतन्यग्रहणे सिद्धसाधनम् । वृत्तिग्रहणे ब्रह्मणो वृत्तिविषयतया अज्ञानस्य तदावरणत्वेनानावरणत्वरूपहेत्वसिद्धिरिति---तत्र शुक्त्यज्ञाने विषयावारकत्वस्य प्रागुपपादितत्वात् न प्रथमदोषः । साध्ये ज्ञानपदं वृत्तिपरम् ; हेतौ चैतन्यपरम् । तथाच प्रकृताज्ञानं न वृत्तिनिवर्त्यं चैतन्यविषयानावरणत्वादित्युक्तौ नोत्तरदोषद्वयमपि । न च वृत्तिनिवर्त्यशुक्तिरूप्यादौ चैतन्यविषयावरणत्वाभावात् व्याप्तिभङ्ग इति मन्तव्यम्---वृत्तिनिवर्त्याज्ञानभिन्नत्वस्य साध्यत्वात् । वृत्तिनिवर्त्याज्ञानत्वरूपस्य साध्याभावस्य शुक्तिरूप्यादावभावात् । तदिदम्, 'ज्ञाननिवर्त्यमज्ञानम्'' इति भाष्येण दर्शितम् । यत्त्वत्रानुमाने प्रकृताज्ञानं ज्ञाननिवर्त्यं ज्ञानविषयावरणत्वात् शुक्त्यज्ञानवदिति सत्प्रतिपक्षत्वोत्थानम्---तत् स्वयं शुक्त्यज्ञाने विषयावरणत्वास्वीकारात् दृष्टान्ते साधनवैकल्यादयुक्तम् । किञ्च किमिदं ज्ञानविषयावरणत्वम् ? न तावत् चैतन्यविषयावरणत्वम् ; ब्रह्मणि चैतन्यविषयत्वस्यापि दुर्वचत्वात् । प्रपञ्चतद्भ्रमनिवर्तकत्वेन संमता हि वृत्तिर्ब्रह्मयाथात्म्यविषयिणीति स्वीकर्तव्यम् । ब्रह्मस्वरूपयाथात्म्यञ्च सजातीयविजातीयस्वगतविशेषराहित्यम् । एवं निर्विशेष स्वरूपं वृत्त्या स्वविषयत्वेन कथं गृह्येत । सर्वस्या अपि हि वृत्तेर्वृत्त्युत्पत्तिकाल एव साक्षिभास्यत्वात् इयमपि ब्रह्मसाक्षात्कारात्मिका वृत्तिः साक्षिभास्यैव वाच्या । न हि निर्विशेषं ब्रह्म वृत्तिविषयत्वरूपविशेषविशिष्टमिति साक्षी भासयेत् । न च सावधानश्रवणमनननिध्याननिष्पाद्या वृत्तिरभासमानैव भवतीति सुवचम् । बुभुत्सापूर्वमुत्पादितानां ज्ञानानां गृह्यमाणत्वस्यानुभविक-

त्वात्। तथाच साक्षिभास्यत्वासंमतौ सा वृत्तिरेवाप्रामाणिकीति कथं ब्रह्मणो वृत्तिविषयत्वमिति। एवं ब्रह्माज्ञानस्य ब्रह्मावरणत्वमपि न भवति; अप्रकाशितं ह्यावृतं भवति; न तु स्वप्रकाशमपि। अतो हेत्वसिद्धिः। एवं वृत्तिविषयघटाद्यावरणत्वमन्धकारेऽस्ति; तस्य वृत्तिनिवर्त्यत्वं नास्तीति व्यभिचारश्च। अपिच वृत्तेर्वृत्त्यवच्छिन्नचैतन्यस्य चोभयोः सविषयकत्वे प्रमाणाभावात् वृत्त्यवच्छिन्नचैतन्यविषयत्वातिरिक्तवृत्तिविषयत्वायोगस्य प्रागेवोक्तत्वात् ब्रह्मणि चैतन्याविषये ज्ञानविषयावरणत्वहेतुरज्ञाने सुतरामसिद्ध इति न तस्य प्रतिपक्षहेतुत्वमिति।

एवं ब्रह्म नाज्ञानास्पदं ज्ञातृत्वविरहादित्यत्राप्रयोजकशङ्काऽपि न युक्ता। यदि ह्यज्ञानाश्रयो ज्ञानहीनः स्यात्, अनिवृत्ताज्ञानःस्यात्; ज्ञानाज्ञानयोः सामानाधिकरण्येनैव निवर्त्यनिवर्तकभावात्। अन्यथा डित्थाज्ञानं डवित्थज्ञानेन निवर्तेत। अतो ब्रह्मणि ज्ञानस्य साक्षादनङ्गीकारे अज्ञानमपि साक्षान्नाङ्गीकार्यमिति। एवमत्र, 'अज्ञानास्पदत्वाभावो घटादीनामज्ञानप्रयुक्तत्वनिबन्धन इति न घटादिवत् ब्रह्मणोऽज्ञानाश्रयत्वानापत्तिः' इति कथितमप्यसाधु; तथा हि सति अज्ञानप्रयुक्तत्वमुपाधिरित्युक्तं भवति। अज्ञानानास्पदत्वस्याज्ञानेऽपि वर्तमानत्वादिदमयुक्तम्। एवमुक्तविधयाऽप्रयोजकशङ्कावारणात् स्वाभाविकसंबन्धसिद्धौ सोपाधिकत्वकल्पनस्य न प्रसक्तिरपि।

एवं ब्रह्म नाज्ञानावृतं ज्ञानाविषयत्वादित्यत्र हेतुश्चैतन्याविषयत्वरूपः। तत्र च नाप्रयोजकशङ्का। चैतन्याविषयस्याप्यज्ञानावृतत्वे तन्निवृत्त्ययोगात्। न च वृत्त्या तन्निवृत्तिः। वृत्तेर्जडतया निवर्तकत्वायोगात्। तथाच चैतन्याविषयस्याज्ञाननिवर्तकं स्वयं चैतन्यरूपत्वादेव वाच्यम्। तदा च तत्राज्ञानावरणप्रसक्तिरेव न भवति। अत्र चानुमाने यत्रयत्राज्ञानावृतत्वं शुक्त्यादौ, तत्रतत्र शुक्तिरियमित्येवं वृत्त्यवच्छिन्नचैतन्यविषयत्वमिति व्यतिरेकव्याप्तिर्बोध्या। न च शुक्त्यवच्छिन्नचैतन्यस्यैवाज्ञानावृतत्वात् तत्र चैतन्यविषयत्वाभावात् व्यतिरेकभङ्ग इति वाच्यम्—शुक्तित्वांश एवाज्ञानावृतत्वमित्यस्य प्रागेवोपपादि-

तत्वात् । एवं वृत्तेः स्वरूपतोऽज्ञाननिवर्तकत्वाभावात् वृत्त्यवच्छिन्नचैतन्य-निवर्त्यत्वमेव स्वीकार्यमिति तस्य ब्रह्मण्यस्वीकारे वृत्त्यवच्छिन्नचैतन्यरूपज्ञान-निवर्त्याज्ञानकत्वं तस्य दुर्वचमित्यपि न ब्रह्मण्यज्ञानसाधनसंभवः । तथाच भाष्यदर्शिताः प्रतिप्रयोगाः सुस्थाः ।

शतभूषण्यामत्र वादे अज्ञानस्यानिर्वचनीयत्वे भावरूपत्वे च ब्रह्म-सिद्धीष्टसिद्धिवाक्यान्यनूद्य स्वयं चर्वितचर्वणस्यैव विधानेन पदेपदे, न जानामि, नाहं जानामीति पाठेनैव विस्तरः कृत इति नाधिकं प्रतिवक्तव्यमस्तीति संग्रहः क्रियते । अनिर्वचनीयत्वशोधनस्य नायमवसरः । इष्टसिद्धौ अज्ञानं न ज्ञानाभाव इत्यत्र यत् कारणमुक्तम्—अहं न जानामीति प्रतीतौ न ज्ञानाभावः अभावग्राहकप्रमाणाग्राह्यत्वात् । तद्धि प्रमाणं तार्किकमते प्रत्यक्षम्, तान्त्रिकमतेऽनुपलब्धिः । तत्र प्रत्यक्षविषयविशेषणस्यैव प्रत्यक्ष-ग्राह्यत्वात् आत्मनश्चाप्रत्यक्षत्वात् तद्विशेषणमज्ञानं न प्रत्यक्षवेद्यम् । अज्ञानस्यापरोक्षत्वानुभवाच्चानुपलब्धिगम्यता न भवति । आत्मनोऽप्रमेय-त्वाच्च । अतः साक्षिभास्यमतिरिक्तमिति—तन्न ; अनुपलब्धिगम्यत्ववादिभिः भूतले घटाभाववदिति ज्ञानस्येव अहं न जानामीतिज्ञानस्यापि अहमंशस्य प्रत्यक्ष-तयोपपादनसंभवात् । अन्यथा घटाभावादावप्यपरोक्षत्वानुभवस्य तुल्यत्वात् । तार्किकमते आत्मतत्समवेतगुणतदभावादीनां मानसप्रत्यक्षवेद्यत्वस्येष्टत्वाच्च । द्वादशविधप्रमेये हि प्रथमप्रमेयमात्मैव गौतमस्य । अतोऽप्रमेयत्वमसिद्धम् । क्वचिदप्रमेयत्वव्यवहारस्तु अपरिच्छिन्नत्वार्थको वा बाह्यप्रत्यक्षादिप्रमाविशेषा-विषयत्वपरो वा । यद्येवमहं न जानामीत्यस्य ज्ञानाभावातिरिक्तमज्ञानमन्तरेणा-निर्वाहः, अहं नेच्छामि, न करोमि, न द्वेष्मि, न दुःख्यामीत्यादावपि इष्टसिद्ध्युक्तप्रकृतानुपपत्तितौल्याद् भावरूपमनिच्छादिकमप्येष्टव्यं स्यात् । एवञ्च सर्वत्राभावत्वेन रूपेण तद्भानानुभवभङ्गश्च । तस्मात् यथायथं ज्ञान-ध्वंसो वा प्रागभावो वा विशेषतः सामान्यतो वा न जानामीत्यत्र विषयः । न च तमोऽपि तेजोभावादतिरिक्तं तार्किकाणाम् । अनुभवानुसारेण तमसो

द्रव्यत्वे स्वीकृतेऽपि अज्ञानस्यापि विनापि कारणं ज्ञानाभावातिरिक्तत्वं स्वीकर्तव्यमिति कथमिति। 'अभावरूपत्वे आवरणविक्षेपशक्तिमत्त्वं कथमिति चेत्—आवश्यकश्चेत्—अस्तु किञ्चित् तादृशं वस्तु; अहं न जानामीत्यत्र तदेव विषय इत्यत्र किं प्रमाणम्। यत्तु अभावप्रत्यक्षे प्रतियोगिप्रत्यक्षस्य कारणत्वात् ज्ञानप्रत्यक्षे ज्ञानाभावप्रत्यक्षं न भवतीति—तन्न—प्रतियोगिज्ञानस्य कारणत्वस्वीकारेऽपि प्रतियोगिप्रत्यक्षं कारणमित्यस्वीकारात् स्मरणादिरूपे प्रतियोगिज्ञाने सति प्रत्यक्षादिज्ञानाभावस्य सुग्रहत्वात्। ज्ञानाभावे वक्तव्यं सर्वं भावरूपाज्ञानेऽपि तुल्यमिति, कथं निर्वाह इति च परिमलखण्डनेन प्रागेवात्र वादे व्युदपादि।

यत्तु—अज्ञानं कर्मरूपं न भवितुमर्हतीति—नैतच्छासनम्। न ज्ञानमज्ञानं ज्ञानातिरिक्तमित्यर्थे साति अब्राह्मणपदवत् विवक्षितविशेषग्रहणसंभवात्। एतेन, "न वा कर्मणोऽविद्यात्वम्" इत्यपि निरस्तम्। अस्ति च प्रयोगः—"विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह" इति। शाङ्करोपनिषद्भाष्ये चाविद्यापदं कर्मार्थिकं व्याख्यातम्। आह च पराशरः—'तर्तुं मृत्युमविद्यया' इति अविद्यापदं सत्कर्मपरम्। विस्पष्टञ्चाह—"अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते" इति। कर्मण आवारकत्वञ्चाह—"यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा" इति। "पराभिध्यानात्तु तिरोहितम्" इति बादरायणोऽपि भगवत्सङ्कल्पस्य तिरोधायकत्वमाह। भगवत्सङ्कल्प एव च पुण्यपापरूपं कर्म, न त्वपूर्वमदृष्टं वा किञ्चिदिति सर्ववेदान्तिस्थापनीयमेव श्रीभाष्ये कण्ठोक्तम्। अत एव, "वस्तुतस्तु कर्मरूपमज्ञानं पुण्यापुण्यापरपर्यायं परमापूर्वमदृष्टतया प्रसिद्धम्" इत्युक्तमप्युपेक्ष्यम्; अस्यावेदान्तिमीमांसकमतत्वात्। फलाधिकरणविरोधाच्च। केचिददृष्टमान्तरालिकम्, अन्ततो देवताप्रीतिञ्च विवक्षन्ति। तदपि न तत्त्वपरिशीलिपरिगृहीतमित्यन्यदेतत्। तस्मादविद्यापदमिवाज्ञानपदमपि सत्यविवक्षायां कर्मबोधकं भवितुमर्हत्येव। अहं न जानामीत्यत्र तु न कर्मो-

च्यते, किं तु ज्ञानाभाव एव। 'अज्ञानस्य भावरूपस्य वृत्त्यवच्छिन्न-चैतन्यमेव विरोधि, न वृत्तिमात्रम्, न वा चैतन्यमात्रम्' इति, 'अज्ञानमिति नञ्गर्भे ज्ञानमात्रप्रयोग उपचारात्' इति च न—ज्ञानपदस्य वृत्त्यवच्छिन्नां चैतन्य एव मुख्यप्रयोगस्य वेदान्तपरिभाषोक्तत्वात् औपचारिकत्वाभावात्। न च स्वरूपचैतन्य एव ज्ञानपदं मुख्यम्, परिभाषा तु वृत्तिमात्रे ज्ञानपद-मुख्यत्ववारणायेति वाच्यम्-ज्ञाधातुनिष्पन्नस्य ज्ञानपदस्य कर्मकर्तृसाकांक्षस्य स्वरूपचैतन्ये मुख्यत्वायोगात्। भवन्मते अखण्डाकारवृत्तिबाध्यत्वस्यैवाज्ञाने इष्टतया अज्ञानमित्यत्र ज्ञानपदस्य वृत्तिपरत्वसंभवाच्च। स्वप्रकाशस्य नाज्ञान-विरोधित्वमिति न सम्यक्। तथा सति, अहमस्मि न वा, नाहमस्मि, अह-मेको न वेत्यादिसंशयविपर्ययोरप्यापत्त्या आत्मनः स्वयम्प्रकाशत्वस्यैवासिद्धि-प्रसंगात्। स्वरूपप्रकाशस्य निवर्तकत्वे शुक्तित्वाज्ञानस्यापि ततो निवृत्त्या भ्रमकथैव न स्यादिति चासङ्गतम्। न हि शुक्तित्वं स्वप्रकाशम्। शुक्त्यवच्छि-न्नत्वाभिमतचैतन्यस्वरूपस्य स्वयम्प्रकाशत्वे शुक्तित्वाज्ञाननिवृत्तिः कुतः। यदि शुक्त्यवच्छिन्नचैतन्यातिरिक्तस्य शुक्तित्वावच्छिन्नचैतन्यस्याभावात् शुक्ति-वृत्तौ जातायां शुक्तित्वविषयकवृत्त्यभावे च प्रमाणाभावात् शुक्तिरूपधर्मिज्ञाने सति शुक्तित्वाज्ञानं दुर्वचमित्याशयः, तर्हि स परिभाषाकृतं प्रत्याविष्क्रियताम्; किं नस्तेन। स्वप्रकाशदशायां वस्तुनो न वैशद्यम्, वृत्त्या तु वैशद्यमिति च न सम्यक्। स्वप्रकाशस्य ह्यपरोक्षतुल्यत्वं सर्वेष्टम्; "अपरोक्षत्वात् प्रत्यगा-त्मप्रसिद्धेः" इति च सूत्रभाष्यम्। न चापरोक्षस्य तस्य परोक्षरूपवृत्त्या वैशद्यं भवितुमर्हति। अपरोक्षवृत्त्यैव वैशद्यमिति चेत्—तर्हि श्रवणमननादिकं स्वप्र-काशे ब्रह्मणि नापेक्ष्यम्—सर्वैरुपदेशादिनिरपेक्षमपरोक्षवृत्तये प्रयत्नः कर्तुं युक्तः स्वप्रकाशत्वात्। स्वयम्प्रकाशेऽप्यात्मनि जगद्वैलक्षण्यं किमप्यस्तीति श्रुत्वा तदा-परोक्ष्याय प्रवर्तेत इति चेत्—तद् वैशद्यमतिरिक्तमित्युच्यताम्। अविद्यापदस्य कर्मार्थकतायाः शाङ्करभाष्य एव सिद्धत्वात् कर्मवत् ज्ञानप्रागभावस्याप्यद्वैतीष्ट-त्वात् अत एव स्वप्रागभावव्यतिरिक्तेति विशेषणस्यानुमाने साध्यकोटौ निवेशात्

न कर्मणोऽभावस्य वा अविद्यात्वमज्ञानत्वञ्चास्माभिः कल्प्यते; भवतामेव भावाज्ञानरूपधर्मिकल्पनाद् गौरवम्। मूलप्रकृतिरेव सर्वसंमता अज्ञानपदविवक्षितेति चेत्—अस्तु; अविद्यापदमपि तत्र प्रयुज्यतां श्वेताश्वतर इव; का हानिः। न जानामीति वाक्यं तु न मूलप्रकृतिवाचीति ध्येयम्। ईश्वरसंकल्पादिरूपकर्मणामनन्तत्वात् तादृशानन्तशक्तिकल्पनाद्वरं प्रकृतेरावारकत्वमिति च न सम्यक्। न हि कर्म वा तस्येश्वरसंकल्पत्वं वा आवारकत्वं वाऽस्माभिः कल्प्यम्। प्रमाणमनुसृत्य स्वीकारात्। केवलप्रकृतेरावारकत्वे तु सर्वं जीवमेकरूपेणैव बध्नीयादिति वैषम्याभावप्रसङ्गः। अतः कर्मसापेक्षतयैव प्रकृतेरप्यावारकता। "कर्मानादित्वात्" इति सूत्रखण्डमपि स्मर्तव्यम्।

यत पुनः, 'अज्ञानमित्यस्य ज्ञानविरोधीति नार्थः किंतु ज्ञानसदृशमित्यर्थः। ज्ञानवत् अज्ञानस्यापि साक्षिभास्यत्वं सादृश्यम्। सुखादीनामपि तदस्तीति चेत्—तेषामप्यज्ञानप्रयुक्तत्वादज्ञानतैवेति—तन्न-एवं तर्हि नञः सादृश्यमर्थः स्यात्। अत्राप्यर्थे धातुसमभिव्याहृतो नञ् अव्युत्पन्न एव। अतोऽहं न जानामीत्यस्य च अहं ज्ञानसदृशवानित्यर्थवर्णनं कार्यम्। सुखाद्यनुभवकालेऽप्येवं प्रतीतिः स्यात्। शुक्तिरूप्यस्य साक्षिभास्यत्वात् अहं शुक्तिरूप्यवानित्यर्थे अहं न जानामीति प्रयोगः स्यात्। जगति अज्ञानाप्रयुक्तं किमस्ति? तस्मात् सर्वदा अहं न जानामीति तत्तद्विवक्षया व्यवहरेत्। विरोध्यर्थवच्च सदृशरूपार्थेऽपि ज्ञानसादृश्यप्रतियोगितया ज्ञानभानस्य तद्विषयभानस्य चावश्यकत्वमक्षतमिति विरोध्यर्थत्यागे को लाभोऽत्रभवतः। किञ्च ज्ञानपदं चैतन्यपरं वृत्तिपरं वा। नाद्यः, तस्य स्वयम्प्रकाशतया साक्षिभास्यत्वरूपसादृश्यायोगात्। प्रत्युत तद्वदज्ञानस्य स्वप्रकाशतैव तर्हि प्रसजेत्। सत्यत्वादिना सादृश्यशङ्काऽपि स्यात्। नान्त्यः, वृत्तितज्जनकान्तःकरणादिसर्वकारणस्य स्वकार्यैकदेशवृत्तिसादृश्यविवक्षया संपाद्यस्य कस्य चिदभावात्। जन्यत्वादिना सादृश्यभ्रमापादकत्वाच्च। सामान्यतो ज्ञानभेदस्य, विशेषविवक्षायाञ्च निवर्त्यनिवर्तकभावरूपविरोधस्यावश्यज्ञेयस्य त्यागेन सादृश्यग्रहणस्यानुचितत्वाच्च।

उपादानतया सिद्धा प्रकृतिरेव लाघवादज्ञानमिति न्यायरत्नदीपावल्युक्तमपि न—ज्ञानाभावस्यापि स्वीकृततया लाघवानवकाशात्। प्रत्युताभावपरत्व एव न जानामीत्यत्र शब्दार्थव्युत्पत्त्यादेरन्यादृशस्याकल्पनाल्लाघवम्। ज्ञानाभावस्याग्राह्यत्वे चासिद्धिरेव स्यात्। न चेष्टापत्तिः। घटो न ज्ञानसामान्याभाववानित्यप्यनुभवाच्च। जन्यज्ञानाभावो ध्वंसादिरनुभाव्य एवेति यदुच्यते, तत्रापि जन्यज्ञानस्य सविषयकस्य ज्ञानं जातश्चेत्, कथं तदभावज्ञानमिति शङ्का भवेदेव। परिहारश्च सर्वत्राविशिष्टः प्रागुदर्शित एव। किञ्च यद्यज्ञानं ज्ञानाभावातिरिक्तं मिथ्यावस्तुकारणं स्यात्, तस्य कार्यमिथ्यात्वज्ञानान्निवृत्तिरयुक्ता; तद्वृत्ताबुद्धौ तदभावादिज्ञानस्यैव विरोधित्वात् नेदंरजतमिति निश्चये रजतबुद्धिनिवृत्तिर्युज्यते। अज्ञानं भावरूपं ज्ञाननिवर्त्यमिति तु न क्लृप्तम्। तदनिवृत्तौ च रजतनिवृत्तिरपि न भविष्यति। तथा शुक्त्यज्ञाननिवृत्तावपि पूर्वं तत्कृतस्य रजतस्य कुतो निवृत्तिः। न हि पितृमारकः शरादिः पुत्रमपि मारयतीत्यस्ति। तर्हि पुना रजतबुद्ध्यापत्तिरिति चेत्—भवतु, यदि नेदंरजतमितिधीस्तद्बुद्धिप्रतिबन्धिका न भवेत्। एवंरीत्या अद्वितीयं ब्रह्मेति ज्ञानात् द्वितीयज्ञाननिवृत्तावपि भावरूपस्य ब्रह्माज्ञानस्य तत्कार्यस्य प्रपञ्चस्य च निवृत्तौ मानाभावो मन्तव्यः। सत्यपि प्रपञ्चे तज्ज्ञानं तु न भवति; पारमार्थिकतया प्रपञ्चो नास्तीति बाधज्ञानात्। अज्ञायमानस्य तस्य सद्भावः किमर्थमेषितव्य इति चेत्—निवृत्तिकारणकल्पनाभावरूपलाघवाय। तत्सद्भावस्य पुरुषार्थाप्रतिबन्धकत्वपरिशीलनेन च तन्नाशो न कल्पनीय इति। शेषं निवृत्त्यनुपपत्तिप्रसाधनेऽनुसंधेयम्।

घटो नास्तीत्यत्र घटप्रागभावो न विषय इति च न; कपाले घटो नास्तीत्यत्र तद्विषयत्वस्य तार्किकेष्टत्वात्। अन्योन्याभावभिन्नानां यथायथं विषयत्वात्। अन्योन्याभावस्य नास्तीति प्रतीतिविषयत्वमुक्तं न न भवतीत्यभिलाप एव हि तदा स्वरसः। भू सत्तायामिति समानार्थकत्वावसायेपि प्रयोगस्वारस्यमनुभववेद्यम्। 'ज्ञानं भविष्यतीत्येव प्रागभावग्रहणाकार'

इत्यप्ययुक्तम् । तद्वत् न जानामीत्यस्यापीष्टत्वात् । तत्र वा कथं ज्ञानं प्रतियोगि । ज्ञानविषययोर्ज्ञाने एव प्रागभावस्य भविष्यतीत्यप्यभिलप्यतेति ।

उपक्रम इवाज्ञानस्यानिर्वचनीयत्वस्यानवसरे पुनः प्रस्तावश्च हेयः । अनित्यादौ नित्यादिबुद्धिरविद्येति पतञ्जलिसूत्रोक्तं स्वसम्मतब्रह्मावारकाज्ञानापेक्षया भिन्नत्वात् वृत्तिरूपत्वाच्च प्रस्तोतव्यम् । मिथ्येति सूत्रे उक्तत्वात् प्रस्तुतमिति चेत्—तत् ज्ञानगतं मिथ्यात्वं नानिर्वचनीयत्वम्; न वा अनिर्वचनीयविषयकत्वम्; किन्तु विशेष्यावृत्तिप्रकारविषयकत्वमिति न ततोऽज्ञानस्य वृत्तिव्यतिरिक्तस्यानिर्वचनीयत्वसिद्धिः । यथार्थं सर्वविज्ञानमिति वदन्त एव अनात्मन्यात्मबुद्धिं यथार्थां न मन्यन्ते विशिष्टाद्वैतिन इत्युक्तमेव । सर्वत्राख्यातिवादिभिर्यादृशं यथार्थत्वं वर्ण्यते तादृशस्य तस्य तत्रानपायात् । शुक्तिरजतमरीचिकाम्भःप्रभृतिस्थलसम्मतं तु यथार्थत्वं विशिष्टज्ञाननिष्ठम् । अलमनवसरे तच्छोधनेन । सर्वथा शतदूषणी यथार्था ।

स्वात्मनि भगवच्छरीरे आत्मत्वबुद्धिरध्यास इति शतदूषण्युक्तमित्यनुक्तोपालम्भः । सर्वज्ञानयाथार्थ्यवादिभिरपि भ्रान्त्यध्यासादिपदानामर्थविशेषः प्रयोगश्च न निषिद्ध्यत इति अध्यासशब्दमात्रेण ज्ञानयाथार्थ्यं न त्यक्तं भवति । 'सदसद्विलक्षणत्वस्य बौद्धमताविशिष्टत्वेऽपि ज्ञानबाध्यत्वस्य मिथ्यात्वस्य चाद्वैतमते भावरूपाज्ञाने स्वीकारात् विशेषः' इतिलेखनञ्चासंगतम् । बौद्धमते ज्ञानबाध्यत्वस्यास्वीकाराभावात् । सदसद्विलक्षणत्वं मिथ्यात्वमिति भवद्भिरुपवर्ण्यते । एवं स्थिते अत्र तयोर्भेदः प्रदर्श्यते । एवं ज्ञानबाध्यत्वस्यापीति च विचित्रम् । अज्ञानं भावरूपत्वादिभवदभिमतसर्वाकारविशिष्टतया साक्षिवेद्यमिति च परमोऽपलापः । एवं विलिख्य, "साक्षिसिद्धस्याज्ञानस्य स्वप्रागभावव्यतिरिक्तत्वमात्रस्य साधनात्" इति अनुमानसिषाधयिषितं भावत्वमात्रमित्युक्तं व्याहतम् । भावत्वस्यापि साक्षिसिद्धत्वे साधनीयत्वाभावात् । अत्र वाक्ये स्वशब्दः कथमन्वेतीति च

भाव्यम् । सर्वमिदमद्वैताभिमानिसाक्षिमात्रवेद्यं स्यात् । तथाच प्रमाणं विनैव भवद्भिरिदं सर्वमिष्यत इत्यस्य पर्यायोऽयम् । भावरूपाज्ञानानुमाने दलकृत्यवर्णनादिकं विस्तरमात्रम् । विवरणादिकृतवृथाविस्तरभूतदलकृत्यवर्णनादिकमुपेक्ष्य निष्कृष्य तत्कृत्यस्य शतदूषण्यां साधु संगृहीतत्वात् । वृत्तेर्जडाया अज्ञाननिवर्तकत्वे तत्र चैतन्यप्रतिफलनमेव नाभ्युपेतव्यं भवेत् । वृत्तिप्रतिफलितचैतन्यमिति च न वक्तव्यम् । एवञ्च चैतन्यमेव मा भूदिति देहस्य ज्ञानाश्रयत्ववादिचार्वाकसौहार्दमेवान्तःकरणस्य ज्ञातृत्ववादिभिर्भवद्भिराहतं स्यात् । वृत्तिर्हि अन्तःकरणपरिणामः । अन्तःकरणं नाम परिणामविशेषापन्नमज्ञानमेव । तथाच वृत्तिरप्यज्ञानमेव । अविद्यावृत्तिरेव यत्र वृत्तित्वेनाभिमन्यते शुक्तिरूप्यादिविषये, ईश्वरस्य ज्ञातृत्वोपपादनाय च, तत्र वृत्तेरज्ञानत्वंसुतराम्। एवञ्चाज्ञानमेवाज्ञाननिवर्तकमित्युक्तं भवेत् । एवमज्ञानस्य भावाभाववैलक्षण्यं ब्रह्मसिद्ध्युक्तं चेत्, तर्हि भावरूपत्वमनुमातुं न शक्यते । उपादानत्वनिर्वाहाय भावपदेन व्यपदेश इति चेत्—यदि वस्तुतो न भावत्वम्, किंतु व्यपदेशमात्रम्, तावता तस्य जगदुपादानत्वं कथम् । यदि भावत्वाभावेऽप्युपादानत्वं निर्वहति, तर्हि भावत्वेन व्यपदेशः कुतः । अतः सदसद्वैलक्षण्येऽपि भावरूपत्वमस्तीत्याशयानैरेव भावरूपाज्ञानवादः प्रथमं प्रस्तुतः । भावरूपस्य वा भावाभावविलक्षणस्य वा अज्ञानस्य लोकानुभवसिद्धाभावरूपाज्ञानभिन्नतया अनुमानमिदमज्ञानरूपधर्म्यनुमापकमेव : न तु प्रागभावव्यतिरिक्तत्वमात्रानुमापकम् ; लोकसिद्धे अभावरूपज्ञाने तत्साधनायोगात् ।

एतेनाभावरूपाज्ञानानुमानजन्यानुमितेर्भावरूपाज्ञानरूपाप्रकाशितार्थप्रकाशकत्वादज्ञानविषयकाज्ञानान्तरापत्तिः पूर्वोक्ता प्रतिष्ठिता भवति । किञ्च स्वप्रागभावव्यतिरिक्तत्वमेवाप्रकाशितं प्रकाश्यते, न त्वज्ञानमित्यनुपपन्नम्—स्वप्रागभावव्यतिरिक्तत्वस्यापि घटादौ ज्ञातत्वादप्रकाश्यत्वात् । अज्ञानगतत्वेन तदप्रकाशितमिति चेत्—स्वप्रागभावव्यतिरिक्तत्वं प्रति धर्मित्वेनाज्ञान-

मप्रकाशितं किं न स्यात्। धर्मधर्म्युभयविषयेऽप्यप्रकाशस्य वक्तव्यतया स दोषोऽस्त्येव। अज्ञानं भावरूपमेव विवेचनविरहिणां ज्ञानप्रागभावत्वेन भासत इति चेत्—तर्हि ज्ञानप्रागभावत्वेन भानस्य ज्ञानतद्विषयज्ञानमन्तरेणासम्भवेन तन्निर्वाहप्रकारे परिशीलिते वस्तुतः प्रागभाव एव भासत इति सुवचतया भावरूपाज्ञानरूपधर्मितद्भ्रान्त्यादिकल्पनस्य गौरवादसंभवात्। न च साक्षिभास्यमज्ञानं विपरीताकारेण भातुमर्हति, सुखादीनां दुःखत्वादिना साक्षिभास्यत्वाभावात्। ज्ञानप्रागभावत्वस्यानुपलब्ध्यादिगम्यत्वेनेष्टस्य साक्षिभास्यत्वाभिमताज्ञानविशेषणतया भानायोगाच्च। स्वरूपतस्त्वज्ञानमनुभवदूरम्। तस्मादनुमानेनैव तद्धर्मि साधनीयमित्यज्ञानविषयकज्ञानपरम्परापत्तिरवर्जनीया।

अप्रकाशितार्थप्रकाशकत्वरूपहेतुघटकं प्रकाशकत्वं यदि प्राकट्यहेतुत्वरूपम्, तत्र प्राकट्यं ज्ञातता चेत्, दीपप्रभायां तद्धेतुत्वाभावात् साधनवैकल्यम्। ज्ञाततायाः वस्तुतोऽनङ्गीकारादसिद्धिरपि। प्राकट्यं नामानावृतत्वमिति चेत्—तर्हि अनावरणहेतुत्वम् आवरणनिवृत्तिहेतुत्वं हेतुः। आवरणस्यासिद्धतया च तदा हेत्वसिद्धिः। अत एवावरणनिवृत्तिपूर्वकप्रकाशोपयोगित्वमिति निर्वचनान्तरमपि निरस्तम्। प्रकाशशब्दार्थे विचार्यमाणे तन्मध्ये तस्यैव निवेशनाद् दुरुत्तरता च। प्रकाशकपदव्यपदेश्यत्वं प्रकाशकत्वमित्येतत् श्रीभाष्यादावेव ण्वुलर्थशोधनमुखेनातिप्रसक्तमिन्द्रियादिष्वपीत्येवं निरस्तम्।

चण्डमारुतोपक्षिप्तसत्प्रतिपक्षानुमानदूषणं प्रकारान्तरेणाशक्यमित्यालोच्य यत् आगमविरोधादनुमानस्याभासत्वमुक्तम्—तदपि न—भावरूपाज्ञानसाधकस्यागमस्याभावात्। 'अनृतेन हि प्रत्यूढाः' इति अनृतपदं न तत्परम्। तत्र हि 'त इमे सत्याः कामाः अनृतापिधानाः। तेषां सत्यानां सतामनृतमपिधानम्, इत्यनृतपदेन यद् ग्राह्यम्। तदेव ग्रहीतुमुचितम्। सत्याः कामाः इति च परमात्मगताः कल्याणगुणाः विवक्षिताः।

ते च सत्यकामत्वसत्यसङ्कल्पत्वादयः। तेषाञ्च भवन्मते मिथ्यात्वात् भावरूपाज्ञानतिरोहितत्वं वक्तुं न शक्यते। अतो जीवात्मदुष्कर्मतिरोहितत्वमेव भगवद्गुणानां तत्र विवक्षितमिति, 'अनृतेन हि प्रत्यूढाः' इत्यत्राप्यनृतपदं तदेकार्थम्। न चानृतशब्दस्य भावरूपाज्ञाने रूढिरस्ति; अनृतपदं लोके मिथ्यावाक्ये भूम्ना प्रसिद्धम्। मिथ्यात्वञ्च वाक्यस्य न त्रैकालिकात्यन्ताभावप्रतियोगित्वात्; अपि तु तेन वाक्येन यद्देशकालसंबन्धितया योऽर्थोऽवभासितः, तथा तस्याभावात्। तादृशवाक्यरूपार्थश्चात्रानन्वित इति वाक्यगतमनृतत्वं परित्यज्य वस्तुगतमनृतत्वं विवक्ष्यते। तत्र ऋतं सत्यम्। ऋ गतौ। यत् सर्वं कालं गच्छति व्याप्नोति तत् सत्यम् ऋतम्। असत्यमनृतम्। यत् खल्वौपाधिकम्। तत् सर्वकालनियतं न भवतीति तदनृतम्। तत्र व्यक्तिवचनानां सन्निहितवचनत्वमिति न्यायात् तदा तदा योग्यत्वेनोपस्थितव्यक्तिविषयकत्वमिति, 'अविद्या कर्मसंज्ञाऽन्या' इत्यादिस्मृत्यनुसारेणौपाधिकं कर्म अनृतपदेन विवक्ष्यते। क्वचिदनृतपदमसत्य इत्यर्थपरमेव सत् अचेतनव्यक्तिवाचि यथा सत्यञ्चानृतञ्चेत्यत्रेति नानेकार्थताऽपि। अनृतपदस्य ज्ञानविरोधीत्यर्थः परं कथं सुलभः। तथा सत्यपि कथं कर्मग्रहणम्। कर्मणां ज्ञानप्रतिबन्धकत्वमेव, न तु नाश्यत्वमिति चेत्—विरोधीत्युक्तिः नाश्यरूपमेवार्थं कथं गमयति। तथासत्यपि, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति ज्ञाननाश्यत्वं कर्मणां प्रसिद्धम्। हन्त! प्रजाः स्वसंपाद्यज्ञानाग्निनाश्येनैव कर्मणा स्वयं प्रत्यूढाः ब्रह्मलोकं न विन्दन्तीति श्रुत्यर्थस्य समञ्जसत्वात्। एवं ज्ञानविरोधित्वं ज्ञानप्रतिबन्धकत्वरूपं विरोधिपदस्वरसलब्धं नोपेक्षितुं क्षमम्। तस्मादनृतशब्दस्यासत्यार्थकत्वेऽपि कर्मणि रूढ्यभावेऽपि असत्यशब्दस्यास्थिरार्थकत्वात् कर्मणामागन्तुकत्वास्थिरत्वयोः सुप्रसिद्धत्वात् तत्त्यागेनाप्रसिद्धभावरूपाज्ञानकल्पनं न युक्तम्। अन्यथा अनृतपदेन अलीकमसत् शशशृङ्गमेव कस्मान्न गृह्यते। अनृतापिधानाः प्रत्यूढा इत्युक्तपिधानप्रतिवहनप्रयोजकव्यक्तिविश्रमे च कर्मणां तथात्वं श्रुतिस्मृतिसंप्रतिपन्नमिति नान्यत् कल्प्यम्।

ऋतं पिबन्तावित्यत्र ऋतमवश्यम्भावि इति व्याख्यानं सर्वसंमतम् । अनृतं तदन्यत् अस्वाभाविकमौपाधिकं कर्मेत्यपि युक्तम् । तमसः प्रकृतेरावरणशक्तिरस्मदनभिमतेत्यपि न, भगवत्स्वरूपादितिरोधानकरी मायायवनिकेति प्राच्याचार्यप्रतिबोधितत्वात् । मायाशब्दस्यार्थक्रियाकारिषु आसुरशस्त्रादिष्वपि प्रयोगात् विचित्रार्थकरत्वं प्रवृत्तिनिमित्तम् । क्वचिन्मिथ्याभूतेऽपि प्रयोगोऽस्तीति चेत्—तर्हि किं प्रवृत्तिनिमित्तम् । मिथ्यात्वं चेत्—शुक्तिरजतादावपि मायाशब्दप्रयोगापत्तिः । 'योगमायेव निर्मिता' इत्यत्र इवशब्दप्रयोगात् मिथ्यात्वमवगम्यत इत्यपि न—देवमायेवेति वक्तव्ये योगमायेत्युक्तम् ; स्यादेतत् । इवशब्देन वस्तुतो देवमायात्वाभावः जनकस्य कुले जातायां गृह्येत ; न तु मायाशब्दस्यासत्यार्थत्वम् । साक्षाल्लक्ष्म्या एवैवमाविर्भाव इति नेयं देवमाया विविधदेवजनशक्ति-भगवत्सङ्कल्प—दैवगुणमयप्रकृत्यादिरूपेति तु तावता सिद्ध्येत् । मायामात्रमिति सूत्रार्थस्त्वन्य इति प्रागेव प्रपञ्चितम् । स्वाप्निकस्य मायात्वेऽपि मायाशब्दस्य न स्वाप्निकत्वं प्रवृत्तिनिमित्तम् ; भवदज्ञानादावप्यव्याप्तेः । न मिथ्यात्वम्, शुक्तिरजतादावतिव्याप्तेः । "मायावादिन इत्यद्वैतिषु अस्माभिः प्रयोगात् मायाशब्दो मिथ्यावचन' इत्यभ्युपगन्तव्यमित्यपि न ; न हि लोके योयोऽनृतवादी स सर्वोऽपि मायावादीत्यस्माभिरुच्यते । किंतु विचित्रार्थसर्गकरं किञ्चिद्वदन्तीत्येव ते मायावादिन इत्युच्यन्ते । लोकेऽनृतवादिनामनृतं नैवं विचित्रं कार्यं करोति, यथा जगन्मिथ्यात्ववादिनामनृतवचनम् । ब्रह्म निर्गुणम्, जगदसत्यम्, कर्म त्याज्यम् इत्येवं महानृतं जगति विचित्रं व्याप्य सर्वमपि लोकं भ्रामयतीति अनृतस्यास्यैव मायात्वमिति अनृतग्रहणेनैवास्मदाशयः सूपपादः । यद्वा मूलप्रकृतेर्मायात्वमद्वैतिभिः स्वीकृतमद्भुतम्, यत् सर्वविद्वदुपास्यं मोक्षप्रदं मुक्तभोग्यं ब्रह्मैव मायया बम्भ्रमीतीति मायायाः अनुपपन्नतैकवेषायाः ब्रह्मपर्यन्तक्षोभकत्वरूपां विचित्रां शक्तिमिमे उपन्यस्यन्ति—तदिमे मायावादिन इति । एवमन्यदपि भाव्यम् ।

भावान्तरमभाव इति खलु सिद्धान्तः । तस्माद् भावरूपमज्ञानं सर्वस्वीकार्यमिति विचार्य वक्तव्यं व्युत्पादितं शतदूषण्यां । इदमप्यत्रावधेयम्—ज्ञानाभाववत् घटपटाद्यभावानामपि भावान्तरत्वाय अघटापटादिरूपा अनेके भावा स्वीकार्याः स्युः । अतिरिक्ताभावपदार्थं विना निर्वाहश्चाविशिष्टः । अत्र शतभूषणी भावरूपमेवाज्ञानमूरिकर्तव्यमित्युक्त्वा, समनन्तरमेव ब्रह्मसिद्धिविरोधभिया, 'भावविलक्षणत्वमपि स्वीक्रियते' इति लिखति ।

भावरूपाज्ञानभङ्गमसोढ्वा प्रत्यवस्थितः ।
स्वयं भनक्ति तत् पश्यन् भावाभावविलक्षणम् ॥
अज्ञानं मोह इत्येवं भावरूपेण वेद्यताम् ।
अभावरूपं ज्ञेयं स्यात् न जानामीति वाक्यतः ॥
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।
इत्यत्र मोहाज्ञाने द्वे भिन्ने गीते हि तत् कथम् ॥
प्रमादो मोह इत्युक्तः ज्ञानाभावः स तद् भवेत् ।
प्रमादोऽनवधानं हि क्वचिन्मोहोऽन्यथामतिः ॥
भाभावस्तम इत्येवं तार्किकोक्तेस्तु खण्डनम् ।
न तमश्शब्दताहेतोः किंतु रूपक्रियादितः ॥
क्लृप्तैरेव त्वभावाद्यैर्मोहशब्दोक्तिसंभवे ।
अन्यादृशस्याज्ञानस्य तदर्थत्वं न साम्प्रतम् ॥

साक्षिभास्येदृशाज्ञानं निःसाक्षिकमेव संवृत्तम् । अस्तीति प्रतीतिविषयत्वे भावत्वम्, नास्तीतिप्रतीतिविषयत्वे चाभावत्वम् । उभयविलक्षणा तु प्रतीतिरसिद्धा । अत उभयविलक्षणमज्ञानमिति कथं साध्यते । अतो निरुपाख्यस्यालीकस्यैवाज्ञानमिति नामान्तरं स्यात् ।

तस्मादज्ञानं नाम ज्ञानाभावः प्रायो ज्ञानप्रागभावः । तद्विषयज्ञानप्रागभावो नाम प्राक्कालीनं तदविषयकं ज्ञानमेव । तज्ज्ञानव्यक्तिप्रागभावो नाम

तत्प्राक्कालीनतद्भिन्नज्ञानपरिणाम इत्येवमन्यत्र विस्तरः। अज्ञानशब्दः क्वचिद्-ज्ञानाभावे क्वचित् विपरीतज्ञाने क्वचित् कर्मणि क्वचित् ज्ञानस्वरूपात्मभिन्ने जडे च यथायथं स्यान्नाम। सर्वथा न जानामीत्यादौ जगदुपादानभाव-रूपाचेतनवस्तुभानं नास्तीति सिद्धम् ॥

अनुरुध्य विवरणादिकमस्मद्वाक्येऽत्र वाक्यजातस्य।
शतदूषण्याश्रिता व्याख्याभंग्यस्तु विद्वदवधेया ॥
मिथ्याज्ञानाज्जगदिति वचस्यस्तु नाज्ञानमुक्तं
मिथ्याभूतम्; न च जगदुपादानताद्युक्तमत्र।
अज्ञानेनावरणमुपयन् अप्रकाशं न नेच्छेत्
पर्याप्तेऽस्मिन् किमिति किमपि स्वीक्रियेतातिरिक्तम् ॥

शुभमस्तु

---

श्रीः

# जीवाज्ञानभङ्गप्रसाधनम्

अनिदम्प्रथमैरनेकरूपैरवशान् कर्मभिरावृताननादीन्।
अवति च्छलतो य एष जीवान् अनघोऽयं विदधात्वयं रमेशः ॥

विलक्षणाज्ञानासंभवोपपादिभिर्वादिभिः ब्रह्माज्ञानं जीवाज्ञानं वा न शक्यं वक्तुमिति तत्खण्डनं युक्तम्। 'अज्ञानमभ्युपगच्छद्भिस्तु अज्ञानं ब्रह्माश्रितमपि भवति, जीवाश्रितमपि' इत्युभयस्थापनमयुक्तम्; अन्यत-रस्यैव संमतेः। उभयमप्युपपन्नं वदंस्तु अनिर्धारिततत्त्व एव स्यात्। तत्त्वे विकल्पायोगात्। अथवा अद्वैतिनां सर्वत्रानिर्धारणमेव, सर्वस्य युक्ति-मात्रशरणत्वात्; तर्काप्रतिष्ठानात्। द्वैतिभिरुद्भावितान् आक्षेपांस्तदातदा स्वश्रुतान् परिहर्तुं प्रयस्यन्तः खल्वद्वैतिनः प्रस्थानान्तरं परिगृह्णन्ति। एवं प्रकारानन्त्याद्धि तत्सङ्कलनाय सिद्धान्तलेशसंग्रहग्रन्थस्यावतारः। इदमेवाभि-संधाय सूक्तमाचार्यैः, "कन्थाशतग्रन्थिलाः सिद्धान्ता न समिन्धते यति-

वरग्रन्थानुसंधायिनि " इति । तत्त्वनिर्णिनीषुणा पुनः ब्रह्माज्ञानं जीवाज्ञानं वा किञ्चिदेव स्वीकार्यम् । अन्यभङ्गे इष्टापत्तिरेवोद्घाटनीया । यथा चात्र प्रतिबिंबवादे अवच्छेदवादे च समकक्षं परिमलादावुपपादितेऽपि प्रतिबिंबपक्षमुपेक्ष्य शिष्टमेव शतभूषणी वादेऽस्मिन् आद्रियते, तथैवात्र विषयेऽप्येकतरस्मिन् विश्रमितुं युक्तम् । श्रीभाष्ये चारम्भणाधिकरणे ब्रह्माज्ञानवादं प्राक्तनं प्रस्तुत्य बद्धमुक्तादिव्यवस्थासिद्धये नानाजीववाद्यभिमतं जीवाज्ञानपक्षमुपक्षिप्य तत्खण्डनविस्तरेण ब्रह्माज्ञानपक्ष एवाद्वैतिनिकर्षणीय इत्याविरकारि । तच्चेत् रोचते, त्यज्यतां जीवाज्ञानभङ्गपरीक्षणम् । न चेत्, पूर्वं ब्रह्माज्ञानभङ्गः शतदूषण्यां कृतो न परीक्षणीयः । अन्यथा वृथा विस्तरः स्यात् । यथा ह्यत्र वादे शतभूषणी, अविद्या किमकल्पितजीवस्वरूपाश्रिता, उत कल्पिताकाराश्रिता, किं वा कल्पिताकारविशिष्टस्वरूपाश्रितेति विकल्पे प्रथमद्वितीयपक्षावनङ्गीकारपराहताविति तृतीये नैर्भर्यं ब्रूते, तथा खलु ब्रह्माज्ञानजीवाज्ञानान्यतरपक्षेऽपि स्थेयमिति ।

आस्तामेतत् । य इह ब्रह्मसिद्ध्यनुवादः, स सर्वोऽपि शतदूषण्यां प्रपञ्चनेनानूदित एव । केवलमाकरप्रदर्शनमेतावता कृतं भवति । तत्र बिंबप्रतिबिंबभावमाश्रित्यापादितानि दूषणानि अस्थाने इति कथनमयुक्तम् । भवता तदनङ्गीकारेऽपि ब्रह्मसिद्धौ बिंबप्रतिबिंबभावस्यैव कथितत्वात् तत एव जीवभेदव्यवस्थाया उपपादितत्वात्, मण्डनमिश्रानुसारिणा वाचस्पतिमिश्रेणापि आन्तराभिमत्या वा वासनावशाद्वा परोद्भावितदोषपरिहरणपथान्तरालाभेन वा तत्रतत्र बिंबप्रतिबिंबभावस्योपक्षेपात् तत्र दूषणापादनस्यावश्यकत्वात् । दूष्यार्थत्यागे तु दृढे दूषणत्यागोऽपि स्वत एव भवति । नैतत् प्रार्थनीयम् । एवमेव अविद्यया जीवभावः जीवभावे अविद्याश्रयणमित्यत्र बीजाङ्कुरन्यायासम्भवोपपादनं शतदूषणीकृतमपि नानवसरे ; ब्रह्मसिद्धावेव, " अविद्याजीवयोर्बीजाङ्कुरसन्तानयोरिव " इति तन्न्यायस्योपक्षिप्तत्वात् । तद् अन्यमतमिति चेत्—तर्हि ततः प्रागुक्तमविद्याया अनुपपन्नतैकवेषत्वं केषाञ्चिन्मतमिति स्वमतं किमपि न स्यात् । स्वमतस्या-

कथनान्न्यूनता च। पश्चादुक्तत्वादुपष्टम्भनाच्च बीजाङ्कुरन्याय इष्ट इत्येवावसीयत इति शतदूषण्यां तद्दूषणं नास्थाने वेदपाठः।

विस्तरो मा भूदिति, कल्पिताकारविशिष्टजीवस्वरूपाश्रिता अविद्येति भवदुक्तिः शतदूषण्युद्भावितदूषणपरिहाराय न प्रभवतीत्येतावदुपपाद्यते। प्रतिबिंबवादस्तावद् भवता सावष्टम्भं त्यक्तः। क्वचित् तदुपक्षेपेऽपि भाक्तोऽसौ प्रतिबिंबत्वव्यवहार इति उपाध्यवच्छिन्न एव जीव इत्यागृहीतम्। बन्धमोक्षादिव्यवस्थासिद्धये चाविद्यानानात्वम्, तासां प्रत्येकं विभिन्नजीवाश्रितत्वञ्च स्वीकृतम्। तत्र कल्पिताकारविशिष्टजीवस्वरूपाश्रितत्वमेव जीवाश्रितत्वमिति च निष्कृष्टम्। तत्र किं नाम जीवत्वम्? कल्पिताकारविशिष्टब्रह्मस्वरूपमेव जीव इति चेत्—तर्हि विशिष्टस्वरूपेत्येतावदुच्यताम्; किं तत्र पुनर्जीवपदघटनेन। अस्तु तावदेवेति चेत्—तत्र विशिष्टस्वरूपस्याविद्याश्रयत्वमित्यनेन विशेषणविशेष्योभयाश्रितत्वं विवक्षितम्, उत तदेकतराश्रितत्वम्। आद्ये प्रत्येकाश्रितत्वपक्षद्वयोक्तदोषद्वयसमावेशः; अन्त्ये अन्यतरदोषादनिर्मोक्षः। विशिष्टं शुद्धादतिरिक्तम् अत एव विभिन्नञ्चेति अविद्यानां पृथक्पृथगाश्रितत्वसिद्धिरिति चेत्—विशिष्टस्यातिरिक्तत्वे मिथ्यात्वं जडत्वं बाध्यत्वञ्च स्यादिति स्वरूपोच्छित्तिरेव मोक्षः स्यात्। तत्त्वमसीत्यत्र स्वरूपैक्यप्रतिपादकत्वमपि हीयेत। बाधार्थसामानाधिकरण्यस्यैव जडान्तर इव जीवेऽपि वक्तव्यत्वात्। जीवब्रह्मैक्ये तु संमन्यमाने ब्रह्मस्वरूपे अविद्यासंबन्धः आविद्यकसंबन्धश्च कथमनुपगतो भवति। भवतैव, 'यथा घटोपधानमात्रेण घटाकाशसिद्धिः, तथाऽविद्योपधानमात्रेणाविद्याश्रयसिद्धिः' इत्यपि दृष्टान्तो दर्शितः। तेन च घटसंबन्धो यथा आकाशस्वरूपे तथा ब्रह्मस्वरूप एवाविद्यासंबन्ध उपपादितो भवति। भवतैव पूर्वम्, "सा हि जीवमाश्रयन्ती स्वमहिम्ना चिन्मात्रस्य जीवत्वमिव स्वीयान् धर्मानप्युपदधाति" इति लिखितत्वात्, प्रकटार्थकार-विवरणकारादिमतस्य जीवब्रह्मजीवेश्वरबिंबप्रतिबिंबभावस्याभाववर्णनाच्चाविद्या स्वगतं कर्तृत्वभोक्तृत्वादिकं चिन्मात्रे उप-

द्घातीतीष्टमिति स्पष्टम्। एवं सति, ब्रह्म संसरति मुच्यते चेति नैतन्मतमिति कथमुच्यते। एकजीववादे संसारन्यूनता ब्रह्मणः, अत्र त्वनन्तजीववादे तदानन्त्यमिति प्रत्युतानर्थ एव। एवमनेकाविद्यास्वीकारादनेकप्रपञ्चापत्तिश्च। न च—अविद्या नास्मिन् मते उपादानम्, किंतु सहकारिमात्रम्; ब्रह्मैव तूपादानम्। अतोऽनेकाविद्यासहकृतेनैकेनोपादानेन ब्रह्मणा प्रपञ्च एक एवोत्पाद्यत इति वाच्यम्—सर्वाविद्याकल्पितस्य प्रपञ्चस्यैकत्वे एकजीवमुक्तौ तदविद्याया इव तत्कार्यप्रपञ्चस्यापि निवृत्तौ सर्वेषां प्रपञ्चानुभवाभावप्रसङ्गात्। पुनरवशिष्टविद्याभिः सम्भूय प्रपञ्चान्तरजननस्वीकारे च क्षणभेदेन प्रपञ्चभेदः प्रपञ्चानन्त्यञ्च स्यात्। एकमुक्तौ तदविद्यामात्रं निवृत्तम्; न तु प्रपञ्च इति चेत्—तर्हि तस्याविद्याननुभवेऽपि प्रपञ्चानुभवानुवृत्त्यापत्तिः। सर्वाविद्यानिवृत्त्यवसरेऽप्येवं प्रपञ्चाविलयापत्तिश्च। ब्रह्मातिरिक्तं सर्वं मिथ्येति ज्ञाने सति कथं तदनिवृत्तिरिति चेत्—तदिदं प्रथमजीवमुक्त्यवसरेऽपि समानम्। तस्मादव्यवस्थया प्रपञ्चमेकं प्रति अविद्यानां कारणत्वमपेक्ष्य जीवभेदेन प्रपञ्चभेद एव युक्तः। आस्तामेतत्। ब्रह्मणि बन्धमोक्षावस्मिन् पक्षेऽप्यविशिष्टाविति तु नः प्रकृतम्।

यत्तु कल्पिताकारविशिष्टस्वरूपाश्रिता अविद्येति स्वीकारे अविद्याश्रयणमन्तरा कल्पिताकारवैशिष्ट्यासिद्धिः, तद्विशिष्टजीवासिद्धौ अविद्याश्रयणासिद्धिरित्यन्योन्याश्रये आपाद्यमाने, नात्रोत्पत्तौ स्थितौ ज्ञप्तौ वाऽन्योन्याश्रय इति परिहरणम्—तदयुक्तम्—भावानवबोधात्। कल्पिताकारोऽयं जीवस्य किमविद्यैव, उत तदधीनः कश्चित्। अन्त्ये कल्पनाया अविद्याश्रयत्वसापेक्षत्वादसंभव एव। आद्ये अविद्याश्रयतावच्छेदकस्य कल्पिताकारस्य तदभेदात् स्वस्य स्वाश्रयतावच्छेदकत्वमुक्तं भवति। तत्रावच्छेद्यावच्छेदकयोरैक्यापत्त्या, अव्यावर्तकतया च स्वरूपेण ब्रह्मण आश्रयत्वमेवोक्तं स्यात्। यत्तु सिद्धावनूदितम्, "स्वेनैव कल्पिते देशे व्योम्नि यद्वत् घटादिकम्। तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः" इति—तदिह न समाधानम्। व्योमनिरवयवत्व-

पक्षे व्योम्नि घटसंबन्धः किं कार्त्स्न्येन, किं वैकदेशेन । नाद्यः, देशान्तरेऽपि घटसंबन्धानुभवप्रसङ्गात् । नान्त्यः, निरवयवे एकदेशस्य दुर्वचत्वादित्याशङ्कायाम्—घटः स्वकल्पितप्रदेश एवाकाशे संबध्नातीत्युक्तम् । तेनावच्छेदकान्तरान्वेषणं न कार्यम्; तथासति तस्यापि घटवत् व्योम्नि संबन्धितया तदवच्छेदकान्तरान्वेषणेऽनवस्थानादित्युक्तं भवति । अन्यथा घटेन तत्र संबध्यैव देशस्य कल्पनीयतया देशाभावात् स्वकल्पितदेशे संबध्नातीत्युक्तययोगात् । तत्रानवस्थापरिहारायावच्छेदकान्तरत्यागवत् आत्माश्रयपरिहाराय स्वावच्छिन्नप्रदेशे स्वयं संबध्नातीत्यपि त्याज्यमेव । अवच्छेद्याधिकरणत्वेन यदभिमतम्, तत्संबन्धिनो ह्यवच्छेदकत्वम् । संबन्ध एव कथमिति विचारे स्वसंबन्धिनि स्वसंबन्ध इति को नु ब्रूयात । तस्मादवच्छेदकान्तरानपेक्षामात्रमेव तत्र विवक्षितम् । तर्हि घटसंबन्धो व्योम्नि किं कार्त्स्न्येनेति चेत्—प्रश्नेऽस्मिन्, घटसंबन्धो हि संयोग एव; संयोगश्चाव्याप्यवृत्तिः स्वाभावसमानाधिकरण इत्येवोत्तरम् । निरवयवेषु कार्त्स्न्येन एकदेशेन वेति विकल्पोऽपि न शक्यः कर्तुमिति च ध्येयम् । एवञ्चावच्छेदकनिरपेक्षं घटः सम्बध्नाति । संयोगस्याव्याप्यवृत्तित्वानुभवात् संयोगमनुभूयमानमादाय घटावच्छिन्नव्योमतदनवच्छिन्नव्योमप्रदेशभेदग्रहः । प्रकृते च जीवस्याविद्याश्रयत्वं कल्पिताकारावच्छेदेनेत्युक्तेरपि ब्रह्मणि अविद्यावच्छिन्नतदनवच्छिन्नवास्तवप्रदेशद्वयजिज्ञासापरिहारार्थत्वञ्चेत् —काममस्तु—वस्तुतोऽविद्याया अपि विभुतया ब्रह्मणि तदनवच्छिन्नप्रदेशदुर्भिक्षमेव; एवञ्च सर्वासामविद्यानां सर्वतो ब्रह्मसम्बन्धे तत्तदविद्यावच्छिन्नस्तत्तज्जीव इति व्यवस्थाऽपि न स्थास्यतीत्यन्यदेतत् ।—घटाकाशदृष्टान्तोऽयं ब्रह्मण्यविद्यासम्बन्धो नास्ति, किं तु जीव इत्युपपादनोपयुक्तस्तु न भवति । घटस्याकाशसंयोगस्य सम्प्रतिपन्नत्वात् । अन्यथा श्रोत्रे शब्दस्तार्किकैर्न वक्तुं शक्येत । आकाशस्यैव शब्दसमवायित्वात् कथं कर्णे शब्द इत्यत्र कर्णशष्कुल्यवच्छिन्नाकाश एव शब्दोत्पत्त्या तावत एव कर्णश्रोत्रादिपदविवक्षितत्वान्न दोष इति ते ब्रुवते । श्रोत्रमन्यत्, श्रोत्रसमवेतत्वेऽपि शब्दस्य नाकाशसमवेतत्वमिति

तु न ब्रुवते। अतो जीवस्याविद्याश्रयत्वम्, न तु ब्रह्मण इति ब्रह्माज्ञान-दूषणमयुक्तम्। ब्रह्माज्ञानवादिनोऽपि किमविद्याकल्पितदेशभिन्नदेशावच्छेदेन ब्रह्मण्यविद्यासंबन्धमाहुः, येन ततो वैलक्षण्यं स्यात्। वस्तुतः किञ्चिद-वच्छिन्ने जीवाख्ये अविद्याश्रयत्वमित्युक्तावपि विशिष्टस्य शुद्धादनतिरिक्ततया ब्रह्मण्यविद्यासंबन्धो दुर्वार इति प्रागेवोक्तम्। तदधीनत्वादिति सूत्रे परि-मलेऽपि—'ब्रह्मण्यनतिप्रसङ्गार्थं जीवत्वोपधानमर्यादाभ्युपगमेऽप्यज्ञानस्य तदुप-हितस्वरूपाश्रितत्वानपायात्'—इत्याकाशदृष्टान्तनेनोक्तम्।

यच्चोक्तं सिद्धौ—अविद्याप्रतिबिम्बितचैतन्यं तदवच्छिन्नचैतन्यं तत्क-ल्पितभेदं वा जीव इति। तत्र प्रतिबिम्बपक्षो भामत्याद्यसम्मत इति भवतैव व्यलेखि। तत्कल्पितभेदमिति चायुक्तम्—किमविद्यया चैतन्ये स्वस्माद्भेदः कल्पितः, किं वा चैतन्यात्, यद्वा जीवात्, आहो ईशात्। नाद्यः, चिदचिद्भेदस्य सत्यमिथ्याभेदस्य च स्वतः सिद्धेः; अव्यावर्तकत्वाच्च। तस्मादेव तस्मिन् भेदकल्पनञ्चासंभवि। चैतन्ये जीवाद् भेदश्च न जीवस्वरूपव्युत्पादक-वाक्यार्थघटको भवितुमर्हति। असंभावितश्च शुद्धे विशिष्टाद्भेदः। अत-एवेशभेदोपि दुर्वचः। ईशभेदो जीवे विवक्षितः, न तु चैतन्य इति चेत्, को जीव इति प्रश्ने कथमिदमुत्तरम्। तत्कल्पितभेदमिति क्लीबनिर्देशश्च चैतन्यमेव विशेष्यं दर्शयति, न जीवम्। भेदस्य सादित्वे च जीवस्यापि सादित्वापत्तिः; अनादित्वे च नाविद्याकल्पितत्वम्। अकल्पितत्वे कथं मिथ्यात्वमिति चेत्—अविद्याया अविद्यान्तरेणाकल्पितायाः कथं मिथ्यात्वम्। अतो भेदस्यानादित्वेऽविद्याकल्पितत्वमनपेक्षितम्। ब्रह्मातिरिक्तमिथ्यात्व-प्रतिपादकादागमत एवाविद्यायामिवानादिमिथ्यात्वस्य सिद्धेः। भेदश्चानु-योगिप्रतियोगिनोर्भिन्नरूपेणोपादानेन ग्राह्य इति न भेदावच्छिन्ने अविद्याश्रय-त्वोपपादनसंभवः।

यदि नियामकं विना न युक्तमविद्याश्रयत्वमिति कृत्वा भेदस्य मिथ्या-भूतस्य नियामकत्वमिष्यते, तर्हि भेदस्याविद्यासंबन्धतदभावप्रयुक्तत्वात् भेद-

स्याविद्याश्रयतावच्छेदकत्वं न भवतीत्यपि मन्यताम्। प्रकारान्तरेण भेदोपपादने च तदेवाविद्याश्रयतावच्छेदकं विशिष्य निर्दिश्यताम्; किं भेदस्य सिद्धवत्कथनेन। व्योमादौ इह घटः, न तत्रेति प्रतीतिर्व्योम्नः सावयवत्वादेवोपपद्यते। एकाविद्या अविद्यान्तरावच्छिन्नचैतन्यात् स्वावच्छिन्नचैतन्यस्य भेदं कल्पयित्वा भेदावच्छिन्नचैतन्यमाश्रयतीति पूर्वगृहीतपरिमलघट्टोक्तमप्यत एवायुक्तम्। असंबध्य भेदकल्पनायोगात्। स्वरूपाश्रितत्वस्य तत्रैवेष्टत्वाच्च। जीवमिथोभेदस्योपाधिभेद एव पर्यवसानाच्च। अतः, लाघवाच्चाविद्यावच्छिन्नचैतन्यं जीव इत्येव वक्तव्यम्। तत्र चावच्छेद्यावच्छेदकयोरैक्यादनुपपत्तिरुक्तैव। सर्वथा ब्रह्मसंबन्धोऽविद्यायामनिषेध्यः।

अथान्योन्याश्रयत्वमुत्पत्तौ ज्ञप्तौ स्थितौ वेति विकल्प्य कृतं दूषणमपि विमृशामः। जीवस्याविद्यायाश्चानादित्वात् 'परस्परोत्पत्त्यधीनोत्पत्तिकत्वप्रसक्तिरेव नास्ती'त्युक्तमयुक्तम्। नित्ययोर्धर्मधर्मिणोरिव अनुत्पन्नयोः प्रयोज्यप्रयोजकभावेऽप्यन्योन्याश्रयोपपादनसंभवात्। घटाभावाश्रयताप्रयोजकं किमिति प्रश्ने घटाभावविशिष्टमेव तत्प्रयोजकमित्युक्तौ भवत्यन्योन्याश्रयः, घटाभावविशिष्टभूतले सिद्धे घटाभावसिद्धिः, तत्सिद्धौ विशिष्टसिद्धिरिति।

अनादित्वञ्च न; मिथ्याभूतस्यानादित्वायोगात्। कल्पनासमसामयिकत्वमेव खलु शुक्तिरजतादौ मिथ्याभूते दृष्टमिति अविद्यादीनामपि तथात्वाभावे मिथ्यात्वं दुर्भणम्। तथाच कल्पनातः प्रागस्थितस्य कथमनादिता। यथा च कश्चित् शुक्तिं रजतमध्यस्यन्, इदं पूर्वस्मिन् दिनेऽप्यासीदिति केनचिदिदमर्थत्वेन गृहीत्वोक्ते स्वयं मन्यते, रजतमिदं पूर्वदिनेऽप्यासीदिति—तत्र रजतस्य तेन परदिन एव कल्पितत्वात् पूर्वदिनवृत्तित्वप्रतिभासमात्रम्, बाध्यं तु तद् रजतं—तथा अविद्यादौ कल्पनोपजीविमिसादित्वे सत्यप्यनादित्वमारोपितमेवाभिमन्तव्यम्। सर्वदैवाविद्याभानसत्त्वादनादिः सेति चेत्—कस्य तत्सत्त्वम्? जीवस्येति चेत्—ननु जीवः कः। किमन्तःकरणावच्छिन्नचैतन्यम् अविद्यावच्छिन्नचैतन्यं वा। तत्र

अहं न जानामीत्यज्ञानभानमहमिति जीवग्रहणेनोपपाद्यम्। अहमिति च न शुद्धचैतन्यम्; शुद्धचैतन्यस्य सर्वदा भानेऽपि विशिष्टजीवस्वरूपभानं तावता नोक्तं भवतीति विशिष्टभानमावश्यकम्। विशेषणीभूतमन्तःकरणमविद्या वा मिथ्या कस्य भासते। साक्षिण इति चेत्—साक्षीति किं शुद्धं गृह्यते, उतोपहितम्। शुद्धग्रहणे ब्रह्मणः कल्पनाश्रयत्वमापतितम्। उपहितस्योपाध्यसिद्ध्या दुर्ग्रहम्। एवं विशिष्टस्याहमित्यगृहीतत्वे च तत्राविद्याश्रयत्वभानं कथम्।

अथोच्येत—ईश्वरेणाविद्याः कल्पिताः। तेनाविद्यावच्छिन्नचैतन्य-रूपजीवसिद्धौ तत्राज्ञानभानमिति। तत्र वक्तव्यम्—ईश्वरोऽविद्यां किमा-श्रितत्वेन कल्पयति। चैतन्याश्रितत्वेनेति चेत्—ब्रह्माज्ञानं प्राप्तम्। जीवाश्रितत्वेनेति चेत्—अविद्याकल्पनं विना जीवकल्पनं कथम्; तस्या-स्तद्घटकत्वात्। अविद्यावच्छिन्नचैतन्यमिदमिति विशिष्टरूपेणैव कल्पयतीति चेत्—तर्हि विशिष्टस्य जीवस्य मिथ्यात्वं ब्रह्मव्यतिरेकः स्यादिति तत्त्वमसी-त्यैक्यबोधासामञ्जस्यम्। अविद्याश्रयचैतन्यमिदमिति कल्पनयैवोपपत्तौ अविद्या-वच्छिन्नचैतन्यरूपजीवाश्रिता अविद्येति विशिष्टाश्रितत्वकल्पनं व्यर्थम्। कल्पिते च विशिष्टचैतन्ये विशेष्यस्यापि कल्पितत्वात् अकल्पितब्रह्मचैतन्यभिन्न-त्वात् तस्य स्वयम्प्रकाशत्वे मानाभावः। तत्स्वयम्प्रकाशत्वस्वीकारेण ब्रह्मणो वा स्वप्रकाशप्रत्यक्षसिद्धत्वसिद्धान्त उपेक्षणीयः स्यात्। एवमीशोऽपि यावदात्मानं न गृह्णाति तावदसिद्धः सन् न जीवादिकं कल्पयितुं प्रभवेदिति तेन स्वात्मकल्पनं सर्वदा क्रियत एवेति वक्तव्यम्। तत्र अहमिति स्वस्य तेन ग्रहणे सोऽहमर्थः क इति विचारे अविद्यावच्छिन्नचैतन्यं मायावच्छिन्न-चैतन्यं वा वाच्यमिति तद्घटकमायादेः कल्पनामन्तरेणासिद्धेः चैतन्यमात्रेण तत्कल्पने च ब्रह्मणो भ्रान्तत्वापातात्, तत्कल्पनात् पूर्वं विशिष्टस्यासिद्धत्या विशिष्टनिष्ठतायाः कल्पनायां दुर्वचत्वात् पूर्वपूर्वकल्पनासिद्धविशिष्टवस्तुगतेश्वर-निष्ठत्वः तरोत्तरकल्पनानामूरीकर्तव्यम्। तथा चैतदुक्तं भवति—मायावच्छिन्न-

चैतन्यात्मकमीश्वरतत्त्वं सर्वदा स्वकल्पकं सत् सिद्धमविद्यावच्छिन्नचैतन्यरूपान् जीवान् कल्पयति; तदधीनस्थितिकाः जीवाः स्वयमपि व्यवहारं निर्वर्तयन्तीति। एवञ्चेश्वरतत्त्वजीवतत्त्वानां कल्प्यमानानामधिष्ठानभूतं किं तत्। ब्रह्मैवेति चेत्—कथं तत्प्रकाशः। स्वप्रकाशे ब्रह्मणि जीवेश्वरकल्पना भवन्तीति चेत्—तर्हि तत्र मायावच्छिन्नकिञ्चिद्रूपेशतत्त्वकल्पना प्रतिक्षणमीश्वरस्य; तत्रैव तस्याविद्यावच्छिन्नकिञ्चिद्रूपजीवतत्त्वकल्पनाश्च। अविद्यावच्छिन्नचैतन्यरूपाश्च जीवाः स्वं स्वमहमिति अन्तःकरणावच्छिन्नतया जीवतया गृह्णन्तीति निष्कृष्टं भवति। एवमपि कल्पितं यत् विशिष्टमीश्वरतत्त्वम्, तत्रेश्वरतत्त्वप्रयोज्या कल्पना; कल्पनाधीनसिद्धि चेश्वरतत्त्वम्। तत्र द्वितीयेश्वरतत्त्वस्य प्रथमाभेदेऽन्योन्याश्रयदोषस्तदवस्थः। भेदे चानेकेश्वरतत्त्वापत्तिः। किञ्च ईश्वरः कल्पितः कश्चिदस्ति, तेन जीवा अपि कल्पिता इति ब्रह्मणि तत्तदुपाधितत्तदवच्छिन्नेश्वरजीवतत्त्वानि एवम्भूतानि जीवेनैव कल्पनीयानीति तत्कल्पनाः अविद्यावच्छिन्नचैतन्यरूपजीवासिद्धौ न भवितुमर्हन्ति। अविद्यावच्छिन्नचैतन्यत्वेन तज्ज्ञानाभावे च तादृशजीवासिद्धिरेव। तादृशज्ञानस्य चाद्वैतग्रन्थाद्यधीनत्वेनार्वाचीनतया तदधीनसिद्धेर्जीवस्य ततः प्राक् अभावे तदाश्रिताया अविद्याया अपि ततः प्रागसिद्ध्या तदनादित्वं कल्पनामात्रमिति। जीवकल्पितत्वमीश्वरस्येति पक्षश्च सिद्धान्तलेशसंग्रहे दर्शित एव। सिद्धावप्युक्तमिहैव जीवाश्रिताया अविद्याया एव जीवेशकल्पकत्वम्। इदञ्चाविद्यासिद्ध्यधीनम्। अविद्या च जीवाधीना। जीवस्वरूपञ्चाविद्याघटितमिति तदधीनमिति।

यदपि ज्ञप्तावन्योन्याश्रयवारणम्—"अज्ञानस्य चिद्भास्यत्वेऽपि चितेः स्वप्रकाशत्वेन तदभास्यत्वात्" इति—तदसंगतम्—एकतरज्ञप्तौ अन्यतरज्ञप्तिसापेक्षत्वं नास्तीति ह्युपपादनीयम्, अज्ञानस्य चिज्ज्ञानज्ञेयत्वं वा चितोऽज्ञानज्ञानानन्तरज्ञेयत्वं वा नास्तीत्येवंप्रकारेण। तदत्र न स्वरसप्रतीतम्। अविद्यावच्छिन्नचैतन्यरूपस्तु जीवः; न तु चिन्मात्रम्।

अतश्चितः स्वप्रकाशत्वेऽपि अविद्यावच्छिन्नचैतन्यत्वेन तज्ज्ञानमविद्यारूपविशेषणज्ञानमन्तरा न भवति। तथा अविद्याज्ञानस्य अहं न जानामीत्याकारकतया धर्मिज्ञानाभावे च तदुत्पत्त्ययोगात्। विशिष्टज्ञाने विशेषणज्ञानस्य, किञ्चिदवच्छिन्नविशेष्यककिञ्चित्प्रकारकज्ञाने धर्मितावच्छेदकप्रकारकधर्मिविशेष्यकज्ञानस्य च कारणत्वात् अविद्यावच्छिन्नचैतन्यरूपजीवज्ञानाभावे अविद्याप्रकारकस्य न जानामीति ज्ञानस्यासंभवात्। अथापि शुद्धाविद्यामात्रज्ञानमहमर्थाविषयकं तदभावेऽपि भवितुमर्हतीति चेत्—तादृशज्ञानमनुभवदूरम्।

स्थितावन्योन्याश्रयपरिहारोऽपि चिन्त्यः। अविद्यावच्छिन्नत्वांशत्यागे अविद्याया ब्रह्माश्रितत्वप्रसंगः। अत्यागे विशिष्टस्याविद्याश्रयत्वे विशेषणस्यापि तदापत्तिः। अविद्याया उपलक्षणत्वमिति चेत्—अथापि अविद्यायाः स्थितिः सत्ता आश्रयभूतोपहितचैतन्याधीना, अविद्यायाः असत्त्वे च शुद्धचैतन्यसत्त्वेऽपि अविद्यावच्छिन्नचैतन्यरूपजीवतत्त्वं न स्यादित्यस्त्येवान्योन्याश्रयः। अस्मन्मते च चिदचितोः शुद्धपरमात्माश्रितत्वात् चिदचिद्विशिष्टनिरूपिताधेयत्वाभावान्नापत्तिः।

किञ्चाविद्यानां विभुत्वेऽल्पपरिमाणत्वे वा एकावच्छिन्नप्रदेशस्यान्यावच्छिन्नत्वायोगात् अविद्याकार्यप्रपञ्चं व्याप्य स्थितया एकयाऽविद्ययाऽवच्छिन्नचैतन्यप्रदेशस्यान्याविद्यावच्छिन्नत्वायोगेन प्रपञ्चान्तर्गतनानाजीवासिद्धिरेव स्यात्। सर्वाविद्यावच्छिन्नत्वस्यैकप्रदेशे स्वीकारे सुखदुःखाद्यव्यवस्थापत्तिरूपदोषः स्फुटमेव जागर्ति। जीवानां सञ्चारितया एकाविद्यावच्छिन्नप्रदेशस्यैवान्यावच्छिन्नत्वमप्यापततीति सर्वसंकर एव स्यात्। न च चैतन्यं छिन्नं भिन्नं वा जीवो भवति। ततोऽनेकजीवासिद्धिरेव स्यादिति नानाजीवाश्रिताविद्याभेदो न सिद्ध्येत्।

यत् पुनराग्रहमुषितशेमुषीकस्यावहेलनम्—'अबद्धं वा सुबद्धं वा कुन्तीपुत्रो विनायक' इति न्यायेन दूषणान्युपन्यस्यन्ती शतदूषणी

'अविद्यायाः आश्रयः किं ब्रह्म किं वा जीव इति पुनःपुनः पृच्छन्ती शत-दूषणी शतवाररामायणप्रवचनानन्तरम्, सीता किं रामस्य पत्नी उत रावणस्येति प्रष्टार-मनुकरोति' इति। तत्रापि वक्तव्यमस्ति—भवदीयैः, विनायकं प्रकुर्वाणो रचयामास वानरम्' इति न्यायेन रचनायामादृतायाम् प्रश्न एवं भवत्येव। रामायणप्रवचनमयथावत् सहस्रवारं क्रियमाणमपि न यथावत् सीताराम-संबन्धं दर्शयिष्यति। तद् विपरीतप्रवचनपरः प्रष्टव्य एव भवति, 'सीता किं रामस्य पत्नी, उत रावणस्य? किमुपन्यस्यते महाप्राज्ञ' इति।

तदेवं शतभूषणीव्याजेनाद्वैतसिद्धिरपास्ता। कर्मरूपाविद्याश्रयत्वे जीवानां संमन्यमानेऽपि जीवत्वनिबन्धनं जीवत्वमित्यन्योन्याश्रयोऽस्त्येवेत्युक्त्वा "अन्धपरम्परैषाऽनादित्वकल्पना" इति समन्वयाधिकरणशाङ्करभाष्यं प्रमाणी-कृत्य जीवकर्मणोर्बीजाङ्कुरन्यायखण्डनमपि प्रागेव तद्भाष्यस्य परिशीलितत्वादु-पेक्ष्यम्। अपिच जीवत्वं कर्मनिबन्धनमिति न वयं ब्रूमः, बद्धमुक्तनित्य-भेदेन जीवानां त्रैविध्यात्। कर्मतत्फलभोगयोरेव बीजाङ्कुरन्यायः। स च सर्वसिद्धान्तसिद्धः, "न कर्माविभागादिति चेन्नानादित्वात्" इति सूत्र-कारेणापि स्वीकृतः कथं सूत्रभाष्ये निरस्येत। अन्यथा तद्भाष्यविरोधश्च। तत्र हि, "अनादौ च संसारे बीजाङ्कुरवत् हेतुहेतुमद्भावेन कर्मणः सर्ग-वैषम्यस्य च प्रवृत्तिर्न विरुध्यते" इति भाषितम्। भामती च, 'अनादितैवात्र भगवती चित्तमनाकुलयति' इति। जीवत्वं कर्मायत्तमिति कृत्वाप्यभाषि, "अनेन जीवेनात्मनेति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन् अनादिः संसार इति दर्शयति" इति। भविष्य-ज्जीवनमादाय, 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र तुषोपवापात् प्राक् पुरोडाशश्रपणाभावेऽपि भविष्यत् श्रपणमादाय पुरोडाशकपालेनेति निर्देशवत् जीवेनेति निर्देशोऽस्त्वित्याशंक्य च—'भविष्यद्ग्रहणमगतिकगतिः। अना-गतादतीतः संबन्धो बलवान्, अभिनिष्पन्नत्वात्। अत एव अग्निहोत्रहवण्या हवींषि निर्वपतीत्यत्र अग्निहोत्रं यया हुतम् तयेत्यर्थस्वीकारेण दर्शपूर्णमासयो-

रग्निहोत्रहवण्युपयोगः, न तु पवमानेष्टौ पूर्वभाविन्यामिति (१०-२-६३) दशमे स्थितमिति' समाहितम् । अत्राग्निहोत्रहवणीविषये खण्डदेवाशयोऽन्य इत्यन्यदेतत् । सर्वथा कर्मानादित्वं कर्मजीवत्वयोर्बीजाङ्कुरन्यायकलनञ्च सूत्रभाष्याद्याद्दतमेव । तर्हि समन्वयभाष्यस्य का गतिरिति चेत्—अस्त्वगतिरेव ; शरीरात्माभिमानित्वं सशरीरत्वमित्येतत्स्थापनसंरम्भोद्गलितत्वात् तस्य भाष्यस्य । तद् व्यक्तं भामत्यामेव । अथवा यो हि देहात्माभिमानं सर्वथैवोपेक्ष्य देहातिरिक्तात्मबुद्धिमात्रेण, 'लब्धदेहेन धर्माद्यनुष्ठायिनैव सता पुनः फलानुभवार्थशरीरपरिग्रहवतैव भाव्यं जीवेन। न मोक्षो नाम कश्चिदस्ति । अनादित्वात् कर्मणां कात्स्न्र्येन क्षयायोगात्' इति मन्यते, तादृशक्षुद्रफलतृप्तकतिपयमीमांसकनिरसनाभिप्रायं तद् भाष्यं भविष्यति । अतः सर्वसम्मतकर्मानादित्वदूषणसाहसमापातभाष्यदर्शनमूलमयुक्तम् ।

एकैकजीवकल्पिकाऽविद्या जीवान्तरदर्शने कारणं न वा । आद्ये अनन्तैरपि जीवैरनन्तजीवकल्पनापातात् जितमेकजीववादेन । अन्त्ये जीवानां परस्परवार्तानभिज्ञतया शिष्याचार्यादिव्यवस्थाभङ्ग इति शतदूषणीकृतमाक्षेपं परिहर्तुं प्रवृत्तेन यदलेखि — तत्तदविद्याकल्पिततत्तज्जीवतत्तद्दर्शनगोचराणां व्यावहारिकत्वात् नैकस्य जीवान्तरदर्शनं प्रातिभासिकमिति न व्यवहारदशायामनात्मवादः, नानन्तप्रातिभासिकजीवकल्पनेति—तेन परिहारयुक्तिर्न काचिदपि प्रादर्शि । एकजीवाविद्याकल्पितस्वात्मकजीवतदनुबन्धिनामिव तदविद्याकल्पितानामेव जीवान्तराणां तदनुबन्धिनाञ्च आब्रह्मज्ञानोदयादबाधे व्यावहारिकत्वमेव वाऽस्तु, शुक्तिरजतादिवत् स्वाप्निकजीवादिवच्च मध्ये बाधेन प्रातिभासिकत्वं वा । एकैकजीवेन तद्बुद्धिगोचराणां जीवान्तराणां तदविद्याकल्पितत्वं तावदावश्यकम् । अन्यथा तदनुभाव्यत्वाभावप्रसङ्गात् । अतः मत्कल्पिता इमे जीवा अहमिव जाग्रतः स्वपन्तः कुर्वन्तोऽकुर्वन्तश्च मे भासन्त इत्येवानेकजीववादिपक्षेऽप्येकैकजीवेनाङ्गीकर्तव्यमिति स्थिते—एवं मत्कल्पकाविद्याकल्पितानेव जीवान्

विभिन्नाविद्याकल्पितजीवतया भ्रान्त्या गृह्णामि ; लाघवात्तु अविद्या तावदेकैव । श्रुतौ, "मायां तु प्रकृतिम्', 'एको देव' इति जीवाविद्ययोरैक्यावगतिर्लाघवतर्कोपष्टब्धत्वात् साध्वी । 'इन्द्रो मायाभिः' इत्यादिबहुत्वग्रहणं व्यवहारकालिकाविवेचकभ्रमसिद्धानुवादमात्रमिति एकजीववादाश्रयणं श्रेय इति ।

अथ जीवकल्पनाश्रयः कः । शुक्तौ रजतकल्पनास्थले कल्पनायाः कल्प्यस्य रजतस्य च समानकालिकत्वं यद्यपि स्वीक्रियते—अथापि तत्र रजतोत्पत्तये शुक्तिरधिष्ठानमिव कल्पनाया आधारोऽपि जीवः प्राग् जागर्तीति सुवचम्—इह तु जीवकल्पनातः प्राक् जीवाभावात् कल्पनां प्रति आधारः कथं कारणं भवेत् । भासकं साक्षि अस्त्येवेति चेत्, तत् साक्षि किं जीवत्वोपहितरूपेण प्रागस्ति, उत स्वरूपेण । आद्ये कल्पनां विनाऽपि ततः प्रागेव जीवः सिद्धः स्यात् । अन्त्ये शुद्धब्रह्मनिष्ठत्वं कल्पनाया आयातम् । एवं विवेके स्थिते साक्षिशब्दप्रयोगमात्रेण शुद्धवैलक्षण्यं संपन्नमिति न संरब्धव्यम् । एवं यथा रजतकल्पनातः प्राक् अधिष्ठानज्ञान-चाकचक्यादिज्ञान-रजतविषयकोद्बुद्धसंस्काराद्याश्रयस्य कस्यचिदपेक्षा—तथा जीवकल्पनाहेतुविशिष्टस्यापि धर्मिणोऽस्त्येवापेक्षेति अविद्यावच्छिन्नजीवस्य प्रागेव सिद्धौ कथं तस्य कल्पनासिद्धत्वम् । एवं सृष्ट्यारम्भक्षणे जीवकल्पनातः प्रागपि तत्सिद्धिः कथमिति विचार्यम् । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति प्रलये एकमात्रसद्भाववचनमवश्याङ्गीकर्तव्यजीवतत्कर्मादिनिषेधकं न भवितुमर्हतीति प्रयोजनवत्त्वाधिकरणभामत्यामपि स्थितम् । एवञ्च तदातनानां कल्पनसमसामयिकत्वादि कथम् । अथेश्वरकल्पनासिद्धं सर्वमिति चेत्—तर्हि स ईश्वर एक एव चेतनः तदविद्याकल्पिता इमे जीवाः स्वाप्निकपुरुषतुल्याः । स एक एव जीव इति वा ईश इति वोच्यताम् । अन्यथा जीवानामनन्तानामविद्यानाञ्च तद्भेदिकानां स्वीकारे—ईश्वर एतत्कल्पित एव, न तु वस्तुतः पृथक्, तदीयाविद्यायाः कस्याश्चिदभावादिति निरीश्वरवाद एव स्यात् ।

मायाख्या महाविद्या तदर्थापि काचिदस्तु इति चेत्—एवं तेन जीवत्वेन चेतनत्वेन कल्पितानां वस्तुतो जीवत्वं तेनेशत्वेन कल्पितस्य च वस्तुत ईशत्वञ्च न भवतीति अचेतनत्वाविशेषात् इच्छाप्रयत्नव्यवहारादिमत्त्वं घटादेरिव न स्यात् ।

तथा जीवानामस्माकमस्मदीयाविद्यानाञ्च तत्कल्पनाविषयतया तदीयेनैव तत्त्वसाक्षात्कारेण निवर्त्यतया अस्माकं साक्षात्कारे जातेऽपि मोक्षो न स्यात् । स त्वीश्वरः परमानन्दतृप्तः पापक्लेशादिविदूरः स्वानन्दविघातरूपे मोक्षे न प्रवर्तिष्यत इति संसारित्वमेवास्माकं शाश्वतं भवेत् । अन्यदीयकल्पनाविषयस्याप्यन्यदीयतत्त्वज्ञाननिवर्त्यत्वमनानुभविकम् । तथासति गुरुगतं तत्त्वज्ञानमेव सर्वमोक्षायेति सर्वेषामसंसारित्वं प्रागेव प्राप्तं स्यात् । तदर्थं तत्तज्जीवस्वरूपस्य तत्तत्कल्पनासिद्धत्वस्वीकारे कल्पनाश्रयः कल्पनासामग्रीसम्पन्नश्च क इति प्राकृतः प्रश्नः परिहर्तुमशक्य एव स्थितः । एवं स्थिते, "भ्रमविषयतयैव जीवसिद्धौ भ्रमोदयात् प्राक् स्वरूपासंभवेन निराश्रयभ्रमानुदयप्रसङ्ग इष्टप्रसङ्ग एव, जीवस्य जीवविषयकभ्रमानङ्गीकारात्" इत्युक्तमपास्तम् । जीवविषयकभ्रमाश्रयत्वस्य जीव एव स्थूलोहं कर्ताऽहमित्याद्यनुभवानुसारेणोपपादनीयत्वात् । कथञ्चिद् जीवब्रह्मणोरभेदात् कुलालादिकर्तृकमपि घटादिकं ब्रह्मकर्तृकमेवेत्युक्तौ जीवभास्यमपि साक्षिभास्यमेव साक्षिभास्यमपि ब्रह्मभास्यमेवेत्याद्युक्तेरपि संभवात् संज्ञामूर्तिक्लृप्त्यधिकरणस्थोक्तिरिव न स्यात्, जीवाज्ञानवादस्य ब्रह्माज्ञानवादखण्डनपूर्वकं स्थापनञ्च व्यर्थं स्यादिति भाव्यम् ।

'नामरूपव्याकरणं न हिरण्यगर्भकर्तृकम्, किं तु ईश्वरकर्तृकमेवेति मतद्वये संप्रतिपन्नम्' इति पूर्वं विलिख्य पश्चात्, 'तथाच भगवत्पादीयं भाष्य'मित्यारभ्य वाक्यमुदाहृतं यत्, तत्र, "तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति" इत्यंशो न विवक्षितार्थानुकूलः । अत्र भामत्याम्, 'परमेश्वरस्य व्याकर्तृत्वे जीवस्य प्रवेष्टृत्वे क्त्वाप्रत्ययोक्तसमानकर्तृकत्वभङ्ग' इत्याशङ्कापरिहारार्थमिदं वाक्यमित्युक्तम् । एतत्समाधानार्थेन

चानेन भाष्येण, 'तेन तत्कृतोऽपि प्रवेशः परमेश्वरकृत एव भवति' इत्याकारेण भाव्यम् । 'जीवस्य परमेश्वरस्य चानतिभेदात् परमेश्वरकर्तृकव्याकरणे जीवकर्तृकानुप्रवेशसमानकर्तृकत्वं न व्याहन्यते ; प्रवेशकर्तृत्वस्य अनतिभेदात् परमेश्वरेऽप्यानेयत्वादिति खलु विवक्षितोऽर्थः । तथाऽनुक्त्वा नामरूपव्याकरणस्य जीवकर्तृकत्वेऽपि न परमेश्वरकर्तृकत्वभङ्गः अनतिभेदादिति भाष्ये वर्णनमर्थान्तराभिप्रायकमेवावसीयते । तदयमर्थः—" नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ". इति हिरण्यगर्भरूपजीवकर्तृकतया प्रसिद्धे नामरूपव्याकरणे कथमयं कर्ता स्यादित्याह 'न च जीवो नाम' इति । हिरण्यगर्भस्य परमेश्वरानतिभेदात् तत्कृततया स्मृत्युक्तमेतत्कृततया श्रुतिर्दर्शयतीति । एवञ्च हिरण्यगर्भकर्तृकत्वे सम्मन्तव्ये सति, " न हिरण्यगर्भकर्तृकम् " इति प्रथमं भवदुक्तमनन्वितं भवतीति विभाव्यम् । वयं पुनर्हिरण्यगर्भकर्तृकं नामरूपव्याकरणं सर्वात्मना नेति न ब्रूमः । क्षुद्राणामस्माकमपि कतिपयनामरूपव्याकर्तृत्वे सति किमुत सर्वसंपन्नस्य तस्य । परं तु हिरण्यगर्भादिकर्तृकेऽपि नामरूपव्याकरणे परस्य प्रेरकस्य कर्तृत्वमस्त्येव । हिरण्यगर्भाकर्तृकमपि हिरण्यगर्भादिविषयकं नामरूपव्याकरणमस्ति । तत्र स केवलो व्याकर्ता । अतः कार्त्स्न्येन सर्वजीवानुप्रवेशनपूर्वकव्याकर्तृत्वं तस्यैव । न च बहु स्यामिति प्रकृतं नामरूपव्याकरणं हिरण्यगर्भादेः संभवति । अलमधिकरणवास्तवार्थविचारेण प्रासङ्गिकेन ।

तस्मात् ब्रह्मज्ञानबाधाशयाज्ञानमूल एवायं जीवाज्ञानवादोऽर्वाचीनः । मण्डनस्य तत्र रुचिमाकलय्य तद्वत् मीमांसकतया ख्यातेन वाचस्पतिमिश्रेण तत्रादरं बिभ्रता तदुक्तबिम्बप्रतिबिम्बवादादौ अनाश्वासिनाऽपि अनेकजीवाश्रितानेकाविद्यावादो बद्धमुक्तादिव्यवस्थासुकरत्वधिया समन्ववर्तीति नायं प्राचीनाद्वैतिपरिक्षुण्णः पन्था इति ॥

जीवस्यैक्ये भोगसंकीर्णतादिः जीवानैक्ये स्यात् प्रपञ्चोऽप्यनेकः ।
ईशस्यान्यः स्यात् स जीवप्रक्लृप्तात् नानेशाः स्युर्जीवक्लृप्ता यदीशः ॥

शुभमस्तु

श्रीः

# अविद्यास्वरूपभङ्गप्रसाधनम्

विश्वोपादानकोटिस्थितिमपि सहकारित्वमेवं प्रमादे-
र्हेतुत्वं प्राप्तवत्यः प्रकृतिरिति च कर्मेति चाथाज्ञतेति।
प्रख्याता या अविद्याः, स्ववशविनिहिताः येन ताः सत्यरूपाः,
श्रीमान् स ज्ञानभूमा श्रितजनसुलभः स्यादविद्याविधूत्यै ॥

अद्वैतिसंमताविद्यास्वरूपानुपपत्तिप्रपञ्चनमेतद्वादार्थः। अविद्यायाः भावरूपत्व—ब्रह्म.वारकत्व—ब्रह्माश्रितत्व—जीवाश्रितत्वानामसंभवः प्रत्यपादि। अत्रापारमार्थिकत्वादिकं तत्स्वरूपं विशोध्यते। तस्याः पारमार्थिकत्वे द्वैतापत्तिः। न च तस्याः तत्त्वज्ञाननिवर्त्यत्वात् तदनन्तरं ब्रह्ममात्रपरिशेषादद्वैतमेवेति वाच्यम्—तर्हि ब्रह्मणि व्यावृत्तिरूपाभावपदार्थस्वीकारिभिर्भावाद्वैतकल्पनवत् नित्यवस्त्वद्वैतकल्पनं कृतं स्यादिति। वस्तुतः पारमार्थिकत्वे तत्त्वज्ञाननिवर्त्यत्वमपि न भविष्यति। कामं कर्माभावात् कार्याणामनुत्पत्तिः स्यात्। अतो द्रष्टृदृश्यादिविभागविरहेऽप्यनाद्यविद्यानाशे मानाभावादद्वैतहानिरेव। अतः, सिद्धान्ताच्चापारमार्थिकत्वमेवाविद्यायाः। एवञ्च कल्पकसापेक्षत्वात् कल्पनात्तः प्रागविद्या न स्थिता स्यात्। अनादित्वादुत्पादकमनपेक्षितमित्युक्तावपि प्रतीयमानत्वस्य मिथ्यात्वोपपत्तये अङ्गीकार्यतया प्रतीतेश्च मिथ्याविषयिण्या दोषमन्तरेणायोगात् कल्पकदोषकल्पनमवर्जनीयम्। दोषान्तरनिरपेक्षत्वे तत्रेष्यमाणे प्रपञ्चभ्रमोऽपि दोषनिरपेक्ष एव स्यादित्यविद्यैव न सिद्ध्येदित्यादि प्रपञ्चितं शतदूषण्यामेव।

तत्र ब्रह्मसिद्धीष्टसिद्धितत्त्वप्रदीपिकादिग्रन्थानुवादाः अविद्याया अनिर्वचनीयत्वमद्वैतिसम्मतमित्येतावत एवोपयुज्यन्ते; न पुनः शतदूषण्युद्भावितानां दोषाणां तत्र मात्रयापि परिहारोऽस्ति। अनिर्वचनीयत्वञ्चेदमत्रैवान्ते विवेचयिष्यामः। श्रीभाष्यमतेऽपि प्रकृतिर्ब्रह्मणो भिन्ना न वेत्यादिप्रतिबन्ध-

द्धाटनं न स्वपक्षदोषपरिहारकम्, श्रीभाष्यमतानभिज्ञमात्रवञ्चनञ्चेति न तत्र किञ्चिद्वक्तव्यमस्ति। 'वस्तुतस्तु ब्रह्मैवोपादानम्, अविद्या तु दोषविधया निमित्तकारणमात्रम्; न तु श्रीभाष्यमत इव प्रकृतेः परिणाम्युपादानते'ति स्वमतोपन्यासः, "अविद्यायाः पारमार्थ्यस्य ब्रह्माभिन्नत्वस्य भास्करमते संभवेऽपि भवन्मते तदभाव एव। अन्यथा ब्रह्मण एव विश्वभ्रमहेतुदोषत्वमुक्तं स्यात्" इति शतदूषण्युक्तार्थदूषको न भवतीति व्यर्थः। न चानुपादानत्वमविद्याया भवन्मते सर्वसंमतम्। भामतीपक्षत्वात् तस्य। परिणाम्युपादानत्वस्य प्राचीनसंमतस्य परिभाषादिष्वप्यङ्गीकाराच्च। अपारमार्थिकत्वं जगतो यदि अन्यथाख्यातिवादितार्किकसरण्योपपाद्येत, तदा विप्रकृष्टवस्तुभानमात्रसत्त्वात् पदार्थसत्त्वाभावात् परिणाम्युपादानमनपेक्षितं स्यात्। अनिर्वचनीयोत्पत्त्यादिस्वीकारात्तु तेनावश्यं भाव्यम्। अन्यथा सत्कार्यवादस्त्यक्त एव स्यात्। सत्कार्यवादो हि कार्यस्य कारणस्य च द्रव्यस्यैक्यमादृत्य वादः, यथा पिण्डत्वघटत्वादिरूपपूर्वोत्तरावस्थाभाक् मृद्द्रव्यमेकमिति। तथा ब्रह्मणि प्रपञ्चकल्पनायां प्रपञ्चरूपानिर्वचनीयमुत्पद्यमानं प्रपञ्चावस्थाविलक्षणकीदृशावस्थापन्नकिंद्रव्यात्मकं प्रागासीदिति प्रश्ने अव्यक्तप्रकृतिरूपेणेत्येव हि वक्तव्यम्। ततः कथं न तदुपादानम्। न च ब्रह्मणो जडप्रपञ्चस्य चैक्यमस्ति, येन तत्र सत्कार्यवादोपपादनमुत्प्रेक्ष्येत। सति त्वैक्ये सर्वं खल्विदं ब्रह्मेत्यत्र बाधार्थसामानाधिकरण्यवर्णनक्लेशो नादर्तव्यः स्यात्। सत्यमिथ्यावस्तुनोरैक्यं हि नैव भवितुमर्हति। तत्रापि चोरः स्थाणुरितिवत् समानाधिकरणनिर्देशमात्रेण तादात्म्यमपि किमपि कल्पयतस्तु अग्निरनुष्ण इत्यादिकं सर्वं वाक्यं साधु स्यात्। सर्वं ब्रह्मेत्यत्र सर्वपदस्य सर्वावच्छिन्नचैतन्यमित्यर्थं कृत्वा ऐक्यवर्णने तु शरीरात्मभावनिबन्धनसामानाधिकरण्यपथः प्रविष्टप्रायः। न चैतावताऽप्यनिर्वचयीयस्य तदभिन्नमुपादानं किञ्चिदुक्तं भवति। अतः परिणाम्युपादानापलापः अनिर्वचनीयवस्तूत्पत्तिप्रतिषेधायैव स्यादित्यपसिद्धान्तापादक एव। तर्हि कार्ये एकत्र परिणाम्युपादानविवर्तोपादानोभयापेक्षणादर्शनात् ब्रह्मण उपादानत्वं भज्येतेति चेत्—भ्रममेतद् भवदीयैरित्यत्र सिद्धान्तलेशसंग्रहोऽपि साक्षी।

एवमुत्पद्यमानानिर्वचनीयविषय इवानाद्यविद्यारूपानिर्वचनीये परिणाम्युपादानापेक्षाविरहेपि अनिर्वचनीयभानप्रयोजकदोषापेक्षा ध्रुवा। भ्रमसामान्यस्य दोषजन्यत्वात्। तदभावादविद्याज्ञानं न भ्रम इति न तस्या अपारमार्थिकत्वमिति तज्जन्यस्य प्रपञ्चस्यापि पारमार्थिकत्वमेव। अस्तु लौकिकं पारमार्थिकत्वमिति चेत्—अलौकिकं पारमार्थिकत्वं किमन्यदस्ति। ब्रह्मगतं पारमार्थिकत्वमस्य नास्तीति चेत्—तत्तद्गतं पारमार्थिकत्वं ततोऽन्यत्र न भवतीति सिद्धमेवेति को विशेषः। ब्रह्मातिरिक्तस्य बाध्यमानत्वादुभयं नैकरूपमिति चेत्—बाध्यमानत्वं यदि निवर्तमानत्वम्, तद् घटादीनां मुद्गरादित इव भवत् न पारमार्थिकत्वविरोधि। यदि स्वकालेऽप्यभावो बाध्यमानत्वम्, तर्हि लौकिकं पारमार्थिकत्वमिति वाङ्मात्रम्; पारमार्थिकत्वभ्रम एव, न तु पारमार्थिकत्वमित्येव तदर्थात्। दोषं विनापि भ्रमस्वीकारे तु दोषविधयैव कारणत्वेन स्वीकृतमज्ञानमपि मास्तु। न च तदभावे प्रपञ्चविभ्रमानुपपत्तिः; पूर्वपूर्वविभ्रमवशादुत्तरोत्तरसंभवात्। न च संसारानुच्छेदप्रसंगः, तत्त्वज्ञानेनाज्ञानस्येव साक्षात् प्रपञ्चस्यैव निवृत्तिसंभवात्। 'तत्त्वज्ञानप्रागभाव एव प्रपञ्चभ्रमकारणमस्तु; कृतं दोषविधयैव कारणत्वेन स्वीकृतेनाज्ञानेने'ति शतदूषणी। एवं सति प्रागभावस्य स्वप्रतियोगिनं प्रति दोषत्वेन रूपेण कारणत्वमुक्तमिति कृत्वा दूषणमनुक्तोपालम्भः। न चाभावस्यादोषत्वम्; विशेषादर्शनादेर्दोषत्वस्य प्रसिद्धत्वात्। प्रागभावस्य दोषविधयैव कारणत्वमित्यपि न शतदूषण्यां कण्ठोक्तम्। तर्हि काचकामलादिकं विनाऽपि ज्ञानप्रागभावमात्रात् कार्योत्पत्त्यापत्तिस्तु अन्वयव्यतिरेकविरोधादयुक्ता। तर्हि प्रपञ्चभ्रमेऽपि तत्त्वज्ञानप्रागभावातिरिक्तमपेक्षितुं युक्तमिति चेत्—तत्र भावदिष्टमज्ञानम्। तस्यानादेरेकरूपस्य विचित्रक्रमिककार्यहेतुत्वायोगात्—तदर्थमन्यापेक्षायां व्यर्थैवेयमविद्येति च तत्र दर्शितमेव। प्रागभावस्त्वनागलस्तन इत्ययुक्तम्। तस्य सर्वसंमतत्वात्। तदनङ्गीकारे तदा कार्यसत्त्वापातात्। यदि कार्यप्रागभावो नाम द्रव्यगता कारणावस्थैवेति विवक्ष्यते,

तर्हि युक्तम् । तदा च तस्य निमित्तकारणत्वमात्रम्, नोपादानत्वमिति भवदभिमतं भज्येत । प्रकृतेरुपादानभूतायाः श्रीभाष्याभिमतत्वे स्थिते कथमज्ञानदूषणमिति च न शङ्क्यम्—अपारमार्थिकाज्ञानस्वीकारे तद्भानार्थं दोषान्तरकल्पना स्यात्, दोषं विनैव तद्भाने प्रपञ्चभानमपि दोषरूपतयैव कारणत्वाभिमतमज्ञानं विनैव स्यादिति निमित्तकारणमात्रभूतापारमर्थिकाज्ञानदूषणं ह्यत्र क्रियते ; न च प्रकृतिस्तथात्वेनास्मदिष्टेति । अतः प्रकृतिमहदहङ्कारादेर्भगवति तदन्तर्यामिकत्वस्य चास्मदभिमतत्वं नास्मदाशङ्काविरोधि ।

नन्वविद्याया मिथ्यात्वं नाविद्याकार्यत्वप्रयुक्तम्, किं तु ज्ञाननिवर्त्यत्वप्रयुक्तमिति चेत्—एवमप्यविद्यायाः अकार्यभूताया एव प्रतिभासार्थदोषापेक्षाऽस्त्येवेत्यनवस्थेत्युक्तम् ।

अथाविद्याविरहे कथं ब्रह्मणः प्रपञ्चोपादानत्वमिति चेत्—यथैवाविद्यान्तराभावेऽप्यविद्याध्यासाधिष्ठानत्वं ब्रह्मणः तथैव प्रपञ्चाध्यासाधिष्ठानत्वं सुवचम् । एवं निर्वाहे किमन्यत् तस्योपादानत्वं नामेति । आवरणं विना कथमध्यास इति चेत्—निर्विशेषस्वप्रकाशस्यावरणं न भवतीति प्रागेवोक्तम् । शुक्तिरूप्यादौ दोषापेक्षा दृष्टेति चेत्—सत्यं दृष्टा, न त्वपारमार्थिकदोषापेक्षा । ज्ञाननिवर्त्यं पल्लवाज्ञानमेव शुक्तिरजतादिकारणं क्लृप्तमित्यपि न ; मूलाज्ञानस्यैवालीकत्वे पल्लवप्रादुर्भावस्यानवकाशात् । मीमांसकाभिमतं तत्तत्कर्मापूर्वमेव प्रपञ्चपरिणामिकारणमस्तु किं प्रकृत्येति प्रश्नः किं प्रति तस्य परिणामिकारणत्वाशयेन । किं पृथिव्यादिभूतानि प्रति, उत तत्तज्जीवभोग्यभोगोपकरणादि प्रति । नाद्यः, 'न कदाचिदनीदृशं जगत्' इति तन्मतस्थितेर्भवतैवोक्तत्वेन अनादेः पृथिव्यादेः कारणापेक्षाभावात् । नान्त्यः, पृथिव्यादेरेव भोग्याद्युपादानस्य सत्त्वेनोपादानान्तरापेक्षाविरहात् । अपूर्वस्यात्मनिष्ठगुणस्य बाह्यद्रव्योपादनत्वायोगाच्च । अतो निमित्तकारणमेवापूर्वम् । वस्तुतोऽपूर्वमेवातिरिक्तं नास्तीति देवताधिकरणनिष्कर्ष इत्यन्यत्र विस्तरः ।

विवर्तपरम्परा नाम कार्यान्तरकारणानुगतद्रव्यस्वरूपमिति भवदुक्तिः विवर्तपरम्परा नाम किमविद्याकार्याण्येवेति द्वितीयकल्पोद्भावितो यो दोषः, निर्वाह्यस्यैव निर्वाहकत्वादिति, तत्परिहरणक्षमा न भवतीति ध्येयम्। आवृतस्यैव ब्रह्मणः सर्वाध्यासहेतुत्वादावरणार्थमविद्यापेक्षेत्यपि आवरणानुपपत्तिप्रसाधनेन प्रशमितम्। "ब्रह्मोपादानत्वस्यौपचारिकस्यैव स्वीकारात्" इत्येतत्तु भवन्मत एव, नास्मन्मत इत्युक्तमेव; वक्ष्यते च तदर्थे वादे।

यत्तु—अविद्याविषयकः प्रकाशो ब्रह्मणो नातिरिक्तः। अथापि न सार्वदिकः, तत्त्वज्ञानोदयादविद्यानिवृत्तौ तदभावादेव तदप्रकाशात्। तिरोधानस्य निवृत्तत्वाच्च नानिर्मोक्षदोषोऽपीति—तत्रोच्यते—यदि ब्रह्मैवाविद्याप्रकाशः तर्हि यावद्ब्रह्मसत्तमविद्याप्रकाशेन सता भाव्यम्। तथा च कथं निर्मोक्षः। अविद्यायां निवृत्तायां कथं तत्प्रकाश इति चेत्—एवं भङ्गुरस्य प्रकाशस्य कथमभङ्गुरब्रह्मैक्यम्। यथा च सर्वज्ञस्य वस्त्वभावेऽपि सार्वकालिकं सार्वज्ञ्यम्—तथैवाविद्याऽपि प्रकाशमानाऽस्तु। तथाच तदभावेऽपि तत्प्रकाशसद्भावात् संसार एव। द्वैतप्रकाशात्। एवं प्रकाशब्रह्मणोरैक्ये साक्षिभास्यानां सर्वेषां सुखादीनां प्रकाशश्चिद्रूप एवेति सर्वदा सुखादिभानापत्तिः। किञ्च यथा सुखादिकं स्थिरमननुभूतं भवतीति न दृष्टम्, तद्वत् साक्षिभास्यत्वे अविद्या सदैव प्रकाशेत। न ह्यहमज्ञ इत्यज्ञानभानं सार्वकालिकं कस्यापि दृष्टम्। एवं शुक्तिरूप्यादेरपि साक्षिभास्यस्य प्रकाशो यदि ब्रह्मैव, तर्हि ब्रह्मवत् तत्प्रकाशस्यापि नित्यत्वापत्तिः। रूप्यमहमित्यपि स्यात्; शुक्त्यवच्छिन्नचैतन्ये रजतस्याध्यस्तत्वात् तस्य च प्रमातृचैतन्याभिन्नत्वात्। परिभाषायाम्, सत्यरजतस्थलीयेदमाकारानुभवो यः इदंरजतमित्याकारकः तदाहितसंस्कारसहकृताविद्याकार्यत्वाद्रजतस्य इदंरजतमित्येव प्रत्ययः, न त्वहंरजतमितीत्युक्तं न युक्तम्; सत्यरजतस्यापि चैतन्य एवाध्यस्ततया तस्य प्रमातृचैतन्याभेदस्याक्षततया तत्राप्यहं रजतमिति प्रतीतेरापादनीयत्वादिहापि तदापत्तेरपरिहारात्। सर्वत्र विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्यस्य चाभेदात् अहं घटः, अहं पट

इत्येवं प्रत्यक्षस्य दुर्वारत्वात्। घटोऽस्तीति अस्तित्वेनेव घटमहं जानामीति चैतन्यत्वेनापि भानसत्त्वात् अभेदस्य तत्तदवच्छिन्नचैतन्ययोः सत्त्वे कारणान्तरनिरपेक्षं तद्भानस्यावश्यकत्वात्। एवमभेदस्य ग्राह्यत्वादेवाहमर्थस्य वृत्तेर्विषयस्य च भेदेन भानमयुक्तम्, किंतु घटोहं ज्ञानमित्येव। चैतन्यभानत्यागे तु चैतन्याभेदोऽप्यप्रामाणिकस्त्यज्यताम्।

अविद्यायाः साश्रयत्व निराश्रयत्वविकल्पे साश्रयत्वं भवदिष्टम्। नित्यशुद्धब्रह्मणोऽविद्याश्रयत्वमसंभवीत्याशङ्कायां मिथ्याभूताशुद्धिमत्त्वमस्तु, तावता न वस्तुतो दोष इति पक्षश्च स्वीकृतः। एवञ्च तन्निवृत्तिनैरपेक्ष्यात् व्यर्थमुपदेशप्रबन्धनानुष्ठानादिकमित्यत्र तु न कश्चित् समाधिरुच्यते। 'न हि ब्रह्मापि स्वाश्रयम्''इत्यादिस्तु, "ब्रह्मणस्तु स्वाश्रयत्वं नास्त्येव" इति शतदूषण्यनुवादविस्तर एव। स्वप्रकाशब्रह्मणोऽप्यावरणमविद्यया विचित्रशक्तिवशात् यदि क्रियेत, सा शक्तिरप्रकाशरूपया वृत्त्यापि न निवर्तयितुं शक्यत इत्यनिर्मोक्ष एव। मिथ्यैवावरणमिति चेत्—तर्हि वृत्तये प्रयासोऽपि विफलः। यत्तु-ब्रह्मणोऽविद्याश्रयत्वं नामाविद्याध्यासाधिष्ठानत्वमेव। भूतलस्य घटाश्रयत्वं तु न तथा; उभयोः समसत्ताकत्वादिति—तत्र भवदीयग्रन्थगमनिकाविरोधः शतदूषण्या स्मारितः स्मर्तुमर्हः। "अन्यथा तत्रैव तत्सत्यत्वप्रसंगात्" इति ह्युक्तम्। भूतले कदाचिद् घटसत्त्वस्वीकारे च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं घटादेः कथम्। अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगीति चित्सुखाचार्योक्तानुमानादीनां तर्हि धिक्कार एव।

'अपरमार्थभूतेयमविद्याप्रतीतिर्नाहङ्कारतद्वृत्तितदवच्छिन्नदशिष्वन्यतमा' इति शतदूषण्युक्तदूषणादात्मानं मोचयितुं तस्याः ब्रह्मप्रकाशरूपत्वम्, न त्वेतदन्यतमत्वमित्युच्यते। तत्रापरमार्थभूतेयमित्युपक्रमस्थे पदेऽवधानं विधेयम्। अपरमार्थत्वमविद्याप्रतीतेरिति पक्षे किलान्यतमत्वोक्तिः। न च ब्रह्मप्रकाशोऽपरमार्थभूतः। एवमङ्गीकारेऽप्युपरि दोष उपन्यस्त एव ब्रह्मप्रकाशस्य ब्रह्मानतिरेकात् तद्रूपाया अविद्याप्रतीतेरपरमार्थत्वे ब्रह्मणोऽप्यापारमार्थ्यापत्ति-

रिति। इतस्तु भवता अविद्याप्रकाशस्यापारमार्थ्यपक्षमुपेक्ष्य पारमार्थ्यपक्षोऽवलम्बनीयः। तत्रेदं घटते, यथा शुक्तिरजतस्वाप्नपदार्थानां मिथ्यात्वेऽपि तद्विषयकज्ञानं न मिथ्या, तथा मिथ्याभूताविद्याविषयकप्रकाशोऽपि परमार्थः ब्रह्मस्वरूपश्चेति। तत्रोच्यते—एवं तर्हि अहं सुखी, अहं दुःखीति प्रकाशानामपि परमार्थता स्यात्। एवञ्च तेषामुत्पन्नत्वविनाशित्वादिप्रतीतिविरोधः। तेषां साक्ष्यधीनत्वात् साक्षिणश्च किञ्चिदुपहिततया अपारमार्थ्यमस्तीति चेत्—अविद्या परं किं शुद्धब्रह्मणा प्रकाश्यते, अहं न जानामीति साक्षिभास्यत्वस्यैवानुभवात्। अथ मन्येत—अविद्याप्रकाशः साक्षिरूपः। साक्षिणो विशिष्टरूपेणापारमार्थ्यवत् अविद्याप्रकाशस्याप्यपारमार्थ्यमेव। एवं विशिष्टापारमार्थ्येऽपि शुद्धं परमार्थ इति—तन्न—विशिष्टस्य शुद्धादतिरिक्तत्वे जडत्वकल्पितत्वादेरवश्यम्भावेन किञ्चित्प्रकाशकत्वायोगात्। तस्मात्, 'अक्षमा भवतः केयं साधकत्वप्रकल्पने' इति न्यायेनापारमार्थसंबन्धः सर्वोऽपि शुद्धचैतन्य एव स्वीकर्तव्यः। तच्च शुद्धं स्वप्रकाशं अनादेर्वा सादेर्वा स्वविरोधिनो मिथ्याभूतस्य स्वस्मिन् कल्पनायां न क्षमम्। गत्यभावादनुपपन्नमपि स्वीकर्तव्यमिति समादधदिव प्रतीयमानमध्यासभाष्यं तु अन्धपरम्परात्वापादनं तद्व्याख्यकारकृतं तत्रैव प्राप्तं प्रतियन्तो नाद्रियन्ते। अतो निरंशस्याविद्यातिरोधेयांशविहीनस्याखण्डब्रह्मणोऽविद्याप्रकाशरूपत्वमसंभवि। तस्मात् शुद्धचैतन्याधीनप्रकाशवत्त्वं नाविद्यास्वरूपम्। विशिष्टचैतन्याधीनप्रकाशत्वं तु विशिष्टसिद्धेरविद्याधीनत्वात् विशेषणस्य चापरमार्थस्य चैतन्येऽध्यासमन्तरा सम्बन्धस्य परमार्थापरमार्थयोरध्यासातिरिक्तसंबन्धासंभवेन दुर्वचत्वादपि दुरुपपादम्। तदुक्तम्, "तेषां तदपत्यत्वात्" इति।

यत्तु—शतदूषणी, किमविद्या ब्रह्मात्मना प्रकाशते उत ब्रह्मान्यत्वेनेति विकल्प्य द्वितीयपक्षादूषणात् स्वरूपेणाविद्याप्रकाशं ब्रह्मप्रकाशस्वरूपमनुमन्यत इति—तत्रोच्यते—द्वितीयपक्षदूषणं कृतं न वेति पश्चाद्विचार्यम्। अदूषणेऽपि अविद्याप्रकाशस्य ब्रह्मप्रकाशस्वरूपत्वमनुमतमिति कथम्। प्रकाशान्तरा-

भावादिति यदि, तर्हि प्रथमपक्षेऽपि ब्रह्मप्रकाशरूपत्वमेवेष्टमिति को विशेषः, "अपिच प्रकाशमानेयमविद्या" इत्युपक्रम एव हि ब्रह्मप्रकाशरूपत्वं सर्वपक्षेष्वभ्युपगम्यापि दोषोद्भावनार्थां प्रवृत्तिं दर्शयति। अथ स्वरूपेणाविद्याप्रकाशोऽनुमत इत्येव भवदभिमतश्चेत्—किं तत् स्वरूपम्। ब्रह्मान्यत्वेन प्रकाशात् तदेव स्वरूपमिति चेत्—ब्रह्मान्यत्वं नाम चित्स्वरूपान्यत्वं विद्यान्यत्वम्। एवञ्चाविद्या विद्यान्यत्वेन प्रकाशत इतीष्टौ अहं मां न जानामीत्यादौ अज्ञानभाने प्रतियोगिभूतज्ञानस्यापि भानमावश्यकम्। तच्च विषयनिरूप्यमिति ज्ञानप्रागभावरूपाज्ञानपक्षे भवदुक्तदोषोन्मेषः स्यात्। निर्विषयनिराश्रयसंविदन्यत्वेनाविद्या भासत इति चेत् प्रतियोग्यसिद्ध्या लोके तद्भानायोगः। अत एव ब्रह्मत्वेन ब्रह्म गृहीत्वा तदन्यत्वेन भानवर्णनमपि दुर्भणम्। अन्यत्तु स्वरूपं दुर्वचम्। अपारमार्थ्यमेव स्वरूपमिति चेत्—अविद्या भासमाना परमार्थत्वेन भासत इत्येवानुभवः; न त्वपरमार्थत्वेन। सर्वमिदमुपरितनसूक्तौ संगृहीतम्। अन्यदप्यवधेयम्—पक्षद्वये द्वितीयपक्षो न दूषित इति भवतोच्यते। वस्तुतः पक्षद्वये उत्तरपक्षद्वयं न दूषितमिति भवतोद्भावनीयम्। 'अविद्या किं ब्रह्मात्मना प्रकाशते, उत तदन्यत्वेन, यद्वाऽन्यत्वानन्यत्वसाधारणात्मने'ति विकल्पत्रयस्य कृतत्वात् तत्र प्रथमकल्पस्यैव चतुर्धा विकल्प्य दूषणस्य स्पष्टमुपलम्भात्। अस्तु तथैवेति चेत्—तर्हि कल्पद्वयमपि किं सम्मतं भविष्यति। किं वा कल्पद्वयमपि भवदिष्टमपि। तर्हि कल्पद्वयस्यादूषणं कथमिति चेत्—उपरि, "स्यादेतत् यथा दर्पण—" इत्याद्युद्भावनतद्दूषणग्रन्थेन कल्पद्वयमपि खण्डितं मन्यताम्। तथाहि—ब्रह्मणि अविद्याध्यासः तादात्म्याध्यासो वा संसर्गाध्यासो वा। आद्यो भेदाग्रह एव सुवच इत्युक्तम्। तेनान्यत्वानन्यत्वसाधारणात्मना अविद्याप्रकाशरूपतृतीयपक्ष एव तादात्म्याध्यासः सुवच इति दर्शितं भवति। यतस्तादात्म्याध्यासो नास्ति, अतः साधारणात्मना न प्रकाश इति तृतीयपक्षो निवृत्तः। द्वितीयपक्षः शिष्टः। मुखदर्पणयोरिव तत्तत्स्वरूपप्रकाशे सत्येव अविद्याब्रह्मणोः संसर्गाध्यासो वक्तव्यः। मुखदर्पणयोः संसर्गाध्यासव्यान्तरा-

लाग्रहणात् । दीपकज्जलादौ च तदध्यासः सामीप्यात् । परं तु तत्र नाध्यासः, वस्तुत एव संसर्गसत्त्वात् । एवंरीत्या चेदविद्याया ब्रह्मणश्च संसर्गोपपादनम्, तर्हि तयोः परिच्छिन्नत्वापत्तिः । अप्रतिघातात् कात्स्न्र्येन ब्रह्मणि तत्संश्लेषे च ब्रह्मणः सर्वात्मनैवाप्रकाशः स्यात् । अत एवाविद्याप्रकाशोऽपि न स्यादिति ततो ग्रन्थादवसीयते । एवं पक्षद्वय-दूषणस्यात्रोपक्षेपपर्यालोचनयैव दूषणान्तराणि च कर्तव्यान्यध्यवसाय, "एव-मन्यान्यप्यनन्तानि विकल्पदूषणानि अविद्यास्वरूपमनुबध्नन्ति" इति भङ्ग्या तत्संग्रहो व्यधायि । एवं सामान्यतो विकल्पदूषणानीत्युक्तया प्रथमकल्पेऽपि दूषणविस्तरः संभावित इति ज्ञाप्यते । न केवलमेतावत् । वादारम्भे, अविद्याख्यो दोषः परमार्थोऽपरमार्थो वेति विकल्पद्वयं कृतम् । तत्राद्यपक्ष-दूषणमुपक्रान्तम् । तत्प्रचारे स्थिते, 'अपरामार्थभावरूपदोषपक्षेऽप्ययमेव दोषः' इति वाक्यं व्यलेखि । तेन अविद्याख्यदोषे अपरमार्थत्वपक्षो दूष्यत इति यदि मन्यते—तर्ह्यस्तु तथा । यदि तु सहकारिणो दोषस्य प्रस्तुत-त्वात्, स दोषः तत्त्वज्ञानप्रागभावो न भवतीत्युक्त्वा, तस्य दोषस्य पार-मार्थ्ये पुनर्ब्रह्मरूपतापत्त्या पारमार्थ्यपक्षं परित्यज्य स सहकारिभूतो दोषः अपरमार्थभावरूपवस्त्वन्तरमिति सहकारिदोषविषयमात्रे प्रवर्तितः स ग्रन्थ इति मन्यते—तर्हि प्रथमविकल्पविषयोऽपरमार्थपक्षोऽपि कश्चिद् दूषणीयोऽस्ति । एवं दूषणीयं तं कल्पं पूर्वं पृथक्कृत्यादूषितौ द्वौ कल्पौ चेति त्रीनपि मनसिकृत्य, "एवमन्यान्यप्यनन्तानि विकल्पदूषणानि" इति सूक्तमिति भाव्यम् । एवं तदन्यत्वेनेति पक्षे प्रागसदुपक्षिप्तं दूषणमप्यत्र ग्राह्यम् । अपारमार्थिकत्वपक्षे श्रीभाष्ये तत्त्वसारे चोपपादितानि दूषणानि मनसि निधाय चैवं संग्रहो व्यधायि । तद्वैशद्याय च किञ्चिदिह प्रस्तुमः—

अविद्याख्यो दोषो यद्यपरमार्थः, तदा स किं दृशिः, द्रष्टा, दृश्यं वा । दृशिपक्षेऽप्यनवच्छिन्नदृशिर्वा अवच्छिन्नदृशिर्वा । तत्राद्येऽपि ब्रह्म-स्वरूपात्मकदृशिर्वा तदन्या वा। प्रथमे तदपारमार्थ्ये ब्रह्मस्वरूपापारमार्थ्यात्

शून्यवादप्रसङ्गः । न द्वितीयः, तादृशदृशिद्वयानङ्गीकारात् । अङ्गीकारेऽपि तस्य अपरमार्थतया काल्पनिकतत्प्रतिभासार्थदोषान्तरकल्पनयाऽनवस्था-प्रसङ्गाच्च । अवच्छिन्नदृशिपक्षे ब्रह्मस्वरूपत्वं न भवति; स्वरूपस्यावच्छिन्न-त्वापारमार्थ्ययोरनभ्युपगमात् । अतोतिरिक्तत्वमेव, तदापि काल्पनिकत्वा-द्दोषान्तरकल्पनयाऽनवस्था तदवस्था । तदिदं द्रष्टृपक्षे दृश्यपक्षे च तुल्यम् । पारमार्थ्यस्वीकारे चाद्वैतहानिः । परमार्थतया क्लृप्तब्रह्मण एव दोषत्वे तु तत एव दोषात प्रपञ्चदर्शनसंभवे अविद्याख्यदोषकल्पनमेव व्यर्थम् । ब्रह्मणो दोषत्वे तस्यानिवर्त्यत्वादनिर्मोक्ष एव स्यात् । तस्माद् ब्रह्मणो दोषत्वायोगात् दोषस्यापारमार्थ्यायोगाच्च ब्रह्मव्यतिरिक्तपारमार्थिकदोषस्वीकार आवश्यक इति । तदिदं सटीकं भाष्यमभ्यस्यतां सुगमम् ।

नन्वनवस्थादोषो बहुधा परिहर्तुं शक्यते । जीवाज्ञानवादिभिर्बीजाङ्कुर-न्यायादनवस्था न दोषायेति सुवचम् । ब्रह्माज्ञानवादेऽपि अविद्यास्वरूपस्या-नादित्वस्वीकारान्नानवस्था । यद्वा उभयैरपि वादिभिः दुर्घटत्वमविद्याया भूषणमिति परिहारः सुवचः । अथवा स्वपरनिर्वाहकत्वादविद्या दोषान्तर-निरपेक्षैव भवत्विति चेन्न—प्रवाहानादित्वपक्षस्य जीवानित्यत्वाकृताभ्यागमादि-दूषणग्रस्तत्वेन ब्रह्माज्ञानवादिभिरेव दूषितत्वात् । ब्रह्मसिद्ध्युक्तबीजाङ्कुरन्यायस्य भामतीनिष्कर्षशोधनया शतभूषण्यामप्युपेक्षितत्वाच्च । अनादित्वाद् दोषापेक्षा नास्तीति तु न युक्तम्—जीवस्यानादित्वेऽप्यविद्यापरिकल्पितत्वाङ्गीकारात् । अन्यथा अधिष्ठानस्यानादित्वादधिष्ठानान्तरापेक्षा नास्तीति अपारमार्थ्यमेवास्तु । तथाच जितं माध्यमिकैः । अधिष्ठानापारमार्थ्ये तत्कल्पनाया अधिष्ठानान्तर-मन्तरेणासंभवादनवस्थेति खलु तत्र दूषणमुपन्यस्तं भवद्भिः । किञ्चानादि-वस्तुन उत्पत्तिकारणापेक्षाविरहेऽपि मानकारणापेक्षाऽस्त्येवेति स्यादेवानवस्था । अज्ञानप्रकाशः सार्वकालिक एवास्तीत्येतदप्यनुभवदूरम् । दुर्घटत्वं भूषणमि-त्यपि न—तर्हि प्रपञ्चस्य दोषमन्तरा दुर्घटत्वम् अधिष्ठानमन्तरा च दुर्घटत्वं भूषणमिति अविद्याया अधिष्ठानस्य च कल्पनैव न स्यात् । अथ दुर्घटत्वं

परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वमात्रम् । अपरमार्थत्वप्रयुक्तोपपत्त्यपेक्षा त्वस्त्येवेति चेत्—तर्हि दोषस्याप्यपरमार्थत्वोपपत्तये दोषान्तरापेक्षा स्यादेव । अतोऽधिष्ठानपारमार्थ्यवत् दोषपारमार्थ्यमपि स्वीकर्तव्यम् । उपपत्तिनिरपेक्षा चेदविद्या, मुक्तानप्याश्रयतु । मुक्तौ निवृत्तत्वादेव नाश्रयतीति चेन्न—बाधकज्ञाने सत्यप्यविद्याया अनिवृत्तिसंभवात् । बाधकसंनिधौ बाध्येन न भवितव्यमित्युपपत्तिमविद्याऽनुरुन्धे इत्यत्र प्रमाणाभावात् । शुद्धब्रह्मस्वरूपे स्वयम्प्रकाशे सत्यप्यविद्याविजृम्भणवत् तद्विषयकवृत्तिज्ञानकालेऽपि तथैवानुवृत्तिसंभवात् । अत उपपत्त्यनुवर्तनमविद्याया आवश्यकम् । अद्वैतसिद्धावपि दुर्घटत्वमुपेक्षितमिति प्रागेवावोचाम । एवं स्वपरनिर्वाहकत्वमप्ययुक्तम्—प्रपञ्चस्यैव स्वपरनिर्वाहकतया दोषाधिष्ठाननिरपेक्षत्वापत्तेः । परं प्रति निर्वाहकत्वे सिद्धे स्वनिर्वाहकत्वमपि स्वीक्रियेत । अतः प्रपञ्चनिर्वाहकतया दोषः क्लृप्तः स्वापरमार्थ्यमपि स्वयमेव निर्वहतीति चेत्—तर्हि अधिष्ठानस्याप्यापारमार्थ्यमेवास्तु ; प्रपञ्चापारमार्थ्यमपि स्वयमेव निर्वहतीति अनवस्थापरिहारात् । बौद्धपक्षप्रसरोऽयम् । यदि सर्वत्राध्यस्ताधिष्ठानयोर्भेददर्शनादधिष्ठानान्तरमपेक्षितम् । अपेक्षितमेव तर्हि तथैव दोषान्तरमपि । तदिदं सर्वमुदितं तत्त्वसारे वरदगुरुभिः—

" स्वरूपानादित्वस्वपरघटने दुर्घटनता
  प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः ।
असत्याविद्याया गदितुमनवस्थापरिहृतौ
  मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ ॥" इति ।

यत्तु दुर्घटत्वमविद्यायाः आगमलोकव्यवहारनिर्वाहार्थमाद्रियामह इति—किं तेन । स्वपक्षनिर्वाहार्थमेव माध्यमिकोऽपि दुर्घटत्वमाद्रियते । परपक्षनिर्वाहार्थं को नु किञ्चिद्द्रक्ष्यति । अनुपपन्नं किञ्चिदुक्त्वा अन्यथा गतिर्नास्तीति किमित्यात्मा क्लिश्यते ; सुघटपक्षावलम्बनेनैव सर्वागमलौकिकव्यवहारनिर्वाहात् ।

यत्तु सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वमित्यादि—तदिदमनिर्वचनीयत्वं पञ्चपञ्चाशे वादे परासिष्यामः। अत एव दोषस्य वा प्रपञ्चस्य वा यदपारमार्थ्यम्, तन्न सर्वात्मना तदभावरूपम्। किंतु क्वचित् कदाचित् स्थितस्यान्यत्रान्यदैवाभावरूपम्। शुक्तिरजतप्रत्यक्षे च विषयभूतं रजतं क्वचित् स्थितमेव। अतो भ्रमविषयभूतपदार्थानां विशकलितरूपेण वा क्वचित् सत्त्वमावश्यकमिति तादृशवस्तुनिवृत्तिर्न कथमपि यथार्थज्ञानेन; किन्तु तद्भ्रमनिवृत्तिर्वा तदधीनव्यवहारनिवृत्तिर्वा। तत्र पूर्वं पूर्वं भ्रमविषयस्य प्रपञ्चस्योत्तरोत्तरभ्रमविषयत्वमित्युक्तौ सर्वोऽपि व्यवहारः शुक्तिरजतव्यवहारवत् विफल एव स्यात्, तादृशोऽपि व्यवहारो दोषं परमार्थमन्तरा न स्यादिति सिद्धं दोषस्यापारमार्थ्यं न स्वरूपमिति।

दृष्टे नानुपपन्नमित्युपगतम्, प्रत्यक्षमीक्ष्येत चेत्;
भावाभावविरोधहानिमिह च प्राज्ञा न सम्मन्वते।
अध्यक्षप्रतिकूलमेव किमपि स्वीकृत्य तद् दुर्घटं
स्यादित्यप्युपगम्य तृप्तमनसां पक्षः परं दुर्घटः॥

शुभमस्तु।

---

श्रीः

# मायाविद्याविभागभङ्गप्रसाधनम्

अन्यव्यामोहदक्षाद्भुतविषयसमुत्पादिनी यस्य माया
हान्या बुद्धेर्विमत्या विविधचरणतश्चाऽप्यविद्यात्रयार्तान् ।
मा या त्रातुं सदोरःस्थलमधिवसति प्रीयमाणाऽस्य तस्याः
मायावी वश्य एष श्रय हृदय ! परं मान्यमेनं तु ; माऽन्यम् ॥

नित्यशुद्धस्य चैतन्यस्योपाधिसंबन्धमन्तरेणेशजीवविभागायोगात् पृथगुपाध्यपेक्षायां स्वीकृत ईशोपाधिर्माया, जीवोपाधिरविद्या । मायया महाभूतभौतिकसृष्टिः, अविद्यया सूक्ष्मभूततत्कार्यान्तःकरणादिसृष्टिः । तत्र जीवकार्यसूक्ष्मभूतानामन्तःकरणाद्युत्पादनायेश्वरकार्यमहाभूतोपष्टम्भत्वमप्यपेक्षितमिति केचित्, नेत्यन्ये इति मायाविद्याभेदवादिप्रक्रिया । अभेदवादिषु पुनः केचित्, 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति ईश्वरोपाधिर्माया, जीवोपाधिस्त्वन्तःकरणं मायाकार्यमित्याहुः । तत्त्वविवेके तु त्रिगुणात्मिकाया मूलप्रकृतेरेकस्या एव माया चाविद्या चेति रूपभेदौ । रजस्तमोनभिभूतशुद्धसत्त्वप्रधाना माया । तत्प्रतिबिंब ईश्वरः । अभिभूतमलिनसत्त्वा त्वविद्या । तत्प्रतिबिंबो जीव इत्युक्तम् । जीवस्यैवाज्ञत्वात् ईश्वरस्य च स्रष्टृत्वात् जीवे तस्याः आवरणप्राधान्यम्, ईश्वरे विक्षेपप्राधान्यमित्यप्याहुः । जीवानामनेकत्वात् जीवाश्रिता अविद्याः भिन्नभिन्नाः, ईश्वराश्रिता तु माया प्रपञ्चहेतुरित्यविद्यानानात्वमपि केषाञ्चिदिष्टम् । नानाविद्यातिरिक्तमायासद्भावमन्ये नेच्छन्ति । एवञ्च मायाविद्याविभागभङ्गस्यात्र वादे क्रियमाणस्य भामतीसंमतस्याद्वैतिषु स्वागतवादिनोऽपि भूम्ना सन्तीति युक्तमत्र शतभूषण्या स्वयमुपरन्तुम् । अथापि तया किञ्चित्पक्षनैर्भर्याभावात् सर्वत्र किञ्चित् प्रतिवक्तुं प्रयत्यते वैतण्डिकवेषेण । यत्तु—आवरणशक्तिमती माया स्वतन्त्रा, विक्षेपशक्तिमती तु माया‌ऽपरा इति मायाविद्याविभागं प्रस्तुत्य तस्य श्रीभाष्य-

सम्मतत्ववर्णनम्—तत् काल्पनिकम्। अविद्या कर्मरूपा जीवाश्रितेति श्रीभाष्यसंमतिमात्रेणेदृशविभागकल्पनानुपपत्तेः। कर्मणां जीवाश्रितत्वस्याद्वैतिनामपीष्टत्वात्। यच्च मायाविद्याविभागभङ्गोऽयं श्रीभाष्यानुयायिनामेव शृङ्गभङ्ग इति—तदपि छलमात्रम्। नानार्थके पदे वक्त्रभिप्रायं पुरस्कृत्यैव वादस्य प्रस्तोतव्यत्वात्। अद्वैतिसंमतमायाविद्याविभागप्रकारेऽनुपपत्त्युद्घाटनस्यैव वादकृत्यत्वात्। शतदूषण्यामेव वादान्ते, "अतो यस्य मते माया सत्या, मायाविनश्च न भ्रमः; व्यामोहनीयाश्च जीवाः परस्मादत्यन्तभिन्नाः सत्याश्च, परेण च यथावद् दृश्यन्ते, तस्यैव मायाविद्याविभागेन ब्रह्माज्ञानं सुपरिहरम्; न तु निर्विशेषैकचिन्मात्रवादिनः" इति वक्तव्यमुक्त्वा वक्तृतात्पर्यमाविष्कृतम्।

अत्रेदं बोध्यम्—अविद्यातिरिक्तायाः ईश्वराश्रिताया मायाया अपलाप एव भामत्यारूढः। तन्मते मायाविद्याविभागस्य भङ्ग एव। ये त्वन्ये मायां स्वीकुर्वन्ति, तैर्मायाया अविद्यायाश्च स्वरूपशोधनं किञ्चित्प्रकारेण क्रियमाणं न संभवतीति तत्कृतविभागभङ्गश्चेह विशदं निरूप्यते। तत्रेश्वराश्रितमायानङ्गीकारिभामतीपक्षः परिशील्यमानो भामतीकारस्यानीश्वरवादिप्रायतामेव दर्शयिष्यति। तथाहि—तत्र किं मायाप्रतिबिंबस्वीकारः मुक्तप्राप्यत्वायावश्यक इति तदर्थं मायाकल्पना, किं वा जगद्भ्रमोपयोग्यावरणसंपत्तये इति विकल्प्य तदधीनत्वसूत्रकल्पतरौ दूषणमुपन्यस्तम्—निर्विशेषब्रह्मभावस्यैव मुक्तप्राप्यत्वात् न तदर्थं मायाप्रतिबिंबरूपेश्वरापेक्षा; जगद्भ्रमस्तु द्रष्टॄणां जीवानां दोषभूताभिरविद्याभिरेवोपपद्यत इति। अथेश्वरस्योपादानत्वार्थमपेक्षेत्यपि न; जीवाश्रिताविद्याविषयस्य ब्रह्मण एव जगदध्यास्याधिष्ठानत्वात्। तावदेव हि विवर्तोपादानत्वम्। तत्र यावत्योऽविद्याः, तावतीभिः संभूताभिरेकप्रपञ्चसृष्टिः। एकाविद्याविलये च शिष्टाभिः पुनः संभूय प्रपञ्चान्तरसृष्टिः। तत्रैक्यांशे भ्रमः। यद्वा अविद्याभेदेन प्रपञ्चभेद एव। भ्रान्तपुरुषभेदेन शुक्तिरजतस्य क्लृप्तस्य भिन्नत्वेऽप्येकत्वभ्रम इवेहापि प्रपञ्चैक्यभ्रममात्रमित्येवं

तन्मतस्थितिः । ततश्च प्रपञ्चवत् तत्कारणत्वेन सार्वज्ञ्यसर्वशक्तित्वाद्याश्रयतयेश्वरोऽपि तत्तदविद्याकल्पित एव । एवञ्च यो यादृशमीश्वरं स्वाविद्यया कल्पयति, तस्य स तादृश एव । तत्तदीश्वरोपासनेन तस्य तस्य फलप्राप्तिस्तत्तदविद्याविलसितम् । अनीश्वरजगत्कल्पनकौशलञ्च येषां स्वाविद्यावशात्, तेषां तादृशमेव जगत्, तदनुरूपमेव च फलमिति न तत्रैकेनान्यस्य निषेधप्रसक्तिः । अविद्यावैचित्र्यञ्च सर्वैरनुभवानुरोधेन सर्वत्र संमन्तव्यमेव । अतो ये तावत् स्वाविद्यावैशेष्यात् सर्वज्ञं सर्वशक्ति च किञ्चित् वेदप्रमाणकं कल्पयित्वा तदनुगुणलोकयात्रायै घटन्ते, तैरतादृशाः जैनबौद्धादय उच्चावचा वेदबाह्याः स्वाविद्यामहिमभावनीयाद्भुतप्रपञ्चविहारपरायणा न दूषणीयाः । निर्विशेषतत्त्वज्ञानान्मुक्तिरित्येतत्तु सर्वसमादरणीयमित्येतावन्मात्रमद्वैतवादिजीवानुबन्ध्यविद्याप्रभावविशेषनिष्कृष्टमिति ।

तामिमां निरीश्वरवादानुमतिं भामतीमते समापतितामालोचयन्ति चेत्—वाचस्पतिरपि विस्रष्टव्य एव भवेत् । नूनमीदृशदोषापत्तिं मनसिकृत्येव सिद्धान्तलेशसंग्रहे वाचस्पत्यप्रपञ्चनिरूपणानन्तरम्, "जीवाश्रिताविद्यानिवहाद् भिन्ना मायैवेश्वराश्रिता प्रपञ्चकारिणी; जीवानामविद्यास्तु आवरणमात्रे प्रातिभासिकशुक्तिरजतादिविक्षेपेऽपि वोपयुज्यन्त इत्यपरे" इति मतान्तरमुपन्यस्तम् । तत्र वाचस्पतिर्मायां नैवेच्छतीति वा स्वीकर्तव्यम्; कल्पतरुव्याख्यामुपेक्ष्य कथमपि वाचस्पतिरपि मायाभ्युपगमं कारयितव्य इति वा मन्तव्यम् । एवंभूतेश्वरमायाया अपि केनचिद्रूपेणाविद्यात्वमप्यस्तीत्याशय्यैव भामत्युपक्रमे, अनिर्वाच्याविद्याद्वितयसचिवस्येत्युक्तिः; न पुनः पूर्वपूर्वविभ्रमसंस्कारस्य द्वितीयाविद्यात्वकल्पनयेति चैतत्पक्षोपष्टम्भः । एवं तु विचारे क्रियमाणे जीवानां ब्रह्मणि जगद्भ्रमस्येवेश्वरस्यापि जगद्भ्रमस्य स्वस्मिन् तदाधारत्वतन्नियन्तृत्वादिविचित्रभ्रमवर्गस्य च विद्यमानत्वात् तादृशभ्रमहेतुतायास्तन्मायायामेव वक्तव्यत्वात् स्वाश्रयस्य भ्रान्तत्वावहत्वरूपाविद्यालक्षणं मायायां पुष्कलमेवेति न मायाया अविद्या-

सामान्यपार्थक्यम् । गोबलीवर्दन्यायस्तु संभाव्यताम् ; किं तेन । मायाविद्याविभागवादिभिः, मायाः अविद्याया इव स्वाश्रयव्यामोहकत्वं नास्तीति वादो न युक्तः ; ईश्वरस्यापि भ्रान्ततया तत्र तदीयमायाया एव हेतुत्वादित्याक्षेपस्य शतदूषणीकृतस्य समाधानं विहाय शतभूषणी मायाप्रपञ्चने व्याप्रियते व्यामोहनाय । 'व्यावहारिकेषु मायापरिणामेषु ब्रह्मानुप्रवेशोऽस्ति ब्रह्मविवर्तता च । ब्रह्माननुप्रवेशेन मायापरिणामाः स्वाप्निकशुक्तिरजतादयः । व्यावहारिकेषु मायाविकारप्रकृतित्वमिव स्वाप्निकादिषु तन्नास्ति, किंतु मायाविकारमात्रत्वम् । अत एव मायामात्रमितिसूत्र'मित्यादि च लिखति । स्वाप्निकादीनां जीवो निमित्तकारणम् , न तु व्यावहारिकप्रपञ्च इव ब्रह्मणः कर्तृत्वमिति स्यान्नाम । तेष्वपि व्यावहारिकेष्विव ब्रह्मानुप्रवेशे ब्रह्मोपादानकत्वे च स्वीकृते काऽनुपपत्तिः । स्वप्ने घटादिनिर्माणान्नपचनादिषु दृश्यमानेषु स्वाप्निकमृत्पिण्डतण्डुलादीनामेव घटौदनात्मना परिणामस्वीकारे वा किं बाधकमस्ति । असतोऽप्यर्थक्रियाकारित्वं व्यावहारिक इव नानुपपन्नम् । प्रातिभासिकस्य व्यावहारिककार्योपादानत्वायोगेऽपि स्वसजातीयं प्रत्युपादानत्वं नायुक्तम् । प्रतीतिमात्रमेवास्ति, न त्वनिर्वचनीयं किञ्चिदिति वादिनां मते तु तत्र तण्डुलौदनादिषु प्रकृतिविकृतिभावस्याभावः स्यात् । 'ब्रह्मस्वरूपं नानुवर्तते, मायावस्थाश्रयचैतन्यांशोऽनुवर्तते' इति चार्थहीनम् । मायामात्रसूत्रविचारस्तु प्रथमप्रसाधन एव प्रस्तुतः । स्वाप्निकानामिव व्यावहारिकाणामपि सति बाधे उपादानेन साकं विनाशस्तुल्य एव ।

अथ शतदूषणीकृताक्षेपसमाधाने प्रवृत्य—'मायाश्रयत्वं ब्रह्मणः । अविद्यैव तु माया । मायागतावरणशक्तिरेवाविद्या । अद्वैतमते अविद्याविषय एव ब्रह्म, नाश्रयः' इत्येवं किमपि किमपि लिखति । ईश्वराश्रिता माया, जीवाश्रिता अविद्येति विभज्य तत्तल्लक्षणविशेषोऽद्वैत्येकदेश्युक्तः खण्ड्यते शतदूषण्याम् । तत्रानेन न कश्चित् परिहार उक्तो भवति । तदुपरि च, 'परव्यामोहनहेतुर्माया, अविद्या तु स्वाश्रयव्यामोहहेतुः' इति

ऐन्द्रजालिकव्यामुग्धमायाविद्याविभागपरम्; न ब्रह्माश्रितमायाविद्याभिप्रायम्' इति लिखता पूर्वम्, 'मायालक्षणं परव्यामोहनेन स्वाश्रयविवर्तमानता-सहकृतम्; 'परव्यामोहसहकृतपरिणामित्वमात्रं मायायाः साधारणं लक्षणम्' इति विरुद्धमेव व्यलेखि। मायाविद्ययोरैक्यमङ्गीकुर्म इति चेत्—न हि तत्पक्षे दोषोद्भावनं शतदूषण्यां प्रकृतम्। विभागवादिपक्ष एव विभाग-प्रकारस्योक्तस्यासंभवाविष्करणात्।

'अथेश्वरोपाधिर्माया, जीवोपाधिरविद्येति, तथा परव्यामोहहेतुत्वं माया-लक्षणम्, स्वव्यामोहोऽविद्ययेति लक्षणमिति च स्वीकृत्यैव शतदूषणीकृतं दूषणं परिजिहीर्षुणा यदुक्तम्—मायापरिणामात्मकवृत्त्या व्यामोह्यानां परेषां दर्श-नात् न निर्दोषदर्शनविषयताप्रयुक्तं व्यामोह्यसत्यत्वं वा ब्रह्मणः स्वाभाविकं ज्ञातृत्वं वा भवितुमर्हतीति। तत्र पृच्छ्यते—माया पृथक् स्वीकृता दोषो न वा। ईश्वरे किञ्चिद्धेयकार्यकरत्वाभावे मायायानेश्वरं प्रति दोष-त्वम्। तदा च निर्दोषदर्शनविषयत्वं व्यामोह्येषु प्राप्तमेव। अथातात्त्विक-व्यामोह्यजीवादिविषयकज्ञानस्येश्वरे उत्पादनात् तस्याः दोषत्वम्, तर्हि मायाया अविद्यात्वं सिद्धम्। यत्तु व्यामोह्यान् परान् मिथ्याभूतान् मिथ्यात्वे-नैव दर्शयतीति—तर्हि व्यामोह एव न पदं लभते। किञ्च यथा शुक्ति-रजते अन्येन ज्ञायमाने स्वयमभ्रान्तः पुरुषः तेन गृहीतं रजतं मिथ्येति गृह्णाति, तथेश्वरोऽपि व्यामोह्यान् परगृहीतत्वेन रूपेण गृहीत्वा मिथ्याभूतान् मन्यते, उत स्वयमेव व्यामोह्यान् गृह्णाति। आद्ये तु ईश्वरोऽभ्रान्तः स्यात्। स तु पक्षो न संभवति। परेषामपि कल्पनाधीनत्वेन तेषामेवाभावेन तद्गृहीतत्वेन ग्रहणायोगात्। अतो यथा कश्चित् पूर्वं शुक्तौ रजतमध्यस्यति अथ च मिथ्येत्यध्यवस्यति, तथेश्वरः परान् गृह्णाति, अथ मिथ्येति च मन्यत इति वक्तव्यम्। तदा तस्य भ्रान्तत्वमप्यवश्यम्भावि। रजताध्यासो रजतमिथ्यात्व-ग्रहणञ्च युगपन्न भवितुमर्हति। अथ पीतशङ्खभ्रमः मिथ्यात्वग्रहणञ्च युग-पद्भवतीति तद्रीतिरादर्तव्या। अथापि दोषवत्त्वं भ्रान्तत्वञ्च दुष्परिहरम्।

अत एव तत्र पित्तदोषपरिहाराय प्रयत्नः। तादृशश्च दोष इह मायैवेति सा नूनमविद्यैव, भ्रान्तिहेतुत्वात्। दोषाभावे तु मिथ्याभूतवस्तुग्रहणमेव न भवति; कुत्र तथा मिथ्यात्वज्ञानापेक्षा। एवञ्चेश्वरस्य व्यामोह्यपरदर्शनं मायाविशिष्टस्वदर्शनं तन्मिथ्यात्वग्रहणमिति किमपि न स्यात्। तत्त्वभूतब्रह्मप्रकाशमात्रेण भवितव्यम्। अपि च भवन्मते वस्तूनां तद्गतस्य मिथ्यात्वस्य च सर्वस्य मिथ्यात्वात् मिथ्यात्वेन सर्ववस्तुज्ञानमपि मिथ्याभूतपदार्थग्रहणमेवेति ब्रह्मातिरिक्ततद्ग्रहणं दोषजन्यमेवेति ईश्वरस्य दोषवत्त्वं मायाया अविद्यात्वञ्चावर्जनीयम्। एतेन ऐन्द्रजालिकमायायां परव्यामोहकत्वमात्रम्, ईश्वरमायायां तु परदर्शनव्यामोहनोभयहेतुत्वमित्युक्तिरपि मायाया अविद्यात्वसंपादिकैवेति सिद्धम्। यदि व्यामोह्यान् दृश्यमानान् परान् मिथ्यात्वेन गृह्णन् ईश्वरः तन्मिथ्यात्वं सत्यं मन्यते, तर्हि ब्रह्मातिरिक्तसत्यत्वज्ञानादज्ञानं तत्कारणं तस्यावश्यकम्। यदि च मिथ्येति मन्यते, तर्हि मिथ्यात्वं मिथ्या, ते तु सत्या इत्येव तेन गृहीतं भवति, तदा च भवद्दृष्ट्या स भ्रान्त एव। अभ्रान्तो निर्दोषश्च यदि सः, परदर्शनप्रसक्तिरेव नेति ध्येयम्। उक्तरीत्या परगृहीतार्थग्राहित्वाभावात् स्वभ्रमविषयमिथ्यात्वस्यैव स्वयं ग्रहणादीश्वरस्य भ्रान्तत्वं भवेदेव।

अथ तु शतभूषणी शतदूषण्यां दूषणार्थं ये पूर्वपक्षांशा अनूदिताः, तानेव, मायाया अपरमार्थदर्शनहेतुत्वेऽपि अपुरुषार्थदर्शनहेतुत्वं नास्ति, जीवानां स्वप्रतिबिंबत्वेन ग्रहणेऽपि, "बालः क्रीडनकैरिव" इत्यादिप्रामाण्यात् बालोन्मत्तादीनामिवेश्वरस्य लीलारसहेतुः प्रवृत्तिरित्यादीन् तत्खण्डितान् स्वयमपूर्ववदनूद्य खण्डनांशमस्पृष्ट्वा तत्परिहारहेतुश्चालाभादनुपन्यस्य स्वयमुपरि कोटिं प्रदर्शितवतीव भूत्वा तृप्यति।

तदर्थे शतदूषण्याः शुकवत् पठनं स्फुटम्।
पर्याप्तमिति नेदृक्षखण्डने व्याप्रियामहे॥

ईश्वरः सत्यत्वेन वा मिथ्यात्वेन वा किञ्चिद्विषयकज्ञानवान् वा न वा। एवं स परव्यामोहहेतुमहाभूतादिसर्गकरो वा न वा। आद्ये बाध्यार्थविशिष्टत्वं कल्पनामन्तरा न भवतीति कल्पकदोषवत्त्वमपि सिद्धम्। जीवा एव तथा तं मन्यन्ते, वस्तुतस्तादृशो नास्तीति चेत्, निरीश्वरवाद एवायम्। यथा सुषुप्तिदशायामन्तःकरणशरीरश्वासप्रश्वासादिसर्वाभावेऽपि द्रष्टृबुध्यैव श्वासशरीरादिसद्भावोऽद्वैतिमते। तदुक्तं परिभाषायाम्। तदा च मायाऽपि नास्तीति न तदा मायाविद्याविभागानुपपत्तिं ब्रूमः। इतस्त्वेवं वक्तुमुचितम्—ईश्वरस्य परव्यामोहनार्थं मायाप्यस्ति, स्वयं व्यामुग्धत्वायाविद्याऽपि। तथाच मायाविद्योभयपरिकर्मित ईश्वरः मायादरिद्राज्जीवादधिक इति। एवं वा ब्रूत, मायाया एवाविद्याशक्तिरप्यस्तीति वा। तथाच मायाविद्याविभागभङ्गस्यास्मद्विवक्षितस्य भवदिष्टत्वात् नात्र वादस्यावकाश इति। एवं मायाया इव ब्रह्मणोऽप्यभावप्रतियोगित्वान्मिथ्यात्वं स्यात्। मायाभावो ब्रह्म। मायाभावाभावश्च माया। अतो मायारूपाभावप्रतियोगित्वं ब्रह्मण इत्यादि चण्डमारुते उक्तम्। शतदूषणीपरीक्षायामेवं विलक्षणायां चण्डमारुतं सहस्रकिरणञ्चापि दृष्ट्वा तत्र विचारितेषु गहनेष्वर्थेष्वप्रवेशेन किमपि स्थूलमीषद् गृहीत्वा इदं व्याख्यातमिति स्वाभ्यस्ततया परिपाट्या सर्वप्रत्याख्यानं कृतं मन्यत इत्यलं विडम्बनोक्तिविषयविवेचनेन॥

मायाव्याप्तान् रक्षितुं स्वं प्रपन्नान्
मायाव्याप्तो(मायावी आप्तः) ऽस्त्येष मायाः प्रियो नः।

मायावादो मायिनं वक्ति मुग्धं
मायाजालान्मोचयेत् तं कथं सः॥

शुभमस्तु।

---

श्रीः

# निवर्तकानुपपत्तिप्रसाधनम्

संकल्पसूर्यकिरणप्रसरावधूतसंसारसंतमसमम्बुजधामसक्तम् ।
दास्यश्रिया सह समेधितसौवसाम्यं स्वामिन् हयास्य ! मनवै शरणं भवन्तम् ॥

अद्वैतमते तत्त्वगत्या सर्वस्य मिथ्यात्वात् संसारस्याभावेन तन्निवर्तकान्वेषणमेव व्यर्थम् । न च मिथ्यात्वाज्ञानात् तत्र प्रवृत्तिः । मिथ्यत्वाज्ञाने रज्जुसर्पनिवर्तकरज्जुज्ञानतुल्य जगन्निवर्तकतत्त्वज्ञाननिर्धारणायोगात् । शास्त्रतो मिथ्यात्वमवगतं चेत्—तत उपायान्वेषणस्यैव न प्रसक्तिः । जगदस्तित्वभ्रमानुवृत्त्या तदन्वेषणमिति चेत्—एवं तर्हि मिथ्यात्वज्ञाने द्रढिमा नास्तीति तदर्थे यत्नः कर्तव्यः । अन्यथा निर्विशेषब्रह्मज्ञानस्य सर्वनिवर्तकत्वे संदेहात् तदर्थेऽपि न घटेत । सत्यपि दृढे मिथ्यात्वनिश्चये आध्यात्मिकाधिभौतिकाधिदैविकतापत्रयाभिघातकालिकबाधनापारवश्यात् संसारनिवृत्तिमाकांक्षतीति चेत्—किमस्य बाधनायां मिथ्यात्वज्ञानं नास्ति । किं वा बाधनेयं सत्या, येन रज्जुसर्पभ्रान्तस्य दष्टत्वभ्रमाधीनशरीरशैथिल्ये सति विषापनयनविध्यन्वेषणवत् एतत् युज्येत । तत्र सर्पस्य दंशस्य चाभावेऽपि तद्भ्रमस्य वास्तवत्वात् तत्कृतवास्तवशरीरविकारपरिहाराय प्रयत्नो घटते लोकदृष्ट्या । इह तु जगत इव तापत्रयाभिघात-दुःखादेरप्यवास्तवत्वेऽभिमन्यमाने कथं तन्निवर्तनप्रयत्नः । अतो दोषतज्जन्यभ्रमतदाश्रयपुरुषादेः सत्यत्वात् दृष्टान्ते तन्निवृत्तिरपेक्षिताऽस्ति; इह तु किमपि नास्तीति वैलक्षण्यान्न निवर्तकापेक्षेति ।

एवमपि निवर्तकमपेक्षमाणाः अनिवर्तकमेव निवर्तकं मन्यन्त इत्यपि निवर्तकानुपपत्तिरेव ।

यज्ज्ञानं संसृतिव्याप्तं तज्ज्ञानं मोक्षदायि चेत् ।
कथं संसृतिरित्थं स्यात् अपवर्गोऽथवा कथम् ॥

किमिदं निवर्तकज्ञानम् । ब्रह्मात्मैक्यज्ञानं वा, जगन्मिथ्यात्वज्ञानं वा, अद्वितीयं ब्रह्मेति ज्ञानं वा, अखण्डब्रह्मज्ञानं वा । आद्यत्रयस्य मिथ्यापदार्थविषयकत्वात् तत्त्वज्ञानत्वाभावान्न निवर्तकत्वम् । विशिष्य चोच्यते—ब्रह्मात्मैक्यज्ञानेपि जगदपलापाभावात् अविद्यानिवृत्तेरप्रसक्त्या न संसारनिवृत्तिः । अतः अहं ब्रह्मास्मीति ज्ञानस्य मुक्तिहेतुत्वमपास्तम् । जगद्ब्रह्मैक्यज्ञानमूलकमेवेदं ब्रह्मात्मैक्यज्ञानमिति चेन्न-जगतो जडस्य बाध्यतया तदैक्यस्य ब्रह्मण्यग्राह्यतया जीवब्रह्मैक्यज्ञानस्य तन्मूलकत्वायोगात् । न द्वितीयः; प्रपञ्चमिथ्यात्वज्ञानेऽपि तत्कारणाविद्यानिवृत्त्ययोगान्मुक्त्यसिद्धेः कार्यकारणोभयमिथ्यात्वग्रहेऽपि शुद्धानेकजीवात्मसंभावनया द्वैताभावनिश्चयस्य ततोऽसिद्धिः । आत्मनानात्वसमूलजडप्रपञ्चसर्वमिथ्यात्वज्ञानञ्चेत्-तर्हि सर्वाविद्यानिवृत्त्या सर्वमुक्तिप्रसङ्गः । एकदेशमात्रनिवृत्तौ प्रमाणाभावात् । सर्वाविद्यानिवृत्तिपर्यन्तमेकोऽपि न मुक्तो भवेत् : निवर्तकज्ञानस्य सर्वगोचरत्वात् । अत एव न तृतीयः; द्वितीयस्य कस्यापि परिशेषायोगेन सर्वमुक्त्यापत्तेः । न च चतुर्थः; अखण्डविषयकज्ञानस्य स्वरूपचैतन्यातिरिक्ताविषयकत्वे स्वरूपचैतन्यानिवर्त्याविद्यानिवर्तकत्वस्यायोगात् । तद्वतावुद्धिं प्रति तदभावादिरूपतद्विरोधिधर्मानवगाहिनिश्चयस्याविरोधित्वात् । धर्मिप्रकाशस्यैव विरोधित्वे तु प्रपञ्चविभ्रमस्यैवानवकाशात् । स्वरूपचैतन्यं न विरोधि, किं तु वृत्तिरिति पक्षश्च पक्षान्तरवत् शतदूषण्यां खण्डित एव विस्तरेण । अपरिच्छिन्नानन्दत्वविशिष्टब्रह्मज्ञानं विरोधीति चेत्—दुःखरूपत्वमेव तज्ज्ञानबाध्यं स्यात् ; न प्रपञ्चः । अनिर्वचनीयस्यैवासिद्ध्या चोक्तेष्वन्यतमेन केनापि ज्ञानेन न प्रपञ्चतदुपादाननिवृत्तिप्रसक्तिः । अतो निवर्तकत्वेनाभिमतं सर्वमनुपपन्नमिति संक्षेपः । सर्वमिदं विस्तरेण परमतसंभावितसर्वांशोद्भावननिरसनविधया व्युत्पादितमेव शतदूषण्याम् । एवंस्थिते यत् किञ्चित् शतभूषण्यामुक्तम् । तद् विमृशेम—

उदाहृतब्रह्मसिद्धौ तावत्—स्वरूपचैतन्यस्याविद्याविरोधित्वं नास्ति, विरोधित्वे जगदभावापत्तेः, अन्यत्तु आगन्तुकमविद्याविरोधि न ब्रह्मणः

किञ्चिदिति प्रश्न उपक्षिप्तः। अत्र स्वरूपचैतन्यस्याविद्याश्रयत्वं न भवति, स्वप्रकाशकस्य स्वाविद्यावत्त्वायोगादित्याशङ्कापि निगूढा। अथ समाधिः—जीवा एवाविद्याश्रयाः स्वभावतः, तेषामागन्तुकं ज्ञानमविद्यानिवर्तकम्। जीवब्रह्मणोरभेदेऽपि बिम्बप्रतिबिम्बवत् व्यवस्थेति। अत्र स्वप्रकाशस्य ब्रह्मणः स्वविषये अज्ञानासंभवेपि जीवानां ब्रह्मविषयमज्ञानं भवितुमर्हति, तन्निवृत्तिश्च तेषूत्पन्नात् ज्ञानान्तरात् वृत्तिरूपात्। जीवानां प्रतिबिम्बतुल्यतयोपपद्यत एवाज्ञानाश्रयत्वमिति विवक्षितम्। अत्रोच्यते—वास्तवबिम्बप्रतिबिम्बभावः, नीरूपे न संभवतीत्यादिहेतुना भवद्भिरेव नेष्टः। अत एव बिम्बवदिति वतिप्रयोगोऽप्यत्र। प्रतिबिम्बतौल्यमपि नास्ति। लोके प्रतिबिम्बाश्रयत्वं जलादेरेव दृष्टम्, न तु जलाद्याश्रयत्वं प्रतिबिम्बस्य, इह चाविद्यायां प्रतिबिम्बवत् स्थितो जीवोऽविद्याया आश्रय इति विपरीतम्। प्रतिबिम्बत्वास्वीकारे चाविद्यावच्छिन्नचैतन्यं जीव इत्येव वक्तव्यम्। किमिदमवच्छिन्नत्वम्—आश्रयत्वमिति चेत्—तर्हि चैतन्यस्याविद्याश्रयत्वं न भवतीति कथम्; तत्पक्ष एव पर्यवसानात्। अवच्छिन्नचैतन्यस्य च शुद्धचैतन्यव्यक्त्यनतिरिक्ततया प्रकाशमानचैतन्यांशविषये अविद्या दुर्वचा। तस्मात् अविद्यायाश्च विद्यैव विरोधिनीति शुद्धवृत्तिमात्रं न विरोधित्वेन स्वीकर्तुं युक्तम्। अविद्यया अप्रकाश आयातः, वृत्त्या प्रकाशो जन्यत इति च न वक्तुं शक्यते, अप्रकाशो ह्ययमिष्यमाणो न विशिष्टजीवविषये; किंतु शुद्धचैतन्यविषये। तस्य न कदापि प्रकाशहानिः। वृत्तेश्च न प्रकाशजनकत्वम्; जडत्वात्। आवरणनिवृत्तिमात्रं वृत्तिकार्यमिति चेन्न—आवरणनिवृत्तिर्नाम अप्रकाशनिवृत्तिः; अप्रकाश एव कथमिति पृच्छ्यमानत्वात्। अविद्यारूपवस्तुनिवृत्तिर्वृत्तिकार्येति चेत्—यद्विषयिणी अविद्या, तद्विषयकवृत्त्या तन्नाशः। अत्र विषयः कः। चैतन्यगतमद्वितीयत्वं विषय इति चेत्—तस्य वृत्तिप्रकाश्यत्वं कथम्—वृत्तेर्जडत्वात्। वृत्त्यवच्छिन्नचैतन्यप्रकाश्यं तदिति चेत्—न—घटाद्याकारवृत्तौ तदभावात् अद्वितीयत्वाकारवृत्त्यवच्छिन्नचैतन्यमिति वक्तव्यत्वात् वृत्तेः स्वयं निर्विषयत्वेन अद्वितीयत्वाकारतायास्तत्रासंभवात्। वृत्तिजायमानदशायामेव स्वावच्छिन्न-

चैतन्यबलादद्वितीयत्वाकारा भवतीति चेत्—अद्वितीयत्वं वृत्तौ सत्यां चैतन्य-भास्यमित्यायातम्। तर्हि घटवृत्तिकालेऽपि चैतन्यभास्यं तदस्तु—घटवृत्तेस्त-दाकारत्वं नास्तीति चेत्—न; वृत्तेराकारो दुर्वच इत्येवोच्यमानत्वात्। ननु कस्य चिद् वृत्त्यवच्छिन्नचैतन्यस्य किञ्चिद्विषयकत्वं स्वभावः सामग्रीबलसिद्धः। तत्र किं चोद्यमिति चेत्—अस्त्विदम्। अद्वितीयत्वं चैतन्यादन्यत् अनन्यद्वा। अनन्यत्वे वृत्त्यभावेऽपि स्वरूपप्रकाशेनाद्वितीयत्वस्य प्रकाशमानत्वादविद्यैव न भवेत्। अन्यत्वे अतत्त्वविषयकेण वृत्त्यवच्छिन्नचैतन्येन तत्त्वविषयकाविद्या-निवृत्तिर्न युज्यते। अविद्याऽप्यतत्त्वविषयिणीति चेत्—तन्निवर्तनप्रयासोऽनपे-क्षितः। न खलु रज्जुज्ञानिनः रज्जुसर्पभूदलनाम्बुधारादिविषयकाविद्याः सहस्रशः सन्तीति तन्निवृत्त्यर्थं प्रयस्यते। स्वरूपात्मकः प्रकाशो न विरोधी; वृत्तिरेव विरोधिनीति तु हठवादः; वृत्तेश्चैतन्यमुखेनैव प्रकाशकताया वक्तव्यत्वात् वृत्तिनिरपेक्षमेव प्रकाशे सति तदपेक्षणायोगात्। यत्तु सिद्धान्तलेशसंग्रहोक्तम् सूर्य प्रकाशस्यैव सूर्यकान्तसंसर्गेण दाहकत्ववत् वृत्तिसंसर्गेण चैतन्यस्याविद्या-निवर्तकत्वमिति—तन्न—सूर्यकान्तस्य सूर्यकिरणगताग्न्यंशाविर्भावकत्ववत् अत्र निर्विशेषे विशेषस्य दुर्वचत्वात्। अतएवेष्टसिद्धिरपि निरस्ता। एवमद्वितीयत्वस्य ब्रह्मनिष्ठत्वेनैव वृत्त्यवच्छिन्नचैतन्येन ग्राह्यत्वात् चैतन्यस्यापि चैतन्यविषयत्वं फलव्याप्यत्वमायातमिति दृश्यत्वात् ब्रह्मापि मिथ्या भवेत्।

एवं चैतन्यस्य सर्वदैवान्तःकरणसंनिकृष्टत्वात् अद्वितीयत्वस्य च चैतन्यधर्मत्वात् धर्म्याकारवृत्त्यवच्छिन्नचैतन्यातिरिक्तस्य धर्माकारवृत्त्यवच्छिन्न-चैतन्यस्य दुर्वचतया चैतन्यप्रकाश एवाद्वितीयत्वविशिष्टप्रकाशः स्यात्। तथा अद्वितीयत्वविशिष्ट धर्म्याकारवृत्त्यवच्छिन्नचैतन्यं शब्दतोऽन्यतो वा जायमानं सर्वं भवन्मते संनिकर्षात् प्रत्यक्षरूपमेवेति श्रवणकाल एव सर्वप्रपञ्चनिवृत्त्या भाव्य-मिति न मननिदिध्यासनादेः प्रसक्तिः।

आदिमात् तत्त्वविज्ञानादनिवृत्तं जगद् यदि।
पश्चाच्च न निवर्तेत सत्यत्वं तस्य तद् ध्रुवम्॥

एवं जीवशुद्धचैतन्ययोरभेदात् शुद्धचैतन्यस्येव जीवस्यापि स्वप्रकाशत्वात् स्वप्रकाशवस्तुविषये अविद्याया दुर्वचत्वात् वस्त्वन्तरविषये अविद्यावर्णने च तस्य मिथ्यात्वेन मिथ्यावस्तुविषयकत्वस्याविद्यायामापत्तेः मिथ्यावस्तुविषयकाविद्यायाश्चानिवर्तनीयत्वात् किमपि वृत्तिज्ञानं तत्त्वविषयकं जगन्निवर्तकं दुर्वचमित्युपपादितत्वात्, "नेतिनेतीति निषेधमुखेन सर्वप्रपञ्चमिथ्यात्वज्ञानमपि, अखण्डाकारवृत्तिरिवाज्ञाननिर्वर्तकम्, अखण्डाकारवृत्तिमात्रोपहितचैतन्यरूपं वा ज्ञानमिति वस्तुस्थितिः" इत्युक्तमुदस्तं सिद्धम्। वृत्त्युपहितचैतन्यमित्यस्य वृत्तिप्रतिफलितचैतन्यमित्यर्थो वा वृत्त्युपलक्षितचैतन्यमिति वा, वृत्तिविशिष्टचैतन्यमिति वा, वृत्तिसमकालिकचैतन्यमिति वा। प्रतिफलनस्य भवदनिष्टत्वान्नाद्यः। अखण्डाकारत्वं वृत्तौ दुर्वचमिति प्रागेवोक्तम्। यदि वृत्तेः सविषयत्वम्, तर्हि विषयत्वविशिष्टचैतन्यमित्येवोच्यताम्, किं वेष्टनेन। द्वितीयं तु न; वृत्तेः पूर्वं वा पश्चाद् वा कदापि चैतन्यस्य प्रपञ्चनिवर्तकत्वे हि उपलक्षितत्वं घटते। वृत्तेर्निवर्तकतावच्छेदकत्ववारणार्थमुपलक्षितेरयुक्तमिति चेत्, तर्हि किं वृत्तेः पृथक्कारणता? तर्हि वृत्तिचैतन्योभयं निवर्तकमित्युच्यताम्। तदनिष्टौ चोपलक्षितत्वोक्तिः सर्वथा वृत्तेरनपेक्षणीयतामेवापादयेत्। एतेन तृतीयचतुर्थयोरपि निरासः। तथा वृत्तेः स्वप्रकाशस्य च समानविषयकत्वे वृत्तिरेव निवर्तिका, न स्वप्रकाश इति वादो हठवादः स्वसिद्धान्तस्थापनश्रद्धामूलकल्पनाविलसितः। एवञ्चैषां मते दुर्घटत्वं न केवलमविद्यामात्रस्य, किं तु निर्गुणब्रह्मणः, निवर्तकवृत्तिज्ञानस्य चेत्येवं भाव्यम्।

यत्तु 'स्वरूपात्मकब्रह्मप्रकाशस्याज्ञानानिवर्तकत्वे वृत्तिरूपज्ञानस्यापि तदनिवर्तकत्वमेव, प्रकाश्यस्याविशिष्टत्वात्' इति शतदूषणीपरीक्षणायोक्तं वृत्तिज्ञानं ज्ञाताज्ञाताविभागेनाखण्डात्मज्ञानम्, स्वरूपभूतं तु ज्ञाताज्ञातविभागेन ब्रह्मप्रकाशरूपमिति भेदोऽस्तीति—तन्न—उक्तवैलक्षण्यस्य शुक्तिरूपाधिष्ठानज्ञान-शुक्तित्वविशिष्टज्ञानरूपबाधकज्ञानयोः सुवचत्वेऽपि प्रकृते वक्तुमशक्यत्वात्। तत्र ह्यधि-

ष्ठानज्ञाने शुक्तिव्यक्तिर्ज्ञाता शुक्तित्वमज्ञातमिति ज्ञाताज्ञातविभागोऽस्ति, बाधकज्ञाने चोभयं विषय इति न स विभाग इति। प्रकृते तु निर्धर्मिणि ब्रह्मणि ज्ञाताज्ञातांशविभाग एव दुर्वच इति वृत्तिस्वरूपयोः साम्यमेव। न हि सूर्यप्रकाशः सहजो न तमोनिवर्तकः, किन्तु उपरागापसरणाधीन एवेति सुवचम्। यदि च वृत्तिज्ञानस्य द्वितीयाभावाद्ब्रह्मव्यतिरिक्तविषयकत्वादेव निवर्तकत्वमित्युच्यते, तर्ह्यतत्त्वज्ञानं निवर्तकमित्यायातम्। पुनः सप्रपञ्चत्वरूपज्ञानान्तरेण चास्यातत्त्वस्य निवृत्तिरिति न मुक्तिसिद्धिः। कथं द्वितीयाभावज्ञानेन सर्वनिवृत्तौ द्वितीयाभावमात्रपरिशेषे जीवादेरभावात् सप्रपञ्चत्वज्ञानोदय इति चेत्—द्वितीयाभावे ब्रह्मातिरिक्ते विद्यमाने द्वितीयस्यैव सत्त्वात् द्वितीयाभावः कथमित्याशङ्कायां द्वितीयाभावस्य काल्पनिकत्वान्न दोष इति परिहारे जाते, अभावकाल्पनिकत्वस्य भावसत्यतासंपादकत्वात् द्वितीये सत्ये सत्येव द्वितीयाभावकाल्पनिकत्वनिर्वाहसंभवात् प्रतीतस्य प्रपञ्चसत्यत्वस्य तदर्थं बाधानावश्यकत्वाच्च द्वितीयः प्रपञ्चः सत्य एवेति ब्रह्मण्यद्वितीयत्वपरिशीलनदशायामेव निर्णयसंभवात् तन्मूलकाल्पनिकाद्वितीयत्वाकारापरोक्ष्यस्य प्रपञ्चनिवर्तकत्वस्यैवाभावात् पुनः सप्रपञ्चत्वनिश्चयप्रादुर्भावात्। एवम्भूताद्वितीयत्वापरोक्ष्यस्य किं फलमिति चेत्—प्रपञ्चनिवृत्त्या वा संपादितया किं फलम्। सत्यपि प्रपञ्चे ईश्वरवत्, 'न कर्मणा वर्धते नो कनीयान्' इति स्थितिसंपादकशक्त्याविर्भावसंभवात्। अद्वैतमते वस्तुतः प्रपञ्चस्य वा बन्धस्य वाऽभावेनात्मन इदानीमपि मुक्ततया अपरोक्षवृत्तिनैष्फल्यस्य प्रागेव दर्शितत्वात् तैः फलप्रश्नकरणासंभवात्। अथवा सन्ति हि शिरश्छेदादयुग्रतपोनिष्ठेष्वविलम्बं प्रसीदन्तो देवाः। तथा सर्वस्य प्रपञ्चस्य स्वात्मनोऽपि विलापनेनात्मैकनिष्ठमेनं चेतनमवलोक्य कारुणिकः परमात्मा प्रसन्नः क्रमशो वास्तवतत्त्वज्ञानमाविर्भावयति वैराग्यतृप्तः सन्नित्यस्तु; अस्तु वा शान्त्यादिकमेव फलमिति किं तेन।

सर्वमिदं वृत्तिज्ञानस्याधिकविषयकत्ववादमनुरुध्य। अत्र च पक्षे तत्त्वमस्याद्यर्थज्ञानस्य मोक्षहेतुत्वं न स्यात्। तथाच स्वरूपमात्रविषयकवृत्ति-

रेवाखण्डाकारवृत्तिरित्येष्टव्यमिति तदा वृत्तेर्नाज्ञाननिवर्तनसामर्थ्यम् । वृत्तेर्ब्रह्मस्वरूपविषयकत्वप्रयुक्तञ्चेदज्ञाननिवर्तकत्वम्, तर्ह्येष दोषः । वृत्तित्वादेव तस्यास्तन्निवर्तकत्वमिष्यते इति चेत्—न तर्हि तत्त्वमिथ्यार्थसंकथाया इहावसरोऽस्ति । तथाच, "विरोधिप्रकाशातिरिक्तवृत्तित्वाद्याकारबाध्यत्वेन मुद्गरादिनिवर्त्यसत्यसर्पघटादेरिव प्रपञ्चस्यापि सत्यत्वप्रसङ्गात्" इति शतदूषणीदूषणादनिर्मोक्ष एव । एवञ्च भावरूपाज्ञानकल्पनाऽपि वृथा । मूलप्रकृतिकार्यप्रपञ्चस्य सर्वस्य वृत्तिवैभवत एव विलयसंभवात् । एतद्दोषपरिहाराय वस्तुप्रकाशत्वेनैव वृत्तेर्विरोधित्वे स्वरूपप्रकाशस्यापि तदक्षतं स्यात् । ज्ञाताज्ञातविभागाविभागचिन्ता चात्र न पदं धत्त इति प्रतिबोधितम् । शतभूषणी च, "न हि भ्रमज्ञानं भ्रमज्ञानान्तरेण बाध्यते" इति लिखन्ती, शुक्तिज्ञानस्याखण्डाकारत्वमौपचारिकम्, ब्रह्मज्ञानस्य त्वखण्डाकारत्वं मुख्यम्, सत्त्वचित्त्वानन्दत्वादीनामपि प्रपञ्चस्येव मिथ्यात्वादिति शुक्तिज्ञानब्रह्मज्ञानयोर्वैषम्यं बहुप्रकारेणोपपादयन्ती च जगद्बाधकत्वेनाद्वैत्युपवर्णितं सर्वं ज्ञानमबाधकमित्येव भङ्ग्यन्तरेण दर्शयतीत्यवधेयम् ।

वृत्तिज्ञानस्य वृत्तित्वेन बाधकत्वे मुद्गरहन्यमानस्य घटस्येव जगतः सत्यत्वापत्तिरिति शतदूषणीप्रतिविवक्षया यत् लिख्यते, न वृत्तेर्वृत्तित्वेन बाधकत्वम्, किंतु प्रमाणजन्यत्वेनेति—तत् अपरामर्शकृतम्—लोके तत्त्वज्ञानस्य मिथ्यानिवर्तकत्वं तत्त्वप्रकाशकत्वप्रयुक्तमेव दृष्टमिति तद्रीत्यनुसारे स्वरूपप्रकाशस्यापि बाधकत्वापत्तिरिति मत्वा लोकरीतिमुपेक्ष्य असंप्रतिपन्नस्वरूपज्ञानवृत्तिज्ञानरूपविभागं विधाय वृत्तित्वेन वा प्रमाणजन्यत्वेन वाऽन्येन वा केनचिदाकारेण निवर्तकत्ववर्णने जगतः सत्यत्वापत्तिरपरिहार्येति ह्याक्षेपाभिप्रायः । अत एव वृत्तित्वादीति आदिपदं तत्र प्रयुक्तमस्ति । न च सर्वत्र वृत्तिरेव बाधिकेति सुवचम् । साक्षिभास्यसुखादिस्थले वृत्त्यभावस्यापि केषाञ्चिदिष्टत्वात् । सर्वज्ञस्य यत् सर्वव्यापिचैतन्यात्मस्वरूपाधीनमाविद्यकसर्वभानम्, तेन प्रतिभासिकाद्यनुत्पादस्य संमततया प्रमाणजन्यवृत्तेरेव विरोधित्वमित्यस्या-

भावाच्च। यत्र चक्षुःसन्निकर्षकाले स्थितो घटो नाशकारणोपनिपातात् घट-प्रत्यक्षकाले नष्टः, तत्र घटवद्भूतलमिति प्रत्यक्षस्य प्रमाणजन्यत्वेऽपि भ्रमत्वेन प्रमाणजन्यत्वमात्रस्य प्रयोजकत्वायोगाच्च। अतो बाधकत्वाभिमतांशप्रकाश एव बाधकतायां प्रयोजकः। स स्वरूपज्ञानेऽपि तुल्य इति। सर्वमिदमखण्डा-कारवृत्तिज्ञानेनाखिलप्रपञ्चनिवृत्तिर्भविष्यतीति भवदाशामोदकस्याप्यशनायाशाम-कत्वकृत्वाचिन्तया। ईदृशवृत्तिज्ञानेनेश्वरस्यापि विलापनप्रवृत्तेन प्रपञ्चप्रपञ्चन-मेव करिष्यत इति सत्यजगन्निवृत्तिप्रसक्त्यभावान्नास्य निवर्तकत्वकथापि। अवि-द्योपहितं चैतन्यं बाधकमिति शतदूषण्यामविकल्पनात् तद्दूषणमनुक्तोपालम्भः। अविद्याशबलपदघटितवाक्यस्य ह्ययमर्थः,---वृत्तेः शुद्धब्रह्मविषयकत्वे स्वरूप-प्रकाशतौल्यं स्यादित्यविद्याशबलविषयकत्वरूपद्वितीयपक्षाङ्गीकारे इति। अतो वृत्तिप्रस्तावघट्टे अविद्योपहितचैतन्यस्य बाधकज्ञानरूपत्ववर्णनाप्रसक्त्या अबद्धं कृत्वा किमपि विलिख्य, "इदं तु सौहार्दमात्रेणोद्बोधितम्" इत्यधिक-प्रसंगविधानमयुक्तम्—भवन्मूलवेदनीयस्याद्वैतपरमरहस्यस्य कस्याप्यभावात्। साम्प्रतं त्वस्माभिरेव शतदूषण्यर्थः सौहार्दात् सहजात् प्रतिबोधित इति ध्येयम्। एवं वृत्तिज्ञानं प्रपञ्चनिवर्तकं न भवति प्रपञ्चसमसत्ताकत्वात्। व्यतिरेकेण शुक्त्यादिज्ञानमप्युदाहरणम्। शुक्तिरजतादिकं प्रातिभासिकं प्रति शुक्तिज्ञानादेः व्यावहारिकस्यैव निवर्तकत्वादिति।

अथाखण्डाकारज्ञानस्येव जगन्मिथ्यात्वज्ञानस्यापि बाधकत्वं वर्णयति शतभूषणी। इदं तु बहुल प्रागेव परिशीलितम्। अत्रापि किञ्चिदुच्यते— जगन्मिथ्यात्वज्ञानं किमाकारम्? कदाचित्तदभावज्ञानस्य मिथ्यात्वासाधक-त्वात् सर्वदा जगन्नास्तीति ज्ञानमिति वक्तव्यम्--तदपि न तत्साधकम्। जले सर्वदा गन्धो नास्तीत्यस्य गन्धमिथ्यात्वासाधकत्वात्। एकत्र स्थित-स्यान्यत्र सार्वकालिकाभावस्येष्टत्वात्। सर्वदेशावच्छिन्नसर्वकालवृत्त्यभावप्र-तियोगित्वं मिथ्यात्वमित्यपि न; जगदभावकाले सर्वदेशाप्रसिद्धेः। ब्रह्मनिष्ठसार्व-कालिकाभावप्रतियोगित्वमिति चेत् - तावता ब्रह्मणोऽनाधारत्वं सिद्ध्ये-

येत् ; न जगदभावनियमः । ब्रह्मानिरूपिताधेयताशून्यत्वे सति ब्रह्मनिष्ठाभावप्रतियोगित्वमिति चेत् - तर्हि अनाधेयमेव स्यात् । स्वसत्ताव्यापकब्रह्मनिरूपिताधेयताकत्वे सति ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वं तत् । जगत् यावदस्ति, तावत् ब्रह्म प्रति आधेयमेव ; अथापि वस्तुतो नास्तीति चेत् - न - आधेयतायाः सार्वकालिकाभावप्रतियोगितायाश्च विरोधात् । आधेयता कल्पिता, अभावश्च पारमार्थिक इति न विरोध इति चेत् - अभावश्च ब्रह्म चेति अनेकपरमार्थापत्तिः । अनिर्वचनीयास्वीकारात् कल्पिताधेयतावत्त्वाद्युपपादनायोगश्च । ब्रह्म च तत्तद्वस्त्वभावश्चेत्यनेकपरमार्थापत्तिश्च । ब्रह्मव्यतिरिक्तं मिथ्येति सर्वमिथ्यात्वक्रोडीकारादेकपरमार्थसिद्धिरिति चेत् - कथं तर्हि अभावः पारमार्थिकः। एवं मिथ्यात्वमिथ्यात्वं ततो न सिद्ध्येदिति प्रागेवोपपादितम् । "मिथ्यात्वस्य च मिथ्यात्वे" इति कारिकार्थश्च प्रागेव प्रत्यपादि ।

यत्तु गोत्वाश्वत्वयोर्मध्ये गोत्वस्यारोपितत्वे अश्वत्वस्य सत्यत्वमिति यथा न नियमः, तथा मिथ्यात्वमिथ्यात्वमात्रेण न सत्यत्वसिद्धिरिति - तन्न - वस्तुनि मिथ्यात्वमिथ्यात्वं नाम मिथ्यात्वाभावः । स च सत्यत्वञ्चेति द्वौ धर्मौ समनियतौ । नैवं गोत्वाभावस्याश्वत्वस्य च समनैयत्यम् । अतः 'परस्परविरोधे च न प्रकारान्तरस्थिति'रिति न्यायोऽप्यक्षतः । यत्तु एकाभावे अन्यसत्त्वनियमो भिन्नसत्ताकधर्मविषय इति - तन्न - सत्तावैविध्यस्य स्वमतवासनागोचरस्य परं प्रति व्यवहारेऽनुपादेयत्वात् । भिन्नसत्ताकविरुद्धधर्मविषय एवैकमिथ्यात्वे अन्यसत्यत्वमित्यपि न - गोत्वतदभावयोर्विरुद्धयोः स्वस्वाधिकरणे स्थितयोः सत्यत्वेन समसत्ताकयोरेवैकतरस्य क्वचिन्मिथ्यात्वे अन्यतरसत्यत्वध्रौव्यात् । प्रपञ्चमिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चमिथ्यात्वमपि भवेत् - प्रपञ्चतदभावयोर्व्यावहारिकत्वादित्यप्ययुक्तम् । अव्यावहारिकं सत्यम्, व्यावहारिकं मिथ्येति नियमस्यासिद्धेः । तथासति निरुपाख्यशशविषाणादेः सत्यत्वं स्यात् । प्रपञ्चाभावश्च न व्यावहारिकः ; व्यवहारस्य ज्ञानाधीनत्वात्, प्रपञ्चान्तर्गतद्रष्ट्रादिसद्भावे प्रपञ्चाभावज्ञानायोगात् । प्रपञ्चकाल एव प्रपञ्चाभावोऽपि परमार्थतो-

ऽस्तीति चेत्, न तर्हि अभावस्य मिथ्यात्वम्। शतदूषण्याञ्च वन्ध्यासुत-तन्मरणोभयमिथ्यात्ववत् एतदुभयं मिथ्या भवत्वित्याशङ्क्य परिहारः कृत इहानुसंधेयः। अयं भावः-मरणं हि नाम पूर्वकालावच्छिन्नदेहप्राणादिसंबन्धस्योत्तरकालेऽभावः। तत्र विशेषणमिथ्यात्वात् विशिष्टस्य मिथ्यात्वम्। अत्र तु न स न्यायः उभयोर्धर्मयोर्वैषम्यात्।

वन्ध्याजमृतिमिथ्यात्वं वन्ध्याजे तस्य पोषकम्।
मिथ्यात्वस्य तु मिथ्यात्वं धर्मिमिथ्यात्वबाधकम्॥

प्रपञ्चमिथ्यात्वं सत्यं ब्रह्मरूपमिति नाद्वैतहानिरित्यप्ययुक्तम्। तर्हि ब्रह्मणः प्रकाशमानत्वात् प्रपञ्चप्रतीत्यभावप्रसंगात्।

यस्मिन् प्रकाशमाने तु यदारोपो न संभवेत्।
तस्य तद्रूपावृत्तिरूपत्वमित्येव नियन्त्रणा॥

अनावृतवृत्त्युपहितब्रह्मविषयं ज्ञानं प्रमाणजन्यं बाधकमित्यपि न सत् - वृत्तिपदेनास्यैव प्रमाणजन्यज्ञानस्य विवक्षणे वृत्त्युपहितेति निवेशस्य व्यर्थत्वात्। अमिथ्याभूताखण्डब्रह्मविषयकत्वस्यैव वृत्तौ संमतत्वेन तद्विशेषणप्रवेशो भ्रमापादको नैव युक्तः। ब्रह्मणोऽनावृतत्वमपि न तदा। आवरणस्य वृत्तिनाश्यत्वात् वृत्त्युत्पत्तिक्षणे अनावृतत्वायोगात्। तथाच ब्रह्मप्रकाशः स्वरूपात्मक इव वृत्तिरपि आवृतविषयिण्येव। पश्चादेव त्वनावृतत्वम्। किञ्च पूर्वप्रकाशस्य आवृताकारब्रह्मविषयकत्वं दुर्वचमित्यप्युक्तमेव। आवरणीयस्याकारस्य कस्यचिदभावात्। स्वरूपस्य प्रकाशमानत्वादेवावरणायोगात्। आनन्दत्वादिकाल्पनिकाकारभाने मिथ्याविषयकत्वं स्यादिति भवता तत्त्यागात्। यत्तु प्रपञ्चमिथ्यात्वग्रहो बाधकज्ञानफलम्, न तु तदेव बाधकज्ञानमिति - तदपि न; बाधकज्ञानानन्तरक्षणे सर्वनिवृत्तेरावश्यकतया मिथ्यात्वग्रहोत्पत्त्ययोगात्। निदिध्यासनपरिपाकलब्धापरोक्षसाक्षात्कार एवाविद्यानिवर्तक इति च कुतः;

अपरोक्षवत् परोक्षस्यापि निवर्तकत्वसंभवात् । द्विचन्द्रादिप्रत्यक्षानुवृत्तिस्तु दोषस्यानिवृत्तत्वात्'। इह दोषोऽप्यज्ञानं परोक्षवृत्त्या निवर्त्यमिति न कथमपि प्रपञ्चभानप्रसक्तिः ।

परोक्षज्ञानस्याप्रामाण्यास्कन्दितत्वे च तदधीनमपरोक्षमपि तद्वासनावशात तथैव स्यात् । वेदवाक्यजन्ये निश्चये अप्रामाण्यज्ञानमास्तिकस्य न भवितुमर्हति । तथा दशमस्त्वमसीत्यत्रेव तत्वमसीत्यत्र प्रथमज्ञानमेव साक्षात्काररूपं भवतामिष्टम् । विषयवैलक्षण्यं तु न मात्रयापीति यतः प्रथमज्ञानं न निवर्तयति, अतोऽन्तिममप्यविशेषादनिवर्तकमेव । अभिन्ननिमित्तोपादानं ब्रह्म नानुमानमात्रेण सिद्ध्यतीति सत्यम् । निर्विशेषब्रह्मसिद्धौ तु का कथेति कथनं तु न घटते । किमनुमानसामान्यं सविशेषविषयकमिति स्वीकृत्यैवमुच्यते, किं वा निर्विशेषविषयकं भवदप्यप्रतिष्ठितमिति । आद्यं यद्यप्यस्मत्संमतम्, अथापि प्रमाणसामान्यस्येयमेव गतिरिति सर्वथा निर्विशेषासिद्धिरेव । अन्त्ये, यस्यानुमातुरप्रतिष्ठा नासीत्, तस्य तावन्मात्रेण मुक्तिरस्तु । भवन्ति हि केचित् वेदमप्यप्रमाणमाकलयन्तः स्वबुद्धिनिर्भातमनुमानमेव सर्वोत्कृष्टं घोषयन्तः। एवञ्चापशूद्राधिकरणविरोध एव। "जीवन्मुक्तानामपि विधिनिषेधोल्लङ्घनं दोषायेति तत्रतत्र व्यक्तम्" इति भवद्वाक्यं निर्विवादं भवदीयसर्वाभ्युपेतं चेत्—अस्तु शिलालिखितम् । उपदेश्याः शूद्रा अपि भवितुमर्हन्ति । अनुमानाधीननिर्विशेषनिर्णयेन तदर्थस्योपदेशसंभवात् । तावन्मात्रे विश्वासिनां तत एव बन्धनिवृत्तिसंभवात् ।

यत्तु शूद्राणां ब्रह्मविद्यायामनधिकारे कथं द्राविडप्रबन्धमुखेन शूद्राणामात्मतत्त्वोपदेशादीति—तत् किमेवंरीत्या शूद्रं प्रत्युपदेशादिकमद्वैतिपक्षेऽप्यस्तु इत्याशयेन, उतास्मत्पक्षे दोषोद्भावनमात्रबुद्ध्या। आद्ये अपसिद्धान्तः। अन्त्यस्तु न। न हि वयमुपनिषदादिचोदितं भक्तियोगं ज्ञानयोगं कर्मयोगं वा, अयमित्थमनुष्ठेय इति द्राविडादिप्रबन्धमुखेन शूद्रान् प्रति बोधयामः । किंतु सत्याहिंसादिवत् यत् सर्वसाधारणं भवितुमर्हति ज्ञानम्, तदेव भगवत्स्तोत्ररूपैर्दिव्यप्रबन्धैस्तेषा-

मुत्पादयामः । भवन्मते निर्विशेषे विषयभेदाभावान्न व्यवस्थेत्यलम् । पञ्च-संस्कारादिना तेषां शूद्रत्वमपगच्छतीति नास्माभिरुच्यते ; पाशुपताधिकरणे श्रीभाष्य एव तन्निन्दनादिति न सांकर्यलेशस्यापि प्रसक्तिः । जगन्मिथ्यात्व-वादिभवन्मत एव तु वर्णाश्रमपुण्यापुण्यादिसर्वमिथ्यात्वाध्यवसाये जाते यो यावत्यंशे मिथ्यात्वधियं सोपपत्तिकमावर्तयिष्यति, तस्य तावदंशबाधस्यावश्य-कत्वात् सर्वाऽपि व्यवस्था न स्थास्यतीत्यन्यत्र विस्तरः ।

अपि च निवर्तकज्ञानस्य न सर्वनिवर्तकत्वम्, स्वनिवर्तकत्वायोगात् । 'ब्रह्मव्यतिरिक्तत्वाकारेण स्वस्यापि क्रोडीकार्यतया स्वनिवर्तकत्वमपि भवति, शब्दशब्देन स्वग्रहणवत्' इति चेन्न—वैषम्यात् । बाधकस्य स्वकाले कार्यविघटकत्वात् बाधज्ञानवत् बाधज्ञानसामग्र्या अपि कार्योत्पत्तिविरोधि-त्वेन निवर्तकज्ञानसामग्र्या एव निवर्तकज्ञानोत्पत्तिविरोधित्वापत्तेः । 'वह्नेर्दाह्यं विनाश्य अनुविनाशवत् तद्विनाश' इति चायुक्तम् । इन्धनाद्यभावादन्यवह्न्य-नुत्पत्तेः स्थितवह्निविनाशस्य च विशरणहेतुबलायत्तत्वात् स्वमात्राजन्यत्वात् । इतश्च निवर्तकत्वमनुपपन्नम्—

निवर्तकनिवर्त्याश्चेत् प्रपञ्चार्थनिवृत्तयः ।
अनवस्था ; न चेत् ताः स्युस्तन्मूलाविद्यया सह ॥

क्रमिकत्वान्निवृत्तीनामाद्यपक्षेऽप्यविद्यया ।
भाव्यम् ; निवृत्तिश्चेद् ब्रह्म कथं तत् जन्यते धिया ॥

अनन्तरवादान्ते चैतद्विशदं भविष्यति ।

प्राप्ते तत्त्वप्रकाशे निखिलमपि निवर्त्येत मिथ्येति क्लृप्तम्
लोके वृत्तिव्यपेक्षा पुनरतदुदये बाधकार्थाप्रकाशात् ।
वृत्तिं वेदैकलभ्यां श्रवणमनननिध्यानपारम्परीजाम्
भानात्मब्रह्म कांक्षेत् यदि भवशमने, स्यात् भवः सत्य एषः ॥

शुभमस्तु

श्रीः

# निवृत्त्यनुपपत्तिप्रसाधनम्

यन्माया विलयं न याति यमिमं तेते प्रपद्याञ्जसा
मायासंतरणेन यान्ति परमं स्थानं निवृत्त्युज्झितम् ।
नित्यानित्यसमस्तलोकनिलयप्रख्यातसूरिस्तुतो
यद्भूमैष गुणैकधाम जयतु श्रीधाम दामोदरः ॥

अत्र वादे शतभूषण्यामौद्धत्यनिर्भराणि वाक्यान्यधिकानीत्ययमेव विशेषः । 'यदा च भवदभिमता सदसद्विलक्षणे'त्यादि एतद्वादान्तशतदूषणीवाक्यं तु न कञ्चिदद्वैतिनं निन्दति; न कुत्राप्याक्रोशमपि प्रदर्शयति । अपि-त्ववलीलयैवाभिमतमर्थं मनस्यर्पयितुमनुरूपदृष्टान्तग्रथनमात्रम् । तावदपि निवृत्त्य-नुपपत्तिप्रदर्शनपर्यन्तभागेन प्रायः श्रीभाष्ये तन्मतसंमतसर्वांशदूषणस्य निष्पन्न-तया तदर्थोपसंजिहीर्षामात्रेण । काममेष "महत्या चूर्णिकया शतदूषणी आत्मानमेव चूर्णयति" इति धृष्टं ब्रूताम्; सर्वप्रपञ्चनिवृत्त्याशंसन इवात्राप्यनुप-पत्तय एव स्वहानिवहा इत्यलमनेन । यत्तु पञ्चमं प्रकारमिदन्तया न निर्वक्ति; अज्ञात्वैव खण्डनमित्यादि—तत् तदुपन्यस्तदूषणगणान्मोचयितुमशक्यमित्येतद-ज्ञानादिति दर्शयिष्यामः । इष्टसिद्धौ प्रथमाध्यायनवमकारिकाविवरणे, अन्तिमे चाष्टमेऽध्याये अज्ञाननिवृत्तिविषये पञ्चमप्रकारत्वाशयेन यदुपन्यस्तम्, तत् सर्वमालोच्यात्रानूदितमिति तावत् उभयग्रन्थदर्शिनां सुगमम् । तत्र पक्षचतुष्टय-निरासेन पञ्चमः परमवशेषितः । इह पुनः पक्षत्रयनिरासेन असत्पक्षे क्षणं स्थित्वा पञ्चमपक्षं प्रत्युपसर्पणं प्रादर्शि । नैतदकाण्डताण्डवम् । सर्वत्र सद-सद्वैलक्षण्यं ब्रह्मतुच्छोभयभिन्नत्वरूपमावर्तयद्भिर्भवद्भिरिह परं भावाभावविलक्षण-स्वरूपमभिमन्यते । इष्टसिद्धिरपि, "भावोऽभावो वा स्यात्—अभावश्च भावान्तरं भावान्तरधर्मो वा; न तुच्छः" इति अत्र संदर्भे अज्ञानविषये लिखति । तत्र भावाभावविलक्षणभूताज्ञानप्रत्यनीकभूता तन्निवृत्तिः

भावाभावान्यतरभूता सती भावरूपा मा भूदिति द्वैतिमतप्रवेशभिया, 'न सतीति' आदावेव खण्डितम्। अभावरूपा तु स्यान्नाम, का हानिरिति कस्यचिदद्वैतिनो हृदयम्। स चायमभावः तुच्छो वा स्यात् अर्थक्रियाकारित्वाभावरूपसाजात्यात् अन्यादृश एव वेति मन्यते। अत उभयविधदूषणमुपरि। न ह्येकस्यैव ग्रन्थस्य खण्डनं शतदूषण्या, न च प्रतिग्रन्थं नामनिर्देशपूर्वकानुवादविस्तरो वा, वृथाकालहरणविद्वेषादिति प्रागेवाब्रूम। एवं ये खल्वविद्यां भावरूपामभिमन्यन्ते, तैरवश्यमविद्यानिवृत्तिरभावरूपैव वक्तव्येति असतीति पक्षपरिशेषणं स्थाने। अथ पुनरिष्टसिद्धीष्टस्याप्यनुवाद इति।

अथ माध्यमिकतत्त्वस्येव भवन्मताविद्यानिवृत्तिपदार्थस्यापि पञ्चमप्रकारत्वकल्पनमयुक्तमिति विशदयामः। भवद्भिः सत् ब्रह्म, असत् शशविषाणम्, तदुभयविलक्षणमज्ञानमित्यास्थितम्। सदसदिति किञ्चिन्न स्वीकृतम्। मिथो व्याघातात्तथा किञ्चिद् दुर्वचमिति चोपन्यस्तम्। तथाच तथाविधस्यैव बुद्ध्यनारूढत्वे, 'न सदसती' इति तद्विलक्षणत्वेनाविद्यानिवृत्तेर्निरूपणं नैव कर्तुं शक्यम् प्रतियोगिनः विशिष्टस्याप्रसिद्धेरिति एकप्रकारविलोपात् चतुर्थप्रकारतैव कथञ्चित् स्यात्। वस्तुतश्चतुर्थताऽपि नास्ति; किंतु मिथ्यापदार्थरूपप्रकारनिविष्टैवेयम्, तथापि तत्र किञ्चिद्वैचित्र्यादवान्तरभेद इत्येव वक्तव्यम्। अतएवेष्टसिद्धिव्याख्याने ज्ञानोत्तमेन "अत्र चाज्ञाननिवृत्तेस्तादृशमेवानिर्वाच्यत्वं खण्ड्यते, यादृशमज्ञानस्य ज्ञाननिवर्त्यत्वेनानिर्वाच्यत्वम्। न तु सर्वथा वास्तवरूपेण निरूपणासहत्वम्। इतरथा मिथ्यात्वानुमानभङ्गप्रसङ्गात्" इति वदता अज्ञानस्येव तन्निवृत्तेरपि मिथ्यात्वादिकमिष्टम्। भवदुपात्तन्यायरत्नदीपावल्यपि, अज्ञाननिवृत्ते र्ज्ञानानिवर्त्यत्वेऽपि, 'नेह नास्ति किञ्चने'ति बाधगोचरत्वमनुमन्यते। सर्वमिदमभिप्रेत्यैव, "यक्षानुरूपो बलिः" इतीष्टसिद्धिकथितमेव घटयित्वाऽनूद्य दूष्यते, "न च यक्षानुरूपो बलिरितिन्यायस्यात्रावकाश" इत्यादिना।

इदमत्र बोध्यम्—अज्ञान-तच्चित्संबन्ध - जीवेश-तद्भेदानां मिथः स्वरूपभेदेऽपि तथा अज्ञानस्य तत्कार्यप्रपञ्चविस्तारस्य चानादित्वतदभावरूपवैषम्येऽपि यथा एकप्रकारेण तृतीयतया क्रोडीकारः, तथैवाविद्यानिवृत्तेरपि युक्तः। तथात्वे अन्यस्येवाध्यासिकत्वज्ञाननिवर्त्यत्वाद्यापत्तिरिति परोक्तदोषोन्मोचनाशत्तया पञ्चमप्रकारत्वमवलम्ब्यते। तदयुक्तम्, पञ्चमत्वमेव न भावतीति खल्वाक्षेपकाणामाशयः। तत् कथं तत्सिद्धवत्कारेण मोचनाभिमानः। ननु अज्ञाने अज्ञानत्वम्, तत्संबन्धादिष्वज्ञानप्रयुक्तत्वम्, प्रपञ्चे चाज्ञानकार्यत्वम्, एतदन्यतमाभावादज्ञाननिवृत्तेस्तद्बाह्यत्वमिति चेत्—अन्यतराभावरूपहेतुना किमिति तदन्तर्भावितमपि किञ्चिन्न बहिर्भाव्यताम्। अस्ति चाज्ञानसंबन्धस्येवाज्ञाननिवृत्तेरपि अज्ञानप्रतियोगिकत्वं साजात्यमन्तर्भावकम्। तथा अज्ञानाधीनत्वमपि। निवृत्तेरुपादानानपेक्षणेऽपि ध्वंसं प्रति प्रतियोगिनः कारणतया निमित्तापेक्षा दुस्त्यजा। आध्यासिकत्वे तु दोषाद्यपेक्षाऽप्यस्तीत्यन्यत्। अतोऽज्ञानाधीनत्वाविशेषात् तत्कोटयन्तर्भाव एव। अत्रायं शतदूषण्यर्थः—यक्षानुरूपो बलिरित्यनेन यद्यज्ञानस्येव कोटित्रयबहिर्भावमात्रेण साजात्यं विवक्षितम्, तर्हि एतावदुक्त एव दोषः। यदि अज्ञानं कोटित्रयविरोधि यथा, तथा तद्विरोधीदमित्येवं रूपमानुरूप्यम्, तदापि तुरीयकोटिविरोधमात्रस्य पर्याप्ततया तत्पूर्वकोटिविरोधित्वे मानाभावात् पञ्चमप्रकारत्वासिद्धिरिति। वस्तुतः अस्ति, नास्तीति प्रतीतिसिद्धकोटिद्वयानन्तर्गतस्य कस्याप्यभावात् तृतीयकोटिप्रभृतिः सर्वापि कोटिर्गगनकुसुममेवेति॥

यत्तु अज्ञाननिवृत्तेर्ज्ञाननिवर्त्यत्वं नाङ्गीक्रियते, पारमार्थिकत्वेन दुर्निरूपत्वरूपं मिथ्यात्वं त्वस्तीति—तन्न—दृश्यत्वेन हेतुना सर्वविधमिथ्यात्वस्याप्यनुमानसंभवात्। अन्यथा प्रपञ्चेऽपि ज्ञाननिवर्त्यत्वं मा सैत्सीत्। यथा हि अज्ञाननिवृत्तावपरमार्थतः सत्यामेव तदभावोऽपि वस्तुतः, नेहनानेति श्रुत्यभिमतः, तथा प्रपञ्चतत्कारणानां सद्भाव एव तदभावोपि वस्तुतोऽस्तीत्येतावतैव मिथ्यात्वम्; न तु तत्त्वज्ञानेन तन्निवृत्तिरित्यस्तु। तर्हि मुक्तावपि

प्रपञ्चानुभवः स्यादिति चेन्न—न हि स्थितं सर्वमनुभवितव्यमिति नियमोऽस्ति। कर्तुरुपकरणस्य च विलयतोऽप्यप्रकाशसंभवात्। अथवा स्यान्नाम बन्धनिवृत्तिः सगुणपरमात्मभाव एव। अतो रागद्वेषमोहाद्यभावात्सुखमयसर्वानुभवादुच्छेद्यस्य कस्याप्यभावात् प्रपञ्चस्य तत्कारणस्य तन्नियन्तृत्वादिगुणस्य सर्वस्य मिथ्याभूतस्याप्यनिवृत्ततथैव स्थितिः। हेयांशविगमेन परमात्मसायुज्यमेव फलम्। तदा चोपकरणसापेक्षदर्शनश्रवणमननादीनि सर्वसाक्षाकारिपरमात्मरूपेऽस्मिन् न संभवन्ति। अद्वैतवाक्यं सर्वं पारमार्थिकैक्यपरम्, अनादिमिथ्यापदार्थवत् अनन्तस्यापि तस्याज्ञाननिवृत्तेरिव स्वीकारसंभवात्। यदि तु दृश्यत्वे ज्ञाननिवर्त्यत्वमावश्यकमिति मन्यते, तर्हि अविद्यानिवृत्तेरपि तदस्तु।

अपिचाविद्यानिवृत्तिर्न बाध्या अनुभवितुरभावात्; अतएव नाभावप्रतियोगिनी, बाधाविषयत्वादिति तस्याः सत्यत्वमेवास्तु। कथं मिथ्याप्रतियोगिकनिवृत्तेः सत्यत्वमिति चेत्—प्रातिभासिकरजतनिवृत्तेः प्रातिभासिकसत्ताविलक्षणसत्ताकत्वमेव ह्युचितम्। अन्यथा अविद्यामिथ्यात्वं वा त्याज्यम्; न तु निवृत्तिसत्यत्वम्। बाध्यत्वस्वीकारे तु प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपबाध्यत्वोपपादनाय उपाधौ अज्ञाननिवृत्तिमत्त्वेनानुभवोऽपि निवृत्तिसमसामयिकोऽपेक्षितः। निवृत्तिकाले च साक्ष्येवान्तःकरणोपहितमविद्योपहितञ्च नास्तीति कथं तत्साक्षिभास्यता। अकल्पनाविषयस्य च निवृत्तेः पूर्वं भवेदित्युत्प्रेक्ष्यमाणाया अप्यनुभवदूरत्वादसत्त्वमेव वा, पारमार्थिकसत्त्वमेव वा। परमार्थस्य प्रतीतिप्राणत्वाभावात्। एवं निवृत्तेर्बाध्यत्वे जन्यत्वे च सति दोषजन्यत्वं सजातीयसंस्कारोद्बोधादिकारणापेक्षत्वमपि स्यात्। तदभावात् किमपि मिथ्यात्वं मा भूत्। यत्तु - दृश्यत्वेन मिथ्यात्वविशेषस्याज्ञाननिवृत्तिव्यावृत्तस्य साधने अज्ञाननिवृत्तौ व्यभिचारवारणायैतद्भिन्नत्वनिवेशोऽपि हेतौ सिद्धीष्ट इति—तदपेशलम्—तद्भिन्नत्वं विशेषणमिति कृत्वा व्यभिचारपरिहारे तेन तेन स्वस्वाभिमतसाधनस्यानायासेन संपाद्यत्वापत्तेः। तस्मात् सर्वविधमिथ्यात्वं वेष्यताम्; सर्वं त्यज्यतां

वा । किञ्चाज्ञाननिवृत्तेरध्यासं विना मिथ्यात्वं न भवति । अध्यासाधिष्ठानञ्च ब्रह्म नेष्टम् । तदा तस्यानावृतत्वात् । एवञ्च नेहनानेतिवाक्यमधिष्ठाने कल्पितानामभावपरम्, न त्वकल्पिताया निवृत्तेरपीत्यस्तु । यदि तु यक्षानुरूपो बलिरिति न्यायेन अविद्यावत् अविद्यानिवृत्तिरपि किञ्चिद्रूपेण मिथ्यैव । ज्ञानानिवर्त्यत्वमात्रेण सत्यत्वापत्तौ तदप्यस्त्वित्युच्यते—तर्हि यथा सेयमधिष्ठानं विनाप्युत्पन्ना, तथा प्रपञ्चोऽप्युत्पत्तुमर्हति । तत्कारणाविद्यानिवृत्तिश्च निरधिष्ठानिकैव मुक्तिरित्यापद्यते । अत एव, 'त्रय्यन्तवादवारवाणमवधूय पञ्चमप्रकारेयमज्ञाननिवृत्तिः प्रच्छन्नमप्रच्छन्नं कुर्यात्" इत्युक्तम् ।

"असद्रूपत्वपक्षोऽप्यसत्पक्ष एव, यमेवालम्ब्य महत्या चूर्णिकया शतदूषणी आत्मानं चूर्णयति" इत्येतदपि सूत्तयर्थानवबोधविलसितम् ; सदसद्विलक्षणस्य शशविषाणायमानत्वं प्रस्तुत्य हीयं चूर्णिका । येयं सर्वानेवाद्वैतग्रन्थसारान् चूर्णीचकार—यदपि चूर्णं चण्डमारुतेन दिक्षु विष्वक् अपुनर्मेलनाय विक्षिप्तमेव । अथापि निरर्थकग्रन्थभरणेन मिथ्यावादनिर्भरैर्भवद्भिः कदर्थयितुं यत्यत इति तत्त्वम् ।

यत्तु साक्षात् ज्ञाननिवर्त्यत्वमज्ञानस्यैव, तत्संबन्धजीवेश्वरभेदानामनादीनामज्ञानकार्याणां घटादीनाञ्च परम्परयेति—तथा सति तत्त्वमसिवेदिनः सर्वेऽपि जीवन्मुक्तंमन्या भवेयुः । कथं बन्धोऽनुवर्तत इत्यत्र—अज्ञानं तु मूलं निश्शेषनिवृत्तमेव । परम्परया निवर्तनीयानि निवर्तमानानि सन्ति, कृत्स्ननिवृत्तिं यावत् बन्धोऽनुवर्तते इति जनमोहनसंभवात् । कथञ्च भवद्भिरेवं बन्धानुवर्तनमनुपपाद्याविद्यावशेषणम् । अपिचायं पक्षः पटाद्याश्रयनाशाद् तद्गुणादिनाशवत् कपालदिनाशात् घटादिनाशवत् अज्ञाननाशात् प्रपञ्चनाशमाकलयतीति तेषामिव प्रपञ्चस्यापि सत्यत्वं कुतो न स्यात् । अपि चास्मिन् पक्षे प्रपञ्चस्योपादानं न ब्रह्म, तत्राध्यस्तत्वस्य प्रपञ्चेऽनिष्टेः, किंतु परिणाम्युपादानमात्रमज्ञानमिति ब्रह्मलक्षणहानिः । भामतीमते सर्वं प्रति विवर्तोपादानत्वं

ब्रह्मण एव, अज्ञानस्य मिथ्यात्वमेव तु दोषसत्यत्वानुभवमप्युपेक्ष्य क्लेशेनोपपादनीयमिति अखण्डब्रह्मसाक्षात्कारे खलेकपोतन्यायेन सकलविलय एव स्वीकार्य इति न युक्तं क्रमकल्पनम्। तस्मात् चरमवृत्तिकाले यद्यदस्ति, तत् सर्वं तदुपारूढेन ब्रह्मप्रकाशेन निवर्त्यत एव सहाविद्यया। यास्त्विमाः निवृत्तयस्तदा समूढाः, ताः किं न निवर्तन्ते उत निवर्तन्त इति विचारः। तासां जन्यत्वात् ज्ञानजन्यत्वात् दृश्यत्वाच्च ज्ञानरूपब्रह्मातिरिक्तत्वं तुच्छान्यत्वञ्च संमन्तव्यमिति मिथ्यात्वे स्थित एव ज्ञाननिवर्त्यत्वं परं नास्ति। ईदृशं किञ्चिन्न दृष्टमिति चेत्—इदमेव दृष्टविलक्षणमस्तु इतीष्टसिद्धिकाराद्याशयः। इमं पक्षं पोषयितुमेव शतदूषण्यामसत्कोटिः पृथगादृता, लोके असतः प्रध्वंसस्य जन्यस्य नित्यत्वादियमपि तथा भवत्विति निरूपणौचित्यायेति च असत्कोटिस्वीकाराभासस्याप्यनौचित्यमानिना भवता भाव्यम्। तदाऽपि दूषणं दत्तम्—अभावरूपातिरिक्तपदार्थवादिभिः वास्तवभावप्रतियोगिकत्वस्यैवाभावे संमतत्वात्तदनुसारिणा भवता निवर्तमानस्य सर्वस्य सत्यत्वमेष्टव्यं स्यादिति।

अथ मन्यते सत्यस्य निवृत्तिः सत्या, असत्यस्य निवृत्तिश्चासत्येति सर्वा अपि निवृत्तयः निवृत्तिकालेऽपि न सन्तीति, एवं तर्हि असत्यान्तरतुल्यमेवासत्यत्वमेषितव्यम्। न हीष्टसिद्धिकारस्वीक्रियमाणत्वमात्रेण वस्तुस्थितिः। लोकदृष्टप्रक्रियानुगुण्यमवधूय स्वतन्त्रानुशासने क्रियमाणेऽपि सदसद्विवेकिभिर्न भवति तत्परिग्रहः। तथाच निवृत्तीनां कल्पको दोषः, दोषसंबन्धः, तदाश्रयश्चेतनः इत्यादिकमावश्यकम्। आसाञ्च निवृत्तीनां जन्यत्वात् मिथ्यात्वाच्च नाशो निवृत्तिश्चावश्यमिति तत्कारणमप्यावश्यकम्। स्वप्रतियोगिभिः सहाऽऽसां समकालिकत्वाभावात् प्रतियोगिनिवर्तकनिवर्त्यत्वस्यात्राभावादनन्तरभावि किञ्चित् स्वीकर्तव्यम्। एवं निवृत्तिनिवृत्तेर्निवृत्तये चान्यदिति। एवमापाद्यमाननिवृत्तिद्रष्टा क इति चेत्—प्रथमनिवृत्तिद्रष्टाऽपि कः, तदुत्पत्तिकालेऽपि जीवान्तःकरणादेरभावात्। योगमहिम्ना भाविविषयकसाक्षात्कारप्रत्याशा तु सर्वत्र संभाव्यते। निवृत्तिप्रवाहस्याविश्राम्यतः कारणकलापरूपाविद्याप्रपञ्चरूप-

सर्वानुवृत्तिरवर्जनीयेति एतन्निर्वाहक एकोऽपि वा जीवः स्वीकार्यः। ईश्वर एव वा सर्वधुरन्धरः संमन्तव्यः संततानुवृत्तसार्वज्ञ्यसर्वशक्तित्वादिरिति कथं कार्त्स्न्येनाविद्यानिवृत्तिरिति। यथा कस्यचित् रज्जुसर्पबुद्धौ जातायाम्, अन्येन च, अयं निवृत्तभ्रान्तिः, निवृत्तोऽस्य सर्प इति भ्रान्त्या ग्रहणे कृते पुनस्तस्य भयादिकं पश्यतः, अनिवृत्त एवास्य सर्प इति विवेके सति, तत्कल्पिता सर्पनिवृत्तिर्निवर्तत एव—तथा प्रतिभासिकी निवृत्तिरिव व्यावहारिकी निवृत्तिरपि निवर्तेतैव, कल्पितत्वाविशेषात्। ननु निवृत्तिकाले बाधकज्ञानं नष्टं कथं तन्निवृत्तिं जनयिष्यति, बाधकज्ञानकाले च निवृत्तिरूपप्रतियोग्येव नेति न तन्निवृत्तिप्रसक्तिरिति चेत्—तर्हि प्रथमनिवृत्तिरपि न जनिष्यते—जायमानत्वे मिथ्यात्वे समसमयप्रतीत्यवश्यम्भावात्। अस्तु सत्यत्वमेवेति चेत्—सत्यस्य ध्वंसस्य सत्यमेव प्रतियोगि। ततो जगदपि सत्यं स्यात्। सत्यञ्चेत् जगत् पुरुषभेदेन जगद्भेदायोगात् कतिपयमुक्तावप्यन्येषां जगदुपलम्भान्न सत्यं तदा निवर्तेतेति चेत्—सत्यम्, न निवर्तते। मिथ्यास्थले अनिर्वचनीयस्यैवाभावात् जगतोऽप्यनिर्वचनीयत्वाभावात् तन्निवृत्तिरप्यनिर्वचनीयतया न निर्वचनीयेत्येव तत्त्वम्।

यदि तु पञ्चमप्रकारत्वासंभवं स्वाभिमतिमात्रेण प्रतिवादिकृतदूषणपरिहारासंभवञ्च विमृश्य अज्ञाननिवृत्तिर्ब्रह्मैवास्त्विति प्रथमकोटावुत्प्लुतम्, तदा ब्रह्मणः साध्यत्वाभावात् तत्त्वज्ञानवैयर्थ्यं दोष उद्भावि। स्वरूपतोऽसाध्यस्यापि किञ्चिद्रूपेण साध्यत्वमिति प्रतिवदन्ति। पूर्वसिद्धानामेव व्रीहीणां वैतुष्यविशिष्टत्वेनावहननसाध्यत्ववत् अनावृतत्व-निवृत्ताविद्यत्वादिरूपेण साध्यत्वस्वीकारे तद् रूपं मिथ्या सत्यं वेति विकल्पे पूर्वदोषतादवस्थ्यमेव। अन्ततः अविद्यानन्तरभाविनः कस्यचिद्रूपस्य स्वीकारमन्तरा मुमुक्षुप्रयत्नसाफल्यवर्णनासंभवात् तत्र च सत्यत्वासत्यत्वनित्यत्वानित्यत्वविचारावतारणेन पूर्वदोषप्रतिष्ठितेः।

अस्मन्मते कर्माख्याविद्यानिवृत्तिर्वा ज्ञानसंकोचरूपाज्ञाननिवृत्तिर्वा सर्वप्रकाराऽपि संजाघटीति । उपायस्येवोपेयस्यापि साध्यस्य सद्भावात् । स च स्वरूपाविर्भावः अप्रकाशितानेकाकारविशिष्टात्मविषयकज्ञानविकासो निरन्तरानुवृत्तः इति सुस्पष्टं प्रतिपादितमर्थं पांसुभिरिवावकिरन्त्या शतभूषण्या नूनमात्मैवाऽऽच्छाद्यते । ध्वंसरूपनिवृत्तेरधिकरणस्वरूपत्वाभावे अत्यन्ताभावस्याप्यधिकरणात्मत्वं न स्याद् भावान्तराभाववादिनामिति चेत्—नैतदनिष्टम्, अत्यन्ताभावान्योन्याभावयोरपि धर्मिगतस्थिरधर्मरूपत्वस्वीकारात् । भूतले घटात्यन्ताभावस्तु घटसंयोगध्वंसप्रागभावान्यतररूपोऽप्यस्तु । अथ वा घटानधिकरणत्वाभिमतक्षणसंघसंबन्धरूप इत्यन्यदेतत् । मुक्तिरूपस्तु ध्वंस उपायजन्य उक्तरूप एवेति भावे पर्यवसानमावश्यकमित्यलं पिष्टपेषेण ।

ननु जीवन्मुक्तौ अविद्यानिवृत्तिरवशिष्टांशव्यक्तिसंघरूपा सुवचेति चेत्—जीवन्मुक्तिर्न भवन्मते सुवचेत्युक्तमेव । केवलम्, "तिष्ठति संस्कारवशात् चक्रभ्रमिवत् धृतशरीरः" इति सांख्योक्तं भवदीयैः स्वपक्षे तदसंभवापर्यालोचनयेतरांशवद् गृहीतमिति तत्त्वम् । जीवन्मुक्तिसत्त्वेऽपि जीवननिवृतौ अविद्यानिवृत्तिः किं रूपा । सर्वथा अविद्यांशसत्त्वे अविद्यानिवृत्त्यनुपपत्तिरेव प्रतिष्ठिता स्यादिति । शेषं षष्टितमे सत्त्वासत्त्वविवेकवादे द्रष्टव्यम् ।

भावादभावाच्च परं न किञ्चित्
भावान्तरं वस्तुगतौ स्वभावः ।
कुतस्तृतीयं कुत एव तुर्यम्
कुतस्तमां पञ्चमता निवृत्तेः ॥

शुभमस्तु

---

श्रीः

# शब्दवेद्यत्वप्रसाधनम्

विद्ये द्वे वेदितव्ये विभुपरविषये ये परा चापरा च
प्राप्या त्वाद्याऽत्र वेदस्मृतिमुखवचनोपासनस्यैव भूम्ना ।
तस्मादेवाक्षराख्यप्रकृतिपरपरं त्वक्षरं योगिदृश्यं
व्यक्तं वक्तुं स्वमीशो गुरुरवतरति श्रोत्रियो ब्रह्मनिष्ठः ॥

आवर्तितोपनिषदोऽन्वहमर्थ आसां
ब्रह्मेति चिन्तनपरा अपि शब्दजन्याम् ।
ब्रह्मापरोक्ष्यमयवृत्तिमुदीर्य चित्रम्,
नो शब्दवेद्यमिदमीषदपीति चाहुः ॥

ब्रह्मशब्दवृत्त्यनुपपत्तिवाद इति प्रथमवादशीर्षकमपि यथवदगृहीत्वा ब्रह्मणि शब्दवृत्त्यनुपपत्तिरुच्यत इति स्वगृहीतानुरोधेन सर्वशब्दविचारस्य शतभूषण्यां प्रथमवाद एव नीततया तत्रैव सर्वं विस्तरणोक्तमिति वादेऽस्मिन् विशेषतो न वक्तव्यं किञ्चित्। अतः सारं निष्कृष्य तदनौचित्यमात्रं प्रदर्श्यते। मुण्डके, "तत्रापरा ऋग्वेदो यजुर्वेद" इत्यादिना साङ्गोपाङ्गाः सर्वे वेदाः ब्रह्मप्रतिपादकतया निर्दिष्टाः । "सर्वे वेदा यत् पदमामनन्ति" "तं त्वौपनिषदं पुरुषं पृच्छामि" "तमेवैकं जानथान्या वाचो विमुञ्चथ," नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ", "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्", उत तमादेशमप्राक्ष्यः", "भूय एव मा भगवान् विज्ञापयतु" 'आचार्यवान् पुरुषो वेद' 'अधीहि भगव इति होपससाद', 'वेदैश्च सर्वैरहमेव वेद्यः', 'तावन्ति हरिनामानि', 'स्तवैरर्चेन्नरः सदा', 'विष्णुनामा स वेदेषु वेदान्तेषु च गीयते', 'अथातो ब्रह्मजिज्ञासा', 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च', 'शास्त्रयोनित्वात्', 'श्रुतेस्तु शब्दमूलत्वात्' इत्येवं

ब्रह्मण एव शब्दवेद्यत्वं सुप्रसिद्धम् । एवंसति विपरीतार्थदर्शीनि कानिचिद् वचनान्यपि लक्ष्यन्ते, "यतो वाचो निवर्तन्ते", "न चक्षुषा गृह्यते नापि वाचा," "यद् वाचाऽनभ्युदितम्", "प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरं वचसामात्मसंवेद्यम्" इत्येवम् । तत्रापरिमितगुणविभूतिविस्तारतया, 'चतुर्मुखायुर्यदि कोटिवक्त्रः' इत्युक्तरीत्या कार्त्स्न्येन वक्तुमशक्यत्वमेव वागवेद्यत्ववचनतात्पर्यविषयः, क्वचित्तु परमात्मनो भ्रान्तपुरुषकर्तृकवागगोचरत्वमपि, क्वचिच्च विधिनिषेधागोचरत्वमपीति सर्ववेदवेद्यत्वादिसंप्रतिपन्नार्थाविरोधेन सहृदयं निर्वाहे सुकरे, अद्वैतिनोऽन्यादृशमेव पन्थानमादृतवन्त इति तदनौचित्यमत्र प्रदर्श्यते ।

सगुणस्य ब्रह्मणः सर्वविद्यावेद्यत्वं न प्रतिषिध्यते । अवेद्यत्ववचनं तु निर्गुणविषयमिति तदाशयः । ब्रह्मात्मादिशब्दास्तावत्, 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म', 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह' इत्यादिबलात् किञ्चित्प्रवृत्तिनिमित्तविशिष्टमेव वदन्तीति न तेषां निर्गुणशक्तत्वम् । एवं सर्वेषां सगुणशक्तत्वात् यदृच्छाशब्दानां देवदत्तादाविव ब्रह्मणि निर्गुणे संकेत्यमानशब्दस्यादर्शनात् वाक्यस्य सुतरामनेकपदार्थान्वयपरतया निर्विशेषबोधकत्वायोगाच्च न निर्विशेषं शब्दवेद्यम् । निर्विशेषादिपदमपि विशेषाभावादेः प्रकारतया प्रतिपादकत्वात् न व्यक्तिमात्रपरम् । तर्हि कथं निर्गुणसिद्धिरिति चेत्— विशिष्टरूपेण प्रतिपादितेऽस्मिन् विशेषणानां द्वैतनिषेधश्रुत्या 'नेति नेती'त्यादिकया प्रतिषेधे शुद्धस्वरूपलाभोऽर्थात् । तस्य च शुद्धस्वरूपस्य भावाभावरूपविशेषणानालीढतया केनापि वचसा वेदनाभावादवेद्यत्वं युक्तमेव । एवञ्च तत् त्वमसीत्यादिकमपि विशेषणत्यागे तदर्थे पर्यवसास्यतीत्येतावदेव सहृदयाद्वैतिसंमन्यमानम् । एवमपि वाक्यार्थचर्चावसरे किमप्युद्गीर्य वृथावादं विस्तृण्वते—यथा—'यतो वाचो निवर्तन्त' इति वाक्यं वाग्विषय एव ब्रह्मणि वाग्विषयत्वाभावपरमपि भवितुमर्हति, ब्रह्मसमसत्ताकस्य वाग्विषयत्वस्याभावादिति । इदं न युक्तम्—जागरकालिकप्रातिभासिकेषु व्यावहारिकशब्दगो-

चरेष्वपि स्वसमसत्ताकवाग्विषयत्वाभावेन, यतो वाचो निवर्तन्त इति स्तवापत्तेः। वाङ्मनसयोः सतोरेव च ब्रह्मतो निवृत्त्युक्तया वाङ्मनससमसत्ताकस्य विषयत्वस्यैवाभावोऽत्र प्रतीयते ; न तु ब्रह्मसमसत्ताकविषयत्वाभावः। एवं ब्रह्मण आनन्दस्य च गुणगुणिभावस्योत्तरार्धेऽवगत्या सगुणत्वदशायामेव वाङ्निवृत्तिकथनात् वाग्विषयत्वाभावोऽपि व्यावहारिक एव निरूपणीयः, न पारमार्थिक इति।

अन्ये वाग्लक्ष्यत्वेऽपि वाग्वाच्यत्वं नास्तीत्याहुः—तदपि न ; वाच्यताया इव लक्ष्यताया अपि लक्ष्यतावच्छेदकधर्ममुखेनोपपाद्यतया तदयोगात्। शक्यसंबन्धरूपलक्षणाया अभावे लक्ष्यत्ववर्णनायोगाच्च। शाखाचन्द्रस्थले शाखायाः आर्जवादिः संबन्धोऽस्त्येव। निर्विशेषेऽपि व्यावहारिको लक्ष्यतावच्छेदकधर्मः, व्यावहारिकः शक्यसंबन्धः, व्यावहारिकी च लक्ष्यता भवेदिति चेत्, तथा व्यावहारिको वाच्यतावच्छेदकधर्मः, वाच्यता च व्यावहारिकी भवितुमर्हतीति। अतो वाच्यत्वाभाववर्णनमयुक्तम्। एतदुक्तं भवति—सगुणं ब्रह्मेत्यनेन शुद्धब्रह्मण्येव किं गुणसंबन्धो विवक्षितः, उत शुद्धादन्यदिदं सदेति। अन्त्ये गुणविशिष्टात् शुद्धस्येव लक्ष्यतादिविशिष्टादपि शुद्धस्य भिन्नतया शुद्धे लक्ष्यतापि दुरुपपादा। आद्ये गुणसंबन्धवत् वाच्यत्वस्यापि धर्मिणि सुवचतया वाच्यत्वाभावकथनं न घटत इति। यथा कुण्डली देवदत्त इत्यत्र कुण्डलिपदवाच्यत्वं देवदत्तस्य तथा विशिष्टांशे विशेष्यस्य वाच्यत्वमस्त्येव। किञ्च यदि विशिष्टमिव शुद्धमपि किञ्चिदभविष्यत्—तन्मात्रवाचकमपि पदं किमपि वेदो निरदेक्ष्यत्। वाक्यशेषञ्च तदर्थख्यापनाय प्रास्तोष्यत्। अभावादवसीयते तदेव नेति। 'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मसंज्ञित'मिति निर्दिष्टं पराशरेणेति चेत्—न ; 'बृहत्त्वात् बृंहणत्वाच्च तद् ब्रह्मेत्यभिधीयत' इति विशिष्टपरत्वेन संप्रतिपन्नसंज्ञाया एव निर्देशेन श्लोकस्य तदविरोध्यर्थान्तरपरत्वं हि निश्चीयते। तच्च प्रागेवोक्तम्। तस्मात्, सगुणनिष्ठस्य वाङ्मनसविषयत्वा-

भावस्यैव संदर्भतोऽप्यवगमात् , प्राशस्त्यलाभात् , "यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्" इत्यादिकेनोपनिषदनुसाराच्च कार्त्स्न्येन ब्रह्मणि वागादिविषयत्वाभावः सार्वकालिकः यतोवाचोनिवर्तन्त इत्यस्यार्थः। यद्यपि पामराणां त्रिवर्गपराणां वाचो मनश्च यतो निवर्तन्ते, ईदृशानन्दसान्द्रमप्यननुभूय हन्त वाङ्मनसयोरन्यत्र विनियोजनेन दुःख्यन्त एवैवं भ्राम्यन्ति, तद्वेदनं कर्तव्यमित्यर्थवर्णनेनापि सुनिर्वहमिदं वाक्यं नाद्वैतार्थावकाशप्रदम्—अथापि पामरदुरवगाहत्वापेक्षया ब्रह्मज्ञैरपि दुरवगाहमित्यर्थवर्णने प्रशंसाधिक्यं प्रकरणसंगमनं परमार्थकथनञ्च भवतीति तथार्थवर्णनमादृतम्। किञ्च यत इति ब्रह्मनिर्देशादेव तदवाच्यत्वमपास्तम्। अपिच यतो वाच इति मनोमयपर्यायावसाने आनन्दरूपगुणमीमांसावसाने च द्विः पठ्यते। तत्र प्रथमे यच्छब्देन ब्रह्मग्रहणस्य कथञ्चित् संभवेऽपि द्वितीये आनन्दस्य निरतिशयत्वनिरूपणौचित्याय यत इति 'आनन्दं ब्रह्मण' इति व्यतिरेकनिर्देशसुव्यक्तब्रह्मनिष्ठानन्दरूपगुणग्रहणमेव कार्यमिति तस्य ब्रह्मनिष्ठस्य निरवधिकविभूतिमत्त्वनिबन्धनस्य निर्विशेषत्वप्रयुक्तवाङ्मनसातीतत्ववर्णनं सर्वथैवासंगतमिति अपरिच्छिन्नत्वप्रयुक्तमेव वाङ्मनसातीतत्वं तदर्थः। आनन्दो ब्रह्मण इति षष्ठी राहोः शिर इतिवत् काल्पनिकभेदाश्रयणेनेति कल्पनायाञ्च न वाक्यार्थस्वारस्यमुपपादितं भवति। क्लिष्टनिर्वाहत्वादेवोपेक्ष्यत्वात्। शतगुणितक्रमेण परिच्छिन्नानन्दवत्त्वेनोक्तस्यापरिच्छिन्नानन्दवत्त्वकथनायोगादिदं शुद्धपरमिति चेन्न—शतं सहस्रमयुतं सर्वमानन्त्यवाचकमिति शतपदघटितवाक्यस्याप्यानन्दापरिच्छिन्नत्व एव तात्पर्यात्। आदावसंभावितमानुषानन्दकल्पनयैव गुणनस्य क्रियमाणतया अपरिच्छिन्नत्वस्य तत्रैव सिद्धेश्च। अपरिच्छिन्नानन्दमादाय शतगुणनमत्यन्तापरिच्छेदमेव दर्शयति। ब्रह्मानन्दस्य शतगुणितत्वकथनपूर्वकं यतोवाच इति कथनाच्च अपरिच्छिन्नानन्दस्य शतगुणिततारूपपरिमितत्वासंभवेन ब्रह्मानन्दैकदेश एव चतुर्मुखानन्दशततुल्यत्वमभिधाय एवंविध गुणनानन्तरमपि उपर्युपरि गुणने प्रवृत्य अशक्त्यैवोपरतेन वेदेन यतोवाच इत्युच्यत इति ज्ञायते।

एवं गृहीतार्थविरोधकल्पनं विना गृहीतार्थपरिपोषकार्थसंभवे किमिति, सविशेषपरवाक्यावगतविशेषाणां ब्रह्मनिष्ठानां कदाचित् ब्रह्मणि निराकरणेन, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'त्यनौपाधिकनित्यानन्तगुणक्रियाशालित्वेनावगमे सत्येव सर्वेषामविद्याद्युपाधिनिबन्धनत्वबाध्यत्वापारमार्थिकत्वादिकल्पनेन च 'विषमसत्ताकविशेषवत्त्वं सविशेषवाक्यार्थः, समसत्ताकविशेषाभावश्च निर्विशेषवाक्यार्थ इति विभागवर्णना। अस्य विभागस्य पारमर्थिकत्वेनावगतेषु अपारमार्थिकत्वबुद्ध्यापादकतयोत्थित्यसंभवात्। सर्वथा धर्मिरूपव्यक्तेः शब्दवेद्यत्वे सति अवेद्यत्वञ्च कथम्। पारमार्थिकधर्म इति च किं भवतां प्रसिद्धं किञ्चिदस्ति, यदत्र निषेधाय प्रसक्तं स्यात्।

स्थूलारुन्धतीन्यायेन सूक्ष्मवस्तुप्रदर्शनार्थं सर्वहानमित्येतदपि, तथाविधस्य तस्य प्रामाणिकत्वे स्यात्। प्रमाणावेद्यञ्च वो ब्रह्म। स्वप्रकाशबलाच्च तत् प्रकाशेत। विशेषासद्भावोऽपि ततो निर्णेतुं न शक्यते। प्रत्युतैकत्वानुकूलत्वादिधर्मवैशिष्ट्यमेव ततो लभ्यत इति च वक्ष्यामः। अपि च स्वप्रकाशमात्मानं प्रतिबोधयितुं प्रवृत्ताश्चेदुपनिषदः, स्थूलभूतदेहप्राणमनोमुखनिरसनेन तत्तद्विशेषनिष्कासेन सूक्ष्मं बोधयन्तु। किमिति शास्त्रैकसमधिगम्यसहस्राधिकविशेषाश्रयसर्वेश्वरतत्त्वकल्पनेन तत्र विशेषनिषेधव्यवसायः। विशेषनिषेधोऽपि "लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते" इति न्यायेन व्यक्तिग्रहणपूर्वमेव कार्य इति न शब्दावेद्यत्वसंभवः। 'तत्त्वमसीति बाधार्थसामानाधिकरण्यमस्तु' इत्यप्यत एव निरस्तम्। विशिष्टरूपेण निर्दिश्य विशेषणमात्रनिषेधे विशेष्यभूतब्रह्म शिष्यत इति चेत्—विशिष्टरूपेण निर्दिशे विशेष्यस्यापि निर्दिष्टत्वात् शब्दावेद्यत्वं कथम्। सर्वनाम्नां बुद्धिस्थव्यक्तिवचनतया विशेषनिषेधानन्तरं बुद्धाववस्थापिततद्व्यक्तिमात्रस्य तदादिना निर्देशसंभवादपि शब्दावेद्यत्वमयुक्तम्। अतो वाच्यविधया ब्रह्मबोधकत्वमपि स्यादेव। एवमपि वेदे तथा व्यवहाराभावात् तदभाव एव सिद्ध्यति। सति वस्तुनि, सति च तज्ज्ञापके वेदे वाच्यवाचकभावस्यानादितया, संकेतेनैव तस्य शब्दवेद्यत्व-

मित्यपि न भविष्यति। श्रुत्यनभिमतामेव संज्ञां प्रत्यस्तमितभेदमितिश्लोकेन पराशरश्चिकीर्षेच्चेत्—श्रुत्यननुसारितया तद्वचनमप्रमाणं स्यात्। अतोऽपि पराशरवाक्यमन्यार्थकम्।

"न ह्यद्वैतिनो ब्रह्मपदमपि ब्रह्मावबोधकमिति वदन्ति; किं तु वेदान्तवाक्यानि वाच्यविधया न तत् बोधयन्तीति" इति ब्रह्मणि पदवेद्यत्वमस्ति, वाक्यवेद्यत्वं तु नास्तीति भवतोच्यते। तत्र—सर्वत्र वाक्यमेव प्रमाणम्; न तु पदम्। वेदान्ते वाक्यवेद्यत्वं यस्य न, तस्य पदवेद्यत्वमपि न भवेदेव; वाक्यानन्तर्भावेन पदमात्रतया किञ्चिदंशस्थितेः प्रमाणभूते वेदान्ते वक्तुमशक्यत्वात्। पदेन ब्रह्मबोधने च तद्घटितवाक्येऽपि तस्य बोध्यत्वात्। शुद्धे पदार्थान्तरान्वयस्य दुर्वचतया वाक्यबोध्यत्वं दुःस्वीकरमिति चेत्-पदवेद्यत्वमप्येवम्, वेद्यत्वस्यापि शुद्धिनाशकत्वात्। "ब्रह्मण्यनिर्देश्ये" इति भागवतप्रश्नोत्तरविवरणं तु प्रागुपक्रम एव व्यधायि। "शुद्धस्यापि महावाक्यजन्याखण्डाकारवृत्तिव्याप्यतया वेदान्तवेद्यत्वं ब्रह्मणोऽद्वैतिनोपि न निह्नुवन्ति" इति लिखता भवता एतद्वादपरीक्षणमारभ्य बहुलेखनं क्रियमाणमनवसरम्। 'शब्दावेद्यत्वं निरस्य शब्दवेद्यत्वं स्थाप्यते चेत्-तत् अद्वैतिनामिष्टमनुकूलञ्च' इति परं विलिख्योपरन्तव्यम्। अन्यथा तु व्याहतिरेव। ब्रह्म शब्दवाच्यं वस्तुत्वात् घटवदित्यनेन सांकेतिकशब्दवाच्यत्वमादाय सिद्धसाधनं भवतोच्यते पूर्वपक्षप्रकारस्यापरिशीलनात्। एवं हि पूर्वपक्षिणोक्तम्—घटादिष्वपि पारमार्थिकस्य वाच्यत्वस्याभावात् पारमार्थिकं वाच्यत्वं न साध्यम्; किंतु सामान्यतो वाच्यत्वम्। तत्र व्यावहारिकं वाच्यत्वमादाय घटादौ समन्वयः। ब्रह्मणि तदभावेऽपि प्रातिभासिकं वाच्यत्वमस्तु—इति। अनेन च पूर्वपक्षिणा सांकेतिकशब्दवाच्यत्वं न विमृष्टम्। अत एव सिद्धान्ते तं प्रति, "संकेत्यतां व्यवहाराय तथाविधः शब्दोऽपि" इत्युच्यते। अत एवं सिद्धसाधनमिति न युक्तं वक्तुम्। अनुमानमभ्युपगम्येतः परं संकेतमपि करिष्याम इति युक्तं कथयितुम्। नूनं स्वसंमतब्रह्मणः 'ब्रह्मसंज्ञितम्' इति

स्मृतिमनुरुध्य कथञ्चिद्वाचकशब्दस्वीकरणं स्वमतानुकूल्यायेति विमृश्य नूत्नोऽयं सांकेतिकस्वीकारवादः। भवत्वेतत्। काल्पनिकवाच्यत्वस्वीकारी पूर्वपक्षी कथं निराक्रियत इति चेत्—उच्यते। यदि घटादिवत् वाच्यत्वं ब्रह्मणीष्टम्, तर्हि ब्रह्म मिथ्या वाच्यत्वात् घटवदित्यादिप्रयोगापत्तिः। घटब्रह्मणोर्वाच्यत्वं विलक्षणं व्यावहारिकप्रातिभासिकभेदादिति चेन्न—ब्रह्म स्वसमसत्ताकवाच्यत्ववत् वस्तुत्वात् घटवदिति घटतुल्यवाच्यत्वानुमानात्। साध्ये स्वपदं ब्रह्मपरं शब्दपरं वेति। तथाच वाच्यत्ववैषम्याभावात् मिथ्यात्वसाधनं न दूष्यम्। अस्त्वयं मिथ्यात्वानुमानविचारः। लोकसिद्धवाच्यत्वातिरिक्तवाच्यत्वाभावो ब्रह्मणि साध्यत इति चेत्—तत्सत्त्वं केनोक्तम्। किमिति च निषेध्यम्; अप्रसिद्धप्रतियोगिकत्वान्निषेधासंभवश्चेति। ब्रह्म न शब्दवाच्यं निर्विशेषत्वादिति प्रत्यनुमानं शतदूषण्यामेव दूषितम्। ब्रह्म(पक्ष)शब्दवेद्यत्व—साध्यवत्त्वोभयस्वीकारिणा निर्विशेषत्वादिति हेतुप्रयोगो विरुद्धः। एवं ब्रह्म न लक्ष्यम्, ब्रह्म न वृत्तिव्याप्यम्, ब्रह्म न भासमानमित्याद्यनुमानापातश्चेत्यादि भाव्यम्। वस्तुत्वं व्यवहारकालाबाध्यसत्ताकत्वरूपम; अतो न शुक्तिरजते हेतुः। अथवा शुक्तिरजतादेरेव युक्तिभिर्निराकरणादसिद्धतया न तत्रानैकान्त्यप्रसक्तिरपि। अतः स्वसमसत्ताकवाच्यत्वं साधयितुं शक्यम्। अथवा वाच्यत्वमात्रं साध्यम्। न च प्रातिभासिकमादाय सिद्धसाधनम्—प्रतिभासमात्रस्य संभवेऽपि प्रातिभासिकपदार्थो नास्तीति साधनेन तद्दोषपरिहरणात्। अन्यथा वाच्यत्वाभावः प्रातिभासिकोऽस्तीति तत्साधकभवदनुमाने सिद्धसाधनापत्तेश्च।

प्रत्यस्तमितभेदमिति श्लोको मुक्तजीवपर इति श्रीभाष्ये विशदं न्यरूपि। तत्र प्रत्यस्तमितभेदत्वसत्तामात्रत्वादिकं न घटत इति शब्दमात्रेण न किञ्चित्। परिशील्य भाषितस्यार्थस्यादूषिततया भवद्वाक्यस्यैव तत्राघटमानता। यदि भवता, 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्मे'त्यादि उपेक्ष्य निर्गुणे ब्रह्मसंज्ञाविधानं 'ब्रह्मसंज्ञित'मित्यनेन चिकीर्षितमित्युच्यते, तदपेक्षया मुक्ते ब्रह्मसंज्ञाविवक्षणमेव ततः समीचीनम्। मुक्तस्योभयसंप्रतिपन्नत्वात्। ब्रह्मशब्दस्य शुद्धजीवे प्रयो-

गस्य गीतायां बहुत्र दर्शनात्, 'ब्रह्मणो हि प्रतिष्ठाऽहम्', 'अक्षरं ब्रह्म परमम्', 'ब्रह्मभूतः प्रसन्नात्मा' इत्येवम्। अत एव परमात्मा, 'परं ब्रह्म परं धाम' इति परत्वेन विशेष्यते। 'तस्मादुच्यते परं ब्रह्मे'त्यत्रापि। संज्ञितमिति प्रयोगोऽपि संज्ञायाः मुक्ते किञ्चिदमुख्यवृत्त्या समानयनमनादीति दर्शयति। भवत्पक्षे दोषान्तरप्रदर्शनाय, भवतु वा तस्य परब्रह्मविषयत्वमिति अनास्थायां वाशब्दे प्रयुक्ते स्थिते इदमेव शतदूषणीसंमतमिति कथं कल्प्येत। एवमेव सर्वश्रुत्यर्थकल्पनमपि भवतामित्येतावदितः सिद्ध्येत्। वचसामगोचरमिति सामान्यशब्दस्य वाच्यतया शब्दाविषयत्वमिति विशेषे पर्यवसानं यदीष्यते, मुक्तात्मस्वरूपं देवमनुष्यादिवागगोचरमित्यर्थे काऽनुपपत्तिरिति।

अत्रेदमवधेयम्—अवेद्यं ब्रह्मेति वदद्भिरनुमानावेद्यमित्युक्तौ कामं मृष्येत। शब्दावेद्यमिति तु नैवास्तिकसह्यम्। निर्गुणब्रह्म सर्वथैवाप्रामाणिकमिति च स्थितमन्यत्र; अतस्तस्य शब्दवाच्यत्वमस्तीति स्थापनार्थं नैतद्वादारम्भः। सगुणस्य वाच्यत्वं भवतामपीष्टमेवेति न तदपि साधनीयम्। किंतु निर्विशेषमप्यस्ति। शब्दानां सप्रवृत्तिनिमित्तकत्वस्वाभाव्यात् निर्विशेषस्य वाच्यत्वासंभवात् श्रुति नैब्रवीतीति अद्वैतिमतं न युक्तम्, वेदपुरुषेणैव नामकल्पनसंभवात् तत एव तन्नित्यतया सहजवाच्यवाचकभावसिद्धेः। सर्वथा तस्य शब्दवेद्यत्वाभावे च तदुद्देशायोगात् तत्र प्रपञ्चरूपविशेषनिषेधस्यापि दुष्करत्वात्। अतो विशिष्टान्तर्गतविशेष्यांशतयेव पृथगपि तद् वेदवेद्यमेव स्यात्। तथाच यदि निर्गुणं स्यात्, वाच्यं स्यात्। यतः शब्दवेद्यमपि तत न वेदितम्, अतो नास्त्येव तदिति अत्र निरूप्यते।

ननु स्यान्नाम निर्विशेषस्यापि किञ्चिद् वाचकम्, स्याच्च निर्विशेषं विशिष्टवाचकपदेऽपि विशेष्यमात्रतात्पर्ये सति वेद्यम्—अथापि पदमात्रस्याप्रमाणत्वात् तद्घटितवाक्यप्रयोगे क्रियमाणे तद्घटकपदार्थानां मिथोऽन्वये च सति विशिष्टमेव वेदितं भवति, न निर्विशेषम्। यद्यपि सत्यं ज्ञानमित्यादि-

समानाधिकरणवाक्यानामखण्डार्थबोधजनकत्वम्—अथापि न स बोधः प्राथमिकः, एकैकस्यापि पदस्य वस्तुतो विशिष्टपरत्वात्। अतो वाक्यजन्यप्राथमिकबोधाविषयत्वमेव शब्दावेद्यत्वमिति चेत्—अत्रोच्यते–अद्वैतिषु कैश्चिद् वाच्यत्वमेव नास्तीति, अन्यैः लक्ष्यत्वमपि नास्तीति, अपरैः स्वयम्प्रकाशत्वात् तस्य शब्दवेद्यत्वमेव नास्तीति, शब्दस्य प्रपञ्चनिषेधमात्रबोधकत्वमिति, इतरैः वेद्यत्वसत्त्वेऽपि तस्य मिथ्यात्वादवेद्यत्वमिति किमपि किमपि तत्र तत्रोक्तम्। तस्य तस्य यथाश्रुतेऽनुपपत्तिरस्ति। अत एवं भावो वर्णनीयः—वाच्यत्वं नास्तीत्यस्य वचनार्हत्वं नास्तीति नार्थः; किंतु वचनार्हत्वेऽपि वाचकं पदं न वेदे दृश्यत इत्यर्थः। लक्ष्यत्वं नास्तीति च, विशिष्टान्तर्गते विशेष्ये पृथक्तात्पर्यविषये मुख्यार्थहानिप्रयुक्तास्वारस्ये सत्यपि तत्र शक्यसंबन्धरूपलक्षणाया दुर्वचत्वादुच्यते। स्वयम्प्रकाशत्वात् वेद्यत्वं नास्तीत्यस्य च शब्दादिजन्यवृत्तिमात्रव्याप्यत्वेऽपि फलव्याप्यत्वं नास्तीत्यत्र तात्पर्यम्। मिथ्यात्वादियुक्तिश्च, लोके पदार्थानां वेद्यत्वं पदार्थसत्तासमसत्ताकम्, ब्रह्मणस्तु मुक्तौ सर्वलयात् वेद्यत्वमपि निवृत्तमिति पदार्थान्तरवैषम्यप्रदर्शनार्था—इति।

अस्तु तावदेवं स्वमते प्रमेयनिष्कर्षः। एतच्छोधनञ्च किमभिप्रायेण। 'यतो वाचो निवर्तन्ते', 'यस्यामतं तस्य मतम्' 'यद् वाचाऽनभ्युदितम्' इत्यादिवेदान्तवाक्यानामीदृशार्थवर्णनेन स्वाभिमतस्य निर्विशेषस्य श्रुत्यारूढत्वप्रदिदर्शयिषया। एवं श्रुत्यर्थवर्णनमप्यवेद्यत्वभङ्गवादे निरस्तमेव। शब्दवेद्यत्वे श्रुतयश्चात्र विशिष्य प्रदर्श्यन्ते। एवं वाग्भिरेवोच्यमाने तस्मिन् वाच्यत्वाभाववर्णनमयुक्तम्। अन्यथा घटपटादीनामपि घटत्वादिकिञ्चिद्धर्मविशिष्टतयैव वाच्यतया व्यक्तिमात्रवचनाभावात् सर्वमेवावाच्यं भवेत्। एवमवाच्यत्वमात्रेण वस्तुतो निर्विशेषसद्भावासिद्धिश्च। वेदनादौ वृत्तिःफलमित्यंशविभागेन वृत्तिव्याप्यत्वेऽपि फलव्याप्यत्वं नास्तीति वर्णनमप्ययुक्तम्–अंशविभागे प्रमाणाभावात्—वेदनं ज्ञानमनुभव इत्यादीनां सविषयकैकवस्तुबोधकत्वात् अर्थान्तरस्येव ब्रह्मणोऽपि वृत्त्यवच्छिन्नचैतन्यविषयत्वमेव विशिष्टस्य शुद्धादतिरेक-

कल्पनया वाऽन्यथापि वा वक्तव्यमित्युपपादितत्वाच्च। स्वयम्प्रकाशस्यापि ज्ञानान्तरवेद्यत्वस्य ज्ञानव्यक्तयानन्त्यस्य चानुभवसिद्धत्वाच्च। अवेद्यत्वभङ्गवादे चास्य विस्तरः। 'वेद्यत्वस्य मिथ्यात्वात् कदाचिदभाव'इत्यप्ययुक्तम्–मिथ्यात्व एव प्रमाणाभावात्। मिथ्यात्वे सर्वदैव तदत्यन्ताभावो वक्तव्य इति कदाचिद-भाव इति कथनायोगाच्च। उत्तरकाले तदभावतात्पर्यकत्वे 'यतो वाचो निवर्ति-ष्यन्ते' इति वक्तव्यं भवेत्। यस्यामतमिति भूतकालनिर्देशायोगश्च। अस्त्व-त्यन्ताभाव एव विषय इत्यपि न; वाचोनिवर्तन्त इत्यनेन हि वाचां सद्भाव एव ब्रह्मणस्तदविषयत्वमुच्यते। मिथ्यात्वपक्षे वाचामभावः तद्विषयत्वाभावश्च सह स्याताम्। न तु वाक्सत्त्वे विषयत्वमात्राभावः। विशिष्टान्तर्गतविशेष्य-ग्राहितया अखण्डपरतया वाक्यघटकपदार्थान्तरान्वयितया कथमपि वाग्विषय-तायां सत्यां तदभावकथनमशक्यम्। अतो बहुदूरं कथितत्वेऽपि मतत्वेऽपि कथनीयमननीयानन्ताकारवैशिष्ट्यात् कार्त्स्न्येनावेद्यत्वमेव श्रुत्यर्थतया विवक्षणी-यम्। स्वयम्प्रकाशत्वादिहेतुना तस्यावेद्यत्ववर्णनं त्वेवं निरस्यमेव। यत्तु वाक्य-जन्यप्रथमबोधविषयत्वं निर्विशेषस्य नास्तीति–तदपि न–वस्तुतो निर्विशेषस्यैव सविशेषतया तत्र विषयत्वात्। निर्विशेषत्वेन रूपेण विषयत्वं नास्तीति चेन्न-तस्यापि 'नेति' इति वाक्यप्रतीतत्वोक्तेः। प्राथमिकबोध इव पार्ष्ठिकबोधेऽपि अखण्डतन्मात्रविषयकतया निर्विशेषत्वेन रूपेण तदविषयकत्वमेवेत्यविशेषाच्च। निर्विशेषमात्रविषयकत्वं तु तस्याभावान्न भवतीति ब्रूमः। न केवलं निर्विशेषस्य, सर्वस्यापि पदार्थस्येतराग्रहणेन पृथग्ग्रहणं वाक्येषु न भवत्येव; नानापदार्था-न्वयविषयकत्वात् वाक्यस्य। तस्मात् स्वरस - प्रकरणानुगुण - प्रतीतार्थावि-रुद्धार्थत्यागेन, 'यतो निर्विशेषस्य शास्त्रार्थत्व'मिति व्याहतवचनञ्चोपेक्षणीय-मिति।

अनुभूतेरवेद्यत्वभङ्गः पूर्वं प्रपञ्चितः।
शब्दैकवेद्यं ब्रह्मेति यतस्तस्माद् विशेषतः॥

शब्दाविद्यत्वभङ्गेन युक्त्या श्रुत्याप्यनेकया ।
शब्दवेद्यत्वमत्रैवमस्य स्थापितमादरात् ॥

श्रुतिस्मृतिवाक्यानि चात्र वादे शतदूषण्यामन्यत्र च द्रष्टव्यानि ॥

व्यावृत्तमानुभविकादखिलात् यदेवं
दूरञ्च वाङ्मनसयोर्ननु तुच्छमेतत् ।
ईदृक् स्वयम्प्रभमपीदमितीर्यते चेत्
कथ्येत तत् कथमवाङ्मनसानुबन्धम् ॥

शुभमस्तु

श्रीः

स्वसंकल्पकल्पप्रपञ्चस्य विष्णो-
र्जगुर्निष्प्रपञ्चत्वहेतुं नियोगम् ।
परेऽन्ये तु नैच्छन् ततस्तद्विचारात्
विरम्याऽऽदृताथो विकल्पार्थचिन्ता ॥

श्रीः

# विकल्पप्रामाण्यप्रसाधनम्

न कल्पते येन विकल्प्यतायै
कल्पद्रुमो वाऽप्यथ कामधेनुः ।
अनन्तशाखोत्थफलद्विजेड्यं
हरिं नुमोऽशेषनिवासवृक्षम् ॥

माध्यमिकैः विप्रतिपन्नः प्रत्ययो निरालम्बनः प्रत्ययत्वात् स्वप्नादिप्रत्ययवदिति शून्यस्थापने प्रवृत्तम् । अधिष्ठानस्य निर्विशेषस्याङ्गीरात्तु अद्वैतिभिः

प्रत्ययत्वेन ग्रहणमनुपपन्नमिति मत्वा ब्रह्मविषयकनिर्विकल्पवारणाय विकल्पो मिथ्याविषयः विकल्पत्वादिति विशेषे पर्यवस्थापितमनुमानम् । तत्र शतदूषण्युक्तदूषणपरिहाराय शतभूषणी पक्षसाध्यहेतून् अन्यथा परिष्करोति—यथा—सत्तादात्म्यावगाहिज्ञानमधिष्ठानविषमसत्ताकप्रकारकं बाधितार्थकं वा अधिष्ठानारोप्यविषयकज्ञानत्वात् शुक्तिरजतमस्तीतिज्ञानवदिति । अत्रोच्यते—घटोऽस्तीत्यादिज्ञानं सत्त्वप्रकारकघटविशेष्यकमेव; न तु सत्तादात्म्यावगाहि । कथञ्चित् घटोऽस्तीति तार्किकमीमांसकवैयाकरणपक्षान् प्रथमान्तार्थधात्वर्थाख्यातार्थभावनामुख्यविशेष्यकबोधरूपान् परिहृत्य सत्त्वाश्रयविशेष्यकबोधकल्पनेऽपि प्रत्यक्षे तादात्म्यभानाभावस्य अवयवग्रन्थे दीधित्युक्तप्रकारेणाङ्गीकार्यतया प्रकृते पक्षीभूतः प्रत्यक्षात्मकविकल्पः सत्त्वप्रकारकघटविशेष्यक एव । अतएवाधिष्ठानस्य ब्रह्मणो विशेष्यतया भानाभावादधिष्ठानविशेष्यकारोप्यप्रकारकज्ञानत्वहेतुः तद्रूपपक्षतावच्छेदकधर्मश्चासिद्धः । अधिष्ठानविषमसत्ताकप्रकारकत्वरूपसाध्याप्रसिद्धिरपि । सत्तात्रैविध्यवादिमते घटोस्तीत्यादौ व्यावहारिकसत्ताभानस्यैवेष्टतया तदा तस्य ज्ञानस्याधिष्ठानविशेष्यकारोप्यप्रकारकज्ञानत्वाभावात् सदिति ब्रह्मण एव भानमिति पारमार्थिकसत्तामात्रवादिमत एव प्रकृतानुमानप्रयोगात् तत्राधिष्ठानविषमसत्ताकत्वस्य घटादावभावात् । यदि न्यूनकालसंबन्धरूपसत्ताऽस्तीति घटादौ तत्साधनम्, तत् द्वैतिनामपीष्टमिति व्यर्थमनुमानम् । अतो बाधितार्थकत्वमेव साधनीयम् । तत्तु बाधितम् । प्रत्ययो निरालम्बन इत्यनुमाने "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रे जागरप्रत्ययस्याबाधितार्थकत्वं प्रदर्श्य दोषस्योपन्यस्ततया बाधितार्थकत्वबाधसिद्धेः । नेदानीं बाधोऽस्ति; किंतु पश्चादेवेति चेत्—यदा कदाचिदिष्यताम् । त्रैकालिकाभावप्रतियोग्यर्थकत्वं तत्र दूषितमिति भवदनुमानमपि दूषितमेव । कादाचित्काभावप्रतियोगिविषयकत्वसाधने तु सिद्धसाधनम् । कादाचित्काभावोपपादनञ्च यदि द्वैतनिषेधश्रुतिमूलं क्रियते, तदा तासामर्थान्तरस्वरसत्वोपपादनेन तन्निरासे बाधितत्वं तदवस्थमेव । एवमभावप्रतियोग्यर्थकत्वे साध्ये सत्प-

द्वाच्यब्रह्मरूपस्यैवाभावप्रतियोगित्वसंभावनया विपरीतसिद्धिश्च । ब्रह्मनिष्ठाभाव-प्रतियोगित्वसाधने च घटादौ तदनाधारकत्वमेव सिद्ध्येत्; न तु वस्त्वभावः । तदितरावृत्तित्वविशिष्टतन्निष्ठाभावप्रतियोगित्वञ्च दुःसाधम्; घटादौ भूतलादि-वृत्तितया बाधात् । श्रौतब्रह्मासिद्धौ च दृष्टान्ते साध्यवैकल्यमपि । अधिष्ठान-विशेष्यकारोप्यप्रकारकज्ञानत्वादिति हेतुरप्यसिद्धः । 'घटोऽस्ति इति ज्ञाने सद् भासते; तत् अधिष्ठानम्; घटस्तत्रारोपित' इति यदि ज्ञानं प्रागेवास्ति, किमिति बाधितार्थकत्वसाधनम्? यदि नास्ति, कथं हेतुज्ञानम्? यदि चाधिष्ठानत्वारोप्यत्वादिकमविवक्षितमिति किञ्चिद्विशेष्यककिञ्चित्प्रकारकज्ञान-त्वादित्येवोच्यते, तर्हि सद्विशेष्यकज्ञानविशेषस्यैव पक्षीकारात् तदतिरिक्ते चैत्रः पचतीत्यादिज्ञानेऽपि हेतुसत्त्वात् तत्र साध्यस्य प्रागसिद्धतया अनेकान्तः । सर्वस्य ज्ञानस्य पक्षीकरणे च विकल्पसामान्यग्रहे शतदूषण्युक्तदोषः स्यादिति सत्तादात्म्यावगाहिविकल्पमात्रे पर्यवसानं भवत्कृतं त्यक्तं भवति । तथाच प्रकृ-तानुमानजन्यानुमितौ बाधितार्थकत्वविधेयिकायां बाधितार्थकत्वस्य प्रकृतानु-मानतः सिद्धौ विकल्पानां सर्वेषामबाधितार्थकत्वसिद्धिः । अन्यथाऽत्रैव व्यभि-चारः । अथ सद्विशेष्यकब्रह्मव्यतिरिक्तप्रकारकत्वादिति हेतुरस्तु । प्रकृतबा-धितार्थकत्वानुमितौ तन्नास्तीति न व्यभिचार इति चेन्न-प्रकृतपक्षोऽस्तीत्यादि-ज्ञाने हेतुसत्त्वात् तत्र साध्यस्याङ्गीकार्यतया प्रकृतपक्ष एव नास्तीत्यवसायात् तदभाववेदिना तत्पक्षीकारेण प्रयोगायोगात् । आश्रयासिद्धेः । सति पदार्था-भावेऽप्यन्यत्रास्तीति चेत्—न—अन्यथाख्यातिस्वीकारापत्त्या वस्तुमिथ्या-त्वापायात् । अनिर्वचनीयासिद्धिश्च वक्ष्यते । हेतुपक्षतावच्छेदकयोरैक्याद‌नु-मानं न संभवतीति च प्रागेवोपपादितम् । अप्रयोजकश्च हेतुः । श्रुत्या बाधि-तार्थकत्वसिद्धावनुमानवैयर्थ्यम् । श्रुत्यर्थश्चान्य एवेत्याकर एव व्यक्तम् । हेतौ सद्विशेष्यकत्वादेर्व्यभिचारवारकतया सार्थक्यं न भवति । सिद्धान्ते सप्रकारक-ज्ञानसामान्यस्य मिथ्यार्थविषयकत्वस्यांगीकृतत्वात । घटोऽस्तीत्यादौ प्रत्यक्षे सद्विशेष्यकत्वानुभवाभावस्योक्ततया हेत्वसिद्धिश्च । अथ सत्त्वनिष्ठविषयता-

निरूपितविषयतानिरूपकत्वमेव हेतुः। अखण्डाकारवृत्तौ च निरूप्यनिरूपकभावापन्नविषयताद्वयाभावान्न व्यभिचार इति चेन्न—सत्त्वेन वेद्यत्वस्याबाधितार्थकत्वं प्रत्येव प्रयोजकतया विपरीतसाधकतया हेतोर्विरुद्धत्वात्। सत्त्वनिष्ठत्वांशत्यागेन हेतुप्रयोगेऽप्यप्रयोजकत्वं द्रष्टव्यम्। बाधितत्वं तु प्रागेवोक्तम्। अन्यथा विकल्पत्वादिति स्थाने वृत्तित्वात् ज्ञानत्वादिति प्रयुज्य ब्रह्मापि बाध्यताम्। स्वयम्प्रकाशत्वात् कथं बाध इति चेत्—स्वयम्प्रकाशत्वं ज्ञानान्तराणां सुखदुःखादेश्च तुल्यम्। तत्र ज्ञानान्तरबलादेव वेद्यत्वे अत्रापि तदेव किं न भवेत्। विप्रतिपन्नं परप्रकाश्यं वस्तुत्वात् घटादिवदित्यनुमानस्यापि संभवात्। श्रुतिप्रमितं ब्रह्म न हेयमिति चेत्—तुल्यमिदं प्रपञ्चेपि तद्विभूतौ। अद्वैतश्रुतीनां मानान्तरप्रतिपन्नार्थाविरोध्यर्थपरत्वस्य भवदीयातिरिक्तसर्वतान्त्रिकसंप्रतिपन्नत्वात्।

'आत्मघातिनामीदृशानाम्' इति अनुमानस्य स्वघातित्वे शतदूषण्या प्रोच्यमाने आत्महत्याकरत्वेनाद्वैतिनो दूष्यन्त इति स्वयमबद्धं कृत्वा, 'न वा आत्महत्या अद्वैतिनः' इति विलिख्य तदुपर्यसह्येनाऽऽग्रहेण खण्डनतुण्डनमुण्डनपरमात्महत्यापर्यन्तप्रवृत्तिः शतभूषण्यादृता न साम्प्रतम्। "निर्विकल्पकस्य संवादो विकल्पगृहीतो न वा। आद्ये विसंवादि निर्विकल्पकं स्यात्। अन्त्ये स्वेनापि संवादाग्रहणात् तदसिद्धिः" इति शतदूषणीप्रतिपाद्यम्'। शतभूषणी तु वदति—'प्रमाणानां स्वतःप्रामाण्यात्। घटादीनामिव ब्रह्मणो बाधाभावात्' इति। किमत्र विवक्षितम्। संवादः प्रामाण्यम्। तत् स्वतो गृह्यते। अतो न विकल्पापेक्षेति चेत्—यदि निर्विकल्पकं निर्विशेषवस्त्विव स्वनिष्ठप्रामाण्यमपि गृह्णाति, कथं तत् निर्विकल्पकम्। निर्विकल्पकज्ञानमसंवेद्यमनुमेयमेवेति नैयायिकाः। संवेद्यं यत् ज्ञानम्, तस्य संवेद्यत्वं ज्ञानान्तरमादाय वर्ण्यते चेत्, गौरवमिति तस्यैव तत् स्वप्रकाशमिष्टम्। अतो निर्विकल्पकप्रामाण्यस्य विकल्पग्राह्यत्वं न शक्यं प्रतिषेद्धुम्। निर्विकल्पके प्रामाण्यमस्तीति यो विकल्पः, स च सत्तादात्म्यावगाहितया प्रामाण्यस्य बाधि-

तत्वमेव स्थापयेत् : अपिच प्रामाण्यं नाम तद्वति तत्प्रकारकत्वं परिभाषोक्तम् । तत् निर्विकल्पकज्ञानस्यासंभावितम् , प्रकारानवगाहित्वात् । तदभाववति तत्प्रकारकत्वाभावः प्रामाण्यमिति चेत्—घटपटादेरपि प्रामाण्याश्रयत्वापातः । निर्विषयकतया किञ्चित्प्रकारकत्वस्याभावात् । ज्ञानत्वमपि समुच्चेयमिति चेत्—ब्रह्मातिरिक्तविषयकनिर्विकल्पस्यापि प्रामाण्यापत्तिः । सोयं देवदत्त इत्यादेर्ज्ञानस्य व्यक्तिमात्रविषयकत्वस्य भवदिष्टत्वात् । घटादिसविकल्पात् पूर्वं निर्विकल्पस्यापि शतभूषण्यां प्रत्यक्षनिरूपणावसरे उक्तत्वाच्च । तत् सर्वं नेष्यते चेत्—ब्रह्मनिर्विकल्पकमपि श्रुतिविरोधात् नैवेष्टुं शक्यम् । स्थापितश्च प्रागेव, न सर्वप्रकाराभानप्रयुक्तं निर्विकल्पकत्वम् । किंतु संस्कारसंभेदाभावप्रयुक्तमिति । न च निर्विशेषं प्रामाणिकम्, येन तन्मात्रज्ञानस्यान्यादृशनिर्विकल्पकत्वमवर्जनीयं स्यात् । स्वतः प्रामाण्ये च ज्ञानानां घटादिविकल्पानामपि प्रामाण्यस्य गृहीततया तद्विरोधादद्वैतश्रुतयः अविरोध्यर्थान्तरग्रहणेनैव प्रमाणमिति प्रकृतानुमानस्य बाधितत्वमेवैतावतोक्तं भवति । अतो बाधकज्ञानस्य दुर्वचतया घटादीनां वास्तवपदार्थत्वात् अन्यस्यान्यथोल्लेखाभावात् , मिथ्याविषयकत्वरूपसाध्यस्य बाधकज्ञानान्तरवत्त्वानर्थभूतत्वानर्थविषयकत्वान्यप्रकारोल्लेखादिनिर्वचनानि अशक्यस्थापनान्येवेति स्थिते, सर्वे कल्पाः सुवचा इति लेखनं बाधितम् । सर्वं श्रुत्यर्थनिरूपणे आयतत इति च किं पृथगेतद्विचारेण । स्मृतिप्रामाण्यानभ्युपगमपक्षस्वीकारेणापि विकल्पाप्रामाण्यं सुवचमिति वादस्तु यथावत् शतदूषणीपङ्क्त्यनवलोकनात् । "स्मृतित्वलक्षणमप्रामाण्यं प्रसज्येत ; न पुनर्विसंवादित्वलक्षणम्" इति ह्युक्तम् । तदवधाने च कृते स्मृतिन्यायेनाप्रामाण्यवर्णनस्य नैव प्रसक्तिः । "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इत्यध्यासभाष्यवास्तवार्थविचारश्चानपेक्षितोऽस्माकमिति त्यज्यते । पदेपदे शतदूषणीपङ्क्तीनामशुध्दमुद्रणदृष्टप्रकारेणानुवादो वाक्यार्थापरिज्ञानमेव शतभूषणीकर्तृगतं प्रकटयेत् ।

यदुक्तम्—श्रवणादिज्ञानानामखण्डार्थवृत्तिरूपत्वात् ब्रह्मणो विकल्पविषयत्वाभावेऽपि श्रोतव्यत्वादिसंभव इति—तन्न—अखण्डवाक्यार्थखण्डनस्य

प्रागेव कृतत्वात् शब्दावेद्यत्ववादिनां भवतामपि तस्येष्टत्वात् श्रवणस्य नानापदार्थावगाहिनो विकल्पत्वस्यावश्यकत्वात्। मननमप्यनुमानेन गृहीतार्थस्थापनरूपमिति अनुमितेरुद्देश्यविधेयोभयावगाहित्वस्यावश्यकतया विकल्पत्वमेव। मतार्थध्यानमपि तथा। असंप्रज्ञातसमाधावपि शब्दानुल्लेखेऽपि विशेष्यप्रकारोभयावगाहनमपरिहार्यमिति प्रागेवोपपादितम्। तस्मात्—

विकल्पविषयत्वेन बाधितत्वप्रकल्पने।
ब्रह्मणोऽप्यस्तु बाध्यत्वम्, जयेन्माध्यमिकस्ततः॥
सत्तादात्म्यावगाह्यत्वात् बाधेऽन्यस्य तु कल्पिते।
तत्तादात्म्यावगाह्यत्वात् स्वप्नवत् सच्च बाध्यताम्॥

बौद्धाः स्वपरसिद्धस्य हेतुतामात्रकल्पकाः।
अद्वैतिनः साध्यसमैरातिष्ठन्तेष्टसाधनम्॥

शुभमस्तु

---

श्रीः

# उपबृंहणवैघट्यप्रसाधनम्

यद् बृंहतीत्यपि च बृंहयतीति वित्तं
ब्रह्मादसीयगुणवैभवभूमवित्त्यै।
वेदोपबृंहणपुराणमुखप्रणेतॄन्
दृष्टाखिलश्रुतिगतीन् मनवै मुनीन्द्रान्॥

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति वचनं सर्वसंप्रतिपन्नम्। तत्रेतिहासौ द्वौ संप्रति प्रसिद्धौ रामायणं महाभारतञ्चेति। पुराणानि चाष्टादश। इति खलु प्रागासीदिति भगवदवतारचरित्रप्रधानं रामायणम्। भगवत्प्राणभूतपाण्डवपञ्चकप्राधान्येन भगवदवतारविशेषचरित्रसंग्रहपरं महाभारतम्। उभा-

भ्यामपि तदवतरण-शिष्टपरिपालन-दुष्टनिबर्हण-धर्मस्थापनादिविवरणेन तदीय-सौलभ्यसौशील्यवात्सल्यसर्वशक्तत्वादयः गुणाः विधिशिवशतमखादिदेव-प्रभृतिसर्वनिरूपितमैश्वर्यं मोक्षान्ताशेषपुरुषार्थप्रदत्वमित्यादि विशदं वर्ण्यते। धर्मस्थापनार्थत्वादवतारस्य धर्मतत्त्वमपि प्रपञ्च्यते यथायथम्। पुराणलक्षणञ्च प्रसिद्धम्—"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितञ्चेति पुराणं पञ्चलक्षणम्" इति। तथाच सृष्टिस्थितिप्रलयहेतुत्वरूपब्रह्मलक्षणप्रपञ्चनं पुराणार्थ इति सिद्ध्यति। तत्र स्रष्टुर्भगवतः सृष्ट्यौपयिकस्वरूपरूपगुणादीनां सृज्यान्तर्गतविधिशिवादिस्वभावानाञ्च यथावद्विवेचनात् कारणतत्त्वविषय-वैशद्यं सम्यग् भवति। तत्र भगवतो नाभिपद्मात् चतुर्मुखस्य प्रादुर्भावं तदुपरि सर्वदेवसृष्टिं ततः प्रागेव महदहङ्कारभूतब्रह्माण्डादिसृष्टिम्, सृष्टे लोके समुचितस्थापनाय दशावातारावेशावतारादिकं भगवदादृतम्, युगभेदेन धर्मभेदादिकञ्च प्रतिपादयद्भिः पुराणैरविचाल्यं वैभवं भगवतो विशदमेव दर्शितं भवति। एवं वैशद्ये इतिहासपुराणतोऽवगम्यमाने, तत्तल्लक्षणबलाच्च तथात्वे तेषां स्पष्टे सर्वमिदमुपेक्ष्यापलप्य, निर्विशेषमेव ब्रह्म, नान्यत् किमप्यस्तीति निरूपयितुमेवेतिहासपुराणानीति वदतां धाष्टर्यस्यावधिरेव न लक्ष्यते। अथ—सगुणब्रह्मविषयप्रपञ्चनमेव क्रियते इत्येव ब्रूमः; 'मुनेस्तु मौनं व्याख्यान'मिति स्थिते निर्विशेषनिरूपणाय वाक्प्रपञ्चस्य कथङ्कारमपेक्षा। शब्दावेद्यं खल्वातिष्ठामहे तत्त्वम्। तत् सगुणपरमेव सर्वमिति पुराणलक्षणादिकं सुस्थम्। एवमपि सत्यज्ञानादिवाक्य इव तात्पर्यगत्या गम्यमेव तद् भविष्यतीति चेत्—इदं ततो वरम्; स्वानुभवसिद्धत्वाभिमतस्य तस्योत्सूत्रत्व—उद्वेदान्तत्वादिवत् उत्पुराणादित्वस्याप्यादरणेनानुरूप्यसंघटनात्। यदि चोपबृंहणानां श्रुत्यवगतसप्रपञ्चत्वनिष्प्रपञ्चत्वविषयसंदेहापोहनेन निष्प्रपञ्चत्वनिरूपणमेव लक्ष्यमभविष्यत्—श्रुत्यवगतचेतनाचेतनप्रपञ्चविषयपरमविस्तारे अवतरणादिमुखेनानन्तगुणगणाविष्कारे चावकाशमव्यपोह्य उपनिषदाद्यनुक्तानेकलोकतद्गतकार्यादिवर्णभरमपि विहाय उपनिषदाद्युक्तानामपि ब्रह्मणि रज्जौ सर्पभूदलनाम्बुधारादीनामिव

कल्पनामात्रत्वं कण्ठतोऽभिधाय अतएव निर्विशेषं तदिति व्युत्पादनमकरिष्यत। तथा चोपबृंहणमिति नाम्नः स्थाने निष्प्रपञ्चनं निर्विशेषणमुद्भासनमित्येवं किमपि नाम कर्तव्यं स्यात्। "इतिहासपुराणाभ्यां वेदार्थं प्रविलापयेत्' इति च वक्तव्यं स्यात्। एवञ्च पुराणादिभिरेवमर्थ उपदेष्टव्यः स्यात्; यथा—

परमात्मन्! त्वमेवाहम्, जगदेतन्न वास्तवम्।
त्वद्भक्तिरेव ज्ञानस्य मुक्त्यर्थस्य प्रदायिनी॥

पारतन्त्र्यमयं दुःखं व्यपोह्यं भविनो मम।
तवैश्वर्यं यावदस्ति तावदेतन्न नंक्ष्यति॥

अतस्त्वद्वैभवं सर्वं तवानन्दैकदाय्यपि।
विलोपयितुमिच्छामि त्वदनुग्रहभावितात्॥

ब्रह्मात्मैक्यस्य विज्ञानात् कृपां कुरु महाप्रभो!।
नित्यशुद्धस्वरूपोऽसि मा काङ्क्षीस्त्वं गुणानपि॥

इत्येवं भक्तिरूपेण तपसा तोषितः परमात्मा भस्मासुराय भवो भस्मीकरणशक्तिमिव स्वात्मपर्यन्तसर्वविनाशवहां विज्ञानशक्तिं प्रदास्यति। तथाच—

मूढं भस्मासुरं योऽसौ वञ्चयामास चाटुना।
तद्वञ्चनमहोपायस्तद्भक्तिरिति भाव्यताम्—इति।

एवमुपदेशे निर्विशेषात्मशेषणाय कर्तव्ये यत इतिहासपुराणानि वेदान्तापातप्रतीतसगुणब्रह्मवर्णन एव लब्धविश्रमाणि उपबृंहणनाम्ना च प्रख्यातानि, अत इमानि लोकसंजिघृक्षया संमान्यमानान्यपि हृदयोद्घाटनपूर्वव्यवहारे उपेक्षणीयकोटावेव निक्षेप्तव्यानि; यतो रामायणभारतादौ निर्विशेषतत्त्वनिरूपकवाक्यदुर्भिक्षमेव लक्ष्यते; यतश्चोपनिषदुपदिष्टमैक्यं शरीरात्मभावरूपहेतुमेव पदेपदे प्रदर्श्य अद्वैतमतानभिमतप्रकारेणैवेमानि निर्वहन्ति। समाद्रियमाणानि तु भवन्तु सूतसंहितायोगवासिष्ठादीनि। अविच्छिन्नप्रवचनप्रकर्षकल्पनेन च परिग्रहातिशयोऽपि तेषां प्रत्याययितव्योऽद्वैताभिमानिभिरित्यल-

मधिकेन। एवं निर्विशेषस्वात्ममात्रसत्यताबुद्ध्या स्ववैभवं सर्वमपि ध्वंसयितुमुद्युक्तानामेषां स्वस्मिन् भक्तिमव्यभिचारिणीमुत्पादयितुमनिच्छन्नेव त्रिमूर्तिसाम्यभ्रमं तत्रापि शैवपाशुपतागमैकान्तिसहवासाभिरुचिञ्चाधिकमक्षप्यभूमा रमापतिरेषामापादयामासेति वस्तुस्थितिः। तदेषामेवं गण्डस्योपरि पिटकः संवृत्त इति एवमेषु परमपुरुषवरणीयताहेतुगुणविशेषविरहो माभूदिति सर्वानुकूल्यदृष्टयः सर्वसुहृदः सत्पुरुषाः सानुक्रोशाः तमेव वैद्यसार्वभौमं पुरस्कृत्य चिकित्सितुमध्यवस्यन्ति। भाग्यायत्तमतः परम्।

शतभूषणीकारस्तु—कर्मकाण्डमात्रप्रामाण्याभिमानिनो मीमांसकान् उपासनाकाण्डप्रामाण्यमपि समुच्चिन्वतोऽर्धवेदान्तिनश्चावधूय ज्ञानकाण्डप्रामाण्यस्यापि स्थापनार्थमितिहासपुराणप्रवृत्तिरित्याह। इदञ्चापूर्वेतिहासपुराणनिर्माणेनैवोपपाद्यम्; विद्यमानानां सविशेषपरत्वस्यैव स्थितेः। श्री पराशरः स्वस्य देवतापारमार्थ्यवेदितां प्रपञ्चय जगत् सर्वं विष्णोः सकाशादुद्भूतमिति श्रौतस्य जगत्कारणस्य देवताविशेषत्वमेवाविष्करोति। न पुनर्निर्विशेषे सर्वमिदं कल्पितमिति निर्गुणपारमार्थ्यवेदित्वमात्मन आविर्भावयति। एवं सर्वत्र भाव्यम्। निर्विशेषवाक्यकल्पनेन तत्प्रामाण्यस्थापनच्छलेन कर्मकाण्डोपासनाकाण्डसर्वाप्रामाण्यमेवाद्वैतिभिराविष्क्रियत इति कथमिदं वेदोपबृंहणम्। अन्तर्यामिपरमात्माराधनतामशेषस्य धर्मस्य, 'वर्णाश्रमाचारवता पुरुषेण परः पुमान्। विष्णुराराध्यते' इत्युक्तरीत्योपदिशन्तीतिहासपुराणानीति स्वीकारे खलु तत्तद्विधिवाक्यगताग्न्यादिशब्दवास्तवार्थ—प्रशस्तफलमार्गप्रदर्शनेन. तत्तद्वाक्यकृत्स्नार्थवेदनात् वेदोपबृंहणत्वं विशिष्टमवतिष्ठते। कर्मकाण्डोपासानाकाण्डातिरिक्तं निर्विशेषज्ञानकाण्डं किञ्चिदस्तीत्यद्वैतिनः। तदतिरिक्तमपि शून्यकाण्डं किञ्चिदस्तीति वेदबौद्धैकरस्येदम्परा आधुनिका ब्रूयुः। त इमे इतिहासपुराणयोरप्येतदर्थ एव प्रवृत्तिं प्रवक्तुं संरभेरन्। यादृशे तत्त्वे संमन्यमाने कर्मकाण्डोपासनाकाण्डाद्यवगतस्य वैभवस्य मात्रयाप्यबाधः स्यात्, प्रत्युत सर्वप्रकारातिशयशालित्वमवस्थाप्येत, तादृशतत्त्वप्रतिपादनप्रावण्य-

मेवेतिहासादेर्युक्तमिति तेभ्यो वक्तव्यम् । तत एव निर्विशेषनिरासोऽपि सिद्ध एव । अन्यथा खलु---शून्यं बुद्धोदितं तत्त्वं साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते निर्गुणाधिगुणोक्तिभिरिति प्रत्यवस्थानस्यैवावसरः प्रदर्शितः स्यात् । साक्षात्कृतसर्वतत्त्वार्थमहापुरुषमुखेन स्वावगतार्थव्यक्तये उपबृंहणापेक्षा सर्वेषामप्यस्तीति सर्वमितिहासपुराणकृत्यं भवेत् । योगवासिष्ठं प्रामाणिकपरिबृढैः प्राच्यैरनुदाहृतं क्वेतिहासपुराणानन्तर्गतश्चेति तत्प्रदर्शनं न युक्तम् । भगवद्गीतायाः निर्विशेषतत्त्वनिरूपकत्वं तु न कथमपि शक्यम् । "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव", "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति विस्पष्टं निखिलगुणविभूतिविशिष्टनारायणप्राप्तिव्यतिरिक्तपरमपुरुषार्थाभावे प्रत्याय्यमाने कथं ततो निर्विशेषसिद्धिः । 'न त्वेवाहं जातु नासं न त्वं नेमे' इति आत्मबहुत्वेनोपक्रमः, 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इति नन्तृनन्तव्यभावाराध्याराधकभावरूपभेदप्रतिपादनम्, अन्ते, मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामी'ति शरणागतत्राणवचनमेवमादि श्रुत्वापि को निर्विशेषमेवाऽऽद्रियेत । 'मामेकं शरणं व्रजे'त्यस्य शुद्धात्मस्वरूपं निर्विशेषमेवानुसंधत्स्वेत्यद्वैताभिमानकृतमर्थवर्णनं संस्कृतभाषानभिज्ञपरिषदि क्षणं जातु प्राण्यात्; नाभिज्ञसहृदयपरिषदि । अन्यथा, 'त्वामेकं शरणं व्रज । त्वं तु त्वा सर्वपापेभ्यो मोक्षयिष्यसीत्यप्युपदिष्टवान् स्यादित्यादि उक्तमेव । उपबृंहणान्यपि यदि वेदान्तवाक्यापेक्षयाऽप्यधिकं हन्यमानान्येवात्मवशं नीयन्ते, तर्हि कियदिदं स्वाभिमतार्थव्यक्तीकरणमिति स्वयमेव विभाव्यताम् ।

अधीतशाखावगतांशाधिकांशानां शाखान्तरादिगतानामवगम इतिहासपुराणेभ्यो भवतीति तेषामुपबृंहणत्वमितीदं निर्विशेषस्येतिहासपुराणार्थत्वे हि न घटते । अधीतशाखात एवाद्वैतवाक्यश्राविणा सर्वविशेषराहित्यस्यावगतत्वात् तस्यैवेतिहासपुराणतोऽप्यवगम्यमानत्वात् । निर्विशेषत्वमपि विहायाखण्डाकार-

ज्ञानमात्राधायकत्वे तु नतराम् । अतः प्रधानार्थविषये इतिहासपुराणयोरनुवादमात्रत्वान्नोपबृंहणत्वसंभवः । वस्तुत इतरथाऽऽवृत्तिरपि यावता विस्तरेणोपनिषद्भिरुपादिश्यते, सत्यं ज्ञानमनन्तं ब्रह्म, अस्थूलमनण्वह्रस्वमदीर्घम्, अद्रेश्यमग्राह्यमगोत्रमवर्णम् इत्यादिनिर्विशेषवाक्यैः, न तावता विस्तरेणेतिहासपुराणादित इति न सामान्यामावस्य विशेषाभावकूटत्वरूपेण प्रत्यायनप्रयुक्तवैशद्यमपि । व्यर्थञ्च सर्वमिदम्, अखण्डाकारसाक्षात्कारस्यैवापेक्षितत्वात् ।

किञ्च पुराणानि सात्त्विकराजसतामसभेदेन विभक्तानि यथायथं तत्तद्देवतामाहात्म्यप्रतिपादनपराणीति पुराणत एवावगम्यते । पुराणानां प्रामाण्यमभ्युपगच्छद्भिस्तदन्तर्गतस्यास्यापि वाक्यस्य प्रामाण्यमेषितव्यम् । नैवं निर्विशेषतत्त्वपारम्यबोधकतया कश्चित् पुराणविभाग इह प्रदर्शितोऽस्ति । यदि परमसात्त्विकसात्त्विकराजसतामसभेदेन चतुर्धा विभज्य निर्विशेषभागः परमसात्त्विक इति दर्शितं स्यात्, पुराणानां तत्परत्वमवसीयेत । अतो विभक्तदेवतामाहात्म्यैदम्पर्यस्यैवावगमात् तत्र वस्तुनि विकल्पायोगात्, सर्वजगज्जन्मस्थितिलयनिमित्तोपादानत्वेनैकस्यैव वस्तुनः श्रुतिषु घोषिततया कल्पभेदेन जगत्कारणभेदस्य तत्रतत्र तत्प्रयुक्तमाहात्म्यप्रतिनियमस्य चाशक्याङ्गीकारत्वात् कतमा देवता स्यादुत्कृष्टेति विचारः प्राप्नोत्येव । तत्र श्रुतिगतकारणवाक्यगत्यादिपर्यालोचने नारायणः परदेवतेति निष्कर्षो भवतीत्यन्यत्र स्थितम् । तदनुरोधेन पुराणादिष्वपि श्रुतिसंवादशालिपुराणभागानुसारेण भागान्तराणामान्यपर्यं वक्तव्यमित्यालोचितमेव । एवं तर्कोपष्टब्धश्रुतिपुराणार्थस्यानायासेन सिद्धिवहमिदं वाक्यजातमपि यद्युपलब्धम्, तर्हि कस्तत्र विशयः । न केवलं ब्रह्मविष्णुरुद्राणां त्रयाणाम्, अग्न्यादीनामपि माहात्म्यं वर्णयन्त्येव पुराणानि । तत्राग्निमाहात्म्येऽन्यथा नीयमाने शिवस्य माहात्म्यमपि तथैव भविष्यतीति ज्ञापनार्थमेव, अग्नेः शिवस्य माहात्म्यमिति वाक्यारम्भः । "अग्निरवमो देवतानां विष्णुः परमः" इति च श्रुतिः । तन्माहात्म्यमिव शिवमाहात्म्यं तामसेष्टम् । शिवस्यापि सृज्यत्वसंहार्यत्वानपहतपाप्मत्वनारायणानुग्रहलब्धातिशयत्वादिकं श्रूय-

माणं प्रकृतवाक्याभिमतभगवत्पारम्यानुकूलम्। मोक्षपर्यन्तपुरुषार्थद्वययथावस्थितार्थज्ञानहेतुसत्त्वप्रवर्तकत्वरूपो हि विशेषो भगवत एव जगदशेषविधकारणत्वज्ञानं द्रढयति।

किं बहुना—शाङ्करे नामसहस्रभाष्ये, 'हरिवंशे कैलासयात्रायां महेश्वरवचन'मित्यारभ्य अहं त्वमिति रुद्रस्य विष्णोश्चैक्यप्रतिपादकं यद् वाक्यमुपात्तम्, तत्रैव सर्वगत्वाद्विष्णोः अहमपि स एवेति तस्यान्तर्यामित्वमेवाभेदव्यवहारे हेतुत्वेनोपदर्शितम्। उपरि, 'त्वद्विस्तारो यतो देव ह्यहं भूतपतिस्ततः' इति विष्णुविस्तारत्वं भूतपतेरुक्तम्; न तु भूतपतिविस्तारत्वं विष्णोः। न तदस्ति विभो देव यत्ते विरहितं क्वचित्, विना किञ्चित् त्वया न हीति वाक्यद्वयं भगवद्व्याप्तिनिबन्धनमेवैक्यं दर्शयति। एवं त्वदुपासना मदुपासना, त्वन्नामानि मन्नामानीति भगवन्तं स्तुवता महेश्वरेण विप्रेभ्यो यस्तत्त्वहितोपदेशः कृतः, सोऽपि तत्रैव सहस्रनामभाष्ये विश्वशब्दव्याख्यानावसरे समुद्धृतः, 'हरिरेकः सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः। ओमित्येवं सदा विप्राः पठत ध्यात केशवमिति हरिवंशे कैलासयात्रायां हरिरेको ध्यातव्य इत्युक्तं महेश्वरेणापि' इति। एवं महेश्वरोक्तिमपि प्रदर्श्य हरिमात्रस्य सदा ध्येयत्वे सहस्रनामभाष्यप्रतिपादिते सति हरिं विहाय रुद्रध्यानं विप्रैः क्रियमाणं कथं गुरुसंमतं स्यात्। यदि च रुद्रोपासना हर्युपासना, तर्हि किमिति अहमेकः सदा ध्येय इति रुद्रो नोक्तवान् स्यात्। तत्र सत्त्वसंस्थितैरिति पदेनापि—ये के चिन्मामेव सदा ध्यायन्ति, ते तमःसंस्थिताः क्षुद्रेप्सव इति ज्ञापयति। ये तावत् ब्रह्मविष्णुरुद्राणां साम्यं मन्यन्ते, सत्त्वसंस्थिततया मोक्षप्रदत्वरूपोऽतिशयो विष्णोरेवेति दर्शयदिदं वाक्यमेव तेषां पर्याप्तं समाधानम्। त्रिमूर्त्युत्तीर्णं तत्त्वं किञ्चिदस्ति, न तन्नारायणादिशब्दव्यपदेश्यम्, किंतु सामान्यतः दैवं जगत्पतिः, कारणम्, महानीश्वरः, परम ईश्वर इत्येवमेव व्यपदेश्यमिति ये मन्यन्ते, तानपि समाधत्ते चतुर्मूर्तिनामव्याख्यानावसरे भाष्यम्। सृष्टिहेतुमूर्तयः ब्रह्मादयः चतस्रोपि हरिविभूतयः, स्थितिहेतुमूर्तयो विष्णुप्रमुखाश्चतस्रोपि विष्णुविभूतयः,

संहारहेतुमूर्तयो रुद्रादयश्चतस्रोपि जनार्दनविभूतयः इति त्रिमूर्तिविभूतिको हरिविष्णुजनार्दनादिभिर्भगवदसाधारणनामनिर्देश्य एवेति वदता पराशरेण तत्रैव विष्णुशब्दमेव प्रयुञ्जानेन, 'विष्णोः सकाशादुद्भूतं जगत् तत्रैव च स्थितम्' इति प्रक्रमे विष्णुमेव सृष्टिस्थितिलयकारणत्वेन निर्दिशता नारायणस्यैव विष्णुरूपेणावतीर्णत्वं ब्रह्मरुद्रयोरतथात्वञ्च यत् व्युत्पादितमस्ति, तत् सर्वं भाष्येऽस्मिन् अभिमतं लक्ष्यते। भूतकृदिति नामव्याख्याने च, "रजोगुणं समाश्रित्य विरिञ्चिरूपेण भूतानि करोति, तमोगुणमास्थाय च रुद्रात्मना भूतानि कृन्तति" इति तत्तद्रूपनिर्देशं विधाय पश्चात् ,"सत्त्वगुणमधिष्ठाय भूतानि बिभर्ति" इति रूपनिर्देशमकुर्वन् भाषमाणः विष्णोर्जगत्कारणस्य चैक्यं मन्यते; तथा विष्णोरेव सत्त्वाधिष्ठातृत्वम्। कृष्णनामोपेन्द्रवामनादिनाम्नां विष्णुविषयत्वे यथा न विवादः, न तथा शर्वः शिवः स्थाणुः इत्यादाविल्यालोच्य, "स ब्रह्मा स शिव इत्यभेदोपदेशात् शिवादिनामभिर्हरिरेव स्तूयते" इति शिवशब्दो जीवविशेषवाच्यपि अभेदभावनया हरिपरत्वेन ग्राह्यः, यथा विश्वमिति प्रथमं नामेति प्रतिबोधयन् शिवस्य सर्वात्मैक्यनिबन्धनैक्ये सत्यपि कृष्णादिवन्नारायणरूपसर्वकारणवस्त्ववतारत्वं नानुमन्यते। नारायणनामव्याख्याने च नारायणमन्त्रस्यैव यतिसमादरणीयत्वं भावितम्। एवं नारायणतदवताररूपाणामेवार्च्यत्वसंकीर्तनीयत्वोपासनीयत्वादौ गीताभाष्य इव सहस्रनामभाष्येऽपि स्पष्टे तद्विहाय केनापि कारणेन रुद्रार्चनकीर्तनोपासनाद्यादरणेऽपि विष्णुसाम्यमेव ब्रह्मशिवयोरिति हठात्करणेऽपि प्रवृत्तिर्न सहृदयस्य युज्यते। एतावत्यप्यनुपरम्य सर्वभूतसुहृदः श्रीवैष्णवान् शिवद्रोहित्वेन स्वयं क्रियासमभिहारेण कथयन् त द्दूलादेवायं कैलासं करस्थं कलयतीत्यप्यद्भुतम्। उपादत्ते च किञ्चिद्वचनाभासम् , "मद्भक्तः शङ्करद्रोही मद्द्रोही शंकरप्रियः। तावुभौ नरकं यातो यावच्चन्द्रदिवाकरम्" इति। अस्तु वेदं प्रमाणम्। अत्रत्यद्रोहिशब्दार्थमप्येष द्रोहाभिभूतमनस्कतया नाबुध्यत। द्रोहो नाम न प्रणामाभावः, किंतु जिघांसा वा तत्कार्योपरोधबुद्धिर्वा तदनिष्टचिन्तनं वा। ईदृशं द्रोहं वैष्णवाः क्षुद्रेष्वपि न

वहन्ति, किमुत देवे। यथा गुरुहृदयमननुवर्तमानो गुरुद्रोही, तथा नारायणं नमस्कृत्येति स्वपरगुरुत्वाभिमतनारायणहृदयविरोधमाचरन्तः अत एव नारायणद्रोहिणो भवन्त एव प्रकृतश्लोकलक्ष्याः स्युः। न वयमद्रोहमात्रेण शिवे वर्तामहे, प्रकर्षं तस्य यथावदवगम्य प्रशंसामश्च। अत एव श्रीभगवद्यामुनमुनयः, "विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव परिजनभावं कामये कामवृत्तः" इति स्वस्य शिवस्य च महत् तारतम्यमनुसमधुः। आचार्यचरणाश्च श्रीमति रहस्यत्रयसारे, 'सर्वज्ञो रुद्रोऽप्यशोचत्' इति प्राशंसन्। हंससंदेशे च, 'अर्चाहेतोरुपहरति या नूनमर्धेन्दुमौलेः' इत्युत्प्रेक्षमाणः कालहस्तीश्वरस्य स्वर्णमुखरादिदेवताचर्यत्वरूपमतिशयमाविरकार्षीत्। 'सूर्यस्यैव तु यो भक्तः सप्तजन्मान्तरं नरः। तस्यैव तु प्रसादेन रुद्रभक्तः प्रजायते' इति सूर्यादिभ्योऽतिशयमख्यापयत्। 'अण्डजाः पुण्डरीकेषु समुद्रेषु जनार्दनाः। नीलकण्ठाश्च शैलेषु निवसन्ति न तेन ते' इति ब्रह्मविष्णुरुद्रान् तुल्यकल्पं गृहीत्वा शश्लाघे। विन्ध्याचलविकटसंध्यानटजटापरिभ्रान्ता पङ्क्तौरपि यदि गङ्गा निपतति' इत्यादिशिववर्णनपराः श्रीपद्माचार्यसूक्तयो बह्व्यः। वादाहवे प्रस्थानसिंहनादे च श्रीभगवद्यामुनमुनिभिः,

'आ शैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठात्
आ रक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः।
आ च प्राच्यप्रतीच्यक्षितिधरयुगलात् चन्द्रसूर्यावतंसात्
मीमांसामुख्यशास्त्रश्रमविमलमनाः मृग्यतां मादृशोऽन्यः"

इति घोषणेन प्रथमपादकृतवर्णनवैलक्षण्यत एव वैष्णवेषु शिवद्रोहित्ववचनं भ्रान्तिविलसितं प्रलोभनमात्रं वेति विस्पष्टवेदितम्। अद्रोहे तर्हि कस्मान्महेश्वरो न वन्द्यते, कस्मात् तदालयं प्रति न गम्यत इति चेत्—किमद्रोहो वन्दनञ्च समनियते। वचनानि तावदत्रापेक्षितानि तत्परविचारे प्रदर्शयिष्यामः। इदं तु किञ्चित् पृच्छामः—अस्तु तावदयं जीवविशेषोऽस्माभिर्न वन्द्यत इति। बुद्धः

साक्षाद् भगवतोऽवतार इति भागवतादिप्रसिद्धमेतत्। कथं भवद्भिरस्माभिश्च बुद्धो न वन्द्यते, बुद्धालयश्च न प्रविश्यते। ते पाषण्डिनः, ये बुद्धोपदेशमनुरुन्धत इति चेत्— किं तेन, स तु बुद्धः साक्षाद् भगवानेव। पाषण्डिलक्षणञ्च शास्त्रस्थमिदम्, यत्—'ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम्। ते वै पाषण्डिनो ज्ञेयाः सर्वकर्मबहिष्कृताः' इति। अत्र प्रतिपदमवधातव्यम्। अलं मुहूर्तं गत्वा। अन्योक्तिषु शिवद्रोहित्वनरकप्राप्त्यादिवर्णनं शतभूषणीकृतं प्रतिविधातुमिदं दिक्प्रदर्शनमात्रम्।

शिवस्य वैष्णवानाञ्च सौहार्दे प्रथिते मिथः।
शिवकामैर्न कर्तव्यं शिवद्रोहित्वकल्पनम्॥

विदितशिवमुखक्ष्मापालपक्षो विदितपुराणगणार्पितप्रभावः।
नरकमथनरत्ननामभूमा नरकरिपुर्नतिकर्म नः सदाऽस्तु॥

शुभमस्तु।

---

श्रीः

# ऐक्यार्थापत्तिभङ्गप्रसाधनम्

गुणित इव गुणानां चेतनाचेतनानां
बहुसुखमवक्लृप्तो भेद आहत्य यस्मात्।
तमहमखिलहेयप्रत्यनीकं मुकुन्दं
निरवधिगुणवार्धिं माधवं नाथमीडे॥

जीवेश्वरैक्यभङ्गः प्रसाधितः। अत ऐक्योपदेशस्यैवासिद्ध्या तदन्यथानुपपत्त्या किमस्ति कल्पनीयम्। यत् ब्रह्मात्मैक्यान्यथानुपपत्त्या भेदस्यापारमार्थिकत्वं तन्मूलञ्चाज्ञानं कल्पनीयं मन्यन्ते, तेन कीदृशैक्यं समर्थितं भवति; उपदिष्टैक्यं तदकल्पनेऽपि सिद्ध्यति न वेति संप्रति चिन्त्यते। ऐक्योपदेशस्तावत्, 'तत् त्वमसि', 'अयमात्मा ब्रह्मे'त्येवंरूप इह विवक्षितः। प्रत्य-

क्षानुमानागमावगमितस्य भेदस्य एतद्वाक्यप्रतिपादितस्याभेदस्य चोभयोर्विरोधादेकस्मिन् त्यक्तव्ये भेदस्यायथार्थत्वसंभवादभेदः पारमार्थिक इत्युच्यते। 'तत् त्वमसी'ति वाक्ये तच्छब्दस्य प्रकृतपरामर्शित्वात् जगत्कारणत्वसर्वशक्तित्वादिविशिष्टब्रह्मवाचित्वम्, त्वंशब्दस्याल्पज्ञत्वाभिमुखत्वविशिष्टजीवपरत्वञ्च संप्रतिपन्नम्। विशिष्टयोश्चैक्यं न संभवतीत्यद्वैतिन एव प्रतिपन्नाः। अत्र तु विशिष्टैक्यमेवोच्यते। त्वमित्युक्ते विशिष्टात्मनि बृहत्त्वगुणत्वविशिष्टैक्यञ्च यथाश्रुतमेव श्रुतिबलादिष्टा यदि भेदस्यापारमार्थ्यं साध्येत, तदा तत्त्वमस्यर्थो रक्षितो भवेत्। विशिष्टयोरभेदस्य सत्यत्वे चैतद्वाक्यप्रतिपन्नानां विशेषणानामपि, सत्यत्वमेष्टव्यम्। अन्यथा विशिष्टैक्यं श्रुतं बाधितमेव भवेत्। एवं विशेषणसत्यत्वे च जगत्सत्यत्वमेव स्वीकृतं भवतीति मिथ्याभूताज्ञानकल्पनं कथं स्यात्।

किञ्चैक्यं संख्या प्रकृत्यर्थोपसर्जनम्। प्रकृत्यर्थश्च विशिष्टः प्रधानम्। एवं प्रकृत्यर्थः पूर्वगृहीतः; विभक्त्यर्थश्चैक्यं पश्चादवगम्यमानम्। असंजातविरोधित्वात् प्रकृत्यर्थज्ञानं प्रबलम्। अपौरुषेयवेदपर्यन्तसर्वप्रमाणावगतो भेदः। अभेदश्चाल्पप्रमाणप्रतीतः। अपिच प्रकृत्यर्थस्य श्रुतस्य सर्वस्य प्रत्ययार्थस्याभेदस्य श्रुतस्य च मध्ये कस्यापि यथा बाधो न स्यात्—तथाऽर्थवर्णने संभवति एकतरबाधोऽप्ययुक्तः। प्रमाणान्तरावगतो भेदोपि चेन्न बाध्यते, तर्हि सुतरां स एवार्थः स्वीकार्यः। एवञ्च तत् त्वमसीत्यस्य तज्जन्यस्त्वमसीत्यर्थस्वीकारेऽपि श्रुतानामंशानामत्यागात् विभक्त्यर्थस्यैक्यस्याप्यत्यागात् नानुपपत्तिः। सर्वज्ञैक्यं जीवे श्रुतं त्यज्यत इति चेत्—बोधोत्पत्तेः प्राक् सर्वज्ञैक्यं श्रुतमिति कथमुच्येत। बोधस्तु बाधान्न भवति। तत्तत्पदवाच्यार्थः कोऽपि न त्यक्तः। परस्परान्वयस्तु कल्प्यः, स च प्रतीताविरोधेनैव कल्पनीयः। अत एव सिंहो माणवक इत्यादौ सिंहसदृशो माणवक इत्यर्थग्रहणम्। ननु तत्र सिंहत्वमाणवकत्वस्वरूपधर्मत्यागेऽपि व्यक्त्यैक्यमसंभावितम्। न तथा प्रकृते इति चेत्—अत्र पर व्यक्त्यैक्यं संभावितमिति कुतोऽवगतम्। व्यक्त्यैक्ये निश्चिते धर्मत्यागः, धर्मत्यागे व्यक्त्यैक्यसंभावनेत्यन्योन्याश्रयात्। प्रत्यक्षादितो व्यक्ति-

भेदस्य सिद्धत्वादैक्यसंभावनैव नास्तीति प्रागेवोपपादितम्। धर्माणामत्यागेन निर्वाहे त्यागो न युक्त इति चेहोक्तम्। एवमुपदिष्टरूपस्यैक्यस्य भवद्भिरेव त्यागात् तदन्यथानुपपत्त्येति न युक्तं वक्तुम्। न च धर्माणां शब्दार्थत्वत्यागमात्रम्। तथा सत्यपि घटपटयोरिव व्यक्त्यैक्यायोगात्। अतो धर्ममिथ्यात्वकल्पनम्, दोषमन्तरा तदसंभवात् दोषकल्पनम्, तस्य वास्तवत्वे द्वैतापत्त्या तन्मिथ्यात्वकल्पनमित्याद्यनेककल्पना, लोकानुभवापलापश्चेति महान् दोषः। तावत्सिद्धावेव व्यक्त्यैक्यावगमः इति।

शतभूषण्यां तु आदित्यो यूप इत्यादौ अभेदापदेशावसरेऽपि विवेकग्रहस्यानुवर्तमानत्वात् गौण्याश्रयणमित्युक्तम्—तत् प्रकृतेऽपि तुल्यम्। भेदकाकारोपस्थापकपदद्वयबलात् विवेकग्रहस्यानुवर्तमानत्वात्। अभेदतात्पर्यग्राहकप्रमाणमस्तीहेति चेत्—किं तत्। अस्त्येवाभेदग्राहकप्रमाणम्; कयोरभेद इत्यत्रैव विवादः। अपिचोपक्रमे 'सदेव सोम्येद'मित्यत्रेदंशब्दार्थजगदभेदः सति अवगतः। जडप्रपञ्चाभेदश्च ब्रह्मणि बाधितः। आरोपितं तादात्म्यमस्तीति चेत्—न हि तादात्म्यमिति किञ्चिदनिर्वचनीयमुत्पद्यते। न चानिर्वचनीय एव किञ्चित् प्रमाणम्। अतस्तादात्म्यारोप इति वक्तव्यम्। तत्रेदमर्थसदर्थविषयकारोपात्मकबोधजनकत्वे वेदस्याप्रमाणत्वापत्तिः। इदमित्यस्येदंत्वारोपविषय इत्यर्थे स्वीकृते तु लक्षणापत्तिः। अतो विवर्तोपादानत्वे एवं दोषात् ऐक्यं प्रकारान्तरेणैव निर्वाह्यम्। तथैवोपसंहारेऽपि तत्त्वमसीत्यत्र एकरूपे वाक्यार्थे वक्तव्ये वैषम्यमयुक्तम्। एवं सर्वं खल्विदं ब्रह्मेत्यत्रापि तादात्म्यस्यारोपितस्याभावात् सर्वतादात्म्यविषयकारोपात्मकबोधजनकत्वस्वीकारे वेदोत्थ ज्ञानस्याप्रमात्वापत्तेः सर्वत्वारोपविषय इत्युक्तौ लक्षणापत्तेः लक्षणायां स्वीकर्तव्यायां जगन्मिथ्यात्वमिथ्याभूताज्ञानादिकल्पनां विना सर्वसंमतलक्षणाविशेषेणैव निर्वाहौचित्यात् अन्य एवार्थ आदरणीयः। तत्र तत्त्वमसीत्यत्रान्यत्र चैकरूपार्थः कः संभाव्यत इति स्वयं विमृश्यम्। बाधार्थसामानाधिकरण्यञ्च जगन्मिथ्यात्वनिश्चयधीनं तदसिद्ध्या न शक्यवर्णनम्; अननुगतञ्च।

अन्यच्च—समानाधिकरणवाक्यनामेकपदवृत्त्युपस्थापितार्थविशेष्यकापरपदवृत्त्युपस्थापितार्थाभेदविषयकत्वेन प्रतिपादकत्वं कल्प्यम्। वृत्तिश्च कचित् शक्तिः कचिल्लक्षणेति यथायथम्। अतः शक्यार्थलक्ष्यार्थसाधारण्येनैक्यपरत्वस्य सामानाधिकरण्यवाक्यगतत्वात् ऐक्योपदेशबाधः कदापि न भवति। न खलु विभक्तयवगतमैक्यं परित्यज्य भेदसंबन्धज्ञानमत्र स्वीकुर्मः कुत्रापि। यथाश्रुतत्यागे भवतामप्यविशिष्टे अनुभवान्तराबाधेन लक्षणाकल्पना कुत्रेति लाघवगौरवचिन्तनपूर्वमेवार्थनिर्धारणं कार्यम्। श्रुतिशैलीमनुसृत्याप्यर्थनिर्धारणं कार्यम्—जीवेश्वरैक्यभङ्गे च—स आत्मभवन्निति वाक्यं दर्शितं शतदूषण्याम्। यं कञ्चित् संनिकर्षं पुरस्कृत्य सामानाधिकरण्यनिर्देशो भिन्नविषये बहुलं श्रुतौ, यथा, त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। अत्र ब्रह्म वेदः। 'स इदं सर्वं भवति'', 'ओंकारो वै सर्वा वाक्', 'ब्रह्मा संवत्सरः', 'संवत्सरोऽसावादित्यः,' 'त्वं यज्ञस्त्वं वषट्कारः', 'गायत्री वा इदं सर्वम्' इत्येवम्। सायुज्यप्रकरणे चाभेदनिर्देशाः जीवेश्वरैक्यभङ्गप्रसाधने दर्शिता एव। पदेपदे एतादृशानि वाक्यानि समुपलभ्यमानान्येवेति किं विस्तरेण।

सर्वमिदं लक्षणां कृत्वा निर्वहा। यदा तु मुख्यार्थपौष्कल्यमेवास्मन्मते स्थापयति, तदा न शङ्कातुषशकलस्याप्यवकाशः।

यत्तु-इदं रजतमिति शुक्तावारोपनिबन्धनाभिलापवत् स्थूलोऽहमित्यभेदानुभवमूलोऽपदेशः कूटस्थ इति तेनैव निर्वाहे न शरीरशरिरिभावनिबन्धनऐक्यापदेशः स्वीकर्तव्य इति—तन्न—इदं रजतमिति बुद्धिर्व्यवहारश्च भ्रान्तस्यैव। अभ्रान्तस्तु रजतमिदमित्ययं मन्यत इति गृह्णीयात्; न तु रजतमिदमित्येव। तत् कस्मात्? शुक्तौ रजततादात्म्यस्य वस्तुतोऽभावात्। यदि त्वनिर्वचनीयं रजतं कस्यचिदविद्याबलेनोपात्तम्। यदि च तत्तादात्म्यं काल्पनिकं किञ्चिदस्ति शुक्तौ, तर्हि सर्वज्ञेन तस्यापि ज्ञेयतया सोऽपि इदं रजतमिति मन्येत। न चैवम्। अतो नानिर्वचनीयम्। आरोपात्मकं तु तत् ज्ञानं भेद-

ग्रहवतो बाधकसत्त्वान्न जायते । एवं भेदग्रहे सत्यपि, स्थूलोऽहम्, विप्रोऽहम्, देवदत्तः श्यामो युवा लोहिताक्षः इति परमर्षिप्रभृतीनां परमाप्तानां व्यवहारो विश्वविदितः। श्रुतिश्च, 'राजा राजसूयेन स्वाराज्यकामो यजेत'; 'यदि ब्राह्मणो यजेत' 'ब्रह्मचार्याचार्यकुलवासी', 'स खल्वेवं वर्तयन् यावदायुषम्,' 'चतुर्विधा भिक्षवस्तु स्मृताः सामान्यलिङ्गिनः। तेषां पृथक्पृथङ्नाम वृत्तिभेदात् कृतं श्रुतौ' इति तत्तद्वर्गपरमहंसपर्यन्ताश्रमपुरस्कारेण विधयो न ह्यविवेकिनं प्रति भवितुमर्हन्ति। देहात्मभ्रान्तिमन्तः खलु पारलौकिकफलसाधनेषु कर्मसु न कथमपि प्रवर्तितुमर्हन्ति, प्रागेव त्वपवर्गे इति विवेकिनः प्रत्येव वैदिकविधयः। एवं सति ब्राह्मणो यजेतेत्यस्य ब्राह्मणत्वाभिमानीति कथमर्थः स्यात्। अभिमानश्च किमारोपात्मकः, उत यथार्थः अन्त्ये आत्मनि ब्राह्मणत्वादिना भाव्यम्। आद्ये तु यः स्वयमब्राह्मणोऽप्यात्मानं ब्राह्मणं मन्यते, पौण्ड्रक इवात्मानं वासुदेवम्, तस्यापि तत्र कर्मण्यधिकारः स्यात्। एवं राजत्वाभिमानिनो विप्रादेरपि राजसूयेऽधिकारापत्तिः। शूद्रा अपि त्रैवर्णिकत्वेन स्वयं मन्यमानाः वैदिककर्मस्वधिक्रियेरन्। अतो ब्राह्मणादिदेहसंबन्धः स्वामित्वरूपो यस्यास्ति, स तत् कर्म कुर्यादित्येवार्थवर्णनं कार्यमिति आरोपात्मकज्ञानमादाय श्रुत्यर्थनिर्वाहायोगात् अनारोपात्मकज्ञानमादाय वाक्यार्थे वर्णयितुं शक्ये यत्यादिष्वारोपेण व्यवहारनिर्वाहस्यानुचितत्वाच्च विप्रत्वादिविशिष्टदेहसंबन्धीत्येव तत्र विप्रादिशब्दार्थः। अत एव भगवान् बादरायणोऽपि, "अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवत्" इति देहसंबन्धं स्वामित्वरूपं दर्शयति।

यत्त्वत्र कूटस्थनित्यस्यात्मनोऽपरिणामिनो नास्ति देहेन संयोगः समवायो वाऽन्यो वा कश्चित् संबन्धः; सकलधर्मातिगत्वादित्यभिसंधाय देहस्यात्मना संबन्धो मिथ्यातादात्म्यरूप इत्यभिप्रायेण, 'कः पुनरयं देहसंबन्धः? देहादिरयं संघातोऽहमेवेति आत्मनि विपरीतप्रत्ययोत्पत्तिः' इति शाङ्करभाष्यम्, तदेतेन निरस्तम्। तादृशप्रत्ययस्य पारलौकिकफलाधिकारिषु

वक्तुमशक्यत्वात् । सौत्रसंबन्धशब्दस्वरसार्थत्यागेनारोपार्थवर्णनस्यायुक्तत्वाच्च । वस्तुतस्तु अध्यासभाष्ये, 'शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसंबन्धमधिक्रियते —तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसारि आत्मतत्त्वमधिकारे अपेक्षते' इति वाक्यपर्यालोचने देहाध्यासरहितानामेव कर्माधिकारस्तद्दिष्टो निश्चीयते । परंतु देहाध्यासाभावेऽपि देहादिसंघातनिविष्टाहंकारतादात्म्याध्यसात् कर्मसु प्रवृत्तिरिति विवक्षितम् । एवञ्च ब्राह्मणो यजेतेत्यस्य ब्राह्मणत्वजात्यवच्छिन्नदेहघटितसंघातनिविष्टकिञ्चित्तादात्म्याध्यासवान् यजेतेत्यर्थ इति तदाशयः । एवञ्च स्थूलोऽहमिति विवेकिव्यवहारे अहमर्थे स्थूलत्वाश्रयत्वाभावात् स्थूलत्वाश्रयदेहाध्यासस्याप्यभावात् स्थूलदेहघटितसंघातनिविष्टोऽहमित्यर्थवर्णनं कार्यमिति तदभिसंधिः । एवञ्च देहात्मभ्रान्तिमत्पुरुषव्यवहारमूलभूतदेहाध्यासेनैव सर्वत्र निर्वाहाभावात् अद्वैतिभिरात्मनिर्विशेषत्वसिद्धान्तानुसारेण स्थूलोऽहमित्यत्रान्यः कश्चिदर्थ इष्यते । विशिष्टाद्वैतिभिस्तु अध्यासक्लेशस्याघटनेनार्थान्तरं वर्ण्यत इति न कस्यापि मते क्लृप्तेन निर्वाहः । अहमर्थे देहत्वाध्यासतदभावरूपवैषम्यनिबन्धनस्य व्यवहारभेदस्य समन्तव्यत्वात् । इयान् विशेषः—जीवन्मुक्तेषु परमात्मनि चाध्यासस्य कल्पने क्लेशोऽद्वैतिनाम् । विशिष्टाद्वैतिनां मुक्तपरमात्मकर्तृकव्यवहारा अपि यथावस्थितशरीरशरीरिभावरूपवास्तवसंबन्धमादाय सुनिरूढाः । इदमप्येकमवधेयम्—देहसंबन्धादिति संबन्धपदं प्रयुञ्जानो बादरायणः, संबन्धो नास्ति; अध्यासमात्रमिति मतं प्रत्याचष्ट इति । अद्वैतमतरीत्याऽपि शुद्धस्यात्मनो देहस्य च शरीरात्मभावाभावेऽपि जीवदशायां स न प्रतिषेध्यः । अत एव देही, शरीरी, ममेदं शरीरमित्यादिर्व्यवहारः। एवमविद्याशबलस्येश्वरस्य जगन्निरूपितमात्मत्वमपि निरूपयिष्यते । एवञ्च विवेकिप्रयुक्ते स्थूलोहमिति वाक्ये स्थूलत्वाश्रयनिरूपितशरीरित्वरूपार्थे लाघवम्, सर्वानुगमश्चेत्यपि भाव्यम् ।

यत्तु पूर्वमीमांसायामुत्तरमीमांसायाञ्चैतादृशस्थले ऐक्यापदेश इदन्तया न निर्धारित इति—तदपि शोधनीयम्—ब्राह्मणो यजेतेत्यादिविधयां विचा-

रिता एव पूर्वमीमांसायाम्। पारलौकिकफलार्थिविषये देहाध्यासमूलोऽयं व्यवहारो नैव प्रसज्यते। जगन्मिथ्यात्व—आत्मनिर्विशेषत्वादेर्मीमांसकादिसर्वतान्त्रिकानिष्टत्वात् देहादिघटिताहंकाराध्यासवानित्यर्थवर्णनस्य नावकाशः। तादृशात्मज्ञानं कर्माधिकारिविषयेऽनपेक्षितमिति अध्यासभाष्य एवोक्तत्वात् तादृशात्मज्ञानात् पूर्वं तथार्थवर्णनमप्रसक्तञ्च। देहं प्रति जीवस्य स्वामित्वञ्च सर्वान्तिकमुपसिद्धम्। अतो ब्राह्मण इत्यस्य ब्राह्मणशरीरस्वामीत्याद्यर्थः स्वयमेवावगत इति किमर्थं तन्निरूपणम्। उत्तरमीमांसायां तु एवं कर्मकाण्डलोकव्यवहारसिद्धं शरीरात्मभावं दृष्टान्तीकृत्य, 'न तु दृष्टान्तभावात्' इति ब्रह्मणि स प्रत्युक्तः। वाक्यान्वयाधिकरणे च जीवब्रह्मतादात्म्यं कीदृशमिति विचारयता आश्मरथ्यौडुलोमिमतनिरासेन जीवात्मनि ब्रह्मणोऽवस्थितिप्रयुक्तं तदिति वदता काशकृत्स्नमादृियत। सोऽयमेव स्वपक्षः सर्वैरपि विद्यानिष्ठैरभ्युपगन्तव्य इति, आत्मेति तूपगच्छन्ति काशकृत्स्नादयः, ग्राहयन्ति च शास्त्राणीति चतुर्थे निरूपयता पुनरबोधि। अनुज्ञापरिहारसूत्रञ्च देहसंबन्धित्वविशिष्टपरत्वं ब्राह्मणादिपदस्य दर्शयत प्रागुद्धृतम्। अस्त्यन्यदपि, चराचरव्यपाश्रयसूत्रम्। शरीरात्मभावपर्यन्तशोधनेन अभिमानित्वमात्रपुरस्कारेण तादात्म्यव्यवहारः क्वचिदिति अभिमानिव्यपदेशसूत्रेण दर्शितम्। किमितोऽन्यद् वक्तव्यम्। उपादानोपादेयभावनिबन्धन ऐक्यापदेशः अद्वैतिमते दुर्निरूप इति, सदेव सोम्येदमित्येतदर्थशोधने प्रागुक्तमेव। बाधार्थसामानाधिकरण्यं हि तत्। कथं स स्यादैक्यापदेशः। सत्यमिथ्यार्थयोरैक्यायोगात्। अस्मन्मते सर्वस्य विशिष्टब्रह्मवाचितयैक्यं सुस्थम्। उपादानत्वविचारे च शिष्टं द्रष्टव्यम्।

यत्तु अपृथक्सिद्धिः संबन्धविशेषो लोके वेदे वा न क्लृप्त इति—तत्रोच्यते। नीलो घट इतिवत् घटस्य नील इति भेदव्यवहारस्यापि सत्त्वात् घटस्य गुणस्य च कश्चित् संबन्धो वक्तव्यः। तत्र गुणगुणिनोर्भेदाभेद इति भवदीयमतं किञ्चिदास्तां नाम। भेदो निर्विवादः। तत्र समवायश्च सूत्रकारेण प्रति-

षिद्धः। अतः स्वरूपमेव संबन्ध इत्यंगीकारेऽपि किं पृथक्सिद्धयोरयं स्वरूपसंबन्धः उतापृथक्सिद्धयोरिति विचारे ययोर्मध्ये एकतरस्यान्यतरस्मात् पृथगवस्थानं दुर्वचम् ,तयोः स एव संबन्धोऽपृथक्सिद्धिरित्युच्यते। तत्राक्लृप्तांशः कोऽस्ति। तत्तत्स्वरूपस्य तयोरितरेतरापृथग्भावस्य अत एव पृथक्सिद्धिशब्दयोगार्थस्य सर्वस्य क्लृप्तत्वात्। न हि समवायवत् किञ्चिदपूर्वमस्माभिरुच्यते। गुणगुणिसाधारण्येनैवमुक्तम्। परमात्मनस्तु द्रव्यान्तरैः संयोगो भवत्येव। अपृथक्सिद्धिनिर्वचनञ्चास्मत्कृतायां नयद्युमणिभूमिकायां द्रष्टव्यम्। यच्च कथमचेतनायां व्यामिकायां नित्यस्य व्यापकस्य परमात्मनोन्तः प्रवेशः। अतोऽन्तः प्रविश्य नियन्तृत्वरूपमात्मत्वं दुर्वचमिति। ईदृशक्षुद्रोपद्रवस्यापि नैवावसरो निष्कृष्टशरीरात्मभावविज्ञाने। वस्तुतः परमात्मनः जीवविशिष्टवेषेण अन्तरवच्छिन्नसंयोगावच्छिन्नव्यापारवत्त्वं नासंभवि। 'अन्तः प्रविष्टः शास्ता जनानाम्' इति अचित्परिणामेषु शरीरेष्वेवान्तःप्रवेशस्योक्तत्वात्। अन्यत्र तु, 'य आत्मनि तिष्ठन्' इति रीत्या संबन्ध एव विवक्षितः, न तु प्रवेशः। न च क्रियाविरहे संयोगायोगः। तार्किकैरप्यजसंयोगांगीकारात्। विभुद्वयस्यासंयुज्यावस्थानमेव तु दुरवगाहम्; न तु संयोगः प्रतिषेध्योऽस्ति। [संज्ञामूर्तिक्लृप्तिस्तु विशेषानुगतिभ्याम्, इति सूत्रपाठश्चापपाठः] पृथग्व्यवहारानर्हयोः संबन्धविशेषः अपृथक्सिद्धत्वं संयोगविशेषः शरीरशरीरिभावं विनाऽप्युपपद्यत इति यदुक्तम्, किं तेन; अस्माभिरपि धर्मभूतज्ञानतदाश्रयविषये तदङ्गीकारात्, संयोगविशेषातिरिक्तमप्यपृथक्सिद्धत्वमस्त्येव गुणगुणिविषये। अस्तु वा सैव रीतिः सर्वत्र। किं तेनापि। पृथग्व्यवहारानर्हत्वञ्च न शब्देन पृथग्विवक्षायामपि वक्तुमशक्यत्वम्; किं तर्हि? पृथक्हानोपादानार्हत्वाभावः, यथा घटमुपाददानो रूपविशिष्टमेवोपादत्ते, जहद्वा विशिष्टमेव जहाति। 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यास्यार्थश्च प्रागेवाबोधि। सर्वव्याप्तोऽपि परमात्मा, 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते', 'पूर्वोत्पन्नेषु भूतेषु तेषुतेषु कलौ प्रभुः। अनुप्रविश्य कुरुते यत्

समीहितमच्युतः' इत्येवं कदाचिदनुप्रविशन्नपि वर्णितः। यथाऽयमनुप्रवेशः, तथा स्वव्यापृचर एव सर्वत्र सत्यवस्तुनि गुणविशेषाधानप्रयोजकाभिमानविशेषप्रयुक्तोऽप्यनुप्रवेशव्यवहारो भवति। अद्वैतिमत एवानुप्रवेशोऽनुपपन्नः। कूटस्थचैतन्यस्य देहादिना संयोगादिसंबन्धस्याप्यसंभवो हि भामत्यामनुज्ञापरिहारसूत्रे उक्तः। परमात्मनस्तत्तद्रूपेणाभिव्यक्तिरनुप्रवेश इति चायुक्तम्, अभिव्यक्तिरियमुत्पत्तिर्भानं वा। आद्या तु सृष्टेत्यनेनैवोक्ता। भानस्य भावे इवाभावेऽपि अनुप्रवेशस्य स्थितत्वान्न भानमनुप्रवेशः। सद्विद्यायां शरीरशरीरिभावनियामकम् अनुप्रविश्य नियन्तृत्वं नोक्तमित्यपि न—अनेन जीवेनात्मनाऽनुप्रविश्येत्यनुप्रवेशस्योक्तत्वात्, 'उत तमादेश'मिति नियन्तृत्वस्योपक्रम एवोक्तेः। 'ऐतदात्म्यमिदं सर्वं स आत्मा' इति आत्मशरीरभाव एव च कण्ठोक्त इति किं निबन्धनान्तरान्वेषणेन। न चात्रात्मशब्दः स्वरूपपरः; 'गौणश्चेन्नात्मशब्दात्' इति सूत्रे ईक्षतेरमुख्यत्वनिराकरणायात्मशब्दं साधकतया प्रयुञ्जानस्य सूत्रकृतः, आत्मशब्दः शरीरप्रतिसंबन्धिपर इत्यभिप्रायावगमात्। स्वरूपपरत्वे हि प्रधानस्वरूपमपि स्यादिति नैतेनामुख्यत्ववारणं कृतं स्यादिति।

धर्माधर्मनियन्तृत्वस्य परमात्मनि श्रुतत्वात् जीवस्य शरीरनियन्तृत्वं न भवतीति शतभूषणी। अस्य तेन कः संबन्धः। "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" इति वाक्येन करचरणाद्यवयवोपेतमेव शरीरमित्यगम्यत इत्याह। स्वशरीरमात्रमर्जुनशरीरमात्रं वा शरीरमित्यवगम्यते, इदमितिश्रवणादिति कस्मान्नाह। एतद् यो वेत्तीति ज्ञातृत्वेत निर्देशात् नियन्तृत्वं नास्तीत्याह। एवं तर्हि भोक्तृत्वकर्तृत्वस्वप्रकाशत्वेतरवस्तुज्ञातृत्वादिकमपि न भवेत्। सर्वक्षेत्रेष्विति पदं प्रतिक्षेत्रवर्तिभिन्नभिन्नक्षेत्रज्ञविलक्षणत्वं मामित्युक्तेऽर्थे दर्शयति। क्षेत्रज्ञञ्चापि मां विध्दीति क्षेत्रज्ञमात्रेणाभेदवर्णनात् अचिदभेदो नास्तीति ज्ञायत इत्युक्तमपि न सम्यक्—अन्यथा चापीत्यपिशब्दवैयर्थ्यात्। उपरि क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज्ज्ञानं मतं ममेति क्षेत्रक्षेत्रज्ञज्ञानस्य स्वज्ञानत्वकथनेन क्षेत्रक्षेत्रज्ञयोः स्वाभेदस्य ज्ञापितत्वात्। कथं जडब्रह्माभेद इति चेत्—

कथमज्ञसर्वज्ञाभेदः । भवन्मते उभयत्रैकरूप्याभावपर्यालोचनया क्षेत्रवत् क्षेत्रज्ञस्य परमात्मशरीरत्वमापतिष्यतीति भीत्या च क्षेत्रघटरमुपेक्ष्यते भवद्भिः ।

"न चैतावता सविशेषवाक्यप्रामाण्येन व्यावहारिकं सविशेषनियन्तृत्वं चितोऽचितश्च दण्डेन वार्यते" इति वदन्ती शतभूषणी सविशेषस्य चेतनाचेतननियन्तृत्वं स्वमतेऽनुजानाति । एतच्च तत्पदब्रह्मपदादीनामपि सविशेषपरत्वात् सर्वं खल्विति सर्वनियन्तृत्वरूपार्थः परं किमिति दण्डेन वार्यते । सर्वशब्दस्यैवमर्थश्च नामसहस्रशाङ्करभाष्येऽप्यदर्शि प्रमाणमुखेन, 'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् । सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते' (महाभा.उ. 70-11) इति । अत्र भूतभविष्यद्वर्तमानसर्वोत्पत्तिलयकारणत्वात् सर्वज्ञत्वाच्च सर्वशब्दवाच्यत्वमुक्तम् । उत्पत्तिलयकारणत्ववचनात् उपादनत्वप्रदर्शनम् । उपादानस्य कार्ये व्याप्तिस्वभावत्वात् पूर्वार्धे व्याप्तिर्ज्ञाप्यते । सर्वज्ञानादिति नियन्तृत्वविवक्षा । तथाच व्यापित्वे सति नियन्तृत्वं दर्शितं भवति । इदमेवाभिप्रेत्य 'सर्वं खल्विदं ब्रह्म' इत्यत्र, 'तज्जलानिति' तज्जत्वतल्लत्वतदनत्वरूपहेतूपन्यासः । त्रितयमिदमनेनैव क्रमेण पूर्वस्मिन् वचने निर्दिष्टम् । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीताऽपि नियन्तृत्वविशिष्टव्याप्तिं हेतूकरोति । अतः सर्वशब्दस्य सर्वान्तर्यामित्वमित्यर्थः प्रामाणिकः । एवमर्थवर्णनादरणे निर्विशेषवाक्यप्रामाण्यं रक्षितं न भवेदिति बिभेति । विशेषणानामपारमार्थिकत्वे निर्विशेषत्वमप्यपारमार्थिकमेव स्यादित्यपि भेतव्यम् । प्रतियोग्यपारमार्थ्ये अभाव' पारमार्थ्यायोगात् । अनिवर्चनीयस्यासिद्धेश्च । अतो विशेषाभावपारमर्थ्यं विशेषपारमार्थ्यायत्तम्, विशेषपारमार्थ्यं तु विशेषाभावपारमार्थ्यं नापेक्षत इति सविशेषवाक्यं प्रमाणं भवत् निर्विशेषवाक्यमपि स्वाविरुद्धार्थेऽवस्थापयतीति न किञ्चिदप्रमाणम् । अपिच तत्त्वमसिवाक्यं न निर्विशेषमात्रपारमार्थ्यपरम् । तथासतीहैवमुक्तया, 'वाङ्मनसि संपद्यते मनः प्राणे' इत्युक्तान्तिनिरूपणायोगात् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति तत्त्वज्ञान-

निष्पन्नानन्तरमपि निवृत्तये कालप्रतीक्षादर्शनाच्च । न हि तत्त्वज्ञानात् पश्चान्मिथ्याज्ञाननिवृत्तये कालप्रतीक्षा भवितुमर्हति ।

अस्मदाचार्यैरुक्तं भेदसाम्राज्यं दृष्ट्वापि पुनः तत्पदस्य त्वम्पदस्य शुध्द-ब्रह्मशुध्दात्मपरत्वाश्रयणाल्लक्षणेति दोषोद्घाटनं गगने पङ्कक्षेपणमेव । तत्त्वमसीत्यसिशब्दार्थः अद्वैतिमते सर्वथैवानन्वितः । अस्मन्मते तु विशेष-णेऽन्वेति, विशीर्षाणं त्वाष्ट्रमहनमित्यादौ हननकर्तृत्वादिवत् । निरवशेषमेव समाहितं सर्वं न्यायपरिशुध्दावाचार्यैरिति तत्रैव द्रष्टव्यम् ।

यत्तु—भेदपराणि वाक्यानि ज्ञातविषयकत्वात् व्यपदेशरूपाणि । अभेद-विषयकवाक्यराशिरुपदेशः । अत एव सूत्रे भेदव्यपदेशादित्युच्यते, अभेदविषये तु अधीयत इतीति—तदपि न—भेदनिर्देशस्थलेऽप्यस्त्येवोपदेश-शब्दः, 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्', 'कल्पनोपदेशाच्च', 'प्रत्यक्षोपदेशात्' इत्येवम् । अधीयत इति निर्देशोऽपि भेदविषये, 'उभयेऽपि हि भेदेनैनमधीयत' इति । व्यपदेशशब्दो भेदविषय एवेत्यपि न; अंशसूत्र एव, 'नानाव्यपदेशादन्यथा चापी'त्यत्र अन्यथेत्यत्रापि व्यपदेशपदानु-षङ्गस्य भाष्येपि दर्शितत्वात्, अज्ञातविषये विशिष्टोऽपदेशो व्यपदेश इति व्यपदेशोऽप्युपदेश एव । उततमादेशमित्यादेशशब्दार्थशोधने च पराक्रान्तं सूरिभिः । उपनिषद्भाष्यपरिष्कारावप्यत्र द्रष्टव्यौ । किञ्चोपदेशशब्दोऽज्ञात-विषयः, व्यपदेशशब्दश्च ज्ञातविषय इत्यस्तु । तावता ज्ञातं मिथ्या, अज्ञातं सत्यमिति न नियमोऽस्ति । गरुडमात्मानं जानीयादित्यज्ञातैक्योपदेशमात्रेण तस्य सत्यत्वं न भविष्यति । अस्थूलमनण्विति आत्मनि कतिपयव्यावृत्तेर्ज्ञाताया ज्ञापन-मात्रेण व्यावृत्तेरसत्यत्वं न भविष्यति । 'ज्ञानी त्वात्मैव' इत्यैक्यवर्णनान्न शरीरा-भाव इत्यपि न; ज्ञानिनोऽज्ञानिनः सर्वस्यापि वस्तुनः सर्वदा तदैक्यात् ज्ञानि-मात्रे तदैक्यकथनायोगात् । अस्मन्मते त्वाहार्य आत्मत्वारोपः स्वाभिमते सर्वत्र पुरुषे भवितुमर्हति, न तस्य सर्वजीवान्तर्यामित्वस्य च कश्चिद् विरोधः। ऐक्योपदेशान्यथानुपपत्त्या हि ब्रह्मण्यज्ञानं जगन्मिथ्यात्वञ्च कल्प्यते । उपदेशा-

न्यथानुपपत्त्यैव ऐक्यं नास्तीति सिध्दौ ऐक्योपदेशान्यथानुपपत्तेः का प्रसक्ति-रिति च भाव्यम् । प्रसाधिता चोपदेशानुपपत्तिः उपदेष्टु रुपदेश्यस्यैवैक्यज्ञाने स्वान्यस्य सर्वस्य मिथ्यात्वज्ञाने, बन्धस्यैव वस्तुतोऽभावज्ञाने चोपदेशस्यैवासं-भवात् ।

यत्तु—निर्विशेषवाक्यानां दूरस्थोपासनाशेषत्वमयुक्तमिति—तन्न—सगुण-वाक्यानामप्युपासनाप्रकरणदविष्ठानामुपासनशेषत्वकल्पनायोगात् । केवल-स्यैक्यज्ञानस्य मोक्षहेतुत्वाभावेनैक्योपासनपर्यन्ते तात्पर्यस्य भवताऽपि वक्तव्य-त्वाच्च । यत्तु अनुगीताप्रामाण्यात् क्षेत्रज्ञपरमात्मैक्यप्रतीतिरिति—तदपि न—'मनो मे ब्राह्मणं विद्धि बुध्दिं मे विद्धि ब्राह्मणीम् । क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनञ्जय'' इति वचनं हि पूर्वं ब्राह्मणब्राह्मणीक्षेत्रज्ञशब्दैर्विवक्षिताः मनोबुध्दिपरमात्मान इत्येव वदति । यदि क्षेत्रज्ञशब्देन परमात्मोक्तः, तावता सर्वत्र क्षेत्रज्ञशब्दवाच्यजीवैक्यं तस्य न भवितुमर्हति । न ह्यत्र ब्राह्मणादि-शब्दतो मनःप्रभृतिग्रहणमात्रेण लोके ब्राह्मणातिरिक्तमनस्तत्त्वाभावः ब्राह्म-णातिरिक्तबुध्दितत्त्वाभावो वेति । सिध्दे खल्वैक्ये तदन्यथानुपपत्तिः । तदेव न ; यतः—

चितमिव जडमाहत्येष्ट ऐक्योपदेशो
द्वयमिदमविशिष्टं स्याच्छरीरात्मभावे ।
पदमुभयमखण्डं बोधयेच्चेत् निमित्त-
द्वयविरहत ऐक्यं नैव शक्योपदेशम् ॥

शुभमस्तु

---

श्रीः

# अधिकारिभङ्गप्रसाधनम्

बुभुक्षयैश्वर्यफलेषु कर्मस्वभीक्ष्णसक्ताः क्रमशो विरज्य ।
मुमुक्षया यच्चरणं प्रपन्नास्तरन्ति सुख्यन्ति स मे रसोऽस्तु ॥

साधनचतुष्टयाश्रयो ब्रह्ममीमांसायामधिक्रियते इति वदन्ति । कोऽसौ, कथं तस्य मुमुक्षाश्रयत्वमिति प्रकृतवादे विचार्यते । तत्र विकल्पितेषु कल्पेषु कश्चन कल्पमादृत्य तत्र मुमुक्षाश्रयत्वमुपपादनीयम् । तत् विहाय 'कथयन्तु' इत्युक्तमेव सत्यापयति कथाविस्तरेण शतभूषणी । अहङ्कारान्तहृदयग्रन्थिनिवृत्तिर्मोक्ष इति प्रथममाशेते । अथ मायावस्थाविशेषरूपोपाधिनिवृत्तिरिति । अन्ते तु मोक्षप्रतिबन्धकाज्ञाननिवृत्तीच्छा मुमुक्षेति वदन्ती अज्ञाननिवृत्तिर्मोक्ष इति मन्यते । तत्र मोक्षप्रतिबन्धकेति विशेषणमनन्वितम् । स्वनिवृत्तौ स्वस्य प्रतिबन्धकत्वेन व्यवहाराभावात् । प्रतियोगिविधया कारणत्वं तु स्यात् । अस्त्वेतत् । बद्धस्य मुक्तिः । बन्धश्चोपाधिब्रह्मोभयघटनेनोपपादनीयः । उपाधिचैतन्योभयातिरिक्तं वा मिथ्यातथ्योभयातिरिक्तं वा न किञ्चिदिति द्वयोर्मध्ये कस्य मुमुक्षाश्रयत्वमित्येव प्रश्नः । तत्रोपाधेर्नश्यत्तया मोक्षाश्रयत्वमसंभवि । अतः स न स्वं मुमुक्षति । चैतन्यं तु निर्धर्मकत्वात् न मुमुक्षाश्रयः । उपहितचैतन्यं गृह्यतामिति चेत्—तदपि उपाधिचैतन्योभयातिरिक्तं न भवति । तत्रापि चैतन्याभेदे धर्माश्रयत्वमेव न, तद्भेदे तु मिथ्यात्वान्निवर्तनीयतया मोक्षेऽभावात् न मोक्षाश्रयत्वमिति न मुमुक्षा ।

पक्षद्वयं परिगृह्य समाधित्सति शतभूषणी, 'उपहितरूपं स्वरूपेण सत्यमित्यङ्गीकृत्याभेदोपदेश उपपादितः ; साम्प्रतं तु अहमर्थस्यानात्मत्वकल्पमाश्रित्य मुमुक्षोपपाद्यते'' इति । प्रथमपक्षे अहङ्कारावच्छिन्नचैतन्यमहमर्थो जीवः ; तस्य मुमुक्षा । द्वितीये अहङ्कार एवाहमर्थो जीवः ; तस्य मुमुक्षा । द्वितीयपक्षे च तत्त्वमसीतिबाधार्थसामानाधिकरण्यम् । तत्पक्षे मोक्षः जीवस्य

नाश एवेति नाशेच्छैव मुमुक्षेत्यापतति। प्रथमपक्षे तु मोक्षे स्वरूपमात्रमवतिष्ठते, अथापि यादृशस्य मुमुक्षाश्रयत्वम्, तादृशं तु नास्त्येव। न च—ब्राह्मणत्वादिविशिष्टः स्वर्गेच्छया प्रवर्तते, फलभाक् तु तदुपलक्षित आत्मैवेति संप्रतिपन्नम्। तद्वत् उपध्युपहिते मुमुक्षा, तदुपलक्षितस्वरूपे च फलमिति न दोष इति वाच्यम्—वैषम्यात्। तत्र हि फलेच्छा आत्मन्येव, फलमपि तत्रैव। इह तु मुमुक्षारूपेच्छा उपहितान्तर्गतविशेष्यांशे न भवति, तस्य निर्विशेषत्वात्। 'कामः संकल्पो विचिकित्सा—एतत्सर्वं मन एवे'ति मनसोऽन्तःकरणस्यैवेच्छाश्रयत्वसंभवात् तस्य च मोक्षे नाशात् स्वगतमोक्षविषयकेच्छारूपमुमुक्षाया दुर्वचत्वात्। न चान्यगतमोक्षविषयकेच्छा मुमुक्षा भवति। तथा सन्प्रत्ययायोगात्। धातोः कर्मणः समानकर्तृकादिति सूत्रात्। न चान्तःकरणतादात्म्याध्यासात् मुमुक्षुत्वाभिमान इति वाच्यम्—तर्हि मुमुक्षुत्वाभिमानेऽपि मुमुक्षुत्वाभाव एवेति नाधिकारलक्षणमस्ति। अध्यासो वाऽभिमानो वाऽयं किंनिष्ठः। न चैतन्ये तत्संभवः। अन्तःकरणनिष्ठ इति चेत्—तर्हि अमुमुक्षु चैतन्यं मुमुक्षुत्वेनाभिमन्यतेऽन्तःकरणेनैवेत्युक्तं भवतीति। अथ—नैवम्; मोक्षो नाम उपहितस्वरूपनिष्ठा उपाधिनिवृत्तिः। तादृशमोक्षाश्रयत्वं चैतन्येऽस्त्येव। अन्तःकरणं चैतन्यतादात्म्याध्यासवशात् मोक्षं स्वनिष्ठतयाऽध्यस्य मुमुक्षते। अनया मुमुक्षया मीमांसायां निष्पन्नं ज्ञानं चैतन्यस्य मोक्षाय कल्पत इति चेत्—एतावता मोक्षाभाववत एवान्तःकरणस्य स्वस्मिन् मोक्षाश्रयत्वभ्रमाधीना मुमुक्षेत्युक्तं भवति। तथाच नेयं यथार्था मुमुक्षा। यो बुभुक्षया कर्मसु चिरं प्रवृत्तः तस्येहामुत्रफलभोगविरागपूर्विका स्वस्य मुक्त्याश्रयत्वसंभवप्रमाधीना मुमुक्षैव हि लोके तान्त्रिकैरधिकारिविशेषणत्वेनावधृता। सा तावन्नास्तीति। भवन्त्यपीयं भ्रममूला मुमुक्षा प्रथमाधिकरणोक्तरीत्या सर्वस्याध्यासमूलकत्वावधारणे सति न स्थास्यति। अन्तःकरणं विनङ्क्ष्यति, चैतन्यमात्रमवस्थास्यते, प्रवृत्तिरियं स्वविनाशाय चैतन्यस्य मुक्तये चैव भविष्यतीत्यस्यान्तःकरणेन परिशीलनसंभवात् ततःप्रभृति अन्तःकरणस्य न मुमुक्षा। एवं विवे-

किहितकारिपरिचयात् प्रवर्तमानानां प्रथमतोऽपि स्वनाशेच्छैव मीमांसायाः प्रवर्तिका स्यात् ।* तथाच नाशश्चतुर्थपुरुषार्थ इत्येव प्रसिद्ध्या भाव्यम् । तदिच्छाया एवाधिकारिविशेषणत्वमभिधानीयम् । तथाच निरस्ताखिलदुःखोऽहं भवेयमिति मोक्षकामनयैव प्रवृत्तेरानुभविकत्वात् नाशकामनया प्रवृत्तेरनुभवपराहतत्वादयुक्तमिदमिति श्रीभाष्याद्युक्तं सुस्थम् । 'स्वरूपस्य दुःखहेतुत्वे स्वविनाशार्थं प्रवृत्तिरपि दृश्यते' इति यदुच्यते, तत्रेदमवधेयम् । देहात्मभ्रान्तिमत उद्बन्धनादौ प्रवृत्तिरप्यत्र शतदूषण्यां दर्शितैव । प्रकृते त्वेतावत्—चतुर्थपुरुषार्थमर्थयमानाः अहं मुक्तो भवेयमिति प्रवर्तन्ते वा, नष्टो भवेयमिति वा । बन्धान्मुक्तिरेव हि श्रुत्याप्युच्यते, 'विमुक्तश्च विमुच्यते', 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्येवम् । सूत्रे च, 'मुक्तोपसृप्यव्यपदेशाच्च', 'एवं मुक्तिफलानियमः', 'मुक्तः प्रतिज्ञानात्' इत्येवम् । अतो बुभुक्षुत्वे भोक्तृत्वं मुमुक्षुत्वं मुक्तत्वञ्चैकनिष्ठमिति प्रसिद्धम् । तदुपपादनीयम् । इदमद्वैतिमते न संभवतीति लोकवेदसंप्रदायविरोधप्रदर्शनं हि श्रीभाष्ये क्रियते । न तु लोके स्वनाशार्थप्रवृत्तिर्नास्तीति । उपरि च, 'मयि नष्टेऽपि मत्तोऽन्या काचित् ज्ञप्तिरवस्थिता'इत्यनेन चैतन्यस्थित्यर्थप्रवृत्तिरपि न भवतीत्युक्तम्; इदानीमपि चैतन्यस्य स्थितत्वात् । मुक्ततया तत्स्थित्यर्थमिति चेत्—बद्धस्य किल मुक्तिः । चैतन्यस्य को बन्धः । दुःखाद्याश्रयत्वस्य तत्राभावात् । अन्तःकरणतादात्म्याध्यासो वा अन्तःकरणतादात्म्यमेव वा कल्पितं बन्ध इति चेत् , अन्तःकरणं चैतन्यं तत्तादात्म्यमिति त्रयस्य अहं सुखीत्यादौ केनाप्यननुभूयमानत्वात् । अहमित्यहंत्वतदाश्रययोरेवानुभवात् । अननुभूयमाने च कल्पितत्वस्यापि वक्तुमशक्यत्वात् । तादात्म्यमपि हि तावदनिर्वचनीयमेव । अनिर्वचनीयस्य च सत्येन साकं कश्चित् संबन्धो दुर्वच इति भामत्यामप्युक्तम् । तथा चाध्यास एव वाच्यः । स चान्तःकरणगतः न चैतन्य इति कथं चैतन्यस्य बद्धत्वम् । अतो न तस्य मुक्तत्वमपि । ननु अध्यासाश्रयत्वाभावेऽपि अध्यासविषयत्वमस्ति । स एव बन्धः । न । तस्य किञ्चिदनिष्टपर्यवसानाभावात् ।

न हि चैत्रेण मैत्रस्य दुःखित्वेन गृहीतत्वं मैत्रस्यानर्थः। अकल्पने च तदभावात् हेयत्वाभावाच्च तन्निवृत्तिर्नापेक्षणीया। अपेक्षितत्वेऽपि तन्निवृत्तीच्छा किंनिष्ठा? न चैतन्ये, किंत्वन्तःकरणे। चैतन्यगतो यो निवृत्तिरूपो मोक्षः, तदिच्छा चेदन्तःकरणनिष्ठा, सा तर्हि न मुमुक्षा। मोक्षस्य चेच्छायाश्चैकनिष्ठत्वाभावात्। तस्मान्मुमुक्षा दुर्वचैवाहंशब्दस्योपहितस्वरूपपरत्वेऽपि। अन्तःकरणमेवाहमर्थ इति नैष्कर्म्यसिद्धिपक्षे तु अहं मुक्तः स्यामिति सर्वजनीनप्रवृत्त्युपपादनमशक्यमेवेति सुस्पष्टम्। तथाच चैतन्यमिति किञ्चित् अध्यासविषयत्वं विना कदाचिदवतिष्ठतां वा, मा वा। किं तच्छोधनेन। तस्याः मुमुक्षात्वाभावात्। अतः स्वनाशकामनैव प्रवर्तिका वाच्या। साऽपि न मुमुक्षेति सर्वतीर्थकरसंमतमुमुक्षाप्रकारः सर्वथैवाद्वैतिभिर्दुरुपपादः। एतदनुपपादनेन विस्तरः कथामात्रम्।

प्रतिबिम्बो जीवः। उपाधेः प्रतिबिम्बपक्षपातित्वाद् बद्धत्वं तस्यैवेति बन्धनिवृत्तये जीवस्येच्छेति यदुक्तम्—तत्र पृच्छ्यते—बिम्बप्रतिबिम्बयोः किं भेद इष्यते, उत बिम्बमेव प्रतिबिम्बत्वविशिष्टं भवति, दर्पणे मम मुखमित्यनुभवादित्युच्यते। आद्ये, प्रतिबिम्बं तत्त्वज्ञाने सति नङ्क्ष्यतीति नाशेच्छैव मुमुक्षा स्यात्। अन्त्ये, उपाधेः प्रतिबिम्बपक्षपातित्वात् बिम्बे दोषो नास्तीति कथम्। जलादिप्रतिबिम्बिते सूर्ये बिम्बे वक्रत्वमलिनत्वादि न लक्ष्यत इति चेत्—तर्हि प्रतिबिम्बं सूर्यश्च भिन्ने इत्यास्थीयताम्। जलादिप्रतिहतचाक्षुषरश्मिवशात् सूर्य एव तथा गृह्यत इति सूर्यापेक्षया कः प्रतिबिम्बो नामेति चेत्—तर्हि उपाधेः प्रतिबिम्बपक्षपातित्वादिति किमुच्यते। उपाधावेव वक्रत्वादिकम्, यस्योपाधिः, तस्य तु न किञ्चिदित्येवोक्तं भवति। एवञ्च प्रकृते चैतन्ये बद्धत्वादिकं न; किंतूपाधाविति, तन्निवृत्त्यपेक्षा नामोपाधिनाशापेक्षैवेति। एवं स्थिते, यथा परमात्मप्रेरितः तच्छरीरभूतो जीवः स्वमोक्षार्थं प्रयतते श्रीभाष्यमते, तथा प्रतिबिम्बं प्रवर्ततामद्वैतिमत इत्युक्तिरसंगता,

प्रतिबिम्बे प्रवृत्तिशक्त्यभावात्; मोक्षकाले तन्नाशेन मुमुक्षाया अपि दुर्वचत्वाच्च। प्रतिबिम्बत्वविशिष्टचैतन्यमपि चैतन्यमेवेति न तस्येच्छादिविकारवत्त्वम्। विकारवत्त्वस्वीकारे च स मुक्तौ नश्यत्येव, अतिरिक्तत्वात्। चैतन्यस्य मुक्त्युपपादने च नायं प्रतिबिम्बबन्धमोक्षपक्षः स्यात्। तत्र च पक्षे प्रागेवोक्तो दोषः। कूटस्थचैतन्यकल्पित आभासरूपो विनश्यन् बाधितोऽहमर्थोऽधिकारीति भवदुक्तनैष्कर्म्यसिद्ध्यनुरोधिपक्षे चाधिकारिनाश एवान्ते इति कथं तदिच्छा मुमुक्षा स्यात्। 'श्रीभाष्यमते सशरीरस्यात्मनः परमात्मशरीरत्वात् आत्मस्वरूपनाश एव मुक्तौ' इति निमीलितनेत्रेणोच्यमानमन्ध एव श्रद्दध्यात्। प्राकृतेनाप्राकृतेन च शरीरेण सशरीरो वा अशरीरो वा आत्मा सर्वदा परमात्मशरीरमेव; तावता कथं तन्नाशः; तस्य नित्यत्वात्। 'न जायते म्रियते वा विपश्चित्' इति शरीरनाशेपि तदनाशः प्रसिद्धः।

'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति श्रुतिरपरिच्छिन्नानन्दविशिष्टतया आनन्दस्वरूपतया च आनन्दमयशब्दवाच्यपरमात्मप्राप्त्या तत्तुल्यानन्दभाक्त्वं मुक्तस्य स्थितमुपदिशतीति स्पष्टम्, "अस्मिन्नस्य च तद्योगं शास्ति" इति सूत्रेऽपि। सेयं श्रुतिरानन्दांशावरणनिवृत्त्याऽवस्थानमेव ब्रवीतीति शतभूषणी मन्यते। कोऽयमानन्दो नामेति प्रश्ने तु दुःखरूपत्वाभावमात्रमित्येव वक्ष्यति। एवं श्रुतिकदर्थनमानन्दत्वभङ्गवादे पृथगेव व्यक्तीकरिष्यते। अविद्यानिवृत्तित्वोपलक्षितचिन्मात्रतैव मुक्तिरिति कथम्, आनन्दावाप्तेरप्यवगमादित्यत्र तदपलापार्थमेवं शतभूषणी प्रवृत्ता। अविद्यानिवृत्तित्वोपलक्षितचिन्मात्रतारूपमुक्तौ तत्त्वज्ञानसाध्यांशः कः। चिन्मात्रत्वं ज्ञानानाश्रयत्वे सति जडत्वाभावः। तत्तु प्रागेव स्थितम्। अविद्यानिवृत्तिः साध्येति वक्तव्यम्। निवृत्तित्वोपलक्षितेत्यनेन निवृत्तिरपि चिन्मात्रानतिरिक्तेत्याविष्करणात् असाध्यत्वमेव सिद्धम्, सिद्धत्वात्। एवमात्यन्तिकदुःखनिवृत्तित्वोपलक्षितचिन्मात्रता मुक्तिरिति पक्षेऽप्यनुपपत्तिर्भाव्या। "मुक्तौ स्थूलशरीरनियन्तृत्वाभावः, सूक्ष्मशरीरताप्राप्त्यर्थं प्रयत्नः" इत्येवमपार्थानां श्रीभा-

प्थमते कल्पनेनोच्चावचवचनाभिनिवेशो न विवेकिहृद्यः। कर्मशरीरयोर्बीजाङ्कुरन्यायदूषकशाङ्करभाष्यञ्च प्रागेव द्विः परीक्षितम्।

चण्डमारुतोक्तं 'शास्त्रफलं प्रयोक्तरि' इति न्यायं प्रकृते अप्रवर्तमानं कण्ठचामीकरन्यायमेव तु प्रवर्तमानं मन्यते शतभूषणी। सोऽपि न्यायः चामीकरस्य कण्ठस्थताज्ञानात् असंबन्धित्वभ्रमनिवृत्तिर्यथा, तथात्र स्थितमंशं प्रदर्श्यावतारणीयः। तत्रासंबन्धित्वभ्रमाधीनचामीकरलिप्साप्रयुक्तप्रवृत्तिकः पुरुषः कण्ठस्थताज्ञापनेन निवृत्तभ्रमः प्रवृत्तिं जहाति। तद्वत् ब्रह्मभावाभावभ्रमाधीनतल्लिप्सापूर्वकप्रवृत्तिं ब्रह्मभावस्य स्वत एव स्थितत्वज्ञानेन जहातीति वाच्यम्। एवञ्च श्रवणमात्रं पर्याप्तमिति मननादि व्यर्थमपि। श्रवणेन ज्ञानाभावरूपाज्ञाननिवृत्तावपि अनिर्वचनीयमज्ञानमपरोक्षज्ञानादेव निवर्तते, तदनिवृत्तिं यावत् पुंसः संसारबन्धो न निवर्तत इति चेत्—अपरोक्षज्ञाने जातेऽपि बन्धो न निवर्तत इत्येवानुभवः। प्रारब्धनिवृत्त्यनन्तरं निवर्त्स्यतीति चेत्—निवृत्तेरभावित्वात् प्रारब्धावसानस्याप्यभाव एव। केवलमियं मुक्तिः स्वाभिमतमुक्तिभावित्वविषयकाविस्रम्भपरिहारार्थकल्पनैव। तत्त्वज्ञाने सति मिथ्याभूतांशनिवृत्तये कालप्रतीक्षायाः कुत्राप्यदर्शनात्। अज्ञानं मा निवर्तिष्ट। तत्त्वज्ञानं तु जातम्। ब्रह्मभावो मोक्ष इदानीमप्यस्तीति च ज्ञातम्। सांसारिकं सर्वं मिथ्येति च विदितम्। अतो मनने प्रवृत्तिरनपेक्षिता। एवं कण्ठचामीकरस्थलेऽपि चामीकरलिप्सोः चामीकरप्राप्तत्वज्ञानवतः चामीकरप्राप्तिमतश्चैक्यमपेक्षितमेव। तथेह ब्रह्मभावलिप्साब्रह्मभावसिद्धत्वज्ञानयोः ब्रह्मभावस्य च सामानाधिकरण्यं वक्तव्यम्। तत्तु न; लिप्सादेरन्तःकरणगतत्वात् ब्रह्मभावस्य च चैतन्यनिष्ठत्वात्। सर्वथा मोक्षभाक् यो भविष्यति, तस्मिन् मुमुक्षा दुर्वचेत्येव सिद्धम्।

सर्वानिष्टनिवृत्तिपूर्वकमहानन्दानुभूत्याशया
सर्वे क्षुद्रमुपेक्ष्य यान्ति शरणं ब्रह्मेति तत्त्वस्थितिः।
इष्टप्राप्तिविचारवर्जमितरैरुक्ता मुमुक्षा तु या
साऽप्यद्वैतिमताऽपि तैर्न सुवचा; न ब्रह्मचिन्ता ततः॥

शुभमस्तु

श्री :

# मुक्तसंवित्सविषयत्वप्रसाधनम्

आत्मानः स्वप्रकाशाः निजमतित्रिभवान्मुक्तिकालोपनीतात्
पश्यन्ति ब्रह्म सर्वान्वितम्, अपि सुखतां तत्र सर्वत्र नित्याम्।
एतस्मात् पूरुषार्थे परमखिलगुणात्यन्तदूरं निवृत्तौ
सर्वस्य स्वात्ममात्रस्फुरणमभिदधुः केचिदेतन्न तत्त्वम्॥

अस्य पूर्ववादसंगतिस्तावत्—

मुमुक्षायामनिष्टस्य निवृत्तिर्मुक्तिरीरिता।
सर्वानुभूतिरूपेष्टप्राप्तिस्तत्राधुनोच्यते॥

भावान्तराभाववादस्यैव प्रामाणिकतया मुमुक्षापूर्वप्रवृत्तिनिष्पादिता मुक्तिः कीदृग्भावरूपेति विवेक्तव्यम्। तत्र ब्रह्मस्थितिरात्मस्थितिर्वा सा न भवति। नित्यतया तस्याः साध्यमुक्तिरूपत्वायोगात्। अत एवाविद्यानिवृत्तिर्ब्रह्मैवेति पक्षः प्रतिक्षेप्यः। अत एव शतभूषण्युक्तं यत्, 'ब्रह्म वेद ब्रह्मैव भवति' इति वचनात् ब्रह्मभावाख्यं परं मुक्तिस्वरूपमिति—तदसंभवि। किमयमब्रह्मणो ब्रह्मभावः, उत ब्रह्मण एव। नाद्यः, अन्यद् द्रव्यं द्रव्यान्तरतां नैतीत्यस्योभयसंमतत्वात्। अद्वैतिमते ब्रह्मभावस्य प्रागेव स्थितत्वाच्च। अत एव नान्त्यः। न च ब्रह्मस्फुरणं पश्चात्तनम्; स्वप्रकाशत्वात् स्वरूपातिरिक्तस्फुरणाभावाच्च तस्याप्यनादित्वात्। न च ब्रह्मविषयकज्ञानान्तरोत्पत्तिस्तदेष्येत, अपसिद्धान्तप्रसंगात्। न चानन्दस्फूर्तिर्ब्रह्मभावः, दुःखरूपत्वाभावातिरिक्तकिञ्चिदभावात्। अत एव ब्रह्मवेदनानन्तरभावितया श्रुत्युक्तो ब्रह्मभावो नाद्वैतिसंमतरूपो भवितुमर्हति। तस्मात् श्रुत्यन्तरोक्तं ब्रह्मपरमसाम्यं ब्राह्मरूपाविर्भावात्मकं ब्रह्मवत् सर्वविषयकानुभवात्मकज्ञानसंपन्नत्वमेव ब्रह्मभाव इति वक्तव्यम्। तत् सिद्धं मुक्तसंवित् सविषयेति।

स चानुभवः परिपूर्णब्रह्मविषयक एवेति, 'ब्रह्मविदाप्नोति परम्' इति वाक्यैककण्ठ्यम्। तथा च, "परात् परं पुरुषमुपैति दिव्यम्' इति श्रुत्यन्तरप्रसिद्धपरमपदाख्यद्युलोकदीव्यत्परवासुदेवप्राप्तिरूपपूर्ववाक्योक्तफलनिगमनमेवात्र क्रियते, पुरुषप्राप्तिरियं न तत्सालोक्यसामीप्यमात्ररूपा, किंतु प्रागुक्तपरमसाम्यरूपब्राह्मरूपाविर्भाव एवेति ज्ञापनाय। 'सोऽश्नुते सर्वान् कामान् सह'इति ब्रह्मसहितानेककामानुभवे स्पष्टं श्रूयमाणे केवलानन्दरूपेणावस्थानमेव तदर्थ इति श्रद्धालुभ्य एव रोचेत। यस्यां ब्रह्मापि नानुभूयते, कामास्त्वभावादेव नतराम्; आनन्दरूपमपि ब्रह्म अग्राह्यत्वान्नानुभूयते। दुःखानुभवाभाव एव चानन्दानुभवो नाम—सा दशा एतच्छ्रुत्यर्थ इति खल्वतिसाहसम्। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति वाक्यं तु ब्रह्मानन्दस्य शतगुणितमानुषानन्दोत्तरोत्तरातिशयितत्वबोधिश्रुत्यनुसारं ब्रह्मानन्दस्य सर्वपुरुषानन्दापेक्षयाऽत्यन्तातिशयितत्वात् तदेकदेशलवानुभव एवान्येषामिति ब्रवीति; न पुनर्जीवानुभाव्यानन्दस्य ब्रह्मणश्चैक्यम्। मुक्तानुभाव्यब्रह्मणो विपश्चितेति विशेषणात् सर्वज्ञभगवदानन्दानुभवतौल्यं मुक्तानन्दे, तथा मुक्तानन्दानुभवसप्रेमदर्शनवत्त्वं च ब्रह्मणि लभ्यते। उपरि बृहदारण्यकगतानन्दमीमांसया चैतद्वाक्यव्याख्यानमेव क्रियते। यथा मनुष्यानन्दव्यक्त्य एव शतगुणिताः न पित्रानन्दः, किंतु तत्सजातीयः—तथा ब्रह्मानन्दोऽपि मनुष्याद्यानन्दव्यक्त्यतिरिक्त एव। समुद्रे गोष्पदमिविवत् साजात्यमूलक एवात्र व्यपदेशः।

यत्तु, 'स एको ब्रह्मण आनन्द' इत्यत्र नानन्दस्य निरूप्यस्य समाप्तिः बृहदारण्यकानन्दमीमांसाविरोधात्। तत्र तदुपरि, "अत ऊर्ध्वं विमोक्षायैव ब्रूहि'इति जनकेन पृष्टत्वात् उपर्येव मुख्यानन्दरूपब्रह्मनिरूपणादिति—तत् स्वभाष्यविरुद्धम्। 'स एको ब्रह्मण आनन्दः' इत्युक्त एव परमानन्द इति बृहदारण्यकैकरस्यविधानेन भाष्ये व्याख्यातत्वात्। 'अद्वैतत्वादानन्दानन्दिनोरविभागोऽत्र' इत्यप्युक्तत्वात्। अत्र चेन्न समाप्तिः, कुत्र तर्हि तत्समाप्तिः ?

'यतो वाचो निवर्तन्त'इति श्लोके इति चेत्—तदपि स्वभाष्यविरुद्धम्—तत्र, 'सर्वस्यैवास्य प्रकरणस्य संक्षेपतः प्रकाशनार्थैष मन्त्रो भवति'इति पूर्वोक्तार्थसंग्रहरूपत्वाभिधानात्। सुगममिदमादितः शाङ्करभाष्यदर्शिनाम्। बृहदारण्यके आनन्दमीमांसायां न परमानन्दनिरूपणम्, किंतूपर्येवेत्येतदपि तत्रत्यमूलतद्भाष्यानवधाननिबन्धनम्। 'अथैष एव परम आनन्दः एष ब्रह्मलोकः सम्राडिति होवाच' इति परमानन्दरूपब्रह्मणः उक्तत्वात्। तत्र च भाष्यम्, 'अतःपरं गणितनिवृत्तिः। एष परम आनन्द इत्युक्तः, यस्य च परमानन्दस्य ब्रह्मलोकाद्यानन्दाः मात्राः उदधेरिव विप्रुषः' इत्यादि। तर्हि ब्रह्मणः इहैवोक्तत्वे, 'अत ऊर्ध्वम्' इति प्रश्नः कथमिति चेत्—तत् उभयैरपि विमृश्य वक्तव्यम्। अत्र वक्तव्यं बृहदारण्यकपरिष्कारेऽस्माभिरुक्तमेव। सुषुप्तौ आत्मस्थितिप्रपञ्चनावसरे खलु प्रसंगाद् ब्रह्मानन्दशोधनं कृतम्। तथाच सुषुप्तस्य ब्रह्मानन्दानुभवाभावात् सतोऽपि तस्याननुभूयमानस्याविद्यमानतुल्यत्वात् श्रोत्रियलभ्यत्वं तस्य कदेति जिज्ञासया जनकः पप्रच्छ, 'अस्तु सुषुप्तिरेवम्। अत ऊर्ध्वं विमोक्षाय ब्रूही'ति। याज्ञवल्क्यश्च मोक्षं वक्ष्यन् चरमदेहवियोग एव विमोक्षो वास्तव इति ज्ञापयिष्यन् जागरितमरणाद्यवस्थानिरूपणमारभते। सर्वथा पूर्वं ब्रह्मप्रस्तावेऽपि तादृशप्रश्नसंभवात् ब्रह्मानन्दः परमार्थस्तत्रोक्त इत्यत्र न विवादः। अतः शतभूषण्युक्तमुपनिषत्तद्भाष्यादिविरुद्धमिति।

'अत्र ब्रह्म समश्नुत' इति उत्क्रान्तिनिरपेक्षमैक्यरूपा मुक्तिरुक्तेत्युक्तमप्ययुक्तम्—समनन्तरमेव 'अणुः पन्था' इत्यर्चिरादिमार्गकथनात्।

शतदूषण्याम्, 'धीसंततिः स्फुरति निर्विषयोपरागा' इति सौगतमत इवाद्वैतमतेऽपि धीमात्रपरिशेषः। परं तु सौगताः संततिं वदन्ति, अद्वैतिनस्तु स्थिरामेकां धियम्' इति अद्वैतिषु सौगतच्छाया दर्शिता। सर्वत्र प्रतिबन्द्या वा प्रकारान्तरेण वा परमतेपि स्वोपर्युद्भावितदोषोद्भावनोद्यमेन तृप्यन्ती शतदूषणी अत्रेवं प्रवर्तते—सौगतमतमेव तु विशिष्टाद्वैतिमतमपि। निर्विषयो-

परागेत्यत्र निःशब्दस्त्याज्यः इति। निः इति शब्दं विसृज्य सत् इति पदं योज्यम्। एतावदेव। अन्यान्यक्षराणि तथैव सन्तीति मतद्वयमेकमिति तदाशयः। अनेन किमुक्तं भवति—सर्वमेकमेव मतम्; नञः सद्भावे तत्त्यागः। नञोऽभावे तद्घटनमित्येतावानेव भेदः। अद्वैतमपि द्वैतमेव। अकारत्यागे ऐकरूप्यादित्युक्तौ यावत् सामञ्जस्यम्, तावदेवात्र ग्रन्थेऽपि।

'परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति वाक्ये परमपदाख्यलोकविशेषान्तःप्रवेशे स्पष्टं प्रतीयमाने परब्रह्मैक्यं तदर्थ इति वर्णनमसाधु। एवमेव 'परमं साम्यमुपैती'त्यत्रापि परमशब्दबलादैक्यमेवार्थ इति हठात्कारोऽप्ययुक्तः। साम्ये पारम्यं हि न साम्यभञ्जकं भवति। साम्यञ्च सादृश्यं तद्भिन्नत्वे सति तद्गतधर्मवत्त्वम्। तत्र पारम्यं हि भेदमपि पोषयेत्। धर्मवत्त्वमपि। तेन भिन्नत्वे सत्येव भूयोंशसाम्यं वा, यद्धर्ममादाय साम्यमुच्यते, तद्धर्मपौष्कल्यं वा परमसाम्यमिति सिद्ध्यति। प्रागेव च विस्तृतमेतत्। 'वैष्णवं वामनमालभेत स्पर्धमानः विष्णुरेव भूत्वेमान् लोकानभिजयती'त्यत्र यागमात्रेण विष्णुभावस्यैवाङ्गीकारेऽपि न कोपि दोष इत्याह शतभूषणी। जीवानामीश्वरभाव एव मुक्तिः, जगद्व्यापारादिकमपि भवितुमर्हतीति वदत्सु केषचिदद्वैतिषु इदमपि न विचित्रम्। इतः श्रवणमनननिध्यानादिविषयपरिश्रमो वा, को वेदान्तार्थ इति विचारसागरपरिप्लवनं वा सर्वं मा भूत्। तदेकयागानुष्ठानमात्रेण साक्षात् विणुरेव भविष्यति। विष्णुभूतस्य ब्रह्मभावोपि न दुर्लभः सत्यामपेक्षायाम्। प्रायेणाद्वैतिनः परमेश्वरभावं जीवस्य नेच्छन्ति। परमेश्वर एव च विष्णुरिति तदैक्यं सर्वथैवासंभावितं मन्यन्ते। शुद्धचिन्मात्रतायामैक्येऽपि जीवस्येश्वरोपाधिप्राप्तिर्न युक्तेत्याशेरते। तद्दृष्ट्या तु विष्णुत्वप्रसक्तिरेव नास्ति। लोकाभिजयकर्तृत्वांशोपयोगिविष्णुसाम्यमात्रेण संभवन्निर्वाहं वाक्यं प्रधानीकृत्य स्वल्पयागमात्रेण अत्यन्तासंभाविताकारप्राप्तिवर्णनं न घटत इति तत्त्वस्थितिं सहृदयः स्वीकुर्यादितीदमुदाहरणमदर्शि। उदाहरणान्तरमौचित्यमेवकारार्थ इत्यादि प्रागेव च जीवेश्वरैक्यभङ्गप्रसाधने न्यरूपीति

किमत्राधिकेन। एवकार उपमाद्योतकत्वेन कैश्चिद् व्याख्यात इति प्रागुक्तत्वात् सादृश्येऽर्थे निखण्टुपाठस्यापि प्रदर्शनात् अनेकप्रयोगबलाच्च प्रकरणश्रुतसाम्यसाधर्म्यादिपदार्थान्यथाकरणापेक्षया अनुशासनाद्यनुगुणैवकारार्थग्रहणं न्याय्यः। एवकाराभावेऽप्ययमर्थः सुग्रह इति, 'प्रकारैक्ये च तत्त्वव्यवहारो मुख्यवत् प्रसिद्ध एव' इति सूक्त्या ज्ञापितम्। न च वतिप्रयोगात् अमुख्यत्वसिद्ध्या तत्त्यागः। अत्यन्तमुख्य ब्रह्मभावरूपपरमार्थस्यानादेः ब्रह्मज्ञानानन्तर्यभावेन विवक्षितुमशक्यतायाः प्रपञ्चितत्वात्।

जीवब्रह्मणोरैक्यनिषेधादपि ब्रह्मभावः साम्यमेव। 'परमात्मात्मनोर्योगः परमार्थ इतीर्यते। मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः' इति ह्यैक्यस्यापारमार्थ्यमुक्तम्। अत्र योग इत्यैक्यं न विवक्षितमिति उत्तरार्धकृतहेतूपन्यासबलात् ज्ञायते। एकस्य द्रव्यस्य द्रव्यान्तरत्वाभावात् जीवपरमात्मनोर्भिन्नद्रव्ययोर्मध्ये एकमन्यतादात्म्यं प्रतिपद्यत इति न तयोर्योगोऽस्तीत्युक्तौ योगशब्द ऐक्यपर इति हि ज्ञायते। शतभूषणी अस्मदभिमतप्रायामेव योजनां पूर्ववद् दर्शयति। परंतु योगो नाम पृथक्सत्ता तादात्म्यञ्चेति निरुच्यते। अर्थद्वयविवक्षा न युक्ता। उत्तरार्धकथितस्य हेतोः पृथक्सत्तारूपार्थनिषेधकत्वञ्च न भवति। यदि तु—पृथक्सत्तापदेनापृथक्सिद्धत्वाभाव उच्यते। तथा च पृथक्सिद्धस्य द्रव्यस्य तद्द्रव्यापृथक्सिद्धत्वासंभवात् अपृथक्सिद्धत्वस्य वक्तव्यत्वात् पृथक्सिद्धयोर्यादृशो योगः तादृशो योगो न युक्त इति वाक्यार्थ इष्यते, नायमस्मन्मतविरोधी। श्रीधरीयेऽपि (२.१४) "जीवपरमात्मनोरैक्योपासनया तादात्म्यलक्षणो योगः परमार्थ इत्येतदपि मतं मिथ्यैव" इति योगशब्दस्य तादात्म्यरूपोऽर्थ एव गृहीतः। अन्यथोत्तरार्धानन्वयात्। परंत्वद्वैतखण्डनमितो भवतीत्यनुचिन्त्योत्तरार्धे यावदुक्तम्, तावत्यनुपरस्य स्वकपोलकल्पितमपि किञ्चिन्निवेशितम्, तथा हि लिखितम्, "तयोर्भिन्नयोरभिन्नयोर्वा योगः स्यात्। भिन्नत्वे गवाश्वयोरिव नैक्यसंभवः। अभिन्नत्वे च बिम्बप्रतिबिम्बयोरिवोपाधिव्युदासमात्रं विना योगशब्दार्थो नास्तीत्यर्थः" इति। मूले तु

परमात्मात्मनोर्मिथोऽन्यद्रव्यत्वादैक्यं न भवतीत्येतावदेवोक्तमिति अन्यत् सर्वं तत्कल्पनामात्रम्। यदि च पराशरो विकल्प्य दूषणमात्रे स्थितः स्यात्—तर्हि तस्याप्यैक्यानैक्यविषये संदेह इत्यापतेत्। तस्मादैक्यखण्डनमेव प्रकृतश्लोकार्थः। योगशब्दस्यैक्यचिन्तनारूपमर्थं नामसहस्रशाङ्करभाष्येऽपि कुतोऽप्यनूदितं पश्यामः—तथाहि योगनामभाष्येऽन्ववादि, "ज्ञानेन्द्रियाणि सर्वाणि निरुध्य मनसा सह। एकत्वभावना योगः क्षेत्रज्ञपरमात्मनोः" इति। नन्वस्य श्लोकस्य प्रमाणत्वे कथमैक्यध्यानस्य प्रामाणिकस्य विष्णुपुराणे निषेध इति चेत्—न—ऐक्यमपरमार्थ इति खल्वत्रोच्यते। तथाचैक्यभावना, नाम ब्रह्मेत्युपासीतेत्यादाविव दृष्टिविधिमात्रम्। जीवात्मनः स्वरूपेण परमात्मदृष्ट्या वोपासनस्य मोक्षातिरिक्तं फलमस्तीति कार्याधिकरणे श्रीभाष्येऽभाषि। तथा च फलसत्त्वादुपासनं तु स्यात्। अथाप्यैक्यस्यावास्तवत्वात् फलान्तरार्थत्वमेवोपासनस्य वक्तव्यमिति नायं परमार्थः। किंतु प्रागुपदर्शितानि यानि धनपुत्रराज्यकाम्यकर्माकाम्यकर्मदेहातिरिक्तात्मध्यानानि, तथा परमात्मात्मैक्यचिन्तनमपि न परमार्थरूपम्। यदर्थं सर्वम्, यच्च नान्यार्थम्, स हि परमार्थ इति प्रकृतपुराणघट्टार्थः, एतत्परमार्थपारमार्थ्यविस्तरस्त्वन्यत्र द्रष्टव्यः।

यत्तु चिद्रूपमात्रपारमार्थिकत्वमिष्टम्: जीवब्रह्मणोः पृथक्सत्ता तादात्म्यञ्च नेष्यत इति—तन्न—अनैक्येन सर्वेषामात्मनां चिद्रूपतायाः सर्वसंमतत्वात्। चिद्रूपमात्रत्वमिति चेत्—तदपीष्टम्; अंशतोपि जडत्वाभावस्येष्टत्वात्। मात्रपदं चिद्गुणकत्वादिव्यावृत्त्यर्थमिति चेत—तत औडुलोमिमतमेव, न बादरायणमतम्, 'द्वादशाहवदुभयविधं बादरायणः' इति सत्यकामत्वसत्यसंकल्पत्वघटितब्राह्मरूपाविर्भावस्य मुक्तौ जीवात्मनि तदिष्टत्वात्। तदिदं प्रागेव प्रपञ्चितमिह। आत्मपरमात्मनोस्तादात्म्यं नेष्यत इत्यस्य च कोऽर्थः। किं देहादिसंघातनिविष्टस्यात्मनः परमात्मना तादात्म्यं नास्तीति, उत तद्विकलस्य। आद्यस्यैक्यसंभावनाप्रसक्त्यभावान्निषेधोऽनपेक्षितः। द्वितीयस्य त्वैक्यं भवदिष्टं भवद्भिर्न शक्यं निषेद्धुम्। परमात्मपदेनेश्वरत्वोपाधिविशिष्टग्रहणेन तदैक्यं जीवस्य निषिध्यत इ

इति चेत्—तदपि भवत्सु केषाञ्चिदिष्टम्, भवताप्यनुमोदितमन्यत्र, अत्रापि जीवस्य विष्णुत्वप्राप्तिवचनेनेति तदापि भवन्मतखण्डनमेव। तस्मात् प्रत्यक्षानुमानागमान्तरतो जीवस्य परमात्मभिन्नत्वप्रतीतिवत् ऐक्यनिषेधोऽपि स्पष्ट इति।

यत्तु वचनम्, 'निखिलं जगत् ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर' इति—तत् सर्वस्य जगतः ज्ञानस्वरूपजीवात्मात्मकत्वं तादृग्भूतस्यैव तस्य त्वद्रूपमिति भगवच्छरीरत्वञ्चास्मदभिमतमाहेति न तेन चिद्रूपमात्रपरिशेषसिद्धिः। अतश्च शुद्धस्य जीवस्य परं परमार्थत्वं कैश्चिदभिमन्यमानमुपेक्ष्य विज्ञानरूपजीवशरीरकत्वविशिष्टस्य परमस्य परमार्थत्वं 'तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थो ही' ति वचनेनोच्यत इति सर्वं स्पष्टं श्रीभाष्य एव। अत्र एकमयमिति मयट् चास्मत्पक्ष एव सार्थः। जीवानामेषामेकाकारत्वस्वीकारात्। 'अतिसाहसमिदम्, यत् अद्वैतवादोपबृंहणान्यपि पुराणान्यपथे नीयन्ते' इति लेखनञ्च श्रीभाष्यकृतसर्वनिर्वाहासहनविलसितम्। विष्णुपुराणान्तेऽपि जीवानामेकरूपाणां परमात्ममूर्तित्वं स्पष्टं प्रतिबोधितमिति न तस्यापारमार्थिकत्वम्।

सर्वथा, 'स एकधा भवति, त्रिधा भवति', 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः', 'सोऽश्नुते सर्वान्', 'कामान्नी कामरूप्यनुसंचरन्' 'एतत् साम गायन्नास्ते' इति परश्शतानि वाक्यानि मुक्तसंवित्सविषयत्वपराणि। निर्विषयकसंविदेकस्फुरणमात्रं मुक्तावित्यत्र तु न किञ्चित् प्रमाणम्। मुक्तिप्रकरणेषु सर्वत्र विशेषविषयकत्वनिर्देशोपलम्भात्। तथा मुक्तौ किञ्चिद्विषयीकरणानङ्गीकारे पुरुषार्थत्वमेव न स्यात्। दुःखनिवृत्तिमात्रं मोक्ष इति तार्किकमतवैलक्षण्येन आनन्दस्वरूपब्रह्मस्वीकारो हि मुक्तौ तत्प्रकाशार्थः। यदि च दुःखाभावमात्रेणावस्थानं तदेष्यते, कस्ततो विशेषः स्यात्। तस्मादानुकूल्यभानमावश्यकम्। एवं ज्ञानस्वरूपत्वमपि तस्य संसारकाले जडवस्तुप्रकाशत्वप्रयुक्तम्, न तु मुक्तौ किञ्चित्स्फुरणम्, तत्प्रयुक्तव्यवहाराभावादिति मन्य-

मानैर्जडत्वमापादितमेवात्मनः स्वीकृतं स्यात् । तस्मात् वेदान्तिभिः सच्चिदानन्द-ब्रह्मस्वीकारो मुक्तौ तदनुभवार्थं इति मुक्तसमवेतायाः संविदः तत्सविषय-कत्वस्य चापलापो न युज्यते । तत् सिद्धं श्रुतित इव युक्तितोपि मुक्तसंवित्सविषयकत्वम् । अन्यथा मुक्तावनावृता संविदिति अनावरणकथनमपि न घटते । आवरणकाले कथञ्चिद् वृत्तिविषयत्वं व्यवहारस्पदत्वं सर्वमासीत् ; अनावरणावसरे तु, तन्मात्रस्थित्यतिरिक्ततत्प्रकाशादिकं किमपि नास्तीति कथनं हि न पेशलम् । पदार्थान्तरप्रकाशनशेषतया यत् स्वस्फुरणम्, तदपि यथा न भवेत्, तथा महावरणमेव किञ्चिन्मुक्तौ जातमित्येवोपपादितं स्यादिति ।

स्वमिव परमपि प्रकाशयन्ती
भवति तु संविदथास्तु चिच्च संवित् ।
कथमपि सततं स्वभानकृत्त्वात्
तदपगमे स न चेतनो न संवित् ॥

अपि च मुमुक्षुर्यथा निरस्ताखिलदुःखोहं भवेयमिति प्रवर्तते, तथा अनन्तानन्दभाक् स्वराट् भवेयमिति चाभिसंधायैव प्रवर्तते । एवं सत्यामपि वृत्तौ आनन्दसामान्यस्य सान्तत्वं दुःखमिश्रत्वञ्चाभ्यूह्य तार्किकोपन्यासं शृण्वद्भिस्तत्र विश्वसद्भिः, भवतु तावत् दुःखनिवृत्तिमात्रम्, तदतिरिक्तस्यालभ्यत्वादिति तत्रोदास्यते । स्वराट्त्वञ्च स्वयं राजभावः, स्वस्य सर्वाधिपतित्वम् । तदसंभावितम् ; मुक्तानां सर्वेषां स्वातिरिक्तसर्वनिरूपिताधिपतित्वस्य सशरीरत्वेऽपि दुर्वचत्वात् । अथाधिपतिरहितत्वमात्रम, तदप्यशरीरस्य ज्ञानेच्छा-प्रवृत्तिशक्तिविकलस्य केवलस्य परप्रेर्यत्वप्रसक्त्यभावादस्त्येवेति तार्किकाः । स्वराट्त्वं स्वेन रूपेण राजमानत्वं स्वेच्छाधीनसर्वप्रवृत्तिकत्वं वा, तत् मुक्तौ निर्बाधमिति विशिष्टाद्वैतिनः । एवं ब्रह्मानुभाव्यानन्दसमानानन्दानुभावित्वात् तस्य चाक्षय्यत्वात् अनन्तानन्दभाक्त्वस्यापि न हानिरिति च । तथा च पुरुष-

प्राथमिकप्रवृत्तिर्यावदंशेच्छया, तावदंशप्राप्तिरपि किञ्चिद्रूपेण यथा सति सिद्धयेत्---'तादृश्येव मुक्तिर्यदि श्रुत्योपपाद्येत, किमिति तत्त्यागेनान्यस्य कल्पना। अतः स्वानुकूलविषयगोचरसंवित्संपन्नत्वं यथामनोरथं मुक्तस्य सर्वदुःखवैदेशिकत्वमिव सह वर्तेत इति पुष्कलमुक्तिस्वरूपमिदमेव। न च मुक्तिरिति नामबलादनिष्टनिवृत्तिमात्रमेवावसीयत इति वाच्यम्—तर्हि आनन्दरूपं तदित्यस्याप्यनावश्यकत्वात्। मुक्तिरिति नामबलात् 'जीवनाशो मोक्ष इत्यद्वैतिमतमात्रं निरस्यम्। भावान्तराभावपक्षे अनिष्टनिवृत्तेः किञ्चिद्भावात्मकसाध्यांशरूपत्वस्यावश्यकत्वे, शास्त्रविमर्शे च ईदृशपरमपुरुषपरिचरणपर्यसायिप्रकृष्टानन्दानुभवरूप एवायं मुक्तिरूपोऽभाव इत्यवगमात् मुक्तिशब्दवाच्यता सर्वत्राविशिष्टेति। तदिदं स्पष्टमेव श्रावितम्—"न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति। सर्वमिदमभिसंधाय भाषितम्—"निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट्। भवेयमिति मोक्षार्थी श्रवणदौ प्रवर्तते" इति। पूर्वार्धोक्तमपि मोक्षपदवाच्यमेवेति मोक्षार्थीति पदेन सूचयता मोक्षार्थित्वमेतावदर्थित्वरूपमित्याविष्कृतमिति॥

अनुभवमखिलागमैकरस्यं जहति य आहुरसंविदं विमुक्तिम्।<br>
विषयविधुरसंविदं विमुक्तिं बत वदतामिह युक्तिरप्यसिद्धा॥

शुभमस्तु

श्रीः

# निर्गुणश्रुतिसंकोचप्रसाधनम्

नित्यैर्नित्यश्रुतिभिरपि यः स्तूयमानोऽप्यगम्यैः
संख्यातीतैः शुभगुणगणैः पूर्ण एष श्रियं नः ।
मायी मायागुणपरवशान् स्वं प्रपन्नान् गुणाढ्यान्
कुर्वन् देवः कमलनिलयाश्लेषधन्यः प्रतन्यात् ॥

सगुणश्रुतिप्रतिपादिताः ब्रह्मगुणा एव निर्गुणश्रुतिभिर्ब्रह्मणि निषिद्ध्यन्त इत्यद्वैतिनः । सगुणश्रुतयो निर्गुणश्रुतयश्च निर्वैराः संभूय कल्याणगुणगणार्णवं हेयगुणवैदेशिकञ्चैकं ब्रह्म प्रतिपादयन्तीति विशिष्टाद्वैतिनः । अयमत्र संग्रहः—

सत्यस्वाभाविकत्वोक्तेर्निरुपाधित्वलाभतः ।
श्रुत्येकप्रतिपन्नानामबाध्यत्वावधारणात् ॥
उत्सर्गस्यापवदनात् सामान्यस्य विशेषणात् ।
अविरोधस्य सगुणनिर्गुणोक्तिषु संभवात् ॥
अपच्छेदनयस्यात्र विरोधविधुरे हृतेः ।
विरोधे तु विरोधोपक्रमभूयोनयान्वयात् ॥
स्पष्टोपस्थितसत्त्वादिगुणमात्रनिषेधतः ।
श्रुतेस्तर्कस्य चाभावान्न प्रसिद्ध्यति निर्गुणम् ॥
गुणस्येव शरीरस्य विकारस्य च जन्मनः ।
कर्मणश्चाविरोधः स्यात् तस्मिन् विधिनिषेधयोः ॥

'त इमे सत्याः कामा अनृतापिधाना' इति परमात्मगुणानां सत्यत्वमुक्तम् । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति भगवद्गुणकर्मणां स्वाभाविकत्वं प्रत्यायितम् । 'नान्यो हेतुर्विद्यत ईश-

नाय' इति निरुपाधिकत्वमवगमितम्। क्रियास्थले विकल्पसंभवात् शास्त्रोक्तमेव शास्त्रेण निषिद्धयेत। वस्तुनि विकल्पायोगादत्र निषेधो विहितस्य न संभवति। न चात्र विहितनिषेधं विना वाक्यस्य निर्वाहो न भवति, विहितव्यतिरिक्तविषयतयैव निषेधस्य चरितार्थत्वात्। तथा सामान्यनिषेधानां विशेषनिषेधदर्शनेन तदैकार्थ्ये संभवति सामान्यनिषेधरूपत्वं नेति नानिषिद्धविशेषस्यापि सामान्यनिषेधेन निषेधसंभवः। अपच्छेदनयस्तु, उत्तरेण पूर्वस्य बाध इति लोकरीत्यवलम्बने पूर्वशास्त्रस्य न सर्वथैवाप्रामाण्यमिति यत्र संभवति, तत्रैव प्रवर्तते। यदि चात्र मिथो विरोधः स्यात्, विरोधाधिकरणं प्रवर्तेत। तेन पूर्वेण परस्य बाधः। उपक्रमाधिकरणस्यापि प्रवृत्त्या सगुणश्रुत्यनुरोधेन निर्गुणश्रुतिरेवान्यथा नीयेत। एवं भगवतोऽप्राकृतविग्रह–धर्मभूतज्ञानपरिणाम—अप्राकृतशरीरपरिग्रहरूपावतार अनन्तलीलाव्यापारादिमत्त्वावगमात् अशरीरत्वादिश्रुतीनामपि संकोचो भाव्यः।

यत्तु–निर्गुणश्रुतेरुत्सर्गत्वम्, यः सर्वज्ञ इत्यादीनामपवादत्वञ्च न घटते। उत्सर्गापवादन्यायो हि विरुद्धविधिद्वयविषयः। अत्र त्वेको विधिः, अन्यो निषेधः। अतः, 'यदाहवनीये जुहोति', 'पदे जुहोति' इत्यत्रैवोत्सर्गापवादनयः। तेन पदहोमव्यतिरिक्तहोमविषय एवाहवनीय इत्युत्सर्गापवादन्यायः। 'न हिंस्यात् सर्वा भूतानि' इति निषेधस्य, 'अग्नीषोमीयं पशुमालभेत' इति विधेश्च नोत्सर्गापवादविषयतेति—तन्न–उत्सर्गापवादनयोऽत्रेति स्वीकारे काऽनुपपत्तिरिति। विधिप्रतिषेधयोरुत्सर्गापवादस्वीकारे भाष्यविरोधः; "विधिप्रतिषेधाचार्थवन्तः, विकल्पोत्सर्गापवादाश्च" इति भाषणादिति चेत्—उत्सर्गापवादभावास्वीकार एव भाष्यविरोधः, "अशुद्धमिति चेन्न शब्दात्" इत्यत्र, 'न हिंस्यात्' इति वाक्यमेव गृहीत्वा, "उत्सर्गस्तु सः। अपवादः, अग्नीषोमीयं पशुमालभेत" इति मुक्तकण्ठमुक्तत्वात्। यद्यपि तत्र भामत्यामत्रोत्सर्गापवादरूपत्वाभाव उपपादितः—अथापि तत्र न विधिप्रतिषेधरूपत्वं प्रयोजकम्, किंतु 'न हिंस्यात्' इति वाक्यस्य पुरुषार्थ-

हिंसामात्रविषयकत्वात् क्रत्वर्थहिंसायाः क्रोडीकारप्रसक्त्यभाव एव। कल्पतरौ तदुपपादने च, "विशेषविधिविहितस्यार्थस्य सामान्यविधिनापि विषयीकारे ह्युत्सर्गापवादन्यायः। अत्र तु वर्णितेन न्यायेन निषेधस्योत्पत्तिसमय एव पुरुषार्थहिंसाविषयत्वान्न क्रत्वर्थहिंसानुप्रवेशः" इत्येव विवृतम्। केवलविधित्वाभावात् विधिप्रतिषेधरूपत्वान्न भवतीति नोक्तम्। अत एव 'विशेषविधि' 'सामान्यविधि' इति विधिपदद्वयम् उदाहृतपदाहवनीयवाक्याभिसंधिना पतितम्। अज्ञातज्ञापकवाक्यसामान्यमेव विधिपदार्थ इह। परिमले तु बहु विचार्य भामतीमुपेक्ष्य भाष्योक्तमेव समर्थ्य उत्सर्गापवादरूपत्ववर्णनमेव रमणीयमिति न्यरूपि। पुरुषार्थहिंसामात्रपरत्वेऽपि आहवहिंसाद्यसंग्रहायोत्सर्गापवादभाव एषितव्यः; वस्तुतः क्रत्वर्थपुरुषार्थसर्वहिंसाविषयीकारप्रसक्तिरस्त्येवेति चोक्तम्। अतो विशेषवचनाभावे यत्र सामान्यवचनेन विशेषवचनविषयस्यापि क्रोडीकारप्रसक्तिरस्ति, तत्रोत्सर्गापवादभाव इति सर्वप्राच्यसंमतम्।

तर्हि, विधिप्रतिषेधाश्चेति भाष्यस्य का गतिरिति चेत्—कापि गतिरस्तु; किं तेन। विकल्पेतिपदमपि तत्र प्रयुक्तम्, 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाती' ति विकल्पस्थलेऽपि तर्हि विधिप्रतिषेधरूपता न स्यात्। तस्मात् विकल्पोत्सर्गापवादानन्तर्गताः पृथग्भूताः विधयः पृथग्भूताः प्रतिषेधाश्च तत्र गोबलीवर्दनयेन विधिप्रतिषेधशब्दार्थतयाऽवसेयाः। अस्तु वाऽन्यथाऽपि, यतः स्वभाष्यार्थानवबोधमूलमिदं शतभूषणीवाक्यम्। इदं हि जन्माद्यधिकरणभाष्यगतं वाक्यम्। तत्र च भामत्याम्, विधिः षोडशिग्रहणविधिः, प्रतिषेधः तन्निषेधः। एवं विधी उदितानुदितहोमविधी। तथा विधिप्रतिषेधो नारास्थिस्पर्शनिषेधः, 'नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत्' इत्ययम्, विधिश्च ब्रह्मघ्नः, 'शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन्। ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्, इति नारास्थिध्वजधारणविषयकः इति व्याख्याय एतदुपपादकतया, 'विकल्पोत्सर्गापवादाश्च' इति भाष्यं गृहीत्वा, चो हेतौ इत्य-

भिधाय नाराशिरधारण तत्स्पर्शनिषेधरूपविधिप्रतिषेधविषय एवोत्सर्गापवादभावः कण्ठोक्तः। सामान्यनिषेधस्य विशेषविधिना बाधे उत्सर्गापवादभावः किल स्पष्ट इह। अतः स्वपूर्वग्रन्थविरुद्धमिदम्—शांकरभाष्ये विधिप्रतिषेधाभ्यामुत्सर्गापवादौ चकारबलात् पृथक् कृताविति, निषेधस्थले उत्सर्गापवादन्याया-प्रवृत्तिरिति च शतभूषणीविजृम्भणमिति। तस्मात् विधिप्रतिषेधस्थलेऽप्युत्सर्गा-पवादत्वमस्त्येव।

यत्तूक्तम्—तथा सति, 'यजतिषु येयजामहं करोति', 'नानूयाजेषु' इत्यत्राप्युत्सर्गापवादनयप्रवृत्त्या अनूयाजेषु येयजामहकरणं सामान्यशास्त्रविष-यत्वात् स्यात्, अकरणञ्च विशेषप्रतिषेधादिति विकल्पापत्तिरिति—तदति-स्थवीयः—निषेधस्योत्सर्गत्वं विधेरपवादत्वञ्च हि प्रागुक्तम्; न तु विधेरु-त्सर्गत्वं निषेधस्यापवादत्वञ्च। तद् विषयमेतत्। तुल्यनयादानीयत इति चेत्—तदप्यशक्यम्—उत्सर्गशास्त्रस्य विशेषशास्त्राभावे तद्विषयस्वीकारप्रसक्तिमात्रं ह्युक्तम्; न तु वस्तुगत्या स्वीकारः। अतः कथं विकल्पः। न हि न हिंस्यादितिनिषेधविषयत्वं पाक्षिकतया वस्तुतोऽग्नीषोमीयहिंसायामस्ति। किञ्चात्र विधिनिषेधरूपत्वमेव न। प्रतिषेधरूपत्वे विकल्पापत्त्या पर्युदा-साश्रयणं किलात्र सिद्धान्तितम्। एवञ्चानुयाजव्यतिरिक्तेषु यजतिषु येय-जामहं करोतीति वाक्यार्थे कथं विकल्पप्रसक्तिः। विकल्पस्यावर्जनीयत्वे तु स्वरसभूतप्रतिषेध एवावलम्ब्यते। अत एव, "अपूर्वे चार्थवादः स्यात्" (10-8-5) इत्यत्र 'न तौ पशौ करोती' ति वाक्ये प्रतिषेधाश्रयणमेव सामद्दतं खण्डदेवेन, पशावाज्यभागसद्भावलिङ्गस्याप्युपलम्भात्। अतएव "शिष्टा तु प्रतिषेधः स्यात्" इत्यनन्तरसूत्रे अतिरात्रषोडशिग्रहणविकल्पः प्रतिषेधश्चोक्तः। अतः उत्सर्गापवादभावस्वीकारस्य अनुयाजेषु येयजामहापादनस्य च न कश्चित् संबन्धः।

अपिच 'न हिंस्यात्', 'अग्नीषोमीयम्' इति वाक्ययोरुत्सर्गापवादत्वेन गणनाभावे कथं परिगणना। अथ कथमिति किम्। स कश्चित् निषेधः, अय-

मन्यविषयो विधिः ; कः संबन्ध इति चेत्-अस्तु। 'जहि मा व्यथिष्ठाः', 'युध्यस्व जेतासि रणे सपत्नान्' इत्येवंरूपपुरुषार्थहिंसायाः विहितायाः, 'न हिंस्यात्' इति पुरुषार्थहिंसानिषेधेन विषयीकारप्रसक्तिसत्त्वेन तत्रोभयोः कीदृशः संबन्धः। सामान्यविशेषभाव इति चेन्न-असंभवात्। तत्र हि सामान्यविशेषन्यायः, यत्र सामान्यवचनस्य विशेषवचनस्य चैकार्थे पर्यवसानम्। यथा छागपश्वौदुम्बरीकुशादिस्थले, कारणवाक्यानामैककण्ठ्ये च। अथ सामान्यभूतोयो विशेषः, तन्नय. इतिनार्थः, किंतु सामान्यवाक्यविशेषवाक्योभयविषयन्याय इतीति चेत्—अयमर्थः उत्सर्गापवादच्छागपशुसर्वसाधारणः। तथा क्वचित् व्यवह्रियतेऽपि। भवतु तर्हि गोबलीवर्दन्याय इति चेत्-सोऽपि न; यत्र पौनरुक्त्यपरिहाराय सामान्यस्य विशेषे पर्यवसानेन वाक्यद्वयस्यैकविधेयकत्वेऽपि विभिन्नविषये प्रवृत्तत्वम्, तत्र हि सः, यथा गामानय बलीवर्दश्चानयेत्यत्र द्वितीयवाक्यावैयर्थ्याय प्रथमवाक्ये आनयनरूपकार्यैक्येऽपि गोपदस्य बलीवर्दव्यतिरिक्तविषयकत्वम्। तस्मात् सामान्यवाक्यविषयीकारेण किञ्चिद्वृत्तया प्रसक्तस्य कस्यचिद् विशेषस्य तदभावबोधपरं वाक्यं यत्र, तत्रोत्सर्गापवादन्याय एव। तत्र क्वचिदुभयोरपि विधिवाक्यत्वमपि भवति, 'यदाहवनीये जुहोति, 'पदे जुहोति' इति। तावता सर्वत्र विधिवाक्यत्वमिति न नियमः ; विनिगमनाविरहेण विधिनिषेधस्थल एवायम्, न तु विधिद्वयस्थले इत्यपि कल्पनाप्रसंगात्। इयान् विशेषः-विरोधिधर्मद्वयं भावरूपं क्वचित् ; अन्यत्र भावाभावरूपम्। भावद्वयस्थले विरोधित्वग्रहणापेक्षया भावाभावस्थले विरोधग्रहणं सुकरमिति सुतरां तत्रोत्सर्गापवादभावः। पदे जुहोतीति वाक्ये पदाधिकरणकत्वविधौ पदाधिकरणत्वं प्रति आहवनीयाधिकरणकत्वाभावस्य व्यापकतया व्याप्यविधाने व्यापकावश्यम्भावेन व्यापकविरुद्धमाहवनीयाधिकरणकत्वमपोदितं भवति। विवक्षितमुत्कृष्य विवक्षितमात्रे अनुपरम्याधिकस्यापि ग्रहणक्षमं वाक्यमुत्सर्गः; उत्सृज्यस्य त्याज्यस्यापि ग्राहकतया प्रतीतमिति वा। तत्रैकदेशस्य ततोऽपसारणार्थो वादः अपवादः। अतः पूर्वोद्धृतकल्पतरुकृतशिक्षानुसारेणापि विधिनिषेधस्थलेऽप्युत्सर्गापवादत्वं

सुगमम्। अत्र न्यायानामसंकरेण व्युत्पादनं श्रुतप्रकाशिकादर्शितमप्यनुसंधेयम्—यथा, 'उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय संकोच उत्सर्गापवादन्यायः; अविरोधेऽपि वैयर्थ्यपरिहाराय संकोचश्चेत्—गोबलीवर्दन्यायः। उपात्तविशेषविषये तस्य संकोचः सामान्यविशेषन्याय इति भिदा' इति।

यत्तु— 'न हि ब्रह्म सगुणं निर्गुणञ्चोभयं भवितुमर्हति। न हि गुणाः शास्त्रमन्तरेण ब्रह्मणि प्राप्ताः। येन रागतः प्राप्ताया हिंसाया इव प्रमाणान्तरप्राप्तानां तेषां निषेधः स्यात्' इति — तत्रेदं चिन्त्यम्—'नानूयाजेषु' इत्यत्र प्रतिषेधश्रवणे अनुयाजाधिकरणकयेयजामहकरणप्रवृत्तेरभावप्रतियोगित्वबोधे तादृशविशिष्टप्रवृत्तिरूपप्रतियोग्यप्रसिद्धौ तादृशविशिष्टप्रवृत्तिरूपोद्देश्यासिद्धौ चाभावबोधनायोगात् तादृशविशिष्टप्रसिद्धेश्च लोकतोऽसंभवात् 'यजतिषु येयजामहं करोती'ति सामान्यवाक्यस्य तद्विषयकत्वमपि वक्तव्यम्। तथाच शास्त्रतः प्राप्तं न सर्वथा निषेद्धुं शक्यमिति वाक्यद्वयप्रामाण्यायानुयाजेषु येयजामहस्य विकल्पः प्राप्तः, तद्वदत्र सगुणवाक्यप्राप्तगुणनिषेधे निर्गुणवाक्येन कृते एकतराप्रामाण्यं प्रसजतीति विकल्पो वक्तव्यः। न च वस्तुनि विकल्पसंभवः। अतोऽन्यथैवार्थः प्रामाण्यरक्षणाय ग्राह्य इति स्थिते प्रथमगृहीतसगुणत्वाविरोधेन निर्गुणवाक्यमेवान्यपरं भवितुमर्हति। एतद्विहाय सगुणवाक्यप्राप्तानामेव निर्गुणवाक्येन निषेधः कार्य इत्यभिनिविशमानेन तु परमात्मन इतरवस्तुसाजात्यशङ्काप्रसक्तसामान्यतोदृष्टानुमानगम्यहेयगुणनिषेधापेक्षया परमात्मासाधारणसार्वज्ञ्यसर्वशक्तित्वजगत्कारणत्वादिगुणानामेव निषेधे परमादरो दर्शितो भवति। न चानुयाजाधिकरणकयेयजामहप्रवृत्तिरूपविशिष्टप्रतियोग्यप्रसिद्धिवत् अत्र निर्गुणमित्यत्र सगुणवाक्यतो ब्रह्मनिष्ठत्वेनावधृतसार्वज्ञ्यादिकल्याणगुणापरिज्ञाने प्रतियोग्यप्रसिद्धिर्वक्तुं शक्यते; निर्गुणमिति गुणत्वरूपसामान्यधर्ममुखेनैवोल्लेखात्। अतः सामान्यतोदृष्टानुमानप्रापितहेयगुणरूपप्रतियोगिप्रसिद्धौ वर्तमानायां न ब्रह्मप्रतिपादकशास्त्रस्येव तद्गुणविशेषप्रतिपादकवाक्यानामप्यर्थावगमपर्यन्तप्रतीक्षणप्रसक्तिरत्रास्ति। अतस्तथा प्रतीक्षणं

विधायापच्छेदनयमानाय्य सगुणवाक्याप्रामाण्यं सर्वथा स्वीकृत्य कृतार्थत्व-भावनं न कार्थम्।

यदपि—श्वेताश्वतरोपनिषदादिषु सामान्यत एव गुणविधानदर्शनात् तादृशसामान्यगुणनिषेधो निर्गुणवाक्यकार्य इति नात्रोत्सर्गापवादन्यायः सामान्यविशेषविषयः प्रवर्तते इति-तत्र पृच्छ्यते। अस्तु गुणत्वेन गुणग्रहणेन विधायकमपि वाक्यम्। तत्र किं गुणत्वेन रूपेण सर्वेषां चेतनाचेतनगतानामपि सार्वज्ञ्यादिगुणैः सह ब्रह्मणि विधानमिष्यते, उत ब्रह्मगुणमात्रस्य। नाद्यः, अन्यगुणस्यान्यत्र विधानासंभवात। अतो निषेधस्येव विधेः सामान्यविषयकत्वं दुःशकम्। तेषां गुणानां परम्परासंबन्धेन विधानमस्त्विति चेत्—तर्हि सार्वज्ञ्यादयो न गृह्येरन्निति तदापि सामान्यविधानाभाव एव। केषाञ्चित् साक्षात् अन्येषां परम्परयेति द्वैविध्यमेकत्र वाक्ये दुर्वचम्। तथोक्तौ च निर्गुणमिति निषेधवाक्ये साक्षाद्विहितगुणानां परम्परासंबन्धेन, परम्परया विहितगुणानां साक्षाच्चाभाव एव बोध्यत इत्यविरोध एव सुवचः। अतो गुणसामान्यविधानमशक्यम्। वस्तुतः, 'को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्' इति नानागुणप्रश्ने पृथक्करिष्यमाण एव गुणवानिति प्रश्नः सौशील्यादिगुणविशेषविषय इति हि निर्धार्यते। तद्वदिहापि प्रकृतोपयोगिगुणविशेषग्रहणमेवात्र। अथवा छागपशुन्यायेन, ज्ञत्वेशत्वसंसारमोक्षहेतुत्वाद्यनेकगुणरूपविशेषगुणपर्यवसानं सामान्यतो गुणवचनस्येति सामान्यविशेषन्यायप्रवृत्त्यनन्तरमुत्सर्गापवादन्याय इह भाव्यः। तत् सिद्धमुत्सर्गापवादन्याय इहेति। भवदुपात्तबालप्रकाशग्रन्थोऽपि यावच्छक्ति पूर्वाबाधेन निर्वाहे प्रयतनीयमित्येव दर्शयतीति भवतस्ततः प्रतिकूलमेव। तत्र हि प्रतिहर्त्रपच्छेदोद्गात्रपच्छेदयोः क्रमिकत्वे पूर्वप्रायश्चित्तस्य सर्वथा बाधमकृत्वा उद्गात्रपच्छेदप्रायश्चित्तमारभ्यादक्षिणं तं यज्ञमिष्ट्वा पुनर्यजने क्रियमाणे सामान्यप्राप्तदक्षिणां विहाय प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणादानं युक्तमित्याशयितमिति भवद्वाक्यसारार्थः।

अथापच्छेदन्यायोऽत्र न प्रवर्तत इति च निरूपयामः—'अपच्छेदन्यायप्रवृत्तिप्रयोजकं 'नियतपौर्वापर्यम्' इत्युक्तमयुक्तम्। अनियतपौर्वपर्यस्थल एव ह्यपच्छेदन्यायः। तत्तदपच्छेदनिमित्तकं पृथक्पृथक्प्रायश्चित्तं यद् विहितमस्ति, तत्र निमित्ताधीनं नैमित्तिकमिति निमित्तपौर्वापर्ये विमृश्यमाने कदाचित् प्रतिहर्त्रपच्छेदोऽपि पूर्वं भवति, कदाचिदुद्गात्रपच्छेदोऽपि। न तत्र पौर्वापर्ये नियमोऽस्ति। अत्र, 'अद्वैतसिद्ध्यादौ व्यक्त'मित्युक्तत्वात् तन्निरासायापच्छेदनयविषयं विशदीकुर्मः—

ज्योतिष्टोमे, 'अध्वर्युं विनिष्क्रामन्तं प्रस्तोता संतनुयात्, तं प्रतिहर्ता, तमुद्गाता, तं यजमानः, तं प्रशास्ता' इति अध्वर्य्वादिकच्छग्रहणपूर्वकं प्रस्तोत्रादीनामुत्तरेषां बहिष्पवमानस्तोत्रार्थं गमनमुक्तम्। तत्र च मध्ये विच्छेदे यथायथं प्रायश्चित्तमाम्नायते, 'यदि प्रस्तोताऽपच्छिन्द्यात्, ब्रह्मणे वरं दद्यात्। यदि प्रतिहर्ता, सर्ववेदसं दद्यात्। यद्युद्गाता, अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत; तत्र तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्" इति। तत्रैकैकापच्छेदे तत्तन्निमित्तकं प्रायश्चित्तमसंदिग्धम्। यत्र चोभाभ्यां युगपद्विच्छेदः, तत्र नैमित्तिकानुष्ठानस्य शक्यत्वे सति न कस्यचिन्नैमित्तिकस्य बाधः। यत्र तु विरोधः, यथा उद्गातृप्रतिहर्त्रपच्छेदयौगपद्ये, तत्र युगपदेव नैमित्तिकवाक्यद्वयप्रवृत्तेरविशेषात् विकल्पः। यदा पुनरपच्छेदयोस्तयोः क्रमेण प्रवृत्तिः, तत्र विरोधात् कस्यचिदेव नैमित्तिकस्यानुष्ठाने कर्तव्ये पूर्वनिमित्तज्ञानाधीनं यन्नैमित्तिकशास्त्रार्थज्ञानम्, तदनुष्ठानमेवोपक्रमाधिकरणन्यायेन युक्तमिति प्राप्ते सिद्धान्तितम्—उत्तरापच्छेदज्ञानाधीनं यत् नैमित्तिकशास्त्रार्थज्ञानम्, तस्यैव परत्वात् प्राबल्यम्; उत्तरज्ञानस्योत्पन्नस्य पूर्वबाधं विनोत्पत्त्यनर्हत्वादेव पूर्वज्ञानबाधावधारणादिति। तथा च सूत्रम्, "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति।

अत्र च, "पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्" इति वार्तिककारैरपच्छेदन्यायस्थलं

निष्कर्षद्भिरन्यत्रोपक्रमाधिकरणप्रवृत्तिर्दर्शिता। अनेन च यदपेक्षया यस्य प्राबल्यं वर्णनीयम्, तन्निरपेक्षं तत्र बोधोत्पत्तिरपेक्षिता। प्रतिहर्त्रपच्छेदनिमित्तकप्रायश्चित्तशास्त्रं हि उद्गात्रपच्छेदनिमित्तकप्रायश्चित्तशास्त्रनिरपेक्षमेव बोधं जनयति। तथा तन्निरपेक्षमेवैतदपि—यथा पदे जुहोति आहवनीये जुहोतीति वाक्यद्वयं मिथोनिरपेक्षमेव बोधम्। तस्मात् योऽपच्छेदः परः, तन्निमित्तकं प्रबलमिति। अत्र अन्योन्यनिरपेक्षाणामित्यनेन एकैकप्राबल्यविषयेऽपि उभयगतं निरपेक्षत्वं गमकत्वेन नोच्यते; किंतु तन्निरपेक्षं बोधकत्वादिदं कदाचित् प्रबलम्, एतन्निरपेक्षं बोधकत्वात् कदाचित् तदपि प्रबलमित्येव, औचित्यात्। उपक्रमाधिकरणन्यायश्च तत्र, यत्र सापेक्षं बोधजनकत्वम्। यथा अग्नेः ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात् सामवेद इत्युपक्रमस्थार्थवादानाम्, उच्चैः ऋचा क्रियते, उपांशु, यजुषा, उच्चैः साम्ना इत्यनन्तरविधीनाञ्च। न हि तत्तन्नैमित्तिकशास्त्रवत् अर्थवादविध्योरन्योन्यनिरपेक्षं प्रवृत्तिरस्ति। तथाचोपसंहारस्थः स्वयं विधिरपि उपक्रमस्थार्थवादनिरपेक्षमबोधकत्वात् प्रथमप्रतीतार्थवादिकार्थाविरोधाय लाक्षणिकार्थपरतयैव प्रामाण्यं लभते। एवं तत्र न्याययोः स्थितिः।

तत्र प्रकृते कतरो न्यायः प्रवर्तत इति विचार्यम्—परस्य पूर्वनिरपेक्षत्वे अपच्छेदन्यायः, पूर्वसापेक्षत्वे उपक्रमन्याय इत्येव निष्कर्षलाभादपच्छेदन्यायस्यात्र नावसरोऽस्ति। द्वैतनिषेधश्रुतीनां द्वैतग्राहक प्रत्यक्ष-कर्मकाण्ड-सगुणशास्त्र सापेक्षत्वात्। अन्यथा प्रतियोगिज्ञानाभावेन निषेधस्यैवायोगात्। न च 'पूर्वपरयोरुभयोः परस्परसापेक्षत्वे उपक्रमन्यायः, तदभावेऽपच्छेदन्याय' इति सिद्धयुक्तम्, 'एकवाक्यत्वे उपक्रमन्याय' इति चन्द्रिकोक्तञ्च युक्तम्—उपक्रमाधिकरणन्यायस्य शब्दमात्रविषयकत्वाभावेन प्रमाणान्तरसमावेशस्थलेऽपि संजातविरोधित्व तदभावयोः सुवचत्वेन एकवाक्यत्वाभावेऽपि तन्न्यायप्रवृत्तेः। उपसंहारान्यथाकरणं प्रति उपसंहारनिष्ठमुपक्रमसापेक्षत्वमेव प्रयोजकम्, न तूपक्रमनिष्ठमुपसंहारसापेक्षत्वमपीति परस्परसापेक्षत्वकल्पनस्यायुक्तत्वाच्च।

अन्यथा तुल्यन्यायेन परस्परनिरपेक्षत्व एवापच्छेदन्याय इति कल्पनया प्रत्यक्षादेरद्वैतश्रुत्यपेक्षितत्वेनापच्छेदन्यायाप्रवृत्तेरपि सुवचत्वात्। अग्नेः ऋग्वेद इत्यत्र तु अर्थवादविधिरूपत्वात् मिथः सापेक्षत्वमेकवाक्यत्वञ्च वस्तुतोऽस्ति। तावता तत्रैव तन्न्याय इति तु न सम्यङ्मीमांसने सुवचम्। अत एव कारणवाक्यानाम्, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्येतद्वाक्यनिरपेक्षत्वेऽप्येतद्वाक्ये प्रसिद्धवन्निर्देशदर्शनात् अनुवादस्य पुरोवादसापेक्षत्वात् पुरोवादसंजातचेतनकारणप्रतीत्यविरोधेनाकाशशब्दो योगादिना नेय इति स्थितं शारीरके। न चाद्वैतश्रुतेर्ब्रह्मस्वरूपमात्रपरत्वात् न तदर्थे प्रमाणान्तरसापेक्षत्वमिति वाच्यम्—तर्हि द्वितीयाभावत्वेन तदबोधने प्रपञ्चबाधासिद्धेः सर्वसत्यत्वस्थितेः। तस्मादुपक्रमन्यायात् उच्चैः ऋचा क्रियत इत्यादौ मन्त्रमात्रवाचकर्गादिपदस्य कृत्स्नर्ग्वेदादिपरतावत पूर्वप्रकरणानुरोधेनाद्वैतश्रुतेरन्यपरत्वमेवेति।

अपच्छेदन्यायप्रवृत्तिस्थलञ्चैवं निरणायि—

"पौर्वापर्यं विरोधश्च पूर्वाप्रामाण्यमेव च।
नियमान्नास्ति तत्रासावपच्छेदनयो भवेत्" इति।

वस्तुतोऽपच्छेदनयात् प्रत्यक्षादिप्राबल्यमेव सिद्धयति। अद्वैतश्रुतितो द्वैताभावबोधस्वीकारेऽपि तावता द्वैतस्य निवृत्त्यभावेन पुनर्व्यवहारार्थतया प्रत्यक्षसगुणशास्त्रादिकं प्रवर्तमानमद्वैतश्रुतिनिरपेक्षमेव द्वैतबोधकमद्वैश्रुतिं बाधेतेति। न च अद्वैतश्रुत्यर्थज्ञानदशायां प्रत्यक्षादेरप्रामाण्यस्य निश्चितत्वात् नाप्रमाणतया निश्चितेन तेन तद्बाधः। न हि, चन्द्रैकत्वज्ञानं पश्चादङ्गुल्यवष्टम्भाहितेन द्विचन्द्रज्ञानेन बाध्यत इति वाच्यम्—द्विचन्द्रज्ञानस्थल इवात्राप्रामाण्यनिश्चयाभावात्। अत एव हि कतरस्य प्रामाण्यमिति विनिगमकत्वायापच्छेदन्यायोऽवतार्यते। न च प्रतियोगिसापेक्षत्वादभावस्याद्वैतशास्त्रमेव परमिति वाच्यम्—परत्वस्य सापेक्षताधीनत्वाभावात्। अन्यथा अपच्छेदनिमित्तकशास्त्रमध्ये कस्यचित्परत्वस्य दुर्वचत्वापत्तेः। तत्र सापेक्षताया वक्तुम-

शक्यत्वात् । सापेक्षत्वेन चेत् परत्वम्, तर्हि निरपेक्षस्थलेऽपच्छेदन्याय इति कथम् । न च नित्यनैमित्तिकस्थले नैमित्तिकस्य नित्यसापेक्षत्वात् कथं परेण पूर्वबाध इति वाच्यम्—"सप्तदश वैश्यस्य' इत्यादेर्नैमित्तिकस्य साप्तदश्यादेः, पञ्चदश सामिधेनीरनुब्रूयादिति विहितनित्यपाञ्चदश्यादिसापेक्षत्वाभावात् । सामिधेन्यपेक्षायामपि बाध्यमानांशानपेक्षत्वात् । तस्मात् पश्चात् ज्ञातत्वे परत्वम् । एवं परं भवदपि स्वस्मात् पश्चादन्यद् ज्ञातं भवति चेत्, स्वयं पूर्वं भवत्येव । न चैवं पुनःपुनर्द्वैताद्वैतश्रुतिप्रवर्तने कस्यापि परत्वं दुर्निश्चयमिति वाच्यम्—एवमपि यथाकथञ्चित्परत्वेनापच्छेदनयप्रवर्तनापेक्षया निरपेक्षत्वविशिष्टपरत्वेन द्वैतप्रमाण एवापच्छेदन्यायप्रवर्तनं युक्तमित्येवात्रोच्यमानत्वात् ।

नन्विदंरजतमिति भ्रमसापेक्षत्वेऽपि नेदं रजतमिति ज्ञानं परं यथा प्रबलम्, तथा प्रकृतेऽपीति चेत्— न; यथा कथञ्चिद्रजतज्ञानसापेक्षत्वेपि निषेधबुद्धेः इदं रजतमिति भ्रमसापेक्षत्वाभावात् । अन्यथा अभ्रान्तस्येश्वरादेः शुक्तौ रजतभेदनिश्चयायोगप्रसंगात् । परत्वमात्रेण निषेधज्ञानस्य बाधकत्वे च, यत्र रजत एव रजतबुद्धिः, पश्चाच्च क्षोभवशात् नेदं रजतमिति धीः—तत्र पूर्वज्ञानाप्रामाण्यापत्तेश्च । अतः प्रवृत्तिसंवादबलेन ज्ञानजनकसामग्र्यां क्लृप्तदोषसदसद्भावविमर्शेन चान्यतरप्रामाण्यमवधारणीयम् । अत्रेदं बोध्यम्—

लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वात् पूर्वं तादृशविरोधिनिश्चये सति पश्चात् तज्ज्ञानं नोदेति । अत एवाग्निरुष्ण इति प्रत्यक्षे सति अग्निरनुष्ण इत्यनुमित्यादेरनुदयः । तत्र लौकिकसंनिकर्षजन्यं ज्ञानं परं पूर्वबाधकम् । दोषविशेषजन्यं तु परमपि दोषविशेषजन्यत्वनिश्चये सति पूर्वबाधकं न भवति । एवं क्वचित् प्रबलसामग्रीवशात् विरोधिज्ञानोदयेऽपि यत्र पूर्वसामग्र्यपेक्षयोत्तरसामग्र्याः प्राबल्यं नास्ति, किंतु समत्वं न्यूनत्वं वा, तत्र पूर्वज्ञानसामग्रीजनिततद्वत्ताबुद्धौ सत्यामुत्तरसामग्री ज्ञानमेव न जनयति । पर्वतो वह्निमानित्यनुमितौ सत्यां

तदभावानुमितेरनुत्पत्तेः । यत्र पुनरेवमत्यन्तविरोधित्वं न भवति, तत्रैकसामग्रया कस्मिंश्चित् ज्ञाने उत्पादिते सामग्र्यन्तरमपि स्वकार्यं ज्ञानान्तरं जनयेदेव । यथा यदाहवनीये जुहोति, पदे जुहोतीति वाक्यद्वयम्, तत्तदपच्छेदनिमित्तकशास्त्रद्वयादि च । न ह्यत्रैकशास्त्रार्थविरोधिविषयकत्वेनैवापरशास्त्रस्यात्मलाभ इति युक्तम्—पूर्वद्वयस्योत्सर्गापवादन्यायेन, उत्तरद्वयस्य चैकैकापच्छेदमात्रप्रसक्तिदशायां लब्धात्मकत्वात् । एवं निश्चितबोधजनकताकयोः तुल्यप्रमाणभूतयोर्नैमित्तिकशास्त्रयोः कदाचिदपच्छेदद्वयरूपनिमित्तद्वयसमावेशबलात् प्रवृत्तयोः कतरस्य परिग्रह इति विनिगमकापेक्षायाम्, एकैकस्यापि शास्त्रस्य बोधकतायाः क्लृप्तत्वात् उत्तरज्ञानानुत्पत्तिवर्णनासंभवात्, लोके च निर्दुष्टप्रमाणजन्यस्योत्तरज्ञानस्य पूर्वज्ञाननाशकत्वादर्शनात्, नित्यनैमित्तिकप्राकृतवैकृतादिस्थलेषु च नैमित्तिकवैकृतादिना परेण नित्यप्राकृतादिबाधस्य न्यायसंमतत्वात् अत्राप्युत्पन्नत्वादुत्तरेण पूर्वस्य बाध इत्यपच्छेदनयराद्धान्तः । न हि प्रबलसामग्रीरूपविशेषाभावे इदं रजतमिति बुद्धिकाले नेदं रजतमिति धीर्लोकेऽप्यवतरति । न चेह प्रत्यक्षद्वैतशास्त्राधीनद्वैतज्ञाने सति प्रत्यक्षतो न्यूनबलेन द्वैतशास्त्रतुल्यबलेन च अत एवाप्रबलेनाद्वैतशास्त्रेण पूर्वप्रमाणात्यन्तविरुद्धद्वैताभावरूपार्थविषयकज्ञानोत्पादनसंभवः । तथा चाद्वैतविषयकत्वे प्रकृतशास्त्रस्य बोधकताया एवाक्लृप्तत्वात् कुतो ज्ञानोत्पत्तिः ? कुतस्तरां चापच्छेदनयः ? कुतस्तमां च द्वैतप्रमाणस्य सामर्थ्येण बाधः ? अतश्चाप्रतिबद्धपूर्वज्ञानसद्भावेनोपक्रमनय एवात्र निराबाधमवतरतीति ।

अनियतपौर्वापर्यविषयत्वादपच्छेदनयस्य पौर्वापर्यनियमसत्त्वादुपक्रमाधिकरणन्यायप्रवृत्तिरित्युक्तम् । न च यस्मिन् प्रयोगे अपच्छेदद्वयं प्राप्तम्, तदा नैमित्तिकशास्त्रद्वयचिन्तायाः क्रियमाणत्वात् तत्प्रयोगावच्छेदेन पौर्वापर्यनियमोऽस्त्येवेति वाच्यम्—विरुद्धार्थबोधकत्वं क्लृप्तमिति ज्ञापनार्थं हि पौर्वापर्यनियमवर्णनम् । तथा चैकैकापच्छेदस्थले विरोधप्रसक्त्यभावात् द्वयोः शास्त्रयोर्यथाश्रुतार्थबोधकतायां क्लृप्तायां तया सामग्र्या अपच्छेदद्वयावसरेऽपि शास्त्रात्

बोधस्य युक्ततया परेण पूर्वस्य बाधः । प्रकृते तु पौर्वापर्यनियमात् सगुणवाक्यनिरपेक्षं निर्गुणवाक्यस्य बोधकत्वाभावस्य भवदिष्टत्वेन तद्विरोधस्फूर्तिनियमात् बोधकत्वमेव न संभवतीति । एवं पौर्वापर्यनियमपर्यालोचने च विरोधाधिकरणमपि प्रवर्तते । तथा हि, "विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम्" इति श्रुतिविरोधे स्मृतिः श्रुत्यनपेक्षा, भ्रान्तिमूलेत्यप्रमाणम् ; असति तु विरोधे स्मृत्या श्रुतेरनुमानम् ; ततः प्रामाण्यमित्युक्तम् । ननु श्रुतित्वात् प्राबल्यम्, स्मृतित्वाद् दौर्बल्यमित्युक्तं तत्र । न चात्र निर्गुणश्रुतिः स्मृतिः । अतः कथं तदधिकरणप्रवृत्तिरिति चेत्—न ; सापेक्षत्वनिरपेक्षत्वयोरेवात्र प्रयोजकत्वात् । श्रुतित्वस्मृतित्वयोरुक्तोदाहरणे सद्भावात् प्रकृतत्वाच्च निर्दिष्टत्वेऽपि तावन्मात्रे न संकोचः । अत एव स्मृत्याचारयोर्विरोधविषये वक्तव्यमपि प्रकृताधिकरणेनैवोक्तं भवति । नियतपौर्वापर्ययोर्मध्ये उपजीव्यग्रहणेनोपजीवकमुपेक्ष्यमिति तत्र न्यायः । तत्र सगुणनिर्गुणश्रुत्योः विभिन्नविषयकत्वादविरोधेन प्रामाण्यमसन्दिग्धम् । भवाद्भिस्तु सगुणश्रुतेर्बाध्यार्थबोधकत्वरूपमप्रामाण्यम् ; निर्गुणश्रुतेरबाध्यार्थबोधकत्वरूपं प्रामाण्यञ्चेष्यते । एवमेकतराप्रामाण्यं कृत्वा चिन्तायां विरोधस्य मिथः स्वीकारे च विरोधाधिकरणनयात् निर्गुणश्रुतिरेवाप्रमाणं स्यादिति ब्रूमः । तदयं सूत्रार्थः—

द्वयोर्विरोधे निश्चिते निर्गुणवाक्यं सगुणवाक्यमनुसृत्य तदर्थमबाधित्वा तद्विपरीतार्थाबोधनात् तदबाध्यत्वात् तदनुगुणमेव 'सत् मानं प्रमाणं स्यादिति । तथाच द्वयोर्विरोधे एकतरमुपेक्ष्यम् । असति विरोधे अन्याबाध्यत्वान्मानं स्यादिति । अत्र 'विरोधे त्वनपेक्षं स्यात्' इत्येतावति अनुपरम्य, 'असति ह्यनुमानम्' इत्यधिकसूत्रणम्, अविरोधेन निर्वाहः संभवति चेत् अनुपेक्ष्य इति ज्ञापयति । अत एव विरुद्धस्मृत्यादिविषये यावन्मूलं न दृश्यते, तावत् अननुष्ठानलक्षणमप्रामाण्यमिति वार्तिककारः । निर्गुणश्रुतिस्तु षोडशिग्रहणरूपविहितक्रियानिषेधश्रुतिवत् क्रियाविषयकत्वाभावात् वस्तुविषयकत्वात् विकल्पप्रसक्त्यभावादर्थान्तरपरतया प्रमाणम् । न पुनरद्वैतिमते सगुणश्रुतिरिवाप्र-

माणम् । अत्रायं विशेषः—औदुम्बरीसर्ववेष्टनस्मृतेः औदुम्बरीस्पर्श-विधायिश्रुतिव्यक्त्युपजीवित्वाभावेऽपि प्रत्यक्षश्रुतेरुपजीव्यत्वाभिमतश्रुतिसाजात्यात् बाधकत्वम् । इह तु निर्गुणश्रुत्या सगुणश्रुतिव्यक्तेरेवोपजीवनात् सुतरां सगुणश्रुतेर्बाधकत्वम् । तत्र स्पर्शश्रुत्या वेष्टनस्मृत्यर्थबाधात् स्मृतेः श्रुत्यननुमापकत्वादप्रामाण्यसंभावना ; इह तु निर्गुणश्रुत्यापातार्थबाधादनुगुणार्थान्तरपरतया प्रामाण्यमेव । एवं मानत्वसंपादनं मनसिकृत्य, असति ह्यनुमानमित्यधिकमुक्तम् । अतो विरोधाधिकरणमिह प्रवर्तते । शिष्टं श्रुतप्रकाशिकायां द्रष्टव्यम् ।

एवं "विप्रतिषिद्धधर्मा(र्म?)णां समवाये भूयसां स्यात् सधर्मत्वम्" इति भूयोनुग्रहन्यायेनापि प्रत्यक्षादीनां प्राबल्यम् । यत्तु सिद्धौ—ऐन्द्र्या सुब्रह्मण्यया आग्नेय्याः सुब्रह्मण्याया इव द्वैतग्राहिप्रत्यक्षानुमानागमाबाधायाद्वैतवाक्यार्थबाधः । पञ्चदशरात्रे हि प्रथमेऽहनि अग्निष्टुन्नामके नामातिदेशप्राप्ता एकाहाग्निष्टुद्धर्मभूता आग्नेयी सुब्रह्मण्या शिष्टेषु चतुर्दशस्सु अहस्सु अतिदेशप्राप्तया ऐन्द्र्या सुब्रह्मण्यया बाध्यत इति भूयोनुग्रहाधिकरणे शाबरभाष्ये दर्शितमिति पराशयमनूद्य तत्खण्डनं कृतम्, "दृष्टान्ते बहुविषयया बाधः, अत्र बहुभिरिति वैषम्यात्" इति—तदयुक्तम्—यथावस्थितसूत्रार्थस्य स्पष्टमेव दृष्टान्तदार्ष्टान्तिकयोरविशेषं समन्वयेन वैषम्यलेशस्याप्यभावात् । अयं हि सूत्रार्थः–विप्रतिषिद्धधर्मा(र्म?)णां मिथोविरुद्धधर्मशालिनां समवाये एकत्र मेलने एकतरधर्मस्य त्याज्यत्वे सति भूयसाम् अधिकसंख्याकानां सधर्मत्वम्—यो धर्मः प्रागभिमतः तद्धर्मकत्वं स्यादिति । तथाच भूयोनुग्रहायाल्पसंख्याकवृत्तिर्धर्मस्त्याज्य इति सिद्धम् । दृष्टान्त एवं समन्वयः--पञ्चदशरात्रे आग्नेयसुब्रह्मण्याकस्य प्रथमस्याह्नः ऐन्द्रसुब्रह्मण्याकानां चतुर्दशानामह्नाञ्च समवाये एकप्रयोगबलेन एकत्यागस्यावश्यकत्वे सति चतुर्दशानां यो धर्मः तद्वत्त्वमित्याग्नेयसुब्रह्मण्यात्याग इति । दार्ष्टान्तिकेऽप्येवम्—सद्भावग्राहकत्वरूपधर्मशालिनां प्रत्यक्षादीनामसद्भावग्राहकत्वविशिष्टस्याद्वैतवाक्यस्य चैकप्रपञ्चविषये

समवाये भूयसां प्रत्यक्षादीनां सद्भावबोधकत्वं यो धर्मः तत्स्वीकारेणाद्वैतवाक्यस्यासद्भावबोधकत्वं त्याज्यमिति । तस्माद्वैषम्यकल्पनं न युक्तम् । किञ्च बहुविषयया बाध इत्यस्य बहुनिष्ठैन्द्रसुब्रह्मण्यया एकनिष्ठाग्नेयसुब्रह्मण्यायाः पञ्चदशरात्रेऽनन्वयकरणमित्यर्थः । तथैवाद्वैतवाक्यीयस्यासद्भावस्य बहुप्रमाणीयेन सद्भावेन प्रपञ्चेऽनन्वयकल्पनमिति साम्ये सति, "अत्र बहुभिः" इति किमिति वैषम्यनिर्देशः । दृष्टान्तेऽपि बहुभिरतिदेशप्रमाणैरेकातिदेशवाक्यार्थस्याग्नेयसुब्रह्मण्याकत्वस्य बाध इत्यपि सुवचम् ।

यदपि चन्द्रिकायाम्—भूयोविषयकप्रमाणानुरोधेन स्वल्पविषयकप्रमाणबाध इति न्यायशरीरम्; न तु एकस्मिन्नेव विषये भूयसां प्रमाणानामनुरोधेन स्वल्पप्रमाणबाध इति—तदप्यत एव निरस्तम्—यथावस्थितसूत्रार्थत्यागेन तत्र बहुविषयकप्रमाणेति अल्पविषयकप्रमाणेति च न्यायशरीरे प्रवेशने प्रमाणाभावात् । विविधचिदचित्प्रपञ्चरूपभूयोविषयकप्रमाणेन निर्विशेषाखण्डब्रह्मरूपाल्पविषयकप्रमाणस्य बाध इति तदुक्तन्यायशरीरस्यापि प्रकृते संगमयितुं शक्यत्वाच्च । यच्च—भूयोविषयकैकप्रमाणेनाल्पविषयकबहुप्रमाणबाधोऽप्यपेक्षित इति—तत् कामं तथैवास्तु; अस्मदुक्तप्रकारेण तस्यापि सिद्धेः । भूयसां प्रामाणिकत्वायाल्पस्य प्रामाणिकत्वं हि त्यक्तुं शक्यते । यत्तु मिथ्यात्वग्राहकैः श्रुत्यनुमानार्थापत्त्यादिभिः प्रत्यक्षस्यैकस्य बाध इति—तच्च न—सत्यत्वग्राहकाणां प्रत्यक्षानुमानार्थापत्तिश्रुतिप्रभृतीनामनन्तानां ततोऽधिकत्वावश्यम्भावेन मिथ्यात्वग्राहकबाधात् । कर्मकाण्डोपासनावाक्यादिकं मिथ्यात्वविरोध्यविषयकं मिथ्यात्वनिश्चयपूर्वमेव प्रवृत्तमित्यपि न युक्तम्—मिथ्यात्वविरोध्यविषयकत्वे मिथात्वबोधकाद्वैतवाक्यार्थज्ञानेन तदर्थबाधानापत्त्या निष्प्रपञ्चब्रह्मसिद्ध्यसंभवप्रसङ्गात् । कथञ्च सपरिकरकर्मोपासनतत्समाराध्यनानादैवततत्प्रीतितदधीनतत्फलभोगादिसद्भावप्रतिपादकानां तेषां वाक्यानां मिथ्यात्वविरोध्यविषयकत्वम् । एवम्भूतानां वाक्यानां मिथ्यात्वनिश्चयपूर्वं प्रवृत्तत्वकथनमप्येवं मिथ्यैव । अपौरुषेयाणां मिथ्यात्वनिश्चयाधीनोत्पत्तिकत्वायोगात् । कथ्श्च

मिथ्यात्वनिश्चयशाली कमर्थं कस्मै उपदेक्ष्यति । मिथ्यात्वनिश्चयाभावादेव पारमार्थिकत्वभ्रान्त्या तत्तत्फलबुभुक्षया प्रवर्तमाना अधिकारिणस्तदर्थान् अनुतिष्ठन्तीति, मिथ्यात्वनिश्चये सति विजहतीति च स्थिते कथमिदंनिश्चयपूर्वप्रवृत्तत्वकथनम् । अन्यथा खलु विदितवेदान्ततत्त्वानां वेदमूर्धनि स्थितानामेव वेदकिङ्करत्वमिति अद्वैतिदृष्ट्या नूनमपसिद्धन्त इह दुर्वारः । अतः प्रत्यक्षस्य कर्मकाण्डोपासनावाक्यादेश्च विषयविभजनमयुक्तम् । सर्वथा भेदपराणां तेषां प्रत्यक्षकर्मकाण्डादीनां तन्निषेधकाद्वैतवाक्यस्य च मिथो विरुद्धार्थकत्वमनिवार्यम् ।

अथ चन्द्रिकोक्तांशविचारोपोद्धाततया प्रकृताधिकरणविषयः कियदपि संगृह्यते । "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्", "मुख्यं वा पूर्वचोदनाल्लोकवत्", "तथा चान्यार्थदर्शनम्" इति सूत्रत्रयम् । इदमेकमधिकरणमिति वृत्तिकारान्तरमतम् । प्रथमसूत्रमेकमधिकरणम्, उपरि सूत्रद्वयमधिकरणान्तरमिति भाष्यवार्तिकशास्त्रदीपिकाभाट्टदीपिकादिसर्वसंप्रतिपन्नम् । तत्र वृत्तिकारान्तरपक्षे भूयोनुग्रह इति पूर्वः पक्षः; मुख्यं प्रथमावगतमेवादर्तव्यम्, भूयोनुग्रहोऽपि त्याज्य इति सिद्धान्तः । अधिकरणद्वयपक्षे भूयोनुग्रह एव कार्य इति प्रथमाधिकरणसिद्धान्तः । यत्र भूयोनुग्रहप्रसक्तिर्नास्ति, अपितु पूर्वोत्तरयोः समसंख्याकत्वम्, तत्र मुख्यं प्रथमावगतमादर्तव्यमिति द्वितीयाधिकरणसिद्धान्तः । अत्र प्रथमाधिकरणे पूर्वोक्तपञ्चदशरात्रविषय उदाहरणं भाष्यकारदर्शितम् । तत्र सुब्रह्मण्याया देवताह्वानार्थत्वात् एकदेवताह्वानेन अन्यदेवताह्वानस्यार्थात् सिद्ध्यभावात् ऐन्द्या आग्नेयीबाधायोगात् उभयोरपि प्रयोग एवेति तदुदाहरणमुपेक्ष्य वार्तिकादौ उदाहरणान्तरं दत्तम्, काम्येष्टिकाण्डे, "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालम्, दधि मधु घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकामः" इति । ऐकाधिकरण्यपक्षे वृत्तिकारान्तरादृतमुदाहरणमपीदमेव । अत्रैकप्रयोगविधिपरिगृहीतानामेषां यागानामङ्गेषु तन्त्रेणानुष्ठेयेषु यत्र केषाञ्चित् दर्शवि-

कारत्वात् केषाञ्चित् पूर्णमासविकारत्वाच्चाङ्गैकरूप्येऽपि मन्त्रमात्रे भेदः, तत्र कतरो मन्त्रो ग्राह्य इति चिन्तायां मुख्यतमस्याग्नेययागस्य दर्श-पूर्णमासान्यतरविकृतित्वसंभवेन साधारण्यादनिर्णायकत्वेऽपि ऐन्द्रयागदधियागयोरमावास्याविकारत्वात् मुख्यतत्संबन्ध्यमावास्यामन्त्र एव ग्राह्यः, न तु पाश्चात्यमधुघृतोदकयागानां पूर्णमासविकाराणामनुरोधेन पौर्णमासीमन्त्र इति पूर्वपक्षे, उत्तरेषामधिकसंख्याकत्वात् पौर्णमासीमन्त्र एव ग्राह्य इति सिद्धान्तितम्। भाट्टदीपिकायामाप्ययं सिद्धान्तः स्वीकृतः, अल्पपूर्वापेक्षया उत्तरभूयोनुग्रह एव कार्य इति। परंतु प्रकृतोदाहरणे मधुघृतोदकयागानामुपांशुयाजविकारत्वात् उपांशुयाजस्य च पौर्णमास्यामिवामावास्यायामपि सद्भावे गमकसत्त्वात् एषामाग्नेयतुल्यत्वमिति सर्वेष्वमावास्याधर्मसंभवेन विप्रतिषेधप्रसक्तिरेव नास्तीति उदाहरणान्तरं ग्राह्यमित्युक्तम्।

एतावता चेदं विमृष्टं भवति—प्रकृतपशुकामेष्टौ अमावास्यामन्त्रग्रहणमेव स्थितमालोक्य तत्र न्यायं पर्यालोचयता वृत्तिकारान्तरेण उपांशुयाजस्य पौर्णमासीगतत्वात् भूयोऽनुरोधे अनुष्ठानविरोधः स्यादिति भूयोनुग्रहं पूर्वपक्षत्वेन परिकल्प्य अनुष्ठानरक्षणाय मुख्यत्वमेवादर्तव्यमित्यालोचितम्। भाष्यकारस्तु उपांशुयाजस्यामावास्यायामपि वर्तमानत्वेन पशुकामेष्टौ अमावास्यामन्त्रमात्रानुष्ठानस्यान्यथैव सूपपादत्वात् भूयोनुग्रहविषयेऽनादरो न युक्त इति, तस्मात् समसंख्याकस्थले मुख्यत्वं विनिगमकमिति च निर्धार्य अधिकरणद्वयामारचय्य प्रथमाधिकरणे पशुकामेष्ट्युदाहरणस्योक्तरीत्याऽनुपपन्नत्वमभिसंधाय सुब्रह्मण्योदाहरणमदात्। वार्तिककारादयस्तु सुब्रह्मण्योदाहरणस्यापि पूर्वोक्तरीत्याऽनुपपन्नत्वात् पशुकामेष्ट्युदाहरणेन विषयविचारे कृतेऽपि नोदाहरणमादर्तव्यमिति न्यायेनान्यत्र न्यायसंचारस्य सुकरत्वात् पशुकामेष्ट्युदाहरणमेव प्राक्तनगृहीतं पर्यग्रहिषुरिति। भाष्ये, 'एके मन्यन्त' इत्युक्तत्वात् 'वृत्तिकारान्तरैः' इति भाट्टदीपिकायां निर्देशाच्चायं प्रसिद्धादन्यो वृत्तिकार इत्यपि ज्ञायते। इत्थमत्र स्थितिः।

अत्र चन्द्रिकायाम्—भूयोनुग्रहन्यायस्वीकारे कथञ्चित् परो विजयेतेति मत्या भाष्यवार्तिकाद्यभिमताधिकरणद्वयरीतिमुपेक्ष्य वार्तिकादिदर्शितमेकीयमतमेव स्वमतत्वेनाभिसंधायैवमुक्तम्—"मुख्यत्वमेवामुख्यभूयस्त्वापवादकम्। लोके बहुभिरप्यमुख्यैर्मुख्यस्याबाधनात् प्रत्युत विपरीतदर्शनादिति। युक्तश्चैतत्—भूयसां दुर्बलत्वे भूयस्त्वस्याकिञ्चित्करत्वात्; शतमप्यन्धा न पश्यन्तीति न्यायात्" इति। अत्र चिन्त्यते—अत्र मुख्यशब्दः कमर्थमभिसंधाय प्रयुक्तः, किं प्रधानभूतेत्यर्थम्, उत प्रथमावगतेत्यर्थम्, आहोस्वित् प्रधानभूतप्रथमावगतेत्यर्थम्। आद्ये अप्रधानानामपि भूयस्त्वात् अल्पप्रधानापेक्षया सधर्मकत्वं युक्तमित्यधिकरणार्थः सिद्ध्यति। तत्र पशुकामेष्टिर्वृत्तिकारोदाहृता न घटते। तत्र सर्वेषां यागानां समप्रधानत्वात्। एवमेतदनन्तरे अङ्गगुणविरोधाधिकरणे अनेकाङ्गापेक्षयाऽपि एकप्रधानादरस्यैव वक्ष्यमाणत्वेन पौनरुक्त्यञ्च। एतेन तृतीयपक्षोऽपि निरस्तः; प्रथमश्रुतबह्वङ्गापेक्षयाऽपि पाश्चात्याप्रधानप्राबल्यस्य तत्र वक्ष्यमाणत्वेन पूर्वप्रधानप्राबल्यस्य कैमुतिकत्वात्। न द्वितीयः; तथात्वे 'भूयसां दुर्बलत्वे भूयस्त्वस्याकिञ्चित्करत्वात्' इति तत्पक्षे युक्तिप्रदर्शनस्यायुक्तत्वात्। अनेन हि भूयसां दुर्बलत्व एव किञ्चित्करत्वम्; प्राबल्ये समबलत्वे वा भूयस्त्वमेवानुरोद्धव्यमिति सिद्ध्यति। तथा च भाष्यवार्तिकाद्यभिमतेऽधिकरणभेदे दूषणं न सिद्ध्यति। अतश्च भूयोनुग्रहन्यायो नोपेक्षितः स्यात्, उपरि च, 'प्रथमप्रवृत्तस्य लोके बहुभिः पश्चात् प्रवृत्तैरुपमर्दात् भूयस्त्वं मुख्यत्वबाधकम्' इति न्योक्तचिन्तनावसरे, समानबलभूयोभिर्बाध्यत्वं वाच्यमिति लेखनात् समबलविषये भूयोनुग्रह एव कार्य इति स्पष्टम्। ननु समबलैर्भूयोभिरल्पस्य बाध्यत्वं लोकसिद्धं नापह्नूयते; प्रथममल्पपुरुषावरुद्धस्यापि दुर्गस्य पश्चादागतैर्बहुभिराक्रमणेन बाधदर्शनात्। किंतु प्रमाणस्थले इदं वक्तुमशक्यम्; पूर्वप्रमाणावगतस्यासंजातविरोधितया प्राबल्यस्य उत्तरप्रमाणानाञ्च संजातविरोधितया दौर्बल्यनियमेनावश्यकत्वात्। तस्मादेकप्रयोगान्तःपातिषु मुख्यस्यैव प्राबल्यम्; उत्तरस्य त्वल्पस्येव भूयसोऽपि बाध्यत्वमेवेत्युक्तमेवेति

चेत्—एवं तर्हि असंजातविरोधित्वेन सर्वत्र मुख्यस्य प्राबल्ये अङ्गगुणविरोधन्यायविरोधः। तत्र ह्यनन्तरेऽधिकरणे, "अङ्गगुणविरोधे च तादर्थ्यात्" इत्यत्र पूर्वदिनानुष्ठेयानामुपसदग्नीषोमीयपशुपुरोडाशानां भूयस्त्वेऽप्यनन्तरदिनकर्तव्यस्य सोमयागस्यैकत्वेऽपि अङ्गापेक्षया प्रधानस्य बलीयस्त्वात् प्रधानसागुण्याय पूर्वेषां पर्वकालबाधः। इष्टिपशुसोमानां सर्वेषां पर्वकालकर्तव्यत्वेऽपि सोमयागस्यैव पर्वकालानुग्रह इत्युक्तम्। तत्राप्यसंजातविरोधित्वेनाङ्गानुरोधेनापि प्रधानस्यैव पर्वकालबाधः स्यात्; संजातविरोधित्वात्। यदि तु मुख्यत्वन्यायस्य तत् स्थलमपवाद इष्यते, तर्हि भूयस्त्वमप्यपवाद इति किं न भवति। संजातविरोधिताया उभयत्राविशिष्टत्वात्। तदुक्तं शास्त्रदीपिकायाम्, "यथोपरितनेऽधिकरणे मुख्यमपि दीक्षणीयाधर्मत्वं हित्वा प्रधानधर्मत्वबलेन सुत्याकाल एवानुग्रहीष्यते, तथा भूयस्त्वेनापि। तस्मात् द्वे एवाधिकरणे" इति। तस्मादुत्तराधिकरणविरोधादुत्तरावगतत्वपूर्वावगतत्वयोः प्राबल्यदौर्बल्यरूपत्वं परित्यज्य प्रकारान्तरेण प्राबल्यदौर्बल्ये निरूप्ये। तच्च निरूपणं पशुकामेष्ट्यादावसंभवीति दुर्बलैर्भूयोभिः प्रबलं न बाध्यत इत्यस्य प्रकृते दुरुपपादत्वात् प्रमाणविषयेऽपि भूयोनुग्रहन्यायः संभवत्येवेत्यधिकरणद्वयपक्षदूषणमशक्यमेव। अपिच मुख्यत्वस्य निरपवादत्वे प्रत्यक्षादिभिरसंजातविरोधिभिरद्वैतिश्रुतबाधो निर्बाध इति द्वैतिनामेवेदमनुकूलम्। प्रत्यक्षादीनामद्वैतश्रुत्यपेक्षया दौर्बल्यकथनमप्ययुक्तम्; असंजातविरोधितया प्राबल्यस्यैव स्थितत्वात्। सुदूरविचारेऽपि अद्वैतश्रुतेरद्वैतपरत्वे सिद्धे प्रत्यक्षादेर्दौर्बल्यनिश्चयः, तद्दौर्बल्यनिश्चये सति अद्वैतश्रुतेस्तत्परत्वनिश्चय इत्यन्योन्याश्रयदोषः श्रीभाष्य आपादितो न शक्यः परिहर्तुमिति प्रबलदुर्बलभावाभावात् भूयोनुग्रहस्य न्याय्यत्वात् प्रत्यक्षादिभिरेवाद्वैतश्रुतिबाधः; असंजातविरोधित्वाच्च प्रत्यक्षादिकमेव प्रबलमिति सुतरां बाधकत्वमिति। तस्मात् प्रत्यक्षादिविरुद्धस्यार्थस्य शास्त्रेण बोधनायोगादद्वैतशास्त्रं प्रत्यक्षाद्यनुरोध्यर्थान्तरप्रतिपादनेनैव प्रमाणम्।

अपि च निश्चितप्रामाण्ययोरुभयोरेकतरस्वीकारगमकत्वेन क्वचित् परत्वस्याश्रयणमित्युक्तम्, तत्र च पूर्वप्रमाणस्य क्वचिच्चारितार्थ्यमावश्यकम्। अन्यथा प्रामाण्यभङ्गप्रसंगेन विकल्पस्यैव युक्तत्वापातात्। पूर्वनैमित्तिकशास्त्रस्य पूर्वापच्छेदमात्रदशायाम्, अद्य पूर्वापच्छेदभूतस्यैव कदाचिदुत्तरापच्छेदतायाञ्च नियमेन चारितार्थ्यम्। एवमपच्छेदद्वययौगपद्येऽपि विकल्पेन। न च तथा प्रकृते प्रत्यक्षद्वैतशास्त्रादेरन्यत्र चारितार्थ्यमस्ति: तदधीनज्ञानस्य मिथ्याभूतार्थविषयकत्वेन भ्रमत्वस्यैवेष्टत्वेनाप्रामाण्यस्यैवापातात्। न ह्येकस्यैव प्रामाण्यस्वीकारेणान्यस्य सर्वथैवाप्रामाण्यस्वीकरणमपच्छेदनयकृत्यम्। न च व्यावहारिकं प्रामाण्यं स्वीकृत्य चारितार्थ्यं ब्रूम इति वाच्यम्—प्रमाणत्वेनाभिमतस्यैकस्य यादृशं प्रामाण्यं स्वीक्रियते, तादृशप्रामाण्यस्यान्यतरस्मिन्नपि अन्यदा स्वीकारसंभव एवापच्छेदनयावतारात्। व्यावहारिकं प्रामाण्यमित्यस्य वास्तवप्रामाण्याभावेऽपि अज्ञाताद्वैततत्त्वस्थितीनां प्रामाण्यव्यवहारविषयभूतत्वमित्यर्थकतया प्रामाण्याभावस्यैव ततो लाभात्। एतेन—व्यावहारिकप्रामाण्ये प्रत्यक्षस्यापि सावकाशत्वात् तत्र एकप्रयोगविरोधवदत्रापि तात्त्विकत्वांशे विरोधात् इति सिद्धयुक्तमपास्तम्—एकप्रयोगे एकनिमित्तकादक्षिणत्वान्यनिमित्तकसर्वस्वदक्षिणत्वयोर्विरोधात् एकस्य धर्मस्य परनैमित्तिकप्रयोगरहितस्थले सावकाशत्ववत द्वैततात्त्विकत्वद्वैताभावतात्त्विकत्वयोर्विरोधे द्वैततात्त्विकत्वस्य कुत्र सावकाशत्वमिष्यते। द्वैते तात्त्विकत्वानंगीकारेण हि व्यावहारिकप्रामाण्यं प्रत्यक्षादेरिष्यते। अतः कुत्र चारितार्थ्यम्; कथमपच्छेदनयः। न च द्वैतनिष्ठं तात्त्विकत्वं व्यवहारकालाबाध्यत्वरूपमिति वाच्यम्—बाध्यत्वसामान्याभावरूपतात्त्विकत्वं यद् गृहीतम्, तच्चारितार्थ्यस्यैवं सति असिद्धेः। अन्यादृशतात्त्विकत्वस्यैव कथ्यमानत्वात्। तथाच पूर्वप्रमाणसिद्धांशबाध एव। यदि कश्चिददक्षिणत्वसर्वस्वदक्षिणत्वयोर्विरोधपरिहाराय, “दक्षिणाकाले यत् स्वं प्रतीयेत तद्दानसंयोगात्” (6.7.7) इति सूत्रोक्तरीत्या दक्षिणाकालिकस्वत्वानाश्रयस्यादेयतया तदभावमात्रेणाद-

क्षिणत्ववाचोयुक्तिरिति निर्वहेत् , तादृगेवेदमपीति । तस्मात् सर्वथा प्रामाण्यसामान्यरूपरहितमेव प्रामाण्यपदेनाऽऽदाय, वस्तु द्विविधं नित्यमनित्यमितिवत् प्रामाण्यं द्विविधं व्यावहारिकं तात्त्विकञ्चेति विभजनमनुपपन्नम् ।

निपुणनिरूपणे चाद्वैतश्रुतीनामेवोत्सर्गापवादनयेन प्रामाणिकव्यतिरिक्तद्वैतनिषेधपरतया सावकाशत्वम् । न च, "न पुण्यपापे मम नास्ति नाशो न जन्मदेहेन्द्रियबुद्धिरस्ति । न भूमिरापो मम वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरञ्च" इति विशिष्यैव सर्वनिषेधात् कथमन्यपरत्वमिति चन्द्रिकोक्तं युक्तम्—तत्रापि ममेति षष्ठ्या संबन्धसामान्यस्यैवोक्ततया ममेत्यस्य जीवपरत्वे पुण्यपापादौ तदीयस्वाभाविकसंबन्धाभावस्य, परमात्मपरत्वे बन्ध्यबन्धकभावसंबन्धविरहस्य च बोधनेन सावकाशत्वात् । न चाद्वैतश्रुतीनां तात्पर्यलिङ्गैर्द्वैतनिषेधपरत्वेऽवधृते प्रत्यक्षादेरन्यथैव निर्वाह इति वाच्यम्—तदवधारणासंभवस्यैव कथ्यमानत्वात् । तथाचोपक्रमनयभूयसांन्यायनिरवकाशत्वादिभिः प्रत्यक्षादौ वास्तवप्रामाण्यमेव ; न तु व्यावहारिकप्रामाण्यम् । तथैवाद्वैतश्रुतीनामपि तदविरोध्यर्थवर्णनात् वास्तवप्रामाण्यमेवेति ।

नन्वेवंसति, "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता" इति प्रत्यक्षादीनां येषां त्रयाणां प्रामाण्यमुक्तम्, तेषु, "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्" इति आगमप्राबल्यकथनं विरुद्ध्यते,शास्त्रापेक्षया प्रत्यक्षप्रबल्यस्यैव द्वैतिसंमतत्वादिति चेन्न–प्रबलत्वेन कथितशास्त्रमध्ये द्वैतशास्त्रस्यापि प्रविष्टत्वेन शास्त्रत्वाविशेषात् द्वैताद्वैतशास्त्रयोर्बलाबलविचारे प्रमाणत्वेन संमतप्रत्यक्षाद्युपष्टब्धत्वेन द्वैतशास्त्रप्रबल्यकथनात् प्रकृतवचनविरोधाभावात् । न ह्यनेनाद्वैतशास्त्रमेव प्रबलमित्युक्तम् । किञ्च वचनमिदं न प्रत्यक्षप्रतीतार्थागमप्रतीतार्थयोर्मध्ये आगमार्थग्राह्यतापरम् ; तथासति यूपादित्याभेदस्वीकारापत्तेः ; क्वचिदपि श्रुतौ लक्षणावृत्त्यभावप्रसंगाच्च । अतः

प्रत्यक्षानुमानयोर्यथा प्रत्यक्षानुमानागमविरोधे क्वचिदप्रमाणत्वमेव, न तु कथञ्चित प्रामाण्यरक्षणम् , न तथाऽऽगमस्य ; किं तु आगमत्वजात्याक्रान्तं सर्वमपि वाक्यं प्रमाणमेव । यदि यथाश्रुतोऽर्थोऽनुपपन्नः, तदाऽप्यविरुद्धार्थान्तरपरतयाऽवश्यमेव प्रामाण्यं लभते इत्येवम्परम् । एतदुक्तं भवति—त्रयाणां मध्ये प्रत्यक्षानुमानयोः सर्वथैवाप्रमाण्ये त्रयवेद्यत्वस्य शास्त्रप्राबल्यस्य च कथनासंभवात् यथा त्रयाणामपि प्रामाण्यं प्रतितिष्ठेत् तथाऽर्थशोधनमेव स्मृतिचिकीर्षितम् । न तु प्रत्यक्षानुमानयोः शास्त्रेषु च भूयस्सु भ्रमजनकत्वं कस्य चिदेव शास्त्रस्य प्रमाजनकत्वमित्युपदिश्यते स्मृत्या । तथाचाबाध्यार्थकज्ञानजनकत्वस्य सर्वत्र स्थितावपि यत्र क्वचित् प्रत्यक्षापेक्षयाऽनुमानस्य तदपेक्षया प्रत्यक्षस्य तदुभयापेक्षया च शास्त्रस्य प्राबल्यस्वीकारेणान्यस्य यथातत्राभासत्वकल्पनम् , न तथा शास्त्रस्य क्वचिदप्यभासीकरणम् , निर्दोषत्वरूपप्राबल्यस्य सर्वशास्त्रवाक्येष्वविशिष्टत्वात् । अत आपातार्थबाधे अप्रामाण्यमनारोप्य तात्पर्यार्थनिरूपणेन सर्वशास्त्रप्रामाण्यं रक्षणीयमिति । तस्माद्द्वैतिप्रतिकूलमेवेदं वचनमित्यवधेयम् ।

यत्तूच्यते— सगुणवाक्यार्थस्य निर्विशेषब्रह्मसाक्षात्कारानन्तरमेव बाधात् न व्यावहारिकप्रमाण्यहानिस्तस्येति— तत् वदिकलोकस्य पुरस्तात् अप्रमाणमिति धीरं वक्तुं बिभ्यतां भ्रामकवचनशैलीमात्रम् । अप्रमाणमित्युक्तिरेव व्यावहारिकप्रमाणमिति शब्देन गूढमुच्यत इति प्रागेव विस्तृतम् । यदि व्यवहारकाले सर्वमस्ति, पश्चात्तु सर्वस्य नाश इत्युच्येत, तर्हि ईश्वरस्य कञ्चित् कालं गुणानां सत्यत्वकथनात् दशाभेदपरतया निर्गुणश्रुतिरुपपद्यत इति कल्पनाया अवकाशः स्यात् । न ह्येवं जगत्सत्यत्वं भवद्भिरिष्यते । नो खलु ज्ञानशक्तया पुण्यपापरूपकर्मप्रहाणवत् तत्त्वज्ञानेन सर्वस्य वस्तुतः स्थितस्यैव प्रपञ्चस्य सेश्वरस्य पश्चाद्विलय इति भवन्मतम् । किंतूपलभ्यमानमिदं सर्वमिदानीमपि वस्तुतो नास्त्येवेति त्रैकालिकाभावप्रतियोगित्वं हि सर्वस्येष्यते । तस्मात् इदंरजतमिति ज्ञानस्य नेदंरजतमितिज्ञानपर्यन्तं प्रामाण्यमिति वाचोयु-

क्तितुल्येयं व्यावहारिकप्रामाण्यवाचोयुक्तिः । अस्तु तर्हि सर्वं सत्यमेव । निर्गुणश्रुतिस्तु दशाविशेषविषयिण्येव भवतु । एवञ्च निर्गुणमिति गुणसामान्यनिषेधात् स्वारस्यमिति चेत्—एतावदमिमं पक्षं परित्यज्य नवीनमेवमद्वैतकल्पनमेवेष्टमिति भवद्भिर्मिलित्वैर्निर्धार्य निबन्धः क्रियताम्; ततस्तत्र यद् वक्तव्यम्, तद् वक्ष्यामः ।

यत्तु—ब्रह्मसूत्रार्थतया निरूपितस्य निर्विशेषत्वस्य विशिष्टाद्वैतिभिः सूत्राणामर्थान्तरवर्णनेन खण्डितत्वात् तत्र विप्रतिपन्नान् प्रति उभयाभ्युपगतपूर्वमीमांसानयेन प्रकारान्तरेण चोपबृंहणार्थं स्वतन्त्रमिदं प्रकरणम्—इति । किं तत् प्रकरणम् । पूर्वमीमांसानयस्तु प्रतिकूल एव भवताम् । प्रकारान्तरं तु प्राचीनग्रन्थोक्ताधिकं किमपि न लक्ष्यते । अतो विप्रतिपन्नाः प्रकरणमिदं दृष्ट्वा, "उभावपि पक्षावनवसितौ प्रकरणम्" इति न्यायभाष्योक्तप्रकरणदशानिविष्टा एव भविष्यन्ति; परिशीलिनस्तु परित्यक्ष्यन्त्येवाद्वैतमिति । यदपि, "चिन्मात्रब्रह्मभावो नास्त्येवेति वादस्तु तिमिरदोषदूषितस्य सहस्रकिरणनास्तिक्यवादः" इति—तत्रोच्यते—चिन्मात्रब्रह्मभावः शशविषाणमिति च तुल्यम् । तत्र शशविषाणमिति प्रतियोग्यप्रसिद्ध्या तन्नास्तीति यथा न वक्तव्यम्, तथैव चिन्मात्रब्रह्मभावोऽप्यप्रसिद्धत्वात् प्रयियोगी न भवितुमर्हतीति तदभावोपि नोच्यत एव । प्रमाणाभावात्तु स न यथार्थज्ञानेन विषयीक्रियते इति तदसिद्धिरेव । ज्ञानसामान्यं चिन्मात्रनिष्ठविषयताकत्वभ्रमान्यत्वोभयाभाववदिति ब्रूमः । अस्ति तत्र प्रमाणमिति वदता चिन्मात्रस्य प्रमेयत्वापत्तौ अमतत्वाविदितत्वाप्रमेयत्वादिवचनान्युपेक्षितानि स्युः । तत एव तस्य मिथ्यात्वम्, ततएव तस्य बाधश्च स्वीक्रियेतेति बाध्यस्य तस्य कथं मोक्षरूपता । बाध्यस्यापि मोक्षरूपत्वं मन्यमानस्यैव हि तिमिरादिदूषितत्त्वम् । तथाच स न केवलं सहस्रकिरणापलापी; किंतु, "त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः" इति प्रमाणप्रसिद्ध- कोटिकिरणानन्तजीवसंघ-तदधिपतिभूत-युगपदुदितसहस्रकिरणसहस्रभाःसध्रीचीनभाःपरिवृतपरमाद्भुत दिव्यमङ्गलविग्रहविशिष्टपरमात्म-तत्परि-

चरणस्थानभूत-नित्यदिवासमयायमान- निरवधिज्योतिर्मयधामादीनामप्यपलापीति तत्त्वम् ।

यदपि, अनुशीलयतां निर्विशेष एव मुख्यं तात्पर्यं वेदान्तानामिति भगवत्पादानुयायिनां विचारसरणिः, परिहाय शिवद्रोहे तात्पर्यमिति—तत्रोच्यते——अनुशील्यैव तां विचारसरणिं खण्डयामः । भवता तु क्रियासमभिहारेण शिवद्रोहे तात्पर्यं मा भूदिति प्रयुज्यते । कोऽसौ शिवद्रोह इति विवेक्तव्यम् । शिवं मङ्गलम् ; तद्द्रोह इति तु न शक्यं मन्तुम् । 'स्मृते सकलकल्याणभाजनं यत्र जायते', 'मङ्गलायतनं हरिः', 'मङ्गलानाञ्च मङ्गलम्' इति सर्वमङ्गलवह—सर्वमङ्गलदिव्यास्पदश्रियःपतिपदारविन्दप्रवणानां मङ्गलद्रोहावसराभावात् । शिवो रुद्रः तद्द्रोह इति च दुर्वचम्, सर्वभूतानुकूलसमाचारत्वात श्रीवैष्णवानामिति प्रागेव प्रत्यपादि । भगवत्पादानुयायिभिर्भवद्भिस्तत्कृतः शिवद्रोहो नानुरुद्ध्यत इति च विचित्रम् । निर्विशेषवादमात्रं ततो गृहीत्वाऽन्यांशे गुरुद्रोह एव क्रियत इति वाऽभ्युपगन्तव्यम् । तथा हि तत्कृते नामसहस्रभाष्ये, 'सर्वः शर्वः शिवः स्थाणुर्भूतादिः' इति बहुषु रुद्रवाचितया प्रसिद्धेषु पदेष्वपि कस्यापि पदस्य पार्वतीपतिरित्यर्थं न गृह्णाति । दाशार्हः सात्वतांपतिरित्यादौ दशार्हकुलोद्भव इति सात्वततन्त्रप्रवर्तकयोगक्षेमकृदित्येवं कृष्णादिरूपेण भावनमिव शिवरूपेण भावनमपि समानं न मन्यते । सोमः इत्यस्य चन्द्ररूपेणौषधिपोषक इत्यर्थमुक्त्वा चन्द्रसमुद्रादिसर्वरूपेणोच्यमानस्य शिवरूपेणोक्तिरपि न दुष्यतीत्याशय्य सोमपदमुमासहितशिवपरं व्याकुर्वन्नपि शिवस्य चन्द्रादिवत् जीवविशेषत्वं विष्णोः कृष्णाद्यवतारेष्वपि परमात्मत्वञ्च मन्यते । विशिष्य शिव इति नाम्नः एवमर्थमाह, "निस्त्रैगुण्यतया शुद्धत्वात् शिवः" इति । 'क्षेमकृच्छिवः' इत्यत्रापि, "स्वनामस्मृतिमात्रेण पावयन् शिवः" इत्यभाषिष्ट । न केवलमेतावत् । एवं शिवादिपदप्रयोगात् शिवविषयमेवं नामसहस्रमस्तु इति कश्चिन्मा शङ्किष्टेति तदपर्युपि किञ्चिदाह स्म, "स ब्रह्मा स शिवः इत्यभेदोपदेशात् शिवादिनामभिर्हरिरेव स्तूयते" इति । ब्रह्मशिवादिसर्वशब्दवा-

च्यत्वं हरेः संभवति यथा, नैवं हरिवाचकसर्वशब्दवाच्यत्वं शिवादेः। उपनिषदपि, 'स ब्रह्मा स शिवः सेन्द्रः' इति हरेरेव सर्वशब्दग्राह्यत्वं ग्राहयति; अधस्तात्, "व्याप्य नारायणः स्थित' इति प्रक्रान्तस्यैव स इति तत्पदबोध्यत्वात्। तस्मान्नामान्तरैरपि हरिरेव स्तूयते, यथा विश्वमिति प्रथमं नामेति तदाशयः। तेन हरेरिवान्यस्य सर्वशब्दवाच्यत्वं न भवतीति व्युत्पादितम्। अत्रान्योऽपि विशेषः,—केचित्, 'स ब्रह्मा स शिवः स हरिः सेन्द्रः सोक्षरः परमः स्वराट्' इति श्रुतिं पठन्ति। सोऽपठ इति तर्कतोऽपि सुवचम्, स ब्रह्मेति ह्यनुष्टुप्छन्दः। तत्र स हरिरिति पाठे अक्षरत्रयाधिक्याच्छन्दो बाध्यते। येयं श्रुतिः, स ब्रह्मा स शिवः स इन्द्रः इति पाठे कर्तव्ये एकाक्षराधिक्यादपि भीता, "सोऽचि लोपे चेत् पादपूरणम्" इत्यनुशासनार्थदर्शिनी स इत्यस्य सोरपि लोपं विधाय सेन्द्र इति पठति, सा कथमक्षरत्रयमधिकमस्मिन् पादे प्रवेशितं सहेत। सहने वा सेन्द्र इति न पठेदिति। यदि च स हरिरिति पाठः शङ्कराचार्यानुमतः स्यात्, नूनं हरिशब्दवाच्यस्य हरेः स इति पदेनापि ग्रहणस्यायुक्तत्वात् हरिरेवेत्यस्य स्थाने नारायण एवेत्येवं किमप्यन्यदेव पदं प्रयुक्त स्यात्। अतः स हरिरिति पाठोऽप्रामाणिकः। तथा हर्यतिरिक्तस्यान्तर्यामित्वं सहस्रशीर्षं देवमित्यनुवाकप्रतिपाद्यत्वं ब्रह्मशिवादिसर्वशब्दवाच्यत्वं सर्वसगुणपरविद्योपास्यत्वमित्यादिकमप्यप्रामाणिकमिति भाष्यमिदं सम्यगाविष्करोति। 'सतांगतिः' इति नामार्थवर्णनेऽपि मुमुक्षूणां विष्णोरन्यस्य गतित्वं न भवतीत्युक्तम्। एवं शिवापेक्षया हरेरुत्कर्षमुक्तवतः स्वगुरोर्यदि शिवद्रोहित्वेन दूषणं भवान् अनक्षरमावेदितवान् भवति, ततः शिवमशिवं वेति किञ्चित् सहृदयं विमृश्यम्। कियत्कालपर्यन्तं शाङ्करमते वैष्णवश्रीर्व्यराजत, कदा च विष्णुद्रोहेण वैष्णवद्रोहमूलेन शैवाभिमानेन चाद्वैतमतनिष्ठेष्वपि पदं न्यधायीति भवत्पूर्वपुरुषसामान्यचारित्रशोधनेऽवतीर्य भवद्भिरेव सुकरो निर्णय इति किमस्माकं तद्विस्तरेण।

अद्रोहिषु शिवद्रोहमसकृत् कल्पयन्नयम्।

तत्कालगुरुतृप्त्यर्थी पूर्वद्रोहं न पश्यति ॥ अलं प्रासङ्गिकेन ।

अत्रेदमधिकमप्यावश्यकं विचिचारयिषामः—घटवद् भूतलमित्यादिविधिस्थले सकलघटाग्रहणेन योग्यकिञ्चिद्घटमात्रग्रहणवत् गुणवानीश्वर इत्यादौ विवक्षितकिञ्चिद्ग्रहणं योयुज्यते, निर्गुणमित्युक्तौ तु गुणसामान्याभावग्रहणमेव युक्तम्, अघटमित्यादौ घटसामान्याभावप्रतीतेरेवानुभवात् । नञः स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावबोधकत्वस्यैव व्युत्पत्तिसिद्धत्वात् । अन्यथा, 'न ब्राह्मणं हन्यादित्यादौ यत्किञ्चिदेकब्राह्मणहननिषेधेनापि वाक्यसार्थक्यप्रसंगात् । अत एवोक्तम्, "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । स्पष्टस्य तु विधेर्नैवमुपसंहार इष्यते" इति । विधिवाक्येषु पशुमालभेतेत्यादिषु सर्वपश्वनुष्ठानस्याशक्यतया व्यक्त्यपेक्षायां पश्वादिशब्दाः संकुचितवृत्तयो भवन्ति । निषेधेषु त्वविशेषेण सर्वनिषेधस्य सुकरत्वात् किमिति संकोचकल्पनम् । अतो निर्गुणमित्यस्य कतिपयगुणरहितमित्यर्थो न युज्यत इति—अत्रोच्यते—नञः स्वसमभिव्याहृतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकाभावबोधकत्वमित्युत्सर्गः । तात्पर्यग्राहकप्रमाणानुरोधेन निषेधस्थलेऽपि विशेषविषयकत्वे परश्शतान्युदाहरणानि । यथा—

अमर इति देवानां नाम । न हि ते मरणरहिताः । अतो मर्त्यवत् क्षिप्रमरणाभावस्तत्र विवक्षितः । 'अमृत इह भवती' त्यत्रामृतत्वञ्च अनुपोष्य यदमृतत्वम्, तादृशविशेषरूपमित्युक्तम् । 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत' इति च विशेषे संकोच्यते । 'वायुश्चान्तरिक्षञ्चैतदमृत' मित्यत्रापि चिरकालस्थायित्वं विवक्षितम्; न तु मृतत्वसामान्याभावः । एवम्, "सैषाऽनस्तमिता देवता यद् वायुः" इत्यत्रापि । 'अकर्दममिदं तीर्थं भरद्वाज निशामय' इति तीर्थस्य कर्दमराहित्यमुक्तम् । जलस्य वा अवतरणदेशस्य वा सर्वप्रकारपङ्कराहित्यं तावदसंभावितम् । तस्मात् स्नानकालिकशरीरलेपावहकर्दमराहित्यरूपविशेषविवक्षैव तत्र । 'यः पठेत् रामचरितं सर्वपापैः प्रमुच्यते' इत्यस्ति । सकृत्

रामायणपठनमात्रेण सञ्चितप्रारब्धसर्वपापविनिर्मोकः किमिष्यते। एवं तर्हि विशेषतो वेदान्तार्थश्रवणमनननिध्यानसाक्षात्कारपर्यन्तश्रम एव नापेक्षितः स्यात्। एवञ्च सर्वपापपदं सर्वशब्दघटितं सदपि संकुचितार्थकमेव। 'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः' इत्यत्रापि सत्यपि सर्वशब्दे पञ्चमहायज्ञानुष्ठानमात्रेण ज्ञानसाध्यसर्वपापक्षयस्यासंपाद्यत्वात् किल्बिषविशेषमुक्तिरेव विवक्षिता। तथा च भाष्यम्, 'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः—सर्वैः पापैः चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्च' इति। आत्मयाथात्म्यावलोकनविरोधिपापनिवृत्तिमात्रविवक्षा, न ब्रह्मप्राप्तिविरोधिसर्वपापनिवृत्तेरिति च संमतम्। "निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः" इत्युच्यते। अत्र संशयसामान्यराहित्यमविवक्षितम्। हरिरस्ति न वेति संशयराहित्यमेव विवक्षितम्, लौकिकानेकार्थविषयकानेकप्रकारसंशयसत्त्वेऽपि निःसंशयत्वस्य निरूपणीयत्वात्। एवं लोके, अकिञ्चनः, निर्धनः, सुखरहितः, अज्ञः, अगतिः, अक्रोधः, अक्रियः, अबलः, अनपेक्षः, अपापः, अशक्तः, अभयमित्यादयो विशेषनिषेधविवक्षयैव प्रयुज्यमानाः बहवः शब्दाः। 'काममामरणात् तिष्ठेत् गृहे कन्या ऋतुमत्यपि। न तु दिशेत् गुणहीनाय कर्हिचित्' इत्युक्तौ गुणहीनपदं न खलु सर्वप्रकारगुणाभाववत्परं स्यात्। 'नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना। न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्' इति श्लोके प्रतियोगिवाचकं सर्वं सामान्यपदं विशेषपरं व्याख्यायते। अत्र बुद्धिरिति न सर्वं ज्ञानम्, किंतु आत्मस्वरूपविषया। अयुक्तस्येति न सर्वविधयोगाभावपरम्, किंतु आत्मविषयसमाधिरहितपरम्। भावनापदम् आत्मज्ञानाभिनिवेशपरम्। शान्तिरत्र विषयस्पृहाशान्तिरूपा। सुखं न भवतीत्युक्तावत्र सुखं पारमार्थिकसुखम्। 'नायं लोकोऽस्त्ययज्ञस्य' त्यत्र च पञ्चमहायज्ञाद्यनुष्ठानरहितस्य जीवस्य एतल्लोकसंबन्धाभाव उच्यमानः कथं घटतामिति विशेषत्रिवर्गपुरुषार्थप्राप्तिर्नास्तीत्येवंप्रकारेणैव तन्निर्वाहः। 'कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः' इति कर्मकर्तृत्वे वर्तमाने तदभावोऽप्युच्यते। इदं

कामसंकल्पपूर्वकर्मकर्तृगतविशेषाकाराभावमात्रेणेति विशेषविषयमेव निर्वहणीयम् ।

तथा जगत्कारणं वस्तु, 'सदेव सोम्येदमग्र आसीत्' इति सच्छब्दनिर्दिष्टमेवान्यत्र, 'असद्वा इदमग्र आसीत्' इत्यसच्छब्देन निर्दिश्यते । न च सदेवासद्भवितुमर्हति । तुच्छं खल्वसत्पदेन ग्राह्यम्, अथवा अवर्तमानं भूतं भविष्यद्वा । न चैवं ब्रह्म । अतः असच्छब्दघटकं सत्पदं नामरूपव्याकृतवस्तुविषयं कृत्वा तद्भिन्नं कारणमसदित्युच्यते । एवम्, 'इदं वा अग्रे नैव किञ्चनासीत्' इत्यत्रापि सर्वनिषेधस्य कर्तुमशक्यतया विशेषनिषेधपरत्वमेष्टव्यम् । तथा सदेवेति ब्रह्मातिरिक्तसर्वनिषेधेऽवगम्यमानेऽपि शुद्धब्रह्ममात्रसद्भावे सृष्ट्यसंभवादपारमार्थिकाविद्यादिसद्भावोऽपि स्वीकृत इति तदतिरिक्तकार्यरूपापारमार्थिकवस्तुविशेषाभाव एव पर्यवसानं कर्तव्यम्, क्रियते चेति स्पष्टं विशेषविषयकत्वं निषेधस्य । 'योऽकामो निष्काम आत्मकामः' इत्यत्र आत्मविषयककामनावत्त्वस्य कण्ठोक्ततया अकामपदं तद्व्यतिरिक्तकामनिषेधपरं वाच्यम् । तत्रापि अकामनिष्कामपदयोरपौनरुक्त्याय ऐहिकामुष्मिकादिरूपकामविशेषनिषेधपरं पदद्वयमिति विवक्षणीयम् । एवं वैराग्यपदमपि मुमुक्षुत्वाविरोधेन नेयम् । 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इति श्रुत्या गवाश्वातिरिक्तेषु पशुष्वपशुत्वमुच्यमानं कथं घटेत, यदि पशुसामान्यप्रतियोगिकभेद एव विवक्ष्येत । अतः प्रशस्तपशुप्रतियोगिकत्वं तत्र भेदस्येष्टम् ।

अजायमानो बहुधा विजायते' इति श्रुतौ भगवतो जन्माभावो बहुप्रकारजन्मवत्त्वञ्च युगपदुच्यते । तत्र जन्मविशेषवत्त्वं जन्मविशेषाभावश्च विवक्ष्यते । न च निषिध्यमानं जन्म परिणामरूपम्, विधीयमानञ्च देहसंयोगरूपमित्यर्थभेदान्न दोष इति वाच्यम्—एतद्विवरणरूपे, 'अजोऽपि सन्नव्ययात्मा—संभवाम्यात्ममायया' इत्यत्राजपदस्य परिणामाभावरूपार्थस्याविवक्षितत्वात् ।

अपरिणामस्य देहसंयोगरूपजन्मनश्च मिथोविरोधप्रसक्त्यभावेन अपिशब्दवैयर्थ्याच्च। तत्र शाङ्करभाष्ये, "कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावे जन्मेति—उच्यते" इत्यवतरणस्य दत्तत्वेन धर्माधर्मकृतजन्माभावानुवाद एव अजपदेनेह क्रियत इत्यस्य व्यक्तत्वाच्च। 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन' इति जीवस्येश्वरस्य चोभयोर्जन्मनि अधस्तादुक्ते, जीवस्य जन्म युज्यते, न त्वीश्वरस्येति शङ्कायां तत्परिहारार्थमयं ग्रन्थः प्रवृत्त इति तेन सूचनात्, जीवस्य यादृशं जन्म, तादृशजन्माभावेऽपीत्यर्थस्य विवक्षणीयतया परिणामरूपजन्मन इह प्रसक्त्यभावात्। द्वितीयाध्याय एव च, 'न जायते म्रियते वा', 'तथा शरीराणि विसृज्य जीर्णान्यानि संयाति नवानि देही' इति परिणामाभावो देहसंबन्धरूपजन्मवत्त्वञ्च वेदितमेवेति न तस्यात्र प्रसक्तिः। अतः अजशब्दः अजायमानशब्दश्च धर्माधर्मनिमित्तजन्मरूपविशेषाभावपर एव शाङ्करभाष्यानुरोधेनापि संमन्तव्यः। नामसहस्रे संभवनामव्याख्यानभाष्यञ्च, "स्वेच्छया समीचीनं भवनमस्येति संभवः, 'धर्मसंस्थापनार्थाय संभवामि युगेयुगे' इति भगवद्वचनात्" इति प्रकृतगीतोदाहरणपूर्वकमिच्छागृहीताभिमतदेहत्वदर्शकं सत् स्वेच्छातिरिक्तकरणाधीनदेहसंबन्धरूपजन्माभावं स्वेच्छाकृतनानादेहसंबन्धरूपजन्मशालित्वञ्च श्रुत्यर्थत्वेन ज्ञापयति। 'यतो वाचो निवर्तन्ते' इत्यत्र लक्ष्यत्वतात्पर्यविषयत्वादिसत्त्वात् वाच्यत्वरूपविशेषाभावमात्रस्य, यस्यामतमित्यादौ वृत्तिविषयत्वसत्त्वात् फलव्याप्यत्वमात्राभावस्य विवक्षेत्येवं तत्रतत्र विशेषाभावपर्यवसानं भवतामपीष्टम्। यज्ञोपवीतसंध्यावन्दनादित्यागिदोषपरवचनानि च भवद्भिः परमहंसव्यतिरिक्तविषयतया संकोच्यन्ते। एवं बहु।

यदुक्तम्—अघटमिति घटसामान्यनिषेध एवावगम्यते इति—तदपि न नियतम्—घटं क्रेतुं कुलालरहितं ग्रामं गच्छन् पुरुषो निवार्यते, कुत्र गच्छसि, तत्र घटो नास्तीति। कथं तस्य ग्रामस्याघटत्वम्, प्रतिगृहं बहूनां घटानामुपयुज्यमानत्वस्य तत्राप्यविशिष्टत्वात्। अतः क्रय्यघटाभाववि-

वक्षया अघटः स ग्राम इति प्रयोगः। एवमेव सिष्णासुस्तटाकं गच्छन् वार्यते, तत्र जलं नास्तीति। पश्वादिपेयस्वल्पजलसद्भावेऽपि स्नानोपयोगिजलाभाव एव तत्र विवक्षितः। एवं तत्र ग्रामे पुरुषो नास्तीति अपेक्षितकार्यनिर्वहणासमर्थपुरुषाभावविवक्षयैव प्रयुज्यते। तस्माल्लोकवेदप्रसिद्धविविधोदाहरणसर्वसंमततदर्थरीतिविरुद्धमिदं निषेधस्थले सर्वत्राविशेषात् श्रुतसर्वग्रहणं कार्यमिति कल्पनम्।

एतदुक्तं भवति—विधिर्वा निषेधो वा पदोपात्तसर्वग्रहणसंभवे सर्वं गृह्णाति, अन्यथा तु विवक्षितविशेषपर्यवसायी। 'सामान्यविधिरस्पष्टः' इति वार्तिकस्याप्येतावानेवार्थः। स्पष्टत्वं सर्वग्राहितया सुनिश्चितत्वम्। 'अनुष्ठानाय विशेषापेक्षत्वमस्पष्टत्व'मिति व्याख्यानं तु मीमांसकक्रियमाणमुपात्तोदाहरणमात्रविश्रान्तत्वादुपेक्ष्यम्। विशेषपरत्वनिश्चयश्च तात्पर्यग्राहकानेकप्रमाणाधीनः। व्यक्तिवाचिनां संनिहित (उपस्थित) मात्र गामित्वमिति न्यायो विधिस्थल इव निषेधस्थलेऽप्यतः प्रसरत्येव। विशिष्य च निषेधस्थले, 'न ब्राह्मणं हन्यात्' इत्यादौ ब्राह्मणहननप्रवृत्तिमुद्दिश्याभावबोधनस्य मीमांसकोक्तत्वात् पूर्वज्ञातस्यैवोद्देश्यत्वसंभवात् उपस्थितं प्रतियोगीति ज्ञायत एव। परं तु एकैकपुरुषस्यैकैकब्राह्मणहननप्रवृत्ती रागप्राप्ता संनिहिता भवतीति अविशेषेण सर्वब्राह्मणहननप्रवृत्तेरुद्देश्यत्वलाभः। अत एवोपस्थितिविशेषवशात् पुरुषार्थभूतहननप्रवृत्तिरेव गृह्यते, न तु क्रत्वर्थापीति भामत्यां भणितम्। एवमपि पुरुषार्थस्यैव युद्धमध्यहननादेरग्राह्यत्वायोत्सर्गापवादनयसंचरणमवर्जनीयमिति तु परिमले। अत उपस्थितव्यक्तिविश्रमो भवत्येव। तादृशव्यक्तिषु कतिपयत्यागो न कार्य इत्येव तु, नञः स्वसमभिव्याहृतपदार्थसामान्यप्रतियोगिकाभावबोधकत्वमिति व्युत्पत्तिप्रदर्शकानामभिमतम्। अत एव पशुना यजेत, अरुणया क्रीणातीत्यादावेकत्वपुंस्त्वस्त्रीत्वादिविवक्षया प्रातिपदिकोपस्थितसर्वाग्राहणेन विधिस्थले संकोचवत् नञ्स्थले संकोचं विना उपस्थितसर्वप्रतियोगिकत्वग्रहणम्; उद्देश्यविशेषणस्याविवक्षितत्वात्। विशेषग्राहकगमकाभावे सर्वग्रहणमिति तु सर्वत्राप्य-

स्त्येव । गमकं तु यथायथं ग्राह्यम् । 'न हिंस्यात् सर्वा भूतानी'ति वाक्ये सर्वपदं प्रशस्तप्राणिमात्रविवक्षया वाक्यचारितार्थ्यप्रसंगपरिहारायात एव सार्थम्। एवमपि विशेषविहितस्यापि क्रोडीकारो न मन्तव्यः, उत्सर्गापवादनयेन विहितातिरिक्तग्रहणेन वाक्यचारितार्थ्यादिति वैधहिंसाव्यतिरिक्तविषय एव स निषेध इति सर्वसंमतम् ।

एवं यथा विधिस्थले अग्नीषोमीयं पशुमित्यत्र पशुपदेन सामान्योपादानेऽपि, 'छागस्य वपाया' इति मन्त्रवर्णानुरोधात् पशुपदं विशेषपरम्, तथा निषेधस्थलेऽपि सामान्यतो निषेधप्रतियोगिवाचकं पदं विशेषनिषेधे श्रूयमाणे तादृशविशेषपरमेवेष्यते । अत एवाध्वरमीमांसाकुतूहलवृत्तौ आग्नेयचतुर्धाकरणाधिकरणे, "वार्ताकं न भक्षयेत्' इति निषेधवाक्यं शाखान्तरैककण्ठ्यनयात् 'श्वेतवार्ताकं न भक्षयेत् ' इति वचनान्तरनिषिद्धश्वेतवार्ताकमात्रनिषेधपरतया न्यरूपि । नन्वेवम्, 'न हिंस्यात् सर्वा भूतानि' इत्यस्य, न ब्राह्मणं हन्यात्' इत्यनेनैककण्ठ्यात् अब्राह्मणहनने दोषाभावप्रसङ्गः । न । द्वयोरपि वाक्ययोरेकशाखास्थतया समानार्थकत्वे सामान्यवाक्यवैयर्थ्यापत्तेः तत्र सामान्यविशेषभावास्वीकारात् । विधिस्थले तु कश्चिद् विशेषोऽस्ति—सामान्यविधेर्विशेषविधेश्चैकशाखास्थत्वे, 'निर्विशेषं न सामान्य'मिति न्यायेन सामान्यविधेरपि विशेषाकांक्षायां विशेषवाक्योपस्थितविशेषस्य ग्रहणम् । अन्यथा सामान्यविधिना विशेषान्तरग्रहणे तेनैव विशेषवाक्यविहितविशेषस्यापि ग्रहणसंभवात् विशेषवाक्यवैयर्थ्यापत्तिः ; 'विशेषान्तरस्य सामान्यविधिना ग्रहणेनानुष्ठानम्, उपात्तविशेषस्य तु विशेषविध्युपस्थितत्वे सत्येवाभ्युदयः, अन्यथा न' इति कल्पने तु कदाचिद् विशेषविध्यभावेऽपि फलम्, कदाचिद्विशेषविधिज्ञान एवेति कल्पनप्रसंगादसामञ्जस्यञ्चेति विमृश्य विशेषविधिसामान्यविध्युभयाधीनज्ञानतोऽनुष्ठान एव फलमिति वाक्ये अभ्युदयशिरस्कत्वं स्वीक्रियते । न चैवं निषेधस्थले सुवचम् ; निषेधवाक्यार्थज्ञानपूर्वमेव निषेध्यान्निवर्तनीयमित्यस्याभावात् । निवृत्तिमात्रेण साध्यस्य फलस्याभावाच्च । अतो

वाक्यावैयर्थ्याय सामान्यनिषेधः सर्वनिषेधकः, विशेषनिषेधः विशेषमात्र-विषयक इष्यते । सामान्यत एव निषेध्यस्य विशेषवाक्येन पुनरपि निषेधाद-धिकपापकल्पनया वाक्यसार्थक्यम् । विभिन्नशाखागतौ सामान्यविशेषनिषधौ तु प्रतिपत्तृभेदमधिकृत्य प्रवृत्ततया समानार्थकत्वेऽपि सार्थकौ । अन्यथा सामान्य-निषेधस्यान्यत्वे शाखान्तरे तदनुक्तया तत्प्रवेशकल्पनम्, प्रकृतशाखायां विशेषनिषेधस्यापूर्वतया प्रवेशकल्पनम्, संभवदैकार्थ्यत्यागः इत्येवं दोषा आपद्येरन् । अतः कुतूहलवृत्त्यादृतरीत्या सामान्यनिषेधोऽपि विशेषनिषेध-रूप एव ।

यद्येवं निषेधोल्लङ्घने प्रत्यवायार्थप्रवृत्तेषु निषेधवाक्येष्वेव प्रत्यवायन्यू-नाधिकभावकल्पनया चारितार्थ्यं हिंसासामान्यनिषेधब्रह्मगनिषेधरूपवाक्यद्वयादौ क्लृप्तमुपेक्ष्य समानार्थकत्वस्वीकारः, तदा तथाचारितार्थ्यवर्णनप्रसक्तिविधु-रेषु तत्त्वविषयकेषु सामान्यविशेषनिषेधेषु संभवदैकरस्यापरित्यागेन सामान्य-निषेधस्यापि विशेषनिषेधविषयत्वस्वीकारे कः संदेहः । तथाच सामान्यरूपेण कृतस्य निषेधस्य व्युत्पादनं विशेषकार्यम् । यस्तु विशेषनिषेधावगताभावाति-रिक्तविशेषान्तराभावोऽपि 'नेति नेति' इतीदृशसामान्यनिषेधविषयीकार्य इति मन्यते—तेनापि उपलभ्यमानानां विशेषनिषेधानामुदाहरणमात्रतया व्युत्पाद-नार्थानुवादत्वमेव वक्तव्यम् । न हि सामान्यनिषेधावगमितसर्वाभावविशिष्टं वस्त्वेकम्, विशेषनिषेधविषयीकृतं धर्मि तु तदन्यदिति वस्तुभेद इष्यते । न च विशेषभावास्ततद्रूपेण ब्रह्मचिन्तनेऽनुसंधेयाः । तेषामानन्त्यादशक्योप-संहारत्वात् । तदुक्तमक्षरध्यधिकरणकल्पतरौ । तत्र कतिपयविषयाणामेकी-कारेण कतिपयनिषेधतः सर्वनिषेधकोडीकारे कल्पतरूक्तया क्रियमाणे तथैव रीत्या एकनिषेधेनैव सर्वकोडीकारोऽपि शक्य एव; इष्टश्च । स च सामान्य-निषेधः सर्वप्रपञ्चाभावरूपो मा भूदिति प्रतिपिपादयिषयैव विशेषवाक्यानि प्रवृत्तानि । तेन निर्गुणादिसामान्यनिषेधरूपवाक्यं हेयनिषेधरूपं पर्यवस्यति । सामान्यनिषेधवाक्यस्येदृशविशेषनिषेधपरत्वम्, 'समस्तहेयरहितं विष्ण्वाख्यं

परमं पदम्' इति वचनेनापि ज्ञाप्यते। एवं समस्तहेयराहित्यार्थकत्वस्य स्पष्टत्वात् कतिपयहेयविशेषनिषेधमात्रे उपसंहारोऽपि न भवति। तस्मात् सामान्यविशेषन्यायोऽपि यथासंभवं ग्राह्यः।

एवं सामान्यनिषेधानां विशेषनिषेधैकरस्यमदर्शि। सामान्यविधेर्विशेषविधेश्चैकरस्यं तु निर्विवादम्। अत एव 'आग्नेयं चतुर्धा करोति, 'पुरोडाशं चतुर्धा करोति' इति वाक्यद्वयमेकार्थकमित्यग्नीषोमीयपुरोडाशादेर्न चतुर्धाकरणमित्युक्तम्। अतः सामान्यतो गुणवत्ताप्रतिपादकं वाक्यं ब्रह्मविषये स्थितं वाक्यान्तरावगतकल्याणगुणविषयं स्थास्यति। "गुणी सर्वविद्यः" इति हि भूमप्रशंसानित्ययोगातिशायनार्थेषु इनिप्रत्यय इति। तस्मादखिलहेयप्रत्यनीकं कल्याणगुणैकतानं ब्रह्मैव सर्वश्रुतिसमधिगम्यम्। सर्वविशेषराहित्यरूपनिर्विशेषत्वरूपेण ब्रह्मप्रतिपादकं तु किमपि न लक्ष्यते। किञ्च निर्गुणमिति श्रुतिर्जीववैलक्षण्यस्य परमात्मनि प्रतिपत्तये, "त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्। मोहितं नाभिजानाति मामेभ्यः परमव्ययम्" इत्यत्रेव श्रुतिस्मृतिप्रसिद्धसत्त्वरजस्तमोगुणराहित्यपरा स्वरसा। यदि गुणसामान्याभाववदित्यर्थः, तदा गुणवत्त्वेन प्रमिते वस्तुनि गुणसामान्याभावानन्वयादन्यदेव तादृशमिति सगुणवस्तुमिथ्यात्वं तावता न सेत्स्यति। 'एकमेवासीत्', 'नेह नाने'त्यादिना तदेकसत्यत्वावधारणादन्यमिथ्यात्वमवगम्यत इति चेत्—तर्हि जीवब्रह्मैक्यादि न सिद्ध्येत्, जीवनाश एव च मुक्तिः स्यात्।

किञ्च गुणशब्देन कस्य ग्रहणम्? तार्किकपरिभाषितगुणमात्रे गुणत्वस्वीकारे न किञ्चित् प्रमाणम्। सत्त्वरजस्तमसामपि ग्राह्यतया उपसर्जनसामान्यस्य गुणत्वौचित्यात्। अस्तु तथैवेति चेत्—निरवद्यत्वादीनामपि गुणतया तदभावे बोध्यमाने सावद्यत्वापत्तिः। न चोभयनिषेधसंभवः। भावाभावयोरेकतरपरिशेषस्यैव प्रामाणिकहृदयङ्गमत्वात्। एवं गुणसामान्याभावस्याप्येवं गुणतया तद्वति तदभावः कथम्? स तु धर्मिस्वरूप इति चेन्न—

गुणसामान्यस्य, तथा कर्मसामान्यादीनामपि द्रव्यात्मकतायाः महद्दीर्घाधिकरण-भाष्योक्ततया सर्वस्याप्युपसर्जनस्य धर्म्यतिरिक्तत्वाभावेन सर्वस्य ब्रह्मणि स्वीकारेऽपि धर्म्यतिरिक्तगुणाभाववत्त्वरूपार्थस्य सिद्ध्या निर्गुणमित्युक्तिमात्रेण जगदपलापप्रसक्त्यभावात् । तथाच चिदचितामपि ब्रह्मप्रकारत्वस्यैव श्रीभाष्योक्ततया सर्वस्यापि गुणत्वात् गुणगुणिनोरभेदकल्पनया धर्म्यतिरिक्तगुणाभावस्यैव भवद्भिरुच्यमानत्वात् सर्वस्य प्रकारतया सद्भाव एव स्थापितो भवेत् । एवञ्चैकत्ववादोऽपि धर्म्यनात्मकवस्त्वन्तराभावाभिप्राय इति नूनमद्वैतमिदं विशिष्टाद्वैतमेव ।

गुणाभावरूपनिर्गुणत्वमपि गुणत्वात् ब्रह्मणि नास्त्येवेति चेत्—तर्हि गुणाभावशून्यं ब्रह्मेत्येव व्यवह्रियताम् । गुणाभावात् सगुणमिति व्यवहारमनिच्छन् गुणाभावशून्ये निर्गुणमिति व्यवहारं परं कथङ्कारमूरीकरोति । प्रतियोग्यप्रसिद्धिश्च ; गुणाभाववतः कस्यचिदभावात् । सर्वस्य यत्किञ्चिद्गुणकत्वात् । अतो गुणाभावस्य ब्रह्मणि स्वीकारे सति तत्र तदभावायोग एव । गुणाभावाभावस्य गुणरूपत्वात् गुणस्य तत्रानिष्टतया गुणाभावाभावायोग एवेति । निरवद्यत्वरूपगुणसत्त्वे च गुणाभावासंभवः । निरवद्यत्वं धर्मिस्वरूपमित्यपि न युक्तम्, "अदृश्यत्वादिगुणको धर्मोक्तेः" इति गुणपदप्रयोगनैर्भर्येण भगवता बादरायणेन अभावानामपि स्वरूपतो वा भावरूपतया वा गुणत्वमेव स्वीकार्यम्, न तु धर्मिरूपत्वमित्याविष्करणात् । अत एव निर्गुणत्ववादो बादरायणाशयविरुद्धः । अत एव भावरूपगुणाभाववत्त्वं निर्गुणत्वमित्यपि निरस्यम्—अभावस्यापि भावे पर्यवसानस्यैवैष्टव्यत्वात् । भावरूपगुणाभाव इति विशेषपर्यवसानसंमतौ च प्रमाणान्तरप्रसिद्धकल्याणगुणव्यतिरिक्तगुणाभावपर्यवसानमार्जवेनेष्यताम् । एवञ्च कस्यापि मिथ्यात्वकल्पनादिक्लेशोऽपि न भविष्यति । ब्रह्मरुद्रसंवादगतं वाक्यमप्यत्र स्मर्तव्यम् । तत्र हि, "न स शक्यस्त्वया द्रष्टुं मयाऽन्यैरपि सत्तम । सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः" इति ब्रह्मरुद्रादिव्यतिरिक्तस्य परमात्मन एव सगुणत्वं निर्गुणत्व-

श्चोभयमुक्त्वा उभयदशायामपि विशुद्धमनोग्राह्यत्वं चक्षुरादितो यथावदग्राह्यश्चोक्तम् । न त्वदृश्यत्व निर्गुणत्वे, दृश्यत्वं सगुणत्व इति विभागः कृतः । अतः प्रकृतिनियमनायावतीर्णोऽनवतीर्णश्च विग्रहविशिष्टः तद्रहितश्चेति द्विरूप इति वा हेयगुणरहितः कल्याणगुणविशिष्टश्चेति वाऽर्थो ग्राह्यः । आत्मैक्ये च, न त्वं द्रष्टुं शक्यः, नाहं शक्य इत्यप्युच्येत ।

किञ्च 'निर्गुणं गुणभोक्तृ च' इति गुणभोक्तृत्वादिगुणविशिष्टतया वर्णयदेव वाक्यं निर्गुणमिति गुणसामान्याभावं कथं ब्रूयात् । गुणभोक्तृ इत्यत्र ये गुणाः सत्त्वरजस्तमोरूपाः ग्राह्याः, तेषामेव निर्गुणमित्यत्रापि गुणपदेन ग्रहणमैकरूप्यात् युक्तमिति सर्वगुणनिषेधप्रसक्तिरपि नास्ति । "सत्त्वरजस्तमांसि गुणाः; तैर्वर्जितम्" इत्येव निर्गुणमित्यत्र शाङ्करभाष्यमपि । अतः श्रुतिवचनमपि तत्समानार्थम् । 'निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते' इति मैत्रेयप्रश्नेऽपि यदि निर्गुणत्वं गुणसामान्याभाववत्त्वं सर्वमिथ्यात्वादिप्रयुक्तं ब्रह्मणि प्रष्टृसंमतम् , तर्हि सर्गादिकर्तृत्वस्यापि मिथ्यात्वात् तद्विषये कथन्तायाः नावसरः । यदि च मिथ्यात्वानवगमात् कथमपि प्रश्नः, तर्हि पराशरेण जगन्मिथ्यात्वं पुरस्कृत्य समाधेयम् । तद् विहाय, "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः" इति विचित्रशक्तिमत्त्वरूपसगुणत्वस्वीकारेण समाधानं न संगम्स्यते । एवमेव, 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इति निरवयवस्य कार्यात्मना कारणात्मना चावस्थानं कथमित्यत्र यदि शाङ्करभाष्यारूढं समाधिं सूत्रकृदविवक्षिष्यत्—'श्रुतेस्तु शब्दमूलत्वात्' इति न समाधास्यत् । किंतु जगद्ब्रह्मणोः कार्यकारणभावस्य कल्पनामात्रत्वादवास्तवत्वात् कार्यस्यैव कस्यचिदभावात् निरवयवं तत् स्वरूपत एव सर्वदाऽवतिष्ठत इति कार्यकारणभावसिद्धवत्कारेण पूर्वपक्षणमयुक्तमित्येवादर्शयिष्यत् । एवमुक्तौ च द्वितीयाध्यायप्रथमपादे:स्य, अथवा अध्यायद्वये कृतानां चिन्तानामनवकाशविधानात् शास्त्रं लघूकृतं स्यात् । कार्यकारणभावं कृत्वा चिन्तेयमिति चेत्, सत्यमध्यायचतुष्टयमपि कृत्वाचिन्तैव । कृत्वाचि-

न्तामध्ये च वास्तवाद्वैतार्थस्य तत्रतत्र भाष्यादिषु ग्रहणेन सूत्रव्याख्यानं तद्वियुक्तं स्यादित्यलमधिकेन ।

हेयगुणमात्रनिषेधकत्वेन निश्चितानि निरञ्जनादिपदानि तु नाद्वैतसाधकानि । निष्कलत्वनिष्क्रियत्वे परमात्मस्वरूपे सुघटिते । अस्थूलत्वादिकमनवच्छिन्नपरिमाणे तत्र परिच्छिन्नत्वाभावादन्वितमेव । अवाय्वनाकाशमित्यादि च वाय्वाकाशादिधारके तस्मिन् देहादिषु भौतिकेषु वाय्वाकाशादेर्यादृशः संबन्धः तादृशसंबन्धाभावप्रयुक्तम् । अन्यथा वाय्वाकाशाद्यध्यासाधिष्ठानतया सर्वात्मना तत्संबन्धाभावो दुर्वचः स्यादिति क्वचिद् विशेषे पर्यवसानमावश्यकमेव । तत्र 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इति प्रशासितृत्वादिवचनात्, 'सा च प्रशासनात्' इति सूत्रकृता च तदभ्युपगमात् प्रशासितृत्वाद्याकारं विनाऽन्यादृशो जीवादिषु दृष्टसजातीयो वस्तुसंबन्धो न परमात्मनीष्यत इति प्रकरणैकरस्यम् ।

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति वाक्यं तु प्रलयकालपरमिति निर्विवादम् । अन्यथा अग्र आसीदिति पदद्वयवैयर्थ्यात् । एवकारादिकं सृष्टिकालिकपदार्थानां स्थूलरूपाणां तदानीमभावमेव दर्शयेत्; न तु अविद्यायाः जीवतत्कर्मादीनामप्यभावम् । तथा सति अविशेषात् सृष्टेरेवानवकाशात् । अद्वितीयपदं निमित्तभूतस्रष्ट्रन्तराभावपरमिति शाङ्करोपनिषद्भाष्यतोऽपि सिद्धम् । परेष्वेकदेशिभिस्तु--स्वगतभेद-सजातीयभेद-विजातीयभेदानां निषेधः 'ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात्, इति एकम्, एव, अद्वितीयमिति पदैःक्रियते इति एकपदेन स्वगतभेदनिषेध उक्तः । तावता निरवयवत्वमेव सिद्ध्येत् । गुणरूपस्वगतभेदराहित्यपरत्वेऽपि समनन्तरभावि यत् तदैक्षतेति श्रुतं सृष्ट्यसंकल्परूपमीक्षणम्, तादृशविशेषरहितमेवासीत्, पश्चादेव संकल्पोऽप्यभवदित्येतावदेव गमयितुमर्हति । एवंस्थिते मुक्त्यवस्थारीतिमेतद्वाक्यार्थतया प्रदर्श्याद्वैतिभिः क्रियमाणो जगदपलापोऽर्थप्रकरणपरामर्शिभिः कथं संमन्तुमर्हः स्यात् ।

द्वैतनिषेधश्रुतीनामर्थः परमार्थप्रकाशिकायामुपनिषद्भाष्यपरिष्कारे चास्माभिरपि सुव्यक्तमुपपादितः। अतस्तदन्यथानुपपत्त्या निर्गुणत्वं नाक्षेप्यम्। समानाधिकरणवाक्यस्याखण्डार्थत्वं तु पृथग् दूषितमेव। तत्र शाब्दबोधे प्रवृत्तिनिमित्तत्यागेऽपि सोयंदेवदत्त इति वाक्यप्रतिपन्नदेवदत्तादाविव वस्तुतो नानाधर्मसंभवान्न तदन्यथानुपपत्त्या शक्यं निर्विशेषत्वकल्पनम्। अथ त्वेतावद् वक्तव्यम्—जगत्कारणं ब्रह्म तावदात्मेत्यविगीतम्। आत्मनि च संभावितो गुणो ज्ञानमानन्दश्च, अन्यस्तु दुःखादिर्हेयगुणो दोषो वा न ब्रह्मणो भवितुमर्हति। तावपि ज्ञानानन्दौ न भवतः; स्वयं तस्य ज्ञानानन्दस्वरूपत्वात् ज्ञाने ज्ञानस्यानन्दे आनन्दस्य चायोगादिति—अत्र यद् वक्तव्यम्, तत् सर्वं विशदमेवोदितं शतदूषण्याम्। ज्ञानानन्दवत्, 'पराऽस्य शक्तिर्विविधैव श्रूयते' इत्युक्तशक्तिरूपविशेषः वस्त्वन्तरसंयोगादिरूपः साधारणधर्मश्च संभवतीति न निर्विशेषत्वप्रसक्तिरस्ति। जगन्मिथ्यात्वस्य निराकरिष्यमाणत्वाच्च न निर्विशेषत्वसंभवः। न च ज्ञानानन्दादिगुणवत्तया प्रतीतं नापलप्यते, तत्प्रतिपादकश्रुतीनां सविशेषावरब्रह्मविषयत्वात्। अन्यत्तु सर्वविशेषवैदेशिकमिष्यत इति वाच्यम्—निर्विशेषप्रतिपादकत्वाभिमतस्य सर्वस्यापि वाक्यस्य सविशेषपरपूर्वापरवाक्यसंदृब्धतया वाक्यभेदे प्रमाणाभावात्। अन्यथा, 'पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम्' इत्येतल्लक्ष्यतैव। तथाच, असद्वा इदमग्र आसीदिति श्रुतिः शून्यवादस्य स्थापिका स्यात्। तदिदं प्रतिनिर्विशेषवाक्यं परामर्शनीयम्।

यत् पुनः शतभूषण्यां शाबरभाष्यमनूद्य गुणभूतसुखादिव्यतिरिक्तस्य धर्मिभूतस्यात्मनोऽसद्भावः शबरस्वामिसंमत इति प्रदर्शनम्—ईदृशं व्यामोहं विप्रलम्भनं वा संचिन्त्य चित्रीयामहे। कदाचिदिदं पूर्वपक्षभाष्यमिति कोऽपि मा शङ्किष्टेति मायाजालप्रस्तारिणा, "अत्रेदं शाबरभाष्यमात्मवादान्ते" इत्युपक्रमः कृतः। शाबरभाष्यं खलु व्याख्योपव्याख्यादिना लब्धभूयःप्रचारं बहुप्रकारमुद्रितं बहुश्रुतपठ्यमानं प्रसिद्धं मीमांसकानां सर्वेषाम्। तत्रात्म-

वादारम्भे स्थितं पूर्वपक्षभाष्यमनूद्य पूर्वपक्षस्य बौद्धादिकृतस्य स्वपक्षाविशेषमाकलय्य स्वपक्षत्वादेवायं सिद्धान्तपक्षः शबरस्वामिन इति च परिकलय्य, तद्वाक्यमध्यनिविष्टं 'वक्ष्यामः' इति पदञ्च शारीरके वक्ष्यमाणत्वाभिप्रायमित्यपि मत्वेव अमीमांसकव्यामोहनायातिसाहसमकारि शतभूषणीकारेण। तत्त्वं तु—

'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति श्रुतिमुपादाय (१-१-५ सू.) यज्ञायुधरूपयज्ञपात्रश्लिष्टस्य शरीरस्य स्वर्गगमनं कथमुच्यत इति कृत्वा, 'यज्ञायुधीतिपदं न शरीरमात्रवाचि; किं तु यस्य तत् शरीरम्, सोऽपि तैर्यज्ञायुधैर्यज्ञायुधी'त्युच्यते इति शरीरप्रतिसंबन्ध्यात्मपरमिति समाहितम्। अत्र शरीररूपेणाध्यासाधिष्ठानमात्मेत्यनुक्त्वा, यस्य तच्छरीरमिति स्वस्वामिभावसंबन्धवर्णनात् ब्राह्मणादिशब्दः ब्राह्मणशरीराध्यासाधिष्ठानपर इत्यद्वैतिपक्षः प्रतिक्षिप्तः। अथ शरीरातिरिक्त आत्मा मा भूदिति पूर्वःपक्षः। प्राणनादिव्यापाराश्रयः शरीरातिरिक्त इति समाधिः। न केवलमेतावत्— सुखाद्याश्रयतया चात्मा स्वीकर्तव्यः। न च सुखादिकं शरीरनिष्ठम्; शरीरनिष्ठगुणवैलक्षण्यात्। रूपादिः शरीरगुणः स्वेनेव परेणापि गृह्यते; नैवं स्वसुखादीति अतिरिक्तात्मसाधनं कृतम्। तदुपरि पूर्वः पक्षः—अस्तु सुखादिकं शरीरावृत्ति। अथापि तस्याश्रयो न कल्पनीयः। सर्वस्य साश्रयत्वेऽनवस्थाप्रसङ्गात्। अतः सुखं विज्ञानमित्यादि निराश्रयमिति। अयमेव पूर्वपक्षभागः शतभूषण्यां शाबरसिद्धान्तत्वेनावभासितः। एतदुपरि कोटयश्चैवं शाबरे—

जानातीति धर्मधर्मिभावेन प्रतीत्या विज्ञानादेराश्रयः कश्चित् स्वीकर्तव्य इति समाधानम्। अथ पूर्वः पक्षः—शब्दः खलु व्यवह्रियमाणो वक्तृगृहीतार्थप्रतिपादकः। वक्ता तु न कश्चिदतिरिक्ततया आत्मानं प्रत्यक्षितवानस्ति। तस्मात् तस्य शब्दो न प्रमाणम्। अथ सिद्धान्ती—ज्ञातवतो लोके इच्छा भवति। अन्येन ज्ञातमन्यो नेच्छति। अतो ज्ञानेच्छोभयाश्रयभूतं ज्ञानदिनादारभ्येच्छादिनपर्यन्तस्थायि वस्तु स्वीकर्तव्यम्; स आत्मेति। पुनः पूर्वः पक्षः—चैत्रेण दृष्टे मैत्रो नेच्छतीति सत्यम्। तन्नूनं ज्ञानादिसंतानस्क-

न्धभेदात्। एकस्कन्धनिवेशित्वे प्रतिक्षणं ज्ञानादिभेदेऽपि संतत्यैक्यात् इच्छा स्मृतिरित्याद्युपपद्यत इति। अथ समाधिः—पूर्वेद्युरहमिदमदर्शमिति अहमित्यात्मग्रहणं भवति। न पुनः संतानक्रमेण वस्त्वनुभवस्थल इव मत्पूर्वपुरुषीयमिदमिति मन्यते। अतोऽहमिति व्यक्तिरेकैव पूर्वापरकालस्थायिनी। अहंशब्दस्य वक्तृव्यक्तिपरत्वस्वाभाव्यात्। औपचारिकश्चेदहंशब्दप्रयोगः अहमेवेत्यवधारणं न स्यादिति।

एवं ज्ञानसुखाद्याश्रयमात्मानं स्थापयित्वा परोक्तश्रुतेरर्थान्तरमुपवर्ण्य स्वपक्षस्थापकश्रुतिमपि प्रदर्श्य तदुपरि, तर्हि स आत्माऽयमिति प्रदर्श्यतामित्याशङ्क्य—तस्यतस्यात्मनस्तत्तन्मात्रग्राह्यत्वात् अन्यं प्रति प्रदर्शनं दुष्करम्, अन्धस्य रूपादिप्रदर्शनवदिति परिहृतम्। तेन ज्ञानसुखाद्याश्रयात्मसाधनवत् आत्मनां भेदसाधनमपि कृतमित्यद्वैतविरोध एव। अथ, 'अग्राह्यो न हि गृह्यत' इति श्रुतिमुपादाय एकैकोप्यात्मा अन्येन न गृह्यत इत्यर्थवर्णनात् आत्मनः सर्वथैवाग्राह्यत्ववादोऽद्वैतिनामपास्तः। अथ च, 'नेतिनेति' इति वाक्यं गृहीत्वा निर्विशेषवादस्यापि निरासायार्थान्तरं वर्णितम्। स्वात्मनः परेणानुपलभ्यमानत्वात्, यत् त्वयोपलभ्यते शरीरम्, यत् त्वया लिंगैः कल्प्यते सुखादि, तदपि नात्मा, तदपि नात्मा; किं तु यथा त्वं त्वदीयशरीरसुखादिविलक्षणः, तथा परात्मापि तत्तद्भिन्न इति श्रुत्यर्थ इति।

एवं सुखाद्यतिरिक्तस्य तदाश्रयस्यात्मनः तन्नानात्वस्य च स्थापकमद्वैतश्रुतीनां समञ्जसार्थवर्णनेनाद्वैतनिषेधकञ्च शाबरभाष्यं समनन्तरं जाग्रदयं शतभूषणीकारो निगूह्य पूर्वपक्षग्रन्थेन स्वपक्षं पोषयितुं प्रायतिष्टेति सर्वे विदाङ्कुर्वन्तु॥

अदृश्यत्वमुख्या हि शारीरकोक्ताः
गुणाः, निर्गुणोक्तिः कथं तान् निषेधेत्।
अतस्तुल्ययुक्त्याऽस्तु कल्याणभिन्नो
गुणोऽन्यत्र दृष्टः परस्मिन् निषेध्यः॥

शुभमस्तु

श्री :

# ब्रह्मोपादानत्वतोमिथ्यात्वासिद्धिप्रसाधनम्

निरवधिगुणसिन्धोर्निर्विकाराच्च यस्मात्
चिदचिदुभयदेहात् स्रष्टुरेतद् विशिष्टम् ।
स्थितिलयकरमित्थम्भूतकृत्स्नानुभूति—
प्रदपदवहमेतं नौमि पद्मासमेतम् ॥

मिथ्यात्वाज्जगतो ब्रह्मगुणानां तत् प्रति स्थितेः ।
सगुणत्वं मृषेत्यत्र मिथ्यात्वं जगतः स्यति ॥

भावकार्यसामान्यमुपादानकारणसापेक्षमिति सर्वसंप्रतिपन्नम् । मृत्पिण्ड-सापेक्षं घटादिकमुदाहरणमित्यपि । तत्रासत्कार्यवादिनस्तार्किका उपादानात् कार्यं भिन्नं मन्वते । सत्कार्यवादिनः सांख्या वेदान्तिनश्च । सांख्य-मते तिलात् तैलमिव कारणात् कार्यमभिव्यज्यते, न तूत्पद्यते । यादृक् कार्यं दृश्यमानम् , तादृगेव कारणे निलीनमनभिव्यक्तं स्थितं पश्चादाविर्भवतीति कार्यमेवंरूपेणैव पूर्वं सदिति तन्मतम् । उपादानोपादेयभूतं द्रव्यं परमेकम् । तत्रावस्थाः पूर्वोत्तरभूताः आगन्तुकधर्माः । तत्र पूर्वावस्थापन्नं कारणमिति उत्तरावस्थापन्नं कार्यमिति च कथ्यत इति वेदान्तिमतम् , कार्यकालिकावस्थारूपेण कारणकाले द्रव्यासत्त्वस्य, 'असद्व्यपदेशान्नेनि चेन्न धर्मान्तरेण' इति सूत्रे सर्वसंमतत्वात् ।

तत्र; 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इति मृद्घटादिदृष्टान्तस्वारस्यात् ब्रह्मजगतोरुपादानोपादेयभावः अद्वैतिविशिष्टाद्वैत्युभयसंमतः । तत्रोपादानत्वमिदं किंरूपमिति विवेचनीयम् । तत्रानेकावयवमेलनवशात् कार्यं जायते । तत्रावयवा उपादानम् , उपादेयं कार्यमवयवि ततोऽतिरिक्तद्रव्यं तत्र समवायसंबन्धेन वर्तमानमिति वदद्भिस्तार्किकैः स्वसिद्धान्तानुरोधेन,—'यत्समवेतं कार्यमुत्पद्यते तत् कारणमुपादानं समवायिकारणापर-

नामधेयम् । चक्रादिदेशे घटस्योत्पत्तावपि तत्र तस्य समवेतत्वाभावान्न घटं प्रति चक्रादिकमुपादान'मित्युच्यते । सत्कार्यवादिनस्तु कार्याभिन्नं कारणमुपादानमित्याहुः ।

अत्रेयमाशङ्का—कार्यकारणयोरनन्यत्वं यद्यप्यानुभविकम्, तथापि ब्रह्मजगतोरभेदे ब्रह्मणि जगद्गतं सर्वं विकारमादाय सविकारत्वप्रसंगः । अतश्च सर्वहेयास्पदं ब्रह्म भवेदिति । भास्करादिभिः ओमित्युत्तरं दीयते । विशिष्टाद्वैतिनस्तु—केवलब्रह्मण उपादानत्वे खल्वयं दोषः । सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणमिति ब्रूमः । तत्र चेतनाचेतनरूपप्रपञ्चगतविकाराणां कारणान्तर्गतसूक्ष्मचिदचिन्मात्रगतत्वात् विशेष्ये तदभावान्न निर्विकारत्वहानिरित्याहुः । अत्राद्वैतिनः—कार्यकारणयोरभेदस्यावश्यकतया प्रपञ्चस्य चेतनाचेतनरूपत्वात् तदुपादानत्वं सूक्ष्मचेतनाचेतनयोरेव विश्राम्यति । ब्रह्म तु विशेष्यं कारणमपि ततोऽन्यत्वात् कथं स्यादुपादानमिति ।

तर्हि कथमुपपाद्यमिति चेत्—तत्र त एवमाहुः—निर्विकारत्वादि ब्रह्मणः श्रुतिबलादवश्यस्वीकार्यम् । कार्याभिन्नत्वे कारणस्य कथं निर्विकारत्वमिति चेत्—कारणात् कार्यं भिन्नं नेति ब्रूमः ; न तु कार्यकारणयोरैक्यम् । न च व्याघातः । यथा शुक्तौ रजताध्यासे शुक्त्यपेक्षया तत्र कल्पितं रजतं भिन्नं न भवति । तावता न तयोरैक्यम् ; सत्यमिथ्यार्थयोरैक्यायोगात्—तथा ब्रह्मण्यध्यस्तं जगत् मिथ्याभूतं सत्येन ब्रह्मणैक्यमनापन्नमिति । एतावता किंरूपमुपादानत्वमुक्तं भवतीति चेत्—कार्याध्यासाधिष्ठानत्वमेवोपादानत्वम् । यथा रजताध्यासाधिष्ठानं शुक्तिः कल्पितरजतोपादानम्, तथा ब्रह्म जगदुपादानम् । एवञ्च विकाराणां मिथ्यात्वादैक्याभावाच्च ब्रह्मणो निर्विकारत्वं निर्बाधमिति—तत्रोच्यते—

भास्कराद्यभिमतो यादृग् ब्रह्मजगदभेदः तादृङ् नेष्यत एव, निर्विकारत्वादिवादिश्रुतिविरोधात् । अध्यासाधिष्ठानत्वमुपादानत्वमिति निर्वचनं तु सर्वथैव न युक्तम् । उपादानत्वग्राहकश्रुतिकोपात् । मृत्पिण्डमृन्मयदृष्टा-

न्तानुपरोधाय किलोपादानत्वस्वीकारः । अध्यासाधिष्ठानत्वरूपमुपादानत्वं किं तत्र प्रतीतमस्ति ? सांख्यतार्किकादिसर्वसंमतेऽस्मिन् दृष्टान्ते लौकिकपरीक्षकैः सत्यत्वेनैव संमते अध्यासाधिष्ठानभावशङ्काशकलस्यापि प्रसक्त्यभावात् तत्सिद्धवत्कारेण तन्निदर्शनेन ब्रह्मणि तादृशोपादानत्वस्थापनं ह्यशक्यमेव । कार्यकारणैक्यानैक्यविवादेऽप्युच्यते । अनैक्ये एकविज्ञाने सर्वं विज्ञातं न भवतीति तदवश्यं स्थापनीयम् । अत एव स्थाप्यते, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति । यदि घटादेर्मिथ्यात्वस्थापनार्थमिदं वाक्यं प्रवृत्तं स्यात्, तर्हि एकविज्ञाने सर्वविज्ञानमुपपादितं न भवति । सत्यज्ञाने सति मिथ्यावस्तूनां बाधितत्वमेव हि भवति; न तु ज्ञातत्वम् । तथाच एकेन मृत्पिण्डेन ज्ञातेन सर्वं मृन्मयं बाधितं स्यादिति श्रुत्या भाव्यम्, पूर्वमपि येन श्रुतमश्रुतं भवति, मतममतं विज्ञातमविज्ञातमित्यानूपूर्व्यमादर्तव्यम् । मिथ्यात्वाभिप्राये तु शुक्तिरजतदृष्टान्त एव श्रुत्या परिग्राह्यः स्यात् । वस्तुतस्तद्ग्रहणेऽपि अद्वैतसंमतमिथ्यावस्त्वसिद्धिरेव । अनिर्वचनीयं किञ्चिदुत्पद्यत इति कृत्वा किल तस्योपादानमन्विष्यते । तदेव न लोके भ्रान्तिस्थले केनाप्यवगतम् । अन्यथाख्यातिरेव सर्वगृहीता । तत्र वा तान्त्रिकान्तरपक्षे वा तत्र किञ्चिद्वस्तूत्पत्तिकल्पनानवकाशात् रजताधिष्ठानत्वमुपादानत्वमिति शुक्तिरजतोदाहरणे कृतेपि न सेत्स्यति । रजतभ्रमाधिष्ठानत्वमित्युक्तौ तु रजतभ्रमविशेष्यत्वमित्यर्थः स्यात् । न च तावता भ्रमं प्रति आपणस्थरजतं प्रति वा शुक्तेरुपादानत्वं कश्चिद् व्यवहरति । तस्मात् श्रुतदृष्टान्तानन्वितमत्यन्तासंभावितञ्चेदमुपादानत्वम् । एवमेतदुपादानत्वपक्षे जगद्ब्रह्मणोर्बाधार्थसामानाधिकरण्यमेव स्वीकर्तव्यम् । तथाच 'सदिदम्', 'बहु स्याम्' इत्यैक्यश्रवणमुपरुध्यते । सत्यमिथ्यार्थयोर्भेदे च सत्कार्यवादे स्थित्वा कार्यकारणभेदवादितार्किकपक्षखण्डनं न कृतं भवेत् । तदनन्यत्वाधिकरणासामञ्जस्यञ्चेह विस्तरोपेक्षया न प्रदर्शयामः । तस्मादद्वैतिसंमतमुपादानत्वमश्रौतमयौक्तिकमप्रसिद्धं शशविषाणायमानमिति तदाग्रहेण विशिष्टाद्वैतिसंमतोपादानत्वानुपपत्तिवर्णनं नैव साम्प्रतम् ।

अनिर्वचनीयाभ्युपगमेन तादृशोपादानत्वं कृत्वा चिन्तायामपि ब्रह्मणि तदेवोपादानत्वम्, नान्यादृशमिति न शक्यं स्थापयितुमिति निरूपयामः— विशिष्टाद्वैतिसंमतस्योपादानत्वस्य ब्रह्मण्यसंभव इति न युक्तम्— ब्रह्मणः कार्याभिन्नतयोपादानत्वसंभवात् अद्वैतिमत एव तदनुपपत्तिः। तथाहि— मिथ्याभूतप्रपञ्चस्य परिणाम्युपादानमविद्येति पदार्थतत्त्वनिर्णयकारादयः। न च कार्यस्यैकस्य द्विविधमुपादानं लोके दृष्टमिति अविद्याया उपादानत्वे ब्रह्मण उपादानत्वं न भवत्येव, भाव्यवस्थाकनिष्ठतत्पूर्वावस्थाश्रयत्वरूपोपादानत्वमविद्यायामुपपादनीयम्। न च तद् ब्रह्मणि। 'उपादानत्वमन्यथा निरुच्यते। तद् ब्रह्मणि भवतीति तदप्युपादानम्' इति चेत्— किं तत्? स्वस्मिन् कार्यजनिहेतुत्वमुपादानत्वम्। अविद्यायां प्रपञ्चोत्पत्त्या तत्र समन्वयः; तथा ब्रह्मण्यपीति चेन्न— अस्यालक्षणत्वात्। परिणाम्युपादानस्य कार्यस्य चाभेदात् कार्याधारत्वे सति कार्योत्पत्तिहेतुत्वमित्येतस्यासंभवात्। अविद्यायाः प्रपञ्चानाधारत्वात्। ब्रह्मण्यध्यस्तत्वेऽपि प्रपञ्चस्य तदाधेयत्वाभावाच्च। अथ स्वाभिन्नकार्यकत्वमुपादानत्वमिति चेत्— तदपि न, प्रपञ्चे ब्रह्माभिन्नत्वाभावात्। मिथ्यावस्तुनः सत्यभिन्नत्वात्। सन् घट इति प्रतीत्या कल्पितं तादात्म्यमस्तीति चेत्— तादात्म्यं हि तत्पदार्थघटितम्। तत्र तत्पदार्थस्याकल्पितत्वे तादात्म्यं कथं कल्पितं स्यात्। किञ्च तादात्म्यं संबन्धः। संबन्धश्च प्रतियोग्यनुयोग्यधीनः। अतः संबन्धिद्वयेनैव सह, संबन्धः कल्प्यः स्यात्। तथाच तस्य परमार्थब्रह्मसंबन्धो न भवति। ननु तत्र तादात्म्ये प्रकृतब्रह्मप्रतियोगिकत्वं कल्प्यमिति चेत्— सोपि संबन्धः संबन्धिविशिष्ट एव कल्प्य इति न तस्य प्रकृतब्रह्मप्रतियोगिकत्वम्। एवं मुख्यस्याभेदस्यैवाभिन्नशब्दार्थघटकतया अमुख्याभेदग्रहणायोगश्च। न हि रजतशब्दस्य मुख्यरजतवत् कल्पितमपि मुख्योऽर्थः; तथा सति रजतं देहीत्युक्तौ शुक्तिदानस्यापि करणप्रसंगात्। तस्मात् प्रपञ्चस्य मायापरिणामत्वपक्षे ब्रह्मण उपादानत्वं दुर्निरूपमेव। उपादानद्वयस्यादर्शनाच्च।

अत एव ब्रह्मोपादानत्वसंरक्षणायाविद्यायाः परिणामित्वमुपादानत्वं न स्वीकृतं भामतीकारेण; किंतु दोषविधया निमित्तत्वमात्रम्। यत्र तत् कल्प्यते तत् तदुपादानमिति तदाशयः। इदञ्च शुक्तिरजतरूपानिर्वचनीयसिद्धवत्कारेण; तदभावे इदमप्यसिद्धम्। इदञ्च मुद्धटादिस्थले लोके अवक्लृप्तत्वात् लोकसिद्धोपादानत्वस्यान्यस्यैव वाच्यत्वात् तत्रैव व्युत्पन्न उपादानशब्दः तत्रेव भ्रान्तिस्थलेऽप्यभेदारोपनिबन्धनव्यवहारानुसारेणामुख्यः प्रयुज्यत इति तत्र गौणमेवोपादानत्वम्। एवञ्च मुख्योपादानस्याभावात् भावकार्ये उपादानसापेक्षत्वस्यानुभविकत्वात् तदभावादपि शुक्तिरजतादिकमनिर्वचनीयमसिद्धमिति जगतोऽप्यनिर्वचनीयत्वायोगादसिद्धमेवेदमुपादानत्वम्। सिद्धान्तलेशसंग्रहे चोपादानत्वं विचार्यान्ते सिद्धान्तमुक्तावलीकृदाशय एव स्वाभिमत इव प्रादर्शि, "मायाशक्तिरेवोपादानम्; न ब्रह्म, 'तदेतद् ब्रह्मापूर्वमनपरम्, न तस्य कार्यं करणञ्च विद्यते' इत्यादिश्रुतेः। जगदुपादानमायाधिष्ठानत्वेन तु उपचारादुपादानम्। तादृशमेवोपादानत्वं लक्षणैर्विवक्षितम्" इति। मध्ये च, "वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्रेश्वर उपादानम्, तथाऽन्तःकरणादिजीवाश्रिताविद्यामात्रपरिणाम इति तत्र जीव एवोपादानम्" इति जीवस्येश्वरस्य च यथायथं परिणामिद्रव्याश्रयत्वनिबन्धनमौपचारिकमुपादानत्वमुदितम्। इदञ्च भामतीमतानादरेण प्रवृत्तम्। सर्वस्य ब्रह्मणि कल्पिततया परिणाम्युपादानापेक्षा, नास्तीति तदाशयः। तथासति घटादेर्मृत्कार्यत्वानुभवः, आकाशादिभूतानां पूर्वपूर्वस्योत्तरोत्तरकारणत्वश्रुतिः, तथा लयक्रमश्रुतिः, कार्यकारणैक्यावलम्बिसत्कार्यवाद इत्यादिकं बहु बाध्यत इति हेतोर्भामतीगतिमुपेक्ष्य अविद्यापरिणामत्वेन जगतो ब्रह्मणि कल्पितत्वं स्वीकर्तव्यमिति सिद्धान्तमुक्तावलीकारानुयाय्याशयः। एवञ्चाद्वैत्यभिमतमुपादानत्वमौपचारिकमित्यद्वैतिभिरेवोक्तम्। अनयैव वासनया परन्तु स्वयमनुद्घाटितया प्रपञ्चकारणप्रकृत्याश्रयत्वरूपमुपादानत्वमौपचारिकं किल विशिष्टाद्वैतमत इति क्रियासमभिहारेण शतभूषण्या कथ्यते इति तन्मत एव स दोषः।

इममेव निष्कर्षं मनसिकृत्य शतदूषण्याम्, "यथा भवतोऽप्यविद्याया एव साक्षाद्विवर्ताश्रयत्वेऽपि तस्या एव साक्षिभूतब्रह्माधीनसत्ताकत्वात् ब्रह्म विवर्तते इत्युक्तिः" इत्युक्तम्। सिद्धान्तलेशसंग्रहप्रदर्शितनिष्कर्षरीत्या हि अविद्यैवोपादानम्, अविद्याश्रयत्वाद् ब्रह्मण्युपादानत्ववाचोयुक्तिः। एतदुक्तेश्चायं भावः—विशिष्टाद्वैतिमते मुख्यमुपादानत्वं न भवतीति प्रक्रम्य भवद्भिरौपचारिकमेवोपादानत्वमादृतम्। एवञ्च जगन्मिथ्यात्वस्यानुभवात्यन्तदूरस्य कल्पनयौपचारिकोपादानत्ववादं परित्यज्य ब्रह्मण्यविद्याकल्पनां विना वस्तुतः प्रकृतिभूताविद्याश्रयत्वं जगत्सत्यत्वञ्च संमत्य संभवदुपादानत्वं कस्मान्न रोचत इति। सर्वमिदमस्मन्मते औपचारिकोपादानत्वमत्यां भवतां सत्यामप्यस्मन्मतमेवादर्तव्यमिति जिज्ञापयिषयैव शतदूषण्यामुक्तम्। मुख्योपादानत्वस्यैव स्वमते संभवत एव पूर्ववाक्ये निगूढमुदितस्य समनन्तरमेव स्पष्टीकरणात्। तस्मादस्मन्मते उपादानत्वस्यौपचारिकत्वं शतदूषणीसंमतमिति वचनं सर्वथा ग्रन्थगतिपरामर्शवैकल्यमूलमेव। कथं मुख्यमिति च सम्यगुपपादयिष्यामः।

अन्तरा प्रकृतशतदूषणीवाक्ये आरोपितान् दोषानपनयामः—"अद्वैतिमते तु न कुत्राप्येकदेशिमतेऽन्यत्र वा शतदूषण्युक्तरीत्या सद्वारकोपादानत्वं स्वीक्रियते" इत्युक्तमसत; सिद्धान्तलेशसंग्रहोक्तसिद्धान्तमुक्तावलीबलेन शतदूषण्युक्तपक्षोऽप्यनेकस्वतन्त्रकल्पनाराज्यधुरन्धरेष्वद्वैतिषु केषाञ्चिदिष्ट इति बुध्यमानत्वात्। किं बहुना। भवदुपात्त भवद्वार्तिकवचनमपि, "अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्। अज्ञानम्, तदुपाश्रित्य ब्रह्म कारणमुच्यते" इतीदम्, अज्ञानस्यैवोपादानत्वं ब्रह्मणि सद्वारकमौपचारिक तदिति सम्यगेवाह। 'कारणमुच्यत' इत्येतावदेव वदन् उपादानत्वं पूर्वार्धोक्तं ब्रह्मणि नास्तीत्येव मन्यत इति। अथ, "तत्राविद्याविवर्तवादो न प्रमाणिक इति दुरनुवादः" इत्युक्तमप्ययुक्तम्। अद्वैतिभिरविद्यापरिणामत्वं प्रपञ्चस्येष्टम्, न तु विवर्तत्वमिति हि तदाशयः। तत्र विवर्तपरिणामयोः को भेद इति विचार्यम्। सिद्धान्तलेशसंग्रहे, 'कारणसलक्षणोऽन्यथाभावः परिणामः; तद्विलक्षणो विवर्त'

इत्युक्तम् । शुक्तिरजतादीनामुत्पत्तेर्लोकाविदितत्वात् युक्त्यैवाद्वैतिभिरुपपाद्यमानत्वात् लोकप्रसिद्धो विवर्तपदार्थः कश्चिद् वक्तव्यः । स चायमेव । अन्यविधस्तु विवर्तपरिणामविवेकस्तत्र कृतः स्वसिद्धान्तमात्रगतत्वाल्लोकसंमताननुगमादनादेयः । परिणामशब्दः सामान्यवाची विशेषवाची च, प्राणशब्दवत् । उत्तरावस्थामात्रवाचित्वे सामान्यता । कारणसलक्षणोत्तरावस्थापरत्वे च विशेषता । कार्ये कारणप्रत्यभिज्ञानं यत्र भवति, तत्र सरूपः परिणामः; यत्र न, तत्र विरूपः, यथा गोमयजवृश्चिकादौ, देहजन्यकेशनखादौ च । अयं विवर्तः अविद्याकार्येषु बहुलमुपलभ्यते । न हि पञ्चसु भूतेषु पूर्वपूर्वस्योत्तरोत्तरस्मिन् प्रत्यभिज्ञानमस्ति । एवमेव तत्पूर्वकार्येष्वपि भाव्यम् । तथाचाविद्याया मुख्योपादानत्वं ब्रह्मणोऽमुख्यञ्च स्वीकृतवद्भिः विवर्तरूपः परिणामरूपश्चान्यथाभावः मुख्योपादानत्वाभिमताविद्याग्रहणेनैव वक्तव्य इति अविद्याकार्यं प्रायो विवर्तरूपमिति वेदयितुमेव शतदूषण्यामत्र विवर्तपदप्रयोगः । तेन विवर्तोपादानत्वमपि निरुक्तरूपत्वाद् ब्रह्मण्यमुख्यमेवेति ज्ञापितं भवति । "साक्षिणोऽसदाश्रयत्वमित्यपरो दुरनुवादः साक्षिण्यविद्याश्रयत्वानङ्गीकारात्"—इति चानुपपन्नम् । ईश्वराश्रितमायापरिणामेतिप्रयोगस्य प्रदर्शितत्वात् मायाश्रयत्वमिष्टमद्वैतिनाम् । तत्रेश्वरपदेन मायाविशिष्टग्रहणे स्वविशिष्टाश्रितत्वं स्वस्य दुर्वचमिति मायोपहितमीश्वरपदेन गृहीत्वा तदाश्रितत्वमेव मायायामुपपादनीयम् । उपहितमेव साक्षीत्युच्यते, न तु शुद्धं साक्षि भवति; न वा जगदुपादानम् । परिभाषायामप्युक्तमेतत् । तथाचात्र साक्षिपदं शुद्धात् विशिष्टाच्च ब्रह्मणो वैलक्षण्येनाविद्याश्रयीभूतब्रह्मांशग्रहणायेति । एवमविद्याविवर्तेति पूर्वोक्तोऽर्थः तथैव विवर्तत इति पदेन पश्चाद् गृहीतः ब्रह्मणि उपादानत्वस्यामुख्यत्वात् अविद्यानिरूपितविवर्तत्वमादायौपचारिकं तद् वाच्यमिति व्यक्तये । तथाच विवर्तपदस्य भवन्मते आदृतत्वात्तदेव भवन्मतोपपादनावसरे प्रयुक्तम् । अस्माभिः 'परिणामात्' इति सूत्रप्रामाण्येन परिणामस्यैवोक्ततया अस्मन्मतकथने, ब्रह्म परिणमतीत्युक्तम् । तत्तदादृतशब्दप्रयोगेऽप्यर्थे नातीव वैषम्यं

प्रकृतोपपादनांशे। तस्मात् तत्तन्मतव्यवस्थितं शब्दं व्यवस्थया प्रयुञ्जाना शतदूषणी कथं स्वपरव्यामोहिनी स्यात्। प्रत्युत विवेचनकुशलानां स्वेषां परेषाञ्च व्यामोहशमन्येवेति अभिनिवेशपारवश्यविरहिणां व्यक्तम्।

अथोपादानत्वं विविच्यते—उपादेयतया तार्किकाद्यभिमतानि कार्याणि तावत् द्रव्यगुणकर्माणि। घटो जायते, पटो जायते, पाकादपाकाच्च रूपादयो जायन्ते, शब्दस्नेहेच्छाद्वेषसुखदुःखादयो जायन्ते, कर्माणि उत्क्षेपणभ्रमणादीनि जायन्ते इति प्रत्ययात्। तत्र गुणकर्माणां विषय इव द्रव्यविषयेऽपि उपादानं कार्यादतिरिक्तं तदाधारभूतमिति तार्किकमतम्। संबन्धश्च समवायः। वेदान्तिमते तु द्रव्यमेकमेव कार्यकारणोभयात्मकमिति यद्यपि नाधाराधेयभावः, अथापि गुणकर्मविषये सोऽस्त्येव। तथाच गुणादिकं प्रत्युपादानत्वं नाम गुणाद्याधारत्वे सति तत्कारणत्वम्। समवायसंबन्धस्य निराकृतत्वात्तु स्वरूपमेव संबन्धः। घटं प्रति मृत्पिण्डस्य नैवमाधाराधेयभावो वेदान्तिमते इति तत्रोपादानत्वमन्यादृशम्। तत्राप्यवस्थामात्रग्रहणे तु तत्कारणत्वतदाधारत्वयोर्द्रव्ये सुवचतया एकरूपमेवोपादानत्वम्। अथापि घटत्वं जायत इत्यप्रयोगात् घटो जायत इत्येव प्रयोगात् जन्माश्रयत्वं कार्यत्वं घट एव स्वीकार्यमिति सर्वे निश्चिन्वन्ति। अतश्च सर्वसाधारण्याय वेदान्तिसंमतं तादात्म्य—स्वरूपसंबन्धावच्छिन्नाधारत्वान्यतरसंबन्धेन कार्यसंबन्धित्वे सति कारणत्वमुपादानत्वम्। एवञ्च घटपटसंयोग—आत्मानात्मसंयोगादिरूपगुणाद्युपादानत्वमात्मानात्मद्रव्येषु सुखमुपपादितं भवति। एवञ्च ब्रह्मणो जगत्कारणत्वस्य जगदाधारत्वस्य च निर्विवादत्वात् जगद्रूपकार्योपादानत्वं ब्रह्मणि सुस्थम्। स्वरूपसंबन्धश्चायं कालिकादिस्वरूपसंबन्धवैलक्षण्यव्यक्तये अपृथक्सिद्धिविशेषरूप इष्टः। संभावितस्थले संयोगविशेषरूपोऽपि स संबन्धः। तत् सिद्धं कार्यप्रतियोगिकापृथक्सिद्ध्यनुयोगित्वे सति कारणत्वमुपादानत्वं ब्रह्मणः। घटं प्रति मृद उपादानत्वं तादात्म्यसंबन्धघटनेन वा अवस्थामात्रग्रहणेन

वोपपाद्यमित्यन्यदेतत् । अतस्तार्किकाद्युक्तलोकप्रसिद्धोपादानत्वस्यैवास्माभि-रुक्तया किमिति नेत्रे निमील्यौपचारिकमुपादानत्वमिति पौनःपुन्येन घुष्यते ।

एवञ्च सद्ब्रह्मात्मादिशब्दानां कारणवाक्यनिर्दिष्टानां शुद्धपरमात्मपरत्वेऽपि नोपादानत्वक्षतिः, तस्य कार्यं प्रति कारणत्वस्यापृथक्सिद्ध्यनुयोगित्वस्य चाक्षतत्वात् ।

एतावति पर्याप्तेऽपि तत्त्वशोधनार्थमधिकमपि किञ्चिदुच्यते—जगत् प्रति ब्रह्मणः कारणत्वमित्यत्र जगत्पदेनाचेतनरूपप्रपञ्चमात्रग्रहणम्, उत तद्विशिष्टब्रह्मग्रहणम् । आद्ये उपादानत्वं गुणन्यायेनोपपादितम् । अन्त्ये तु घटमृत्पिण्डयोरिवैक्यादक्षतम् । तथाहि—घटो जायते, रूपं जायते इत्यादौ जनिधात्वर्थः क इति विचार्यम् । जनिरुत्पत्तिः । सा यदि आद्यक्षणसंबन्धरूपा, रूपादौ घटते । घटस्य तु द्रव्यस्यानादित्वात् अवस्थामात्रस्यैवाद्यक्षणसंबन्धात् कथं तत्रोत्पत्तिव्यवहार इति शंक्येत । अतएव घटद्रव्यमतिरिक्तमुपादाना-दिति तार्किकाः । वेदान्तिमते तु घटत्वरूपावस्थाया एवोत्पत्तिं प्रति साक्षादाश्र-यत्वेपि घट उत्पद्यत इति व्यवहारानुसारात् परम्परया तदाश्रयत्वं द्रव्ये एष्टव्यम्, यत्र यत्र तथा व्यवहार इति वाच्यम् । यथा सत्तायास्तर्किकमते द्रव्यगुणकर्ममात्रनिष्ठत्वेऽपि सामान्यादित्रयेऽपि प्रतीतिबलात् परम्पराया अपि संबन्धत्वम् तद्वदिति ग्राह्यम् । एवञ्च घटादिद्रव्ये उत्पत्त्याश्रयत्वस्य परम्परा-संबन्धमादाय निर्वाहे, तथैव जीवो देवो नरो वयो वृक्षश्च जायते कर्मवशादि-त्येवंरूपप्रामाणिकपरश्शतप्रयोगानुसारेण उत्पत्त्याश्रयावस्थाविशिष्टदेवादिशरी-रापृथक्सिद्धत्वरूपपरम्परया जीवेऽप्युत्पत्त्याश्रयत्वमेषितव्यम् । तथा, बहु स्यां प्रजायेय, तदात्मानं स्वयमकुरुतेत्यादिप्रयोगबलात् ब्रह्मण्यपि उत्पत्तिमदव-स्थाश्रयाचेतनद्रव्यापृथक्सिद्धतया वा तादृशाचेतनद्रव्यापृथक्सिद्धजीवापृथक्सि-द्धतया वा उत्पत्तिमत्त्वमेषितुं साम्प्रतमिति । ब्रह्मणःकारणत्वमिव कार्यत्वम-प्यस्ति । अत एव विष्णुपुराणेपि, "स एव सृज्यः स च सृष्टिकर्ता स एव पात्यत्ति च पाल्यते च" इत्येवं व्यवहारः ।

एवमुत्पत्तिः कार्यत्वं व्यवहारबलात् यथा परम्परयापि, तथा कारणत्वमपीति ज्ञायते। घटं प्रति मृत्पिण्डः कारणमित्यत्र कारणत्वं पूर्वकालवृत्तित्वम्। तत्र द्रव्यस्य सदातनत्वात् घटत्वोपलक्षितद्रव्यस्य प्रागपि सत्त्वात् मृत्पिण्डस्य घटः कारणमित्यपि प्रयोगापत्तिरिति तद्वारणार्थं समभिव्याहृतपदार्थतावच्छेदकमृत्पिण्डत्वादिविशिष्टे कारणत्वान्वयः स्वीकार्यः। पूर्वकालवृत्तित्वं पिण्डत्वावस्थायामपि विवक्षितमित्युक्तं भवति। परन्तु घटं प्रति पिण्डत्वावस्था कारणमिति प्रयोगाभावात् कारणत्वं नाम पूर्वावस्थाश्रयत्वमिति वक्तव्यम्। तदा समभिव्याहृतपदार्थतावच्छेदकपिण्डत्वावस्थायाः कारणपदार्थतावच्छेदकस्यावस्थारूपधर्मस्य चैक्यं व्युत्पत्तिबलभास्यमित्यङ्गीकर्तव्यम्। तेन मृत्पिण्डं प्रति घटः कारणमिति प्रयोगवारणम्। ऐक्यासंभवे क्वचित्तयोर्धर्मयोः समानकालिकत्वं वा स्यात्, न तु समभिव्याहृतपदार्थतावच्छेदकस्य घटत्वादिवदुत्तरकालिकत्वम्। अस्त्वेतत्। अवस्थाश्रयत्वं यदिदं कारणत्वम्, तत् साक्षादाश्रयत्वमिव परम्परयाश्रयत्वमपि क्वचिद्भवति। अत एव जीवस्य मनुष्यादिदेहकारणत्वम्; मनुष्यपिण्डत्वावस्थासमानाधिकरणतत्पूर्वभाव्यवस्थाश्रयभूतसूक्ष्मापृथक्सिद्धतया परम्परया तादृशावस्थाश्रयत्वात्। अत उत्पत्तिमत्त्वस्येवावस्थावत्त्वस्यापि परम्परासंबन्धेनापि स्वीकारेऽनुपपत्त्यभावात् प्रयोगानुसारेण ब्रह्मणोपि तथोपादानत्वम्। एकसंघातनिविष्टैकदेशकार्थतया संघातिनः प्रधानस्य कारणत्वं श्रुत्यापि ज्ञाप्यते, "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् संभवतीह विश्वम्" इत्यक्षरशब्दवाच्यस्य ब्रह्मणो विश्वकारणत्वस्योपादानत्वस्योक्तिः। प्रधानाप्रधानविवेकमन्तरा एकसंघातनिविष्टत्वेऽपि कार्यकारणभावोऽस्ति; यथा पृथिव्यैकदेशा एवौषधिरूपेण समाविष्टा इति तादृशसंघातापन्नपृथिवी ओषध्युपादानम्। सतो जीवतः पुरुषादात्मनः केशलोमान्येव जायन्ते। तानि प्रति देहस्येव पूर्वावस्थाश्रयत्वं तत्संघातनिविष्टस्य प्रधानस्य जीवस्यापीति सोऽपि कारणम्। तथा ऊर्णनाभिशरीरान्तर्गतलाला-

जलात् तन्तवो जायन्ते, जायमानतन्तुपूर्वावस्थाश्रयलालया संहृतस्य देहस्य तत्र प्रधानस्योर्णनाभेश्च • परम्परयाऽवस्थाश्रयत्वमादाय कारणत्वम् । तथाच कारणशब्दस्योपादानशब्दस्य च साक्षाद्वाऽभिमतपरम्परया वा अवस्थाश्रय इत्येवार्थ इति न ब्रह्मण उपादानत्वक्षतिः । तथाच तेन संबन्धेन तदवस्थाश्रयं प्रति तेन संबन्धेन तदवस्थासमानाधिकरणतत्पूर्वावस्थायाः आश्रयः साक्षात् अभिमतपरम्परया वा यः, स तदवस्थापन्नं प्रत्युपादानमित्युक्तं भवति । नामरूप-व्याकर्त्रा च परमात्मना स्वपर्यन्ते रूपशब्दवाच्यावस्थाश्रयत्वसद्भावप्रदर्शनायैव, 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति स्वानुप्रवेशपूर्वकं व्याकरणमुक्तम् । एवं स्थिते 'ते यदन्तरा तद् ब्रह्म' इति नामरूपाभावश्रुतिस्तु वस्त्वन्तरमद्वारीकृत्य साक्षान्नामरूपानाश्रयत्वाभिप्राया । परम्परया चेतना-चेतनगतधर्माश्रयत्वं ब्रह्मणि न वार्यते । अत एव "काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः" इति परमात्मनि काठिन्यवत्त्वमुक्तम् । जडाजडयोरै-क्यायोगात् भूमिगतं काठिन्यं परमात्मनि कथमन्यथा घटेत । 'रसोऽहमप्सु कौन्तेय' इति रसत्वाद्याश्रयत्वमप्येवं परम्परयैव निर्वाह्यम् । परम्परायामप्या-धारत्वव्यवहारो मुख्यो दृश्यते; यथा भूतलास्तीर्णे पटे तिष्ठति पुरुषे भूतलस्यैव तत्राधारता पुरुषं प्रति । अम्भःपूर्णं कुम्भं करेण बिभ्रतः पुंसः केवल-कुम्भादधिकभारभरणपरिश्रमः प्रत्यक्षः । तत्र स्वाधीनसर्वचेतनाचेतस्वरूपस्थिति-प्रवृत्तिके परमात्मनि तत्तद्धर्माधारत्वे कः संदेहः । अस्याभावे तेषां तदाधार-त्वानर्हत्वात् । अत एवोच्यते, 'यदादित्यगतं तेजः—तत् तेजो विद्धि मामकम्', 'गामाविश्य च भूतानि धारयाम्यहमोजसा' इत्यादि ।

एवञ्च घटं प्रति ब्रह्मणस्तदाधारतया कारणत्वमिव, यथा घटं प्रति मृत्पिण्डः कारणमित्युक्तौ घटत्वाश्रयस्य जडस्य पिण्डत्वाश्रयस्तदभिन्नः कारणमित्युक्तं भवति, तथा घटपदेन घटत्वस्य परम्पराश्रयं परमात्मानं पिण्डपदेनापि पिण्डत्वं प्रत्याश्रयं तं गृहीत्वा कारणत्वमपि वर्णयितुं शक्यत इति चोपादानत्वं संभवति ।

एवमन्यगतावस्थामादायैवोपादानत्वमुपपादितम्। साक्षादवस्थामादायापि तदस्ति। यथा बालो युवा जात इत्यत्र बालत्वावस्थापन्नस्य देहस्य युवत्वावस्थापन्नदेहकारणत्वम्, तथा बालदेहवैशिष्ट्यविशेषरूपावस्थापन्नस्य युवदेहवैशिष्ट्यविशेषविशिष्टं जीवं प्रत्युपादानत्वं भवति। तथैव बालदेहविशिष्टजीववैशिष्ट्यविशेषरूपावस्थापन्नस्य परमात्मनः युवदेहविशिशिष्टजीववैशिष्ट्यविशेषापन्नपरमात्मनिरूपितोपादानत्वं भवत्येव। एवं परम्परासंबन्धेन परिणामाश्रयत्वात् परमात्मन उपादानत्वं भवतीति परिणामादिति सूत्रे उपपादितम्। परिणामवत्त्वात् ब्रह्म प्रकृतिर्भवितुमर्हति, साक्षादिव परम्परासंबन्धस्यापि विवक्षितत्वात्। अन्यथा द्रव्ये साक्षादुत्पत्तिवर्णनायोगात्। उत्पत्तेः परम्परयोपपादने कार्यकारणावस्थयोरपि तथोपपादनेन जीवविषये लोकदृष्ट्यैव नीत्या परमात्मनः कार्यत्वकारणत्वयोराञ्जस्येन वर्णनादिति।

अत्रेदमवधेयम्—गुणादिषूत्पत्तिव्यवहारस्य साक्षात्संभवं घटादिषु द्रव्येषु तद्व्यवहारस्य परम्परया संभवञ्चोपपाद्यमानमपेक्ष्य द्रव्यगुणयोर्मध्ये द्रव्यस्य प्रधानत्वात् द्रव्यविषयव्यवहारस्यैव भूयस्त्वाच्चोत्पत्तिशब्दस्य आद्यक्षणावच्छिन्नावस्थैव मुख्योऽर्थः। गुणादावुत्पत्तिपदं तु तदेकदेशस्याऽऽद्यक्षणसंबन्धस्य सद्भावेन। उत्पत्तावुत्पद्यत इति व्यवहारवत् अवस्थायामुत्पद्यत इति व्यवहार इति च भाव्यम्। कार्यशब्दस्य द्रव्यपर्यन्तत्वे मुख्यत्वादेव सत्कार्यवाद इत्युच्यत इति। एवमपि पूर्वोक्तानुगतोपादानत्वशिक्षणं नानुपपन्नम्। बाल्युवादिजीवविषयव्यवहारानुसारेण परम्परासंबन्धेनाप्यवस्थाश्रयत्वविवक्षा तु सर्वथा भवत्येव। अपृथक्सिद्धितादात्म्यान्यतरसंबन्धेन तत्संबन्धित्वे सति तत्कारणत्वमुपादानत्वमिति गुणद्रव्यसाधारणं तन्निर्वचनम्। घटत्वादेरिव घटत्वावस्थापन्नवस्तुवैशिष्ट्यस्य ब्रह्मनिष्ठस्यैव कार्यतावच्छेदकत्वसंभवात् साक्षादपिचोपादानत्वम्। इदञ्च वैशिष्ट्यविशेषमादाय साक्षादाश्रयत्वमन्ते प्रदर्शितमेव। इदमपि परिणामादित्यत्र विवक्षितं भवितुमर्हति। 'अनेन जीवेनात्मनाऽनुप्रविश्ये'त्यत्रास्मदीय उपनिषद्भाष्यपरिष्कारः मुण्डकोपनिषद्भाष्यतत्परिष्कारादयश्च वैशद्याय द्रष्टव्या इति सर्वं समञ्जसम्।

इत्थं तार्किकवेदान्तिसंमतप्रक्रियाविदाम् ।
उपादानत्वमीशस्य सुगमं सुप्रतिष्ठितम् ॥
सर्वमिथ्यात्वमास्थाय ब्रह्मैकं गदतां पुनः ।
कारणत्वेऽप्यसंभाव्ये उपादानवचः कुतः ॥
उपादानत्वशिक्षा तु रज्जुसर्पनिदर्शनात् ।
गतिरन्धस्य जात्यन्धदत्तयष्ट्यवलम्बनात् ॥

एवमुपादानत्वस्य सम्यगुपपादनात् विशिष्टाद्वैतिमते उपादानत्वव्यपदेशमात्रमिति, विज्ञानभिक्षुमतमेव स्यादिति चोक्तं प्रत्युक्तम् । विज्ञानभिक्षुस्तु सेश्वरसांख्य एवेति न सोऽस्मन्मतप्रक्रियावादी । अपिच कार्यवाचिपदस्यापि विशिष्टब्रह्मपरत्वं शरीरात्मभावनिबन्धनैक्यव्यवहारमपि च स न जानाति । भवन्मत एव तु मायायामेवोपादानत्वम्, न ब्रह्मणि । मायाया निमित्तत्वमात्रं मन्यमानानां तु तदुक्तस्योपादानत्वस्य ब्रह्मनिष्ठस्य शशविषाणायमानत्वात् अनुपादानमेव सर्वमिति च ध्येयम् । यदुच्यते, अस्मदुक्तः शरीरशरिभावो द्वैतिमतेऽपि भवेदिति—तद् भवतु । किं तेन । भवन्मतेऽपि किं न भवेत्-यद्याग्रहस्त्यज्यते । व्यावहारिकस्य शरीरशरीरिभावस्य आमोक्षं स्वीकारसंभ,वात् । यदपि भिन्नयोरभेदव्यवहारो गौण इति—तन्न । न हि वयं भिन्नयोरभेदं कुत्रापि ब्रूमः । भिन्नवाचित्वेनाभिमतयोः पदयोर्विशिष्टविषयतया मुख्ययोरेवैवंय तत्तदर्थयोरित्येव ब्रूमः । यदपि, 'नेह नानास्ति' इत्यत्र स्वतन्त्रभेदनिषेध इतीदमभेदव्यपदेशाय कल्पनामात्रमिति—कथमेतत् । भवन्मते ब्रह्मव्यतिरिक्तस्य ब्रह्माधिष्ठानकत्वाद् भेदगर्भोऽभेद इति भवतैवोक्ततया सति भेदे नेहनानास्तीति कथम्? नानेत्यस्याभेदगन्धविधुरभेद इति विशेषपर्यवसानेन तन्निषेधस्योक्तौ तदपेक्षया स्वतन्त्रभेदनिषेध इत्येव युक्तम्; अनुभूयमानवस्त्वपलापाभावात् । 'अभेदगर्भो भेद इति चासंगतम्; भेदाभेदयोर्विरोधात् । अभेदशब्दो भेदशब्दघटित इत्यावदेव स्यात् । 'अपृथक्सिद्धिरिति परिभाषाकल्पन' मिति च न दूषणम् । तदुक्तिप्रमेयस्य संमतत्वे तत्तान्वि-

कैरनेकपरिभाषाकल्पनवदस्यास्मत्परिभाषात्वेपि बाधकाभावात्। प्रमेयासंमतौ च परिभाषादूषणस्यायुक्तत्वात् तस्यैव दूष्यत्वात्०। अपृथक्सिद्धिर्नेति वदता पृथक्सिद्धिर्वर्णनीया। नित्यविभुपरमात्मापृथक्सिद्धिर्न कथमपि भवितुमर्हति। 'सद्वारकोपादानत्वे च प्रकृतिश्चेति सूत्रविरोध' इति च कथम्। उपादानशब्दस्य यो मुख्यार्थः तत्त्वस्यानपायात्। परम्परयाऽवस्थाश्रयत्वस्याप्युपादानशब्दार्थत्वस्य प्रागुक्तत्वात्; वैशिष्ट्यरूपधर्मस्य साक्षादेव सत्त्वाच्च। "विशिष्टोपादानत्वं प्राप्ताप्राप्तविवेके विशेषणे पर्यवस्यती" त्ययमर्थः शतदूषण्यां भवत्पक्षनिष्ठैरस्मत्पक्षदूषणावसरे उक्तः। तत्र 'प्राप्ताप्राप्तविवेकन्यायेने'ति न्यायपदघटितानुवादासामञ्जस्यवत् स्वपक्षदूषणार्थमुक्तमिति मत्वा परिहारप्रयत्नोऽप्यनुचितः। अशक्यश्च परिहारः; वार्तिकाद्युक्तमायोपादानत्वपक्षे घटाद्युपादानत्वस्य तत्रैव पर्यवसानात्। ब्रह्मणि तदौपचारिकत्वं भवदीयग्रन्थारूढमित्यधस्तादेव दर्शितत्वात्। न हि घटादीन् प्रत्यपृथक्सिद्धत्वं ब्रह्मणि तत्प्रद्वेषिणा भवता स्वभ्युपगमम्। न च घटादिशब्दानां विशिष्टब्रह्मपरत्वम्। एवञ्च ब्रह्मणोऽनुपादानत्वे प्रकृतिश्चेतिसूत्रविरोध इति चेत्—स तत्पक्षे भवत्येव। एवं नविलक्षणत्वाधिकरणस्याप्यनुत्थानमेव। मायागतोपादानत्वाज्ञानेन सांख्यकृतः पूर्वपक्ष इति निर्वाह्यम्। मायाया अनुपादानत्वं ब्रह्मणो जगदध्यासाधिष्ठानतयोपादानत्वमिति भामतीपक्षावलम्बिनं प्रति वा नविलक्षणत्वाधिकरणपूर्वपक्षोऽस्तु, तस्य मुख्यकल्पत्वस्य, विवर्तेप्यधिष्ठानसादृश्यावश्यकतायाः शुक्तिरजतादौ दर्शनस्य च भवदुक्तत्वात् प्रपञ्चे ब्रह्मवैलक्षण्यमभिमत्य पूर्वपक्षप्रवृत्तिसंभवात्। विशेषणोपादानत्वं परिणामितया, विशेष्योपादानत्वं विवर्ततयेत्युभयाभ्युपगमस्त्वयुक्तः। कार्यस्यैकविधोपादानापेक्षाया एव दर्शनात्। अत एव हि भामतीकारेणाविद्याया उपादानत्वत्यागः। वस्तुतो भवत्पक्षे नविलक्षणत्वाधिकरणस्यानुत्थितिरेव। ब्रह्मव्यतिरेकेण प्रपञ्चस्याभाव एवेति पक्षे कार्यस्यैवाभावेन किं प्रति ब्रह्मणः कारणत्वविचारः, कीदृशकारणत्वमिति विचारस्तु कथंतरामिति। अस्मत्पक्षे तु विशिष्टवे-

षेण कार्यत्वं कारणत्वञ्च वैशिष्ट्यासंभवादेवासंभावितमिति शुद्धप्रपञ्चं प्रति केवलब्रह्मण एवोपादानत्वं वक्तव्यम्; तच्च विलक्षणत्वादयुक्तमिति नविलक्षणत्वाधिकरणपूर्वपक्षस्य सम्यगुत्थितिः। दृष्टान्तपूर्वकवैशिष्ट्यसंभवप्रदर्शनेन च पूर्वपक्षपरिहारः क्रियते। संभावितत्वेन निर्दिष्टं वैशिष्ट्यं पृथगधिकारणे पश्चात् प्रमाणपुरस्परं स्थापयिष्यते चेति सर्वमनवद्यमित्यलमत्र बहुविशेषार्थव्युत्पादनविस्तरेण।

यत्तु—निर्विकारत्वश्रुत्यविरोधाय ब्रह्मणः परिणामित्वत्याग इति—तन्न; परिणाममिथ्यात्ववादिनां परिणामस्वीकारेपि निर्विकारत्वस्याक्षतेः। मृत्परिणामस्य घटादेर्भावितमानतया मिथ्यात्वं ह्यास्थीयते। वस्तुतो निर्विकारस्य नित्यमुक्तस्य बन्धगन्धस्याप्यभावेन मोक्षशास्त्रं सर्वं व्यर्थमेव स्यात्। तदपि मिथ्यैवेति चेत्—हेयोपादेयविभागेन सांसारिकप्रवृत्तिघटनमोक्षार्थप्रवृत्तिसंपादनार्थपरमप्रयासादिकं सर्वमनपेक्षितमिति सर्वः स्वैरचार्येव तर्हि क्रियेत।

यत्तु—'अष्टवर्षं ब्राह्मणमुपनयीते'ति वाक्यं शरीरतादात्म्याभिमानिपुरुषविषयमिति—तदयुक्तम्—नरकादिहेतुप्रत्यवायपरिजिहीर्षोः स्वर्गाद्यामुष्मिकप्रेप्सोश्च विवेकिनः शरीरतादात्म्याभिमानायोगात् तादृशस्य बालस्योपनयनसंस्कार्यत्वाप्रसंगात्। भवन्मते शरीरादिना मिथ्याभूतेन सहात्मनः संयोगरूपसंबन्धस्य दुर्वचत्वेपि जगत्सत्यत्ववादिना शरीरात्मनोः संयोगादिनानासंबन्धसद्भावस्य स्वीकृतत्वेन व्यावहारिकस्य संयोगस्यापलापायोगात् ब्राह्मणादिशरीरसंयुक्त उपनयनसंस्कार्य इत्येव विवेक्यविवेकिसाधारण्येन श्रुत्या बोधनसंभवात्। व्यावहारिककर्मविधायकवाक्येषु पारमार्थिकदशानुसारिबोधवर्णनक्लेशस्यानवकाशाच्च। एवं तादात्म्याभिमानीत्यर्थोऽपि दुर्वचः, आत्मनि शुद्धे अभिमानवत्त्वस्याप्यभावात्। शुद्धात्मन्यभावेऽपि विशिष्टात्मन्यस्तीति चेत्—किंविशिष्टत्वमात्मनः स्यात्; किंरूपञ्च तत् वैशिष्ट्यम्। अन्तःकरणावच्छिन्नात्मेत्युक्तौ अवच्छिन्नत्वमपि दुर्वचमेव। अन्यथा देहावच्छिन्नत्वस्यैव सुवचत्वात्। अन्तःकरणतादात्म्याभिमा-

नित्वमिति चेत्— शरीरतादात्म्याभिमानिनि अन्तःकरणतादात्म्याभिमानः कथम्। अभिमानसामान्यमेव वा कथम्। अभिमानाश्रयत्वाभावेपि अभिमानविषयत्वमस्तीति चेत्—तादात्म्याभिमान एकदा शरीरान्तःकरणोभयमादाय दुर्वचः। तत्तत्संयोगाभिमानविषयत्वमेव संभाव्यते। तथापि तथाभिमानविषयत्वावच्छिन्नसंस्कारकमुपनयनं कार्यमिति बोध उपनिषद्भिर्मिथ्यात्वनिश्चये सत्येव स्यात्; न पूर्वमिति अन्येषामुपनेतृत्वाभावप्रसंगः। प्रागेव, 'देहसंबन्धाज्ज्योतिरादिवत्' इत्यत्र देहसंबन्धस्वरूपं शाङ्करवर्णितमसंगतमिति दूषितमित्यलमत्र।

'सदेव सोम्येदम्' इत्यादौ अविद्योपहितस्यैव ग्रहणम्, न त्वनावृतचिन्मात्रस्येति प्रागुक्त्वा—'विशिष्टान्तर्गतविशेषणस्य कारणत्वस्वीकारः सत्यत्वस्वीकारश्च न युक्तः, 'एकमेवाद्वितीयम्' इत्युपक्रमविरोधात्' इत्युक्तिर्व्याहता। सदिति यद्युपहितपरम्, तर्हि विशेषणस्य विवक्षितस्याविरोधेनैव एकमित्यादेरर्थो वर्णनीयो भवति। असत्यत्वेपि कारणत्वं भवदिष्टमेव; असत्यात् सत्योत्पत्तेः। अपिच कारणत्वमप्यसत्यमेव हि। तत् सत्येनैव संबन्धुं नार्हति, न त्वसत्येन। कारणवाक्यस्य मुक्तिदशापरत्वं न भवतीति च प्रागेवोक्तम्।

विशेषणस्य विशिष्टस्य वा परिणामित्वे वाचारम्भणवाक्यवैयर्थ्यमिति प्रतिज्ञामात्रम्। आरम्भवादनिरासार्थं तदिति साधितत्वात्। 'मृत्तिकेत्येव सत्यम्' इत्यस्य मृत्तिकोपलक्षितचिन्मात्रं सत्यमित्यर्थः वाक्यादनवगम्यमानश्च, अज्ञातपूर्वत्वात् दृष्टान्तविधया दर्शयितुमशक्यश्च। अपूर्वतया व्युत्पादनीयत्वे तु, सदेवास्ति भविष्यत्यासीत्; वाचारम्भणमन्यन्नामधेयम्; सदेव सत्यमित्येतावतैव वाक्येन भाव्यम्। अतः सांख्यादिरीत्या अनुभवानुसाराच्च श्वेतकेतोः मृद्घटस्थले एकज्ञानेन सर्वविज्ञानं गृहीतं स्यादिति दृष्टान्ते कथ्यमाने आरम्भवादवासनावासितान्तःकरणेन श्वेतकेतुना कथंतायां सूच्यमानायां तं वादं खण्डयितुं वाचरम्भणमिति वाक्यं प्रवृत्तमिति भाव्यम्।

आरम्भवादः कार्यस्य सद्वैलक्षण्यसाधकः; परिणामवादस्तस्यासद्वैलक्षण्यसाधक इति • कार्यमिथ्यात्वसिद्धिरित्यपि मनोरथमात्रम् । तथासति तदुभयस्यैव स्वीकारेण विवर्तवादत्यागापत्तेः । वादद्वयं कथं विरुद्धं स्वीक्रियेतेति चेत्—वादद्वयसिद्धसदसद्वैलक्षण्यरूपार्थद्वयं परं कथं स्वीक्रियेत । आरम्भवादेन कार्यस्यासत्त्वं परिणामवादेन च सत्त्वमिति सदसत्त्वस्वीकार एवास्तु । विरोधिसकलमतसद्भावे स्वमतं स्थापितं भविष्यतीति मन्यमानैश्च पृथक् स्वमतस्थापनं न कार्यम् । तर्कपादे नानामतनिरासोऽपि न कर्तव्यः स्यात् । तस्माद्द्वैतिसंमतोपादानत्वप्रकारस्यालीकत्वात् न ततः कार्यमिथ्यात्वसिद्धिरिति ।

यस्मात् पर्णं पतति तदपादानमाहुः पदज्ञाः
पर्णासंबन्ध्यवधिरयमिति; एवमादीयमानम् ।
कार्यं नित्यं भवति यदुपश्लेषवत्, कारणं तत्
योगार्थस्य स्थितिविद उपैष्यन्त्युपादानरूपम् ॥
योगं लोकप्रयोगं श्रुतिवचनगतिश्चानुरुध्याद्दतेऽस्मिन्
कार्योपादानरूपे चिदचिदुपगते ब्रह्मणि स्पष्टसिद्धे ।
सर्वं संत्यज्य मिथ्यारजतमुखजनिं कल्पयित्वा विवर्तं
चित्रं निर्वर्ण्य चाहुर्यदुत परमुपादानमेतद् विचित्रम् ॥

शुभमस्तु

---

श्रीः

# मिथ्योपादानत्वकल्पनभङ्गप्रसाधगम्

संघाते चिदचित्परत्वयमये मायाऽप्युपादानताम्
अंशे या भजते तया सह स आश्चर्यार्थसृष्ट्यर्थया ।
देवो जीवदुरूहशक्तिगुणया सत्यं जगत् सत्यया
कुर्वन् शश्वदनर्घभव्यगुणभूरस्तु श्रियै श्रीपतिः ॥

मायोपादानत्वान्यथानुपपत्त्या मिथ्यात्वं जगतो गदतामत्र वादे निरासः । मायाशब्दस्य मिथ्यार्थकत्वात् मिथ्याभूतोपादानकं मिथ्येति तेषामुपन्यासः । एतद्वादपरीक्षणप्रवृत्तेन यदि मायाशब्दस्य मिथ्यार्थकत्वं मिथ्यावस्तुन उपादानत्वं तत एवोपादेयस्य मिथ्यात्वञ्चोपपाद्येत, तर्हि स्वाभिमता परीक्षा कृता स्यात् । तदेव विहाय, मायाशब्दस्य पूर्वपूर्वपरिणामहेतुकोत्तरोत्तरपरिणामकवस्तुपरत्ववादिन्या शतभूषण्या मिथ्यात्वं वचनान्तरावसेयमिति वदन्त्या च त्यक्तैवेयमन्यथानुपपत्तिरिति किमेतद्वादपरीक्षया । अनिर्वचनीयमायोपादानकत्वान्यथानुपपत्त्येति विवक्षितमिति लेखनञ्च तत्र मायांशनिवेशवैयर्थ्यान्निरस्यम् । परिणामपरम्पराशालिवस्तु मायेति भामतीपक्षे न वक्तुं शक्यते, विक्षेपशक्त्यभावात् । एवञ्च मायाशब्दस्य मतभेदेनार्थभेद आवश्यके कुत्र शक्तिरिति निर्धारणमशक्यम् । मणिमन्त्रौषधासुरशस्त्रादौ एतदर्थाभावेन गौणत्वं वदता मिथ्यार्थेऽपि गौणत्वं युक्तं स्वीकर्तुम् । अन्यथा मिथ्यार्थे शक्तिस्वीकारे शुक्तिरजतादावपि मायाशब्दस्वरसव्यवहारापत्तेः शतदूषण्यैव दर्शितत्वात् । क्लृप्तकारणं विना भासमानत्वरूपो गुणो हि तत्रापि संभवति ।

मायाशब्दस्य सिंहशब्दवत् विपर्यये यामेतिलाभात् सदसदनिर्वचनीयत्वावगम इति च वार्तम् । सिंहशब्दस्य हिंसेत्येतद्विपर्ययरूपत्वं हकारसकारपौर्वापर्यव्यत्यासात् अकार-इंकारयोर्विनिमयाच्च भवति । न त्वेवमत्र माया इति वर्णद्वयस्य विपर्ययावश्यकता । अविपर्ययेऽपि मापदार्थयापदार्थयोरन्वयसंभ-

वात्। अस्तु वाऽन्वयानुरूपानुसंधानभेद:—तथापि सदसदनिर्वचनीयत्वं दुर्गमम्। या प्रकृति र्मा भूत् अग्राह्या द्वेष्या, सेत्यर्थसंभवात्। 'जहात्येनां भुक्तभोगामजोऽन्य:', 'अनेन साम्यं यास्यामि नानयाऽहमचेतसा', नैकत्वमनया सह' इति तस्या हेयत्वं ह्यवगम्यते। मायाशब्दस्यानेकार्थप्रयोगदर्शनात्'मायां तु प्रकृतिं विद्यात्' इति वाक्यशेषत एवार्थनिर्णय इति यदुक्तम्—तत् तथैवास्तु। वाक्यशेषो वाच्यवाचकभावबोधको वा वाच्यवाचकभावसूचको वा भवतु। स वाक्यशेष: प्रकृतिशब्दस्य सांख्यवेदान्तिसंमतसत्त्वरजस्तमोमयद्रव्यविशेष एव शक्तिग्रहजनक: स्यात्। अत एव, 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति स्मृतिरपि गुणमयद्रव्यशक्तिग्राहिका संगच्छेत। न च प्रकृतिशब्दस्य पूर्वपूर्वपरिणामहेतुकोत्तरोत्तरपरिणामके क्वचित् रूढिर्दर्शिताऽस्ति। वाक्यशेषान्तराभावात्। परिणामिकारणमित्यर्थ इत्यपि न भवद्भि: सुवचम्। प्रकृतिश्चेतिसूत्रे तदर्थाभावात्। तत्रापि तदर्थग्रहे ब्रह्मणोऽपि मायात्वापत्ते:। 'मायां तु प्रकृतिं विद्यात्' इत्यत्रोद्देश्यविधेयभावो यथा तथा वास्तु' इति भवतोपेक्ष्यते, भवता मायाशब्दस्येह मिथ्यार्थकत्वास्वीकारात्। तत्स्वीकारिणा तु मिथ्यात्वस्थापनाय प्रकृत्युद्देशेन मायात्वविधानं पूर्ववाक्यापरामर्शिना स्वारस्यमप्युलंघ्य कृतमस्मदीयैर्निरस्तम्। मिथ्यात्वगमकवचनान्तराभावाच्च न वचनान्तरान्मिथ्यात्वावगम:। स्वाप्निके मिथ्यार्थे मायामात्रसूत्रानुसारेण यदि मायाशब्दस्य शक्ति:, तर्ह्यत्रापि मिथ्यार्थ एव मायाशब्देन भवन्मते किं न गृह्येत।

यत्तु मायामुद्दिश्य प्रकृतित्वस्योपादानत्वस्य विधाने ब्रह्मण्युपादानत्वमभिमतं व्यावर्तितं स्यादिति—तद् भवतोऽपि तुल्यम्। यदपि—न व्यावर्तनायोपादानत्वविधानम्। अपित्वज्ञातज्ञापनमिति पक्षखण्डनम्—सांख्यादिप्रसिद्धतया ज्ञातत्वादेव विधानं न भवतीति—तन्न—मायेतिविलक्षणशब्दप्रयोगात् सांख्यादिप्रसिद्धातिरिक्तत्वशङ्कायां तद्व्यावर्तनार्थत्वसंभवात्। अत एव प्रकृतिशब्दस्य, 'प्रकृतिर्या मयाख्याता', 'प्रकृतिं पुरुषञ्चैव' इत्यादिप्रसिद्धप्रकृतित्वस्यैव विधेयत्वात् तस्य ब्रह्मतो व्यावृत्तिसंभवात् परिसंख्यानमपि भवितुमर्हति। यदपि मायाया:

मायिनश्चोपादानत्वविधानमत्र क्रियते। 'मायिनं तु' इति तुशब्दश्चार्थः। 'मायां तु मायिनं महेश्वरञ्च प्रकृतिं विद्यादित्यर्थ इति'—तदप्यसमञ्जसम्। स्वरसत्यागो मा भूदिति किल मायोद्देशेन प्रकृतित्वविधानं भवतोपीष्टम्। तत एव हेतोर्माय्युद्देशेन महेश्वरत्वविधाने स्वरसे तत्त्यागेन प्रकृतिमित्यस्योत्तरत्रानुषङ्गेण योजना खल्वसमञ्जसा। तथासति महेश्वरपदवैयर्थ्यञ्च। मायां मायिनञ्च प्रकृतिं विद्यादित्यानुपूर्व्या च भाव्यम्। अत एव पूर्वकार्थ्यस्याविवक्षितत्वसूचनाय 'मायिनं तु' इति तुकारप्रयोगोपि। अन्यथा मायिनञ्चेत्येव श्रूयेत। प्रथमतुकारवत् शङ्कापरिहारार्थत्वस्यैव ततोऽवगमनात्। 'मायी महेश्वर' इति ननु ज्ञातमेवेति चेत्—न खल्वत्र महेश्वरमिति व्यक्तिविशेषविवक्षा; ईश्वरमित्येतावतैव तत्सिद्धेः। महांश्चासौ ईश्वरश्चेति महत्त्वविशिष्टेश्वरत्वमत्र विधित्सितम्; व्यापित्वविशिष्टनियन्तृत्वमिति यावत्। व्यापित्वनियन्तृत्वोभयमेव चाऽऽत्मत्वम्। पूर्वपादे मायाशब्दार्थतया लौकिकमायातार्किकसंमतादृष्टपरमाण्वादिव्युदासेन सांख्यादिसंमतप्रकृतिर्बोधिता। मायिनस्तदन्तर्यामित्वमत्रोच्यते। तेन मायाया उपादानत्वे मायिनः कुलालस्येव निमित्तत्वमेव स्यादिति शङ्का परिहृता भवति। मृत्पिण्डानात्मभूतकुलालवैलक्षण्यादात्मत्वादुपादानत्वनिर्विकारत्वादिकं सर्वं मायिनि सुस्थमिति। न केवलमेतत्; तत्त्वत्रयान्तर्गतानां जीवानामप्युपादानकोटिनिवेश इति उत्तरार्धेन दर्श्यते, "तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" इति। अवयवपदेन जीवानामणुत्वात् तदनुगुणव्याप्तिरिति ज्ञाप्यते। एवञ्च यथाश्रुतरीत्यैवोभयोरुपादानत्वस्य वाक्यतः सिद्धौ किमिति क्लिष्टयोजनाश्रयणम्। यत्तु 'महेश्वरशब्दस्य रुद्रपरत्वेष्टौ अलं शिवद्रोहेणे'ति शिवद्रोहशब्देनैव ग्रन्थं पूरयता लिखितम्, तदप्येतेन व्युदस्तम्। उभयगतोपादानत्वप्रकारनिरूपणपरत्वाद्वाक्यस्य मायिव्यक्तिदर्शित्वाभावात्। प्रागेव पुरुषसूक्तकठश्रुतितैत्तिरीयवाक्यानां नारायणपरत्वेन तत्रतत्रावधृतानां घटनेन तत्परत्वस्यात्रोपनिषदि सिद्धत्वात्। 'मम माया दुरत्यया' इति श्रीकृष्णेन स्वकीयत्वेन गीता मायेति स्थिते मायी महेश्वरोऽपि स एव खलु भवितुमर्हतीत्यलं भवतो विष्णुद्रोहेण।

सत्कार्यवादः परिणामवाद इति वदता भवता, 'मायां तु प्रकृति'मित्यस्य परिणाम्युपादानत्वाश्रयणादेव भामतीसंमतं मायाया अनुपादानत्वं श्रुतिविरुद्ध-मिति सिद्धम्। विश्वमिथ्यात्वसाधकं मायामिथ्यात्वं प्रकृतश्रुतिगम्यं न भवतापि स्वीकृतमिति श्रुत्यन्तरमेव मिथ्यात्वसाधकं प्रदर्शनीयमिति किमेतद्वि-चारेण। दोषमिथ्यात्वात् जगन्मिथ्यात्वमिति भामतीकारो न वक्तुमर्हति। दोषमन्तरा वस्तुप्रतीतेरेव दोषमिथ्यात्ववादिना वक्तव्यतया दोषानधीनप्रतीति-विषयतया वस्तुसत्यत्वस्यैव सिद्धेः। 'मायाया उपादानकारणत्वं प्रतिज्ञाय विचित्रसृष्ट्युपकरणत्वेन शतदूषणीकृत उपसंहारो व्याहतः' इति कथनञ्चासं-गतम्। उपादानस्य मृदादेः कुलालाद्युपकरणत्वव्यवहारे बाधकाभावात्। असुरकर्तृकच्छेदनाद्युपादानभूते आसुरशस्त्रादावुपकरणत्वस्येष्टत्वात्। मायावि-वारणायोपकरणशब्दप्रयोगः। आसुरशस्त्रादौ मायाशब्दस्य लाक्षणिकत्वं शतदूषणीस्वीकृतमितीदमपि भवन्मायैव। विचित्रसृष्ट्युपकरणे शक्तेरेव तदिष्ट-त्वात्। मायाशब्दस्य ज्ञानार्थकत्वं शक्त्यन्तरेण वाऽन्यथा वेति विचारेपि आसुरशस्त्रादिविषये विवादाभावात्। एवं कार्ये मायाशब्दप्रयोगः क्वाचित्को लक्षणया निरुह्यताम्। अथापि कारणे मुख्यत्वमेव।

यत्तु "अचेतना परार्था च नित्या सततविक्रिया" इति नित्यत्वेन श्रुताया मायाया मिथ्यात्वं न संभवति, मिथ्यार्थस्य निवर्त्यत्वादिति शंकां परिहर्तुमुक्तम्—ब्रह्ममीमांसायामार्हतपरीक्षायां परिणामिनामनित्यत्वस्योक्ततया नित्यत्वं न भवतीति—तदपि स्थवीयः—यदि तत्र 'विकारादिभ्य' इति सूत्रे आदिपदेनानित्यत्वं विवक्षितमिति प्रकृतेरनित्यत्वं वक्तव्यमित्याशयः, तर्हि दर्शितप्रमाणानुरोधेन नित्यत्वमप्यावश्यकमिति उभयमाशयभेददर्शनेनोपपा-द्यम्। सविक्रियस्य वस्तुनो घटादेरिव उत्तरावस्थान्तरप्राप्तिरेव विनाशः। तदेवानित्यत्वं तत्र विवक्षितम्। इह तु नित्येति धर्मिणः सर्वकालसंबन्धित्वा-दभावाप्रतियोगित्वमुच्यते। अवस्थान्तरप्राप्तिरूपमनित्यत्वमस्तीति चात्रैव दर्शितम्, "सततविक्रिया" इति। सिद्धान्ते जीवस्य, 'न जायते म्रियते वा'

इति साक्षादुत्पत्तिविनाशरूपावस्थानङ्गीकारात् जीवे तत्र तदापादनम् । यदि आर्हताधिकरणोक्तमेव भवदिष्टम्, तर्हि 'अन्त्यावस्थितेश्चोभयनित्यत्वात्' इति जीववत् जीवपरिमाणस्यापि नित्यत्वं तत्रोक्तमिति तदप्येष्टव्यम् । तथाच द्वैतापत्तिः । एवं पत्यधिकरणे ईश्वरस्य, 'अन्तवत्त्वमसर्वज्ञता वा' इति असर्वज्ञत्वमापादितमिति अद्वैतिमतेपि तदापत्तिः । न हि कदाचिदसर्वज्ञ ईश्वरोऽस्तीत्यद्वैतिनामपीष्टम् । अथ तद्दूषणं केवलयुक्तिवादमनुरुध्य । तत्रैव भामत्यामत एव, "अस्माकं त्वागमगम्येऽर्थे तद्बाधितविषयतया नानुमानं प्रभवति" इत्युक्तमिति चेत्—तदिदमार्हताधिकरणोक्तेऽप्यतिदेश्यम् । अतः आगमसिद्धं प्रकृतिनित्यत्वमार्हताधिकरणयुक्तिर्न बाधिष्यते । अन्यथा आदिमत्त्वमपि पत्यधिकरणे आपादितमिति तदपि प्रकृतेः स्यात् । आनादिमायावादिनां तदनिष्टमेव । एवं सततविक्रियेत्युक्तयाऽपि मिथ्यात्वाभावः सिद्ध्यति । कथं नु सत्कार्यवादे परिणामातिरिक्तो नाशो द्रव्यस्य । अतो द्रव्यमनिवृत्तमेवेति न तन्मिथ्या ।

एवं तावत् सर्वजगन्मिथ्यात्वसाधकत्वाभिमतानामागमानामर्थान्तरपरत्वस्य प्रागेव सिद्धत्वात् उपादानमिथ्यात्वेन सिद्धेन कार्यमिथ्यात्वस्यानुमानमधिकृत्य प्रवृत्तेऽत्र वादे सर्वमिथ्यात्वग्राहकत्वाभिमतवाक्यप्रदर्शनायोगाच्च उपादानस्य प्रकृतेर्विशिष्य मिथ्यात्वसाधकं प्रमाणं किमिति विचार्य 'मायां तु' इत्यादि न तत्र प्रमाणमित्युपपादितम् । अभ्युपगम्याप्युपादानमिथ्यात्वं तस्य कार्यमिथ्यात्वकल्पकत्वाभाव उपरि शतदूषण्युक्तः अन्यथानुपपत्तित्वाभावमात्रप्रदर्शनाय । कृत्वाचिन्तामात्रमिदम् । तत्र यदुक्तम्, लौकिकवैदिकमर्यादाया अनतिलंघ्यत्वात् असत्यात् सत्योत्पत्तिर्निमित्तकारणमात्रविषयतया संकोच्यते—इति—तन्न—मर्यादानुलङ्घनस्येष्टत्वे हि निमित्तादप्यसत्यात् सत्योत्पत्तिः संमन्तुं न शक्यते; अभिमतोदाहरणसामान्यस्य सत्यात् सत्योत्पत्तिपरतयैव प्राग्व्याख्यातत्वेन असत्यस्यानुत्पादकत्वमेव हि मर्यादासिद्धम् । उपादानोपादेययोः समसत्ताकत्वमेव दृष्टमित्यसत्—मृत्पिण्डसत्ता यावन्तं कालम्,

तावन्तमेव घटसत्तेति नियमाभावात् । न ह्युपादानमुपादेयश्च समायुष्कम् । अथेयं सत्ता न विवक्षिता ; अपितु प्रातिभासिकत्व–व्यावहारिकत्वादिविशिष्टेति चेत्–तादृशसत्ताभेदो भवन्मतेपि कैश्चिन्नेष्यते; अन्यैस्तु सर्वथा नेष्यते, प्रतिभासस्थले वस्तुजनि–सत्ताद्यस्वीकारात। पश्चात् बाधसंभावनाविरहेण व्यावहारिकसत्ताया अप्यनिष्टत्वात् । अतो लोकाप्रसिद्धसत्तात्रैविध्यं स्वयं मत्वा समसत्ताकत्वमेव दृष्टमिति न वक्तव्यम् । यत्तु दृष्टमबाधितसत्ताकत्वम्, तत् निमित्ततत्कार्यविषयेऽपि तुल्यम् ।

अपि च शुक्तिरूप्योपादानं पलवाज्ञानं प्रातिभासिकं व्यावहारिकं वा । नाद्यः, तत्प्रतिभासस्य तद्रूप्योत्पत्तेः प्राक् नियमेनाभावात् । तत्प्रातिभासिकत्वेऽपि तज्जनकमूलाज्ञानं प्रातिभासिकं न वा । प्रथमे प्रपञ्चस्यैव प्रातिभासिकत्वापत्तिः । द्वितीये तयोरज्ञानयोर्व्यावहारिकत्वप्रातिभासिकत्वरूपं सत्तावैषम्यम् । अन्त्ये पलवाज्ञानशुक्तिरजतयोः सत्तावैषम्यमिष्टं भवति । अतः समसत्ताकत्वमसंभवि । यस्तु सद्विवर्तवादः—'अविद्यारूपकारणात्मना अधिष्ठाने सतामन्तःकरणवृत्त्या तद्विषयत्वे निवृत्ते भानमात्रमेव सर्वेषाम्, न त्वसतामुत्पत्तिः' इति । तत्र 'तद्विषयत्वे' इति पदस्य कोऽर्थः अविद्याविषयत्वे इत्यर्थ इति चेत्—न—जडानामविद्याविषयत्वासंभवस्य भवदिष्टत्वात् ; कार्यावच्छिन्नचैतन्यस्यान्तःकरणवृत्त्या अज्ञानविषयत्वनिरास इति चेत्—तत्रापि, कार्यांशे अविद्याविषयत्वाभावात् । विषयतावच्छेदकत्वमपि नास्ति। अविषयस्य विषयतावच्छेदकत्वासंभवात् । चैतन्ये कार्यावच्छिन्नत्वमपि न भवति । सत्यमिथ्यावस्तुनोः संसर्गायोगात् । अपनेयाविद्याया अभावाच्च कार्याणां सर्वदा सत्त्वे सर्वदा भानं स्यात्, असत्त्वे वा भानानर्हत्वे वा कदापि भानं न स्यात् । कारणात्मनाऽधिष्ठाने सतां कार्याणामित्यप्ययुक्तम्—कारणस्याज्ञानस्याधिष्ठाननिष्ठत्वाभावात् । कारणात्मना सतामित्यनेन कार्यात्मना तदसत्त्वस्यांगीकृतत्वाच्च कथं तेषामुत्पत्त्यभावोक्तिः । "न वा भानं पूर्वमसत्" इति सर्वथैवायुक्तम् । कार्यनित्यभानस्वीकारापत्तेः,

कारणात्मना वा अधिष्ठानात्मना वा भानमस्तीति चेत्—यदि तान्यपि सन्ति, तद्भानमप्यस्ति, एवं सति अन्तःकरणवृत्त्या किं क्रियते,। अन्तःकरणवृत्तिश्चेयं सत्कार्यवादे सती वा असती वा। आद्ये सर्वदा सर्वं भायात्; अन्त्ये चासत्कार्यवाद एव। अपि च भामतीमते अविद्यात्मना अधिष्ठाने सन्ति कार्याणीति न शक्यं वक्तुम्; विक्षेपशक्त्यभावात्। एवं कार्यमिथ्यात्वे कारणमिथ्यात्वमिति विपरिवर्तोपि न युक्तः। शुक्तिरजतस्य प्रातिभासिकत्वेऽपि अज्ञानस्य तत्त्वज्ञाननाश्यस्यापि व्यावहारिकत्वात्। अस्तु तावदिदं प्रासङ्गिकम्। मायाया मिथ्यात्वाभावात् तदन्यथानुपपत्त्या कार्यमिथ्यात्वं दुर्वचमिति सिद्धम्॥

अदृष्टं मायेति व्यवहरति सत्यं ह्युदयनः
दुरुन्नीतीत्येवं स्मृतिनिगमलोकव्यवहृतेः।
पराशक्याश्चर्योद्भवकरणमित्यर्थ इषितः
न मिथ्यात्वं सिद्ध्येत् क्वचिदपि च मायेति वचनात्॥

निर्हेतुकेशननियन्त्रितसर्ववस्तुः
सृष्टिस्थितिप्रलयरूपविधाः क्रमेण।
आवर्तयन् मुहुरशेषहितः प्रपन्नान्
आदृत्य तारयति नित्यनिजां स मायाम्॥

शुभमस्तु

श्रीः

# *कार्यानुपपत्तिभङ्गप्रसाधनम्

स्रष्टारं प्रकृतिश्च ये श्रुतिगणाः प्रख्याप्य तत्साधकान्
शक्तिज्ञानबलैश्वरत्वकरुणास्वामित्वमुख्यान् गुणान् ।
उत्तुङ्गानवबोधयन्ति नियतांस्तस्यैष सत्यैर्गुणैः
लीलाभोगसमृद्धिदैश्च विभवैः श्रीमान् स्थिरो दीव्यति ॥

नित्यशुद्धनिर्विकारब्रह्मोपादानत्वान्यथानुपपत्त्या मिथ्याभूतमायोपादानत्वान्यथानुपपत्त्या च जगतो मिथ्यात्वमभिमतमधस्तात् वादद्वयेन निरासि। अत्र कार्यानुपपत्त्या सर्वमिथ्यात्वमुच्यमानं निरस्यते। कार्यानुपपत्तिर्नाम यथा यथा कार्यस्योत्पत्तिर्वर्णिता, तस्य प्रकारस्य सर्वस्यानुपपन्नता—परमार्थतः कार्यस्यैवाभावः। तथाच कार्यं किञ्चिद्भवतीति वर्णयितुमशक्यमिति सर्वमिदमनिर्वचनीयमिति पूर्वपक्ष्याशयः। अतः कार्यानुपपत्तिभङ्ग इत्येव वादस्य नाम। तदिदं चण्डमारुतोपक्रमवाक्यादपि सुज्ञानम्। अतः अशुद्धमुद्रणमनुरुध्य कार्यान्यथानुपपत्तिभङ्ग इति पूर्ववादवासनामूलनामकरणस्यादरणमयुक्तम्। यथा उपादानत्वमन्यथाऽनुपपन्नं मिथ्यात्वं साधयति, तथा कार्यमन्यथानुपपन्नं सत् मिथ्यात्वमाक्षिपतीति अत्र वक्तुं न शक्यते। उपादानत्वस्य तत्र वादेऽङ्गीकृतत्वात् कार्यस्यात्र वादेऽङ्गीकाराभावात्। कार्यत्वासंभवस्य तन्मूलकं कार्याभावस्यैवात्र प्रतिपादनात्। अतो मिथात्वमुखेन कार्यत्वोपपादनस्यात्राकरणात् कार्यानुपपत्तेरेव पूर्वपक्षे कथनात् तद्भङ्गार्थोऽयं कार्यानुपपत्तिभङ्गवाद इत्येवंनामा।

ननु पूर्ववादयोरुपादानत्वं पूर्वपक्षिसंमतमिति दर्शितत्वात् कस्यचित् कार्यत्वाभावे तत् प्रति उपादानत्वस्य क्वचिदुत्तयसंभवात् कार्यत्वं स्वीकर्तव्यमिति चेत्—सत्यं तत्र वादे कार्यत्वं जगति स्वीकृतमेव। इह तु यथाकथञ्चिज्जगन्मिथ्यात्वस्थापनैदम्पर्यात् पूर्वपक्षी जगतः कथमपि कार्यत्वा-

संभवादनिर्वचनीयत्वमभिमन्यते। अत्र तदनन्यत्वाधिकरणशाङ्करगतिरवधेया— पूर्वं भोक्त्रापत्त्यधिकरणे एकब्रह्मकार्यत्वे भोक्तृभोग्ययोः भोक्तृत्वादिव्यवस्था न स्यादित्यशंक्य भोक्त्रादिपदार्थानां प्रामाणिकत्वं कृत्वा समाधानमेकमुक्तम्। परिहाररहस्यं तु तदनन्यत्वसूत्रेणोद्धाट्यते। ब्रह्मातिरिक्तस्य भोक्त्रादेः पदार्थस्यैव परमार्थतोऽभावात् कस्याविभागापत्तिराशंक्यते। न हि वस्तुतो ब्रह्मजन्यं जगदिति ब्रूमः। किंत्वध्यारोपापवादेन सर्वाभावप्रतिपादनपद्धति-रेकेयमिति। अत उत्पत्त्यसंभवात् कार्यानुपपत्तिरत्र विवक्षितेति।

अस्तु वा कार्यत्वान्यथानुपपत्तिभङ्गवाद इत्येव नाम। एवञ्चाधिक-दूषणस्यावकाशः कुतो भवति। तथाहि—कार्यत्वान्यथानुपपत्तिरित्यनेना अयमर्थो विवक्षितः—यथा ब्रह्मगतमुपादानत्वं कार्यमिथ्यात्वमन्तराऽनुपपन्नं सत् मिथ्यात्वं प्रकल्प्य स्वयं विवर्तोपादानत्वरूपं निष्पन्नम्, तथा जगन्निष्ठं कार्य-त्वमपि कार्यमिथ्यात्वमन्तराऽनुपपन्नं सत् तदाक्षिप्य स्वयं विवर्तकार्यत्वरूपं निष्पन्नमिति। तत्र तदनन्यत्वसूत्रान्तभाष्येण, "सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह—अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियाञ्चाश्रयति, सगुणेषूपासनेषूपयोक्ष्यत इति" इत्यनेनेदमुक्तम्—यत्—कार्यप्रपञ्चो वस्तुतो नास्ति, ब्रह्मणि कल्पितत्वात्। अतो विवर्तप्रक्रियैव। एतज्ज्ञानं सर्वबाधार्थमुपयुज्यते। लोकव्यवहारनिर्वर्तनं तु परिणामवादाश्रयणेनैव। तस्मिंश्च परिणामवादे 'स्याल्लोकवत्' इति समुद्रफेनतरङ्गरूपदृष्टान्तोपन्यासः। न हि मोक्षातिरिक्तफलकामिनां सर्वाभावप्रतिपादकविवर्तवादविज्ञानमनुकूलम्; प्रत्युत बाधकमेव। विवर्तवादे पुरुषबुद्धिकल्पितत्वस्यैवेष्टत्वेन तत्रेश्वरः स्रष्टा कश्चिद्वस्तुतो न भवति। ततः, 'सर्वज्ञात् सर्वशक्तेः जगज्जन्मस्थितिलयाः प्रवर्तन्त' इति प्रतिज्ञानं परिणामवादे स्थित्वेति। अस्मिन् पक्षे परिणाम्युपादानं किम्। न तावद् ब्रह्म; निर्विकारत्वश्रुतिविरोधस्य व्यवहारदशायां परिहारासंभवप्रसंगात्। मायेति चेत्—ब्रह्मण उपादानत्वं तर्हि त्यक्तं भवेत्। विवर्तोपादानत्वं तु व्यवहारदशायां दुर्वचम्। उपादानभूतमायाधिष्ठातृत्वादुपादानत्ववाचोयुक्ति-

रिति चेत्—स्वमते अभिन्ननिमित्तोपादानत्वं ब्रह्मणि मुख्यं नोक्तं भवतीति विमृश्यताम्। परमार्थरीतिमनुसृत्य विवर्तवादे च निमित्तत्वांशो न भवति कल्पनायां स्रष्टुरनपेक्षितत्वात्। अतोऽभिन्ननिमित्तोपादानत्वं भवन्मतेऽनुपपन्नम्। एवं विवर्तवादे कार्यत्वकारणत्वे किञ्चिद्रूपे जगद्ब्रह्मणोः स्वीक्रियेते एव। अत एवानिर्वचनीयस्योत्पत्तिरिष्यते। तथाच सत्यत्वपक्षे कार्यानुपपत्तिरुद्भाटिता विवर्तवादेऽपि प्रसरति। तदुच्यते—

विवर्तरूपं कार्यं किं कारणेन संबद्धं विवर्त्यते, उतासंबद्धम्। आद्ये संबन्धाश्रयतया द्वयोरपि सत्त्वाविशेषात् किं कस्य कारणं स्यात्। असंबद्धत्वे अविशेषात् सर्वं सर्वदा विवर्तेत। तथा कार्यस्य भिन्नत्वे भिन्नत्वाविशेषात् सर्वं सर्वदा विवर्तताम्। अभिन्नत्वमयुक्तम्; तथासति कार्यकारणभावस्यैव दुर्वचत्वात् नियतपूर्वसतः कारणत्वात् नियतोत्तरसतश्च कार्यत्वात्। एवं कारणमविकृतं सत्, उत विकृतं सत्। आद्ये सर्वदैव कारणवत् विवर्तस्यापि सत्त्वापत्तिः। तथा च कार्यकारणभावभङ्ग एव। अन्त्ये सा विकृतिरपि विकृतादविकृताद्वेति विकल्पावतारादनवस्था। अतो विवर्तोपादानत्वमपि ब्रह्मणो न युक्तम्। सत्कार्यवादस्तार्किकैर्निरस्तः। असत्कार्यवादश्च सांख्यैः। अनिर्वचनीयोत्पत्तिवादश्चास्माभिः। तथाच कार्यकारणभाव एव न भवतीति अधिष्ठानारोपादीनामपि दुर्वचत्वात् सर्वं व्यवहारपदं निर्गुणब्रह्मणा सह नास्तीति शून्यमेव स्यात् तत्त्वम्।

यदि तु, "अनिर्वचनीयत्वं मिथ्यार्थस्य शुक्तिकारजतादिस्थले प्रत्यक्षसिद्धम्। न हि दृष्टेऽनुपपन्नं नाम" इति शतभूषण्यामत्रोक्तम्, "तथापि लौकिकवैदिकमर्यादा नोल्लङ्घनमर्हति" इति पूर्ववादोक्तश्चाद्रियते, तर्हि दृष्टस्यापह्नवायोगात् किं कथं दृश्यत इत्येव विचारणीयम्। तथाचानिर्वचनीयवादः असत्कार्यवादश्च शून्यवादवत् प्रत्यक्षाननुकूलः; सत्कार्यवाद एव दृष्टानुगुणत्वात् ग्राह्य इति स्थास्यातीति मन्तव्यम्। अत एव शाङ्करभाष्येऽपि, 'अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियाञ्चाश्रयती'ति भाषितम्। तेन लोकदृष्टः कार्यकारण-

भावः परिणामपरिणामिभाव एव, नान्य इति स्पष्टम् । इदञ्च तदनन्यत्वसूत्रान्ते उक्तम्, भोक्त्रापत्तिसूत्रादीनां पूर्वभागे निविष्टानामिव, तदनन्यत्वसूत्रपश्चाद्भाविनाम्, "भावे चोपलब्धेः" इत्यादीनामपि प्रायः परिणामवादमनुरुध्यैवार्थवर्णनमृजु भवतीति सहृदयं मनसि निधार्यैव । न हि पटोपलब्धौ नियमेन तन्तूपलब्ध्यन्तर्भाववत् सर्पोपलब्धौ रज्जूपलब्ध्यन्तर्भावो भवति । अत एव रज्जुसर्पाद्युदाहरणं भाष्येऽपि सूत्रार्थत्वेन नादृतम् । किंतु प्रकृत्यधिकरणे नविलक्षणत्वाधिकरणेऽन्यत्र च सर्वत्र परिणाम्युपादानं प्रसिद्धमेव दर्शयन् सत्कार्यवादं समर्थयते । अतः, 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायेन कुतर्कैः प्रत्यक्षापलापमकृत्वा कार्यसद्भाव एव स्वीकर्तव्यः । अत एव भामतीकारोऽविद्याया दोषविधया निमित्तत्वमात्रे विवर्तवादरूपपारमार्थिकदृष्ट्या मन्वानोऽपि परिणाम्युपादानत्वमप्यन्वारोहति तत्रतत्र, 'सूक्ष्मं तु तदर्हत्वात्' इत्यादौ । अतः प्रत्यक्षानुरोधेन शतदूषण्यामत्र वाद उपपादितरीत्या कार्यानुपपत्तिपरिहारः कार्यः ।

एवं सति पूर्वापरसर्वसूत्रगतिमनुसृत्य तदनन्यत्वसूत्रमपि परिणामवादपरतयैव व्याख्यातुं युक्तं शाङ्करभाष्येऽपि । विवर्तवादानुसारेण कृतस्य व्याख्यानस्य सूत्रार्थत्वासंभवादपि तथा । अत्र हि तदनन्यत्वमित्यस्य ब्रह्मव्यतिरेकेण परमार्थतोऽभाव इत्यर्थो न शाब्दः । कार्यं स्वीकृत्य तस्य ब्रह्मैक्यमत्रोच्यते ; न तु कार्याभावः । अनिर्वचनीयस्य च मिथ्याभूतस्य ब्रह्मैक्यं न संभवतीति उपादेयमुपादानादनन्यदिति न भवद्भिर्वक्तुं शक्यते । अत एव वाचस्पतिमिश्रेण समन्वयाधिकरणे भेदाभेदपक्षखण्डनेन कार्यकारणयोरभेदः तात्त्विकः, भेदः कल्पित इत्युक्तवता अत्र प्रबुद्धेनोच्यते, अभेदोपि नास्तीति । अत एव अनन्यत्वपदमन्यथा व्याख्यायते । तत्तत्कार्यावच्छिन्नचैतन्यपर्यन्तस्योपादेयपदेन ग्रहणादैक्योपपत्तिरिति चेत्—अस्मन्मत इव यदि विशिष्टस्य कार्यत्वमिष्टम्, तर्हि तत् युज्येत ; न त्वन्यदा । एवञ्च विवर्तवादस्त्यक्तो भवति । चैतन्यस्य तत्तदवच्छिन्नत्वं भवन्मते दुर्वचमिति च प्रागेवोपपादितम् ।

तथा 'आरम्भणशब्दादिभ्य' इति चानन्वितम्। मिथ्यात्वसाधकं हि वाचापदं भवदभिमतम्। वाङ्मात्रत्वाद् वस्तु नास्तीति प्रदर्शनमारम्भणशब्देन कथं स्यात्। प्रत्युत आरम्भणमिति किञ्चिदारम्भस्योक्तत्वात् आरभ्यस्यापलापो न कार्य इत्येव सूत्रोक्तं स्यात्। विशिष्य आरम्भणशब्दग्रहणं तार्किकमतस्येव सांख्यमतस्यापि निरासेनाभिमतसत्कार्यवादप्रदर्शनायेत्यपि स्यात्। तदनन्यत्वमिति उपादानोपादेयैक्यमुक्तम्, ततस्तार्किकमतानभिमतिः स्पष्टा। तर्हि कार्याणां कार्यरूपेणैव तिले तैलवत् कारणान्तर्भावं कालविशेषेऽभिव्यक्तिमात्रञ्च मन्यमानः सांख्योऽपि निराकार्य इति आरम्भणमिति श्रौतपदग्रहणम्। आरम्भणशब्दश्रवणात् किञ्चिदारम्भस्तावदेषितव्यः; न तु सर्वस्य प्रागेव सिद्धस्याभिव्यक्तिमात्रम्। तत्रारम्भवादस्तार्किकेष्टोऽत्र न स्वीकार्यः; द्रव्यारम्भपक्षे उपादानोपादेययोरैक्यायोगात् उपक्रान्तस्यैक्यनिर्देशस्य, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च भङ्गात्। अतो द्रव्यैक्ये सति अवस्थामात्रारम्भ इति तेन दर्श्यते। एवञ्च श्रुतौ 'वाचारम्भणं विकार' इति विकारपदमवस्थामात्रपरम्। आरम्भणमिति नपुंसकनिर्देशः विकारनामधेययोर्द्वयोर्विशेष्यत्वात् नपुंसकैकवद्भावेन। अतो घटत्वादेरारम्भ एव, न त्वभिव्यक्तिरिति उत्पद्यत इति व्यवहारस्यावस्थामादाय निर्वाह्यत्वात् द्रव्यानन्यत्वमविचाल्यमिति भावः। अनेन घटत्वादेर्नित्यजातित्वपक्षोपि परास्त आरम्भणशब्देन। तदत्रारम्भशब्दो मिथ्यात्वनिषेधकोऽपि भवतीति मन्तव्यम्। अत्र पक्षे कर्ता विकारो नामधेयञ्चारभ्यत इत्यर्थः। श्रीभाष्यदर्शितेऽर्थान्तरे तु मृद्द्रव्येणेति पदाध्याहारः; आरम्भशब्दार्थश्चान्यः। तत्र चौचित्यमन्यदित्यलम्। एवं स्वरसमर्थं परित्यज्य शाङ्करभाष्ये मिथ्यात्वपरतयाऽन्यथाव्याख्यानं नूनं मतस्यासौत्रत्वं मा भूदिति मत्यैव।

आस्तामेतत्। यथाकथञ्चिदनिर्वचनीयस्याप्युत्पत्तिस्वीकारात् तत्रोपादानं सहकारिकारणञ्चाभिमतमेवेति तत्रानुपपत्तिपरिहारस्य स्वयमपि कार्यतया प्रसिद्धकार्यकारणभावत्यागेनान्यादृशकार्यकारणभावकल्पनम्, तदुपयोगितया अज्ञानादिवस्तुकल्पनम्, तत्साधनाय शुक्तिरजतादिदृष्टान्तानिर्वचनी-

यत्-कल्पनम्, तत्र पल्लवाज्ञानपरिचिन्तनम्, शुक्तेर्विवर्तोपादानत्वस्य स्वयं प्रथममुपपादनार्थंगृहीतस्य त्यागेन शुक्त्यवच्छिन्नचैतन्योपादानत्वकल्पनमित्यादिकमपेक्ष्य, अनुभवसिद्धवस्तुतत्कारणभावरक्षणमेव श्रेयः। एवं तर्हि कथं जगतो मिथ्यात्वमिति चेत्—मा भूत्। मिथ्यात्वाभिमानेपि विवर्तोपादानत्वकल्पनादिकं व्यर्थमेव। प्रतीयमानत्वे सति बाध्यमानात्वादेव तत्संभवात्। प्रतीयमानत्वं प्रत्यक्षम्। बाध्मानत्वं श्रुतिगम्यम्। एवमेव सर्वनिर्वाहे किमिति अद्वैतिभिरधिकः परिश्रम ऊढो विवर्तोपादानत्वादिगन्धर्वनगरनिर्माणेनेति चेत्—श्रूयताम्। शुक्तिरजतादिमिथ्यास्थले उत्पत्तिनाशयोरदर्शनात् सृष्टिस्रष्टृतदुपकरणाद्यप्रसक्तेः प्रपञ्चविषये च तत्सर्वसद्भावस्य श्रुतिशतसमधिगतत्वात् कथं मिथ्यात्वमिति शङ्कायाम्, शुक्तिरजतादिस्थलेऽपि सर्वकल्पनं तैरारब्धमिति। तदसंभवस्त्वनुभवविरोधादेव सुवचः।

विशिष्याप्युपपाद्यते—शुक्तौ कदाचित इदं रजतमिति ज्ञानमुत्पद्यमानं रजतांशेऽप्यपरोक्षतयाऽनुभवसिद्धमिति तदुपपादनार्थमनिर्वचनीयरजतोत्पत्तिः ःीक्रियते। सेयमुत्पत्तिरनुभूयमाना न भवति। रजतं यद्युत्पद्यमानतादशायामपरोक्षम्, तर्हि तदुत्पत्त्याप्यनुभूयमानयैव भाव्यम्। एवं रजतबाधानन्तरं रजतं नष्टमित्यपि प्रतीतिः स्यात्। न च शुक्तेः पूर्वस्थितत्वेन गृहीतत्वात् तत्तादात्म्यस्य रजते गृह्यमाणत्वात् रजते उत्पाद्यमानत्वं न गृह्यत इति वाच्यम्—इदंरजतमिति ज्ञानस्य शुक्तौ पूर्वकालस्थितत्वावगाहित्वाभावात्। इदमंशविषयकान्तःकरणवृत्तेः रजतविषयकाविद्यावृत्तेश्च भिन्नतया इदमंशवार्तानभिज्ञया अविद्यावृत्त्या रजतेन सह तदुत्पत्तिविषयकत्वे बाधकाभावात् उत्पत्तेश्चाग्रहणादुत्पत्तिर्नास्तीत्येवावसीयते। अनुभूयते च, नात्र रजतमुत्पन्नमिति। किञ्चापूर्वरजतोत्पत्तिं स्वीकुर्वाणैरपि एकविशिष्टज्ञानानुभवो न रक्षितो भवति। एवमपरोक्षत्वनिर्वाहार्थमपूर्वोत्पत्तिस्वीकारिभिरपरोक्षत्वोपपादनेऽपि चाक्षुषत्वानुभवो नोपपाद्येत। रजतं चक्षुषा पश्यामीति हि लौकिकोऽनुभवः। न च भवन्मते चक्षुरिन्द्रियसंनिकर्षतदधीनान्तःकरणवृत्तिसंबन्धो रजते इष्टः। यदि त्विदमर्थ-

चाक्षुषत्वमेव तत्तादात्म्येन गृहीते रजते आरोप्य व्यवह्रियत इत्युच्यते, तदिदमपरोक्षत्वांशेऽपि तुल्यमिति किमर्थमपरोक्षत्वोपपत्त्यर्था रजतोत्पत्तिकल्पना। रजतोत्पत्तिपक्षादृतकल्पनासहस्रात् अपरोक्षत्वनिर्वाह एकः चाक्षुषत्वविषये क्लृप्तरीत्या स्वीकर्तुमुचित इति महल्लाघवं तावदवधानमर्हति।

अपिच शुक्तिधर्मिणो रजतस्य च पृथक्पृथग्वृत्त्या विभिन्नया परस्परवार्तानभिज्ञया ग्रहणे इदमर्थरजतयोरैक्यभानं कथम्। शुक्तिरजतयोर्भेदाग्रहमात्रम्, न तु तादात्म्यग्रह इति तु अख्यातिवादिनां पक्षः, न भवताम्। तादात्म्यरूपानिर्वचनीयवस्तुग्राहकाविद्यावृत्त्यन्तरस्वीकारे तत्तादात्म्यरजततदधिष्ठानशुक्तीनां संबन्धग्राहकमन्यदन्वेषणीयम्। शुक्तिविषयकान्तःकरणवृत्तिरजतविषयकाविद्यावृत्त्युभयप्रतिबिम्बितं चैतन्यं शुक्तिरजततादात्म्यग्राहीति चेत्—न—वृत्तिप्रतिम्बितचैतन्यस्य वृत्तिविषयातिरिक्तग्राहकत्वायोगात्। तादात्म्यश्चेदं पारमार्थिकमनिर्वचनीयं वा। नाद्यः, तस्यानिर्वचनीयरजतप्रतियोगिकत्वायोगात्। नान्त्यः, पारमार्थिकशुक्त्यनुयोगिकत्वासंभवात्। शुक्तितादात्म्यस्य शुक्तौ क्लृप्तत्वेपि तस्य रजतप्रतियोगिकत्वमविद्याकल्प्यमेवेति रजतकल्पकसामग्रीवत् तत्कल्पकसामग्र्यपि कल्पनीयैव। रजततादात्म्ये रजते क्लृप्ते रजतप्रतियोगिकत्वस्य क्लृप्तत्वेपि शुक्तितादात्म्ये रजतप्रतियोगिकत्वं हि कल्पनीयमेव। एवं शुक्तिवृत्तिरजतवृत्तिप्रतिबिम्बितचैतन्यमेकमिति किं प्रतिबिम्बाभिप्रायेणोच्यते, उत बिम्बाभिप्रायेण, आद्ये वृत्तिभेदेन तद्भेद एवेति कथमैक्यम्। अन्त्ये बिम्बस्य सकलवृत्तिसाधारणत्वात् यावद्विषयकवृत्त्युत्पादः, तावत्सु वस्तुषु चैतन्येन तादात्म्यावगाहनप्रसंगः। क्वचित् तादात्म्यावगाहनम् क्वचित् संबन्धान्तरावगाहनमित्यत्र नियामकमपि न स्यात्। बिम्बमिति च किं शुद्धस्य ग्रहणम्, विशिष्टस्य वा। नाद्यः, शुद्धस्य निर्विषयकतया वस्तुतत्तादात्म्यादिग्राहित्वायोगात्। नान्त्यः; विशिष्टस्य वृत्तिभेदेन भिन्नतयोभयतादात्म्यग्राहित्वासंभवात्, विशिष्टस्य शुद्धादतिरिक्तत्वे मिथ्यात्वेन जडत्वात् किञ्चिद्भासकत्वमपि न भवति। अपिचापरोक्षत्वनिर्वाहायानिर्वचनीयकल्पनेम

वृत्तिद्वयस्वीकारे भ्रमस्य विशिष्टैकज्ञानत्वानुभवभङ्गः । तदर्थमन्यथाख्यातिस्वीकारे चापरोक्षत्वभङ्गोपि नास्ति । दोषस्यैवापरोक्षत्वं प्रति प्रयोजकत्वकल्पनात् उक्तविधायासानामनवकाशात् । क्लृप्तैव चान्यथाख्यातिरनुमित्यादिपरोक्षभ्रमे । अन्यथा तत्राप्यनिर्वचनीयकल्पने इदंरजतमिति अविद्यावृत्तेः प्रत्यक्षत्वस्य क्लृप्तत्वात् पर्वतो वह्निमानित्यनुमितेरपि प्रत्यक्षत्वप्रसंगः । परामर्शस्याकारणत्वप्रसंगश्च; प्रत्यक्षप्रमायां चक्षुरादेरिव प्रमात्मन्यनुमितावेव अविद्यातिरिक्तकारणस्य युक्तत्वात् । रजतादेरपरोक्षत्वानुभावानुसारेणैवानिर्वचनीयकल्पनात् अनुमेयानां परोक्षत्वस्य निर्विवादतया तत्कल्पनानवकाशाच्च । एवं शाब्दबोधादावपि द्रष्टव्यम् । न केवलं परोक्षे ; लोहितः स्फटिक इत्यादीन्द्रियसंनिकृष्टसर्वपदार्थविषयकभ्रमेऽप्यनिर्वचनीयाभावः परिभाषादावुपपादित एव । एवं शुक्तौ रजतबुद्धौ जातायां यत् रजतमिदं पारमार्थिकमिति ज्ञानम्, तदपि शुक्तिगतपारमार्थिकत्वस्य रजते आरोपेणान्यथाख्यातिरित्यपि परिभाषोक्तम् । अतोऽन्यथाख्यात्या क्लृप्तयैव विशिष्टज्ञानत्वौचित्याय इदंरजतमित्यादावपि निर्वाहो युक्तः ।

अपि च रजतस्य तस्योत्पादकं किम् । वास्तवरजतोत्पादकसामग्र्यास्तावन्न प्रसक्तिः । तथासति तस्यापि वास्तवत्वापातात् । अतः शुक्तित्वाज्ञानं तत्कारणमिति वक्तव्यम् । अज्ञानञ्च चैतन्यमात्रविषयकं जडाविषयकं भवन्मतमिति कथं शुक्तित्वाज्ञानमित्युच्यते । शुक्तित्वावच्छिन्नचैतन्याज्ञानमेव तथोपचर्यत इति चेत्—तर्हि शुक्तित्वावच्छिन्नचैतन्यमहं न जानामीति अज्ञानानुभवेन भाव्यम् । अतो भ्रमस्थले धर्म्यवच्छिन्नचैतन्यगताज्ञानमुपादानमित्येतदयुक्तम् । एवमज्ञानं ज्ञानाभावातिरिक्तं न भवतीति प्रागेव प्रपञ्चितम् । अभावश्च न भावस्योपादानं भवेत् । आत्मनिष्ठश्च ज्ञानाभावो बाह्ये रजते कथमुपादानम् । अथाज्ञानं दोषविधया कारणम्; शुक्तिरेवोपादानं वाच्यम् । तच्च विवर्तोपादानम् । कार्यकारणयोर्विषमसत्ताकत्वादिति चेत्—तत्रापि गोमयवृश्चिकादिस्थल इवोपादानगतसूक्ष्मांशानुवृत्तिरपे-

क्षिता। सर्वथाऽनुवृत्त्यभावे उपादानत्वस्य लोकेऽननुभूतत्वात्। अंशवत्त्वे च पारमार्थिकांशवत् रजतमपारमार्थिकं न भवितुमर्हतीति रजतमपि वृश्चिकादिवत् सत्यमेव स्यात्। अत एव जगतो ब्रह्मविवर्तोपादानमित्यपि निरस्तम्। जगति ब्रह्मांशानुवृत्तेरीषदप्यावश्यकत्वात्। अनुवृत्तौ च जगतोऽपारमार्थिकत्वासंभवात्। ब्रह्मणः सविकारत्वापत्तेश्च। कथं तर्हि तत्त्वज्ञानात् तन्निवृत्तिरिति चेत्— मिथ्याभूतं द्रव्यं तत्त्वज्ञानान्निवर्तत इति परं कुत्र भवद्भिर्दृष्टम्। अप्रातिभासिकं शुक्तित्वाज्ञानं भवतां शुक्तित्वज्ञानसमसत्ताकमपि यथा विवर्तते, तथैवानुभवबलादस्तु। अतो रजतस्य तद्विवर्तत्वमपि न भवति। तथा रजतरूपेण विवृतत्वे शुक्तिः केनापि न दृश्येत। नेदं रजतमिति बाधज्ञानानन्तरं पुनः शुक्तिजननमपि कारणाभावान्न स्यात्। रजतरूपेण विवृतत्वादेव शुक्तेः नेदंरजतमिति बाधो न प्रमा स्यात्। न च नेदं पारमार्थिकरजतमिति तदर्थः। पारमार्थिकरजतस्यावश्यकतायाः प्रागुक्तत्वात्।

अथ दोषजन्यभ्रमविषयस्य कुत्राप्येवमुपादानकारणापेक्षा मा भूत्। शुक्तिरधिष्ठानमात्रमिति चेत्—तर्हि भ्रमविषयजगदुपादानत्वं ब्रह्मणोऽपि न स्यात्। तथा च श्रुतिविरोधः। एवं प्रातिभासिकरजतोत्पत्तिवादे नेदंरजतमिति बाधज्ञानं न युक्तम्। रजततादात्म्यस्येदमर्थे इष्टतया तदभावायोगात्। पारमार्थिकतादात्म्यं नास्तीत्यर्थस्तु न; निषेधस्य सामान्यविषयकस्य विशेषे संकोचायोगात्। अत एव हि निर्गुणमिति वो गुणसामान्यनिषेधे नैर्भयम्। रजतं पारमार्थिकम्, रजततादात्म्यं पारमार्थिकमित्येव भ्रान्तेन गृहीतत्वात् कल्पितपारमार्थिकत्ववति तस्मिन् सति सामान्यतः पारमार्थिकत्वेन तदभावोपि दुर्वचः। एवं पारमार्थिकत्वे पारमार्थिकत्वमस्ति न वेति विमर्शेऽपि भाव्यम्। आपणस्थसत्यरजतभेदरूपविशेषस्तु न बोधनीयः। भ्रान्तिकालेऽपि तस्य गृहीतत्वात्। अनिर्वचनीयास्वीकारे तु रजतसामान्यनिषेधो युज्यते। एवं नात्र रजतमिति रजतसंसर्गाभावविषयकबाधज्ञानेऽप्यनुपपत्तिर्द्रष्टव्या।

अपिच मिथ्यासत्योभयरजतगता रजतत्वजातिरेका, भिन्ना वा। नाद्यः, अपारमार्थिकसंबद्धत्वस्य पारमार्थिके अयोगात्। अत एव हि देहसंयोगादेरात्मनि दुर्वचतया देहाभिमानविषयत्वमेव देहसंबन्ध इति भामत्यादावुक्तम्। अन्त्ये, व्यावहारिकस्य रजतशब्दस्य व्यावहारिकरजतत्वजात्यवच्छिन्नशक्ततया मिथ्यारजते रजतशब्दप्रयोगस्यायोगः। रजतशब्दवाच्यत्वभ्रान्त्या तत्प्रयोग इति चेत्—रजतशब्दवाच्यत्वमनिर्वचनीयं तत्र कल्प्यम्। एवं कल्पितस्य रजतशब्दवाच्यत्वस्य रजतशब्दवाच्यत्वपदं न मुख्यं बोधकमिति मुख्यतया रजतशब्दवाच्यत्वपदबोध्यत्वभ्रमः कल्प्य इत्येवमनवस्था। तत्र सर्वत्रान्यथाख्यात्या निर्वाहे इदं रजतमित्यपि तथाऽस्तु। कथमपरोक्षत्वोपपत्तिः, रजतस्यानुत्पन्नत्वेऽसंनिहितत्वादिति चेत्—उत्पन्नत्वेपि संनिहितत्वेऽपि कथमपरोक्षत्वम्। इन्द्रियसंनिकर्षाभावात्। इन्द्रियसंनिकर्षकल्पनायां तु रजतोत्पत्तिः रजतेन्द्रियसंनिकर्षः ततोऽन्तःकरणवृत्तिरिति वक्तव्यम्। एवञ्च प्रातिभासिकत्वं न स्यात्; प्रतिभासात् पूर्वं प्रातिभासिकास्वीकारात्। रजतं तद्विषयकाविद्यावृत्तिश्च युगपदिति हि सिद्धान्तः। दुर्वचश्च व्यावहारिकेन्द्रियसंनिकर्षः प्रातिभासिके। असंनिकृष्टेऽप्यविद्यामहिम्ना वृत्तिरुदेतीति चेत्—तर्हि आपणस्थरजतमेव अविद्यामहिम्ना तद्वृत्तिर्विषयीकरोतु, किं रजतोत्पत्तिकल्पनेन।

अनिर्वचनीयस्य प्रातिभासिकस्योत्पत्तिरपि दुर्वचा। उत्पत्तिः खल्वाद्यक्षणसंबन्धः। न च व्यावहारिकस्य कालस्य प्रातिभासिकस्य रजतस्य च संबन्धः संभवति।

शुक्तिरजतोत्पादको दोषश्च कः। न तावत् शुक्तित्वाज्ञानम्; अज्ञानस्य ज्ञानाभावस्य दोषताया अदृष्टत्वात्। प्रत्युत ज्ञानोत्पत्तिं प्रति ज्ञानप्रागभावस्य कारणत्वमेव। अतो ज्ञानाभावे सति सर्वकारणसमवधाने ज्ञानोत्पत्तिरेव। अज्ञानं भावरूपमिति चेत्—तत् प्रागेव पराकृतम्। अत एव मूलाज्ञानं वा तूलाज्ञानं वा प्रातिभासिकं प्रति हेतुरिति निरस्तम्। शुक्तिरजतमुत्पद्यत इत्येतदर्थसिद्धौ तन्न्यायेन जगतो मिथ्यात्वक्लृप्तेः

तज्जनकतया मूलाज्ञानकल्पना। ततः प्राक् च मूलाज्ञानमसिद्धमिति तूलाज्ञानस्य भावरूपस्य का प्रसक्तिः। तूलाज्ञानमिदं ब्रह्मवत् पारमार्थिकं न भवतीति कल्पितमेव वाच्यम्। न च तत्कल्पना शुक्तिरजतोत्पत्तेः प्रागनुभसिद्धा। शुक्तिमहं न जानामीति प्रतीतेः रजतग्रहणात् पूर्वमभावात्। रजतदर्शनानन्तरं कार्यान्यथानुपपत्त्या तत् कल्प्यत इति चेत्—तर्हि पूर्वं तदभावात् कार्यं न स्यात्।

ईश्वरेण कल्पितं शुक्तितत्वाज्ञानं रजतोत्पत्तेः प्रागस्तीति चेत्—किमीश्वरः अहं शुक्तिं न जानामीति भ्राम्यति? नैवम्; अस्य जीवस्य शुक्त्यज्ञानं भवत्विति संकल्पयतीति चेत्—तर्हि तदज्ञानं नानादि। असंभावितश्चानादित्वम्। पूर्वं शुक्तिज्ञानवतोपि पश्चात् शुक्तौ भ्रमदर्शनात् तदज्ञानस्य कादाचित्कत्वात्। अतस्तदुत्पत्तेरावश्यकत्वे तस्याज्ञानस्याप्यपारमार्थिकतया कुत्र केन तदध्यासः। चैतन्ये तदध्यासोऽपि मूलाज्ञानवशादिति चेत्—मूलाज्ञानस्य सर्वदा सत्त्वात् सर्वदा शुक्त्यज्ञानापत्तिः। अध्यासे सति प्रतीतेरावश्यकत्वात् अहं शुक्तिं न जानामीति सर्वदाऽनुभवापत्तिः। अयं शुक्त्यज्ञानवानिति ईश्वरस्यानुभवोऽस्तीति चेत्—अन्यकल्पनाविषयभूतं वस्तु अन्यस्य कार्यकरं लोके न दृष्टमिति न तेनाज्ञानेन जीवस्य रजतभ्रान्तिसंभवः। भावरूपाज्ञानस्य लोकानुभवदूरत्वात् तस्य दोषत्वं न भवतीत्युक्तमेव। नन्विदं रजतमिति भ्रान्तेरानुभविकत्वात् दोषेण केनचिदवश्यमेव भाव्यमिति चेत्—सत्यं भाव्यम्। को निषेधति। स कश्चिदस्तु, यो भ्रममुत्पादयेत्। रजतोत्पादकस्तु निषिध्यते। तत्राज्ञानं दोष इति भवन्मतमिति तस्य दोषत्वासंभवो दर्शितः।

अन्यच्च परिमलादिनिरसनेन परमार्थप्रकाशिकायां नयद्युमणिभूमिकायाञ्चानिर्वचनीयोत्पत्त्यसंभवोपपादनं कृतमत्र समुच्चेतव्यमित्यलम्। तर्हि रजतस्यापरोक्षत्वं कथमिति चेत्—उक्तमेव चाक्षुषत्ववदिति। शुक्तिज्ञानगतापरोक्षत्व-

चाक्षुषत्वयोः रजतज्ञाने आरोपात् शुक्तिगतापरोक्षत्वादेः रजते आरोपः । सा च लोहितः स्फटिक इतिवदन्यथाख्यातिः ।

तस्मात् जगदपलापप्रवृत्तैः प्रलोभनाय शुक्तिरजतादिकार्याणामप्युत्पत्तिकल्पने विशेषतः प्रयस्यत इति सर्वतोमुखमद्वैतिनामन्यथाग्रहणम् ।

आस्तामेतत् । एवं मिथ्याभूतस्यापि कार्यस्योत्पत्तिरिति पक्षस्य प्रपञ्चविषय इव शुक्तिरजतादिस्थलेऽप्यद्वैतिभिर्विस्तृततया, परिणाम्युपादानविवर्तोपादानरूपानेकोपादानाङ्गीकाराच्च कार्यकारणभावापलापाभावात्—स्वपक्षविरोधमप्यनालोचयद्भिः यया कयापि विधया कार्यमिथ्यात्वसाधने प्रवृत्तैः कैश्चिदुक्तः, कार्यस्य किञ्चित् कारणमेव न भवितुमर्हतीति पक्षः शतदूषण्यामनूदितः खण्डनकारादिवैतण्डिकमानितोऽपि न तत्त्वजिज्ञासया वादप्रवृत्तैरद्वैतिभिरादरणीय इति तत्खण्डनं शतदूषणीकृतां शतभूषण्यादिभिरनुमोदनीयमेवेति तत्र तदंशपरीक्षणमनुचितमेव । संग्रहेण चाथ परीक्षोक्तं परीक्ष्यते—

ब्रह्म विवर्तोपादानमिति सत्कार्यवादस्यावान्तरो भेद इति यदुक्तम्—तत् सत्यं तथैव भवन्मते । सर्वं मायापरिणाम इति संप्रतिपन्नमित्युक्तं तु न—भामत्यसंमततया तत्र संप्रतिपत्त्यभावात् । विवर्तोपादानस्थले कार्यकारणद्रव्यैक्यमावश्यकमिति सत्यमिथ्यावस्तुविषये तदुक्तेरयोगात् ब्रह्म न विवर्तोपादानं भवितुमर्हतीति चर्वितमेतत् । कार्यं कार्त्स्न्येन संबद्धमसंबद्धं वा भवतीति विकल्प्य दूषणं सद्विवर्तवादरक्षणायेत्ययुक्तम् ; सद्विवर्तवादेपि तद्दूषणस्य प्रसरात् । परिहारश्च सर्वत्र तुल्यः । एवं भामतीप्रस्थानातिरिक्ते प्रस्थाने मायापरिणामस्येष्टत्वादपि इदमद्वैतिदूषणमपि भवेदेव । अत एव परिणामवादस्थापनस्योपरि शतदूषणीकृतस्य स्वानुमोद्यत्वात् तद्दूषणसंरम्भो रभसकृत एव । अत्र संदर्भे सर्वमप्यसंबद्धवाग्जालमात्रमिति किमेतदालोचनेन । सत्कार्यवादासत्कार्यवादौ सुन्दोपसुन्दन्यायेन पराहताविति सद्विवर्तवादः स्थास्यतीत्ययं मन्यते । सद्विवर्तवादोपि सत्कार्यवाद एवेति स्वोक्तमेव स्वय-

मत्र विसरतीति तदद्य स्मारयामः । कार्यं सद्विवर्तभूतत्वात् सदिति असदिति निर्वक्तुमशक्यमिति यदुक्तम्— तेन भवद्वादस्य सत्कार्यवादान्तर्भावो भवत्कृतोऽनुपपन्न इति दर्शितं भवति । अविशेषात् सत्कार्यासत्कार्योभयवादत्वं वा स्यात् । रज्जावारोपितानां सर्पादीनां विवर्तत्वं न लौकिकैः अन्यैस्तान्त्रिकैर्वा संमतमिति न तद्दृष्टान्तेन जगद्विवर्तत्वसिद्धिः ।

'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत् तथा' इति न्यायात् मध्यकालेऽप्यभावसिद्धिरित्ययुक्तम्; न्यायस्यैव निर्मूलत्वात् । 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः' इति भवद्गीता भोगानां दुःखयोनित्वादाद्यन्तवत्त्वाच्चोपेक्ष्यत्वमेवाहेति स्पष्टम् । आद्यन्तवत्त्वं मध्ये सत्त्वञ्चात्रोक्तम् । संस्पर्शजत्वं संस्पर्शोत्तरकालसत्त्वम्; दुःखयोनित्वं दुःखपूर्वकालसत्त्वम् । तेन मध्यसत्त्वमेवोक्तं भवति । मिथ्येति नोक्तम्; किंतु रतिविषयत्वायोगमात्रम् । भवन्मतरीत्या तु भोगवत् दुःखानामपि आदिमध्ययोरिव मध्येऽप्यभावावधारणात् दुःखयोनित्वकथनं भोगप्रवृत्तिप्रतिबन्धकं न स्यात् । 'कार्यमाद्यन्तयोरध्यस्तं मध्येऽध्यस्तत्वादित्यनुमानं साधु' इत्युक्तमप्ययुक्तम्— भवन्मतेऽपि कार्यप्रतीतिपूर्वोत्तरकालयोस्तस्य क्वचिदध्यस्तत्वाभावात् । तथाध्यासे हि सर्वकालसंबन्धो मिथ्याभूतः कार्यस्य स्वीकर्तव्यो भवति । अत एव कार्यं मध्ये अनारोपितम् आद्यन्तयोरनारोपितत्वादित्यप्यापद्यत इत्युक्तं शतदूषण्याम् ।

विवादगोचरो भेदव्यवहारः स्वविषयसर्वभेदानुगतैकवस्तुमात्रालम्बनः भेदव्यवहारत्वात् रज्ज्वादिविषयसर्पभूदलनादिभेदव्यवहारवदित्यनुमानसमर्थनमशक्यम्—भेदशब्देनैकवस्त्ववान्तरभेदग्रहणे जगद्व्यवहारस्य पक्षत्वाभिमतस्य एकवस्त्ववान्तरभेदत्वस्यासिद्धतया आश्रयासिद्धेः । अन्योन्याभाववद्विषयकव्यवहार इत्यर्थे च सर्वस्यापि व्यवहारविषयस्य किञ्चिदन्योन्याभाववत्त्वात् अव्यावर्तकं भेदपदम् । एवं साध्यकोटौ एकवस्त्विति सद्रूपविवक्षया सन्मात्रालम्बनत्वं साध्यमिति न युक्तम् । साध्ये सन्मात्रघटने दृष्टान्ते साध्यसम-

न्वयाभावात्। तत्र हि रज्ज्वाद्यालम्बनत्वमेव; न सदित्यालम्बनम्। अतः एकवस्त्वित्येव निवेशः कार्यः। एवमपि दृष्टान्ते सर्पभूदलनादिव्यवहारे रज्जुमात्रविषयकत्वं न भवति, सर्पत्वादिविषयकत्वस्य स्पष्टत्वात्। अथ पारमार्थिकैकवस्तुमात्रविषयकत्वं साध्यमिति चेत्--अप्रयोजको हेतुः। राज्जुद्वयग्राहिणि इमौ सर्पौ इमे भूदलने इत्यादिव्यवहार इवानेकपरमार्थविषयकत्वस्यापि संभवात्। कस्यचित् व्यवहारस्य मिथ्यासत्योभयविषयकत्वस्य, कस्यचित् सत्यतयैव सर्वविषयकत्वस्य च यथायथं संभवेन मिथ्यासत्योभयविषयकत्वसाधनायोगाच्च। सर्वानुगतैकवस्तुमात्रेत्यस्य स्वविषयाध्यासाधिष्ठानभूतपरमार्थविषयक इति साध्यनिष्कर्षपरत्वे च तत्त्वमसीति ब्रह्मव्यवहारेणानेकान्तः; तस्य मिथ्याविषयकत्वाभावात्। भेदव्यवहारत्वादिति हेतुश्च शुक्तिरजतव्यवहार—रज्जुसर्पव्यवहारसमुदायेऽप्यस्ति। तत्र स्वविषयसर्वानुगतपारमार्थिकवस्त्वभावात् साध्यवैकल्यम्। एवमेकैकव्यवहारेऽप्यस्ति हेतुरिति तत्र स्वविषयसर्वेति साध्यानन्वयादनेकान्तः। अस्य चानुमानस्य, जागरप्रत्ययो मिथ्या प्रत्ययत्वात् स्वप्नप्रत्ययवदिति बौद्धानुमानतुल्ययोगक्षेमत्वात् अनपेक्षितमस्य पृथङ्निरसनम्। श्रुत्युपष्टब्धमनुमानमिति चेत—श्रुतिं विचार्य तदर्थनिर्णयं विधाय पश्चादत्र प्रवर्तनीयम्। किं पूर्वं तद्ग्रहेण। सर्वपारमार्थ्यपरश्रुत्यन्तरबाधितत्वादनुमानस्य।

यत्तु अवस्थारूपेण कार्यस्यासत्त्वांगीकारे असत्कार्यवाद एव गृहीतः स्यादिति अनिर्वचनीयकार्यवाद एव ग्राह्य इति—तदपि न—तदापि सत्कार्यवादाभावात्—अनिर्वचनीयस्योत्पत्त्यभ्युपगमात्। अन्यथा सत्कार्यवाद इत्यत्र सदित्यंशतः कार्येत्यंशतः उभयतश्चासांगत्यम्। द्रव्यसत्त्वमेव सत्कार्यवादार्थ इति निष्कर्षे दर्शितेऽपि गृहीतग्रहणेन व्यर्थमेवमाक्षिप्यते। मायापरिणामवादिस्वपक्षखण्डनमेव भवता क्रियत इत्यप्यवधेयम्।

अथ वैतण्डिकीभूय सत्कार्यवादः अथवा भावात् कार्योत्पत्तिवाद एव स्वपक्षविस्मरणेन खण्ड्यते शतभूषणीकृता—शतदूषण्युक्तं सर्वं खण्ड्यमिति मत्यैव। भावात् मृदः कार्योत्पत्तिश्चेत्—अनुपमृदितमृज्जन्यत्वमप्यस्तु कार्यस्येति। उपमर्दमसृणाया मृद एव कारणत्वमिष्टमिति कोत्र दोषः। न हि केवलादभावात् घटो भवति। पिण्डावस्थायां मृदवस्थानाश इति वचनं बाधितार्थकम्। तथा, 'मृदो घटकारणत्वं वक्तुमशक्यम्; कपालादेव घटोत्पत्तिर्दृश्यत' इति लेखनमप्ययुक्तम्। कामप्यवस्थां पुरस्कृत्य मृद एव कारणत्वात्। कपालाद् घट इति तार्किकाः। प्रायो घटात् कपालमित्येव वेदान्तिनः; 'मही घटत्वं घटतः कपालिका' इति विष्णुपुराणश्लोकमनुरुध्य। एवं 'तन्तवोऽप्युपमृदिता एव कारणम्', 'सतः कारणात् घटाद्युत्पत्तिरिति कथामात्रं स्यात्' इत्यादिकमपि भावाभावविलक्षणत्वमज्ञाने वक्तुं संरभमाणस्यानुभवापलापेन विजृम्भणमात्रम्। मायादीनां भावाभावविलक्षणत्वं ब्रह्मसिद्ध्यादीष्टमित्याह। अत्र सर्वेषामिति केषां ग्रहणम्। प्रापञ्चिकपदार्थानामिति चेत्—तर्हि अज्ञानस्य भावाभावोभयं प्रत्युपादानत्वं कथमुच्यते। सद्विवर्तवाद एवेति स्वपक्षे सदिति कस्य ग्रहणम्। ब्रह्मण इति चेत्—न—ब्रह्मणि सत्त्वरूपधर्माङ्गीकारे सधर्मत्वापातात्। अनङ्गीकारे ब्रह्मगतानां अस्ति भाति प्रियमिति धर्माणां प्रपञ्चेऽनुवृत्तिरिति कथम्। सत्त्वस्य ब्रह्मण्यभावे चासद्विवर्तवाद एव स्यात्। असद्विवर्तवाद इत्यपि वा। मिथ्याभूतस्य विवर्तत्वासंभवश्च प्रागुक्तः। 'अभावादेव भावोत्पत्तिरस्तु' इति प्रतिबन्दी शतदूषणीदर्शितेत्येतन्नैव। घटत्वाद्यवस्थानामभावरूपत्वं भावान्तराभाववादिपक्षे शतदूषण्युक्तम्। तावता तासां भावत्वं नेष्टमिति कथमुच्येत। घटत्वस्याभावरूपत्वकथनमात्रेण, आद्यन्तयोरविद्यमानस्य मध्येऽप्यविद्यमानत्वमप्युपगतं भवतीति स्वयमुत्प्रेक्षणमात्रम्। न हि अतिरिक्ताभावो मा भूदिति भावस्य भावान्तराभावत्वस्वीकारेण भावस्य तस्य तस्य सर्वदैवाभाव उक्तो भवति। न चावस्थाया अभावरूपत्वोक्तिमात्रेणासत्कार्यवादप्रसंगः। अतः सर्वमसंबद्धविस्तरमात्रम्।

कार्यानुपपत्त्या मिथ्यात्वं कल्पनीयमित्येतद्वादार्थः। न तु मिथ्यात्वं सिद्धवत्कृत्य तेन सद्विवर्तत्वरूपकार्यानुपपत्तिसाधनम्। अतो विपरिवर्तनमत्र न युक्तम्। "तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण नासीदस्ति भविष्यति" इति श्लोकः पूर्वाधिगतपञ्चम्यन्तस्योत्तरार्धबोध्यक्रियासु सर्वत्रान्वययोगादशुद्धः। नाशो द्विविधः निवृत्तिर्बाधश्चेति विभजनं तु, घटो द्विविधः पटः शाटी चेति विभजनतुल्यम्। 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्' इति चायुक्तम्। अस्तित्वादेर्ब्रह्मण्यपि कल्पितत्वात्। ब्रह्म सच्चिदानन्दरूपम्, जगदपि तथैव। जगत् नामरूपविकारवदिति ब्रह्मणि सविकारत्वमुक्तं स्यात्। विवर्तशब्दप्रयोगेण विकारवारणासंभवात्। न हि गोमयविवर्ते वृश्चिके सति गोमयस्य निर्विकारता। ब्रह्मणि नामरूपकल्पनामात्रमिति चेत्—तर्हि लोकसिद्धो विवर्तवादो नायम्। सदसनिर्वचनीयत्वञ्चान्ततः अद्वैतसिद्धावपि सदसत्त्वाभाव एवोच्यते। तत्र सत्त्वं कालत्रयावस्थायित्वम्, असत्त्वं कदाप्यभावः। तयोरुभयोरभावश्च किञ्चित्कालासत्त्वविशिष्टकालान्तरसत्त्वम्। इदञ्च नश्वरत्वम्; न तु मिथ्यात्वम्। अतश्च "अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम्" इति पराशरवचनमनुसृतं भवति। 'परमार्थस्तावदनाशी। तदन्यच्च नाशि' इति स्पष्टमुक्तेः। अत्र श्लोके परिणामवाद एवेष्टः, न भवदभिमतो विवर्तवादः।

विवर्तवादपक्षे च आकाशादीनां क्रमिकोत्पत्तिः उत्तरोत्तरस्य पूर्वपूर्वस्मिन् लयश्च दुरुपपादौ; ब्रह्मणि पृथक्पृथक् कल्प्यमानत्वात्। आकाशावच्छिन्नब्रह्मणि वायुः कल्प्यत इति चेत्—केन। ईश्वरेणेति चेत्—ईश्वरकल्पितं वस्तु स एवानुभवेत्, न जीवः, अन्यकल्पितस्यान्येनानुभूयमानत्वासंभवात्। एवमाकाशाद्वायुरित्यादौ आकाशादिपदस्य तदवच्छिन्नचैतन्यपरत्वे लक्षणा। अत्र वायुरिति वायुमात्रं गृहीतम्, वायोरग्निरिति समनन्तरवाक्ये तु वाय्ववच्छिन्नचैतन्यमित्युक्तौ वैरूप्यम्। अवच्छिन्नत्वञ्चेदमध्यासविषयत्वातिरिक्तं दुर्वचम्। वाय्वादिशब्दानां वाय्वाद्यध्यासविषयपरमात्मपरतया प्रयोगश्चा-

प्रसिद्धः। न च—शुक्तिरजतग्राहिणा रजतमत्रास्ति, रजतमानीतमिति व्यवहारे क्रियमाणे रजताध्यासविषयः शुक्तिरेव गृह्यते। तथा ब्रह्मणि आकाशवाय्वादीनामध्यस्तत्वात् आकाशवाय्वादिपदैर्ब्रह्मग्रहणमुपपन्नमिति वाच्यम्—रजतपदेन शुक्तिग्रहणं कदाचिद् भवतीत्येतावता रजतशब्दस्य शुक्तिवाचित्वासंभवात् लक्षणाया एव स्वीकार्यत्वात्। तथा लाक्षणिकत्वस्वीकारश्च वास्तवरजते तद्देशवर्तित्व—आनयनकर्मत्वादिसमभिव्याहृतपदार्थान्वयासंभवात्। इह तु ब्रह्मणो निर्धर्मकत्वेन व्यावहारिकसर्वधर्मान्वयस्य तत्राभावात् तदन्वयस्य व्यावहारिकपदार्थेष्वेव वक्तव्यतया आकाशवाय्वादिपदानां लोकव्युत्पत्तिसिद्धं तत्तदर्थवाचित्वं न भज्यते। न हि शुक्तिरजतानयने शुक्तेरेवानयनकर्मत्ववत् घटमानयेत्युक्तौ ब्रह्मण एव क्रियान्वय इत्यस्ति। अतः प्रसिद्धार्थत्यागेन आकाशावच्छिन्नचैतन्यपर्यन्तार्थग्रहणमनुभवानारूढं सर्वस्य ब्रह्मविवर्तत्वसिद्ध्यधीनलक्षणायत्तमेव आकाशाद्वायुरित्यादौ वाच्यम्।

शोधने चाकाशाद् वायोरुत्पत्तिर्नाम आकाशावच्छिन्नचैतन्ये वायुभ्रम इत्युक्तं भवति। भ्रमात्मकप्रत्यक्षे चाधिष्ठानस्य भानं नियतम्। तत्र शुद्धब्रह्मणोऽधिष्ठानत्वे सदिति अस्तीति वा तद्भानमस्तीति स्यात्। आकाशावछिन्नचैतन्यरूपस्य विशिष्टस्याधिष्ठानत्वे तु तावद्भानस्यावश्यकस्याभावो न युक्तः स्यात्। विशिष्टं नाधिष्ठानमिति चेत्—आकाशस्य वायुकारणत्वत्यागात् क्रमिकोत्पत्तिवादिश्रुतिविरोधः। एवं लयक्रमश्रुतिविरोधोपि भाव्यः। सृष्टिप्रलयादौ तात्पर्यं नास्ति, सर्वमपोह्य ब्रह्ममात्रपरिशेषणार्थमियमुपपादनभंगीआहृतेति चेत्—उपनिषदर्थापलाप्यर्धमीमांसकाभिमानपात्रता संपद्येत। अथवा कथं सर्वसत्यतावादिवैदिकाभिमानः। सौगताभिमान एव स्यात्, कर्मकाण्डार्थस्येवोपनिषदर्थस्यापि प्रायः परित्यागात्। एवं मृत्पिण्डाद् घट इत्यत्रापि मृत्पिण्डाध्यासविषयचैतन्ये घटकल्पनेत्यर्थो वर्णनीयः। मृत्पिण्डे घटभ्रम इत्युक्तं भवति। एवं तु कुलालेनापि नानुभूयते। अन्येषामप्ययं भ्रमोऽनायासेन स्यादिति घटे भ्रान्ताः सर्वे घटस्य निर्मातारः स्युः। को हि नाम भ्रान्त्या कल्पितेष्वर्थेषूत्पत्तिविनाशव्यवहारं लोके कुर्यात्। तस्मादकारणस्थलेऽपि शुक्तिरजतादी-

नां कार्यकारणभावकल्पना नूनं तत्रैव ब्रह्मप्रपञ्चविषयेऽपि वस्तुतः कार्यकारणभावो नास्तीति बोधयित्वा श्रुत्यर्थे स्वयमश्रद्धाजननमनीषयैव। अतो लोकसंमतादसत्कार्यवादात् सत्कार्यवादात् आरम्भवादात् परिणामवादात् विवर्तवादाच्च मिथोभिन्नादभिन्नाद्वा विलक्षणोऽयमद्वैत्यभिमतः श्रुतियुक्त्यनुभवसुदूरः सद्विवर्तवादः तदर्थमनिर्वचनीयवादश्चेत्यलमधिकेन ॥

कार्याणामपि मिथ्यात्वं लोका दवगतं यदि।
ब्रह्मणोऽपि स्वयम्भानात् वेदान्ताः स्युरनर्थकाः ॥

दृष्टान्तान् श्रुतिकथितान् विसृज्य रज्जु-
व्यालादीनिह विनिवेश्य तत्र सृष्टिम्।
आरोप्य व्यपदिशतां विवर्तमिति
स्खालित्यं प्रतिपदमेव साधुलक्ष्यम् ॥

शुभमस्तु

---

श्रीः

## आनन्त्यतत्त्वप्रसाधनम्

देशं कालं सकलमपि वस्त्वक्षतर्कागमेद्धं
स्वायत्तं यः कलयति परः सर्वतः सर्वरूपः।
एवम्भूतस्वकविभवसिद्ध्यैव चानन्तनाम्ना
ख्यातः श्रीमान् अनवधिसमुत्कर्ष एष प्रभुर्नः ॥

जगन्मिथ्यात्वहेतुत्वाभिमतानि निरस्यता।
ब्रह्मणः प्राग् विवर्तोपादानता शातिता ततः।
मायाख्यमिथ्यावस्तूपादानत्वं च निराकृतम्।
कार्यस्यानुपपत्तिर्या मता सा नेति चोदितम्।
अथानन्तमिति श्रुत्यास्तदहेतुत्वमुच्यते ॥

'सत्यं ज्ञानमनन्तं ब्रह्म' इति ब्रह्मण आनन्त्यमुक्तम्। तदानन्त्यं जगन्मिथ्यात्वपर्यवसायीत्यद्वैतिनः। अन्तशब्दो हि सामान्यतोऽवधिवचनः। अवधिशब्दः पूर्वोत्तरद्विविधावधिपरतया प्रयुज्यते इति पूर्वावधिरहितत्वादनुत्पन्नत्वमुत्तरावधिरहितत्वादविनाशित्वञ्चावगम्यते। एष कालपरिच्छेदाभावः। दैशिकावधिग्रहणे च देशपरिच्छेदाभावोऽपि सिद्ध्यति। अन्योऽपि लोकेऽवधिर्भवति, यथा—अस्मादयमुत्कृष्टः, अस्मादयं निकृष्ट इति। तत्र सर्वं जगत् परमात्मगतोत्कर्षावधिभूतम्; जगदपेक्षया तस्योत्कृष्टत्वात्। तस्य किञ्चिदपेक्षया निकृष्टत्वाभावाच्च निकर्षावधिशून्यत्वमपीष्यते। अनन्तशब्दस्यावधिसामान्यनिषेधपरत्वसंभवेऽपि उत्कर्षावधिराहित्यमप्यर्थतया न स्वीक्रियते। निषेधस्यापि विवक्षितविशेषपर्यवसानस्य सर्वसंप्रतिपन्नतायाः सगुणनिर्गुणविषयविचारे दर्शितत्वात्। क्वचित् निरवधिकोत्कर्षमित्यपि व्यवह्रियेत। उक्तरीत्या सर्वावधिकाकोत्कर्षसत्त्वेपि स्वापेक्षयोत्कृष्टवस्त्वन्तराभावादुत्कृष्टावधिरहितोत्कर्षशालीत्यर्थविवक्षा तत्र। एवं परिच्छेदार्थकत्वेऽप्येवमुत्कृष्टतमत्वं सिद्ध्यत्येव। यथा अवधिरहितमित्यर्थे निकृष्टावधिरहितमित्यर्थो न स्वीक्रियते, बाधात्, तथा कतिपयपरिच्छेदरहितत्वमपि नेष्यते। अनन्तत्वमसंख्यत्वं संख्याकृतपरिच्छेदराहित्यमित्यपि प्रसिद्धमेव, यथा "विशेषास्त्वनन्ता एव", "तवानन्तगुणस्यापि षडेव प्रथमे गुणाः" इत्यादौ। एकत्वसंख्यापरिच्छिन्ने च ब्रह्मणि तद् बाधितम्। उक्तञ्चेदं शतदूषण्याम्, "अन्यथा अनन्तपदश्रुत्यसंकोचाय संख्यातोऽपि परिच्छेदाभावस्वीकारेण ब्रह्मबहुत्वप्रसङ्गात्" इति। यत् शत भूषणीकृत् लिखति, 'संख्यापरिमाणोत्कर्षपृथक्सिद्धिस्वतन्त्रभेदराहित्यं वस्तुपरिच्छेद इति श्रीभाष्यानुयायिन' इति—तदर्थं स एव वक्ता। संख्यादिशब्दानां राहित्यपदान्वये संख्याराहित्यं कथं परिच्छेदः स्यात्। संख्याप्रतियोगिकञ्च राहित्यं कथं वस्तुप्रतियोगिकपरिच्छेदः स्यात्। राहित्यपदानन्वये च कथं बोधः। संख्यैव परिच्छेद इति चेत्—तद्राहित्यमपरिच्छेदोऽसन्मते ब्रह्मणि कथम्। अथ पूर्ववाक्येऽस्मिन् वाक्ये च अपरिच्छेद इति लेखनीयम्;

परिच्छेद इत्यशुद्धमिति चेत्—तत् पृथक्सिद्धस्वतन्त्रभेदराहित्यांशे उपपद्यते; न तु संख्यादिविषये; संख्याराहित्यादेरस्मदनिष्टत्वात्। परिमाणं परममहत्त्वमस्तीति पक्षे हि परिमाणराहित्यमपि नास्ति। एवमुत्कर्षराहित्यमपि। एवमुपरि, "देशकालमात्रपरिच्छेदवर्णने प्रयोजनाभावात्" इत्युक्तमप्यसंगतम्—त्रिविधपरिच्छेदाभावस्यैवास्माभिरप्युच्यमानत्वात्। देशापरिच्छेदवर्णनस्यापि प्रयोजनमस्त्येव, "सर्वव्याप्तिनिरूपणार्थम्" इति भवतैवोपर्युक्तेः। यदप्युच्यते, 'ब्रह्मणः सर्वैर्वस्तुभिः पृथक्सिद्धिः प्रत्यक्षसिद्धा, स्वतन्त्रवस्त्वन्तराभावोपि प्रत्यक्षसिद्धः। अथापि तदभावबोधनमनन्तपदेनोच्यते प्रत्यक्षप्राबल्यं प्रेमास्पदं दूरीकृत्य' इति वचनम्—तदतिविचित्रम्—वस्तुभिरिति तृतीया कथमप्यस्तु। पृथक्सिद्ध्यादिकं कस्य पुरुषस्य प्रत्यक्षयोग्यम्। ब्रह्मप्रत्यक्षमन्तरा पृथक्सिद्धिप्रत्यक्षं कथम्। स्वतन्त्रवस्त्वभावाभावः स्वतन्त्रवस्त्वन्तरवत्त्वम्। तद् ब्रह्मणि किमस्माभिरुच्यते। एवमनुक्तानन्विताभासार्थप्रतिपादकवाग्जालविस्तरेणैव ग्रन्थपूरणे आनन्त्यं शतभूषणीगतेषु दोषेष्वेवेति सर्वदूषणपारगमनं सर्वस्याप्यशक्यमेव। यच्च प्रत्यक्षप्राबल्ये भवद्भिरेव त्यक्ते अद्वैतिदूषणं श्वश्रूभिक्षाप्रतिषेधनयेनेति—तत् पृथक्सिद्धिप्रत्यक्षाभावादेवापास्तम्। जगन्मिथ्यात्ववादिसौगतनिरासेन स्वयं जगन्मिथ्यात्वं स्थापयतां भवतां मत एव श्वश्रूभिक्षाप्रतिक्षेपः। यदपि वस्तुपरिच्छिन्नत्वं वस्त्वन्तरातादात्म्यमिति—तन्न। वस्तुपरिच्छेदो वस्तुभेद इति ह्युक्तं भवति। न हि कालपरिच्छेदो देशपरिच्छेदश्च तत्तत्प्रतियोगिकभेदरूपः। तद्वदेव हि वस्तुपरिच्छेदविषयेपि युक्तम्। तद्विहायाद्वैतश्रद्धया वस्तुपरिच्छेदो वस्तुभेद इति कल्पनमयुक्तम्। यदपि वस्तुभेदस्य स्थितस्यापि मिथ्यात्वात् वस्तुभेदाभाव इति—तन्न—तर्हि वस्त्वभेदस्यापि ब्रह्मणि मिथ्यात्वात् तदभाव एव कुतो नोच्यते। यत्तु व्यवहारकाले वस्तूनां प्रसिद्धत्वात् तद्भेदः प्रसक्त एव ब्रह्मणि प्रतिषिध्यत इति नाप्रसक्तप्रतिषेध इति—तन्न—तदा हि व्यवहारकाले वस्तूनां ब्रह्मणश्चैक्यमुक्तं भवति। तत् कथम्। एतावता वस्तुन एकत्वे वस्त्वन्तराभावे अनन्तत्वमिति सिद्ध्यति। वस्तूनामनेकत्वे असंख्यत्वे अनन्तत्वं लोकेष्टम्। तद्विपरीतमेतत्।

'वस्तुपरिच्छेदो वस्तुभेद इति पक्षेऽपि प्रमाणान्तरानुरोधात् स्वतन्त्र-वस्तुप्रतियोगिको विवक्षणीयः; तदभावो वस्त्वपरिच्छेदः' इतीदं दूष्यते— 'तादृशवस्तुन एवाप्रसिद्ध्या तदभावः कथं प्रसिद्ध्यतीति। एवं वदता चोपरि, 'स्वसमानजातीयवस्त्वन्तरसद्भावो वस्तुपरिच्छेदः तदभावो वस्त्वपरिच्छेद' इति कथमुच्यते। तत्रापि सजातीयवस्त्वन्तराभावादनुपपत्तिस्तदवस्था। इयान् विशेषः—भवता समसत्ताकत्वेन साजात्यं विवक्षितम्, अस्माभिः स्वतन्त्रत्वेन साजात्यमिति। तथाच पूर्वोक्तमेवमेव निर्वहति। भ्रान्तपुरुषदृष्ट्या स्वतन्त्रवस्तु-प्रतियोगिकभेदः प्रसक्तो वार्यत इति हि तत्रापि वक्तुं शक्यम्। अन्ततो वस्त्वपरिच्छेदो नाम स्वभिन्नवस्तुत्वव्यापकस्वतन्त्र्याभावकत्वादिरित्युक्तं भवति। "अवस्थाविशेषस्य घटादेर्द्रव्यात्मना मृदैक्यमेव, न तु संयोगः" इत्यप्यसत्—अवस्थाविशिष्टस्य हि मृदैक्यम्; न त्ववस्थायाः। अवस्थाया अपृथक्सिद्धिर्नास्तीति न शक्यं वक्तुं संयोगाभावेऽपि। न हि सर्वत्र संयोग एवापृथक्सिद्धिः। एवं 'शरीरात्मनोराध्यासिकमेव तादात्म्यम्, न त्वपृथ-क्सिद्धिः' इति वदता, मम शरीरमित्येव प्रतीतिः, न तु अहं शरीरमिति इत्युच्यते। कथमेवं सत्यध्यासो विवेकिनाम्। अत्रापृथक्सिद्ध्यभावकथनं प्रतिज्ञामात्रम्। अथ वस्तुभेदाभावो वस्त्वपरिच्छेदः वस्तुत्वरूपः। वस्तुत्वं त्रिकालाबाध्यत्वमित्युच्यते। तेन कालत्रयसत्त्वमेव हि पर्यवस्यति। तथा कालपरिच्छेदाभावस्य देशकालयोरपि सत्त्वात् तद्वैलक्षण्याय वस्त्वपरिच्छेदो वक्तव्य इति—तत्रोच्यते। वस्त्वपरिच्छेदो वक्तव्य एव। तस्य प्रयोजनं महद-स्त्येव। देशकालवारणार्थमित्येतद् विचार्यम्। देशस्य कालपरिच्छिन्नत्वाद् वारणं प्रागेव सिद्धम्। कालेऽप्यवान्तरकालानामनित्यत्वात्कालपरिच्छेद एष्टव्यः। स च अवान्तरकालमन्यमादाय वा स्वपरनिर्वाहकसमाधिना वा कथमप्यस्तु। अथ महाकालोऽवशिष्यते, यदि स कश्चिन्नित्य इष्येत। भवन्मते तत्सत्त्वे न प्रमाणम्। बाधोऽपि कालोऽनादिरस्तीत्यपि भवद्भिर्न शक्यं वक्तुम्; 'जीव ईशो विशुद्धा चित्' इत्यादिना षण्णामेवानादितया

गणनात् । अतः कालोपाधीनादाय कालव्यवहार इति वक्तव्यमिति तेषां परिच्छिन्नत्वात् तद्वारणाय अनन्तपदं नापेक्षितमिति । यत्तु ब्रह्मणः सशरीरत्वे देशकालपरिच्छिन्नत्वापत्तिः चिदचिद्रूपशरीरभेदेन ब्रह्मणोऽनेकत्वापत्तिश्चेति— तदिदं किमपि वक्तव्यमिति कथितमेव । शरीराणां परिच्छिन्नत्वे अनेकत्वे च सत्यपि ब्रह्मणि तदप्रसक्तेः । न हि भवन्मत इव प्रकारप्रकारिणोर्भेदाभेदावस्मासु केनापीष्येते इत्यलं बहुना ।

अथ वस्तुपरिच्छेदाभावो यथावदुपपाद्यते—यथा कालपरिच्छिन्नत्वाभावः कालाभावरूपो न भवति, यथा च देशपरिच्छिन्नत्वाभावो न देशाभावः, तथा वस्तुपरिच्छेदाभावोऽपि न वस्त्वभावः । अथ परिच्छेदशब्दस्य भेद इत्यर्थः, तथापि वस्तुभेदाभावो न वस्त्वपलापेनोपपाद्यः; किं तु स्थितानामेव वस्तूनां भेदाभावेन । स यदि प्रमाणविरुद्धः, तर्हि अनन्तपदं सामान्यार्थकमबाधितार्थान्तरपरं भवतु । न ह्यसंख्यत्वं परार्धाधिकत्वमनन्तत्वमिह समन्यते, विरोधात्; तद्वत् । देशकालपरिच्छेदौ यथा देशकालप्रतियोगिकसंसर्गविशेषरूपौ, तद्वदेव वस्तुपरिच्छेदोऽपि । देशान्तरासंबन्धित्वविशिष्टकिञ्चिद्देशसंबन्धित्वं देशपरिच्छेदः । एवं कालेऽपि । तथा वस्त्वन्तरासंबन्धित्वविशिष्टकिञ्चिद्वस्तुसंबन्धित्वरूपो वस्तुपरिच्छेदो नास्तीति सर्ववस्तुसंबन्धित्वमेवोच्यते । तत्राकाशवद्व्यापित्वरूपसंबन्धस्य देशपरिच्छेदत एव लब्धत्वात् अन्यादृश एव संबन्धो विवक्षितः । स च यथाप्रमाणं शेषित्वाधारत्वनियन्तृत्वापृथक्सिद्धिमत्त्वाद्यनेकरूपः । अत एव सर्वेषां तत्प्रकारत्वात् प्रकारवाचिनां प्रकारिपर्यन्तत्वात् सर्ववस्तुसामानाधिकरण्यार्हत्वरूपो वस्त्वपरिच्छेद इत्युच्यते । अत एवाभाषिष्ट, 'भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात् स्वतः परतोऽपि परिच्छेदो न विद्यते'' (२.१.७) इति । 'रसोऽहमप्सु' इत्यादिप्रयोगबलेन परम्परया तदपृथक्सिद्धानामपि सर्वपदेन ग्रहणमुचितमित्यन्यदेतत् । अत्र भेदवादिन इति पदम्, चिदचितोरीश्वरस्य च भेदस्यैवेष्टत्वात् कथं वस्तुभेदाभावरूपवस्त्वपरिच्छेद इति शङ्काद्योतकम् । अत स्वतः

परतश्चेत्यस्यायमप्यर्थः—पूर्वं चिदचिद्वस्तु इति किलोक्तम्। तत्राचितां शरीरित्वानर्हत्वात् स्वत एव वस्तुपरिच्छेदः वस्त्वपृथक्सिद्ध्यनुयोगित्वाभावः। चितां तु नित्यानां शरीरित्वार्हत्वेपि परसंकल्पात् तदभाव इति। एवं वाऽर्थः—परिच्छेदपदस्याद्वैतिसंमतभेदार्थकत्वे वस्तुवाचिपदानां स्वपर्यन्तपरत्वात् ब्रह्मणि स्वस्मात् भेदो नास्ति, ब्रह्म न घट इति न शक्यते वक्तुं वेदान्तव्युत्पत्तिमता। अतः स्वतः परिच्छेदो नास्ति। यदि परिच्छेदशब्दस्य देशपरिच्छेद इत्यादाविव किञ्चिदसंबन्धित्वविशिष्टसंबन्धित्वमर्थः, तदा परतः स्वभिन्नेन चिता अचिता च परिच्छेदो नास्ति सर्वसंबन्धित्वादिति। अथार्थान्तरम्—उदाहृतं भाष्यं पूर्वपक्षिमुखेन विशिष्टाद्वैतिमतसंभावितार्थप्रदर्शकम्। सिद्धान्त एव साक्षादुक्तमन्यत्रास्ति। इदमपि शतदूषणीदर्शितमेव। जन्माद्यधिकरणभाष्ये हि, "स्वरूपेण गुणैश्चानन्त्यम्" इत्युक्तम्। अतस्तदनुसारेणात्रापि सर्वशरीरकतया सर्वप्रकारित्वात् स्वरूपतो गुणतश्चातिशयितत्वात् स्वतः—स्वरूपेण, परतः—गुणैश्च परिच्छेदो निकर्षो न विद्यते इत्यर्थः। स्वस्मिन् गुणेषु च किञ्चित्कृतो निकर्षो नास्तीति समाभ्यर्थो वा। तेन निरतिशयोत्कर्षः समाभ्यधिकरहितत्वमुक्तं भवति। श्रुतप्रकाशिकादर्शितोऽप्यर्थोऽनुसंधेयः। एवमनन्तपदेन पदार्थानां बहूनां सद्भावः, परमात्मनस्तन्निरूपितसंबन्धः, तेषां परमात्मापेक्षया निकृष्टत्वमित्याद्येव सिद्ध्येत्, न तु सर्वबाधेन ब्रह्ममात्रसद्भावः। तथाच, 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति वाक्यमनृतजडपरिच्छिन्नव्यावृत्तमित्यर्थकत्वेपि ब्रह्मणोऽनृतत्वादिकमेव वारयेत्। न तु अन्यत् सर्वमनृतमिति वा, अनृतं सर्वं जडमित्यादि वा बोधयेत्। अयमगौरनश्व इत्युक्तौ गवाश्वयोरभेदं क इच्छेत्। तथासत्येकतरपदवैयर्थ्यमपि। अन्यथा जडानृतयोरैक्ये तद्व्यावृत्तये पदमेकमेवालम्। अतोऽनृतव्यावृत्तौ कृतायां सत्यजडव्यावर्तनाय ज्ञानपदम्, सत्यज्ञानभूतपरिच्छिन्नवस्त्वन्तरव्यावर्तनायानन्तपदमिति स्यात्। वस्तुतो बद्धमुक्तनित्यव्यावृत्तये सत्यज्ञानानन्तपदानीत्यादिविस्तरोऽन्यत्र। अनन्तशब्दनिरुक्तिरप्यनुसंधेया।

गभीरभाष्यार्थविचारतत्परैरबाधितोऽर्थो बहुधा विभाव्यते ।
परैः श्रुतिष्वेवमपार्थकल्पकैः प्रदर्श्यते बाधकमेव साधकम् ॥

शुभमस्तु

---

श्रीः

# निर्विशेषानन्दत्वभङ्गप्रसाधनम्

आनन्दमानन्दनिधिं च तादृग्जीवाहितानन्दमहं जुषेय ।
अन्यात्मनां जात्वसुखाश्रिताचिदधीशमानन्दविमानवासम् ॥

निर्विशेषब्रह्मण्यानन्दत्वासंभवस्य शतदूषण्यामुपपादितस्य दर्शनमात्रेण श्रीभाष्यमते ब्रह्मण आनन्दवत्त्वमात्रम्, न त्वानन्दरूपत्वमिति शतभूषणी मन्यते । तदसत्; उभयस्यापि स्वीकारात् । अथ शतदूषणीदर्शितेषु दुःखनिवृत्तिमात्रत्वं ज्ञानत्वं वाऽऽनन्दत्वमित्यादिकल्पत्यागेन अनुकूलवेदनीयत्वम्, अनुकूलवेदनत्वम्, अनुकूलत्वमिति पक्षान् सा परिगृह्णाति । परन्तु ते आकाराः मुक्तिकाले यद्यपि न भवन्ति, अथाप्युपलक्षणविधयोपयुज्यन्त इत्याह । पक्षोऽयम्, "उपलक्षणमिति चेत्" इत्युपक्षिप्य शतदूषण्यां दूषित एव । अनानन्दतापादकाज्ञानाविषयत्वमानन्दत्वमिति ब्रह्मस्वरूपानन्दत्वपरिष्कारो यः कृतः, स न युज्यते; अस्मिन् आनन्दत्वनिर्वचने आनन्दत्वस्य घटकतया आत्माश्रयदोषापत्तेः; ब्रह्मणः संसारदशायामानन्दरूपत्वाभावप्रसंगात्; ईदृशानन्दत्वस्य कदाप्यनुभवासंभवप्रसंगाच्च । संसारदशायां हि अज्ञानाविषयत्वमननुभाव्यम् । मोक्षे त्वनुभवविषयत्वप्रसक्तिरेव नास्ति । एवं सति सच्चिदानन्दस्वरूपैक्येन सर्वदा भासत इति कथनमपलाप एव । तद्भानेऽप्येतदभानात् । यत्तु अहमर्थस्य निरुपाधिकप्रेमगोचरत्वं

नाहंरूपेण, किंत्वधिष्ठानचैतन्यात्मनेति—तत् तदा स्यात्, यदि अहमर्थोऽहङ्कारोऽनात्मा, तदधिष्ठानचैतन्यं ततोऽन्यदेवात्मशब्दवाच्यमिति निष्कृष्टं स्यात्। अहमर्थात्मत्वसमर्थने च प्रागेव स निष्कर्षो निरस्तः। अतोऽहमिति एकत्वेन भानस्यानुभवसिद्धत्वात् तत्राहङ्कारचैतन्यरूपार्थद्वयभाने मानाभावात् अहंत्वाश्रय एव प्रेमास्पदत्वमेषितव्यम्। जानामि, करोमि, सुख्यामीति ज्ञातृत्वकर्तृत्वभोक्तृत्वाद्याश्रयतया प्रतीते वस्तुन्येव परमप्रेमास्पदत्वदर्शनात्, अहमर्थातिरिक्तं चैतन्यं प्रेमास्पदमिति लोकानुभवाभावात्। 'आत्मनस्तु कामाय सर्वं प्रियं भवती'ति लोकानुभवप्रदर्शनस्यासंगतत्वप्रसंगाच्च लोकगृहीत आत्मा अहमर्थ एव। स एव परमप्रेमास्पदम्। यदपि—विषयसुखानां प्रेमगोचरत्वमपि सुखस्वरूपचैतन्याभेदादेवेति—तत्रेदं चिन्त्यम्—आत्मनो मुख्यमानन्दत्वम्। वैषयिकसुखानामानन्दत्वम्, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्या तदानन्दलेशरूपतयैवेति भवन्मतम्। तत्रको नाम वैषयिकानन्दः, तस्य कथं तदेकदेशतेति विचारे—विषयविषयिणी प्रत्यक्षाद्यनुभवरूपा अन्तःकरणवृत्तिरुदेति। तदधीनं सुखं दुःखमप्यन्तःकरणवृत्तिविशेष एव। अथवा सुखं दुःखमिति धर्मोऽन्तःकरणे अग्न्यादावौष्ण्यादिकमिव जायते। तद्विषयिणी अन्तःकरणवृत्तिरन्येति। तथा च विषयविषयकानुभवविशेष एव सुखमिति वा अनुभवजन्यं सुखं वृत्त्यन्तरमिति वा, अनुभवजन्यसुखरूपापूर्वधर्मविषयिण्येव वृत्तिरिति वा कथमप्युच्यताम्। तत्र स्थितं सुखत्वं वृत्तिप्रतिफलितचैतन्यरूपस्यात्मनः सुखत्वप्रयुक्तमित्यङ्गीकारे एकैकवृत्तावपि चैतन्यप्रतिफलनसत्त्वात् सर्वत्र दुःखहेतुवृत्तिस्थलेपि किमिति सुखस्फूर्तिर्न भवेत्। अतः चैतन्यस्य सुखत्वमानन्दत्वं वस्तुतो नास्ति। विषयस्येष्टत्वेन वृत्तीनां सुखरूपत्वमिति वा कारणान्तरायत्तं कतिपयवृत्तीनां कतिपयान् प्रति सुखत्वमिति वा वक्तव्यम्। 'मात्रामुपजीवन्ती'ति श्रुतिस्तु समुद्रे गोष्पदमितिवत् ब्रह्मानन्दैकदेशतुल्यत्वाभिप्रायम्। न च आत्मगतानन्दांशस्फूर्तिर्यत्र तत्र सुखरूपत्वमिति वाच्यम्—वस्तुतो निरंशे चैतन्ये आनन्दां-

शस्य पृथगभावेन चैतन्यप्रतिफलने आनन्दप्रतिफलनस्यावश्यकत्वात् । "सुखमन्यत् तद्विषयिणी वृत्तिरन्येति कश्चित् परिभाषादिसंमतः पक्षः, सुखमेव वृत्तिरिति भामतीमतम्" इत्युच्यते। तत्र वृत्तिसुखत्वपक्षे चैतन्यप्रतिफलनवशात् सुखत्वमिति स्यात् । न तु तस्यातिरिक्तत्वपक्षे । अन्तःकरणवृत्तौ ज्ञानत्वोपचारवत् अनन्दत्वोपचार इति भवतोच्यते । चण्डमारुते तु भवत्पूर्वकोक्तानुवादे वृत्त्यवच्छिन्नचैतन्यांशे सुखत्वं मुख्यम्; आत्मनि तदमुख्यम् । यथा ज्ञानत्वं वृत्त्यवच्छिन्नचैतन्य एव मुख्यम्, आत्मनि उपचरितम्, तद्वदित्युक्तम । युक्तश्चैतत्—ब्रह्मणो निर्धर्मकत्वात् सर्वेषामपि शब्दानां सप्रवृत्तिनिमित्तकत्वावश्यकतायाः अद्वैतसिद्धावेवोक्तत्वात् तत्तत्प्रवृत्तिनिमित्तं यत्र संभाव्यते; तस्यैव तच्छब्दमुख्यार्थत्वात् शुद्धचैतन्ये आनन्दस्वरूपत्वानवकाशात् । न च शाखाचन्द्रन्यायेनावच्छिन्नचैतन्ये आनन्दपदेन निर्दिष्टे शुद्धचैतन्यमुपलक्षितं भवतीति वाच्यम्—दुःखमित्युक्तावपि तदुपलक्षणसंभवात् विशिष्य, 'आनन्दो ब्रह्मेति व्यजानात्' इति निष्कर्षायोगात्। 'आत्ममात्रसंवेदनीयमिच्छाविषयः किमपि सुखं नाम' इति ब्रह्मसिद्धिमतमुपन्यस्यता च भवता अन्तःकरणधर्मस्यैव सुखत्वं दर्शितम् । आत्मस्वरूपस्यानुकलवेदनीयेषु काष्ठात्वं च, 'आत्मनस्तु कामाय सर्वं प्रियं भवती'ति वाक्येन यद्यपि दर्शितम्—अथापि अन्तःकरणधर्मस्य सुखत्वमिच्छाविषयत्वं यदि आत्मसंबन्धप्रयुक्तम्, तर्हि दुःखादावपि तत्सत्त्वात् तेषामपि सुखत्वापत्तिः । तस्मात् अनुकूलत्वं कतिपयान्तःकरणधर्मस्य स्वाभाविकमित्येव वक्तव्यम् । तत् सुखं केनचिद् बाह्येनाऽऽन्तरेण वा वस्तुना कस्यचिदुत्पाद्यते कर्माद्यनुसारादित्यनुभवसिद्धमेतत् ।

अस्त्विदं जन्यं सुखमन्तःकरणधर्मो वा, धर्मभूतज्ञानपरिणामो वा ज्ञानादन्यद्वा, ज्ञानमेव वेति विमर्शः । आत्मन आनन्दत्वं कादाचित्कं वा यावदाश्रयभावि वा, सर्वदाऽनुभूयमानं वा, न वेति विचार्यम् । अस्य संसारेऽनुभवासंभवेऽपि मुक्तावनुभवस्तावदावश्यकः । अन्यथा मुक्तेः पुरुषार्थत्वा-

योगात्। दुःखनिवृत्तिघटितसकलविशेषगुणध्वंसो मोक्ष इति पाषाणकल्पमोक्षवादितार्किकमतवैलक्षण्येन सच्चिदानन्दरूपात्मस्वीकारो हि मुक्तेरानन्दरूपतया पुरुषार्थत्वोपपादनाय। अनानन्दतापादकाज्ञाननिवृत्त्यर्थप्रयत्नश्चानन्दस्फूर्तिलाभाय। पुरुषार्थत्वञ्च पुरुषेणानुभवार्थमपेक्षिते स्वरसम्। अतो मुक्तौ तदनुभव आवश्यकः। अननुभूयमानं विद्यमानमप्यविद्यमानतुल्यम्। नित्यसुखाभिव्यक्तिर्मुक्तिरिति पक्षखण्डनावसरे न्यायभाष्योक्तरीत्या अनुभवाभावे सुखरूपताङ्गीकारोऽपि व्यर्थ एव। एवञ्च लौकिकविषयानुभवानां तदातदा जायमानानां यथा सुखत्वम्, तथैव ब्रह्मानुभवस्य सुखत्वमिति वृत्तिसुखत्वमात्रे पर्याप्ते तद्विकतया ब्रह्मणोप्यानन्दत्ववादो हि तस्य तथैव प्रकाशनिबन्धनः। अन्यथा मुक्तावानुकूल्यं सुखत्वमानन्दत्वमित्युच्यमानधर्मानङ्गीकारे जडत्वाद्यभावरूपमिव आनन्दत्वाद्यभावरूपमेव तत् स्यात्। स्वरूपातिरिक्तानन्दांशो न भवति, स्वरूपातिरिक्तः प्रकाशोपि न भवतीति खल्वंगीकृतम्। तादृश एव चात्मा इदानीमप्यस्तीति आनन्दप्राप्तिर्मोक्ष इति वादोऽर्थशून्यः स्यात्। संसारदशायां दुःखानुभवमध्ये स ब्राह्मानन्दस्तारतम्येन संवेद्यमानोऽस्ति, मोक्षे ईषदपि नास्तीति प्रत्युतानर्थ एव। दुःखनिवृत्त्यर्थमेव प्रयत्न इति चेत्—तार्किकमतादविशेषः।

शोधने क्रियमाणे भवन्मतमेवं निष्कृष्टम्—आत्मा यदा वृत्त्या विषयीक्रियते, तदा पुरुष आत्माराम आत्मक्रीड आत्मकाम आप्तकामो भवति। यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः, यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते, तादृशत्वात् तस्य तद्विषयकवृत्तेरानन्दानुभवरूपत्वात् तस्य विषयस्य ब्रह्मणो निरतिशयानन्दत्वमवसीयते। एवञ्च नैयायिकैरात्मस्वरूपानुभवः क्रियमाणः केवलं तद्गतधर्माधर्मसाक्षात्कारोपयोगितया; न तु तस्य भोग्यतया। अस्माभिस्तु भोग्यताप्यस्तीत्युच्यते। तत्त्वसाक्षात्कारेणाविद्यानिवृत्तिविषये अस्याः भोग्यताया उपयोगाभावेपि वस्तुस्थितिकथनं मुक्तये प्ररोचनाय च भवतीत्याद्रियते। एवं वैषयिकानन्दानामेतदेकदेशत्वक-

थनमपि योगकालिकात्मसाक्षात्कारगतानन्दकाष्ठाविर्भावमालोच्य। मुक्तौ तु कैवल्यमेव; तार्किकवत्। एवञ्च, 'विज्ञानं ब्रह्म', 'आनन्दो ब्रह्मे'त्यादिकमपि व्यवहारकाले ज्ञानान्तरनिरपेक्षव्यवहारविषयतां वृत्तिज्ञानेनानुकूलतया गृह्यमाणताञ्चानुसृत्यैवेति।

अत्रोच्यते—तार्किकमत इवात्मनो जडत्वमस्वीकृत्य ज्ञानानन्दस्वरूपत्वेऽङ्गीकृते अहं ज्ञानम्, अहमानन्द इति व्यवहारः कुतो न भवति। नूनं ज्ञाधातोर्भावे ज्ञानशब्दस्य निष्पन्नत्वात् ज्ञाधातोश्च भूतभवद्भविष्यत्त्वरूपकालयोगार्हक्रियापरतया ज्ञानशब्दोऽपि तदर्हक्रियामेव वक्तुमर्हः। तथा सुखानन्दादिपदमपि सुख्यति, नन्दतीत्यादिप्रयोगविषयातीतत्वाद्यर्हक्रियापरमेव। न चात्मन्यतीतत्वाद्यर्हतेति अहं सुखम्, अहमानन्द इति न व्यवहारः। इयान् विशेषः—ज्ञाधातोः सकर्मकत्वात् सकर्मकत्वसकर्तृकत्वरूपांशद्वयं कस्य किं प्रति ज्ञानमित्याकांक्षाबलादपेक्षितम्, आनन्दस्य त्वकर्मकत्वात् कर्त्रपेक्षामात्रमिति। अहं मे अनुकूल इति व्यवहारस्त्विष्यत एवेति वक्तव्यम्। एवञ्चान्यनिरपेक्षव्यवहारविषयत्वमात्रेण ज्ञानशब्दः आत्मनि गौणः, आनन्दशब्दश्चानुकूलत्वमात्रेण तथा। अतः चण्डमारुतदर्शिताद्वैत्येकदेशिमतमेव समीचीनम्। एवं विषयेषु सुखानन्दादिशब्दप्रयोगोऽपि सुखहेतुत्वादनुकूलत्वाच्चेति तद्विषयकज्ञाने तदधीनधर्मविशेषरूपसुखे वा तच्छब्दस्य मुख्यत्वात् आत्मनश्चातथात्वात्, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इत्यस्य, 'आनन्दरूपचैतन्यात्मकब्रह्मप्रतिफलनात् वृत्त्यवच्छिन्नचैतन्यानामानन्दरूपते'त्यर्थो वक्तुं न शक्यते। चैतन्ये मुख्यानन्दत्वाभावात्। शुद्धचैतन्यसाक्षात्काररूपा वृत्तिः परमानन्दः वस्त्वन्तरविषयकवृत्तयस्तु वस्तुष्वानुकूल्यप्रतिकूल्यनैयत्याभावात् यथायथं सुखरूपाः दुःखरूपाश्च। न चानुकूलवस्तुन्यारोपितं वस्तु अनुकूलमेवेति नियमः; रज्जुसर्पभ्रमे रजते रङ्गभ्रमे च विषयस्य सर्पस्य रङ्गस्य च प्रतिकूलत्वानुभवात्। तस्माल्लौकिकपदार्थानुभवानन्दाः सर्वे ब्रह्मानुभवानन्दापेक्षया अत्यन्तावरा इत्येव तदर्थः। तत्प्रकरणे पूर्वं सर्वानन्दापेक्षया ब्रह्मलोकग-

तानन्दस्यातिशयितत्ववर्णनादपि ब्रह्मगतो य आनन्दः, यश्च ब्रह्मविषयकः श्रोतियादेरानन्दः, तदपेक्षयाऽत्यन्ताल्पत्वमानन्दानामित्येव विवक्षितमिति स्पष्टम्। एवञ्च आनन्दोब्रह्मेत्यत्र पुलिंगशब्दश्रवणात् आनन्दशब्दः अनुकूलत्वमात्रेण ब्रह्मणि प्रयुक्तः। विज्ञानमानन्दं ब्रह्मेत्यत्र तु नपुंसकलिंगत्वात् अर्शआद्यजन्त इति आनन्दविशिष्टरूपार्थे प्रयुक्तः। 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशश्चानन्दस्य धर्मत्वं दर्शयति।

इदमनुकूलत्वमिदमानन्दविशिष्टत्वञ्च ब्रह्मणः किं कादाचित्कम्, उत यावद्द्रव्यभावीत्येव विचार्यम्। 'स एको ब्रह्मण आनन्द' इति श्रोत्रियेणानुभूयमान आनन्दः ब्रह्मानुभूयमानानन्दतुल्य इति ज्ञायते। श्रोत्रियस्यान्तः-करणवृत्त्या ब्रह्मविषयिण्या आनन्दवत्त्वं संभाव्यते। कथं तत् ब्रह्मणः स्यात, यदि वृत्त्यधीन एवानन्दानुभवः स्यात्। अतोऽन्तःकरणनिरपेक्षः। अधस्तादुक्ताः मनुष्यगन्धर्वदेवाद्यानन्दाः यथा मनुष्यत्वाद्यवस्थास्थितिपर्यन्तस्थायितया विवक्षिताः, तथैव ब्रह्मण आनन्दो ब्रह्मसमसत्ताक इति यावद्द्रव्यभावित्वम्। एवमानन्दस्य यावद्द्रव्यभावित्वादेव, 'कं ब्रह्म खं ब्रह्म' इत्यत्र कशब्दस्य सुखवाचिनः सुखमात्रपरत्वमस्वीकृत्य सुखरूपधर्मविशिष्टधर्मिपर्यन्तत्वविवक्षया, "सुखविशिष्टाभिधानादेव च" इति सूत्रयामास। यदि च मुक्तस्याशरीरत्वरूपाया अविद्यानिवृत्तिरूपाया वा मुक्तेरन्यत् मोक्षकाले नास्ति, तत्त्वमसीत्युपदिष्टार्थवेदिनः, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति विमोक्षातिरिक्ता संपत्तिर्न श्रूयेत। श्रुत्यन्तरे संपत्त्यनन्तरमपि किञ्चिदस्तीति श्रुतम्, 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति। अत्र संपत्तिनिष्पत्त्योर्भिन्नक्रियात्वं निष्पत्तेः संपत्त्यनन्तरभावित्वञ्च स्पष्टम्। सेयं निष्पत्तिर्नोत्पत्तिः; किंत्वाविर्भाव इति च सूत्रितम्। आविर्भावश्चाभिव्यक्तिः। एवञ्च प्रागप्रकाशितस्वरूपांशप्रकाशो मुक्ताविति स्वीकार्यमिति सप्रकाश एवानन्दो भवतु। एतदनन्तरम्, 'स तत्र पर्येति जक्षत् क्रीडन्' इति आनन्दाविर्भावकार्यविवरणाच्च स्वरूपाभिनिष्पत्तिरानन्दाविर्भावपर्यन्तेति ज्ञायते,

इदमेव चान्यत्र, 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति सर्वविषयकज्ञान सर्वानुभवरूपमदर्शि। एवमन्यान्यपि, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीत्यादीनि मुक्तिवाक्यानि द्रष्टव्यानि ।

अतो ब्रह्म स्वयमनुकूलं सत् स्वविषयकानुभवरूपानन्दविशिष्टमेव सर्वदाऽस्तीति नानन्दत्वादीनां व्यवहारकालमात्रस्थितत्वं मुक्तावविद्यमानत्वञ्च साम्प्रतम्। अद्वैतसिद्धौ आनन्दस्य स्वरूपसतः आनन्दिपुरुषरहितस्य कथं पुरुषार्थत्वमित्याशङ्क्य सुखं मे भवतु इति स्वसंबन्धित्वेनैव पुरुषार्थत्वमिति न। आनन्दसाक्षात्कारः पुरुषार्थः। परकीयस्य सुखस्य साक्षात्क्रियमाणत्वाभावादपुरुषार्थत्वम्। सुखरूपस्य ब्रह्मणः स्वात्मनिष्ठत्वाभावेऽपि स्वेन साक्षात्क्रियमाणत्वान्न क्षतिरित्युक्तम्। तेन साक्षात्काराभावे स्वरूपतस्सत्त्वमात्रेण पुरुषार्थत्वं न भवतीति सिद्धमिति ब्रह्मणः सुखरूपत्वे साक्षात्कारोऽपि स्वीकार्यः। साक्षात्कारवच्च तदिति स्वीकार्यम्। यदि धर्मभूतज्ञानमिति किञ्चिन्नेष्यते, स्वयम्प्रकाशं ब्रह्म स्वगतानुकूल्यं विषयीकुर्वत् आनन्दि भवतीति वा वक्तव्यम्। एतावति स्वीकर्तव्ये सति ब्रह्मण्यानन्दत्वमनुकूलत्वमपि मुक्तौ नास्तीति वर्णनं स्वाभिमतविलक्षणाद्वैतस्थापनश्रद्धाविलसितमात्रम्।

अस्तु तावदिदं मुक्तितत्त्वम्। यदा वस्त्वन्तरासंकीर्णतया शुद्धं ब्रह्म वृत्त्या विषयीक्रियते, तदा सा साक्षात्काररूपा वृत्तिरानन्दरूपेत्येतावदिष्टं खलु। तत्त्वमसिवाक्याधीनं ध्यानादिनिरपेक्षं जायमानमेवापरोक्षमिति पक्षः तथाऽनुभवाभावादानन्दरूपत्वाननुभवाच्च निरस्य इत्यन्यदेतत्। या तावत् वृत्तिरानन्दरूपा, तस्यास्तथात्वं यद्यविद्यानिवृत्त्यर्थमत्यन्तपरिश्रमसाधितत्वादित्युच्येत, तर्हि ब्रह्मण आनन्दत्वं सर्वात्मना त्यक्तं भवतीति, मुक्तौ आनन्दत्वोपलक्षितं ब्रह्मेति वादोऽपि त्यक्तः स्यात्। अविद्यानिवृत्तिहेतुतया कथमप्यात्मसाक्षात्कारस्येष्टत्वेऽपि स्वत इष्टत्वाभावात्। यदा हि अविद्यानिवृत्तिं विना पूर्णात्मानुभवो न भवेदिति तदनुभवशेषतयाऽविद्यानिवृत्तिरपेक्ष्यते, संपद्येतात्मनः स्वत इष्टत्वम्। भवन्मते त्वविद्यानिवृत्तेरूर्ध्वं स्वरूपेणावस्थानमात्रम्; प्रागेव

पुनर्ध्यानादात्मविषयिणी साक्षात्कारात्मिका वृत्तिः। यदि चेयं वृत्तिरविद्यानिवृत्तिशेषतया नापेक्ष्यते; किंतु स्वरूपदर्शनार्थम्, तर्हि जगन्मिथ्यात्वादिविवेके मानसमविक्षिप्य सांख्यवत् शुद्धस्यात्मनो विवितक्तया दर्शने प्रवृत्त्यय तदनुभवानन्दनिमग्नो भवितुमर्हति निपुणः। तादृशस्य च सत्यपि संसारे, 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः' इति दशा, ततोऽधिकाऽपि वा भविष्यतीति न बन्धनिमित्तकबाधनावसरः। वरं च निरानन्दमुक्तिप्राप्तिमपेक्ष्य परमानन्दब्रह्मानुभवता संसृतिमध्य एवावस्थानम्। तदुक्तं शतदूषण्याम्, "ततश्च सप्रपञ्चतयैवानुभव उपादेयः स्यात्" इति। अतः 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यात्मनः स्वत इष्टमुपपिपादयिषुभिः तत्साक्षात्कारस्यैव परमोद्देश्यता स्वीकार्येति मुक्तिरपि तादृशानन्दरूपैव भवितुमर्हति। एवञ्च 'अनन्तानन्दभाक् भवेयम्' इति स्वारसिकी मोक्षार्थप्रवृत्तिर्न मोघा भवतीत्यौचित्यमपि।

अपिच ब्रह्मविषयकवृत्तेरानन्दरूपत्वं किं ब्रह्मस्वरूपविषयकत्वात्, उत तद्गतधर्मविशेषविषयकत्वात्, आहो निष्प्रपञ्चताविषयकत्वात्, किं वा प्रपञ्चाविषयकत्वात्। प्रथमे ज्ञानसामान्यस्य वृत्त्यवच्छिन्नचैतन्यरूपतया वृत्तिभानकाले चैतन्यभानस्य नियमेन सत्त्वात् सर्वदैव दुःखवृत्तिकालेऽपि आनन्दानुभवापत्तिः। द्वितीये ब्रह्मण्यनुकूलधर्मान्तरस्वीकारे सविशेषत्वप्रसंगः। तृतीये अन्वयव्यतिरेकाभ्यां प्रपञ्चाभावस्यैवानुकूलता स्वत इष्टता स्यात्, न ब्रह्मणः। न चतुर्थः; अन्यविषयकत्वेऽपि अनुकूलब्रह्मविषयकत्वे आनन्दत्वसंभवात्। न हि सर्वज्ञस्येश्वरस्य ज्ञानमन्यविषयकमपि भवतीत्येतावता इष्टवस्तुविषयकानुभवानन्दस्य लोपः। प्रतिकूलतया प्रपञ्चग्रहणात् दुःखस्यावश्यकतया कथं ब्रह्मानुभवसुखस्य युगपदवस्थानमिति चेत्—तत्तत्सामग्रीबलात् कार्यद्वयोपनिपात एष्टव्य एव; विषयभेदेनाविरोधात्। अथ तदा ब्रह्मण्यनुकूलताज्ञानाभावात् न सुखमिति चेत्—तर्हि स्वरूपतो वस्तुग्रहणमेवानन्द इति पक्षं परित्यज्य धर्मान्तरविशिष्टतद्ग्रहणमानन्द इत्युक्तं स्यात्। सा चानुकूलता यदि व्यावहा-

रिकी, तर्हि तदभावस्य प्रपञ्चाभावग्रहणे गृहीतत्वात् न ब्रह्मानुभवस्यानन्दरूपता स्यादिति ।

तस्मात् ब्रह्मण आनन्दत्वाभिधानं क्षुद्रानन्दानुभवरूपभोगान्तरतो विरज्य परमानन्दानुभवरूपापवर्गपुरुषार्थप्राप्त्यपेक्षासंपत्त्यर्थमेवेति श्रुतिप्रतिपन्न-तदर्थवास्तवत्वविवेकिभिः ब्रह्म नित्यानुभाव्यनिरतिशयानन्दरूपमेव भाव्यमिति ।

इष्टं स्वतोऽनुभवितुं भवतीह यद्यत्
ब्रह्मोत्तमं गणितमत्र परं सुखं तत् ।
तस्यानुभूतिमुपयन्ति न चेत् विमुक्तौ
आनन्दताऽस्य कथमस्तु तथा किमर्थम् ॥

शुभमस्तु

---

श्रीः

# निर्विशेषनित्यत्वभङ्गप्रसाधनम्

निजेच्छासिद्धनित्यत्वभोक्तृभोग्यनियामकः ।
नित्यः श्रेष्ठपुमर्थश्च पुरुषः स पुनातु नः ॥

परमानन्दप्रेप्सयैव स्वरसप्रवृत्तया मुमुक्षवः प्रवर्तन्त इति आनन्दरूपं प्राप्यमागमनिष्ठैरास्थितमिति तदानन्दत्वं ब्रह्मण्यद्वैतिभिर्दुरुपपादमित्यधस्तादुपन्य-स्तम् । स चानन्द इष्यमाणो नित्य एवेष्यते इति ब्रह्मणि नित्यत्वमप्यद्वैतिनो-प्याशयाना: नित्यानित्यवस्तुविवेकमध्यात्मशास्त्रारम्भेऽधिकारिविशेषणमभ्यधुः । तच्च नित्यत्वं ब्रह्ममात्रनिष्ठमिति ते निरचैषुः । किं तत् तन्मात्रवृत्ति नित्यप-दप्रवृत्तिनिमित्तमिति अत्र वादे विचार्यते । तत्र शतदूषणीविकल्पितान् कल्पान् प्रायः सुस्वीकरान् मन्यते शतभूषणी । तदत्र परीक्ष्यम्—

ब्रह्मासाधारणं नित्यत्वं यदि सर्वकालसत्तारूपम्, तर्हि अविद्यायामतिव्याप्तिरित्यत्र यदुक्तम्—जीवन्मुक्तानामविद्यानाशेऽपि कालादीनां सत्त्वात् अविद्यायां सर्वकालसत्ता नास्तीति-तेन जीवन्मुक्त्यनङ्गीकारे लक्षणमिदमुपेक्ष्यमिति सिद्धम्। जीवन्मुक्तिपक्षेऽपि आवरणशक्तिविगमेऽपि विक्षेपशक्तिरस्तीति अविद्यालेशसद्भावस्य तदेष्टत्वात् तत्रातिव्याप्तिर्दुर्वारा। ब्रह्मव्यतिरिक्तं मिथ्येति सामान्यतोज्ञाने सति अविद्यामात्रनाशस्तदितरपरिशेषश्च दुर्वच इति प्रागेवोक्तम्। जीवन्मुक्त्यनुपपत्तिश्च निरूपितैव। असंभवि च सर्वकालसत्त्वं ब्रह्मणि; परमार्थे अपरमार्थसंबन्धस्यायोगात्। सर्वकालसत्त्वकल्पनाविषयत्वं तु नित्यपदप्रवृत्तिनिमित्ततया न लोके क्लृप्तमिति न तथा निर्वचनं युक्तम्। एवं सर्वकालसत्ता नाम सर्वकालसंबन्ध इत्युक्तमपास्तम्। सद्रूपत्वं नित्यत्वमिति च यत् सत् तत् सर्वदा सदिति नियमानुसारेणोच्यते, नियमस्यैव लोकानुभवेन भग्नत्वात् घटादावपि सत्त्वमस्तीति न तत् नित्यत्वम्।

अथ कालावच्छेदनिवृत्तिरूपं नित्यत्वं कालेऽतिव्याप्तमित्यत्र यदुक्तम्—कालः खण्डकालमहाकालरूपेण भिन्नः। व्याप्यकालश्च व्यापककालावच्छिन्नः; यथा पूर्वेद्युरमावास्या, अद्य पञ्चमघटिकायामित्येवमिति—तन्न—अन्ततो यः कालस्तत्र कालानवच्छिन्नो भवति, तत्रातिव्याप्तेरक्षतेः। किञ्च वस्तुनः कालावच्छिन्नत्वं नाम कालिकविशेषणताविशेषसंबन्धेन कालविशिष्टत्वम्। तच्च वस्त्वनधिकरणकालमादाय न भवितुमर्हति। एवञ्च व्याप्यकालस्य व्यापककालावच्छिन्नत्वं तादृशं दुर्वचम्। किंतु व्यापककालत्वेनाभिमतो यावान् खण्डकालसमुदायः तद्घटकत्वरूपं तु व्यापककालावच्छिन्नत्वं स्यात्। घटकत्वमात्रेण व्यापककालावच्छिन्नत्वेष्टौ च क्षणिकोऽपि पदार्थः वत्सरकालावच्छिन्नतया व्यवह्रियेत। खण्डकालस्य स्थूलकालस्य च व्याप्यव्यापकभाव एव संबन्धः इति खण्डकालस्य व्याप्यत्वमेव; व्यापककालस्य तु व्याप्यकालावच्छिन्नत्वं स्यात्, व्याप्यकालान्तरासंबन्धस्य किञ्चित्कालवृत्तिघटादिवस्तुन्यभावविवक्षायाम्। यत्तु 'न सोस्ति प्रत्ययो लोके यत्र कालो न भासते' इति न्यायकल्पनम्,

तदसत्—प्रत्यक्षस्य कालविषयकत्वनियमेऽपि अनुमित्यादौ तदनियमात् । नीलो घट इति शब्दजन्यबोधस्य कालाविषयकत्वाच्च । एवमखण्डाकारवृत्तेब्रह्ममात्रविषयिण्याः कालभासकत्वाभावादप्ययं न्यायोऽसिद्धः ।

कालपरिच्छिन्नत्वं नाम जन्यज्ञानविषयप्रतिनियतखण्डकालावच्छिन्नक्रियासंबन्धित्वमिति निर्वचनमप्यनुपपन्नम्; परमाण्वादिषु तार्किकैः कालपरिच्छिन्नत्वव्यवहारस्याकरणात् उक्तलक्षणस्य तत्र सत्त्वादतिव्याप्तेः । क्रियासामान्यस्य खण्डकालावच्छिन्नत्वात् जन्यज्ञानविषयत्वस्यापि यथाविवक्षं सत्त्वात् सर्वमव्यावर्तकम् । क्रियासंबन्धित्वमेवालम् । क्रियायां कालावच्छिन्नत्वं यादृशं विवक्षितम्, तादृशस्य वस्तुन्येव साक्षात् सुवचतया क्रियाघटनमयुक्तञ्च । 'सदेव सोम्येदमग्र आसीत्' इति सतो ब्रह्मणोऽपि कालपरिच्छिन्नत्वं स्यात् । कारणवाक्यत्वात् तस्य कारणस्य च सविशेषत्वात् परिच्छिन्नत्वमिष्टमेवेति चेत्—तत्र कार्यावस्थापूर्वभाव्यवस्थाविशिष्टब्रह्मणि अवस्थागतं कालपरिच्छिन्नत्वमुपचर्यत इति तु स्यात्—तद्विहाय शुद्धब्रह्मणि जगत्कारणं ब्रह्म अध्यस्तमिति तस्यानित्यत्वमिति यदुच्यते, तदनुपपन्नम्; कार्यकालेऽपि सत्कार्यवादिभिः कारणसद्भावस्येष्टत्वेन पूर्वकालपरिच्छिन्नत्वरूपानित्यत्वस्य कारणभूतब्रह्मव्यक्तौ दुर्वचत्वात् । व्याप्यकालस्य व्यापकखण्डकालसमुदायावच्छिन्नत्वं न भवतीति चोक्तमेव । समुदायघटकत्वं तु स्यात्; न तत् कालावच्छिन्नत्वरूपम् । कालावच्छिन्नत्वमित्यस्य खण्डकालसमुदायसंबन्धित्वमिति वा, कालिकसंबन्धेन कालविशिष्टत्वमिति वा, कालब्रह्मवादेन कालात्मत्वमिति वाऽर्थस्वीकारे ब्रह्मणोऽपि कालपरिच्छेदवत्त्वात् कालपरिच्छेदनिवृत्तिरूपं नित्यत्वं न स्यादेव । अतः पूर्वोत्तरकिञ्चित्कालासंबन्धित्वविशिष्टकालसंबन्ध एव कालपरिच्छेद इति वक्तव्यम् । स चाविद्यांशेऽप्यसंभवीति तन्नित्यत्वापत्तिरिति प्रागेवोक्तम् ।

यत्तु नित्यानित्यवस्तुविवेकस्य इहामुत्रफलभोगविरागहेतुतयैवापेक्षितत्वात् अनुपयोग्यानां कालाकाशादीनां शास्त्रारम्भकाले नित्यत्वज्ञानेऽपि न क्षतिरिति—

तत्रोच्यते—अनित्यत्वनिर्णय ऐहिकफलादावावश्यको यद्यपि तदा, नित्यत्वनिर्णयस्तु क्वापि स्वातिरिक्ते स्वस्मिन्नपि वा नापेक्षितः। फलानुबुभूषोः स्वस्य, फलस्य च नित्यत्वं यदि स्यात्, तर्हि क्षुद्रफलेषु न प्रवर्तनीयमित्येतावत एव तदाऽध्यवसितत्वात्। अस्तु वा कालादीनां तदा नित्यत्वज्ञानम्, अथापि शास्त्रार्थनिर्णयानन्तरं ब्रह्ममात्रे नित्यत्वं यन्निष्कृष्यते; तद्दुर्वचत्वस्योदानीमुपपादनात्। नित्यानित्यवस्तुविवेकस्य भवत्संमतस्यादावुल्लेखश्च नित्यपुरुषार्थलिप्सुभिर्नित्यत्वस्य ब्रह्मणीष्टत्वात् तदभावे इष्टापत्तिर्न कर्तुं शक्येति प्रदर्शनाय। यद्यस्माभिरिव युष्माभिरपि ब्रह्मासाधारण्यं नित्यत्वस्य नेष्यते, तदा नैवम्भूतं दूषणमुद्भाव्येत। न चैवम्।

किञ्चाविद्यानिवृत्तौ पञ्चमप्रकारत्वादिना भवदभिमतायां कालावच्छिन्नत्वाभावादतिव्याप्तिः, तस्यास्तथात्वञ्च सर्वस्यापि बाधिततया कालस्य सद्भावासंभवादेव। तर्हि कथमविद्यानिवृत्तिर्जायेत, आद्यक्षणसंबन्धरूपोत्पत्तेर्दुर्वचत्वादिति चेत्—मा जायताम्। किं तेन। अनिवृत्तौ अविद्यायामेवातिव्याप्तेः। एतेन ध्वंसरहितत्वं नित्यत्वमिति निर्वचनमपि निरस्तम्। अत्र 'पञ्चमप्रकारत्वात् नित्यत्वलक्षणलक्षितत्वान्न दोषः' इति लेखनमसंगतम्, नित्यत्वलक्षणलक्षितत्वादेव ब्रह्मलक्षणातिव्याप्तेरुच्यमानत्वात्।

यदपि—अबाधितत्वरूपं नित्यत्वमपि ब्रह्मणि सुवचम्। न च शुक्तिसत्यरजतादिष्वतिप्रसंगः, तेषां ब्रह्मसाक्षात्कारबाध्यत्वात्। अतो ब्रह्मसाक्षात्कारानिवर्त्यत्वं नित्यत्वमिति—तदपि न—किं ब्रह्मसाक्षात्कारानिवर्त्यत्वरूपं विशिष्टं नित्यपदप्रवृत्तिनिमित्तम्, उतानिवर्त्यत्वमात्रम्। नाद्यः, ब्रह्मतत्साक्षात्कारादिविषयकज्ञानरहितानां प्रजानां नित्यशब्दव्युत्पत्त्यलाभप्रसंगात्। लोके व्युत्पत्त्यन्तरस्वीकारे चानेकार्थकल्पनानौचित्यात् प्रकृतार्थासिद्धेः। नान्त्यः, लोके शुक्तिरजतमेव निवर्त्यम्, सत्यरजतं त्वनिवर्त्यमिति विवेकपूर्वकव्यवहारे सत्यरजतं नित्यमित्यप्रयोगात्। सर्वस्य प्रपञ्चस्य सत्यत्वमास्थितवद्भिरनिवर्त्यत्वस्य सुनिश्चिततया तत्र नित्यशब्दप्रयोगापत्तेः। अनिवर्त्येषु वस्तुषु नित्यानित्यरूपद्वैविध्यस्य लोकसंप्रतिपन्न-

त्वेन अनिवर्त्यत्वरूपसामान्यस्य नित्यशब्दार्थतया व्युत्पत्त्यसंभवादित्यस्य शतदूषणीतः सुगमत्वात् । अतः सत्यमिति प्रयोक्तव्ये नित्यमिति विपर्यास एव कृतः स्यात् ।

यदपि निर्विकारत्वमपि नित्यत्वं स्यात् । विकारः कार्यात्मना परिणाम इति—तदपि न—भामतीमते अविद्यायाः परिणामित्वाभावात् कालस्य परिणामिताया भवद्भिरस्वीकृतत्वाच्च तत्रतत्रातिव्याप्तेः । यथाकथञ्चिदागन्तुककिञ्चित्संबन्धमात्रेण सविकारत्वे च ब्रह्मणोपि कालसंबन्ध–कार्यसंबन्धादिशालित्वादनित्यत्वापत्तिः । तादृशसंबन्धरहितस्य कस्यचित् पदार्थस्य लोकेऽनुपलम्भात् नित्यशब्दव्युत्पत्तिग्रहणमशक्यञ्च । आगन्तुकानेकविकारशालिनामात्मपरमाण्वादीनां नित्यत्वस्य नैयायिकादिसंमततया च नित्यशब्दस्यान्यादृशार्थकत्वमवसीयते । "अविकाराय शुद्धाय नित्याय परमात्मने" इति नित्याविकारपदयोः सहप्रयोगाच्च नित्यपदं न निर्विकारार्थकम् । एवमुभयावधिराहित्यरूपनित्यत्वस्यापि परिणामपरिणामिभावसमाप्तिरूपत्वांगीकारात् भामतीमते अविद्यादावतिव्याप्तिरेव ।

यत्तु क्रोधकलुषितस्य कुत्सितमतिमर्यादं वचनम्, "कथं शतदूषणी—ब्रह्मण्यौपचारिकत्वमेव (कमेव ?) नित्यत्वं स्यात्, अनित्यत्वं वा(?)स्यादिति न जिह्रेत्यपि वक्तुम्" इति—तत्र, सर्वत्रैव वाक्याशुद्धिस्तावदेकत आस्ताम् । एवं कोलाहलमात्रेण न ग्रन्थः खण्डितो भवति । लोकव्युत्पत्तिमनतिलंघ्य नित्यशब्दार्थमुपवर्ण्य तस्य ब्रह्ममात्रे यावन्न समन्वयः क्रियते, तावत् तस्य कथं ब्रह्मासाधारण्यम् । आकाशादेरौपचारिकं नित्यत्वम्, ब्रह्मणि तु मुख्यमिति सूत्रकारः सत्यमाह । भवन्मते तु तत् दुरुपपादमेव । जगत्कारणत्वेन प्राग् व्यपदिष्टं खलु ब्रह्म नित्यमिति सूत्रकृदाह । भवन्मते जगत्कारणं ब्रह्म सविशेषं मिथ्याभूतम् । उक्तञ्च भवतैवात्र, "जगत्कारणस्य ब्रह्मणोऽपि शुद्धब्रह्मण्यध्यासादनित्यत्वमेव" (264) इति । यत्तु शुद्धं ब्रह्म, तस्य निर्विशेषत्वात् नित्यत्वनिर्वचनं किमपि तत् स्प्रष्टुं न प्रभवति । अबाधितत्वादिरूपं

नित्यत्वं लोकव्युत्पत्त्यतीतमिति च प्रागुक्तम् । एवञ्च नित्यपदेन किं मुख्यतया ग्राह्यमिति भवतैव विमृश्यताम् । नित्यपदस्य शुद्धब्रह्मण्यौपचारिकत्वमपि सर्वस्य शब्दस्य तत्रौपचारिकत्ववादिभिर्भवद्भिरनिषेध्यमेव । मुख्यप्रयोगस्थलमेव तु किञ्चित् प्रदर्शनीयम्; अन्यथा औपचारिकप्रयोगस्याप्यप्रसक्तेः । एवमसंबद्धवादिनां व्याहारविचारे विदुषां ह्रीर्यद्यपि युक्तैव—लोकक्षोभस्य भवादृशकृतस्यासह्यत्वात् पुनरखिलक्षेमकामैराप्ततमैः परमार्थः पदेपदे आविष्करणीयो भवतीत्यलमतिवादप्रत्युत्तरणविस्तरेण । संविन्नित्यत्वानुमानादिकं शमितं प्रागेव । नित्यत्वनिरुक्तिश्चेह निराकारि ।

अप्रध्वंसित्वरूपा निखिलबुधमता नित्यता ब्रह्मणीष्टा
सर्वध्वंसेष्वपि स्यादथ यदि त इमे द्रव्यनिष्ठा अवस्थाः ।
स्यादेवाद्वैतभङ्गो विविधविकृतिमद्द्रव्यमत्या तदास्ताम्
श्रुत्या नित्येष्वनेकेष्वविशयमुदितष्वेष पक्षः कथं स्यात् ॥

नित्यानित्यविवेकश्च नित्यस्वाभीष्टलिप्सया ।
प्रवाहनित्यस्वाभीष्टलिप्सयाऽप्येष इष्यते ॥

तस्मादध्वंसतारूपनित्यत्वस्यानपेक्षणात् ।
द्रव्ये ध्वंसाप्रसक्तेश्च नैतन्निर्वचनं वरम् ॥

नित्यः कश्चित् पुमर्थो यदि भवति मया लभ्य इत्याशयैव
अत्यन्तार्थावबोधे प्रवणयति मनः क्षुद्रभोगान्निवृत्तः ।
भुंक्ते मुक्तौ पुमर्थं स इति च नियते भोक्तृभोगस्वरूपे
निर्धर्माद्वैतसिद्धिर्न भवति तदसौ नित्यभोगोऽस्ति नित्यः ॥

शुभमस्तु

श्रीः

# अद्वितीयश्रुत्यर्थप्रसाधनम्

न यत्समश्चाभ्यधिकश्च दृश्यते निमित्तमन्यच्च न यो व्यपेक्षते ।
तमद्वितीयं चिदचिद्विशेषितं श्रितोऽस्मि लोकप्रभवं श्रियः प्रियम् ॥

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति वाक्यं प्रलयकालपरिस्थितिप्रदर्शकमिति सर्वसंप्रतिपन्नम् । एवमिच्छन्त एवाद्वैतिनो वाक्यस्यास्य ब्रह्मातिरिक्तसर्वमिथ्यात्वपरतयाऽपि व्याख्याने व्याप्रियन्ते स्वाभिमतार्थस्थापनाभिनिवेशवैयग्र्येण । सर्वमिथ्यात्वपरत्वे च, इदमग्र आसीदिति पदत्रयं विना 'सदेव सोम्यास्ति एकमेवाद्वितीयम्' इति श्रुत्या भाव्यम् । इदमिति पदं तावदास्ताम्; अग्र आसीदिति पदद्वयं पश्चाद् द्वितीयसत्तां ज्ञापयत् द्वितीयत्रैकालिकाभावरूपमिथ्यात्वपरिपन्थि । शाङ्करोपनिषद्भाष्ये च व्यक्तं विशिष्टाद्वैतिसंमत एवार्थः सदेवेति वाक्यस्य प्रदर्शितः—"सदेवेत्येवशब्दोऽवधारणार्थः । तेन इदमित्युक्तं नामरूपवज्जगत् अग्रे व्यवच्छिद्यते । स्वकार्यपतितमन्यन्नास्तीति एकमेवेत्युच्यते । अद्वितीयमिति मृदो यथाऽन्यत् घटाद्याकारेण परिणमयितृ कुलालादि निमित्तकारणं दृष्टम्, तथा सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यते" इति । अयमेवार्थः प्रकृत्यधिकरणशाङ्करेऽपि संक्षिप्योक्तः । एवंस्थिते शतभूषणी अस्मन्मते एकपदैवशब्दयोर्यद् वैयर्थ्यमुद्भावयति, तत् तदीयभाष्येऽपि तुल्यम् । तत्र परिहरणसरणिश्चात्राप्यविशिष्टा । श्रीभाष्ये च एकमित्यस्य, बहु स्यामिति बहुशब्दप्रत्यनीकत्वात् तस्य च नामरूपविभागवत्परत्वात् एकपदं नामरूपविभागरहितमित्यर्थकमित्युक्तम् । एवञ्च यदेवेत्येवकारः तुच्छव्यवच्छेदकः, एकमिति पदं नामरूपविभागावस्थापूर्वभाव्येकत्वावस्थाविशिष्टपरम्, तत्रैवकारो नामरूपावस्थाव्यवच्छेदकः, अद्वितीयपदञ्च निमित्तनिषेधकमिति सर्वसार्थक्यम् । अन्यच्च तार्किकखण्डनरूपं पदकृत्यमत्रावसेयम् । ते खल्व-

भावाज्जगद्भवतीति बौद्धपक्षं प्रतिक्षिपन्तः कार्यस्य जगतः कारणमपि सदेव, न त्वसत्, तच्च सत् नैकम्, अनेकपरमाण्वात्मकत्वात्, नापि तावन्मात्रमग्र आसीत्, किन्तु निमित्तकारणभूतेश्वरात्मकद्वितीयविशिष्टञ्चेत्याहुः। तत्र सदेवेति तदुक्तमभ्युगम्य तस्योपादानस्य परमाणुरूपतयाऽनेकत्वं तदुक्तं प्रतिषिध्यते एकमेवेति। अथोपादानातिरिक्तनिमित्तसद्भावो निरस्यते अद्वितीयमिति। अतो न किञ्चिदिह व्यर्थम्। अद्वैतमतेऽपि 'जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा अविद्या तच्चितोर्योग' इत्येषां षण्णामनादीनां प्रलये संमतत्वात् जीवकर्मणामपि प्रलये संमन्तव्यत्वात् वाक्यस्य चास्य प्रलयपरत्वात् न ब्रह्मातिरिक्तसर्वनिषेधपरत्वं युक्तम्। ब्रह्मातिरिक्तसर्वमिथ्यात्वप्रापकवाक्यानि त्वन्यान्येव तैः प्रदर्शनीयानीत्यार्जवगम्योऽद्वैतिनां पन्थाः।

शतभूषणी तु एकपदैवपदयोरसन्मते वैयर्थ्यमापादयन्ती स्वमते कियत् सार्थक्यं मन्यत इति विचार्यम्। यथा वृक्षस्य स्वगतपत्रपुष्पादिकृतभेदः, वृक्षान्तरकृतभेदः, शिलादिकृतभेद इति स्वगतभेदसजातीयभेदविजातीयभेदाः, तथा सतोऽपि प्राप्ताः एकशब्दैवशब्दाद्वितीयशब्दैः क्रमेण क्षिप्यन्त इति वदति। अथ च, 'श्रुतानां त्रयाणां पदानां सार्थक्यार्थं गोबलीवर्दन्याये- नैवमुक्तं सत्यप्येकेनैव पदेन त्रिविधभेदराहित्यरूपार्थविवक्षासंभवे। आम्नायस्य गतिं वक्तुं प्रभवामः; नाम्नायं पर्यनुयोक्तुम्' इति लिखन्ती स्वपक्षे पदवैयर्थ्यं प्रतिपद्यते। अत्रोक्तार्थेऽपि किञ्चित् विमृश्यमस्ति। यदि एकपदं स्वगतभेदराहित्यं सच्छब्दवाच्यस्य बोधयति, तदुपरितन एवकारः कथं सजातीयभेदराहित्यं बोधयेत्। एवकारो हि यच्छब्दसमभिव्याहृतो भवति, तच्छब्दान्यरूपत्वव्यवच्छेदमेव गमयेत्। अतः सदेवेत्येवकारेण विजातीयभेदस्य, एकमेवेति सजातीयभेदस्य च व्यवच्छेदः स्वरसः। परिशेषात्तु अद्वितीयपदं स्वगतभेदव्यवच्छेदकमिति युक्तमित्यद्वैतमतपरिष्कारिणः। अस्तु तावत् कथमपि।

त इमे स्वगतभेदसजातीयभेदविजातीयभेदाः सतः प्रसिद्धा अप्रसिद्धा वा। आद्ये तन्निषेधो न संभवी। अन्त्येऽपि प्रतियोग्यप्रसिद्ध्या निषेधायोग

एव। एवं स्थिते अद्वितीयमित्यस्य स्वसजातीयद्वितीयरहितमित्यर्थवर्णनं दूषयन्त्या शतभूषण्या यल्लिखितम्, 'निषिध्यमानमिदं द्वितीयं कारणभूतमकारणभूतं वा। आद्यं सदतिरिक्तं प्रमाणतोऽसिद्धम्; अन्त्यं सृष्टेः प्रागसिद्धम्' इति—तत् स्वपक्षेऽप्यविशिष्टमित्युपेक्ष्यम्, सजातीयादिभेदाप्रसिद्धेरनुपदं दर्शितत्वात्। न चास्मन्मतेऽप्रसिद्धिः; स्वनिष्ठकारणत्वादिविवक्षितधर्मवत्त्वस्वप्रतियोगिकभेदवत्त्वोभयाभावव्याप्यवस्तुत्वकत्वमद्वितीयत्वमितिरीत्या परिष्करणात्। यत्रयत्र वस्तुत्वं चिति अचिति ईश्वरे च, तत्र सर्वत्र स्वगतधर्मविशेषस्य वा स्वभेदस्य वाऽभावेनोभयाभावसत्त्वात्। ईदृशार्थविवक्षया अद्वितीयपदप्रयोगः सुप्रसिद्ध इति च, "यथा चोलनृपः सम्राट् अद्वितीयोऽस्ति भूतले" इति श्रीभगवद्यामुनमुनिवचनमेव दर्शयति। स्वभिन्नत्वव्यापकाभावप्रतियोगिकारणत्वादिधर्मकत्वं वा भवत्वद्वितीयत्वम्। भवन्मते तु भेदः सर्वथैवाप्रसिद्धः। अपरमार्थभूताः सजातीयविजातीयस्वगतभेदाः सन्ति, परमार्थभूतास्तु नेति चेत्—अपरमार्थभूतं वा निर्विशेषसजातीयं किमस्ति। यथाकथञ्चित् साजात्यं तु विजातीयस्यापि स्यात्। सत्पदेनाविद्याशबलं गृह्यत इति चेत्—तदापि तत्सजातीयं किमन्यत्। तद्विजातीयस्य निर्विशेषस्य सत्त्वात् कथं विजातीयराहित्यम्। अविद्याशबले च सार्वज्ञ्यसर्वशक्तित्वादिधर्माणां सत्त्वात् कथं स्वगतभेदाभावः। अतः स्वपक्षदोषमनवेक्ष्य निर्दोषपक्षे दोषोद्भावनं शतभूषण्या क्रियते।

अद्वितीयपदे तत्पुरुषो बहुव्रीहिर्वेति विकल्प्य, 'स्वपक्षे तत्पुरुषे द्वितीयभिन्नमित्यर्थः। वस्तुषु विद्यमानेषु परमात्मा द्वितीयो न भवति, किं तु प्रथमपरिगणनीय इति तदाशयः; बहुव्रीहौ, द्वितीयरहितं स्वसमानद्वितीयरहितमित्यर्थः' इत्यर्थद्वयमेव स्वीकुर्वत्या शतदूषण्या समासद्वयेऽपि अद्वैते सर्वविधार्थासंभवः प्रतिपादितः। तत्र शतभूषणी स्वपूर्वाचार्यसंमतमर्थं परं समर्थयितुमनिच्छन्ती प्रायः सर्वान् कल्पान् स्वपक्षे समर्थयितुमुद्यम्य तेषां कल्पानां विशिष्टाद्वैते असंभवञ्चाविष्कारोति। शतदूषण्या स्वपक्षे संमतत्वेन प्रदर्शित-

मर्थं विहायार्थान्तराणामसंभवोपपादनं वृथा विस्तरः। अद्वैतपक्ष इवात्र पक्षेपि यथाकथञ्चित् संभवः सर्वस्य स्यादेव। एतद्विषयविस्तरस्तु नास्माकमिष्टः। तत्कृतसमर्थनानौचित्ये तु दिङ्मात्रं प्रदर्श्यते—'द्वितीयं नेत्युक्तौ स्वतन्त्रद्वितीयाप्रसिद्ध्या अस्वतन्त्रद्वितीयभूतचिदचिद्भेद एव ब्रह्मणि वक्तव्यः। न चास्वतन्त्रं द्वितीपदेन गृह्येत' इत्युक्तमयुक्तम्; 'असिद्वितीयोऽनुचचार पाण्डवः' इति अस्वतन्त्रेऽपि द्वितीयपदप्रयोगात्। स्वतन्त्रस्य प्रथमं परिगणनेनास्वतन्त्रस्य द्वितीयतया परिगणनस्य न्याय्यत्वात्। अत एव द्रव्यगुणकर्मेति पदार्थविभागे द्रव्यस्य प्राथम्यम्। न चाद्वितीयमित्युक्तौ तृतीयमिति स्यादिति वाच्यम्—यत् द्वितीयमेव न भवति तस्य तृतीयत्वशङ्काप्रसक्त्यभावात्। प्रथमत्वतृतीयत्वादिषु धर्मेषु प्रथमत्वस्य प्रथमोपस्थितस्य त्यागेन, प्रथममन्यत् किञ्चिदनिर्धार्य च तृतीयत्वस्यात्र कल्पनायोगात्। स्वभिन्नस्य सर्वस्य द्वितीयत्वेन क्रोडीकृततया तद्भिन्नत्वस्य प्रथम एव भावाच्च। उत्कर्षापकर्षागणनया संख्यानमात्रविवक्षायां तु काममीश्वरस्तृतीयोऽपि भवेत्; 'भोक्ता भोग्यं प्रेरितारञ्च मत्वे'ति तृतीयतया निर्देशात्। तावता इतरस्वातान्त्र्यं वा ब्रह्मणो निमित्तोपादानत्वसमावेशायोगो वा कथम्। अपृथक्सिद्धिरस्मत्कुलधनमिति भवदुक्तमत्यन्तमिष्टम्। अत एव धन्या वयम्। परंतु भवद्भिरस्य धनस्यापहरणेऽभिमतेऽपि स्वमतभङ्गभियैवापस्त्रियते। वस्तुतोऽन्यवेदान्तिभिरप्यंगीकृतोऽयं शरीरात्मभाव इति नयप्रकाशिकायामदर्शि, यथा, "किञ्चातिचिरन्तनयज्ञेश्वरसूनुशङ्करकृते वेदान्तसूत्रोपन्यासे, तादात्म्यनिर्देशः शरीरात्मभावनिबन्धन इत्युक्तत्वाच्चास्मदीयमार्गस्यैव साम्प्रदायिकत्वम्। तथोक्तम्, आकाशस्तल्लिङ्गादित्यत्र, 'आकाशशरीरत्वाच्चाकाशशब्देन ब्रह्माभिधीयते। तथा, शरीरशरीणोश्चाभेदेन व्यपदेशो दृश्यते यथा देवदत्तो बुद्धिमानिति" इति। तार्किकमीमांसकसमादृतश्चायं विषय इति नयद्युमणिभूमिकायामस्माभिरुपपादितमपि द्रष्टव्यम्।

अद्वैतमते कल्पितं द्वितीयमादाय तद्भेदोऽद्वितीयत्वं ब्रह्मण्युच्यत इति लिख्यते। साजात्याभावात् अस्वतन्त्रं यदि द्वितीयपदेन न ग्राह्यम्, तर्हि

परमार्थसाजात्याभावात् कल्पितं परं कथं गृह्येत। अद्वितीयमित्यस्य द्वितीयसदृशमित्यर्थे तृतीयत्वं यद्यस्मन्मते आपतति, तर्हि भवन्मतेऽप्यापतेदेव। विवक्षितासिद्धिस्तु भवतां विशेषः। 'द्वितीयविरुद्धमद्वितीयमित्यर्थोऽपि युज्यते अविद्याविरुद्धत्वात्' इत्याह ब्रह्मविषयकवृत्तेः किलाविद्यया विरोधः; न तु ब्रह्मणः। अतः सवितृसंतमसन्यायेन विरोधप्रदर्शनमयुक्तम्। अस्मन्मतेऽपि द्वितीयविरुद्धत्वमस्ति असुरप्रकृतिभिर्द्वितीयैरनन्तकल्याणगुणगणपरमात्मविरोधस्य क्रियमाणत्वात्। 'द्वितीयाभावोऽद्वितीयमित्यर्थोऽपि युक्तः ब्रह्मणः प्रपञ्चाभावरूपत्वात्' इत्याह। एवं तर्हि अभावस्य स्वप्रकाशत्वात् द्वितीयं नैव प्रतीयेतेति दोषं तु न वारयति। एवं पूर्वेषु पक्षेष्वपि भाव्यम्। 'यथा भावाभावरूपतया विरोधः, तथा वध्यघातुकभावरूपविरोधोऽप्यस्ति; अखण्डाकारवृत्तिव्याप्यब्रह्मवध्यत्वात् द्वितीयस्य' इत्याह। एतदपेक्षया ब्रह्मणोऽविद्यातिरोहितत्वात्, तिरोधानस्य च प्रकाशनाशस्वरूपत्वात् ब्रह्मणश्च प्रकाशानतिरिक्तत्वात् तद्घातकत्वमविद्यायामिति वध्यघातकभाव एवाद्वैतमते श्लिष्टः स्यात्। अखण्डाकारवृत्तिस्थले तु प्राप्ताप्राप्तविवेकेन वृत्तेरेव घातकत्वम्; न ब्रह्मणः। 'अभावरूपत्वञ्च ब्रह्मणः स्वव्यतिरेकेणेतराभावात्' इत्याह—तदयुक्तम्—स्वव्यतिरेकेणेतराभावे प्रतियोग्यप्रसिद्ध्या अभावत्वासिद्धिरेवेति। यत्तु धर्मभूतज्ञानं द्रव्यं घटादिष्विव परमात्मनि जीवात्मनि च संयुक्तमिति सर्वदा तत्तद्भानमपि स्यादित्यापादानम्—तन्न—संसरतां जीवानां धर्मभूतज्ञानमिन्द्रियादिसाधनान्तरसंनिकर्षाधीनसंयोगबलादेव वस्तुग्राहकमिति स्वीकृतत्वात्।

यत्तु 'श्रुतेस्तु शब्दमूलत्वात्' इति सूत्रोक्तयुक्त्या ब्रह्मणो विचित्रशक्तियोगात् निरवयवत्वमकार्त्स्न्येनपरिणामश्च यथा, तथैवाविद्याया अपि विचित्रशक्तियोगात् स्वयम्प्रभस्वविरोधिब्रह्माच्छाद[illegible]दिकमपीति—तन्न—ब्रह्मविषय इवाविद्याविषये श्रुत्यदर्शनात्। मूलप्रकृ[illegible]रूपाविद्यायाश्च तत्रतत्रोक्तावपि निरंशब्रह्मणि स्वयम्प्रकाशे गृह्यमाण एवाविद्याबलादनावियक एवांशः कश्चिदगृह्यमाणोऽस्तीत्यविद्यामहिमप्रदर्शिका श्रुतिः कुत्रापि। अविद्या यदि ग्रहवि-

रोधिनी, ब्रह्म न प्रकाशेत । यद्यविरोधिनी, तर्हि नाच्छादिका । यद्यविद्या स्वयमंशान् कांश्चित् कल्पयित्वा तदंशमात्राच्छादिका भवति, तावता कृत्स्न-ब्रह्मप्रकाशस्तावन्न व्याहन्यत इति न ब्रह्माच्छादकत्वम् । अतो न युक्तमेतत् । अपिच कृत्स्नप्रसक्त्यधिकरणे शांकरभाष्ये ब्रह्मण: शब्दमूलत्वेन सर्वोपपत्ति सूत्रोक्तामाक्षिप्य तत्रारुचिमूढ्वा स्वमविद्याकल्पितरूपभेदाभ्युपगमान्न दोष इत्युक्तम् । एवं शब्दमूलत्वोपपत्तिं परित्यजत्यद्वैतमते अविद्याया महिमा शब्दमूल इत्यदोष इति कथमुच्येतेति स्वयमद्वैतिभिर्विभाव्यम् । वस्तुतस्तु अविद्यायामस्यां न प्रमाणगन्धोपीति प्रागेव प्रत्यपादि ।

किमनया तत्पुरुषकल्पचिन्तया । बहुव्रीहिस्तु सर्वाभिमत: । तत्र शतभूषणी वदति, चिदचिद्विशिष्टब्रह्मण एव कारणत्वात् कर्मण: सहकारिणश्चानिषेध्यत्वात् द्वितीयपदेन निषेध्यमुपस्थापनीयं चिदचिदतिरिक्तं स्वतन्त्रमस्व-तन्त्रं वा न किञ्चित् प्रसिद्धमस्ति, यन्निषिध्येतेति—तत्रोपक्रमदर्शितं शाङ्करो-पनिषद्भाष्यमेव पर्याप्तं प्रतिवक्ष्यति । तन्मते वा किं द्वितीयं प्रसिद्धं प्रतिषि-ध्यते । अद्वितीयमित्यनेन विजातीयनिषेध इति ते मन्यन्ते । अस्य गोर्द्विती-योऽन्वेष्टव्य इत्युक्तौ द्वितीयपदेन महिषग्रहणं क: कुर्यात् । अतो द्वितीयप-दस्य विजातीयपरत्वमस्वरसम् । न च तन्निषेद्धुं शक्यम्—विजातीयाया अविद्याया: स्वीकृतत्वात् । तदुक्तमाचार्यैरेव—

"मायोपाधिस्वशक्तिव्यतिकरितपरब्रह्ममूल: प्रपञ्च:
येषां तेऽप्यद्वितीयश्रुतिमवितथयन्त्यत्र तत्तद्विशिष्टे ।"

इति । न चाविद्यादिस्वीकृतातिरिक्तं प्रसिद्धम्, यदत्राद्वितीयमिति निषिध्येत । द्वितीयस्य परमार्थतयाऽभाव उच्यत इति चेत्—द्वितीयस्य स्वतन्त्रतयैवाभाव: किं नोच्येत । अस्तीति प्रतीतिकाले परमार्थत्वेनैव प्रतीतत्वात् तद्विरोधात् परमार्थत्वेनाभावो दुर्वचश्च । स्वतन्त्रतया द्वितीयाभावश्च स्वरसप्रतीत: । वस्तुतो निमित्तनिषेध उभयसंप्रतिपन्न इति चाल्पार्षाचामभिमतमर्थान्तरवर्णन-मयुक्तमित्यलं बहुना ॥

तुल्यं नेत्यद्वितीयश्रुतिसरसमितं यामुनार्योपदिष्टम्
दृष्ट्वा संकल्पवाक्यं यतिनृपतिरुपादानतुल्यं निमित्तम् ।
व्याचष्टैतन्निषेध्यम्; न सम इति मिते चाधिकः स्यात् कुतोऽन्यः
वाक्यार्थानामबाधादनुगुणगतितश्चाद्वितीयोऽयमर्थः ॥

शुभमस्तु

---

श्रीः

# सत्त्वासत्त्वविवेकप्रसाधनम्

सदित्यसदिति श्रुतं सदसतोश्च यत् कारणम्
विदन् सदिति यत् जनो भवति सन् असन्नन्यथा ।
सदा सरसदास्यदं ननु स दास्यति स्वं पदं
मुदा हरिरिति श्रयेमिह इदम्; मुधैवेतरत् ॥

सदसद्विलक्षणं शुक्तिरूप्यादिकमित्युपपाद्य तन्निदर्शनेन जगतः सदसद्वैलक्षण्यं तत एव मिथ्यात्वं ततश्चाद्वितीयत्वं ब्रह्मण आतिष्ठमानानां मतरहस्यं शुक्तिरूप्याद्यायत्तम् । तदसिद्धौ सर्वासिद्धिरिति तन्निरासाय सदसत्त्वविवेक इह विधीयते ।

अस्तीति नास्तीति वा द्विविध एव लोके व्यवहारः। अतः सत्त्वमसत्त्वञ्चैकत्र प्रतिषेद्धुमशक्यम् । अतः सामान्यतः सदसद्विलक्षणं किञ्चिदिति कल्पनं तावन्न युक्तम् । किञ्चिद्रूपेण सदप्यन्यरूपेणासद्भवतीति सदसदिति वक्तुं साम्प्रतम् । परं ब्रह्मापि, 'सदेव सोम्येदमग्र आसीत्' इति वाक्ये सदिति श्रुतम्, 'असद्वा इदमग्र आसीत्' इत्यत्रासदिति श्राव्यते । भवति चैक एव धर्मः सदिति विवक्षित एव रूपान्तराभावरूपेणासदिति व्यपदेश्यः । मृत्पिण्डोऽस्तीति, घटरूपेण नास्तीति च मृत्पिण्डस्वरूपावस्थैव विवक्ष्यते ।

'असदिति चेन्न धर्मान्तरेण' इति सूत्रेण चैतदुक्तम्। एवं कार्यकारणस्थल इवान्यत्रापि असत्त्वस्याभावस्य भावरूपत्वमवसेयम्; घटोस्तीत्यस्य, नायं पट इत्यस्य च पटभेदरूपघटत्वविषयकत्वसंभावत्। भावातिरिक्ताभावाभावादेव इयं शुक्तिरिति निश्चयस्य, नेदं रजतमिति निश्चयस्य च तुल्यरूपा रजतबुद्धि-प्रतिबन्धकता। एवंच यथा शुक्तिः स्वरूपेण सती रजतरूपेण चासती, तथा रजतमपि स्वरूपेण सत् शुक्तिरूपेणचासदिति सदसदेव। तदुक्तम्, "स्वरूपपररूपाभ्यां नित्यं सदसदात्मके। वस्तुनि ज्ञायते किञ्चिद्रूपं कैश्चित् कदाचन" इति। अत्र वस्तुनीति सप्तम्यन्तपाठ एव स्वरसो भामत्युपपाद-नानुकूलश्च; न तु शतभूषणी–सिद्धिटिप्पणीष्टद्विवचनान्तपाठ इत्यन्यदेतत्।

अत्राद्वैतिनः—वास्तवरजतस्य शुक्तेरिव सदसत्त्वं तावदास्ताम्। शुक्तौ प्रतीतस्य तु रजतस्य सदसद्विलक्षणत्वमेवेति। अत्र पृच्छ्यते—अस्यापि रजतस्य, इदं रजतमिति, अत्रास्ति रजतमिति सत्त्वेनैव प्रतीयमान-त्वात्, नेदमरजतमिति अन्यरूपेणासत्त्वेन प्रतीयमानत्वाच्च सदसत्त्वमपरि-हार्यम्। यद्येवमपि सदसद्विलक्षणत्वं तस्योपपाद्यते—तदपि विमृश्यते। भामतीकल्पतरूपपादितमनिर्वचनीयसिद्धिप्रकारमामृश्यान्यथाख्यातिवादिना क्रि-यमाणं तन्निरासं प्रदर्श्य परिमले प्रकारान्तरेणानिर्वचनीयं शशशृङ्गविभ्रम-ग्रहणेनोपपादितम्। तदपि शशशृङ्गायमाणमिति परमार्थप्रकाशिकायामस्मा-भिः प्रतिपादितमेव। शतभूषणीकारस्तु **अद्वैततत्त्वशुद्धिरिति** ग्रन्थमुखेन तत्खण्डने प्रवृत्तः स्थलान्तरेश्वन्यथाऽन्यथाऽनूद्य खण्डनेन तृप्त इह तथापि वक्तुमप्रगल्भः स्थूलमेव किमपि विलिख्यापासरदिति व्यक्तं तद्दर्शिनाम्। अतएवाद्वैततत्त्वशुद्धिखण्डनमनपेक्षितमित्युपेक्षितम्। तदिदं परमार्थप्रका-शिकाग्रन्थं तद्ग्रन्थश्च सह पठतां सुगमम्। अन्यच्च परमार्थप्रकाशिकायामनिर्व-चनीयकल्पनानौचित्यं विस्तरेण प्रतिपादितम्, तथा नयद्युमणिभूमिकायामस्म-त्प्रतिपादितम्, एवमत्रापि प्राक्कार्यानुपपत्तिभङ्गप्रसाधनादौ प्रदर्शितं सर्वं

प्राज्ञाः प्रेक्षितुमर्हन्तीतीह शतभूषणीगृहीतविमर्शप्रसंगेन संगृह्य मुखान्तरेणानिर्वचनीयखण्डनं क्रियते ।

इदं तोयमिति मरीचिसंनिकर्षे जायमानं ज्ञानं स्मृतिप्रत्यक्षोभयात्मकमित्यख्यातिवादिनः । तत्रैवं भामती—मरीचिषु इदं तोयमिति तोयतादात्म्यं भासते । तत् तावत् सत् असद्वा । नाद्यः, मरीचीनां तोयभावायोगात् । नान्त्यः, किं मरीचीनां तोयरूपेणासतीनां भानमेव तोयतादात्म्यभानम्, उत तोयस्य मरीचिरूपेणासतो भानं तत् । आद्ये तोयतादात्म्यं मरीचयश्चेत्—इमा मरीचय इति बुद्धिः स्यात् । अन्त्ये किं तोयं तत् । यदि गङ्गातोयम्, गङ्गातोयमिति स्यात् । अन्यतोयत्वे च तथैव भायात् । असंनिकृष्टत्वात् तोयस्य स्मरणमेव हि वक्तव्यम् । तच्च यथानुभवं स्यात् । एवञ्च तत् तोयमिति स्यात्; न तु इदमिति मरीचिग्रहणम् । अतस्तोयतादात्म्यं सदसद्विलक्षणम् । न च वास्तवतोयतादात्म्यमनिर्वचनीयं भवतीति तोयमप्यनिर्वचनीयमेव । तच्च न पूर्वदृष्टपरमार्थतोयम् । नापि पूर्वदृष्टवत् स्नानपानशैत्यसंवेदनाद्यावहम् । तथापि तत् तथेव प्रतीयते परमिति ।

अत्रोच्यते—इदं तोयमिति ज्ञानस्य वास्तवतोयाविषयकत्वमनिर्वाच्यतद्विषयकत्वञ्चाभिप्रयता कियानत्र प्रतीतिनिर्वाहः कृतो भवति । इदमिति गृहीतासु मरीचिषु तोयतादात्म्योपपादनं खलु चिकीर्षितम् । तदकृतमेव भवति । न खल्वनिर्वाच्यतोयतादात्म्यमनिर्वाच्यं मरीच्यनुयोगिकं भवति तथासति तस्य तादात्म्यस्य वास्तवतोयप्रतियोगिकत्वस्यापि सुवचतया अनिर्वाच्यतोयकल्पनाया असिद्धेः । अपरमार्थे परमार्थसंबन्धाभाव उभयत्र तुल्यः । संबन्धस्य संबन्धिद्वयायत्ततया अनिर्वाच्यसंबन्धवादिना मरीच्यनुयोगिकतोयप्रतियोगिकतादात्म्यमिति विशिष्टमेव कल्पनीयमिति तोयात्मकमरीचिरूपानिर्वचीयभानमेव इदं तोयमिति ज्ञाने स्यात्; न तु वास्तवमरीचिरूपधर्मिभानम् । एवं सर्वत्र भ्रमेऽधिष्ठानभानाभावप्रसंगोऽवसेयः । मरीचिषु तोयतादात्म्यानुयोगित्वमनिर्वचनीयं कल्प्यत इति चेत्—तस्य कल्प्यस्य

मरीचिरूपवास्तवार्थसंबन्ध एव कथम् । वास्तवं वस्तु कल्पितं वस्तु च विशकलितं पृथगवभासेत ; विशिष्टभाननियमकाभावात् । यदि विशकलितं भानाद्दर्योर्द्वयोरसंबन्धाग्रहात् विशिष्टभानवाचोयुक्तिः, तर्हि घट्टकुट्यां प्रभातम् ; अख्यातिशरणाश्रयणात् । विशिष्टभानकल्पने चान्यथाख्यातिः । एवं तत्र तोये या परमार्थत्वधीः, या च स्नानपानाद्यर्हत्वशैत्यद्रवत्वादिमत्त्वानुमा, तादृशभ्रान्तिविषयाणामनिर्वचनीयत्वं वा, असत्त्वं वा, सत्त्वं वा । अनिर्वचनीये तोये अनिर्वचनीयं तत् सर्वमस्ति चेत्—तत्र तद्बाधाभावप्रसंगः ; स्नानपानादिकार्यापत्तिश्च । न द्वितीयः ; अलीकस्य सत्त्वेन भानायोगादनङ्गीकृतत्वात् । न तृतीयः, सतां तेषामनिर्वचनीये भानं कथमिति प्रश्ने भेदाग्रहस्यासंसर्गाग्रहस्य वा वाच्यत्वेनाख्यातिपक्षप्रवेशात् । अनुमित्यादिरूपपरोक्षभ्रमेष्वन्यथाख्यात्यैव निर्वाह इति परिभाषादिस्वीकृतपक्षे तु तत्सामान्यादितरेषु तथात्वमिति सर्वत्रान्यथाख्यातिरेव स्यात् ।

यच्च—इदमर्थज्ञानरजतज्ञानयोरैक्यत्वसाधनार्थं भामत्युक्तमनुमानम्—विवादाध्यासितं रजतज्ञानं पुरोवर्तिविषयकम्, रजतार्थिनस्तत्र नियमेन प्रवर्तकत्वात् यथा समीचीनरजतज्ञानमिति—

तत् स्वपक्षप्रतिकूलमन्यथाख्यातिमात्रसाधकं स्यात् । स्वपक्षे शुक्तिविषयकचाक्षुषान्तःकरणवृत्तेः रजतरूपानिर्वचनीयविषयकाविद्यावृत्तेश्च भिन्नतया रजतज्ञानस्य पुरोवर्तिविषयकत्वाभावात । न च वृत्त्योर्भेदेऽपि वृत्त्यवच्छिन्नचैतन्यमेकमेवेति वाच्यम्—तर्हि घटपटादिसर्वज्ञानैक्यप्रसंगात् । न च शुक्तौ रजतस्याध्यस्ततया शुक्त्यवच्छिन्नचैतन्यरजतावच्छिन्नचैतन्ययोरैक्यमिति वाच्यम्—शुक्तित्वादेः शुक्तिगतत्ववत् रजतस्यापारमार्थिकस्य पारमार्थिकशुक्तिसंबन्धित्वे मानाभावेन शुक्त्यवच्छिन्नचैतन्यशुक्तित्वाद्यवच्छिन्नचैतन्ययोरिव शुक्तिरजतावच्छिन्नचैतन्ययोरैक्यस्यासंभवात् । व्यावहारिकशुक्त्यवच्छिन्नत्वस्वरूपमेव चैतन्ये यदा दुरुपपादम्, तदा प्रातिभासिकरजतावच्छिन्नत्वस्य का कथा एतेन शुक्त्यव-

च्छिन्नचैतन्यगताविद्यापरिणामत्वात् शुक्तिरजतयोरस्ति तादात्म्यं संसर्ग इत्यपारतम् । सोपि कथम्, अपारमार्थिकत्वादित्युक्तमेव। तादात्म्यं भेदघटिताभेद इत्युच्यते । तत्र भेदश्चैतन्यैक्यासाधकः । असंभवी च समानाधिकरणस्थले धर्मिणि भेदः, नीलो घट इत्यादौ नीलत्वघटत्वयोरेव भिन्नत्वात् । अतो धर्मिण्यभेद एव । स चात्र न वास्तवः । अनिर्वचनीयश्च न शुक्तिसंबन्धार्ह इत्युक्तम् । तस्मात् स्वपक्षेपि रजतज्ञानस्य धर्मिविषयकत्वमसंभवि ।

अप्रयोजकञ्चेदमनुमानम्, भेदाग्रहादपि प्रवृत्तिसंभवात् । क्वचित् भेदाग्रहः प्रवर्तकः, वास्तवस्थले विशिष्टज्ञानं प्रवर्तकमिति कार्यकारणभावद्वयकल्पनापत्तिरिति चेत्—वैतुष्यं प्रति क्वचिदवहननं कारणम्, क्वचिन्नखविदलनमिति कथं द्वयकल्पनम् । अतो वस्तुकल्पनापेक्षया स्थितवस्त्वन्वयव्यतिरेकानुरोधेनानेककार्यकारणभावकल्पनं न दोषाय । अस्तु वा भेदाग्रहविशिष्टशुक्तिज्ञानविशिष्टरजतज्ञानं कारणमित्येक एव कार्यकारणभावः । यत्तु—रजत एव यदा नेदं रजतमिति प्रतीतिः, तदा तत्र प्रवृत्तिर्न दृष्टा । तत्रापि प्रवृत्त्यापत्तिः ; रजतभेदाग्रहसत्वात् । इदमर्थे रजते वस्तुतो रजतभेदासत्त्वेन तत्र रजतभेदग्रहस्यान्यथाख्यातिविद्वेषिणा स्वीकारायोगेन रजतभेदाग्रहस्य सत्त्वात् ; रजतज्ञानेदमर्थज्ञानयोश्च सत्त्वादिति—तन्न—तद्विषयक रजतार्थिप्रवृत्तिः प्रति तद्विशेष्यकरजतभेदप्रकारकग्रहाभावः कारणम् । रजतधर्मिविशेष्यक रजतभेदप्रकारकग्रहस्य चाप्रसिद्धत्वात् तदभावरूपकारणाप्रसिद्ध्याऽत्र नापत्तिरिति । अथ रजते इदं रजतमिति ज्ञानात् प्रवृत्तिस्थले भेदाग्रहः कथम् । रजतविशेष्यकरजतभेदाग्रहाप्रसिद्धेरिति चेत्—अस्तु तत्र विशिष्टज्ञानस्य पृथगेव कारणत्वम् । अथवा भिन्नयोरपि रजतस्मृतिशुक्तिधर्मिप्रत्यक्षयोर्विषयतयोर्निरूप्यनिरूपकभावः स्वीक्रियते । तथाच रजतविषयतानिरूपितेदमर्थविषयताशालिज्ञानं कारणमित्यनुगमः । एवञ्च प्रकृतानुमानं पुरोवर्तिनिष्ठविषयतानिरूपितविषयतानिरूपकत्वमेव रजतज्ञाने साधयेदिति न दोषः । भिन्नज्ञानविषययोरपि असंसर्गाग्रहमात्रेण विशिष्टव्यवहारोऽपारमा-

र्थिको दृष्टः; यथा सौधस्याऽऽरामवृक्षस्य च विप्रकर्षेपि दूरत्वदोषात् तदग्रहे निरन्तरभानात् संसृष्टत्वव्यवहारः। स वस्तुतो भेदाग्रहमेव दर्शयति। अतो नान्यथाख्यात्यपेक्षा।

तर्हि तत्र रजताभावे रजतप्रत्यक्षं कथमिति चेत् — परिमल एव तत्र समाधिर्दर्शितः, प्रत्यक्षनिर्वाहाय लोकक्लृप्तरजतसामग्रीभिन्न-सामग्रया रजतोत्पत्तितद्ध्वंसप्रागभावादिकल्पनामपेक्ष्य रजतप्रत्यक्षमात्रस्य दोषघटितसामाग्रीजन्यत्वकल्पनं युक्तमिति। वस्तुतो भामत्याम्, "रजतस्मृतेः पुरोवर्तिद्रव्यमात्रग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहात्" इति प्राभाकरपक्षस्यानूदितत्वात् विषयत इव ज्ञानस्वरूपयोरपि भेदाग्रहसत्त्वात् रजतस्मृतौ रजतप्रत्यक्षव्यवहार उपपन्नः। रजतचाक्षुषवानहमिति प्रतीते-रनिर्वचनीयवादिभिरन्यथोपपादनायोगात्। विस्तरोऽन्यत्र द्रष्टव्यः। तदयं सदसद्विवेकः—

इदं रजतमिति शुक्तिविषयव्यवहारे इदमितिज्ञाने शुक्तिरूपंधर्मि विषयः, रजतमिति ज्ञाने च शुक्तिरूपेणासत् रजतं विषयः। तदपि सदे-वाऽऽपणादौ। एवं घटोस्तीत्यत्र घटसत्त्वं विषयः; घटो नास्तीत्यत्र च यथा-यथं मृदादिगतः घटत्वावस्थाविरुद्धावस्थाविशेषो विषयः। भूतले घटो नास्तीत्यत्र च घटाधिकरणतानियमकक्षणभिन्नक्षणसंबन्ध एव भूतलनिष्ठो घटा-भाव इत्युच्यते। क्षणस्य क्षणान्तराद्भेदश्च तत्तत्क्षणासाधारणधर्म एव कश्चिद्भाव्यः। घटः पटो नेत्यत्र पटभेद इव घटत्वादिरूपः। अतो भावातिरिक्तोऽभावोऽपि नास्ति। भावरूपेणाभावरूपेण वा प्रतीतश्चासौ सर्वत्र परमार्थिक एव भासते। एवं वस्तूनां परमार्थत्वेऽपि ज्ञानानां पर-मार्थविषयत्वेपि तत्तद्वस्तुषु भेदस्यासंसर्गस्य वा स्थितस्याग्रहात् विपरीतप्रवृत्त्या व्यवहारवैफल्यप्रयुक्तो ज्ञानेषु भ्रमप्रमाव्यवहारभेदः। वस्तुतो भ्रमस्थलेऽने-कत्र प्राभाकरपरिगृहीतामख्यातिं विना विशिष्टज्ञानरूपयथार्थख्यातिरपि सुवचा दृष्टश्रुतानुरोधादिति विशिष्टाद्वैतिमतमित्यन्यदेतत्।

शतभूषणीकारस्तु सत्त्वासत्त्वसमुच्चये आर्हतमतसालक्षण्यं स्यादिति दोषमारोप्य, स्यादवक्तव्यमिति च सप्तभंग्यां तैरुक्तत्वादनिर्वाच्यत्वपक्षस्यापि तत्सालक्षण्यमस्तीति स्वयमेव स्वीकरोति। "असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण" इति सूत्रभाष्यादिविरुद्धं सत्त्वासत्त्वसमुच्चयासंभवमाह। 'नासदासीत् नो सदासीत् तदानीम्' इति श्रुत्या सदसदनिर्वचनीयमस्तीति मन्यते। तस्याः श्रुतेः सदसदनिर्वचनीयार्थकत्वे सदसदनिर्वचनीयं प्रलयकाले आसीत्, इदानीं तु निर्वचनीयमेवास्तीत्येव प्रतीयेत। एवञ्च जगतो मिथ्यात्वं न स्यात्। वास्तवञ्च जगत् मिथ्याभूतात् कथं जायेतेति तदापि सदसदनिर्वचनीयासिद्धिरेव। अतः स्थूलचेतनाचेतनयोस्तदानीमभावः, सूक्ष्मचेतनसंश्लिष्टाविभक्ततमोविशिष्टं वस्त्वेवासदित्येव तद्वाक्यार्थः। सदसदनिर्वचनीयमेव चेत् तदा, 'सदेवासीत्', 'असद्वा इदमासीत्' इति श्रुत्योः का गतिः। वस्तुतस्त्वद्वैतिनोऽपि सदसद्विलक्षणमित्यस्य ब्रह्म यत् सर्वदा सत् तद्भिन्नम्, यच्चालीकं तद्भिन्नं जगदित्येवार्थं ब्रुवत इति, तावन्मात्रे न काचिदनुपपत्तिः। प्रतीतिकालेऽपि जगद्वस्तुतो नास्तीत्येतत्तु अप्रामाणिकम्। शुक्तिरजतवदिति चेत्—अस्त्येव शुक्तिरपि, रजतमपि; तद्वत् जगताऽपि क्वचिद् भाव्यम्। शुक्तिरजततादात्म्यमेव तु अज्ञानकल्पितमनिर्वचनीयं शुक्तिरजतमिति कथ्यत इति चेत्-अप्रातिभासिकात् शुक्त्यज्ञानात् प्रातिभासिकं न जायेत। अज्ञानमपि प्रातिभासिकमिति अद्वैततत्त्वशुद्धिमतमयुक्तम्; मूलाज्ञानप्रभेदस्य तूलाज्ञानस्य प्रातिभासिकत्वायोगात्। प्रतिभाससमायुष्कत्वात् प्रातिभासिकस्य, शुक्तिरजतग्रहणकाले च नाहमिदं जानामीति अज्ञानप्रतिभासायोगात् प्रातिभासिकाज्ञानस्य तदा दुर्वचत्वात्। रजतमुत्पाद्य तस्य नष्टत्वे च कारणनाशात् रजतविलयप्रसंगात्। अतोऽप्रातिभासिकमेव तत्। अज्ञानस्य वस्तूत्पादकत्वाभावश्चान्यत्र व्युत्पादित इत्यास्तामेतत्।

सिद्धेऽपि शुक्तिरजते न प्रपञ्चो मृषा भवेत्।
अधिष्ठानस्वप्रकाशादज्ञानस्थित्यसंभवात्॥

असिद्धे शुक्तिरजते दृष्टान्तस्यापि हानितः ।
अनिर्वाच्यजगत्सिद्धेरभावः सुतरामिति ॥
अनुभवविपरीतं कल्पनागौरवार्तं
श्रुतिलवशकलेनाप्युज्झितं विस्तृणानाः ।
अभिमतिपदमिथ्याशुक्तिरूप्यादिसाह्यात्
अखिलमपलपन्तो हन्त सन्तः कथं स्युः ॥

शुभमस्तु

श्रीः

# जीवैक्यभङ्गप्रसाधनम्

त्रिपाद्विभूताविव नित्यसिद्धैरिहापि तिर्यक्स्थिरमर्त्यदेवैः ।
विचित्रजीवैः सरसानुभावी दयानिधिः श्रीनिधिरस्तु भूत्यै ॥

आत्माद्वैतभङ्गवादे एकजीववादि—अनेकजीववादिसर्वाद्वैतिसंमतमात्माद्वैतं निरस्तम् । जीवेश्वरैक्यभङ्गवादे च अनेकेषामपि जीवानामीश्वरेणाद्वैतिभिरिष्टमैक्यमन्यादृशमपास्तम् । अत्र तु जीवैक्यभङ्गवादे एकजीववादिसंमतो व्युदस्यते इति प्रधानार्थवैलक्षण्यं शतभूषणी न परिशीलयति । अत्र उपक्रमे विलक्षणांशनिरूपणार्थमिवोद्गम्य संविदैक्यं जीवनानात्वञ्च वादेऽस्मिन् विलिख्य शतभूषणी शतदूषण्याः समाधानं कृतं मन्यते । एवं जीवनानात्ववचनञ्च शतदूषण्यभिमतस्थापनमेव स्यात्; न तु तद्दूषयिषितस्य जीवैक्यस्याद्वैतिसंमतस्य स्थापनम् । कतिपयाद्वैतिसंमतत्वेऽपि स्वानिष्टत्वात् शतभूषणी तन्नाद्रियत इति चेत्—तर्हि निष्प्रपञ्चीकरणनियोगभङ्गवादादिरिवायमपि वादो न परीक्ष्यः, अभिमतत्वात् । अतोऽनवधानमेव मूलम्—एतेन संख्यापूरणार्थमेकमेव दूषणं नामभेदेन नवीकृतमिति निरस्तम्—विषयभेदस्य दर्शितत्वात् ।

परस्परसंबद्धतया चैकत्र प्रसंगादन्येषां प्रस्तावेऽपि कस्यचित् कचिदैदम्पर्यमिति तीदं सर्वग्रन्थसाधारणम्। विकल्प्य दूषणेऽपि प्रकारभेदाः स्पष्टमेव लक्ष्यन्ते तत्रतत्रेति दूषणैक्यवर्णनमप्यवधानविरहविजृम्भितम्। दूषितस्यैवार्थस्य पुनर्मुखान्तरेण दूषणायाप्युपन्यास आवश्यक एव। एवं सति हि सहृदयानां माध्यस्थ्यमवलम्ब्य पथ्यग्राहिणां हितं विहितं स्यात्। सर्वथा विषयभेदात् दूषणभेदाच्च न संकरः।

यस्तु जीव एव जगदुपादानमिति किञ्चित्पक्षोपन्यासः, तस्मिन् सति जीवेश्वरभेदप्रतिपादकानामागमानां का गतिरिति विभाव्यताम्। एवम्भूतमद्वैतवादम्, जगत्कारणत्वं ब्रह्मलक्षणत्वेनोपन्यस्य, 'अनुपपत्तेस्तु न शारीरः' इत्येवं जगत्कारणस्य जीवात् भेदं प्रथमाध्याये पौनःपुन्येन प्रतिपादयतो भगवतो बादरायणस्य कथं सद्यमद्वैतिनोऽपि मन्येरन्। यथा जीवानामैक्यं तथा जीवत्वोपलक्षितसन्मात्रैक्यमपि न भवत्येव, तद्व्यक्तीनामप्यनेकत्वात्। सन्मात्रैक्यं हि नाम सतामैक्यम्, न तु सत्तैक्यम्। तच्च सर्वमानविरुद्धम्। एवंस्थिते चितोऽचितश्च सत्पदेन गृहीत्वा सतामैक्यवर्णनं कथंतराम्। घटोऽस्ति, पटोस्तीत्येवं प्रतीतयः सत्तैक्यं कथञ्चिद् गमयेयुः; न तु सदैक्यम्। न हि खण्डो गौः, मुण्डो गौरित्यतो गवैक्यं गम्येत। यदि च घटः सन् इत्यादिप्रतीतिषु सद् ब्रह्म विषयः, कथं तस्य घटाद्यैक्यम्; जडब्रह्मणोरैक्यायोगात्। बाधायामिदं सामानाधिकरण्यमित्याह शतभूषणी। स्वमतं वा लोकानुभवो वैवमिति किञ्चिदालोच्यताम्। न हि चोरः स्थाणुरित्यत्र चोराभावप्रतीतिवत् घटोस्तीति घटाभावप्रतीतिर्लौकिकानाम्। तथासत्युपादातुं नोपसर्पेत्। एवमत्र घटे सत्ताया अभावे, अस्ति भाति प्रियं रूपं नाम चेत्येतेषु आद्यं त्रयं ब्रह्मरूपं कार्येऽनुवर्तत इति घटादि प्रति ब्रह्मणो विवर्तोपादानता कथं वर्ण्येत, धर्माननुवृत्तौ उपादानत्वायोगात्। सत्ताया अनुवृत्तेरत्र विषयत्वे बाधार्थसामानाधिकरण्यवर्णनायोगात्। घटादिगतव्यावहारिकसत्तापरत्वस्यावश्यकत्वात्। तदापि परमार्थसद्गतधर्मानुवृत्त्यभावादुपादानत्वायोग एव। एवं सति, 'सच्च त्य-

स्याभवत्' इत्यस्य ब्रह्म सद्रूपेण त्यद्रूपेण च प्रतीयते परम्; न तु तत्तदस्तीत्यर्थवर्णनं स्यात्।

अस्तु तावदेतदर्थासौष्ठवम्। 'कथमसतः सज्जायेत' इति वाक्यार्थः कः। यदि सत्पदं ब्रह्मपरम्, तन्नैव जायत इति असत इति विशेषो न घटते। प्रपञ्चस्तु न सन्। सत्त्वेन प्रतीयमानमित्यर्थ इति चेत्—इदं रजतमित्यत्र यथा शुक्तेः रजतत्वेन प्रतीतिः, तथा सतः किल प्रपञ्चरूपेण प्रतीतिः; न तु प्रपञ्चस्य सद्रूपेण। अध्यस्यमानमधिष्ठानरूपेण भासत इति न हि व्यवहारः। अपि च असतः सतो जायमानत्वे उपादानोपादेययोर्भेदापत्तिः। न ह्यसति कदापि सत्त्वं भवितुमर्हतीति। कार्यकारणैक्यमत्राभिप्रेतम्। तद् भवत्पक्षे न सिद्ध्यति; जगद्ब्रह्मणोरैक्यबाधात्। एवं सत्त्वेनाप्रतीयमानात् सत्त्वेन प्रतीयमानं न जायेतेति उभयोः सत्त्वेन प्रतीयमानत्वमावश्यकमिति वाक्यार्थे कारणस्यापि सत्त्वेन प्रतीयमानत्वमेवोक्तं स्यात्। प्रतीतिश्च भ्रमसाधरणी भवदिष्टेति न कारणे वास्तवसत्त्वनिश्चय इति न सन्मात्रकारणसिद्धिः। सतः सद्भिन्नमपि सत्त्वेन प्रतीयमानं जायेतेति तु मृदो मृद्भिन्नमपि मृत्त्वेन प्रतीयमानं जायेतेति वाक्यतुल्यमविश्वसनीयम्। जायेतेत्यस्य कल्प्येतेत्यर्थवर्णनञ्चायुक्तम्। असत्यपि सत्कल्पना लोके दृश्यत एवेति न तत्र काचिदनुपपत्तिरपि। अतः समञ्जसैकरूपार्थवर्णनायोगात् लक्षणानिर्भरत्वादप्येवं व्याख्यानमयुक्तम्।

'संबन्धभेदात् सत्तैव विद्यमाना गवादिषु। सा जातिः सा परा सत्ता तामाहुस्त्वतलादायः'इति हरिवचनं गवादिषु सत्ताया विद्यमानत्वमेव वदति; न तु सत्त्वभ्रान्तिम्, नतरां सति गवादिभ्रान्तिम्। चोरः स्थाणुरिति गृहीतस्य स्थाणुत्वस्येव सद्रूपस्य घटादिविरुद्धाकारत्वं बाधायां सामानाधिकरण्यवादिभवदिष्टं वस्तुतो नास्तीत्येवात्र प्रतीयते। त्वतलादीनां भावार्थकत्वं भावे त्वतलाविति सूत्रानुशिष्टम्। भू सत्तायामिति भावः सत्तेति विदितम्। कणादश्च सत्तां विवक्षन् भावपदं वैशेषिके प्रायुंक्त। तथाच गोत्वमिति गोगतसत्ता प्रतीयेत; न तु गोमात्रवृत्तिजातिरित्याशंका कारिकयाऽनया प्रतिक्षिप्यते।

अयमर्थः—सत्पदं स्थितिविशिष्टार्थकम्। अतो विशिष्टात् भावप्रत्ययो विशेषणमभिधत्ते इति न्यायात् स्थितिरेव सत्ता। गोसत्ता च गोस्थितिः; गोषु वर्तमानो यो धर्मः प्रामाणिकः, तद्रूपविशिष्टतया गोस्थितिः। तद्रूपवैशिष्ट्यं तद्रूपमेव। सा च समवायादिना तत्तदभिमतेन संबन्धेन गवि वर्तमाना जातिरेव। एतदतिरिक्ता सत्तापि काचिन्नास्ति। जातिः सत्ता चानर्थान्तरमिति काणादैरपि युक्तं परिशीलयितुम्; विशेषजातिरहितस्थले सत्ताया अभावात् जातिपदपर्यायत्वस्य तन्मते सत्तायां सुवचत्वात्। अतो गोगतजातिरेव गोत्वपदार्थ इति। अनेन सत्ताया एव कस्याश्चिदनुगताया निषिद्धत्वात् सर्वानुगता सत्ता ब्रह्मरूपेति वक्तुमेव न शक्यते। एवञ्च कारिकेयं श्रीभगवद्यामुनमुनिवचनेनाप्यनुसृता भवति; यदुच्यते, "स्वैः स्वैर्व्यवस्थितैः रूपैः पदार्थानां व्यवस्थितिः। सा सत्ता न स्वतन्त्रा स्यात् तत्राद्वैतकथा कथम्" इति। समवायसंबन्धेन वर्तमानाः नित्या जातयः काश्चन सन्तीति पक्षोऽपि नाङ्गीकार्यः। असाधारणधर्मः सत्तेत्येतावदेवेति तत्कारिकोपरि शिक्षणमत्र श्रीभगवद्यामुनमुनिकृतमिति विशेषः। अद्वैतिनोऽपि ब्रह्मातिरिक्तनित्यवस्त्वभावात् आकृतिविलक्षणां गोत्वादिजातिं न स्वीकुर्वन्तीति परिभाषादौ व्यक्तम्। उक्तञ्च प्रागपि। अतोऽनुगता सत्ता काचिन्नास्त्येव। एतेन—'न हि भगवत्पादमते सत्ताजातिर्नास्ती'ति शतभूषण्युक्तं निरस्तम्। अर्थक्रियाकारित्वं तु सत्त्वं न सर्वानुगतमेकम्। अतः सतामिव सत्त्वरूपधर्मस्यापि नैक्यम्। ध्वंसोस्तीति प्रतीत्या ध्वंसेऽपि सत्ता स्वीकार्येति शतभूषणी। अस्तु तावत्; किं तेन। सर्वथा सन्मात्रमनुवृत्तम् अस्तीति प्रत्ययविषयो न भवतीति सिद्धम्। घटोस्ति, पटोऽस्तीत्यादिविषयस्य न ब्रह्मत्वम्, नाप्यनुगतकिञ्चिद्रूपत्वमित्येवमत्रोपपादनात् न तदादायापि जीवैक्यप्रसक्तिः।

अतः संविन्मात्रस्वरूपैक्यं न पारमार्थिकम्, नापि व्यावहारिकम्; किन्तु अद्वैतिमात्रगोचरत्वात् प्रातिभासिकमेव। यथेदं जीवैक्यम्, तथा एकजीववाद्यद्वैत्येकदेशिकल्पितं विशिष्टजीवैक्यमपि प्रातिभासिकमेव; प्रातिभासिक-

तरं वा । स्वरूपैक्यमात्रमनुक्त्वा अविद्यान्तःकरणादिविशिष्टजीवैक्येऽपि संमन्यमाने एकशरीरस्थेनैव देवदत्तादिना यज्ञदत्ताद्यनुभूतप्रतिसंधानाद्यापत्तिरत्यन्तमपरिहार्या, अविद्यादिभेदस्याप्यभावात्। यदि च मदन्ये न जीवाः किंतु मया स्वप्न इव केवलं कल्पिता इति अहमेक एवेति मन्यते, तर्हि प्रतिपुरुषमेवमेव मन्यते इति कस्तेषु व्यावहारिकसत्यो जीवः, केऽन्ये प्रातिभासिका इति विनिगमकविरहात् दुर्निगमम्। यद्युच्येत—यद्यप्येकैकोऽपि मनुष्यः स्वात्मानं जीवत्वेन मन्यते—इदमस्य भ्रान्तिविलसितम्। अस्य सर्वस्य वस्तुतो न जीवत्वम्। अत एव शुकादीनाम् अहंब्रह्मासीतिज्ञानान्मुक्तिर्नासीत्। अस्ति तावेदक एव वास्तवो जीवः। स यदा प्रतिभोत्स्यते, तदा मोक्षः। अयं स इति विशिष्याज्ञानात्तु सर्वैः प्रयत्यत इति-तन्न-स यद्येक एव जीवः, तर्हि अजीवा अन्ये कथं किमपि जानन्ति, व्यवहरन्ति, ऐहलौकिकपारलौकिकयात्राश्च निर्वहन्ति। सर्वोऽयं भ्रम इति चेत्—कस्यायं भ्रमः। अचेतनानामपि यदि भ्रमादिज्ञानाश्रयत्वम्, तत एव सर्वनिर्वाहः, तर्हि किं कस्यचिदेकस्य वा जीवस्य कल्पनेन। एषाञ्चाजीवत्वात् पुण्यपापनिबन्धनफलानुभवादिकं न स्यात्। ईदृशज्ञातृत्वकर्तृत्वभोक्तृत्वादिमत्त्वविलक्षणम्, शुद्धात्मस्वरूपविलक्षणञ्च किं तत् जीवत्वं नाम, यत् एकमात्रनिष्ठमध्यवसीयते। अथवा जीवाज्ञानभङ्गवादोक्तदिशा ईश्वर एव जीवः स्यात्। अन्ये जीवाभासाः। स तु सर्वेश्वरः सुखमात्रभाक्त्वात् अविद्याविलयमेव न कांक्षेदित्युक्तमिति नास्ति मोक्षो नाम। अतो नैष युक्तः पक्षः। अन्यत् सर्वं पुरस्तादुक्तमेव॥

केचित् स्थावरमागमार्थविमुखा निर्जीवमाशेरते
पाश्चात्याः कतिचिन्मृगादिकमपि स्वात्मोज्झितं मन्वते।
अद्वैताद्वरिणस्तु केचन सदैवाम्नायपाठप्रियाः
यन्मर्त्यान् अमरांश्च जीवरहितानाहुस्तदत्यद्भुतम्॥

शुभमस्तु

---

श्रीः

# अपशूद्रनयविरोधप्रसाधनम्

उपनिषदुपदिष्टान् भक्तियोगान् यथावि-
ध्यधिकृतपुरुषैकानुष्ठितान् आत्महृद्यान् ।
सफलयति विधाता सत्पथैकानुकम्पी
य इह जयतु सेतुः सर्वहेतुः स देवः ॥

ब्रह्मविद्यायां शूद्रस्य नाधिकार इति भगवता बादरायणेनापशूद्राधिकरणे निरणायि। अयमनधिकारनिर्णयः सगुणविद्याविषय इव निर्गुणविषयेऽपीत्यद्वैतिभिः स्वीकृतम्। अद्वैतमतरीत्या तत्त्वज्ञानस्य मिथ्याज्ञाननिवर्तकतया ब्रह्मज्ञानादविद्यानिवृत्तिरिति यदि बादरायणाभिमतं स्यात्, शूद्रस्यानधिकारस्तदुक्तो न घटत इतीदानीं निरूप्यते। तत्र शतदूषणीकृतेषु दूषणेषु यथावदसमाहितेषु अधिकरणासामञ्जस्यमेव स्यात्। अतः मुख्यदूषणं स्वपक्षे प्राप्तमपरिहृत्य किमिति शतदूषणी वाक्यान्युच्चावचानि विकीर्य विस्तृणाति। शूद्राणामध्ययनेऽधिकारं शास्त्रं नानुमन्यत इति सर्वसप्रतिपन्नम्। तत्राध्ययनेन वेदान्तस्यागृहीततया कथं ब्रह्मविद्याधिकारप्रसक्तिरिति न पर्यनुयोज्यम्। तथासति पूर्वमीमांसागतापशूद्राधिकरणेनैव गतार्थत्वादिहैतदधिकरणमनावश्यकम्। ऐकशास्त्र्यानभ्युपगमात् तेन न गतार्थतेति चेत्—तन्न—ऐकशास्त्र्यस्यासंमतावपि जैमिनीयतन्त्रसिद्धस्य विना कारणं पुनश्चिन्तनमयुक्तमित्यस्याद्वैतिभिरप्यङ्गीकृतत्वात्। 'अप्रतिषिद्धमनुमतं भवती'ति च तन्त्रयुक्तिः। इदं न्यायभाष्येऽप्यभाषि। अत एव "स्मृत्यनवकाशदोषप्रसङ्गः" इत्यादौ गतार्थत्वशङ्कापरिहारादि। अपशूद्राधिकरणभाष्येऽप्यत्र तेनापशूद्राधिकरणेनागतार्थत्वं प्रदर्श्यैव प्रवृत्ते सति व्यर्थमैकशास्त्र्यादिविमर्शनम्।

यस्तु कोलाहलः, "अत्र सावधानं प्रत्युत्तरतु शतदूषणी, किं वा प्रयोजनं भवदीयानां मते अपरस्यापशूद्राधिकरणस्य। यदि मौनमेवोत्तरम्" इत्येवम्—

स श्रीभाष्यमात्रदर्शिनामपि न भवितुमर्हति। अप्पय्यदीक्षितादिभिश्च स्वभाष्यगमनिकास्वारस्यदत्तदृष्टिभिरिवैवमुच्यते, "नाध्ययनविध्यभावमात्रेण शूद्रस्यानधिकारवर्णनं युक्तम्; किंतु, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति यज्ञादौ निषिद्धत्वादेवानधिकारः" इति। आस्तामेतत् कथमपि। अध्ययनविधिसिद्धवेदान्तग्रहणाभावमात्रेण शूद्रानधिकारः कथं भवन्मत इत्येव विचार्यम्। यत्तु विचारे रागतः प्रवृत्तेः श्रीभाष्येष्टत्वात् तन्मत एव शूद्रस्य विचारेऽधिकारप्रसक्तिः, न पुनरस्मन्मत इति—तन्न—अध्ययनमक्षरराशिग्रहणार्थम्, विचारे प्रवृत्तिस्तु रागत इत्यस्य भवत्पक्षेऽपि कैश्चित् स्वीकृतत्वस्य प्रागेव दर्शितत्वात्। रागतः प्रवृत्तिरित्युक्तौ वा कथं शूद्रोऽधिक्रियेत। न हि रागत इत्यस्य स्वेच्छया फलादिविषयिण्या यथाकथञ्चिदुत्पन्नयेत्यर्थः। किन्तु साङ्गवेदाध्ययनजन्यापातप्रतीतिरूपसंशयनिरासेच्छया स्वतः प्राप्तयेति। नैष रागः शूद्रस्यास्ति।

अथ प्रकृतं संगृह्यते—सूत्रभाष्ये शूद्रस्यानधिकारं प्रसाध्यान्ते किञ्चिदुक्तम्, इतिहासपुराणादिजनितब्रह्मविद्या शूद्रस्याप्यस्तीति। सिद्धान्तलेशसंग्रहे च तृतीयपरिच्छेदे शूद्रस्य विद्यानधिकारं केषाञ्चिदभिमतं विलिख्य, शूद्रस्यापि विद्यार्थकर्माणि तपःप्रभृतीनि सन्तीति प्रदर्श्य निर्गुणविद्यासाधनवेदान्तश्रवणादिष्वधिकारनिषेधेऽपि विषयसौन्दर्यप्रयुक्तार्थित्वनिषेधासंभवात् अविधेयायां निर्गुणविद्यायां तदतिरिक्ताधिकाराप्रसिद्धेश्च भगवत्पादभाष्यानुरोधेनेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकृतत्वात् ब्रह्मात्मैक्यपरपुराणादिश्रवणमूलं विद्यायामधिकारोऽस्तीति दर्शितम्। परन्त्वेवं सति समाचारभङ्ग इति विमृश्य विद्योत्पत्तियोग्यविमलशरीरनिष्पादनद्वारा तदुपयोग इति निगमितम्।

तद्व्याख्यात्रा चेदं भाष्यविरुद्धमिवेति परिशील्य, भाष्योक्तमितिहासपुराणाधिकारपक्षमेव विमृश्य, श्रीभाष्यगतिमेवानुसृत्य, इतिहासपुराणयोर्वेदोपबृंहणरूपेण प्रवृत्तत्वात् उपबृंहणस्योपबृंहणीयशेषत्वात् अङ्गिन्यनधिकृतस्याङ्गसंपादितोपकारविशेषेण कार्यसिध्ययोगात् इतिहासपुराणाधीनं ज्ञानं वेदार्थवैशद्यविधा-

नमुखेन वेदार्थविषयप्रवृत्तिपरपुरुषमात्रोपयोगि। अन्यथा, "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद् वेदो मामयं प्रतरिष्यति" इति वचनविरोधः। तत्र हि कतिपयवेदभागश्रावी पुरुषो मामप्यर्थान्तरपरं संभावयेदिति भीतो वेद इति तद्भयापाकरणाय तदर्थस्य मीमांसान्यायसिद्धस्योपबृंहणायेतिहासादीत्युक्तम्। सूत्रभाष्यं तु एतद्वचनाभावं कृत्वा चिन्तया। अतः शूद्रस्येतिहासपुराणाधीनज्ञानं न स्वातन्त्र्येण मुख्यफलोपयोगि। एवमपि श्रवणविधानात्तु फलं पापक्षयः विद्योत्पत्तियोग्यविमलशरीरारम्भौ रयिको भवतीत्यवसेयमित्यप्युक्तम्। एवं ब्रह्मविद्यानधिकार एव दृढीकृतः।

एवमपि यदेष व्याख्याता ग्रन्थोपक्रमे श्रवणविधिविचारावसाने एवमाह, "तदयं निष्कर्षः—विद्याधिकारिणो विचारसमर्थस्य प्रतिषेधाभावे वेदान्तश्रवणमनुष्ठेयम्। सति तु प्रतिषेधे इतिहासपुराणभाषाप्रबन्धादिश्रवणमनुष्ठेयम्। विद्याधिकारिणो विचारासमर्थस्य तु त्रैवर्णिकस्य योगशब्दितनिर्गुणोपासनमनुष्ठेयम्। मार्गद्वयासंभवे च तत्संभवयोग्यजन्मप्राप्त्या तदन्यतरानुष्ठानद्वारा ज्ञानलाभः" इति। निर्गुणोपासनरूपयोगकथनञ्चेदं तृतीयपरिच्छेदवक्ष्यमाणभारतीतिर्थमतानुसारेण। विद्याधिकारित्वञ्चेह विद्याफलार्थित्वम्। 'सति तु प्रतिषेधे' इति शूद्राद्यभिप्रायेण। अत्रेतिहासपुराणाभ्यां सह भाषाप्रबन्धादिग्रहणात् अयमर्थ ऊह्यते—इतिहासपुराणयोरुपबृंहणत्वादुपबृंहणीयवेदाधिकारिषु वैशद्याधानमेव तत्कार्यमिति तयोः स्वातन्त्र्याभावेऽपि तयोः श्रवणमात्रेऽधिकारात् पठनधारणाद्यसंभवेपि स्वतन्त्रतया प्रयुक्तभाषाप्रबन्धमूलमपि तत्त्वज्ञानसंभवात् तदर्थे श्रवणमनुष्ठेयमिति। यदि तु वेदान्तगतस्य श्रोतव्य इति विधेरर्थवर्णनपरत्वात् संदर्भस्य स्वातन्त्र्यं न युक्तमिति मन्यते, तर्हि प्रतिषेधविषयशूद्रादिविषये इतिहासादिश्रवणविधानवर्णनमयुक्तम्। प्रासंगिकं तत्कथनमिति चेत्—तथापि शूद्रस्याधिकारः परिहर्तुं न शक्यते। अस्तु तर्हि शूद्रस्याप्यधिकारः वेदान्तश्रवणमूलविद्याभ्यासनिषेध एवापशूद्राधिकरणकृत्यमिति चेत्—तदिदं हार्दं सर्वाद्वैतिसंमतञ्च भवति, न वेति स्वयमेव चिन्त्यताम्।

एवं निगमनमपि न युक्तमिति तावदत्र श्रीभाष्यशतदूषण्यादिभिः प्रतिपाद्यते—ये त्वद्वैतिनो वेदान्तश्रवणजनितसाक्षात्कारादेव मुक्तिरिति मन्वते—तान् प्रत्युच्यते—श्रवणविधिरपूर्वविधिर्नियमविधिः परिसंख्याविधिरिति पक्षा उपन्यस्ताः दूष्यन्त एव। तथाहि–अध्ययनविधौ विचारस्येतिकर्तव्यतात्वेनान्वितत्वात् विशिष्य श्रवणविधिर्नापेक्षितः। श्रवणञ्च ज्ञानमेवेति न तत् विधेयमपि। विध्यभावेपि तत्त्वमस्यादिवाक्यश्रवणमात्रेपि ज्ञानं जायत एव। निर्विचिकित्सस्य तदैव साक्षात्कारोपि। संशयानस्तु मननेन निष्कृष्य निश्चिनोतु। विपरीतप्रवृत्तिवैमुख्यकरणमेव श्रवणमनननिध्यानविधिसरूपवाक्यकृत्यमिति भाष्यादिसंमतत्वात् विधिमूलकादृष्टापेक्षाविरहात् वेदान्तवाक्यत इव लौकिकवाक्यतोऽपि दृष्टविधयैतत्सर्वसंभवात मिथ्यावस्तुनिवृत्तिं प्रति तत्त्वज्ञानस्यैव कारणतया यथाकथञ्चिदुत्पन्नस्यापि तत्त्वज्ञानत्वादेव कारणत्वसंभवात् वेदान्तवाक्यत एव मुक्तिरिति न युक्तं नियन्तुमिति।

श्रवणादिविधिस्वीकारेऽपि दृष्टविधयोपयोगिनां तेषामदृष्टार्थत्वं न कल्प्यम्। अदृष्टं कल्प्यमानञ्च कुत्रोपयुज्यते। अविहितश्रवणशालिनां मनने अविहितमननशालिनाञ्च निध्याने तददृष्टाभावे प्रवृत्तिर्न भवतीति दुर्वचम्. लौकिकवाक्यादद्वैतज्ञानिभिरपि तत्सर्वविषयोद्योगस्य क्रियमाणत्वात्। न च ध्यानस्य साक्षात्कारहेतुत्वमदृष्टे सत्येवेति युक्तम्-अविहितकामिनीभावनादीनां साक्षात्कारहेतुत्वस्यानुभवसिद्धत्वात्। दशमस्त्वमसीत्यादौ निध्यानाभावेऽपि साक्षात्कारे सति अत्र ध्यानानन्तरमपि न भवतीत्यत्र मानाभावात्। असाक्षात्कारे कारणं तु मनसोऽनवधानं वा वस्तुनोऽसंनिकृष्टत्वं वा। तदुभयमप्यत्र न भवति। भेदवासनायाः प्रतिबन्धकत्वस्वीकारे हि कदापि साक्षात्कारो न स्यात्। अभेदभावना च प्रामाण्यपरिबृंहिता भेदवासनां निवारयिष्यति। विचारितं चेदं प्रागेव। कामिनीभावनाजन्यसाक्षात्कारस्येव अद्वैतभावनाजन्यसाक्षात्कारस्याप्यदृष्टनिरपेक्षं जननार्हत्वेन, सांख्यैरपि, "एवं तत्त्वाभ्यासात् नास्ति न मे नाहमित्यपरिशेषम्। अविपर्ययात् विशुध्दं केवलमुत्पद्यते ज्ञानम्"

इति वेदाननुसारेऽपि तत्त्वज्ञानाभ्यासतस्तत्साक्षात्कारोत्पत्तेरुक्तत्वाच्च, अदृष्टसापेक्षध्यानजन्यसाक्षात्कारस्य तन्निरपेक्षध्यानजन्यस्य च समानविषयकतया साक्षात्कारतया, एकस्याविद्यानिवृत्तिहेतुत्वम्, न त्वन्यस्येति विनिगन्तुमशक्यत्वाच्च अदृष्टमनपेक्षितमेव। अदृष्टे सति शीघ्रं साक्षात्कार इति यत्-तत्र च न प्रमाणम्। तथापि विलम्बेनापि शूद्रस्य साक्षात्कारोत्पत्तिर्न वार्येत। विहितध्यानप्रवृत्तमहर्षिजनापेक्षया प्रकारान्तरेण ध्यानमावर्तितवति मारीच एव श्रीरामसाक्षात्कारः शीघ्रनिष्पन्नोऽनन्तश्च दृष्टः, यदाह—वृक्षेवृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्। गृहीतधनुषं रामं पाशहस्तमिवान्तकम्" इति। नापि साक्षात्कारादविद्यानिवृत्तौ जननीयायामदृष्टापेक्षा। अदृष्टस्य दृष्टसामग्रीसंमेलकमात्रार्थतया तस्मिन् सिद्धे सत्यदृष्टवैगुण्यस्य वक्तुमशक्यत्वात्। शुक्तिसाक्षात्कारेऽपि रजतभ्रमानिवृत्तिरित्यस्यादर्शनात्। अत एव प्रतिबन्धकनिवृत्त्यर्थमदृष्टमित्यप्ययुक्तम्। प्रतिबन्धकस्यापि मिथ्यापदार्थतया तत्त्वज्ञानस्यैव तन्निवर्तकत्वसंभवेनादृष्टानपेक्षणाच्च। अतो न विधिपक्षेपि शूद्रानधिकारः। वस्तुतः श्रवणादिविधिश्रुतीनामविधित्वमेव भवत्परमसिद्धान्त इति न शङ्कावकाशोऽपि। तत्सिद्धान्ते स्थित्वा शूद्रतत्त्वज्ञानसंपादनात्।

अपिच श्रवणादिविधयो नैव भवितुमर्हन्ति—अविधिरूपतत्त्वमस्यादिवाक्यतत्समानार्थलौकिकवाक्यजन्यतत्त्वज्ञानसंपन्नस्य वर्णाश्रमाद्यभिमानाभावेन तन्मूलश्रवणमनननिध्यानविधिवश्यत्वाभावात्। अन्यथा सकलविधिकिङ्करत्वेन विदुषो दग्धाखिलाधिकारत्वासंभवप्रसंगात्। विधिषु श्राद्धोऽधिकारीति उत्पन्नविविदिषस्य वैधेष्वनधिकार उक्तो भामत्याम्। निषेधेष्वपि, 'न ब्राह्मणं हन्यात्', न ब्राह्मणः सुरां पिबेत्' इत्यादिषु ब्राह्मणवर्णादिभेदभ्रमशालिनामेव निवर्तितुमधिकार इति विध्यतिलंघनवन्निषेधोल्लंघनमपि न दोषायेति चिन्त्यताम्। अतो निषेधः सर्वविषय इत्ययुक्तम्।

विचारितमिदं जीवन्मुक्तिभङ्गेऽपि । अतः, 'न शूद्राय मतिं दद्यात्' इति निषेधमुल्लंघ्य तत्त्वज्ञानी सर्वस्मै उपदिशेत् । शूद्रोपि शृणुयात् । न च प्रत्यवायः ; विधेरिव निषेधस्याप्यज्ञविषयकत्वात् । अत एव श्रवणादेर्विधासंभवादपि न तद्विधीनां विधित्वम् । तर्हि गुरूपसदनमपि न स्यादिति चेत्—तदपि न वैधम् । यदृच्छाश्रुताद्वैतवाक्यजन्यज्ञानमपि श्रद्धयाऽऽवर्तितं फलिष्यत्येवेति । अतिक्रान्तनिषेधैरप्युपदिश्येत, गृह्येत च । न च तन्न तत्त्वज्ञानम् । न च तत्त्वज्ञानस्य सहकार्यपेक्षेति ।

अपिच—अधीतवेदस्य कर्मकाण्डोपासनाभागाद्यभिहितशब्दैकसमधिगम्यानन्तभेदोपमर्दनस्यावश्यकतया तत्त्वमस्यादिवेदान्तवाक्यं न क्षिप्रं फलेग्रहि भवेत् । अनधीतवेदस्य तु लोकमात्रविदोऽन्यत्राविश्वासिनः अनुमानसिद्धाद्वैतावधारणस्य परमेश्वरभक्तिपरिचर्यादिभेदबुद्धेरप्यभावात् प्रपञ्चोपशमनमीषत्करमिति तस्यैवाधिकारः सुशोभनः ।

अन्यच्च—'घटोऽस्ति पटोस्तीत्यादौ सद् ब्रह्मैव भासते ; विकल्पाः सर्वे बाध्या' इति विवेकिनः तत् तत्त्वमभ्यस्यतः ब्रह्मपरमात्मपरमेश्वरादिशब्दार्थाज्ञानेऽपि अखण्डवस्तुज्ञानस्याधिगतत्वादनायासेन मुक्तिरिति किमत्र वेदेन विप्रादिवर्णेन च । न चास्मन्मत इव भवन्मते ब्रह्म शब्दैकसमधिगम्यम् । शब्दावेद्यत्वमेव हि प्रत्युत तस्येष्टम् । स्वयम्प्रकाशञ्च ब्रह्म शूद्रं प्रत्यपि । जगन्मिथ्यात्वं तु बौद्धैरप्युपपादितम् । न चानिर्वचनीयत्वेन जगत् ज्ञात्वा ब्रह्मकार्यत्वञ्चारोप्य तदभावज्ञाने सत्येव मिथ्याज्ञाननिवृत्तिरिति नियन्तुं शक्यम् । अतः श्रीभाष्यशदूषण्युक्तमप्रतिविधाय आग्रहप्रतानः शतभूषणीकृतोऽत्यन्तमनुचित इति ।

तस्मादपशूद्राधिकरणनिबन्धिनो भगवतो बादरायणस्य शब्दैकसमधिगम्यान्यादृशब्रह्मविषयकेण विधेयेन केनचिददृष्टद्वारा फलमुत्पाद्यमित्येवाभिमतमिति निर्णीयते । न च संवर्गविद्यामात्रविषयं तदधिकरणम् ;

"संस्कारपरामर्शात्तदभावाभिलापाच्च" इत्यादिसूत्रतस्तदतिरिक्तविषयकत्वस्यापि सिद्धेः। न च सगुणविद्यामात्रविषयकत्वम्; 'अधीहि भगवः'' इति भूमविद्याया अप्युदाहरणात्। अपसिद्धान्ताच्च। एवञ्च शारीरकं त्रैवर्णिकमात्राधिकृतत्वात् सगुणविद्याप्रधानम्। निर्गुणं ब्रह्म तु न वक्तव्यं स्वतः सिद्धेरित्युपेक्षितं सूत्रकृतेति वा स्वतःसिद्धेरप्यभावात् प्रामाणान्तराभावाच्च नैव तदिति वा स्वीकर्तव्यम्।

अपशूद्रनयोत्तययुक्तिसूक्तिच्छलतः शाङ्करवर्त्मभावितासु।
गतिषु प्रथयन् अशेषदौःस्थ्यं गुरुरिन्धे श्रुतिमार्गभूमदर्शी॥

शुभमस्तु

---

श्रीः

# कर्माधिकारप्रसाधनम्

यद्दिव्याङ्घ्रिसरोजसेवनमहासौभाग्यमाप्यं परम्
यन्नाद्यं शुचि कर्म कार्यमनिशं प्राज्ञैरगासीच्च यः।
कुर्वन्नेव शतं समाः श्रुतिमतान् धर्मास्तथा वर्तयन्
यद्भक्ति पुरुषो न जातु पुनरावर्तेत सेवेय तम्॥

तत्त्वज्ञानिभिरपि कर्मानुष्ठेयमिति स्थाप्यतेऽत्र वादे शतदूषण्या। अद्वैतिभिस्तदभ्युपगमो विकल्प्य निरस्तः। तत्र शतभूषण्याह—ज्ञानिभिः कर्माननुष्ठानं कर्मयोगाधिकारकारणदेहात्माभिमानविरहेण कर्मयोगवेदनाभावात्, कर्तृत्वाभिमानघटितसामग्र्यभावाच्च। शारीरकर्मसु देहधारणाद्यर्थेषु तु दृष्टार्थेषु बाधितानुवृत्त्या प्रवृत्तिः। अत्र तत्त्वज्ञानिपदेन निष्पन्नज्ञानस्य सिद्धावस्थस्य ग्रहणम्'। तादृशं जीवन्मुक्तं विनाऽन्येषां कर्मयोगत्यागो नास्ति। ननु तस्य विधिवश्यत्वाभावे तुल्यनयान्निषेधवश्यत्वमपि न

स्यादिति स्वैरितापत्तिः। नैवम्—भामत्यां विधिनिषेधवैषम्यस्योपपादितत्वात्। विधिषु श्राद्धोऽधिकारी। अतोऽभिमानविशेषादिशाली विधिना अधिक्रियते; निषेधस्तु सर्वविषय इति। अथवा वार्तिकोक्तरीत्या विरक्तस्याधर्मानुष्ठानप्रसंग एव नास्तीति न दोष इति। एतदुक्तं भवति—गीतासु प्रथमं षट्कं त्वम्पदार्थशोधकम्, मध्यमं तत्पदार्थस्य, तृतीयं तत्त्वमसिवाक्यार्थदर्शि। तत्र कर्मयोगः, सांख्ययोगः, भक्तियोगः, ज्ञानयोग इति चतुर्विधो योग उपदिश्यते। तत्र सांख्ययोगः प्रत्यगात्मज्ञानम्; तद्वान् स्थितप्रज्ञः। तस्य कर्मत्यागो नेष्यते। समाधिस्थानामपि कर्मयोगकाले समाधेरव्युत्थानं न श्रेयसे कल्पते। सांख्ययोगरूपान्तरङ्गोपायसाध्यो ज्ञानयोगस्त्वन्यः, शुद्धब्रह्मात्मैक्यसाक्षात्कारः। तं प्राप्तवत एव न कर्म। सांख्ययोगभक्तियोगयोस्तु—"विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्याऽमृतमश्नुते" इति कर्मसमुच्चयः शिष्यते। अतः सांख्यानाम्, भक्तियोगनिष्ठानाम्, आधिकारिकाणाम्, अवतारपुरुषाणाञ्च स्वस्ववर्णाश्रमधर्मत्यागः तामसत्याग एव। सांख्यातिरिक्तज्ञानयोगसंपन्न एव कर्मणामभाव इति।

एवमुपपादयतश्चायं भावः—विशिष्टाद्वैतिभिरिवाद्वैतिभिरपि कर्मणः प्रायेणाङ्गीकृतत्वात् विशेषवैषम्यं न भविष्यतीति। अत्र तदुक्तांशे किञ्चिद् विवेचनीयमादौ विविच्य ततः कर्मत्यागविषये अद्वैतितदितरवैलक्षण्यं विवक्षामः—भामत्यां विधिनिषेधवैषम्यप्रदर्शनं न घटते इति पूर्ववादे जीवन्मुक्तिभङ्गवादे च व्युदपादि। विरक्तस्याधर्मानुष्ठानप्रसंगो नास्तीति वार्तिकोक्तं यद्यपि युक्तम्, अथापि बाधितानुवृत्त्या देहरक्षणे वासनावशात्प्रवर्तमानस्य शुच्यशुचिप्रतिग्राह्याप्रतिग्राह्यसंगमसल्लापार्हानर्हाविवेकेन प्रवृत्तिरापतिता दोषाय न स्यात्। मनुष्यदेहात्माभिमानराहित्यान्मृगप्रायस्य विधिभिरिव निषेधैरप्यनधिकृतत्वात्। निषेधवश्यत्वोपपादने तु विधिवश्यत्वमप्यवर्जनीयम्। तत्र करणे प्रत्यवाय इवात्राकरणे प्रत्यवायः प्रामाणिकः। यत्तु

सांख्यनिष्ठः कर्मकाले योगाद् व्युत्थाय कर्मैव कुर्यादिति—तत्रास्यायं कर्मकाल इति विवेके वर्तमाने तत्करणं युक्तमेव। योगमग्नं कालविशेषस्फूर्तिरहितं प्रति व्युत्थातव्यमिति विधिः कथं भविष्यति। यश्च सांख्ययोगज्ञानयोगविवेकः, स नूनं स्थितप्रज्ञस्य वैदिकलौकिकसर्वकर्मत्यागस्य भाष्येऽनिष्टतया तन्निर्वाहार्थं कल्पितः। तथाहि—सांख्ययोगे हि, 'न जायते म्रियते वा विपश्चित्', 'आश्चर्यवत् पश्यति कश्चिदेनम्' इत्येवं देहान्तःकरणाद्यतीतशुद्धात्मविषय एव प्रागुक्तः 'एषा तेऽभिहिता सांख्ये' इति निगम्यते। तच्छ्लोकभाष्ये च, 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति सांख्ययोगज्ञानयोगैक्यं गीतावाक्यमूलकं व्यक्तमुक्तम्। न च भवतामात्मनि केचन विशेषाः सन्ति, येन देहातिरिक्तत्वाकारेणात्मज्ञानं सांख्यम्, ब्रह्मान्तर्यामिकत्व-ब्रह्माभिन्नत्वादिविषयकस्तु ज्ञानयोग इति वैलक्षण्यं सुवचम्। निर्विशेषे वस्तुनि क्रियमाणस्य चिन्तनस्य शुद्धधर्मिमात्रविषयकत्वाविशेषात्। अन्यथा कस्यचित्किञ्चिद्धर्मविशिष्टविषयकत्वे तत्त्वज्ञानता न स्यात्। न च सांख्ययोगनिष्ठस्य धर्मानुष्ठानम्, 'सुखदुःखे समे कृत्वा' इत्युपदिष्टमिति नैष ब्रह्मात्मैकत्वज्ञानशाली, किंतु भगवदर्पणबुद्ध्या कर्मानुष्ठातेति वाच्यम्—'शोकमोहापनुत्तये लौकिको न्यायः, 'स्वधर्ममपि चावेक्ष्य' इत्याद्यैः श्लोकैरुक्तः, न तु तात्पर्येणे' ति भाष्ये सांख्यस्यापि कर्माभावप्रत्यायनात्। किञ्चायं सांख्यो मीमांसितवेदान्तोऽन्यो वा। आद्ये तस्य ब्रह्मात्मैक्यज्ञानमपि जातमेव। अन्त्ये अन्तःकरणापरपर्यायाहमर्थरूपात्मवेदी परं स स्यात् स्वर्गाद्यामुष्मिकफलप्रतिलम्भायेति सोऽतत्त्वज्ञो न सांख्यो भवितुमर्हति। षष्ठाध्यायान्ते च, 'योगी युञ्जीत सततमात्मानं रहसि स्थितः', 'यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति। सुखमात्यन्तिकं यत् तत्' इति शुद्धात्मसाक्षात्कार एव सांख्यस्योक्त इति सांख्ययोगाद् ज्ञानयोगस्य भेदो न युज्यते।

भवन्मते भक्तियोगात् ज्ञानयोगस्यातिशयस्तावदास्ताम्। भक्तियोगान्निकृष्टः सांख्ययोगो विशिष्टाद्वैतिमत इव न वक्तुं शक्यते। नाप्यैश्वर्यानुभवाति-

रिक्तः भगवत्प्राप्तिविलक्षणश्च सांख्ययोगजन्यः पुरुषार्थो ज्ञानयोगलभ्यविलक्षणः कश्चिदस्ति। एवं तु स्यात्, ज्ञानयोगशब्देन साक्षात्कारदशोच्यते। तत्पूर्वभाविचिन्तनधारा सांख्ययोग इति। तावता पूर्वस्मिन् कर्म न त्याज्यम्, उत्तरत्र तु त्यज्यत इति विभागे किं मानम्। चिन्तनधाराकाले देहात्माभिमानाभावस्तस्याप्यस्ति। साक्षात्कृततत्त्वस्यापि व्युत्थानकाले तादृशाभिमानानुवृत्तिरस्त्येव, यस्या एव बाधितानुवृत्तिरिति नाम पृथक्कल्प्यते, अविद्यारूपस्य मूलस्योच्छिन्नत्वमात्रेण। अभिमानानुवृत्तौ च कर्मकरणमनुपेक्ष्यम्। न च—असाक्षात्कृततत्त्वस्य साक्षात्कारप्रतिबन्धः प्रत्यवायवशान्मा भूदिति कर्मानुष्ठानम्, न त्वेवं साक्षात्कारिण इति वाच्यम्—तस्यापि जातस्यापि साक्षात्कारस्य प्रत्यवायवशादननुवृत्तिशंकया तदनुष्ठानौचित्यात्। अन्तःकरणं हि दुष्टं सत् वृत्तिमपरोक्षां नानुवर्तयेदिति भवत्येव मतिः। अन्यथा बाधितानुवृत्तिर्जीवन्मुक्तिश्च नैषितव्या. तदा च देहवियोगकाल एव सर्वोच्छेदी साक्षात्कारो भविष्यतीति यावद्देहं कर्मानुष्ठानमस्मद्विवक्षितमपरिहार्यम्। अपिच यथा तत्त्वसाक्षात्कारी भगवान् अवतारेषु अवश्यमाचरति, तथा साक्षात्कृततत्त्वा आधिकारिका अपीति भवदिष्टम्। तेषां भेदज्ञानानुवृत्तिः कथम्। तेषामेवास्ति चेत्, ततोऽर्वाचां कथं तदभावः कर्मत्यागश्च, लोकसंग्रहो यदीश्वरेणापि नोपेक्ष्यते, किमुत प्रत्यवायार्हेण जीवेन। तस्मात् संन्यासिनां गृहस्थधर्मानाचरण इव साक्षात्कृततत्त्वव्यपदिष्टकतिपयविषये कर्मानाचरणे शास्त्रमेव यावन्न प्रदर्श्यते, तावत् तत्त्यागस्तामसत्याग एव। शास्त्रं तु सर्वसंप्रतिपन्नं विवक्षितार्थकं न किञ्चित्। एवं शतभूषणीवर्णितांशविमर्शो व्यधायि।

अथाद्वैतगमनिका यथावदत्र विविच्यते। 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति वाक्ये विविदिषोद्देशेन कर्मविधिरिति भामतीपक्षः। विद्यारूपधात्वर्थोद्देशेन तद्विधिरिति विवरणानुसारिणां पक्षः।

अस्मिन् द्वितीयपक्षेऽपि न विद्याप्राप्तिपर्यन्तं कर्मानुष्ठानानुवृत्तिः, "त्यजतैव हि तत् ज्ञेयम्" इति कर्मत्यागेनैव ब्रह्मणो ज्ञेयत्वविधानात् ।, कर्मणां तत्त्यागस्य चेत्युभयस्य ब्रह्मज्ञानार्थता कथमिति चेत्—कर्षणाकर्षणाभ्यां व्रीह्यादिनिष्पत्तिरिति यथेति गृह्यताम् । तथाच गीयते—'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते' इति । कर्मतदभावयोरेवं क्रमेण साधनत्ववचनात् चेतःशुद्ध्या विविदिषारूपप्रत्यक्प्रावण्योदयपर्यन्तमेव कर्मानुष्ठानम् । न च विविदिषार्थत्वपक्षादस्य पक्षस्याविशेषः । विविदिषार्थत्वपक्षे कर्माणि विविदिषामुत्पाद्य कृतार्थानि निवर्तन्ते; एतत्पक्षे तु विविदिषाप्राक्कालकृतान्येव कर्माणि विविदिषापाश्चात्यविशिष्टगुरुलाभनिर्विघ्नश्रवणमननादिविद्योत्पत्तिसाधनपर्यन्तेऽपि व्याप्रियन्त इति विशेषात् । सर्वथा विविदिषोत्पत्तिपर्यन्तमेव कर्माचरणम् । जन्मान्तरानुष्ठितकर्मबलाच्च केषाञ्चिदादावेव विविदिषेति न ते कर्म चरेयुः । अतो जातायां विविदिषायां संन्यस्यैव वेदने प्रवृत्तिर्विधेया । "त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः । जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता" इति वार्तिकोक्तेः संन्यासापूर्वस्य वेदान्तश्रवणाधिकारिविशेषणत्वमवसीयते । दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् संन्यासः अनन्यव्यापारतामुखेन श्रवणादि निष्पादयतीति वाऽस्तु । गृहस्थादीनां कर्मच्छिद्रेषु वेदान्तश्रवणमनुतिष्ठतां तु जन्मान्तरे सन्यासं लब्ध्वैव यथावच्छ्रवणनिष्पत्तिः । संन्यासानधिकृतयोः क्षत्रियवैश्ययोः कथं विद्याधिकार इति चेत्—(तयोरपि संन्यासो विद्यारण्यसंमत इति ज्ञायते । अथवा) अस्तु तद्विषये परं संन्यासानपेक्षा । तयोर्विद्वत्संन्यासानुमतावपि विविदिषासंन्यासाननुमतेः । अथवा तयोरप्यमुख्य एवाधिकारः, शूद्रवत् तद्विषये विशेषप्रतिषेधाभावात् । अत एव गृहस्थब्राह्मणेनापि श्रवणं क्रियते । तदुक्तं विधुराधिकरणभाष्येऽपि, "दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधिकरोति श्रवणादिषु" इति । ईदृशस्यापि श्रवणस्य प्राग्भवीयविविदिषार्थानुष्ठितकर्मप्रभाववशात् जन्मान्तरीयविद्यो-

त्पत्तौ सहकारित्वं नायुक्तम्। श्रवणस्याप्यदृष्टद्वारा फलोपयोगो भवितुमर्हति, "दिनेदिने तु वेदान्तश्रवणात् भक्तिसंयुतात्। गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेत्" इति वचनादिति। सर्वमिदं सिद्धान्तलेशसंग्रहतो विशदमवसेयम्। एवं श्रवणात् प्रागेव सर्वकर्मत्यागेन संन्यासस्य कर्तव्यत्वे सति जीवन्मुक्तव्यतिरिक्तानां तत्त्वज्ञानिनामपि कर्मानुष्ठानमद्वैतिसंमतमिति कथमुच्येत? अमुख्याधिकारिणः खलु गृहस्थाः जन्मान्तरे तत्त्वज्ञानसंपत्त्यभिलाषिणः अप्रतिषेधमात्रेण श्रवणादिकमाद्रियन्ते इति तेषाममुमुक्षुलौकिकफलप्रवणगृहस्थाविशेष एवेति उत्पन्नतत्त्वज्ञानपुरुषकार्यत्वं कर्मणां तावता नाद्वैतीष्टं भवति। अत एव कर्मणां भेदबुद्धिवर्धकत्वात् विरोधात् परिहार्यततया अथातोब्रह्मजिज्ञासेत्यत्राथशब्दस्य कर्मनिर्गयानन्तर्यरूपोऽर्थस्तैस्त्यज्यते। इति व्यक्तं सूत्रभाष्यादौ।

एवं संन्यस्तकर्मणामेव वेदान्तश्रवणेऽप्यधिकार इतीदं सर्ववेदान्तगमनिकाविरुद्धम्। तथाहि ईशोपनिषदि, 'तेन त्यक्तेन भुञ्जीथाः' इति त्यागपुरस्सरब्रह्मानुभवं कर्तव्यमुक्त्वा 'कुर्वन्नेवेह कर्माणी'ति यावज्जीवं कर्मानुष्ठानमुक्तम्। केनोपनिषदि, 'तस्यै तपो दमः कर्मेति प्रतिष्ठा' इति विद्यामुपदिष्टां वर्धयितुं कर्मानुष्ठानमुदितम्। एतदभिप्रायेणैव, "तपांसि सर्वाणि च यद्वदन्ति" इति कठोपनिषदि। न च मृत्युर्नचिकेतसे तत्त्वमुपदिष्टवान् अमुख्याधिकारित्वेन सर्वकर्मत्यागित्वेन वा गणनीयः। 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति', 'तिस्रो रात्रीर्यदवात्सीर्गृहे मे' इति स्वस्य ब्रह्मवित्तमत्वं शास्त्रवश्यगृहस्थत्वञ्च हि स्पष्टमाह। प्रश्ने च, 'तेषामसौ विरजोब्रह्मलोकः न येषु जिह्ममनृतं न माया च' इति कृत्याकरणाकृत्यकरणाभावः ब्रह्मप्राप्तयेऽपेक्षितत्वेनोक्तः। मुण्डके, 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इति ब्रह्मज्ञानिनां मध्ये क्रियावतो ब्रह्मविदो वरिष्ठत्वोक्त्या ब्रह्मज्ञानात् पश्चादपि क्रियावत्त्वमक्रियस्य निकृष्टत्वञ्च स्फुटम्। छान्दोग्ये बृहदारण्यके चासंन्यासिन एव ब्रह्मवित्तमाः विपक्षतरूपाः गुरवः शिष्याश्च कर्मपरायणाः रैक्वकेकयगौतमजानश्रुतिश्वेतकेतुप्रभृ-

तयः श्राविता इति किं तद्विस्तरेण । एवमुपनिषदुदितानां सर्वेषाममुख्याधिकारित्वकल्पनञ्च महत् साहसम् । "कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् अहिंसन् सर्वा भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते" इति श्रुतिश्च गृहस्थो निराशीःकर्मब्रह्मज्ञानसंपन्न एव सन् आयुरवसाने मुच्यत इति वदन्ती गृहस्थसंपादितज्ञानस्य जन्मान्तरसंपाद्यसंन्यासपूर्वकविद्योत्पत्त्यर्थत्वपक्षं प्रत्याख्याति । 'यो वा एतदक्षरं गार्गि अविदित्वा तपस्तप्यते बहूनि वर्षसहस्राणि अन्तवदेवास्य तद् भवति' इति च कर्मणां ब्रह्मज्ञानविनाकृतानामन्तवत्त्वमुक्त्वा तेषामेवोपरि ब्रह्मज्ञानुष्ठितनां प्रशंसां करोति श्रुतिरिति न ज्ञानात् प्रागेव कर्मत्यागः ।

"कृत्स्नभावात्तु गृहिणोपसंहारः" इति च सूत्रकारो गृहस्थं मुख्यब्रह्मविदं दर्शयति । 'गृहस्थस्यैव ब्रह्मवित्त्वमपि, न संन्यासो नामाश्रम' इति मतिं निरस्य प्रयासेन सोऽपि स्थाप्यते बादरायणेन, गृहस्थनैष्ठिकब्रह्मचारिणोर्मुख्याधिकारित्वे विवादविरहं निश्चितवता । अद्वैतिनस्तु वसिष्ठशक्तिपराशरबादरायणादीनामाचार्याणामप्यमुख्याधिकारित्वमाकलयन्तीति विचित्रमेतत् । एवंरूपं वैपरीत्यं व्युदसितुमेव शतदूषण्यामत्र वादे तत्त्वज्ञानिनामपि कर्मानुष्ठानमवस्थाप्यते । जातायां विविदिषायां कर्म क्रियमाणं व्यर्थमेवेति न मन्तव्यम्—तत्पक्षेऽपि विविदिषानुस्यूतत्वायैव तत्संभवादिति भाषितमेव ह्यन्वारुह्य । वेदनार्थत्वे तस्याहरहरभ्यासाधेयातिशयत्वात् वेदनव्यक्तिभेदाच्च भविष्यद्वेदनसंपत्तये पूर्वपूर्वं कर्मेति सुवचमेव । 'कर्म त्यजतैव तत् ज्ञेय' मिति वाक्यं तु यादृशः कर्मत्यागो गीतायां क्रियासमभिहारेण शिक्षितः, तादृशं सात्त्विकमेव वक्ष्यति । 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ; त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः', 'यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्' इति हि गीयते । संन्यासाश्रमसद्भावमात्रेण च कर्माङ्गकत्वं विद्यायाः प्रतिषेद्धुं न शक्यते । तत्तदाश्रमविहितकर्माङ्गकत्वस्य तत्र प्रामाणिकत्वात् । अतस्त्यक्तकर्मैव वेदान्तश्रवणे मुख्याधिकारी, सुतरां तत्त्वज्ञाने जाते इति वादो वेदस्मृतीतिहासपुराणप्राचीनसंप्रदायविरुद्ध इत्यलं बहुना ।

भेदज्ञानविवर्धित्वात् कर्म त्याज्यमिति ब्रुवन् ।
शारीरं लौकिकं कर्म कथं कुर्यादनारतम् ॥
श्येनयागो हि मान्यः स्यादभिचाराय लौकिकात् ।
तथा वा वैदिकं ग्राह्यं लौकिकाव्यग्रचेतसा ॥
वित्तलोकैषणापूर्णवृथासंन्याससंग्रहात् ।
वरं गार्हस्थ्यमास्थाय वेदान्तार्थविचिन्तनम् ॥
यथा परमहंसत्वाभिमानोचितधर्मता ।
तथा गृहस्थधर्माश्च न तत्त्वज्ञप्तिबाधकाः ॥
ऐषणात्रयनिर्मोको यथावत् यस्य लक्ष्यते ।
एकान्तशीलो निर्विण्णः स संन्यसितुमर्हति ॥
विचिन्त्य वेदान्तमवेत्य दैवं
विधाय कर्माणि तदर्पणानि ।
विशुद्धचित्ताः यतिधर्मनिष्ठां
क्रमाद्गता ये कृतकृत्यतैषाम् ॥

शुभमस्तु

---

श्रीः

# यतिलिङ्गभेदभङ्गप्रसाधनम्

श्रिया सह वृषाचले विहरतः पदाब्जं हरेः
अये यदिदमीप्सवः परमहंस एवं परः ।
बहूदककुटीचकावपि लसन्ति मुक्तैषणाः
त्रिदण्डमुपवीतमप्यपि शिखां वहन्तो यताः ॥

"काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः । त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी" इति दत्तात्रेयस्त्रिदण्डधारी त्रयीधर्मं ररक्षेति स्मर्यते । अत्र त्रिदण्डधारिणा रक्षितेत्युक्तत्वात्, जातु संन्यासिषु त्रिदण्डधारणाचारविपरीताचारप्रवर्तनेन संध्योपासनादित्रयीधर्मविलोपनं पाषण्डादिपरिचयमूलमापतितमिति ज्ञायते । अतः संन्यासिपर्यन्तसर्वाश्रमिसाधारण्यं त्रयीधर्मस्य प्रख्याप्य तदुपयोगिशिखात्रिदण्डोपवीतधारणमाप्यावश्यकमिति स ग्राहयामासेति सिद्ध्यति । पराशरमाधवीये च, "हारीत-दत्तात्रेय-पितामहाः कुटीचकादीन् चतुरोऽप्युपन्यस्य सर्वेषां त्रिदण्डमेव विदधते, 'वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजाः । लिङ्गं तु वैणवं तेषां त्रिदण्डं सपवित्रकम्' इति । अत्रिरपि, 'शिखिनस्तु श्रुताः केचित् केचिन्मुण्डाश्च भिक्षुकाः । चतुर्धा भिक्षुकाः प्रोक्ताः सर्वे चैव त्रिदण्डिनः' इति" इत्यन्ववादि । अनेन मुण्डत्वैकदण्डत्वयोर्न संनियोगनियम इत्यपि ज्ञापितम् ।

अत्र वैणवमिति विशेषणात्, "वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च" इति दक्षोक्तमनोवाक्कायदण्डमात्रतस्त्रिदण्डित्वसिद्धेर्व्युदासः स्पष्टः । अत एव परमहंसस्य त्रिदण्डित्ववचनानां वाग्दण्डादिलाक्षणिकार्थपरतया माधवीये नयनमनुपपन्नम् । एतद्वचनैकरस्येन स्वरसार्थग्रहणस्योपेक्षणं ह्यभिनिवेशमेव दर्शयेत् । वाग्दण्डादिविधायकवाक्यं तु, सर्वेष्वाश्रमेषु, "न लिङ्गं धर्मकारणम्" इति वचनवत् तदावश्यकत्वाभिप्रायम्, न वैणवत्रिदण्डपरिसंख्यानम् । उपात्ते वाक्ये सर्वेषामपि यतीनां वृत्तिभेदमात्रम्, न लिङ्गभेद इति वर्णनं

हि लिङ्गभेदप्रतिपादकतया प्रतीतानां वचनानां तदैदंपर्यं न मन्तव्यमिति ज्ञापयत् तेषामर्थान्तरतात्पर्यं ग्राहयति। वृत्तिभेदश्च माधवीयेऽपि मात्रया दर्शितः—कुटीचकस्य स्वकगृहे वर्तनम्, आहिताग्निषु बन्ध्वादिषु भिक्षाचरणम्, बहूदकस्य बन्धुपुत्रादिवर्जनेन साधुवृत्तब्राह्मणगृहेषु भैक्षचरणम्, हंसस्य त्रिषवणस्नान—ग्रामतीर्थैकरात्र नगरपञ्चरात्रभाव. कृच्छ्रचान्द्रायणादिकृतशरीरकर्शनादि, परमहंसस्य माधुकरतात्कालिकोपपन्नादिभैक्षचरणमित्येवम्। एवं लिङ्गभेदशङ्का न कार्येति वचनेनैवोक्तत्वात् क्वचित् तल्लिङ्गभेदप्रतिपादनमन्यथा नेयमिति सिद्धम्। हंसपरमहंसयोरुपवीतं नास्तीति चात एवायुक्तम्। "यज्ञोपवीतं दण्डश्च वस्त्रं जन्तुनिवारणम्। तावान् परिग्रहः प्रोक्तो नान्यो हंसपरिग्रहः" इति माधवीयोद्धृतविष्णुवचनेनैव हंसेऽपि तत्सिद्धेः। अत्र दण्डमिति कथनात् एकदण्डधारणप्रसक्तावप्युपवीतत्यागो नास्तीति ज्ञायते।

यत्तु माधवीये, 'अत्र केचित् श्रद्धाजाड्येन सन्ध्यावन्दनोपवीतादित्यागमसहमानाः अन्यादृशं पारमहंस्यं विद्विषन्ती'ति प्रक्रम्य, उपवीतसन्ध्योपासनत्यागनिन्दावाक्यानां परमहंसव्यतिरिक्तविषयतया संकोचनम्, तदप्यत एवं लिङ्गभेदनिषेधवाक्यत एवायुक्तं सिद्धम्। जाबालश्रुति—आरुणिश्रुति—मैत्रावरुणश्रुति—पिप्पलादशाखावचनानि परमहंसस्योपवीतादित्यागपराणि तदुपवीतादिविधायिवाक्याविरोधेन निर्वाह्याणि। मैत्रावरुणश्रुतिरेव हि, "त्रीन् वैणवान् दण्डान् दक्षिणपाणौ धारयेत्, एकं वा। यद्येकम्, तदा सशिखं वपनं कृत्वा विसृज्य यज्ञोपवीतम्" इति त्रिदण्डधारणमुपवीतधारणञ्च परमहंसस्यापि स्वरसप्राप्तमिति, एकदण्डादिधारणप्रसक्तिः कदाचिदिति च दर्शयति। व्यासविश्वामित्रादिस्मृतिवचनगतिरप्येतदनुरोधेन भाव्या। तत्र व्यासवचनं यज्ञोपवीतत्यागिना कर्मापि त्यक्तव्यं भवतीति बोधयति; न पुनरुभयत्यागस्याऽऽवश्यकत्वम्। विश्वामित्रवचनमप्यावश्यकपारिव्राजकलिङ्गविपरीताकारसंभावनामपि कदाचित् दर्शयत् तदा कर्तव्यक्रममाह; न तु लिङ्गस्य त्याज्यत्वम्। स्मृत्यन्तरमपि तत्रोपात्तं ब्रह्मवेदनस्यानिष्पन्नत्वे मुख्यलिङ्गपरित्यागः सर्वथा न युक्त इति दर्शयितुं प्रवृत्तम्।

अथ माधवीये, परमहंसोपनिषद्दर्शने एकदण्डधारणमप्यमुख्यं प्रतीयते, 'ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते' इति यथा ज्ञानमेव शिखा चोपवीतश्च, तथा दण्डश्चेत्यवगमादित्याशङ्क्य, 'सत्यम्, विविदिषोरेव संन्यासिन एकदण्डः; न तु विद्वत्संन्यासिनः' इति समाहितम्। तत्रासति, "यदा तु विदितं तत् स्यात् परं ब्रह्म सनातनम्। तदैकदण्डं संगृह्य उपवीतं शिखां त्यजेत्" इति विदुष एकदण्डधारणवचनं विरुध्यते। विविदिषोश्चेदेकदण्डः, तर्हि त्रिदण्डः कस्य? स किं त्रिवर्गपरस्य। तस्मादेवं वचननिर्वाहप्रयासो व्यर्थः। "एकदण्डी भवेद्वापि त्रिदण्डी वा मुनिर्भवेत्" इत्येतादृशवचनं तु यतिलिङ्गन्यूनान्यूनभावेऽपि मननरूपस्वकार्यब्रह्ममननवैयग्र्यवैधुर्यं यतेर्न युक्तमिति बोधयति।

हंसपर्यन्तानां शिखायज्ञोपवीतधारणं माधवेष्टम्। शतभूषणीकारस्तु परमहंसस्य त्रिदण्डोपवीतादि नास्तीति पक्षं नाभ्युपैति। शाट्यायनोपनिषदि पराशरहारीतात्रिदत्तात्रेयादिवचनेषु कुटीचकबहूदकहंसपरमहंसरूपेण चतुर्विधानामपि त्रिदण्डयज्ञोपवीतादिविधानादिति शतदूषणीदर्शितवचनानुसारेण सर्वं संमित्य वैष्णवावैष्णवभेदेनोपवीतादिसदसद्भावव्यवस्थां वाञ्छति। वैष्णवयतयस्त्रिदण्डोपवीतधारिणो लक्ष्यन्ते, अन्ये चान्यथेति लोके दृष्टमेव शास्त्रार्थत्वेन संपिपादयिषतीव। व्यवस्था चेयं निर्मूला। यत्तु वचनमदर्शि, "लिङ्गं तु वैष्णवं तेषां त्रिदण्डं सपवित्रकम्" इति, तत्रोच्यते—वैष्णवमित्यत्र वैणवमिति पदघटितोऽपि श्लोकोऽस्ति; माधवीये तथैवोदाहृत्य निर्वहणात्। वैष्णवमितिपदघटितं वचनमपि, 'नमस्यो भक्तिभावेन विष्णुरूपी त्रिदण्दधृक्' इत्येतदनुसारात् सर्वस्यापि यतेर्वैष्णवत्वमेव दर्शयेत्। त्रिदण्डं वैष्णवम्, एकदण्डस्त्ववैष्णव इति न कुत्राप्यदर्शि। शाट्यायनीयोपनिषदि, 'सर्व एते विष्णुलिङ्गं दधानाः' इति श्रवणमपि संन्यासिसामान्यस्य विष्णुचिह्नवहत्वमेव वेदयेत्; न तु वैष्णवावैष्णवभेदम्। आश्रमन्तरेषु काम्यकर्मप्रावण्यस्यापि प्रसक्तया "कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः" इत्युक्तरीत्या कदाचित् देवतान्तरचिह्नधारण-

मपि संभाव्यते। मोक्षाश्रमिणां तु सर्वैषणाविनिर्मुक्तानां देवतान्तरासंश्रयण-प्रसक्त्यभावात् मोक्षप्रदमुकुन्दमात्रनिष्ठतेति संन्यासिधार्यस्य लिङ्गस्य विष्णु-लिङ्गत्वेन परिगणनम्। अनूदितञ्च माधवीये, 'संन्यस्यन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः। एष मे मण्डलं भित्त्वा परं स्थानं प्रयास्यति॥'' इति, "यतीनां व्रतवृद्धानां स्वधर्ममनुवर्तिनाम्। विष्णुरूपेण वै कुर्यान्नमस्कारं विधानतः" इति च। विष्णुचिह्नविहीना अद्यतनाः शाङ्करपीठाधिपतयोऽपि नारायणस्मृति-मेव निर्दिशन्ति। एवं वैष्णवाश्रमं प्रविश्य वेषान्तरधारणमाम्नायप्रतिकूलमेव। अवैष्णवो न ब्राह्मणो भवितुमर्हतीत्यपि केचिदखिलतन्त्रपारदृश्वान एवाद्वैतिनो निबन्धमुखेन स्वाशयमाविरकार्षुः। सर्वथा तावत् अवैष्णवस्य वैदिकयतित्वमेव न भवतीति तु सम्प्रधारणीयम्। यावच्च विष्णोरेव देवतासार्वभौमत्वम्, वैष्णवपरमपदप्राप्तेरेवार्चिरादिसाध्यायाः मुख्यमुक्तित्वं स्थास्यति, तावत् वैष्णवैरेव यतिभिर्मोक्षाश्रमिभिर्भाव्यमित्यत्र न विप्रतिपत्तेरवकाशः। विष्णुभक्ते-स्तत्त्वज्ञानसाधनत्ववादिभिरद्वैतिभिरपि विष्णुचिह्नधारणमवर्जनीयम्। परमहंस परिव्राजकोपनिषदि प्रथमतो दण्डकमण्डल्वादिपरिग्रहम्, अथ, 'यदाऽलम्बु-द्धिर्भवेत् तदा कुटीचको वा बहूदको वा हंसो वा परमहंसो वा—सर्वं विसृज्य जातरूपधरश्चरेत्' इति त्यागमपि विधाय, 'भगवन् कथमयज्ञोपवीती अशिखी सर्वकर्मपरित्यक्तः, कथं ब्रह्मनिष्ठापरः, कथं ब्राह्मणः' इति प्रश्नमुपक्षिप्य, "विष्णुर्भोभो अर्भक यस्यास्त्यद्वैतमात्मज्ञानम्, तदेव यज्ञोपवीतम्" इत्यादिना प्रकारान्तरेणोपवीतादिनिर्वाहावसरे विष्णुशब्दनिर्देशात् ईदृशस्यापि यतेर्वैष्णव-त्वमेवावसीयते। आरुणिकोपनिषद्यपि दण्डाच्छादनकौपीनपरिग्रहं प्रागुक्त्वा ततः, पालाशमित्यादिना दण्डादित्यागमप्यभिधाय, "तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति श्रवणात् वैष्णवत्वमीदृशयतेः स्पष्टम्। तस्माद् वैष्णवावैष्णवभेदकल्पनं यतिष्वयुक्तम्। त्रिदण्डधारणाधिकृतानामेवापदि एकदण्डविधानात् वैष्णवस्यापि तत्सिद्धेश्च।

आस्तामेतत्। परमहंसपर्यन्तानां त्रिदण्डोपवीतादिधारणस्य श्रुतिस्मृति-

प्रमाणकत्वं यथा, तथा परमहंसविषये तत्त्यागस्यापि प्रामाणिकत्वं प्रतीयत इति कथमुभयनिर्वाह इति चेत्—किं व्यवस्थितविकल्पाभावेऽपि अव्यवस्थितविकल्प एवास्तु। तथाचोभयोऽप्याचारोऽनुमंस्यते इति वक्तुमध्यवसितोऽसि। तन्न युज्यते; अष्टदोषदुष्टत्वात्। त्रिदण्डालाभे एकदण्ड इति वचनेनापद्विषयत्वस्यैकदण्डेऽवगमाच्च। "वृत्तिभेदेन भिन्नास्ते नेव लिङ्गेन" इति लिङ्गभेदविषये वाचनिकनिषेधे जाग्रति मुख्यवैकल्पिकलिङ्गद्वयकल्पनस्यायोगाच्च। तद्वचनं कुटीचकबहूदकमात्रविषयमिति माधवमनोरथस्तु सर्वविषयकतायाः स्पष्टं तत्रैव कण्ठोक्ततया निष्फल एव। शतभूषणीदर्शनेऽपि तद्वचनं सर्वविषयकमिति स्पष्टम्। तर्हि कथं विरुद्धार्थकानां वचनानामविरोधसंपादनमिति चेत्—तदिदं शतभूषणीविचारविमर्शपूर्वमभिधीयते—

शतभूषण्युपात्ताः श्रुतयः सर्वाः सामस्त्येन प्रमाणभूता एवेत्येतदेव न प्रतिपन्नम्। पूर्वैरनुदाहृतेषु विस्रम्भायोगात्। अष्टोत्तरशतोपनिषत्सु अनेकत्र प्रक्षेपादिना अनाश्वसस्य सर्वसंमतत्वात्। एवञ्च नारदपरिव्राजकोपनिषदि संन्यासषाड्विध्यं निर्दिश्य परमहंसोपरि तुरीयातीतस्यावधूतस्य च पृथक्परिगणनं सर्वसंमतचातुर्विध्यविरोधान्नातीव विस्रम्भणीयम्। परमहंसस्यैव तुरीयातीतावधूतविषये निर्दिष्टा रीतिः कदाचिद्भवितुमर्हति; न त्विमौ अपरमहंसौ। एवं तत्र कुटीचकस्योर्ध्वपुण्ड्रधारणम्, बहूदकस्य त्रिपुण्ड्रधारणम्, हंसस्य त्रिपुण्ड्रोर्ध्वपुण्ड्रधारणमित्यादिकमपि न विश्वसनीयम्। मुमुक्षोः संन्यासिनो वैष्णवत्वस्य विष्णुसाम्यस्य च सर्वत्रोक्तत्वात्। माधवादिसंमतत्वाच्च। एवञ्च तुरीयातीतोपनिषदपि न श्रद्धेया। परंतु तत्रोक्तोऽवधूतो दिगम्बरो महापुरुषो नारायणैकचित्त इति नारायणप्रशस्यमान एव श्राव्यत इति नायमवैष्णवः। भिक्षुकोपनिषदि, हंसे परमहंसे च दण्डयज्ञोपवीताद्यनुक्तिमात्रेण तयोस्तदभावः, तत्रापि हंसे त्रिदण्डस्य, परमहंसे एकदण्डस्यापि चाभावः सिद्ध्यतीति शतभूषणीकल्पनं न स्थास्यति। कुटीचकेऽपि त्रिदण्डाद्यनुक्त्या तदसिद्धिप्रसंगात्। यदि च बहूदकविषये प्रयुक्तम्, "त्रिदण्डकमण्डलुशिखायज्ञोपवीतकाषायवस्त्रधारिण"

इति पदं कुटीचकवाक्य एव प्रथम पठनीयमिति मन्यते। तर्हि तत् पदं हंसपरमहंसविषयेऽप्यनुवर्तिष्यते, विपरीताकारानिर्देशात्। अतः शाट्यायनकोपनिषदिवेयमपि सर्वेषां त्रिदण्डादिसद्भावाभिप्रायेत्येव साम्प्रतम्। अत एवानुपवीतत्वादिशङ्काव्युदासायेव पराशरेण स्पष्टमेव सर्वेषां त्रिदण्डोपवीतादिकम्, अनुवृत्त्या अर्थलभ्यत्ववर्णनप्रयासव्यपोहेन प्रतिपदपाठेन प्रादर्शि। तत्र परमहंसविषयेऽपि, "ब्राह्मणकुलादेव भैक्षं गृहीत्वा" इति स्मरणात् वर्णान्तराद् भैक्षानुमतिवचनानि आपद्विषयाणि कुटीचकाद्यपेक्षया परमहंसविषय अबाधकत्वातिशयपरतयैव नेयानि। यथैतत्, तथैव त्रिदण्डाद्यभाववर्णनमपि तत्रतत्र कथितं नेयम्। नीतश्च त्रिदण्डादीनामप्सु त्यागविधानम्, "गृहीतं यत् त्रिदण्डादेरविनष्टं तु न त्यजेत्। समुद्रं गच्छ स्वाहेति विनष्टं प्रक्षिपेज्जले" इति वचनविशेषसिद्धविनष्टत्रिदण्डादिविषयमपि भवितुमर्हति। उपवीतत्यागश्च विनष्टविषय इव गार्हस्थ्यदशागृहीतद्वितीयोपवीतविषयोऽपीत्येवं शतदूषण्याम्। माधवोपात्तव्यासवचनादिकमभिसंधाय चाभ्यधायि, "तदपि तत्तत्कोशेषु न पश्यामः। न चोदाहरन्ति पूर्वे निरूपकाः।........ तत्तद्वचनकारिषु व्यासादिसमाख्यां संकेतेन प्रक्षिप्य धर्मसूनुरिव सत्यवादी भव........ अतो युष्मत्कूटस्थपक्षपातिनां प्रक्षेपस्तथा स्याद्वा न वेति समीचीनदृष्ट्या भावय" इत्येवम्। परमहंसविषये चोपवीतादित्यागपराणि यानि कानि चिद् बचनानि सन्ति, तेषां निर्वाहप्रकारश्च अलेपकमतभङ्गवादे दर्शित एव।

यत्तु बचनबलादेवेदृशांशत्यागात्, 'मोहात् तस्य परित्यागः तामसः परिकीर्तितः' इत्युक्ततामसत्यागदोषो नास्तीति—तदिदं त्यागविधिसद्भावनिर्णये शोभेत। 'वृत्तिभेदेन भिन्नास्ते नैव लिङ्गेन' इति लिङ्गभेदस्य वाचनिके निषेधे जाग्रति लिङ्गत्यागविधिर्हि न भवति। यदि च त्यागोऽपि शास्त्रार्थः, तर्हि जाबालोपनिषदादिषु परमहंसप्रस्तावे, "अव्यक्तलिङ्गाः अव्यक्ताचाराः अनुन्मत्ता उन्मत्तवदाचरन्तः" इति किमित्यव्यक्तलिङ्गताद्युक्तिः; अलिङ्गा

अनाचारा इत्येव निर्देशसंभवात्। "अनाविष्कुर्वन्नन्वयात्" इति सूत्रकारेण बाल्यं माहात्म्यानाविष्काररूपमेवोक्तम्; सर्वान्नानुमतिश्चानापदि निराकृता। तेनेदृशपरमहंसासद्भावः सिद्धः।

यतिधर्मसमुच्चये चासमीक्षादशाकृतानुपवीतसंन्यासपद्धतिमुत्सृज्य प्रायश्चित्तपूर्वकृतयथावस्थितसंन्यासेन यादवप्रकाशाचार्येण विरचिते, "मौण्ड्यं शिखा वेति विकल्पः। यज्ञोपवीतं तु सर्वेषां नित्यमेव। तथाऽत्रिः पारीव्राज्यमेवाधिकृत्याऽऽह"—इत्यादिना ब्रह्मसूत्रत्यागे पातित्यं प्रादर्शि। अन्यच्चोक्तम्, "द्विधा च परिव्राट् ज्ञानाभ्यासशीलो योगमारुरुक्षुरेकः, अपरस्त्वारूढयोगः तत्त्वदर्शी अव्यक्तलिङ्गः अव्यक्ताचारः उन्मत्तवदाचरन्........। सम्यग् ज्ञानिनामपि पञ्चमालाधारणमवश्यं कर्तव्यम्।.... संग्रहो नवसूत्रस्य द्विजानां मुक्तिसाधनम्। विना तेन भवेत् सद्यः सर्वधर्मबहिष्कृतः। (अत्र मुक्तिसाधनमिति पदं मोक्षाश्रमेऽप्युपवीतावश्यकत्वप्रदर्शि।) क्वचित् त्रिदण्डनाशे तु एकदण्डो विधीयते........ केचित्तु चतुर्विधत्वं वर्णयन्ति, चतुर्विधा भिक्षवस्तु कुटीचकबहूदकौ। हंसः परमहंसश्च योयः पश्चात् स उत्तमः' इति। एतदपि पञ्चरात्रसिद्धम्, सांख्यसिद्धञ्च; न वेदसिद्धमिति केचिदाहुः" इति। अनेन वाक्येन यतीनां चातुर्विध्यप्रतिपादिकाः परैरुपात्ता उपनिषदः श्रुतयः स्मृतिविरोधे सति न विस्रम्भणीयाः। पूर्वाचार्यपरिग्रहदृढिमाभावेन प्रक्षेपशङ्कास्पदत्वादिति ज्ञापितम्। 'न वेदसिद्धम्' इति वदतामयमाशयः—यदि बहूनीदृशानि श्रुतिवाक्यानि निर्विचिकित्सप्रमाणभूतानि स्युः, तदा परामर्शं जैमिनिरिति सन्यासाभावपूर्वपक्षः, विधिर्वा धारणवदिति स्थापनक्लेशश्चान्यादृशः सूत्रकृता नैवोढः स्यात्। जाबालवाक्यमेकं तु स्थितमपि नातीवादृतमिति। भाष्ये तन्मात्रग्रहणादेवान्याभावोपि ज्ञायत इति। आस्तामेतत्। सर्वथा तावदुपवीतादित्यागः परमहंसस्य न प्रामाणिकः। विशिष्य चाद्वैतिभिरप्यवधेयानि वाक्यानीमानि, "ब्रह्माणं केशवं शम्भुं ध्यायेन्मुच्येत बन्धनात्। रक्तं पितामहं ध्यायेत् विष्णुं नीलोत्पलप्रभम्। श्वेतं त्रिलोचनं शम्भुं संसारार्णवतारणम्।.... वासुदेवः परं ब्रह्म परमात्मा

जगन्मयः। तस्यैव मूर्तयस्त्वेता भिद्यन्तेऽभिख्यया त्रिधा।.... सर्वतेजोमयं पुण्यं शरण्यं शरणार्थिनाम्। चिन्तयेत् पुण्डरीकाक्षं नारायणमयं हरिम्।........ एवं हि ध्यायतस्तस्य ब्रह्मनिष्ठस्य योगिनः। सौख्यमानन्दमद्वैतं परं ब्रह्म प्रकाशते। प्रकाशितेन तत्त्वेन मुक्तिरुक्ता मनीषिणाम्'' इत्येवम। तस्मादनुपवीतिनामनारायणपरायणानां न संन्यासाश्रमः श्रुतिस्मृतिसंमत इति ज्ञायते।

अत्रेदं बोध्यम्—'जनेनावमतो योगी योगसिद्धिश्च विन्दति। तस्माच्चरेत वै योगी सतां वर्त्म न दूषयेत्। जना यथाऽवमन्येरन् गच्छेयुर्नैव संगतिम्' इत्युक्तमनुसृत्य जनसंगतिपरिहाराय ''गूढधर्माश्रितो विद्वान् अज्ञानकरणे स्थितः। अमूढो मूढरूपेण चरेत् धर्ममदूषयन्'' इत्याद्यनतिलङ्घनेन सन्मार्गादूषणेनैव कालं क्षिपत्सु योगिषु, ''क्लिन्नदन्तान्तरः सभ्यैः परिभूतः स नागरैः'' इत्युक्तरीत्या नागरैरपि परिभूयमानत्वे मूर्खाविवेकिदुर्जनपरिभूयमानत्वं दण्डापूपायितम्। वर्णितश्च श्रीभागवते दण्डकमण्डल्वाद्यपहरणविभञ्जनादिनाऽपि यतिपरिभवः। ईदृश्यां दण्डोपवीतादिसंरक्षणं कथं तावत् परमुखप्रतीक्षणैकप्राप्यसर्वाशाः यतयः कर्तुं प्रभवन्ति। दुर्दशायामस्यामाश्रमधर्मभ्रंशेन बिभ्यतः कांश्चित् परमहंसान् आश्वासयितुं प्रवृत्तानीदृशानि कानिचिद्वचनानि—एवमगत्यां दुरुपयोजानि लिङ्गानि यथाविध्यप्सु प्रक्षिप्य नव्यलिङ्गधारणस्य च कर्तव्यस्योपकारिसाधुजनालाभेनाशक्यत्वे प्राप्ते उपवीताद्यभावेन संध्योपासनादावप्यनधिकारादकरणे आपतितेऽप्यात्मा न क्लेशयितव्यः। ज्ञानमेव शिखा, तदेवोपवीतम्, तदेव त्रिदण्डादि सर्वमिति विभाव्य, ''अपि चेत् पातकं किञ्चित् योगी कुर्यात प्रमादतः। योगमेव निषेवेत नान्यं यत्नं समाचरेत्'', ''प्राणायामात्मकात् ध्यानात् नान्यद् भिक्षोर्विशोधनम्'' इति विभाव्य ज्ञानतो वाऽज्ञानतो वा विहितपरित्यागः आपद्दशाभावितो न दोषायेति विश्वस्य शमस्य योगस्य च मुख्यत्वमभिलक्ष्य आदेहपातमप्येवं भवेयुः, तावता न कापि हानिरिति तैर्वचनैः प्रतिबोध्यते। सर्वत्रार्थवादा

यतिलिङ्गावश्यकत्वपरवाक्याविरोधी कश्चिन्निर्वाह एवेदृशो ज्यायानिति न सर्वत्यागविधायित्वमुचितम् । स्वीकृतेऽपि त्यागविधौ यतिलिङ्गावश्यकत्ववचनामपि सद्भावात् सर्वयतिलोकसंग्रहाय लिङ्गधारणपक्ष एव श्रेयान् । "नास्ति चेन्नास्ति नो हानिरस्ति चेन्नास्तिको हतः" इति न्यायेन लिङ्गधारणनियमे आदृते हि न फलभङ्गः । त्यागे तु तस्थाशास्त्रार्थत्वे भ्रष्टतापत्तिः । अत एवाद्वैतप्रस्थानमास्थितैरपि भास्करयादवप्रकाशादिभिः त्रिदण्डादिधारणसमाचार एव समादृतः । यादवप्रकाशाचार्यैश्च तदनुरोधेन यतिधर्मसमुच्चयग्रन्थप्रथनपूर्वकम् अलिङ्गसंन्यासस्य गृहीतस्य त्यागेन सलिङ्गसंन्यासपरिग्रहेण स्वात्मा पावितः । तदिदम्, तथा शतदूषणीकृतां परमाचार्यैर्यतिलिङ्गसमर्थनाख्यस्य ग्रन्थस्य निर्मितत्वं च यतिलिङ्गभेदवादिमतनिरासार्थप्रवृत्तेऽस्मिन् यतिलिङ्गभेदभङ्गवादे व्यक्तमुदितमाचार्यैरपि । इतः पुनरलेपकमतमादृत्यैव प्रत्यवस्थानं भवद्भिः कार्यम् । तदा च सर्ववर्णसर्वाश्रमधर्माः सर्वमिथ्यात्वाध्यवसायबलात् संत्यक्तुमर्हाः; पुण्यपापशिक्षणमप्युपेक्षितुमुचितम्; स्वैरिता च समादर्तव्येति चार्वाकादिवेदबाह्याविशिष्टत्वमेव प्रतिष्ठापितं भवेत् । तथाच "इह .... केचित् अवधूतसकलवर्णाश्रमधर्माश्चार्वाकसधर्माणः ........विधिनिषेधयन्त्रणामतन्त्रयन्तः पारिभाषिकब्रह्मविदो विश्वमाविलयन्ति" इति शतदूषण्याम् अलेपकमतभङ्गारम्भोक्तमेव सत्यापितं भवेत् । न खल्वद्यतनाः अद्वैतसंन्यासिनो जीवन्मुक्ताः; न च योगनिष्णाताः; न च ब्रह्मचिन्तनव्यतिरिक्तेषु लौकिकेषु सर्वेष्वप्यर्थेष्वप्रवृत्तमनसः, येन संध्याकालादिदृष्टिविरहात् संध्यावन्दनादेरनाचरणं समर्थ्येत । विविदिषायां जातायां विधिकिङ्करत्वाभावात् कर्मणामकर्तव्यत्वे सिद्धे कर्माङ्गभूतमुपवीतादिकमपि त्यज्यत इति चेन्न—एवं तर्हि एकदण्डविधिकिङ्करत्वमपि मा भूत् । परमहंसं प्रत्येव तद्विधानात् तदनुरोध इति चेत्—परमहंसं प्रत्येव त्रिदण्डादिधारणविधिरपि शाट्यायनकादिश्रुतिस्मृतिगतः प्रादर्शीति तुल्यमेतत् । एकविधिकिङ्करत्वे यत् नियामकम्, तदेवान्यविषयेऽप्यनुपेक्ष्यम् । वर्णानामाश्रमाणाञ्च

सर्वेषां देहोपाधिकत्वं शुद्धात्मासंबन्धित्वञ्च सर्वदैवेति संन्यासविधिरपि न घटेत ।

दण्डकाषायसंत्यागः स्यात् विधेर्यद्यकिङ्करः ।
शिखोपवीतसंध्योपास्त्याद्यप्यत्याज्यमन्यथा ॥ 364

तस्मात् सर्वैरपि संन्यासिभिः समादृतविष्णुभक्तिमार्गैः शाट्यायनश्रुत्युक्तश्वेतोर्ध्वपुण्ड्रमन्यादृशं वोर्ध्वपुण्ड्रमेव धारयद्भिः शिखात्रिदण्डोपवीतादिसंभूषितैः संध्यावन्दनादित्रयीधर्मानुष्ठायिभिश्च भाव्यम् ।

शतभूषण्यामलेपकमतभङ्गवादपरीक्षणमुपेक्षितम्, निष्प्रपञ्चीकरणनियोगभङ्गः अलेपकमतभङ्गश्चाद्वैतिनामिष्ट एवेति । उक्तं हि भूमिकायाम्, "भगवत्पादा अपि न संमन्यन्ते असमञ्जसमिति मत्वा" इति । एवं तर्हि गूढवेषाचारा वा संत्यक्तसंध्यावन्दनादयो वा परमहंसा नाङ्गीकर्तव्या भवेयुः । अलेपकमतभङ्गवादस्य तदर्थमेव प्रवृत्तत्वात् । तदा च माधवीयादिग्रन्थविरोधः स्वोक्तिव्याघातश्च । तस्मात् अलेपकमतभङ्गस्य शतदूषणीकृतस्यानुमतत्वाद्वा स्यादपरीक्षणम्, अशक्यसमाधित्वाद्वा । सर्वथा सहृदयैः संन्यासिभिरद्वैतिभिरपि भास्करयादवप्रकाशादिपूर्वदेशिकदर्शित एव पन्थाः श्रेयःप्राप्तये समादर्तव्य इति ॥

निगमैरप्यवेद्यस्य निर्विशेषस्य लब्धये ।
निर्धूताश्रमधर्माणामनुरूपा त्वधिक्रिया ॥ 365

यतिलिङ्गभेदभङ्गप्रसाधनं स्यादलेपमतभङ्गे ।
प्रोक्तस्यापि च संग्रहरूपम्; तस्मात् प्रसाधितं सर्वम् ॥ 366

सविशेषं ब्रह्मेष्टम्, वर्णाश्रमधर्म एवमेवेष्टः ।
तन्मूलः पुरुषार्थः श्रेष्ठः किं निर्विशेषेण ॥ 367

ऐकरस्यमधिगन्तुमिच्छतामागमार्थपरिरक्षणैषिणाम् ।
आगमान्तगुरुसूक्तितः परं दर्शनं न हितमित्यसंशयम् ॥ 368

अद्वैतं मतमतिदुर्बलं तथापि श्रुत्यन्तप्रतिकथकोक्तिखण्डनार्थे ।
प्रख्यातैः प्रथमपरिग्रहात् प्रचारादुर्वाश्चास्तदभिनिवेशमावहन्ति ॥ 369

कासौ गभीरगतिरद्भुतसर्वतन्त्र-
स्वातन्त्र्यवित्तनिगमान्तगुरूद्घसूक्तिः ।
काहम्; तथाप्यभिनिवेशिपरोक्तिदोष-
प्रख्यापने मद्वरोऽप्यलमित्यकम्प्यम् ॥ 370

वीक्षारण्यगशालिहोत्रमुखसद्भूतापनाश्याशय-
स्थायिश्रीजयवीरराघवमहोवीक्षाप्तजन्मस्थितिः ।
ख्यातस्तेन तु वीरराघव इति श्रीचक्रवर्त्यात्मजो
व्यातानीदिदमत्र मद्रनगरे वर्षे विलम्ब्याह्वये ॥ 371

उत्तमूरभिजनेन वत्ससच्चक्रवर्तिकुलरत्नजन्मना ।
वीरराघवसमाह्वयेन सद्देशिकाङ्घ्रियुगनित्यभक्तिना ॥ 372

तर्कतन्त्रमुखनैकशास्त्रसद्ग्रन्थनिर्मितिनिरूढकीर्तिना ।
भव्ययाऽभिनवदेशिकाख्यया सज्जनैर्बहुमतेन संसदि ॥ 373

देशिकः स्वशतदूषणीकृतिज्ञापितार्थविशदीकृतीच्छया ।
अन्तरङ्गमुपगम्य लेखने तूलिकामकलयत् स्विकां स यम् ॥ 374

साधु तेन शतभूषणीमुखाद्वैतनैककृतिखण्डनात्मना ।
इत्यकारि परमार्थवेदिसत्प्रीणनाय परमार्थभूषणम् ॥ 375

नाथयामुनयतीशदेशिकाद्यद्भुतार्यमुखरक्षितं निजम् ।
स्थापयन्ननघमत्र दर्शनं श्रीनिधिर्हयमुखः समेधताम् ॥ 376

श्रीमते निगमान्तमहादेशिकाय नमः

इति श्रीवेदान्तरामानुजयतीन्द्रमहादेशिकचरणारविन्दचञ्चरीकस्य, श्रीरङ्गरामानुजयतिवरमहादेशिकपदारविन्दवरिवस्याप्राप्तसर्ववेदान्तार्थस्य शिरोमणेस्तर्कार्णवस्य पण्डितरत्नस्य पूर्वोत्तरमीमांसाप्रदीपस्य देशिकदर्शनधुरन्धरस्य उभयमीमांसावल्लभस्य उत्तमूरभिजनस्य वात्स्यसच्चक्रवर्तिनः वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु परमार्थभूषणं संपूर्णम्

श्रीरस्तु । शुभमस्तु

# शोधनिका

द्‌ध इत्यस्य स्थाने द्ध इत्येव सर्वत्र मुद्रितम् अपेक्षिताक्षरालाभेन। इमामेवंविधा अन्या अशुद्धीश्च साहाय्याभावात् कार्यान्तरगौरवात् यन्त्रासांनिध्याच्च प्रसक्ताः, प्रियपाठकाः स्वयमेव विज्ञाय यथार्हं वाचयिष्यन्तीति प्रत्येमि।

| | |
|---|---|
| 13-15 | अनुपास्य |
| 17-15 | शब्दवृत्त्यनुपपत्ति |
| 21-2 | परिणामित्व |
| 22-15 | समन्वयाधि |
| 23-11-22 | शारीरक |
| 41-18 | ज्ञानस्यसत्त्वम् अध्ययन |
| 19 | जीवातिरि- |
| 44-4 | जाग्रदाद्यवस्था |
| 55-1 | प्रत्येकमतद्वचनात् |
| 56-18 | वाय्वाकाश |
| 58-15 | परिणामाहेतुत्व |
| 60-11 | प्रकृतिपरिणाम |
| 61-12 | कार्त्स्न्येनाभिव्यक्त |
| 64-7 | तच्छ्लोकार्थ |
| 64-17 | स्वस्ति |
| 68-2 | मात्रपदं तुशब्दो वा |
| 89-23 | निःश्रेयसं |
| 128-5 | विषयत्वं यथायथं |
| 7 | नुभावकत्वरूपा |
| 20 | रक्षार्थं यदि प्रयतेत |
| 133-1 | व्यवहारः |
| 140-14 | रित्यशक्तिरेव |
| 163-8 | बाध्यमानः |
| 147-17 | भवितुमर्हति च तत्। |
| 148-11 | अविद्यावच्छिन्न |
| 159-10 | स्याकारस्यापि |
| 178-21 | जिज्ञासायाः |
| 181-9 | शङ्क्याम |
| 16 | प्रतिबध्नात्येव |
| 185-1 | मूलोऽर्थक्रमो- |
| 191-5 | आचार्येण भगवता |
| 11 | पुरुषार्थवाद |
| 15 | मन्तव्य- |
| 192-20 | मित्यादि |
| 24 | ब्रह्माणोऽपि |
| 198-4 | स्थापयिष्यते |
| 200-18 | कारात्। अतो |
| 201-11 | तद्दृष्ट्या |
| 18 | मुपन्यस्तम् |
| 202-21 | राशिसंघस्यैकैक |
| 208-11 | क्रमेणैव भोक्तव्यानीति |
| 12 | फलानित्यत्व |
| 13 | निश्चिते |
| 20 | विचारेच्छा |
| 21 | निष्पन्नत्वाद्वा स्यात् |
| 211-5 | शास्त्रप्रमुखे |
| 212-19 | कर्मविचारात् |
| 216-14 | आवश्यकम् |

| | |
|---|---|
| 241-14 | सिद्धान्तः |
| 16 | पश्चात् |
| 243-21 | बाधितत्वं |
| 257-13 | ज्ञानं प्रत्यक्षमिति |
| 260-13 | पादकाज्ञाननिवर्त |
| 262-21 | शास्त्रदृष्टविरो |
| 278-23 | अनुभूयमानस्य |
| 279-5 | विरागं |
| 12 | विरतिः इह |
| 280-12 | विहितः, तद्भाव |
| 280-17 | वसरे। एवं |
| 284-2 | शमदमाद्युपेतः |
| 289-9 | स्वामिना |
| 295-14 | फलस्वा |
| 296-13 | निर्णयस्य |
| 293-19 | प्रकारताशालि |
| 301-15 | व्यवहारस्य |
| 302-18 | स्खलनमिति |
| 307-7 | प्रामाणिक |
| 309-13,15 | व्यावहारि |
| 311-7 | प्रपञ्चाधिष्ठान |
| 312-20 | प्रत्यप्यास्तिक |
| 316-1 | छिन्नसंशयाः |
| 320-7 | स्वाभाविक |
| 325-13 | मणेः। |
| 14 | गुणाः। प्रकाश्यन्त |
| 328-23 | करणवाक्येषु |
| 329-10 | प्रतियोगिक |
| 11 | तात्पर्यविषयत्व |
| 335-2 | नैयायिकै |
| 338-17 | विशेषसमवा |
| 340-7 | सिद्धचेत् |
| 15 | वस्तुन्यनु |
| 341-8 | मित्युक्त्वा |
| 342-2 | इदमर्थस्य |
| 3 | यत्तु |
| 344-6 | इत्युदाहर |
| 18 | सामानाधिकर |
| 345-19 | निर्विकल्पस्व |
| 347-10 | न्द्रियकल्पक |
| 16 | तुल्यत्वं |
| 24 | नेतिनेति |
| 351-1 | इत्यनुवर्तमान |
| 19 | आत्माश्रया |
| 353-4 | तच्छलोक |
| 10 | कथञ्चिदयं |
| 361-23 | तदन्तरवय |
| 362-11 | निरस्तम् |
| 363-2 | घटवद्भूतल |
| 364-18 | तादात्म्यस्य |
| 365-10 | सतिसंभवे |
| 368-6 | सूत्रकार |
| 370-18 | सौगताद्यागमा |
| 371-2 | मात्मनिरू |
| 373-17 | चार्याणा |
| 375-22 | मूलक एव। |
| 385-17 | पारमार्थिक |
| 388-16 | प्रपञ्चबाधो |
| 393-3 | कल्पितत्वेन |
| 405-4 | रूप्यदृष्टान्तो |

| | |
|---|---|
| 406-20 | दृश्यत्वानुमान |
| 407-13 | मिथ्यात्वे |
| 410-22 | --ज्ञानस्य |
| 411-3 | पुनरैकान्त्य |
| 12 | शुद्धब्रह्म |
| 412-17 | दुपेक्ष्यम् |
| 413-14 | मिथ्यात्वासिद्धि |
| 416-18 | सत्पदेन |
| 419-15 | तदितरत्वा |
| 437-22 | दृश्यत्वकल्पेषु |
| 438-11 | अखण्डाकार |
| 449-21 | लब्यापारो |
| 509-9 | अविद्याव |
| 515-4 | प्रमाणम, अज्ञान |
| 24 | दत्तीयपटाज्ञा |
| 516-1 | दत्तीयघटा |
| 25 | यविषयि |
| 517-20 | मिथ्यात्ववादि |
| 520-25 | प्रकृत्याश्रयेऽ |
| 529-21 | अननुभूतित्व |
| 530-10 | विषयत्वतद |
| 540-14 | दनुत्पत्तिभङ्गवादं |
| 541-3 | प्रस्तुतान् |
| 560-18 | संवित्पदेनात्मनो |
| 571-17 | दर्शनभेदः |
| 19 | तत्रैकदा |
| 574-8 | अवगमित |
| 24 | सिद्धयुक्त |
| 576-12 | अन्यथा |
| 577-16 | प्रसिद्ध |
| 580-4 | चैतन्य |
| 11 | प्रामाण्य |
| 582-10 | भेदादयो नानु |
| 584-8 | त्पनिरासवाद |
| 587-24 | विवर्त्ते । |
| 588-21 | विमुक्तात्माऽत्रभवता |
| 607-23 | चैतन्यविषयिणी |
| 609-25 | प्यसंभवी । |
| 610-5 | गृह्यमाणत्वात् |
| 611-15 | विषयत्वाश्रयत्वोभय |
| 22 | यतया |
| 612-11 | विषयतत्त्व एव |
| 613-19 | शब्दादावपि |
| 617-19 | श्रद्धालुभ्यो |
| 678-18 | विषयत्वाग्ने |
| 680-18 | दुःखे |
| 688-22 | क्षपणचण |
| 692-5 | यश्लेषविनाशोप |
| 13 | अनारब्धकार्य |
| 694-8 | ज्ञानानाश्यत्वा |
| 695-23 | ब्रह्मसमश्नुते |
| 24 | समन्वयाधिकरण |
| 701-6 | मापादयति |
| 703-16 | अभिन्नधर्म्यर्थं |
| 709-7 | त्वर्थवाद |
| 712-3 | प्रकृतेऽपि |
| 20 | प्रतिज्ञामात्रं |
| 24 | वाक्यान्यथाकर |
| 720-2 | गोचर इति |
| 729-10 | बाधितत्वेपि |

| | |
|---|---|
| 803-13 | बोधायनेन |
| 827-23 | ग्राह्यम् , तदेव |
| 828-10 | पाधिकम् , तत् |
| 830-5 | ज्ञानमूरीकर्तव्य |
| 831-5 | मस्मद्भाष्येऽत्र |
| 834-8 | शिष्टाविद्याभिः |
| 861-2 | मायायाः |
| 890-5 | बोधयन्तीति |
| 891-7 | मिथ्यात्वसाधनं |
| 903-13 | दुरूक्तमिति |
| 16 | सर्वाप्रामाण्य |
| 958-22 | दूषितत्वम् |
| 24 | तदुपर्यपि |
| 960-8 | ग्रयाधिक्य |
| 964-15 | कारणाधीन |
| 967-10 | ग्रामणनिषेध |
| 1016-24 | त्वमुच्यतेऽस्मिन् वादे |
| 1043-19 | न्तरेऽवन्यथाऽ |
| 1059-6 | अतिक्रान्त |
| 20 | श्रीभाष्यशतदू |
| 1064-14 | जिज्ञासोरेव |
| 1065-10 | र्यतयाजिज्ञा |
| 1066-8 | ष्ठितानां |
| 1069-5 | कृच्छ्र |
| 1071-10 | संप्रधारणीयम् |
| 23 | वैष्णवावैष्णव |
| 1078-3 | नानामपि |

शुभमस्तु